# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

---

## KARNAPARVA VIII.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Pr*

**BOMBAY.**

1907

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## कर्णपर्व ८.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशि

शाके १८२९ प्लवंगनामसंवत्सरे ।

# कर्णपर्व.



श्रीः ।

# श्रीमन्महाभारतम् ।



## कर्णपर्व ८ ।

### प्रथमोऽध्यायः ॥ १ ॥

शिबिराद्धास्तिनपुरमुपगतवता सञ्जयेन धृतराष्ट्रंप्रति कर्णादिनिधनकथनम् ॥ १ ॥ तच्छ्रवणेन मूर्च्छामुपग
ष्ट्रस्य सञ्जयादिभिराश्वासनम् ॥ २ ॥

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १
वैशंपायन उवाच ।
शिबिराद्धास्तिनपुरं प्राप्य भारत संजयः ।
प्रविवेश महाबाहुर्धृतराष्ट्रनिवेशनम् ॥ १
शोकेनापहतः सूतो विलपन्भृशदुःखितः ।
चिन्तयन्निधनं घोरं सूतपुत्रस्य पाण्डवैः ॥ २
अन्तःपुरं प्रविश्यैव सञ्जयो राजसत्तमम् ।
अश्रुपूर्णो भृशं त्रस्तो राजानमुपजग्मिवान् ॥ ३
उपस्थाय च राजानं विनिश्वस्य च सूतजः ।
नातिहृष्टमना राजन्निदं वचनमब्रवीत् ॥ ४
सञ्जय उवाच ।
सञ्जयोऽहं महाराज नमस्ते भरतर्षभ ।
हतो वैकर्तनः कर्णः कृत्वा कर्म सुदुष्करम् ॥ ५
चेदिकाशिकरूशानां मत्स्यानां सोमकैः सह ।
कृत्वाऽसौ कदनं शेते वातरुग्ण इव द्रुमः ॥ ६
गोष्ठमध्येव ऋषभो गोव्रजैः परिवारितः ।
व्यालेन निहतो यद्वत्तथाऽसौ निहतः परैः ॥ ७
निराशान्पाण्डवान्कृत्वा दृढं राजन्ससात्यकान् ।
पाञ्चालानां रथांश्चैव विनिहत्य सहस्रशः ॥ ८

हतो वैकर्तनः कर्णः पाण्डवेन किरीटि
वैरस्य गत आनृण्यं दुर्गमस्य दुरात्मा
हत्वा कर्णं महाराज विशल्यः पाण्डवो
शोषणं सागराणां वा पतनं वा विव
विशीर्णत्वं यथा मेरोस्तथा कर्णस्य पा
योधाश्च बहवो राजन्हतास्तत्र जयैषि
राजानो राजपुत्राश्च शूराः परिघबाह
रथौघाश्च नरौघाश्च हता राजन्सहस्रश
वारणा निहतास्तत्र वाजिनश्च महाहवे
क्षत्रियाश्च महाराज सेनयोरुभयोर्हता
परस्परं वै वीक्ष्यात्र परस्परकृतागसः
किंचिच्छेषान्परान्कृत्वा तीर्त्वा पाण्डव
पार्थवेलां समासाद्य हतो वैकर्तनो वृ
जयाशा धार्तराष्ट्राणां वैरस्य च मुखं
तीर्णं तत्पाण्डवै राजन्यत्पुरा नावबुध
प्रोच्यमानं महाराज बन्धुभिर्हितबुद्धि
तदिदं समनुप्राप्तं व्यसनं त्वां महाभ
पुत्राणां राज्यकामेन त्वया राजन्हिते
चरितान्यहितान्येव तेषां ते फलमाग
हतो दुःशासनो राजन्यथोक्तं पाण्डवे
प्रतिज्ञा भी[redacted]निस्तीर्णा

ा महाराज कर्म कृत्वा सुदुष्करम् ॥२०
न उवाच ।
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
शोकस्यान्तमपश्यन्वै हतं मत्वा सुयोधनम् ।

दन्तविंशतिश्लोकानां स्थाने झ. पाठे त्रयोऽध्याया वर्तन्ते ।

## प्रथमोऽध्यायः ॥ १ ॥

ानादिभिः कर्णस्य सैनापत्येऽभिषेचनपूर्वकं युद्धाय निर्याणम् ॥ १ ॥ जनमेजयेन वैशंपायनंप्रति कर्णमरणश्राविणो ा प्रवृत्तिप्रश्नः ॥ २ ॥

श्रीकृष्णाय नमः ॥
णं नमस्कृत्य नरं चैव नरोत्तमम् ।
रस्वतीं चैव ततो जयमुदीरयेत् ॥ १
ान उवाच ।
णे हते राजन्दुर्योधनमुखा नृपाः ।
द्विग्नमनसो द्रोणपुत्रमुपागमन् ॥ १
मनुशोचन्तः कश्मलाभिहतौजसः ।
सन्त शोकार्तास्ततः शारद्वतीसुतम् ॥ २
ं समाश्वस्य हेतुभिः शास्त्रसंमितैः ।
ामे महीपालाः स्वानि वेश्मानि भेजिरे ॥ ३
ास्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखम् ।
ान्तः क्षयं तीव्रं दुःखशोकसमन्विताः ॥ ४
तः सूतपुत्रो राजा चैव सुयोधनः ।
ासनश्च शकुनिः सौबलश्च महाबलः ॥ ५
स्ते निशां तां तु दुर्योधननिवेशने ।
ान्तः परिक्लेशान्पाण्डवानां महात्मनाम् ॥ ६
ूते परिक्लिष्टा कृष्णा चानायिता सभाम् ।
न्तोऽनुशोचन्तो भृशमुद्विग्नचेतसः ॥ ७
ु संचिन्तयतां तान्क्लेशान्द्यूतकारितान् ।
ा क्षणदा राजन्नगामाब्दशतोपमा ॥ ८
ाभाते विमले स्थिता दिष्टस्य शासने ।
ावश्यकं सर्वे विधिदृष्टेन कर्मणा ॥ ९
ाऽवश्यकार्याणि समाश्वस्य च भारत ।
ाज्ञापयामासुर्युद्धाय च विनिर्ययुः ॥ १०
ेनापतिं कृत्वा कृतकौतुकमङ्गलाः ।
ात्वा द्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ॥ ११
गोभिरश्वैश्च निष्कैश्च वासोभिश्च महाधनैः ।
वन्द्यमाना जयाशीर्भिः सूतमागधबन्दिभिः ॥ १२
तथैव पाण्डवा राजन्कृतपूर्वाह्णिकक्रियाः ।
शिबिरान्निर्ययुस्तूर्णं युद्धाय कृतनिश्चयाः ॥ १३
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
कुरूणां पाण्डवानां च परस्परजयैषिणाम् ॥ १४
तयोर्द्वौ दिवसौ युद्धं कुरुपाण्डवसेनयोः ।
कर्णे सेनापतौ राजन्बभूवाद्भुतदर्शनम् ॥ १५
ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः ।
पश्यतां धार्तराष्ट्राणां फल्गुनेन निपातितः ॥ १६
ततस्तु संजयः सर्वं गत्वा नागपुरं द्रुतम् ।
आचष्ट धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले ॥ १७
जनमेजय उवाच ।
आपगेयं हतं श्रुत्वा द्रोणं चापि महारथम् ।
आजगाम परामार्तिं वृद्धो राजाऽम्बिकासुतः ॥ १८
स श्रुत्वा निहतं कर्णं दुर्योधनहितैषिणम् ।
कथं द्विजवर प्राणानधारयत दुःखितः ॥ १९
यस्मिञ्जयाशां पुत्राणां सममन्यत पार्थिवः ।
तस्मिन्हते स कौरव्यः कथं प्राणानधारयत् ॥ २०
दुर्मरं तदहं मन्ये नृणां कृच्छ्रेऽपि वर्तताम् ।
यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः ॥ २१
तथा शान्तनवं वृद्धं ब्रह्मन्बाह्लीकमेव च ।
द्रोणं च सोमदत्तं च भूरिश्रवसमेव च ॥ २२
तथैव चान्यान्सुहृदः पुत्रान्पौत्रांश्च पातितान् ।
श्रुत्वा यन्नाजहात्प्राणांस्तन्मन्ये दुष्करं द्विज ॥ २३
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ २४

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धारम्भे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

…यंप्रति दुर्योधनादिप्रवृत्तिप्रश्नः ॥ १ ॥

दीनो ययौ नागपुरमश्वैर्वातसमैर्जवे ॥

विह्वलः पतितो भूमौ नष्टचेता इव द्विपः ॥२१
तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे ।
आर्तनादो महानासीत्स्त्रीणां भरतसत्तम ॥ २
स शब्दः पृथिवीं कृत्स्नां पूरयामास सर्वशः॥२

जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवम् ॥ २
स तमुद्वीक्ष्य राजानं कश्मलाभिहतौजसम् ।
ववन्दे प्राञ्जलिर्भूत्वा मूर्ध्ना पादौ नृपस्य ह ॥ ३
संपूज्य च यथान्यायं धृतराष्ट्रं महीपतिम् ।
हा कष्टमिति चोक्त्वा स ततो वचनमाददे ॥ ४
संजयोऽहं क्षितिपते कच्चिदास्ते सुखं भवान् ।
स्वदोषैरापदं प्राप्य कच्चिन्नाद्य विमुह्यति ॥ ५
हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः ।
अगृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ६
रामनारदकण्वाद्यैर्हितमुक्तं सभातले ।
न गृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ७
सुहृदस्त्वद्धिते युक्तान्भीष्मद्रोणमुखान्परैः ।
निहतान्युधि संस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ८
तमेवंवादिनं राजा सूतपुत्रं कृताञ्जलिम् ।
सुदीर्घमथ निःश्वस्य दुःखार्त इदमब्रवीत् ॥ ९

धृतराष्ट्र उवाच ।
आपगेये हते शूरे दिव्यास्त्रवति सञ्जय ।
द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ॥ १०
यो रथानां सहस्राणि दंशितानां दशैव तु ।
अहन्यहनि तेजस्वी निजघ्ने वसुसंभवः ॥ ११
तं हतं यज्ञसेनस्य पुत्रेणेह शिखण्डिना ।
पाण्डवेयाभिगुप्तेन श्रुत्वा मे व्यथितं मनः ॥ १२
भार्गवः प्रददौ यस्मै परमास्त्रं महाहवे ।
साक्षाद्रामेण यो बाल्ये धनुर्वेद उपाकृतः ॥ १३
यस्य प्रसादात्कौन्तेया राजपुत्रा महारथाः ।
महारथत्वं संप्राप्तास्तथाऽन्ये वसुधाधिपाः ॥ १४
तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे ।
सत्यसन्धं महेष्वासं भृशं मे व्यथितं मनः ॥ १
ययोर्लोके पुमानस्त्रे न समोऽस्ति चतुर्विधे ।
तौ द्रोणभीष्मौ श्रुत्वा तु हतौ मे व्यथितं मनः ॥१
त्रैलोक्ये यस्य चास्त्रेषु न पुमान्विद्यते समः ।
तं द्रोणं निहतं श्रुत्वा किमकुर्वत मामकाः ॥ १
संशप्तकानां च बले पाण्डवेन महात्मना ।
धनंजयेन विक्रम्य गमिते यमसादनम् ॥ १
नारायणास्त्रे च हते द्रोणपुत्रस्य धीमतः ।
विप्रद्रुतेष्वनीकेषु किमकुर्वत मामकाः ॥ १
विप्रद्रुतानहं मन्ये निमग्नाञ्शोकसागरे ।
प्लवमानान्हते द्रोणे सन्ननौकानिवार्णवे ॥ २
दुर्योधनस्य कर्णस्य भोजस्य कृतवर्मणः ।
मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च ॥ २
मत्पुत्रस्य च शेषस्य तथाऽन्येषां च सञ्जय ।
विप्रद्रुतेष्वनीकेषु मुखवर्णोऽभवत्कथम् ॥ २
एतत्सर्वं यथावृत्तं तथा गावल्गणे मम ।
आचक्ष्व पाण्डवेयानां मामकानां च विक्रमम् ॥२

सञ्जय उवाच ।
तवापराधाद्यद्वृत्तं कौरवेयेषु मारिष ।
तच्छ्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते बुधः ॥२
यस्मादभावी भावी वा भवेदर्थो नरं प्रति ।
अप्राप्तौ तस्य वा प्राप्तौ न कश्चिद्व्यथते बुधः ॥ २

धृतराष्ट्र उवाच ।
न व्यथाऽभ्यधिका काचिद्विद्यते मम सञ्जय ।
दिष्टमेतत्पुरा मन्ये कथयस्व यथेच्छकम् ॥ २

॥ इति श्रीमन्महाभारते कर्णपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

दुर्योधनेन द्रोणमरणनिर्विण्णानां सैनिकानां कर्णगुणानुवर्णनेन प्रोत्साहनम् ॥ १ ॥ सञ्जयेन धृतराष्ट्रंप्रति कर्णपराक्रमप्रशंसनपूर्वकं तन्निधनकथनम् ॥ २ ॥

सञ्जय उवाच ।
हते द्रोणे महेष्वासे तव पुत्रा महारथाः ।
बभूवुरस्वस्थमुखा विषण्णा गतचेतसः ॥ १
अवाङ्मुखाः शस्त्रभृतः सर्व एव विशांपते ।
अवेक्षमाणाः शोकार्ता नाभ्यभाषन्परस्परम् ॥ २
तान्दृष्ट्वा व्यथिताकारान्सैन्यानि तव भारत ।
ऊर्ध्वमेव निरैक्षन्त दुःखत्रस्तान्यनेकशः ॥ ३
शस्त्राण्येषां तु राजेन्द्र शोणिताक्तानि सर्वशः ।
प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं हतं युधि ॥ ४
तानि बद्धान्यरिष्टानि लम्बमानानि भारत ।
अदृश्यन्त महाराज नक्षत्राणि यथा दिवि ॥ ५
तथा तु स्तिमितं दृष्ट्वा गतसत्वमवस्थितम् ।
बलं तव महाराज राजा दुर्योधनोऽब्रवीत् ॥ ६

विह्वलः चलनासमर्थः काष्ठवत्पतितः ॥ २१ ॥

शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः ।
रुरुदुर्दुःखशोकार्ता भृशमुद्विग्नचेतसः ॥ २४
राजानं च समासाद्य गान्धारी भरतर्षभ ।
निःसंज्ञा पतिता भूमौ सर्वाण्यन्तःपुराणि च ॥२५
ततस्ताः सञ्जयो राजन्समाश्वासयदातुराः ।
मुह्यमानाः सुबहुशो मुञ्चन्तीर्वारि नेत्रजम् ॥२६
समाश्वस्ताः स्त्रियस्तास्तु वेपमाना मुहुर्मुहुः ।
कदल्य इव वातेन धूयमानाः समन्ततः ॥ २७
राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरम् ।
आश्वासयामास तदा सिञ्चंस्तोयेन कौरवम् ॥२८
स लब्ध्वा शनकैः संज्ञां ताश्च दृष्ट्वा स्त्रियो नृपः ।
उन्मत्त इव राजेन्द्र स्थितस्तूर्णीं विशांपते ॥ २९
ततो ध्यात्वा चिरं कालं निःश्वस्य च पुनःपुनः ।
स्वान्पुत्रान्गर्हयामास बहुमेने च पाण्डवान् ॥ ३०
गर्हयंश्चात्मनो बुद्धिं शकुनेः सौबलस्य च ।
ध्यात्वा तु सुचिरं कालं वेपमानो मुहुर्मुहुः ॥ ३१
संस्तभ्य च मनो भूयो राजा धैर्यसमन्वितः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छत सञ्जयम् ॥ ३२
न त्वया कथितं वाक्यं श्रुतं सञ्जय तन्मया ॥ ३३
कच्चिद्दुर्योधनः सूत न गतो वै यमक्षयम् ।
जये निराशः पुत्रो मे सततं जयकामुकः ।
ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमाम् ॥ ३४
वैशंपायन उवाच ।
एवमुक्तोऽब्रवीत्सूतो राजानं जनमेजय ।
हतो वैकर्तनो राजन्सहपुत्रैर्महारथः ।
भ्रातृभिश्च महेष्वासैः सूतपुत्रैस्तनुत्यजैः ॥ ३५
दुःशासनश्च निहतः पाण्डवेन यशस्विना ।
पीतं च रुधिरं कोपाद्भीमसेनेन संयुगे ॥ ३६
'वैशंपायन उवाच ।
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
दह्यमानोऽब्रवीत्सूतं मुहूर्तं तिष्ठ सञ्जय ।
व्याकुलं मे मनस्तात मा तावत्किंचिदुच्यताम् ३७
राजापि नाब्रवीत्किंचित्सञ्जयो विदुरस्तथा ।
तूर्णींभूतस्तदा सोऽथ बभूव जगतीपतिः ॥' ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

भवतां बाहुवीर्यं हि समाश्रित्य मया युधि ।
पाण्डवेयाः समाहूता युद्धं चेदं प्रवर्तितम् ॥ ७
तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते ।
युध्यमानाश्च समरे योधा वध्यन्ति सर्वशः ॥ ८
जयो वाऽपि वधो वाऽपि युध्यमानस्य संयुगे ।
भवेत्किमत्र चित्रं वै युध्यध्वं सर्वतोमुखाः ॥ ९
पश्यध्वं च महात्मानं कर्णं वैकर्तनं युधि ।
प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्महाबलम् ॥ १०
यस्य वै युधि संत्रासात्कुन्तीपुत्रो धनंजयः ।
निवर्तते सदा मन्दः सिंहात्क्षुद्रमृगो यथा ॥ ११
येन नागायुतप्राणो भीमसेनो महाबलः ।
मानुषेणैव युद्धेन तामवस्थां प्रवेशितः ॥ १२
येन दिव्यास्त्रविच्छूरो मायावी स घटोत्कचः ।
अमोघया रणे शक्त्या निहतो भैरवं नदन् ॥ १३
तस्य दुर्वारवीर्यस्य सत्यसन्धस्य धीमतः ।
बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे ॥ १४
द्रोणपुत्रस्य विक्रान्तं राधेयस्यैव चोभयोः ।
पश्यन्तु पाण्डुपुत्रास्ते विष्णुवासवयोरिव ॥ १५
सर्वे एव भवन्तश्च शक्ताः प्रत्येकशोऽपि वा ।
पाण्डुपुत्रान्रणे हन्तुंससैन्यान्किमु संहताः ।
वीर्यवन्तः कृतास्त्राश्च द्रक्ष्यथाद्य परस्परम् ॥ १६
सञ्जय उवाच ।
एवमुक्त्वा ततः कर्णं चक्रे सेनापतिं तदा ।
तव पुत्रो महावीर्यो भ्रातृभिः सहितोऽनघ ॥ १७
सैनापत्यमथावाप्य कर्णो राजन्महारथः ।
सिंहनादं विनद्योच्चैः प्रायुध्यत रणोत्कटः ॥ १८
ससृञ्जयानां सर्वेषां पाञ्चालानां च मारिष ।
केकयानां विदेहानां चकार कदनं महत् ॥ १९
तस्येषुधाराः शतशः प्रादुरासञ्छरासनात् ।
अग्रे पुङ्खेषु संसक्ता यथा भ्रमरपङ्क्तयः ॥ २०
स पीडयित्वा पाञ्चालान्पाण्डवांश्च तरस्विनः ।
हत्वा सहस्रशो योधानर्जुनेन निपातितः ॥ २१

॥ इति श्रीमन्महाभारते कर्णपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

अन्तःपुराणि स्त्रियः ॥ २५ ॥ कदल्यइव वेपमाना आसन्निति शेषः ॥ २७ ॥ दृष्ट्वा मनसैवात्मप्रत्ययेन दुःखवतीर्ज्ञात्वा ॥२९॥ इष्टवियोगमात्रेण दशरथादिर्मृतः । अस्यतु जये नैराश्यमधिकं मरणकारणमस्तीति भावः ॥ ३४ ॥ प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

धृतराष्ट्रेण निजसेनायां निहतानां नामनिवेदनं चोदितेन सञ्जयेन तत्कथनम् ॥ १ ॥

'जनमेजय उवाच ।
तच्छ्रुत्वा कर्णहननं पुत्रांश्चैव पलायितान् ।
धृतराष्ट्रो नृपश्चैव द्विजश्रेष्ठ किमब्रवीत् ॥ १
प्राप्तवान्व्यसनं घोरं पुत्रव्यसनजं महत् ।
काले यदुक्तवांस्तस्मिंस्तन्ममाचक्ष्व तत्त्वतः ॥' २
वैशंपायन उवाच ।
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्सञ्जयं सूतं शोकसंविग्नमानसः ॥ ३
दुष्प्रणीतेन मे तात पुत्रस्यादीर्घजीविनः ।
हतं वैकर्तनं श्रुत्वा शोको मर्माणि कृन्तति ॥ ४
तस्य मे संशयं छिन्धि दुःखपारं तितीर्षतः ।
कुरूणां सृञ्जयानां च के च जीवन्ति के मृताः ॥ ५
सञ्जय उवाच ।
हतः शान्तनवो राजन्दुराधर्षः प्रतापवान् ।
हत्वा पाण्डवयोधानामर्बुदं दशभिर्दिनैः ॥ ६
तथा द्रोणो महेष्वासः पाञ्चालानां रथव्रजान् ।
निहत्य युधि दुर्धर्षः पश्चाद्रुक्मरथो हतः ॥ ७
हतशेषस्य भीष्मेण द्रोणेन च महात्मना ।
अर्धं निहत्य सैन्यस्य कर्णो वैकर्तनो हतः ॥ ८
विविंशतिर्महाराज राजपुत्रो महाबलः ।
आनर्तयोधाञ्शतशो निहत्य निहतो रणे ॥ ९
तथा पुत्रो विकर्णस्ते क्षत्रव्रतमनुस्मरन् ।
क्षीणबाणो हतः शूरः स्थितो ह्यभिमुखः परैः ॥ १०
घोररूपान्परिक्लेशान्दुर्योधनकृतान्बहून् ।
प्रतिज्ञां स्मरता तेन भीमसेनेन पातितः ॥ ११
विन्दानुविन्दावावन्त्यौ राजपुत्रौ महारथौ ।
कृत्वा त्वसुकरं कर्म गतौ वैवस्वतक्षयम् ॥ १२
सिन्धुराष्ट्रमुखानीह दश राष्ट्राणि यानिह ।
यस्य तिष्ठन्ति वचने यः स्थितस्तव शासने ॥ १३
अक्षौहिणीर्दशैकां च विनिर्जित्य शितैः शरैः ।
सोऽर्जुनेन हतो राजन्महावीर्यो जयद्रथः ॥ १४
तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः ।
वर्तमानः पितुः शास्त्रे सौभद्रेण निपातितः ॥ १५
तथा दौःशासनिः शूरो बाहुशाली रणोत्कटः ।
द्रौपदेयेन संगम्य गमितो यमसादनम् ॥ १६
किरातानामधिपतिः सागरानूपवासिनाम् ।
देवराजस्य धर्मात्मा प्रियो बहुमतः सखा ॥ १७
भगदत्तो महीपालः क्षत्रधर्मरतः सदा ।
धनंजयेन विक्रम्य गमितो यमसादनम् ॥ १८
तथा कौरवदायादो न्यस्तशस्त्रो महायशाः ।
हतो भूरिश्रवा राजञ्शूरः सात्यकिना युधि ॥ १९
श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धुरंधरः ।
चरन्नभीतवत्सङ्ख्ये निहतः सव्यसाचिना ॥ २०
तव पुत्रः सदामर्षी कृतास्त्रो युद्धदुर्मदः ।
दुःशासनो महाराज भीमसेनेन पातितः ॥ २१
यस्य राजन्गजानीकं बहुसाहस्रमद्भुतम् ।
सुदक्षिणः स संग्रामे निहतः सव्यसाचिना ॥ २२
कोसलानामधिपतिर्हत्वा बहुमतान्परान् ।
सौभद्रेणेह विक्रम्य गमितो यमसादनम् ॥ २३
बहुशो योधयित्वा तु भीमसेनं महारथम् ।
चित्रसेनस्तव सुतो भीमसेनेन पातितः ॥ २४
मद्रराजात्मजः शूरः परेषां भयवर्धनः ।
असिचर्मधरः श्रीमान्सौभद्रेण निपातितः ॥ २५
समः कर्णस्य समरे यः स कर्णस्य पश्यतः ।
वृषसेनो महातेजाः शीघ्रास्त्रो दृढविक्रमः ॥ २६
अभिमन्योर्वधं स्मृत्वा प्रतिज्ञामपि चात्मनः ।
धनंजयेन विक्रम्य गमितो यमसादनम् ॥ २७
नित्यं प्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः ।
विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः ॥ २८
शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष ।
हतो रुक्मरथो राजञ्श्यालो मातुलजो युधि ॥ २९
राजा भागीरथो वृद्धो बृहत्क्षत्रश्च केकयः ।
पराक्रमन्तौ विक्रान्तौ निहतौ वीर्यवत्तरौ ॥ ३०
भगदत्तसुतो राजन्कृतप्रज्ञो महाबलः ।

श्येनवच्चरता सङ्ख्ये नकुलेन निपातितः ॥ ३१
पितामहस्तव तथा बाह्लीकः सह बाह्लिकैः ।
निहतो भीमसेनेन महाबलपराक्रमः ॥ ३२
जयत्सेनस्तथा राजञ्जारासंधिर्महाबलः ।
मागधो निहतः सङ्ख्ये सौभद्रेण महात्मना ॥ ३३
पुत्रस्ते दुर्मुखो राजन्दुःसहश्च महारथः ।
गदया भीमसेनेन निहतौ शूरमानिनौ ॥ ३४
दुर्मर्षणो दुर्विषहो दुर्जयश्च महारथः ।
कृत्वा त्वसुकरं कर्म गता वैवस्वतक्षयम् ॥ ३५
उभौ कलिङ्गवृषकौ भ्रातरौ युद्धदुर्मदौ ।
कृत्वा चासुकरं कर्म गतौ वैवस्वतक्षयम् ॥ ३६
सचिवो वृषपर्वा ते शूरः परमवीर्यवान् ।
भीमसेनेन विक्रम्य गमितो यमसादनम् ॥ ३७
तथैव पौरवो राजा नागायुतबलो महान् ।
समरे पाण्डुपुत्रेण निहतः सव्यसाचिना ॥ ३८
वसातयो महाराज द्विसाहस्राः प्रहारिणः ।
शूरसेनाश्च विक्रान्ताः सर्वे युधि निपातिताः ॥ ३९
अभीषाहाः कवचिनः प्रहरन्तो रणोत्कटाः ।
शिबयश्च रथोदाराः कालिङ्गसहिता हताः ॥ ४०
गोकुले नित्यसंवृद्धा युद्धे परमकोपनाः ।
गोपालाः कृतवीरास्ते निहताः सव्यसाचिना ॥ ४१
श्रेणयो बहुसाहस्राः संशप्तकगणाश्च ये ।
ते सर्वे पार्थमासाद्य गता वैवस्वतक्षयम् ॥ ४२
श्यालौ तव महाराज राजानौ वृषकाचलौ ।
त्वदर्थमतिविक्रान्तौ निहतौ सव्यसाचिना ॥ ४३
उग्रकर्मा महेष्वासो नामतः कर्मतस्तथा ।
साल्वराजो महाबाहुर्भीमसेनेन पातितः ॥ ४४
ओघवांश्च महाराज बृहन्तः सहितौ रणे ।
पराक्रमन्तौ मित्रार्थे गतौ वैवस्वतक्षयम् ॥ ४५
तथ रथिनां श्रेष्ठः क्षेमधूर्तिर्विशांपते ।
निहतो गदया राजन्भीमसेनेन संयुगे ॥ ४६
तथा राजन्महेष्वासो जलसन्धो महाबलः ।
सुमहत्कदनं कृत्वा हतः सात्यकिना रणे ॥ ४७
अलम्बुसो राक्षसेन्द्रः खरबन्धुरयानवान् ।
घटोत्कचेन विक्रम्य गमितो यमसादनम् ॥ ४८
राधेयः सूतपुत्रश्च भ्रातरश्च महारथाः ।
केकयाः सर्वशश्चापि निहताः सव्यसाचिना ॥ ४९
मालवा मद्रकाश्चैव द्राविडाश्चोग्रकर्मिणः ।
यौधेयाश्च ललित्थाश्च क्षुद्रकाश्चाप्युशीनराः ॥ ५०
मावेल्लकास्तुण्डिकेराः सावित्रीपुत्रकाश्च ये ।
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च मारिष ॥
पत्तीनां निहताः सङ्घा हयानां प्रयुतानि च ।
रथव्रजाश्च निहता हताश्च वरवारणाः ॥ ५२
सध्वजाः सायुधाः शूराः सवर्माम्बरभूषणाः ।
कालेन महताऽऽयस्ताः कुशलैर्ये च वर्धिताः ॥ ५३
ते हताः समरे राजन्पार्थेनाक्लिष्टकर्मणा ।
अन्ये तथाऽमितबलाः परस्परवधैषिणः ॥ ५४
एते चान्ये च बहवो राजानः सगणा रणे ।
हताः सहस्रशो राजन्यन्मां त्वं परिपृच्छसि ॥ ५५
एवमेष क्षयो वृत्तः कर्णार्जुनसमागमे ।
महेन्द्रेण यथा वृत्रो यथा रामेण रावणः ॥ ५६
यथा कृष्णेन नरको मुरुश्च निहतो रणे ।
कार्तवीर्यश्च रामेण भार्गवेण यथा हतः ॥ ५७
सज्ञातिबान्धवः शूरः समरे युद्धदुर्मदः ।
रणे कृत्वा महद्युद्धं घोरं त्रैलोक्यमोहनम् ॥ ५८
यथा स्कन्देन महिषो यथा रुद्रेण चान्धकः ।
तथाऽर्जुनेन स हतो द्वैरथे युद्धदुर्मदः ॥ ५९
सामात्यबान्धवो राजन्कर्णः प्रहरतां वरः ।
जयाशा धार्तराष्ट्राणां वैरस्य च मुखं नृपः ॥ ६०
तीर्णं तत्पाण्डवै राजन्यत्पुरा नावबुध्यसे ।
उच्यमानो महाराज बन्धुभिर्हितकाङ्क्षिभिः ॥ ६१
'न कृतं च त्वया पूर्वं दैवेन विधिना बलात् ।'
तदिदं समनुप्राप्तं व्यसनं सुमहात्ययम् ॥ ६२

दुर्मनाश्च महारथः इति क. ख. ङ. पाठः । विकर्णश्च महाबलः इति ङ. पाठः ॥ ३५ ॥ खरबन्धुरयानवान् गर्दभसंयुतरथवान् । अलायुधो राक्षसेन्द्रो बकबन्धुरयानवान् इति क. ख. ङ. पाठः ॥ ४८ ॥ कर्णस्तथा हत इत्यनुकृष्यते ॥ ५९ ॥

द्वितीयोऽध्यायः ॥ २ ॥

त्राणां राज्यकामानां त्वया राजन्हितैषिणा । अहितान्येव चीर्णानि तेषां ते फलमागतम् ॥ ६३

॥ इति श्रीमन्महाभारते कर्णपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

सञ्जयेन धृतराष्ट्रंप्रति युद्धे निहतानां परेषां नामकथनम् ॥ १ ॥

तराष्ट्र उवाच ।
ाख्याता मामकास्तात निहता युधि पाण्डवैः ।
तांश्च पाण्डवेयानां मामकैर्ब्रूहि सञ्जय ॥ १
ञ्जय उवाच ।
तिनो युधि विक्रान्ता महासत्त्वा महाबलाः ।
ानुबन्धाः सहामात्या गाङ्गेयेन निपातिताः ॥ २
ारायणा वल्लवाश्च रामाश्च शतशो परे ।
नुरक्ताश्च वीरेण भीष्मेण युधि पातिताः ॥ ३
मः किरीटिना सङ्ख्ये वीर्येण च बलेन च ।
त्यजित्सत्यसन्धेन द्रोणेन निहतो युधि ॥ ४
ञ्चालानां महेष्वासाः सर्वे युद्धविशारदाः ।
ोणेन सह संगम्य गता वैवस्वतक्षयम् ॥ ५
था विराटद्रुपदौ वृद्धौ सहसुतौ नृपौ ।
ाक्रमन्तौ मित्रार्थे द्रोणेन निहतौ रणे ॥ ६
बाल एव समरे संमितः सव्यसाचिना ।
शवेन च दुर्धर्षो बलदेवेन चाभिभूः ॥ ७
षां कदनं कृत्वा महद्रणविशारदः ।
रेवार्य मदामात्रैः षड्भिः परमकै रथैः ।
शक्तुवद्भिर्बीभत्सुमभिमन्युर्निपातितः ॥ ८
ं तं विरथं वीरं क्षत्रधर्मे व्यवस्थितम् ।
ःशासनिर्महाराज सौभद्रं हतवान्रणे ॥ ९
चरनिहन्ता च महत्या सेनया वृतः ।
म्बष्ठस्य सुतः श्रीमान्मित्रहेतोः पराक्रमन् ॥ १०
साद्य लक्ष्मणं वीरं दुर्योधनसुतं रणे ।
महत्कदनं कृत्वा गतो वैवस्वतक्षयम् ॥ ११
न्तः सुमहेष्वासः कृतास्त्रो युद्धदुर्मदः ।
शासनेन विक्रम्य गमितो यमसादनम् ॥ १२

मणिमान्दण्डधारश्च राजानौ युद्धदुर्मदौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन युधि पातितौ ॥ १३
अंशुमान्भोजराजस्तु सहसैन्यो महारथः ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ १४
सामुद्रश्चित्रसेनश्च सह पुत्रेण भारत ।
समुद्रसेनेन बलाद्गमितो यमसादनम् ॥ १५
अनूपवासी नीलश्च व्याघ्रदत्तश्च वीर्यवान् ।
अश्वत्थाम्ना विकर्णेन गमितौ यमसादनम् ॥ १६
चित्रायुधश्चित्रयोधी कृत्वा च कदनं महत् ।
चित्रमार्गेण विक्रम्य विकर्णेन हतो मृधे ॥ १७
वृकोदरसमो युद्धे वृतः केकयजो युधि ।
केकयेन च विक्रम्य भ्राता भ्रात्रा निपातितः ॥ १८
जनमेजयो गदायोधी पार्वतीयः प्रतापवान् ।
दुर्मुखेन महाराज तव पुत्रेण पातितः ॥ १९
रोचमानौ नरव्याघ्रौ रोचमानौ ग्रहाविव ।
द्रोणेन युगपद्राजन्दिवं संप्रापितौ शरैः ॥ २०
नृपाश्च प्रतियुध्यन्तः पराक्रान्ता विशांपते ।
कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ॥ २१
पुरुजित्कुन्तिभोजश्च मातुलौ सव्यसाचिनः ।
संग्रामनिर्जिताँल्लोकान्गमितौ द्रोणसायकैः ॥ २२
अभिभूः काशिराजश्च काशिकैर्बहुभिर्वृतः ।
वसुदानस्य पुत्रेण त्याजितो देहमाहवे ॥ २३
अमितौजा युधामन्युरुत्तमौजाश्च वीर्यवान् ।
निहत्य शतशः शूरानसदीयैर्निपातिताः ॥ २४
मित्रवर्मा च पाञ्चाल्यः क्षत्रधर्मा च भारत ।
द्रोणेन परमेष्वासौ गमितौ यमसादनम् ॥ २५
शिखण्डितनयो युद्धे क्षत्रदेवो युधांपतिः ।

रोचमानौ एकनामानौ भ्रातरौ ॥ २० ॥

लक्ष्मणेन हतो राजंस्तव पौत्रेण भारत ॥ २६
सुचित्रश्चित्रवर्मा च पितापुत्रौ महारथौ ।
प्रचरन्तौ महावीरौ द्रोणेन निहतौ रणे ॥ २७
वार्धक्षेमिर्महाराज समुद्र इव पर्वणि ।
आयुधक्षयमासाद्य प्रशान्तिं परमां गतः ॥ २८
सेनाबिन्दुसुतः श्रेष्ठः शात्रवान्प्रहरन्युधि ।
बाह्लिकेन महाराज कौरवेन्द्रेण पातितः ॥ २९
धृष्टकेतुर्महाराज चेदीनां प्रवरो रथः ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ३०
तथा सत्यधृतिर्वीरः कृत्वा कदनमाहवे ।
पाण्डवार्थे पराक्रान्तो गमितो यमसादनम् ॥ ३१
पुत्रस्तु शिशुपालस्य सुकेतुः पृथिवीपतिः ।
निहत्य शात्रवान्सङ्ख्ये द्रोणेन निहतो युधि ॥ ३२
तथा सत्यधृतिर्वीरो मदिराश्वश्च वीर्यवान् ।
सूर्यदत्तश्च विक्रान्तो निहतो द्रोणसायकैः ॥ ३३
'मात्स्यादवरजः श्रीमाञ्शतानीको निपातितः ।
श्रेणिमांश्च महाराज युध्यमानः पराक्रमी ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ३४
तथैव युधि विक्रान्तो मागधः परमास्त्रवित् ।
भीष्मेण निहतो राजञ्शेतेऽद्य परवीरहा ॥ ३५
विराटपुत्रः शङ्खस्तु उत्तरश्च महारथः ।
कुर्वन्तौ सुमहत्कर्म गतौ वैवस्वतक्षयम् ॥ ३६
वसुदानश्च कदनं कुर्वाणोऽतीव संयुगे ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ ३७
एते चान्ये च बहवः पाण्डवानां महारथाः ।
हता द्रोणेन विक्रम्य यन्मां त्वं परिपृच्छसि ॥ ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

सञ्जयेन धृतराष्ट्रंप्रति हतावशिष्टानां नामकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
मामकस्यास्य सैन्यस्य हृतोत्सेकस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १
तौ हि वीरौ महेष्वासौ मदर्थे कुरुसत्तमौ ।
भीष्मद्रोणौ हतौ श्रुत्वा कोन्वर्थो जीवितेन मे ॥ २
न च मृष्यामि राधेयं हतमाहवशोभिनम् ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ ३
हतप्रवरसैन्यं मे यथा शंससि सञ्जय ।
अहतानपि मे शंस येऽत्र जीवन्ति केचन ॥ ४
एतेषु हि मृतेष्वद्य ये त्वया परिकीर्तिताः ।
येऽपि जीवन्ति ते सर्वे मृता इति मतिर्मम ॥ ५
सञ्जय उवाच ।
यस्मिन्महास्त्राणि समर्पितानि
चित्राणि शुभ्राणि चतुर्विधानि ।
दिव्यानि राजन्विहितानि चैव
द्रोणेन वीरे द्विजसत्तमेन ॥ ६
महारथः कृतिमान्क्षिप्रहस्तो
दृढायुधो दृढमुष्टिर्दृढेषुः ।
स वीर्यवान्द्रोणपुत्रस्तरस्वी
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ७
आनर्तवासी हृदिकात्मजोऽसौ
महारथः सात्वतानां वरिष्ठः ।
स्वयं भोजः कृतवर्मा कृतास्त्रो
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ८
आर्तायनिः समरे दुष्प्रकम्प्यः
सेनाग्रणीः प्रथमस्तावकानाम् ।
यः स्वस्रीयान्पाण्डवेयान्विसृज्य
सत्यां वाचं स्वां चिकीर्षुस्तरस्वी ॥ ९

ककुदे प्रधानपुरुषसमूहे भीष्मद्रोणकर्णरूपे मृदितेनाशिते सति ॥ १ ॥ मृताः मृतप्रायाः ॥५॥ चतुर्विधानि दृढदूरसूक्ष्मशब्दवेधीनि । विहितानि धनुर्वेदोदितानि ॥ ६ ॥ कृतिमान् अवन्ध्ययत्नः ॥ ७ ॥ आर्तायनिः शल्यः । स्वस्रीयान् भागिनेयान् ॥ ९ ॥

तेजोवधं सूतपुत्रस्य सङ्ख्ये
प्रतिश्रुत्याजातशत्रोः पुरस्तात्।
दुराधर्षः शक्रसमानवीर्यः
शल्यः स्थितो योद्धुकामस्त्वदर्थे ॥ १०
शारद्वतो गौतमश्चापि राज-
न्महाबाहुर्बहुचित्रास्त्रयोधी।
धनुश्चित्रं सुमहद्भारसाहं
व्यवस्थितो योद्धुकामः प्रगृह्य ॥ ११
गान्धारराजः ससुतश्च राज-
न्दुर्द्यूतदेवी कलहप्रियश्च।
गान्धारमुख्यैर्यवनैश्च राज-
न्व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ १२
महारथः केकयराजपुत्रः
सदश्वयुक्तं च पताकिनं च।
रथं समारुह्य कुरुप्रवीर
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ १३
तथा सुतस्ते ज्वलनार्कवर्णं
रथं समास्थाय कुरुप्रवीरः।
व्यवस्थितः पुरुमित्रो नरेन्द्र
व्यभ्रे सूर्यो भ्राजमानो यथा खे ॥ १४
दुर्योधनो नागकुलस्य मध्ये
व्यवस्थितः सिंह इवावभासे।
रथेन जाम्बूनदभूषणेन
व्यवस्थितः समरे योत्स्यमानः ॥ १५
स राजमध्ये पुरुषप्रवीरो
रराज जाम्बूनदचित्रवर्मा।
पद्मप्रभो वह्निरिवाल्पधूमो
मेघान्तरे सूर्य इव प्रकाशः॥ १६
तथा सुषेणोऽप्यसिचर्मपाणि-
स्तवात्मजः सत्यसेनश्च वीरः।
व्यवस्थितौ चित्रसेनेन सार्धं
हृष्टात्मानौ समरे योद्धुकामौ ॥ १७
ह्रीनिषेवो भारतराजपुत्र
उग्रायुधः श्रुतवर्मा जयश्च।
शलश्च सत्यव्रतदुःशलौ च
व्यवस्थिताः सहसैन्या नराग्र्याः ॥ १८
कैतव्यानामधिपः शूरमानी
रणेरणे शत्रुहा राजपुत्रः।
रथी हयी नागपत्तिप्रयायी
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ १९
वीरः श्रुतायुश्च धृतायुधश्च
चित्राङ्गदश्चित्रसेनश्च वीरः।
व्यवस्थिता योद्धुकामा नराग्र्याः
प्रहारिणो मानिनः सत्यसन्धाः ॥ २०
कर्णात्मजः सत्यसन्धो महात्मा
व्यवस्थितः समरे योद्धुकामः ॥ २१
अथापरौ कर्णसुतौ वरास्त्रौ
व्यवस्थितौ लघुहस्तौ नरेन्द्र।
बले महत्युल्बणसत्ववीर्यौ
समास्थितौ योद्धुकामौ त्वदर्थे ॥ २२
एतैश्च मुख्यैरपरैश्च राज-
न्योधप्रवीरैरमितप्रभावैः।
व्यवस्थितो नागकुलस्य मध्ये
यथा महेन्द्रः कुरुराजो जयाय ॥ २३

धृतराष्ट्र उवाच।
आख्याता जीवमाना ये परे सैन्या यथायथम्।
इतीदमवगच्छामि व्यक्तमर्थाभिपत्तितः ॥ २४

वैशंपायन उवाच।
एवं ब्रुवन्नेव तदा धृतराष्ट्रोऽम्बिकासुतः।
हतप्रवीरं भूयिष्ठं किंचिच्छेषं स्वकं बलम्।

नागपत्तिप्रयायी नागैः पत्तिभिश्च प्रयातुं शीलमस्य। नागरथप्रयायीति पाठान्तरम् ॥ १९ ॥ सैन्याः सेनामर्हन्ति ते राजानः। यथायथं पक्षद्वयेऽपि जीवमाना आख्याताः। इदं भाविजयपराजयादिकम्। इति अनेन पक्षद्वयबलतोलनेन व्यक्तं स्पष्टमभिगच्छामि जानामि। अर्थाभिपत्तितः फलोपपत्तितः। तेन जयो मदीयानां नास्तीति निश्चिनोमीति भावः। आख्याता वै जीवमानाः परेभ्योऽन्ये यथा ध्रुवम्। इतीदमवगच्छामि व्यक्तमर्थो व्यवस्थितः। इति क. ख. ङ. पाठः ॥ २४ ॥ चतुर्थोऽध्यायः ॥ ४ ॥



श्रुत्वा व्यामोहमागच्छच्छोकव्याकुलितेन्द्रियः॥२५
मुह्यमानोऽब्रवीचापि मुहूर्तं तिष्ठ सञ्जय ।
व्याकुलं मे मनस्तात श्रुत्वा सुमहदप्रियम्॥ २६
मनो मुह्यति चाङ्गानि न च शक्नोमि धारि
इत्येवमुक्त्वा वचनं धृतराष्ट्रोऽम्बिकासुतः
भ्रान्तचित्तस्ततः सोऽथ बभूव जगतीपतिः

॥ इति श्रीमन्महाभारते कर्णपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

धृतराष्ट्रेण कर्णगुणानुवर्णनपूर्वकं शोचनम् ॥ १ ॥

जनमेजय उवाच ।
श्रुत्वा कर्णं हतं युद्धे पुत्रांश्चैव पलायिनः ।
नरेन्द्रः किंचिदाश्वस्तो द्विजश्रेष्ठ किमब्रवीत् ॥ १
प्राप्तवान्परमं दुःखं पुत्रव्यसनजं महत् ।
तस्मिन्यदुक्तवान्काले तन्ममाचक्ष्व पृच्छतः ॥ २
वैशंपायन उवाच ।
श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवाद्भुतम् ।
भूतसंमोहनं भीमं मेरोः संसर्पणं यथा ॥ ३
चित्तमोहमिवायुक्तं भार्गवस्य महामतेः ।
पराजयमिवेन्द्रस्य द्विषद्भ्यो भीमकर्मणः ॥ ४
दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः ।
संशोषणमिवाचिन्त्यं समुद्रस्याक्षयाम्भसः ॥ ५
महीवियद्दिगम्बूनां सर्वनाशमिवाद्भुतम् ।
कर्मणोरिव वैफल्यमुभयोः पुण्यपापयोः ॥ ६
संचिन्त्य निपुणं बुद्ध्या धृतराष्ट्रो जनेश्वरः ।
नेदमस्तीति संचिन्त्य कर्णस्य समरे वधम् ॥ ७
प्राणिनामेवमात्मत्वात्स्यादपीति विचार्य च ।
शोकाग्निना दह्यमानो धम्यमान इवाशये ॥ ८
विस्रस्ताङ्गः श्वसन्दीनो हाहेत्युक्त्वा सुदुःखितः ।
विललाप महाराज धृतराष्ट्रोऽम्बिकासुतः ॥ ९
धृतराष्ट्र उवाच ।
सञ्जयाधिरथिर्वीरः सिंहद्विरदविक्रमः ।
वृषभप्रतिमस्कन्धो वृषभाक्षगतिस्वरः ॥ १०
वृषभो वृषभस्येव यो युद्धे न निवर्तते ।
शत्रोरपि महेन्द्रस्य वज्रसंहननो युवा ॥ ११
यस्य ज्यातलशब्देन शरवृष्टिरवेण च ।
रथाश्वनरमातङ्गा नावतिष्ठन्ति संयुगे ॥
यमाश्रित्य महाबाहुं द्विषत्सङ्घघ्नमच्युतम्
दुर्योधनोऽकरोद्वैरं पाण्डुपुत्रैर्महारथैः ॥
स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे
निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः ॥
यो नामन्यत वै नित्यमच्युतं च धनंजयम्
न वृष्णीन्सहितानन्यान्स्वबाहुबलदर्पितः ।
शार्ङ्गगाण्डीवधन्वानौ सहितावपराजितौ ।
अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे
इति यः सततं मन्दमवोचल्लोभमोहितम् ।
दुर्योधनमवाचीनं राज्यकामुकमातुरम् ॥
योऽजयत्सर्वकाम्भोजानावन्त्यान्केकयैः स
गान्धारान्मद्रकान्मात्स्यांस्त्रिगर्तांस्तङ्गणाञ्श
पाञ्चालांश्च विदेहांश्च कुलिन्दान्काशिकोस
सुह्मानङ्गांश्च वङ्गांश्च निषादान्पुण्ड्रकीकटान्
वत्सान्कलिङ्गान्दरदानश्मकानृषिकानपि ।
'शबरान्हारहूणांश्च प्रघूणान्सरलानपि ॥
म्लेच्छराष्ट्राधिपांश्चैव दुर्गानाटविकांस्तथा
जित्वैतान्समरे वीरः प्रदीप्तैः कङ्कपत्रिभिः
करमाहारयामास जित्वा सर्वानरींस्तथा ।
दुर्योधनस्य वृद्ध्यर्थं राधेयो रथिनां वरः ।
दिव्यास्त्रविमहातेजाः कर्णो वैकर्तनो वृषः
सेनागोप्ता च स कथं शत्रुभिः परमास्त्रवित्
घातितः पाण्डवैः शूरैः समरे वीर्यशालिभिः

पुत्रांश्चैव निपातितान् इति झ॰ पाठः ॥ १ ॥ भार्गवस्य रामस्य शुक्रस्य वा ॥ ४ ॥ कर्णस्य वधं संचिन्त्य मनस्यालोच्य इदं कृत्स्नं जगत्स्वसैन्यं वा नास्तीति संचिन्त्य निश्चित्य वि तृतीयेन संबन्धः ॥ ७ ॥ अवाचीनं चिन्तयाऽधोमुखम

वृषो महेन्द्रो देवेषु वृषः कर्णो नरेष्वपि ।
तृतीयमन्यं लोकेषु वृषं नैवानुशुश्रुम ॥ २४
उच्चैःश्रवा वरोऽश्वानां राज्ञां वैश्रवणो वरः ।
वरो महेन्द्रो देवानां कर्णः प्रहरतां वरः ॥ २५
योऽजितः पार्थिवैः शूरैः समर्थैर्वीर्यशालिभिः ।
दुर्योधनस्य वृद्ध्यर्थं कृत्स्नामुर्वीमथाजयत् ॥ २६
यं लब्ध्वा मागधो राजा सान्त्वमानोऽथ सौहृदैः ।
अरौत्सीत्पार्थिवं क्षत्रमृते यादवकौरवान् ॥ २७
तं श्रुत्वा निहतं कर्णं द्वैरथे सव्यसाचिना ।
शोकार्णवे निमग्नोऽहं भिन्ना नौरिव सागरे ॥ २८
तं वृषं निहतं श्रुत्वा द्वैरथे रथिनां वरम् ।
शोकार्णवे निमग्नोऽहमप्लवः सागरे यथा ॥ २९
ईदृशैर्यद्यहं दुःखैर्न विनश्यामि सञ्जय ।
वज्राद्दृढतरं मन्ये हृदयं मम दुर्भिदम् ॥ ३०
ज्ञातिसंबन्धिमित्राणामिमं श्रुत्वा पराभवम् ।
को मदन्यः पुमाँल्लोके न जह्यात्सूत जीवितम् ॥ ३१
विषमग्निं प्रपातं च पर्वताग्रादहं वृणे ।
'महाप्रस्थानगमनं जलं प्रायोपवेशनम् ।'
न हि शक्ष्यामि दुःखानि सोढुं कष्टानि सञ्जय ॥ ३२

॥ इति श्रीमन्महाभारते कर्णपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

कर्णवधश्रवणानन्तरीयकधृतराष्ट्रप्रवृत्तिं पृष्टेन वैशंपायनेन कर्णदुर्योधनस्तुतिनिन्दापूर्वकं सञ्जयंप्रति कर्णार्जुनयुद्धकथनचोदनारूपधृतराष्ट्रप्रवृत्तिकथनम् ॥ १ ॥

सञ्जय उवाच ।
श्रिया कुलेन यशसा तपसा च श्रुतेन च ।
त्वामद्य सन्तो मन्यन्ते ययातिमिव नाहुषम् ॥ १
श्रुते महर्षिप्रतिमः कृतकृत्योऽसि पार्थिव ।
पर्यवस्थापयात्मानं मा विषादे मनः कृथाः ॥ २
धृतराष्ट्र उवाच ।
दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्र सालप्रतीकाशः कर्णोऽहन्यत संयुगे ॥ ३
हत्वा युधिष्ठिरानीकं पाञ्चालानां रथव्रजान् ।
प्रताप्य शरवर्षेण दिशः सर्वा महारथः ॥ ४
मोहयित्वा रणे पार्थान्वज्रहस्त इवासुरान् ।
स कथं निहतः शेते वायुरुग्ण इव द्रुमः ॥ ५
शोकस्यान्तं न पश्यामि पारं जलनिधेरिव ।
चिन्ता मे वर्धतेऽतीव मुमूर्षा चापि जायते ॥ ६
कर्णस्य निधनं श्रुत्वा विजयं फल्गुनस्य च ।
अश्रद्धेयमहं मन्ये वधं कर्णस्य सञ्जय ॥ ७
वज्रसारमिदं नूनं हृदयं दुर्भिदं मम ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं कर्णं न दीर्यते ॥ ८
आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा ।
यत्र कर्णं हतं श्रुत्वा जीवामीह सुदुःखितः ॥ ९
धिग्जीवितमिदं चैव सुहृद्धीनस्य सञ्जय ।
अद्य चाहं दशामेतां गतः सञ्जय गर्हिताम् ।
कृपणं वर्तयिष्यामि शोच्यः सर्वस्य मन्दधीः ॥ १०
अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः ।
परिभूतः कथं सूत परैः शक्ष्यामि जीवितुम् ॥ ११
दुःखाद्दुःखतरं मन्ये प्राप्तवानस्मि सञ्जय ।
भीष्मद्रोणवधेनैव कर्णस्य च महात्मनः ॥ १२
नावशेषं प्रपश्यामि सूतपुत्रे हते युधि ।
स हि पारं महानासीत्पुत्राणां मम सञ्जय ॥ १३
युद्धे हि निहतः शूरो विसृजन्सायकान्बहून् ।
को हि मे जीवितेनार्थस्तमृते पुरुषर्षभम् ॥ १४
रथादाधिरथिर्नूनं न्यपतत्सायकार्दितः ।
पर्वतस्येव शिखरं वज्रपाताद्विदारितम् ॥ १५
स शेते पृथिवीं नूनं शोभयन्रुधिरोक्षितः ।

जलवर्षित्वाद्देवेषु महेन्द्रो वृषः । धनवर्षित्वान्मनुष्येषु कर्णो वृषः । तृतीयमेवमभितो वृष्टिकर्तारं वृषम् ॥ २४ ॥ अप्लवः नौकाहीनः ॥ २९ ॥ पञ्चमोऽध्यायः ॥ ५ ॥

मातङ्ग इव मत्तेन मातङ्गेन निपातितः ॥ १६
यो बलं धार्तराष्ट्राणां पाण्डवानां यतो भयम् ।
सोऽर्जुनेन हतः कर्णः प्रतिमानं धनुष्मताम् १७
स हि वीरो महेष्वासो मित्राणामभयंकरः ।
शेते विनिहतो वीरः शक्रेणेव पुरा बलः ॥ १८
पङ्गोरिवाध्वगमनं दरिद्रस्येव कामितम् ।
दुर्योधनस्य लोभश्च समान्येतानि सञ्जय ॥ १९
अन्यथा चिन्तितं कार्यमन्यथा तत्तु जायते ।
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ॥ २०
पलायमानः कृपणो दीनात्मा दीनपौरुषः ।
कच्चिद्विनिहतः सूत पुत्रो दुःशासनो मम ॥ २१
कच्चिन्न दीनाचरितं कृतवांस्तात संयुगे ।
कच्चिन्न निहतः शूरा यथाऽन्ये क्षत्रियर्षभाः ॥ २२
युधिष्ठिरस्य वचनं मा युद्धमिति सर्वदा ।
दुर्योधनो नाभ्यगृह्णान्मूढः पथ्यमिवौषधम् ॥ २३
शरतल्पे शयानेन भीष्मेण सुमहात्मना ।
पानीयं याचितः पार्थः सोविध्यन्मेदिनीतलम् २४
जलस्य धारां जनितां दृष्ट्वा पाण्डुसुतेन च ।
अब्रवीत्स महाबाहुस्तात संशाम्य पाण्डवैः ॥ २५
प्रशमाद्धि भवेच्छान्तिर्मदन्तं युद्धमस्तु वः ।
भ्रातृभावेन पृथिवीं भुङ्क्ष्व पाण्डुसुतैः सह ॥ २६
अकुर्वन्वचनं तस्य नूनं शोचति पुत्रकः ।
तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः ॥ २७
अहं तु निहतामात्यो हतपुत्रश्च सञ्जय ।
द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः ॥ २८
यथा हि शकुनिं गृह्य छित्त्वा पक्षौ च सञ्जय ।
विसर्जयन्ति संहृष्टाः क्रीडमानाः कुमारकाः ॥ २९
लूनपक्षतया तस्य गमनं नोपपद्यते ।
तथाहमपि संप्राप्तो लूनपक्ष इव द्विजः ॥ ३०
क्षीणः सर्वार्थहीनश्च निर्ज्ञातिर्बन्धुवर्जितः ।
कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ॥ ३१
वैशंपायन उवाच ।
इत्येवं धृतराष्ट्रोऽथ विलप्य बहुदुःखितः ।
प्रोवाच सञ्जयं भूयः शोकव्याकुलमा
धृतराष्ट्र उवाच ।
योऽजयत्सर्वकाम्भोजानम्बष्ठान्केकयैः
गान्धारांश्च विदेहांश्च जित्वा कार्यार्थम
दुर्योधनस्य वृद्ध्यर्थं योऽजयत्पृथिवीं प्र
स जितः पाण्डवैः शूरैः समरे बाहुशालि
तस्मिन्हते महेष्वासे कर्णे युधि किरीटि
के वीराः पर्यतिष्ठन्त तन्ममाचक्ष्व स
कच्चिन्नैकः परित्यक्तः पाण्डवैर्निहतो
उक्तं त्वया पुरा तात यथा वीरो निपाति
भीष्ममप्रतियुध्यन्तं शिखण्डी सायको
पातयामास समरे सर्वशस्त्रभृतां वरम्
तथा द्रौपदिना द्रोणो न्यस्तसर्वायुधो
'धर्मराजवचः श्रुत्वा अश्वत्थामा हतस्त्वि
युक्तयोगो महेष्वासः शरैर्बहुभिराचित
निहतः खड्गमुद्यम्य धृष्टद्युम्नेन सञ्जय
अन्तरेण हतावेतौ छलेन च विशेषतः
अश्रौषमहमेतद्वै भीष्मद्रोणौ निपातितौ
भीष्मद्रोणौ हि समरे न हन्याद्वज्रभृत्
न्यायेन युध्यन्समरे तद्वै सत्यं ब्रवीमि
कर्णं त्वस्यन्तमस्त्राणि दिव्यानि च बहू
कथमिन्द्रोपमं वीरं मृत्युर्युद्धे समस्पृश
यस्य विद्युत्प्रभां शक्तिं दिव्यां कनकभू
प्रायच्छद्द्विषतां हन्त्रीं कुण्डलाभ्यां पुरंद
यस्य सर्पमुखो दिव्यः शरः काञ्चनभू
अशेत निशितः पत्री समरेष्वरिसूदनः
भीष्मद्रोणमुखान्वीरान्योऽवमत्य महार
जामदग्न्यान्महाघोरं ब्राह्ममस्त्रमशिक्षत
यश्च द्रोणमुखान्दृष्ट्वा विमुखानर्दितान्श
सौभद्रस्य महाबाहुर्व्यधमत्कार्मुकं शितै
यश्च नागायुतप्राणं वज्ररंहसमच्युतम् ।
विरथं सहसा कृत्वा भीमसेनमपाहसत

अप्रतियुध्यन्तं शिखण्डिना प्रतियुद्धमनङ्गीकुर्वाणम् ॥ ३७ ॥ द्रौपदिना द्रुपदपुत्रेण धृष्टद्युम्नेन ॥ ३८ ॥ फलेन च विशेषतः इति क. ङ. पाठः । बलेन च विशेषतः इति ख. पाठः ॥ ४० ॥ कुण्डलाभ्यां सकवचाभ्याम् । तादर्थ्ये चतु
अशेत निहतः पत्री समरेष्वरिसूदनः इति ख. पा
निहतः पत्री चन्दनेष्वरिसूदनः इति झ. पाठः ॥

सहदेवं च निर्जित्य शरैः सन्नतपर्वभिः ।
कृपया विरथं कृत्वा नाहनद्धर्मचिन्तया ॥ ४८
यश्च मायासहस्राणि विकुर्वाणं जयैषिणम् ।
घटोत्कचं राक्षसेन्द्रं शक्रशक्त्या निजघ्निवान् ॥४९
एतांश्च दिवसान्यस्य युद्धे भीतो धनञ्जयः ।
नागमद्द्वैरथं वीरः स कथं निहतो रणे ॥ ५०
संशप्तकानां योधा ये आह्वयन्त सदाऽन्यतः ।
एतान्हत्वा हनिष्यामि पश्चाद्वैकर्तनं रणे ॥ ५१
इति व्यपदिशन्पार्थो वर्जयन्सूतजं रणे ।
स कथं निहतो वीरः पार्थेन परवीरहा ॥] ५२
रथभङ्गो न चेत्तस्य धनुर्वा न व्यशीर्यत ।
न चेदस्त्राणि नष्टानि स कथं निहतः परैः ॥ ५३
को हि शक्तो रणे कर्णं विधुन्वानं महद्धनुः ।
विमुञ्चन्तं शरान्घोरान्दिव्यान्यस्त्राणि चाहवे ।
जेतुं पुरुषशार्दूलं शार्दूलमिव वेगिनम् ॥ ५४
ध्रुवं तस्य धनुश्छिन्नं रथो वाऽपि महीं गतः ।
अस्त्राणि वा प्रनष्टानि यथा शंससि मे हतम् ।
ह्यन्यदपि पश्यामि कारणं तस्य नाशने ॥ ५५
हन्मि फल्गुनं यावत्तावत्पादौ न धावये ।
इति यस्य महाघोरं व्रतमासीन्महात्मनः ॥ ५६
यस्य भीतो रणे निद्रां धर्मराजो युधिष्ठिरः ।
त्रयोदशसमा नित्यं नाभजत्पुरुषर्षभः ॥ ५७
यस्य वीर्यवतो वीर्यमुपाश्रित्य महात्मनः ।
मम पुत्रः सभां भार्यां पाण्डूनां नीतवान्बलात् ५८
तत्रापि च सभामध्ये पाण्डवानां च पश्यताम् ।
दासभार्येति पाञ्चालीमब्रवीत्कुरुसन्निधौ ॥ ५९
न सन्ति तपयः कृष्णे सर्वे षण्डतिलैः समाः ।
उपतिष्ठस्व भर्तारमन्यं वा वरवर्णिनि ॥ ६०
येनैवं यः पुरा वाचो रूक्षाः संश्रावयन्रुषा ।
सभायां सूतजः कृष्णां स कथं निहतः परैः ॥ ६१
यदि भीष्मो रणश्लाघी द्रोणो वा युधि दुर्मदः ।
न हनिष्यति कौन्तेयान्पक्षपातात्सुयोधन ।
सर्वानेव हनिष्यामि व्येतु ते मानसो ज्वरः ॥ ६२
किं करिष्यति गाण्डीवमक्षय्यौ च महेषुधी ।
स्निग्धचन्दनदिग्धस्य मच्छरस्याभिधावतः ।
स नूनमृषभस्कन्धो ह्यर्जुनेन कथं हतः ॥] ६३
यश्च गाण्डीवमुक्तानां स्पर्शमुग्रमचिन्तयन् ।
अपतिर्ह्यसि कृष्णेति ब्रुवन्पार्थानवैक्षत ॥ ६४
यस्य नासीद्भयं पार्थात्सपुत्रात्सजनार्दनात् ।
स्वबाहुबलमाश्रित्य मुहूर्तमपि सञ्जय ॥ ६५
तस्य नाऽहं वधं मन्ये देवैरपि सवासवैः ।
प्रतीपमभिधावद्भिः किं पुनस्तात पाण्डवैः ॥ ६६
न हि ज्यां संस्पृशानस्य तलत्रे वाऽपि गृह्णतः ।
पुमानाधिरथेः स्थातुं कश्चित्प्रमुखतोऽर्हति ॥ ६७
अपि स्यान्मेदिनी हीना सोमसूर्यप्रभांशुभिः ।
न वधः पुरुषेन्द्रस्य संयुगेष्वपलायिनः ॥ ६८
येन मन्दः सहायेन भ्रात्रा दुःशासनेन च ।
वासुदेवस्य दुर्बुद्धिः प्रत्याख्यानमरोचत ॥ ६९
स नूनं वृषभस्कन्धं कर्णं दृष्ट्वा निपातितम् ।
दुःशासनं च निहतं मन्ये शोचति पुत्रकः ॥ ७०
हतं वैकर्तनं दृष्ट्वा द्वैरथे सव्यसाचिना ।
जयतः पाण्डवान्दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत् ७१
[दुर्मर्षणं हतं दृष्ट्वा वृषसेनं च संयुगे ।
प्रभग्नं च बलं दृष्ट्वा वध्यमानं महारथैः ॥ ७२
पराङ्मुखांश्च राज्ञस्तु पलायनपरायणान् ।
विद्रुतान्रथिनो दृष्ट्वा मन्ये शोचति पुत्रकः ॥ ७३
अनेयश्चाभिमानी च दुर्बुद्धिरजितेन्द्रियः ।
हतोत्साहं बलं दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत् ॥ ७४
स्वयं वैरं महत्कृत्वा वार्यमाणः सुहृद्गणैः ।
प्रधने हतभूयिष्ठैः किंस्विद्दुर्योधनोऽब्रवीत् ॥ ७५
भ्रातरं निहतं दृष्ट्वा भीमसेनेन संयुगे ।

---

रथसङ्गो न चेत्तस्य इति क. ङ. पाठः। अहंकारो न चेत्तस्य
ो ख. पाठः ॥ ५३ ॥ प्रतीपं प्रातिभव्येन अभिधावद्भिः सर्व-
भ्यः समागतैः ॥ ६६ ॥ आधिरथेः अधिरथपुत्रस्य ॥ ६७ ॥
मसूर्यसाहचर्यात्प्रकर्षेण भातीति योगाच्च प्रभो वह्निस्तेषां त्रया-
णामंशुभिर्मयूखैः ॥ ६८ ॥ मन्दो दुर्योधनः ॥ ६९ ॥ अनेयः
अशिक्षणीयः । यतोऽभिमानी विद्वत्त्वाभिमानी । अतएव
दुर्बुद्धिः हितमजानन् ॥ ७४ ॥ प्रधने रणे ॥ ७५ ॥

रुधिरे पीयमाने च किंस्विद्दुर्योधनोऽब्रवीत् ॥] ७६
सह गान्धारराजेन सभायां यदभाषत ।
कर्णोऽर्जुनं रणे हन्ता हते तस्मिन्किमब्रवीत् ॥ ७७
द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाण्डवान् ।
शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् ॥ ७८
कृतवर्मा महेष्वासः सात्वतानां महारथः ।
हतं वैकर्तनं दृष्ट्वा हार्दिक्यः किमभाषत ॥ ७९
ब्राह्मणाः क्षत्रिया वैश्या यस्य शिक्षामुपासते ।
धनुर्वेदं चिकीर्षन्तो द्रोणपुत्रस्य धीमतः ॥ ८०
युवा रूपेण संपन्नो दर्शनीयो महायशाः ।
अश्वत्थामा हते कर्णे किमभाषत सञ्जय ॥ ८१
आचार्यो यो धनुर्वेदे गौतमो रथसत्तमः ।
कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् ॥ ८२
मद्रराजो महेष्वासः शल्यः समितिशोभनः ।
दृष्ट्वा विनिहतं कर्णं सारथ्ये रथिनां वरः ।
किमभाषत सौवीरो मद्राणामधिपो बली ॥ ८३
दृष्ट्वा विनिहतं सर्वे योधा वारणदुर्जयाः ।
ये च केचन राजानः पृथिव्यां योद्धुमागताः ।
वैकर्तनं हतं दृष्ट्वा कान्यभाषन्त सञ्जय ॥ ८४
द्रोणे तु निहते वीरे रथव्याघ्रे नरर्षभे ।
के वा मुखमनीकानामासन्सञ्जय भागशः ॥ ८५

मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः
वैकर्तनस्य सारथ्ये तन्ममाचक्ष्व सञ्जय ॥
केऽरक्षन्दक्षिणं चक्रं सूतपुत्रस्य युध्यतः ।
वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः ॥
के कर्णं न जहुः शूराः के क्षुद्राः प्राद्रवंस्तत
कथं च वः समेतानां हतः कर्णो महारथः ।
पाण्डवाश्च स्वयं शूराः प्रत्युदीयुर्महारथाः ।
सृजन्तः शरवर्षाणि वारिधारा इवाम्बुदाः ।
स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा ।
व्यर्थः कथं समभवत्तन्ममाचक्ष्व सञ्जय ॥
मामकस्यास्य सैन्यस्य हतोत्सेधस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥
तौ हि वीरौ महेष्वासौ मदर्थे त्यक्तजीवितौ
भीष्मद्रोणौ हतौ श्रुत्वा को न्वर्थो जीवितेन मे
पुनःपुनर्न मृष्यामि वधं कर्णस्य पाण्डवैः ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥
द्रोणे हते च यद्वृत्तं कौरवाणां परैः सह ।
सङ्ग्रामे नरवीराणां तन्ममाचक्ष्व सञ्जय ॥
यथा कर्णश्च कौन्तेयैः सह युद्धमयोजयत् ।
तथा च द्विषतां हन्ता रणे शान्तस्तदुच्यताम्

॥ इति श्रीमन्महाभारते कर्णपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ॥ ७ ॥

अश्वत्थामवचनाद्दुर्योधनेन सैनापत्येऽभिषिक्तेन कर्णेन रणाय सेनानियोजनम् ॥ १ ॥

सञ्जय उवाच ।
हते द्रोणे महेष्वासे तस्मिन्नहनि भारत ।
कृते च मोघसंकल्पे द्रोणपुत्रे महारथे ॥ १
द्रवमाणे महाराज कौरवाणां बलार्णवे ।
व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिर्वृतः ॥ २
तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ ।
विद्रुतं स्वबलं दृष्ट्वा पौरुषेण न्यवारयत् ॥ ३

स्वमनीकमवस्थाप्य बाहुवीर्यमुपाश्रितः ।
युद्ध्वा च सुचिरं कालं पाण्डवैः सह भारत
लब्धलक्षैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा ।
संध्याकालं समासाद्य प्रत्याहारमकारयत् ।
निवेश्य बलवद्धोरं क्षुत्पिपासाबलैर्युतम् ।
श्रमेण महता युक्तं तथा द्रोणवधेन च ॥
दीनरूपा रणे कर्म कृत्वा घोरं च शर्वरीम्

---

कानि वाक्यानीति शेषः ॥ ८४ ॥ प्रत्युदीयुः कथमिति शेषः ॥ ८९ ॥ हतोत्सेधस्य विनष्टोत्कर्षस्य ॥ ९१ ॥ षष्ठोऽध्यायः ॥ ६ ॥

स्वबलंप्रति विद्रुत द्रवन्तं दृष्ट्वा ॥ ३ ॥ लब्धलक्षैः जयैः । व्यायच्छद्भिः यतमानैः । प्रत्याहारं प्रत्यवह

निवेशं प्राप्य सा सेना विश्रम्य मुदिताऽभवत् ॥'७
कृत्वाऽवहारं सैन्यानां प्रविश्य शिबिरं स्वकम् ।
कुरवः सहिता मन्त्रं मन्त्रयांचक्रिरे मिथः ॥ ८
पर्यङ्केषु परार्ध्येषु स्पर्ध्यास्तरणवत्सु च ।
वरासनेषूपविष्टाः सुखशय्यास्विवामराः ॥ ९
ततो दुर्योधनो राजा साम्ना परमवल्गुना ।
तानाभाष्य महेष्वासान्प्राप्तकालमभाषत ॥ १०
मतं मतिमतां श्रेष्ठाः सर्वे प्रब्रूत मा चिरम् ।
एवंगतेन यत्कार्यं भवेत्कार्यतरं नृपाः ॥ ११
सञ्जय उवाच ।
एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः ।
चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा ॥ १२
तेषां निशाम्येङ्गितानि युद्धे प्राणाञ्जुहूषताम् ।
समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्चसम् ।
आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे ॥ १३
रागो योगस्तथा दाक्ष्यं नयश्चेत्यर्थसाधकाः ।
उपायाः पण्डितैः प्रोक्तास्ते तु दैवमुपाश्रिताः ॥१४
लोकप्रवीरा येऽस्माकं देवकल्पा महारथाः ।
नीतिमन्तस्तथा युक्ता दक्षा रक्ताश्च ते हताः १५
न त्वेव कार्यं नैराश्यमस्माभिर्विजयं प्रति ।
सुनीतैरिह सर्वार्थैर्दैवमप्यनुलोम्यते ॥ १६
ते वयं प्रवरं नृणां सर्वैर्योधगुणैर्युतम् ।
कर्णमेवाभिषेक्ष्यामः सैनापत्येन भारत ॥ १७
कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून् ॥१८
एष ह्यतिबलः शूरः कृतास्त्रो युद्धदुर्मदः ।
वैवस्वत इवासह्यः शक्तो जेतुं रणे रिपून् ॥ १९
एतदाचार्यतनयाच्छ्रुत्वा राजंस्तवात्मजः ।
'दुर्योधनो महाराज भृशं प्रीतमनास्तदा ॥' २०
आशां बहुमतीं चक्रे कर्णं प्रति स वै तदा ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् २१
तामाशां हृदये कृत्वा समाश्वस्य च भारत ।
[ततो दुर्योधनः प्रीतः प्रियं श्रुत्वाऽस्य तद्वचः ।
प्रीतिसत्कारसंयुक्तं तथ्यमात्महितं शुभम् ॥] २२
स्वं मनः समवस्थाप्य बाहुवीर्यमुपाश्रितः ॥ २३
'प्रियसत्कारसंयुक्तं तथ्यमात्महिते रतम् ।'
दुर्योधनो महाराज राधेयमिदमब्रवीत् ॥ २४
कर्ण जानामि ते वीर्यं सौहृदं परमं मयि ।
तथाऽपि त्वां महाबाहो प्रवक्ष्यामि हितं वचः ॥२५
श्रुत्वा यथेष्टं च कुरु वीर यत्तव रोचते ।
भवान्प्राज्ञतमो नित्यं मम चैव परा गतिः ॥ २६
भीष्मद्रोणावतिरथौ हतौ सेनापती मम ।
सेनापतिर्भवानस्तु ताभ्यां द्रविणवत्तरः ॥ २७
वृद्धौ च तौ महेष्वासौ सापेक्षौ च धनंजये ।
मानितौ च मया वीरौ राधेय वचनात्तव ॥ २८
पितामहत्वं संप्रेक्ष्य पाण्डुपुत्रा महारणे ।
रक्षितास्तात भीष्मेण दिवसानि दशैव तु ॥ २९
न्यस्तशस्त्रे तु भवति हतो भीष्मः पितामहः ।
शिखण्डिनं पुरस्कृत्य फल्गुनेन महाहवे ॥ ३०
हते तस्मिन्महेष्वासे शरतल्पगते तथा ।
त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत्पुरःसरः ॥ ३१
तेनापि रक्षिताः पार्थाः शिष्यत्वादिति मे मतिः ।
स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरम् ॥ ३२
निहताभ्यां प्रधानाभ्यां ताभ्यामतुलविक्रम ।
त्वत्समं समरे योधं नान्यं पश्यामि चिन्तयन् ॥ ३३
भवानेव तु नः शक्तो विजयाय न संशयः ।
पूर्वं मध्ये च पश्चाच्च तथैव विहितं हितम् ॥ ३४
स भवान्धुर्यवत्सङ्ख्ये धुरमुद्वोढुमर्हति ।
अभिषेचय सैनान्ये स्वयमात्मानमात्मना ॥ ३५

प्रत्यहारमिति वा पाठः ॥ ५ ॥ पर्यङ्केष्वेव वरासनेषु ॥ ९ ॥ कार्यतरं आवश्यकतरं यत्कार्यं कर्तव्यं परं मतं संगतं तत् प्रब्रूत ॥ ११ ॥ चेष्टाः शौर्याभिनयरूपाः भुजास्फालनाद्याः ॥ १२ ॥ निशाम्य आलोच्य । वर्चसं छान्दसष्टच् ॥ १३ ॥ रागः स्वामिभक्तिः । योगो देशकालादिसंपत्तिः । दाक्ष्यं बलम् । नयो नीतिः ॥ १४ ॥ सर्वार्थैः रागादिभिः सुनीतैः दैवमनुलोम्यतेऽनुकूलं क्रियते । न केवलं रागाद्यपेक्षया दैवस्य प्राबल्यमपितु दैवापेक्षयापि सुप्रणीता रागादयः प्रबला इत्यर्थः ॥ १६ ॥ बहुमतीं बाहुल्यवतीं अतिशयितामिति यावत् ॥ २१ ॥ शुभं वचः श्रुत्वा मनः समवस्थाप्य समाधायाब्रवीदिति द्वयोः संबन्धः ॥ २२ ॥ ताभ्यां सकाशात् द्रविणवत्तरः बलवत्तरः ॥ २७ ॥ विहितं त्वयेति शेषः ॥ ३४ ॥ सैनान्ये

देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः ।
तथा भवानिमां सेनां धार्तराष्ट्रीं बिभर्तु वै ॥३६
जहि शत्रुगणान्सर्वान्महेन्द्रो दानवानिव ।
अवस्थितं रणे दृष्ट्वा पाण्डवास्त्वां महारथाः ।
द्रविष्यन्ति च पाञ्चाला विष्णुं दृष्ट्वेव दानवाः ३७
तस्मात्त्वं पुरुषव्याघ्र प्रकर्षेतां महाचमूम् ॥ ३८
भवत्यवस्थिते यत्ते पाण्डवा मन्दचेतसः ।
द्रविष्यन्ति सहामात्याः पाञ्चालाः सृञ्जयाश्च ह ॥
यथा ह्यभ्युदितः सूर्यः प्रतपन्स्वेन तेजसा ।
व्यपोहति तमस्तीव्रं तथा शत्रून्प्रतापय ॥ ४०
सञ्जय उवाच ।
एवमुक्तस्तु राधेयो राज्ञा दुर्योधनेन ह ।
राज्ञां मध्ये महाबाहुः प्रीतात्मा स महाबलः ।
हर्षयन्नब्रवीत्कर्णो दुर्योधनमिदं वचः ॥ ४१
कर्ण उवाच ।
उक्तमेतन्मया पूर्वं गान्धारे तव सन्निधौ ।
जेष्यामि पाण्डवान्सर्वान्सपुत्रान्सजनार्दनान् ४२
सेनापतिर्भविष्यामि तवाहं नात्र संशयः ।
स्थिरो भव महाराज जितान्विद्धि च पाण्डवान् ४३
सञ्जय उवाच ।
एवमुक्तो महाराज ततो दुर्योधनो नृपः ।
उत्तस्थौ राजभिः सार्धं देवैरिव शतक्रतुः ॥ ४४
सैनापत्येन सत्कर्तुं कर्णं स्कन्दमिवामराः ।
ततोऽभिषिषिचुः कर्णं विधिदृष्टेन कर्मणा ॥ ४५
दुर्योधनमुखा राजन्राजानो विजयैषिणः ।
शातकुम्भमयैः कुम्भैर्माहेयैश्चाभिमन्त्रितैः ॥ ४६
तोयपूर्णैर्विषाणैश्च द्विपखड्गमहर्षभैः ।
मणिमुक्तायुतैश्चान्यैः पुण्यगन्धैस्तथौषधैः ॥ ४७
औदुम्बरे सुखासीनमासने क्षौमसंवृते ।
शास्त्रदृष्टेन विधिना संभारैश्च सुसंभृतैः ॥ ४८
ब्राह्मणाः क्षत्रिया वैश्यास्तथा शूद्राश्च संमताः ।

तुष्टुवुस्तं महात्मानमभिषिक्तं वरासने ॥
ततोऽभिषिक्ते राजेन्द्र निष्कैर्गोभिर्धनेन च ।
वाचयामास विप्राग्र्यान्राधेयः परवीरहा ॥
'स व्यरोचत राधेयः सूतमागधवन्दिभिः ।
स्तूयमानो यथा भानुरुदये ब्रह्मवादिभिः ॥
ततः पुण्याहघोषेण वादित्रनिनदेन च ।
जयशब्देन शूराणां तुमुलः सर्वतोऽभवत् ॥
जयेत्यूचुर्नृपाः सर्वे राधेयं तत्र संगताः ॥'
जय पार्थान्सगोविन्दान्सानुगांस्तान्महामृधे ।
इति तं बन्दिनः प्राहुर्द्विजाश्च पुरुषर्षभम् ॥
जहि पार्थान्सपाञ्चालान्राधेय विजयाय नः
उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ॥
न ह्यलं त्वद्विसृष्टानां शराणां वै सकेशवाः ।
उलूकाः सूर्यरश्मीनां ज्वलतामिव दर्शने ॥
न हि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः
आत्तवज्रस्य समरे महेन्द्रस्येव दानवाः ॥
'सञ्जय उवाच ।
स सत्कृतः स्तूयमानः सुहृद्गणवृतो रुषा ।
कर्णो दुर्योधनं वाक्यमब्रवीत्प्रहसन्प्रियम् ॥
दुर्योधनाद्य सगणं पाण्डूनां प्रवरैः सह ।
फल्गुनं सूदयिष्यामि त्वत्प्रियार्थं सबान्धवम्
सपर्वतार्णवद्वीपां शाधि गां गतपाण्डवाम् ।
पुत्रपौत्रप्रपौत्रेषु प्रतिष्ठां गमयिष्यसि ॥
नासह्यं विद्यते मह्यं त्वत्प्रियार्थमरिंदम ।
सत्यधर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥
अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः ।
अत्यरिच्यत रूपेण दिवाकर इवापरः ॥
सैनापत्ये तु राधेयमभिषिच्य सुतस्तव ।
अमन्यत तदात्मानं कृतार्थं कालचोदितः ॥
कर्णोऽपि राज्ञः संप्राप्य सैनापत्यमरिंदमः ।
योगमाज्ञापयामास सूर्यस्योदयनं प्रति ॥

सेनानीत्वे सैनापत्ये ॥ ३५ ॥ शातकुम्भमयैः सौवर्णैर्माहेयैः-मेहीमयैश्च कुम्भैः ॥ ४६ ॥ विषाणैः द्विपस्य गजस्य दन्तमयैः पात्रैः। खड्गस्य गण्डकस्य। महर्षभस्य गवयस्य च शृङ्गैः । विषाणं दन्तशृङ्गयोरिति विश्वः । द्विपखड्गमहर्षभीयैरिति तद्धित आर्षः ॥ ४७ ॥ शराणां दर्शनेपि नालं किमुत स्पर्शे इ ॥ ५६ ॥ सप्तमोऽध्यायः ॥ ७ ॥

तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत । देवैरिव यथा स्कन्दः संग्रामे तारकामये ॥ ६५

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ॥ ८ ॥

कर्णार्जुनाभ्यां व्यूहरचनापूर्वकं रणाय निर्याणम् ॥ १ ॥

धृतराष्ट्र उवाच ।
सैनापत्यं तु संप्राप्य कर्णो वैकर्तनस्तदा ।
तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः ॥१
हितश्च प्रियकामश्च मम पुत्रस्य नित्यशः ।
अकरोत्किं महाप्राज्ञस्तन्ममाचक्ष्व सञ्जय ॥ २
सञ्जय उवाच ।
कर्णस्य मतमाज्ञाय पुत्रास्ते भरतर्षभ ।
योगमाज्ञापयामासुर्नन्दितूर्यपुरःसरम् ॥ ३
महत्यपररात्रे च तव सैन्यस्य मारिष ।
योगो योग इति ह्याशु प्रादुरासीन्महास्वनः ॥ ४
कल्पतां नागमुख्यानां रथानां च वरूथिनाम् ।
सन्नह्यतां नराणां च वाजिनां च विशांपते ॥५
क्रोशतां चैव योधानां त्वरितानां परस्परम् ।
बभूव तुमुलः शब्दो दिवस्पृक्सुमहांस्ततः ॥ ६
ततः श्वेतपताकेन बलाकावर्णवाजिना ।
हेमपृष्ठेन धनुषा नागकक्षेण केतुना ॥ ७
तूणीरशतपूर्णेन सगदेन वरूथिना ।
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ॥ ८
कार्मुकैरुपपन्नेन विमलादित्यवर्चसा ।
रथेनाभिपताकेन सूतपुत्रो ह्यदृश्यत ॥ ९
ध्मापयन्वारिजं राजन्हेमजालविभूषितम् ।
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ॥ १०
दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम् ।
भानुमन्तमिवोद्यन्तं तमो घ्नन्तं दुरासदम् ॥ ११
न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष ।
नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ॥ १२
ततस्तु त्वरयन्योधाञ्शङ्खशब्देन मारिष ।
कर्णो निष्कर्षयामास कौरवाणां महद्बलम् ॥१३
व्यूहं व्यूह्य महेष्वासो मकरं शत्रुतापनः ।
प्रत्युद्ययौ तथा कर्णः पाण्डवान्विजिगीषया ॥ १४
मकरस्य तु तुण्डे वै कर्णो राजन्व्यवस्थितः ।
नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ॥ १५
द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः ।
मध्ये दुर्योधनो राजा बलेन महता वृतः ॥ १६
वामपादे तु राजेन्द्र कृतवर्मा व्यवस्थितः ।
नारायणबलैर्युक्तो गोपालैर्युद्धदुर्मदैः ॥ १७
पादे तु दक्षिणे राजन्गौतमः सत्यविक्रमः ।
त्रिगर्तैः सुमहेष्वासैर्दाक्षिणात्यैश्च संवृतः ॥ १८
अनुपादे तु यो वामस्तत्र शल्यो व्यवस्थितः ।
महत्या सेनया सार्धं मद्रदेशसमुत्थया ॥ १९
दक्षिणे तु महाराज सुषेणः सत्यसङ्गरः ।
वृतो रथसहस्रेण दन्तिनां च त्रिभिः शतैः ॥ २०
पुच्छे ह्यास्तां महावीर्यौ भ्रातरौ पार्थिवौ तदा ।
चित्रश्च चित्रसेनश्च महत्या सेनया वृतौ ॥ २१
तथा प्रयाते राजेन्द्र कर्णे नरवरोत्तमे ।
धनञ्जयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् ॥ २२
पश्य पार्थ यथा सेना धार्तराष्ट्रीह संयुगे ।
कर्णेन विहिता वीर गुप्ता वीरैर्महारथैः ॥ २३
हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः ।
फल्गुशेषा महाबाहो तृणैस्तुल्या मता मम ॥२४
एको ह्यत्र महेष्वासः सूतपुत्रो विराजते ।
सदेवासुरगन्धर्वैः सकिन्नरमहोरगैः ।

---

नन्दितूर्यमानन्दवाद्यम् ॥ ३ ॥ कल्पतां संनह्यमानानाम् । वरूथिनां रथगुप्तिमताम् । सन्नह्यतां नराणां सन्नह्यमानानां गजादीनां च शब्दो बभूवेति द्वयोः संबन्धः ॥ ५ ॥ श्वेतेत्यादिविशेषणद्वयं रथेनेत्यस्य ॥ ७ ॥ अभिपताकेन वायोः प्रातिकूल्यादभिमुखपताकेन । एतत्पराजयसूचकम् ॥ ९ ॥ अनुपादे पादस्थानस्यापि पश्चाद्भागे ॥ १९ ॥ दक्षिणे अनुपादे ॥ २० ॥

चराचरैस्त्रिभिर्लोकैरजेयो यो महारथः ॥ २५
तं हत्वाऽद्य महाबाहो विजयस्तव फल्गुन ।
उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः ॥ २६
एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ॥ २७
सञ्जय उवाच ।
भ्रातुरेतद्वचः श्रुत्वा पाण्डवः श्वेतवाहनः ।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ २८
वामपार्श्वे तु तस्याथ भीमसेनो व्यवस्थितः ।
दक्षिणे च महेष्वासो धृष्टद्युम्नो व्यवस्थितः ॥ २९
मध्ये व्यूहस्य राजा तु पाण्डवश्च धनञ्जयः ।
नकुलः सहदेवश्च धर्मराजस्य पृष्ठतः ॥ ३०
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
पार्थं न जहतुर्युद्धे पाल्यमानौ किरीटिना ॥ ३१
शेषा नृपतयो वीराः स्थिता व्यूहस्य दंशिताः ।
यथाभागं यथोत्साहं यथायत्नं च भारत ॥ ३२
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
तावकाश्च महेष्वासा युद्धायैव मनो दधुः ॥ ३३
दृष्ट्वा व्यूढां तव चमूं सूतपुत्रेण संयुगे ।
निहतान्पाण्डवान्मेने धार्तराष्ट्रः सबान्धवः ॥ ३४
तथैव पाण्डवीं सेनां व्यूढां दृष्ट्वा युधिष्ठिरः
धार्तराष्ट्रान्हतान्मेने सकर्णान्वै जनाधिपः ॥
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
डिण्डिमाश्चाप्यहन्यन्त झर्झराश्च समन्ततः ॥
सेनयोरुभयो राजन्प्रावाद्यन्त महास्वनाः ।
सिंहनादश्च संजज्ञे शूराणां जयगृद्धिनाम् ॥
हयहेषितशब्दाश्च वारणानां च बृंहिताः ।
रथनेमिस्वनाश्चोग्राः संबभूवुर्जनाधिप ॥
न द्रोणव्यसनं कश्चिज्जानीते तत्र भारत ।
दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितम् ॥
उभे सैन्ये महाराज प्रहृष्टनरसङ्कुले ।
योद्धुकामे स्थिते राजन्हन्तुमन्योन्यमोजसा ॥
विजये जातसंरम्भे दृष्ट्वाऽन्योन्यं व्यवस्थिते
अनीकमध्ये राजेन्द्र चेरतुः कर्णपाण्डवौ ॥
नृत्यन्त्याविव ते सेने समेयातां परस्परम् ।
तयोः पक्षप्रपक्षेभ्यो निर्ययुर्युद्धलिप्सवः ॥
ततः प्रववृते युद्धं नरवारणवाजिनाम् ।
रथानां च महाराज अन्योन्यमभिनिघ्नताम् ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धारम्भे अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

संकुलयुद्धम् ॥ १ ॥ भीमेन क्षेमधूर्तिवधः ॥ २ ॥

सञ्जय उवाच ।
ते सेनेऽन्योन्यमासाद्य प्रहृष्टाश्वनरद्विपे ।
बृहत्यौ संप्रजह्राते देवासुरचमूसमे ॥ १
ततो नानारथाश्वेभाः पत्तयश्चोग्रविक्रमाः ।
संप्रहारान्भृशं चक्रुर्देहपाप्मविनाशनान् ॥ २
पूर्णचन्द्रार्कपद्मानां कान्तित्विड्गन्धतः समैः ।
उत्तमाङ्गैर्नृसिंहानां नृसिंहास्तस्तरुर्महीम् ॥ ३
अर्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसिपट्टसैः ।
परश्वधैश्चापहृतान्युत्तमाङ्गानि युध्यताम् ॥ ४
व्यायतायतबाहूनां व्यायतायतबाहुभिः ।
बाहवः पातिता रेजुर्धरण्यां सायुधाङ्गदैः ॥
तैः स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्तथा ।
गरुडप्रहितैरुग्रैः पञ्चास्यैरुरगैरिव ॥
द्विरदस्यन्दनाश्वेभ्यः पेतुर्वीरा द्विषद्धताः ।
विमानेभ्यो यथा क्षीणे पुण्ये स्वर्गसदस्तथा
गदाभिरन्ये गुर्वीभिः परिघैर्मुसलैरपि ।
पोथिताः शतशः पेतुर्वीरा वीरतरै रणे ॥
रथा रथैर्विमथिता मत्ता मत्तैर्द्विपा द्विपैः ।

व्यूह रचय ॥ २७ ॥ अष्टमोऽध्यायः ॥ ८ ॥
तस्तरुः आस्तीर्णवन्तः ॥ ३ ॥ व्यायताः पुष्टाः । आयताः
दीर्घाः ॥ ५ ॥ प्रहितैः निरस्तैः । ओहाक् त्यागे ॥

सादिनः सादिभिश्चैव तस्मिन्परमसंकुले ॥ ९
रथैर्नरा रथा नागैरश्वारोहाश्च पत्तिभिः ।
अश्वारोहैः पदाताश्च निहता युधि शेरते ॥ १०
रथाश्वपत्तयो नागै रथाश्वेभाश्च पत्तिभिः ।
रथपत्तिद्विपाश्चाश्वै रथैश्चापि नरद्विपाः ॥ ११
रथाश्वेभनराणां तु नराश्वेभरथैः कृतम् ।
पाणिपादैश्च शस्त्रैश्च रथैश्च कदनं महत् ॥ १२
तथा तस्मिन्बले शूरैर्वध्यमाने हतेऽपि च ।
अस्मानभ्याययुः पार्था वृकोदरपुरोगमाः ॥ १३
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ।
सात्यकिश्चेकितानश्च द्राविडैः सैनिकैः सह ॥ १४
वृता व्यूहेन महता पाण्ड्याश्चोलाः सकेरलाः ।
व्यूढोरस्का दीर्घभुजाः प्रांशवः पृथुलोचनाः ॥ १५
आपीडिनो रक्तदन्ता मत्तमातङ्गविक्रमाः ।
नानाविरागवसना गन्धचूर्णावचूर्णिताः ॥ १६
बद्धासयः पाशहस्ता वारणप्रतिवारणाः ।
समानमृत्यवो राजन्नात्यजन्त परस्परम् ॥ १७
कलापिनश्चापहस्ता दीर्घकेशाः प्रियंवदाः ।
पत्तयः सायकैर्विद्धा घोररूपपराक्रमाः ॥ १८
अथापरे पुनः शूराश्चेदिपाञ्चालकेकयाः ।
कारूशाः कोसलाः काश्या मागधाश्चापि दुद्रुवुः ॥
तेषां रथाश्वनागाश्च प्रवराश्चोग्रपत्तयः ।
नानाबाणरवैर्हृष्टा नृत्यन्ति च हसन्ति च ॥ २०
तस्य सैन्यस्य महतो महामात्रवरैर्वृतः ।
मध्ये वृकोदरोऽभ्यायात्त्वदीयान्नागधूर्गतः ॥ २१
स नागप्रवरोऽत्युग्रो विधिवत्कल्पितो बभौ ।
उदयाग्राद्रिभवनं यथाऽभ्युदितभास्करम् ॥ २२
तस्यायसं वर्मवरं वररत्नविभूषितम् ।
ताराव्याप्तस्य नभसः शारदस्य समं त्विषा ॥ २३
स तोमरव्यग्रकरश्चारुमौलिः स्वलंकृतः ।
शरन्मध्यन्दिनार्काभस्तेजसा प्रादहद्रिपून् ॥ २४
तं दृष्ट्वा द्विरदं दूरात्क्षेमधूर्तिर्द्विपस्थितः ।
आह्वयन्नभिदुद्राव प्रहमन्पृतनामुखे ॥ २५
तयोः समभवद्युद्धं द्विपयोरुग्ररूपयोः ।
यदृच्छया द्रुतवतोर्महापर्वतयोरिव ॥ २६
संसक्तनागौ तौ वीरौ तोमरैरितरेतरम् ।
बलवत्सूर्यरश्म्याभैर्भित्त्वाऽन्योन्यं विनेदतुः ॥ २७
व्यपसृत्य तु नागाभ्यां मण्डलानि विचेरतुः ।
प्रगृह्य चोभौ धनुषी जघ्नतुर्वै परस्परम् ॥ २८
क्ष्वेडितास्फोटितरवैर्बाणशब्दैस्तु सर्वतः ।
तौ जनं हर्षयन्तौ च सिंहनादं प्रचक्रतुः ॥ २९
समुद्यतकराभ्यां तौ द्विपाभ्यां कृतिनावुभौ ।
वातोद्धूतपताकाभ्यां युयुधाते महाबलौ ॥ ३०
तावन्योन्यस्य धनुषी छित्त्वाऽन्योन्यं विनेदतुः ।
शक्तितोमरवर्षेण प्रावृण्मेघाविवाम्बुभिः ॥ ३१
क्षेमधूर्तिस्तदा भीमं तोमरेण स्तनान्तरे ।
निर्बिभेदातिवेगेन षड्भिश्चाप्यपरैर्नदन् ॥ ३२
स भीमसेनः शुशुभे तोमरैरङ्गमाश्रितैः ।
क्रोधदीप्तवपुर्मेघैः सप्तसप्तिरिवांशुमान् ॥ ३३
ततो भास्करवर्णाभमञ्जोगतिमयस्मयम् ।
ससर्ज तोमरं भीमः प्रत्यमित्राय यत्नवान् ॥ ३४
ततः करूशाधिपतिश्चापमानम्य सायकैः ।
दशभिस्तोमरं भित्त्वा षष्ट्या विव्याध पाण्डवम् ३५
अथ कार्मुकमादाय भीमो जलदनिःस्वनम् ।
रिपोरभ्यर्दयन्नागमुन्नदन्पाण्डवः शरैः ॥ ३६
स शरौघार्दितो नागो भीमसेनेन संयुगे ।
गृह्यमाणोऽपि नातिष्ठद्वातोद्धूत इवाम्बुदः ॥ ३७
तमभ्यधावद्द्विरदं भीमो भीमस्य नागराट् ।
महावातेरितं मेघं वातोद्धूत इवाम्बुदः ॥ ३८
सन्निवार्यात्मनो नागं क्षेमधूर्तिः प्रतापवान् ।

---

आपीडिनः भूषावन्तः । नाना पृथक् विविधरागाणि वसनानि येषां ते विरागवसनाः ॥ १६ ॥ नागधूर्गतः गजस्कन्धगतः ॥ २१ ॥ उदयाग्राद्रिभवनं उदयाद्रेरग्रभवनम् । अग्राद्रीत्यग्रशब्दस्य पूर्वनिपात आर्षः । उदयनामा अग्राद्रिः पूर्वपर्वतः सएव भवनमिति वा ॥ २२ ॥ शारदस्य शरदा उपलक्षितस्य ॥ २३ ॥ चारुमौलिः रम्यकिरीटः ॥ २४ ॥ स भीमसेनः मेघैः सप्तसप्तिरिवांशुमान् । यथा मेघान्तर्हितस्य सूर्यस्य मरीचयः रश्मिरूपेण सर्वतः प्रचरन्ति एवं रश्मिस्थानीयास्तोमराः ॥ ३३ ॥ अञ्जोगतिं ऋजुगतिम् ॥ ३४ ॥ गृह्यमाणः निगृह्यमाणः क्षेमधूर्तिना ॥ ३७ ॥

विव्याधाभिद्रुतं बाणैर्भीमसेनस्य कुञ्जरम् ॥ ३९
ततः साधुविसृष्टेन क्षुरेणानतपर्वणा ।
छित्त्वा शरासनं शत्रोर्नागं चापि प्रमार्दयत् ॥ ४०
ततः क्रुद्धो रणे भीमं क्षेमधूर्तिः पराभिनत् ।
जघान चास्य द्विरदं नाराचैः सर्वमर्मसु ॥ ४१
स पपात महानागो भीमसेनस्य भारत ।
पुरा नागस्य पतनादवप्लुत्य स्थितो महीम् ॥ ४२
भीमसेनोऽपि तन्नागं गदया समपोथयत् ।
तस्मात्प्रमथितान्नागात्क्षेमधूर्तिरवप्लुतः ॥
'उद्धृत्य खड्गं निशितमभ्यधावत्स पाण्डवम्
उद्यतायुधमायान्तं गदयाऽहन्वृकोदरः ॥
स पपात हतः सासिर्व्यसुस्तमभितो द्विपम् ।
वज्रप्रभग्नमचलं सिंहो वज्रहतो यथा ॥
तं हतं नृपतिं दृष्ट्वा करूशानां यशस्करम् ।
प्राद्रवद्व्यथिता सेना त्वदीया भरतर्षभ ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

द्वन्द्वयुद्धम् ॥ १ ॥ सात्यकिना विन्दानुविन्दवधः ॥ २ ॥

सञ्जय उवाच ।
ततः कर्णो महेष्वासः पाण्डवानामनीकिनीम् ।
जघान समरे शूरः शरैः सन्नतपर्वभिः ॥ १
तथैव पाण्डवा राजंस्तव पुत्रस्य वाहिनीम् ।
कर्णस्य प्रमुखे क्रुद्धा निजघ्नुस्ते महारथाः ॥ २
कर्णोऽपि राजन्समरे व्यहनत्पाण्डवीं चमूम् ।
नाराचैरर्करश्म्याभैः कर्मारपरिमार्जितैः ॥ ३
तत्र भारत कर्णेन नाराचैस्ताडिता गजाः ।
नेदुः सेदुश्च मम्लुश्च बभ्रमुश्च दिशो दश ॥ ४
वध्यमाने बले तस्मिन्सूतपुत्रेण मारिष ।
नकुलोऽभ्यद्रवत्तूर्णं सूतपुत्रं महारणे ॥ ५
भीमसेनस्तथा द्रौणिं कुर्वाणं कर्म दुष्करम् ।
विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् ॥ ६
श्रुतकर्माणमायान्तं चित्रसेनो महीपतिः ।
प्रतिविन्ध्यस्तथा चित्रं चित्रकेतनकार्मुकम् ॥ ७
दुर्योधनस्तु राजानं धर्मपुत्रं युधिष्ठिरम् ।
संशप्तकगणा हृष्टा ह्यभ्यधावन्धनञ्जयम् ॥ ८
धृष्टद्युम्नः कृपं चापि तस्मिन्वीरवरक्षये ।
शिखण्डी कृतवर्माणं समासादयदच्युतम् ॥ ९
श्रुतकीर्तिस्तथा शल्यं माद्रीपुत्रः सुतं तव ।
दुःशासनं महाराज सहदेवः प्रतापवान् ॥
कैकेयौ सात्यकिं युद्धे शरवर्षेण भास्वता ।
सात्यकिः केकयौ चापि च्छादयामास भारत ॥
तावेनं भ्रातरौ वीरौ जघ्नतुर्हृदये भृशम् ।
विषाणाभ्यां यथा नागौ प्रतिनागं महावने ॥
शरसंभिन्नवर्माणौ तावुभौ भ्रातरौ रणे ।
सात्यकिं सत्यकर्माणं राजन्विव्यधतुः शरैः ॥
तौ सात्यकिर्महाराज प्रहसन्सर्वतोदिशः ।
छादयञ्छरवर्षेण वारयामास भारत ॥
वार्यमाणौ ततस्तौ हि शैनेयशरवृष्टिभिः ।
शैनेयस्य रथं तूर्णं छादयामासतुः शरैः ॥
तयोस्तु धनुषी चित्रे छित्त्वा शौरिर्महायशाः
अथ तौ सायकैस्तीक्ष्णैर्वारयामास सात्यकिः ॥
अथान्ये धनुषी चित्रे प्रगृह्य च महाशरान् ।
सात्यकिं छादयन्तौ तौ चेरतुर्लघु सुष्ठु च ॥
ताभ्यां मुक्ता महाबाणाः कङ्कबर्हिणवाससः
द्योतयन्तो दिशः सर्वाः संपेतुः स्वर्णभूषणाः ॥
बाणान्धकारमभवत्तयो राजन्महामृधे ।

---

अहन्हतवान् ॥ ४४ ॥ हतः गदया शकलीकृतः । अतएव अभितोद्विपं द्विपस्याभितः पपात ॥ ४५ ॥ नवमोऽध्यायः ॥ ९ ॥

द्रौणिमभ्यद्रवत् ॥ ६ ॥ कृपेण युयुधे इति शेषः ॥ ९ ॥

माद्रीपुत्रः सुतं तवेत्यस्य व्याख्या दुःशासनमिति ॥ ९
लघु शीघ्रम् । सुष्ठु शोभनम् ॥ १७ ॥

अन्योन्यस्य धनुश्चैव चिच्छिदुस्ते महारथाः ॥ १९
ततः क्रुद्धो महाराज सात्वतो युद्धदुर्मदः ।
धनुरन्यत्समादाय सज्यं कृत्वा च संयुगे ॥ २०
क्षुरप्रेण सुतीक्ष्णेन ह्यनुविन्दशिरोऽहरत् ।
अपतत्तच्छिरो राजन्कुण्डलोपचितं महत् ॥ २१
शम्बरस्य शिरो यद्वन्निहतस्य महारणे ।
शोचयन्केकयान्सर्वाञ्जगामाशु वसुंधराम् ॥ २२
तं दृष्ट्वा निहतं शूरं भ्राता तस्य महारथः ।
सज्यमन्यद्धनुः कृत्वा शैनेयं पर्यवारयत् ॥ २३
स षष्ट्या सात्यकिं विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः ।
ननाद बलवन्नादं तिष्ठतिष्ठेति चाब्रवीत् ॥ २४
सात्यकिं च ततस्तूर्णं केकयानां महारथः ।
शरैरनेकसाहस्रैर्बाह्वोरुरसि चार्पयत् ॥ २५
स शरैः क्षतसर्वाङ्गः सात्यकिः सत्यविक्रमः ।
रराज समरे राजन्सपुष्प इव किंशुकः ॥ २६
सात्यकिः समरे विद्धः कैकेयेन महात्मना ।
कैकेयं पञ्चविंशत्या विव्याध प्रहसन्निव ॥ २७
तावन्योन्यस्य समरे संछिद्य धनुषी शुभे ।
हत्वा च सारथी तूर्णं हयांश्च रथिनां वरौ ॥ २८
विरथावसियुद्धाय समाजग्मतुराहवे ।
शतचन्द्रचिते गृह्य चर्मणी सुभुजौ तथा ॥ २९
विरोचेतां महारङ्गे निस्त्रिंशवरधारिणौ ।
यथा देवासुरे युद्धे जम्भशक्रौ महाबलौ ॥ ३०
मण्डलानि ततस्तौ तु विचरन्तौ महारणे ।
अन्योन्यमभितस्तूर्णं समाजग्मतुराहवे ॥ ३१
अन्योन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमम् ।
कैकेयस्य द्विधा चर्म ततश्चिच्छेद सात्वतः ॥ ३२
सात्यकेस्तु तथैवासौ चर्म चिच्छेद पार्थिवः ।
चर्म छित्त्वा तु कैकेयस्तारागणशतैर्वृतम् ।
चचार मण्डलान्येव गतप्रत्यागतानि च ॥ ३३
तं चरन्तं महारङ्गे निस्त्रिंशवरधारिणम् ।
अपहस्तेन चिच्छेद शैनेयस्त्वरयाऽन्वितः ॥ ३४
सवर्मा केकयो राजन्द्विधा च्छिन्नो महारणे ।
निपपात महेष्वासो वज्राहत इवाचलः ॥ ३५
तं निहत्य रणे शूरः शैनेयो रथसत्तमः ।
युधामन्युरथं तूर्णमारुरोह परंतपः ॥ ३६
ततोऽन्यं रथमास्थाय विधिवत्कल्पितं पुनः ।
केकयानां महत्सैन्यं व्यधमत्सात्यकिः शरैः ॥ ३७
सा वध्यमाना समरे केकयानां महाचमूः ।
तमुत्सृज्य रणे शत्रुं प्रदुद्राव दिशो दश ॥ ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

प्रतिविन्ध्यश्रुतकर्मभ्यां चित्रचित्रसेनयोः संहारः ॥ १ ॥

सञ्जय उवाच ।
श्रुतकर्मा ततो राजंश्चित्रसेनं महीपतिम् ।
आजघ्ने समरे क्रुद्धः पञ्चाशद्भिः शिलीमुखैः ॥ १
चित्रसेनस्तु तं राजन्नवभिर्नतपर्वभिः ।
श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभिः ॥ २
श्रुतकर्मा ततः क्रुद्धश्चित्रसेनं चमूमुखे ।
नाराचेन सुतीक्ष्णेन मर्मदेशे समार्पयत् ॥ ३
सोऽतिविद्धो महाराज नाराचेन महात्मना ।
मूर्च्छामभिययौ वीरः कश्मलं चाविवेश ह ॥ ४
एतस्मिन्नन्तरे चैनं श्रुतकीर्तिर्महायशाः ।
नवत्या जगतीपालं छादयामास पत्रिभिः ॥ ५
प्रतिलभ्य ततः संज्ञां चित्रसेनो महारथः ।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ ६
सोऽन्यत्कार्मुकमादाय वेगघ्नं रुक्मभूषितम् ।
चित्ररूपधरं चक्रे चित्रसेनं शरोर्मिभिः ॥ ७
स शरैश्चित्रितो राजा चित्रमाल्यधरो युवा ।

उपचितमलंकृतम् ॥ २१ ॥ अपहस्तेन तिर्यग्घस्तेन ॥ ३४ ॥ दशमोऽध्यायः ॥ १० ॥

आहत्य संताड्य ॥ २ ॥ मूर्च्छां अर्धनिद्राम् । कश्मलमचित्तत्वम् ॥ ४ ॥ एनं श्रुतकर्माणम् ॥ ५ ॥ तं श्रुतकर्माणम् ॥ ६ ॥

अशोभत महारङ्गे श्वाविच्छलल्तो यथा ॥ ८
श्रुतकर्माणमथ वै नाराचेन स्तनान्तरे ।
बिभेद तरसा शूरस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ९
श्रुतकर्मापि समरे नाराचेन समर्पितः ।
सुस्राव रुधिरं तत्र गैरिकाम्बु यथाऽचलः ॥ १०
ततः स रुधिराक्ताङ्गो रुधिरेण कृतच्छविः ।
रराज समरे वीरः सपुष्प इव किंशुकः ॥ ११
श्रुतकर्मा ततो राजञ्शत्रुणा समभिद्रुतः ।
शत्रुसंवारणं क्रुद्धो द्विधा चिच्छेद कार्मुकम् ॥ १२
अथैनं छिन्नधन्वानं नाराचानां शतैस्त्रिभिः ।
छादयन्समरे राजन्विव्याध च सुपत्रिभिः ॥ १३
ततोऽपरेण भल्लेन तीक्ष्णेन निशितेन च ।
जहार सशिरस्त्राणं शिरस्तस्य महात्मनः ॥ १४
तच्छिरो न्यपतद्भूमौ चित्रसेनस्य दीप्तिमत् ।
यदृच्छया यथा चन्द्रश्च्युतः स्वर्गान्महीतलम् ॥ १५
राजानं निहतं दृष्ट्वा तेऽभिसारं तु मारिष ।
अभ्यद्रवन्त वेगेन चित्रसेनस्य सैनिकाः ॥ १६
ततः क्रुद्धो महेष्वासस्तत्सैन्यं प्राद्रवच्छरैः ।
अन्तकाले यथा क्रुद्धः सर्वभूतानि प्रेतराट् ॥ १७
ते वध्यमानाः समरे तव पौत्रेण धन्विना ।
व्यद्रवन्त दिशस्तूर्णं दावदग्धा इव द्विपाः ॥ १८
तांस्तु विद्रवतो दृष्ट्वा निरुत्साहान्द्विषज्जये ।
द्रावयन्निषुभिस्तीक्ष्णैः श्रुतकर्मा व्यरोचत ॥ १९
प्रतिविन्ध्यस्ततश्चित्रं भित्त्वा पञ्चभिराशुगैः ।
सारथिं च त्रिभिर्विद्ध्वा ध्वजमेकेषुणापि च ॥ २०
तं चित्रो नवभिर्भल्लैर्बाह्वोरुरसि चार्पयत् ।
स्वर्णपुङ्खैः प्रसन्नाग्रैः कङ्कबर्हिणवाजितैः ॥ २१
प्रतिविन्ध्यो धनुश्छित्त्वा तस्य भारत सायकैः ।
पञ्चभिर्निशितैर्बाणैरथैनं स हि जघ्निवान् ॥ २२
ततः शक्तिं महाराज स्वर्णघण्टां दुरासदाम् ।
प्राहिणोत्प्रतिविन्ध्याय विचिन्वन्तीमसूनिव २३
तामापतन्तीं सहसा शक्तिमुल्कामिवाम्बरे ।
द्विधा चिच्छेद समरे प्रतिविन्ध्यो हसन्निव ॥ २४
सा पपात द्विधा छिन्ना प्रतिविन्ध्यशरैः शितैः ।
युगान्ते सर्वभूतानि त्रासयन्ती यथाऽशनिः ॥ २५
शक्तिं तां प्रहतां दृष्ट्वा चित्रो गृह्य महागदाम् ।
प्रतिविन्ध्याय चिक्षेप रुक्मजालविभूषिताम् २६
सा जघान हयांस्तस्य सारथिं च महारणे ।
रथं प्रमृद्य वेगेन धरणीमन्वपद्यत ॥ २७
एतस्मिन्नेव काले तु रथादाप्लुत्य भारत ।
शक्तिं चिक्षेप चित्राय स्वर्णदण्डामलंकृताम् २८
तामापतन्तीं जग्राह चित्रो राजन्महामनाः ।
ततस्तामेव चिक्षेप प्रतिविन्ध्याय पार्थिवः ॥ २९
समासाद्य रणे शूरं प्रतिविन्ध्यं महाप्रभा ।
निर्भिद्य दक्षिणं बाहुं निपपात महीतले ।
पतिताऽभासयच्चैव तं देशमशनिर्यथा ॥ ३०
प्रतिविन्ध्यस्ततो राजंस्तोमरं हेमभूषितम् ।
प्रेषयामास संक्रुद्धश्चित्रस्य वधकाङ्क्षया ॥ ३१
स तस्य गात्रावरणं भित्त्वा हृदयमेव च ।
जगाम धरणीं तूर्णं महोरग इवाशयम् ॥ ३२
स पपात तदा राजा तोमरेण समाहतः ।
प्रसार्य विपुलौ बाहू पीनौ परिघसन्निभौ ॥ ३३
चित्रं संप्रेक्ष्य निहतं तावका रणशोभिनः ।
अभ्यद्रवन्त वेगेन प्रतिविन्ध्यं समन्ततः ॥ ३४
सृजन्तो विविधान्बाणाञ्शतघ्नीश्च सकिङ्किणीः ।
तमवच्छादयामासुः सूर्यमभ्रगणा इव ॥ ३५
तान्विधम्य महाबाहुः शरजालेन संयुगे ।
व्यद्रावयत्त्वैव चेमूं वज्रहस्त इवासुरीम् ॥ ३६
ते वध्यमानाः समरे तावकाः पाण्डवैर्नृप ।
विप्रकीर्यन्त सहसा वातनुन्ना घना इव ॥ ३७
विप्रद्रुते बले तस्मिन्वध्यमाने समन्ततः ।
द्रौणिरेकोऽभ्ययात्तूर्णं भीमसेनं महाबलम् ॥ ३८

कृतच्छविः आहितशोभः ॥ ११ ॥ सुपत्रिभिः शोभनपुङ्खवद्भिर्नाराचानां शतैः ॥ १३ ॥ प्रेतराट् यमः ॥ १७ ॥ दावो दावाग्निस्तेन दग्धाः ॥ १८ ॥ गात्रावरणं कवचम् ॥ ३२ ॥
एकादशोऽध्यायः ॥ ११ ॥

ततः समागमो घोरो बभूव सहसा तयोः। यथा देवासुरे युद्धे वृत्रवासवयोरिव ॥ ३९

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

भीमाश्वत्थाम्नोर्युद्धम् ॥ १ ॥

सञ्जय उवाच।
भीमसेनं ततो द्रौणी राजन्विव्याध पत्रिणा।
परया त्वरया युक्तो दर्शयन्नस्त्रलाघवम् ॥ १
अथैनं पुनराजघ्ने नवत्या निशितैः शरैः।
सर्वमर्माणि संप्रेक्ष्य मर्मज्ञो लघुहस्तवत् ॥ २
भीमसेनः समाकीर्णो द्रौणिना निशितैः शरैः।
रराज समरे राजन्रश्मिवानिव भास्करः ॥ ३
ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः।
द्रोणपुत्रमवच्छाद्य सिंहनादममुञ्चत ॥ ४
शरैः शरांस्ततो द्रौणिः संवार्य युधि पाण्डवम्।
ललाटेऽभ्याहनद्राजन्नाराचेन स्मयन्निव ॥ ५
ललाटस्थं ततो बाणं धारयामास पाण्डवः।
यथा शृङ्गं वने दृप्तः खड्गो धारयते नृप ॥ ६
ततो द्रौणिं रणे भीमो यतमानं पराक्रमी।
त्रिभिर्विव्याध नाराचैर्ललाटे विस्मयन्निव ॥ ७
ललाटस्थैस्ततो बाणैर्ब्राह्मणोऽसौ व्यशोभत।
प्रावृषीव यथा सिक्तस्त्रिशृङ्गः पर्वतोत्तमः ॥ ८
ततः शरशतैर्द्रौणिरर्दयामास पाण्डवम्।
न चैनं कम्पयामास मातरिश्वेव पर्वतम् ॥ ९
तथैव पाण्डवो युद्धे द्रौणिं शरशतैः शितैः।
नाकम्पयत संहृष्टो वार्योघ इव पर्वतम् ॥ १०
तावन्योन्यं शरैर्घोरैश्छादयानौ महारथौ।
रथवर्यगतौ वीरौ शुशुभाते बलोत्कटौ ॥ ११
आदित्याविव संदीप्तौ लोकक्षयकरावुभौ।
स्वरश्मिभिरिवान्योन्यं तापयन्तौ शरोत्तमैः ॥ १२
ततः प्रतिकृते यत्नं कुर्वाणौ तौ महारणे।
कृतप्रतिकृते यत्तौ शरसङ्घैरभीतवत् ॥ १३
व्याघ्राविव च संग्रामे चेरतुस्तौ नरोत्तमौ।
शरदंष्ट्रौ दुराधर्षौ चापवक्त्रौ भयंकरौ ॥ १४
अभूतां तावदृश्यौ च शरजालैः समन्ततः।
मेघजालैरिव च्छन्नौ गगने चन्द्रभास्करौ ॥ १५
चकाशेते मुहूर्तेन ततस्तावप्यरिंदमौ।
विमुक्तावभ्रजालेन अङ्गारकबुधाविव ॥ १६
अथ तत्रैव संग्रामे वर्तमाने सुदारुणे।
अपसव्यं ततश्चक्रे द्रौणिस्तत्र वृकोदरम् ॥ १७
किरञ्छरशतैरुग्रैर्धाराभिरिव पर्वतम्।
न तु तन्ममृषे भीमः शत्रोर्विजयलक्षणम् ॥ १८
प्रतिचक्रे ततो राजन्पाण्डवोऽप्यपसव्यतः।
मण्डलानां विभागेन गतप्रत्यागतेन च ॥ १९
बभूव तुमुलं युद्धं तयोः पुरुषसिंहयोः।
चरित्वा विविधान्मार्गान्मण्डलस्थानमेव च ॥२०
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः।
अन्योन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमम् ॥ २१
ईषतुर्विरथं चैव कर्तुमन्योन्यमाहवे।
ततो द्रौणिर्महास्त्राणि प्रादुश्चक्रे महारथः ॥ २२
तान्यस्त्रैरेव समरे प्रतिजघ्नेऽथ पाण्डवः।
ततो घोरं महाराज अस्त्रयुद्धमवर्तत ॥ २३
ग्रहयुद्धं यथा घोरं प्रजासंहरणे ह्यभूत्।
ते बाणाः समसज्जन्त मुक्तास्ताभ्यां तु भारत ॥२४
द्योतयन्तो दिशः सर्वास्तव सैन्यं समन्ततः।
बाणसङ्घैर्वृतं घोरमाकाशं समपद्यत ॥ २५
उल्कापातावृतं युद्धं प्रजानां संक्षये नृप।
बाणाभिघातात्संजज्ञे तत्र भारत पावकः ॥२६
सविस्फुलिङ्गो दीप्तार्चिर्योऽदहद्वाहिनीद्वयम्।

खड्गः गण्डकः ॥ ६ ॥ कृतप्रतिकृते अन्योन्यास्त्रप्रतिघाते ॥ १३ ॥ ईषतुः इच्छां चक्रतुः ॥ २२ ॥ उल्कानामन्योन्याभिमुखं पातास्तैरावृतमिवेति लुप्तोपमा ॥ २६ ॥

तत्र सिद्धा महाराज संपतन्तोऽब्रुवन्वचः ॥ २७
युद्धानामति सर्वेषां युद्धमेतदिति प्रभो ।
सर्वयुद्धानि चैतस्य कलां नार्हन्ति षोडशीम् ॥ २८
नेदृशं च पुनर्युद्धं भविष्यति कदाचन ।
अहो ज्ञानेन संपन्नावुभौ ब्राह्मणक्षत्रियौ ॥ २९
अहो शौर्येण संपन्नावुभौ चोग्रपराक्रमौ ।
अहो भीमबलो भीम एतस्य च कृतास्त्रता ॥ ३०
अहो वीर्यस्य सारत्वमहो सौष्ठवमेतयोः ।
स्थितावेतौ हि समरे कालान्तकयमोपमौ ॥ ३१
रुद्रौ द्वाविव संभूतौ यथा द्वाविव भास्करौ ।
यमौ वा पुरुषव्याघ्रौ घोररूपावुभौ रणे ॥ ३२
इति वाचः स्म श्रूयन्ते सिद्धानां वै मुहुर्मुहुः ।
सिंहनादश्च संजज्ञे समेतानां दिवौकसाम् ॥ ३३
अद्भुतं चाप्यचिन्त्यं च दृष्ट्वा कर्म तयो रणे ।
सिद्धचारणसङ्घानां विस्मयः समपद्यत ॥ ३४
प्रशंसन्ति तदा देवाः सिद्धाश्च परमर्षयः ।
साधु द्रौणे महाबाहो साधु भीमेति चाब्रुवन् ॥ ३५
तौ शूरौ समरे राजन्परस्परकृतागसौ ।
परस्परमुदीक्षेतां क्रोधादुद्वृत्य चक्षुषी ॥ * ३६
क्रोधरक्तेक्षणौ तौ तु क्रोधात्प्रस्फुरिताधरौ ।
क्रोधात्संदष्टदशनौ तथैव दशनच्छदौ ॥ * ३७
अन्योन्यं छादयन्तौ स्म शरवृष्ट्या महारथौ ।
शराम्बुधारौ समरे शस्त्रविद्युत्प्रकाशिनौ ॥ ३८
तावन्योन्यं ध्वजं विद्ध्वा सारथिं च महारणे ।
अन्योन्यस्य हयान्विद्ध्वा बिभिदाते परस्परम् ॥ ३९
ततः क्रुद्धौ महाराज बाणौ गृह्य महाहवे ।
उभौ चिक्षिपतुस्तूर्णमन्योन्यस्य वधैषिणौ ॥ ४०
तौ सायकौ महाराज द्योतमानौ चमूमुखे ।
आजघ्नतुः समासाद्य वज्रवेगौ दुरासदौ ॥ ४१
तौ परस्परवेगाच्च शराभ्यां च भृशाहतौ ।
निपेततुर्महावीर्यौ रथोपस्थे तयोस्तदा ॥ ४२
ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम् ।
अपोवाह रणाद्राजन्सर्वसैन्यस्य पश्यतः ॥ ४३
तथैव पाण्डवं राजन्विह्वलन्तं मुहुर्मुहुः ।
अपोवाह रथेनाजौ विशोकः शत्रुतापनम् ॥ ४४

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

शल्येन श्रुतकीर्तिपराजयः ॥ १ ॥

सञ्जय उवाच ।
श्रुतकीर्तिमथायान्तं किरन्तं निशिताञ्शरान् ।
मद्रराजो महाराज वारयामास हृष्टवत् ॥ १
मद्रराजं समासाद्य श्रुतकीर्तिर्महारथः ।
विव्याध भल्लैर्विंशत्या कार्तस्वरविभूषितैः ॥ २
प्रतिविव्याध तं शल्यं त्रिभिस्तूर्णमजिह्मगैः ।
सारथिं चास्य भल्लेन भृशं विव्याध भारत ॥ ३
स शल्यं शरवर्षेण च्छादयामास संयुगे ।
मुमोच निशितान्बाणान्मद्रराजरथं प्रति ॥ ४
ततः शल्यो महाराज श्रुतकीर्तिभुजच्युतान् ।
चिच्छेद समरे बाणान्बाणैः संनतपर्वभिः ॥ ५
श्रुतकीर्तिस्ततः शल्यं भित्त्वा नवभिरायसैः ।
सारथिं त्रिभिरानर्च्छत्पुनः शल्यं च पञ्चभिः ॥ ६
तस्य शल्यो धनुश्छित्त्वा हस्तावापं निकृत्य च ।
विव्याध समरे तूर्णं सप्तभिस्तं शरोत्तमैः ॥ ७
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
भद्रेश्वरं चतुःषष्ट्या बाह्वोरुरसि चार्पयत् ॥ ८
ततस्तु समरे राजंस्तेन विद्धः शिलीमुखैः ।

तथैव दशनच्छदौ क्रोधात्संदष्टोष्ठौ ॥ ३७ ॥

द्वादशोऽध्यायः ॥ १२ ॥

* झ. पुस्तके एतदनन्तरं स्थिताः सप्ताध्याया एतत्पाठे क्रमेण ५२-५३-५४-५५-५६-५९-६० तमाध्यायतया वर्तन्ते ।

प्रतिविव्याध तं चापि नवत्या निशितैः शरैः ॥ ९
तस्य मद्रेश्वरश्चापं पुनश्चिच्छेद मारिष ।
स च्छिन्नधन्वा समरे गदां चिक्षेप सत्वरः ॥ १०
पट्टैर्जाम्बूनदैर्बद्धां रूप्यपट्टैश्च भारत ।
भ्राजमानां यथा नारीं दिव्यवस्त्रविभूषिताम् ॥ ११
तामापतन्तीं सहसा दीप्यमानाशनिप्रभाम् ।
शरैरनेकसाहस्रैर्व्यष्टम्भयत मद्रराट् ॥ १२
विष्टभ्य च गदां वीरः पातयित्वा च भूतले ।
श्रुतकीर्तिमथायत्तो राजन्विव्याध पञ्चभिः ॥ १३
तस्य शक्तिं रणे भूयश्चिक्षेप भुजगोपमाम् ।
तां द्विधा चाच्छिनच्छल्यो मेदिन्यां सा व्यशीर्यत ॥
तस्य शल्यः क्षुरप्रेण यन्तुः कायाच्छिरोऽहरत् ।
बालहस्ताद्यथा श्येन आमिषं वै नरोत्तम ॥ १५
स पपात रथोपस्थात्सारथिस्तस्य भारत ।
ततस्ते प्राद्रवन्सङ्ख्ये हयास्तस्य महात्मनः ॥ १६
पलायमानैस्तैरश्वैः सोपनीतो रणाजिरात् ।
श्रुतकीर्तिर्महाराज पश्यतां सर्वयोधिनाम् ॥ १७
ततो मद्रेश्वरो राजा पाण्डवानामनीकिनीम् ।
व्यगाहत मुदा युक्तो नलिनीं द्विरदो यथा ॥ १८
लोलयामास स बलं सिंहः पशुगणानिव ।
शल्यस्तत्र महारङ्गे पाण्डवानां महात्मनाम् ॥ १९
निपात्य पाण्डुपाञ्चालान्पृतनासु व्यवस्थितः ।
अशोभत रणे शल्यो विधूमोऽग्निरिव ज्वलन् ॥ २०
सेनाकक्षं महद्दग्ध्वा कक्षमग्निरिवोत्थितः ।
स्थितो रराज समरे पुरं दग्ध्वेव शङ्करः ॥ २१

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ॥ १४ ॥

सहदेवेन दुःशासनपराजयः ॥ १ ॥

सञ्जय उवाच ।
सहदेवं तथा क्रुद्धं निघ्नन्तं तव वाहिनीम् ।
दुःशासनो महाराज भ्राता भ्रातरमभ्ययात् ॥ १
तौ समेतौ महाराज दृष्ट्वा तत्र महारथाः ।
सिंहनादरवांश्चक्रुर्वासांस्यादुधुवुश्च ह ॥ २
ततो भारत रुष्टेन तव पुत्रेण धन्विना ।
पाण्डुपुत्रस्त्रिभिर्बाणैर्वक्षस्यभिहतो बली ॥ ३
सहदेवस्ततो राजन्नाराचेन तवात्मजम् ।
विद्ध्वा विव्याध सप्तत्या सारथिं च त्रिभिः शरैः ॥ ४
दुःशासनस्ततश्चापं छित्त्वा राजन्महाहवे ।
सहदेवं त्रिसप्तत्या बाह्वोरुरसि चार्पयत् ॥ ५
सहदेवस्तु संक्रुद्धः खड्गं गृह्य महाहवे ।
आविध्य प्रासृजत्तूर्णं तव पुत्ररथं प्रति ॥ ६
समार्गणगुणं चापं छित्त्वा तस्य महानसिः ।
निपपात ततो भूमौ च्युतः सर्प इवाम्बरात् ॥ ७
अथान्यद्धनुरादाय सहदेवः प्रतापवान् ।
दुःशासनाय चिक्षेप बाणमन्तकरं ततः ॥ ८
तमापतन्तं विशिखं यमदण्डोपमत्विषम् ।
खड्गेन शितधारेण द्विधा चिच्छेद कौरवः ॥ ९
ततस्तं निशितं खड्गमाविध्य युधि सत्वरः ।
धनुश्चान्यत्समादाय शरं जग्राह वीर्यवान् ॥ १०
तमापतन्तं सहसा निस्त्रिंशं निशितैः शरैः ।
पातयामास समरे सहदेवो हसन्निव ॥ ११
ततो बाणांश्चतुःषष्टिं तव पुत्रो महारणे ।
सहदेवरथं तूर्णं प्रेषयामास भारत ॥ १२
ताञ्छरान्समरे राजन्वेगेनापततो बहून् ।
एकैकं पञ्चभिर्बाणैः सहदेवो न्यकृन्तत ॥ १३
संनिवार्य महाबाणान्सहदेवः प्रतापवान् ।
अथास्मै सुबहून्बाणान्प्रेषयामास संयुगे ॥ १४
तान्बाणांस्तव पुत्रोऽपि छित्त्वैकैकं त्रिभिः शरैः ।
ननाद सुमहानादं नादयानो वसुंधराम् ॥ १५

आदुधुवुः भ्रामितवन्तः ॥ २ ॥

ततो दुःशासनो राजन्द्वाभ्यां पाण्डुसुतं रणे ।
सारथिं नवभिर्बाणैर्माद्रेयस्य समाचिनोत् ॥ १६
ततः क्रुद्धो महाराज सहदेवः प्रतापवान् ।
समाधत्त शरं घोरं मृत्युकालान्तकोपमम् ॥ १७
विकृष्य बलवच्चापं तव पुत्राय सोऽसृजत् ।
स तं निर्भिद्य वेगेन भित्त्वा च कवचं महत् ॥ १८
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः ।
ततः संमुमुहे राजंस्तव पुत्रो महारथः ॥ १९
मूढं चैनं समालोक्य सारथिस्त्वरितो रथम् ।
अपोवाह भृशं त्रस्तो वध्यमानं शितैः शरैः ॥ २०
पराजित्य रणे तं तु कौरव्यं पाण्डुनन्दनः ।
दुर्योधनबलं दृष्ट्वा प्रममाथ समन्ततः ॥ २१
पिपीलिकपुटं राजन्यथा मृद्गन्नरो रुषा ।
तथा सा कौरवी सेना मृदिता तेन भारत ॥ २२

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

कर्णनकुलयोर्युद्धम् ॥ १ ॥ कर्णेन नकुलस्य पराभावनपूर्वकं सोपहासमधिक्षेपः ॥ २ ॥

सञ्जय उवाच ।
नकुलं रभसं युद्धे द्रावयन्तं वरूथिनीम् ।
कर्णो वैकर्तनो राजन्वारयामास वै रुषा ॥ १
नकुलस्तु ततः कर्णं प्रहसन्निदमब्रवीत् ॥ २
चिरस्य बत दृष्टोऽहं दैवतैः सौम्यचक्षुषा ।
यस्य मे त्वं रणे पाप चक्षुर्विषयमागतः ॥ ३
त्वं हि मूलमनर्थानां वैरस्य कलहस्य च ।
त्वद्दोषात्कुरवः क्षीणाः समासाद्य परस्परम् ।
त्वामद्य समरे हत्वा कृतकृत्योऽस्मि विज्वरः ॥ ४
एवमुक्तः प्रत्युवाच नकुलं सूतनन्दनः ।
सदृशं राजपुत्रस्य धन्विनश्च विशेषतः ॥ ५
प्रहरस्व च मे वीर पश्यामस्तव पौरुषम् ।
कर्म कृत्वा रणे शूर ततः कत्थितुमर्हसि ॥ ६
अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तितः ।
प्रयुध्यस्व मया शक्त्या हनिष्ये दर्पमेव ते ॥ ७
इत्युक्त्वा प्राहरत्तूर्णं पाण्डुपुत्राय सूतजः ।
विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः ॥ ८
नकुलस्तु ततो विद्धः सूतपुत्रेण भारत ।
अशीत्याऽऽशीविषप्रख्यैः सूतपुत्रमविध्यत ॥ ९
तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खैः शिलाशितैः ।
त्रिंशता परमेष्वासः शरैः पाण्डवमर्दयत् ॥ १०
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ।
आशीविषा यथा नागा भित्त्वा गां सलिलं पपुः ॥
अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम् ।
कर्णं विव्याध सप्तत्या सारथिं च त्रिभिः शरैः ॥ १२
ततः क्रुद्धो महाराज नकुलः परवीरहा ।
क्षुरप्रेण सुतीक्ष्णेन कर्णस्य धनुराच्छिनत् ॥ १३
अथैनं छिन्नधन्वानं सायकानां शतैस्त्रिभिः ।
आजघ्ने प्रहसन्वीरः सर्वलोकमहारथम् ॥ १४
कर्णमभ्यर्दितं दृष्ट्वा पाण्डुपुत्रेण मारिष ।
विस्मयं परमं जग्मुर्ऋषयः सह दैवतैः ॥ १५
अथान्यद्धनुरादाय कर्णो वैकर्तनस्तदा ।
नकुलं पञ्चभिर्बाणैर्जत्रुदेशे समार्पयत् ॥ १६
उरस्थैरथ तैर्बाणैर्माद्रीपुत्रो व्यरोचत ।
स्वरश्मिभिरिवादित्यो भुवने विसृजन्प्रभाम् ॥ १७
नकुलस्तु ततः कर्णं विद्ध्वा सप्तभिराशुगैः ।
अथास्य धनुषः कोटिं पुनश्चिच्छेद मारिष ॥ १८
सोऽन्यत्कार्मुकमादाय समरे वेगवत्तरम् ।
नकुलस्य ततो बाणैः समन्ताच्छादयद्दिशः ॥ १९
संछाद्यमानः सहसा कर्णचापच्युतैः शरैः ।
चिच्छेद स शरांस्तूर्णं शरैरेव महारथः ॥ २०
ततो बाणमयं जालं विततं व्योम्न्यदृश्यत ।

पिपीलिकपुट पिपीलिकावासपटलम् ॥ २२ ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

रभसं रणोत्सुकम् ॥ १ ॥ आशीविषा यथा राजन्भित्त्वा गां सलिलं भृशम् । इति क. ख. ट. पाठः ॥ ११ ॥

खद्योतानामिव व्रातैः संपतद्भिर्यथा नभः ॥ २१
तैर्विमुक्तैः शरशतैश्छादितं गगनं तदा ।
शलभानां यथा व्रातैस्तद्वदासीद्विशांपते ॥ २२
ते शरा हेमविकृताः संपतन्तो मुहुर्मुहुः ।
श्रेणीकृता व्यकाशन्त क्रौञ्चाः श्रेणीकृता इव २३
बाणजालवृते व्योम्नि च्छादिते च दिवाकरे ।
न स्म संपतते भूतं किंचिदप्यन्तरिक्षगम् ॥ २४
निरुद्धे तत्र मार्गे च शरसङ्घैः समन्ततः ।
व्यरोचेतां महात्मानौ कालसूर्याविवोदितौ ॥ २५
कर्णचापच्युतैर्बाणैर्वध्यमानास्तु सोमकाः ।
अवालीयन्त राजेन्द्र वेदनार्ता भृशार्दिताः ॥ २६
नकुलस्य तथा बाणैर्हन्यमाना चमूस्तव ।
व्यशीर्यत दिशो राजन्वातनुन्ना इवाम्बुदाः ॥ २७
ते सेने हन्यमाने तु ताभ्यां दिव्यैर्महाशरैः ।
शरपातमपाक्रम्य तस्थतुः प्रेक्षिके तदा ॥ २८
प्रोत्सारितजने तस्मिन्कर्णपाण्डवयोः शरैः ।
अविध्येतां महात्मानावन्योन्यं शरवृष्टिभिः ॥ २९
विदर्शयन्तौ दिव्यानि शस्त्राणि रणमूर्धनि ।
छादयन्तौ च सहसा परस्परवधैषिणौ ॥ ३०
नकुलेन शरा मुक्ताः कङ्कबर्हिणवाससः ।
सूतपुत्रमवच्छाद्य व्यतिष्ठन्त यथाऽम्बरे ॥ ३१
तथैव सूतपुत्रेण प्रेषिताः परमाहवे ।
पाण्डुपुत्रमवच्छाद्य व्यतिष्ठन्ताम्बरे शराः ॥ ३२
शरवेश्मप्रविष्टौ तौ ददृशाते न कैश्चन ।
सूर्याचन्द्रमसौ राजञ्छाद्यमानौ घनैरिव ॥ ३३
ततः क्रुद्धो रणे कर्णः कृत्वा घोरतरं वपुः ।
पाण्डवं छादयामास समन्ताच्छरवृष्टिभिः ॥ ३४
सोऽतिच्छन्नो महाराज सूतपुत्रेण पाण्डवः ।
न चकार व्यथां राजन्भास्करो जलदैर्यथा ॥ ३५
ततः प्रहस्याधिरथिः शरजालानि मारिष ।
प्रेषयामास समरे शतशोऽथ सहस्रशः ॥ ३६
एकच्छायमभूत्सर्वं तस्य बाणैर्महात्मनः ।
अभ्रच्छायेव संजज्ञे संपतद्भिः शरोत्तमैः ॥ ३७
ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः ।

बालसूर्याविवोदितौ इति ख. पाठः ॥ २५ ॥

सारथिं पातयामास रथनीडाद्धसन्निव ॥ ३८
ततोऽश्वांश्चतुरश्चास्य चतुर्भिर्निशितैः शरैः ।
यमस्य भवनं तूर्णं प्रेषयामास भारत ॥ ३९
अथास्य तं रथं दिव्यं तिलशो व्यधमच्छरैः ।
पताकां चक्ररक्षांश्च गदां खड्गं च मारिष ॥ ४०
शतचन्द्रं च तच्चर्म सर्वोपकरणानि च ।
'सुवर्णविकृतं तच्च धनुः सशरमाहवे ॥' ४१
हताश्वो विरथश्चैव विवर्मा च विशांपते ।
अवतीर्य रथात्तूर्णं परिघं गृह्य धिष्ठितः ॥ ४२
तमुद्यतं महाघोरं परिघं तस्य सूतजः ।
व्यहनत्सायकै राजन्सुतीक्ष्णैर्भारसाधनैः ॥ ४३
व्यायुधं चैनमालक्ष्य शरैः सन्नतपर्वभिः ।
आर्पयद्बहुभिः कर्णो न चैनं समपीडयत् ॥ ४४
स हन्यमानः समरे कृतास्त्रेण बलीयसा ।
प्राद्रवत्सहसा राजन्नकुलो व्याकुलेन्द्रियः ॥ ४५
तमभिद्रुत्य राधेयः प्रहसन्वै पुनःपुनः ।
सज्यमस्य धनुः कण्ठे व्यवासृजत भारत ॥ ४६
ततः स शुशुभे राजन्कण्ठासक्तमहाधनुः ।
परिवेषमनुप्राप्तो यथा स्याद्व्योम्नि चन्द्रमाः ॥ ४७
यथैव चासितो मेघः शक्रचापेन शोभितः ।
'अशोभत महाराज पाण्डुपुत्रस्तथा रणे ॥' ४८
तमब्रवीत्ततः कर्णो व्यर्थं व्याहृतवानसि ।
वदेदानीं पुनर्हृष्टो वध्यमानः पुनःपुनः ॥ ४९
मा योत्सीः कुरुभिः सार्धं बलवद्भिश्च पाण्डव ।
सदृशैस्तात युध्यस्व व्रीडां मा कुरु पाण्डव ॥ ५०
गृहं वा गच्छ माद्रेय यत्र वा कृष्णफल्गुनौ ।
एवमुक्त्वा महाराज विससर्ज स तं तदा ॥ ५१
वधप्राप्तं तु तं शूरो नाहनद्धर्मवित्तदा ।
स्मृत्वा कुन्त्या वचो राजंस्तत एनं व्यसर्जयत् ॥ ५२
विसृष्टः पाण्डवो राजन्सूतपुत्रेण धन्विना ।
व्रीडन्निव जगामाथ युधिष्ठिररथं प्रति ॥ ५३
आरुरोह रथं चापि सूतपुत्रप्रतापितः ।
निःश्वसन्दुःखसंतप्तः कुम्भक्षिप्त इवोरगः ॥ ५४
तं विजित्याथ कर्णोऽपि पाञ्चालांस्त्वरितो ययौ ।

एकबाणमभूत्सर्वं इति क. ट. पाठः ॥ ३७ ॥

रथेनातिपताकेन चन्द्रवर्णहयेन च ॥ ५५
तत्राक्रन्दो महानासीत्पाण्डवानां विशांपते ।
दृष्ट्वा सेनापतिं यान्तं पाञ्चालानां रथव्रजान् ॥ ५६
तत्राकरोन्महाराज कदनं सूतनन्दनः ।
मध्यं प्राप्ते दिनकरे चक्रवद्विचरन्प्रभुः ॥ ५७
भग्नचक्रै रथैः कैश्चिच्छिन्नध्वजपताकिभिः ।
हताश्वैर्हतसूतैश्च भग्नाक्षैश्चैव मारिष ।
ह्रियमाणानपश्याम पाञ्चालानां रथव्रजान् ॥ ५८
तत्रतत्र च संभ्रान्ता विचेरुरथ कुञ्जराः ।
दावाग्न्यभिपरीताङ्गा यथैव स्युर्महावने ॥ ५९
भिन्नकुम्भाः सरुधिराश्छिन्नहस्ताश्च वारणाः ।
छिन्नगात्रावराश्चैव च्छिन्नवालधयोऽपरे ।
छिन्नाभ्राणीव संपेतुर्हन्यमाना महात्मना ॥ ६०
अपरे त्रासिता नागा नाराचशरतोमरैः ।
तमेवाभिमुखं जग्मुः शलभा इव पावकम् ॥ ६१
अपरे निष्टनन्तश्च व्यदृश्यन्त महाद्विपाः ।
क्षरन्तः शोणितं गात्रैर्नगा इव जलस्रवाः ॥ ६२
उरश्छदैर्वियुक्तांश्च वालबन्धैश्च वाजिनः ।
राजतैश्च तथा कांस्यैः सौवर्णैश्चैव भूषणैः ॥ ६३
हीनांश्चाभरणैश्चैव खलीनैश्च विवर्जितान् ।
चामरैश्च कुथाभिश्च तूणीरैः पतितैरपि ॥ ६४
निहतैः सादिभिश्चैव शूरैराहवशोभितैः ।
अपश्याम रणे तत्र भ्राम्यमाणान्हयोत्तमान् ॥ ६५
प्रासैः खड्गैश्च रहितानृष्टिभिश्चापि भारत ।
हयसादीनपश्याम कञ्चुकोष्णीषधारिणः ॥ ६६
निहतान्वध्यमानांश्च वेपमानांश्च भारत ।*
नागाङ्गावयवैर्हीनांस्तत्रतत्रैव भारत ॥ ६७
रथान्हेमपरिष्कारान्संयुक्ताञ्जवनैर्हयैः ।*
भ्राम्यमाणानपश्याम हतेषु रथिषु द्रुतम् ॥ ६८
भग्नाक्षकूबरान्कांश्चिद्भग्नचक्रांश्च भारत ।
विपताकध्वजांश्चान्याञ्छिन्नेषादण्डबन्धुरान् ६९
विहीनान्रथिनस्तत्र धावमानांस्ततस्ततः ।
सूतपुत्रशरैस्तीक्ष्णैर्हन्यमानान्विशांपते ॥ ७०
विशस्त्रांश्च तथैवान्यान्सशस्त्रांश्च हतान्बहून् ।
तारकाजालसंछन्नान्वरघण्टाविशोभितान् ॥ ७१
नानावर्णविचित्राभिः पताकाभिरलंकृतान् ।
वारणाननुपश्याम धावमानान्समन्ततः ॥ ७२
शिरांसि बाहूनूरूंश्च च्छिन्नानन्यांस्तथैव च ।
कर्णचापच्युतैर्बाणैरपश्याम समन्ततः ॥ ७३
महान्व्यतिकरो रौद्रो योधानामन्वपद्यत ।
कर्णसायकनुन्नानां युध्यतां च शितैः शरैः ॥ ७४
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
तमेवाभिमुखं यान्ति पतङ्गा इव पावकम् ॥ ७५
तं दहन्तमनीकानि तत्रतत्र महारथम् ।
क्षत्रिया वर्जयामासुर्युगान्ताग्निमिवोल्बणम् ॥ ७६
हतशेषास्तु ये वीराः पाञ्चालानां महारथाः ।
तान्प्रभग्नान्द्रुतान्वीरः पृष्ठतो विकिरञ्छरैः ।
अभ्यधावत तेजस्वी विशीर्णकवचध्वजान् ॥ ७७
तापयामास तान्बाणैः सूतपुत्रो महाबलः ।
मध्यंदिनमनुप्राप्तो भूतानीव तमोनुदः ॥ ७८

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

युयुत्सूलूकयोर्युद्धम् ॥ १ ॥ शकुनिसुतसोमयोर्युद्धम् ॥ २ ॥

सञ्जय उवाच ।
युयुत्सुं तव पुत्रस्य द्रावयन्तं बलं महत् ।
उलूको न्यपतत्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ॥ १
युयुत्सुश्च ततो राजञ्शितधारेण पत्रिणा ।
उलूकं ताडयामास वज्रेणेव महाबलम् ॥ २
उलूकस्तु ततः क्रुद्धस्तव पुत्रस्य संयुगे ।
क्षुरप्रेण धनुश्छित्त्वा ताडयामास कर्णिना ॥ ३
तदपास्य धनुश्छिन्नं युयुत्सुर्वेगवत्तरम् ।

*ह्रियमाणानपश्याम इति क. ख. ट. पाठः ॥ ५८ ॥ नागाङ्गावयवैरित्यर्धं झ. पुस्तकएव दृश्यते ॥ ६७ ॥ पञ्चदशोऽध्यायः ॥ १५ ॥

अन्यदादत्त सुमहच्चापं संरक्तलोचनः ॥ ४
शाकुनिं तु ततः षष्ट्या विव्याध भरतर्षभ ।
सारथिं त्रिभिरानर्च्छत्तं च भूयो व्यविध्यत ॥५
उलूकस्तं तु विंशत्या विद्ध्वा स्वर्णविभूषितैः ।
अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ॥६
स च्छिन्नयष्टिः सुमहाञ्शीर्यमाणो महाध्वजः ।
पपात प्रमुखे राजन्युयुत्सोः काञ्चनध्वजः ॥ ७
ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्च्छितः ।
उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे ॥ ८
उलूकस्तस्य समरे तैलधौतेन मारिष ।
शिरश्चिच्छेद भल्लेन यन्तुर्भरतसत्तम ॥ ९
तच्छिन्नमपतद्भूमौ युयुत्सोः सारथेस्तदा ।
तारारूपं यथा चित्रं निपपात महीतले ॥ १०
जघान चतुरोऽश्वांश्च तं च विव्याध पञ्चभिः ।
सोऽतिविद्धो वलवता प्रत्यपायाद्रथान्तरम् ॥११
तं निर्जित्य रणे राजन्नुलूकस्त्वरितो ययौ ।
पाञ्चालान्सृञ्जयांश्चैव विनिघ्नन्निशितैः शरैः ॥१२
शतानीकं महाराज श्रुतकर्मा सुतस्तव ।
व्यश्वसूतरथं चक्रे निमेषार्धादसंभ्रमः ॥ १३
हताश्वे तु रथे तिष्ठञ्शतानीको महारथः ।
गदां चिक्षेप संक्रुद्धस्तव पुत्रस्य मारिष ॥ १४
सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन् ।
पपात धरणीं तूर्णं दारयन्तीव भारत ॥ १५
तावुभौ विरथौ वीरौ कुरूणां कीर्तिवर्धनौ ।
व्यपाक्रमेतां युद्धात्तु प्रेक्षमाणौ परस्परम् ॥ १६
पुत्रस्तु तव संभ्रान्तो विविंशो रथमारुहत् ।
शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः १७
सुतसोमं तु शकुनिर्विद्ध्वा तु निशितैः शरैः ।
नाकम्पयत संक्रुद्धो वार्योघ इव पर्वतम् ॥ १८
सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम् ।
शरैरनेकसाहस्रैश्छादयामास भारत ॥ १९
ताञ्शराञ्शकुनिस्तूर्णं चिच्छेदान्यैः पतत्रिभिः ।
लघ्वस्त्रश्चित्रयोधी च जितकाशी च संयुगे ॥ २०
निवार्य समरे चापि शरांस्तान्निशितैः शरैः ।
आजघान सुसंक्रुद्धः सुतसोमं त्रिभिः शरैः ॥२१
'नाकम्पयत संक्रुद्धो वार्योघ इव पर्वतम् ।'
तस्याश्वान्केतनं सूतं तिलशो व्यधमच्छरैः ।
स्यालस्तव महाराज तत उच्चुक्रुशुर्जनाः ॥ २२
हताश्वो विरथश्चैव छिन्नकेतुश्च मारिष ।
धन्वी धनुर्वरं गृह्य रथाद्भूमावतिष्ठत ॥ २३
व्यसृजत्सायकांश्चैव स्वर्णपुङ्खाञ्शिलाशितान् ।
छादयामासुरथ ते तव स्यालस्य तं रथम् ।
शलभानामिव व्राताः शरव्राता महारथम् ॥२४
संछाद्यमानोऽपि दृढं विव्यथे नैव सौवलः ।
प्रममाथ शरांस्तस्य शरव्रातैर्महायशाः ॥ २५
तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि स्थिताः ।
सुतसोमस्य तत्कर्म दृष्ट्वाऽश्रद्धेयमद्भुतम् ।
रथस्थं शकुनिं यत्तु पदातिः समयोधयत् ॥ २६
तस्य तीक्ष्णैर्महावेगैर्भल्लैः संनतपर्वभिः ।
व्यहनत्कार्मुकं राजंस्तूणीरांश्चैव सर्वशः ॥ २७
स च्छिन्नधन्वा विरथः खड्गमुद्यम्य चानदत् ।
वैदूर्योत्पलवर्णाभं दन्तिदन्तमयत्सरुम् ॥ २८
भ्राम्यमाणं ततस्तं तु विमलाम्वरवर्चसम् ।
कालदण्डोपमं मेने सुतसोमस्य धीमतः ॥ २९
सोऽचरत्सहसा खड्गी मण्डलानि सहस्रशः ।
चतुर्दश महाराज शिक्षावलसमन्वितः ॥ ३०
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम् ।
सम्पातसमुदीर्णे च दर्शयामास संयुगे ॥ ३१
सौवलस्तु ततस्तस्य शरांश्चिक्षेप वीर्यवान् ।
तानापतत एवाशु चिच्छेद परमासिना ॥ ३२
ततः क्रुद्धो महाराज सौवलः परवीरहा ।
प्राहिणोत्सुतसोमाय शरानाशीविषोपमान् ॥ ३३
चिच्छेद तांस्तु खड्गेन शिक्षया च वलेन च ।
दर्शयँल्लाघवं युद्धे तार्क्ष्यतुल्यपराक्रमः ॥ ३४
तस्य संचरतो राजन्मण्डलावर्तने तदा ।
क्षुरप्रेण सुतीक्ष्णेन खड्गं चिच्छेद सुप्रभम् ॥ ३५
स च्छिन्नः सहसा भूमौ निपपात महानसिः ।
अर्धमस्य स्थितं हस्ते सुत्सरोस्तत्र भारत ॥ ३६

मण्डलानामावर्तने अनुलोमविलोमाभ्यासे ॥ ३५ ॥ असेः सुत्सरोः शोभनमुष्टेः ॥ ३६ ॥ षोडशोऽध्यायः ॥ १६ ॥

छिन्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
प्राविध्यत ततः शेषं सुतसोमो महारथः ॥ ३७
तच्छित्त्वा सगुणं चापं रणे तस्य महात्मनः ।
पपात धरण्यां तूर्णं स्वर्णवज्रविभूषितम् ॥ ३८
सुतसोमस्ततोऽगच्छच्छ्रुतकीर्तेर्महारथम् ।
सौबलोऽपि धनुर्गृह्य घोरमन्यत्सुदुर्जयम् ॥ ३९
अभ्ययात्पाण्डवानीकं निघ्नञ्शत्रुगणान्बहून् ।
तत्र नादो महानासीत्पाण्डवानां विशांपते ॥ ४०
सौबलं समरे दृष्ट्वा विचरन्तमभीतवत् ।
तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च ।
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ॥ ४१
यथा दैत्यचमूं राजन्देवराजो ममर्द ह ।
तथैव पाण्डवीं सेनां सौबलेयो व्यनाशयत् ॥ ४२

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

कृपकृतवर्मभ्यां धृष्टद्युम्नशिखण्डिनोः पराजयः ॥ १ ॥

सञ्जय उवाच ।
धृष्टद्युम्नं कृपो राजन्वारयामास संयुगे ।
यथा दृष्ट्वा वने सिंहं शरभो वारयेद्युधि ॥ १
निरुद्धः पार्षतस्तेन गौतमेन बलीयसा ।
पदात्पदं विचलितुं नाशकत्तत्र भारत ॥ २
गौतमस्य रथं दृष्ट्वा धृष्टद्युम्नरथं प्रति ।
वित्रेसुः सर्वभूतानि क्षयं प्राप्तं च मेनिरे ॥ ३
तदा जल्पन्ति पाण्डूनां रथिनः सादिनस्तथा ।
द्रोणस्य निधनान्नूनं संक्रुद्धो द्विपदां वरः ॥ ४
शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः ।
अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात् ॥ ५
अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात् ।
अप्ययं ब्राह्मणः सर्वान्न नो हन्यात्समागतान् ॥ ६
यादृशं दृश्यते रूपमन्तकप्रतिमं रणे ।
गमिष्यत्यद्य पदवीं भारद्वाजस्य गौतमः ॥ ७
आचार्यः क्षिप्रहस्तश्च विजयी च सदा युधि ।
अस्त्रवान्वीर्यसम्पन्नः क्रोधेन च समन्वितः ॥ ८
पार्षतश्च महायुद्धे विमुखोऽद्याभिलक्ष्यते ।
इत्येवं विविधा वाचस्तावकानां परैः सह ।
व्यश्रूयन्त महाराज तयोस्तत्र समागमे ॥ ९
विनिःश्वस्य ततः क्रोधात्कृपः शारद्वतो नृप ।
पार्षतं चार्दयामास निश्चेष्टं सर्वमर्मसु ॥ १०
स हन्यमानः समरे गौतमेन महात्मना ।
कर्तव्यं न स जानाति मोहेन महता वृतः ॥ ११
तमब्रवीत्ततो यन्ता कच्चित्क्षेमं तु पार्षत ।
ईदृशं व्यसनं युद्धे न ते दृष्टं मया क्वचित् ॥ १२
दैवयोगात्तु ते बाणा नापतन्मर्मभेदिनः ।
प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वतः ॥ १३
व्यावर्तये रथं तूर्णं नदीवेगमिवार्णवात् ।
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हतः ॥ १४
धृष्टद्युम्नस्ततो राजञ्शनकैरब्रवीद्वचः ।
मुह्यते मे मनस्तात गात्रस्वेदश्च जायते ॥ १५
वेपथुश्च शरीरे मे रोमहर्षश्च सारथे ।
वर्जयन्ब्राह्मणं युद्धे शनैर्याहि यतोऽर्जुनः ॥ १६
अर्जुनं भीमसेनं वा समरे प्राप्य सारथे ।
क्षेममद्य भवेन्मह्यमिति मे नैष्ठिकी मतिः ॥ १७
ततः प्रायान्महाराज सारथिस्त्वरयन्हयान् ।
यतो भीमो महेष्वासो युयुधे तव सैनिकैः ॥ १८
प्रद्रुतं च रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष ।
किरञ्शरशतान्येव गौतमोऽनुययौ तदा ॥ १९
शङ्खं च पूरयामास मुहुर्मुहुररिंदमः ।
पार्षतं त्रासयामास महेन्द्रो नमुचिं यथा ॥ २०

शरभोऽष्टपादः सिंहघाती पशुपक्षिशरीरो नृसिंहवत् ब्यात्मा ॥ १ ॥ ईदृशं व्यसनं युद्धे न मे दृष्टं कदाचन । दैवयोगादिमे बाणा न जघ्नुर्मम चाहवे इति क. ख. ट. पाठः ॥ १२ ॥ १३ ॥

शिखण्डिनं तु समरे भीष्ममृत्युं दुरासदम् ।
हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः ॥ २१
शिखण्डी तु समासाद्य हृदिकानां महारथम् ।
पञ्चभिर्निशितैर्भल्लैर्जत्रुदेशे समाहनत् ॥ २२
कृतवर्मा तु संक्रुद्धो भित्त्वा षष्ट्या पतत्रिभिः ।
धनुरेकेन चिच्छेद हसन्राजन्महारथः ॥ २३
अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली ।
तिष्ठतिष्ठेति संक्रुद्धो हार्दिक्यं प्रत्यभाषत ॥ २४
ततोऽस्य नवतिं बाणान्रुक्मपुङ्खान्सुतेजनान् ।
प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्मणः ॥ २५
वितथांस्तान्समालक्ष्य पतितांश्च महीतले ।
क्षुरप्रेण सुतीक्ष्णेन कार्मुकं चिच्छिदे भृशम् ॥ २६
अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभम् ।
अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्पयत् ॥ २७
कृतवर्मा तु संक्रुद्धो मार्गणैः क्षतविक्षतः ।
ववाम रुधिरं गात्रैः कुम्भवक्त्रादिवोदकम् ॥ २८
रुधिरेण परिक्लिन्नः कृतवर्मा त्वराजत ।
वर्षेण क्लेदितो राजन्यथा गैरिकपर्वतः ॥ २९
अथान्यद्धनुरादाय समार्गणगुणं प्रभुः ।
शिखण्डिनं बाणगणैः स्कन्धदेशे व्यताडयत् ॥ ३०
स्कन्धदेशस्थितैर्बाणैः शिखण्डी तु व्यराजत ।'
शाखाप्रशाखाविपुलः सुमहान्पादपो यथा ॥ ३१
तावन्योन्यं भृशं विद्ध्वा रुधिरेण समुक्षितौ ।
'पोप्लूयमानौ हि यथा महान्तौ शोणितह्रदे ।
तद्वद्विरेजतुर्वीरौ शोणितेन परिप्लुतौ ॥ ३२
यथा च किंशुकौ फुल्लौ पुष्पमासे समागते ।
रुधिरोक्षितसर्वाङ्गौ रक्तचन्दनरूपितौ ।
भुजगाविव संक्रुद्धौ रेजतुस्तौ नरोत्तमौ ॥ ३३
तावुभौ शरसन्नाङ्गौ परस्परशरक्षतौ ।'
अन्योन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव ॥ ३४
अन्योन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ ।
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः ॥ ३५
कृतवर्मा महाराज पार्षतं निशितैः शरैः ।
रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ३६
ततोऽस्य समरे बाणं भोजः प्रहरतां वरः ।
जीवितान्तकरं घोरं व्यसृजत्त्वरयाऽन्वितः ॥ ३७
स तेनाभिहतो राजन्मूर्च्छामाशु समाविशत् ।
ध्वजयष्टिं च सहसा शिश्रिये कश्मलावृतः ॥ ३८
अपोवाह रणात्तूर्णं सारथी रथिनां वरम् ।
हार्दिक्यशरसंतप्तं निःश्वसन्तं पुनःपुनः ॥ ३९
पराजिते ततः शूरे द्रुपदस्यात्मजे प्रभो ।
'व्यद्रवत्पाण्डवी सेना व्यधमाना समन्ततः ॥ ४०

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अर्जुनेन संशप्तकपराजयः ॥ १ ॥

सञ्जय उवाच ।
श्वेताश्वोऽपि महाराज व्यधमत्तावकं बलम् ।
यथा वायुः समासाद्य तूलराशिं समन्ततः ॥ १
प्रत्युद्ययुस्त्रिगर्तास्तं शिबयः कौरवैः सह ।
वसातयोऽथ साल्वाश्च गोपालाश्च यशस्विनः ॥ २
सत्यदेवः सत्यकीर्तिर्मित्रदेवः श्रुतंजयः ।
सौश्रुतिश्चन्द्रदेवश्च मित्रवर्मा च भारत ॥ ३
त्रिगर्तराजः समरे भ्रातृभिः परिवारितः ।
पुत्रैश्चैव महेष्वासैर्नानाशस्त्रविशारदैः ॥ ४
व्यसृजन्त शरव्रातान्किरन्तोऽर्जुनमाहवे ।
अभ्यवर्तन्त सहसा वार्योघा इव सागरम् ॥ ५
ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः ।
अगच्छन्विलयं सर्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः ॥ ६
ते हन्यमानाः समरे न जहुः पाण्डवं रणे ।
हन्यमाना महाराज शलभा इव पावकम् ॥ ७
सत्यदेवस्त्रिभिर्बाणैर्विव्याध युधि पाण्डवम् ।

अभ्रश्यन्त भ्रष्टाः । वर्म न चिच्छिदुरित्यर्थः ॥२५॥ ववाम वान्तवान् ॥२८॥ पार्षतं शिखण्डिनं ॥३६॥ सप्तदशोऽध्यायः ॥१७॥

मित्रदेवस्त्रिपञ्चा तु चन्द्रदेवस्तु सप्तभिः ॥ ८
मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि सप्तभिः ।
धनंजयस्तु विंशत्या सुशर्मा नवभिः शरैः ॥ ९
स विद्धो बहुभिः सङ्ख्ये प्रतिविव्याध तान्नृपान् ।
सौश्रुतिं सप्तभिर्विद्ध्वा चन्द्रदेवं त्रिभिः शरैः ॥ १०
धनंजयं च विंशत्या चन्द्रदेवं तथाऽष्टभिः ।
मित्रदेवं शतेनैव सत्यदेवं त्रिभिः शरैः ॥ ११
नवभिर्मित्रवर्माणं सुशर्माणं तथाऽष्टभिः ।
धनंजयं च राजानं हत्वा तत्र शिलाशितैः ॥ १२
सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत् ।
त्वरितश्चन्द्रदेवं च शरैर्निन्ये यमक्षयम् ॥ १३
तथेतरान्महाराज यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैरेकैकं प्रत्यवारयत् ॥ १४
सत्यदेवस्तु संक्रुद्धस्तोमरं व्यसृजन्महत् ।
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च ॥ १५
स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः ।
अयस्मयः स्वर्णदण्डो जगाम धरणीं तदा ॥ १६
माधवस्य तु विद्धस्य तोमरेण महारणे ।
प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशांपते ॥ १७
वासुदेवं विभिन्नाङ्गं दृष्ट्वा पार्थो धनञ्जयः ।
क्रोधमाहारयत्तीव्रं कृष्णं चेदमुवाच ह ॥ १८
प्रापयाश्वान्महाबाहो सत्यदेवं प्रति प्रभो ।
यावदेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९
प्रतोदं गृह्य सोऽन्यत्तु रश्मीन्संगृह्य च द्रुतम् ।
वाहयामास तानश्वान्सत्यदेवरथं प्रति ॥ २०
विष्वक्सेनं सुनिर्विद्धं दृष्ट्वा पार्थो धनञ्जयः ।
सत्यदेवं शरैस्तीक्ष्णैर्वारयित्वा महारथः ॥ २१
ततः सुनिशितैर्भल्लै राज्ञस्तस्य महच्छिरः ।
कुण्डलोपचितं कायाच्चकर्त पृतनान्तरे ॥ २२
तन्निकृत्य शितैर्बाणैर्मित्रवर्माणमाक्षिपत् ।
वत्सदन्तेन तीक्ष्णेन सारथिं चास्य मारिष ॥ २३
ततः शरशतैर्भूयः संशप्तकगणान्बली ।
पातयामास संक्रुद्धः शतशोऽथ सहस्रशः ॥ २४

ततो रजतपुङ्खेन राजञ्शीर्षं महात्मनः ।
मित्रदेवस्य चिच्छेद क्षुरप्रेण महारथः ।
सुशर्माणं सुसंक्रुद्धो जत्रुदेशे समाहनत् ॥ २५
ततः संशप्तकाः सर्वे परिवार्य धनंजयम् ।
शस्त्रौघैर्ममृदुः क्रुद्धा नादयन्तो दिशो दश ॥ २६
अभ्यर्दितस्तु तज्जिष्णुः शक्रतुल्यपराक्रमः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः ॥ २७
ततः शरसहस्राणि प्रादुरासन्विशांपते ।
'कार्मुकात्पाण्डुपुत्रस्य पार्थस्यामिततेजसः ॥' २८
ततस्तु च्छिद्यमानानां ध्वजानां धनुषां तथा ।
रथानां सपताकानां तूणीराणां युगैः सह ॥ २९
अक्षाणामथ चक्राणां योक्त्राणां रश्मिभिः सह ।
कूबराणां वरूथानां पृषत्कानां च संयुगे ॥ ३०
अश्वानां पततां चापि प्रासानामृष्टिभिः सह ।
गदानां परिघानां च शक्तितोमरपट्टिसैः ॥ ३१
शतघ्नीनां सचक्राणां भुजानां चोरुभिः सह ।
कण्ठसूत्राङ्गदानां च केयूराणां च मारिष ॥ ३२
हाराणामथ निष्काणां तनुत्राणां च भारत ।
छत्राणां व्यजनानां च शिरसां कुमुटैः सह ।
राशयश्चात्र दृश्यन्ते पतितानां महीतले ॥ ३३
सकुण्डलानि स्वक्षीणि पूर्णचन्द्रनिभानि च ।
शिरांस्युर्व्यामदृश्यन्त ताराजालमिवाम्बरे ॥ ३४
सुस्रग्वीणि सुवासांसि चन्दनेनोक्षितानि च ।
शरीराणि व्यदृश्यन्त निहतानां महीतले ॥ ३५
रुद्रस्याक्रीडसदृशं घोरमायोधनं तदा ॥ ३६
निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः ।
'अर्जुनेन महाराज तत्रतत्र महारणे ॥' ३७
हस्तिभिः पतितैश्चैव तुरङ्गैश्चाभवन्मही ।
अगम्यरूपा समरे विशीर्णैरिव पर्वतैः ॥ ३८
नासीद्रथपथस्तस्य पाण्डवस्य महात्मनः ।
निघ्नतः शात्रवान्भल्लैर्हस्त्यश्वं चासतो महत् ॥ ३९
स्वानुगा इव सीदन्ति रथचक्राणि मारिष ।
चरतस्तस्य संग्रामे तस्मिँल्लोहितकर्दमे ॥ ४०

आसीद्रथपथस्तस्य इति घ. ङ. पाठः । आसादितस्ततो राजन्रथचक्रे विशांपते इति क. पाठः । आच्छादितं ततो राज-न्रथचक्रं च मारिष इति ख. पाठः ॥ ३९ ॥

सीदमानानि चक्राणि समूहुस्तुरगा भृशम् ।
श्रमेण महता युक्ता मनोमारुतरंहसः ॥ ४१
वध्यमानं तु तत्सैन्यं पाण्डुपुत्रेण धन्विना ।
प्रायशो विमुखं सर्वं नावतिष्ठत भारत ॥ ४२
ताञ्जित्वा समरे जिष्णुः संशप्तकगणान्बहून् ।
विरराज तदा पार्थो विधूमोऽग्निरिव ज्वलन् ॥ ४३

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे अष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ॥ १९ ॥

संकुलयुद्धम् ॥ १ ॥

---

सञ्जय उवाच ।
युधिष्ठिरं महाराज विसृजन्तं शरान्बहून् ।
स्वयं दुर्योधनो राजा प्रत्यगृह्णादभीतवत् ॥ १
तमापतन्तं सहसा तव पुत्रं महारथम् ।
धर्मराजो द्रुतं विद्ध्वा तिष्ठतिष्ठेति चाब्रवीत् ॥ २
स तु तं प्रतिविव्याध नवभिर्निशितैः शरैः ।
सारथिं चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत् ॥ ३
ततो युधिष्ठिरो राजन्स्वर्णपुङ्खाञ्शिलीमुखान् ।
दुर्योधनाय चिक्षेप त्रयोदश शिलाशितान् ॥ ४
चतुर्भिश्चतुरो वाहांस्तस्य हत्वा महारथः ।
पञ्चमेन शिरः कायात्सारथेश्च समाक्षिपत् ॥ ५
षष्ठेन तु ध्वजं राज्ञः सप्तमेन तु कार्मुकम् ।
अष्टमेन तथा खड्गं पातयामास भूतले ।
पञ्चभिर्नृपतिं चापि धर्मराजोऽर्दयद्भृशम् ॥ ६
हताश्वात्तु रथात्तस्मादवप्लुत्य सुतस्तव ।
उत्तमं व्यसनं प्राप्तो भूमावेवावतिष्ठत ॥ ७
तं तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणिकृपादयः ।
अभ्यवर्तन्त सहसा परीप्सन्तो नराधिपम् ॥ ८
अथ पाण्डुसुताः सर्वे परिवार्य युधिष्ठिरम् ।
अन्वयुः समरे राजंस्ततो युद्धमवर्तत ॥ ९
ततस्तूर्यसहस्राणि प्रावाद्यन्त महामृधे ॥ १०
क्ष्वेलाः किलकिलाशब्दाः प्रादुरासन्महीपते ।
यत्राभ्यगच्छन्समरे पाञ्चालाः कौरवैः सह ॥ ११
नरा नरैः समाजग्मुर्वारणा वरवारणैः ।
रथाश्च रथिभिः सार्धं हयाश्च हयसादिभिः ॥ १२
द्वन्द्वान्यासन्महाराज प्रेक्षणीयानि संयुगे ।
विविधान्यप्यचिन्त्यानि शस्त्रवन्त्युत्तमानि च ॥ १३
ते शूराः समरे सर्वे चित्रं लघु च सुष्ठु च ।
अयुध्यन्त महावेगाः परस्परवधैषिणः ॥ १४
अन्योन्यं समरे जघ्नुर्योधव्रतमनुष्ठिताः ।
न हि ते समरं चक्रुः पृष्ठतो वै कथंचन ॥ १५
मुहूर्तमेव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ १६
रथी नागं समासाद्य दारयन्निशितैः शरैः ।
प्रेषयामास कालाय शरैः सन्नतपर्वभिः ॥ १७
नागा हयान्समासाद्य विक्षिपन्तो बहून्रणे ।
दारयामासुरत्युग्रं तत्रतत्र तदातदा ॥ १८
हयारोहाश्च बहवः परिवार्य हयोत्तमान् ।
तलशब्दरवांश्चक्रुः संपतन्तस्ततस्ततः ॥ १९
धावमानांस्ततस्तांस्तु द्रवमाणान्महागजान् ।
पार्श्वतः पृष्ठतश्चैव निजघ्नुर्हयसादिनः ॥ २०
विद्राव्य च बहूनश्वान्नागा राजन्मदोत्कटाः ।
विषाणैश्चापरे जघ्नुर्ममृदुश्चापरे भृशम् ॥ २१
साश्वारोहांश्च तुरगान्विषाणैर्विव्यधू रुषा ।
अपरे चिक्षिपुर्वेगात्प्रगृह्यातिबलास्तदा ॥ २२
पादातैराहता नागा विवरेषु समन्ततः ।
चक्रुरार्तस्वरं घोरं दुद्रुवुश्च दिशो दश ॥ २३
पदातीनां तु सहसा प्रद्रुतानां महाहवे ।
उत्सृज्याभरणं तूर्णमवव्रू रणाजिरे ॥ २४
निमित्तं मन्यमानास्तु परिणाम्य महागजाः ।

---

सीदमानानि पङ्कमज्जनात् ॥ ४१ ॥ अष्टादशोऽध्यायः ॥ १८ ॥
आभरणमववव्रुः अवगत्य वृतवन्तः ॥ २४ ॥ निमित्तं जयहेतुम् । महान्तो गजा येषां ते महागजा गजारोहा जगृहुर्हस्तिभिर्ग्राहयामासुः । परिणाम्य हस्तिनमिति शेषः । विभि॰

जगृहुर्बिभिदुश्चैव चित्राण्याभरणानि च ॥ २५
तांस्तु तत्र प्रसक्तान्वै परिवार्य पदातयः ।
हस्त्यारोहान्निजघ्नुस्ते महावेगा बलोत्कटाः ॥ २६
अपरे हस्तिभिर्हस्तैः खं विक्षिप्ता महाहवे ।
निपतन्तो विषाणाग्रैर्भृशं विद्धाः सुशिक्षितैः ॥२७
अपरे सहसा गृह्य विषाणैरेव सूदिताः ।
सेनान्तरं समासाद्य केचित्तत्र महागजैः ॥ २८
क्षुण्णगात्रा महाराज विक्षिप्य च पुनःपुनः ।
अपरे व्यजनानीव विभ्राम्य निहता मृधे ॥ २९
पुरःसराश्च नागानामपरेषां विशांपते ।
शरीराण्यतिविद्धानि तत्रतत्र रणाजिरे ॥ ३०
प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे ।
निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ॥३१
निगृह्य च गजाः केचित् पार्श्वस्थैर्भृशदारुणैः ।
रथाश्वसादिभिस्तत्र संभिन्ना न्यपतन्भुवि ॥ ३२
सहयाः सादिनस्तत्र तोमरेण महामृधे ।
भूमावमृद्नन्वेगेन सचर्माणं पदातिनम् ॥ ३३
तथा सावरणान्कांश्चित्तत्रतत्र विशांपते ।
रथान्नागाः समासाद्य परिगृह्य च मारिष ।
व्याक्षिपन्सहसा तत्र घोररूपे भयानके ॥ ३४
नाराचैर्निहताश्चापि गजाः पेतुर्महाबलाः ।
पर्वतस्येव शिखरं वज्ररुग्णं महीतले ॥ ३५
योधा योधान्समासाद्य मुष्टिभिर्व्यहनन्युधि ।
केशेष्वन्योन्यमाक्षिप्य चिक्षिपुर्बिभिदुश्च ह ॥ ३६
उद्यम्य च भुजानन्ये निक्षिप्य च महीतले ।
पदा चोरः समाक्रम्य स्फुरतोऽपाहरञ्छिरः ॥ ३७
पततश्चापरो राजन्विजहारासिना शिरः ।
'मृतमन्यो महाराज पदा ताडितवांस्तदा ॥' ३८
जीवतश्च तथैवान्यः शस्त्रं काये न्यमज्जयत् ।
मुष्टियुद्धं महच्चासीद्योधानां तत्र भारत ।
तथा केशग्रहश्चोग्रो बाहुयुद्धं च भैरवम् ॥ ३९
समासक्तस्य चान्येन अविज्ञातस्तथाऽपरः ।
जहार समरे प्राणान्नानाशस्त्रैरनेकधा ॥ ४०
संसक्तेषु च योधेषु वर्तमाने च संकुले ।
कबन्धान्युत्थितानि स्युः शतशोऽथ सहस्रशः ४१
शोणितैः सिच्यमानानि शस्त्राणि कवचानि च ।
महारागानुरक्तानि वस्त्राणीव चकाशिरे ॥ ४२
एवमेतन्महद्युद्धं दारुणं शस्त्रसंकुलम् ।
उन्मत्तगङ्गाप्रतिमं शब्देनापूरयज्जगत् ॥ ४३
नैव स्वे न परे राजन्विज्ञायन्ते शरातुराः ।
योद्धव्यमिति युध्यन्ते राजानो जयगृद्धिनः ॥ ४४
स्वान्स्वे जघ्नुर्महाराज परांश्चैव समागतान् ।
उभयोः सेनयोर्वीरैर्व्याकुलं समपद्यत ॥ ४५
रथैर्भग्नैर्महाराज वारणैश्च निपातितैः ।
हयैश्च पतितैस्तत्र नरैश्च विनिपातितैः ॥ ४६
अगम्यरूपा पृथिवी क्षणेन समपद्यत ।
क्षणेनासीन्महीपाल क्षतजौघप्रवर्तिनी ॥ ४७
पाञ्चालानहतत्कर्णस्त्रिगर्तांश्च धनञ्जयः ।
भीमसेनः कुरून्राजन्हस्त्यनीकं च सर्वशः ॥४८
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
अपराह्णे गते सूर्ये काङ्क्षतां विपुलं यशः ॥ ४९

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ॥ २० ॥

युधिष्ठिरेण दुर्योधनपराजयः ॥ १ ॥

धृतराष्ट्र उवाच ।
अतितीव्राणि दुःखानि दुःसहानि बहूनि च ।
तत्तोऽहं सञ्जयाश्रौषं पुत्राणां चैव संक्षयम् ॥ १
यथा त्वं मे कथयसे यथा युद्धमवर्तत ।

दुश्च शत्रून्नाजैरेव ॥ २५ ॥ प्रतिमानेषु गजदन्तान्तरालेषु । प्रासैः कुम्भेषु तोमरैर्दन्तवेष्टेषु शक्तिभिश्च निगृहीताः । प्रतिमानं प्रतिच्छाया गजदन्तान्तरालयोरिति मेदिनी ॥ ३१ ॥

एकोनविंशोऽध्यायः ॥ १९ ॥

अतितीव्राणि युद्धानीति क. ट. ड. पाठः ॥ १ ॥

न सन्ति सूत कौरव्या इति मे निश्चिता मतिः॥ २
दुर्योधनश्च विरथः कृतस्तत्र महारथः ।
धर्मपुत्रः कथं चक्रे तस्य वा नृपतिः कथम् ॥ ३
अपराह्णे कथं युद्धमभवद्रोमहर्षणम् ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥ ४
सञ्जय उवाच ।
संसक्तेषु तु सैन्येषु वध्यमानेषु भागशः ।
रथमन्यं समास्थाय पुत्रस्तव विशांपते ॥ ५
क्रोधेन महता युक्तः सविषो भुजगो यथा ।
दुर्योधनः समालक्ष्य धर्मराजं युधिष्ठिरम् ।
प्रोवाच सूतं त्वरितो याहियाहीति भारत ॥ ६
तत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः ।
ध्रियमाणातपत्रेण राजा राजति दंशितः ॥ ७
स सूतश्चोदितो राज्ञा राज्ञः स्यन्दनमुत्तमम् ।
युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे ॥ ८
ततो युधिष्ठिरः क्रुद्धः प्रभिन्न इव कुञ्जरः ।
सारथिं चोदयामास याहि यत्र सुयोधनः ॥ ९
तौ समाजग्मतुर्वीरौ भ्रातरौ रथसत्तमौ ॥ १०
समेत्य च महावीरौ संरब्धौ युद्धदुर्मदौ ।
ववर्षतुर्महेष्वासौ शरैरन्योन्यमाहवे ॥ ११
ततो दुर्योधनो राजा धर्मशीलस्य मारिष ।
शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे ॥ १२
तं नामृष्यत संक्रुद्धो ह्यवमानं युधिष्ठिरः ।
अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः ॥ १३
अन्यत्कार्मुकमादाय धर्मपुत्रश्चमूमुखे ।
दुर्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ १४
अथान्यद्धनुरादाय पुत्रस्ते भरतर्षभ ।
'युधिष्ठिरस्य चिक्षेप शरान्कनकभूषणान् ।
रुक्मपुङ्खान्प्रसन्नाग्रान्सविषानिव पन्नगान् ॥' १५
तावन्योन्यं सुसंक्रुद्धौ शस्त्रवर्षाण्यमुञ्चताम् ।
सिंहाविव सुसंरब्धौ परस्परजिगीषया ॥ १६
जघ्नतुस्तौ रणेऽन्योन्यं नर्दमानौ वृषाविव ।
अन्तरं मार्गमाणौ च चेरतुस्तौ महारथौ ॥ १७
ततः पूर्णायतोत्सृष्टैः शरैस्तौ तु कृतव्रणौ ।
विरेजतुर्महाराज किंशुकाविव पुष्पितौ ॥ १८
ततो राजन्विमुञ्चन्तौ सिंहनादान्मुहुर्मुहुः ।
तलयोश्च तथा शब्दान्धनुषश्च महाहवे ॥ १९
शङ्खशब्दवरांश्चैव चक्रतुस्तौ नरेश्वरौ ।
अन्योन्यं तौ महाराज पीडयांचक्रतुर्भृशम् ॥ २०
ततो युधिष्ठिरो राजा पुत्रं तव शरैस्त्रिभिः ।
आजघानोरसि क्रुद्धो वज्रवेगैर्दुरासदैः ॥ २१
प्रतिविव्याध तं तूर्णं तव पुत्रो महीपतिः ।
पञ्चभिर्निशितैर्बाणैः स्वर्णपुङ्खैः शिलाशितैः ॥ २२
ततो दुर्योधनो राजा शक्तिं चिक्षेप भारत ।
सर्वपारशवीं तीक्ष्णां महोल्काप्रतिमां तदा ॥ २३
तामापतन्तीं सहसा धर्मराजः शितैः शरैः ।
त्रिभिश्चिच्छेद सहसा तं च विव्याध पञ्चभिः॥ २४
निपपात ततः साऽथ स्वर्णदण्डा महास्वना ।
निपतन्ती महोल्केव व्यराजच्छिखिसन्निभा ॥ २५
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशांपते ।
नवभिर्निशितैर्भल्लैर्निजघान युधिष्ठिरम् ॥ २६
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
दुर्योधनं समुद्दिश्य बाणं जग्राह सत्वरः ॥ २७
समाधत्त च तं बाणं धनुर्मध्ये महाबलः ।
चिक्षेप च महाराज ततः क्रुद्धः पराक्रमी ॥ २८
स तु बाणः समासाद्य तव पुत्रं महारथम् ।
व्यामोहयत राजानं धरणीं च ददार ह ॥ २९
ततो दुर्योधनः क्रुद्धो गदामुद्यम्य वेगितः ।
विधित्सुः कलहस्यान्तं धर्मराजमुपाद्रवत् ॥ ३०
समुद्यतगदं दृष्ट्वा दण्डहस्तमिवान्तकम् ।
धर्मराजो महाशक्तिं प्राहिणोत्तव सूनवे ॥ ३१
दीप्यमानां महावेगां महोल्कां ज्वलितामिव ।
यमदण्डनिभां घोरां कालरात्रिमिवापराम् ॥ ३२
रथस्थः स तया विद्धो वर्म भित्त्वा स्तनान्तरे ।
भृशं संविग्नहृदयः पपात च मुमोह च ॥ ३३

तस्य तं च नृपतिर्दुर्योधनः कथमयुध्यत इति शेषः ॥ ३ ॥ अपविध्य त्यक्त्वा ॥१३॥ सर्वपारशवीं सर्वविनाशिनीं गौरादिः । तिरस्कारे विनाशे च पुंसि पारशवः इति मेदिनी ॥२३॥ दीपयन्ती महोल्काभा राजञ्शक्तिर्दिशो दश इति ङ. पाठः ॥ २५ ॥

नभस्तमाह च ततः प्रतिज्ञामनुपालय ।
नायं वध्यस्तव नृप इत्युक्तः स न्यवर्तत ॥ ३४
ततस्त्वरितमागम्य कृतवर्मा तवात्मजम् ।
प्रत्यपद्यत राजानं निमग्नं व्यसनार्णवे ॥ ३५
गदामादाय भीमोऽपि हेमपट्टपरिष्कृताम् ।
अभिदुद्राव वेगेन कृतवर्माणमाहवे ॥ ३६
एवं तदभवद्युद्धं त्वदीयानां परैः सह ।
अपराह्णे महाराज काङ्क्षतां विजयं युधि ॥ ३७

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

संकुलयुद्धम् ॥ १ ॥ षोडशदिवसयुद्धोपसंहारः ॥ २ ॥

सञ्जय उवाच ।
ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः ।
पुनरावृत्य संग्रामं चक्रुर्देवासुरोपमम् ॥ १
द्विरदनररथाश्वशङ्खशब्दैः
परिहृषिता विविधैश्च शस्त्रपातैः ।
द्विरदरथपदातिसादिसङ्घाः
परिकुपिताभिमुखाः प्रजघ्निरे ते ॥ २
शितपरश्वथसासिपट्टसै-
रिषुभिरनेकविधैश्च सूदिताः ।
द्विरदरथहया महाहवे
वरपुरुषैः पुरुषाश्च वाहनैः ॥ ३
कमलदिनकरेन्दुसन्निभैः
सितदशनैः सुमुखाक्षिनासिकैः ।
रुचिरमकुटकुण्डलैर्मही
पुरुषशिरोभिरुपस्तृता बभौ ॥ ४
परिघमुसलशक्तितोमरै-
र्नखरभुशुण्डिगदाशतैर्हताः ।
द्विरदनरहयाः सहस्रशो
रुधिरनदीप्रवहास्तदाऽभवन् ॥ ५
प्रहतरथनराश्वकुञ्जरं
प्रतिभयदर्शनमुल्बणव्रणम् ।
तदहितहतमाबभौ बलं
पितृपतिराष्ट्रमिव प्रजाक्षये ॥ ६
अथ तव नरदेव सैनिका-
स्तव च सुताः सुरसूनुसन्निभाः ।
अमितबलपुरःसरा रणे
कुरुवृषभाः शिनिपुत्रमभ्ययुः ॥ ७
तदतिरुचिरभीममाबभौ
पुरुषवराश्वरथद्विपाकुलम् ।
लवणजलसमुद्धतस्वनं
बलमसुरामरसैन्यसप्रभम् ॥ ८
सुरपतिसमविक्रमस्तत-
स्त्रिदशवरावरजोपमं युधि ।
दिनकरकिरणप्रभैः पृषत्कै
रवितनयोऽभ्यहनच्छिनिप्रवीरम् ॥ ९
तमपि सरथवाजिसारथिं
शिनिवृषभो विविधैः शरैस्त्वरन् ।
भुजगविषसमप्रभै रणे
पुरुषवरं समवास्तृणोत्तदा ॥ १०
शिनिवृषभशरैर्निपीडितं
तव सुहृदो वसुषेणमभ्ययुः ।
त्वरितमतिरथा रथर्षभं
द्विरदरथाश्वपदातिभिः सह ॥ ११
तदुदधिनिभमाद्रवद्बलं
त्वरिततरैः समभिद्रुतं परैः ।
द्रुपदसुतमुखैस्तदाऽभवत्
पुरुषरथाश्वगजक्षयो महान् ॥ १२

भीमस्तमाह च ततः प्रतिज्ञामनुचिन्तयन् इति झ. पाठः ॥ ३४ ॥ विंशोऽध्यायः ॥ २० ॥

लवणजलः क्षारसमुद्रः ॥ ८ ॥ त्रिदशवरावरजोपमं विष्णुतुल्यम् ॥ ९ ॥

अथ पुरुषवरौ कृताह्निकौ
भवमभिपूज्य यथाविधि प्रभुम् ।
अरिवधकृतनिश्चयौ द्रुतं
तव बलमर्जुनकेशवौ सृतौ ॥ १३
जलदनिनदनिःस्वनं रथं
पवनविधूतपताककेतनम् ।
सितहयमुपयान्तमन्तिकं
कृतमनसो ददृशुस्तदाऽरयः ॥ १४
अथ विष्फार्य गाण्डीवं रथे नृत्यन्निवार्जुनः ।
शरसंबाधमकरोत्खं दिशः प्रदिशस्तथा ॥ १५
रथान्विमानप्रतिमान्मज्जयन्सायुधध्वजान् ।
ससारथींस्तदा बाणैरभ्राणीवानिलोऽवधीत् ॥१६
गजान्गजप्रयन्तृंश्च वैजयन्त्यायुधध्वजान् ।
सादिनोऽश्वांश्च पत्तींश्च शरैर्निन्ये यमक्षयम् ॥१७
तमन्तकमिव क्रुद्धमनिवार्यं महारथम् ।
दुर्योधनोऽभ्ययादेको निघ्नन्बाणैरजिह्मगैः ॥ १८
तस्यार्जुनो धनुः सूतमश्वान्केतुं च सायकैः ।
हत्वा सप्तभिरेकेन च्छत्रं चिच्छेद पत्रिणा ॥ १९
नवमं च समाधाय व्यसृजत्प्राणघातिनम् ।
दुर्योधनायेषुवरं तं द्रौणिः सप्तधाऽच्छिनत् ॥२०
ततो द्रौणेर्धनुश्छित्वा हत्वा चाश्वरथाञ्शरैः ।
कृपस्यापि तदत्युग्रं धनुश्चिच्छेद पाण्डवः ॥ २१
हार्दिक्यस्य धनुश्छित्त्वा ध्वजं चाश्वांस्तदाऽवधीत्
दुःशासनस्येष्वसनं छित्त्वा राधेयमभ्ययात् ॥२२
अथ सात्यकिमुत्सृज्य त्वरन्कर्णोऽर्जुनं त्रिभिः ।
विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं पुनःपुनः २३
न ग्लानिरासीत्कर्णस्य क्षिपतः सायकान्बहून् ।
रणे विनिघ्नतः शत्रून्क्रुद्धस्येव शतक्रतोः ॥ २४
अथ सात्यकिरागत्य कर्णं विद्ध्वा शितैः शरैः ।
नवत्या नवभिश्चोग्रैः शतेन पुनरर्पयत् ॥ २५
ततः प्रवीराः पार्थानां सर्वे कर्णमपीडयन् ।
युधामन्युः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥२६
उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च ।
चेदिकारूशमात्स्यानां केकयानां च यद्बलं ॥२७
चेकितानश्च बलवान्धर्मराजश्च सुव्रतः ।
एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमैः ॥ २८
परिवार्य रणे कर्णं नानाशस्त्रैरवाकिरन् ।
भाषन्तो वाग्भिरुग्राभिः सर्वे कर्णवधे धृताः ॥२९
तां शस्त्रवृष्टिं बहुधा कर्णश्छित्त्वा शितैः शरैः ।
अपोवाहास्त्रवीर्येण द्रुमं भङ्क्त्वेव मारुतः ॥३०
रथिनः समहामात्रान्गजानश्वान्ससादिनः ।
पत्तिव्रातांश्च संक्रुद्धो निघ्नन्कर्णो व्यदृश्यत ॥ ३१
तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा ।
विशस्त्रपत्रदेहासु प्राय आसीत्पराङ्मुखम् ॥ ३२
अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्मयन् ।
दिशं खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ॥३३
मुसलानीव संपेतुः परिघा इव चेषवः ।
शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि चापरे ॥ ३४
तैर्वध्यमानं तत्सैन्यं सपत्त्यश्वरथद्विपम् ।
निमीलिताक्षमत्यर्थं बभ्राम च ननाद च ॥ ३५
निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः ।
हन्यमानाः शरैरार्तास्तदा भीताः प्रदुद्रुवुः ॥३६
त्वदीयानां तदा युद्धे संसक्तानां जयैषिणाम् ।
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥३७
तमसा च महाराज रजसा च विशेषतः ।
न किंचित्प्रत्यपश्याम शुभं वा यदि वाऽशुभम् ३८
ते त्रस्यन्तो महेष्वासा रात्रियुद्धस्य भारत ।
अपयानं ततश्चक्रुः सहिताः सर्वयोधिभिः ॥ ३९
कौरवेष्वपयातेषु तदा राजन्दिनक्षये ।
जयं सुमनसः प्राप्य पार्थाः स्वशिविरं ययुः ॥४०
वादित्रशब्दैर्विविधैः सिंहनादैः सगर्जितैः ।
परानुपहसन्तश्च स्तुवन्तश्चाच्युतार्जुनौ ॥ ४१
कृतेऽवहारे तैर्वीरैः सैनिकाः सर्व एव ते ।
आशीर्वाचः पाण्डवेषु प्रायुञ्जन्त नरेश्वराः ॥ ४२
ततः कृतेऽवहारे च प्रहृष्टास्तत्र पाण्डवाः ।
निशायां शिबिरं गत्वा न्यवसन्त नरेश्वराः ॥४३

एकविंशोऽध्यायः ॥ २१ ॥

सृतावागतौ ॥ १३ ॥ निष्कैवल्यं निश्चितं कैवल्यं मरणं यस्मिंस्तत्तथा ॥ ३६ ॥ प्रत्यपद्यत प्रविष्टः ॥ ३७ ॥

ततो रक्षःपिशाचाश्च श्वापदाश्चैव सङ्घशः । जग्मुरायोधनं घोरं रुद्रस्याक्रीडसन्निभम् ॥ ४४

॥ इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः ॥ २२ ॥

कृष्णतुल्यसारथेरभावात्स्वस्यार्जुनाश्न्यूनतां मन्यमानेन कर्णेन दुर्योधनं प्रति शल्यस्य सारथ्ये नियोजनचोदना ॥ १ ॥

धृतराष्ट्र उवाच ।
स्वेन च्छन्देन नः सर्वानवधीद्व्यक्तमर्जुनः ।
न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः ॥ १
पार्थो ह्येकोऽहरद्भद्रामेकश्चाग्निमतर्पयत् ।
एकश्चेमां महीं जित्वा चक्रे बलिभृतो नृपान् ॥ २
एको निवातकवचानहनद्दिव्यकार्मुकः ।
एकः किरातरूपेण स्थितं शर्वमयोधयत् ॥ ३
एको ह्यरक्षद्भरतानेको भवमतोषयत् ।
तेनैकेन जिताः सर्वे मदीया ह्युग्रतेजसः ॥ ४
न ते निन्द्याः प्रशस्यास्ते यत्ते चक्रुर्ब्रवीहि तत् ।
ततो दुर्योधनः सूत पश्चात्किमकरोत्तदा ॥ ५
सञ्जय उवाच ।
हतप्रहतविध्वस्ता विवर्मायुधवाहनाः ।
दीनस्वरा दूयमाना मानिनः शत्रुनिर्जिताः ॥ ६
शिबिरस्थाः पुनर्मन्त्रं मन्त्रयन्ति स्म कौरवाः ।
भग्नदंष्ट्रा हतविषाः पादाक्रान्ता इवोरगाः ॥ ७
तानब्रवीत्ततः कर्णः क्रुद्धः सर्प इव श्वसन् ।
करं करेण निष्पीड्य प्रेक्षमाणस्तवात्मजम् ॥ ८
यत्तो दृढश्च दक्षश्च धृतिमानर्जुनः सदा ।
संबोधयति चाप्येनं यथाकालमधोक्षजः ॥ ९
सहसाऽस्त्रविसर्गेण वयं तेनाद्य वञ्चिताः ।
श्वस्त्वहं तस्य संकल्पं सर्वं हन्ता महीपते ॥ १०
एवमुक्तस्तथेत्युक्त्वा सोऽनुजज्ञे नृपोत्तमान् ।
तेऽनुज्ञाता नृपाः सर्वे स्वानि वेश्मानि भेजिरे ११
सुखोषितास्तां रजनीं हृष्टा युद्धाय निर्ययुः ।
तेऽपश्यन्विहितं व्यूहं धर्मराजेन दुर्जयम् ।
प्रयत्नात्कुरुमुख्येन बृहस्पत्युशनोमतात् ॥ १२
अथ प्रतीपकर्तारं प्रवीरं परवीरहा ।
सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा ॥ १३
पुरंदरसमं युद्धे मरुद्गणसमं बले ।
कार्तवीर्यसमं वीर्ये कर्णं राज्ञोऽगमन्मनः ॥ १४
सर्वेषां चैव सैन्यानां कर्णमेवागमन्मनः ।
सूतपुत्रं महेष्वासं बन्धुमात्ययिकेष्विव ॥ १५
धृतराष्ट्र उवाच ।
ततो दुर्योधनः सूत पश्चात्किमकरोत्तदा ।
यद्वोऽगमन्मनो मन्दाः कर्णं वैकर्तनं प्रति ॥ १६
अप्यपश्यत राधेयं शीतार्ता इव भास्करम् ।
कृतेऽवहारे सैन्यानां प्रवृत्ते च रणे पुनः ॥ १७
'दुर्योधनं च तत्राजौ पाण्डवेन भृशार्दितम् ।
पराक्रान्तान्पाण्डुसुतान्दृष्ट्वाऽपि च महारणे ॥' १८
कथं वैकर्तनः कर्णस्तत्रायुध्यत सञ्जय ।
कथं च पाण्डवाः सर्वे युयुधुस्तत्र सूतजम् ॥ १९
कर्णो ह्येको महाबाहुर्हन्यात्पार्थान्ससृञ्जयान् ।
कर्णस्य भुजयोर्वीर्यं शक्रविष्णुसमं युधि ॥ २०
तस्य शस्त्राणि घोराणि विक्रमश्च महात्मनः ।
कर्णमाश्रित्य संग्रामे मत्तो दुर्योधनो नृपः ॥ २१
दुर्योधनं ततो दृष्ट्वा पाण्डवेन भृशार्दितम् ।
पराक्रान्तान्पाण्डुसुतान्दृष्ट्वा चापि महारथः ॥ २२

---

स्वेन च्छन्देन इच्छया । आततायिनः शस्त्रपाणेः ॥ १ ॥ भद्रां सुभद्राम् । बलिभृतः करदान् ॥ २ ॥ अरक्षत घोषयात्रायाम् । भरतान्दुर्योधनादीन् ॥ ४ ॥ हतास्ताडिताः । प्रहताश्छिन्नावयवाः । विध्वस्ताः वाहनेभ्योऽधःपातिताः ॥ ६ ॥ सहसा अकस्मात् सहस्राक्षनिसृष्ट्या च शक्त्या तेन स्म वञ्चिताः इति ख. पाठः । सहस्राक्षनिसर्गेण शक्त्या तेन स्म वञ्चिताः इति ट. पाठः ॥ १० ॥ बृहस्पत्युशनोमते इति झ. पाठः, तत्र स्थितेनेति शेषः ॥ १२ ॥ प्रतीपकर्तारं शत्रूणां छेत्तारम् । प्रवीरं प्रकृष्टं वीरम् ॥ १३ ॥ आत्ययिकेषु प्राणसंकटेषु ॥ १५ ॥ अप्यपश्यत । अपिः प्रश्ने ॥ १७ ॥

कर्णमाश्रित्य संग्रामे मन्दो दुर्योधनः पुनः ।
जेतुमुत्सहते पार्थान्सपुत्रान्सहकेशवान् ॥ २३
'यः सौबलं तथा तात नीतिमानिति मन्यते ।
कर्णं चाप्रतिमं युद्धे देवैरपि दुरुत्सहम् ॥ २४
मन्यतेऽभ्यधिकं पार्थादेवं चास्य हृदि स्थितम् ।
विजेष्यति रणे कर्ण एकः पर्थान्ससोमकान् ।
मम चैव सदा मन्दः शंसते नित्यमग्रतः ॥' २५
अहो बत महद्दुःखं यत्र पाण्डुसुतात्रणे ।
नातरद्रभसः कर्णो दैवं नूनं परायणम् ॥ २६
अहो द्यूतस्य निष्ठेयं घोरा संप्रति वर्तते ॥ २७
अहो तीव्राणि दुःखानि दुर्योधनकृतान्यहम् ।
सोढा घोराणि बहुशः शल्यभूतानि सञ्जय ॥ २८
सौबलं च तदा तात नीतिमानिति मन्यते ।
कर्णश्च रभसो नित्यं राजा तं चाप्यनुव्रतः ॥ २९
यदेवं वर्तमानेषु महायुद्धेषु सञ्जय ।
अश्रौषं निहतान्पुत्रान्नित्यमेव विनिर्जितान् ॥ ३०
न पाण्डवानां समरे कश्चिदस्ति हतः किल ।
स्त्रीमध्यमिव गाहन्ते दैवं तु बलवत्तरम् ॥ ३१
सञ्जय उवाच ।
[राजन्पूर्वनिमित्तानि धर्मिष्ठानि विचिन्तय] ३२
अतिक्रान्तं हि यत्कार्यं पश्चाच्चिन्तयते नरः ।
तच्चास्य न भवेत्कार्यं चिन्तया च विनश्यति ॥ ३३
तदिदं तव कार्यं तु दूरप्राप्तं विजानता ।
न कृतं यत्त्वया पूर्वं प्राप्ताप्राप्तविचारणम् ॥ ३४
उक्तोऽसि बहुधा राजन्मा युध्यस्वेति पाण्डवैः ।
न च तत्त्वग्रहीर्द्वेषात्पाण्डवेषु विशांपते ॥ ३५
त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु ।
त्वत्कृते वर्तते घोरः पार्थिवानां जनक्षयः ॥ ३६
तत्त्विदानीमतिक्रान्तं मा शुचो भरतर्षभ ।
शृणु सर्वं यथावृत्तं घोरं वैशसमुच्यते ॥ ३७
प्रभातायां रजन्यां तु कर्णो राजानमभ्ययात् ।
समेत्य च महाबाहुर्दुर्योधनमथाब्रवीत् ॥ ३८
कर्ण उवाच ।
अद्य राजन्समेष्यामि पाण्डवेन यशस्विना ।
निहनिष्यामि तं वीरं स वा मां निहनिष्यति ३९
बहुत्वान्मम कार्याणां तथा पार्थस्य भारत ।
नाभूत्समागमो राजन्मम चैवार्जुनस्य च ॥ ४०
इदं तु मे यथाप्रज्ञं शृणु वाक्यं विशांपते ।
अनिहत्य रणे पार्थं नाहमेष्यामि भारत ॥ ४१
हतप्रवीरे सैन्येऽस्मिन्मयि चावस्थिते युधि ।
अभियास्यति मां पार्थः शक्रशक्तिविनाकृतम् ४२
ततः श्रेयस्करं यच्च तन्निबोध जनेश्वर ।
आयुधानां च मे वीर्यं दिव्यानामर्जुनस्य च ॥ ४३
कार्यस्य महतो भेदे लाघवे दूरपातने ।
सौष्ठवे चास्त्रपाते च सव्यसाची न मत्समः ॥ ४४
प्राणे शौर्येऽथ विज्ञाने विक्रमे चापि भारत ।
निमित्तज्ञानयोगे च सव्यसाची न मत्समः ४५
सर्वायुधमहामात्रं विजयं नाम तद्धनुः ।
इन्द्रार्थं प्रियकामेन निर्मितं विश्वकर्मणा ॥ ४६
येन दैत्यगणान्राजञ्जितवान्वै शतक्रतुः ।
यस्य घोषेण दैत्यानां व्यामुह्यन्त दिशो दश ४७
तद्भार्गवाय प्रायच्छच्छक्रः परमसंमतम् ।
तद्दिव्यं भार्गवो मह्यमदद्धनुरुत्तमम् ॥ ४८
तेन योत्स्ये महाबाहुमर्जुनं जयतां वरम् ।
यथेन्द्रः समरे सर्वान्दैतेयान्वै समागतान् ।
'निजघान तथा सर्वाञ्जेष्यामि युधि पाण्डवान् ॥'
धनुर्घोरं रामदत्तं गाण्डीवात्तद्विशिष्यते ।
त्रिस्सप्तकृत्वः पृथिवी धनुषा येन निर्जिता ॥ ५०

---

निष्ठा विपाकः ॥ २७ ॥ कर्णश्च नीतिमानिति मन्यत इति पूर्वेणान्वयः ॥ २९ ॥ स्त्रीमध्यमिव गाहन्ते निर्भयाः सेनां मृद्नन्तीत्यर्थः ॥ ३१ ॥ निमितानि द्यूतादीनि धर्मिष्ठानीति-विपरीतलक्षणा । अधर्मिष्ठानीत्यर्थः ॥ ३२ ॥ प्राप्ताप्राप्त-विचारणं युक्तायुक्तपरीक्षणं न कृतमित्यन्वयः ॥ ३४ ॥ जीवानामर्जुनस्य चेति ख. ङ. पाठः ॥ ४३ ॥ कार्यस्य कर्तव्यस्य परकीयस्य भेदे विनाशे । लाघवे शैघ्र्ये । सौष्ठवे कौशले ॥ ४४ ॥ प्राणे शारीरबले । शौर्ये मानसबले । विज्ञाने अस्त्रशिक्षायाम् । विक्रमे फलोपधानेऽस्त्राणाम् । निमित्तज्ञानयोगे लक्षसंबन्धावधारणे । प्राणस्थैर्ये च वीर्ये च इति क. ख. ङ. पाठः ॥ ४५ ॥ महामात्र श्रेष्ठम् ॥ ४६ ॥

धनुषो ह्यस्य कर्माणि दिव्यानि प्राह भार्गवः ।
तद्रामो ह्यददन्मह्यं तेन योत्स्यामि पाण्डवम् ॥५१
अद्य दुर्योधनाहं त्वां नन्दयिष्ये सबान्धवम् ।
निहत्य समरे वीरमर्जुनं जयतां वरम् ॥ ५२
सपर्वतवनद्वीपा हतवीरा ससागरा ।
पुत्रपौत्रप्रतिष्ठा ते भविष्यत्यद्य पार्थिव ॥ ५३
नाशक्यं विद्यते मेऽद्य त्वत्प्रियार्थं विशेषतः ।
सम्यग्धर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ५४
न हि मे विक्रमं सोढुं स शक्तोऽग्निं तरुर्यथा ।
अवश्यं तु मया वाच्यं येन हीनोऽस्मि फल्गुनात् ॥
ज्या तस्य धनुषो दिव्या तथाऽक्षय्ये महेषुधी ।
सारथिस्तस्य गोविन्दो मम तादृङ्न विद्यते ॥ ५६
तस्य दिव्यं धनुः श्रेष्ठं गाण्डीवमजितं युधि ।
विजयं च महद्दिव्यं ममापि धनुरुत्तमम् ॥ ५७
तत्राहमधिकः पार्थाद्धनुषा तेन पार्थिव ।
येन चाप्यधिको वीरः पाण्डवस्तन्निबोध मे ॥ ५८
रश्मिग्राहश्च दाशार्हः सर्वलोकनमस्कृतः ।
अग्निदत्तश्च वै दिव्यो रथः काञ्चनभूषणः ॥ ५९
अच्छेद्याः सर्वतो वीर वाजिनश्च मनोजवाः ।
ध्वजश्च दिव्यो द्युतिमान्वानरोपि भयङ्करः ॥ ६०
कृष्णश्च जगतः स्रष्टा रथं तमभिरक्षति ।
एभिस्त्रिभिरहं हीनो योद्धुमिच्छामि पाण्डवम् ६१
अयं तु सदृशः शौरेः शल्यः समितिशोभनः ।
सारथ्यं यदि मे कुर्याद्ध्रुवस्ते विजयो भवेत् ॥ ६२
तस्य मे सारथिः शल्यो भवत्वसुकरः परैः ।
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु मे ॥ ६३
रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः ।
आयान्तु पश्चात्सततं मामेव भरतर्षभ ॥ ६४
एवमभ्यधिकः पार्थाद्भविष्यामि गुणैरहम् ।
शल्योप्यभ्यधिकः कृष्णादर्जुनादपि चाप्यहम् ६५
यथाऽश्वहृदयं वेद दाशार्हः परवीरहा ।
तथा शल्यो विजानीते हयज्ञानं महारथः ॥ ६६
बाहुवीर्ये समो नास्ति मद्रराजस्य कश्चन ।
तथाऽस्त्रे मत्समो नास्ति कश्चिदेव धनुर्धरः ॥ ६७
तथा शल्यसमो नास्ति हयज्ञाने हि कश्चन ।
सोऽयमभ्यधिकः कृष्णाद्भविष्यति रथो मम ॥६८
एवं कृते रथस्थोऽहं गुणैरभ्यधिकोऽर्जुनात् ।
विजयेयमहं सङ्ख्ये फल्गुनं कुरुसत्तम ॥ ६९
समुद्यातुं न शक्ष्यन्ति देवा अपि सवासवाः ।
एतत्कृतं महाराज त्वयेच्छामि परंतप ॥ ७०
क्रियतामेष कामो मे मा वः कालोऽत्यगादयम् ।
एवं कृते कृतं मह्यं त्वया सर्वं भविष्यति ॥ ७१
ततो द्रक्ष्यसि सङ्ग्रामे यत्करिष्यामि भारत ।
सर्वथा पाण्डवान्सङ्ख्ये विजेष्ये वै समागतान् ॥७२
न हि मे समरे शक्ताः समुद्यातुं सुरासुराः ।
किमु पाण्डुसुता राजन्रणे मानुषयोनयः ॥ ७३
सञ्जय उवाच ।
एवमुक्तस्तव सुतः कर्णेनाहवशोभिना ।
सम्पूज्य सम्प्रहृष्टात्मा ततो राधेयमब्रवीत् ॥ ७४
दुर्योधन उवाच ।
एवमेतत्करिष्यामि यथा त्वं कर्ण मन्यसे ।
सोपासङ्गा रथाः साश्वाः स्वनुयास्यन्ति संयुगे ७५
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु ते ।
अनुयास्याम कर्ण त्वां वयं सर्वे च पार्थिवाः ॥ ७६
सञ्जय उवाच ।
एवमुक्त्वा महाराज तव पुत्रः प्रतापवान् ।
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ॥ ७७

॥ इति श्रीमन्महाभारते कर्णपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

---

सिद्धिर्मोक्षः । आत्मवतो जितचित्तस्य ॥५४॥ न भीमो विक्रमं सोढुं इति क. ङ. पाठः ॥ ५५ ॥ द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

दुर्योधनप्रार्थनया शल्येन कृच्छ्रात्कर्णरथसारथ्यकरणाभ्युपगमः ॥ १ ॥

सञ्जय उवाच ।
एवमुक्तो महाराज तव पुत्रः प्रतापवान् ।
मद्रेश्वरं प्रति रणे सुरसैन्यभयंकरम् ।
सर्वे तथाऽकरोत्तूर्णं राधेयस्तद्यथाऽब्रवीत् ॥ १
मद्रराजं च समरे प्रणम्य च महारथम् ।
विनयेनोपसंगम्य प्रणयाद्वाक्यमब्रवीत् ॥ २
सत्यव्रत महाभाग द्विषतां तापवर्धन ।
मद्रेश्वर रणेशूर परसैन्यभयंकर ॥ ३
'मत्प्रियार्थं हितार्थं च तथा पार्थवधाय च ।'
श्रुतवानसि कर्णस्य ब्रुवतो वदतां वर ।
यथा नृपतिसिंहानां मध्ये त्वां वरये स्वयम् ॥ ४
तत्त्वामप्रतिवीर्याद्य शत्रुपक्षक्षयावह ।
मद्रेश्वर प्रयाचेऽहं शिरसा विनयेन च ॥ ५
तस्मात्पार्थविनाशार्थं हितार्थं मम चैव हि ।
त्वं पाहि सर्वतः कर्णं भवं ब्रह्मेव सुव्रत ॥ ६
सारथ्यं रथिनां श्रेष्ठ प्रणयात्कर्तुमर्हसि ।
त्वयि यन्तरि राधेयो विद्विषो मे विजेष्यते ॥ ७
अभीषूणां हि कर्णस्य ग्रहीतान्यो न विद्यते ।
ऋते हि त्वां महाभाग वासुदेवसमं युधि ॥ ८
स पाहि सर्वथा कर्णं यथा ब्रह्मा महेश्वरम् ।
यथा च सर्वथाऽऽपत्सु वार्ष्णेयः पाति पाण्डवम् ।
तथा मद्रेश्वराद्य त्वं राधेयं प्रतिपालय ॥ ९
भीष्मो द्रोणः कृपः कर्णो भवान्भोजश्च वीर्यवान् ।
शकुनिः सौबलो द्रौणिरहमेव च नो बलम् ॥ १०
एवमेष कृतो भागो नवधा पृथिवीपते ।
न च भागोऽत्र भीष्मस्य द्रोणस्य च महात्मनः ॥ ११
ताभ्यामतीत्य तौ भागौ निहता मम शत्रवः ।
वृद्धौ हि तौ महेष्वासौ छलेन निहतौ युधि ॥ १२
कृत्वा चासुकरं कर्म गतौ स्वर्गमितोऽनघ ।
तथाऽन्ये पुरुषव्याघ्राः परैर्विनिहता युधि ॥ १३
अस्मदीयाश्च बहवः स्वर्गाय गमिताः परैः ।
त्यक्त्वा प्राणान्यथाशक्ति चेष्टां कृत्वा च पुष्कलाम् ।
तदिदं हतभूयिष्ठं बलं मम नराधिप ।
पूर्वमप्यल्पकैः पार्थैर्हतं किमुत सांप्रतम् ॥ १५
बलवन्तो महात्मानः कौन्तेयाः सत्यविक्रमाः ।
बलं शेषं न हन्युर्मे यथा तत्कुरु पार्थिव ॥ १६
हतवीरमिदं सैन्यं पाण्डवैः समरे विभो ।
कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः ॥ १७
भवांश्च पुरुषव्याघ्र सर्वलोकमहारथः ।
शल्य कर्णोऽर्जुनेनाद्य योद्धुमिच्छति संयुगे ॥ १८
तस्मिञ्जयाशा विपुला मद्रराज नराधिप ।
तस्याभीषुग्रहवरो नान्योऽस्ति भुवि कश्चन ॥ १९
पार्थस्य समरे कृष्णो यथाऽभीषुग्रहो वरः ।
तथा त्वमपि कर्णस्य रथेऽभीषुग्रहो भव ॥ २०
तेन युक्तो रणे पार्थो रक्ष्यमाणश्च पार्थिव ।
यानि कर्माणि कुरुते प्रत्यक्षाणि तथैव तत् ॥ २१
पूर्वं नः समरे ह्येवमवधीदर्जुनो रिपून् ।
इदानीं विक्रमो ह्यस्य कृष्णेन सहितस्य च ॥ २२
कृष्णेन सहितः पार्थो धार्तराष्ट्रीं महाचमूम् ।
अहन्यहनि मद्रेश द्रावयन्दृश्यते युधि ॥ २३
भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते ।
तं भागं सह कर्णेन युगपन्नाशयाद्य हि ॥ २४
अरुणेन यथा सार्धं तमः सूर्यो व्यपोहति ।
तथा कर्णेन सहितो जहि पार्थं महाहवे ॥ २५
उद्यन्तौ च यथा सूर्यौ बालसूर्यसमप्रभौ ।
कर्णशल्यौ रणे दृष्ट्वा विद्रवन्तु महारथाः ॥ २६
सूर्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष ।
तथा नश्यन्तु कौन्तेयाः सपाञ्चालाःससृञ्जयाः ॥
रथिनां प्रवरः कर्णो यन्तॄणां प्रवरो भवान् ।
संयोगो युवयोर्लोके नाभून्न च भविष्यति ॥ २८
यथा सर्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवम् ।
तथा भवान्परित्रातु कर्णं वैकर्तनं रणे ।

अभीषूणां हयरश्मीनाम् ॥ ८ ॥ पुनर्नः समरे राजन्माव- धीदर्जुनो रिपून् । इति क. पाठः ॥२२॥ त्रातु त्रायताम् ॥२९॥

'सारथ्यं क्रियतां तस्य युध्यमानस्य संयुगे ।। २९
यथा च समरे कृष्णो रक्षते सर्वतोऽर्जुनम् ।
तथा त्वमपि राधेयं रक्षस्व च महारणे ।।' ३०
त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति ।
देवतानामपि रणे सशक्राणां महीपते ।
किं पुनः पाण्डवेयानां मा विशङ्कीर्वचो मम ।।३१
सञ्जय उवाच ।
दुर्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः ।
'धार्तराष्ट्रमथोवाच सृक्किणी परिलेलिहन् ।।' ३२
त्रिशिखां भ्रुकुटिं कृत्वा धुन्वन्हस्तौ पुनःपुनः ।
क्रोधरक्ते महानेत्रे परिवृत्य महाभुजः ।
कुलैश्वर्यश्रुतबलैर्दृप्तः शल्योऽब्रवीदिदम् ।। ३३
शल्य उवाच ।
न मामर्हसि राजेद्र नियोक्तुं कर्मणीदृशे ।
न हि पापीयसः श्रेयान्प्रेष्यत्वं कर्तुमर्हति ।। ३४
यो ह्यभ्युपगतं मित्रं गरीयांसं विशेषतः ।
वशे पापीयसो धत्ते तत्कार्यमधरोत्तरम् ।। ३५
ब्रह्मणा ब्राह्मणाः सृष्टा मुखात्क्षत्रं च बाहुतः ।
ऊरुभ्यामथ वैश्या वै शूद्राः पद्भ्यामिति श्रुतिः ३६
तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ।
अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत ।। ३७
गोप्तारः संगृहीतारो दातारः क्षत्रियाः स्मृताः ३८
याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः ।
लोकस्यानुग्रहार्थाय स्थापिता ब्राह्मणा भुवि ।।३९
कृषिश्च पाशुपाल्यं च विशां दानं च धर्मतः ।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ।। ४०
ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः ।
न क्षत्रियो वै सूतानां शृणुयाच्च कथंचन ।। ४१
अहं मूर्धाभिषिक्तो हि राजर्षिकुलजो नृपः ।
महारथसमाख्यातः सेव्यः स्तुत्यश्च वन्दिनां ४२
सोऽहमेतादृशो भूत्वा नेहारिबलसूदनः ।
सूतपुत्रस्य संग्रामे सारथ्यं कर्तुमुत्सहे ।। ४३
अवमन्यसे मां गान्धारे ध्रुवं चाप्यतिशङ्कसे ।
यस्माद्ब्रवीषि विस्रब्धः सारथ्यं क्रियतामिति ४४
अस्मत्तोऽभ्यधिकं कर्णं मन्वानस्तं प्रशंससि ।
न चाहं युधि राधेयं गणये तुल्यमात्मनः ।। ४५
आदिश्यतामभ्यधिको ममांशः पृथिवीपते ।
तमहं समरे हत्वा गमिष्यामि यथागतम् ।। ४६
अथवाप्येक एवाहं योत्स्यामि तव शत्रुभिः ।
पश्य वीर्यं ममाद्य त्वं सङ्ग्रामे दहतो रिपून् ।। ४७
न चापि कामान्कौरव्य निधाय हृदये पुमान् ।
अस्मद्विधः प्रवर्तेत मा मा त्वमतिशङ्किथाः ।। ४८
अपि चाप्यवमानो मे न कर्तव्यः कथंचन ।
पश्य भीमौ मम भुजौ वज्रसंहननौ दृढौ ।। ४९
धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान् ।
रथं च पश्य मे चित्रं सदश्वैर्वातवेगिभिः ।। ५०
गदां च पश्य गान्धारे हेमपट्टविभूषिताम् ।
दारयेयं महीं क्रुद्धो विकिरेयं च पर्वतान् ।
शोषयेयं समुद्रांश्च पातयेयं च भास्करम् ।। ५१
तं मामेवंविधं राजन्समर्थमरिनिग्रहे ।
कस्माद्युनङ्क्षि सारथ्ये सूतस्याधिरथेस्तु माम् ।।५२
न चापि मम राधेयः कलामर्हति षोडशीम् ।।५३
सुकर्णा ये त्रयो लोकाः सार्जुनाः सजनार्दनाः ।
निबद्धांस्तान्रणे राजन्न गणेयं कथंचन ।। ५४
न चाहं प्राकृतः कश्चिन्न चास्म्यधिगतः स्वयम् ।
अयं चाप्यवमानो मे न कर्तव्यः कथंचन ।।५५
आपृच्छे त्वाद्य गान्धारे यास्यामि विषयं प्रति ।
न चाहं सूतपुत्रस्य सारथ्यमुपजग्मिवान् ।। ५६
अवमानमहं प्राप्य न योत्स्यामि कथंचन ।
आपृच्छे त्वाऽद्य गान्धारे गमिष्यामि गृहाय वै ५७
सञ्जय उवाच ।
एवमुक्त्वा महाराज शल्यः समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ।। ५८
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव ।
अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ।। ५९
यथा शल्य त्वमात्थेदमेवमेतदसंशयम् ।

पापीयसः नीचयोनेः प्रेष्यत्वं दासत्वम् ।। ३४ ।। न विट्शद्रस्य संयोगं शृणु चान्यं ममानघ इति क. ख. पाठः ।। ४१ ।।

अभिप्रायस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ६०
न कर्णोऽभ्यधिकस्त्वत्तो न चान्ये चैव पार्थिवाः ।
न च मद्रेश्वर त्वां वै कृष्णः सोढुं च शक्ष्यति ॥ ६१
ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः ।
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ ६२
शल्यभूतस्तु शत्रूणां यस्मात्त्वं युधि मानद ।
तस्माच्छल्येति ते नाम कथ्यते पृथिवीतले ॥ ६३
यदेतद्व्याहृतं पूर्वं भवता भूरिदक्षिण ।
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यते ॥ ६४
न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान् ।
वृणेऽहं त्वां हयाग्र्याणां यन्तारमिह संयुगे ॥ ६५
मन्ये चाभ्यधिकं शल्य गुणैः कर्णं धनंजयात् ।
भवन्तं वासुदेवाच्च लोकोऽयमतिमन्यते ॥ ६६
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ ।
भवानभ्यधिकः कृष्णादश्वज्ञाने बले तथा ॥ ६७
यथाऽश्वहृदयं वेद वासुदेवो महामनाः ।
द्विगुणं त्वं तथा वेत्सि मद्रराजेश्वरात्मज ॥ ६८
शल्य उवाच ।
यन्मां ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ ६९
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ ७०
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ७१
सञ्जय उवाच ।
तथेति राजन्पुत्रस्ते सह कर्णेन भारत ।
अब्रवीन्मद्रराजस्य मतं भरतसत्तम ॥ ७२

॥ इति श्रीमन्महाभारते कर्णपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

दुर्योधनेन शल्यंप्रति त्रिपुरासुरकथाकथनारम्भः ॥ १ ॥ त्रिपुरासुरोपद्रुतैर्देवैः स्तुत्या रुद्रप्रसादनम् ॥ २ ॥

दुर्योधन उवाच ।
भूय एव तु मद्रेश यत्त्वा वक्ष्यामि तच्छृणु ।
यथा पुरावृत्तमिदं युद्धे देवासुरे प्रभो ॥ १
यदुक्तवान्पितुर्मह्यं मार्कण्डेयो महातपाः ।
ब्रुवतस्तदशेषेण मम राजर्षिसत्तम ।
निबोध मनसा चात्र न ते कार्या विचारणा ॥ २
'समुत्पन्नो हि राजानः प्रमोह इति निश्चयम् ।
कृत्वा चैव व्यवस्यन्ति सर्वे धर्मार्थनिश्चयान् ॥ ३
देवानामसुराणां च महानासीत्समुच्छ्रयः ।
सैंहिकेयास्तदोद्वृत्ता विबुधानवसूदयन् ।
ते निरस्ताः कृता देवैर्दानवा बलगर्विताः ॥' ४
तत्रासीत्प्रथमो राजन्संग्रामस्तारकामयः ।
निर्जिताश्च ततो दैत्या दैवतैरिति नः श्रुतिः ॥ ५
भग्नदर्पा निरुत्साहाः पातालं विविशुस्तदा ॥ ६
निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः ।
ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ ७
तप उग्रं समास्थाय नियमे परमे स्थिताः ।
तपसा कर्शयामासुर्देहांस्ताञ्शत्रुकर्शनाः ॥ ८
दमेन तपसा चैव नियमेन समाधिना ।
तेषां पितामहः प्रीतो वरदः प्रददौ वरम् ॥ ९
अवध्यत्वं च ते सर्वे सर्वभूतेषु सर्वदा ।
सहिता वरयामासुः सर्वलोकपितामहम् ॥ १०
तानब्रवीत्तदा देवः सर्वलोकगुरुः प्रभुः ।
नास्ति सर्वामरत्वं वै निवर्तध्वमितोऽसुराः ।
अन्यं वरं वृणीध्वं वै रोचते यादृशो हि वः ॥ ११
ततस्ते सहिता राजन्संप्रधार्यासकृद्बहु ।

ऋतमेव अयनं आश्रयो येषां ते ऋतायनास्तेषां गोत्रापत्यमार्तायनिस्त्वम् ॥ ६२ ॥ वाच उत्सृजेयं ताः अनेन क्षन्तव्या इति भावः ॥ ७१ ॥ त्रयोविंशोऽध्यायः ॥ २३ ॥

पितुः पुरतः । मह्यं मम ॥ २ ॥ तारकामयः तारकासुर एवामयो रोगवत्पराभवहेतुर्यत्र स तथा ॥ ५ ॥

सर्वलोकेश्वरं वाक्यं प्रणम्यैनमथाऽब्रुवन् ॥ १२
वस्तुमिच्छाम नगरं कर्तुं कामगमं शुभम् ।
सर्वकामसमृद्धार्थमवध्यं देवदानवैः ॥ १३
यक्षरक्षोरगगणैर्नानाजातिभिरेव च ।
न कृत्याभिर्न शस्त्रैश्च न शापैर्ब्रह्मवादिनाम् ।
वध्येत त्रिपुरं देव प्रयच्छेः प्रपितामह ॥ १४
वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् ।
विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः॥१५
ततो वर्षसहस्रेषु समेष्यामः परस्परम् ।
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ॥ १६
समागतानि चैतानि यो हन्याद्भगवांस्तदा ।
एकेषुणा देववरः स नो मृत्युर्भविष्यति ॥ १७
दुर्योधन उवाच ।
तेषां तद्वचनं श्रुत्वा दानवानां पितामहः ।
एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम्१८
ते तु लब्धवराः प्रीताः संप्रधार्य परस्परम् ।
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महारथाः ।
विश्वकर्माणमजरं दैत्यदानवपूजितम् ॥ १९
ततो मयः स्वतपसा चक्रे धीमान्पुराणि च ।
त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा॥ २०
काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम् ।
आयसं चाभवद्भौमं तदा तेषां परंतप ॥ २१
एकैकं योजनशतं विस्तृतं तावदायतम् ।
दृढं चाट्टालकयुतं बृहत्प्राकारतोरणम् ॥ २२
गृहप्रवरसंबाधमसंबाधमहापथम् ।
प्रासादैर्विविधैश्चापि द्वारैश्चैवोपशोभितम् ॥ २३
त्रिपुरं तेषु चाप्यासन्राजानो वै पृथक्पृथक् ।
दिव्यमाल्याम्बरधरा दैतेया राजसत्तम ॥ २४
काञ्चनं तारकाक्षस्य दिव्यमासीन्महात्मनः ।
राजतं कमलाक्षस्य विद्युन्मालिन आयसम् ॥ २५
त्रयस्ते दैत्यराजानस्त्रीँल्लोकानाशु तेजसा ।
आक्रम्य तस्थुरूचुश्च कश्च नाम प्रजापतिः ॥ २६
तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च ।
कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः ॥ २७
मांसाशिनः सुदृप्ताश्च सुरैर्विनिकृताः पुरा ।
महदैश्वर्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः ॥ २८
सर्वेषां च पुनश्चैषां सर्वयोगवहो मयः ।
तमाश्रित्य हि ते सर्वेऽवर्तयन्नकुतोभयाः ॥ २९
यो हि यं मनसा कामं दध्यौ त्रिपुरसंश्रयः ।
तस्मै तस्मै मयस्तं तं विदधे मायया तदा ॥ ३०
तारकाक्षसुतश्चासीद्धरिर्नाम महाबलः ।
तपस्तेपे परमकं येनातुष्यत्पितामहः ॥ ३१
संतुष्टमवृणोद्देवं वापी भवतु नः पुरे ।
शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः ॥ ३२
स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः ।
ससृजे तत्र वापीं तां मृतसंजीविनीं प्रभो ॥ ३३
येन रूपेण यो दैत्यो येन वेषेण चाप्यथ ।
क्षिप्यते निहतो वाप्यां तादृशेनैव जायते ।
संपूर्णबलवीर्यस्तु राजञ्छौर्यसमन्वितः ॥ ३४
एवं वीर्येण संयुक्तां कृतां तेन महात्मना ।
तां प्राप्य त्रैपुरा वापीं लोकान्सर्वान्बबाधिरे॥ ३५
महता तपसा सिद्धाः सुराणां भयवर्धनाः ।
एकस्मिन्निहते दैत्ये सृजन्ति स्म दशासुरान् ।
न तेषां विद्यते युद्धे क्षयो राजन्कथंचन ॥ ३६
ततस्ते लोभमोहाभ्यामभिभूता विचेतसः ।
निर्ह्रीकाः सहिताः सर्वे स्थापिताः समलोलुपाः॥
विद्राव्य सगणान्देवांस्तत्रतत्र तदातदा ।
विचेरुः स्वेन कामेन वरदानेन दर्पिताः ॥ ३८
देवोद्यानानि सर्वाणि स्थानानि च दिवौकसाम् ।
ऋषीणामाश्रमान्पुण्यान्रम्याञ्जनपदांस्तथा ।
उत्सादयन्त मर्यादां दानवा दुष्टचारिणः ॥ ३९
निःस्थानाश्च कृता देवा ऋषयः पितृभिः सह ।
दैत्यैस्त्रिभिस्त्रयो लोका ह्याक्रान्तास्तैः सुरेतरैः ४०
पीड्यमानेषु लोकेषु ततः शक्रो मरुद्वृतः ।
पुराण्यायोधयांचक्रे वज्रहस्तः समन्ततः ॥ ४१
नाशकत्तान्यभेद्यानि यदा भेत्तुं पुरंदरः ।
पुराणि वरदत्तानि धात्रा तेन नराधिप ॥ ४२
तदा भीतः सुरपतिर्मुक्त्वा तानि पुराण्यथ ।
तैरेव विबुधैः सार्धं पितामहमरिंदम ।
जगामाथ तदाख्यातुं विप्रकारं सुरेतरैः ॥ ४३

ते तत्त्वं सर्वमाख्याय शिरोभिः संप्रणम्य च ।
तद्वधोपायमाचक्ष्व भगवन्निति चाब्रुवन् ॥ ४४
श्रुत्वा तद्भगवान्देवो देवानिदमुवाच ह ।
श्रूयतां त्रिदशाः सर्वे यथेदं वाक्यगौरवम् ॥ ४५
दुरात्मानोऽसुरा नित्यं ते चापि विबुधा मम ।
न शक्नुवन्ति ते (ये)सर्वे युष्मान्वै पीडयन्ति ते ४६
अहं समस्तु सर्वेषां भूतानां नात्र संशयः ।
अविनीता निहन्तव्या इत्येवं प्रब्रवीमि वः ॥ ४७
एकेषुणा (हि) विभेद्यानि तानि दुर्गाणि नान्यथा ।
शक्तस्तु तानि बाणेन भेत्तुं कामं त्रिलोचनः ४८
ते यूयं स्थाणुमीशानं जिष्णुमक्लिष्टकारिणम् ।
योद्धारं वृणुत क्षिप्रं स तान्हन्ता सुरेतरान् ॥ ४९
ते देवास्तेन वाक्येन चोदिताः प्रणताः स्थिताः ।
दिव्यं वर्षसहस्रं वै तपस्तप्त्वा सुरर्षभाः ।
शुभात्मानो महात्मानो जग्मुर्वै वृषभध्वजम् ५०
ब्रह्माणमग्रतः कृत्वा शरण्यं शरणागताः ।
तपः परममाजग्मुर्गृणन्तो ब्रह्म शाश्वतम् ॥ ५१
अनङ्गमथनं सर्वे भवं सर्वात्मना गताः ।
देवदेवं परं स्थाणुं वरदं त्र्यम्बकं शिवम् ॥ ५२
शर्वमीड्यमजं रुद्रं शशाङ्काङ्कितमूर्धजम् ।
तुष्टुवुर्वाग्भिरुग्राभिर्भयेष्वभयमच्युतम् ।
सर्वात्मानं महात्मानं येनाप्तं विश्वमात्मना ॥५३
तपोविशेषैर्विविधैर्योगं यो वेद चात्मनः ।
यः साङ्ख्यमात्मना वेत्ति यस्य चात्मा वशे सदा ५४
तं ते ददृशुरीशानं तेजोराशिमुमापतिम् ।
'परेण यत्नेन भवं त्रिदशाः शर्वमीश्वरम् ।'
अनन्यसदृशं लोके प्रतपन्तमकल्मषम् ॥ ५५
एकश्च भगवांस्तत्र नानारूपमकल्पयत् ।
आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि ।
परस्परस्य चापश्यन्सर्वे परमविस्मिताः ॥ ५६
सर्वभूतमयं दृष्ट्वा तमजं जगतः पतिम् ।
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः ॥ ५७
तान्स्वस्तिवाच्य चाभ्यर्च्य समुत्थाप्य च शंकरः ।
ब्रूतब्रूतेति भगवान्स्मयमानोऽभ्यभाषत ॥ ५८
त्र्यम्बकेणाभ्यनुज्ञातास्ततस्ते स्वस्थचेतसः ।
नमो नमो नमस्तेऽस्तु प्रभो इत्यब्रुवन्भवम् ॥ ५९
नमो देवाधिदेवाय प्रियाधाम्नेऽतिमन्यवे ।
प्रजापतिमखघ्नाय प्रजापतिभिरीड्यते ॥ ६०
नमः स्तुताय स्तुत्याय स्तूयमानाय शंभवे ।
विलोहिताय रुद्राय नीलग्रीवाय शूलिने ॥ ६१
अमोघाय मृगाक्षाय प्रवरायुधयोधिने ।
अर्हाय चैव शुद्धाय क्षयाय क्रथनाय च ॥ ६२
दुर्वारणाय शुक्राय ब्रह्मणे ब्रह्मचारिणे ।
ईशानायाप्रमेयाय निहन्त्रे चर्मवाससे ॥ ६३
तपोरताय पिङ्गाय व्रतिने कृत्तिवाससे ।
कुमारपित्रे त्र्यक्षाय प्रवरायुधधारिणे ॥ ६४
प्रपन्नार्तिविनाशाय ब्रह्मद्विट्सङ्घघातिने ।
वनस्पतीनां पतये वनानां पतये नमः ॥ ६५
गवां च पतये नित्यं यज्ञानां पतये नमः ।
नमोस्तु ते ससैन्याय त्र्यम्बकायामितौजसे ।
मनोवाक्कर्मभिर्देव त्वां प्रपन्नान्भजस्व नः ॥ ६६
ततः प्रसन्नो भगवान्स्वागतेनाभिनन्द्य च ।
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ॥ ६७
'देवाः शर्वस्य वचनं श्रुत्वा हर्षमुपागताः ॥' ६८

॥ इति श्रीमन्महाभारते कर्णपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

देवैः रुद्रवचनात्तस्य स्वस्वार्धबलदानपूर्वकं त्रिपुरसंहारायाभिषेचनम् ॥ १ ॥

दुर्योधन उवाच ।
पितृदेवर्षिसङ्घेभ्योऽभये दत्ते महात्मना ।
सत्कृत्य शंकरं प्राह ब्रह्मा लोकपितामहः ॥ १
इमान्यसुरदुर्गाणि लोकांस्त्रीनाक्रमन्ति हि ।

ईड्यते ईड्यमानाय । कर्मणीदमपौरुषम् ॥ ६० ॥ भजस्व इष्टैः कामैः पूरयस्व ॥ ६६ ॥ व्येतु व्यपगच्छतु ॥ ६८ ॥

चतुर्विंशोऽध्यायः ॥ २४ ॥

कश्च प्रजापतिर्घोरांस्तान्सर्वाञ्जहि मा चिरम् ॥२
वरातिसर्गाद्देवेश प्राजापत्यमिदं परम् ।
मयाऽधितिष्ठता दत्तो दानवेभ्यो महान्वरः ॥ ३
नास्त्यन्यो युधि तेषां वै निहन्ता इति नः श्रुतम् ।
तानतिक्रान्तमर्यादान्नान्यः संहर्तुमर्हति ।
त्वामृते सर्वभूतेश त्वं ह्येषां प्रत्यरिर्विभे ॥ ४
स त्वं देव प्रपन्नानां याचतां च दिवौकसाम् ।
कुरु प्रसादं वरद दानवाञ्जहि संयुगे ॥ ५
त्वत्प्रसादाज्जगत्सर्वं सुखमेधत मानद ।
शरण्यस्त्वं हि देवानां वयं त्वां शरणं गताः ॥ ६
ईश्वर उवाच ।
हन्तव्याः शत्रवः सर्वे युष्माकमिति मे मतिः ।
न त्वेकश्चोत्सहे हन्तुं बलिनः सुरविद्विषः ॥ ७
ते यूयं सहिताः सर्वे मदीयेनापि तेजसा ।
जयध्वं युधि तान्सर्वान्संघातेन महाबलान् ॥ ८
देवा ऊचुः ।
अस्मत्तेजोबलं यावत्तावद्द्विगुणमेव वा ।
तत्तेषामिति मन्यामो दृष्टतेजोबला हि ते ॥ ९
ईश्वर उवाच ।
वध्यास्ते सर्वथा पापा ये युष्मास्वपराधिनः ।
मम तेजोबलार्धेन सर्वे मृद्नथ शात्रवान् ॥ १०
देवा ऊचुः ।
विभर्तुं तव तेजोर्धं न शक्ष्याम सुरेश्वर ।
सर्वेषां नो बलार्धेन त्वमेव जहि शात्रवान् ॥ ११
वयं च सर्वथा देव रक्षणीयास्तथैव च ।
स नो रक्ष महादेव त्वमेव जहि शात्रवान् ॥ १२
ईश्वर उवाच ।
मम तेजो न शक्ता हि सर्वे धारयितुं यदि ।
अहमेनान्वधिष्यामि युष्मत्तेजोर्धसंयुतः ॥ १३
बलार्धं यदि मे देवा न धारयितुमाहवे ।
शक्ताः सर्वे हि संगम्य यूयं तत्प्रब्रवीमि वः ॥१४
समा भवन्ति मे सर्वे दानवाश्चामराश्च ये ।
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ॥१५
किंत्वधर्मेण वर्तन्ते यस्मात्ते सुरशत्रवः ।
तस्माद्वध्या मयाप्येते युष्माकं च हितेप्सया ॥ १६
शरणं वः प्रपन्नानां धर्मेण च जिगीषताम् ।
साहाय्यं वः करिष्यामि निहनिष्यामि वो रिपून् ॥
दीयतां च बलार्धं मे सर्वैरपि पृथक्पृथक् ।
पशुत्वं चैव मे लोकाः सर्वे कल्पन्तु पीडिताः ॥१८
पशूनां तु पतित्वं मे भवत्वद्य दिवौकसः ।
एवं न पापं प्राप्स्यामि पशून्हत्वा सुरद्विषः ॥ १९
कल्पयध्वं रथं दिव्यं रथाश्वांश्चैव पारगान् ।
धनुः शरं सारथिं च ततो जेष्यामि वो रिपून् ॥२०
इति श्रुत्वा वचो देवा देवदेवस्य भूपतेः ।
विषादमगमन्सर्वे पशुत्वं प्रति शङ्किताः ॥ २१
तेषां भावं भवो ज्ञात्वा देवस्तानब्रवीदिदम् ।
मा वोस्तु पशुभावेऽस्मिन्भयं विबुधसत्तमाः ॥ २२
श्रूयतां पशुभावस्य विमोक्षः क्रियतां च सः ॥ २३
यो वः पशुपतेश्चर्यां चरिष्यति स मोक्ष्यते ।
पशुत्वादिति सत्यं वः प्रतिजाने समागमे ॥२४
ये चाप्यन्ये चरिष्यन्ति व्रतं मोक्ष्यन्ति तेऽपि च२५
नै(त्य)ष्ठिकं द्वादशाब्दं वा अर्धमब्दमृतुत्रयम् ।
मासं द्वादशरात्रं वा स पशुत्वाद्विमोक्ष्यते ।
तस्मात्परमिदं गुह्यं व्रतं दिव्यं चरिष्यथ ॥ २६
तं तथेत्यब्रुवन्देवा देवदेवनमस्कृतम् ।
ऊचुश्चेदं गृहाणेदं तेजसोऽर्धमिति प्रभुम् ॥ २७
प्रत्युवाच तथेत्येव शूलधृद्राजसत्तम ।
ततस्ते प्रददुः सर्वे तेजसोऽर्धं महात्मने ॥ २८
सर्वमादाय सर्वेषां तेजसोऽर्धं दिवौकसाम् ।
तेजसाप्यधिको भूत्वा भूयोऽप्यतिबलोऽभवत् २९
ततः प्रभृति देवानां देवदेवोऽभवद्भवः ।
पतिश्च सर्वभूतानां पशूनां चाभवत्तदा ॥ ३०
तस्मात्पशुपतिश्चोक्तो भवत्वाच्च भवेति वै ॥ ३१
अर्धमादाय सर्वेषां तेजसा प्रज्वलन्निव ।
भासयामास तान्सर्वान्देवदेवो महाद्युतिः ॥ ३२
ततोऽभिषिषिचुः सर्वे सुरा रुद्रं पुरारिणम् ।
महादेव इति ह्यासीद्देवदेवो महेश्वरः ॥ ३३

॥ इति श्रीमन्महाभारते कर्णपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

देवानामाज्ञया विश्वकर्मणा भूम्यादिसाधनै रुद्राय रथनिर्माणम् ॥ १ ॥

दुर्योधन उवाच ।
तेजसोऽर्धं सुरा दत्त्वा शंकराय महात्मने ।
पशुत्वमपि चोपेत्य विश्वकर्माणमव्ययम् ॥ १
ऊचुः सर्वे समाभाष्य रथः संकल्प्यतामिति ।
विश्वकर्माऽपि संचिन्त्य रथं दिव्यमकल्पयत् ॥ २
समेतां पृथिवीं देवीं विशालां पुरमालिनीम् ।
सपर्वतवनद्वीपां चक्रे भूतधरां रथम् ॥ ३
ईषां नक्षत्रवंशं च छत्रं मेरुमहागिरिम् ।
अनेकद्रुमसंछन्नं रत्नाकरमनुत्तमम् ॥ ४
हिमवन्तं च विन्ध्यं च नानाद्रुमलताकुलम् ।
अवस्करं प्रतिष्ठानं कल्पयामास वै तदा ॥ ५
अस्तंगिरिमधिष्ठानं नानाद्विजगणायुतम् ।
चकार भगवांस्त्वष्टा उदयं रथकूबरम् ॥ ६
मीननक्रझषावासं दानवालयमुत्तमम् ।
समुद्रमक्षं विदधे पत्तनाकरशोभितम् ॥ ७
चक्रं चक्रे चन्द्रमसं तारकागणमण्डितम् ।
दिवाकरं चाप्यपरं चक्रं चक्रेऽशुमालिनम् ॥ ८
गङ्गां सरस्वतीं तूणीं चक्रे विश्वकृदव्ययः ।
अलंकारा रथस्यासन्नापगाः सरितस्तथा ॥ ९
त्रीनग्नीन्मन्त्रवच्चक्रे रथस्याथ त्रिवेणुकम् ।
अनुकर्षान्रथे दीप्तान्वरूथांश्चापि तारकाः ॥ १०
ओषधीर्वीरुधश्चैव घण्टाजालं च भानुमत् ।
अलंचकार च रथं मासपक्षर्तुभिर्विभुः ॥ ११
अहोरात्रैः कलाभिश्च काष्ठाभिरयनैस्तथा ।
द्यां युगं युगपर्वाणि संवर्तकबलाहकान् ॥ १२
शम्यां धृतिं च मेधां च स्थितिं सन्नतिमेव च ।
ऋग्वेदं सामवेदं च धुर्यावश्वावकल्पयत् ॥ १३
पृष्ठाश्वौ तु यजुर्वेदः कल्पितोऽथर्वणस्तथा ।
अश्वानां चाप्यलंकारं विदधे पदसंचयम् ॥ १४
सिनीवालीमनुमतिं कुहूं राकां च सुप्रभाम् ।
योक्त्राणि चक्रे चाश्वानां कूश्माण्डांश्चापि पन्नगान् ॥ १५
तालपृष्ठोऽथ नहुषः कार्कोटकधनंजयौ ।
इतरे चाभवन्नागा हयानां वाहबन्धनम् ॥ १६
अभीशवः षडङ्गानि कल्पितानि महीपते ।
ओंकारः कल्पितस्तस्य प्रतोदो विश्वकर्मणा ॥ १७
यज्ञाः सर्वे पृथक्क्लृप्ता रथाङ्गानि च भागशः ।
अधिष्ठानं मनश्चासीत्परिरथ्या सरस्वती ॥ १८
नानावर्णानि शस्त्राणि पताकाः पवनेरिताः ।
विद्युदिन्द्रधनुर्युक्तं रथं दीप्त्या व्यदीपयत् ॥ १९
वर्म योद्धुं च विहितं नभो ग्रहगणाकुलम् ।
अभेद्यं भानुमच्चित्रं कालचक्रपरिक्षतम् ॥ २०
एवमस्मिन्महाराज कल्पिते रथसत्तमे ।
त्वष्ट्रा मनुजशार्दूल द्विषतां भयवर्धने ॥ २१
स्वान्यायुधानि दिव्यानि न्यदधाच्छंकरो रथे ।
ध्वजयष्टिं वियत्कृत्वा स्थापयामास गोवृषम् ॥ २२
ब्रह्मदण्डः कालदण्डो रुद्रदण्डश्च ते ज्वराः ।
परिष्कारा रथस्यासन्समन्ताद्दिशमुद्धताः ॥ २३
विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः ।
छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां ध्रुवाम् ॥ २४
कालो हि भगवान्रुद्रस्तच्च संवत्सरं धनुः ।
तस्माद्रौद्री कालरात्री ज्या कृता धनुषो जरा ॥ २५
ततो रथे रथाश्वांस्तानृषयः समयोजयन् ।
एकैकशः सुसंहृष्टानादाय सुधृतव्रताः ॥ २६
दक्षिणस्यां धुरि कृत ऋग्वेदो मन्त्रपारगैः ।
सव्यतः सामवेदश्च युक्तो राजन्महर्षिभिः ॥ २७
पार्ष्णिदक्षिणतो युक्तो यजुर्वेदः सुरद्विजैः ।
इतरस्यां तथा पार्ष्ण्यां युक्तो राजन्नथर्वणः ॥ २८
एवं ते वाजिनो युक्ता यज्ञविद्भिस्तथा रथे ।
अशोभन्त तथा युक्ता यथैवाध्वरमध्यगाः ॥ २९
कल्पयित्वा रथं दिव्यं ततो बाणमकल्पयत् ।
चिन्तयित्वा हरिं विष्णुमव्ययं यज्ञवाहनम् ॥ ३०
शरं संकल्पयांचक्रे विश्वकर्मा महामनाः ।
तस्य वाजांश्च पुङ्खं च कल्पयामास वै तदा ॥ ३१
पुण्यगन्धवहं राजञ्श्वसनं राजसत्तम ।

अग्नीषोमौ शरमुखे कल्पयामास वै तदा ॥ ३२
अग्नीषोमात्मकं कृत्स्नमुच्यते वैष्णवं जगत् ।
विष्णुरात्मा भगवतो भवस्यामिततेजसः ॥ ३३
तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे शरस्य वै ।
तस्मिञ्शरे तीक्ष्णमन्युमसृजद्दुःसहं प्रभुः ॥ ३४
भृग्वङ्गिरोमन्युभवः क्रोधाग्निरतिदुःसहः ।
स नीललोहितो धूम्रः कृत्तिवासा भयानकः ॥३५
आदित्यायुतसंकाशस्तेजोज्वालावृतो भवः ।
दुश्चयवच्यावको जेता हन्ता ब्रह्मद्विषां वरः ॥ ३६
तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत् ।
जङ्गमाजङ्गमं राजञ्छुशुभेऽद्भुतदर्शनम् ॥ ३७
दृष्ट्वा तु तं रथं दिव्यं कवची स शरासनी ।
आददे स शरं दिव्यं सोमविष्ण्वग्निवायुजम् ॥३८
तमादाय महादेवस्त्रासयन्दैत्यदानवान् ।
आरुरोह तदा यत्तः कम्पयन्निव रोदसी ॥ ३९
महर्षिभिः स्तूयमानो वन्द्यमानश्च वन्दिभिः ।
उपनृत्तश्चाप्सरसां गणैर्नृत्तविशारदैः ॥ ४०
स शोभमानो वरदः खड्गी बाणी शरासनी ।
हसन्निवाब्रवीद्देवः सारथिः को भवेदिति ॥ ४१

॥ इति श्रीमन्महाभारते कर्णपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

देवानां प्रार्थनया ब्रह्मणा रुद्ररथसारथ्यकरणम् ॥ १ ॥ रुद्रेण त्रिपुरदहनम् ॥ २ ॥ दुर्योधनेन दृष्टान्तप्रदर्शनपूर्वकं शल्यंप्रति कर्णरथसारथ्यकरणप्रार्थना ॥ ३ ॥

दुर्योधन उवाच ।
तमब्रुवन्देवगणा यं भवान्संनियोक्ष्यते ।
स भविष्यति देवेश सारथिस्ते न संशयः ॥ १
तानब्रवीन्महादेवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं वै स्वयं संचिन्त्य मा चिरम् ॥ २
एतच्छ्रुत्वा वचो देवाः सर्वे गत्वा पितामहम् ।
प्रणिपत्योचुरेकाग्राः प्रसाद्यैनं महर्षिभिः ॥ ३
त्वया यत्कथितं देव त्रिदशारिनिबर्हणे ।
तथा तत्कृतमस्माभिः प्रसन्नश्च वृषध्वजः ॥ ४
रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः ।
सारथिं च न जानीमः कः स्यात्तस्मिन्रथोत्तमे ॥ ५
तस्माद्विधीयतां कश्चित्सारथिर्देवसत्तम ।
सफलां तां गिरं देव कर्तुमर्हसि नो विभो ।
एवमस्मासु हि पुरा भगवन्नुक्तवानसि ॥ ६
सदैव युक्तो रथसत्तमो वै
दुराधर्षो द्रावणः शात्रवाणाम् ।
पिनाकधन्वा विहितोऽत्र योद्धा
विभीषयन्दानवानुद्यतोऽसौ ॥ ७
तथैव वेदाश्च हया रथाग्र्य
धरा सशैला च रथो महात्मनः ।
नक्षत्रवंशानुगतो वरूथी
यस्मिन्योद्धा सारथिनाऽभिरक्ष्यः ॥ ८
तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान् ॥ ९
तं प्रविष्टा रथं देवा रथयोद्धारमेव च ।
कवचानि च शस्त्राणि कार्मुकं च पितामह ॥ १०
त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम् ।
त्वं हि सर्वैर्गणैर्युक्तो देवताभ्योऽधिकः प्रभो ॥ ११
त्वं देव शक्तो लोकेश नियन्तुं प्रद्रुतानिमान् ।
वेदांश्च सोपनिषदः सारथिर्भव नः स्वयम् ॥ १२
योद्धुं बलेन वीर्येण सत्वेन विनयेन च ।
अधिकः सारथिः कार्यो नास्ति चान्योऽधिको भवात्
स भवांस्तारयत्वस्मान्कुरु सारथ्यमव्यय ।
भवानभ्यधिकस्त्वत्तो नान्योस्ति भविता त्विह १४
त्वं हि देवेश सर्वैस्तु विशिष्टो वदतां वर ।
तं रथं त्वं समारुह्य संयच्छ परमान्हयान् ॥ १५
तव प्रसादाद्वध्येयुर्देव दैवतकण्टकाः ।
स नो रक्ष महाबाहो दैत्येभ्यो महतो भयात् ॥१६
त्वं हि नो गतिरव्यग्र त्वं नो गोप्ता महाव्रत ।
त्वत्प्रसादात्सुराः सर्वे पूज्यन्ते त्रिदिवे प्रभो ॥ १७
इति ते शिरसाऽगच्छंस्त्रिलोकेशं पितामहम् ।

देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम् १८
ब्रह्मोवाच ।
एवमेतत्सुरास्तथ्यं नान्यस्त्वभ्यधिको भवात् ।
सारथित्वं करिष्यामि शंकरस्य महात्मनः ॥ १९
सर्वथा रथिनः श्रेयान्कर्तव्यो रथसारथिः ।
तस्मादेतद्यथातत्त्वं ज्ञात्वा युष्मांश्च संगतान् ।
संयच्छामि हयानेष विबुधाय कपर्दिने ॥ २०
दुर्योधन उवाच ।
एवमुक्त्वा जटाभारं संयम्य प्रपितामहः ।
परिधायाजिनं गाढं संन्यस्य च कमण्डलुम् ।
प्रतोदपाणिर्भगवानारुरोह रथं तदा ॥ २१
सारथौ कल्पिते देवैरीशानस्य महात्मनः ।
तस्मिन्नारोहति रथं कल्पितं लोकसंभृतम् ।
शिरोभिः पतिता भूमौ तुरगा वेदसंभृताः ॥ २२
उभाभ्यां लोकनाथाभ्यामास्थितं रथसत्तमम् ।
वोढुं न शक्ता वेदाश्वा जानुभ्यामपतन्महीम् ॥२३
अभीशुभिस्तु भगवानुद्यम्य च हयान्विभुः ।
अस्तु वीर्यं च शौर्यं च वेदाश्वानामिति प्रभुः ।
रथं संचोदयामास देवानां प्रभुरव्ययः ॥ २४
ततोऽधिरूढे वरदे रथं पशुपतिस्तदा ।
साधुसाध्विति देवेशं स्मयमानोऽभ्यभाषत ॥ २५
याहि देव यतो दैत्याश्चोदयाश्वानरिंदम ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे ॥ २६
ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ।
पुराण्युद्दिश्य खस्थानि दानवानां तरस्विनाम् ॥२७
ततस्ते सहसोत्पत्य वेदाख्या रथवाजिनः ।
क्षणेन तेन दैत्यानां पुराणि प्रापयन्हरम् ॥ २८
अथर्वाङ्गिरसौ चास्तां चक्ररक्षौ महात्मनः ।
अथाधिज्यं धनुः कृत्वा शर्वः संधाय तं शरम् ।
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥ २९
तस्मिन्स्थिते ततो राजन्रुद्रे सज्जितकार्मुके ।
पुराणि तेन कालेन जग्मुरेकत्वमाशु वै ॥ ३०
एकीभावं गते चैव त्रिपुरत्वमुपागते ।
बभूव तुमुलो हर्षो देवतानां महात्मनाम् ॥ ३१
ततो देवगणाः सर्वे सिद्धाश्च परमर्षयः ।
जयेति वाचो मुमुचुः संस्तुवन्तो महेश्वरम् ॥ ३२
ततोऽग्रतः प्रादुरभूत्त्रिपुरं जघ्नुषोऽसुरान् ।
अनिर्देश्योग्रवपुषो देवस्यासह्यतेजसः ॥ ३३
त्रीणि दृष्ट्वैव संस्थानि पुराण्यथ पिनाकधृत् ।
स तद्विकृष्य भगवान्दिव्यं लोकेश्वरो धनुः ।
त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ॥ ३४
एकबाणेन तं देवस्त्रिपुरं परमेश्वरः ।
निजघ्ने सासुरगणं देवदेवो महेश्वरः ॥ ३५
बाणतेजोग्निदग्धं तद्विप्रकीर्णं सहस्रधा ।
महदार्तस्वरं कृत्वा नावशेषमुपागतम् ।
मद्रेश सासुरगणं प्रापतत्पश्चिमार्णवे ॥ ३६
एवं हि त्रिपुरं दग्धं दानवाश्चाप्यशेषतः ।
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा ॥ ३७
स चात्मक्रोधजो वह्निर्दहेत्युक्तो निवारितः ।
त्रैलोक्यमविशेषेण पुनर्दग्धुं प्रचक्रमे ॥ ३८
कालाग्निमिव निर्दग्धुमुत्थितं तं पुनः पुनः ।
माकार्षीर्भस्मसाल्लोकानिति त्र्यक्षोऽब्रवीद्वचः ३९
ततः प्रकृतिमापन्ना देवलोकास्तथर्षयः ।
तुष्टुवुर्वाग्भिरग्र्याभिः स्थाणुं त्रिपुरवैरिणम् ॥ ४०
तेऽनुज्ञाता भगवता सर्वे जग्मुर्यथागतम् ।
कृतकामाः प्रसन्नेन प्रजापतिमुखाः सुराः ॥ ४१
एवं रुद्रस्य कृतवान्सारथ्यं तु पितामहः ।
संयच्छ तुरगानस्य राधेयस्य महात्मनः ॥ ४२
त्वं हि कृष्णाच्च कर्णाच्च फल्गुनाच्च गुणाधिकः ।
बलतो रूपतो योगादस्त्रसंपद एव च ॥ ४३
समासक्तं महीपाल कुरु मे हितमीप्सितम् ।
युद्धे ह्ययं रुद्रकल्पस्त्वं च ब्रह्मसमोऽनघ ।
तस्माच्छक्तौ युवां जेतुं मच्छत्रून्दिवि वा सुरान् ४४
स यथा शल्य कर्णोऽयं श्वेताश्वं कृष्णसारथिम् ।
प्रमथ्य हन्यात्कौन्तेयं तथा नीतिर्विधीयताम् ४५
त्वयि राज्यं सुखं चैव जीवितं जयमेव च ।
समासक्तं महीपाल कुरु मे हितमीप्सितम् ॥ ४६
संयच्छास्य हयान्राजन्मत्प्रियार्थं परंतप ॥ ४७

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

दुर्योधनेन कर्णसारथ्ये शङ्कमानं शल्यंप्रति परशुरामचरित्रकीर्तनपूर्वकं कर्णस्य तदन्तेवासित्वादिगुणवत्तया तत्सारथ्यकरणे दोषाभावप्रतिपादनम् ॥ १ ॥

दुर्योधन उवाच ।
इमं चाप्यपरं भूय इतिहासं निबोध मे ।
पितुर्मम सकाशे वै ब्राह्मणः प्राह धर्मवित् ॥ १
श्रुत्वा चैतद्वचश्चित्रं हेतुकार्यार्थतत्त्ववित् ।
कुरु शल्य विनिश्चित्य मा भूदत्र विचारणा ॥ २
भार्गवाणां कुले जातो जमदग्निर्महातपाः ।
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः ॥ ३
स तीव्रं तप आस्थाय संप्रसादितवान्भवम् ।
अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः ॥ ४
तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च ।
हृद्गतं चास्य विज्ञाय दर्शयामास शंकरः ।
प्रत्यक्षेण महादेवः स्वां तनुं सर्वशंकरः ॥ ५
शंकर उवाच ।
राम तुष्टोऽस्मि भद्रं ते विदितं तव चेप्सितम् ।
कुरुष्व पूतमात्मानं सर्वमेतदवाप्स्यसि ॥ ६
दास्यामि ते तदाऽस्त्राणि यदा पूतो भविष्यसि ।
अपात्रमसमर्थं च दहन्त्यस्त्राणि भार्गव ॥ ७
इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना ।
प्रत्युवाच महात्मानं शिरसाऽवनतः प्रभुम् ॥ ८
यदा जानासि देवेश पात्रं मामस्त्रधारणे ।
तदा शुश्रूषतेऽस्त्राणि भवान्मे दातुमर्हति ॥ ९
ततः स तपसा चैव व्रतेन नियमेन च ।
पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः ॥ १०
समाराधितवाञ्शर्वं बहुवर्षगणांस्तदा ।
प्रसन्नश्च महादेवो भार्गवस्य महात्मनः ॥ ११
असकृच्चाब्रवीत्तस्य गुणान्देव्याः सकाशतः ।
भक्तिमानेष सततं मयि रामो दृढव्रतः ॥ १२
एवमस्य गुणान्प्रीतो बहुशो कथयद्विभुः ।
देवतानां पितॄणां च समक्षमरिसूदन ॥ १३
एतस्मिन्नेव काले तु दैत्या ह्यासन्महाबलाः ।
तैस्तदा दर्पमोहाद्वै अबाध्यन्त दिवौकसः ॥ १४
ततः संभूय विबुधास्तान्हन्तुं कृतनिश्चयाः ।
चक्रुः शत्रुवधे यत्नं दैत्याञ्जेतुमशक्नुवन् ॥ १५
अभिगम्य ततो देवा महेश्वरमुमापतिम् ।
प्रासादयंस्तदा भक्त्या जहि शत्रुगणानिति ॥ १६
प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम् ।
रामं भार्गवमाहूय सोऽभ्यभाषत शंकरः ॥ १७
रिपून्भार्गव देवानां जहि सर्वान्समागतान् ।
लोकानां हितकामार्थं मत्प्रियार्थं तथैव च ॥ १८
परशुराम उवाच ।
का शक्तिर्मम देवेश अकृतास्त्रस्य संयुगे ।
निहन्तुं दानवान्सर्वान्कृतास्त्रान्युद्धदुर्मदान् ॥ १९
ईश्वर उवाच ।
गच्छ त्वं मदनुज्ञानान्निहनिष्यसि शात्रवान् ।
विजित्य च रिपून्सर्वान्गुणान्प्राप्स्यसि पुष्कलान् ।
दुर्योधन उवाच ।
एतच्छ्रुत्वा तु वचनं प्रतिगृह्य च सर्वशः ।
रामः कृतस्वस्त्ययनः प्रययौ दानवान्प्रति ॥ २१
ततोऽजयद्देवशत्रून्महादर्पबलान्वितान् ।
वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः ॥ २२
स दानवैः क्षततनुर्जामदग्न्यो नृपोत्तम ।
संस्पृष्टः स्थाणुना सद्यो निर्व्रणः समपद्यत ॥ २३
प्रीतश्च भगवान्देवः कर्मणा तेन तस्य वै ।
वरान्प्रादाद्बहुविधान्भार्गवाय महात्मने ॥ २४
उक्तश्च प्रीतियुक्तेन देवदेवेन शूलिना ॥ २५
निपाताच्च शस्त्राणां शरीरे याऽभवद्रुजा ।
तया ते मानुषं कर्म व्यपोहं भृगुनन्दन ।
गृहाणास्त्राणि दिव्यानि मत्सकाशाद्यथेप्सितं २६
ततोऽस्त्राणि समग्राणि वरांश्च मनसेप्सितान् ।
लब्ध्वा बहुविधान्रामः प्रणम्य शिरसा शिवम् ।

नाशक्नुवन्निति नञध्याहारेण योजना ॥ १५ ॥

अष्टाविंशोऽध्यायः ॥ २८ ॥

अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः ॥ २७
एवमेतत्पुरावृत्तं तथा कथितवानृषिः ॥ २८
भार्गवोऽपि ददौ सर्वं धनुर्वेदं महात्मने ।
कर्णाय पुरुषव्याघ्रः सुप्रीतेनान्तरात्मना ॥ २९
वृजिनं न भवेत्किंचिदस्य कर्णस्य पार्थिव ।
सूतेन वर्धितो नित्यं न सूतो नृप एव सः ॥ ३०
विशुद्धयोनिं विज्ञाय दिव्यान्यस्त्राण्यदाद्भृगुः ।
नापि सूतकुले जातं मन्ये कर्णं कथंचन ।
देवपुत्रमहं मन्ये क्षत्रियाणां कुलोद्भवम् ॥ ३१
विसृष्टमविबोधार्थं कुलस्येति मतिर्मम ।
सर्वथा न ह्यसौ शल्य कर्णः सूतकुलोद्भवः ॥ ३२
सकुण्डलं सकवचं दीर्घबाहुमरिंदमम् ।
कथमादित्यसंकाशं मृगी सिंहं प्रसूयते ॥ ३३
पश्य ह्यस्य भुजौ पीनौ नागराजकरोपमौ ।
वक्षः पश्य विशालं च सर्वशत्रुसहं रणे ॥ ३४
न त्वेव प्राकृतः कश्चित्कर्णो वैकर्तनो वृषा ।
महात्मा ह्येष राजेन्द्र रामशिष्यः प्रतापवान् ॥ ३५

॥ इति श्रीमन्महाभारते कर्णपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

दुर्योधनप्रार्थितेन शल्येन समयकरणपूर्वकं कर्णरथसारथ्यस्वीकरणम् ॥ १ ॥

दुर्योधन उवाच ।
एवं स भगवान्देवः सर्वलोकपितामहः ।
सारथ्यमकरोत्तत्र ब्रह्मा रुद्रोऽभवद्रथी ॥ १
रथिनोऽभ्यधिको वीर कर्तव्यो रथसारथिः ।
तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ॥ २
यथा देवगणैस्तत्र वृतो यत्नात्पितामहः ।
तथाऽस्माभिर्भवान्यत्नात्कर्णादभ्यधिको वृतः ॥ ३
यथा देवैर्महाराज ईश्वरादधिको वृतः ।
तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः ।
नियच्छ तुरगान्युद्धे राधेयस्य महाद्युते ॥ ४
शल्य उवाच ।
मयाप्येतन्नरश्रेष्ठ बहुशो नरसिंहयोः ।
कथ्यमानं श्रुतं दिव्यमाख्यानमतिमानुषम् ॥ ५
यथा च चक्रे सारथ्यं भवस्य प्रपितामहः ।
यथाऽसुराश्च निहता इषुणैकेन भारत ॥ ६
कृष्णस्य चापि विदितं सर्वमेतत्पुरा ह्यभूत् ॥ ७
यथा पितामहो जज्ञे भगवान्सारथिस्तदा ।
अनागतमतिक्रान्तं वेद कृष्णोऽपि तत्त्वतः ॥ ८
एतदर्थं विदित्वाऽपि सारथ्यमुपजग्मिवान् ।
स्वयंभूरिव रुद्रस्य कृष्णः पार्थस्य भारत ॥ ९
यदि हन्याच्च कौन्तेयं सूतपुत्रः कथंचन ।
दृष्ट्वा पार्थं हि निहतं स्वयं योत्स्यति केशवः ॥ १०
शङ्खचक्रगदापाणिर्धक्ष्यते तव वाहिनीम् ।
न चापि तस्य क्रुद्धस्य वार्ष्णेयस्य महात्मनः ।
स्थास्यते प्रत्यनीकेषु कश्चिदत्र नृपस्तव ॥ ११
सञ्जय उवाच ।
तं तथा भाषमाणं तु मद्रराजमरिंदमः ।
प्रत्युवाच महाबाहुरदीनात्मा सुतस्तव ॥ १२
मावमंस्था महाबाहो कर्णं वैकर्तनं रणे ।
सर्वशस्त्रभृतां श्रेष्ठं सर्वशास्त्रार्थपारगम् ॥ १३
यस्य ज्यातलनिर्घोषं श्रुत्वा भयकरं महत् ।
पाण्डवेयानि सैन्यानि विद्रवन्ति दिशो दश ॥ १४
प्रत्यक्षं ते महाबाहो यथा रात्रौ घटोत्कचः ।
मायाशतानि कुर्वाणो हतो मायापुरस्कृतः ॥ १५
न चातिष्ठत बीभत्सुः प्रत्यनीके कथंचन ।
एतांश्च दिवसान्सर्वान्भयेन महता वृतः ॥ १६
भीमसेनश्च बलवान्धनुष्कोट्याभिचोदितः ।
उक्तश्च संज्ञया राजन्मूढ औदरिको यथा ॥ १७

---

नरसिंहयोः कृष्णार्जुनयोः । अतस्तयोः साम्यं मम कीर्तिकरमेवेति भावः । सुरसिंहयोरिति पाठे रुद्रपितामहयोः ॥ ५ ॥

माद्रीपुत्रौ तथा शूरौ येन जित्वा महारणे ।
कृमप्यर्थं पुरस्कृत्य न हतौ युधि मारिष ॥ १८
येन वृष्णिप्रवीरस्तु सात्यकिः सात्वतां वरः ।
निर्जित्य समरे शूरो विरथश्च बलात्कृतः ॥ १९
सृञ्जयाश्चेतरे सर्वे धृष्टद्युम्नपुरोगमाः ।
असकृन्निर्जिताः सङ्ख्ये स्मयमानेन संयुगे ॥ २०
तं कथं पाण्डवा युद्धे विजेष्यन्ति महारथम् ।
यो हन्यात्समरे क्रुद्धो वज्रहस्तं पुरंदरम् ॥ २१
त्वं च सर्वास्त्रविद्वीरः सर्वविद्यास्त्रपारगः ।
बाहुवीर्येण ते तुल्यः पृथिव्यां नास्ति कश्चन ॥ २२
त्वं शल्यभूतः शत्रूणामविषह्यः पराक्रमे ।
ततस्त्वमुच्यसे राजञ्शल्य इत्यरिसूदन ॥ २३
तव बाहुबलं प्राप्य न शेकुः सर्वसात्वताः ।
तव बाहुबलाद्राजन्किं नु कृष्णो बलाधिकः ॥ २४
यथा हि कृष्णेन बलं धार्यं वै फल्गुने हते ।
तथा कर्णात्ययीभावे त्वया धार्यं महद्बलम् ॥ २५
किमर्थं समरे सैन्यं वासुदेवो न्यवारयत् ।
किमर्थं च भवान्सैन्यं न हनिष्यति मारिष ॥ २६
त्वत्कृते पदवीं गन्तुमिच्छेयं युधि मारिष ।
सोदराणां च वीराणां सर्वेषां च महीक्षिताम् ॥ २७
शल्य उवाच ।
यन्मां ब्रवीषि गान्धारे अग्रे सैन्यस्य मानद ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ २८
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ २९
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ३०
सञ्जय उवाच ।
तथेति राजन्पुत्रस्ते सह कर्णेन मारिष ।
अब्रवीन्मद्रराजानं सर्वक्षत्रस्य सन्निधौ ॥ ३१
सारथ्यस्याभ्युपगमाच्छल्येनाश्वासितस्तदा ।
दुर्योधनस्तदा हृष्टः कर्णं तमभिषस्वजे ॥ ३२
अब्रवीच्च पुनः कर्णं स्तूयमानः सुतस्तव ।
जहि पार्थान्रणे सर्वान्महेन्द्रो दानवानिव ॥ ३
स शल्येनाभ्युपगते हयानां संनियच्छने ।
कर्णो हृष्टमना भूयो दुर्योधनमभाषत ॥ ३
नातिहृष्टमना ह्येष मद्रराजोऽभिभाषते ।
राजन्मधुरया वाचा पुनरेनं ब्रवीहि वै ॥ ३
ततो राजा महाप्राज्ञः सर्वास्त्रकुशलो बली ।
दुर्योधनोऽब्रवीच्छल्यं मद्रराजं महीपतिम् ॥ ३
पूरयन्निव घोषेण मेघगम्भीरया गिरा ।
शल्य कर्णोऽर्जुनेनाद्य योद्धव्यमिति मन्यते ॥ ३
तस्य त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ।
कर्णो हत्वेतरान्सर्वान्फल्गुनं हन्तुमिच्छति ।
तस्याभीषुग्रहे राजन्प्रयाचे त्वां पुनः पुनः ॥ ३८
पार्थस्य सचिवः कृष्णो यथाऽभीषुग्रहो वरः ।
तथा त्वमपि राधेयं सर्वतः परिपालय ॥ ३९
सञ्जय उवाच ।
ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत् ।
दुर्योधनममित्रघ्नं प्रीतो मद्राधिपस्तदा ॥ ४०
शल्य उवाच ।
एवं चेन्मन्यसे राजन्गान्धारे प्रियदर्शन ।
तस्मात्ते यत्प्रियं किंचित्तत्सर्वं करवाण्यहम् ॥ ४१
यत्रास्मि भरतश्रेष्ठ योग्यः कर्मणि कर्हिचित् ।
तत्र सर्वात्मना युक्तो वक्ष्ये कार्यं परंतप ॥ ४२
यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रिये ।
मम तत्क्षमतां सर्वं भवान्कर्णश्च सर्वशः ॥ ४३
कर्ण उवाच ।
ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः ।
तथा नित्यं हिते युक्तो मद्रराज भवस्व नः ॥ ४४
शल्य उवाच ।
आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ ४५
यत्तु विद्वन्प्रवक्ष्यामि प्रत्ययार्थमहं तव ।

किमर्थमिति । सारथ्यमात्रं प्रतिज्ञाय प्रातिभव्यं चेत्कृष्णः कुर्यात्तर्हि त्वं युध्यन् तद्वन्मिथ्याप्रतिज्ञो न भविष्यसीति भावः ॥ २६ ॥ पदवीमानृण्यम् ॥ २७ ॥ वक्ष्ये वोढास्मि ॥ ४२ ॥

आत्म निन्दापरस्तवावपि श्रेयसां निन्द्यौ किमुतात्मपूजापरनिन्दे । तदुभयमहं करोमीति भावः ॥ ४५ ॥

आत्मनः स्तवसंयुक्तं तन्निबोध यथातथम् ॥ ४६
अहं शक्रस्य सारथ्ये योग्यो मातलिवत्प्रभो ।
अप्रमादात्प्रयोगाच्च ज्ञानविद्याचिकित्सनैः ४७
ततः पार्थेन संग्रामे युध्यमानस्य तेऽनघ ।
वाहयिष्यामि तुरगान्विज्वरो भव सूतज ॥ ४८

॥ इति श्रीमन्महाभारते कर्णपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

शल्येन सारथीभूयाधिष्ठितं रथमधिष्ठाय कर्णस्य रणाय निर्याणम् ॥ १ ॥

दुर्योधन उवाच ।
अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति ।
कृष्णादभ्यधिको यन्ता देवेशस्येव मातलिः ॥ १
यथा हरिहयैर्युक्तं संगृह्णाति स मातलिः ।
शल्यस्तथा तवाद्यायं संयन्ता रथवाजिनाम् ॥ २
योधे त्वयि रथस्थे च मद्रराजे च सारथौ ।
रथश्रेष्ठो ध्रुवं सङ्ख्ये पार्थानभिभविष्यति ॥ ३
सञ्जय उवाच ।
ततो दुर्योधनो भूयो मद्रराजं तरस्विनम् ।
उवाच राजन्संग्रामेऽध्युषिते पर्युपस्थिते ॥ ४
कर्णस्य यच्छ संग्रामे मद्रराज हयोत्तमान् ।
त्वयाऽभिगुप्तो राधेयो विजेष्यति धनंजयम् ॥ ५
इत्युक्तो रथमास्थाय तथेति प्राह भारत ।
शल्येऽभ्युपगते कर्णः सारथिं सुमनाऽब्रवीत् ॥ ६
त्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन् ॥ ७
ततो जैत्रं रथवरं गन्धर्वनगरोपमम् ।
विधिवत्कल्पितं भद्रं जयेत्युक्त्वा न्यवेदयत् ॥ ८
तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि ।
संपादितं ब्रह्मविदा पूर्वमेव पुरोधसा ॥ ९
कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम् ।
समीपस्थं मद्रराजमारोह त्वमथाब्रवीत् ॥ १०
ततः कर्णस्य दुर्धर्षं स्यन्दनप्रवरं महत् ।
आरुरोह महातेजाः शल्यः सिंह इवाचलम् ११
ततः शल्याश्रितं दृष्ट्वा कर्णः स्वं रथमुत्तमम् ।
अध्यतिष्ठद्यथाऽम्भोदं विद्युत्वन्तं दिवाकरः ॥ १२
तावेकरथमारूढावादित्याग्निसमत्विषौ ।
अभ्राजेतां यथा मेघं सूर्याग्नी सहितौ दिवि १३
संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तमौ ।
ऋत्विक्सदस्यैरिन्द्राग्नी स्तूयमानाविवाध्वरे ॥ १४
स शल्यसंगृहीताश्वे रथे कर्णः स्थितो बभौ ।
धनुर्विष्फारयन्घोरं परिवेषीव भास्करः ॥ १५
आस्थितः स रथश्रेष्ठं कर्णः शरगभस्तिमान् ।
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् ॥ १६
तं रथस्थं महाबाहुं युद्धायामिततेजसम् ।
दुर्योधनस्तु राधेयमिदं वचनमब्रवीत् ॥ १७
अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे ।
कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् ॥ १८
मनोगतं मम ह्यासीद्भीष्मद्रोणौ महारथौ ।
अर्जुनं भीमसेनं च निहन्ताराविति ध्रुवम् ॥ १९
ताभ्यां यदकृतं वीर वीरकर्म महामृधे ।
तत्कर्म कुरु राधेय वज्रपाणिरिवापरः ॥ २०
गृहाण धर्मराजं वा जहि वा त्वं धनंजयम् ।
भीमसेनं च राधेय माद्रीपुत्रौ यमावपि ॥ २१
जयश्च तेऽस्तु भद्रं ते प्रयाहि पुरुषर्षभ ।
पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ॥ २२
ततस्तूर्यसहस्राणि भेरीणामयुतानि च ।
वाद्यमानान्यरोचन्त मेघशब्दो यथा दिवि ॥ २३
प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ।

अप्रमादोऽवधानम् । प्रयोगोऽश्वप्रेरणम् । ज्ञानमागामिदोषावेक्षणम् । विद्या तत्परिहारज्ञानम् । चिकित्सनं दोषपरिहारसामर्थ्यम् ॥ ४७ ॥ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

हरिहयैरिन्द्रतुरगैर्युक्तं रथम् ॥ २ ॥ अध्युषिते प्रातःकाले ॥ ४ ॥ त्रिंशोऽध्यायः ॥ ३० ॥

अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ॥ २४
चोदयाश्वान्महाबाहो यावद्धन्मि धनंजयम् ।
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् ॥ २५
अद्य पश्यतु मे शल्य बाहुवीर्यं धनंजयः ।
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ॥ २६
अद्य क्षेप्स्याम्यहं शल्य शरान्परमतेजनान् ।
पाण्डवानां विनाशाय दुर्योधनजयाय च ॥ २७
सञ्जय उवाच ।
एतच्छ्रुत्वा वचस्तस्य शल्यः कर्णं वचोऽब्रवीत् ।
कथं नु तान्महावीर्यान्पाण्डवानवमन्यसे ॥ २८
सर्वास्त्रज्ञान्महेष्वासान्सर्वानेव महाबलान् ।
अनिवर्तिनो महाभागानजय्यान्सत्यविक्रमान् ।
अपि सञ्जनयेयुर्ये भयं साक्षाच्छतक्रतोः ॥ २
यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः ।
राधेय पार्थधनुषस्तदा नैवं वदिष्यसि ॥ ३
यदा द्रक्ष्यसि भीमेन कुञ्जरानीकमाहवे ।
विशीर्णदन्तं निहतं तदा नैवं वदिष्यसि ॥ ३
यदा द्रक्ष्यसि संग्रामे धर्मपुत्रं यमौ तथा ।
शितैः पृषत्कैः कुर्वाणानभ्रच्छायामिवाम्बरे ॥ ३
अस्यतः क्षिण्वतश्चारील्लघुहस्तान्दुरासदान् ।
पार्थिवानपि चान्यांस्त्वं तदा नैवं वदिष्यसि ॥ ३
सञ्जय उवाच ।
अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम् ।
द्रक्ष्यस्यद्येत्यवोचत्तं शल्यं कर्णो जनेश्वर ॥ ३

॥ इति श्रीमन्महाभारते कर्णपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

कर्णस्य रणप्रयाणकाले दुर्निमित्तप्रादुर्भावः ॥ १ ॥ कर्णेनात्मश्लाघनपूर्वकं पार्थवधे प्रतिज्ञाते तदसहमानेन शल्येनार्जु प्रशंसनपूर्वकं कर्णोपालम्भः ॥ २ ॥

सञ्जय उवाच ।
दृष्ट्वा कर्णं महावीर्यं युयुत्सुं समवस्थितम् ।
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः समन्ततः ॥ १
ततो दुन्दुभिनिर्घोषैर्भेरीणां निनदेन च ।
कोणशब्दैश्च विविधैर्गर्जितैश्च तरस्विनाम् ।
निर्ययुस्तावकाः सर्वे मृत्युं कृत्वा निवर्तनम् ॥ २
प्रयाते तु ततः कर्णे रथेषु मुदितेषु च ।
चचाल च मही सर्वा ररास च सुविस्वरम् ॥ ३
निःसरन्तो व्यदृश्यन्त सूर्यात्सप्त महाग्रहाः ॥ ४
उल्कापाताश्च संजज्ञुर्दिग्दाहाश्चैव दारुणाः ।
तथाऽशन्यश्च संपेतुर्ववुर्वाताश्च भैरवाः ॥ ५
मृगपक्षिगणाश्चैव पृतनां बहुशस्तव ।
अपसव्यं तदा चक्रुर्वेदयन्तो महाभयम् ॥ ६
प्रस्थितस्य च कर्णस्य निपेतुस्तुरगा भुवि ।
अस्थिवर्षं च पतितमन्तरिक्षाद्भयानकम् ॥
जज्वलुश्चैव शस्त्राणि ध्वजाश्चैव चकम्पिरे ।
अश्रूणि च व्यमुञ्चन्त वाहनानि विशांपते ॥
एते चान्ये च बहव उत्पातास्तत्र मारिष ।
समुत्पेतुर्विनाशाय कौरवाणां सुदारुणाः ॥
न च तान्गणयामासुः सर्वे दैवेन मोहिताः ।
प्रस्थितं सूतपुत्रं च जयेत्यूचुर्नराधिपाः ॥ १
'शल्येन सहितं दृष्ट्वा कर्णमाहवशोभिनम् ।'
निर्जितान्पाण्डवांश्चैव मेनिरे तत्र कौरवाः ॥ १
ततो रथस्थः परवीरहन्ता
भीष्मद्रोणावतिवीर्यौ समीक्ष्य ।
समुज्ज्वलन्भास्करपावकाभो
वैकर्तनोऽसौ रथकुञ्जरो वृषा ॥ १

---

तरस्विनामश्वादीनाम् ॥ २ ॥ ररास शब्दं चकार ॥ ३ ॥ निःसरन्तो युद्धार्थमिति शेषः । सूर्यात्सूर्यमारभ्य । सूर्यादयोऽन्योन्य युध्यन्तीत्यर्थः ॥ ४ ॥ भीष्मद्रोणौ अतिक्रान्तं वीर्यं ययोस्तावतिवीर्यौ समीक्ष्य स्वकृत्यमालोच्य जगादेत्युत्तरेण न्वयः ॥ १२ ॥

स शल्यमाभाष्य जगाद वाक्यं
पार्थस्य दृष्ट्वाऽप्रतिमं च कर्म ।
मानेन दर्पेण विदह्यमानः
क्रोधेन दीप्यन्निव निःश्वसंश्च ॥ १३
नाहं महेन्द्रादपि वज्रपाणेः
क्रुद्धाद्बिभेम्यात्तधनू रथस्थः ।
दृष्ट्वाऽपि भीष्मप्रमुखाञ्शयाना-
न्नत्वेव मां सा स्थिरता जहाति ॥ १४
महेन्द्रविष्णुप्रतिमावनिन्दितौ
रथाश्वनागप्रवरप्रमाथिनौ ।
अवध्यकल्पौ निहतौ यदा परै-
स्तथापि मे नास्ति रणेऽद्य साध्वसम् ॥ १५
समीक्ष्य सङ्ख्येऽतिबलान्नराधिपान्
ससूतमातङ्गरथान्परैर्हतान् ।
कथं न सर्वानहितान्रणेऽवधी-
न्महास्त्रविद्ब्राह्मणपुङ्गवो गुरुः ॥ १६
स संस्मरन्द्रोणमहं महाहवे
ब्रवीमि सत्यं कुरवो निबोधत ।
न वो मदन्यः प्रसहेद्रणेऽर्जुनं
समागतं मृत्युमिवोग्ररूपिणम् ॥ १७
शिक्षा प्रसादश्च बलं धृतिश्च
द्रोणे महास्त्राणि च संनतिश्च ।
स चेदगान्मृत्युवशं महात्मा
सर्वानन्यानातुरानद्य मन्ये ॥ १८
नेह ध्रुवं किंचिदपि प्रचिन्तयन्
वदामि लोके कर्मणो नित्ययोगात् ।
सूर्योदये को हि विमुक्तसंशयो
भावं कुर्वीताद्य गुरौ निपातिते ॥ १९
न नूनमस्त्राणि बलं पराक्रमः
क्रियाः सुनीतं परमायुधानि वा ।
अलं मनुष्यस्य सुखाय वर्तितुं
तथाहि युद्धे निहतः परैर्गुरुः ॥ २०
हुताशनादित्यसमानतेजसं
पराक्रमे विष्णुपुरंदरोपमम् ।
नये बृहस्पत्युशनःसमं सदा
न चैनमस्त्रं तदुपास्त दुःसहम् ॥ २१
संप्राक्रुष्टे रुदितस्त्रीकुमारे
पराभूते पौरुषे धार्तराष्ट्रे ।
कृत्यं मया नाद्य जानामि शल्य
प्रयाहि तस्माद्द्विषतामनीकम् ॥ २२
स यत्र राजा पाण्डवः सत्यसन्धो
व्यवस्थितो भीमसेनार्जुनौ च ।
स वासुदेवः सात्यकिः सृञ्जयाश्च
यमौ च कस्तान्विषहेन्मदन्यः ॥ २३
तस्मात्क्षिप्रं मद्रपते प्रयाहि
रणे पाञ्चालान्पाण्डवान्सृञ्जयांश्च ।
तान्वा हनिष्यामि समेत्य सङ्ख्ये
यास्यामि वा द्रोणमुखो यमाय ॥ २४
न त्वेवाहं न गमिष्यामि मध्ये
तेषां शूराणामिति शल्याद्य विद्धि ।
मित्रद्रोहो मर्षणीयो न मेऽयं
त्यक्त्वा प्राणाननुयास्यामि द्रोणम् ॥ २५
प्राज्ञस्य मूढस्य च जीवितान्ते
नास्ति प्रमोक्षोऽन्तकसन्निभस्य ।
अतो विद्वन्नभियोत्स्यामि पार्थं
दिष्टं न शक्यं व्यतिवर्तितुं वै ॥ २६
कल्याणवृत्तः सततं हि राजा
वैचित्रवीर्यस्य सुतो ममासीत् ।
तस्यार्थसिद्ध्यर्थमहं त्यजामि
प्रियान्भोगान्दुस्त्यजं जीवितं च ॥ २७

भाष्य संबोध्य ॥ १३ ॥ आतुरान् आसन्नमृत्यून् ॥ १८ ॥ …त्वं श्वोऽहं स्थास्यामीति निश्चयम् ॥१९॥ अस्त्रादीनि मनुष्यस्य …ाय वर्तितुं नालमिति संबन्धः ॥ २० ॥ उपास्त उपातिष्ठत । …तुमिति शेषः । अस्त्रं अस्त्रादि ॥ २१ ॥ तेषां भीष्मादीनां मध्ये न गमिष्यामीति न अपितु गमिष्याम्येवेत्यर्थः । संग्रामात्पलायने हि मित्रस्य दुर्योधनस्य द्रोहः कृतः स्यात्तच्चासह्यम् ॥ २५ ॥ जीवितान्ते आयुषः समाप्तौ । प्रमोक्षो मृत्युनिवर्तनम् ॥ २६ ॥

वैयाघ्रचर्माणमकूजनाक्षं
हैमं त्रिकोशं रजतत्रिवेणुम् ।
रथप्रवर्हं तुरगप्रवर्है-
र्युक्तं प्रादान्मह्यमिमं हि रामः ॥ २८
धनूंषि चित्राणि निरीक्ष्य शल्य
ध्वजान्गदाः सायकांश्चोग्ररूपान् ।
असिं च दीप्तं परमायुधं च
शङ्खं च शुभ्रं स्वनवन्तमुग्रम् ॥ २९
पताकिनं वज्रनिपातनिःस्वनं
सिताश्वयुक्तं शुभतूणशोभितम् ।
इमं समास्थाय रथर्षभं रणे
हठं हनिष्याम्यहमर्जुनं बलात् ॥ ३०
तं चेन्मृत्युः सर्वहरोऽभिरक्षे-
त्सदाऽप्रमत्तः समरे पाण्डुपुत्रम् ।
तं वा हनिष्यामि रणे समेत्य
यास्यामि वा द्रोणमुखो यमाय ॥ ३१
यमवरुणकुवेरवासवा वा
यदि युगपत्सगणा महाहवे ।
जुगुपुरिह समेत्य फल्गुनं
किमु बहुना सह तैर्जयामि तम् ॥ ३२

सञ्जय उवाच ।

इति रणरभसस्य कत्थत-
स्तदुपनिशम्य वचः स मद्रराट् ।
अवहसदवमन्य वीर्यवान्
प्रतिषिषिधे च जगाद चोत्तरम् ॥ ३३

शल्य उवाच ।

विरम विरम कर्ण कत्थना-
दतिरभसोऽप्यतिवाचमुक्तवान् ।
क च हि नरवरो धनंजयः
क पुनरिह त्वमहो नराधमः ॥ ३४
यदुसदनमुपेन्द्रपालितं
त्रिदिवमिवामरराजरक्षितम् ।
प्रसभमतिविलोक्य को हरे-
त्पुरुषवरावरजामृतेऽर्जुनात् ॥ ५
त्रिभुवनसृजमीश्वरेश्वरं
क इह पुमान्भवमाह्वयेद्युधि ।
मृगवधकलहे ऋतेऽर्जुनात्
सुरपतिवीर्यसमप्रभावतः ॥ ३६
असुरसुरमहोरगान्नरान्
गरुडपिशाचसयक्षराक्षसान् ।
इषुभिरजयदग्निगौरवात्
स्वभिलषितं च हविर्ददौ जयः ॥ ३७
स्मरसि ननु यदा परैर्हृतः
सह धृतराष्ट्रसुतो विमोक्षितः ।
अधिरथज नरोत्तमैर्युतान्
कुरुषु बहून्विनिहत्य तानरीन् ॥ ३८
प्रथममपि पलायिते त्वयि
प्रियकलहा धृतराष्ट्रसूनवः ।
स्मरसि ननु यदा प्रमोचिताः
खचरगणानवजित्य पाण्डवैः ॥ ३९
समुदितबलवाहनाः पुनः
पुरुषवरेण जिताः स्थ गोग्रहे ।
सगुरुगुरुसुताः सभीष्मकाः
किमु न जितः स तदा त्वयाऽर्जुनः ॥ ४०
इदमपरमुपस्थितं पुन-
स्तव निधनाय सुयुद्धमद्य वै ।
यदि न रिपुभयात्पलायसे
समरगतोऽद्य हतोऽसि सूतज ॥ ४१

सञ्जय उवाच ।

इति बहुपरुषं प्रभाषति
प्रमनसि मद्रपतौ रिपुस्तवम् ।
भृशमभिरुषितः परंतपः
कुरुपृतनापतिराह मद्रपम् ॥ ४२

---

वैयाघ्रचर्माणं व्याघ्रचर्मपरिवृतम् ॥ २८ ॥ रणरभसस्य रणोत्कटस्य ॥ ३३ ॥ अतिरभसोऽपि त्वं अतिवाचं स्वसामर्थ्याधिकाम् ॥ ३४ ॥ पुरुषवरस्य कृष्णस्यावरजां कनीयसीं सुभद्राम् ॥ ३५ ॥ खचरगणान् गन्धर्वान् ॥ ३९ ॥

कर्ण उवाच ।
भवतु भवतु किं विकत्थसे
ननु मम तस्य हि युद्धमुद्यतम् ।
यदि स जयति मामिहाहवे
तत इदमस्तु सुकत्थितं तव ॥ ४३
सञ्जय उवाच ।
एवमस्त्विति मद्रेश उक्त्वा नोत्तरमुक्तवान् ।
याहि शल्येति चाप्येनं कर्णः प्राह युयुत्सया ४४
स रथः प्रययौ शत्रूनिघ्नतः शल्यसारथिः ।
निघ्नन्नमित्रान्समरे तमोघ्नः सविता यथा ॥ ४५
ततः प्रायात्प्रीतिमान्वै रथेन
वैयाघ्रेण श्वेतयुजाऽथ कर्णः ।
स चालोक्य ध्वजिनीं पाण्डवानां
धनंजयं त्वरया पर्यपृच्छत् ॥ ४६

॥ इति श्रीमन्महाभारते कर्णपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

कर्णेन स्वस्याऽर्जुनप्रदर्शकाय तदभिमतपारितोषिकप्रदानप्रतिज्ञानम् ॥ १ ॥

सञ्जय उवाच ।
प्रयतेन तदा कर्णो हर्षयन्वाहिनीं तव ।
एकैकं समरे दृष्ट्वा पाण्डवं पर्यपृच्छत ॥ १
यो ममाद्य महात्मानं दर्शयेच्छ्वेतवाहनम् ।
तस्मै दद्यामभिप्रेतं धनं यन्मनसेच्छति ॥ २
न चेत्तदभिमन्येत तस्मै दद्यामहं पुनः ।
शकटं रत्नसंपूर्णं यो मे ब्रूयाद्धनञ्जयम् ॥ ३
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
शतं दद्यां गवां तस्मै नैत्यकं कांस्यदोहनम् ॥ ४
शतं ग्रामवरांश्चैव दद्यामर्जुनदर्शिने ।
तथा तस्मै पुनर्दद्यां श्वेतमश्वतरीरथम् ।
युक्तमञ्जनकेशीभिर्यो मे ब्रूयाद्धनञ्जयम् ॥ ५
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं वाऽस्मै पुनर्दद्यां सौवर्णं हस्तिषड्गवम् ॥ ६
तथाप्यस्मै पुनर्दद्यां स्त्रीणां शतमलंकृतम् ।
श्यामानां निष्ककण्ठीनां गीतवाद्यविपश्चिताम् ॥ ७
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
तस्मै दद्यां शतं नागाञ्शतं ग्रामाञ्शतं रथान् ॥ ८
सुवर्णस्य च मुख्यस्य हयाग्र्याणां शतं शतान् ।
ऋद्ध्या गुणैः सुदान्तांश्च धुर्यवाहान्सुशिक्षितान् ९
तथा सुवर्णशृङ्गीणां गोधेनूनां चतुःशतम् ।
दद्यां तस्मै सवत्सानां यो मे ब्रूयाद्धनञ्जयम् ॥ १०
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां श्वेतान्पञ्चशतान्हयान् ॥ ११
हेमभाण्डपरिच्छन्नान्सुमृष्टमणिभूषणान् ।
सुदान्तानपि चैवाहं दद्यामष्टादशापरान् ॥ १२
रथं च शुभ्रं सौवर्णं दद्यां तस्मै स्वलंकृतम् ।
युक्तं परमकाम्भोजैर्यो मे ब्रूयाद्धनञ्जयम् ॥ १३
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां कुञ्जराणां शतानि षट् ॥ १४
काञ्चनैर्विविधैर्भाण्डैराच्छन्नान्हेममालिनः ।
उत्पन्नानपरान्तेषु विनीतान्हस्तिशिक्षकैः ॥ १५
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां वैश्यग्रामांश्चतुर्दश ॥ १६

श्वेतयुजा श्वेताश्वयुजा ॥ ४६ ॥ एकत्रिंशोऽध्यायः ॥ ३१ ॥
अभिमन्येत अल्पमित्यवजानीत ॥ ३ ॥ अञ्जनकेशीभिः कृष्णकेशीभिरश्वतरीभिर्युवतीभिर्वा युक्तम् ॥ ५ ॥ हस्तिषड्गवं हस्तिषक्कम् षद्त्वे षड्गवजिल्पनेन षड्गवचप्रत्ययः । हस्तिषड्गवमिच्छन्ति वीराः षक्के च दन्तिनामिति प्राञ्चः । अन्यं वा सौवर्णरथमिति शेषः । हस्तितुल्याः षट् गाव उक्षाणो यस्मिन् तम् । षट्हस्तिन एव गोवत् वोढारो यस्य तादृशम् ॥ ६ ॥ श्यामानामप्रजातानाम् । निष्कमुरोभूषणम् ॥ ७ ॥ शतंशतान्दशसहस्राणि । ऋद्ध्या पुष्ट्या । सुदान्तान् विनीतान् । धुर्यवाहान् स्थोद्वहनक्षमान् ॥ ९ ॥ भाण्डमाभरणम् ॥ १२ ॥ अपरान्तेषु पश्चिमकच्छेषु ॥ १५ ॥

सुस्फीतान्धनसंयुक्तान्प्रत्यासन्नवनोदकान् ।
अकुतोभयान्सुसंपन्नान्राजभोज्यांश्चतुर्दश ॥ १७
दासीनां निष्ककण्ठीनां मागधीनां शतं तथा ।
प्रत्यग्रवयसां दद्यां यो मे ब्रूयाद्धनञ्जयम् ॥ १८
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत्स्वयम् ॥ १९
पुत्रदारान्विहायैव यदन्यद्वित्तमस्ति मे ।
तच्च तस्मै पुनर्दद्यां यद्यच्च मनसेच्छति ॥ २०
हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात्केशवार्जुनौ ॥ २१
सञ्जय उवाच ।
एता वाचः सुबहुशः कर्ण उच्चारयन्युधि ।
दध्मौ सागरसंभूतं सुस्वरं शङ्खमुत्तमम् ॥ २
ता वाचः सूतपुत्रस्य तथा युक्ता निशम्य तु
दुर्योधनो महाराज संहृष्टः सानुजोऽभवत् ॥ २
ततो दुन्दुभिनिर्घोषो मृदङ्गानां च सर्वशः ।
सिंहनादः सवादित्रः कुञ्जराणां च निःस्वनः ॥ २
प्रादुरासीत्तदा राजंस्त्वत्सैन्ये पुरुषर्षभ ।
योधानां संप्रहृष्टानां तथा समभवत्स्वनः ॥ २
तथा प्रहृष्टे सैन्ये तं प्लवमानं महारथम् ।
विकत्थमानं च तदा राधेयमरिकर्शनम् ।
मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

कर्णगर्वोक्तिमसहमानेन शल्येन तद्गर्हणम् ॥ १ ॥

शल्य उवाच ।
मा सूतपुत्र मन्येत(थाः) सौवर्णं हस्तिषड्गवम् ।
प्रयच्छसि मुधैव त्वं द्रक्ष्यस्यद्य धनञ्जयम् ॥ १
मा सूतपुत्र दानेन सौवर्णं हस्तिषड्गवम् ।
प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयम् ॥ २
बलेन मत्तस्त्यजसि वसु वैश्रवणो यथा ।
अयत्नेनैव राधेय द्रष्टास्यद्य धनञ्जयम् ॥ ३
पुरा सृजसि यच्चापि वित्तं बहु च मूढवत् ।
अपात्रदानाद्ये दोषास्तान्मोहान्नावबुध्यसे ॥ ४
यत्प्रवेदयसे वित्तं बहु तेन खलु त्वया ।
शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ॥ ५
यच्च प्रार्थयसे हन्तुं कृष्णौ मोहाद्वृथैव तत् ।
न हि शुश्रुम संमर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ ६
अप्रार्थितं प्रार्थयसे सुहृदो न हि सन्ति ते ।
ये त्वां निवारयन्त्याशु प्रपतन्तं हुताशने ॥ ७
कार्याकार्यं न जानीषे कालपक्वोऽस्यसंशयम् ।
बह्वबद्धमकर्णीयं को हि ब्रूयाज्जिजीविषुः ॥ ८
समुद्रतरणं दोर्भ्यां कण्ठे बद्ध्वा यथा शिलाम्
गिर्यग्राद्वा निपतनं तादृक्तव चिकीर्षितम् ॥
सहितः सर्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः ।
धनञ्जयेन युध्यस्व श्रेयश्चेत्प्राप्तुमिच्छसि ॥ १
हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया ।
श्रद्धस्वेदं मया प्रोक्तं यदि तेऽस्ति जिजीविषा ॥ १
कर्ण उवाच ।
स्वबाहुवीर्यमाश्रित्य प्रार्थयाम्यर्जुनं रणे ।
त्वं तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि ॥ १
न मामस्मादभिप्रायात्कश्चिदद्य निवर्तयेत् ।
अपीन्द्रो वज्रमुद्यम्य किमु मर्त्यः कथंचन ॥ १
सञ्जय उवाच ।
इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः ।
चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥ १

यदा वै त्वां फल्गुनबाहुवेगा-
ज्ज्याचोदिता वेगवन्तोऽग्निकल्पाः ।

---

प्रत्यग्रवयसामभिनवयौवनानाम् ॥ १८ ॥ प्लवमानं प्रयान्तम् ॥ २६ ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

वसु वित्तम् । द्रष्टासि द्रक्ष्यसि ॥ ३ ॥ अबद्धं अनर्थकम् अकर्णीयं अनाकर्णनीयम् ॥ ८ ॥ सहितो युध्यस्व नत्वेकाकी ॥ १

अन्वेतारः कङ्कपत्राः शिताग्रा-
स्त्यक्ष्यत्येषा त्वां तदा कर्ण बुद्धिः॥ १५
यदा दिव्यं धनुरादाय पार्थः
प्रतापयन्पृतनां सव्यसाची ।
त्वां मर्दयिष्यत्यसुखैः पृषत्कै-
स्तदापृच्छां त्यक्ष्यसे पाण्डवस्य ॥ १६
बालश्चन्द्रं मातुरङ्के शयानो
यथा कश्चित्प्रार्थयतेऽपहर्तुम् ।
तद्वन्मोहाद्द्योतमानं रथस्थं
जेतुं पार्थं काङ्क्षसे सूतपुत्र ॥ १७
हरादस्त्रं तीक्ष्णधारं यथाऽद्य
सर्वाणि गात्राणि निकर्षसि त्वम् ।
सुतीक्ष्णशस्त्रोपमकर्मणेह
युयुत्ससे फल्गुनेनाद्य कर्ण ॥ १८
हन्यादसिं तीक्ष्णधारं यथाऽतः
सुतेजनं निहितं वै पृथिव्याम् ।
तथा खनस्यद्य शितान्पृषत्का-
न्यथार्थयस्यर्जुनेनेह युद्धम् ॥ १९
त्रिशूलमाश्लिष्य सुतीक्ष्णधारं
सर्वाणि गात्राणि विघर्षसि त्वम् ।
सुतीक्ष्णधारोपमकर्मणा त्वं
युयुत्ससे योऽर्जुनेनाद्य कर्ण ॥ २०
क्रुद्धं सिंहं केसरिणं बृहन्तं
बालो मूढः क्षुद्रमृगस्तरस्वी ।
समाह्वयेद्धृष्टमुपेत्य योद्धुं
तथा त्वमद्याह्वयसे हि पार्थम् ॥ २१
मा सूतपुत्राह्वय राजपुत्रं
महावीर्यं केसरिणं यथैव ।
वने शृगालः पिशितेन तृप्तः
पार्थं समासाद्य विनङ्क्ष्यसि त्वम् ॥ २२
ईषादन्तं महानागं प्रभिन्नकरटामुखम् ।
शशको ह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ २३
बिलस्थं कृष्णसर्पं त्वं बाल्यात्काष्ठेन विध्यसि ।
महाविषं पूर्णकोपं यत्पार्थं योद्धुमिच्छसि ॥ २४
सिंहं केसरिणं क्रुद्धमभिक्रम्याभिनर्दसे ।
शृगाल इव मूढस्त्वं नृसिंहं कर्ण पाण्डवम् ॥ २५
सुपर्णं पतगश्रेष्ठं वैनतेयं तरस्विनम् ।
खगेवाह्वयसे पार्थं तथा कर्ण धनञ्जयम् ॥ २६
सर्वाम्भसां निधिं भीमं मूर्तिमन्तं झषाकुलम् ।
चन्द्रोदये विवर्धन्तमप्लवस्त्वं तितीर्षसि ॥ २७
ऋषभं दुन्दुभिग्रीवं तीक्ष्णशृङ्गं प्रहारिणम् ।
वत्स आह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ २८
महामेघं महाघोषं दर्दुरः प्रतिनर्दसि ।
बाणतोयप्रदं काले नरपर्जन्यमर्जुनम् ॥ २९
यथा च श्वा गृहस्थस्तु व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनञ्जयम् ॥ ३०
शृगालो हि वने कर्ण शशैः परिवृतो वसन् ।
मन्यते सिंहमात्मानं यावत्सिंहं न पश्यति ॥ ३१
तथा त्वमपि राधेय सिंहमात्मानमिच्छसि ।
अपश्यञ्शत्रुदमनं नरसिंहं रणेऽर्जुनम् ॥ ३२
व्याघ्रं त्वं मन्यसेऽऽत्मानं यावत्कृष्णौ न पश्यसि ।
समास्थितावेकरथे सूर्याचन्द्रमसाविव ॥ ३३
यावद्गाण्डीवघोषं त्वं न शृणोषि महाहवे ।
तावदेव त्वया कर्ण शक्यं वक्तुं यथेच्छसि ॥ ३४
रथशङ्खधनुःशब्दैर्नादयन्तं दिशो दश ।
नर्दन्तमिव शार्दूलं दृष्ट्वा क्रोष्टा भविष्यसि ॥ ३५
नित्यमेव शृगालस्त्वं नित्यं सिंहो धनञ्जयः ।
वीरप्रद्वेषणान्मूढ तस्मात्क्रोष्टेव लक्ष्यसे ॥ ३६
यथाऽऽखुः स्याद्बिडालश्च श्वा व्याघ्रश्च बलाबले ।
यथा शृगालः सिंहश्च यथा च शशकुञ्जरौ ॥ ३७
यथाऽनृतं च सत्यं च यथा चापि विषामृते ।
तथा त्वमपि पार्थश्च प्रख्यातावात्मकर्मभिः ॥ ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

झषैर्मीनैराकुलं पूर्णम् । अप्लवः बाहुभ्यामित्यर्थः ॥ २७॥ दुन्दुभिग्रीवं दुन्दुभिस्वनकण्ठम् ॥ २८ ॥ त्रयस्त्रिंशोऽध्यायः ॥३३॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

कर्णेन मर्मोद्घाटनपूर्वकं शल्यगर्हणम् ॥ १ ॥

सञ्जय उवाच ।
अधिक्षिप्तस्तु राधेयः शल्येनामिततेजसा ।
शल्यमाह सुसंक्रुद्धो वाक्शल्यमवधारयन् ॥ १
कर्ण उवाच ।
गुणान्गुणवतां शल्य गुणवान्वेत्ति नागुणः ।
त्वं तु नित्यं गुणैर्हीनः किं ज्ञास्यसि गुणागुणान् ॥ २
अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान् ।
अहं शल्याभिजानामि न त्वं जानासि तत्तथा ॥ ३
तथा कृष्णस्य माहात्म्यमृषभस्य महीक्षिताम् ।
यथाहं शल्य जानामि न त्वं जानासि तत्तथा ॥ ४
एवमेवात्मनो वीर्यमहं वीर्यं च पाण्डवे ।
जानंस्तावाह्वये युद्धे शल्य नाग्निं पतङ्गवत् ॥ ५
अस्ति चाऽयमिषुः शल्य सुपुङ्खो रक्तभोजनः ।
एकस्तूणीशयः पत्री सुधौतः समलङ्कृतः ॥ ६
शेते चन्दनचूर्णेन पूजितो बहुलाः समाः ।
आहेयो विषवानुग्रो नराश्वद्विपसङ्घहा ॥ ७
घोररूपो महारौद्रस्तनुत्रास्थिविदारणः ।
निर्भिन्द्यां येन रुष्टोऽहमपि मेरुं महागिरिम् ॥ ८
तमहं जातु नास्येयमन्यस्मिन्फल्गुनादृते ।
कृष्णाद्वा देवकीपुत्रात्सत्यं चापि शृणुष्व मे ॥ ९
तेनाहमिषुणा शल्य वासुदेवधनंजयौ ।
योत्स्ये परमसंरब्धौ तत्कर्म सदृशं मम ॥ १०
सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ।
उभयं तु समासाद्य को निवर्तितुमर्हति ॥ ११
तावेतौ पुरुषव्याघ्रौ समेतौ स्यन्दने स्थितौ ।
मामेकमभिसंयुद्धौ सुजातं पश्य शल्य मे ॥ १२
पितृष्वसामातुलजौ भ्रातरावपराजितौ ।
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ॥
अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपिध्वजौ
भीरूणां त्रासजननं शल्य हर्षकरं मम ॥
त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ।
भयावदीर्णः संत्रासादबद्धं बहु भाषसे ॥
संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ।
तौ हत्वा समरे हन्ता त्वामद्य सह बान्धवम् ॥
पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन ।
सुहृद्भूपो रिपुः किं मां कृष्णाभ्यां भीषयिष्यसि
तौ वा मामद्य हन्तारौ हनिष्ये वाऽपि तावहम्
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम्
वासुदेवसहस्रं वा फल्गुनानां शतानि वा ।
अहमेको हनिष्यामि जोषमास्स्व कुदेशज ॥
स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः
या गाथाः संप्रगायन्ति कुर्वतोऽध्ययनं यथा
ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु ॥
ब्राह्मणैः कथिताः पूर्वं यथावद्राजसन्निधौ ।
श्रुत्वा चैकमना मूढ मम वा ब्रूहि चोत्तरम् ॥
मित्रध्रुङ्मद्रको नित्यं यो नो द्वेष्टि स मद्रकः ।
मद्रके संगतं नास्ति क्षुद्रवाक्ये नराधमे ॥
दुरात्मा मद्रको नित्यं नित्यमानृतिकोऽनृजुः
यच्चान्यदपि दौरात्म्यं मद्रकेष्विति नः श्रुतम् ॥
पिता पुत्रश्च माता च श्वश्रूश्वशुरमातुलाः ।
भगिनी दुहिता भ्राता नप्ताऽन्ये ते च बान्धवाः
वयस्याभ्यागताश्चान्ये दासीदासाश्च संगताः ।
पुंभिर्विमिश्रा नार्यश्च ज्ञाताज्ञाताः स्वयेच्छया ॥
येषां गृहेष्वशिष्टानां सक्तुमद्याशिनां सदा ।
पीत्वा शीधु सगोमांसं क्रन्दन्ति च हसन्ति च ॥

आहेयः सर्पमयः ॥ ७ ॥ नास्येयं न क्षिपेयम् ॥ ९ ॥ सुजातं शोभनं जन्म ॥ १२ ॥ प्रोतौ एकसूत्रे मणीइव प्रेमसंबद्धौ ॥ १३ ॥ जोषं तूष्णीम् । आस्स्व तिष्ठ ॥ १९ ॥ क्रीडागताः लीलया आगताः ॥ २० ॥ मद्रकेषु कुत्सितेषु मद्रदेशेषु ॥ २१ ॥ क्षम वा ब्रूहि चोत्तरम् इति झ. प ॥ २२ ॥ अनृतेन चरतीत्यानृतिकः ॥ २४ ॥ पुंभिः रुषैः विमिश्राः संगताः । इच्छया मैथुनिनोऽज्ञातवत् ज्ञा अप्यविगीता इत्यर्थः ॥ २६ ॥ येषां मद्रकाणां सक्तुमिश्रित

गायन्ति चाप्यबद्धानि प्रवर्तन्ते च कामतः ।
कामप्रलापिनोऽन्योन्यं तेषु धर्मः कथं भवेत् ॥ २८
मद्रकेष्ववलिप्तेषु प्रख्याताशुभकर्मसु ।
नापि वैरं न सौहार्दं मद्रकेण समाचरेत् ॥ २९
मद्रके संगतं नास्ति मद्रको हि सदा मलः ।
मद्रकेषु च संसृष्टं शौचं गान्धारकेषु च ॥ ३०
राजयाजकयाज्ये हि यथा दत्तं हविर्नशेत् ।
शूद्रसंस्कारको विप्रो यथा याति पराभवम् ॥३१
यथा ब्रह्मद्विषो नित्यं गच्छन्तीह पराभवम् ।
यथैव संगतं कृत्वा नरः पतति मद्रकैः ॥ ३२
बालेष्वपि सदा न स्म धनं वृश्चिक ते विषम् ।
आथर्वणेन मन्त्रेण सर्वशान्तिः कृता मया ॥ ३३
इति वृश्चिकदष्टस्य विषवेगहतस्य च ।
कुर्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यते ॥ ३४
एवं विद्वञ्जोषमास्स्व ब्रूहि चात्रोत्तरं वचः ।
वासांस्युत्सृज्य नृत्यन्ति स्त्रियो मद्यविमोहिताः ॥
मैथुनेऽसंगताश्चापि यथाकामवराश्च ताः ।
तासां पुत्र कथं धर्मं मद्रको वक्तुमर्हति ॥ ३६
यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रदशेरकाः ।
तासां विभ्रष्टधर्माणां निर्लज्जानां ततस्ततः ।
त्वं पुत्रस्तादृशीनां हि धर्मं वक्तुमिहेच्छसि ॥ ३७
सौवीरकं याच्यमाना मद्रिका कर्षति स्फिचौ ।
अदातुकामा वचनमिदं वदति दारुणम् ॥ ३८
मा मां सौवीरकं कश्चिद्याचतां दयितं मम ।
पुत्रं दद्यां पतिं दद्यां न तु दद्यां सुवीरकम् ॥३९
गौर्यो बृहत्यो निर्ह्रीका मद्रिकाः कम्बलावृताः ।
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम ॥ ४०
प्रमेहित्वा स्फिचौ भूमौ घर्षन्त्यो हीनक्रोधनाः ।
शुद्धा नाद्भिर्न मृद्भिश्च नित्योच्छिष्टा भवन्ति हि ४१
एवमादि मयाऽन्यैर्वा शक्यं वक्तुं भवेद्बहु ।
आकेशान्तान्नखाग्राच्च वक्तव्येषु कुकर्मसु ॥ ४२
मद्रकाः सिन्धुसौवीरा धर्मं विद्युः कथं त्विह ।
पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः ॥४३
एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतम् ।
यदाजौ निहतः शेते सद्भिः समभिपूजितः ॥४४
आयुधानां सांपराये यन्मुच्येयमहं ततः ।
ममैष प्रथमः कल्पो निधने स्वर्गमिच्छतः ॥ ४५
सोयं प्रियसखा चास्मि धार्तराष्ट्रस्य धीमतः ।
तदर्थे हि मम प्राणा यच्च मे विद्यते वसु ॥ ४६
व्यक्तं त्वमप्युपहितः पाण्डवैः पापदेशज ।
यथा चामित्रवत्सर्वं त्वमस्मासु प्रवर्तसे ॥ ४७
कामं न खलु शक्योऽहं त्वद्विधानां शतैरपि ।
संग्रामाद्विमुखः कर्तुं धर्मज्ञ इव नास्तिकैः ॥ ४८
सारङ्ग इव घर्मार्तः कामं विलप शुष्य च ।
नाहं भीषयितुं शक्यः क्षत्रधर्मे व्यवस्थितः ॥४९
तनुत्यजां नृसिंहानामाहवेष्वनिवर्तिनाम् ।
या गतिर्गुरुणा प्रोक्ता प्रेम्णा रामेण तां स्मरे ॥५०
स्वेषां त्राणार्थमुद्यन्तं वधार्थं द्विषतामपि ।
विद्धि मामास्थितं वृत्तं पौरूरवसमुत्तमम् ॥ ५१
न तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रप ।
यो मामस्मादभिप्रायाद्वारयेदिति मे मतिः ॥ ५२
एवं विद्वञ्जोषमास्स्व त्रासात्किं बहु भाषसे ।
न त्वां हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधम ५३
मित्रप्रतीक्षया शल्य धृतराष्ट्रस्य चोभयोः ।
अपवादतितिक्षाभिस्त्रिभिरेतैर्हि जीवसि ॥ ५४
पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यसि ।

---

त्स्याशिनाम् । शीधु मद्यम् ॥ २७ ॥ मद्रकेषु संसृष्टं नष्टं एवं गान्धारकेषु शौचं नष्टं भवेत् ॥ ३० ॥ राजा याजको यस्य तस्मिन्याज्ये हविर्नष्टं भवेत् ॥ ३१ ॥ यथैवेति । यथा मद्रकैः संगतं कृत्वा पतति हेवृश्चिक तथा ते विषं हतमित्यध्याहारः । यद्येतत्सत्यं तर्हि तव विषं नश्यत्विति मन्त्रेण सर्वथा विषं नश्यतीत्यर्थः । मयेत्यात्मानुभवसिद्धमिदमिति द्योतयति ॥ ३२ ॥ ॥ ३३ ॥ यथाकामं वरयन्ति ताः । मैथुने संगता याश्च तथा कामकराश्च ह । तासां पुत्रो मम कथं मद्रको योगमर्हति । इति क. पाठः ॥ ३६ ॥ प्रमेहन्ति मूत्रयन्ते । दशेरकाः गर्दभाः । यथैवोष्ट्रा यथेळकाः इति ट. पाठः ॥ ३७ ॥ सुवीरकं काञ्जिकम् । स्फिचौ कटिप्रोथौ ॥ ३८ ॥ निर्ह्रीकाः निर्लज्जाः । घस्मराः बहुभक्षकाः ॥ ४० ॥ वक्तव्येषु गर्हणीयेषु ॥ ४२ ॥ सांपराये समूहे संग्रामे इत्यर्थः । मुच्येयं जीवितमिति शेषः ॥ ४५ ॥ उपहितः उपजप्तः ॥ ४७ ॥ सारङ्ग इव घर्मान्ते इति क. ङ. पाठः ॥ ४९ ॥ अपवादो निन्दा तितिक्षा च तैस्त्रिभिर्हेतुभिः ॥ ५४ ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

शिरस्ते पातयिष्यामि गदया वज्रकल्पया ॥५५
श्रोतारस्त्विदमद्येह द्रष्टारो वा कुदेशज ।
कर्णं वा जघ्नतुः कृष्णौ कर्णो वा निजघान तौ ॥
एवमुक्त्वा तु राधेयः पुनरेव विशांपते ।
अब्रवीन्मद्रराजानं याहियाहीत्यसंभ्रमम् ॥ ५

॥ इति श्रीमन्महाभारते कर्णपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

शल्येन कर्णप्रति हंसकाकीयाख्यानकथनम् ॥ १ ॥

सञ्जय उवाच ।
मारिषाधिरथेः श्रुत्वा वाचो युद्धाभिनन्दिनः ।
शल्योऽब्रवीत्पुनः कर्णं निदर्शनमुदाहरन् ॥ १
जातोऽहं यज्वनां वंशे संग्रामेष्वनिवर्तिनाम् ।
राज्ञां मूर्धाभिषिक्तानां स्वयं धर्मपरायणः ॥ २
यथैव मत्तो मद्येन त्वं तथा लक्ष्यसे वृष ।
तथाऽद्य त्वां प्रमाद्यन्तं चिकित्सेयं सुहृत्तया ॥ ३
इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे ।
श्रुत्वा यथेष्टं कुर्यास्त्वं निहीन कुलपांसन ॥ ४
नाहमात्मनि किंचिद्वै किल्बिषं कर्ण संस्मरे ।
येन मां त्वं महाबाहो हन्तुमिच्छस्यनागसम् ॥ ५
अवश्यं तु मया वाच्यं बुद्ध्वा तव हिताहितम् ।
विशेषतो रथस्थेन राज्ञश्चैव हितैषिणा ॥ ६
समं च विषमं चैव रथिनश्च बलाबलम् ।
श्रमः खेदश्च सततं हयानां रथिना सह ॥ ७
आयुधस्य परिज्ञानं रुतं च मृगपक्षिणाम् ।
सारं चैवाप्यसारं च शल्यानां च प्रतिक्रिया ॥ ८
अस्त्रयोगं च युद्धं च निमित्तानि तथैव च ।
सर्वमेतन्मया ज्ञेयं रथस्यास्य कुटुम्बिना ।
अतस्त्वां कथये कर्ण निदर्शनमिदं पुनः ॥ ९
वैश्यः किल समुद्रान्ते प्रभूतधनधान्यवान् ।
यज्वा दानपतिः क्षान्तः स्वकर्मस्थोऽभवच्छुचिः ॥
बहुपुत्रः प्रियापत्यः सर्वभूतानुकम्पकः ।
राज्ञो धर्मप्रधानस्य राष्ट्रे वसति निर्भयः ॥ ११
पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम् ।
काको बहूनामभवदुच्छिष्टकृतभोजनः ॥ १
तस्मै सदा प्रयच्छन्ति वैश्यपुत्राः कुमारकाः ।
मांसोदनं दधि क्षीरं पायसं मधुसर्पिषी ॥ १
स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः ।
सदृशान्पक्षिणो दृप्तः श्रेयसश्चावमन्यते ॥ १
अथ हंसाः समुद्रान्ते प्रजग्मुरतिपातिनः ।
गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः ॥ १
कुमारकास्तदा हंसान्दृष्ट्वा काकमथाब्रुवन् ।
भवानेव विशिष्टोऽसि पतत्रिभ्यो विहंगम ॥१
एतेऽतिपातिनः पश्य विहंगान्वियदाश्रितान् ।
एहि त्वमपि शक्तो हि कस्मान्न पतितं त्वया ॥ १
प्रतार्यमाणस्तैः सर्वैरल्पबुद्धिभिरण्डजः ।
तद्वचः सत्यमित्येव मौर्ख्याद्दर्पाच्च जज्ञिवान् ॥ १
तान्सोनुपत्य जिज्ञासुः क एषां श्रेष्ठभागिति ।
उच्छिष्टदर्पितः काको बहूनामेकपातिनाम् ॥१
तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् ।
स तमाह्वत दुर्बुद्धिः पताव इति पक्षिणम् ।
तच्छ्रुत्वा प्राहसन्हंसा ये तत्रासन्समागताः ॥२
भाषतो बहु काकस्य बालिश्यात्पततां वराः ।
इदमूचुः स चक्राङ्गा वचः काकं विहंगमाः ॥ २
हंसा ऊचुः ।
वयं हंसाश्चरामेमां पृथिवीं मानसौकसः ।
पक्षिणां च वयं नित्यं दूरपातेन पूजिताः ॥२

रुतं जयपराजयसूचकम् ॥ ८ ॥ निमित्तानि दिव्यान्तरिक्षभौमानि ग्रहाद्यानुकूल्यप्रातिकूल्यादीनि । निदर्शनं दृष्टान्तम् ॥ ९ ॥ अतिपातिनः गत्यतिशयगामिनः । चक्राङ्गाः मानसचारिणः ॥ १५ ॥ पतत्रिभ्योऽन्येभ्यः प्रतार्यमाणोऽन्यथाप्रलाप्यमान ॥ १६ ॥ श्रेष्ठभाक् श्रेष्ठं अग्रं भजते ॥ १९ ॥ पताव गच्छावः ॥ २० ॥

कथं हंसं नु बलिनं चक्राङ्गं दूरपातिनम् ।
काको भूत्वा निपतने समाह्वयसि दुर्मते ।
कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् ॥ २३
अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ।
प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ॥२४
काक उवाच ।
शतमेकं च पातानां पतिताऽस्मि न संशयः ।
शतयोजनमेकैकं विचित्रं विविधं तथा ॥ २५
उड्डीनमवडीनं च प्रडीनं डीनमेव च ।
निडीनमथ संडीनं तिर्यक्डीनगतानि च ॥२६
विडीनं परिडीनं च पराडीनं सुडीनकम् ।
अभिडीनं महाडीनं निर्डीनमतिडीनकम् ॥ २७
अवडीनं प्रडीनं च संडीनं डीनडीनकम् ।
संडीनोड्डीनडीनं च पुनर्डीनविडीनकम् ॥ २८
संपातं समुदीषं च ततोऽन्यद्व्यतिरिक्तकम् ।
गतागतं प्रतिगतं बह्वीश्च निकुडीनकाः ।
कर्ताऽस्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलम् २९
तेषामन्यतमेनाहं पतिष्यामि विहायसम् ।
प्रदिशध्वं यथान्यायं केन हंसाः पताम्यहम् ॥ ३०
ते वै ध्रुवं विनिश्चित्य संपतध्वं मया सह ।
पातैरेभिः खलु खगाः पतितुं खे निराश्रये ॥ ३१
एवमुक्ते तु काकेन प्रहस्यैको विहंगमः ।
उवाच काकं राधेय वचनं तन्निबोध मे ॥ ३२
हंस उवाच ।
शतमेकं च पातानां त्वं काक पतिता ध्रुवम् ।
एकमेव तु यं पातं विदुः सर्वे विहंगमाः ।
तमहं पतिता काक नान्यं जानामि कंचन ॥ ३३
काक उवाच ।
पत त्वमपि तत्राशु येन पातेन मन्यसे ॥ ३४
अथ काकं प्रजहसुर्ये तत्रासन्समागताः ।
कथमेकेन पातेन हंसः पातशतं जयेत् ।
एकेन वायस त्वैनं पातेनाभिभविष्यति ॥ ३५
हंसश्चोत्पतितः काको बलवानाशुविक्रमः ।
प्रपेततुः स्पर्धया च ततस्तौ हंसवायसौ ।
उपर्युपरि वेगेन समुद्रं मकरालयम् ॥ ३६
हंसस्त्वेकेन पातेन काकः पातशतेन च ।
स्पर्धिनौ सहितौ तूर्णं खमास्थाय तरस्विनौ ॥ ३७
हंसस्तु मृदुनैकेन विक्रान्तुमुपचक्रमे ।
पूर्वमेव तु वै काकः स तं तूर्णं प्रचक्रमे ॥ ३८
नात्यहीयत काकश्च मुहूर्तमिव सूतज ॥ ३९
काकोपि हंसं चापल्याच्छीघ्रतां प्रतिदर्शयन् ।
वेगेनातीत्य तरसा पुनरेति मुहुर्मुहुः ॥ ४०
तुण्डेनाभ्यहनच्चैनं कुर्वन्नामापसव्यतः ।
रोरूयन्निव चाप्येनं समाह्वयति वै मुहुः ।
विसिस्रापयिषुः पातैर्दर्शयन्नात्मनः क्रियाम् ४१
अथ तानि विचित्राणि पतितानीतराणि च ।
दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैः स्वरैः ॥ ४२
हंसाश्चापहसन्ति स्म प्रवदन्ति प्रियाणि च ।
कुर्वाणा विविधान्रावानिच्छन्तो जयमात्मनः ४३
उत्पत्योत्पत्य च प्राहुर्मुहूर्तमिति चेति च ।
वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतन्त्युत्पतन्ति च ॥४४
अवमत्य च हंसं तमिदं काकोऽब्रवीद्वचः ।
योऽसावुत्पतितो हंसः सोऽसावेव प्रहीयते ॥४५
अथ हंसस्तु तच्छ्रुत्वा भाषितं पततांवरः ।
विगाह्य हंसो विक्षोभ्य प्रापतत्पश्चिमां दिशम् ४६
उपर्युपरि वेगेन सागरं मकरालयम् ।
बहुसत्वसमाकीर्णं वीचीभिर्भीमदर्शनम् ॥ ४७
अथाचिरेण राधेय काको वेगादहीयत ।
ततोऽतीव परिश्रान्तः कथंचिद्धंसमन्वगात् ॥ ४८
भीश्चैनमाविशत्तीव्रं काकं कर्ण विचेतसम् ।
द्वीपान्द्रुमान्वितान्पश्यन्विश्रमार्थं श्रमातुरः ।
निपतेयं क्व नु श्रान्त इति तस्मिञ्जलार्णवे ॥ ४९
अवगाह्य समुद्रोऽपि बहुसत्वगणालयः ।
महान्भूतशतोद्भासी नभसस्तु विशिष्यते ॥ ५०
गाम्भीर्याद्धि समुद्रस्य न विशेषं कुलाधम ।
दिशश्च नाम्भसां कर्ण समुद्रस्था विदुर्जनाः ।

मिषतां पश्यताम् ॥ २९ ॥ केन पातेन ॥ ३० ॥ एकं मुख्यम् ॥ ३३ ॥ कथमेकेन पातेन जयेम शतपातिनम् । एकेनैव स यात्वेनं पातेनाभिविष्यसि इति ट. पाठः ॥ ३५ ॥ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

विपश्चितोप्यपारत्वात्किं पुनः कर्ण वायसः ॥५१
अथ हंसोप्यतिक्रामन्मुहूर्तमिव दूरतः ।
अतिक्रम्य च चक्राङ्गः काकं तं समुदैक्षत ॥ ५२
शनकैः परिहीनं तं परिश्रान्तमचेतसम् ।
अवेक्षमाणस्तं काकं प्रत्यागम्य हसन्निव ॥ ५३
तं प्रहस्य च चक्राङ्गः काकं मन्दगतिं तदा ।
हीयमानमथो दृष्ट्वा हंसः प्राह यथार्थवत् ।
उज्जिहीर्षुर्निमज्जन्तं स्मरन्सत्पुरुषव्रतम् ॥ ५४
बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः ।
पतस्यव्याहरन्खेदं ततो गर्ह्यं प्रभाषसे ॥ ५५
किं नाम पतितं काक यत्त्वं पतसि सांप्रतम् ।
जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनःपुनः ॥ ५६
प्रब्रूहि कतमोऽयं ते पातो वर्तति वायस ।
एह्येहि काक शीघ्रं त्वमेष त्वां परिपालये ॥ ५७
स पक्षाभ्यां स्पृशन्नार्तस्तुण्डेन च जलं तदा ।
काको दृढं परिश्रान्तः सहसा निपपात ह ॥ ५८
सागराम्भसि तं दृष्ट्वा पतन्तं दीनचेतसम् ।
म्रियमाणमिदं वाक्यं हंसः काकमुवाच ह ॥ ५९
शतमेकं च पातानां पताम्यहमिति स ह ।
श्लाघन्नात्मानमद्य त्वं काक भाषितवानसि ॥ ६०
स त्वमेकशतं पातं पतन्नभ्यधिको मया ।
कथमेवं परिश्रान्तः पतितोऽसि महार्णवे ॥ ६१
प्रत्युवाच ततः काकः सीदमान इदं वचः ।
उपरीतं तदा हंसं प्रसमीक्ष्य प्रसादयन् ॥ ६२
उच्छिष्टान्नेन पुष्टोऽहं दर्पोत्सिक्तः कुसत्वतः ।
सुपर्ण इव चात्मानं ज्ञातवान्पुत्रलाघवात् ॥ ६३
शरणं त्वां प्रपन्नोऽहमुदकान्तमवाप्नुयाम् ।
हंसेदानीं परिश्रान्तमापदो मां समुद्धर ॥ ६४
यदि नाम पुनर्जीवन्गच्छेयं स्वं निवेशनम् ।
नैनं पुनर्हीनमपि क्षेप्ताऽहं खे विचारिणम् ॥ ६५
तमेवं करुणं दीनं विलपन्तमचेतसम् ।
काककाकेति वाशन्तं निमज्जन्तं महार्णवे ।
कृपयाऽभिपरीतो वै कृपां चक्रे दुरात्मनि ॥ ६६
अथ तं पततं दीनं जलक्लिन्नमचेतनम् ।
पद्भ्यामुत्क्षिप्य वेपन्तं पृष्ठमारोपयत्तदा ॥ ६७

स हंसः पृष्ठमारोप्य काकं कर्ण विचेतसम् ।
अविसर्यंस्तदा कर्ण पुनरेव समानयत् ।
तमेव देशं तरसा स्पर्धया पेततुर्यतः ॥ ६
उत्सृज्य त्वब्रवीन्मैवं पुनः कार्यं त्वयेति ह ।
स्थाप्य चैनं पुनर्द्वीपे समाश्वस्य च विक्लवम् ।
गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥ ६
एवमुच्छिष्टपुष्टः स काकोऽहंसपराजितः ।
बलं वीर्यं महत्कर्ण त्यक्त्वा क्षान्तिमुपागतः ॥७
उच्छिष्टभोजनः काको यथा वैश्यकुले पुरा ।
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः ॥ ७
सदृशाञ्श्रेयसश्चापि सर्वान्कर्णावमन्यसे ।
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः ॥ ७
विराटनगरे पार्थमेकं किं नावधीस्तदा ।
यत्र व्यस्ताः समस्ताश्च निर्जिताः स्थ किरीटिना
सृगाला इव सिंहेन क्व ते वीर्यं तदा गतम् ॥७
भ्रातरं निहतं दृष्ट्वा समरे सव्यसाचिना ।
पश्यतां कुरुवीराणां प्रथमं त्वं पलायितः ॥७
तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुतान् ।
कुरून्सदारानुत्सृज्य त्वमेवाग्रे पलायितः ॥ ७
हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान्रणे ।
कर्ण दुर्योधनं पार्थः सभ्रातृकममोक्षयत् ॥ ७
पुनः प्रभावः पार्थस्य पुराणः केशवस्य च ।
कथितः कर्ण रामेण सभायां कुरुसंसदि ॥ ७
सततं च त्वमश्रौषीर्वचनं द्रोणभीष्मयोः ।
अवध्यौ वदतोः कृष्णौ सन्निधौ च महीक्षिताम् ७८
कियन्तं तत्र वक्ष्यामि येनयेन धनञ्जयः ।
त्वत्तोऽतिरिक्तः सर्वेभ्यो भूतेभ्यो ब्राह्मणो यथा।
इदानीमेव द्रष्टासि प्रधाने स्यन्दने स्थितौ ।
पुत्रं च वसुदेवस्य कुन्तीपुत्रं च पाण्डवम् ॥८
यथाऽश्रयत चक्राङ्गं वायसो बुद्धिमास्थितः ।
तथाश्रयस्व वार्ष्णेयं पाण्डवं च धनञ्जयम् ॥ ८१
यदा त्वं युधि विक्रान्तौ वासुदेवधनञ्जयौ ।
द्रष्टास्येकरथे कर्ण तदा नैवं वदिष्यसि ॥ ८२
यदा शरशतैः पार्थो दर्पं तव वधिष्यति ।
तदा त्वमन्तरं द्रष्टा आत्मनश्चार्जुनस्य च ॥ ८३

देवासुरमनुष्येषु प्रख्यातौ यौ नरोत्तमौ ।
तौ मावमंस्था मौर्ख्यात्त्वं खद्योत इव रोचनौ ॥८४
सूर्याचन्द्रमसौ यद्वत्तद्वदर्जुनकेशवौ ।
प्राकाश्येनाभिविख्यातौ त्वं तु खद्योतवन्नृषु ८५
एवं विद्वन्मावमंस्थाः सूतपुत्राच्युतार्जुनौ ।
नरसिंहौ नरश्वा त्वं जोषमास्स्व विकत्थसे ॥८६

॥ इति श्रीमन्महाभारते कर्णपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

कर्णेन शल्यंप्रति स्वस्य परशुरामात् तथा कुतश्चिद्ब्राह्मणाच्च शापप्राप्तिकथनम् ॥ १ ॥

सञ्जय उवाच ।
मद्राधिपस्याधिरथिर्महात्मा
वचो निशम्याप्रियमप्रतीतः ।
उवाच शल्यं विदितं ममैत-
द्यथाविधावर्जुनवासुदेवौ ॥ १
शौरे रथं वाहयतोऽर्जुनस्य
बलं महास्त्राणि च पाण्डवस्य ।
अहं विजानामि यथावदद्य
परोक्षभूतं तव तत्तु शल्य ॥ २
तौ चाप्यहं शस्त्रभृतां वरिष्ठौ
व्यपेतभीर्योधयिष्यामि कृष्णौ ।
संतापयत्यभ्यधिकं हि रामा-
च्छापोऽद्य मां ब्राह्मणसत्तमाच्च ॥ ३
'पुरा महेन्द्राद्रिवरे समुद्रे
तपस्विनं राममुपेत्य शल्य ।
अस्त्रार्थिनं माऽद्य शिष्यं गृहाणे-
त्यथाऽब्रुवं ब्राह्मणच्छद्मना च ॥ ४
तत्रावसं ब्राह्मण इत्यविप्रो
ब्रह्मास्त्रलोभादनृतेन चाहम् ।
तज्जामदग्न्येन परं महास्त्रं
समन्त्रयुक्तं विहितं ममासीत् ॥ ५
अस्त्रं यदा तद्विदितं ममासी-
त्तदाऽब्रवीद्ब्राह्मणो मां महर्षिः ।
आपद्गतेनास्त्रमिदं प्रयोज्यं
त्वया रणे गच्छता साधयेति ॥' ६
तत्रापि मे देवराजेन विघ्नो
हितार्थिना फल्गुनस्यैव शल्य ।
कृतो विभेदेन ममोरुमेत्य
प्रविश्य कीटस्य तनुं विरूपाम् ॥ ७
ममोरुमेत्य प्रबिभेद कीटः
सुप्ते गुरौ तत्र शिरो निधाय ।
ऊरुप्रभेदाच्च महान्बभूव
शरीरतो मे घनशोणितौघः ॥ ८
गुरोर्भयाच्चापि न चेलिवानहं
ततो विबुद्धो ददृशे स विप्रः ।
स धैर्ययुक्तं प्रसमीक्ष्य मां वै
न त्वं विप्रः कोऽसि सत्यं वदेति ॥ ९
तस्मै तदाऽऽत्मानमहं यथाव-
दाख्यातवान्सूत इत्येव शल्य ।
स मां निशाम्याथ महातपस्वी
संशप्तवान्रोषपरीतचेताः ॥ १०
सूत त्वया ह्याप्तमिदं तवास्त्रं
न कर्मकाले प्रतिभास्यतीति ।
अन्यत्र तु स्यात्तव मृत्युकाला-
दब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् ॥ ११
तदद्य पर्याप्तमतीव मेऽस्त्र-
मुपस्थितेऽस्मिंस्तुमुले विमर्दे ॥ १२
शल्योग्रधन्वानमहं वरिष्ठं
तरस्विनं भीममसह्यवीर्यम् ।
सत्यप्रतिज्ञं युधि पाण्डवेयं
धनञ्जयं मृत्युमुखं नयिष्ये ॥ १३

चेलिवान् चलितवान् ॥ ९ ॥

कर्मकाले स्वप्रतिज्ञारक्षणकाले ॥ ११ ॥

अस्त्रं ततोऽन्यत्प्रतिपन्नमद्य
येन क्षेप्स्ये समरे शत्रुपूगान् ।
प्रतापिनं बलवन्तं कृतास्त्रं
तमुग्रधन्वानममितौजसं च ।
क्रूरं शूरं रौद्रममित्रसाहं
धनञ्जयं संयुगेऽहं हनिष्ये ॥ १४
अपांपतिर्वेगवानप्रमेयो
निमज्जयिष्यन्बहुलाः प्रजा इव ।
महारवं यः कुरुते समुद्रो
वेलेव तं वारयाम्यप्रमेयम् ॥ १५
प्रमुञ्चन्तं बाणसङ्घानमेया-
न्मर्मच्छिदो वीरहणः सुपत्रान् ।
कुन्तीपुत्रं प्रतियोत्स्यामि युद्धे
ज्यां कर्षतामुत्तमं मर्त्यलोके ॥ १६
एवं बलेनातिबलं महास्त्रं
समुद्रकल्पं सुदुरापमुग्रम् ।
शरौघिणं पार्थिवान्मज्जयन्तं
वेलेव पार्थमिषुभिर्वारयिष्ये ॥ १७
कृती कृतास्त्रो दृढहस्तयोधी
दिव्यास्त्रविच्छ्वेतहयः प्रमाथी ।
सुरासुरान्युधि वै यो जयेत
तेनाद्य मे पश्य युद्धं सुघोरम् ॥ १८
अभीमानी पाण्डवो युद्धकामो
ह्यमानुषैरस्यति मां महास्त्रैः ।
तस्यास्त्रमस्त्रैरभिभूय सङ्ख्ये
बाणोत्तमैः पातयिष्यामि पार्थम् ॥ १९
सहस्ररश्मिप्रतिमं ज्वलन्तं
दिशश्च सर्वाः प्रतपन्तमुग्रम् ।
तमोनुदं मेघ इवातिमात्रं
धनञ्जयं छादयिष्यामि बाणैः ॥ २०
वैश्वानरं धूमकेतुं ज्वलन्तं
तेजस्विनं नरवीरान्दहन्तम् ।
पर्जन्यभूतः शरवर्षैर्यथाऽग्निं
तथा पार्थं शमयिष्यामि युद्धे ॥ २१
आशीविषं दृष्टिहणं सुघोरं
सुतीक्ष्णदंष्ट्रं ज्वलनप्रभावम् ।
क्रोधात्प्रदीप्तानलवद्दहन्तं
कुन्तीपुत्रं शमयिष्यामि भल्लैः ॥ २२
प्रवाहिणं बलवन्तं महौजसं
प्रभञ्जनं मातरिश्वानमुग्रम् ।
युद्धे सहिष्ये हिमवानिवाचलो
धनञ्जयं क्रुद्धममृष्यमाणम् । २३
विशारदं रथमार्गेषु शक्तं
धुर्यं नित्यं समरेषु प्रवीरम् ।
लोके वरं सर्वधनुर्धराणां
धनञ्जयं संयुगेऽहं हनिष्ये ॥ २४
अद्याहवे यस्य न तुल्यमन्यं
मन्ये मनुष्यं धनुराददानम् ।
सर्वामिमां यः पृथिवीं सहेत
तथापि तेनाद्य रणे समेष्ये ॥ २५
यः सर्वभूतानि सदैवतानि
प्रस्थेऽजयत्खाण्डवे सव्यसाची ।
को जीवितं रक्षमाणो हि तेन
युयुत्सतेऽस्त्रैर्मानुषो मामृतेऽन्यः ॥ २६
मानी कृतास्त्रः कृतहस्तयोधी
दिव्यास्त्रविच्छ्वेतहयः प्रमाथी ।
तस्याहमद्यातिरथस्य काया-
च्छिरो हरिष्यामि शितैः पृषत्कैः ॥ २७
योत्स्याम्येनं शल्य धनञ्जयं वै
मृत्युं पुरस्कृत्य रणे जयं वा ।
अन्यो हि मे ह्येकरथेन मर्त्यो
युध्येत यः पाण्डवमिन्द्रकल्पम् ॥ २८
तस्याहवे पौरुषं पाण्डवस्य
ब्रूयां पृष्टः समितौ क्षत्रियाणाम् ।

अस्त्रं ततो रामदत्तादस्त्रादन्यत्प्रतिपन्नं प्राप्तं अहिबाणाख्यमित्यर्थः ॥ १४ ॥ रथमार्गेष्वसक्तं इति ट. पाठः । रथमार्गेष्वनित्यं इति ख. पाठः ॥ २४ ॥ खाण्डवे खाण्डवदाहे ॥ २६ ॥

किं त्वं मूर्खः प्रहसन्मूढचेता
आख्यासि मे पौरुषं फल्गुनस्य ॥ २९
अत्यप्रियो यः पुरुषो निष्ठुरो हि
क्षुद्रः क्षेप्ता क्षमिणश्चाक्षमावान् ।
हन्यामहं त्वादृशानां शतानि
क्षमाम्यहं क्षमिणां काल एषः ॥ ३०
अवोचस्त्वं पाण्डवार्थे प्रियाणि
प्रधर्षयन्मां मूढवत्पापकर्मन् ।
मय्यार्जवे जिह्मतिर्यतस्त्वं
मित्रद्रोही साप्तपदं हि मित्रम् ॥ ३१
कालस्त्वयं प्रत्युपयाति दारुणो
दुर्योधनो युद्धमुपागमद्यत् ।
तस्यार्थसिद्धिं त्वभिकाङ्क्षमाण-
स्तमन्वेष्ये यत्र चैकान्तमस्ति ॥ ३२
'तथाप्यहं पाण्डववासुदेवौ
योत्स्ये रणे मद्विधस्यैव कर्म ।
न प्राकृतः सजते वै कदाचि-
द्यः प्रत्युदीयात्कृष्णधनञ्जयौ तौ ॥' ३३
मित्रं मिन्देर्नन्दतेः प्रीयतेर्वा
संत्रायतेर्मिनुतेर्मोदतेर्वा ।
दुर्योधने सर्वमिदं ममास्ति
तच्चापि सर्वं मम वेत्ति राजा ॥ ३४
शत्रुः शदेः शासतेर्वा श्यतेर्वा
शृणातेर्वा श्वसतेः सीदतेर्वा ।
श्रमेः शुचो बहुशः सूदतेश्च
प्रायेण सर्वं त्वयि तच्च मह्यम् ॥ ३५
दुर्योधनार्थं तव च प्रियार्थं
यशोर्थमात्मार्थमपीश्वरार्थम् ।
तस्मादहं पाण्डववासुदेवौ
योत्स्ये यत्नात्कर्म च पश्य मेऽद्य ॥ ३६
'शल्याद्याहं संगतः पाण्डवेन
मुच्येयं चेज्जीवमानः कथंचित् ।
शश्वन्मृत्योः स्यामनाधृष्यरूपो
व्यक्तं तस्मात्संयुगाद्विप्रमुक्तः ॥' ३७
अस्त्रं ब्राह्मं मनसा संजपन्वै
यदाऽस्यते क्रोधितः सव्यसाची ।
तदापि मे नैव मुच्येत पार्थो
न चेत्पतेद्विषमे मेऽद्य चक्रम् ॥ ३८
अस्त्राणि विद्धा समरे गतानि
ब्राह्माणि दिव्यान्यथ मानुषाणि ।
आसादयिष्याम्यहमुग्रवीर्यं
नागोत्तमं नाग इव प्रभिन्नः ॥ ३९
वैवस्वताद्दण्डहस्ताद्वरुणाद्वापि पाशिनः ।
सगदाद्वा धनपतेः सवज्राद्वा सुराधिपात् ॥ ४०
अथान्यस्मादपि सुरादमित्रादाततायिनः ।
इति शल्य विजानीहि यथा नाहं बिभेम्युत ॥ ४१
'तस्मान्न मे भयं पार्थान्नापि चैव जनार्दनात् ।
सह युद्धं हि मे ताभ्यां सांपराये भविष्यति ॥ ४२
श्वभ्रे ते पततां चक्रमिति मां ब्राह्मणोऽब्रवीत् ।
युध्यमानस्य संग्रामे प्राप्तस्यैकायनं भयम् ॥ ४३
तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहम् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ४४
कदाचिद्ब्राह्मणस्याथ योग्यहेतेरहं नृप ।
अजानन्नक्षिपं बाणं घोररूपं भयावहम् ॥ ४५
होमधेन्वास्ततो वत्सः प्रमत्त इषुणा हतः ।
चरन्वै विजने शल्य ततोऽनु व्याजहार सः ॥ ४६

आर्जवे कर्तव्ये सति ॥ ३१ ॥ अहं सिद्धिं काङ्क्षमाणोऽस्मि । त्वं तु तन्मन्यसे यत्र ऐकान्त्यं सख्यं नास्ति । अस्मत्पक्षीयोप्यन्यत्र स्नेहवानसीत्यर्थः । तदेवाह मित्रमिति । मिन्दयति मेदयति वा स्नेहार्थान्मिन्देर्मिदेर्वा मित्रमिति रूपम् । नन्दतेरित्यत्र मदतेरिति पाठः । मदी हर्षे इत्यस्य वा रूपम् । मादयति तर्पयतीति वा मादयतेर्मित्रम् । मिदतेस्त्राणार्थस्य वा मिदेरिदं रूपम् । नन्दयतेः प्रीयतेः संत्रायतेर्वाऽर्थे वर्तमानस्य मिदेर्मित्रमिति वार्थः । मिनुते मानं करोति सर्वं हितमस्य संगृह्णातीति वा मोदतेऽस्य सुखेनेति वा मित्रमित्येतेऽर्थाः मयि सन्तीत्यर्थः ॥ ३४ ॥ शत्रुरिति शदेः शातनार्थात् शास्तेः शासनार्थात् श्यतेस्तनूकरणार्थात् शृणातेर्हिंसार्थात् श्वसतेरुच्छ्वासार्थादन्तर्भावितण्यर्थात् सीदतेः सूदतेर्वा दन्त्यस्थाने तालव्यस्योपसर्जनात् शत्रुरिति शब्द उत्पन्नस्तदर्थश्च सर्वेस्त्वय्यस्तीत्यर्थः ॥ ३५ ॥ सोमराजानः ब्राह्मणाः ॥ ४४ ॥

यस्माद्वत्सस्त्वया चात्र होमधेन्वा हतो नृप ।
तस्मात्त्वमपि राधेय वाक्शल्यं महदाप्नुहि ॥ ४७
श्वभ्रे ते पतिता चक्रं युध्यमानस्य शत्रुणा ।
प्राप्त एकायने काले मृत्युसाधारणे त्वयि ॥ ४८
स्पर्धसे येन संग्रामे यदर्थं घटसेऽनिशम् ।
तत एव ध्रुवं मृत्युं सूत प्राप्स्यसि संयुगे ॥ ४९
अहं प्रसादयांचक्रे ब्राह्मणं संशितव्रतम् ॥ ५०
गवां दशशतं वित्तं बलीवर्दांश्च षट्शतम् ।
प्रच्छन्नं काञ्चनैः कामं ब्राह्मणार्थमहं तदा ॥ ५१
दासीशतं निष्ककण्ठं शतमश्वतरीरथान् ।
कन्यानां निष्ककण्ठीनां सहस्रं समलंकृतम् ॥ ५२
ईषादन्तान्नागशतान्दासीदासशतानि च ।
ददौ तैर्द्विजमुख्यो मे प्रसादं न चकार सः ॥ ५३
कृष्णानां श्वेतवत्सानां गोशतानि चतुर्दश ।
ददन्हि न लभे तस्मात्प्रसादं द्विजसत्तमात् ॥ ५४
यत्किंचिन्मामकं वित्तं त्वदधीनं करोमि तत् ।
इति मां याचमानं वै ब्राह्मणः प्रत्यवारयत् ।
क्रोधदीप्तेक्षणः शल्य निर्दहन्निव चक्षुषा ॥ ५५
व्याहृतं यन्मया सूत तत्तथा न तदन्यथा ।
अनृतोक्तं प्रजां हन्यात्ततः पापमवाप्नुयाम् ॥ ५६
तस्माद्धर्माभिरक्षार्थं नानृतं वक्तुमुत्सहे ।
मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया ५७
मद्वाक्यं नानृतं लोके कश्चित्कुर्यात्समाप्नुहि ।
'यन्मयोक्तं सरोषेण गच्छ सूतज माचिरम् ॥ ५८
इति मामसकृत्क्रुद्धः स उवाच द्विजोत्तमः ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ५९
नाहं बिभेमि बीभत्सोर्न शल्य मधुसूदनात् ।
तस्माद्बिभेम्यहं शापात्तेन सत्येन ते शपे ॥ ६०
सह युद्धं समेताभ्यामद्येदं समुपस्थितम् ।
युद्धेऽसिञ्जीवितं मेऽद्य शल्य संशयमागतम् ॥ ६१
शक्रोऽप्यमरराट् ताभ्यामुपगम्याहवं सह ।
संशयं परमं गच्छेत्कथं वा मन्यते भवान् ॥ ६२
इत्येवं ते मयाऽऽख्यातं क्षिप्तेन न सुहृत्तया ।
जानामि त्वाऽधिक्षिपन्तं दोषमात्मगतं शृणु ॥' ६३

इति श्रीमन्महाभारते कर्णपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

कर्णेन सोपहासं शल्यगर्हणम् ॥ १ ॥

सञ्जय उवाच ।
ततः पुनर्महाराज मद्रराजमरिंदमः ।
अभ्यभाषत राधेयः संनिवार्योत्तरं वचः ॥ १
निर्भर्त्सनार्थं शल्य त्वं यत्तु जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे ॥ २
यदि मां देवताः सर्वा योधयेयुः सवासवाः ।
तथापि मे भयं न स्यात्किमु पार्थात्सकेशवात् ॥ ३
नाहं भीषयितुं शक्यः शुद्धकर्मा महाहवे ।
अभिजानीहि शक्तस्त्वमन्यं भीषयितुं रणे ॥ ४
नीचस्य बलमेतावत्पारुष्यं यत्त्वमात्थ माम् ।
अशक्तो हि गुणान्वक्तुं वल्गसे बहु दुर्मते ॥ ५
न हि कर्णः समुद्भूतो भयार्थमिह मद्रक ।
विक्रमार्थमहं जातो यशोर्थं च तथाऽऽत्मनः ॥ ६
सखिभावेन सौहार्दान्मित्रभावेन चैव हि ।
कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि सांप्रतम् ॥ ७
राज्ञश्च धार्तराष्ट्रस्य कार्यं सुमहदुद्यतम् ।
मयि तच्चाहितं शल्य तेन जीवसि मे क्षणम् ॥ ८
कृतश्च समयः पूर्वं क्षन्तव्यं विप्रियं तव ।
'समयः परिपाल्यो मे तेन जीवसि सांप्रतम् ॥' ९
ऋते शल्यसहस्रेण विजयेयमहं परान् ।

मा त्वं ब्राह्मणगर्हः स्याः इति क. पाठः ॥ ५७ ॥ तदनु-व्याहृतं कुर्यात्सर्वलोकेपि सूतज इति ख. पाठः । नैतत्ते व्याहृतं कुर्यां सममेकोऽपि सूतज इति क. ङ. पाठः । नैतद्व्याहृतं कुर्यात्सर्वलोकोऽपि सूतज इति ट. पाठः ॥ ५८ ॥ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

एतदेव त्रयं व्याचष्टे राज्ञश्चेत्यादिना ॥ ८ ॥

मित्रद्रोहंस्तु पापीयानिति जीवसि सांप्रतम् ॥ १०
शल्य उवाच ।
आर्तप्रलपांस्त्वं कर्ण यान्ब्रवीषि परान्प्रति ।
न ते कर्णसहस्रेण शक्या जेतुं परे युधि ॥ ११
सञ्जय उवाच ।
तथा ब्रुवन्तं परुषं कर्णो मद्राधिपं तदा ।
परुषं द्विगुणं भूयः प्रोवाचाप्रियदर्शनम् ॥ १२
इदं त्वमेकाग्रमनाः शृणु मद्रजनाधिप ।
संनिधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतम् ॥ १३
देशांश्च विविधांश्चित्रान्पूर्ववृत्तांश्च पार्थिवान् ।
ब्राह्मणाः कथयन्ति स्म धृतराष्ट्रनिवेशने ॥ १४
तत्र वृद्धः पुरावृत्ताः कथाः कश्चिद्द्विजोत्तमः ।
बाह्लीकदेशं मद्रांश्च कुत्सयन्वाक्यमब्रवीत् ॥ १५
बहिष्कृता हिमवता गङ्गया च तिरस्कृताः ।
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ॥ १६
पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः ।
तान्धर्मबाह्यानशुचीन्बाह्लीकानपि वर्जयेत् ॥ १७
गोवर्धनो नाम वटः सुभाण्डं नाम पत्तनम् ।
एतद्राजन्कलिद्वारमाकुमारात्स्मराम्यहम् ॥ १८
कार्येणात्यर्थगूढेन बाह्लीकेषूषितं मया ।
तत एषां समाचारः संवासाद्विदितो मया ॥ १९
शाकलं नाम नगरमापगानामनिम्नगा ।
चण्डाला नाम बाह्लीकास्तेषां वृत्तं सुनिन्दितम् २०
पानं गुडासवं पीत्वा गोमांसं लशुनैः सह ।
अपूपसक्तुमद्यानामाशिताः शीलवर्जिताः ॥ २१
गायन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः ।
नगरापणवेशेषु बहिर्माल्यानुलेपनाः ॥ २२
मत्ताः प्रगीतविरुतैः खरोष्ट्रनिनदोपमैः ।
अनावृता मैथुने ताः कामचाराश्च सर्वशः ॥ २३
आहुरन्योन्यसूक्तानि प्रब्रुवाणा मदोत्कटाः ।
हेहते हेहतेत्येवं स्वामिभर्तृहतेति च ॥ २४
आक्रोशन्त्यः प्रनृत्यन्ति व्रात्याः पर्वस्वसंयताः ।
तासां किलावलिप्तानां निवसन्कुरुजाङ्गले ॥ २५
कश्चिद्बाह्लीकदुष्टानां नातिहृष्टमना जगौ ।
सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी ॥ २६
मामनुस्मरती शेते बाह्लीकं कुरुवासिनम् ।
शतद्रुं नु कदा तीर्त्वा तां च रम्यामिरावतीम् ।
गत्वा स्वदेशं द्रक्ष्यामि स्थूलजङ्घाः शुभाः स्त्रियः ॥
मनःशिलोज्ज्वलापाङ्ग्यो गौर्यस्ताः काकुकूजिताः ।
कम्बलाजिनसंवीता रुदन्त्यः प्रियदर्शनाः ॥ २८
मृदङ्गानकशङ्खानां मर्दलानां च निःस्वनैः ।
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम् ॥ २९
शमीपीलुकरीराणां वनेषु सुखवर्त्मसु ।
अपूपान्सक्तुपिण्डांश्च प्राश्नन्तो मथितान्वितान् ॥
पथिषु प्रबलो भूत्वा तथा संपततोऽध्वगान् ।
चेलापहारं कुर्वाणास्ताडयिष्याम भूयसः ॥ ३१
एवंशीलेषु व्रात्येषु बाह्लीकेषु दुरात्मसु ।
कश्चेतयानो निवसेन्मुहूर्तमपि मानवः ॥ ३२
कर्ण उवाच ।
ईदृशा ब्राह्मणेनोक्ता बाह्लीका मोघचारिणः ।
येषां षड्भागहर्ता त्वमुभयोः पुण्यपापयोः ॥ ३३
इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान् ।
बाह्लीकेष्वविनीतेषु प्रोच्यमानं निबोध तत् ॥ ३४
तत्र स्म राक्षसी गाति सदा कृष्णचतुर्दशीम् ।
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् ॥ ३५
कथं वस्तादृशो गाथाः पुनर्गास्यामि शाकले ।
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं सुरासवम् ॥ ३६
गौरीभिः सह नारीभिर्बृहतीभिः स्वलंकृता ।
पलाण्डुगण्डूषयुताः खादन्तश्चैशिकान्बहून् ॥ ३७
वाराहं कौक्कुटं मांसं गव्यं गार्दभमौष्ट्रकम् ।

---

पञ्चानां वक्ष्यमाणानाम् । सिन्धुः षष्ठी यासाम् । अन्तरमवकाशमाश्रिताः ॥ १७ ॥ गोवर्धनः गवां छेदनस्थानम् ॥ १८ ॥ वृत्तं चरित्रम् ॥ २० ॥ अनावृताः स्वपरपुरुषविवेकहीनाः ॥ २३ ॥ सूक्तानि विनोदवचनानि । हेहते भोलिङ्गताडिते इत्याक्रोशे द्वित्वम् । संधिश्छान्दसः । स्वामिहते भर्तृहते इति च तद्वत् ॥ २४ ॥ पर्वसु उत्सवदिनेषु आक्रोशन्त्यः गालयन्त्यः । तासां पतिरिति शेषः ॥ २५ ॥ खरादियानैः ॥ २९ ॥ मथितं तक्रम् ॥ ३० ॥ भूयसः बहून् ॥ ३१ ॥ वाराहं विड्वराहजम् ॥ ३८ ॥ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

धानाश्च ये न खादन्ति तेषां जन्म निरर्थकम् ३८
एवं गायन्ति ये मत्ताः शीधुना पीलुकावने ।
सबालवृद्धाः क्रन्दन्ति तेषां धर्मः कथं भवेत् ॥३९
यत्र लोकेश्वरः कृष्णो देवदेवो जनार्दनः ।
विस्मृतः पुरुषैरुग्रैस्तेषां धर्मः कथं भवेत् ॥ ४०
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योऽप्युक्तवानस्मान्ब्राह्मणः कुरुसंसदि ॥ ४१
पञ्चनद्यो वहन्त्येता यत्र पीलुवनान्युत ।
शतद्रुश्च विपाशा च तृतीयैरावती तथा ॥ ४२
चन्द्रभागा वितस्ता च सिन्धुषष्ठा महानदी ।
आरट्टा नाम बाह्लीका एतेष्वार्यो हि नो वसेत् ४३
व्रात्यानां दासमीयानां विदेहानामयज्वनाम् ।
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा ॥ ४४
तेषां प्रनष्टधर्माणां बाह्लीकानामिति श्रुतिः ।
ब्राह्मणेन यथा प्रोक्तं विदुषा साधुसंसदि ॥ ४५
काष्ठकुण्डेषु बाह्लीका मृण्मयेषु च भुञ्जते ।
सक्तुमद्यावलिप्तेषु श्वावलीढेषु निर्घृणाः ॥ ४६
आविकं चौष्ट्रिकं चैव क्षीरं गार्दभमेव च ।
तद्विकारांश्च बाह्लीकाः खादन्ति च पिबन्ति च ४७
पात्रसंकरिणो जाल्माः सर्वान्नक्षीरभोजनाः ।
आरट्टा नाम बाह्लीका वर्जनीया विपश्चिता ॥ ४८
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योऽप्युक्तवान्मह्यं ब्राह्मणः कुरुसंसदि ॥ ४९
युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ।
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति ॥ ५०
पञ्चनद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ।
आरट्टा नाम बाह्लीका न तेष्वार्यो द्व्यहं वसेत् ५१
बाह्लीका नाम हीकश्च विपाशायां पिशाचकौ ।
तयोरपत्यं बाह्लीका नैषा सृष्टिः प्रजापतेः ॥५२
ते कथं विविधान्धर्माञ्ज्ञास्यन्ते हीनयोनयः ॥५३
कारस्करान्माहिषकान्करम्भान्कटकालिकान् ।
कर्करान्वीरकान्वीरा उन्मत्तांश्च विवर्जयेत् ॥ ५४
इति तीर्थानुसंचारी राक्षसी कश्चिदब्रवीत् ।
एकरात्रमुषित्वेह महोलूखलमेखला ॥ ५५
आरट्टा नाम ते देशा बाह्लीकं नाम तद्वनम् ।
वसातिसिन्धुसौवीरा इति प्रायोऽतिकुत्सिताः ५६

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

शल्यकर्णयोर्वाक्कलहः ॥ १ ॥ दुर्योधनेन तयोः सान्त्वनम् ॥ २ ॥

कर्ण उवाच ।
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
उच्यमानं मया सम्यक्त्वमेकाग्रमनाः शृणु ॥ १
ब्राह्मणः किल नो गेहमध्यगच्छत्पुराऽतिथिः ।
आचारं तत्र संप्रेक्ष्य प्रीतो वचनमब्रवीत् ॥ २
मया हिमवतः शृङ्गमेकेनाध्युषितं चिरम् ।
दृष्टाश्च बहवो देशा नानाधर्मसमावृताः ॥ ३
न च केन च धर्मेण विरुध्यन्ते प्रजा इमाः ।
सर्वांश्चाप्याचरन्धर्मं यदुक्तं वेदपारगैः ॥ ४
अटता तु मया देशान्नानाधर्मसमाकुलान् ।
आगच्छता महाराज बाह्लीकेषु निशामितम् ॥ ५
तत्र वै ब्राह्मणो भूत्वा पुनर्भवति क्षत्रियः ।
वैश्यः शूद्रश्च बाह्लीकस्ततो भवति नापितः ॥ ६
नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः ।
द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते ॥ ७
भवन्त्येककुले विप्राः शिष्टा ये कामचारिणः ।
गान्धारा मद्रकाश्चैव बाह्लीकाश्चाप्यतेजसः ॥ ८
एतन्मया श्रुतं तत्र धर्मसंकरकारकम् ।
कृत्स्नामटित्वा पृथिवीं बाह्लीकेषु विपर्ययः ॥ ९
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।

---

निशामितं श्रुतम् ॥ ५ ॥ ब्राह्मणो भूत्वेत्यादि तज्जातीयकर्माचरणनिबन्धनम् ॥ ६ ॥ विप्राः प्रसृष्टा इति पाठे कुले एकएव विप्रो भवत्यन्ये भ्रातरः प्रसृष्टाः संकीर्णक्रिया इत्यर्थः ॥ ८ ॥ तत्र बाह्लीकेषु । धर्मसंकरकारको विपर्ययः श्रुत इति लिङ्गं विपरिणेयम् । विपर्ययो विहितवैपरीत्यम् ॥ ९ ॥

यदप्यन्यीऽब्रवीद्वाक्यं बाह्लीकानां विकुत्सितं १०
आनीयेहाक्षता काचिदारट्टात्किल दस्युभिः ।
अधर्मतश्चोपयाता सा तानभ्यशपत्ततः ॥ ११
बालां बन्धुमतीं यन्मामधर्मेणोपगच्छथ ।
तस्मात्कुमार्यः स्वैरिण्यो भविष्यन्ति कुलेषु वः॥१२
न चैवास्मात्प्रमोक्षध्वं घोराच्छापान्नराधमाः ।
तस्मात्तेषां भागहरः कथं धर्मान्वदिष्यसि॥ १३
कुरवः सहपाञ्चालाः साल्वा मात्स्याः सनैमिशाः।
कोसलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा१४
चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम्।
नानादेशेष्वसन्तश्च प्रायो बाह्यालयानृते ॥ १५

आमत्स्येभ्यः कुरुपाञ्चालसाल्वा
आनैमिशाच्चेदयो ये विशिष्टाः ।
धर्मं पुराणमुपजीवन्ति सन्तो
मद्रानृते पाञ्चनदांश्च जिह्मान् ॥ १६
एवं विद्वान्धर्मकथासु राजं-
स्तूष्णींभूतः शल्य भवेः सदा त्वम् ।
त्वं तस्य गोप्ता च जनस्य राजा
षड्भागहर्ता शुभदुष्कृतस्य ॥ १७

अथवा दुष्कृतस्य त्वं हर्ता तेषामरक्षिता ।
रक्षिता पुण्यभाग्राजा प्रजानां त्वं ह्यपुण्यभाक् १८
पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते ।
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः॥१९
व्रात्यानां दाशकीयानां कृतेऽप्यशुभकर्मणाम् ।
ब्रह्मणा निन्दितान्धर्मान्कश्चित्सिद्धात्मकोऽब्रवीत्
इति पाञ्चनदं धर्ममवमेने पितामहः ।
स्वधर्मस्थेषु वर्णेषु सोऽप्येतान्नाभ्यपूजयत् ॥ २१
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
कल्माषपादः सरसि निमज्जन्राक्षसोऽब्रवीत् ॥ २२

क्षत्रियस्य मलं भैक्ष्यं ब्राह्मणस्याश्रुतं मलम् ।
मलं पृथिव्या बाह्लीकाः स्त्रीणां कौतूहलं मलम् २३
निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरम् ।
अपृच्छत्तेन चाख्यातं तच्छृणुष्व नराधिप॥ २४
मानुषाणां मलं म्लेच्छा म्लेच्छानां मुष्टिका मलम् ।
मुष्टिकानां मलं षण्ढाः षण्ढानां राजयाजकाः॥२५
राजयाजकयाज्यानां मद्रकाणां च यन्मलम् ।
तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ॥ २६
इति रक्षोपसृष्टेषु विषवीर्यहतेषु च ।
विद्वद्भिर्भेषजं दृष्टं संसिद्धवचनोत्तरम् ॥ २७

ब्राह्मयाः पञ्चालाः कौरवेयास्तु धर्म्याः
सत्या मत्स्याः शूरसेनाश्च याज्याः ।
प्राच्या दासा वृषला दाक्षिणात्याः
स्तेना बाह्लीकाः संकरा वै सुराष्ट्राः ॥ २८
कृतघ्नता परवित्तापहारो
मद्यपानं गुरुदारावमर्दः ।
वाक्पारुष्यं गोवधो रात्रिचर्या
बहिर्गेहं परवस्त्रोपभोगः ॥ २९
येषां धर्मस्तान्प्रति नास्त्यधर्मो
ह्यारट्टजान्पाञ्चनदान्धिगस्तु ।
आपाञ्चालाः कुरवो नैमिशाश्च
मत्स्याश्चैवाप्यनुजानन्ति धर्मम् ।
अथोदीच्याश्चेदयो मागधाश्च
शिष्टान्धर्मानुपजीवन्ति वृद्धाः ॥ ३०

प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः ।
दक्षिणा पितृभिर्गुप्ता यमेन शुभकर्मणा ॥ ३१
प्रतीचीं वरुणः पाति पालयन्नसुरान्बहून् ।
उदीचीं भगवान्सोमो ब्रह्मा च ब्राह्मणैः सह ३२
रक्षःपिशाचान्हिमवान्गुह्यकान्गन्धमादनः ।

---

कृते कृतयुगे ॥ २० ॥ नाभ्यपूजयत् न प्रशंसितवान् ॥ २१ ॥ म्लेच्छाः पापरता धर्माधर्मविचारहीनाः । म्लेच्छः पापरते जातिभेदे स्यादपभाषणे इति विश्वः । षंढा वर्षवराः ॥ २५ ॥ रक्षोपसृष्टेषु रक्षसा उपद्रुतेषु ॥ २७ ॥ प्राच्या दासाः शूद्रधर्माणः । दाशा इति पाठे मत्स्यजीविनः । वृषं धर्मं लान्ति आददते ते वृषलाः धर्मसंग्रहपराः धर्मद्रोहिण इति वा ॥ २८ ॥ बहिर्गेहं रात्रिचर्या प्रच्छन्नं चौर्यपारदार्यादि ॥ २९ ॥ प्राचीमित्यत्र जातवेद इत्यनेनाग्नेयीसहिता प्राची देवानामाश्रया । दक्षिणा पितॄणां तत्रैव श्राद्धादिधर्मो दृश्यते ॥ ३१ ॥ एवं प्रतीचीं वरुणः उदीचीं सोम इति कुबेरेशानयोर्ग्रहणम् । परिशेषान्नैर्ऋत्यां वायव्यां च वाह्लीकाश्रयायां नैर्ऋतास्त्वादृशा वातूलाश्च सन्तीत्यर्थः ॥ ३२ ॥ तथा रक्षःपिशाचाश्च हिमवन्तं

ध्रुवं सर्वाणि भूतानि विष्णुः पाति सुरोत्तमः॥३३
इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च कोसलाः ।
अर्धोक्ताः कुरुपाञ्चालाः सर्वोक्ता दाक्षिणापथाः॥
पार्वतीयाश्च विषमा यथैव गिरयस्तथा ।
सर्वज्ञा यवना राजञ्शूराश्चैव विशेषतः ।
म्लेच्छाः स्वसंज्ञानियता नानुक्तमितरे जनाः॥३५
प्रतिरब्धास्तु बाह्लीका न च केचन मद्रकाः ।
स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ॥ ३६
एवं ज्ञात्वा जोषमास्स्व प्रतीपं
मा स्म क्रुद्धः पापभृतां वरिष्ठ ।
पूर्वं हत्वा त्वां सपुत्रं बलैश्च
पश्चाद्धंस्ये वासुदेवार्जुनौ च ॥ ३७
शल्य उवाच ।
आतुराणां परित्यागः स्वदारसुतविक्रयः ।
अङ्गे प्रवर्तते कर्ण येषामधिपतिर्भवान् ॥ ३८
रथातिरथसङ्ख्यायां यत्त्वां भीष्मस्तदाब्रवीत् ।
तान्विदित्वाऽऽत्मनो दोषान्निर्मन्युर्भव मा क्रुधः
सर्वत्र ब्राह्मणाः सन्ति सन्ति सर्वत्र क्षत्रियाः
वैश्याः शूद्रास्तथा कर्ण स्त्रियः साध्व्यश्च सुव्रताः
रमन्ते चोपहासेन पुरुषाः पुरुषैः सह ।
अन्योन्येन रताः क्षीबा देशेदेशे च मैथुनम् ॥४
परवाच्येषु निपुणः सर्वो भवति सर्वदा ।
आत्मवाच्यं न जानीते जानन्नपि च मुह्यति ॥ ४
सर्वत्र सन्ति राजनः स्वंस्वं धर्ममनुव्रताः ।
दुर्मनुष्यान्निगृह्णन्ति सन्ति सर्वत्र धार्मिकाः ॥४
न कर्ण देशसामान्यात्सर्वः पापं निषेवते ।
यादृशाः स्वस्वभावेन देशांस्तांस्तादृशान्विदुः॥४
सञ्जय उवाच ।
ततो दुर्योधनो राजा कर्णशल्याववारयत् ।
सखिभावेन राधेयं शल्यं सौजन्यकेन च ॥ ४
ततो निवारितः कर्णो धार्तराष्ट्रेण मारिष ।
प्रहस्य तत्र राजेन्द्र याहि शल्येत्यचोदयत् ॥ ४

॥ इति श्रीमन्महाभारते कर्णपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

शल्यकर्णयोः संवादः ॥ १ ॥ सेनाद्वयस्य परस्परमेलनम् ॥ २ ॥

सञ्जय उवाच ।
ततः परानीकभिदं व्यूहमप्रतिमं कृतम् ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ १
प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् ॥२
सञ्जय उवाच ।
ततः प्रयान्तं राधेयं मद्रराजः स्मयन्निव ।
अवधूय इदं वाक्यमब्रवीत्कुरुसन्निधौ ॥ ३
चमूं तवेमां विपुलां समृद्धा-
मसङ्ख्येयामश्वनराकुलां च ।
तथा प्रवेष्टा समरे धनञ्जयः
कक्षं दहन्दीप्त इवाश्रयाशी ॥
रथे स्थितौ वीरवरौ वरेण्यौ
सिंहस्कन्धौ लोहितपद्मनेत्रौ ।
द्रष्टा भवानद्य विना प्रयत्ना-
त्तथाहि मे शकुना वेदयन्ति ॥ ८

नगोत्तमम् । गुह्यकाश्च महाराज पर्वतं गन्धमादनम् इति झ-पाठः । एवमपि सबाह्लीकान्सनैर्ऋतान् देशान् विष्णुः पाति पर्जन्यवत् न देशान्तरेष्विव बाह्लीकेषु विशेषतो देवतानुग्रहो दृश्यत इत्यभिप्रायः ॥ ३३ ॥ अतएव तेषां मौढ्यं वर्णयति इङ्गितज्ञाश्चेति । अर्धोक्ताः कुरुपाञ्चालाः साल्वाः कृत्स्नानुशासनाः इति झ. पाठः ॥ ३४ ॥ विषमाः दुःखसाध्याः । सर्वे जानन्तोऽपि यवना म्लेच्छाश्च स्वसंज्ञायां स्वीयैः कृतो यो धर्मसं केतस्तत्रैव नियताः । वैदिकं धर्मं न मानयन्तीत्यर्थः । इतं त्वनुक्तं हितं नावबुध्यन्ते ॥३५॥ प्रतिरथा इतिपाठे हितवादि प्रतिकूलाः । गुरुद्रोहिण इत्यर्थः । तादृशश्च त्वं हितोपदेष्टारं म निन्दसीत्यर्थः ॥ ३६ ॥ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

अद्य द्रष्टाऽसि तं वीरं श्वेताश्वं कृष्णसारथिम् ।
निघ्नन्तं शात्रवान्सङ्ख्ये यं कर्ण परिपृच्छसि ॥ ६
अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परंतपौ ।
वासुदेवार्जुनौ कर्ण द्रष्टाऽस्यमितविक्रमौ ॥ ७
सारथिर्यस्य गोविन्दो गाण्डीवं यस्य कार्मुकम् ।
तं चेद्धन्ताऽसि राधेय त्वं नो राजा भविष्यसि ॥८
प्रवात्येष महावायुरभितस्तव वाहिनीम् ।
क्रव्यादा व्याहरन्त्येते मृगाः कुर्वन्ति भैरवम् ॥ ९
पश्य कर्ण महाघोरं भयं वै रोमहर्षणम् ।
अर्कं जीमूतसंकाशः कबन्धो वार्य तिष्ठति ॥ १०
पश्य यूथं मृगशतं मृगाणां सर्वतोदिशम् ।
ररास दीप्तलाङ्गूलमादित्यमभि संस्थितम् ॥ ११
पश्य काकांश्च गृध्रांश्च समवेतान्सहस्रशः ।
आदित्यमभिवीक्षन्ते ह्यशिवाः कर्ण सस्वराः ॥ १२
श्वेतवाजिसमायुक्ते तव कर्ण महारथे ।
पताकाः प्रज्वलन्त्येता ध्वजश्चातीव कम्पते ॥१३
उदीर्यतो हयान्पश्य महाकायान्महाजवान् ।
प्लवमानान्महावीर्यानाकाशे गरुडानिव ॥ १४
ध्रुवमेषु निमित्तेषु भूमिमावृत्य पार्थिवाः ।
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः ॥१५
शङ्खानां तुमुलः शब्दः श्रूयते रोमहर्षणः ।
आनकानां च राधेय मृदङ्गानां च हन्यताम् ॥ १६
शृणु शब्दान्बहुविधान्नराश्वरथवाजिनाम् ।
ज्यातलत्रेषुशब्दांश्च शृणु कर्ण महात्मनाम् ॥ १७
हेमरूप्यप्रमृष्टानां वाससां शिल्पिनिर्मिताः ।
सहेमचन्द्रताराभाः पताकाः किङ्किणीयुताः ॥१८
नानावर्णा रणे भान्ति श्वसनेन प्रकम्पिताः ।
पश्य कर्णार्जुनस्यैताः सौदामिन्य इवाम्बुदे ॥१९
ध्वजाः कणकणायन्ते वातेनातिसमीरिताः ।
सपताकरथाश्चापि पाञ्चालानां महात्मनाम् ॥२०
एष रेणुः समुद्भूतो दिवमावृत्य तिष्ठति ।
गजवाजिप्रणुन्ना च कम्पते कर्ण मेदिनी ॥ २१
श्रूयते मेघसंकाशो रथनेमिस्वनस्तथा ।
पश्य कुन्तीसुतं वीरं बीभत्सुमपराजितम् ।
प्रहरिष्यन्तमायान्तं कपिप्रवरकेतनम् ॥ २२
गजाश्वरथपत्त्योघांस्तावकान्युधि निघ्नतः ।
ध्वजाग्रं दृश्यते तस्य ज्याशब्दश्चैव श्रूयते ॥ २३
एष संशप्तकान्भूयस्तानेवाभिमुखो गतः ।
करोति कदनं चैष संग्रामे द्विषतां बली ॥ २४
सञ्जय उवाच ।
इति ब्रुवाणं मद्रेशं कर्णः प्रोवाच मन्युमान् ॥ २५
पश्य संशप्तकैः क्रुद्धैः समन्तात्समभिद्रुतः ।
एष सूर्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते ।
एष दान्तोऽर्जुनः शल्य निमग्नः शोकसागरे ॥ २६
शल्य उवाच ।
वरुणं कोऽम्भसा हन्यादिन्धनेन च कोऽनलम् ।
कोवाऽनिलं निगृह्णीयात्पिबेद्वा को महार्णवम् २७
ईदृग्रूपमहं मन्ये पार्थस्य युधि निर्जयम् ।
न हि शक्योऽर्जुनो जेतुं युधि देवासुरैरपि ॥ २८
अथैवं परितोषस्ते वाग्भिस्त्वं सुमना भव ।
न हि शक्यो युधा जेतुमन्यं कुरु मनोरथम् ॥ २९
बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्नार्जुनं समरे जयेत् ॥ ३०
पश्य कुन्तीसुतं भीमं वीरमक्लिष्टकारिणम् ।
प्रहरन्तं महाबाहुं स्थितं मेरुमिवाचलम् ॥ ३१
अमर्षी पुरुषव्याघ्रः सदा वैरमनुस्मरन् ।
एष भीमो जयप्रेप्सुर्युधि तिष्ठति वीर्यवान् ॥ ३२
एष धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः ।
तिष्ठत्यसुकरः सङ्ख्ये परैः परपुरंजयः ॥ ३३
एतौ च पुरुषव्याघ्रावाश्विनेयौ महारथौ ।
नकुलः सहदेवश्च तिष्ठतो युधि दुर्जयौ ॥ ३४
एते तिष्ठन्ति कार्ष्णेयाः पञ्च पञ्चाचला इव ।
योत्स्यमाना महावीर्या भीमार्जुनसमा युधि ॥ ३५
एते द्रुपदपुत्राश्च धृष्टद्युम्नपुरोगमाः ।
हीनाः सत्यजिता वीरास्तिष्ठन्ति परमौजसः ॥३६
यत्र कृष्णार्जुनौ वीरौ यत्र राजा युधिष्ठिरः ।
तत्र धर्मश्च सत्यं च यतो धर्मस्ततो जयः ॥ ३७
इति संवदतोरेव तयोः पुरुषसिंहयोः ।
ते सेने समसज्जेतां गङ्गायमुनवद्भृशम् ॥ ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ॥ ४० ॥

दुर्योधनेन सेनाप्रोत्साहनम् ॥ १ ॥ भीमेन दुर्योधनपराजयपूर्वकं गजानीकवधः ॥ २ ॥

सञ्जय उवाच ।
दुर्योधनस्ततः कर्णमुपेत्य भरतर्षभ ।
अब्रवीन्मद्रराजं च तथैवान्यान्महारथान् ॥ १
यदृच्छयाऽयमव्यग्रो धर्मः परमकः सखा ।
सुखिनः क्षत्रियाः कर्ण लभन्ते युद्धमीदृशम् ॥ २
यादृशं क्षत्रियैः शूरैः शूराणां दीव्यतां युधि ।
इष्टं भवति राधेय तदिदं समुपस्थितम् ॥ ३
हत्वा तु पाण्डवान्युद्धे स्थिरामुर्वीं प्रशासथ ।
निहता वा परैर्युद्धे वीरलोकानवाप्स्यथ ॥ ४
दुर्योधनस्य वचनं श्रुत्वा तत्क्षत्रियर्षभाः ।
सिंहनादानुदक्रोशन्वादित्राणि च जघ्निरे ॥ ५
तस्मिन्प्रमुदिते सैन्ये त्वदीये भरतर्षभ ।
हर्षयंस्तावकान्योधान्द्रौणिर्वचनमब्रवीत् ॥ ६
प्रत्यक्षं सर्वसैन्यानां भवतां चापि पश्यताम् ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ७
स तेनाहममर्षेण पित्रर्थे चापि भारत ।
धृष्टद्युम्नमहत्वाऽहं न विमोक्ष्यामि दंशनम् ॥ ८
कृत्वाऽनृतां प्रतिज्ञां वो नास्मि प्राप्त महत्फलम् ।
अर्जुनं भीमसेनं च यश्च मां प्रतियोत्स्यति ।
सर्वांस्तान्प्रमथिष्यामि इति मे निश्चिता मतिः ॥ ९

सञ्जय उवाच ।
एवमुक्ते ततः सर्वा हर्षिता भारती चमूः ।
अभ्यवर्तत कौन्तेयांस्तथा तां चापि पाण्डवाः १०

स सन्निपातो रथयूथपानां
महाहवे भारत लोभनीये ।
जनक्षयः कालयुगान्तकल्पः
प्रावर्तताग्रे कुरुसृञ्जयानाम् ॥ ११
ततः प्रवृत्ते युधि संप्रहारे
भूतानि सर्वाणि सदैवतानि ।
आसन्समेतानि सहाप्सरोभि-
र्निरीक्षतीभिर्युधि वीरसङ्घान् ॥ १२
दिव्यैश्च गन्धैः परमैश्च पुष्पै-
रन्यैश्च रत्नैर्विविधैर्नराग्र्याः ।
रणेषु कर्मोद्वहतः प्रहृष्टा-
ननन्दयन्नप्सरसः प्रहृष्टाः ॥ १
समीरणस्तांस्तु निषेव्य गन्धा-
न्निषेवते तानपि योधमुख्यान् ।
निषेव्यमाणास्त्वनिलेन योधाः
परस्परं चुक्रुशुराजिमध्ये ॥ १
तथा तु तस्मिंस्तुमुले प्रवृत्ते
दुर्योधनः क्रोधममृष्यमाणः ।
'अवेक्ष्य भीमं बलमध्यसंस्थः
समार्पयत्क्षुद्रकाणां शतेन ॥ १
दुःशासनश्चित्रसेनश्च वीर-
स्तथोलूकः कितवः सौबलश्च ।
गजानीकैः सर्वतो भीमसेनं
तथाविषक्तं सहसैवाभ्यगच्छन् ॥ १
तमापतन्तं संप्रेक्ष्य गजानीकं वृकोदरः ।
दुर्योधनं महाबाहुः शरवर्षैरवाकिरत् ॥ १
दुर्योधनं ततो भीमः सायकैर्वज्रसंनिभैः ।
पाण्डवो विमुखीकृत्य गजानभ्यद्रवद्बली ॥ १
ततः पावकसङ्काशैर्भीमबाणैरवक्रगैः ।
शलभैरिव नागांस्तानर्दयामास पाण्डवः ॥ १
ततः कुञ्जरयूथानि भीमसेनो महाबलः ।
व्यधमच्छिशितैर्बाणैर्महावातो घनानिव ॥ २
नित्यमत्तैश्च मातङ्गाः शूरैर्मत्तैरधिष्ठिताः ।
आरोहकैर्महामात्रैस्तोमराङ्कुशपाणिभिः ॥ २
सुवर्णजालैः प्रच्छन्ना मणिजालैश्च कुञ्जराः ।
रूप्यजाम्बूनदाभासः क्षुरमालाभ्यलङ्कृताः ॥२
वध्यमानाः शरै राजन्भीमसेनेन ते गजाः ।
विभिन्नहृदयाः केचित्तत्रैवाभ्यपतन्भुवि ॥ २
निपतद्भिर्महावेगैर्हेमभाण्डविभूषितैः ।
अशोभत महाराज धातुचित्रैरिवाचलैः ॥ २

तेषां प्रपक्षे शकुनिरुलूकश्च महारथः ।
सादिभिर्विमलप्रासैस्तदानीमभ्यरक्षताम् ॥ २५
गान्धारैश्चाप्यसंभ्रान्तैः पार्वतीयैश्च दुर्जयैः ।
शलभानामिव व्रातैः पिशाचैरिव दुर्दृशैः ॥ २६
चतुर्विंशत्सहस्राणि रथानामनिवर्तिनाम् ।
संशप्तका युद्धशौण्डा वामपार्श्वमपालयन् ॥ २७
समन्वितास्तव सुतैः कृष्णार्जुनजिघांसवः ।
तेषां प्रपक्षाः काम्भोजाः शकाश्च यवनैः सह ॥२८
निदेशात्सूतपुत्रस्य सरथाश्वेभपत्तयः ।
आह्वयन्तोऽर्जुनं तस्थुः केशवं च महाबलम् ॥२९
ततः सेनामुखे कर्णोऽप्यवातिष्ठत दंशितः ।
चित्रवर्माङ्गदः स्रग्वी पालयन्वाहिनीमुखम् ॥ ३०
रक्षमाणैः सुसंरब्धैः पुत्रैः शस्त्रभृतां वरः ।
वाहिनीं प्रमुखे वीरः संप्रकर्षन्नशोभत ॥ ३१
अशोकस्तु महाबाहुः सूर्यवैश्वानरप्रभः ।
महाद्विपस्कन्धगतः पिङ्गाक्षः प्रियदर्शनः ।
दुःशासनो वृतः सैन्यैः स्थितो व्यूहस्य पृष्ठतः ॥३२
तन्मध्ये स महाबाहुः स्वयं दुर्योधनो नृपः ।
चित्राश्वैश्चित्रसन्नाहैः सोदर्यैरभिरक्षितः ॥ ३३
रक्ष्यमाणो महावीर्यैः सहितैर्मद्रकेकयैः ।
अशोभत महाराज देवैरिव शतक्रतुः ॥ ३४
अश्वत्थामा कुरूणां च ये प्रवीरा महारथाः ।
नित्यमत्ताश्च मातङ्गाः शूरैर्म्लेच्छैः समन्विताः ।
अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः ॥ ३५
ते ध्वजैर्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः ।
सादिभिश्चास्थिता रेजुर्द्रुमवन्त इवाचलाः ॥ ३६
तेषां पदातिनागानां पादरक्षाः सहस्रशः ।
पट्टसासिधराः शूरा बभूवुरनिवर्तिनः ॥ ३७
सादिभिः स्यन्दनैर्नागैरधिकं समलङ्कृतैः ।
स व्यूहराजो विबभौ देवासुरचमूपमः ॥ ३८
बार्हस्पत्यः सुविहितो नायकेन विपश्चिता ।
नृत्यतीव महाव्यूहः परेषां भयमादधत् ॥ ३९
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
हस्त्यश्वरथमातङ्गाः प्रावृषीव बलाहकाः ॥ ४०
ततः सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः ।
धनंजयममित्रघ्नमेकवीरमुवाच ह ॥ ४१
पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे ।
युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ॥ ४२
तत्समीपगतं ह्येतत्प्रत्यमित्रं महद्बलम् ।
यथा नाभिभवत्यस्मांस्तथा नीतिर्विधीयताम् ४३
सञ्जय उवाच ।
एवमुक्तोऽर्जुनो राज्ञा प्राञ्जलिर्नृपमब्रवीत् ॥ ४४
यथा यथा भवानाह तत्तथा न तदन्यथा ।
यत्तस्य विहितं कार्यं तत्करिष्यामि सुव्रत ।
प्रधानमथ चैवास्य विनाशं च करोम्यहम् ॥ ४५
तस्मात्त्वं जहि राधेयं भीमसेनः सुयोधनम् ।
वृषसेनं च नकुलः सहदेवोऽपि सौबलम् ॥ ४६
दुःशासनं शतानीको हार्दिक्यं शिनिपुङ्गवः ।
धृष्टद्युम्नो द्रोणसुतं स्वयं योत्स्याम्यहं कृपम् ॥४७
द्रौपदेया धार्तराष्ट्राञ्शिष्टान्सह शिखण्डिना ।
ते ते च तांस्तानहितानस्माकं घ्नन्तु मामकाः ॥४८
सञ्जय उवाच ।
इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनंजयः ।
व्यादिदेश स्वसैन्यानि स्वयं चागाच्चमूमुखम् ४९
धनंजयो महाराज दक्षिणं पक्षमाश्रितः ।
भीमसेनो महाबाहुर्वामं पक्षमुपाश्रितः ॥ ५०
सात्यकिर्द्रौपदेयाश्च स्वयं राजा च पाण्डवः ।
व्यूहस्य प्रमुखे तस्थुः स्वेनानीकेन संवृताः ॥५१
स्वबलेनारिसैन्यं तत्प्रत्यवस्थाप्य पाण्डवः ।
प्रत्यव्यूहत्पुरस्कृत्य धृष्टद्युम्नशिखण्डिनौ ॥ ५२
तत्सादिनागकलिलं पदातिरथसंकुलम् ।
धृष्टद्युम्नमुखं घोरमशोभत महद्बलम् ॥ ५३

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

संकुलयुद्धम् ॥ १ ॥

राष्ट्र उवाच ।
ा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय ।
प्तकाः कथं पार्थं कथं कर्णं च पाण्डवाः ॥ १
द्विस्तरशो युद्धं प्रब्रूहि कुशलो ह्यसि ।
हि तृप्यामि वीराणां शृण्वानो युधि विक्रमम् २
य उवाच ।
ांस्थितमथो दृष्ट्वा प्रत्यमित्रं महद्बलम् ।
व्यूहत्ततः कर्णो हितार्थं तनयस्य ते ॥ ३
ादिनागकलिलं पदातिरथसंकुलम् ।
ुम्नमुखं घोरमशोभत महद्बलम् ॥ ४
ावतसवर्णाश्वश्चन्द्रसूर्यसमद्युतिः ।
ार्षतो बभौ धन्वी कालो विग्रहवानिव ॥ ५
तं त्वभितस्तस्थुर्द्रौपदेया युयुत्सवः ।
ुगा दीप्तवपुषश्चन्द्रं तारागणा इव ॥ ६
व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान्रणे ।
ोऽर्जुनोऽभिदुद्राव व्याक्षिपन्गाण्डिवं धनुः ७
संशप्तकाः पार्थमभ्यधावन्वधैषिणः ।
ये धृतसंकल्पा मृत्युं कृत्वानिवर्तनम् ॥ ८
श्वसङ्घबहुलं पत्तिनागरथाकुलम् ।
र्यमाणं संरब्धं धनंजयमभिद्रवत् ॥ ९
ग्रतं महत्सैन्यं सागरौघसमं जवे ।
वेलां समासाद्य विष्ठितं समदृश्यत ॥ १०
त्तं शरवर्षौघैर्हतमर्जुनमार्दयत् ॥ ११
ंप्रहारस्तुमुलस्तेषामासीत्किरीटिना ।
व तु यथा राजन्निवातकवचैः सह ॥ १२
नश्वान्ध्वजान्नागान्पत्तीन्गजगतानपि ।
धनूंषि खड्गांश्च चक्राणि च परश्वथान् ॥ १३
ुधानुद्यतान्बाहून्विविधान्यायुधानि च ।
छेद द्विषतां पार्थः शिरांसि च सहस्रशः ॥१४
तस्मिन्सैन्यमहावर्ते पातालतलसन्निभे ।
निमग्नं तं रथं मत्वा नेदुः संशप्तका मुदा ॥ १५
स पुरस्तादरीन्हत्वा पुनरुत्तरतोऽवधीत् ।
दक्षिणेन च पश्चाच्च क्रुद्धो रुद्रः पशूनिव ॥ १६
अथ पाञ्चालचेदीनां सृञ्जयानां च मारिष ।
त्वदीयैः सह संग्राम आसीत्परमदारुणः ॥ १७
कृपश्च कृतवर्मा च शकुनिश्चापि सौबलः ।
हृष्टसेनाः सुसंरब्धा रथानीकप्रहारिणः ॥ १८
कोसलैः काश्यमत्स्यैश्च कारूशैः केकयैरपि ।
शूरसेनैः शूरवरैर्युयुधुर्युद्धदुर्मदाः ॥ १९
तेषामन्तकरं युद्धं देहपाप्मविनाशनम् ।
क्षत्रविट्शूद्रवीराणां धर्म्यं स्वर्ग्यं यशस्करम् ॥ २०
दुर्योधनोऽथ सहितो भ्रातृभिर्भरतर्षभ ।
गुप्तः कुरुप्रवीरैश्च मद्राणां च महारथैः ॥ २१
पाण्डवैः सह पाञ्चालैश्चेदिभिः सात्यकेन च ।
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत् ॥ २२
कर्णोऽपि निशितैर्बाणैर्विनिहत्य महाचमूम् ।
प्रमृद्य च रथश्रेष्ठान्युधिष्ठिरमपीडयत् ॥ २३
विपत्रायुधदेहासून्कृत्वा शत्रून्सहस्रशः ।
युक्त्वा स्वर्गयशोभ्यां च स्वेभ्यो मुदमुदावहत् २४
तद्विगाह्य महानीकं सूतपुत्रो महारथः ।
नदीं प्रवर्तयामास शोणितौघतरङ्गिणीम् ॥ २५
शोणितोदां क्षुण्णमत्स्यां नागनक्रदुरत्ययाम् ।
मांसमज्जाकर्दमिनीं चक्रकूर्ममहोडुपाम् ॥ २६
पातितैर्मेघसंकाशैस्तत्रतत्र महाद्विपैः ।
अशनीभिरिव ध्वस्ता नदी राजन्विराजते ॥ २७
तां शरोर्मिमहावर्तां छत्रहंससमाकुलाम् ।
तनुत्रोष्णीषसङ्घाटामस्थिपाषाणसंकुलाम् ॥ २८
अपारामनपारां च शङ्खदुन्दुभिघोषिणीम् ।
रौद्रां नदीं महाराज रजसा सर्वतोवृताम् ॥ २९

द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

ात्रविट्शूद्रवीराणामित्यनेन ब्राह्मणादृते युद्धं सर्वेषां श्रेयमित्यर्थः ॥ २० ॥ युक्त्वा योजयित्वा ॥ २४ ॥

अतितीक्ष्णां नराकीर्णां नदीमन्तकगामिनीम् ।
समं च विषमं चैव समायान्तीं महाभयाम् ॥ ३०
आकुलाश्चात्र सीदन्ति नराः शोणितकर्दमे ।
नरैरभिपरिक्षिप्ता यथा राजन्महाद्रुमाः ॥ ३१
ततस्ते तत्रतत्रैव प्रचरन्तो महानदीम् ।
विचेरुः सर्वतो योधा नौवारणमहारथैः ॥
शोणितेन समं राजन्कृतमासीत्समन्ततः ।
नदीवेगैर्यथा भूमिस्तद्वदासीद्विशांपते ॥
एवं भारत संग्रामो नरवाजिगजक्षयः ।
कुरूणां सृञ्जयानां च देवासुरसमोऽभवत् ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

सकुलयुद्धम् ॥ १ ॥

धृतराष्ट्र उवाच ।
युक्तं प्रविश्य पार्थानां सैन्यं कुर्वञ्जनक्षयम् ।
कर्णो राजानमभ्येत्य तन्ममाचक्ष्व सञ्जय ॥ १
के च प्रवीराः पार्थानां युधि कर्णमवारयन् ।
कांश्च प्रमथ्याधिरथिर्युधिष्ठिरमपीडयत् ॥ २
सञ्जय उवाच ।
धृष्टद्युम्नमुखान्पार्थान्दृष्ट्वा कर्णो व्यवस्थितान् ।
समभ्यधावत्त्वरितः पाञ्चालाञ्छत्रुकर्शनः ॥ ३
तं तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः ।
प्रत्युद्ययुर्महात्मानं हंसाः सर इवोष्णगे ॥ ४
ततः शङ्खसहस्राणां निःस्वनो हृदयंगमः ।
प्रादुरासीदुभयतो भेरीशब्दश्च दारुणः ॥ ५
नानावाणनिनादश्च द्विपाश्वरथनिःस्वनः ।
सिंहनादश्च वीराणामभवद्दारुणस्तदा ॥ ६
साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरम् ।
सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं विघूर्णिता ॥ ७
इति भूतानि तं शब्दं मेनिरे ते च विव्यथुः ।
यानि चाप्यल्पसत्वानि प्रायस्तानि मृतानि वै ॥ ८
अथ कर्णो भृशं क्रुद्धः शीघ्रमस्त्रमुदीरयन् ।
जघान पाण्डवीं सेनामासुरीं मघवानिव ॥ ९
स पाण्डवबलं कर्णः प्रविश्य विसृजञ्छरान् ।
प्रभद्रकाणां प्रवरानहनत्सप्तसप्ततिम् ॥ १०
ततः सुपुङ्खैर्निशितैरथ श्रेष्ठो रथेषुभिः ।
अवधीत्पञ्चविंशत्या पाञ्चालान्पञ्चविंशतिम्
सुवर्णपुङ्खैर्नाराचैः परकायविदारणैः ।
चेदिकानवधीद्वीरः शतशोऽथ सहस्रशः ॥
तं तथा समरे कर्म कुर्वाणमतिमानुषम् ।
परिवव्रुर्महाराज पाञ्चालानां रथव्रजाः ॥
ततः संधाय विशिखान्पञ्च भारत दुःसहा
पाञ्चालानवधीत्पञ्च कर्णो वैकर्तनो वृषः ।
भानुदेवं चित्रसेनं सेनाबिन्दुं च भारत ।
तपनं शूरसेनं च पाञ्चालानहनद्रणे ॥
पाञ्चालेषु च शूरेषु वध्यमानेषु सायकैः ।
हाहाकारो महानासीत्पाञ्चालानां महाहवे
तेषां संक्रीडमानानां हाहाकारं प्रकुर्वताम्
पुनरेव च तान्कर्णो जघानाशु पतत्रिभिः
चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्जयौ ।
सुषेणः सत्यसेनश्च त्यक्त्वा प्राणानयुध्यताम्
पृष्ठगोप्ता तु कर्णस्य ज्येष्ठः पुत्रो महारथः
वृषसेनोऽन्वयात्कर्णं पृष्ठतः परिपालयन् ।
धृष्टद्युम्नः सात्यकिश्च द्रौपदेया वृकोदरः ।
जनमेजयः शिखण्डी च प्रवीराश्च प्रभद्रकाः
चेदिकेकयपाञ्चाला यमौ मात्स्याश्च दंशित
समभ्यधावन्राधेयं जिघांसन्तः प्रहारिणम्
त एनं विविधैः शस्त्रैः शरधाराभिरेव च
अभ्यवर्षन्विमर्दन्तं प्रावृषीवाम्बुदा गिरिम्

अभ्येत्य यदकरोत्तन्ममाचक्ष्वेत्यन्वयः ॥ १ ॥

विमर्दन्तं विमृद्नन्तम् ॥ २२ ॥

पितरं तुं परीप्सन्तः कर्णपुत्राः प्रहारिणः ।
त्वदीयाश्चापरे राजन्वीरा वीरानवारयन् ॥ २३
सुषेणो भीमसेनस्य च्छित्त्वा भल्लेन कार्मुकम् ।
नाराचैः सप्तभिर्विद्ध्वा हृदि भीमं ननाद ह ॥ २४
अथान्यद्धनुरादाय सुदृढं भीमविक्रमः ।
सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ॥ २५
विव्याध चैनं दशभिः क्रुद्धो नृत्यन्निवेषुभिः ।
कर्णं च तूर्णं विव्याध त्रिसप्तत्या शितैः शरैः ॥ २६
सत्यसेनं च दशभिः साश्वसूतायुधध्वजम् ।
पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ॥ २७
क्षुरप्रणुन्नं तत्तस्य शिरश्चन्द्रनिभाननम् ।
शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजम् ॥ २८
हत्वा कर्णसुतं भीमस्तावकान्पुनरार्दयत् ।
कृपहार्दिक्ययोश्छित्त्वा चापौ तावप्यथार्दयत् २९
दुःशासनं त्रिभिर्विद्ध्वा शकुनिं षड्भिरायसैः ।
उलूकं च पतत्रिं च चकार विरथावुभौ ॥ ३०
हे सुषेण हतोऽसीति ब्रुवन्नादत्त सायकम् ।
तमस्य कर्णश्चिच्छेद त्रिभिश्चैनमताडयत् ॥ ३१
अथान्यं परिजग्राह सुपर्वाणं सुतेजनम् ।
सुषेणायासृजद्भीमस्तमप्यस्याच्छिनद्वृषः ॥ ३२
पुनः कर्णस्त्रिसप्तत्या भीमसेनमथेषुभिः ।
पुत्रं परीप्सन्विव्याध क्रुद्धः शत्रुजिघांसया ॥ ३३
सुषेणस्तु धनुर्गृह्य भारसाधनमुत्तमम् ।
नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ३४
नकुलस्तं तु विंशत्या विद्ध्वा भारसहैर्दृढैः ।
ननाद बलवन्नादं कर्णस्य भयमादधत् ॥ ३५
तं सुषेणो महाराज विद्ध्वा दशभिराशुगैः ।
चिच्छेद च धनुः शीघ्रं क्षुरप्रेण महारथः ॥ ३६
अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः ।
सुषेणं नवभिर्बाणैर्वारयामास संयुगे ॥ ३७
स तु बाणैर्दिशो राजन्नाच्छाद्य परवीरहा ॥
आजघ्ने सारथिं चास्य सुषेणं च ततस्त्रिभिः ।
चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्त्रिधा ॥ ३८
अथान्यद्धनुरादाय सुषेणः क्रोधमूर्च्छितः ।
आविध्यन्नकुलं षष्ट्या सहदेवं च सप्तभिः ॥ ३९
तद्युद्धं सुमहद्घोरमासीद्देवासुरोपमम् ।
निघ्नतां सायकैस्तूर्णमन्योन्यस्य वधं प्रति ॥ ४०
सात्यकिर्वृषसेनं तु विद्ध्वा सप्तभिरायसैः ।
'पुनर्विव्याध सप्तत्या सारथिं च त्रिभिः शितैः ४१
वृषसेनस्तु शैनेयं शरेणानतपर्वणा ।
आजघान महाराज शङ्खदेशे महारथम् ॥ ४२
शैनेयो वृषसेनेन पत्रिणा परिपीडितः ।
कोपं चक्रे महाराज क्रुद्धो वेगं च दारुणम् ॥ ४३
जग्राहेषुवरान्वीरः शीघ्रं वै दश पञ्च च ।
सात्यकिर्वृषसेनस्य सूतं हत्वा त्रिभिः शरैः ॥' ४
धनुश्चिच्छेद भल्लेन जघानाश्वांश्च सप्तभिः ।
ध्वजमेकेषुणोन्मथ्य त्रिभिस्तं हृद्यताडयत् ॥ ४
अथावसन्नः स्वरथे मुहूर्तात्पुनरुत्थितः ।
स रणे युयुधानेन विसूताश्वरथध्वजः ।
कृतो जिघांसुः शैनेयं खड्गचर्मधृगभ्ययात् ॥ ४
तस्य चापततः शीघ्रं वृषसेनस्य सात्यकिः ।
वाराहकर्णैर्दशभिरविध्यदसिचर्मणी ॥ ४
दुःशासनस्तु तं दृष्ट्वा विरथं व्यायुधं कृतम् ।
आरोप्य स्वरथं तूर्णमपोवाह रथान्तरम् ॥ ४
अथान्यं रथमास्थाय वृषसेनो महारथः ।
द्रौपदेयांस्त्रिसप्तत्या युयुधानं च पञ्चभिः ॥ ४
भीमसेनं चतुःषष्ट्या सहदेवं च पञ्चभिः ।
नकुलं त्रिंशता बाणैः शतानीकं च सप्तभिः ॥ ५
शिखण्डिनं च दशभिर्धर्मराजं शतेन च ।
एतांश्चान्यांश्च राजेन्द्र प्रवीराञ्जयगृद्धिनः ॥ ५
अभ्यर्दयन्महेष्वासः कर्णपुत्रो विशांपते ।
कर्णस्य युधि दुर्धर्षस्ततः पृष्ठमपालयत् ॥
युयुधानं च राधेयो नवैर्नवभिरायसैः ।
विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्पयत् ॥
स त्वन्यं रथमास्थाय विधिवत्कल्पितं पुनः ।
युयुधे पाण्डुभिः सार्धं कर्णस्य व्यधमद्बलम् ॥
धृष्टद्युम्नस्ततः कर्णमविध्यद्दशभिः शरैः ।
द्रौपदेयास्त्रिसप्तत्या युयुधानस्तु सप्तभिः ॥
भीमसेनश्चतुःषष्ट्या सहदेवश्च सप्तभिः ।
नकुलस्त्रिंशता बाणैः शतानीकस्तु सप्तभिः ॥

शिखण्डी दशभिर्वीरो धर्मराजः शतेन तु ।
एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिनः ।
अभ्यर्दयन्महेष्वासं सूतपुत्रं महामृधे ॥ ५७
तान्सूतपुत्रो विशिखैर्दशभिर्दशभिः शरैः ।
रथेनानुचरन्वीरः प्रत्यविध्यदरिंदमः । ५८
'सात्यकिं भीमसेनं च धृष्टद्युम्नं शिखण्डिनम् ।
द्रौपदेयांश्च संरब्धान्यतमानान्महारथान् ॥ ५९
पश्यतां सर्वसैन्यानामथैनान्सूतनन्दनः ।
विरथांन्रथिनः श्रेष्ठान्निमेषार्धाच्चकार ह ॥ ६०
अमोघत्वाच्च बाणानां भूतसङ्घा विसिष्मयुः॥' ६१
तत्रास्त्रवीर्यं कर्णस्य लाघवं च महात्मनः ।
अपश्याम महाभाग तदद्भुतमिवाभवत् ॥ ६२
न ह्याददानं ददृशुः संदधानं च सायकान् ।
विमुञ्चन्तं च संरम्भादपश्यन्नेव तं जनाः ॥ ६३
प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्याम लाघवात् ।
न च पश्याम राजेन्द्र क नु कर्णो व्यतिष्ठत ॥ ६४
इषूनेवास्य पश्यामो विनिकीर्णाऽन्समन्ततः ।
छादयानान्दिशो राजञ्शलभानामिव व्रजान् ६५
तस्य तैरिषुभिस्तीक्ष्णैः संपतद्भिः सहस्रशः ।
मरीचिभिरिवोष्णांशोः शरैः सन्नतपर्वभिः ॥ ६६
व्याप्ताः सर्वा दिशो राजन्योधाश्च ददृशुस्तदा ।
शरैः संवृतमाकाशं तत्राभ्रैरिव चाभवत् ॥ ६७
द्यौर्वियद्भूर्दिशश्चैव प्रच्छन्ना निशितैः शरैः ।
अरुणाभ्रावृताकारं तस्मिन्देशे बभौ वियत् ॥ ६८

ततः पुनरमेयात्मा कर्णो राजा महारथः
न्यहनत्समरे योधान्योधवृत्तमनुष्ठितः ॥
नृत्यन्निव हि राधेयश्चापहस्तो रणाजिरे ।
यैर्विद्धः प्रत्यविध्यत्तानेकैकं त्रिगुणैः शरैः
शतैश्च दशभिश्चैतान्पुनर्विद्ध्वा ननाद च ।
साश्वसूतध्वजच्छत्रास्ततस्ते विवरं ददुः ॥
'ते हन्यमानाः कर्णेन पलायन्त दिशो द
नादयन्तो दिशः सर्वाः कर्णत्रस्ता विचेतसः
तान्प्रमथ्य महेष्वासान्राधेयः शरवृष्टिभिः
राजानीकमसंबाधं प्राविशच्छत्रुकर्शनः ॥
स रथांस्त्रिशतं हत्वा चेदीनामनिवर्तिनाम्
राधेयो निशितैर्बाणैस्ततोऽभ्यागाद्युधिष्ठिर
'ततस्ते विरथाः शूरा रथानन्यान्समास्थित
परिवव्रुर्महाराज धर्मपुत्रं युधिष्ठिरम् ॥'
ततस्ते तु परे राजञ्छिखण्डी च ससात्यकि
राधेयात्परिरक्षन्तो राजानं पर्यवारयन् ।
मुञ्चन्तो विविधान्बाणान्स्वर्णपुङ्खाञ्शिला
तथैव तावकाः सर्वे कर्णं दुर्वारणं रणे ।
यत्ताः शूरा महेष्वासाः पर्यरक्षन्त सर्वशः
नानावादित्रघोषाश्च प्रादुरासन्विशांपते ।
सिंहनादश्च संजज्ञे शूराणामभिगर्जताम् ॥
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवा
युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम्

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

कर्णेन युधिष्ठिरस्य पराजयपूर्वकमपहासः ॥ १ ॥ संकुलयुद्धम् ॥ २ ॥

सञ्जय उवाच ।
विदार्य कर्णस्तां सेनां युधिष्ठिरमथाद्रवत् ।
रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः ॥ १
नानायुधसहस्राणि प्रेरितान्यरिभिर्वृषः ।

छित्त्वा बाणशतैरुग्रैस्तानविध्यदसंभ्रमात्
निचकर्त शिरांस्येषां बाहूनूरूंश्च सूतजः ॥
ते हता भूतले पेतुर्भग्नाश्चान्ये विदुद्रुवुः ॥
द्रविडान्ध्रनिषादास्तु पुनः सात्यकिचोदि

विवरं अन्तरं ददुः प्रसृता इत्यर्थः ॥ ७१ ॥

अभ्यद्रवञ्जिघांसन्तः पत्तयः कर्णमाहवे ॥ ४
ते विबाहुशिरस्त्राणाः प्रहताः कर्णसायकैः ।
पेतुः पृथिव्यां युगपच्छिन्नं सालवनं यथा ॥ ५
एवं योधशतान्याजौ सहस्राण्ययुतानि च ।
हतानीयुर्महीं देहैर्यशसाऽपूरयन्दिशः ॥ ६
अथ वैकर्तनं कर्णं रणे क्रुद्धमिवान्तकम् ।
रुरुधुः पाण्डुपाञ्चाला व्याधिं मन्त्रौषधा इव ॥ ७
स तान्प्रमृद्याभ्यपतत्पुनरेव युधिष्ठिरम् ।
मन्त्रौषधिक्रियातीतो व्याधिरत्युल्बणो यथा ॥ ८
स राजगृद्धिभी रुद्धः पाण्डुपाञ्चालकेकयैः ।
नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ॥ ९
ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम् ।
'तैर्योधप्रमुखैर्वीरं दृष्ट्वा विव्याध सायकैः ॥ १०
कर्णः पार्थशराविद्धस्तोत्रार्दित इव द्विपः ।
प्रमथ्य सहितान्वीरान्युधिष्ठिरमपीडयत् ॥ ११
ततो युधिष्ठिरः कर्णमासाद्य जयतां वरम् ।'
अब्रवीत्परवीरघ्नं क्रोधसंरक्तलोचनः ॥ १२
कर्णकर्ण वृथादृष्टे सूतपुत्र वचः शृणु ।
सदा स्पर्धसि संग्रामे फल्गुनेन तरस्विना ॥ १३
यथाऽस्मान्बाधसे नित्यं धार्तराष्ट्रमते स्थितः ।
यद्बलं यच्च ते वीर्यं प्रद्वेषो यस्तु पाण्डुषु ॥ १४
तत्सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः ।
युद्धश्रद्धां च तेऽद्याहं विनेष्यामि महाहवे ॥ १५
एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा ।
सुवर्णपुङ्खैर्दशभिर्विव्याधायसयैः शरैः ॥ १६
तं सूतपुत्रो दशभिः प्रत्यविद्ध्यदरिंदमः ।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ १७
सोऽवज्ञाय तु निर्विद्धः सूतपुत्रेण पाण्डवः ।
प्रजज्वाल ततः क्रोधाद्धविषेव हुताशनः ॥ १८
ज्वालामालापरिक्षिप्तो राज्ञो देहो व्यदृश्यत ।
युगान्ते दग्धुकामस्य संवर्ताग्नेरिवापरः ॥ १९
ततो विस्फार्य सुमहच्चापं हेमपरिष्कृतम् ।
समाधत्त शितं बाणं गिरीणामपि दारणम् ॥ २०
ततः पूर्णायतोत्कृष्टं यमदण्डनिभं शरम् ।
मुमोच त्वरितो राजा सूतपुत्रजिघांसया ॥ २१
स तु वेगवता मुक्तो बाणो वज्राशनिस्वनः ।
विवेश सहसा कर्णं सव्ये पार्श्वे महारथम् ॥ २२
स तु तेन प्रहारेण पीडितः प्रमुमोह वै ।
स्रस्तगात्रो महाबाहुर्धनुरुत्सृज्य कम्पितः ॥ २३
गतासुरिव निश्चेताः शल्यस्याभिमुखोऽपतत् ।
राजाऽपि भूयो नाजघ्ने कर्णं पार्थहितेप्सया ॥ २४
ततो हाहाकृतं सर्वं धार्तराष्ट्रबलं महत् ।
विवर्णमुखमार्तं च कर्णं दृष्ट्वा तथागतम् ॥ २५
सिंहनादाश्च संजज्ञुः क्ष्वेलाः किलकिलास्तथा ।
पाण्डवानां महाराज दृष्ट्वा राज्ञः पराक्रमम् ॥ २६
प्रतिलभ्य तु राधेयः संज्ञां नातिचिरादिव ।
दध्रे राजविनाशाय मनः क्रूरपराक्रमः ॥ २७
स हेमविकृतं चापं विस्फार्य विजयं महत् ।
अवाकिरदमेयात्मा पाण्डवं निशितैः शरैः ॥ २८
ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः ।
जघान चन्द्रदेवं च दण्डधारं च संयुगे ॥ २९
तावुभौ धर्मराजस्य प्रवीरौ युधि भारत ।
रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्वसू ॥ ३०
युधिष्ठिरः पुनः कर्णमविद्ध्यत्त्रिंशता शरैः ।
सुषेणं सत्यसेनं च त्रिभिस्त्रिभिरताडयत् ॥ ३१
शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजम् ।
तांस्तस्य गोप्तॄन्विव्याध त्रिभिस्त्रिभिरजिह्मगैः ॥ ३२
ततः प्रहस्याधिरथिः पष्ठ्या राजञ्शितैः शरैः ।
विद्ध्वा युधिष्ठिरं सङ्ख्ये ननादातिरथस्तदा ॥ ३३
ततः प्रवीराः पाण्डूनामभ्यधावन्नमर्षिताः ।
युधिष्ठिरं परीप्सन्तः कर्णमभ्यर्दयञ्छरैः ॥ ३४
सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च ।
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ ३५
यमौ च भीमसेनश्च शिशुपालस्य चात्मजः ।
कारूशा मात्स्यशेषाश्च केकयाः काशिकोसलाः ॥
एते च त्वरिता वीरा वसुषेणमताडयन् ।

मन्त्रौषधक्रिया व्याधिर्विधिहीनक्रिया इव इति ख. ट. पाठः ॥ ८ ॥

जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः ॥
वाराहकर्णनाराचैर्नालीकैर्निशितैः शरैः ।
वत्सदन्तैर्विपाठैश्च क्षुरप्रैश्चटकामुखैः ॥ ३८
नानाप्रहरणैश्चोग्रै रथहस्त्यश्वसादिभिः ।
सर्वतोऽभ्यद्रवत्कर्णं परिवार्य जिघांसया ॥ ३९
स पाण्डवानां प्रवरैः सर्वतः समभिद्रुतः ।
छाद्यमानः शितैर्घोरैः स्वस्वनामाङ्कितैः शरैः ॥ ४०
न चचाल रणे कर्णो महेन्द्रो दानवैरिव ।
'निजघान महेष्वासान्पाञ्चालानेकविंशतिम् ॥ ४१
ततः पुनरमेयात्मा चेदीनां प्रवरान्दश ।
न्यहनद्भरतश्रेष्ठ कर्णो वैकर्तनस्तदा ॥ ४२
तस्य बाणसहस्राणि संप्रपन्नानि मारिष ।
दृश्यन्ते दिक्षु सर्वासु शलभानामिव व्रजाः ॥ ४३
कर्णनामाङ्किता बाणाः स्वर्णपुङ्खाः सुतेजनाः ।
नराश्वकायान्निर्भिद्य पेतुरुर्व्यां समन्ततः ॥ ४४
कर्णेनैकेन समरे चेदीनां प्रवरास्तदा ।
सृञ्जयानां च सर्वेषां शतशो निहता रणे ॥ ४५
कर्णस्य शरसंछन्नं बभूव तुमुलं तमः ।
नाज्ञायत ततः किंचित्परेषामात्मनोऽपि वा ॥ ४६
तस्मिंस्तमसि भूते च क्षत्रियाणां भयंकरे ।
विचचार महाबाहुर्निर्दहन्क्षत्रियान्बहून् ॥' ४७
ततः शरमहाज्वालो वीर्योष्मा कर्णपावकः ।
निर्दहन्पाण्डववनं चारु पर्यचरद्रणे ॥ ४८
'ततस्तेषां महाराज पाण्डवानां महारथाः ।
सृञ्जयानां च सर्वेषां शतशोऽथ सहस्रशः ।
अस्त्रैः कर्णं महेष्वासं समन्तात्पर्यवारयन् ॥ ४९
स संवार्य महास्त्राणि महेष्वासो महात्मनाम् ।
प्रहस्य पुरुषेन्द्रस्य कर्णश्चिच्छेद कार्मुकम् ॥' ५०
ततः संधाय नवतिं निमेषान्नतपर्वणाम् ।
बिभेद कवचं राज्ञो रणे कर्णः शितैः शरैः ॥ ५१
तद्वर्म हेमविकृतं रत्नचित्रं बभौ पतत् ।
सविद्युदभ्रं सवितुः श्लिष्टं वातहतं यथा ॥ ५२
तदङ्गात्पुरुषेन्द्रस्य भ्रष्टं वर्म व्यरोचत ।
रत्नैरलंकृतं चित्रैर्व्यभ्रं निशि यथा नभः ॥ ५३
भिन्नवर्मा शरैः पार्थो रुधिरेण समुक्षितः ।
बभासे पुरुषश्रेष्ठ उद्यन्निव दिवाकरः ॥'
स शराचितसर्वाङ्गश्छिन्नवर्माऽथ संयुगे ।
क्षात्रं धर्मं समास्थाय सिंहनादमकुर्वत ॥
नर्दित्वा च चिरं कालं पाण्डवो रभसो रणे
शक्तिं चिक्षेप वेगेन प्रदीप्तामशनीमिव ॥
तां ज्वलन्तीमिवाकाशे शक्तिं सप्तभिराशुगैः
भल्लैश्चिच्छेद राधेयः सा त्वशीर्यत वै रणे ॥
हृदि बाह्वोर्ललाटे च क्षिप्रकारी युधिष्ठिरः ।
चतुर्भिस्तोमरैः कर्णं ताडयित्वाऽनदन्मुदा ॥
उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन् ।
जघान सूतं पार्थस्य पार्ष्णिं च नवभिः शरैः ॥
ध्वजं चिच्छेद नृपतेस्त्रिभिर्विव्याध चैव तम्
इषुधी चास्य चिच्छेद रथं च तिलशोऽच्छिनत् ॥
एतस्मिन्नन्तरे शूराः पाण्डवानां महारथाः ।
ववृषुः शरवर्षाणि राधेयं प्रति भारत ॥
सात्यकिः पञ्चविंशत्या शिखण्डी नवभिः शरैः
अवर्षतां महाराज राधेयं शत्रुकर्शनम् ॥
शैनेयं तु ततः क्रुद्धः कर्णः पञ्चभिरायसैः ।
विव्याध समरे राजंस्त्रिभिश्चान्यैः शिलीमुखैः ॥
दक्षिणं तु भुजं तस्य त्रिभिः कर्णोऽभ्यविध्यत
सव्यं षोडशभिर्बाणैर्यन्तारं चास्य सप्तभिः ॥
अथास्य चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ।
सूतपुत्रोऽनयत्क्षिप्रं यमस्य सदनं प्रति ॥
अथापरेण भल्लेन धनुश्छित्त्वा महारथः ।
सारथेः सशिरस्त्राणं शिरः कायादपाहरत् ॥
हताश्वसूते तु रथे स्थितः स शिनिपुङ्गवः ।
शक्तिं चिक्षेप कर्णाय वैदूर्यमणिभूषिताम् ॥
तामापतन्तीं सहसा द्विधा चिच्छेद भारत ।
कर्णो वै धन्विनां श्रेष्ठस्तांश्च सर्वानवारयत् ॥
ततस्तान्निशितैर्बाणैः पाण्डवानां महारथान्
न्यवारयदमेयात्मा शिक्षया च बलेन च ॥
अर्दयित्वा शरैस्तांस्तु सिंहः क्षुद्रमृगानिव ।
पीडयन्धर्मराजानं शरैः सन्नतपर्वभिः ।
अभ्यद्रवत राधेयो धर्मपुत्रं शितैः शरैः ॥
ततः पार्थो ह्यपायासीद्धताश्वो हतसारथिः ।

अशक्नुवंन्मुखे स्थातुं ततः कर्णस्य दुर्मनाः ॥ ७१
तमभिद्रुत्य राधेयः पाण्डुपुत्रं युधिष्ठिरम् ।
अब्रवीत्प्रहसन्राजन्कुत्सयन्निव पाण्डवम् ॥ ७२
कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः ।
प्रजह्यात्समरे शत्रून्प्राणान्रक्ष महाहवे ॥ ७३
न भवान्क्षत्रधर्मेषु कुशलोऽसीति मे मतिः ।
ब्राह्मे बले भवान्युक्तः स्वाध्याये यज्ञकर्मणि ॥ ७४
मा स्म युध्यस्व कौन्तेय मा स्म वीरान्समासदः ।
मा चैवं विप्रियं ब्रूहि मा च त्वं भज संयुगम् ॥ ७५
वक्तव्या मारिषाऽन्ये तु न वक्तव्यास्तु मादृशाः ।
मादृशान्हि ब्रुवन्युद्धे एतदन्यच्च लप्स्यसे ॥ ७६
स्वगृहं गच्छ कौन्तेय यत्र वा केशवार्जुनौ ।
न हि त्वां समरे राजन्हन्यात्कर्णः कथंचन ॥ ७७
सञ्जय उवाच ।
वरप्रदानं कुन्त्यास्तु कर्णः स्मृत्वा महारथः ।
वधप्राप्तं तु कौन्तेयं नावधीत्पुरुषोत्तमः ॥ ७८
एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ।
न्यहनत्पाण्डवीं सेनां वज्रहस्त इवासुरीम् ॥ ७९
ततोऽपायाद्द्रुतं राजन्व्रीडन्निव नरेश्वरः ॥ ८०
अथापयातं राजानं मत्वाऽन्वीयुस्तमच्युतम् ।
चेदिपाण्डवपाञ्चालाः सात्यकिश्च महारथः ।
द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ ॥ ८१
ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम् ।
कुरुभिः सहितो वीरः प्रहृष्टः पृष्ठतोऽन्वगात् ॥ ८२
भेरीशङ्खमृदङ्गानां कार्मुकाणां च निःस्वनः ।
बभूव धार्तराष्ट्राणां सिंहनादरवस्तथा ॥ ८३
युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरम् ।
श्रुतकीर्तेर्महाराज दृष्ट्वा तत्कर्णविक्रमम् ॥ ८४
काल्यमानं बलं दृष्ट्वा सूतपुत्रेण मारिष ।
स्वान्योधानब्रवीत्क्रुद्धो निघ्नतैतान्किमासत ॥ ८५
ततो राज्ञाऽभ्यनुज्ञाताः पाण्डवानां महारथाः ।
भीमसेनमुखाः सर्वे पुत्रांस्ते प्रत्युपाद्रवन् ॥ ८६
अभवत्तुमुलः शब्दो योधानां तत्र भारत ।
रथहस्त्यश्वपत्तीनां द्रवतां निनदो महान् ।
उद्यतप्रतिविद्धानां शस्त्राणां च ततस्ततः ॥ ८७
आगच्छत प्रहरत क्षिप्रं विपरिधावत ।
इति ब्रुवाणा ह्यन्योन्यं जघ्नुर्योधा महारणे ॥ ८८
अभ्रच्छायेव तत्रासीच्छरवृष्टिभिरम्बरे ।
समावृतैर्नरवरैर्निघ्नद्भिरितरेतरम् ॥ ८९
विपताकध्वजच्छत्रा व्यश्वसूतरथायुधाः ।
व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणाः क्षितीश्वराः ।
शिखराणीव शैलानां वज्रभिन्नानि मारिष ॥ ९०
सारोहा निहताः पेतुर्द्विपा भिन्ना महीतले ।
छिन्नभिन्नविपर्यस्तवर्मालंकारविग्रहाः ॥ ९१
सारोहास्तुरगाः पेतुर्हतवीराः सहस्रशः ।
विप्रविद्धायुधाङ्गाश्च द्विरदा रथिभिर्हताः ।
प्रतिवीरैश्च संमर्दे पत्तिसङ्घाः सहस्रशः ॥ ९२
विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः ।
शिरोभिर्युद्धशौण्डानां सर्वतः संवृता मही ॥ ९३
यथा भुवि तथा व्योम्नि निःस्वनं शुश्रुवुर्जनाः ।
विमानेऽप्सरसां सङ्घैर्गीतवादित्रनिःस्वनैः ॥ ९४
हतानभिमुखान्वीरान्वीरैः शतसहस्रशः ।
आरोप्यारोप्य गच्छन्ति विमानेष्वप्सरोगणाः ९५
तद्दृष्ट्वा महदाश्चर्यं प्रत्यक्षं स्वर्गलिप्सया ।
प्रहृष्टमनसः शूराः क्षिप्रं जघ्नुः परस्परम् ॥ ९६
रथिनो रथिभिः सार्धं चित्रं युयुधुराहवे ।
पत्तयः पत्तिभिर्नागाः सह नागैर्हयैर्हयाः ॥ ९७
एवं प्रवृत्ते संग्रामे गजवाजिनरक्षये ।
सैन्येन रजसा वृत्ते स्वे स्वाञ्जघ्नुः परे परान् ॥ ९८
कचाकचं युद्धमासीद्दन्तादन्ति नखानखि ।
मुष्टियुद्धं नियुद्धं च देहपाप्मविनाशनम् ॥ ९९
तथा वर्तति संग्रामे गजवाजिनरक्षये ।
नराश्वनागदेहेभ्यः प्रसृता लोहितापगा ॥ १००
गजाश्वनरदेहान्सा व्युवाह पतितान्बहून् ।
नराश्वगजसंबाधे नराश्वगजसादिनाम् ॥ १०१
लोहितोदा महाघोरा मांसशोणितकर्दमा ।

चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

कचाकचि युद्धं इति झ. पाठः ॥ ९९ ॥

नराश्वगजदेहान्वै वहन्ती भीरुभीषणा ॥ १०२
तस्या नद्याः परं पारं व्रजन्ति विजयैषिणः ।
नागेन च प्लवन्तो वै निमज्ज्योन्मज्ज्य चापरे ॥ १०३
ते तु लोहितदिग्धाङ्गा रक्तवर्मायुधाम्बराः ।
सस्नुस्तस्यां पपुश्चास्रं मम्लुश्च भरतर्षभ ॥ १०४
रथानश्वान्नरान्नागानायुधाभरणानि च ।
वर्माणि चाप्यपश्याम पतितानि सहस्रशः ।
खं द्यां भूमिं दिशश्चैव प्रायः पश्याम लोहिताः ॥
लोहितस्य तु गन्धेन स्पर्शेन च रसेन च ।
रूपेण चातिरिक्तेन शब्देन च विसर्पता ।
विषादः सुमहानासीत्प्रायः सैन्यस्य भारत ॥ १०
तत्तु विप्रहतं सैन्यं भीमसेनमुखैस्तव ।
भूयः समाद्रवन्वीराः सात्यकिप्रमुखास्तदा ॥ १०
तेषामापततां वेगमविषह्यं निरीक्ष्य च ।
पुत्राणां ते महासैन्यमासीद्राजन्पराङ्मुखम् ॥ १०
तत्प्रकीर्णरथाश्वेभं नरवाजिसमाकुलम् ।
विध्वस्तवर्मकवचं प्रविद्धायुधकार्मुकम् ॥ १०
व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्दितमिवारण्ये यथा गजकुलं तथा ॥ ११

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

कर्णं पराजित्य जिघांसोर्भीमस्य शल्येन हेतुकथनपूर्वकं निषेधनम् ॥ १ ॥

सञ्जय उवाच ।
तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम् ।
दुर्योधनो महाराज वारयश्मास सर्वशः ॥ १
योधांश्च स्वबलं चैव समन्ताद्भरतर्षभ ।
क्रोशतस्तव पुत्रस्य न स्म राजन्न्यवर्तत ॥ २
ततः पक्षप्रपक्षस्थाः प्रकुक्षिस्थाश्च भारत ।
तदा सशस्त्राः कुरवो भीममभ्यद्रवन्रणे ॥ ३
कर्णोऽपि दृष्ट्वा द्रवतो धार्तराष्ट्रान्पराङ्मुखान् ।
मद्रराजमुवाचेदं याहि भीमरथं प्रति ॥ ४
एवमुक्तश्च कर्णेन शल्यो मद्राधिपस्तदा ।
हंसवर्णान्हयानग्र्यान्प्रैषीद्यत्र वृकोदरः ॥ ५
ते प्रेरिता महाराज शल्येनाहवशोभिना ।
भीमसेनरथं प्राप्य समसज्जन्त वाजिनः ॥ ६
दृष्ट्वा कर्णं समायान्तं भीमः क्रोधसमन्वितः ।
मतिं चक्रे विनाशाय कर्णस्य भरतर्षभ ॥ ७
सोऽब्रवीत्सात्यकिं वीरं धृष्टद्युम्नं च पार्षतम् ।
यूयं रक्षत राजानं धर्मात्मानं युधिष्ठिरम् ॥ ८
संशयान्महतो मुक्तः कथंचित्प्रेक्षतो मम ।
अग्रतो मे कृतो राजा छिन्नसर्वपरिच्छदः ॥ ९
दुर्योधनस्य प्रीत्यर्थं राधेयेन दुरात्मना ।
अन्तमद्य गमिष्यामि तस्य दुःखस्य पार्षत ॥ १
हन्तास्म्यद्य रणे कर्णं स वा मां निहनिष्यति
संग्रामेऽद्य सुघोरेऽस्मिन्सत्यमेतद्ब्रवीमि वः ॥ १
राजानमद्य भवतां न्यासभूतं ददानि वै ।
तस्य संरक्षणे सर्वे यतध्वं विगतज्वराः ॥
एवमुक्त्वा महाबाहुः प्रायादाधिरथिं प्रति ।
सिंहनादेन महता सर्वाः संनादयन्दिशः ॥
दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनम्
सूतपुत्रमथोवाच मद्राणामीश्वरो विभुः ॥
शल्य उवाच ।
पश्य कर्ण महाबाहुं संक्रुद्धं पाण्डुनन्दनम् ।
दीर्घकालार्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवम् ॥
ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन ।
अभिमन्यौ हते कर्ण राक्षसे च घटोत्कचे ॥
त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे
बिभर्ति सदृशं रूपं युगान्ताग्निसमप्रभम् ॥
सञ्जय उवाच ।
इति ब्रुवति राधेयं मद्राणामीश्वरे नृप ।
अभ्यवर्तत वै कर्णं क्रोधदीप्तो वृकोदरः ॥
अथागतं तु संप्रेक्ष्य भीमं युद्धाभिनन्दिनम्

अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव ॥ १९
यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर ।
भीमसेनं प्रति विभो तत्सत्यं नात्र संशयः ॥ २०
एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः ।
निरपेक्षः शरीरे च प्राणतश्च बलाधिकः ॥ २१
अज्ञातवासं वसता विराटनगरे तदा ।
द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात् ।
गूढभावं समाश्रित्य कीचकः सगणो हतः ॥ २२
सोऽद्य संग्रामशिरसि सन्नद्धः क्रोधमूर्च्छितः ।
किंकरोद्यतदण्डेन मृत्युनापि व्रजेद्रणम् ॥ २३
चिरकालाभिलषितो ममायं तु मनोरथः ।
अर्जुनं समरे हन्यां मां वा हन्याद्धनंजयः ॥ २४
स मे कदाचिदद्यैव भवेद्भीमसमागमात् ॥ २५
निहते भीमसेने वा यदि वा विरथीकृते ।
अभियास्यति मां पार्थस्तन्मे साधु भविष्यति ।
अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं संप्रधारय ॥ २६
सञ्जय उवाच ।
एतच्छ्रुत्वा तु वचनं राधेयस्यामितौजसः ।
उवाच वचनं शल्यः सूतपुत्रं तथागतम् ॥ २७
अभियाहि महाबाहो भीमसेनं महाबलम् ।
निरपेक्षश्च युध्यस्व शक्तिं स्वां संप्रदर्शयन् ॥ २८
यस्ते कामोऽभिलषितश्चिरात्प्रभृति हृद्गतः ।
स वै संपत्स्यते कर्ण सत्यमेतद्ब्रवीमि ते ॥ २९
एवमुक्ते ततः कर्णः शल्यं पुनरभाषत ।
हन्ताऽहमेनं संरब्धं मां वा हन्ता वृकोदरः ॥ ३०
एवमुक्त्वा महाराज राधेयो रथिनां वरः ।
युद्धे मनः समाधाय याहि याहीत्यचोदयत् ॥ ३१
ततः प्रायाद्रथेनाशु शल्यस्तत्र विशांपते ।
यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥ ३२
ततस्तूर्यनिनादश्च भेरीणां च महास्वनः ।
उदतिष्ठच्च राजेन्द्र कर्णभीमसमागमे ॥ ३३
भीमसेनोऽथ संक्रुद्धस्तस्य सैन्यं दुरासदम् ।
नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली ॥ ३४
स सन्निपातस्तुमुलो घोररूपो विशांपते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ ३५
ततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्रादिव सन्निव ।
भीमसेनो महाबाहुः कर्णं प्रेप्सुरभिद्रवत् ॥ ३६
समापतन्तं संप्रेक्ष्य कर्णो वैकर्तनो वृषा ।
आजघान सुसंक्रुद्धो नाराचेन स्तनान्तरे ।
पुनश्चैनममेयात्मा शरवर्षैरवाकिरत् ॥ ३७
स विद्धः सूतपुत्रेण च्छादयामास पत्रिभिः ।
विव्याध निशितैः कर्णं नवभिर्नतपर्वभिः ॥ ३८
तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिभिः ॥ ३९
अथैनं छिन्नधन्वानं प्रत्यविध्यत्स्तनान्तरे ।
नाराचेन सुतीक्ष्णेन सर्वावरणभेदिना ॥ ४०
सोऽन्यत्कार्मुकमादाय सूतपुत्रं वृकोदरः ।
राजन्मर्मसु मर्मज्ञो विव्याध निशितैः शरैः ।
ननाद बलवन्नादं कम्पयन्निव रोदसी ॥ ४१
तं कर्णः पञ्चविंशत्या नाराचानां समार्पयत् ।
मदोत्कटं वने दृप्तमुल्काभिरिव कुञ्जरम् ॥ ४२
ततः सायकभिन्नाङ्गः पाण्डवः क्रोधमूर्च्छितः ।
संरम्भामर्षताम्राक्षः सूतपुत्रवधेप्सया ॥ ४३
स कार्मुके महावेगं भारसाधनमुत्तमम् ।
गिरीणामपि भेत्तारं सायकं समयोजयत् ॥ ४४
विकृष्य बलवच्चापमाकर्णादतिमारुतिः ।
तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया ॥ ४५
स विसृष्टो बलवता बाणो वज्राशनिस्वनः ।
अदारयद्रणे कर्णं वज्रवेगो यथाऽचलम् ॥ ४६
स भीमसेनाभिहतः सूतपुत्रः कुरूद्वह ।
निषसाद रथोपस्थे विसंज्ञः पृतनापतिः ।
रुधिरेणावसिक्ताङ्गो गतासुवदरिंदमः ॥ ४७
एतस्मिन्नन्तरे दृष्ट्वा मद्रराजो वृकोदरम् ।
जिघांसुं छेत्तुमायान्तं साधयन्निदमब्रवीत् ॥ ४८
भीमसेन महाबाहो यत्त्वां वक्ष्यामि तच्छृणु ।
वचनं हेतुसंपन्नं श्रुत्वा चैतत्तथा कुरु ॥ ४९
अर्जुनेन प्रतिज्ञातो वधः कर्णस्य शुष्मिणः ।
तां तथा कुरु भद्रं ते प्रतिज्ञां सव्यसाचिनः ॥ ५०
भीमसेन उवाच ।
दृढव्रतत्वं पार्थस्य जानामि नृपसत्तम ।
राज्ञस्तु धर्षणं पापः कृतवान्मम सन्निधौ ॥ ५१

ततः कोपाभिभूतेन शेषं न गणितं मया ।
पतिते चापि राधेये न मे मन्युः शमं गतः ।
जिह्वोद्धरणमेवास्य प्राप्तकालं मतं मम ॥ ५२
अनेन सुनृशंसेन समवेतेषु राजसु ।
अस्माकं शृण्वतां शल्य यानि वाक्यानि मातुल ।
असह्यानि नीचानि बहूनि श्रावितानि भो ॥ ५३
नूनं चैतत्प्रतिज्ञातं दूरस्थस्यापि पार्थिव ।
छेदनं चास्य जिह्वायास्तदैवाकाङ्क्षितं मया ।
राज्ञस्तु प्रियकामेन कालोऽयं परिपालितः ॥ ५४
भवता तु यदुक्तोऽस्मि वाक्यं हेत्वर्थसंहितम् ।
तद्गृहीतं महाराज कटुकस्थमिवौषधम् ॥ ५५
हीनप्रतिज्ञो बीभत्सुर्न हि जीवेत कर्हिचित् ।
अस्मिन्विनष्टे नष्टाः स्मः सर्व एव सकेशवाः ॥ ५६
अद्य चैव नृशंसात्मा पापः पापकृतां वरः ।
गमिष्यति परीभावं दृष्टमात्रः किरीटिना ॥ ५७
युधिष्ठिरस्य कोपेन पूर्वं दग्धो नृशंसकृत् ।
त्वया संरक्षितस्त्वद्य मत्समीपादुपागतः ॥ ५८
सञ्जय उवाच ।'
एवं मद्राधिपः श्रुत्वा विसंज्ञं सूतनन्दनम् ।
अपोवाह रथेनाजौ कर्णमाहवशोभिनम् ॥ ५९
पराजिते ततः कर्णे धार्तराष्ट्री महाचमूः ।
व्यपायात्सर्वतो भग्ना हाहाभूता समन्ततः ॥ ६०

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

भीमकर्णयोर्युद्धम् ॥ १ ॥ भीमेन दुर्योधनानुजानां कतिपयानां हननम् ॥ २ ॥ संकुलयुद्धं च ॥ ३ ॥

धृतराष्ट्र उवाच ।
सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय ।
येन कर्णो महाबाहू रथोपस्थे निपातितः ॥ १
कर्णो ह्येको रणे हन्ता पाण्डवान्सृञ्जयैः सह ।
इति दुर्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः ॥ २
पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे ।
ततः परं किमकरोत्पुत्रो दुर्योधनो मम ॥ ३
सञ्जय उवाच ।
विमुखं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे ।
पुत्रस्तव महाराज सोदर्यानिदमब्रवीत् ॥ ४
शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत ।
भीमसेनभयेऽगाधे मज्जन्तं व्यसनार्णवे ॥ ५
ते तु राज्ञा समादिष्टा भीमसेनं जिघांसवः ।
अभ्यवर्तन्त संक्रुद्धाः पतङ्गाः पावकं यथा ॥ ६
श्रुतायुर्दुर्धरः क्राथो विवित्सुर्विकटः समः ।
निषङ्गी कवची पाशी तथा नन्दोपनन्दकौ ॥ ७
दुष्प्रधर्षः सुबाहुश्च वातवेगसुवर्चसौ ।
धनुर्ग्राहो दुर्मदश्च जलसन्धः शलः सहः ॥ ८
एते रथैः परिवृता वीर्यवन्तो महाबलाः ।
भीमसेनं समासाद्य समन्तात्पर्यवारयन् ॥ ९
ते व्यमुञ्चञ्छरव्रातान्नानालिङ्गान्समन्ततः ।
स तैरभ्यर्द्यमानस्तु भीमसेनो महाबलः ॥ १०
तेषामापततां क्षिप्रं सुतानां ते जनाधिप ।
रथैः पञ्चशतैः सार्धं पञ्चाशदहनद्रथान् ॥ ११
विवित्सोस्तु ततः क्रुद्धो भल्लेनापाहरच्छिरः ।
भीमसेनो महाराज तत्पपात हतं भुवि ॥ १२
सकुण्डलशिरस्त्राणं पूर्णचन्द्रोपमं तथा ।
'अशोभत महाराज पूर्णचन्द्र इवाम्बरे ॥' १३
तं दृष्ट्वा निहतं शूरं भ्रातरः सर्वतस्तदा ।
अभ्यद्रवन्त समरे भीमं भीमपराक्रमम् ॥ १४
ततोऽपराभ्यां भल्लाभ्यां पुत्रयोस्ते महाहवे ।
जहार समरे प्राणान्भीमो भीमपराक्रमः ॥ १५
तौ धरामन्वपद्येतां वातरुग्णाविव द्रुमौ ।
विकटश्च सहश्चोभौ देवपुत्रोपमौ नृप ॥ १६

---

ततो मद्राधिपो दृष्ट्वा इति झ. पाठः ॥ ५९ ॥

ततस्तु त्वरितो भीमः क्राथं निन्ये यमक्षयम् ।
नाराचेन सुतीक्ष्णेन स हतो न्यपतद्भुवि ॥ १७
हाहाकारस्ततस्तीव्रः संबभूव जनेश्वर ।
वध्यमानेषु वीरेषु तव पुत्रेषु धन्विषु ॥ १८
तेषां सुलुलिते सैन्ये पुनर्भीमो महाबलः ।
नन्दोपनन्दौ समरे प्रैषयद्यमसादनम् ॥ १९
ततस्ते प्राद्रवन्भीताः पुत्रास्ते विह्वलीकृताः ।
भीमसेनं रणे दृष्ट्वा कालान्तकयमोपमम् ॥ २०
पुत्रांस्ते निहतान्दृष्ट्वा सूतपुत्रः सुदुर्मनाः ।
हंसवर्णान्हयान्भूयः प्रैषयद्यत्र पाण्डवः ॥ २१
ते प्रेषिता महाराज मद्रराजेन वाजिनः ।
भीमसेनरथं प्राप्य समसज्जन्त वेगिताः ॥ २२
स संनिपातस्तुमुलो घोररूपो विशांपते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ २३
दृष्ट्वा मम महाराज तौ समेतौ महारथौ ।
आसीद्बुद्धिः कथं युद्धमेतदद्य भविष्यति ॥ २४
ततो भीमो रणश्लाघी छादयामास पत्रिभिः ।
कर्णं रणे महाराज पुत्राणां तव पश्यताम् ॥ २५
ततः कर्णो भृशं क्रुद्धो भीमं नवभिरायसैः ।
विव्याध परमास्त्रज्ञो भल्लैः संनतपर्वभिः ॥ २६
तान्निहत्य महाबाहुर्भीमो भीमपराक्रमः ।
आकर्णपूर्णैर्विशिखैः कर्णं विव्याध सप्तभिः ॥ २७
ततः कर्णो महाराज आशीविष इव श्वसन् ।
शरवर्षेण महता छादयामास पाण्डवम् ॥ २८
भीमोऽपि तं शरव्रातैश्छादयित्वा महारथम् ।
पश्यतां कौरवेयाणां विननर्द महाबलः ॥ २९
ततः कर्णो भृशं क्रुद्धो दृढमादाय कार्मुकम् ।
भीमं विव्याध दशभिः कङ्कपत्रैः शिलाशितैः ।
कार्मुकं चास्य चिच्छेद भल्लेन निशितेन च ॥ ३०
ततो भीमो महाबाहुर्हेमपट्टविभूषितम् ।
परिघं घोरमादाय मृत्युदण्डमिवापरम् ।
कर्णस्य निधनाकाङ्क्षी चिक्षेपातिबलो नदन् ॥ ३१
तमापतन्तं परिघं वज्राशनिसमस्वनम् ।
चिच्छेद बहुधा कर्णः शरैराशीविषोपमैः ॥ ३२
ततः कार्मुकमादाय भीमो दृढतरं तदा ।
छादयामास विशिखैः कर्णं परबलार्दनम् ॥ ३३
ततो युद्धमभूद्घोरं कर्णपाण्डवयोर्मृधे ।
बलीन्द्रयोरिव मुहुः परस्परवधैषिणोः ॥ ३४
ततः कर्णो महाराज भीमसेनं त्रिभिः शरैः ।
आकर्णपूर्णैर्विव्याध दृढमानम्य कार्मुकम् ॥ ३५
सोऽतिविद्धो महेष्वासः कर्णेन बलिनां वरः ।
घोरमादत्त विशिखं कर्णकायावदारणम् ॥ ३६
तस्य भित्त्वा तनुत्राणं भित्त्वा कायं च सायकः ।
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः ॥ ३७
स तेनातिप्रहारेण व्यथितो विह्वलन्निव ॥
संचचाल रथे कर्णः क्षितिकम्पे यथाऽचलः ॥ ३८
ततः कर्णो महाराज रोषामर्षसमन्वितः ।
भीमं तं पञ्चविंशत्या नाराचानां समार्पयत् ॥ ३९
चिच्छेद कार्मुकं तूर्णं पाण्डवस्याशु पत्रिणा ॥ ४०
ततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्राद्धसन्निव ।
विरथं भीमकर्माणं भीमं कर्णश्चकार ह ॥ ४१
विरथो भरतश्रेष्ठ प्रहसन्ननिलोपमः ।
गदां गृह्य महाबाहुरपतत्स्यन्दनोत्तमात् ॥ ४२
गदया च महाराज कर्णस्य रथकूबरम् ।
पोथयामास संक्रुद्धः समरे शत्रुतापनः ॥ ४३
स क्रोधवशमापन्नः पाण्डुपुत्रः प्रतापवान् ।
विद्राव्य गदया वीरस्तव पुत्रान्महाहवे ॥ ४४
नागान्सप्तशतान्राजन्नीषादन्तान्प्रहारिणः ।
व्यधमत्सहसा भीमः क्रुद्धरूपः परंतपः ॥ ४५
दन्तवेष्टेषु नेत्रेषु कुम्भेषु च कटेषु च ।
मर्मस्वपि च मर्मज्ञस्तान्नागानवधीद्बली ॥ ४६
'अर्दिता भीमसेनेन विनदन्तो भृशातुराः ।'
ततस्ते प्राद्रवन्भीताः प्रहताश्च पुनःपुनः ।
महामात्रास्तमावव्रुर्मेघा इव दिवाकरम् ॥ ४७
तान्स सप्तशतान्नागान्सारोहायुधकेतनान् ।
भूमिष्ठो गदया जघ्ने वज्रेणेन्द्र इवाचलान् ॥ ४८
ततः सुबलपुत्रस्य नागानतिबलान्पुनः ।
पोथयामास कौन्तेयो द्विपञ्चाशदरिंदमः ॥ ४९
तथा रथशतं साग्रं पत्तींश्च शतशोऽपरान् ।
न्यहनत्पाण्डवो युद्धे तापयंस्तव वाहिनीम् ॥ ५०

प्रताप्यमानं सूर्येण भीमेन च महात्मना ।
तत्र सैन्यं संचुकोच चर्माग्नावाहितं यथा ॥ ५१
ते भीमभयसंत्रस्तास्तावका भरतर्षभ ।
विहाय समरे कर्णं दुद्रुवुर्वै दिशो दश ॥ ५२
रथाः पञ्चशताश्चान्ये ह्रादिनः शरवर्षिणः ।
भीममभ्यद्रवन्घ्नन्तः शरपूगैः समन्ततः ॥ ५३
तान्स पञ्चशतान्वीरान्सपताकध्वजायुधान् ।
पोथयामास गदया भीमो विष्णुरिवासुरान् ॥ ५४
ततः शकुनिनिर्दिष्टाः सादिनः शूरसंमताः ।
त्रिसाहस्राण्यभिययुः शरशक्त्यृष्टिपाणयः ॥ ५५
तान्प्रत्युद्गम्य यवनान्साश्वारोहांस्तदाऽरिहा ।
विविधान्विचरन्मार्गान्गदया समपोथयत् ॥ ५६
तेषामासीन्महाञ्छब्दस्ताडितानां च सर्वशः ।
अग्निभिर्दह्यमानानां नलानामिव भारत ॥ ५७
एवं सुबलपुत्रस्य त्रिसाहस्रान्हयोत्तमान् ।
हत्वाऽन्यं रथमास्थाय क्रुद्धो राधेयमभ्ययात् ॥ ५८
कर्णोऽपि समरे राजन्धर्मपुत्रमरिंदमम् ।
स शरैश्छादयामास सारथिं चाप्यपातयत् ॥ ५९
ततः स प्रद्रुतं सैन्यं दृष्ट्वा कर्णो महारथः ।
अन्वधावत्किरन्बाणैः कङ्कपत्रैरजिह्मगैः ॥ ६०
राजानमभिधावन्तं शरैरावृत्य रोदसी ।
क्रुद्धः प्रच्छादयामास शरजालेन मारुतिः ॥ ६१
सन्निवृत्तस्ततस्तूर्णं राधेयः शत्रुकर्शनः ।
भीमं प्रच्छादयामास समन्तान्निशितैः शरैः ॥ ६२
भीमसेनरथप्रेप्सुं कर्णं भारत सात्यकिः ।
अभ्यर्दयदमेयात्मा पार्ष्णिग्रहणकारणात् ॥ ६३
भीमसेनरथप्रेप्सुं कर्णो भारत सात्यकिम् ।
अभ्यवर्तत शैनेयमर्दयञ्छरवृष्टिभिः ॥ ६४
तावन्योन्यं समासाद्य वृषभौ सर्वधन्विनाम् ।
विसृजन्तौ शरान्दीप्तान्विभ्राजेतां मनस्विनौ ६५
ताभ्यां वियति राजेन्द्र विततं भीमदर्शनम् ।
क्रौञ्चपृष्ठारुणं रौद्रं बाणजालं व्यदृश्यत ॥ ६
नैव सूर्यप्रभा राजन्न दिशः प्रदिशस्तथा ।
प्राज्ञासिष्म वयं ते वा शरैर्मुक्तैः सहस्रशः ॥ ६
मध्याह्ने तपतो राजन्भास्करस्य महाप्रभाः ।
हृताः सर्वाः शरौघैस्तैः कर्णमाधवयोस्तदा ॥ ६
सौबलं कृतवर्माणं द्रौणिमाधिरथिं कृपम् ।
संसक्तान्पाण्डवैर्दृष्ट्वा निवृत्ताः कुरवः पुनः ॥ ६
तेषामापततां शब्दस्तीव्र आसीद्विशांपते ।
उद्धृत्तानां यथा वृष्ट्या सागराणां भयावहः ॥ ७
ते सेने भृशसंसक्ते दृष्ट्वाऽन्योन्यं महाहवे ।
हर्षेण महता युक्ते परिगृह्य परस्परम् ॥ ७
ततः प्रववृते युद्धं मध्यं प्राप्ते दिवाकरे ।
यादृशं नैवमस्माभिर्दृष्टपूर्वं न च श्रुतम् ॥ ७
बलौघस्तु समासाद्य बलौघं सहसा रणे ।
उपसर्पत वेगेन वार्योघ इव सागरम् ॥ ७
आसीन्निनादः सुमहान्बाणौघानां परस्परम् ।
गर्जतां सागरौघाणां यथा स्यान्निःस्वनो महान्
ते तु सेने समासाद्य वेगवत्यौ परस्परम् ।
एकीभावमनुप्राप्ते नद्याविव समागमे ॥ ७
ततः प्रववृते युद्धं घोररूपं विशांपते ।
कुरूणां पाण्डवानां च लिप्सतां सुमहद्यशः ॥ ७
शूराणां गर्जतां तत्र ह्यविच्छेदकृता गिरः ।
श्रूयन्ते विविधा राजन्नामान्युद्दिश्य भारत ॥ ७
यस्य यद्धि रणे व्यङ्गं पितृतो मातृतोऽपि वा ।
कर्मतः शीलतो वाऽपि स तच्छ्रावयते युधि ॥ ७
तान्दृष्ट्वा समरे शूरांस्तर्जमानान्परस्परम् ।
अभवन्मे मती राजन्नैषामस्तीति जीवितम् ॥ ७
तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसाम् ।
अभवन्मे भयं तीव्रं कथमेतद्भविष्यति ॥ ८
ततस्ते पाण्डवा राजन्कौरवाश्च महारथाः ।
ततक्षुः सायकैस्तूर्णमन्योन्यं विजयैषिणः ॥ ८

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
क्षत्रियास्ते महाराज परस्परवधैषिणः ।
अन्योन्यं समरे जघ्नुः कृतवैरा महौजसः ॥ १
रथौघाश्च हयौघाश्च नरौघाश्च समन्ततः ।
गजौघाश्च महाराज संसक्ताश्च परस्परम् ॥ २
गदानां परिघाणां च शक्तीनां च परस्परम् ।
प्रासानां भिण्डिपालानां भुसुण्ठीनां च सर्वशः ॥ ३
संपातं चानुपश्याम संग्रामे भृशदारुणे ।
शलभा इव संपेतुः शरवृष्ट्यः समन्ततः ॥ ४
नागान्नागाः समासाद्य व्यधमन्त परस्परम् ।
हया हयांश्च समरे रथिनो रथिनस्तथा ॥ ५
पत्तयः पत्तिसङ्घांश्च हयसङ्घांश्च पत्तयः ।
पत्तयो रथमातङ्गान्रथा हस्त्यश्वमेव च ।
नागाश्च समरे त्र्यङ्गं ममृदुः शीघ्रगा नृप ॥ ६
वध्यतां तत्र शूराणां क्रोशतां च परस्परम् ।
घोरमायोधनं जज्ञे पशूनां घातने यथा ॥ ७
रुधिरेण समास्तीर्णा बभौ भारत मेदिनी ।
शक्रगोपगणाकीर्णा प्रावृषीव वसुंधरा ॥ ८
यथा वा वाससी शुक्ले महारजनरञ्जिते ।
बिभ्रती युवती श्यामा तद्वदासीद्वसुंधरा ॥ ९
'बद्धचूडामणिधरैः शिरोभिश्चारुकुण्डलैः ।
उज्झितैर्वृषभाक्षाणां भ्राजते स्म वसुंधरा ॥' १०
शशशोणितदिग्धेव शातकुम्भमयीव च ।
'भूर्बभौ भरतश्रेष्ठ शान्तार्चिर्भिरिवानलैः ॥' ११
छिन्नानां चोत्तमाङ्गानां बाहूनां चोरुभिः सह ।
कुण्डलानां पिनद्धानां भूषणानां च भारत ॥ १२
निष्काणां हेमसूत्राणां शरीराणा च धन्विनाम् ।
चर्मणां सपताकानां सङ्घास्तत्रापतन्भुवि ।
'अगम्यकल्पा पृथिवी सर्वतो भृशकर्दमा ॥' १३
गजा गजान्समासाद्य विषाणैरार्दयन्नृप ।
विषाणाग्रहतास्तत्र भ्राजन्ते द्विरदोत्तमाः ।
रुधिरेणावसिक्ताङ्गा गैरिकप्रस्रवा इव ।
'प्रावृट्काले महाराज मेघा इव सविद्युतः ॥' १४
स्यन्दमाना यथा भान्ति पर्वता धातुमण्डिताः ।
'तथा रेजू रणे नागा रुधिरेण समाप्लुताः ॥' १५
तोमरान्सादिभिर्मुक्तान्प्रतिमानस्थितान्बहून् ।
हस्तैरुद्धृत्य तान्नागा बभञ्जुश्चापरे रणे ॥ १६
नाराचैश्छिन्नवर्माणो भ्राजन्ते स्म गजोत्तमाः ।
हिमागमे यथा राजन्व्यभ्रा इव महीधराः ॥ १७
शरैः कनकपुङ्खैश्च चिता रेजुर्गजोत्तमाः ।
उल्काभिः संप्रदीप्ताग्राः पर्वता इव भारत ॥ १८
केचिदभ्याहता नागैर्नागा नगवरोपमाः ।
न चेलुः समरात्तस्माच्छिन्नपक्षा इवाद्रयः ॥ १९
अपरे प्राद्रवन्नागाः शरार्ता व्रणपीडिताः ।
प्रतिमानैश्च कुम्भैश्च पेतुरुर्व्यां महाहवे ॥ २०
निषेदुः सिंहवच्चान्ये नदन्तो भैरवान्रवान् ।
वेमुश्च बहवो राजंश्चुक्रुशुश्चापरे गजाः ॥ २१
हयाश्च निहता बाणैर्हेमभाण्डविभूषिताः ।
निषेदुश्चैव मम्लुश्च बभ्रमुश्च दिशो दश ॥ २२
अपरे क्लिश्यमानाश्च व्यवेष्टन्त महीतले ।
भावान्बहुविधांश्चक्रुस्ताडिताः शरतोमरैः ॥ २३
नरास्तु निहता भूमौ कूजन्तस्तत्र मारिष ।
दृष्ट्वा च बान्धवानन्ये पितॄनन्ये पितामहान् ॥ २४
धावमानान्परांश्चान्ये दृष्ट्वान्ये तत्र भारत ।
ख्यातानि गोत्रनामानि शशंसुरितरेतरम् ॥ २५
तेषां छिन्ना महाराज भुजाः कनकभूषणाः ।
उद्वेष्टन्ते विवेष्टन्ते भ्रमन्ति ह्युत्पतन्ति च ॥ २६
निपतन्ति तथैवान्ये स्फुरन्ति च सहस्रशः ।
वेगांश्चान्ये रणे चक्रुः पञ्चास्या इव पन्नगाः ॥ २७
ते भुजा भोगिभोगाभाश्चन्दनाक्ता विशांपते ।
लोहितार्द्रा भृशं रेजुस्तपनीयध्वजा इव ॥ २८
वर्तमाने तथा घोरे संकुले सर्वतो दिशम् ।

वृष्ट्यः वृष्टयः ॥ ४ ॥

सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

अविज्ञाताः स्म युध्यन्ते विनिघ्नन्तः परस्परम्॥२९
भौमेन रजसाकीर्णे शस्त्रसंपातसंकुले ।
नैव स्वे न परे राजन्व्यज्ञायन्त तमोवृताः ॥ ३०
तथा तदभवद्युद्धं घोररूपं भयानकम् ।
लोहितोदा महानद्यः प्रसस्रुस्तत्र चासकृत् ॥ ३१
शीर्षपाषाणसंछन्नाः केशशैवलशाड्वलाः ।
अस्थिमीनसमाकीर्णा धनुःशरगदोडुपाः ॥ ३२
मांसशोणितपङ्किन्यो घोररूपाः सुदारुणाः ।
नदीः प्रवर्तयामासुः शोणितौघविवर्धिनीः ॥ ३३
भीरुवित्रासकारिण्यः शूराणां हर्षवर्धनाः ।
ता नद्यो घोररूपास्तु नयन्त्यो यमसादनम् ॥ ३४
अवगाढान्मज्जयन्त्यः क्षत्रस्याजनयन्भयम् ।
क्रव्यादानां नरव्याघ्र नर्दतां तत्रतत्र ह ॥ ३५
घोरमायोधनं जज्ञे प्रेतराजपुरोपमम् ।
उत्थितान्यगणेयानि कबन्धानि समन्ततः ॥ ३६
नृत्यन्ति वै भूतगणाः सुतृप्ता मांसशोणितैः
पीत्वा च शोणितं तत्र वसां भुक्त्वा च भारत॥३
मेदोमज्जावसामत्तास्तृप्ता मांसस्य चैव ह ।
धावमानाः स्म दृश्यन्ते काकगृध्रबकास्तथा ॥३
शूरास्तु समरे राजन्भयं त्यक्त्वा सुदुस्त्यजम्
योधव्रतसमाख्याताश्चक्रुः कर्माण्यभीतवत् ॥ ३
शरशक्तिसमाकीर्णे क्रव्यादगणसंकुले ।
व्यचरन्त रणे शूराः ख्यापयन्तः स्वपौरुषम् ॥ ४
अन्योन्यं श्रावयन्ति स्म नामगोत्राणि भारत
पितृनामानि च रणे गोत्रनामानि वा विभो ॥ ४
श्रावयाणाश्च बहवस्तत्र योधा विशांपते ।
अन्योन्यमवमृद्नन्तः शक्तितोमरपट्टसैः ॥ ४
वर्तमाने तथा युद्धे घोररूपे सुदारुणे ।
व्यषीदत्कौरवी सेना भिन्ना नौरिव सागरे ॥ ४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

अर्जुनस्य संशप्तकैर्युद्धम् ॥ १ ॥

---

सञ्जय उवाच ।
वर्तमाने तथा युद्धे क्षत्रियाणां निमज्जने ।
गाण्डीवस्य महाघोषः श्रूयते युधि मारिष ॥ १
संशप्तकानामकरोत्कदनं यत्र पाण्डवः ।
कोसलानां तथा राजन्नारायणबलस्य च ॥ २
संशप्तकास्तु समरे शरवृष्टिं समन्ततः ।
अपातयन्पार्थमूर्ध्नि जयगृद्धाः प्रमन्यवः ॥ ३
तां शस्त्रवृष्टिमायान्तीमुरसा धारयन्प्रभुः ।
व्यगाहत परान्पार्थो विनिघ्नन्रथिनां वरान् ॥ ४
विक्षोभ्य तु रथानीकं कङ्कपत्रैः शिलाशितैः ।
आससाद ततः पार्थः सुशर्माणं महारथम् ॥ ५
स तस्य शरवर्षाणि ववर्ष रथिनां वरः ।
तथा संशप्तकाश्चैव पार्थस्य समरे स्थिताः ॥ ६
सुशर्मा तु ततः पार्थं विद्ध्वा दशभिराशुगैः ।
जनार्दनं त्रिभिर्बाणैरहनद्दक्षिणे भुजे ॥ ७
ततोऽपरेण भल्लेन केतुं पार्थस्य मारिष ।
विव्याध समरे राजन्सुशर्मा क्रोधमूर्च्छितः ॥
स वानरवरो राजन्विश्वकर्मकृतो महान् ।
ननाद सुमहानादं नृत्यन्निव विभीषयन् ॥
कपेस्तु निनदं श्रुत्वा संत्रस्ता तव वाहिनी ।
भयं विपुलमासाद्य निश्चेष्टा समपद्यत ॥ १
ततः सा शुशुभे सेना निश्चेष्टाऽवस्थिता नृप ।
नानापुष्पसमाकीर्णं यथा चित्रीकृतं वनम् ॥ १
प्रतिलभ्य ततः संज्ञां योधास्ते कुरुसत्तम ।
अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव ॥ १
संछाद्य समरे पार्थं परिवव्रुः समन्ततः ।
ते हयान्रथचक्रे तु रथेषां चापि मारिष ।
ग्रहीतुं प्रचक्रमुश्चैव क्रोधाविष्टाः समन्ततः ॥ १
निगृह्य तु रथं तस्य योधास्ते तु सहस्रशः ।
रथबन्धं प्रचक्रुर्हि पाण्डवस्यामितौजसः ॥ १

रथमारुरुहुः केचित्कृष्णपार्थौ जिघृक्षवः ।
संशप्तकानां योधास्ते सिंहनादांश्च नेदिरे ॥ १५
अपरे जगृहुश्चैव केशवस्य महाभुजौ ।
पार्थं चैके महाराज रथस्थं जगृहुर्मुदा ॥ १६
अच्युतः स महाबाहुर्विधुन्वन्रणमूर्धनि ।
पातयामास तान्सर्वान्दुष्टहस्तीव हस्तिपान् ॥ १७
स रथस्तैर्गृहीतस्तु पाण्डवस्य महात्मनः ।
स्पन्दितुं नाशकद्राजंस्तदद्भुतमिवाभवत् ॥ १८
ततः पार्थो महाबाहुः संवृतः स्तैर्महारथैः ।
निगृहीतं रथं दृष्ट्वा तांश्चाप्याद्रवतो बहून् ॥ १९
रथारूढांश्च सुबहून्पदाऽऽक्षिप्य न्यपातयत् ।
अपातयदसंभ्रान्तः शरैरासन्नयोधिभिः ॥ २०
तांस्तापयित्वा समरे पार्थः परपुरंजयः ।
स्मयन्निव महाबाहुः केशवं वाक्यमब्रवीत् ॥ २१
पश्य कृष्ण महाबाहो संशप्तकगणान्बहून् ।
कुर्वतोऽसुकरं कर्म मुमूर्षून्कालचोदितान् ॥ २२
रथबन्धमिमं प्राप्य पृथिव्यां नास्ति कश्चन ।
यः सहेत पुमाँल्लोके मदन्यः क्षत्रियर्षभः ॥ २३
पश्यैतानद्य समरे मत्प्रयुक्तैः सुतेजनैः ।
पात्यमानान्रणे कृष्ण शरैराशीविषोपमैः ॥ २४
इत्येवमुक्त्वा बीभत्सुः शङ्खप्रवरमुत्तमम् ।
व्यनादयदमेयात्मा देवदत्तं महामृधे ॥ २५
देवदत्तस्वनं श्रुत्वा केशवोऽपि महायशाः ।
पाञ्चजन्यस्वनं चक्रे पूरयन्निव रोदसी ॥ २६
तयोः शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी ।
संचचाल महाराज वित्रस्ता चाद्रवद्भृशम् ॥ २७
नागमस्त्रं ततः पार्थः प्रादुश्चक्रे हसन्निव ।
पादबन्धं स तेषां वै चक्रे तेन महास्त्रवित् ॥ २८
यानुद्दिश्य रणे पार्थः पादबन्धं चकार ह ।
ते बद्धाः पादबन्धेन योधाः संशप्तकास्तदा ॥ २९
निर्विचेष्टास्तदाऽभूवन्पाण्डवस्यास्त्रतेजसा ।
निर्विचेष्टांस्ततो योधानवधीत्पाण्डुनन्दनः ।
यथेन्द्रः समरे दैत्यांस्तारकस्य वधे पुरा ॥ ३०
ते वध्यमानाः समरे मुमुचुस्तं रथोत्तमम् ।
आयुधानि च सर्वाणि विस्रष्टुमुपचक्रमुः ॥ ३१

ततः सुशर्मा राजेन्द्र गृहीतां वीक्ष्य वाहिनीं
सौपर्णमस्त्रं त्वरितः प्रादुश्चक्रे महारथः ॥
ततः सुपर्णाः संपेतुर्भक्षयन्तो भुजङ्गमान् ।
ततो विदुद्रुवुर्नागास्तान्दृष्ट्वा खेचरान्नृप ॥
तद्विमुक्तं बलं रेजे पादबन्धाद्विशांपते ।
मेघबन्धाद्यथा मुक्तो भास्करस्तापयन्प्रजाः ॥
विप्रमुक्ताः स्वका योधाः फल्गुनस्य रथं प्रति
ससृजुः शरसङ्घांश्च शस्त्रसङ्घांश्च मारिष ॥
तां महास्त्रमयीं वृष्टिं शरैः संछिद्य भारत ।
अवधीत्सततो योधान्वासविः परवीरहा ॥
सुशर्मा तु ततो राजन्बाणेन नतपर्वणा ।
अर्जुनं हृदये विद्ध्वा विव्याधान्यैस्त्रिसप्तभिः ॥
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
तत उच्चुक्रुशुः सर्वे हतः पार्थ इति ब्रुवन् ॥
ततः शङ्खनिनादाश्च भेरीशब्दाश्च पुष्कलाः ।
नानावादित्रनिनदाः सिंहनादाश्च जज्ञिरे ॥
प्रतिलभ्य ततः संज्ञां श्वेताश्वः कृष्णसारथिः ।
सोऽतिविद्धो महेष्वासः शरैराशीविषोपमैः ।
सुशर्माणं महाराज क्रोधाविष्टो महारथः ॥
ततः शरशतैः पार्थः संछाद्यैनं क्षणाद्रणे ।
दिशस्तु वारयामास बाणैस्तत्र महास्त्रवित् ॥
विमुखीकृत्य समरे सुशर्माणं धनंजयः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे हसन्निव ॥
ततो बाणसहस्राणि तदुत्सृष्टानि मारिष ।
सर्वदिक्षु व्यदृश्यन्त सूदयन्ति रथद्विपान् ॥
हयान्पत्तींश्च समरे शस्त्रैः शतसहस्रशः ।
रराज समरे राजञ्शक्रो निघ्नन्निवासुरान् ॥
वध्यमाने ततः सैन्ये भयं सुमहदाविशत् ।
संशप्तकगणानां च गोपालानां च भारत ॥
न हि तत्र पुमान्कश्चिद्योऽर्जुनं प्रतिबुध्यते ।
पश्यतां तत्र वीराणामहन्यत बलं तव ॥
हन्यमानं च तदभून्निश्चेष्टं च पराक्रमे ॥
अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे ।
व्यभ्राजत महाराज विधूमोऽग्निरिव ज्वलन् ॥
चतुर्दशसहस्राणि यानि दृष्टानि भारत ।

रथानामयुतं चैव त्रिसहस्राश्च दन्तिनः ॥ ४९
ततः संशप्तका भूयः परिवव्रुर्धनञ्जयम् ।
मर्तव्यमिति निश्चित्य जयं वाप्यनिवर्तनम् ॥ ५०
तत्र युद्धं महच्चासीत्तावकानां विशांपते ।
शूरेण बलिना सार्धं पाण्डवेन किरीटिना ।
जित्वा तान्यहनत्पार्थः शत्रूञ्शक्र इवासुरान् ५१

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
कृतवर्मा कृपो द्रौणिः सूतपुत्रश्च मारिष ।
उलूकः सौबलश्चैव राजा च सह सोदरैः ॥ १
सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्दिताम् ।
समुज्जह्रुः स वेगेन भिन्नां नावमिवार्णवे ॥ २
ततो युद्धमतीवासीन्मुहूर्तमिव भारत ।
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ॥ ३
कृपेण शरवर्षाणि प्रतिमुक्तानि संयुगे ।
सृञ्जयांश्छादयामासुः शलभानां व्रजा इव ॥ ४
शिखण्डी च ततः क्रुद्धो गौतमं त्वरितो ययौ ।
ववर्ष शरवर्षाणि समन्ताद्द्विजपुङ्गवम् ॥ ५
कृपस्तु शरवर्षं तद्विनिहत्य महास्त्रवित् ।
शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः ॥ ६
ततः शिखण्डी कुपितः शरैः सप्तभिराहवे ।
कृपं विव्याध कुपितं कङ्कपत्रैरजिह्मगैः ॥ ७
ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः ।
'ततः सुनिशितैस्तीक्ष्णैः क्षुरप्रैर्हेमभूषितैः ।'
व्यश्वसूतरथं चक्रे शिखण्डिनमथो द्विजः ॥ ८
हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
खड्गं चर्म तथा गृह्य सत्वरं ब्राह्मणं ययौ ॥ ९
तमापतन्तं सहसा शरैः सन्नतपर्वभिः ।
वारयामास समरे तदद्भुतमिवाभवत् ॥ १०
तत्राद्भुतमपश्याम शिलानां प्लवनं यथा ।
निश्चेष्टो यद्रणे राजञ्छिखण्डी समतिष्ठत ॥ ११
कृपेण वारितं दृष्ट्वा शिखण्डिनमथो नृप ।
प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः ॥ १२
धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति ।
प्रतिजग्राह वेगेन कृतवर्मा महारथः ॥ १३
युधिष्ठिरमथायान्तं शारद्वतरथं प्रति ।
सपुत्रं सहसैन्यं च द्रोणपुत्रो न्यवारयत् ॥ १४
नकुलं सहदेवं च त्वरमाणौ महारथौ ।
प्रतिजग्राह ते पुत्रः शरवर्षेण वारयन् ॥ १५
भीमसेनं करूशांश्च केकयान्सह सृञ्जयैः ।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ १६
शिखण्डिने ततो बाणान्कृपः शारद्वतो युधि ।
प्राहिणोत्त्वरया युक्तो बीभत्सोरथ संनिधौ ॥ १७
ताञ्छरान्प्रेषितांस्तेन समन्तात्स्वर्णभूषितान् ।
चिच्छेद खड्गमाविध्य भ्रामयंश्च पुनःपुनः ॥ १८
शतचन्द्रं च तच्चर्म गौतमस्तस्य भारत ।
व्यधमत्सायकैस्तूर्णं तत उच्चुक्रुशुर्जनाः ॥ १९
स विचर्मा महाराज खड्गपाणिरुपाद्रवत् ।
कृपस्तं शरसंघातैराद्रवन्तमपीडयत् ॥ २०
शारद्वतशरैर्ग्रस्तं क्लिश्यमानं महाबलः ।
चित्रकेतुसुतो राजन्सुकेतुस्त्वरितो ययौ ॥ २१
विकिरन्ब्राह्मणं युद्धे बहुभिर्निशितैः शरैः ।
अभ्यापतदमेयात्मा गौतमस्य रथं प्रति ॥ २२
दृष्ट्वा विपक्षं तं चैव ब्राह्मणं च निवारितम् ।
अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम ॥ २३
सुकेतुस्तु ततो राजन्गौतमं नवभिः शरैः ।
विद्ध्वा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः ॥ २४
अथास्य सशरं चापं पुनश्चिच्छेद मारिष ।
सारथिं च शरेणास्य भृशं मर्मस्वताडयत् ॥ २५
गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढम् ।
सुकेतुं त्रिंशता बाणैः सर्वमर्मस्वताडयत् ॥ २६

द्दलितसर्वाङ्गः प्रचचाल रथोत्तमे ।
कम्पे यथा वृक्षश्चचालाकम्पितो भृशम् ॥२७
स्तस्य कायात्तु शिरो ज्वलितकुण्डलम् ।
र्षं सशिरस्त्राणं क्षुरप्रेण न्यपातयत् ॥ २८
ः प्रापतद्भूमौ श्येनाहृतमिवामिषम् ।
स्य कायो वसुधां पश्चात्प्रापतदच्युत ॥२९
हते महाराज पुत्रास्तस्य पदानुगाः ।
समरे त्यक्त्वा दुद्रुवुस्ते दिशो दश ॥३०
म्नं तु समरे संनिवार्य महारथः ।
र्माऽब्रवीद्धृष्टस्तिष्ठतिष्ठेति भारत ॥ ३१
तुमुलं युद्धं वृष्णिपार्षतयो रणे ।
पार्थे यथा युद्धं श्येनयोः क्रुद्धयोर्नृप ॥ ३२
म्नस्तु समरे हार्दिक्यं नवभिः शरैः ।
ानोरसि क्रुद्धः पीडयन्हृदिकात्मजम् ॥ ३३
र्मा तु समरे पार्षतेन दृढाहतः ।
सरथं साश्वं छादयामास सायकैः ॥ ३४
छादितो राजन्धृष्टद्युम्नो न दृश्यते ।
व परिच्छन्नो भास्करो जलधारिभिः ॥३५
तं बाणगणं शरैः कनकभूषणैः ।
वत रणे राजन्धृष्टद्युम्नः कृतव्रणः ॥ ३६
पार्षतः क्रुद्धः शस्त्रवृष्टिं सुदारुणाम् ।
र्माणमासाद्य व्यसृजत्पृतनापतिः ॥ ३७
रतन्तीं सहसा शस्त्रवृष्टिं सुदारुणाम् ।

शरैरनेकसाहस्रैर्हार्दिक्योऽवारयद्युधि ॥ ३८
दृष्ट्वा तु वारितां युद्धे शस्त्रवृष्टिं दुरासदाम् ।
कृतवर्माणमासाद्य वारयामास पार्षतः ॥ ३९
'यथा युग्मरथेनाजौ वाहान्वाहैरमिश्रयत् ।
गृहीत्वा चर्म खड्गं च रथं तस्यावपुप्लुवे ॥ ४०
मिलितेष्वथ वाहेषु प्रत्यासन्ने च पार्षते ।
दृष्ट्वाऽपदानं तस्याशु गदां जग्राह सात्वतः ॥४१
गदापाणिस्ततो राजन्रथात्तूर्णमवप्लुतः ।
तमदृष्ट्वा रथोपस्थे सारथिं समताडयत् ॥ ४२
खड्गेन शितधारेण स हतः प्रापतद्रथात् ।
कृतवर्मा ततो हृष्टस्तलशब्दं चकार ह ॥ ४३
पार्षतं चाब्रवीद्राजन्नेह्येहीति पुनःपुनः ।
स तं न ममृषे युद्धे तलशब्दं समीरितम् ॥ ४४
अवप्लुत्य रथात्तस्मात्स्वरथं पुनरास्थितः ।
अभ्ययात्स तु तत्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ॥ ४५
ततो राजन्महेष्वासं कृतवर्माणमाशु वै ।
गदां गृह्य पुनर्वेगात्कृतवर्माणमाहनत् ॥ ४६
सोऽतिविद्धो बलवता न्यपतन्मूर्च्छया हतः ।
श्रुतर्वा रथमारोप्य अपोवाह रणाजिरात् ॥' ४७
धृष्टद्युम्नस्तु समरे दृष्ट्वा शत्रुं महारथः ।
कौरवान्समरे तूर्णं वारयामास सायकैः ॥ ४८
ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन् ।
सिंहनादरवांश्चक्रुस्ततो युद्धमवर्तत ॥ ४९

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## पञ्चाशोऽध्यायः ॥ ५० ॥

लयुद्धम् ॥ १ ॥ अश्वत्थाम्ना युधिष्ठिरपराजयः ॥ २ ॥

उवाच ।
युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितम् ।
यैस्तथा शूरैरभ्यवर्तत हृष्टवत् ॥ १
षुगणान्घोरान्हेमपुङ्खाञ्शिलाशितान् ।
न्विविधान्मार्गाञ्शिक्षया लघुहस्तवान् ॥ २
यञ्शरैस्तीक्ष्णैर्वेगवद्भिः समन्ततः ।
रस्य समरे दिशः सर्वाः समावृणोत् ॥ ३

भारद्वाजशरैश्छन्नं न प्राज्ञायत किंचन ।
बाणभूतमभूत्सर्वमायोधनशिरो महत् ॥ ४
बाणजालं दिविष्ठं तत्स्वर्णपुङ्खविभूषितम् ।
शुशुभे भरतश्रेष्ठ विमानमिव विष्ठितम् ॥ ५
तेन च्छन्ने रणे राजन्बाणजालेन भास्वता ।
अभ्रच्छायेव संजज्ञे हृतरश्मिस्तमोनुदः ॥ ६
तदद्भुतमपश्याम बाणभूते नभस्थले ।

न स्म संपतते भूतं द्रौणेर्दृष्ट्वा पराक्रमम् ॥ ७
सात्यकिर्यतमानस्तु धर्मराजस्तु पाण्डवः ।
तथेतराणि सैन्यानि न स्म चक्रुः पराक्रमम् ॥ ८
लाघवं द्रोणपुत्रस्य दृष्ट्वा तत्र महारथाः ।
व्यस्मयन्त महाराज न चैनं प्रत्युदीक्षितुम् ॥ ९
शेकुस्ते सर्वराजानस्तपन्तमिव भास्करम् ।
वध्यमाने ततः सैन्ये द्रौपदेया महारथाः ॥ १०
सात्यकिर्धर्मराजश्च पाञ्चालाश्चापि संगताः ।
त्यक्त्वा मृत्युभयं घोरं द्रौणायनिमुपाद्रवन् ॥ ११
सात्यकिः सप्तविंशत्या द्रौणिं विद्ध्वा शिलीमुखैः ।
पुनर्विव्याध नाराचैः सप्तभिः स्वर्णभूषितैः ॥ १२
युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः ।
श्रुतकर्मा त्रिभिर्बाणैः श्रुतकीर्तिश्च सप्तभिः ॥ १३
सुतसोमस्तु नवभिः शतानीकश्च सप्तभिः ।
अन्ये च बहवः शूरा विव्यधुस्तं समन्ततः ॥ १४
स तु क्रुद्धस्ततो राजन्नाशीविष इव श्वसन् ।
सात्यकिं पञ्चविंशत्या प्राविध्यत शिलीमुखैः १५
श्रुतकीर्तिं च नवभिः सुतसोमं च पञ्चभिः ।
अष्टभिः श्रुतकर्माणं प्रतिविन्ध्यं त्रिभिः शरैः १६
शतानीकं च नवभिर्धर्मपुत्रं च पञ्चभिः ।
तथेतरांस्ततः शूरान्द्वाभ्यां द्वाभ्यामताडयत् ।
श्रुतकीर्तेस्तथा चापं चिच्छेद निशितैः शरैः ॥ १७
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
द्रौणायनिं त्रिभिर्विद्ध्वा विव्याधान्यैः शितैः शरैः ॥
ततो द्रौणिर्महाराज शरवर्षेण मारिष ।
छादयामास तत्सैन्यं समन्ताद्भरतर्षभ ॥ १९
ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम् ।
द्रौणिश्चिच्छेद विहसन्विव्याध च शरैस्त्रिभिः ॥ २०
ततो धर्मसुतो राजन्प्रगृह्यान्यन्महद्धनुः ।
द्रोणपुत्रं त्रिषष्ट्या तु बाह्वोरुरसि चार्पयत् ॥ २१
सात्यकिस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे ।
अर्धचन्द्रेण तीक्ष्णेन धनुश्छित्त्वाऽनदद्भृशम् ॥ २२
छिन्नधन्वा ततो द्रौणिः शक्त्या शक्तिमतां वरः ।
सारथिं पातयामास शैनेयस्य रथाद्द्रुतम् ॥ २३
अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान् ।

शैनेयं शरवर्षेण च्छादयामास भारत ॥
तस्याश्वाः प्रद्रुताः सङ्ख्ये पतिते रथसारथौ
तत्रतत्रैव धावन्तः समदृश्यन्त भारत ॥
युधिष्ठिरपुरोगास्तु द्रौणिं शस्त्रभृतां वरम् ।
अभ्यवर्षन्त वेगेन विसृजन्तः शिताञ्छरान् ।
सहसा पततस्तान्वै क्रुद्धरूपान्परंतपः ।
प्रहसन्प्रतिजग्राह द्रोणपुत्रो महारणे ॥
ततः शरशतज्वालः सेनाकक्षं महारणे ।
द्रौणिर्ददाह समरे कक्षमग्निरिवोत्थितः ॥
तद्बलं पाण्डुपुत्रस्य द्रोणपुत्रप्रतापितम् ।
चुक्षुभे भरतश्रेष्ठ तस्मिन्नेव चमूमुखे ॥
तद्बलं पाण्डवेयस्य द्रोणपुत्रः शरार्चिषा ।
तापयन्भरतश्रेष्ठ गभस्तिभिरिवांशुमान् ॥
तत्पच्यमानं मर्षेण ब्राह्मणस्य च सायकैः ।
क्षुभ्यते पाण्डवं सैन्यं तिमिनेव नदीमुखम् ॥
दृष्ट्वा चैव महाराज द्रोणपुत्रपराक्रमम् ।
सर्वान्दुर्योधनः पार्थान्हतान्युद्धेऽभ्यमन्यत ।
युधिष्ठिरस्तु त्वरितो द्रौणिं पीड्य महारथम्
अब्रवीद्द्रोणपुत्रं स रोषामर्षसमन्वितः ॥
'जानामि त्वां युधि श्रेष्ठ वीर्यवन्तं बलान्वि
कृतास्त्रं कृतिनं चैव तथा लघुपराक्रमम् ॥
बलमेतद्भवान्सर्वं पार्षते यदि दर्शयेत् ।
ततस्त्वां बलवन्तं च कृतविद्यं च विद्महे ॥
न हि वै पार्षतं दृष्ट्वा समरे शत्रुसूदनम् ।
भवेत्तव बलं किंचिद्ब्रवीमि त्वां न तु द्विजम् ॥
नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता ।
यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ॥
ब्राह्मणेन तपः कार्यं शमश्च दमएव च ।
क्षत्रियेण धनुर्नाम्यं स भवान्ब्राह्मणब्रुवः ॥
मिषतस्ते महाबाहो युधि जेष्यामि कौरवान्
कुरुष्व समरे कर्म ब्रह्मबन्धो यथेष्टतः ॥
एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव ।
युक्तं तत्त्वं च संचिन्त्य नोत्तरं किंचिदब्रवीत् ।
अनुक्त्वा च ततः किंचिच्छरवर्षेण पाण्डवम्
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः ।

स च्छाद्यमानस्तु तदा द्रोणपुत्रेण मारिष ।
पार्थोऽपयातः शीघ्रं वै प्रगृह्य महतीं चमूम् ॥ ४२
अपयाते ततस्तस्मिन्धर्मपुत्रे युधिष्ठिरे ।
द्रोणपुत्रः स्थितो राजन्प्रत्यादेशान्महात्मनः ४३
ततो युधिष्ठिरो राजंस्त्यक्त्वा द्रौणिं महाहवे ।
प्रययौ तावकं सैन्यं युक्तः क्रूराय कर्मणे ॥ ४४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे पञ्चाशोऽध्यायः ॥ ५० ॥

---

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

संकुलयुद्धम् ॥ १ ॥

---

सञ्जय उवाच ।
भीमसेनं सपाञ्चालं चेदिकेकयसंवृतम् ।
सेनापतिः स्वयं क्रुद्धो वारयामास सायकैः ॥ १
ततस्तु चेदिकारूशान्सृञ्जयांश्च महारथान् ।
कर्णो जघान समरे भीमसेनस्य पश्यतः ॥ २
भीमसेनस्ततः कर्णं विहाय रथसत्तमम् ।
प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ॥ ३
सूतपुत्रोऽपि समरे पाञ्चालान्केकयांस्तथा ।
सृञ्जयांश्च महेष्वासान्निजघान सहस्रशः ॥ ४
संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः ।
पाञ्चालेषु तथा कर्णः क्षयं चक्रुर्महारथाः ॥ ५
ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोपमैः ।
जग्मुर्विनाशं समरे राजन्दुर्मन्त्रिते तव ॥ ६
ततो दुर्योधनः क्रुद्धो नकुलं नवभिः शरैः ।
विव्याध भरतश्रेष्ठ चतुरश्चास्य वाजिनः ॥ ७
ततः परममेयात्मा तव पुत्रो जनाधिप ।
क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ॥ ८
नकुलस्तु ततः क्रुद्धस्तव पुत्रं च सप्तभिः ।
जघान समरे राजन्सहदेवश्च पञ्चभिः ॥ ९
तावुभौ भरतश्रेष्ठौ ज्येष्ठौ सर्वधनुष्मताम् ।
विव्याधोरसि संक्रुद्धः पञ्चभिः पञ्चभिः शरैः ॥ १०
ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत ।
यमयोः प्रसभं वीरो विव्याधाशु त्रिभिस्त्रिभिः ११
तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे ।
प्रगृह्य रेजतुः शूरौ देवपुत्रसमौ युधि ॥ १२
ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं युधि ।
शरैर्ववर्षतुर्घोरैर्महामेघौ यथाऽचलम् ॥ १३
ततः क्रुद्धो महाराज तव पुत्रो महारथः ।
पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः ॥ १४
धनुर्मण्डलमेवास्य ददृशे युधि भारत ।
सायकाश्चाप्यदृश्यन्त निश्चरन्तः समन्ततः ॥ १५
'तस्य सायकसंछन्नौ माद्रेयौ न विरेजतुः ।
मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्यौ गतप्रभौ ॥ १६
ते तु बाणा महाराज स्वर्णपुङ्खाः शिलाशिताः ।'
आच्छादयन्दिशः सर्वाः सूर्यस्येव मरीचयः ॥ १७
बाणभूते ततस्तस्मिन्संछन्ने च नभस्तले ।
राज्ञस्तु ददृशे रूपं कालान्तकयमोपमम् ॥ १८
पराक्रमं तु तं दृष्ट्वा तव सूनोर्महारथाः ।
मृत्योरुपान्तिकं प्राप्तौ माद्रीपुत्रौ स्म मेनिरे ॥ १९
ततः सेनापती राजन्पाण्डवानां महारथः ।
पार्षतः प्रययौ तत्र यत्र राजा सुयोधनः ॥ २०
माद्रीपुत्रौ ततः शूरौ व्यतिक्रम्य महारथौ ।
धृष्टद्युम्नस्तव सुतं पीडयामास सायकैः ॥ २१
तमविध्यदमेयात्मा तव पुत्रो ह्यमर्षणः ।
पाञ्चाल्यं पञ्चविंशत्या प्रहस्य पुरुषर्षभः ॥ २२
ततः पुनरमेयात्मा तव पुत्रो ह्यमर्षणः ।
विद्ध्वा ननाद पाञ्चाल्यं षष्ट्या पञ्चभिरेव च ॥ २३
तथास्य सशरं चापं मुष्टिदेशे विशांपते ।
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे ॥ २४
तदपास्य धनुश्छिन्नं पाञ्चाल्यः शत्रुकर्शनः ।
अन्यदादत्त वेगेन धनुर्भारसहं नवम् ॥ २५
क्रोधाद्रुधिररक्ताक्षः संरम्भात्प्रज्वलन्निव ।
अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः ॥ २६
स पञ्चदश नाराचाञ्श्वसतः पन्नगानिव ।

जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो न्यपासृजत् ॥ २७
ते वर्म हेमविकृतं भित्त्वा राज्ञः शिलीमुखाः ।
विविशुर्वसुधां वेगात्कङ्कबर्हिणवाससः ॥ २८
सोऽतिविद्धो महाराज पुत्रस्तेऽतिव्यराजत ।
वसन्तकाले सुमहान्प्रफुल्ल इव किंशुकः ॥ २९
स च्छिन्नवर्मा नाराचप्रहारैर्झर्झरीकृतः ।
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ॥ ३०
अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः ।
सायकैर्दशभी राजन्भ्रुवोर्मध्ये समार्पयत् ॥ ३१
तस्य तेऽशोभयन्वक्त्रं कर्मारपरिमार्जिताः ।
प्रफुल्लं पङ्कजं यद्वद्भ्रमरा मधुलिप्सवः ॥ ३२
तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः ।
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ॥ ३३
ततो दुर्योधनस्याश्वान्हत्वा सूतं च पञ्चभिः ।
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ॥ ३४
रथं सोपस्करं छत्रं शक्तिं खड्गं गदां ध्वजम् ।
भल्लैश्चिच्छेद दशभिः पुत्रस्य तव पार्षतः ॥ ३५
तपनीयाङ्गदं छत्रं नागं मणिमयं शुभम् ।
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः ॥ ३६
दुर्योधनं तु विरथं छिन्नवर्मायुधध्वजम् ।
भ्रातरं समुदैक्षन्त सोदरा भरतर्षभ ॥ ३७
तमारोप्य रथे राजन्कुण्डधारो महारथम् ।
अपाहरदसंभ्रान्तो धृष्टद्युम्नस्य पश्यतः ॥ ३८
कर्णस्तु सात्यकिं हित्वा राजगृध्नुरमर्षणः ।
द्रोणहन्तारमुग्रेषुं ससाराभिमुखो रणे ॥ ३९
तं पृष्ठतोऽन्वयात्तूर्णं शैनेयोऽभिहतः शरैः ।
वारणं जघनोपान्ते विषाणाभ्यामिव द्विपः ॥ ४०
स भारतपुरोगानां राज्ञां च सुमहात्मनाम् ।
कर्णपार्षतयोर्युद्धे संक्रुद्धानां महारणे ॥ ४१
न पाण्डवानां नास्माकं कश्चिदासीत्पराङ्मुखः ।
प्रत्यदृश्यत यत्कर्णः पाञ्चालांस्त्वरितो ययौ ॥ ४२
तस्मिन्क्षणे नरश्रेष्ठ गजवाजिरथक्षयः ।
प्रादुरासीदुभयतो राजन्मध्यगतेऽहनि ॥ ४३
पाञ्चालास्तु महाराज त्वरिता विजिगीषवः ।
सर्वतोऽभ्यद्रवन्कर्णं पतत्रिण इव द्रुमम् ॥ ४४

तेषामाधिरथिः क्रुद्धः प्रधानान्वै तरस्विनः ।
विचिन्वन्निव बाणौघैः समासादयदग्रतः ॥ ४
व्याघ्रकेतुः सुशर्मा च शुक्रश्चित्रायुधः क्रतुः ।
दुर्जयो रोचमानश्च सिंहसेनस्तथाऽष्टमः ।
महता रथवंशेन परिवव्रुर्नरोत्तमम् ॥ ४
सृजन्तः सायकांस्तूर्णं कर्णमाहवशोभिनम् ।
यतमानांस्तु ताञ्शूरान्मनुजेन्द्रः शितैः शरैः
अष्टाभिरष्टौ राधेयः पाञ्चालान्यहनद्रणे ॥ ४
अथापरान्महाराज सूतपुत्रः प्रतापवान् ।
जघान बहुसाहस्रान्योधान्युद्धविशारदान् ॥ ४
विष्णुं च विष्णुवर्माणं देवापिं भद्रमेव च ।
दण्डधारं च समरे चित्रं चित्रायुधं हरिम् ॥ ४
सिंहकेतुं रोचमानं शलभं च महारथम् ।
निजघान सुसंक्रुद्धश्चेदीनां च महारथान् ॥ ५
तेषामाददतः प्राणानासीदाधिरथेर्वपुः ।
शोणिताभ्युक्षिताङ्गस्य रुद्रस्यैवातिभैरवम् ॥ ५
तत्र भारत कर्णेन मातङ्गास्ताडिताः शरैः ।
सर्वतोऽभ्यद्रवन्भीताः कुर्वन्तो महदाकुलम् ॥ ५
निपेतुरुर्व्यां समरे कर्णसायकताडिताः ।
कुर्वन्तो विविधान्नादान्वज्रनुन्ना इवाचलाः ॥ ५
गजवाजिमनुष्यैश्च निपतद्भिः समन्ततः ।
रथैर्भग्नैर्ध्वजैश्चैव समास्तीर्यत मेदिनी ॥ ५
नैवं भीष्मो न च द्रोणो नान्ये युधि च तावकाः ।
चक्रुः स तादृशं कर्म यादृशं कृतवान्रणे ॥ ५
मृगमध्ये यथा सिंहो दृश्यते निर्भयश्चरन् ।
पाञ्चालानां तथा मध्ये कर्णोऽचरदभीतवत् ॥ ५
सूतपुत्रोऽथ नागेषु हयेषु च रथेषु च ।
नरेषु च नरव्याघ्रश्चकार कदनं महत् ॥ ५
यथा मृगगणांस्त्रस्तान्सिंहो द्रावयते दिशः ।
पाञ्चालानां रथव्रातान्कर्णो व्यद्रावयत्तथा ॥ ५
सिंहं स हि यथा प्राप्य न जीवन्ति मृगाः क्वचित्
तथा कर्णमनुप्राप्ता न जीवन्ति स्म सृंजयाः ॥ ५
वैश्वानरमुखं प्राप्य दह्यन्ते शलभा यथा ।
कर्णाग्निं समरे प्राप्य दग्धा भारत सृञ्जयाः ॥ ६
चेदिष्वेकेन कर्णेन पाञ्चालेषु च भारत ।

विश्राव्यं नाम निहता बहवः शूरसंमताः ॥ ६१
मम चासीन्मती राजन्दृष्ट्वा कर्णस्य विक्रमम् ।
नैकोऽप्याधिरथेर्जीवन्पाञ्चाल्यो मोक्ष्यते युधि ६२
सङ्ख्ये विमर्द्य पाञ्चालान्सूतपुत्रः पुनःपुनः ।
अभ्यधावत्सुसंक्रुद्धः कुन्तीपुत्रं युधिष्ठिरम् ॥ ६३
धृष्टद्युम्नश्च राजानं द्रौपदेयाश्च मारिष ।
परिवव्रुरमित्रघ्नं शतशश्चापरे जनाः ॥ ६४
शिखण्डी सहदेवश्च नकुलो नाकुलिस्तथा ।
जनमेजयः शिनेर्नप्ता बहवश्च प्रभद्रकाः ॥ ६५
एते पुरोगमा भूत्वा धृष्टद्युम्नश्च संयुगे ।
कर्णमस्यन्तमिष्वस्त्रैस्ततक्षुरमितौजसम् ॥ ६६
तांस्तत्राधिरथिः सङ्ख्ये चेदिपाञ्चालपाण्डवान् ।
एको बहूनभ्यपतद्गरुत्मानिव पन्नगान् ॥ ६७
तैः कर्णस्याभवद्युद्धं घोररूपं विशांपते ।
तादृग्यादृक्पुरावृत्तं देवानां दानवैः सह ॥ ६८
तान्समेतान्महेष्वासाञ्शरवर्षौघवर्षिणः ।
एको व्यधमदव्यग्रस्तमांसीव दिवाकरः ॥ ६९
भीमसेनस्तु संसक्ते राधेये पाण्डवैः सह ।
सर्वतोऽभ्यहनत्क्रुद्धो यमदण्डनिभैः शरैः॥ ७०
बाह्लीकान्केकयान्मात्स्यान्वासात्यान्मद्रसैन्धवान्
एकः संख्ये महेष्वासो योधयन्बह्वशोभत ॥ ७१
तत्र मर्मसु भीमेन नाराचैस्ताडिता गजाः ।
प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीम् ७२
वाजिनश्च हतारोहाः पत्तयश्च गतासवः ।
[illegible]हाराज वमन्तो रुधिरं बहु ॥ ७३
त।।डताः सहसा नागा भीमसेनेन मारिष ।
निपतन्ति महावेगा वज्ररुग्णा इवाचलाः ॥ ७४
पतितैस्तैर्महाराज वेगवद्भिर्महारथैः ।
शुशुभे वसुधा राजन्विकीर्णैरिव पर्वतैः ॥ ७५
सहस्रशश्च रथिनः पत्तयः पतितायुधाः ।
अक्षताः समदृश्यन्त भीमाद्भीता गतासवः ॥ ७६
रथिभिः सादिभिः सूतैः पादातैर्वाजिभिर्गजैः ।
भीमसेनशरैश्छिन्नैराच्छन्ना वसुधाभवत् ॥ ७७
तत्स्तम्भितमिवातिष्ठद्भीमसेनभयार्दितम् ।
दुर्योधनबलं सर्वं निरुत्साहं कृतं रणे ।

निश्चेष्टं तुमुलं दीनं बभौ तस्मिन्महारणे ॥ ७८
प्रसन्नसलिले काले यथा स्यात्सागरो नृप ।
तद्वत्तव बलं तद्धि निश्चलं समवस्थितम् ॥ ७९
मन्युवीर्यबलोपेतं दर्पात्प्रत्यवरोपितम् ।
अभवत्तव पुत्रस्य तत्सैन्यं निष्प्रभं तदा ॥ ८०
ते बले भरतश्रेष्ठ वध्यमाने परस्परम् ।
रुधिरौघपरिक्लिन्ने रुधिरार्द्रे बभूवतुः ॥ ८१
सूतपुत्रोऽवधीत्क्रुद्धः पाण्डवानामनीकिनीम् ।
भीमसेनः कुरूणां च त्रिगर्तानां धनंजयः ॥ ८२
वर्तमाने तथा रौद्रे संग्रामेऽद्भुतदर्शने ।
निहत्य पृतनामध्ये संशप्तकगणान्बहून् ।
अर्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत् ॥ ८३
प्रभग्नं बलमेतद्धि योत्स्यमानं मया सह ।
एते धावन्ति सगणाः संशप्तकमहारथाः ॥ ८४
'दुर्जया ह्येव समरे देवैरपि सवासवैः ।'
अपारयन्तो मद्बाणान्सिंहशब्दं मृगा इव ॥ ८५
दीर्यते च महत्सैन्यं सृञ्जयानां महारणे ।
'कुरवश्चाभिधावन्ति भीमसेनभयार्दिताः ॥' ८६
हस्तिकक्ष्यो ह्यसौ कृष्ण केतुः कर्णस्य धीमतः ।
दृश्यते राजसैन्यस्य मध्ये विचरतो मुहुः ॥ ८७
न च कर्णं रणे शक्ता जेतुमेते महारथाः ।
जानीते हि भवान्कर्णं वीर्यवन्तं पराक्रमे ॥ ८८
तत्र याहि यतः कर्णो द्रावयत्येष नो बलम् ।
त्रिगर्तान्वर्जयन्याहि सूतपुत्रं महारथम् ।
एतन्मे रोचते कृष्ण यथा वा तव रोचते ॥ ८९
एतच्छ्रुत्वा वचस्तस्य गोविन्दः प्रहसन्निव ।
अब्रवीदर्जुनं तूर्णं कौरवान्याहि पाण्डव ॥ ९०
ततस्तव महासैन्यं गोविन्दप्रेरिता हयाः ।
हंसवर्णा विविशुस्तूर्णं वहन्तोऽर्जुनमाहवे ॥ ९१
केशवप्रेरितैरश्वैः श्वेतैः काञ्चनभूषणैः ।
प्रविशद्भिस्तव बलं चतुर्दिशमदीर्यत ॥ ९२
मेघस्तनितनिर्ह्रादः स रथो वानरध्वजः ।
चलत्पताकस्तां सेनां विमानं द्यामिवाविशत् ९३
तौ विदार्य महासेनां प्रविष्टौ केशवार्जुनौ ।
क्रुद्धौ संरम्भरक्ताक्षौ विभ्राजेतां महाद्युती॥ ९४

युद्धशौण्डौ समाहूतावागतौ तौ रणाध्वरम् ।
यज्वभिर्विधिना हूतौ मखं देवाविवाश्विनौ ॥ ९५
'क्रोधताम्रेक्षणौ शूरौ शुशुभाते महाबलौ ।
मदोत्कटौ यथा नागौ दृष्टिसंचारचारिणौ ॥' ९६
क्रुद्धौ तौ तु नरव्याघ्रौ योगवन्तौ बभूवतुः ।
तलशब्देन रुषितौ महानागाविवोत्कटौ ॥ ९७
विगाह्य तु रथानीकमश्वसङ्घांश्च फल्गुनः ।
व्यचरत्पृतनामध्ये पाशहस्त इवान्तकः ॥ ९८
तं दृष्ट्वा युधि विक्रान्तं सेनायां तव भारत ।
संशप्तकगणान्भूयः पुत्रस्ते समचूचुदत् ॥ ९९
ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः ।
चतुर्दशसहस्रैस्तु तुरगाणां महाहवे ।
द्वाभ्यां शतसहस्राभ्यां पदातीनां च धन्विनाम् ॥
शूराणां लब्धलक्षाणां विदितानां समन्ततः ।
अभ्यवर्तन्त कौन्तेयं छादयन्तो महारथाः ॥१०१
शरवर्षैर्महाराज सर्वतः पाण्डुनन्दनम् ।
स च्छाद्यमानः समरे शरैः परबलार्दनः ॥ १०२
दर्शयन्रौद्रमात्मानं पाशहस्त इवान्तकः ।
निघ्नन्संशप्तकान्पार्थः प्रेक्षणीयतरोऽभवत् ॥१०३
ततो विद्युत्प्रभैर्बाणैः कार्तस्वरविभूषितैः ।
निरन्तरमिवाकाशमासीच्छन्नं किरीटिना ॥ १०४
किरीटिचापनिर्मुक्तैः संपतद्भिर्महाशरैः ।
समाच्छन्नं बभौ सर्वं काद्रवेयैरिव प्रभो ॥ १०५
रुक्मपुङ्खाञ्शरान्घोरान्प्रसन्नानतपर्वणः ।
अवासृजदमेयात्मा दिक्षु सर्वासु पाण्डवः ॥ १०६
मही वियद्दिशः सर्वाः समुद्रा गिरयोऽपि वा ।
स्फुटन्तीति जना जज्ञुः पार्थस्य तलनिःस्वनात् ॥
हत्वा दशसहस्राणि पार्थिवानां महारथः ।
संशप्तकानां कौन्तेयः प्रपक्षं त्वरितोऽभ्ययात्१०८
प्रपक्षं च समासाद्य पार्थः काम्भोजरक्षितम् ।
प्रममाथ बलं भल्लैर्दानवानिव वासवः ॥ १०९

प्रचिच्छेदाशु भल्लेन द्विषतामाततायिनाम् ।
शस्त्रपाणींस्तथा बाहूंस्तथापि च शिरांस्युत ॥११
अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन्भुवि ।
विष्वग्वाताभिसंभग्ना बहुशाखा इव द्रुमाः ११
हस्त्यश्वरथपत्तीनां व्रातान्निघ्नन्तमर्जुनम् ।
सुदक्षिणादवरजः शरवृष्ट्याभ्यवीवृषत् ॥ ११
तस्यास्यतोऽर्धचन्द्राभ्यां स बाहू परिघोपमौ ।
पूर्णचन्द्राभवक्त्रं च क्षुरेणापाहरच्छिरः ॥ ११
तत्पपात ततो वेगात्स्वलोहितपरिष्कृतम् ।
मनःशिलागिरेः शृङ्गं वज्रेणेवावदारितम् ॥११
सुदक्षिणादवरजं काम्भोजा ददृशुर्हतम् ।
प्रांशुं कमलपत्राक्षमत्यर्थं प्रियदर्शनम् ।
काञ्चनस्तम्भसदृशं भिन्नं हेमगिरिं यथा ॥ ११
ततोऽभवत्पुनर्युद्धं घोरमत्यर्थमद्भुतम् ।
नानावस्थाश्च योधानां बभूवुस्तत्र युध्यताम्॥११
पार्थेषुनिहतैरश्वैः काम्भोजैर्यवनैः शकैः ।
शोणिताक्तैस्तदा रक्तं सर्वमासीद्विशां पते ॥ ११
रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः ।
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ॥ ११
अन्योन्येन महाराज विनाशः पृथिवीक्षिताम् ।
आसीत्क्रुद्धेऽर्जुने कर्णे भीमसेने च दारुणम् ११
तस्मिन्प्रपक्षे पक्षे च वध्यमाने मदोत्कटः ।
अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिरभ्ययात् १२
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ।
आददानः शरान्घोरान्स्वरश्मीनिव भास्कर ॥ ५
तयोरासीन्महद्युद्धं धर्मभ्रात्रोरनैष्ठिकम् ।
विस्मापयिषतोर्लोकं यशश्चोत्तममिच्छतोः ॥ १२
संशप्तकांस्तु कौन्तेयः कुरूंश्चापि वृकोदरः ।
सूतपुत्रस्तु पाञ्चालांस्त्रयोऽघ्नंस्त्वरिताः शरैः१२
एवमेष महाराज विनाशः पृथिवीक्षिताम् ।
युद्धं घोरं तथा त्वासीत्त्रिधाभूते चमूमुखे ॥ १२

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकपञ्चाशोऽध्यायः ॥ ५१ ॥*

* एतदनन्तरं झ॰ पुस्तके विद्यमाना कथा अस्मिन्पाठे—५७—५८ तमाध्याययोर्वर्तते ।

## *द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

संशप्तकैर्युध्यमानस्य पार्थस्याश्वत्थाम्नाऽऽह्वानम् ॥ १ ॥ तयोर्युद्धम् ॥ २ ॥

धृतराष्ट्र उवाच ।
कथं संशप्तकैः सार्धमर्जुनस्याभवद्रणः ।
सूतपुत्रस्य पाञ्चालैः कथं युद्धं प्रवर्तितम् ॥ १
अश्वत्थाम्नस्तु यद्युद्धमर्जुनस्य च सञ्जय ।
अन्येषां च मदीयानां पाण्डवैस्तद्ब्रवीहि मे ॥ २
सञ्जय उवाच ।
शृणु राजन्यथावृत्तं संग्रामं ब्रुवतो मम ।
वीराणां शत्रुभिः सार्धं देहपाप्मविनाशनम् ॥ ३
पार्थः संशप्तकबलं प्रविश्यार्णवसन्निभम् ।
व्यक्षोभयदमित्रघ्नो महावात इवार्णवम् ॥ ४
पूर्णचन्द्राभवक्त्राणि स्वक्षिभ्रूदशनानि च ।
शिरांस्युन्मथ्य वीराणां शितैर्भल्लैर्धनञ्जयः ।
संतस्तार क्षितिं क्षिप्रं विनालैर्नलिनैरिव ॥ ५
सुवृत्तानायतान्पुष्टांश्चन्दनागुरुभूषितान् ।
सायुधान्सतलत्रांश्च पञ्चास्योरगसन्निभान् ।
बाहून्क्षुरैरमित्राणां चिच्छेद समरेऽर्जुनः ॥ ६
धुर्यान्धुर्यतरान्सूतान्ध्वजांश्चापानि सायकान् ।
पाणीन्नितान्तनिशितैर्भल्लैश्चिच्छेद पाण्डवः ॥ ७
रथान्द्विपान्हयांश्चैव सारोहानर्जुनो युधि ।
शरैरनेकसाहस्रैर्निन्ये राजन्यमक्षयम् ॥ ८
तं प्रवीराः [illegible] ा नर्दमाना इवर्षभाः ।
[illegible] कृष्णौ शर[illegible] क्रुद्धमभिद्रुत्य मदोत्कटाः ।
स्वरश्मिजा[illegible] ।भजघ्नुस्ते शरैः शृङ्गैरिवर्षभाः ॥ ९
तस्य तेषां च तद्युद्धमभवद्रोमहर्षणम् ।
त्रैलोक्यविजये यद्वद्दैत्यानां सह वज्रिणः ॥ १०
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः ।
इषुभिर्बहुभिस्तूर्णं विद्ध्वा प्राणाञ्जहार सः ॥ ११
छिन्नत्रिवेणुचक्राक्षान्हतयोधान्ससारथीन् ।
विध्वस्तायुधतूणीरान्समुन्मथितकेतनान् ॥ १२
संछिन्नयोक्त्ररश्मीषान्विंत्रिवेणून्विकूबरान् ।
विस्रस्तबन्धुरयुगान्विस्रस्ताक्षप्रमण्डलान् ॥ १३
रथान्विशकलीकुर्वन्महाभ्राणीव मारुतः ॥ १४
विस्मापकं प्रेक्षकाणां द्विषतां भयवर्धनम् ।
महारथसहस्रस्य समं कर्माकरोज्जयः ॥ १५
सिद्धदेवर्षिसङ्घाश्च चारणाश्चापि तुष्टुवुः ॥ १६
देवदुन्दुभयो नेदुः पुष्पवर्षाणि चापतन् ।
केशवार्जुनयोर्मूर्ध्नि प्राह वाक्वाशरीरिणी ॥ १७
चन्द्रार्काग्न्यनिलसूर्याणां कान्तिदीप्तिबलद्युतीः ।
यौ सदा बिभ्रतुर्वीराविमौ तौ केशवार्जुनौ ॥ १८
ब्रह्मेशानाविव पुरा वीरावेकरथे स्थितौ ।
सर्वभूतवरौ वीरौ नरनारायणाविमौ ॥ १९
इत्येतन्महदाश्चर्यं दृष्ट्वा श्रुत्वा च भारत ।
अश्वत्थामा सुसंक्रुद्धः कृष्णावभ्यद्रवद्रणे ॥ २०
अथ पाण्डवमस्यन्तममित्रान्तकराञ्छरान् ।
सेषुणा पाणिनाऽऽहूय प्रहसन्द्रौणिरब्रवीत् ॥ २१
यदि मां मन्यसे वीर प्राप्तमर्हमिहातिथिम् ।
ततः सर्वात्मना त्वद्य युद्धातिथ्यं प्रयच्छ मे ॥ २२
एवमाचार्यपुत्रेण समाहूतो युयुत्सया ।
बहुमेनेऽर्जुनोऽऽत्मानमिति चाह जनार्दनम् ॥ २३
संशप्तकाश्च मे वध्या द्रौणिराह्वयते च माम् ।
यदत्रानन्तरं प्राप्तं शंस मे तद्धि माधव ॥ २४
आतिथ्यकर्माभ्युत्थाय दीयतां यदि मन्यसे ।
एवमुक्तोऽवहत्पार्थं कृष्णो द्रोणात्मजान्तिके ॥ २५
शैक्ष्येण विधिनाऽऽहूतं वायुरिन्द्रमिवाध्वरे ।

वासिता पुष्पवती गौस्तदर्थम् ॥ ९ ॥ त्रिवेणुः उभयतः-काष्ठद्वयसहितो धूर्दण्डः । अक्षश्चक्राधारदण्डः ॥ १२ ॥ योक्त्राणि बन्धनरज्जवः । रश्मयः प्रग्रहाः । कूबरस्त्रिवेणोरग्रभागः । बन्धुरं रथतल्पः युगं धूरग्रकाष्ठम् । अक्षप्रमण्डलं रथनीडाक्षयोः संधानकाष्ठजातम् ॥ १३ ॥ विशकलीकुर्वन् विशेषेण शकलीकुर्वन् ॥ १४ ॥ चन्द्रादीनां कान्त्यादीन् यथासंख्य बिभ्रतुः ॥ १८ ॥ अर्हं पूजयितुं योग्यम् ॥ २२ ॥ अनन्तरं प्रथमम् ॥ २४ ॥ जैत्रेण विधिना इति ञ. पाठः ॥ २६ ॥

* एतमारभ्य ( ५७—५८ व्यतिरिक्ताः ) ६० तमाध्यायपर्यन्ताः ७ अध्यायाः एतद्गीला १२ ध्यायात्मकात् ञ. पुस्तके १५ ध्यायादुपरि वर्तन्ते ।

तमामन्त्र्यैकमनसं केशवो द्रौणिमब्रवीत् ॥ २६
अश्वत्थामन्स्थिरो भूत्वा प्रहराशु सहस्व च ।
निर्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनाम् ॥ २७
सूक्ष्मो विवादो विप्राणां सूक्ष्मौ क्षात्रौ जयाजयौ ॥
नहि संक्षमसे मोहाद्दिव्यां पार्थस्य सत्क्रियाम् ।
समाप्तिमिच्छन्युध्यस्व स्थिरो भूत्वाऽद्य पाण्डवं२९
इत्युक्तो वासुदेवेन तथेत्युक्त्वा द्विजोत्तमः ।
विव्याध केशवं षष्ट्या नाराचैरर्जुनं त्रिभिः ॥३०
तस्यार्जुनः सुसंक्रुद्धस्त्रिभिर्बाणैः शरासनम् ।
चिच्छेदाथान्यदादत्त द्रौणिर्घोरतरं धनुः ॥ ३१
सज्यं कृत्वा निमेषाच्च विव्याधार्जुनकेशवौ ।
त्रिभिः शतैर्वासुदेवं सहस्रेण च पाण्डवम् ॥३२
ततः शरसहस्राणि प्रयुतान्यर्बुदानि च ।
ससृजे द्रौणिरायस्तः स्तम्भयामास चार्जुनम् ॥३३
इषुधेर्धनुषो ज्यायास्त्वङ्गुलिभ्यश्च मारिष ।
बाह्वोः कराभ्यामुरसो वदनाद्घ्राणनेत्रतः ॥ ३४
कर्णाभ्यां शिरसोऽङ्गेभ्यो लोमवर्मभ्य एव च ।
रथध्वजाभ्यां च शरा निष्पेतुर्ब्रह्मवादिनः ॥३५
शरजालेन महता बद्ध्वा माधवपाण्डवौ ।
ननाद मुदितो द्रौणिर्महामेघौघनिःस्वनम् ॥ ३६
'तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः ।
संछादितौ रथस्थौ तावुभौ कृष्णधनंजयौ ॥ ३७
ततः शरशतैस्तीक्ष्णैर्भारद्वाजः प्रतापवान् ।
निश्चेष्टौ तावुभौ चक्रे रणे माधवपाण्डवौ ॥ ३८
हाहाकृतमभूत्सर्वं जङ्गमं स्थावरं तथा ।
चराचरस्य गोप्तारौ दृष्ट्वा संछादितौ शरैः ॥ ३९
सिद्धचारणसङ्घाश्च संपेतुर्वै समन्ततः ।
अपि स्वस्ति भवेदद्य लोकानामिति चाब्रुवन् ॥४०
न मया तादृशो राजन्दृष्टपूर्वः पराक्रमः ।
संजज्ञे यादृशो द्रौणेः कृष्णौ छादयतो रणे ॥४१
द्रौणेस्तु धनुषः शब्दं रथानां त्रासनं रणे ।
अश्रौषं बहुशो राजन्सिंहस्य नदतो यथा ॥ ४२
ज्या चास्य चरतो युद्धे सव्यं दक्षिणमस्यतः ।
विद्युदम्भोधरस्येव भ्राजमाना व्यदृश्यत ॥ ४
स तदा क्षिप्रकारी च दृढहस्तश्च पाण्डवः ।
प्रमोहं परमं गत्वा प्रेक्षन्नास्ते धनंजयः ॥ ४
विक्रमं चरतो युद्धे सव्यं दक्षिणमस्यतः ।
विक्रमं च हृतं मेने आत्मनस्तेन संयुगे ॥ ४
अथास्य समरे राजन्वपुरासीत्सुदुर्दृशम् ।
द्रौणेस्तत्कुर्वतः कर्म यादृग्रूपं पिनाकिनः ॥ ४
वर्धमाने ततस्तत्र द्रोणपुत्रे विशांपते ।
हीयमाने च कौन्तेये कृष्णं रोषः समाविशत् ॥ ४
स रोषान्निश्वसन्राजन्निर्दहन्निव चक्षुषा ।
द्रौणिं ददर्श संग्रामे फल्गुनं च मुहुर्मुहुः ॥ ४
ततः कृष्णोऽब्रवीत्क्रुद्धः पार्थं सप्रणयं वचः ॥ ४
अत्यद्भुतमिदं पार्थ त्वयि पश्यामि संयुगे ।
यत्त्वां विशेषयत्याजौ द्रोणपुत्रोऽद्य भारत ॥ ५
कच्चित्ते गाण्डिवं हस्ते मुष्टिर्वा न व्यशीर्यत ।
कच्चिद्वीर्यं यथापूर्वं भुजयोर्वा बलं तव ॥ ५
उदीर्यमाणं हि रणे पश्यामि द्रौणिमाहवे ।
गुरुपुत्र इति ह्येनं मानयन्पाण्डवर्षभ ।
उपेक्षां मा कृथाः पार्थ नायं काल उपेक्षितुम् ॥ ५
अर्जुन उवाच ।
पश्य माधव दौरात्म्यं गुरुपुत्रस्य मां प्रति ।
वधं प्राप्तौ मन्यते नौ प्रावेश्य शरवेश्मनि ।
एषोस्मि हन्मि संकल्पं शिक्षय[illegible]ेन च ॥ ५
'एवमुक्त्वाऽस्य चिच्छेद भल्लैः [illegible]र्पितम्
धनुश्छत्रं पताकां च रथशक्तिं गदा[illegible]
अश्वत्थाम्नः शरानस्तांश्छित्त्वैकैकं त्रिधा त्रि[illegible] ॥ ५
व्यधमद्भरतश्रेष्ठो नीहारमिव मारुतः ॥ ५
ततः संशप्तकान्भूयः साश्वसूतरथद्विपान् ।
ध्वजपत्तिगणानुग्रैर्बाणैर्विव्याध पाण्डवः ॥ ५
ये ये ददृशिरे तत्र यद्यद्रूपास्तदा जनाः ।
ते ते तत्र शरैर्व्याप्तं मेनिरेऽऽत्मानमात्मना ॥ ५
ते गाण्डीवप्रमुक्तास्तु नानारूपाः पतत्रिणः ।
क्रोशे साग्रे स्थितान्घ्नन्ति द्विपांश्च पुरुषान्रणे ॥ ५

आयस्तः यत्नवान् ॥ ३३ ॥ इषुधिप्रभृतिभ्यः शराः पेतुः लोमभ्योऽपि वर्मभ्योऽपि च पेतुस्तत्र हेतुः ब्रह्मवादिनः योगबलवत इत्यर्थः ॥ ३५ ॥

भल्लैश्छिन्नाः कराः पेतुः करिणां मदवर्षिणाम् ।
यथा वने परशुभिर्निकृत्ताः शाल्मलिद्रुमाः ॥ ५९
पश्चात्तु शैलवत्पेतुस्ते गजाः सह सादिभिः ।
वज्रिवज्रावमथिता यथैवाद्रिचयास्तथा ॥ ६०
गन्धर्वनगराकारान्रथांश्चैव सुकल्पितान् ।
विनीतैर्जवनैर्युक्तानास्थितान्युद्धदुर्मदैः ॥ ६१
शरैर्विशकलीकुर्वन्नमित्रानभ्यवीवृषत् ।
स्वलंकृतानश्वसादीन्पत्तींश्चाहन्धनंजयः ॥ ६२
धनंजययुगान्तार्कः संशप्तकमहार्णवम् ।
व्यशोषयत दुःशोषं तीक्ष्णैः शरगभस्तिभिः ॥६३
पुनर्द्रौणिमहाशैलं नाराचैर्वज्रसन्निभैः ।
निर्बिभेद महावेगैस्त्वरन्वज्रीव पर्वतम् ॥ ६४
तमाचार्यसुतः क्रुद्धः साश्वयन्तारमाशुगैः ।
युयुत्सुरागमद्योद्धुं पार्थस्तानच्छिनच्छरान् ॥ ६५
ततः परमसंक्रुद्धः काण्डकोशमवासृजत् ।
अश्वत्थामाभिरूपाय गृहानतिथये यथा ॥ ६६
अथ संशप्तकांस्त्यक्त्वा पाण्डवो द्रौणिमभ्ययात् ।
अपाङ्क्तेयानिव त्यक्त्वा दाता पाङ्क्तेयमर्थिनम् ६७
'स्थिताः संशप्तका राजन्दृष्ट्वा युद्धं महात्मनोः' ६८

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

अर्जुनेनाश्वत्थामपराजयः ॥ १ ॥

सञ्जय उवाच ।
ततः समभवद्युद्धं शुक्राङ्गिरसवर्चसोः ।
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव ॥ १
संतापयन्तावन्योन्यं दीप्तैः शरगभस्तिभिः ।
लोकत्रासकरावास्तां विमार्गस्थौ ग्रहाविव ॥ २
ततोऽविध्यद्भ्रुवोर्मध्ये नाराचैरर्जुनो भृशम् ।
स तेन विबभौ द्रौणिरूर्ध्वरश्मिर्यथा रविः ॥ ३
अथ कृष्णौ शरशतैरश्वत्थाम्नाऽर्दितौ भृशम् ।
स्वरश्मिजालविकचौ युगान्तार्काविवासतुः ॥ ४
ततोऽर्जुनः सर्वतोधारमस्त्र-
मवासृजद्वासुदेवेऽभिभूते ।
द्रौणायनिश्चाभ्यहनत्पृषत्कै-
र्वज्राग्निवैवस्वतदण्डकल्पैः ॥ ५
स केशवं चार्जुनं चातितेजा
विव्याध मर्मस्वतिरौद्रकर्मा ।
बाणैः सुमुक्तैरतितीव्रवेगै-
र्यैराहतो मृत्युरपि व्यथेत ॥ ६
द्रौणेरिषूनिषुभिः संनिवार्य
व्यायच्छतस्तद्द्विगुणैः सुपुङ्खैः ।
तं साश्वसूतध्वजमेकवीर-
मावृत्य संशप्तकसैन्यमाच्छेत् ॥ ७
धनूंषि बाणानिषुधीर्धनुर्ज्याः
पाणीन्भुजान्पाणिगतं च शस्त्रम् ।
छत्राणि केतूंस्तुरगान्रथेषां
वस्त्राणि माल्यान्यथ भूषणानि ॥ ८
चर्माणि वर्माणि मनोरमाणि
प्रसह्य चैषां स शिरांसि चैव ।
चच्छेद पार्थो द्विषतां सुमुक्तै-
र्बाणैः स्थितानामपराङ्मुखानाम् ॥ ९
सुकल्पिताः स्यन्दनवाजिनागाः
समास्थिताः कृतयत्नैर्नृवीरैः ।

महत् शैलं शिलासमूहो यस्मिन् तं महाशैलं पर्वतमिव ॥ ६४॥ काण्डकोशं बाणनिषङ्गम् ॥ ६६ ॥ द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
नक्षत्रमभितः नक्षत्रं लक्षीकृत्य ॥ १ ॥ विमार्गस्थौ वक्रातिचारगौ ॥ २ ॥ कृष्णौ कृष्णार्जुनौ आसतुः दीपयांचक्रतुः ॥ ४ ॥ सर्वतोधारं सर्वतोऽस्त्रधारावर्षकं । सर्वतोवारमिति घ. ङ. पाठः । वज्रकल्पैः अमोघैः । अग्निकल्पैः दाहकैः । वैवस्वतदण्डकल्पैः प्राणहरैः ॥ ५ ॥ व्यायच्छतो यतमानस्य । आच्छेत् गतवान् ॥ ७ ॥ सुकल्पिताः सुसन्नद्धाः ॥ १० ॥

पार्थेरितैर्बाणशतैर्निरस्ता-
स्तैरेव सार्धं नृवरैर्विनेशुः ॥ १०
पद्मार्कपूर्णेन्दुनिभाननानि
किरीटमाल्याभरणोज्ज्वलानि ।
भल्लार्धचन्द्रक्षुरसंनिकृत्ता-
न्यपातयच्छत्रुशिरांस्यजस्रम् ॥ ११
अथ द्विपैर्दैत्यरिपुद्विपाभै-
र्देवारिकल्पा बलमन्युकल्पैः ।
कलिङ्गवङ्गाङ्गनिषादवीरा
जिघांसवः पाण्डवमभ्यधावन् ॥ १२
तेषां द्विपानां निचकर्त पार्थो
वर्माणि चर्माणि करान्नियन्तॄन् ।
ध्वजाः पताकाश्च ततः प्रपेतु-
र्वज्राहतानीव गिरेः शिरांसि ॥ १३
तेषु प्रभग्नेषु गुरोस्तनूजं
बाणैः किरीटी नवसूर्यवर्णैः ।
प्रच्छादयामास महाभ्रजालै-
र्वायुः समुद्यन्तमिवांशुमन्तम् ॥ १४
ततोऽर्जुनेषूनिषुभिर्निरस्य
द्रौणिः शितैरर्जुनवासुदेवौ ।
प्रच्छादयित्वा दिवि चन्द्रसूर्यौ
ननाद सोऽम्भोद इवातपान्ते ॥ १५
तमर्जुनस्तांश्च पुनस्त्वदीया-
नभ्यर्दितस्तैरभिसृत्य शस्त्रैः ।
बाणान्धकारं सहसैव कृत्वा
विव्याध पार्थो वरहेमपुङ्खैः ॥ १६
नाप्याददत्संदधन्नैव मुञ्च-
न्बाणान्रथेऽदृश्यत सव्यसाची ।
रथांश्च नागांस्तुरगान्पदातीन्
संस्यूतदेहान्ददृशुर्हतांश्च ॥ १७

संधाय नाराचवरान्दशाशु
द्रौणिस्त्वरन्नेकमिवोत्ससर्ज ।
तेषां च पञ्चार्जुनमभ्यविध्य-
न्पञ्चाच्युतं निर्बिभिदुः सुपुङ्खाः ॥ १
तैराहतौ सर्वमनुष्यमुख्या-
वसृक्स्रवन्तौ धनदेन्द्रकल्पौ ।
समाप्तविद्येन तथाऽभिभूतौ
हतौ रणे ताविति मेनिरेऽन्ये ॥ १
अथार्जुनं प्राह दशार्हनाथः
प्रमाद्यसे किं जहि योधमेतम् ।
कुर्याद्धि दोषं समुपेक्षितोऽयं
कष्टो भवेद्व्याधिरिवाक्रियावान् ॥ २
तथेति चोक्त्वाऽच्युतमप्रमादी
द्रौणेः प्रहस्याशु किरीटमाली ।
भुजौ वरौ चन्दनसारदिग्धौ
वक्षः शिरोऽथाप्रतिमौ तथोरू ॥ २
गाण्डीवमुक्तैः कुपिताहिकल्पै-
र्द्रौणिं शरैः संयति निर्बिभेद ।
छित्त्वा तु रश्मींस्तुरगानविध्य-
त्ते तं रथादूहुरतीव दूरम् ॥ २
स तैर्हृतो वातजवैस्तुरङ्गै-
र्द्रौणिर्दृढं पार्थशराभिभूतः ।
आवृत्य नैव व्यवसत्स योद्धुं
पार्थेन सार्धं मतिमान्विमृश्य ।
जानञ्जयं नियतं वृष्णिवीरे
धनञ्जये चाङ्गिरसां वरिष्ठः ॥ २
विवेश कर्णस्य बलं तरस्वी
भग्नोत्साहः क्षीणबाणास्त्रयोगः ॥ २
प्रतीपकामे तु रणादश्वत्थाम्नि हृते हयैः ।
मन्त्रौषधिक्रियायोगैर्व्याधौ देहादिवाहृते ॥ २
संशप्तकानभिमुखौ प्रयातौ केशवार्जुनौ ।
वातोद्धूतपताकेन स्यन्दनेनौघनादिना ॥ २

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

करान् शुण्डाः ॥१३॥ तं अश्वत्थामानम् । तान् तदन्यान् । तैः कृतं बाणान्धकारं कृत्वा छित्त्वा । कृती छेदने ॥१६॥ संस्यूताः अन्योन्यं संघट्टवन्तः ॥ १७ ॥ समाप्तविद्येन समग्रधनुर्वेदविदा ॥ १९ ॥ अक्रियावान् प्रतिकाररहितः ॥ २० ॥ अविकर्णैं अविकर्णतुल्याग्रैः ॥२२॥ अङ्गिरसां अङ्गिरोगोत्राणां मध्ये॥२३। ओघनादिना जलौघवन्नादवता ॥२६॥ त्रिपञ्चाशोऽध्यायः ५३।

## चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

अर्जुनेन दण्डदण्डधारयोर्वधः ॥ १ ॥

सञ्जय उवाच ।
अथोत्तरेण पाण्डूनां सेनायां ध्वनिरुत्थितः ।
रथनागाश्वपत्तीनां दण्डधारेण वध्यताम् ॥ १
निवर्तयित्वा तु रथं केशवोऽर्जुनमब्रवीत् ।
वाहयन्नेव तुरगान्गरुडानिलरंहसः ॥ २
मागधोऽसावतिक्रान्तो द्विरदेन प्रमाथिना ।
भगदत्तादनवमः शिक्षया च बलेन च ॥ ३
एनं हत्वा निहन्तासि पुनः संशप्तकानिति ।
वाक्यान्ते प्रापयत्पार्थं दण्डधारगजं प्रति ॥ ४
स मागधानां प्रवरो महाबलो-
ऽशुभग्रहो योधगणैः समन्वितः ।
सपत्नसेनां प्रममाथ दारुणो
भीमं समग्रां बलवानिव ग्रहम् ॥ ५
सुकल्पितं दानवनागसन्निभं
महाभ्रनिर्ह्रादसमस्वनं रणे ।
समास्थितो नागवरं नरेश्वरो
रथाश्वमातङ्गनरप्रमाथिनम् ॥ ६
स नागयन्तॄन्समरे महारथा-
न्सपत्तिसङ्घांस्तुरगान्ससादिनः ।
द्विपांश्च बाणैर्निजघान वीर्यवा-
न्समन्ततो घ्नन्निव कालचक्रवत् ॥ ७
नरांस्तु कांस्यायसवर्मभूषणा-
न्निपात्य साश्वानपि पत्तिभिः सह ।
व्यपोथयद्दन्तिवरेण शुष्मिणा
सशब्दवत्स्थूलनलं यथा तथा ॥ ८
अथार्जुनो ज्यातलनेमिनिःस्वने
मृदङ्गभेरीबहुशङ्खनादिते ।
रथाश्वमातङ्गसहस्रनादिते
रथोत्तमेनाभ्यपतद्द्विपोत्तमम् ॥ ९
ततोऽर्जुनं द्वादशभिः शरोत्तमै-
र्जनार्दनं षोडशभिः समार्पयत् ।
स दण्डधारस्तुरगांस्त्रिभिस्त्रिभि-
स्ततो ननाद प्रजहास चासकृत् ॥ १०
ततोऽस्य पार्थः सगुणेषुकार्मुकं
चकर्त भल्लैर्ध्वजमप्यलंकृतम् ।
पुनर्नियन्तॄन्सहपादगोप्तृभि-
स्ततः स चुक्रोध गिरिव्रजेश्वरः ॥ ११
ततोऽर्जुनं भिन्नकटेन दन्तिना
घनाघनेनानिलतुल्यरंहसा ।
अतीव चुक्षोधयिषुर्जनार्दनं
धनंजयं चाभिजघान तोमरैः ॥ १२
अथास्य बाहू द्विपहस्तसन्निभौ
शिरश्च पूर्णेन्दुनिभाननं त्रिभिः ।
क्षुरैः प्रचिच्छेद सहैव पाण्डव-
स्ततो द्विपं बाणशतैः समर्पयत् ॥ १३
स पार्थबाणैस्तपनीयभूषणैः
समावृतः काञ्चनवर्मभृद्द्विपः ।
भृशं चकाशे निशि पर्वतो यथा
दावाग्निना प्रज्वलितौषधिद्रुमः ॥ १४
स वेदनार्तोऽम्बुदनिस्वनो नदं-
श्चरन्भ्रमन्प्रस्खलितान्तरोऽद्रवत् ।
पपात रुग्णः सनियन्तृकस्तथा
यथा गिरिर्वज्रविदारितस्तथा ॥ १५
हिमावदातेन सुवर्णमालिना
हिमाद्रिकूटप्रतिमेन दन्तिना ।

उत्तरेण उत्तरतः । वध्यतां वध्यमानानाम् ॥ १ ॥ अनवमः अहीनः ॥३॥ स मागधानां प्रवरोऽङ्कुशग्रहे ग्रहेऽप्रसह्यो विकचो यथा ग्रहः । सपत्नसेनां प्रममाथ दारुणो महीं समग्रां विकचो यथा ग्रहः। इति झ. पाठः। तत्र इत्यर्थः । अङ्कुशग्रहे अङ्कुशधारणे हस्तियुद्धे इत्यर्थः । ग्रहे आदित्यादिग्रहसमूहे युद्धपरिग्रहे च अप्रसह्यः। विकचः कचोपलक्षितशिरोरहितः केतुरूपी ग्रह इव । विकचो विस्तीर्णो ग्रहो धूमकेतुरूपी उत्पातग्रहः ॥ ५ ॥ शुष्मिणा बलवता । स्थूलसुषिरं नलं तृणविशेषम् ॥ ८ ॥ सगुणेषुकार्मुक मौर्वीबाणसहितं धनुः । नियन्तॄन् नियन्तारम् ॥ ११ ॥ घनाघनो घातुकमत्तदन्तिनोरिति विश्वः ॥ १२ ॥ सहैव युगपत् ॥ १३ ॥ स्खलितान्तरः मध्येस्खलन्नित्यर्थः ॥ १५ ॥

हते रणे भ्रातरि दण्ड आव्रज-
जिघांसुरिन्द्रावरजं धनंजयम् ॥ १६
सतोमरैरर्ककरप्रभैस्त्रिभि-
र्जनार्दनं पञ्चभिरर्जुनं शितैः ।
समर्पयित्वा विननाद चार्दयं-
स्ततोऽस्य बाहू निचकर्त पाण्डवः ॥ १७
क्षुरप्रकृत्तौ विपुलौ सतोमरौ
शुभाङ्गदौ चन्दनरूषितौ भुजौ ।
गजात्पतन्तौ युगपद्विरेजतु-
र्यथोरगौ पर्वतशृङ्गवन्महीम् ॥ १८
अथाऽर्धचन्द्रेण हतं किरीटिना
पपात दण्डस्य शिरः क्षितिं द्विपात् ।
स शोणितार्द्रो निपतन्विरेजे
दिवाकरोऽस्तादिव पश्चिमां दिशम् ॥ १९
अथ द्विपं श्वेतनगाग्रसन्निभं
दिवाकरांशुप्रतिमैः शरोत्तमैः ।
बिभेद पार्थः स पपात नादयन्
हिमाद्रिकूटं कुलिशाहतं यथा ॥ २०
ततोऽपरे तत्प्रतिमा गजोत्तमा
जिगीषवः संयति सव्यसाचिना ।
तथा कृतास्तेऽपि यथैव तौ द्विपौ
ततः प्रभग्नं सुमहद्द्विपोर्बलम् ॥ २१
गजा रथाश्वाः पुरुषाश्च सङ्घशः
परस्परघ्नाः परिपेतुराहवे ।
परस्परं प्रस्खलिताः समाहता
भृशं च तत्तद्बहुभाषिणो हताः ॥ २२
अथार्जुनं स्वे परिवार्य सैनिकाः
पुरन्दरं देवगणा इवाब्रुवन् ।
अभैष्म यस्मान्मरणादिव प्रजाः
स वीर दिष्ट्या निहतस्त्वया रिपुः ॥ २३
न चेत्परित्रास्यदिमाञ्जनान्भया-
द्द्विषद्भिरेवं बलिभिः प्रपीडितान् ।
तथाऽभविष्यद्द्विषतां प्रमोदनं
यथा हतेष्वेष्विह नोऽरिसूदन ॥ २४
इतीव भूयश्च सुहृद्भिरीडिता
निशम्य वाचः सुमनास्तदाऽर्जुनः ।
यथाऽनुरूपं प्रतिपूज्य तं जनं
जगाम संशप्तकसङ्घहा पुनः ॥ २५

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

अर्जुनेन संशप्तकानां वधः ॥ १ ॥

सञ्जय उवाच ।
प्रत्येत्याथ पुनर्जिष्णुर्जित्वा संशप्तकान्बभौ ।
वक्रानुवक्रगमनादङ्गारक इव ग्रहः ॥ १
पार्थबाणहता राजन्नराश्वरथकुञ्जराः ।
विचेलुर्बभ्रमुर्नेशुः पेतुर्मम्लुश्च भारत ॥ २
धुर्यान्धुर्यतरान्सूतान्ध्वजांश्चापासिसायकान् ।
पाणीन्पाणिगताञ्शस्त्रान्बाहूनपि शिरांसि च ॥ ३
भल्लैः क्षुरैरर्धचन्द्रैर्वत्सदन्तैश्च पाण्डवः ।
चिच्छेदामित्रवीराणां समरे प्रतियुध्यताम् ॥ ४
तं प्रवीरास्त्वदीयानां नर्दमानाऽभिदुद्रुवुः ।
वासितार्थे युयुत्सन्तो वृषभा वृषभं यथा ।
निपतन्त्यर्जुनं शूराः शतशोऽथ सहस्रशः ॥ ५
तेषां तस्य च तद्युद्धमभवद्रोमहर्षणम् ।
त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा ॥ ६
तमविध्यत्त्रिभिर्बाणैर्दन्दशूकैरिवाहिभिः ।
उग्रायुधस्य तस्याशु शिरः कायादपाहरत् ॥ ७

इन्द्रावरजं कृष्णम् ॥ १६ ॥ अस्तात् अस्ताचलात् ॥ १९ ॥ तौ दण्डधारतद्भ्रात्रोर्द्विपौ यथा साध्यक्षौ कृत्तौ छिन्नौ तथा तेपि कृताः ॥ २१ ॥ चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

धुर्यान् श्रेष्ठान् । धुर्यगतानिति पाठे वाहान् ॥ ३ ॥ वासितार्थे स्त्रीनिमित्तम् ॥ ५ ॥ दन्दशूकैः दंशनशीलैः। अपाहरदर्जुन इति शेषः ॥ ७ ॥

तेऽर्जुनं सर्वतः क्रुद्धा नानाशस्त्रैरवीवृषन् ।
मरुद्भिः प्रेरिता मेघा हिमवन्तमिवोष्णगे ॥ ८
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः ।
सम्यगस्तैः शरैः सर्वानहितानहनद्बहून् ॥ ९
छिन्नत्रिवेणुजङ्घेषान्हताश्वान्हतसारथीन् ।
विस्रस्तहस्ततूणीरान्विचक्ररथकेतनान् ॥ १०
संछिन्नरश्मियोक्त्राक्षान्व्यनुकर्षयुगान्रथान् ।
विध्वस्तसर्वसन्नाहान्बाणैश्चक्रेऽर्जुनस्त्वरन् ॥ ११
ते रथास्तत्र विध्वस्ताः परार्ध्या भान्त्यनेकशः ।
धनिनामिव वेश्मानि हतान्यग्न्यनिलाम्बुभिः १२
द्विपाः संभिन्नमर्माणो वज्राशनिसमैः शरैः ।
पेतुर्गिर्यग्रवेश्मानि वज्रवाताग्निभिर्यथा ॥ १३
अनेकैश्च शिलाधौतैर्वज्रानलविषोपमैः ।
शरैर्निजघ्निवान्पार्थो महेन्द्र इव दानवान् ॥ १४
सारोहास्तुरगाः पेतुर्बहवोऽर्जुनताडिताः ।
निर्जिह्वान्त्राः क्षितौ क्षीणा रुधिरार्द्राः सुदुर्दृशः १५
नराश्व[illegible] नाराचैः संस्यूताः सव्यसाचिना ।
बभ्रमुश्चस्खलुः पेतुर्नेदुर्मम्लुश्च मारिष ॥ १६
महार्हवर्माभरणा नानारूपाम्बरायुधाः ।
सरथाश्वद्विपा वीरा हताः पार्थेन शेरते ॥ १७
निर्भयाः पुण्यकर्माणो विशिष्टाभिजनश्रुताः ।
गताः शरीरैर्वसुधामूर्जितैः कर्मभिर्दिवम् ॥ १८
अथार्जुनरथं वीरास्त्वदीयाः समभिद्रवन् ।
नानाजनपदाध्यक्षाः सगणा जातमन्यवः ॥ १९
उह्यमना रथाश्वेभैः पत्तयश्च जिघांसवः ।
समभ्यधावन्नस्यन्तो विविधं क्षिप्रमायुधम् ॥ २०
तदायुधमहावर्षं क्षिप्तं योधमहाम्बुदैः ।
व्यधमन्निशितैर्बाणैः क्षिप्रमर्जुनमारुतः ॥ २१
साश्वपत्तिद्विपरथं महाशस्त्रौघसंप्लवम् ।
सहसा संतितीर्षन्तं पार्थं शस्त्रास्त्रसेतुना ॥ २२
अथाब्रवीद्वासुदेवः पार्थं किं क्रीडसेऽनघ ।
संशप्तकान्प्रमथ्यैनांस्ततः कर्णवधे त्वर ॥ २३
तथेत्युक्त्वाऽर्जुनः कृष्णं शिष्टान्संशप्तकांस्तदा ।
क्षपयिष्यंस्तदा बाणैर्दैत्यानिन्द्र इवावधीत् ॥ २४
आददत्संदधन्नेषून्दृष्टः कैश्चिद्रणेऽर्जुनः ।
विमुञ्चन्वा शराञ्शीघ्रं दृश्यन्ते वै नरा हताः ॥ २५
आश्चर्यमिति गोविन्दो ब्रुवन्नश्वानचोदयत् ।
हंसांशुगौरास्ते सेनां हंसाः सर इवाविशन् ॥ २६
ततः संग्रामभूमिं तां वर्तमाने जनक्षये ।
अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत् ॥ २७
एष पार्थ महारौद्रो वर्तते भरतक्षयः ।
पृथिव्यां पार्थिवानां वै दुर्योधनकृते महान् ॥ २८
पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम् ।
हतानामपविद्धानि कलापानिषुधींस्तथा ॥ २९
जातरूपमयैः पुङ्खैः शरांश्च नतपर्वणः ।
तैलधौतांश्च नाराचान्निर्मुक्तानिव पन्नगान् ॥ ३०
आकीर्णांस्तोमरान्वाहांश्छत्रान्हेमविभूषितान् ।
चर्माणि चापविद्धानि रुक्मपृष्ठानि भारत ॥ ३१
सुवर्णविकृतान्प्रासाञ्शक्तीः कनकभूषिताः ।
जाम्बूनदमयैः पट्टैर्बद्धाश्च विपुला गदाः ॥ ३२
जातरूपमयीश्चर्ष्टीः पट्टसान्हेमभूषितान् ।
दण्डैः कनकचित्रैश्च विप्रविद्धान्परश्वथान् ॥ ३३
परिघान्भिण्डिपालांश्च भुशुण्डीः कणपानपि ।
अयस्कुन्तांश्च पतितान्मुसलानि गुरूणि च ॥ ३४
नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः ।
जीवन्त इव दृश्यन्ते गतसत्त्वास्तरस्विनः ॥ ३५
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकान् ।
गजवाजिरथैः क्षुण्णान्पश्य योधान्सहस्रशः ॥ ३६
मनुष्यगजवाजीनां शरशक्त्यृष्टितोमरैः ।
निस्त्रिंशैः पट्टसैः प्रासैर्नखरैर्लगुडैरपि ॥ ३७
शरीरैर्बहुधा छिन्नैः शोणितौघपरिप्लुतैः ।
गतासुभिरमित्रघ्न संवृता रणभूमयः ॥ ३८

उष्णगे ग्रीष्मे गते सति प्रावृषीत्यर्थः । उष्णो ग्रीष्मो गतोऽतीतो यत्र स उष्णगः कालविशेष इति विग्रहः ॥ ८ ॥ अस्तैः क्षिप्तैः ॥ ९ ॥ अनुकर्षः रथाधस्थं दारु ॥ ११ ॥ निर्जिह्वान्त्राः निर्गताः जिह्वाः अन्त्राणि च येषां ते ॥ १५ ॥ कलापान् अलंकारान् ॥ २९ ॥ आकीर्णान् सर्वतोविक्षिप्तान् ॥ ३१ ॥ वाजीनां शरीरैरिति संबन्धः । दैर्घ्यमार्षम् ॥ ३७ ॥ पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

बाहुभिश्चन्दनादिग्धैः साङ्गदैः शुभभूषणैः ।
सतलत्रैः सकेयूरैर्भाति भारत मेदिनी ॥ ३९
साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलंकृतैः ।
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ॥ ४०
बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः ।
'निकृत्तैर्वृषभाक्षाणां शरीरैश्चापि सङ्कुशः ॥ ४१
गजवाजिमनुष्याणां शरशक्त्यृष्टितोमरैः ।
कबन्धैः शोणितादिग्धैश्छिन्नगात्रशिरोधरैः ।
भूर्भाति भरतश्रेष्ठ शान्ताग्निभिरिवाध्वरे ॥' ४२
रथांश्च बहुधा भग्नान्हेमकिङ्किणिनः शुभान् ।
अश्वांश्च बहुधा पश्य शोणितेन परिप्लुतान् ॥ ४३
अनुकर्षानुपासङ्गान्पताका विविधान्ध्वजान् ।
योधानां च महाशङ्खान्पाण्डुरांश्च प्रकीर्णकान् ।
निरस्तजिह्वान्मातङ्गाञ्शयानान्पर्वतोपमान् ॥ ४४
वैजयन्तीर्विचित्राश्च हतांश्च गजयोधिनः ।
वारणानां परिस्तोमान्संयुक्तानेककम्बलान् ॥४५
विपाटितविचित्राश्च रूपचित्राः कुथास्तथा ।
भिन्नाश्च बहुधा घण्टाः पतद्भिश्चूर्णिता गजैः ॥४६
वैदूर्यमणिदण्डांश्च पतितांश्चाङ्कुशान्भुवि ।
अश्वानां च युगापीडान्रत्नचित्रानुरश्छदान् ॥४७
विद्धाः सादिध्वजाग्रेषु सुवर्णविकृताः कुथाः ।
विचित्रान्मणिचित्रांश्च जातरूपपरिष्कृतान् ॥४८
अश्वास्तरपरिस्तोमान्राङ्कवान्पतितान्भुवि ।
चूडामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः ।
छत्राणि चापविद्धानि चामरव्यजनानि च ॥ ४९
चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः ।
कॢप्तश्मश्रुभिरत्यर्थं वीराणां समलंकृतैः ।
वदनैः पश्य संछन्नां महीं शोणितकर्दमाम् ॥ ५०
सजीवांश्च नरान्पश्य कूजमानान्समन्ततः ।
उपास्यमानांश्च बहून्न्यस्तशस्त्रैश्च भूपते ।
ज्ञातिभिश्च जलक्लिन्नात्रोदमानैर्मुहुर्मुहुः ॥ ५१
उत्क्रान्तानपरान्योधांश्छादयित्वा तरस्विनः ।
पुनर्युद्धाय गच्छन्ति जये लुब्धाः प्रमन्यवः ॥५२
अपरे तत्रतत्रैव परिधावन्ति मानवाः ।
संनिवृत्ताश्च ते शूरा दृष्ट्वा चैतान्विचेतसः ॥ ५३
जलं त्यक्त्वा प्रधावन्ति क्रोशमानाः परस्परम् ।
जलं पीत्वा मृतान्पश्य पिबतोऽन्यांश्च भारत ॥५४
परिष्वज्य प्रियानन्ये बान्धवान्बन्धुवत्सलाः ।
विसंज्ञान्समरे योधांस्तत्रतत्र महारणे ॥ ५५
पश्यापरान्नरश्रेष्ठ संदष्टोष्ठपुटान्पुनः ।
भ्रूकुटीकुटिलैर्वक्त्रैः प्रेक्षमाणान्महारणम् ॥ ५६
एतत्तवैवानुरूपं कर्मार्जुन महाहवे ।
दिवि वा देवराजस्य त्वया यत्कृतमाहवे ॥ ५७
सञ्जय उवाच ।
एवं तां दर्शयन्कृष्णो युद्धभूमिं किरीटिने ।
गच्छन्नेवाशृणोच्छब्दं दुर्योधनबले महत् ॥ ५८
शङ्खदुन्दुभिनिर्घोषं भेरीपणवनिःस्वनम् ।
रथाश्वनरनागानां पादशब्दांश्च दारुणान् ॥ ५९
प्रविश्य तद्बलं कृष्णस्तुरगैर्वातवेगितैः ।
पाण्ड्येनाभ्यर्दितं सैन्यं त्वदीयं वीक्ष्य विस्मितः ॥ ६०
स हि नानाविधैर्बाणैरिष्वस्त्रप्रवरो युधि ।
न्यहनद्द्विषतां पूगान्गतासूनन्तको यथा ॥ ६१
गजवाजिमनुष्याणां शरीराणि शितैः शरैः ।
भित्त्वा प्रहरतां श्रेष्ठो विदेहासूनपातयत् ॥ ६२
शत्रुप्रवीरैरस्त्राणि नानाशस्त्राणि सायकैः ।
छित्त्वा तानवधीच्छत्रून्पाण्ड्यः शक्र इवासुरान् ६३

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

अश्वत्थाम्ना पाण्ड्यवधः ॥ १ ॥

धृतराष्ट्र उवाच ।
प्रोक्तस्त्वया पूर्वमेव प्रवीरो लोकविश्रुतः ।
न त्वस्य कर्म संग्रामे त्वया सञ्जय कीर्तितम् ॥ १
तस्य विस्तरशो ब्रूहि प्रवीरस्याद्य विक्रमम् ।

शिक्षां प्रभावं वीर्यं च प्रमाणं दर्पमेव च ॥ २
सञ्जय उवाच ।
भीष्मद्रोणकृपद्रौणिकर्णार्जुनजनार्दनान् ।
समाप्तविद्यान्धनुषि श्रेष्ठान्यान्सप्त मन्यसे ॥ ३
यो ह्याक्षिपति वीर्येण सर्वानेतान्महारथान् ।
न मेने चात्मना तुल्यं कंचिदेव नरेश्वरम् ॥ ४
तुल्यतां द्रोणभीष्माभ्यामात्मनो यो न मृष्यते ।
वासुदेवार्जुनाभ्यां च न्यूनतां नैच्छतात्मनि ॥ ५
स पाण्ड्योऽर्थपतिश्रेष्ठः सर्वशस्त्रभृतां वरः ।
कर्णस्यानीकमहनत्पाशहस्त इवान्तकः ॥ ६
तदुदीर्णरथाश्वेभं पत्तिप्रवरसंकुलम् ।
कुलालचक्रवद्भ्रान्तं पाण्ड्येनाभ्याहतं बलात् ॥ ७
व्यश्वसूतध्वजरथान्विप्रयुक्तयुगात्रथान् ।
सम्यगस्तैः शरैः पाण्ड्यो वायुर्मेघानिवाक्षिपत् ॥ ८
द्विरदान्प्रवरारोहान्विपताकायुधध्वजान् ।
स पादरक्षानहनद्वज्रेणाद्रीनिवाद्रिहा ॥ ९
स शक्तिप्रासतूणीरानश्वारोहान्हयानपि ।
पुलिन्दखसबाह्लीकनिषादान्ध्रककुन्तलान् ॥ १०
दाक्षिणात्यांश्च भोजांश्च शूरान्संग्रामकर्कशान् ।
विशस्त्रकवचान्बाणैः कृत्वा पाण्ड्योऽकरोद्व्यसून् ॥
चतुरङ्गं बलं बाणैर्निघ्नन्तं पाण्ड्यमाहवे ।
दृष्ट्वा द्रौणिरसंभ्रान्तमसंभ्रान्तस्ततोऽभ्ययात् ॥ १२
आभाष्य चैनं मधुरमभीतं तमभीतवत् ।
प्राह प्रहरतां श्रेष्ठः स्मितपूर्वं समाह्वयत् ॥ १३
राजन्कमलपत्राक्ष प्रधानायुधवाहन ।
वज्रसंहननप्रख्य प्रख्यातबलपौरुष ॥ १४
मुष्टिश्लिष्टाङ्गुलिभ्यां च व्यायताभ्यां महद्धनुः ।
दोर्भ्यां विस्फारयन्भासि महाजलदवद्भृशम् ॥ १५
शरवर्षैर्महावेगैरमित्रानभिवर्षतः ।
मदन्यं नानुपश्यामि प्रतिवीरं तवाहवे ॥ १६
रथद्विरदपत्त्यश्वानेकः प्रमथसे बहून् ।
मृगसङ्घानिवारण्ये विभीर्भीमबलो हरिः ॥ १७
महता रथघोषेण दिवं भूमिं च नादयन् ।
वर्षान्ते सस्यगां सूर्यो भाभिरादीपयन्निव ॥ १८
संस्पृशानः शरैः पूर्णौ तूणी चाशीविषोपमैः ।
मयैवैकेन युध्यस्व त्र्यम्बकेनान्धको यथा ॥ १९
एवमुक्तस्तथेत्युक्त्वा प्रमथ्यैनं स पार्थिवः ।
कर्णिना द्रोणतनयं विव्याध मलयध्वजः ॥ २०
मर्मभेदिभिरत्युग्रैर्बाणैरग्निशिखोपमैः ।
मर्मस्वभ्यहनद्द्रौणिः पाण्ड्यमाचार्यनन्दनः ॥ २१
ततोऽपरान्नवांस्तूर्णं नाराचान्कङ्कवाससः ।
गत्या दशम्या संयुक्तानश्वत्थामाऽप्यवासृजत् २२
तानच्छिनत्तदा पाण्ड्यश्चतुर्भिरपरैः शरैः ।
चतुरोऽभ्याहनच्चाश्वानाशु ते व्यसवोऽभवन् २३
अथ द्रोणसुतस्येषूंस्ताञ्छित्त्वा निशितैः शरैः ।
धनुर्ज्यां विततां पाण्ड्यश्चिच्छेदादित्यतेजसः ॥ २४
दिव्यं धनुरथाधिज्यं कृत्वा द्रौणिरमित्रहा ।
प्रेक्ष्य चाशु रथे युक्तान्नरैरन्यान्हयोत्तमान् ॥ २५
ततः शरसहस्राणि प्रेषयामास वै द्विजः ।
इषुसंबाधमाकाशमकरोद्दिश एव च ॥ २६
ततस्तानस्यतः सर्वान्द्रौणेर्बाणान्महात्मनः ।
जानानोऽप्यक्षयान्पाण्ड्यो शातयत्पुरुषर्षभः ॥ २७
प्रयुक्तांस्तान्प्रयत्नेन छित्त्वा द्रौणेरिषूनरिः ।
चक्ररक्षौ रणे तस्य प्राणुदन्निशितैः शरैः ॥ २८
अथ तल्लाघवं दृष्ट्वा मण्डलीकृतकार्मुकः ।
प्रास्यद्द्रोणसुतो बाणान्वृष्टिं पूषानुजो यथा ॥ २९
अष्टावष्टगवान्यूहुः शकटानि यदायुधम् ।
अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष ॥ ३०
तमन्तकमिव क्रुद्धमन्तकालान्तकोपमम् ।
ये ये ददृशिरे रूपं विसंज्ञाः प्रायशोऽभवन् ॥ ३१

---

स पाण्ड्यः व्यसूनकरोदिति द्वयोः संबन्धः ॥ १० ॥ अनुस्मृत्य ह्यभीतवत् इति ख. पाठः । अनुसृत्य हि भीतवत् इति क. ङ. पाठः ॥ १३ ॥ वर्षतः मत् मत्तः ॥ १६ ॥ प्रमथसे प्रमथ्नासि ॥ १७ ॥ मलयवत् कृत्रिमो ध्वजो यस्य । मलयध्वज इति प्रवीरस्यैव नामान्तरं वा ॥ २० ॥ गत्या दशम्या । उन्मुख्यभिमुखी तिर्यङ् मन्दा गोमूत्रिका ध्रुवा । स्खलिता यमकाक्रान्ता क्रुष्टेतीषुगतीर्विदुः । दशमीगतिस्तु शिरसा सह दूरपातिनी अतिक्रुष्टानाम । तया गत्या ॥ २२ ॥ पूषानुजः पर्जन्यः ॥ २९ ॥ अष्टवृषभवाह्यानि अष्टौ शकटानि यदायुधसंभारं ऊहुः वहन्ति तत्सर्वं अह्नोऽष्टमभागेन यामार्धेन क्षीणमि-

आचार्यपुत्रस्तां सेनां बाणवृष्ट्या व्यवीवृषत् ।
पर्जन्य इव घर्मान्ते वृष्ट्या साद्रिद्रुमां महिम् ॥ ३२
द्रौणिपर्जन्यमुक्तां तां बाणवृष्टिं सुदुःसहाम् ।
वायव्यास्त्रेण स क्षिप्रं विद्ध्वा पाण्ड्यानिलोऽनदत् ॥
तस्य नानदतः केतुं चन्दनागुरुरूषितम् ।
मलयप्रतिमं द्रौणिश्छित्त्वाश्वांश्चतुरोऽहनत् ॥ ३४
सूतमेकेषुणा हत्वा महाजलदनिःस्वनम् ।
धनुश्छित्त्वाऽर्धचन्द्रेण तिलशो व्यधमद्रथम् ॥३५
अस्त्रैरस्त्राणि संवार्य छित्त्वा सर्वायुधानि च ।
प्राप्तमप्यहितं द्रौणिर्नाहनद्युद्धतृष्णया ॥ ३६

हतेश्वरो दन्तिवरः सुकल्पित-
स्त्वराभिसृष्टः प्रतिशब्दगो बली ।
तमाद्रवद्द्रौणिशराहतस्त्वरन्
जवेन कृत्वा प्रतिहस्तिगर्जितम् ॥ ३७
तं वारणं वारणयुद्धकोविदो
द्विपोत्तमं पर्वतसानुसन्निभम् ।
समभ्यतिष्ठन्मलयध्वजस्त्वर-
न्यथाऽद्रिशृङ्गं हरिरुन्नदंस्तथा ॥ ३८
स तोमरं भास्कररश्मिवर्चसं
बलास्त्रसर्गोत्तमयत्नमन्युभिः ।
ससर्ज शीघ्रं परिपीडयन्गजं
गुरोः सुताय द्रविडेश्वरो नदन् ॥ ३९
मणिप्रवेकोत्तमवज्रहाटकै-
रलंकृतं चांशुकमाल्यमौक्तिकैः ।
हतो मयासीत्यसकृन्मुदा नद-
न्पराभिनद्द्रौणिवराङ्गभूषणम् ॥ ४०
तदर्कचन्द्रग्रहपावकत्विषं
भृशाभिघातात्पतितं विघूर्णितम् ।
महेन्द्रवज्राभिहतं महास्वनं
यथाऽद्रिशृङ्गं धरणीतले तथा ॥ ४१
ततः प्रजज्वाल परेण मन्युना
पादाहतो नागपतिर्यथा तथा ।
समाददे चान्तकदण्डसन्निभा-
निषूनमित्रान्तकरांश्चतुर्दश ॥ ४२
द्विपस्य पादाग्रकरान्स पञ्चभि-
र्नृपस्य बाहू च शिरोऽथ च त्रिभिः ।
जघान षड्भिः षडृतूपमत्विषः
स पाण्ड्यराजानुचरान्महारथान् ॥ ४३
सुदीर्घवृत्तौ वरचन्दनोक्षितौ
सुवर्णमुक्तामणिवज्रभूषणौ ।
भुजौ धरायां पतितौ नृपस्य तौ
विचेष्टतुस्तार्क्ष्यहताविवोरगौ ॥ ४४
शिरश्च तत्पूर्णशशिप्रभाननं
सरोषताम्रायतनेत्रमुन्नसम् ।
क्षितावपि भ्राजति तत्सकुण्डलं
विशाखयोर्मध्यगतः शशी यथा ॥ ४५
[स तु द्विपः पञ्चभिरुत्तमेषुभिः
कृतः षडंशश्चतुरो नृपस्त्रिभिः ।
कृतो दशांशः कुशलेन युध्यता
यथा हविस्तद्दश दैवतं तथा ॥ ४६
स पादशो राक्षसभोजनान्बहून्
प्रदाय पाण्ड्योऽश्वमनुष्यकुञ्जरान् ।
स्वधामिवाप्य ज्वलनः पितृप्रिय-
स्ततः प्रशान्तः सलिलप्रवाहतः ॥] ४७
समाप्तविद्यं तु गुरोः सुतं नृपः
समाप्तकर्माणमुपेत्य ते सुतः ।
सुहृद्वृतोऽत्यर्थमपूजयन्मुदा
जिते बलौ विष्णुमिवामरेश्वरः ॥ ४८

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

त्यर्थः ॥ ३० ॥ हतेश्वरो यः कश्चित् तं पाण्ड्यम् ॥ ३७ ॥ मलयध्वजः पाण्ड्यस्तं यदृच्छयागतं वारणं समभ्यतिष्ठत् ॥३८॥ बलेन अस्त्रसर्गे य उत्तमो यत्नस्तेन मन्युना च तैः । परिपीडयन् अङ्कुशेन कोपयन् ॥ ३९ ॥ द्रौणेः वराङ्गभूषणं किरीटम् ॥ द्रौणिरिति शेषः ॥ ४२ ॥ चतुरः यथा दशहविष्कायामिष्टौ पिष्टपिण्डो दशधा क्रियते तथेत्यर्थः ॥ ४६ ॥ पाण्ड्योऽश्वादीन् पादशः प्रदाय खण्डयित्वा प्रशान्तः द्रौणिबाणैरिति शेषः । यथा स्वधां प्रेतशरीररूपं हविः प्राप्य पितृप्रियो ज्वलनः श्मशानाग्निः जलेन शाम्यति तद्वदित्यर्थः ॥ ४७ ॥ समाप्तविद्य सम्यगाप्तविद्यम् । समाप्तकर्माणं कृतकृत्यम् ॥ ४८ ॥ षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

संकुलयुद्धम् ॥ १ ॥

धृतराष्ट्र उवाच ।
पाण्ड्ये हते किमकरोदर्जुनो जयतांवरः ।
एकवीरेण कर्णेन द्राविते च युधिष्ठिरे ॥ १
समाप्तविद्यो बलवान्युक्तो वीरश्च पाण्डवः ।
सर्वभूतेष्वनुज्ञातः शंकरेण महात्मना ॥ २
तस्मान्महद्भयं तीव्रममित्रघ्नाद्धनञ्जयात् ।
स यत्तत्राकरोत्पार्थस्तन्ममाचक्ष्व सञ्जय ॥ ३
सञ्जय उवाच ।
हते पाण्ड्येऽर्जुनं कृष्णस्त्वरन्नाह वचो हितम् ।
हतं पश्य स्वराजानमपयातांश्च पाण्डवान् ॥ ४
कर्णं पश्य महारङ्गे ज्वलन्तमिव पावकम् ।
असौ भीमो महेष्वासः प्रतिवृत्तो रणं प्रति ॥ ५
त इमे नानुवर्तन्ते धृष्टद्युम्नपुरोगमाः ।
~~पाञ्चालाः सृञ्जया~~श्चैव पाण्डवानां चमूमुखम् ॥ ६
'निवृत्तैश्च पुनः पार्थैर्भग्नं शत्रुबलं महत् ।'
कौरवान्द्रवतो ह्येष कर्णो वारयते भृशम् ॥ ७
अन्तकप्रतिमो वेगे शक्रतुल्यपराक्रमः ।
असौ गच्छति कौन्तेय द्रौणिः शस्त्रभृतां वरः ॥ ८
तमेष प्रद्रुतः सङ्ख्ये धृष्टद्युम्नो महारथः ।
अश्वत्थाम्ना हताः सङ्ख्ये सर्वे कौन्तेय सृञ्जयाः ॥ ९
रथाश्वनरनागानां कृतं च कदनं महत् ।
इत्येतत्सर्वमाचष्ट वासुदेवः किरीटिने ॥ १०
एतच्छ्रुत्वा च दृष्ट्वा च भ्रातॄणां व्यसनं महत् ।
वाहयाश्वान्हृषीकेश क्षिप्रमित्याह पाण्डवः ॥ ११
ततः प्रायाद्धृषीकेशो रथेनाप्रतिमो युधि ।
'ततो रेणुः समभवत्पुनस्तत्र महारणे ॥ १२
ततो राजन्महानासीत्संग्रामो रोमहर्षणः ।
सिंहनादरवाश्चात्र प्रादुरासन्समागमे ।
उभयोः सेनयो राजन्मृत्युं कृत्वा निवर्तनम् ॥ १३
ततः पुनः समाजग्मुरभीताः कुरुसृञ्जयाः ।
युधिष्ठिरमुखाः पार्था वैकर्तनमुखा वयम् ॥ १४
ततः प्रववृते युद्धं घोररूपं विशांपते ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनम् ॥ १५
तस्मिन्प्रवृत्ते संग्रामे तुमुले रोमहर्षणे ।
संशप्तकेषु वीरेषु किंचिच्छेषेषु भारत ॥ १६
धृष्टद्युम्नो महाराज सहितः सर्वराजभिः ।
कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः ॥ १७
आगच्छमानांस्तान्दृष्ट्वा संग्रामे विजयैषिणः ।
दधारैको रणे कर्णो जलौघानिव पर्वतः ॥ १८
समासाद्य तु ते कर्णं व्यशीर्यन्त महारथाः ।
यथाऽचलं समासाद्य वार्योघाः सर्वतोदिशम् ॥ १९
तयोरासीन्महाराज संग्रामो घोरदर्शनः ।
प्रवृद्धयोर्महारङ्गे बलिनोर्विजिगीषतोः ॥ २०
धृष्टद्युम्नस्तु राधेयं शरेणानतपर्वणा ।
छादयामास संक्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ॥ २१
विजयं तु धनुः श्रेष्ठं विधुन्वानो महारथः ।
पार्षतस्य धनुश्छित्त्वा शरांश्चाशीविषोपमान् ॥ २२
ववर्ष शरवर्षाणि तोयवर्षानिवाम्बुदः ।
छादयामास संक्रुद्धः पार्षतं नवभिः शरैः ॥ २३
ते हेमविकृतं वर्म भित्त्वा तस्य महात्मनः ।
शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ॥ २४
तदपास्य धनुश्छिन्नं धृष्टद्युम्नः प्रतापवान् ।
ततोऽन्यद्धनुरादाय सारवद्भारसाधनम् ।
कर्णं विव्याध सप्तत्या शरैः सन्नतपर्वभिः ॥ २५
तथैव राजन्कर्णोऽपि पार्षतं शत्रुतापनम् ।
द्रोणशत्रुं महेष्वासो विव्याध निशितैः शरैः ॥ २६
पुनरन्यं महाराज शरं कनकभूषणम् ।
प्रेषयामास समरे मृत्युदण्डमिवापरम् ॥ २७
तमापतन्तं सहसा घोररूपं विशांपते ।
चिच्छेद शतधा राजन्पार्षतः कृतहस्तवत् ॥ २८
दृष्ट्वा पतितं भूमौ शरं कर्णो विशांपते ॥ २९
पार्षतः शरवर्षेण समन्तात्पर्यवारयत् ।

अनुज्ञातः त्वं अजय्यो भविष्यसीत्यनुगृहीतः ॥ २ ॥

सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

विव्याध चैनं त्वरितो नाराचैः सप्तभिस्तदा ॥ ३०
तं प्रत्यविध्यद्दशभिः शरैर्हेमविभूषितैः ।
तयोर्युद्धं समभवद्दृष्टिश्रोत्रमनोहरम् ॥ ३१
आसीद्घोरं च चित्रं च प्रेक्षणीयं च सर्वशः ॥ ३२
सर्वेषां तत्र भूतानां रोमहर्षो व्यजायत ।
दृष्ट्वा तत्समरे कर्म कर्णपार्षतयोर्नृप ॥ ३३
एतस्मिन्नन्तरे द्रौणिरभ्ययात्तं महारथम् ।
पार्षतं शत्रुदमनं शत्रुवीर्यासुनाशनम् ॥ ३४
स दृष्ट्वा समरे यान्तमभीतं च महारथम् ।
अभ्यभाषत संक्रुद्धः पार्षतं शत्रुतापनम् ॥ ३५
रथं रथेन संपीड्य पार्षतस्य तु ब्राह्मणः ॥ ३६
तिष्ठतिष्ठेति ब्रह्मघ्न न मे जीवन्विमोक्ष्यसे ।
इत्युक्त्वा सुभृशं वीरः शीघ्रकृन्निशितैः शरैः ।
छादयामास समरे यतमानो महारथः ॥ ३७
यत्नतः परया शक्त्या धृष्टद्युम्नं महारथम् ।
योधयामास समरे क्रुद्धरूपो विशांपते ॥ ३८
तयोस्तु संनिपाते हि घोररूपो विशांपते ॥ ३९
यथा हि समरे द्रौणिः पार्षतं दृश्य मारिष ।
नातिहृष्टमना ह्यासीन्मन्वानो मृत्युमात्मनः ॥ ४०
स ज्ञात्वा पितुरत्यन्तवैरिणं तु महाहवे ।
आत्मानं समरे ज्ञात्वाऽशस्त्रवध्यं महाबलः ।
जवेनाभिययौ द्रौणिं कालः कालक्षये यथा ॥ ४१
द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्नमवस्थितम् ।
क्रोधेन निःश्वसन्वीरः पार्षदं समभिद्रवत् ॥ ४२
तावन्योन्यं तु दृष्ट्वैव संरम्भं जग्मतुः परम् ।
प्रगृह्य महती चापे शरासनसमन्विते ॥ ४३
अथाब्रवीन्महाराज द्रोणपुत्रः प्रतापवान् ।
धृष्टद्युम्नं समीपस्थं त्वरमाणो विशांपते ॥ ४४
पाञ्चालापशदाद्य त्वां प्रेषयामि यमक्षयम् ।
पापं हि यत्त्वया कर्म कृतं तातं घ्नता रणे ॥ ४५
अद्य त्वं प्राप्स्यसे तद्वै यथा ह्यकुशलस्तथा ।
अरक्ष्यमाणः पार्थेन यदि तिष्ठसि संयुगे ।
नापक्रामसि वा मोहात्सत्यमेतद्ब्रवीमि ते ॥ ४६

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

अर्जुनस्य द्रौणिग्रस्तधृष्टद्युम्नरक्षणपूर्वकं द्रौणिं निर्जित्य संशप्तकान्प्रति गमनम् ॥ १ ॥

सञ्जय उवाच ।
एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान् ।
आशिषं तां प्रवक्तव्यां मामको दास्यते तव ॥ १
येनैव ते पितुर्दत्ता यतमानस्य संयुगे ।
एष ते प्रतिवाक्यं वै असिर्दास्यति मामकः ।
येन कृत्तं तव पितुर्यतमानस्य तच्छिरः ॥ २
यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः ।
त्वामिदानीं कथं युद्धे न हनिष्यामि किल्बिषम् ॥ ३
एवमुक्त्वा महातेजाः सेनापतिररिंदमः ।
सुतीक्ष्णेनाथ भल्लेन द्रौणिं विव्याध पार्षतः ॥ ४
ततो द्रौणिः सुसंक्रुद्धः शरैः संनतपर्वभिः ।
आच्छादयद्दिशो राजन्धृष्टद्युम्नस्य संयुगे ॥ ५
नैवान्तरिक्षं न दिशो नापि योधाः सहस्रशः ।
दृश्यन्ते वै महाराज शरैश्छन्नाः समन्ततः ।
एकः सन्वारयामास प्रेक्षणीयः समन्ततः ॥ ६
तथैव पार्षतो राजन्द्रौणिमाहवशोभिनम् ।
शरैः संछादयामास सूतपुत्रस्य पश्यतः ॥ ७
राधेयोऽपि महाराज पाञ्चालान्सह पाण्डवैः ।
द्रौपदेया युधामन्युमुत्तमौजसमेव च ॥ ८
सात्यकिश्च महाराज योधांश्चान्यान्सहस्रशः ।
एकस्तान्वारयामास प्रेक्षणीयः समन्ततः ॥ ९
धृष्टद्युम्नस्तु समरे द्रौणेश्चिच्छेद कार्मुकम् ।
क्षुरप्रेण सुतीक्ष्णेन पश्यतां सर्वयोधिनाम् ॥ १०
तदपास्य धनुश्छिन्नमन्यदादत्त कार्मुकम् ।

वेगवत्समरे घोरं शरांश्चाशीविषोपमान् ॥ ११
स पार्षतस्य राजेन्द्र धनुः शक्तिं गदां ध्वजम् ।
हयान्सूतं रथं चैव निमेषाद्व्यधमच्छरैः ॥ १२
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
खड्गमादत्त विपुलं शतचन्द्रं च भानुमत् ॥ १३
द्रौणिस्तदपि राजेन्द्र भल्लैः क्षिप्रं महारथः ।
चिच्छेद समरे वीरः क्षिप्रहस्तो दृढायुधः ॥ १४
रथादनवरूढस्य धन्विनो बाहुशालिनः ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ १५
धृष्टद्युम्नं तु विरथं हताश्वरथसारथिम् ।
शस्त्रैश्च बहुधा विद्धमस्त्रैश्च शकलीकृतम् ।
नातरद्भरतश्रेष्ठ यतमानो महारथः ॥ १६
तस्यान्तमिषुभी राजन्यदा द्रौणिर्न गच्छति ।
अथ त्यक्त्वा रथं वीरः पार्षतं त्वरितोऽन्वगात् ।
प्रगृह्य विपुलं खड्गं जातरूपपरिष्कृतम् ॥ १७
तस्य संपततो राजन्वपुरासीन्महात्मनः ।
गरुडस्येव पततो जिघृक्षोः पन्नगोत्तमम् ॥ १८
एतस्मिन्नेव काले तु केशवः परवीरहा ।
अब्रवीद्भरतश्रेष्ठमर्जुनं जयतां वरम् ॥ १९
पश्य द्रौणिं पार्षतस्य यतमानं वधं प्रति ।
यत्नं करोति विपुलं हन्याच्चैनं न संशयः ॥ २०
त्रायस्वैनं महाबाहो पार्षतं युद्धदुर्मदम् ।
द्रौणेरास्यगतं वीर मृत्योरास्यगतं यथा ॥ २१
एवमुक्त्वा महाराज वासुदेवः प्रतापवान् ।
प्रैषयत्तुरगान्यत्र द्रौणिर्वीरो व्यवस्थितः ॥ २२
ते हयाश्चन्द्रसंकाशाः केशवेन प्रचोदिताः ।
पिबन्त इव चाकाशं जग्मुर्द्रौणेर्महारथम् ॥ २३
दृष्ट्वा द्रौणिर्महाराज वासुदेवधनंजयौ ।
धृष्टद्युम्नवधे राजंश्चक्रे यत्नं महाबलः ॥ २४
विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं जनेश्वर ।
शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महारथः ॥ २५
ते शरा हेमविकृता गाण्डीवप्रेषिता भृशम् ।
द्रौणिमासाद्य विविशुर्वल्मीकमिव पन्नगाः ॥ २६
विद्धस्तु तैः शरैर्घोरैर्द्रोणपुत्रः प्रतापवान् ।
उत्सृज्य समरे राजन्पाञ्चालममितौजसम् ॥ २७
आरुरोह रथं वीरो धनञ्जयशरार्दितः ।
प्रगृह्य च धनुः श्रेष्ठं पार्थं विव्याध सायकैः ॥ २८
एतस्मिन्नन्तरे शूरः सहदेवो जनाधिप ।
अपोवाह रथेनाजौ पार्षतं शत्रुतापनम् ॥ २९
अर्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः ।
तं द्रोणपुत्रः संरब्धो बाह्वोरुरसि चार्पयत् ॥ ३०
क्रोधितस्तु रणे पार्थो नाराचं कालसंनिभम् ।
द्रोणपुत्राय चिक्षेप यमदण्डमिवापरम् ॥ ३१
स ब्राह्मणस्यांसदेशे निपपात महाद्युतेः ।
स विह्वलो महाराज शरवेगेन संयुगे ।
निषसाद रथोपस्थे वैक्लव्यं परमं ययौ ॥ ३२
तं तु मत्वा हतं वीरं सारथिः शत्रुकर्शनम् ।
अपोवाह रणेनाजौ त्वरमाणो रणाजिरात् ॥ ३३
अथोत्कुष्टं महाराज पाञ्चालैर्जितकाशिभिः ।
मोक्षितं पार्षतं दृष्ट्वा द्रोणपुत्रं च पीडितम् ॥ ३४
वादित्राणि च दिव्यानि प्रावाद्यन्त सहस्रशः ।
सिंहनादश्च संजज्ञे दृष्ट्वा युद्धं तदद्भुतम् ॥ ३५
ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः ।
दृष्ट्वार्जुनं रणे क्रुद्धः प्रेक्षते च मुहुर्मुहुः ।
द्वैरथं चापि पार्थेन गन्तुकामो महाद्युतिः ॥ ३६
एवं कृत्वाऽब्रवीत्पार्थो वासुदेवं धनञ्जयः ।
याहि संशप्तकान्कृष्ण कार्यमेतत्परं मम ॥ ३७
ततः प्रयातो गोविन्दः श्रुत्वा पाण्डवभाषितम् ।
रथेनातिपताकेन मनोमारुतरंहसा ॥ ३८
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
तावकानां परेषां च राजन्दुर्मन्त्रिते तव ॥ ३९

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

# एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
ततः प्रववृते भूयः संग्रामो राजसत्तम ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ १
धनूंषि बाणान्परिघानसिपट्टसतोमरान् ।
मुसलानि भुशुण्डीश्च शक्तिरिष्टिपरश्वधान् ॥ २
गदाःप्रासाञ्शितान्कुंतान्भिडिपालान्महाङ्कुशान्
प्रगृह्य क्षिप्रमापेतुः परस्परजिघांसया ॥ ३
बाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत् ।
पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान् ॥ ४
तेन शब्देन महता संहृष्टाश्चक्रुराहवम् ।
वीरा वीरैर्महाघोरकलहान्तं तितीर्षवः ॥ ५
ज्यातलत्रधनुःशब्दाञ्शस्त्राणां च निपात्यताम् ।
ताडितानां च पतता निनादांश्च पदातिनाम् ॥ ६
बाणशब्दांश्च विविधाञ्शूराणां चाभिगर्जताम् ।
श्रुत्वा गजा भृशं त्रेसुः पेतुर्मम्लुश्च सैनिकाः ॥७
तेषां निनदतां चैव शस्त्रवर्षं च मुञ्चताम् ।
बहूनाधिरथिर्वीरः प्रममाथेषुभिः परान् ॥ ८
पञ्च पाञ्चालवीराणां रथान्दश च पञ्च च ।
साश्वसूतध्वजान्कर्णः शरैर्निन्ये यमक्षयम् ॥ ९
योधमुख्या महावीर्याः पाण्डूनां कर्णमाहवे ।
शिक्षितास्तमभिद्रुत्य परिवव्रुः समन्ततः ॥ १०
ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोडयन् ।
विजगाहाण्डजाकीर्णां पद्मिनीमिव यूथपः ॥ ११
द्विषत्सैन्यमवस्कन्ध्य राधेयो धनुरुत्तमम् ।
विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयत् १२
'हस्तिनः समहामात्रान्साश्वारोहान्हयानपि ।
रथिनोऽप्येकबाणेन भ्रमतश्चावपातयत् ॥' १३
वर्म वा चर्म वाऽश्रित्य निपातमपि देहिनः ।
विषेहुर्नास्य संस्पर्शं द्वितीयस्य पतत्रिणः ॥ १४
वर्मयुक्तेषु देहेषु धनुषोऽस्यञ्शिताञ्शरान् ।
मौर्व्या तलत्रे न्यहनत्कशया वाजिनो यथा ॥ १५
पाण्डुसृञ्जयपाञ्चालाञ्शरगोचरमागतान् ।
ममर्द तरसा कर्णः सिंहो मृगगणानिव ॥ १६
ततः पाञ्चालपुत्रश्च द्रौपदेयाश्च मारिष ।
यमौ च युयुधानश्च त्वरिताः कर्णमभ्ययुः ॥ १७
तेषु व्यायच्छमानेषु कुरुपाञ्चालपाण्डुषु ।
प्रियानसून्रणे त्यक्त्वा योधा जघ्नुः परस्परम् ॥१८
सुसन्नद्धाः कवचिनः सशिरस्त्राणभूषणाः ।
गदाभिर्मुसलैश्चान्ये परिघैश्च महाबलाः ॥ १९
समभ्यधावन्त भृशं कालदण्डैरिवोद्यतैः ।
नर्दन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष ॥ २०
ततो निजघ्नुरन्योन्यं पेतुश्चान्योन्यताडिताः ।
वमन्तो रुधिरं गात्रैर्विमस्तिष्केक्षणायुधाः ॥ २१
दन्तपूर्णैः सरुधिरैर्वक्त्रैर्दाडिमसन्निभैः ।
जीवन्त इव चाप्येके तस्थुः शस्त्रौघबृंहिताः ॥ २२
परश्वधैश्चाप्यपरे पट्टसैरसिभिस्तथा ।
शक्तिभिर्भिण्डिपालैश्च नखरप्रासतोमरैः ॥ २३
ततक्षुश्चिच्छिदुश्चान्ये बिभिदुश्चिक्षिपुस्तथा ।
संचकर्तुश्च जघ्नुश्च राजन्योधा महारणे ॥ २४
पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः ।
क्षरन्तः स्वरसं रक्तं प्रकृत्ताश्चन्दना इव ॥ २५
रथै रथा विनिहता हस्तिभिश्चापि हस्तिनः ।
नरैर्नरा हताः पेतुरश्वाश्चाश्वैः सहस्रशः ॥ २६
ध्वजाः शिरांसि छत्राणि द्विपहस्ता नृणां भुजाः ।
क्षुरैर्भल्लार्धचन्द्रैश्च छिन्नाः पेतुर्महीतले ॥ २७
'वध्यतां दारुणाः शब्दाः पततां स्तनतामपि ।

द्यां स्वर्गम् । वियदन्तरिक्षम् ॥ ४ ॥ अण्डजैर्जलपक्षिभिः सारसादिभिराकीर्णां व्याप्ताम् ॥ ११ ॥ मौर्व्या मौर्वीच्युतैः शरैर्बाणैस्तलत्रे ज्याघातवारणस्थाने न्यहनत् ॥ १५ ॥ व्यायच्छमानेषु यतमानेषु ॥ १८ ॥ परिघैर्हता इति शेषः । समभ्यधावन्तेत्युत्तरेणान्वयः ॥ १९ ॥ मस्तिष्कं शिरोभागस्थमांसपिण्डः ॥ २१ ॥ परश्वधैस्ततक्षुः । पट्टिशैरसिभिश्च चिच्छिदुः । शक्तिभिर्बिभिदुः । भिन्दिपालैश्चिक्षिपुः । नखरैः संचकर्तुः । प्रासतोमरैर्जघ्नुः ॥ २३ ॥ चन्दना रक्तचन्दनाः ॥ २५ ॥

नराश्वेभरथानां हि नराश्वेभरथैस्तथा ॥ २८
नरांश्च नागांश्च रथान्हयान्ममृदुराहवे ॥ २९
अश्वारोहैर्हताः शूराश्छिन्नहस्ताश्च दन्तिनः ।
सपताकाध्वजाः पेतुर्विशीर्णा इव पर्वताः ॥ ३०
पत्तिभिश्च समाप्लुत्य द्विरदाः स्यन्दनास्तथा ।
हताश्च हन्यमानाश्च पतिताश्चैव सर्वशः ॥ ३१
अश्वारोहाः समासाद्य त्वरिताः पत्तिभिर्हताः ।
सादिभिः पत्तिसङ्घाश्च निहता युधि शेरते ॥ ३२
मृदितानीव पद्मानि प्रम्लाना इव च स्रजः ।
हतानां वदनान्यासन्गात्राणि च महाहवे ॥ ३३
रूपाण्यत्यर्थकान्तानि द्विरदाश्वनृणां नृप ।
समुन्नानीव वस्त्राणि ययुर्दुर्दर्शतां पराम् ॥ ३४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

गजयुद्धम् ॥ १ ॥ संकुलयुद्धम् ॥ २ ॥

सञ्जय उवाच ।
हस्तिभिस्तु महामात्रास्तव पुत्रेण चोदिताः ।
धृष्टद्युम्नं प्रतेत्याशु क्रुद्धाः पार्षतमभ्ययुः ॥ १
प्राच्याश्च दाक्षिणात्याश्च प्रवरा गजयोधिनः ।
अङ्गा वङ्गाश्च पुण्ड्राश्च मागधास्ताम्रलिप्तकाः ॥ २
मेकलाः कोशला मद्रा दशार्णा निषधास्तथा ।
गजयुद्धेषु कुशलाः कलिङ्गैः सह भारत ॥ ३
शरतोमरनाराचैर्वृष्टिमन्त इवाम्बुदाः ।
सिषिचुस्ते ततः सर्वे पाञ्चालबलमाहवे ॥ ४
तानभिद्रवतो नागान्मदवेगसमुद्धतान् ।
विपाठक्षुरनाराचैर्धृष्टद्युम्नो ह्यवीवृषत् ॥ ५
एकैकं दशभिः षड्भिरष्टाभिरपि पार्षतः ।
द्विरदानभिविव्याध क्षिप्रं गिरिनिभाञ्शरैः ॥ ६
प्रच्छाद्यमानं द्विरदैर्मेघैरिव दिवाकरम् ।
पर्ययुः पाण्डुपाञ्चाला नदन्तो ह्यात्तकार्मुकाः ॥७
तान्नागानभिवर्षन्तो ज्यातलत्रविनादिनः ।
वीरनृत्यं प्रनृत्यन्तः शूरतालप्रचोदितैः ।
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ॥ ८
सात्यकिश्च शिखण्डी च चेकितानश्च वीर्यवान् ।
समन्तात्सिषिचुर्वीरा मेघास्तोयैरिवाचलान् ॥ ९
ते म्लेच्छैः प्रेषिता नागा नरानश्वान्रथानपि ।
हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यतिमन्यवः ॥ १०
बिभिदुश्च विषाणाग्रैः समाक्षिप्य च चिक्षिपुः ।
विषाणलग्नाश्चाप्यन्ये परिपेतुर्विभीषणाः ॥ ११
प्रमुखे वर्तमानं तु द्विपमङ्गस्य सात्यकिः ।
नाराचेनोग्रवेगेन भित्त्वा मर्माण्यताडयत् ॥ १२
तस्यावर्जितकायस्य द्विरदादुत्पतिष्यतः ।
नाराचेनाहनद्वक्षः सात्यकिः सोऽपतद्भुवि ॥१३
पुण्ड्रस्यापततो नागं चलन्तमिव पर्वतम् ।
सहदेवः प्रयत्नाग्रैर्नाराचैरहनत्त्रिभिः ॥ १४
विपताकं वियन्तारं विवर्मध्वजजीवितम् ।
तं कृत्वा द्विरदं भूयः सहदेवोऽङ्गमभ्ययात् ॥ १५
सहदेवं तु नकुलो वारयित्वाङ्गमार्दयत् ।
नाराचैर्यमदण्डाभैस्त्रिभिर्नागं शतेन तम् ॥ १६
दिवाकरकरप्रख्यानङ्गश्चिक्षेप तोमरान् ।
नकुलाय शतान्यष्टौ त्रिधैकैकं तु सोऽच्छिनत् १७
तथाऽर्धचन्द्रेण शिरस्तस्य चिच्छेद पाण्डवः ।
स पपात हतो म्लेच्छस्तेनैव सह दन्तिना ॥ १८
अथाङ्गपुत्रे निहते हस्तिशिक्षाविशारदे ।
अङ्गाः क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः ॥ १९
चलत्पताकैः सुमुखैर्हेमकक्ष्यातनुच्छदैः ।
मिमर्दिषन्तस्त्वरिताः प्रदीप्तैरिव पर्वतैः ॥ २०
मेकलोत्कलकालिङ्गा निषधास्ताम्रलिप्तकाः ।
शरतोमरवर्षाणि विमुञ्चन्तो जिघांसवः ॥ २१

पद्मानीव वदनानि । स्रजइव गात्राणि ॥ ३३ ॥ समुन्नानि क्षारक्लिन्नानि मलिनानि ॥ ३४ ॥ एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

प्रच्छाद्यमानं धृष्टद्युम्नम् ॥ ७ ॥ आवर्जितः प्रहारवञ्चनेन रक्षितः कायो येन तस्य ॥ १३ ॥ षष्टितमोऽध्यायः ॥ ६० ॥

तैश्छाद्यमानं नकुलं निशाकरमिवाम्बुदैः ।
परिपेतुः सुसंरब्धाः पाण्डुपाञ्चालसात्यकाः ॥२२
ततस्तदभवद्युद्धं रथिनां हस्तिभिः सह ।
सृजतां शरवर्षाणि तोमरांश्च सहस्रशः ॥ २३
नागानां प्रास्फुटन्कुम्भा मर्माणि च नखानि च ।
दन्ताश्चैवातिविद्धानां नाराचैर्हेमभूषणैः ॥ २४
तेषामष्टौ महानागांश्चतुःषष्ट्या सुतेजनैः ।
नाराचैः सहदेवस्तान्पातयामास सादिभिः ॥२५
अञ्जोगतिभिरायम्य प्रयत्नाद्धनुरुत्तमम् ।
नाराचैरहनन्नागान्नकुलः कुलनन्दनः ॥ २६
ततः पाञ्चालशैनेयौ द्रौपदेयाः प्रभद्रकाः ।
शिखण्डी च महानागान्सिषिचुः शरवृष्टिभिः २७
ते पाण्डुयोधाम्बुधरैः शत्रुद्विरदपर्वताः ।
बाणवर्षैर्हताः पेतुर्वज्रवर्षैरिवाचलाः ॥ २८
एवं हत्वा तव गजांस्ते पाण्डुरथकुञ्जराः ।
द्रुतं सेनां च वर्षन्तो भिन्नकूलामिवापगाम् ॥२९
तां ते सेनां समालोड्य पाण्डुपुत्रस्य सैनिकाः ।
विक्षोभयित्वा च पुनः कर्णं समभिदुद्रुवुः ॥ ३०

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

कृष्णेनार्जुनंप्रति कुरूणां युधिष्ठिरग्रहणोद्यमकथनम् ॥ १ ॥

सञ्जय उवाच ।
तेषां प्रवृत्ते संग्रामे विपुले शोणितोदके ।
रराज लोहितेनोर्वी संसिक्ता बहुधा भृशम् ॥ १
ततो रजसि संशान्ते प्रकाशः सर्वतोऽभवत् ।
एतस्मिन्नन्तरे पार्थं कृष्णो वचनमब्रवीत् ।
दर्शयन्निव कौन्तेयं धर्मराजं युधिष्ठिरम् ॥ २
एष पाण्डव ते भ्राता धार्तराष्ट्रैर्महाबलैः ।
जिघांसुभिर्महेष्वासैः शीघ्रं पार्थोऽनुसार्यते ॥ ३
तमन्वगेव पाञ्चालाश्चेदिमात्स्याश्च भारत ।
अनुयान्ति महात्मानं परीप्सन्तो महाजवाः ॥ ४
एष दुर्योधनः पार्थ गजानीकेन दंशितः ।
राजा सर्वस्य लोकस्य राजानमनुधावति ॥ ५
जिघांसुः पुरुषव्याघ्रं भ्रातृभिः सहितो बली ।
आशीविषसमस्पर्शैः सर्वायुधविशारदैः ॥ ६
नदद्भिः सिंहनादांश्च धमद्भिश्चापि वारिजान् ।
बलवद्भिर्महेष्वासैर्विधून्वानैर्धनूंषि च ॥ ७
एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः ।
युधिष्ठिरं धार्तराष्ट्रो रत्नोत्तममिवार्थिनः ॥ ८
पश्य सात्वतभीमाभ्यां निरुद्धा विष्ठिताः पुनः ।
जिहीर्षवोऽमृतं दैत्याः शक्राग्निभ्यामिवाहवे ॥ ९
एते बहुत्वात्त्वरिताः पुनर्गच्छन्ति पाण्डवम् ।
समुद्रमिव वार्योघाः प्रावृट्काले महारथाः ॥ १०
मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम् ।
हुतमग्नौ च कौन्तेयं दुर्योधनवशं गतम् ॥ ११
यथायुक्तमनीकं हि धार्तराष्ट्रस्य पाण्डव ।
नास्य शक्रोऽपि मुच्येत संप्राप्तो बाणगोचरम् १२
दुर्योधनस्य वीरस्य शरौघाञ्शीघ्रमस्यतः ।
संक्रुद्धस्यान्तकस्येव को वेगं संसहेद्रणे ॥ १३
रसतस्तस्य वीरस्य द्रौणेः शारद्वतस्य च ।
कर्णस्य चेषुवेगो वै पर्वतानपि शातयेत् ॥ १४
कर्णेन च कृतो राजा विमुखोऽद्य तु दृश्यते ॥१५
बलवाँल्लघुहस्तश्च कृती युद्धविशारदः ।
राधेयः पाण्डवश्रेष्ठं शक्तः पीडयितुं रणे ।
सहितो धृतराष्ट्रस्य पुत्रैः शूरैर्महाबलैः ॥ १६
तस्यैभिर्युध्यमानस्य संग्रामे शंसितात्मनः ।
अन्यैरपि च पार्थस्य कृतं कर्म महारथैः ॥ १७
उपवासकृशो राजा भृशं भरतसत्तमः ।
ब्राह्मे बले स्थितो ह्येष न क्षात्रे हि बले विभुः ॥१८

जिहीर्षवो युधिष्ठिरं हर्तुमिच्छन्तः ॥ ९ ॥ तस्य युधिष्ठिरस्य कर्म कर्तव्यं पराजयाख्यम् । एभिर्दुर्योधनादिभिः कृतं निष्पादितम् ॥ १७ ॥ तत्र हेतुः । ब्राह्मे बले क्षमायाम् । क्षात्रे बले निष्ठुरत्वे ॥ १८ ॥

कर्णेन चाभियुक्तोऽयं भूपतिः शत्रुतापनः ।
संशयं समनुप्राप्तः पाण्डवो वै युधिष्ठिरः ॥ १९
न जीवति महाराजो मन्ये पार्थ युधिष्ठिरः ।
यद्भीमसेनः सहते सिंहनादममर्षणः ॥ २०
नर्दतां धार्तराष्ट्राणां पुनःपुनररिंदमः ।
धमतां च महाशङ्खान्संग्रामे जितकाशिनाम् ॥ २१
युधिष्ठिरं पाण्डवेयं हतेति भरतर्षभ ।
संचोदयत्यसौ कर्णो धार्तराष्ट्रान्महाबलान् ॥ २२
स्थूणाकर्णास्त्रजालेन पार्थ पाशुपतेन च ।
प्रच्छादयन्ति राजानमनुयान्ति महारथाः ॥ २३

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

कृष्णेनार्जुनंप्रति युधिष्ठिरस्य कर्णेन पराभवकथनपूर्वकं कर्णयुद्धप्रदर्शनम् ॥ १ ॥ तथा भीमसेनयुद्धप्रदर्शनम् ॥ २ ॥

श्रीभगवानुवाच ।
आतुरो मे मतो राजा अविषह्यश्च भारत ।
यथैनमनुवर्तन्ते पञ्चालाः सह पाण्डवैः ॥ १
त्वरमाणास्त्वराकाले सर्वशस्त्रभृतां वराः ।
मज्जन्तमिव पाताले बलिनो ह्युज्जिहीर्षवः ॥ २
न केतुर्दृश्यते राज्ञः कर्णस्य पिहितः शरैः ।
पश्यतोर्यमयोः पार्थ सात्यकेश्च शिखण्डिनः ॥ ३
धृष्टद्युम्नस्य भीमस्य शतानीकस्य वा विभो ।
पाञ्चालानां च सर्वेषां चेदीनां चैव भारत ॥ ४
एष कर्णो रणे पार्थ पाण्डवानामनीकिनीम् ।
शरैर्विध्वंसयामास नलिनीमिव कुञ्जरः ॥ ५
एते द्रवन्ति रथिनस्त्वदीयाः पाण्डुनन्दन ।
पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः ॥ ६
एते भारत मातङ्गाः कर्णेनाभिहताः शरैः ।
आर्तनादान्विकुर्वाणा विद्रवन्ति दिशो दश ॥ ७
रथानां द्रवते वृन्दमेतच्चैव समन्ततः ।
द्राव्यमाणं रणे पार्थ कर्णेनामिततेजसा ॥ ८
हस्तिकक्ष्यां रणे पश्य चरन्तीं तत्रतत्र ह ।
रथस्थं सूतपुत्रस्य केतुं केतुमतां वर ॥ ९
असौ धावति राधेयो भीमसेनरथं प्रति ।
किरञ्शरशतान्येव विनिघ्नंस्तव वाहिनीम् ॥ १०
एते नश्यन्ति पाञ्चाला द्राव्यमाणा महात्मना ।
शक्रेणेव यथा दैत्या द्राव्यमाणा महात्मना ॥ ११
एष कर्णो रणे जित्वा पाञ्चालान्पाण्डुसृञ्जयान् ।
दिशो विप्रेक्षते सर्वास्त्वदर्थमिति मे मतिः ॥ १२
एष कर्णो धनुःश्रेष्ठं विधून्वन्बहुशोभते ।
शत्रुं जित्वा यथा शक्रो देवसङ्घैः समावृतः ॥ १३
एते नर्दन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमम् ।
त्रासयन्तो रणे पाण्डून्सृंजयांश्च समन्ततः ॥ १४
एष सर्वात्मना पाण्डूंस्त्रासयित्वा महारणे ।
अभिभाषति राधेयः सर्वसैन्यानि मानद ॥ १५
अभिद्रवत भद्रं वो द्रुतं द्रवत कौरवाः ।
यथा न जीववान्कश्चिन्मुच्येत युधि सृञ्जयः ॥ १६
तथा कुरुत संयत्ता वयं यास्याम पृष्ठतः ।
एवमुक्त्वा गतो ह्येष पृष्ठतो विकिरञ्छरान् ॥ १७
पश्य कर्णं रणे पार्थ श्वेतच्छत्रविराजितम् ।
उदयं पर्वतं यद्वच्छशाङ्केनाभिशोभितम् ॥ १८
पूर्णचन्द्रनिकाशेन मूर्ध्नि च्छत्रेण भारत ।
ध्रियमाणेन समरे श्रीमच्छतशलाकिना ॥ १९
एष त्वां प्रेक्षते कर्णः सकटाक्षं धनंजय ।
उत्तमं यत्नमास्थाय ध्रुवमेष्यति संयुगे ॥ २०
पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः ।
शरांश्चाशीविषाकारान्विसृजन्तं महारणे ॥ २१
असौ निवृत्तो राधेयो दृष्ट्वा ते वानरध्वजम् ।
प्रार्थयन्समरं पार्थ त्वया सह परंतप ।
वधाय ह्यात्मनोऽभ्येति पावकं शलभो यथा ॥ २२

...त नाशयतेति कर्णश्चोदयतीति संबन्धः ॥ २२ ॥ स्थूणाकर्णो ...न्धर्वः ॥ २३ ॥ एकषष्टितमोऽध्यायः ॥ ६१ ॥

हस्तिकक्ष्यां केतुमिति संबन्धः ॥ ९ ॥ छत्रेणोपलक्षितः ॥ १९ ॥

कर्णमेकाकिनं दृष्ट्वा धार्तराष्ट्रो रणाजिरे ।
त्वां च पार्थाभिसंरब्धं कर्णं प्रति महारथम् ॥२३
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ।
अत्मानं च कृतार्थं च समीक्ष्य भरतर्षभ ॥ २४
असौ दुर्योधनः क्रुद्धो रथानीकेन भारत ।
रिरक्षिषुः सुसंवृत्तो धार्तराष्ट्रो निवर्तते ॥ २५
सर्वैः सहैभिर्दुष्टात्मा वध्यतां च प्रयत्नतः ।
त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता ॥ २६
अदीनयोर्विश्रुतयोर्युवयोर्योत्स्यमानयोः ।
देवासुरे पार्थ मृधे देवदानवयोरिव ।
पश्यन्तु कौरवाः सर्वे तव पार्थ पराक्रमम् ॥ २७
त्वां च दृष्ट्वातिसंरब्धं कर्णं च भरतर्षभ ।
असौ दुर्योधनः क्रुद्धो नोत्तरं प्रतिपद्यते ॥ २८
आत्मानं च कृतात्मानं समीक्ष्य भरतर्षभ ।
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ॥ २९
प्रतिपद्यस्व कौन्तेय प्राप्तकालमनन्तरम् ।
आर्यां युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ॥ ३०
पञ्च ह्येतानि मुख्यानि रथानां रथसत्तम ।
शतान्यायान्ति समरे बलिनां तिग्मतेजसाम् ॥ ३१
पञ्च नागसहस्राणि द्विगुणा वाजिनस्तथा ।
अभिसंहत्य कौन्तेय पदाताः प्रयुतानि च ॥ ३२
अन्योन्यरक्षितं वीर बलं त्वामभिवर्तते ।
द्रोणपुत्रं पुरस्कृत्य तच्छीघ्रं संनिषूदय ॥ ३३
निकृन्त्यैतद्रथानीकं बलिनं लोकविश्रुतम् ।
सूतपुत्रे महेष्वासे दर्शयात्मानमात्मना ॥ ३४
उत्तमं जवमास्थाय प्रत्येहि भरतर्षभ ।
असौ कर्णः सुसंरब्धः पाञ्चालानभिधावति ॥ ३५
केतुमस्य हि पश्यामि धृष्टद्युम्नरथं प्रति ।
समुपैष्यति पाञ्चालानिति मन्ये परंतप ॥ ३६
आचचक्षे प्रियं पार्थ तवेदं भरतर्षभ ।
राजासौ कुशली श्रीमान्धर्मपुत्रो युधिष्ठिरः ॥ ३७
असौ भीमो महाबाहुः संनिवृत्तश्चमूमुखे ।
वृतः सृञ्जय सैन्येन शैनेयेन च भारत ॥ ३८

द्रोणपुत्रे महेष्वासे इति क. ट. पाठः ॥ ३४ ॥

वध्यन्त एते समरे कौरवा निशितैः शरैः ।
भीमसेनेन कौन्तेय पाञ्चालैश्च महात्मभिः ॥ ३९
सेना हि धार्तराष्ट्रस्य विमुखा व्यद्रवद्रणात् ।
वेगेन भीमसेनस्य विहता विविधैः शरैः ॥ ४०
विपन्नसस्येव मही रुधिरेण समुक्षिता ।
भारती भरतश्रेष्ठ सेना कृपणदर्शना ॥ ४१
निवृत्तं पश्य कौन्तेय भीमसेनं युधांपतिम् ।
आशीविषमिव क्रुद्धं तस्माद्द्रवति भारती ॥ ४२
पीतरक्तासितसितास्ताराचन्द्रार्कमण्डिताः ।
पताका विप्रकीर्यन्ते छत्राण्येतानि चार्जुन ॥ ४३
सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः ।
केतवोऽभिनिपात्यन्ते हस्त्यश्वं च प्रकीर्यते ॥ ४४
रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः ।
नानावर्णैर्हता बाणैः पाञ्चालैरपलायिभिः ॥ ४५
निर्मनुष्यान्गजानश्वान्रथांश्चैव धनंजय ।
समाद्रवन्ति पाञ्चाला धार्तराष्ट्रांस्तरस्विनः ॥ ४६
विमृद्नन्ति नरव्याघ्रा भीमसेनबलाश्रयात् ।
बलं परेषां दुर्धर्षं त्यक्त्वा प्राणानरिंदम ॥ ४७
एते नर्दन्ति पाञ्चाला ध्मापयन्ति च वारिजान् ।
अभिद्रवन्ति च रणे मृद्नन्तः सायकैः परान् ॥ ४८
पश्य स्वर्गस्य माहात्म्यं पाञ्चाला हि पराक्रमात् ।
धार्तराष्ट्रान्विनिघ्नन्तो विशन्त्येते रथोत्तमान् ॥ ४९
[शस्त्रमाच्छिद्य शत्रूणां सायुधानां निरायुधाः ।
तेनैवैतानमोघास्त्रा निघ्नन्ति च नदन्ति च ॥ ५०
शिरांस्येतानि पात्यन्ते शत्रूणां बाहवोऽपि च ।
रथनागहया वीरा यशस्याः सर्व एव च ॥] ५१
सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः ।
त्यक्त्वा प्राणान्महेष्वासैः पाञ्चालैः परिपाल्यते ॥
सुहृदश्च पराक्रान्ताः कृपकर्णादयो विभो ।
निवारणे महेष्वासाः पाञ्चालानां परंतप ॥ ५३
अनिवृत्तांश्च भीतांस्तान्धार्तराष्ट्रान्परंतप ।
धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून्सहस्रशः ॥ ५४
रथाश्च विविधाः सर्वे निवृत्ते भरतर्षभे ।

द्विषष्टितमोऽध्यायः ॥ ६२ ॥

विवर्णमुखभूयिष्ठा धार्तराष्ट्री महाचमूः ॥ ५५
पश्य भीमेन नाराचैर्भिन्ना नागाः पतन्त्यमी ।
वज्रिवज्रहतानीव शिखराणि धराभृताम् ॥ ५६
भीमसेनस्य निर्विद्धा बाणैः सन्नतपर्वभिः ।
स्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः ॥ ५७
'एते द्रवन्ति कुरवो भीमसेनभयार्दिताः ।
त्यक्त्वा रथान्गजांश्चैव हयांश्चैव सहस्रशः ॥ ५८
हस्त्यश्वरथपत्तीनां द्रवतां निःस्वनं शृणु ।
भीमसेनस्य निनदं द्रावयानस्य कौरवान् ॥ ५९
अभिजानामि भीमस्य सिंहनादं पुनःपुनः ।'
नदतः पाण्डवेयस्य संग्रामे जितकाशिनः ॥ ६०
एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम् ।
विसृजंस्तोमरान्क्रुद्धो दण्डपाणिरिवान्तकः ॥ ६१
तस्य चैव भुजौ छिन्नौ भीमसेनेन गर्जतः ।
नागश्च ककरप्रख्यैर्नाराचैर्दशभिर्हतः ॥ ६२
हन्तैते पुनरायान्ति नागा ह्यन्ये प्रहारिणः ।
नीलाञ्जनचयप्रख्या महामात्रैरधिष्ठिताः ॥ ६३
शक्तितोमरसंघातैर्विनिघ्नन्तो वृकोदरम् ।
सप्तसप्त च नागस्था वैजयन्त्यश्च सध्वजाः ।
नवत्या निशितैर्बाणैश्छिन्नाः पार्थाग्रजेन ते ॥ ६४
दशभिर्दशभिश्चैको नाराचैर्निहतो गजः ॥ ६५
न चासौ धार्तराष्ट्राणां श्रूयते निनदस्तथा ।
पुरन्दरसमे क्रुद्धे निवृत्ते भरतर्षभे ॥ ६६
अक्षौहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य संगताः ।
क्रुद्धेन भीमसेनेन नरसिंहेन वारिताः ॥ ६७
न शक्नुवन्ति वै पार्थ पार्थिवाः समुदीक्षितुम् ।
मध्यंदिनगतं सूर्यं यथा दुर्बलचक्षुषः ॥ ६८
एते भीमस्य संत्रस्ताः सिंहस्येवेतरे मृगाः ।
शरैः संत्रासिताः सङ्ख्ये न लभन्ते सुखं क्वचित् ६९
राधेयो बहुभिः सार्धमसौ गच्छति वेगितः ।
वर्धयित्वा तु भीरुं तं पार्श्वतो ह्यानयद्धनुः ।
तं पालयन्महाराजं धार्तराष्ट्रं बलान्वितः ॥ ७०
सञ्जय उवाच ।
एतच्छ्रुत्वा महाबाहुर्वासुदेवाद्धनञ्जयः ।
भीमसेनेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ।
अर्जुनो व्यधमच्छिष्टान्संशप्तकगणान्बहून् ॥ ७१
ते वध्यमानाः पार्थेन संशप्तकगणाः प्रभो ।
शक्रस्यातिथितां गत्वा विशोका ह्यभवंस्तदा ॥ ७२
नारायणांस्तु गोपालान्व्यधमत्पाण्डुनन्दनः ।
उत्तमं वेगमास्थाय चण्डवायुर्घनानिव ॥ ७३
अन्वकीर्यन्त भीतास्ते तत्रतत्रैव भारत ।
लुलितांश्च ततः शूरानहनत्पुरुषोत्तमः ॥ ७४
पुनश्च पुरुषव्याघ्रः शरैः संनतपर्वभिः ।
जघान धार्तराष्ट्रस्य चतुर्विधबलां चमूम् ॥ ७५

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

रणाय राज्ञां द्वन्द्वीभावः ॥ १ ॥ कर्णेन शिखण्डिपराजयः ॥ २ ॥ धृष्टद्युम्नदुःशासनयोर्युद्धम् ॥ ३ ॥

धृतराष्ट्र उवाच ।
निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे ।
वध्यमाने बले चापि मामके पाण्डुसृञ्जयैः ॥ १
द्रवमाणे बलौघे च निराक्रन्दे मुहुर्मुहुः ।
'अवशेषं न पश्यामि मम सैन्येषु सञ्जय ॥ २
अहो बत दशां प्राप्तो न हि शक्ष्यामि जीवितुम् ।
जयकाङ्क्षी कथं सूत पुत्राणामनिवर्तिनाम् ॥ ३
कथं जीवामि निहताञ्श्रुत्वा च मम सैनिकान् ।
बहुनाऽद्य किमुक्तेन दैवं तेषां परायणम् ॥' ४
मामकाः किमकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ ५
सञ्जय उवाच ।
दृष्ट्वा भीमं महाबाहुं तव पुत्रः प्रतापवान् ।
क्रोधरक्तेक्षणो राजन्भीमसेनमभिद्रवत् ॥ ६
'तिष्ठतिष्ठ पृथापुत्र पश्य मेऽद्य पराक्रमम् ।
अद्य त्वां प्रेषयिष्यामि यमस्य सदनं प्रति ।
इत्युक्त्वा प्रययौ कर्णो यत्र भीमो व्यवस्थितः ॥'७

तावकं तु बलं दृष्ट्वा भीमसेनात्पराङ्मुखम् ।
यत्नेन महता कर्णः पर्यवस्थापयद्बली ॥ ८
व्यवस्थाप्य महाबाहुस्तव पुत्रस्य वाहिनीम् ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान्युद्धदुर्मदान् ॥ ९
प्रत्युद्ययुश्च राधेयं पाण्डवानां महारथाः ।
धुन्वानाः कार्मुकाण्याजौ विक्षिपन्तश्च सायकान् ॥
भीमसेनः शिनेर्नप्ता शिखण्डी जनमेजयः ।
धृष्टद्युम्नश्च बलवान्सर्वे चापि प्रभद्रकाः ॥ ११
पाञ्चालानां नरव्याघ्राः समन्तात्तव वाहिनीम् ।
अभ्यद्रवन्त संक्रुद्धाः समरे जितकाशिनः ॥ १२
तथैव तावका राजन्पाण्डवानामनीकिनीम् ।
अभ्यद्रवन्त त्वरिता जिघांसन्तो महारथान् ॥१३
रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
बभूव पुरुषव्याघ्र सैन्यमद्भुतदर्शनम् ॥ १४
शिखण्डी तु ययौ कर्णं धृष्टद्युम्नः सुतं तव ।
दुःशासनं महाराज महासेनः समभ्ययात् ॥ १५
नकुलो वृषसेनं तु चित्रसेनं युधिष्ठिरः ।
उलूकं समरे राजन्सहदेवः समभ्ययात् ॥ १६
सात्यकिः शकुनिं चापि द्रौपदेयाश्च कौरवान् ।
अर्जुनं च रणे यत्तो द्रोणपुत्रो महारथः ॥ १७
युधामन्युं महेष्वासं गौतमोऽभ्यपतद्रणे ।
कृतवर्मा च बलवानुत्तमौजसमाद्रवत् ॥ १८
भीमसेनः कुरून्सर्वान्पुत्रांश्च तव मारिष ।
सहानीकान्महाबाहुरेक एव न्यवारयत् ॥ १९
शिखण्डी तु ततः कर्णं विचरन्तमभीतवत् ।
भीष्महन्ता महाराज वारयामास पत्रिभिः ॥ २०
प्रतिरुद्धस्ततः कर्णो रोषात्प्रस्फुरिताधरः ।
शिखण्डिनं त्रिभिर्बाणैर्भ्रुवोर्मध्येऽभ्यताडयत् २१
धारयंस्तु स तान्बाणाञ्शिखण्डी बह्वशोभत ।
राजतः पर्वतो यद्वत्त्रिभिः शृङ्गैः समन्वितः ॥ २२
सोऽतिविद्धो महेष्वासः सूतपुत्रेण संयुगे ।
कर्णं विव्याध समरे नवत्या निशितैः शरैः ॥ २३
तस्य कर्णो हयान्हत्वा सारथिं च त्रिभिः शरैः ।
उन्ममाथ ध्वजं चास्य क्षुरप्रेण महारथः ॥ २४
हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
शक्तिं चिक्षेप कर्णाय संक्रुद्धः शत्रुतापनः ॥ २५
तां छित्त्वा समरे कर्णस्त्रिभिर्भारत सायकैः ।
शिखण्डिनमथाविध्यन्नवभिर्निशितैः शरैः ॥ २६
कर्णचापच्युतान्बाणान्वर्जयंस्तु नरोत्तमः ।
अपयातस्ततस्तूर्णं शिखण्डी भृशविक्षतः ॥ २७
ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत् ।
तूलराशिं समासाद्य यथा वायुर्महाबलः ॥ २८
धृष्टद्युम्नो महाराज तव पुत्रेण पीडितः ।
दुःशासनं त्रिभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ २९
तस्य दुःशासनो बाहुं सव्यं विव्याध मारिष ।
स तेन रुक्मपुङ्खेन भल्लेन नतपर्वणा ॥ ३०
धृष्टद्युम्नस्तु निर्विद्धः शरं घोरममर्षणः ।
दुःशासनाय संक्रुद्धः प्रेषयामास भारत ॥ ३१
आपतन्तं महावेगं धृष्टद्युम्नसमीरितम् ।
शरैश्चिच्छेद पुत्रस्ते त्रिभिरेव विशांपते ॥ ३२
अथापरैः षोडशभिर्भल्लैः कनकभूषणैः ।
धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्पयत् ॥ ३३
ततः स पार्षतः क्रुद्धो धनुश्चिच्छेद मारिष ।
क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ॥ ३४
अथान्यद्धनुरादाय पुत्रस्ते प्रहसन्निव ।
धृष्टद्युम्नं शरव्रातैः समन्तात्पर्यवारयत् ॥ ३५
तव पुत्रस्य ते दृष्ट्वा विक्रमं सुमहात्मनः ।
व्यस्मयन्त रणे योधाः सिद्धाश्चाप्सरसस्तथा ॥ ३६
धृष्टद्युम्नं तु पश्याम घटमानं महाबलम् ।
दुःशासनेन संरुद्धं सिंहेनेव महागजम् ॥ ३७

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
ततः सरथनागाश्वाः पाञ्चालाः पाण्डुसृञ्जयाः ।
सेनापतिं परीप्सन्तो रुरुधुस्तनयं तव ॥ १
ततः प्रववृते युद्धं तावकानां परैः सह ।
घोरं प्राणभृतां काले भीमरूपं परंतप ॥ २
नकुलो वृषसेनं तु विद्ध्वा पञ्चभिरायसैः ।
पितुः समीपे तिष्ठन्तं त्रिभिरन्यैरविध्यत ॥ ३
नकुलं तु ततः शूरो वृषसेनो हसन्निव ।
नाराचेन सुतीक्ष्णेन विव्याध हृदये भृशम् ॥ ४
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शन ।
शत्रुं विव्याध विंशत्या सूतं चैवास्य सप्तभिः ॥ ५
ततः शरसहस्रेण तावुभौ पुरुषर्षभौ ।
अन्योन्यमाच्छादयतां तवाभज्यत वाहिनी ॥ ६
स दृष्ट्वा प्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः ।
निवारयामास बलादनुपत्य विशांपते ॥ ७
'एतस्मिन्नन्तरे युद्धं कष्टमासीद्विशांपते ।'
निवृत्ते तु ततः सैन्ये नकुलः कौरवान्ययौ ॥ ८
कर्णपुत्रस्तु समरे हित्वा नकुलमेव तु ।
जुगोप चक्रं त्वरितो राधेयस्यैव मारिष ॥ ९
उलूकस्तु रणे क्रुद्धः सहदेवेन मारिष ।
'निवारितः शरशतैः क्रुद्धेन रणमूर्धनि ॥ १०
तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् ।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ११
उलूकस्तु ततो यानादवप्लुत्य विशांपते ।
त्रिगर्तानां बलं तूर्णं जगाम पितृनन्दनः ॥ १२
सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः ।
ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ॥ १३
सौबलस्तस्य समरे क्रुद्धो राजन्प्रतापवान् ।
विदार्य कवचं भूयो ध्वजं चिच्छेद काञ्चनम् १४
तथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत ।
सारथिं च महाराज त्रिभिरेव समार्पयत् ॥ १५
अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम् ।
ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ॥ १६
आरुरोह रथं तूर्णमुलूकस्य महात्मनः ।
अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः ॥ १७
सात्यकिस्तु रणे राजंस्तावकानामनीकिनीम् ।
अभिदुद्राव वेगेन ततोऽनीकमभज्यत ॥ १८
शैनेयशरसंछन्नं तव सैन्यं विशांपते ।
भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ॥ १९
भीमसेनं तव सुतो वारयामास संयुगे ॥ २०
तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम् ।
चक्रे लोकेश्वरं तत्र तेनातुष्यन्त वै जनाः ॥ २१
ततोऽपायान्नृपस्तस्माद्भीमसेनभयार्दितः ।
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् ।
तत्र नादो महानासीद्भीमसेनं जिघांसताम् ॥ २२
युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छिदे ।
अथान्यद्धनुरादाय कृपः शस्त्रभृतां वरः ।
युधामन्योर्ध्वजं सूतं छत्रं चापातयत्क्षितौ ॥ २३
ततोऽपायाद्रथेनैव युधामन्युर्महारथः ॥ २४
उत्तमौजाश्च हार्दिक्यं भीमं भीमपराक्रमम् ।
छादयामास सहसा मेघो वृष्ट्येव पर्वतम् ॥ २५
तद्युद्धमासीत्सुमहद्घोररूपं परंतप ।
तादृशं न मया युद्धं दृष्टपूर्वं विशांपते ॥ २६
कृतवर्मा ततो राजन्नुत्तमौजसमाहवे ।
हृदि विव्याध सहसा रथोपस्थ उपाविशत् ॥ २७
सारथिस्तमपोवाह रथेन रथिनां वरम् ।
ततस्तु सात्वतो राजन्पाण्डुसैन्यमभिद्रवत् ॥ २८
[दुःशासनः सौबलश्च गजानीकेन पाण्डवम् ।
महता परिवार्यैव क्षुद्रकैरभ्यताडयत् ॥ २९
ततो भीमः शरशतैर्दुर्योधनममर्षणम् ।
विमुखीकृत्य तरसा गजानीकमुपाद्रवत् ॥ ३०
तमापतन्तं सहसा गजानीकं वृकोदरः ।
दृष्ट्वैव सुभृशं क्रुद्धो दिव्यमस्त्रमुदैरयत् ॥ ३१
गजैर्गजानभ्यहनद्वज्रेणेन्द्र इवासुरान् ॥ ३२

ततोऽन्तरिक्षं बाणौघैः शलभैरिव पादपम् ।
छादयामास समरे गजान्निघ्नन्वृकोदरः ॥ ३३
ततः कुञ्जरयूथानि समेतानि सहस्रशः ।
व्यधमत्तरसा भीमो मेघसङ्घानिवानिलः ॥ ३४
सुवर्णजालापिहिता मणिजालैश्च कुञ्जराः ।
रेजुरभ्यधिकं संख्ये विद्युत्वन्त इवाम्बुदाः॥ ३५
ते वध्यमाना भीमेन गजा राजन्विदुद्रुवुः ।
केचिद्विभिन्नहृदयाः कुञ्जरा न्यपतन्भुवि ॥ ३६
पतितैर्निपतद्भिश्च गजैर्हेमविभूषितैः ।
अशोभत मही तत्र विशीर्णैरिव पर्वतैः ॥ ३७
दीप्ताभै रत्नवद्भिश्च पतितैर्गजयोधिभिः ।
रराज भूमिः पतितैः क्षीणपुण्यैरिव ग्रहैः ॥ ३
ततो भिन्नकटा नागा भिन्नकुम्भकरास्तथा ।
दुद्रुवुः शतशः संख्ये भीमसेनशराहताः ॥ ३
केचिद्वमन्तो रुधिरं भयार्ताः पर्वतोपमाः ।
व्यद्रवञ्छरविद्धाङ्गा धातुचित्रा इवाचलाः ॥४
महाभुजगसङ्काशौ चन्दनागुरुरूषितौ ।
अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ ॥ ४
तस्य ज्यातलनिर्घोषं श्रुत्वाशनिसमस्वनम् ।
विमुञ्चन्तः शकृन्मूत्रं गजाः प्राद्रुद्रुवुर्भृशम्॥ ४
भीमसेनस्य तत्कर्म राजन्नेकस्य धीमतः ।
निघ्नतः सर्वभूतानि रुद्रस्येव च निर्बभौ ॥] ४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
ततः श्वेताश्वसंयुक्ते नारायणसमाहिते ।
तिष्ठन्रथवरे श्रीमानर्जुनः समपद्यत ॥ १
तद्बलं नृपतिश्रेष्ठ तावकं विजयो रणे ।
व्यक्षोभयदुदीर्णाश्वं महोदधिमिवानिलः ॥ २
दुर्योधनस्तव सुतः प्रमत्ते श्वेतवाहने ।
अभ्येत्य सहसा क्रुद्धः सैन्यार्धेनाभिसंवृतः ॥ ३
पर्यवारयदायान्तं युधिष्ठिरममर्षणम् ।
क्षुरप्राणां त्रिसप्तत्या ततोऽविध्यत पाण्डवम्॥ ४
अक्रुध्यत भृशं तत्र कुन्तीपुत्रो युधिष्ठिरः ।
स भल्लांस्त्रिंशतस्तूर्णं तव पुत्रे न्यवेशयत् ॥ ५
ततो धावन्त कौरव्या जिघृक्षन्तो युधिष्ठिरम्॥ ६
दुष्टभावान्पराञ्ज्ञात्वा समवेता महारथाः ।
आजग्मुस्तं परीप्सन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥ ७
'सञ्जय उवाच ।
युधिष्ठिरश्चित्रसेनं शरवर्षैरवाकिरत् ।
चित्रसेनस्तु कौन्तेयं संक्रुद्धः समवारयत् ॥ ८
मुहूर्ताद्विमुखीकृत्य चित्रसेनं स धर्मराट् ।
तावकं सैन्यमभ्यघ्नत्समन्तान्निशितैः शरैः ॥ ९
तावका हि महाबाहो दुर्योधनपुरोगमाः ।
युधिष्ठिरं जिघृक्षन्तः सर्वसैन्यं समाक्षिपन् ॥
दृष्टप्रभावांस्तान्मत्वा समवेतान्महारथान् ।
आजग्मुः संपरीप्सन्तः पाण्डवेयं युधिष्ठिरम्॥'
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
अक्षौहिण्या परिवृतास्तेऽभ्यधावन्युधिष्ठिरम्॥
भीमसेनश्च नाराचैर्मृद्नंस्तव महारथान् ।
अभ्यधावदभिप्रेप्सू राजानं शत्रुभिर्वृतम् ॥
तांस्तु सर्वान्महेष्वासान्कर्णो वैकर्तनो वृषा ।
शरवर्षेण महता प्रत्यवारयदागतान् ॥
शरौघान्विसृजन्तस्ते प्रेरयन्तश्च कुञ्जरान् ।
न शेकुर्यत्नवन्तोऽपि राधेयं प्रतिवीक्षितुम् ॥
तांश्च सर्वान्महेष्वासान्सर्वशस्त्रविशारदान् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥
दुर्योधनं च विंशत्या नाराचानां कृती बली
अविध्यत्तूर्णमभ्येत्य सहदेवो महीपतिम् ॥
स विद्धः सहदेवेन रराज बलसंनिधौ ।
प्रभिन्न इव मातङ्गो रुधिरेण परिप्लुतः ॥
दृष्ट्वा तव सुतं तत्र गाढविद्धं सुतेजनैः ।

अभ्यधावद्दृढं क्रुद्धो राधेयो रथिनां वरः ॥ १९
दुर्योधनं तथा दृष्ट्वा शीघ्रमस्त्रमुदीर्य सः ।
अवधीत्पाण्डवानीकं पाञ्चालांश्चैव मारिष ॥ २०
ततो यौधिष्ठिरं सैन्यं वध्यमानं महात्मना ।
सहसा प्राद्रवद्राजन्सूतपुत्रशरार्दितम् ॥ २१
विविधा विशिखास्तत्र संपतन्ति परस्परम् ।
भल्लाः पुङ्खसमाश्लिष्टाः सूतपुत्रधनुश्च्युताः ॥ २२
अन्तरिक्षे शरौघाणां पततां च परस्परम् ।
संघर्षेण महाराज पावकः समजायत ॥ २३
ततो दशदिशः कर्णः शलभैरिव यायिभिः ।
अभ्यघ्नंस्तरसा राजञ्शरैः परशरीरगैः ॥ २४
रक्तचन्दनसंदिग्धौ मणिहेमविभूषितौ ।
बाहू व्यत्यक्षिपत्कर्णः परमास्त्रं विदर्शयन् ॥ २५
ततः सर्वा दिशो राजन्सायकैर्विप्रमोहयन् ।
अपीडयद्भृशं कर्णो धर्मराजं युधिष्ठिरम् ॥ २६
ततः क्रुद्धो महाराज धर्मपुत्रो युधिष्ठिरः ।
निशितैरिषुभिः कर्णं पञ्चाशद्भिः समार्पयत् ॥ २७
[बाणान्धकारमभवत्तद्युद्धं घोरदर्शनम् ।
हाहाकारो महानासीत्तावकानां विशांपते ॥ २८
वध्यमाने तदा सैन्ये धर्मपुत्रेण मारिष ।
सायकैर्विविधैस्तीक्ष्णैः कङ्कपत्रैः शिलाशितैः ।
भल्लैरनेकैर्विविधैः शक्त्यृष्टिमुसलैरपि ॥ २९
यत्र यत्र स धर्मात्मा दुष्टां दृष्टिं व्यसर्जयत् ।
तत्र तत्र व्यशीर्यन्त तावका भरतर्षभ ॥ ३०
कर्णोऽपि भृशसंक्रुद्धो धर्मराजं युधिष्ठिरम् ।
नाराचैरर्धचन्द्रैश्च वत्सदन्तैश्च संयुगे ॥ ३१
अमर्षी क्रोधनश्चैव रोषप्रस्फुरिताननः ।
सायकैरप्रमेयात्मा युधिष्ठिरमभिद्रवत् ॥ ३२
युधिष्ठिरश्चापि स तं स्वर्णपुङ्खैः शितैः शरैः ॥] ३३
प्रहसन्निव तं कर्णः कङ्कपत्रैः शिलाशितैः ।
उरस्यविध्यद्राजानं कुन्तीपुत्रं युधिष्ठिरम् ॥ ३४
स पीडितो भृशं तेन धर्मराजो युधिष्ठिरः ।
उपविश्य रथोपस्थे सूतं याहीत्यनोदयत् ॥ ३५
अक्रोशन्त ततः सर्वे धार्तराष्ट्राः सराजकाः ।
गृह्णीध्वमिति राजानमभ्यधावन्त सर्वशः ॥ ३६
ततः शताः सप्तदश केकयानां प्रहारिणाम् ।
पञ्चालैः सहिता राजन्धार्तराष्ट्रान्न्यवारयन् ॥ ३७
तस्मिन्सुतुमुले युद्धे वर्तमाने जनक्षये ।
दुर्योधनश्च भीमश्च समेयातां महाबलौ ॥ ३८

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

कर्णबाणपीडितस्य युधिष्ठिरस्य विश्रमाय स्वशिबिरप्रवेशः ॥ १ ॥

सञ्जय उवाच ।
कर्णोऽपि शरजालेन केकयानां महारथान् ।
व्यधमत्परमेष्वासानग्रानीके व्यवस्थितान् ॥ १
तेषां प्रयतमानानां राधेयस्य निवारणे ।
रथान्पञ्चशतान्कर्णः प्राहिणोद्यमसादनम् ॥ २
अविषह्यतमं दृष्ट्वा राधेयं युधि योधिनः ।
भीमसेनमुपागच्छन्कर्णबाणप्रपीडिताः ॥ ३
रथानीकं विदार्यैव शरै राजन्ननेकधा ।
कर्ण एकरथेनैव युधिष्ठिरमुपाद्रवत् ॥ ४
सेनानिवेशं गच्छन्तं मार्गणैर्भृशपीडितम् ।
यमयोर्मध्यगं वीरं शनैर्यान्तं विचेतसम् ॥ ५
स समासाद्य राजानं दुर्योधनहितेप्सया ।
सूतपुत्रस्त्रिभिस्तीक्ष्णैर्विव्याध परमेषुभिः ॥ ६
तथैव राजा राधेयं प्रत्यविध्यत्स्तनान्तरे ।
शरैस्त्रिभिश्च यन्तारं चतुर्भिश्चतुरो हयान् ॥ ७
चक्ररक्षौ नृपसुतौ माद्रीपुत्रौ परंतपौ ।
तावप्यधावतां कर्णं राजानं मा वधीदिति ॥ ८
तौ पृथक्शरवर्षाभ्यां राधेयं समवर्षताम् ।

नकुलः सहदेवश्च परमं यत्नमास्थितौ ॥ ९
तथैव तौ प्रत्यविध्यत्सूतपुत्रः प्रतापवान् ।
भल्लाभ्यां शितधाराभ्यां महात्मानावरिन्दमौ १०
दन्तवर्णांस्तु राधेयो निजघान मनोजवान् ।
युधिष्ठिरस्य संग्रामे कालवालान्हयोत्तमान् ॥ ११
ततोऽपरेण भल्लेन शिरस्त्राणमपातयत् ।
कौन्तेयस्य महेष्वासः प्रहसन्निव सूतजः ॥ १२
तथैव नकुलस्यापि हयान्हत्वा महारथः ।
ततोऽपरेण भल्लेन भृशं तीक्ष्णेन भारत ।
धनुश्चिच्छेद वीरस्य माद्रीपुत्रस्य धीमतः ॥ १३
तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ ।
भ्रातरावारुरुहतुः सहदेवरथं तदा ॥ १४
तौ दृष्ट्वा मातुलस्तत्र विरथौ परवीरहा ।
अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया ॥ १५
मार्गितव्यस्त्वया कर्ण कुन्तीपुत्रो धनंजयः ।
अतस्त्वं धर्मराजेन किमर्थमिह युध्यसे ॥ १६
[क्षीणशस्त्रास्त्रकवचः क्षीणबाणो विबाणधिः ।
श्रान्तसारथिवाहश्च च्छन्नोऽस्त्रैररिभिस्तथा ।
पार्थमासाद्य राधेय उपहास्यो भविष्यसि ॥] १७
तथापि कर्णः संरब्धो युधिष्ठिरमपीडयत् ।
शरैस्तीक्ष्णैर्महावीर्यैर्माद्रीपुत्रौ च पाण्डवौ ॥ १८
ततः शल्यः प्रहस्येदं कर्णं पुनरुवाच ह ।
रथस्थमतिसंरब्धं युधिष्ठिरवधे स्थितम् ॥ १९
यदर्थं धार्तराष्ट्रेण सततं मानितो भवान् ।
तं पार्थं जहि राधेय किं ते हत्वा युधिष्ठिरम् ।
'हते यस्मिन्ध्रुवं पार्थः सर्वाञ्जेष्यति नो रथान् २०
तस्मिन्हि धार्तराष्ट्रस्य निहते तु ध्रुवो जयः ।
ध्वजोऽसौ दृश्यते तस्य रोचमानोंऽशुमानिव ।
सारो ह्येष महाबाहो किं ते हत्वा युधिष्ठिरम् ॥' २१
शङ्खयोर्ध्मातयोः शब्दः सुमहानेष कृष्णयोः ।
श्रूयते चापघोषश्च प्रावृषीवाम्बुदस्य ह ॥ २२
असौ निघ्नन्रथोदारानर्जुनः शरवृष्टिभिः ।
सर्वां ग्रसति नः सेनां कर्ण पश्यैनमाहवे ॥ २
पृष्ठरक्षौ च शूरस्य युधामन्यूत्तमौजसौ ॥ २
उत्तरं चास्य वै शूरश्चक्रं रक्षति सात्यकिः ।
धृष्टद्युम्नस्तथा चास्य चक्रं रक्षति दक्षिणम् ॥ २
भीमसेनश्च वै राज्ञा धार्तराष्ट्रेण युध्यते ।
यथा न हन्यात्तं भीमः सर्वेषां नोऽद्य पश्यता
कुरु राधेय वै राजा यथा मुच्येत तत्तथा ॥
पश्यैनं भीमसेनेन ग्रस्तमाहवशोभिना ।
यदि नामाद्य मुच्येत विस्मयः सुमहान्भवेत् ॥
परित्राह्येनमभ्येत्य संशयं परमं गतम् ।
किं नु माद्रीसुतौ हत्वा राजानं वा युधिष्ठिरम्
इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते ।
दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे ॥
राजगृद्धुर्भृशं चैव शल्यवाक्यप्रचोदितः ।
अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ ॥
तव पुत्रं परित्रातुमभ्यधावत वीर्यवान् ।
मद्रराजप्रणुदितैरश्वैराकाशगैरिव ॥
गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैः सहदेवस्य मारिष ॥
[ताभ्यां स सहितस्तूर्णं व्रीडन्निव नरेश्वरः ।]
प्राप्य सेनानिवेशं स्वं मार्गणैर्भृशविक्षतः ॥
अवतीर्य रथात्तूर्णमाविशच्छयनं शुभम् ।
अपेतशल्यो राजा तु हृच्छल्येनाभिपीडितः ॥
सोऽब्रवीद्भ्रातरौ राजा माद्रीपुत्रौ महारथौ ।
गच्छन्त त्वरितौ वीरौ यत्र भीमो व्यवस्थितः ॥
'ततस्ते पाण्डवाः सर्वे समाभाष्य परस्परम् ।
अनीकं भीमसेनस्य पाण्डवावभ्यगच्छताम् ।'
जीमूत इव नर्दंस्तु युध्यते स वृकोदरः ॥
ततोऽन्यं रथमास्थाय नकुलो रथपुङ्गवः ।
सहदेवश्च तेजस्वी भ्रातरौ शत्रुकर्शनौ ॥
तुरगैरग्र्यरंहोभिर्यत्र भीमस्तरस्विनौ ।
अनीकैः सहितौ तत्र भ्रातरौ समवस्थितौ ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

पार्थेनाश्वत्थाम्नि पराजिते कर्णेन भार्गवास्त्रप्रयोगात्पाण्डवसेनापीडनम् ॥ १ ॥

सञ्जय उवाच ।
द्रौणिस्तु रथवंशेन महता परिवारितः ।
अपतत्सहसा राजन्यत्र पार्थो व्यवस्थितः ॥ १
तमापतन्तं सहसा शूरः शौरिसहायवान् ।
दधार समरे पार्थो वेलेव मकरालयम् ॥ २
ततः क्रुद्धो महाराज द्रोणपुत्रः प्रतापवान् ।
अर्जुनं वासुदेवं च च्छादयामास सायकैः ॥ ३
अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथाः ।
विस्मयं परमं गत्वा प्रैक्षन्त कुरवस्तदा ॥ ४
अर्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव ।
तदस्त्रं वारयामास ब्राह्मणो युधि भारत ॥ ५
यद्यद्धि व्याक्षिपद्युद्धे फल्गुनोऽस्त्रं जिघांसया ।
तत्तदस्त्रैर्महेष्वासो द्रोणपुत्रो जघान ह ॥ ६
अस्त्रयुद्धे महाराज वर्तमाने महाभये ।
अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकम् ॥ ७
स दिशः प्रदिशश्चैव च्छादयित्वा ह्यजिह्मगैः ।
वासुदेवं त्रिभिर्बाणैरविध्यद्दक्षिणे भुजे ॥ ८
ततोऽर्जुनो रथान्सर्वान्हत्वा तस्य पदानुगान् ।
चकार समरे भूमिं शोणितौघपरिप्लुताम् ।
सर्वलोकवहां रौद्रां परलोकवहां नदीम् ॥] ९
तथा रथिनः पेतुः पार्थचापच्युतैः शरैः ॥ १०
द्रौणेरपहतान्सङ्ख्ये ददृशुः स च तां तथा ।
प्रावर्तयन्महाघोरां नदीं परवहां तदा ॥ ११
तयोस्तु व्याकुले युद्धे द्रौणेः पार्थस्य दारुणे ।
अमर्यादं योधयन्तः पर्यधावन्त पृष्ठतः ॥ १२
रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः ।
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ॥ १३
पार्थेन समरे राजन्कृतो घोरो जनक्षयः ।
हता रथिनः पेतुः पार्थचापच्युतैः शरैः ॥] १४
हयाश्च पर्यधावन्त मुक्तयोक्त्रास्ततस्ततः ।
तद्दृष्ट्वा कर्म पार्थस्य द्रौणिराहवशोभिनः ॥ १५
अर्जुनं जयतां श्रेष्ठं त्वरितोऽभ्येत्य वीर्यवान् ।
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ॥ १६
अवाकिरत्ततो द्रौणिः समन्तान्निशितैः शरैः ।
भूयोऽर्जुनं महाराज द्रौणिरायम्य पत्रिणा ॥ १७
वक्षोदेशे भृशं पार्थं ताडयामास निर्दयम् ।
सोऽतिविद्धो रणे तेन द्रोणपुत्रेण भारत ॥ १८
गाण्डीवधन्वा प्रसभं शरवर्षैरुदारधीः ।
संछाद्य समरे द्रौणिं चिच्छेदास्य च कार्मुकम् ॥ १९
स च्छिन्नधन्वा परिघं वज्रस्पर्शसमं युधि ।
आदाय चिक्षेप तदा द्रोणपुत्रः किरीटिने ॥ २०
तमापन्ततं परिघं जाम्बूनदपरिष्कृतम् ।
चिच्छेद सहसा राजन्प्रहसन्निव पाण्डवः ॥ २१
स पपात तदा भूमौ निकृत्तः पार्थसायकैः ।
विकीर्णः पर्वतो राजन्यथा वज्रेण ताडितः ॥ २२
ततः क्रुद्धो महाराज द्रोणपुत्रो महारथः ।
ऐन्द्रेण चास्त्रवेगेन बीभत्सुं समवाकिरत् ॥ २३
तस्येन्द्रजालावततं समीक्ष्य
　पार्थो राजन्गाण्डिवमाददे सः ।
ऐन्द्रं जालं प्रत्यहरत्तरस्वी
　वरास्त्रमादाय महेन्द्रसृष्टम् ॥ २४
विदार्य तज्जालमथेन्द्रमुक्तं
　पार्थस्ततो द्रौणिरथं क्षणेन ।
प्रच्छादयामास ततोऽभ्युपेत्य
　द्रौणिस्तदा पार्थशराभिभूतः ॥ २५
विगाह्य तां पाण्डवबाणवृष्टिं
　शरैः परं नाम ततः प्रकाश्य ।
शतेन कृष्णं सहसाभ्यविध्य-
　त्त्रिभिः शतैरर्जुनं क्षुद्रकाणाम् ॥ २६
ततोऽर्जुनः सायकानां शतेन
　गुरोः सुतं मर्मसु निर्बिभेद ।

लोका इति शेषः ॥ ११ ॥

सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

अश्वांश्च सूतं च तथा धनुर्ज्या-
मवाकिरन्पश्यतां तावकानाम् ॥ २७
स विद्ध्वा मर्मसु द्रौणिं पाण्डवः परवीरहा ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ २८
स संगृह्य स्वयं वाहान्कृष्णौ प्राच्छदयच्छरैः ।
तत्राद्भुतमपश्याम द्रौणेराशु पराक्रमम् ॥ २९
संयच्छंस्तुरगान्यच्च फल्गुनं चाप्ययोधयत् ।
तदस्य समरे राजन्सर्वभूतान्यपूजयन् ॥ ३०
तेनास्य समरे योधास्तुष्टुवुः सर्व एव ते ।
यदा निजगृहे पार्थो द्रोणपुत्रेण धन्विना ॥ ३१
तदा प्रहस्य बीभत्सुर्द्रौणिपुत्रस्य संयुगे ।
क्षिप्रं रश्मीनथाश्वानां क्षुरप्रेणाच्छिदे जयः ॥ ३२
प्राद्रवंस्तुरगास्तस्य शरवेगप्रपीडिताः ।
ततोऽभून्निनदो घोरस्तत्र सैन्यस्य भारत ॥ ३३
पाण्डवास्तु जयं लब्ध्वा तव सैन्यं समाद्रवन् ।
समन्तान्निशितान्बाणान्विमुञ्चन्तो जयैषिणः ३४
तावकी चतुरङ्गापा पाण्डवैस्तु महाचमूः ।
पुनःपुनरथो वीरैः प्रभग्ना जितकाशिभिः ॥ ३५
पश्यतां ते महाराज पुत्राणां चित्रयोधिनाम् ।
शकुनेः सौबलेयस्य कर्णस्य च विशांपते ॥ ३६
वार्यमाणा महासेना पुत्रैस्तव जनेश्वर ।
न चातिष्ठत संग्रामे पीड्यमाना समन्ततः ॥ ३७
ततो योधैर्महाराज पलायद्भिः समन्ततः ।
अभवद्व्याकुलं भीतं पुत्राणां ते महद्बलम् ॥ ३८
तिष्ठतिष्ठेति सततं सूतपुत्रस्य जल्पतः ।
नावतिष्ठति सा सेना वध्यमाना महात्मभिः ॥३९
अथोत्क्रुष्टे महाराज पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रबलं दृष्ट्वा विद्रुतं वै समन्ततः ॥ ४०
ततो दुर्योधनः कर्णमब्रवीत्प्रणयादिव ।
पश्य कर्ण महासेनां पाण्डवैरर्दितां भृशम् ॥ ४१
त्वयि तिष्ठति संत्रासात्समन्तात्प्रपलायते ।
एतज्ज्ञात्वा महाबाहो कुरु प्राप्तमरिंदम ॥ ४२
सहस्राणि च योधानां त्वामेव पुरुषोत्तम ।
क्रोशन्ते समरे वीर द्राव्यमाणानि पाण्डवैः ॥ ४३

सञ्जय उवाच ।
एतच्छ्रुत्वा तु राधेयो दुर्योधनवचो महत् ।
मद्रराजमिदं वाक्यमब्रवीत्प्रहसन्निव ॥ ४
पश्य मे भुजयोर्वीर्यमस्त्राणां च जनेश्वर ।
अद्य हन्मि रणे सर्वान्पाञ्चालान्पाण्डुभिः सह ४
वाहयाश्वान्नरव्याघ्र मद्राधिप न संशयः ।
एवमुक्त्वा महाराज सूतपुत्रः प्रतापवान् ॥ ४
प्रगृह्य विजयं वीरो धनुःश्रेष्ठं पुरातनम् ।
सज्यं कृत्वा महाराज संमृज्य च पुनःपुनः ॥ ४
सन्निवार्य च तान्योधान्सत्येन शपथेन च ।
प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः ॥ ४
ततस्माद्राजन्सहस्राणि प्रयुतान्यर्बुदानि च ।
कोटिशश्च शरास्तीक्ष्णा निरगच्छन्महामृधे ॥ ४
ज्वलितैस्तैः शरैर्घोरैः कङ्कबर्हिणवाजितैः ।
संछन्ना पाण्डवी सेना न प्राज्ञायत किंचन ॥ ५
हाहाकारो महानासीत्पाण्डवानां विशांपते ।
पीडितानां बलवता भार्गवास्त्रेण संयुगे ॥ ५
निपतद्भिर्गजै राजन्नश्वैश्चापि सहस्रशः ।
रथैश्चापि नरव्याघ्र नरैश्चैव समन्ततः ॥ ५
प्राकम्पत मही राजन्निहतैस्तैः समन्ततः ।
व्याकुलं सर्वमभवत्पाण्डवानां महद्बलम् ॥ ५
कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः ।
दहञ्शत्रून्नरव्याघ्रः शुशुभे स परंतपः ॥ ५४
ते वध्यमानाः कर्णेन पाञ्चालाश्चेदिभिः सह ।
तत्र तत्र व्यमुह्यन्त वनदाहे यथा द्विपाः ॥ ५५
चुक्रुशुश्च नरव्याघ्र यथाप्राणं नरोत्तमाः ।
तेषां तु क्रोशतां दीनं भीतानां रणमूर्धनि ॥५६
धावतां च ततो राजंस्त्रस्तानां च समन्ततः ।
आर्तनादो बभूवात्र भूतानामिव संप्लवे ॥ ५७
वध्यमानांस्तु तान्दृष्ट्वा सूतपुत्रेण मारिष ॥
वित्रेसुः सर्वभूतानि तिर्यग्योनिगतान्यपि ॥ ५८
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
अर्जुनं वासुदेवं च क्रोशन्ति च मुहुर्मुहुः ।
प्रेतराजपुरे यद्वत्प्रेतराजं विचेतसः ॥ ५९
श्रुत्वा तु निनदं तेषां वध्यतां कर्णसायकैः ।

अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः ।
भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितम् ॥ ६०
पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम् ।
नैतदस्त्रं हि समरे शक्यं हन्तुं कथंचन ॥ ६१
सूतपुत्रं च संरब्धं पश्य कृष्ण महारणे ।
अन्तकप्रतिमं वीर्ये कुर्वाणं कर्म दारुणम् ॥ ६२
अभीक्ष्णं चोदयन्नश्वान्प्रेक्षते मां मुहुर्मुहुः ।
नच शक्ष्यामि कर्णस्य संयुगेऽहं पलायितुम् ॥६३
जीवन्प्राप्नोति पुरुषः सङ्ख्ये जयपराजयौ ।
मृतस्य तु हृषीकेश भङ्ग एव कुतो जयः ॥ ६४
एष कर्णो रणे भाति मध्याह्न इव भास्करः ।
निवर्तय रथं कृष्ण जीवन्भद्राणि पश्यति ॥ ६५

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

कर्णबाणव्यथापनोदनाय युधिष्ठिरं शिबिरगतं विज्ञाय शत्रुनिग्रहे भीमनियोजनपूर्वकमर्जुनेन सह श्रीकृष्णस्य तत्समीपं प्रति गमनम् ॥ १ ॥

सञ्जय उवाच ।
ततो जनार्दनः श्रुत्वा तस्य वाक्यं विशांपते ।
रथेनापययौ क्षिप्रं सङ्ग्रामादिति भारत ॥ १
प्रत्यनीकमवस्थाप्य भीमं भीमपराक्रमम् ।
अलं विषहितुं ह्येष कुरूणां संप्रपश्यताम् ॥ २
कर्णं च समरे राजन्ग्राहयिष्यञ्श्रमं प्रति ।
विश्रमार्थं च कौरव्य पार्थस्य च महात्मनः ।
अपयातो रणाद्वीरो राजानं द्रष्टुमेव च ॥ ३
अर्जुनं चाब्रवीत्कृष्णो भृशं राजा परिक्षतः ।
तमाश्वास्य कुरुश्रेष्ठ ततः कर्णं हनिष्यसि ॥ ४
ततो धनंजयः श्रुत्वा राजानं शल्यपीडितम् ।
याहियाहिति बहुशो वासुदेवमचोदयत् ।
राजानं प्रति वार्ष्णेय दूयते मे दृढं मनः ॥ ५
स चोद्यमानः पार्थेन केशिघ्नो वृष्णिनन्दनः ।
रथेनापययौ क्षिप्रं सङ्ग्रामाद्घोरदर्शनात् ॥ ६
गच्छन्नेव तु कौन्तेयो धर्मराजदिदृक्षया ।
सैन्यमालोकयामास नापश्यत्तत्र चाग्रजम् ॥ ७
युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत ।
दुःसहं वज्रिणा सङ्ख्ये पराजित्य गुरोः सुतम् ॥८
द्रौणिं पराजित्य ततोग्रधन्वा
कृत्वा महद्दुष्करं शूरकर्म ।
आलोकयामास ततः स्वसैन्यं
धनञ्जयः शत्रुभिरप्रधृष्यः ॥ ९
संयुध्यमानान्पृतनामुखस्था-
ञ्शूरः शूरान्हर्षयन्सव्यसाची ।
पूर्वापदानैः प्रथितैः प्रशंस-
न्स्थितांश्चकारात्मरथाननीके ॥ १०
अपश्यमानस्तु किरीटमाली
युधिष्ठिरं भ्रातरमाजमीढम् ।
उवाच भीमं तरसाभ्युपेत्य
राज्ञः प्रवृत्तिस्त्विह कुत्र चेति ॥ ११
भीमसेन उवाच ।
अपयात इतो राजा धर्मपुत्रो युधिष्ठिरः ।
कर्णबाणाभितप्ताङ्गो यदि जीवेत्कथंचन ॥ १२
अर्जुन उवाच ।
तस्माद्भवाञ्शीघ्रमितः प्रयातु
ज्ञातुं प्रवृत्तिं पुरुषर्षभस्य ।
नूनं स विद्धोऽतिभृशं पृषत्कैः
कर्णेन राजा शिबिरं गतोऽसौ ॥ १३
यः संप्रहारैर्युधि संप्रवृत्ते
द्रोणेन विद्धोऽतिभृशं तरस्वी ।
तस्थौ स तत्रापि जयप्रतीक्षो
द्रोणेन यावन्न हतः किलासीत् ॥ १४

---

ततोग्रधन्वा विस्तारितोग्रचापः ॥ ९ ॥

उवाच तं पप्रच्छ ॥ ११ ॥

स संशयं गमितः पाण्डवाग्र्यः
सङ्ख्येऽद्य कर्णेन महानुभावः ।
ज्ञातुं प्रयाह्याशु तमद्य भीम
स्थास्याम्यहं शत्रुगणान्निरुध्य ॥ १५

भीमसेन उवाच ।
त्वमेव जानीहि महानुभाव
राज्ञः प्रवृत्तिं भरतर्षभस्य ।
अहं हि यद्यर्जुन याम्यमित्रा
वदन्ति मां भीत इति प्रवीराः ॥ १६
ततोऽब्रवीदर्जुनो भीमसेनं
संशप्तकाः प्रत्यनीकस्थिता मे ।
एतानहत्वाद्य मया न शक्य-
मितोपयातुं रिपुसङ्घमध्यात् ॥ १७
अथाब्रवीदर्जुनं भीमसेनः
स्ववीर्यमासाद्य कुरुप्रवीर ।
संशप्तकान्प्रतियोत्स्यामि सङ्ख्ये
सर्वानहं याहि धनञ्जय त्वम् ॥ १८
तद्भीमसेनस्य वचो निशम्य
धनञ्जयो भ्रातुरमित्रमध्ये ।
द्रष्टुं कुरुश्रेष्ठमभिप्रयास्य-
न्प्रोवाच वृष्णिप्रवरं तदानीम् ॥ १९

अर्जुन उवाच ।
'राजानं प्रति वार्ष्णेय दूयते मे दृढं मनः ।'
चोदयाश्वान्हृषीकेश विहायैतद्बलार्णवम् ।
अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ॥ २०

सञ्जय उवाच ।
'तं रथं चोदयामास बीभत्सोर्वचनाद्धरिः ॥'
ततो हयान्सर्वदाशार्हमुख्यः
प्रचोदयन्भीममुवाच चेदम् ।
नैतच्चित्रं तव कर्माद्य भीम
यास्यावहे जहि पार्थारिसङ्घान् ॥
ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः ।
शीघ्राच्छीघ्रतरो राजन्वाजिभिर्गरुडोपमैः ॥
प्रत्यनीके त्ववस्थाप्य भीमसेनमरिंदमम् ।
संदिश्य चैनं राजेन्द्र युद्धं प्रति वृकोदरम् ॥
ततस्तु गत्वा पुरुषप्रवीरौ
राजानमासाद्य शयानमेकम् ।
रथादुभौ प्रत्यवरुह्य तस्मा-
द्ववन्दतुर्धर्मराजस्य पादौ ॥
'इत्येवमुपसंगृह्य उभौ तु प्राञ्जली स्थितौ ।
शस्त्रक्षतौ महाराज रुधिरेण समुक्षितौ ।
निहत्य वाहिनीं तुभ्यमपयातौ रणाजिरात् ॥'
तं दृष्ट्वा पुरुषव्याघ्रं क्षेमिणं पुरुषर्षभम् ।
मुदाभ्यनन्दतां कृष्णावश्विनाविव वासवम् ।
तावभ्यनन्दद्राजापि विवस्वानश्विनाविव ।
हते महासुरे जम्भे शक्रविष्णू यथा गुरुः ॥
मन्यमानो हतं कर्णं प्रीतः परपुरंजयः ।
'स भूत्वा पुरुषव्याघ्रो राजा तत्र युधिष्ठिरः
हर्षगद्गदया वाचा प्रीतः प्राह परंतपः ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

युधिष्ठिरेण कर्णशरविक्षतस्यात्मनो दिदृक्षया स्वशिबिरमुपागतौ कृष्णार्जुनौ दृष्ट्वा पार्थेन राधेयस्य वधभ्रमेण प्रशंसनम् ॥ १ ॥

सञ्जय उवाच ।
[अथोपयातौ पृथुलोहिताक्षौ
शराचिताङ्गौ रुधिरप्रदिग्धौ ।
समीक्ष्य सेनाग्रनरप्रवीरौ
युधिष्ठिरो वाक्यमिदं बभाषे ॥]
ततो युधिष्ठिरो दृष्ट्वा सहितौ केशवार्जुनौ ।

प्रत्यनीके शत्रुसैन्यसमीपे ॥ २४ ॥

अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

हतमार्धिरथिं मेने सङ्ख्ये गाण्डीवधन्वना ॥ २
तावभ्यनन्दत्कौन्तेयः साम्ना परमवल्गुना ।
स्मितपूर्वममित्रघ्नं पूजयन्भरतर्षभ ॥ ३
युधिष्ठिर उवाच ।
स्वागतं देवकीपुत्र स्वागतं ते धनञ्जय ।
प्रियं मे दर्शनं बाढं युवयोर्नरसिंहयोः ॥ ४
अरिष्टयोरक्षतयोः कर्णं हत्वा महारथम् ।
आशीविषसमं युद्धे सर्वशस्त्रविशारदम् ॥ ५
अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च ।
रक्षितं वृषसेनेन सुषेणेन च धन्विना ॥ ६
अनुज्ञातं महावीर्यं रामेणास्त्रे सुदुर्जयम् ।
अग्र्यं सर्वस्य लोकस्य रथिनं लोकविश्रुतम् ॥ ७
त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे ।
हन्तारं परसैन्यानाममित्रगणमर्दनम् ॥ ८
दुर्योधनहिते युक्तमस्मद्दुःखाय चोद्यतम् ।
अप्रधृष्यं महायुद्धे देवैरपि सवासवैः ॥ ९
अनलानिलयोस्तुल्यं तेजसा च बलेन च ।
पातालमिव गम्भीरं सुहृदां नन्दिवर्धनम् ॥ १०
अन्तकं मम मित्राणां हत्वा कर्णं महामृधे ।
दिष्ट्या युवामनुप्राप्तौ हत्वाऽसुरमिवामरौ ॥ ११
तेन युद्धमभीतेन मयाऽद्याप्यच्युतार्जुनौ ।
कृतं घोरं महाबाहू धृष्टद्युम्नस्य पश्यतः ।
अन्तकेनेव क्रुद्धेन प्रजाः सर्वा जिघांसता ॥ १२
तेन केतुश्च मे च्छिन्नो हतौ च पार्ष्णिसारथी ।
हतवाहः कृतश्चास्मि युयुधानस्य पश्यतः ॥ १३
धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः ।
पश्यतां द्रौपदेयानां शतद्रोश्च महात्मनः ॥ १४
एताञ्जित्वा महावीर्यः कर्णः शत्रुगणान्बहून् ।
जितवान्मां महाबाहो यतमानो महारणे ॥ १५
अनुसृत्य च मां युद्धे परुषाण्युक्तवान्बहु ।
तत्र तत्र युधां श्रेष्ठ परिभूय न संशयः ॥ १६
भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय ।
बहुनात्र किमुक्तेन हते सोढुं समुत्सहे ॥ १७
त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय ।
न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ॥ १८
तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय ।
आत्मनो मरणं जानन्वाध्रीणस इव द्विजः ॥ १९
तस्यायमगमत्कालश्चिन्तयानस्य मे चिरम् ।
कथं कर्णो मया शक्यो युद्धे क्षपयितुं भवेत् ॥ २०
जाग्रत्स्वपंश्च कौन्तेय कर्णमेव स्मराम्यहम् ।
पश्यामि तत्रतत्रैव कर्णभूतमिदं जगत् ॥ २१
यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय ।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् ॥ २२
सोऽहं तेनैव वीरेण समरेष्वपलायिना ।
सहयः सरथः पार्थ जित्वा जीवन्विसर्जितः ॥ २३
को नु मे जीवितेनार्थो राज्येनार्थो भवेत्पुनः ।
ममैवं विक्षतस्याद्य कर्णेनाहवशोभिना ॥ २४
न प्राप्तपूर्वं यद्भीष्मात्कृपाद्द्रोणाच्च संयुगे ।
तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ २५
स त्वां पृच्छामि कौन्तेय यथा न कुशलस्तथा ।
तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णो हतस्त्वया २६
शक्रतुल्यबलो युद्धे यमतुल्यः पराक्रमे ।
रामतुल्यस्तथास्त्रेषु स कथं ते निषूदितः ॥ २७
महारथसमाख्यातः सर्वयुद्धविशारदः ।
धनुर्धराणां प्रवरः सर्वेषां वै सदार्जुन ॥ २८
पूजितो धृतराष्ट्रेण सपुत्रेण विशांपते ।
त्वदर्थमेव राधेयः स कथं निहतस्त्वया ॥ २९
धार्तराष्ट्रस्य योद्धारः सर्व एव सदार्जुन ।
तव मृत्युं रणे कर्णं मन्यन्ते पुरुषर्षभ ॥ ३०
स त्वया पुरुषव्याघ्र कथं युद्धे निषूदितः ।
तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतस्त्वया ॥ ३१
सोत्सेधमस्य च शिरः पश्यतां सुहृदां हृतम् ।
त्वया पुरुषशार्दूल सिंहेनेव यथा रुरोः ॥ ३२

---

अरिष्टयोः शुभयोः ॥ ५॥ अनुज्ञातं अनुगृहीतम् ॥ ७ ॥ अनलानिलयोरिति क्रमात्तेजोबलाभ्याम् ॥१०॥ अपसव्यः कृतश्चास्मि इति ख. घ. पाठः ॥१३॥ नाहं तं सोढुमुत्सहे इति क. ङ. पाठः ॥ १७॥

कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः । स वै वाध्रीणसः प्रोक्तो याज्ञिकैः पितृकर्मणीति प्राञ्चः । वाध्रीणस इव द्विप इति झ. पाठः ॥ १९ ॥ यथा नः कुशलं तथा इति क. ङ. पाठः ॥२६॥

हतमाधिरथिं मेने सङ्ख्ये गाण्डीवधन्वना ॥ २
तावभ्यनन्दत्कौन्तेयः साम्ना परमवल्गुना ।
स्मितपूर्वममित्रघ्नं पूजयन्भरतर्षभ ॥ ३
युधिष्ठिर उवाच ।
स्वागतं देवकीपुत्र स्वागतं ते धनञ्जय ।
प्रियं मे दर्शनं बाढं युवयोर्नरसिंहयोः ॥ ४
अरिष्टयोरक्षतयोः कर्णं हत्वा महारथम् ।
आशीविषसमं युद्धे सर्वशस्त्रविशारदम् ॥ ५
अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च ।
रक्षितं वृषसेनेन सुषेणेन च धन्विना ॥ ६
अनुज्ञातं महावीर्यं रामेणास्त्रे सुदुर्जयम् ।
अग्र्यं सर्वस्य लोकस्य रथिनं लोकविश्रुतम् ॥ ७
त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे ।
हन्तारं परसैन्यानाममित्रगणमर्दनम् ॥ ८
दुर्योधनहिते युक्तमस्मद्दुःखाय चोद्यतम् ।
अप्रधृष्यं महायुद्धे देवैरपि सवासवैः ॥ ९
अनलानिलयोस्तुल्यं तेजसा च बलेन च ।
पातालमिव गम्भीरं सुहृदां नन्दिवर्धनम् ॥ १०
अन्तकं मम मित्राणां हत्वा कर्णं महामृधे ।
दिष्ट्या युवामनुप्राप्तौ हत्वाऽसुरमिवामरौ ॥ ११
तेन युद्धमभीतेन मयाऽद्याप्यच्युतार्जुनौ ।
कृतं घोरं महाबाहू धृष्टद्युम्नस्य पश्यतः ।
अन्तकेनेव क्रुद्धेन प्रजाः सर्वा जिघांसता ॥ १२
तेन केतुश्च मे च्छिन्नो हतौ च पार्ष्णिसारथी ।
हतवाहः कृतश्चास्मि युयुधानस्य पश्यतः ॥ १३
धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः ।
पश्यतां द्रौपदेयानां शतद्रोश्च महात्मनः ॥ १४
एताञ्जित्वा महावीर्यः कर्णः शत्रुगणान्बहून् ।
जितवान्मां महाबाहो यतमानो महारणे ॥ १५
अनुसृत्य च मां युद्धे परुषाण्युक्तवान्बहु ।
तत्र तत्र युधां श्रेष्ठ परिभूय न संशयः ॥ १६
भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय ।
बहुनात्र किमुक्तेन हते सोढुं समुत्सहे ॥ १७
त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय ।
न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ॥ १८
तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय ।
आत्मनो मरणं जानन्वाध्रीणस इव द्विजः ॥ १९
तस्यायमगमत्कालश्चिन्तयानस्य मे चिरम् ।
कथं कर्णो मया शक्यो युद्धे क्षपयितुं भवेत् ॥ २०
जाग्रत्स्वपंश्च कौन्तेय कर्णमेव सदाह्यहम् ।
पश्यामि तत्रतत्रैव कर्णभूतमिदं जगत् ॥ २१
यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय ।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् ॥ २२
सोऽहं तेनैव वीरेण समरेष्वपलायिना ।
सहयः सरथः पार्थ जित्वा जीवन्विसर्जितः ॥ २३
को नु मे जीवितेनार्थो राज्येनार्थो भवेत्पुनः ।
ममैवं धिक्कृतस्याद्य कर्णेनाहवशोभिना ॥ २४
न प्राप्तपूर्वं यद्भीष्मात्कृपाद्द्रोणाच्च संयुगे ।
तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ २५
स त्वां पृच्छामि कौन्तेय यथा न कुशलस्तथा ।
तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णो हतस्त्वया २६
शक्रतुल्यबलो युद्धे यमतुल्यः पराक्रमे ।
रामतुल्यस्तथास्त्रेषु स कथं ते निषूदितः ॥ २७
महारथसमाख्यातः सर्वयुद्धविशारदः ।
धनुर्धराणां प्रवरः सर्वेषां वै सदार्जुन ॥ २८
पूजितो धृतराष्ट्रेण सपुत्रेण विशांपते ।
त्वदर्थमेव राधेयः स कथं निहतस्त्वया ॥ २९
धार्तराष्ट्रस्य योद्धारः सर्वं एव सदार्जुन ।
तव मृत्युं रणे कर्णं मन्यन्ते पुरुषर्षभ ॥ ३०
स त्वया पुरुषव्याघ्र कथं युद्धे निषूदितः ।
तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतस्त्वया ॥ ३१
सोत्सेधमस्य च शिरः पश्यतां सुहृदां हृतम् ।
त्वया पुरुषशार्दूल सिंहेनेव यथा रुरोः ॥ ३२

अरिष्टयोः शुभयोः ॥ ५॥ अनुज्ञातं अनुगृहीतम् ॥ ७ ॥ अनलानिलयोरिति क्रमात्तेजोबलाभ्याम् ॥१०॥ अपसव्यः कृतश्चास्मि इति ख. घ. पाठः ॥१३॥ नाहं तं सोढुमुत्सहे इति क. ङ. पाठः ॥ १७ ॥

कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः । स वै वाध्रीणसः प्रोक्तो याज्ञिकैः पितृकर्मणीति प्राञ्चः । वाध्रीणस इव द्विप इति झ. पाठः ॥ १९ ॥ यथा नः कुशलं तथा इति क. ङ. पाठः ॥२६॥

यो नः पुरा षण्ढतिलानवोच-
त्सभामध्ये कौरवाणां समक्षम् ।
स दुर्मतिः कच्चिदुपेत्य सङ्ख्ये
त्वया हतः सूतपुत्रोऽत्यमर्षी ॥ ४९
यः प्राहिणोत्सूतपुत्रो दुरात्मा
कृष्णां जितां सौबलेहानयेति ।
स मन्दबुद्धिर्निहतः प्रसह्य
वैकर्तनस्त्वद्य कच्चिन्महात्मन् ॥ ५०
यः शस्त्रभृच्छ्रेष्ठतमं पृथिव्यां
पितामहं व्याक्षिपदल्पचेताः ।
सङ्ख्यायमानोऽर्धरथः स कच्चि-
त्त्वया हतोऽद्याधिरथिर्महात्मन् ॥ ५१
अमर्षजं निकृतिसमीरणेरितं
हृदि स्थितं ज्वलनमिमं सदा मम ।
हतो मया सोऽद्य समेत्य कर्ण
इति ब्रुवन्प्रशमयसेऽद्य फल्गुन ॥ ५२

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

अर्जुनेन स्वयुद्धानुवादपूर्वकं युधिष्ठिरंप्रति कर्णवधप्रतिज्ञानम् ॥ १ ॥

सञ्जय उवाच ।
तद्धर्मशीलस्य वचो निशम्य
राज्ञः क्रुद्धस्यातिरथो महात्मा ।
उवाच दुर्मर्षमदीनसत्त्वो
युधिष्ठिरं जिष्णुरनन्तवीर्यः ॥ १
द्रोणं हतं पार्थ कर्णो विदित्वा
भिन्नां नावमिवात्यगाधे कुरूणाम् ।
संमुह्यमानान्धार्तराष्ट्रान्विदित्वा
निरुत्साहांश्च विजये परेषाम् ॥ २
सोदर्यवत्त्वरितोऽमितौजा
उत्तारयिष्यन्धृतराष्ट्रस्य पुत्रान् ।
रणे रथेनाधिरथिर्महात्मा
ततो हि मां त्वरितः सोऽभ्यधावत् ॥ ३
संशप्तकैर्युध्यमानस्य मेऽद्य
सेनाग्रयायी कुरुसैन्यस्य राजन् ।
आशीविषाभान्विकिरञ्शरौघा-
न्द्रौणिः पुरस्तात्सहसाध्यतिष्ठत् ॥ ४
स मे दृष्ट्वा शूरतमो ध्वजाग्रं
समादिशद्रथसङ्घाननेकान् ।
तेषामहं पञ्चशतं निहत्य
आसाद्यं द्रोणपुत्रं नदन्तम् ॥ ५
स द्रोणपुत्रः सदृशं महात्मा
मामभ्यरौत्सीत्तदनीकमध्ये ।
किरञ्शरौघान्बहुरूपान्विचित्रा-
न्स्वातीगतः शुक्र इवातिवर्षन् ॥ ६
स मे शरान्सर्वतः कङ्कपत्रा-
नवासृजद्वै पृथिवीप्रकाशान् ।
निवार्य तूर्णं परमाजिमध्ये
ततोऽपि मां बाणगणैः समार्पयत् ॥ ७
आकर्षणं वापि विकृष्य मुक्तं
न दृश्यते तस्य महारथस्य ।
न सन्दधानः कुत आददानो
न व्याक्षिपन्न विकर्षन्विमुञ्चन् ॥ ८
सव्येन वा यदि वा दक्षिणेन
न ज्ञायते कतरेणास्यतीति ।
आचार्यवत्समरे पर्यवर्त-
न्महच्चित्रं दर्शयन्सर्वतः स ॥ ९
दृष्टीविषं चासुहरं परेषां
सर्वा दिशः पूरयानं शरौघैः ।
अलातचक्रप्रतिमं महात्मनः
सदा नतं कार्मुकं ब्रह्मबन्धोः ॥ १०
ततोऽपरान्बाणगणाननेका-
नाकर्णपूर्णायतविप्रमुक्तान् ।

ससर्ज शीघ्रास्त्रबलेन वीर-
स्तोयं यथा प्रावृषि कालमेघः ॥ ११
आविध्यन्मां पञ्चभिर्द्रोणपुत्रः
शितैः शरैः पञ्चभिर्वासुदेवम् ।
अभ्यघ्नं बाणैस्तमहं सुधारै-
र्निमेषमात्रेण सुवर्णपुङ्खैः ॥ १२
स निर्विद्धो विरथो द्रोणपुत्रो
रथानीकं चाधिरथेर्विवेश ।
मयाभिभूतान्खरथप्रवर्हा-
नस्त्रं च पश्यन्रुधिरप्रदिग्धम् ॥ १३
ततोऽभिभूतं युधि वीक्ष्य सैन्यं
विध्वस्तयोधं द्रुतनागयूथम् ।
पञ्चाशता रथमुख्यैः समेतः
कर्णस्त्वरन्नभ्यपतत्प्रमाथी ॥ १४
तान्सूदयित्वाऽहमपास्य कर्णं
द्रष्टुं भवन्तं त्वरयोपयातः ।
सर्वे पाञ्चाला ह्युद्विजन्ते स्म कर्णं
दृष्ट्वा गावः केसरिणं यथैव ॥ १५
मृत्योरास्यं व्यात्तमिवाभिपद्य
प्रभद्रकाः कर्णमासाद्य सर्वे ।
यास्यामि तांस्तारयिष्यन्बलौघा-
द्दिष्ट्या भवान्स्वस्तिमान्पार्थ दृष्टः ॥ १६
हनिष्येऽहं भारत सूतपुत्र-
मस्मिन्सङ्ग्रामे यदि दृश्यतेऽद्य ।
आयाहि पश्याद्य युयुत्समानौ
मां सूतपुत्रं च धृतौ रणाय ॥ १
महाझषस्येव मुखं प्रपन्नाः
प्रभद्रकाः कर्णमुखं प्रपन्नाः ।
षट्साहस्रा भारत राजपुत्राः
स्वर्गाय लोकाय रणे निमग्नाः ॥ १
तानद्य यास्यामि रणाद्विमोक्तुं
सर्वात्मना सूतपुत्रं च हन्तुम् ॥ १
अथ प्रवीरेण महानुभाव
द्विषत्सैन्यं निर्दहन्विस्तरेण ।
समेत्याहं सूतपुत्रेण सङ्ख्ये
वज्रीव वृत्रेण नरेन्द्रमुख्य ॥ २
एवं गते किंच मयाऽद्य शक्यं
कार्यं कर्तुं निग्रहे सूतजस्य ।
तथैव राज्ञश्च सुयोधनस्य
ये चापि मां योद्धुकामाः समेताः ॥ २
कर्णं न चेदद्य निहन्मि राज-
न्सबान्धवं युध्यमानं प्रसह्य ।
प्रतिश्रुत्याऽकुर्वतां या गतिर्वै
कष्टां यायां तामहं राजसिंह ॥ २
आमन्त्रये त्वां ब्रूहि रणे जयं मे
पुरा भीमं धार्तराष्ट्रा ग्रसन्ति ।
सौतिं हनिष्यामि नरेन्द्रसिंह
सैन्यं तथा शत्रुगणांश्च सर्वान् ॥ २

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे सप्ततितमोऽध्यायः ॥ ७० ॥

---

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

कर्णस्यामारणज्ञानाद्रुष्टेन युधिष्ठिरेण अर्जुनंप्रति गर्हणपूर्वकं कृष्णकरे गाण्डीवदानचोदना ॥ १ ॥

सञ्जय उवाच ।
वैकर्तनं कुशलिनं निशम्य
क्रुद्धः पार्थः फल्गुनस्यामितौजाः ।
धनञ्जयं वाक्यमुवाच राजा
युधिष्ठिरः कर्णशराभितप्तः ॥ १
इमां च वसतिं हित्वा भयात्कर्णेन फल्गुन ।
अहं च भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ॥
वासुदेवेन सहिता वयं कर्णेन निर्जिताः ।
पुनरेव वनं गत्वा तपश्चर्यां च कुर्महे ।
अथवा धार्तराष्ट्राणां परिचर्यां चरामहे ॥ ३
इत्येवमुक्त्वा बीभत्सुं रोषात्संरक्तलोचनः ।
अब्रवीत्पुनरेवात्र धर्मराजो युधिष्ठिरः ॥ १

इदं यदि द्वैतवने तु सूक्तं
कर्ण नियोद्धुं न सहे नृपेति ।
वयं ततः प्राप्तकालं यथाव-
त्कृत्वाऽभ्युपेक्षाम तथैव राज्यम् ॥ ५
मयि प्रतिश्रुत्य वधं हि तस्य
बलस्य चाधस्य तथैव युद्धे ।
आनीय मां शत्रुमध्ये स कस्मा-
त्समुन्नाम्य स्थण्डिले प्रत्यपिंष्ठाः ॥ ६
अन्वास्य सत्येन यदात्थ पार्थ
सत्यं शपन्वासुदेवेन सार्धम् ।
तन्नः सत्यमफलं ह्यकार्षीः
फलस्य काले चाच्छिन्नः पुष्पवृक्षम् ॥ ७
प्रच्छादितस्त्वं बालिश दुर्यशोभि-
रनर्थवाक्योऽस्यर्जुन नैव साधुः ।
त्यक्त्वा भीमं सर्वभीमेषु भीमं
संयोजितस्त्वं सूतपुत्रं निहन्तुम् ॥ ८
यत्तद्वृथा वागुवाचान्तरिक्षे
सप्ताह्नि जाते त्वयि मन्दबुद्धौ ।
अपापीयान्वासवात्कुन्तिजातो
बहून्संग्रामानयमेव जेता ॥ ९
अयं जेता पाण्डवो देवसङ्घान्
सर्वाणि भूतान्यपि चोत्तमौजाः ।
अयं जेता मद्रकलिङ्गजाता-
न्दैत्यांश्च रक्षांसि समागतानि ॥ १०
भूमिं च सर्वां निखिलेन जेता
कुरूंश्च जेता स्वगणांश्च जेता ।
अस्मात्परो नो भविता धनुर्धरो
नैष्यन्न भूतः कश्चिदेनं विजेता ॥ ११
इच्छन्नयं सर्वभूतानि कुर्या-
द्वशी वशे सर्वसमाप्तविद्यः ।
कान्त्या शशाङ्कस्य जवेन वायोः
स्थैर्येण मेरोः क्षमया पृथिव्याः ॥ १२
अग्नेश्च तापे धनदस्य लक्ष्म्या
शौर्येण शक्रस्य जयेन विष्णोः ।
तुल्यो महात्मा तव कुन्ति पुत्रो
जातोऽदितेर्विष्णुरिवामितौजाः ॥ १३
स्वेषां जयाय द्विषतां वधाय
जातो महात्मा तव नन्दिकर्ता ।
इत्यन्तरिक्षे शतशृङ्गमूर्ध्नि
तपस्विनां शृण्वतां वागुवाच ॥ १४
एवंविधस्त्वं न च भूतस्तथाद्य
देवाश्च नूनमनृतं वदन्ति ॥ १५
तथा परेषामृषिसत्तमानां
श्रुत्वा गिरः पूजयतां सदा त्वाम् ।
न सन्नतिं यामि सुयोधनस्य
न त्वां जानाम्याधिरथेर्भयार्तम् ॥ १६
त्वष्ट्रा कृतं वाहमकूजनाक्षं
शुभं समास्थाय कपिध्वजं तम् ।
खड्गं गृहीत्वा हेमचित्रावनद्धं
धनुर्वरं गाण्डिवं तालमात्रम् ।
त्वं वासुदेवेनोह्यमानः कथं नु
कर्णाद्भीतो व्यपयातोऽसि पार्थ ॥ १७
पूर्वं यदुक्तं हि सुयोधनेन
न फल्गुनः प्रमुखे स्थास्यतीति ।
कर्णस्य युद्धे हि महाबलस्य
मौर्ख्यात्तु तन्नावबुद्धं मयाऽऽसीत् ॥ १८
तेनाद्य तप्स्ये भृशमप्रमेयं
यन्मित्रवर्गो नरकं प्रविष्टः ।
तदैव वाच्योऽस्मि ननु त्वयाऽहं
न योत्स्येऽहं सूतपुत्रं कथंचित् ॥ १९
ततो नाहं सृञ्जयान्केकयांश्च
समानयेयं सुहृदो रणाय ॥ २०
एवं गते किं च मयाऽद्य शक्यं
कार्यं कर्तुं निग्रहे सूतजस्य ।
तथैव राज्ञश्च सुयोधनस्य
ये वापि मां योद्धुकामाः समेताः ॥ २१
धिगस्तु मज्जीवितमद्य कृष्ण
योऽहं वशं सूतपुत्रस्य यातः ।

मध्ये कुरूणां ससुयोधनानां
ये चाप्यन्ये योद्धुकामाः समेताः ॥ २२
एकः स मे भीमसेनोऽद्य नाथो
येनाभिपन्नोऽस्मि रणे महाभये।
विमोच्य मां चापि रुषान्वितस्ततः
शरेण तीक्ष्णेन बिभेद कर्णम् ॥ २३
त्यक्त्वा प्राणान्समरे भीमसेन-
श्चक्रे युद्धं कुरुमुख्यैः समेतैः।
गदाग्रहस्तो रुधिरोक्षिताङ्ग-
श्चरन्रणे काल इवान्तकाले ॥ २४
असौ हि भीमस्य महानिनादो
मुहुर्मुहुः श्रूयते धार्तराष्ट्रैः।
यदि स्म जीवेत्समरे निहन्ता
महारथानां प्रवरो नरोत्तमः ॥ २५
तवाभिमन्युस्तनयोऽद्य पार्थ
न चास्मि गन्ता समरे पराभवम्।
अथापि जीवेत्समरे घटोत्कच-
स्तथाऽपि नाहं समरे पराङ्मुखः ॥ २६
भीमस्य पुत्रः समराग्रयायी
महास्त्रविच्चापि तवानुरूपः।
यं तं समासाद्य रिपोर्बलं नो
निमीलिताक्षं भयविप्लुतं भवेत् ॥ २७
चकार योऽसौ निशि युद्धमेक-
स्त्यक्त्वा रणं यस्य भयाद्द्रवन्ते ॥ २८
स चेत्समासाद्य महानुभावः
कर्णं रणे बाणगणैः प्रमोह्य।
धैर्ये स्थितेनापि च सूतजेन
शक्त्या हतो वासवदत्तया तया ॥ २९
ममैव भाग्यानि पुरा कृतानि
पापानि नूनं फलवन्ति युद्धे।
तृणं च कृत्वा समरे भवन्तं
ततोऽहमेवं निकृतो दुरात्मना।
वैकर्तनेनैव तथा कृतोऽहं
यथा ह्यशक्तः क्रियते त्वबान्धवः ॥ ३०
आपद्गतं यश्च नरो विमोक्षये-
त्स बान्धवः स्नेहयुतः सुहृच्च।
एवं पुराणा ऋषयो वदन्ति
धर्मः सदा सद्भिरनुष्ठितश्च ॥ ३१
खड्गं बिभ्रज्जातरूपत्सरुं च
धनुर्वेदं गाण्डिवं तालमात्रम्।
स केशवेनोह्यमानः कथं नु
कर्णात्पार्थस्त्वमपेतुं समैषीः ॥ ३२
स गाण्डीवं केशवाय प्रदाय
यन्ता भवेस्त्वं यदि केशवस्य।
ततस्तरेत्केशवः कर्णमुग्रं
मरुत्सखो वृत्रमिवात्तवज्रः ॥ ३३
मासेऽपतिष्यो यदि पञ्चमे त्वं
न वा गर्भो यद्यभवः पृथायाः।
मत्तः श्रेयान्राजपुत्रोऽभविष्य-
न्न ते यशः फल्गुन इत्यपेयात् ॥ ३४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

युधिष्ठिरवधोद्यतमर्जुनंप्रति कृष्णेन तत्कारणप्रश्ने तेन तन्निवेदनम् ॥ १ ॥ कृष्णेन वधप्रतिनिधित्वेन युधिष्ठिराधिक्षेप-विधानम् ॥ २ ॥

सञ्जय उवाच।
युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः।
असिं जग्राह संक्रुद्धो जिघांसुर्भरतर्षभम् ॥ १
तस्य कोपं समाज्ञाय चित्तज्ञः केशवस्तदा।
उवाच किमिदं खड्गं गृह्णास्यर्जुन शंस मे ॥ २
नेह पश्यामि योद्धव्यं त्वया किंचिद्धनञ्जय।

नेहागता धार्तराष्ट्राः सर्वे भीमेन वारिताः ॥ ३
उपागतोऽसि कौन्तेय राजा द्रष्टव्य इत्यसौ ।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ ४
तं दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम् ।
हर्षकाले च संप्राप्ते कस्मात्त्वां मन्युराविशत् ॥ ५
न तं पश्यामि कौन्तेय यस्ते वध्यो भवेदिह ।
प्रहर्तुमिच्छसे कस्मात्किं वा ते चित्तविभ्रमः ॥६
कस्माद्भवान्महाखड्गं परिगृह्णात्यकारणात् । ७
तत्त्वां पृच्छामि कौन्तेय किमिदं ते चिकीर्षितम् ।
परामृशसि यत्क्रुद्धः खड्गमद्भुतविक्रम ॥ ८
एवमुक्तः कटाक्षेण प्रेक्षमाणो युधिष्ठिरम् ।
अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् ॥ ९
अन्यस्मै देहि गाण्डीवमिति मां यः प्रचोदयेत् ।
भिन्द्यामहं तस्य शिर इत्युपांशु व्रतं मम ।
युधिष्ठिरेण तेनाहमुक्तश्चास्मि जनार्दन ॥ १०
यदुक्तोऽहमदीनार्थ राज्ञाऽनेन यशस्विना ।
समक्षं तव गोविन्द न तत्क्षन्तुमिहोत्सहे ॥ ११
तस्मादेनं वधिष्यामि राजानं धर्मचारिणम् ।
प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तमम् ॥ १२
एतदर्थं मया खड्गो गृहीतो यदुनन्दन ।
सोऽहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः ।
विशोको विज्वरश्चापि भविष्यामि जनार्दन ॥१३
किं वा त्वं मन्यसे प्राप्तमस्मिन्कार्ये उपस्थिते ।
त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम् ॥ १४
'जातस्त्वत्तो हि धर्मश्चाधर्मश्चेति परा श्रुतिः ।'
तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान् १५
सञ्जय उवाच ।
धिग्धिगित्येव गोविन्दः पार्थमुक्त्वाब्रवीत्पुनः१६
कृष्ण उवाच ।
इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया ।
अकाले पुरुषव्याघ्र संरम्भं यद्भवानगात् ॥ १७
न हि धर्मविभागज्ञैरेवं कार्यं धनञ्जय ।
यथा त्वं पाण्डवाद्येह धर्मभीरुरपण्डितः ॥ १८
योऽकार्याणां क्रियाणां च संयोगं नावबुध्यते ।
कार्याणामक्रियायाश्च स पार्थ पुरुषाधमः ॥ १९
अनुसृत्य तु ये धर्मं कवयः समुपस्थिताः ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ २०
अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये ।
एवं स मुह्यत्यवशो यथा त्वं पार्थ मुह्यसि ॥ २१
न हि कार्यमकार्यं वा सुखं ज्ञातुं कथंचन ।
श्रुतेन ज्ञायते सर्वं तच्च त्वं नावबुध्यसे ॥ २२
अविज्ञानादिह भवान्सत्यं रक्षति धर्मवित् ।
प्राणिनां त्वं वधं पार्थ धार्मिको नावबुध्यसे ॥२३
प्राणिनां हि वधात्तात वृथा धर्मो मतो मम ।
अनृतं तु भवेद्वाच्यं न तु हिंसा कदाचन ॥ २४
स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम् ।
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥ २५
अयुध्यमानस्य गुरोस्तथाऽशत्रोश्च मानद ।
पराङ्मुखस्य द्रवतः शरणं चापि गच्छतः ॥ २६
कृताञ्जलेः प्रपन्नस्य प्रमत्तस्य तथैव च ।
न वधः पूज्यते सद्भिस्तच्च सर्वं गुरौ तव ॥ २७
त्वया चैतद्व्रतं पार्थ बालेनेव कृतं पुरा ।
तस्मादधर्मसंयुक्तं मौर्ख्यादेव व्यवस्यसि ॥ २८
स्वगुरुं पार्थ कस्मात्त्वं हन्तुकामोऽभिधावसि ।
असंप्रधार्य धर्माणां गतिं सूक्ष्मां दुरत्ययाम् ॥२९
इदं धर्मरहस्यं च तव वक्ष्यामि पाण्डव ।
यद्ब्रूयात्तव भीष्मो वा राजा वापि युधिष्ठिरः ॥३०
विदुरो वा पुनः क्षत्ता गान्धारी वा यशस्विनी ।
कुन्ती वा भरतश्रेष्ठ द्रौपदी वा यशस्विनी ।
तत्ते वक्ष्यामि तत्त्वेन निबोधैतद्धनञ्जय ॥ ३१
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सुदुर्विदं हि तत्त्वेन तत्सत्यमिति मे मतिः ॥३२
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ३३
विवाहकाले रतिसंप्रयोगे
प्राणात्यये सर्वधनापहारे ।

सुखं अनधीत्येत्यर्थः । श्रुतेन शास्त्रेण ॥ २२ ॥ अशत्रोः अशातनीयस्य अवध्यस्य ॥ २६ ॥

मध्ये कुरूणां ससुयोधनानां
ये चाप्यन्ये योद्धुकामाः समेताः ॥ २२
एकः स मे भीमसेनोऽद्य नाथो
येनाभिपन्नोऽस्मि रणे महाभये।
विमोच्य मां चापि रुषान्वितस्ततः
शरेण तीक्ष्णेन बिभेद कर्णम् ॥ २३
त्यक्त्वा प्राणान्समरे भीमसेन-
श्चक्रे युद्धं कुरुमुख्यैः समेतैः।
गदाग्रहस्तो रुधिरोक्षिताङ्ग-
श्चरन्रणे काल इवान्तकाले ॥ २४
असौ हि भीमस्य महानिनादो
मुहुर्मुहुः श्रूयते धार्तराष्ट्रैः।
यदि स जीवेत्समरे निहन्ता
महारथानां प्रवरो नरोत्तमः ॥ २५
तवाभिमन्युस्तनयोऽद्य पार्थ
न चास्मि गन्ता समरे पराभवम्।
अथापि जीवेत्समरे घटोत्कच-
स्तथाऽपि नाहं समरे पराङ्मुखः ॥ २६
भीमस्य पुत्रः समराग्रयायी
महास्त्रविच्चापि तवानुरूपः।
यं तं समासाद्य रिपोर्बलं नो
निमीलिताक्षं भयविप्लुतं भवेत् ॥ २७
चकार योऽसौ निशि युद्धमेक-
स्त्यक्त्वा रणं यस्य भयाद्द्रवन्ते ॥ २८
स चेत्समासाद्य महानुभावः
कर्णं रणे बाणगणैः प्रमोह्य।
धैर्ये स्थितेनापि च सूतजेन
शक्त्या हतो वासवदत्तया तया ॥ २९
ममैव भाग्यानि पुरा कृतानि
पापानि नूनं फलवन्ति युद्धे।
तृणं च कृत्वा समरे भवन्तं
ततोऽहमेवं निकृतो दुरात्मना।
वैकर्तनेनैव तथा कृतोऽहं
यथा ह्यशक्तः क्रियते स्वबान्धवः ॥ ३०
आपद्गतं यश्च नरो विमोक्षये-
त्स बान्धवः स्नेहयुतः सुहृच्च।
एवं पुराणा ऋषयो वदन्ति
धर्मः सदा सद्भिरनुष्ठितश्च ॥ ३१
खड्गं बिभ्रज्जातरूपत्सरुं च
धनुर्वेदं गाण्डिवं तालमात्रम्।
स केशवेनोह्यमानः कथं नु
कर्णात्पार्थस्त्वमपैतुं समैषीः ॥ ३२
स गाण्डीवं केशवाय प्रदाय
यन्ता भवेस्त्वं यदि केशवस्य।
ततस्तरेत्केशवः कर्णमुग्रं
मरुत्सखो वृत्रमिवात्तवज्रः ॥ ३३
मासेऽपतिष्यो यदि पञ्चमे त्वं
न वा गर्भो यद्यभवः पृथायाः।
मत्तः श्रेयान्राजपुत्रोऽभविष्य-
न्न ते यशः फल्गुन इत्यपेयात् ॥ ३४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

युधिष्ठिरवधोद्यतमर्जुनंप्रति कृष्णेन तत्कारणप्रश्ने तेन तन्निवेदनम् ॥ १ ॥ कृष्णेन वधप्रतिनिधित्वेन युधिष्ठिराधिक्षेपविधानम् ॥ २ ॥

---

सञ्जय उवाच।
युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः।
असिं जग्राह संक्रुद्धो जिघांसुर्भरतर्षभम् ॥ १
तस्य कोपं समाज्ञाय चित्तज्ञः केशवस्तदा।
उवाच किमिदं खड्गं गृह्णास्यर्जुन शंस मे ॥ २
नेह पश्यामि योद्धव्यं त्वया किंचिद्धनञ्जय।

नेहागतौ धार्तराष्ट्राः सर्वे भीमेन वारिताः ॥ ३
उपागतोऽसि कौन्तेय राजा द्रष्टव्य इत्यसौ ।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ ४
तं दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम् ।
हर्षकाले च संप्राप्ते कस्मात्त्वां मन्युराविशत् ॥ ५
न तं पश्यामि कौन्तेय यस्ते वध्यो भवेदिह ।
प्रहर्तुमिच्छसे कस्मात्किं वा ते चित्तविभ्रमः ॥ ६
कस्माद्भवान्महाखड्गं परिगृह्णात्यकारणात् । ७
तत्त्वां पृच्छामि कौन्तेय किमिदं ते चिकीर्षितम् ।
परामृशसि यत्क्रुद्धः खड्गमद्भुतविक्रम ॥ ८
एवमुक्तः कटाक्षेण प्रेक्षमाणो युधिष्ठिरम् ।
अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् ॥ ९
अन्यस्मै देहि गाण्डीवमिति मां यः प्रचोदयेत् ।
भिन्द्यामहं तस्य शिर इत्युपांशु व्रतं मम ।
युधिष्ठिरेण तेनाहमुक्तश्चास्मि जनार्दन ॥ १०
यदुक्तोऽहमदीनार्थ राज्ञाऽनेन यशस्विना ।
समक्षं तव गोविन्द न तत्क्षन्तुमिहोत्सहे ॥ ११
तस्मादेनं वधिष्यामि राजानं धर्मचारिणम् ।
प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तमम् ॥ १२
एतदर्थं मया खड्गो गृहीतो यदुनन्दन ।
सोऽहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः ।
विशोको विज्वरश्चापि भविष्यामि जनार्दन ॥ १३
किं वा त्वं मन्यसे प्राप्तमस्मिन्कार्ये उपस्थिते ।
त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम् ॥ १४
'जातस्त्वत्तो हि धर्मश्चाधर्मश्चेति परा श्रुतिः ।'
तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान् १५

सञ्जय उवाच ।

धिग्धिगित्येव गोविन्दः पार्थमुक्त्वाब्रवीत्पुनः १६

कृष्ण उवाच ।

इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया ।
अकाले पुरुषव्याघ्र संरम्भं यद्भवानगात् ॥ १७
न हि धर्मविभागज्ञैरेवं कार्यं धनञ्जय ।
यथा त्वं पाण्डवाद्येह धर्मभीरुरपण्डितः ॥ १८
योऽकार्याणां क्रियाणाश्च संयोगं नावबुध्यते ।
कार्याणामक्रियायाश्च स पार्थ पुरुषाधमः ॥ १९
अनुसृत्य तु ये धर्मं कवयः समुपस्थिताः ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ २०
अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये ।
एवं स मुह्यत्यवशो यथा त्वं पार्थ मुह्यसि ॥ २१
न हि कार्यमकार्यं वा सुखं ज्ञातुं कथंचन ।
श्रुतेन ज्ञायते सर्वं तच्च त्वं नावबुध्यसे ॥ २२
अविज्ञानादिह भवान्सत्यं रक्षति धर्मवित् ।
प्राणिनां त्वं वधं पार्थ धार्मिको नावबुध्यसे ॥ २३
प्राणिनां हि वधात्तात वृथा धर्मो मतो मम ।
अनृतं तु भवेद्वाच्यं न तु हिंसा कदाचन ॥ २४
स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम् ।
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥ २५
अयुध्यमानस्य गुरोस्तथाऽशत्रोश्च मानद ।
पराङ्मुखस्य द्रवतः शरणं चापि गच्छतः ॥ २६
कृताञ्जलेः प्रपन्नस्य प्रमत्तस्य तथैव च ।
न वधः पूज्यते सद्भिस्तच्च सर्वं गुरौ तव ॥ २७
त्वया चैतद्व्रतं पार्थ बालेनेव कृतं पुरा ।
तस्मादधर्मसंयुक्तं मौर्ख्याद्देव व्यवस्यसि ॥ २८
स्वगुरुं पार्थ कस्मात्त्वं हन्तुकामोऽभिधावसि ।
असंप्रधार्य धर्माणां गतिं सूक्ष्मां दुरत्ययाम् ॥ २९
इदं धर्मरहस्यं च तव वक्ष्यामि पाण्डव ।
यद्ब्रूयात्तव भीष्मो वा राजा वापि युधिष्ठिरः ॥ ३०
विदुरो वा पुनः क्षत्ता गान्धारी वा यशस्विनी ।
कुन्ती वा भरतश्रेष्ठ द्रौपदी वा यशस्विनी ।
तत्ते वक्ष्यामि तत्त्वेन निबोधैतद्धनञ्जय ॥ ३१
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सुदुर्विदं हि तत्त्वेन तत्सत्यमिति मे मतिः ॥ ३२
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ३३
विवाहकाले रतिसंप्रयोगे
प्राणात्यये सर्वधनापहारे ।

---

सुखं अनधीत्येत्यर्थः । श्रुतेन शास्त्रेण ॥ २२ ॥ अशत्रोः अशातनीयस्य अवध्यस्य ॥ २६ ॥

विप्रस्य चार्थे ह्यनृतं वदेत
पञ्चानृतान्याहुरपातकानि ॥ ३४
सर्वस्वस्यापहारे तु वक्तव्यमनृतं भवेत् ।
तत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ३५
तादृशो हन्यते बालो यस्य सत्यमनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥३६
किमाश्चर्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ ३७
किमाश्चर्यं पुनर्मूढो धर्मकामो ह्यपण्डितः ।
सुमहत्प्राप्नुयात्पापमापगास्विव कौशिकः ॥ ३८
अर्जुन उवाच ।
आचक्ष्व भगवन्नेतद्यथा विन्दाम्यहं तथा ।
बलाकस्यानुसंबद्धं नदीनां कौशिकस्य च ॥ ३९
वासुदेव उवाच ।
मृगव्याधोऽभवत्कश्चिद्बलाको नाम भारत ।
यात्रार्थं पुत्रदाराणां मृगान्हन्ति न कामतः ॥४०
वृद्धौ च मातापितरौ बिभर्त्यन्यांश्च संश्रितान् ।
स्वधर्मनिरतो नित्यं संविभज्यानसूयकः ॥ ४१
स कदाचिन्मृगप्रेप्सुर्नान्वविन्दन्मृगं क्वचित् ।
अथापश्यत्स पीवानं श्वापदं घ्राणचक्षुषम् ॥४२
अदृष्टपूर्वमपि तत्सत्त्वं तेन हतं तदा ।
अन्धे हते ततो व्योम्नः पुष्पवर्षं पपात च ॥ ४३
अप्सरोगीतवादित्रैर्नादितं च मनोरमम् ।
विमानमगमत्स्वर्गान्मृगव्याधनिनीषया ॥ ४४
तद्भूतं सर्वभूतानामभावाय किलार्जुन ।
तपस्तप्त्वा वरं प्राप्तं कृतमन्धं स्वयंभुवा ॥ ४५
तद्धत्वा सर्वभूतानामभावकृतनिश्चयम् ।
बलाकोऽगात्स्वर्गलोकमेवं धर्मः सुदुर्विदः ॥ ४६
कौशिकोऽप्यभवद्विप्रस्तपस्वीनो बहुश्रुतः ।
नदीनां संगमे ग्रामाददूरे स किलावसत् ॥ ४७
सत्यं मया सदा वाच्यमिति तस्याभवद्व्रतम् ।
सत्यवादीति विख्यातः स तदासीद्धनंजय ॥४८
अथ दस्युभयात्केचित्तदा तद्वनमाविशन् ।
तत्रापि दस्यवः क्रुद्धास्तानमार्गन्त यत्नतः ॥ ४९
अथ कौशिकमभ्येत्य प्रोचुस्ते सत्यवादिनम् ।
कतरेण पथा याता भगवन्निति वै जनाः ।
सत्येन पृष्टः प्रब्रूहि यदि तद्वेत्थ शंस नः ॥५०
श्रीकृष्ण उवाच ।
सत्यस्य त्वविभागज्ञः सत्यं तेभ्यः शशंस ह ।
बहुवृक्षलतागुल्ममेतद्गहनमाश्रिताः ।
इति तान्ख्यापयामास तेभ्यस्तत्त्वं स कौशिकः ॥
ततस्ते तान्समासाद्य क्रूरा जघ्नुरिति श्रुतिः ।
ततोऽधर्मेण महता वाग्दुरुक्तेन कौशिकः ॥५२
गतः सुकष्टं निरयं धर्मसूक्ष्मेष्वतत्त्ववित् ।
दृष्टपूर्वश्रुतो मूढो धर्माणामविशारदः ॥ ५३
वृद्धानपृच्छन्सन्देहानन्धः श्वभ्रमिवर्च्छति ॥ ५४
तत्र ते लक्षणोद्देशः कश्चिदेव भविष्यति ।
दुष्करं प्रतिसंख्यानं कार्त्स्न्येनात्र व्यवस्थितिः॥५५
सत्यं धर्म इति ह्येके वदन्ति बहवो जनाः ।
न च पार्थाभ्यसूयामि नैतत्सर्वत्र शिष्यते ॥५६
श्रुतिस्तु धार्या इत्येके वदन्ति बहवो जनाः ।
न त्वेतत्प्रत्यसूयामि तत्र सर्वं विधीयते ॥ ५७
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ।
अहिंसार्थाय हिंस्राणां धर्मप्रवचनं कृतम् ।
धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ॥ ५८
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यस्मात्प्रभवसंयुक्तः स धर्म इति निश्चयः ॥ ५९
येऽन्यायेन जिगीषन्तो धर्मं पृच्छन्ति मानवाः ।
अकूजनेन चेन्मोक्षो नात्र कूजेत्कथंचन ॥ ६०
अवश्यं कूजितव्ये ह शङ्केरन्वाप्यकूजनात् ।
येऽन्यायेन जिहीर्षन्तो धर्मं पृच्छन्ति कस्यचित् ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विनिश्चितम् ॥ ६१
प्राणात्यये विवाहे वा सर्वजात्या महाभये ।
सर्वस्वस्य च लोपे वा वक्तव्यमनृतं भवेत् ॥ ६२

तपस्वीनः तपस्विनामिनः श्रेष्ठः ॥ ४७ ॥ यथा चाल्पश्रुतो मूढो धर्माणामविभागवित् । वृद्धानपृष्ट्वा सन्देहं महच्छ्वभ्रमिहार्हति । इति ङ. पाठः ॥ ५२ ॥ तत्र ते लक्षणोद्देशात्कश्चिदत्र भविष्यति इति क. ङ. पाठः । दुष्करं परमं ज्ञानं तर्केणानुव्यवस्यति इति ङ. पाठः । दुष्करं प्रतिसंख्यानं कार्त्स्न्येनास्य व्यवस्यति इति क. घ. ङ. पाठः । श्रुतेर्धर्म इति ह्येके इति ङ. पाठः ॥ ५७ ॥ प्राणात्यये विवाहे वा

अधर्मं हि न पश्यन्ति मृषोद्यं तत्र पण्डिताः ।
सर्वथाऽभिवदेत्तत्तु नानृतं स्याद्विचक्षणः ॥ ६३
यः स्तेनैः सह संबन्धो मुच्यते शपथादपि ।
भवेत्तत्रानृतं श्रेयः सत्यादिति विचारितम् ॥ ६४
न च तेभ्यो धनं देयं सत्यादिति कथंचन ।
पापेभ्योऽपि धनं दत्तं दातारमपि पीडयेत् ।
तस्माद्धर्मार्थमनृतमुक्त्वा नानृतवाग्भवेत् ॥ ६५
एष ते लक्षणोद्देशो मयोद्दिष्टो यथाविधि ।
एतज्ज्ञात्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ॥ ६६
अर्जुन उवाच ।
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महायशाः ॥ ६७
सुहृद्ब्रूयाद्यथाऽस्माकं तथोक्तं वचनं त्वया ।
भवान्मातृसमोऽस्माकं भवान्पितृसमोऽपि च ।
गतिश्च परमा कृष्ण त्वमेव च परायणम् ॥ ६८
न हि ते त्रिषु लोकेषु विद्यतेऽविदितं क्वचित् ।
तस्माद्भवान्परं धर्मं वेद सर्वं यथातथम् ॥ ६९
अवध्यं पाण्डवं मन्ये धर्मराजं युधिष्ठिरम् ।
अधर्मयुक्ते संयोगे ब्रूहि किंचिदनुग्रहम् ॥ ७०
इदं चापरमत्रैव ब्रूहि तत्त्वं विवक्षितम् ॥ ७१
जानासि दाशार्ह मम व्रतं तु
यो मां ब्रूयात्कश्चन मानुषेषु ।
अन्यस्मै त्वं गाण्डिवं देहि पार्थ
यो मत्तोऽस्त्रे वीर्यतो वा विशिष्टः ॥ ७२
हन्यामहं केशव तं प्रसह्य
भीमो हन्यात्तूवरकेति चोक्तः ।
तन्मां राजा ह्युक्तवांस्ते समक्षं
धनुर्देहीत्यसकृद्वृष्णिवीरे ॥ ७३
तं हन्यां चेत्केशव जीवलोके
स्थाता नाहं कालमप्यल्पमात्रम् ।
ध्यात्वा नूनं ह्येनसा चापि मुक्तो
वधं राज्ञो भ्रष्टवीर्यो विचेताः ॥ ७४
यथा प्रतिज्ञा मम लोकबुद्धौ
भवेत्सत्या धर्मभृतां वरिष्ठ ।
यथा जीवेत्पाण्डवोऽहं च कृष्ण
तथा बुद्धिं दातुमप्यर्हसि त्वम् ॥ ७५
वासुदेव उवाच ।
राजा श्रान्तो विक्षतो दुःखितश्च
कर्णेन सङ्ख्ये निशितैर्बाणसङ्घैः ।
यश्चानिशं सूतपुत्रेण वीर
शरैर्भृशं ताडितो युध्यमानः ॥ ७६
अतस्त्वमेतेन सरोषमुक्तो
दुःखान्वितेनेदमयुक्तरूपम् ।
अकोपितो ह्येष यदि स्म सङ्ख्ये
कर्णं न हन्यादिति चाब्रवीत्सः ॥ ७७
जानाति तं पाण्डव एष चापि
पापं लोके कर्णमसह्यमन्यैः ।
ततस्त्वमुक्तो भृशरोषितेन
राज्ञा समक्षं परुषाणि पार्थ ॥ ७८
नित्योद्युक्ते सततं चाप्रसह्ये
कर्णे द्यूतं ह्यद्य रणे निबद्धम् ।
तस्मिन्हते कुरवो निर्जिताः स्यु-
रेवं बुद्धिः पार्थिवे धर्मपुत्रे ॥ ७९
ततो वधं नार्हति धर्मपुत्र-
स्त्वया प्रतिज्ञाऽर्जुन पालनीया ।
जीवन्नयं येन मृतो भवेद्धि
तन्मे निबोधेह तवानुरूपम् ॥ ८०
यदा मानं लभते माननार्ह-
स्तदा स वै जीवति जीवलोके ।

---

सर्वज्ञातिवधात्यये । नर्मण्यभिप्रवृत्ते वा न च प्रोक्तं मृषा भवेत् इति झ. ङ. पाठः ॥ ६२ ॥ अधर्मं नात्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः इति ङ. पाठः ॥ ६३ ॥ यः स्तेनैः सह संबन्धान्मुच्यते शपथैरपि । श्रेयस्तत्रानृतं वक्तुं तत्सत्यम-विचारितम् । इति ङ. पाठः ॥ ६४ ॥ शक्ये सति कथञ्चन इति ङ. पाठः ॥ ६५ ॥ अनुग्रहं अवधेन प्रतिज्ञारक्षणम् ॥ ७० ॥ तं हन्यामिति स्थाता न न स्थास्ये । एनसा मुक्तोपि कृतप्रायश्चित्तोऽपि न स्थास्ये इत्यर्थः । किं कृत्वा राज्ञो वधं ध्यात्वा ॥ ७४ ॥ समक्षं आवयोरिति शेषः ॥ ७८ ॥ कर्णे पणीकृते । द्यूतं युद्धरूपम् ॥ ७९ ॥

यदाऽवमानं लभते महान्तं
नदा जीवन्मृत इत्युच्यते सः ॥ ८१
संमानितः पार्थिवोऽयं सदैव
त्वया च भीमेन तथा यमाभ्याम् ।
वृद्धैश्च लोके पुरुषैश्च शूरै-
स्तस्यापमानं कलया प्रयुङ्क्ष्व ॥ ८२
त्वमित्यत्रभवन्तं हि ब्रूहि पार्थ युधिष्ठिरम् ।
त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ॥ ८३
एवमाचर कौन्तेय धर्मराजे युधिष्ठिरे ।
अधर्मयुक्तं संयोगं कुरुष्वैनं कुरूद्वह ॥ ८४
अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः ।
अविचार्यैव कार्यैषा श्रेयस्कामैर्नरैः सदा ॥ ८५
अवधेन वधः प्रोक्तो यद्गुरुस्त्वमिति प्रभुः ।
तद्ब्रूहि त्वं यन्मयोक्तं धर्मराजस्य धर्मवित् ॥ ८६
यदा ह्ययं पाण्डव धर्मराज-
स्त्वत्तोऽयुक्तं लप्स्यते चैव साधु ।
ततोऽस्य पादावभिवाद्य पश्चा-
च्छ्रेयो ब्रूयात्सान्त्वयुक्तं हितं च ॥ ८७
भ्राता प्राज्ञस्तव कोपं न जातु
कुर्याद्राजा धर्ममार्गानुसारी ।
मुक्तोऽनृताद्भ्रातृवधाच्च पापा-
द्धृष्टः कर्णं त्वं जहि पार्थ पश्चात् ॥ ८८

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

युधिष्ठिराधिक्षेपादात्मवधोद्यतं पार्थं प्रति कृष्णेन तत्प्रतिनिधितया आत्मप्रशंसनचोदना ॥ १ ॥ अर्जुनेनात्मप्रशंसनानन्तरं युधिष्ठिरक्षमापनम् ॥ २ ॥

सञ्जय उवाच ।
इत्येवमुक्तस्तु जनार्दनेन
पार्थः प्रशस्याथ सुहृद्वचस्तत् ।
ततोऽब्रवीदर्जुनो धर्मराज-
मनुक्तपूर्वं परुषं प्रसह्य ॥ १
मा त्वं राजन्व्याहरस्वाद्य पापं
त्वं तिष्ठसि क्रोशमात्रे व्यपेत्य ।
भीमस्तु मामर्हति गर्हणाय
यो युध्यते सर्वलोकप्रवीरैः ॥ २
काले हि शत्रून्परिपीड्य वीरो
हत्वा प्रवीरान्वसुधाधिपानाम् ।
रथप्रधानोत्तमनागमुख्या
युधिप्रवीरा निहताश्च शूराः ॥ ३
सुदुष्करं कर्म करोति भीमः
कर्तुं यथा नार्हति कश्चिदन्यः ।
रथादवस्कन्द्य गदां परामृशं-
स्तथा रणे हन्ति तथैव वारणान् ॥ ४
स कुञ्जराणामधिकं सहस्रं
हत्वा नदंस्तुमुलं सिंहनादम् ।
काम्भोजवानायुजपार्वतीया-
नीहामृगाभान्विनिहत्य वाजिनः ॥ ५
महारथान्द्विरदाञ्शैलकल्पा-
न्सहेत यः कुञ्जरान्वध्यमानान् ।
असौ भीमो धार्तराष्ट्रेषु मग्नः
स मामुपालब्धुमरिंदमोऽर्हति ॥ ६
वरासिना चाथ नराश्वकुञ्जरां-
स्तथा रथाङ्गैर्धनुषा च हन्त्यरीन् ।
प्रमृद्य पद्भ्यामहितांस्तु हन्ति
पुनश्च दोर्भ्यां शतमन्युविक्रमः ॥ ७
महाबलो वैश्रवणान्तकोपमः
प्रसह्य हर्ता द्विषतां यशांसि ।

---

अत्रभवन्तं मान्यं त्वमिति ब्रूहि ॥ ८३ ॥ एवं पूज्यावमानरूपं संयोगं आत्मनानुष्ठितं कुरुष्व ॥ ८४ ॥ यत् गुरुस्त्वमिति प्रोक्तस्तत् अवधेन शस्त्रपातनमन्तरेणैव वधः वधकरं भवतीत्यर्थः ॥ ८६ ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

स भीमसेनोऽर्हति गर्हणाय
न त्वं नित्यं रक्ष्यमाणः सुहृद्भिः ॥ ८
कलिङ्गवङ्गाङ्गनिषादमागधा-
न्सदा महाशैलबलाहकोपमान् ।
निहन्ति यः शत्रुगणाननेकशः
स मां हि वक्तुं प्रभवत्यनागसम् ॥ ९
संयुक्तमास्थाय रथं हि काले
धनुर्विधून्वञ्छरपूर्णमुष्टिः ।
सृजेच्च यो बाणसङ्घान्परेषु
महाबलो मेघ इवाम्बुधाराः ॥ १०
शतान्यष्टौ वारणानामदर्शय-
द्विशातितैः कुम्भघटाग्रहस्तैः ।
यो भीमसेनो निहतारिसङ्घः
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ११
रथाश्च नागाश्च हयाश्च राज-
न्भीमेनाजौ निहताः सङ्घशोऽद्य ।
राजानश्च बहवो महाबलाः
स मामुपालब्धुमरिन्दमोऽर्हति ॥ १२
धृतराष्ट्रपुत्रा बलिनश्च येन
महाबला निहताः प्रायशो वै ।
शूरो युद्धे ह्यप्रतिवार्यवीर्यः
स मामुपालब्धुमरिन्दमोऽर्हति ॥ १३
प्रतापयंस्तद्बलमुग्ररूपं
योऽसौ रणे धार्तराष्ट्रस्य वीरः ।
एकः सहेताप्रतिसह्यपौरुष-
स्तेनासि वाच्यो न त्वया वै कदाचित् १४
महारथा यत्र यत्रैव युद्धे
भिन्दन्ति सैन्यं तव कामतोऽद्य ।
तत्रैव तत्रैव रणे महात्मा
दृढं भीमः परसङ्घानमृद्नात् ॥ १५
तेनास्मि वाच्यो न त्वया हं कदाचि-
न्मा मा वोचः क्रूरमिहाद्य पार्थ ।
नास्मद्विधो वै भवता तु वाच्यो
यथा भवान्सर्वलोकस्य वाच्यः ॥ १६

एवं हि मा ते ब्रुवतो नरेन्द्र
कथं न दीर्येच्छतधाऽद्य जिह्वा ।
अहो बतेदं सुनृशंसरूपं
कामादवोचस्त्वमिहाद्य यद्वै ॥ १७
बलं न वाधिष्ठितं सत्तमानां
यत्क्षत्रियाणां बहुलं वदन्ति ।
त्वं चाबलो भारत निष्ठुरोऽसि
त्वमेव मां वेत्सि यथाविधोऽहम् ॥ १८
नकुलेन राजन्गजवाजियोधा
हताश्च वीराः सहसा समेत्य ।
त्यक्त्वा प्राणान्समरे युद्धकाङ्क्षी
स मामुपालब्धुमरिन्दमोऽर्हति ॥ १९
कृतं कर्म सहदेवेन दुष्करं
यो युध्यते परसैन्यावमर्दी ।
न चाब्रवीत्किंचिदिहागतो बली
पश्यान्तरं तस्य चैवात्मनश्च ॥ २०
धृष्टद्युम्नः सात्यकिर्द्रौपदेया
युधामन्युश्चोत्तमौजाः शिखण्डी ।
एतेऽद्य युधि संप्रपीडिता-
स्ते मामुपालब्धुमर्हन्ति न त्वम् ॥ २१
त्वन्मूलमस्माभिरिदं हि वैरं
प्राप्तं तथा व्यसनं चातिघोरम् ।
द्यूतप्रमत्तेन कृतं त्वयाऽसकृ-
त्कस्मादुपालब्धुमिहार्हसि त्वम् ॥ २२
त्वमेव राजन्सततं प्रमत्त-
स्त्वमेव मूढो भारतानामसाधुः ।
त्वां प्राप्य राज्यं च विनष्टमेत-
त्प्राप्ता महत्पाण्डवाश्चापि दास्यम् ॥ २३
त्वत्तः कृतोऽस्मद्वनवासदुःखं
राज्यस्य नाशो ह्यभिमन्योश्च घोरः ।
आत्मानमेवं सुनृशंसरूपं
ज्ञात्वा किमर्थं गर्हसे माद्य वीर ॥ २४
लज्जस्व राजन्यदि तेऽस्ति लज्जा
तूष्णींभूतः पश्य सर्वं कृतघ्नः ।

भीमो नित्यं समरस्य कर्ता
दर्पस्य भेत्ता पुनरेव नित्यम् ॥ २५
स्वयं ह्यशक्तेन नरेन्द्र युद्धे
नरेण कार्या सततं क्षमैव ।
बलं हि वाचि द्विजसत्तमानां
क्षात्रं द्विजा बाहुबलं वदन्ति ॥ २६
त्वं वाग्बलो भारत निष्ठुरोऽसि
त्वमेव मां वेत्सि यथाविधोऽहम् ।
घटामि नित्यं तव कर्तुमिष्टं
दारैः सुतैर्जीवितेनात्मना च ॥ २७
एवंच मां वाक्छलाकैर्हिनस्सि
त्वत्तः सुखं न वयं विद्म किंचित् ।
मा मामवंस्था द्रौपदीतल्पसंस्थो
महारथान्प्रतिहन्मि त्वदर्थे ॥ २८
सर्वातिशङ्की भवसि प्रमत्त-
स्त्वत्तः सुखं नाभिजानामि किंचित् ।
प्रोक्तः स्वयं सत्यसन्धेन मृत्यु-
स्तव प्रियार्थं नरदेव युद्धे ॥ २९
शिखण्डिनाम्ना प्रधने तवार्थे
मयाभिगुप्तेन हतश्च भीष्मः ।
द्रोणो हतो यः सततोपकारी
धृष्टद्युम्नेन स्यन्दनाद्विप्रकृष्टः ॥ ३०
द्रौणिश्च रुद्धः सगणो महात्मा
तथापि ते वै वचनं नृशंसवत् ।
दुःखं प्रियं ते नरदेव कर्तुं
यस्य प्रियं ते न करोम्यहं वै ॥ ३१
न मुच्यते वै दिवि चेह यः पुमा-
न्यस्ते मदन्योऽप्रियमारभेत ।
न चाभिनन्दामि तथाहि राज्यं
यतस्त्वमक्षेषु दृढं प्रसक्तः ॥ ३२
स्वयं कृतं पापमनार्यजुष्ट-
मस्माभिराजौ व्यसनं तितीर्षसि ।
अक्षेषु दोषा बहवो विधर्म्याः
श्रुतास्त्वया सहदेवोऽब्रवीद्यान् ॥ ३३
तान्नेच्छसि त्यक्तुमनार्यजुष्टा-
न्घोरे स्म सर्वे निरये त्वयाऽस्ताः ।
त्वं देविता त्वत्कृते राज्यनाश-
स्त्वत्संभवं व्यसनं नो नरेन्द्र ॥ ३४
मास्मान्क्रूरैर्वाक्प्रतोदैस्तुदस्त्वं
भूयो राजन्कोपयस्यल्पबुद्ध्या ॥ ३५
सञ्जय उवाच ।
एता वाचः परुषाः सव्यसाची
स्थिरप्रतिज्ञः श्रावयित्वा नरेन्द्रम् ।
विनिःश्वसञ्ज्येष्ठमनिष्टमुक्त्वा
ततस्तु कोशादसिमुद्बबर्ह ॥ ३६
तमाह कृष्णः किमिदं पुनर्भवा-
न्विकोशमाकाशनिभं करोत्यसिम् ।
प्रब्रूहि सत्यं पुनरुत्तरं सखे
वचः प्रवक्ष्यामि तवार्थसिद्धये ॥ ३७
इतीव पृष्टः पुरुषोत्तमेन
सुदुःखितः केशवमाह पार्थः ।
अहं हनिष्ये स्वशरीरमेत-
त्प्रसह्य येनाहितमुक्तवान्गुरुम् ॥ ३८
निशम्य तत्पार्थवचोऽब्रवीदिदं
जनार्दनो धर्मभृतां वरिष्ठः ।
प्रब्रूहि पार्थ स्वगुणानिहात्मन-
स्ततो हतात्मा भवसीति निश्चयः ॥ ३९
तथा तु कृष्णस्य वचो निशम्य
ततोऽर्जुनः प्राह धनुः प्रगृह्य ।
युधिष्ठिरं धर्मभृतां वरिष्ठं
शृणुष्व राजन्निति दुर्वचः स्वयम् ॥ ४०
अर्जुन उवाच ।
न मादृशोऽन्यो नरदेव विद्यते
धनुर्धरो देवमृते पिनाकिनम् ।
अहं हि तेनानुमतो महात्मना
क्षणेन हन्यां सचराचरं जगत् ॥ ४१
मया हि राजन्सदिगीश्वरा दिशो
विजित्य सर्वा भवतः कृता वशे ।

सत्यसन्धेन भीष्मेण ॥ २९ ॥

त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

स राजसूयश्च समाप्तदक्षिणः
सभा च दिव्या भवतो ममौजसा ॥ ४२
पाणी पृषत्कालिखिताविमौ पुन-
र्धनुश्च सव्ये विततं सबाणम् ।
पादौ च मे लक्षणतः प्रशस्तौ
न मादृशं युद्धगतं जयन्ति ॥ ४३
हता उदीच्या निहताः प्रतीच्याः
प्राच्या निरस्ता दाक्षिणात्या विशस्ताः ।
संशप्तकानां किंचिदेवावशिष्टं
सर्वस्य लोकस्य हतं मयाऽर्धम् ॥ ४४
शेते मया निहता शत्रुसेना
छिन्नैर्गात्रैर्भूमितले स्खलन्ती ।
अनस्त्रज्ञान्नैव निहन्मि चास्त्रै-
स्तस्मान्न भस्मैव करोमि लोकान् ॥ ४५
जैत्रं रथं भीममास्थाय कृष्ण
यावच्छीघ्रं सूतपुत्रं निहन्तुम् ।
राजा भवत्वद्य सुनिर्वृतोऽयं
कर्णं रणे नाशयितास्मि बाणैः ॥ ४६
इत्येवमुक्त्वा पुनराह पार्थो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
अद्यापुत्रा सूतमाता भवित्री
कुन्ती वाथो वा मया तेन वापि ।
सत्यं वदाम्यद्य न कर्णमाजौ
शरैरहत्वा कवचं विमोक्ष्ये ॥ ४७
सञ्जय उवाच ।
इत्येवमुक्त्वा पुनरेव पार्थो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
विमुच्य शस्त्राणि धनुर्विसृज्य
कोशे च खङ्गं विनिधाय तूर्णम् ॥ ४८
स व्रीडया नम्रशिराः किरीटी
युधिष्ठिरं प्राञ्जलिरभ्युवाच ।
प्रसीद राजन्क्षम यन्मयोक्तं
काले भवान्वेत्स्यति तन्नमस्ते ॥ ४९
ततस्तु पादावुपगृह्य पार्थः
समुत्थितो दीप्ततेजाः किरीटी ।
प्रसाद्य राजानममित्रसाहं
स्थितोऽब्रवीच्चैनमभिप्रतप्तम् ॥ ५०
याम्येष भीमं समराद्विमोक्तुं
सर्वात्मना सूतपुत्रं च हन्तुम् ।
भवत्प्रियार्थं मम जीवितं हि
ब्रवीमि सत्यं तदवेहि राजन् ॥ ५१
नेदं चिरात्क्षिप्रमिदं भविष्य-
दावर्ततेऽस्त्रावभियामि चैनम् ।
अद्याप्यपुत्रा तेन हतेन राधा
कुन्ती मया वा तदिदं विद्धि राजन् ॥ ५२

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

अर्जुनकृतावमानाद्वनं यियासोर्युधिष्ठिरस्य कृष्णेन परिसान्त्वनम् ॥ १ ॥

सञ्जय उवाच ।
एतच्छ्रुत्वा पाण्डवो धर्मराजो
भ्रातुर्वाक्यं परुषं फल्गुनस्य ।
उत्थाय तस्माच्छयनादुवाच
पार्थं ततो दुःखपरीतचेताः ॥ १
कृतं मया पार्थ न साधुकर्म
येन प्राप्तं व्यसनं वः सुघोरम् ।
तस्माच्छिरश्छिन्धि ममैतदद्य
कुलान्तकस्याधमपूरुषस्य ॥ २
पापस्य पाप्मोपहतस्य वीर
विमूढबुद्धेरलसस्य भीरोः ।
वृद्धावमन्तुः परुषस्य चैव
किं ते चिरं मामनुसृत्य रूक्षम् ॥ ३

गच्छाम्यहं वनमद्यैव पापः
सुखं भवान्वर्ततां मद्विहीनः ।
योग्यो राजा भीमसेनो महात्मा
क्लीबस्य किं वा मम राज्यकृत्यम् ॥ ४
न चापि शक्तः परुषाणि सोढुं
पुनस्तवेमानि रुषान्वितस्य ।
भीमोऽस्तु राजा मम जीवितेन
न कार्यमद्यावमतस्य वीर ॥ ५
इत्येवमुक्त्वा सहसोत्पपात
रुषान्वितस्तच्छयनं विहाय ।
इयेष निर्गन्तुमथो वनाय
तं वासुदेवः प्रणतोऽभ्युवाच ॥ ६
न राजन्विदितं तत्ते यथा गाण्डीवधन्वनः ।
प्रतिज्ञा सत्यसन्धस्य गाण्डीवं प्रति विश्रुता ॥ ७
ब्रूयाद्य एनं गाण्डीवं देह्यन्यस्मै त्वमित्युत ।
वध्योऽस्य स पुमाँल्लोके त्वया चोक्तोयमीदृशम् ८
ततः सत्यां प्रतिज्ञां तां पार्थेन प्रतिरक्षता ।
मच्छन्दादवमानोऽयं कृतस्तव महीपते ॥ ९
गुरूणामवमानो हि वध इत्यभिधीयते ।
तस्मात्क्षम महाबाहो मम पार्थस्य चोभयोः ॥ १०
व्यतिक्रममिमं राजन्सत्यसंरक्षणं प्रति ।
शरणं त्वां महाराज प्रतिपन्नावुभावपि ॥ ११
क्षन्तुमर्हसि मे राजन्प्रणतस्याभियाचतः ।
राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम् ॥ १२
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम् ।
यस्येच्छसि वधं तस्य गतमेवाद्य जीवितम् ॥ १३
इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
ससंभ्रमं हृषीकेशमुत्थाप्य प्रणतं [illegible] ।
कृताञ्जलिमुवाचेदं वाक्यं यत्समनन्तरम् ॥ १४
एवमेव यथात्थ त्वमस्त्येषोऽतिक्रमो मम ।
अनुनीतोऽस्मि गोविन्द तारितश्चास्मि माधव ॥ १५
मोचिता व्यसनाद्घोरादद्यमद्य त्वयाच्युत ।
भवन्तं नावमासाद्य ह्यावां व्यसनसागरात् ।
घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ ॥ १६
त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम् ।
समुत्तीर्णाः सहामात्याः सनाथाः स त्वयाच्युत ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

अर्जुनेन स्वावमानितस्य युधिष्ठिरस्य प्रसादनम् ॥ १ ॥ अर्जुनेन युधिष्ठिराग्रे कर्णवधप्रतिज्ञानम् ॥ २ ॥

सञ्जय उवाच ।
इति स कृष्णवचनात्प्रत्युच्चार्य युधिष्ठिरम् ।
बभूव विमनाः पार्थः किंचित्कृत्वेव पातकम् ॥ १
ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवम् ।
कथं नाम भवेदेतद्यदि त्वं पार्थ धर्मजम् ॥ २
असिना तीक्ष्णधारेण हन्या धर्मे व्यवस्थितम् ।
त्वमित्युक्त्वाथ राजानमेवं कश्मलमाविशः ॥ ३
हत्वा तु नृपतिं पार्थ करिष्यसि किमुत्तरम् ।
एवं हि दुर्विदो धर्मो मन्दप्रज्ञैर्विशेषतः ॥ ४
स भवान्धर्मभीरुत्वाद्ध्रुवं यायान्महत्तमः ।
नरकं घोररूपं च भ्रातुर्ज्येष्ठस्य वै वधात् ॥ ५
स त्वं धर्मभृतां श्रेष्ठं राजानं धर्मसंहितम् ।
प्रसादय कुरुश्रेष्ठमेतदत्र मतं मम ॥ ६
प्रसाद्य भक्त्या राजानं प्रीते चैव युधिष्ठिरे ।
प्रयावस्त्वरितौ योद्धुं सूतपुत्ररथं प्रति ॥ ७
हत्वा तु समरे कर्णं त्वमद्य निशितैः शरैः ।
विपुलां प्रीतिमाधत्स्व धर्मपुत्रस्य मानद ॥ ८
एतदत्र महाबाहो प्राप्तकालं मतं मम ।
एवं कृते कृतं चैव तव कार्यं भविष्यति ॥ ९
सञ्जय उवाच ।
ततोऽर्जुनो महाराज लज्जया वै समन्वितः ।
धर्मराजस्य चरणौ प्रपद्य शिरसा नतः ॥ १०
उवाच भरतश्रेष्ठं प्रसीदेति पुनःपुनः ।
क्षमस्व राजन्यत्प्रोक्तस्त्वं मया धर्मभीरुणा ॥ ११

पादयोः पतितं दृष्ट्वा धर्मराजो युधिष्ठिरः ।
धनंजयममित्रघ्नं रुदन्तं भरतर्षभम् ॥ १२
उत्थाप्य भ्रातरं राजा धर्मराजो धनञ्जयम् ।
समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः ॥ १३
रुदित्वा सुचिरं कालं भ्रातरौ सुमहाद्युती ।
कृतशौचौ महाराज प्रीतिमन्तौ बभूवतुः ॥ १४
तत आश्लिष्य तं प्रेम्णा मूर्ध्नि चाघ्राय पाण्डवः ।
प्रीत्या परमया युक्तो विस्मयंश्च पुनःपुनः ।
अब्रवीत्तं महेष्वासं धर्मराजो धनंजयम् ॥ १५
कर्णेन मे महाबाहो सर्वसैन्यस्य पश्यतः ।
कवचं च ध्वजं चैव धनुः शक्तिर्हयाः शराः ।
शरैः कृत्ता महेष्वास यतमानस्य संयुगे ॥ १६
सोऽहं दृष्ट्वा रणे तस्य कर्म कर्णस्य फल्गुन ।
व्यवसीदामि दुःखेन न तु मे जीवितं प्रियम् ॥ १७
न चेदद्य हि तं वीरं निहनिष्यसि संयुगे ।
प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम ॥१८
एवमुक्तः प्रत्युवाच विजयो भरतर्षभ ॥ १९
सत्येन ते शपे राजंस्त्वत्पादेन तथैव च ।
भीमेन च नरश्रेष्ठ यमाभ्यां च महीपते ॥ २०
'अहमेनं नरश्रेष्ठ सामात्यं च महीपते ।'
यथाद्य समरे कर्णं हनिष्यामि हतोपि वा ।
महीतले पतिष्यामि सत्येनायुधमालभे ॥ २१
एवमाभाष्य राजानमब्रवीन्माधवं वचः ।
अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः ।
त्वमनुध्याहि भद्रं ते वधं तस्य दुरात्मनः ॥ २२
एवमुक्तोऽब्रवीत्पार्थं केशवो राजसत्तम ।
शक्तोऽसि भरतश्रेष्ठ यत्नं कर्तुं यदात्थ माम् ॥२३
एष चापि हि मे कामो नित्यमेव महारथ ।
कथं भवान्रणे कर्णं निहन्यादिति सत्तम ॥ २४
एवमुक्तस्ततो राजन्पार्थो वचनमब्रवीत् ।
हन्यते द्वैरथे भूयो युज्यन्तां वै रथोत्तमे ॥ २५
उपावृत्ताश्च तुरगाः शिक्षिताश्चाश्वसादिभिः ।
रथोपकरणैः सर्वैः सत्वरं यातु मे रथः ॥ २६
एवमुक्तो महाराज फल्गुनेन महात्मना ।
उवाच दारुकं कृष्णः कुरु सर्वं यदब्रवीत् ।
अर्जुनो भारतश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ २७
आज्ञप्तस्त्वथ कृष्णेन दारुको राजसत्तम ।
योजयामास च रथं वैयाघ्रं शत्रुतापनम् ।
सज्जं निवेदयामास पाण्डवस्य महात्मनः ॥ २८
युक्तं तु रथमास्थाय दारुकेण महात्मना ।
उपस्थितं रथं दृष्ट्वा पद्मनाभो रणान्तकृत् ।
भूयश्चोवाच मतिमान्माधवो धर्मनन्दनम् ॥२९
युधिष्ठिरेमं बीभत्सुं त्वं सान्त्वयितुमर्हसि ।
अनुज्ञातुं च कर्णस्य वधायाद्य दुरात्मनः ॥ ३०
श्रुत्वा ह्यावां महासंख्ये त्वां कर्णशरपीडितम् ।
प्रवृत्तिं ज्ञातुमायाताविहावां पाण्डुनन्दन ॥ ३१
दिष्ट्यासि राजन्विरुजो दिष्ट्या न ग्रहणं गतः ।
परिसान्त्वय बीभत्सुं जयमाशाधि चानघ ॥ ३२
युधिष्ठिर उवाच ।
एह्येहि पार्थ बीभत्सो मां परिष्वज पाण्डव ।
वक्तव्यमुक्तोस्म्यहितं त्वया क्षान्तं च तन्मया ३३
अहं त्वामनुजानामि जहि कर्णं धनञ्जय ।
मन्युं च मा कृथाः पार्थ यन्मयोक्तोऽसि दारुणं ३४
सञ्जय उवाच ।
ततो धनञ्जयो राजञ्शिरसा प्रणतस्तदा ।
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष ३५
तमुत्थाप्य ततो राजा परिष्वज्य च पीडितम् ।
मूर्ध्न्युपाघ्राय चैवैनमिदं पुनरुवाच ह ॥ ३६
धनञ्जय महाबाहो मानितोऽसि दृढं त्वया ।
माहात्म्यं विजयं चैवं भूयः प्राप्नुहि शाश्वतम् ३७
अर्जुन उवाच ।
अद्य तं पापकर्माणं सानुबन्धं रणे शरैः ।
नयाम्यन्तं समासाद्य राधेयं बलगर्वितम् ॥ ३८
येन त्वं पीडितो बाणैर्दृढमायम्य कार्मुकम् ।
तस्याद्य कर्मणः कर्णः फलमाप्स्यति दारुणम् ॥३९
अद्य त्वामुपयास्यामि कर्णं हत्वा महीपते ।
सभाजये त्वामाक्रन्दादिति सत्यं ब्रवीमि ते ॥ ४०
नाहत्वा विनिवर्तिष्ये कर्णमद्य रणाजिरात् ।
इति सत्येन ते पादौ स्पृशामि जगतीपते ॥ ४१

सञ्जय उवाच ।
इति ब्रुवाणं सुमनाः किरीटिनं
युधिष्ठिरः प्राह वचो बृहत्तरम् ।
यशोऽक्षयं जीवितमीप्सितं ते
जयं सदा वीर्यमरिक्षयं तदा ॥ ४२
प्रयाहि वृद्धिं च दिशन्तु देवता
यथाहमिच्छामि तवास्तु तत्तथा ।
प्रयाहि शीघ्रं जहि कर्णमाहवे
पुरन्दरो वृत्रमिवात्मवृद्धये ॥ ४३

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

कर्णेन योद्धुंनिर्गच्छतोऽर्जुनस्य शुभनिमित्तप्रादुर्भावः ॥ १ ॥ श्रीकृष्णेनार्जुनस्य प्रोत्साहनम् ॥ २ ॥

सञ्जय उवाच ।
प्रसाद्य धर्मराजानं प्रहृष्टेनान्तरात्मना ।
संपूज्य देवताः सर्वा ब्राह्मणान्स्वस्ति वाच्य च ।
सुमङ्गलं स्वस्त्ययनमारुरोह रथोत्तमम् ॥ १
तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
आशिषोऽयुङ्क्त परमाः युक्तं कर्णरथं प्रति ॥ २
तमायान्तं महेष्वासं दृष्ट्वा भूतानि भारत ।
निहतं मेनिरे कर्णं पाण्डवेन महात्मना ॥ ३
बभूवुर्विमलाः सर्वा दिशो राजन्समन्ततः ।
चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर ।
प्रदक्षिणमकुर्वन्त तदा वै पाण्डुनन्दनम् ॥ ४
बहवः पक्षिणो राजन्पुन्नामानः शुभाः शिवाः ।
त्वरयन्तोऽर्जुनं युद्धे हृष्टरूपा ववाशिरे ॥ ५
कङ्का गृध्रा बकाः श्येना वायसाश्च विशांपते ।
अग्रतस्तस्य गच्छन्ति भक्ष्यहेतोर्भयानकाः ॥ ६
निमित्तानि च धन्यानि पाण्डवस्य शशंसिरे ।
विनाशमरिसैन्यानां कर्णस्य च वधं तथा ॥ ७
प्रयातस्याथ पार्थस्य महान्स्वेदो व्यजायत ।
चिन्ता च विपुला जज्ञे कथं चेदं भविष्यति ॥ ८
विषण्णं तु ततो ज्ञात्वा सव्यसाचिनमच्युतः ।
संचोदयति तेजस्वी मधुहा वानरध्वजम् ॥ ९
ततो गाण्डीवधन्वानमब्रवीन्मधुसूदनः ।
दृष्ट्वा पार्थं तथायान्तं चिन्तापरिगतं तदा ॥ १०
गाण्डीवधन्वन्संग्रामे ये त्वया धनुषा जिताः ।
न तेषां मानुषो जेता त्वदन्य इह विद्यते ॥ ११
एते हि बहवः शूराः शक्रतुल्यपराक्रमाः ।
त्वां प्राप्य समरे शूरं प्रयाताः परमां गतिम् ॥ १२
को हि द्रोणं च भीष्मं च भगदत्तं च मारिष ।
विन्दानुविन्दावावन्त्यौ कांभोजं च सुदक्षिणम् १३
श्रुतायुं चाश्रुतायुं च शतायुं च महारथम् ।
प्रत्युद्गम्य भवेत्क्षेमी यो न स्यात्त्वद्विधः प्रभुः ॥ १४
तव ह्यस्त्राणि दिव्यानि लाघवं बलमेव च ।
असंमोहश्च युद्धेषु विज्ञानस्य च संनतिः ।
वेधः पातश्च लक्षेषु योगश्चैव तथार्जुन ॥ १५
भवान्देवान्सगन्धर्वान्हन्यात्सर्वांश्च राक्षसान् ।
पृथिव्यां तु रणे पार्थ न योद्धा त्वत्समः पुमान् १६
धनुर्गृह्णन्ति ये केचित्क्षत्रिया युद्धदुर्मदाः ।
आत्मनस्तु समं तेषां न पश्यामि शृणोमि च ॥ १७
ब्रह्मणा हि प्रजाः सृष्टा गाण्डीवं च महद्धनुः ।
येन त्वं युध्यसे पार्थ तस्मान्नास्ति त्वया समः ॥ १८
अवश्यं तु मया वाच्यं यत्पथ्यं तव पाण्डव ।
मावमंस्था महाबाहो कर्णमाहवशोभिनम् ॥ १९
कर्णो हि बलवान्दृप्तः कृतास्त्रश्च महारथः ।
कृती च चित्रयोधी च देशकालस्य कोविदः ॥ २०
बहुनात्र किमुक्तेन संक्षेपाच्छृणु पाण्डव ।
त्वत्समं त्वद्विशिष्टं वा कर्णं मन्ये महारथम् ।
परमं यत्नमास्थाय त्वया वध्यो महाहवे ॥ २१
तेजसा वह्निसदृशो वायुवेगसमो जवे ।
अन्तकप्रतिमः क्रोधे सिंहसंहननो बली ॥ २२

अष्टरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः ।
अभिमानी च शूरश्च प्रवीरः प्रियदर्शनः ॥ २३
सर्वयोधगुणैर्युक्तो मित्राणामभयंकरः ।
सततं पाण्डवद्वेषी धार्तराष्ट्रहिते रतः ॥ २४
सर्वैरवध्यो राधेयो देवैरपि सवासवैः ।
ऋते त्वामिति मे बुद्धिस्तदद्य जहि सूतजम् ॥ २५
देवैरपि हि संयत्तैर्बिभ्रद्भिर्मांसशोणितम् ।
अशक्यः स रथो जेतुं सर्वैरपि युयुत्सुभिः ॥ २६
दुरात्मानं पापवृत्तं नृशंसं
दुष्टप्रज्ञं पाण्डवेयेषु नित्यम् ।
हीनस्वार्थं पाण्डवेयैर्विरोधे
हत्वा कर्णं निश्चितार्थो भवाद्य ॥ २७
तं सूतपुत्रं रथिनां वरिष्ठं
निष्कालिकं कालवशं नयाद्य ।
तं सूतपुत्रं रथिनां वरिष्ठं
हत्वा प्रीतिं धर्मराजे कुरुष्व ॥ २८
जानामि ते पार्थ वीर्यं यथाव-
द्दुर्वारणीयं च सुरासुरैश्च ।
सदावजानाति हि पाण्डुपुत्रा-
नसौ दर्पात्सूतपुत्रो दुरात्मा ॥ २९
आत्मानं मन्यते वीरं येन पापः सुयोधनः ।
तमद्य मूलं पापानां जहि सौतिं धनञ्जय ॥ ३०
खड्गजिह्वं धनुरास्यं शरदंष्ट्रं तरस्विनम् ।
दृप्तं पुरुषशार्दूलं जहि कर्णं धनञ्जय ॥ ३१
अहं त्वामनुजानामि वीर्येण च बलेन च ।
जहि कर्णं रणे शूरं मातङ्गमिव केसरी ॥ ३२
यस्य वीर्येण वीर्यं ते धार्तराष्ट्रोऽवमन्यते ।
तमद्य पार्थ संग्रामे कर्णं वैकर्तनं जहि ॥ ३३

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

कृष्णेनार्जुनंप्रति भीष्मादियुद्धनिधनप्रकारानुवादपूर्वकं तेषां वधे तस्यैव मुख्यकारणत्वकथनम् ॥ १ ॥ बाल्यात्प्रभृति दुर्योधनापनयानुस्मारणपूर्वकं सर्वत्र कर्णस्यैव मूलतया महापराधित्वद्योतनेन तस्यावश्यं हननविधानम् ॥ २ ॥

सञ्जय उवाच ।
ततः पुनरमेयात्मा केशवोऽर्जुनमब्रवीत् ।
कृतसंकल्पमायान्तं वधे कर्णस्य भारत ॥ १
अद्य सप्तदशाहानि वर्तमानस्य नित्यशः ।
विनाशस्यातिघोरस्य नरवारणवाजिनाम् ॥ २
भूत्वा हि विपुला सेना तावकानां परैः सह ।
अन्योन्यं समरं प्राप्य किंचिच्छेषा विशांपते ॥ ३
भूत्वा वै कौरवाः पार्थ प्रभूतगजवाजिनः ।
त्वां वै शत्रुं समासाद्य विनष्टा रणमूर्धनि ॥ ४
एते ते पृथिवीपालाः सृञ्जयाश्च समागताः ।
त्वां समासाद्य दुर्धर्षं पाण्डवाश्च व्यवस्थिताः ॥ ५
पाञ्चालैः पाण्डवैर्मात्स्यैः कारूशैश्चेदिभिः सह ।
मगधैः पारिजातैश्च दाक्षिणात्यैः सकेरलैः ।
त्वया गुप्तैरमित्रघ्नैः कृतः शत्रुगणक्षयः ॥ ६
को हि शक्तो रणे जेतुं कौरवांस्तात संयुगे ।
अन्यत्र पाण्डवाद्युद्धे श्वेताश्वाद्वानरध्वजात् ॥ ७
शक्तस्त्वं हि रणे जेतुं ससुरासुरमानुषान् ।
त्रींल्लोकान्समरे युक्तान्किं पुनः कौरवं बलम् ॥ ८
भगदत्तं च राजानं कोऽन्यः शक्तस्त्वया विना ।
जेतुं पुरुषशार्दूल योऽपि स्याद्वासवोपमः ॥ ९
तथेमां विपुलां सेनां गुप्तां पार्थ त्वयाऽनघ ।
न शेकुः पार्थिवाः सर्वे चक्षुर्भिरपि वीक्षितुम् ॥ १०
तथैव सततं पार्थ रक्षिताभ्यां त्वया रणे ।
धृष्टद्युम्नशिखण्डिभ्यां द्रोणभीष्मौ निपातितौ ॥ ११
को हि शक्तो रणे पार्थ भारतानां महारथौ ।
भीष्मद्रोणौ युधा जेतुं शक्रतुल्यपराक्रमौ ॥ १२

रत्निस्त्वेकविंशत्यङ्गुलः । अष्टानां रत्नीनां अष्टषष्ट्यधिकं शतं अङ्गुलानि च भवन्ति ॥ २३ ॥ निष्कालिकं निर्गतः कालयिता जेतास्येति तम् ॥ २८ ॥ षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

को हि शान्तनवं भीष्मं द्रोणं वैकर्तनं कृपम् ।
द्रौणिं च सौमदत्तिं च कृतवर्माणमेव च ॥ १३
सैन्धवं मद्रराजं च राजानं च सुयोधनम् ।
वीरान्कृतास्त्रान्समरे सर्वानेवानिवर्तिनः ॥ १४
अक्षौहिणीपतीनुग्रान्संहतान्युद्धदुर्मदान् ।
त्वामृते पुरुषव्याघ्र जेतुं शक्तः पुमानिह ॥ १५
श्रेण्यश्च बहुलाः क्षीणाः प्रदीर्णाश्वरथद्विपाः ।
नानाजनपदाश्चोग्राः क्षत्रियाणाममर्षिणाम् ॥ १६
गणाश्च दासमीयानां वसातीनां च भारत ।
प्राच्यानां वाटधानानां भोजानां चाभिमानिनाम्
उदीर्णाश्वगजा सेना सर्वक्षत्रस्य भारत ।
त्वां समासाद्य निधनं गता भीमं च भारत ॥ १८
उग्राश्च भीमकर्माणस्तुषारा यवनाः खशाः ।
दार्वाभिसारा दरदाः शका माठरतङ्गणाः ॥ १९
आन्ध्रकाश्च पुलिन्दाश्च किराताश्चोग्रविक्रमाः ।
म्लेच्छाश्च पर्वतीयाश्च सागरानूपवासिनः ॥ २०
संरम्भिणो युद्धशौण्डा बलिनो दण्डपाणयः॥२१
एते सुयोधनस्यार्थे संरब्धाः कुरुभिः सह ।
न शक्या युधि निर्जेतुं त्वदन्येन परंतप ॥ २२
धार्तराष्ट्रमुदग्रं हि व्यूढं दृष्ट्वा महद्बलम् ।
यदि त्वं न भवेस्त्राता प्रतीयात्को नु मानवः ॥ २३
तत्सागरमिवोद्धूतं रजसा संवृतं बलम् ।
विदार्य पाण्डवैः क्रुद्धैस्त्वया गुप्तैर्हतं विभो ॥ २४
मागधानामधिपतिर्जयत्सेनो महाबलः ।
अद्य सप्तैव चाहानि हतः सङ्ख्येऽभिमन्युना ॥२५
ततो दशसहस्राणि गजानां भीमकर्मणाम् ।
जघान गदया भीमस्तस्य राज्ञः परिच्छदम् ॥२६
तथान्येऽभिहता नागा रथाश्च शतशो बलात् ।
तदेवं समरे पार्थ वर्तमाने महाभये ॥ २७
भीमसेनं समासाद्य त्वां च पाण्डव कौरवाः ।
सवाजिरथमातङ्गा मृत्युलोकमितो गताः ॥ २८
तथा सेनामुखे तत्र निहते पार्थ पाण्डवैः ।
भीष्मः प्रासृजदुग्राणि शरजालानि मारिष ॥ २९
सचेदिकाशिपाञ्चालान्करूशान्मात्स्यकेकयान् ।
शरैः प्रच्छाद्य निधनमनयत्परमास्त्रवित् ॥ ३०
तस्य चापच्युतैर्बाणैः परदेहविदारणैः ।
पूर्णमाकाशमभवद्रुक्मपुङ्खैरजिह्मगैः ॥ ३१
हन्याद्रथसहस्राणि एकैकेनैव मुष्टिना ।
लक्षं नरद्विपान्हत्वा समेतान्समहाबलान् ॥ ३२
गत्या दशम्या ते गत्वा जघ्नुर्वाजिरथद्विपान् ।
हित्वा नवगतीर्दुष्टाः स बाणानाहवेऽत्यजत् ॥ ३३
दिनानि दश भीष्मेण निघ्नता तावकं बलम् ।
शून्याः कृता रथोपस्था हताश्च गजवाजिनः ॥ ३४
'दशमेऽहनि संप्राप्ते कृत्वा घोरं पराक्रमम् ।'
दर्शयित्वाऽऽत्मनो रूपं रुद्रोपेन्द्रसमं युधि ॥ ३५
पाण्डवानामनीकानि प्रविगाह्य विशांपते ।
विनिघ्नन्पृथिवीपालांश्चेदिपाञ्चालकेकयान् ॥ ३६
अहनत्पाण्डवीं सेनां रथाश्वगजसंकुलाम् ।
मज्जन्तमप्लवे मन्दमुज्जिहीर्षुः सुयोधनम् ॥ ३७
तथा चरन्तं समरे तपन्तमिव भास्करम् ।
पदातिकोटिसाहस्राः प्रवरायुधपाणयः ॥ ३८
न शेकुः सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः ।
विचरन्तं तथा तं तु संग्रामे जितकाशिनम् ॥ ३९
सर्वोद्यमेन महता पाण्डवान्समभिद्रवत् ।
स तु विद्राव्य समरे पाण्डवान्सृञ्जयानपि ।
एक एव रणे भीष्म एकवीरत्वमागतः ॥ ४०
तं शिखण्डी समासाद्य त्वया गुप्तो महाव्रतम् ।
जघान पुरुषव्याघ्रं शरैः सन्नतपर्वभिः ॥ ४१
स एष पतितः शेते शरतल्पे पितामहः ।
त्वां प्राप्य पुरुषव्याघ्रं वृत्रः प्राप्येव वासवम् ॥४२
द्रोणः पञ्चदिनान्युग्रो विधम्य रिपुवाहिनीम् ।
कृत्वा व्यूहमभेद्यं च पातयित्वा महारथान् ॥४३
जयद्रथस्य समरे कृत्वा रक्षां महारथः ।
अन्तकप्रतिमश्चोग्रो रात्रियुद्धेऽदहत्प्रजाः ॥ ४४
दग्ध्वा योधाञ्छरैर्वीरो भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नं समासाद्य स गतः परमां गतिम् ॥ ४५

यदि त्वं त्राता न भवेस्तर्हि तद्धार्तराष्ट्रं बलं कोनु प्रतीयाद्गच्छेदिति संबन्धः ॥ २३ ॥

यदि वाऽद्य भवान्युद्धे सूतपुत्रमुखान्रथान् ।
नावारयिष्यः संग्रामे न स्म द्रोणो व्यनङ्क्ष्यत ४६
भवता तु बलं सर्वं धार्तराष्ट्रस्य वारितम् ।
ततो द्रोणो हतो युद्धे पार्षतेन धनञ्जय ॥ ४७
कश्च शक्तो रणे कर्तुं त्वदन्यः पुरुषध्रुवः ।
यादृशं ते कृतं पार्थ जयद्रथवधं प्रति ॥ ४८
निवार्य सेनां महतीं हत्वा शूरांश्च पार्थिवान् ।
निहतः सैन्धवो राजा त्वयाऽस्त्रबलतेजसा ॥ ४९
आश्चर्यं सिन्धुराजस्य वधं जानन्ति पार्थिवाः ।
अनाश्चर्यं हि तत्त्वत्तस्त्वं हि पार्थ महारथः ॥ ५०
त्वां हि प्राप्य रणे क्षत्रमेकाहादिति भारत ।
नश्यमानमहं युक्तं मन्येयमिति मे मतिः ॥ ५१
सेयं पार्थ चमूर्घोरा धार्तराष्ट्रस्य संयुगे ।
हतसर्वस्वभूयिष्ठा भीष्मद्रोणौ हतौ तथा ॥ ५२
शीर्णप्रवरयोधाढ्या हतवाजिरथद्विपा ।
हीना सूर्येन्दुनक्षत्रैर्द्यौरिवाभाति भारती ॥ ५३
विध्वस्ता हि रणे पार्थ सेनेयं भीमविक्रम ।
आसुरीव महासेना देवराजपराक्रमैः ॥ ५४
तेषां हतावशिष्टास्तु सन्ति पञ्च महारथाः ।
द्रौणिश्च कृतवर्मा च कर्णो मद्राधिपः कृपः ॥ ५५
तांस्त्वमद्य नरव्याघ्र हत्वा पञ्च महारथान् ।
हतामित्रः प्रयच्छोर्वीं राज्ञे सद्वीपपत्तनाम् ॥ ५६
साकाशजलपातालां सपर्वतमहावनाम् ।
प्रयच्छामितवीर्याय पार्थायाद्य वसुन्धराम् ॥ ५७
एतां पुरा विष्णुरिव हत्वा दैतेयदानवान् ।
प्रयच्छ मेदिनीं राज्ञे शक्रायैव हरिर्यथा ॥ ५८
अद्य मोदन्तु पाञ्चाला निहतेष्वरिषु त्वया ।
विष्णुना निहतेष्वेव दानवेयेषु देवताः ॥ ५९
यदि वा द्विपदां श्रेष्ठं द्रोणं मानयतो गुरुम् ।
अश्वत्थाम्नि कृपा तेऽस्ति कृपे वाचार्यगौरवात् ६०
अत्यन्तापचितान्बन्धून्मानयन्मातृबान्धवान् ।
कृतवर्माणमासाद्य न नेष्यसि यमक्षयम् ॥ ६१
भ्रातरं मातुरासाद्य शल्यं मद्रजनाधिपम् ।
यदि त्वमरविन्दाक्ष दयावान्न जिघांससि ॥ ६२
एतत्ते सुकृतं कर्म नात्र किंचन विद्यते ।
वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन ॥ ६३
इमं पापमतिं क्षुद्रमत्यन्तं पाण्डवान्प्रति ।
कर्णमद्य नरश्रेष्ठ जहि पार्थ शितैः शरैः ॥ ६४
दहने यत्सपुत्राया निशि मातुस्तवानघ ।
द्यूतार्थे यच्च युष्मासु प्रावर्तत सुयोधनः ।
तस्य सर्वस्य दुष्टात्मा कर्णो वै मूलमित्युत ॥ ६५
प्रोत्साहयति दुष्टात्मा धार्तराष्ट्रं सुदुर्मतिम् ।
समितौ गदते कर्णस्तमद्य जहि भारत ॥ ६६
यश्च युष्मासु पापं वै धार्तराष्ट्रः प्रयुक्तवान् ।
तस्य सर्वस्य दुर्बुद्धिः कर्णो मूलमिहार्जुन ॥ ६७
कर्णं हि मन्यते त्राणं नित्यमेव सुयोधनः ।
ततो मामपि संरब्धो निग्रहीतुं पराक्रमात् ॥ ६८
स्थिता बुद्धिर्नरेन्द्राणां धार्तराष्ट्रस्य चोभयोः ।
कर्णः पार्थान्रणे सर्वान्नाशयिष्यति सायकैः ॥ ६९
कर्णमाश्रित्य कौन्तेय धार्तराष्ट्रस्य विग्रहः ।
रुचितो भवता सार्धं जानतोऽपि बलं तव ॥ ७०
कर्णो जल्पति वै नित्यमहं पार्थान्समागतान् ।
वासुदेवं च दाशार्हं विजेष्यामि महारणे ।
समितौ वल्गते कर्णस्तमद्य जहि फल्गुन ॥ ७१
यच्च युष्मासु पापं वै धार्तराष्ट्रः प्रतापवान् ।
सभायां कृतवान्नित्यं कर्णमाश्रित्य वै पुरा ॥ ७२
यच्च तं धार्तराष्ट्राणां षड्भिः शूरैर्महारथैः ।
पश्यतां संवृतं शूरं सौभद्रमपराजितम् ॥ ७३
द्रोणद्रौणिकृपान्वीरान्कम्पयानं महेषुभिः ।
विधमन्तमनीकानि प्रमथन्तं महारथान् ॥ ७४
मनुष्यवाजिमातङ्गान्प्रेषयन्तं यमक्षयम् ।
शरैः सौभद्रमायान्तं दहन्तमरिवाहिनीम् ॥ ७५
निर्मनुष्याश्च मातङ्गा विरथाश्च महारथाः ।
प्रद्रवन्ति स्म समरे दिशो भीताऽभिमन्यवे ॥ ७६
विगतासूंश्च तुरगान्पत्तीन्व्यायुधजीवितान् ।
कुर्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करम् ।

वांहीति । क्षणेन सर्वं भस्मीकर्तुं समर्थं त्वां प्राप्य एकाहा-
न्नश्यमानं क्षत्रं युक्तं बलवत्तरं मन्येयं जानीयाम् । क्षणेन
नाश्यमपि पूर्णैकाहपर्यन्तं स्थायित्वादिति भावः ॥ ५१ ॥

तन्मे दहन्ति गात्राणि सखे सत्येन ते शपे ॥ ७७
यत्तदा मामन्सुदुष्टात्मा कर्णो विनिहतः प्रभुः ।
न शक्तो ह्यभिमन्योस्तु कर्णः स्थातुं रणाग्रतः ७८
सौभद्रशरनिर्भिन्नो विसंज्ञः शोणितोक्षितः ।
निश्वसन्क्रोधसंदीप्तो विमुखः सायकार्दितः॥ ७९
तस्थौ स विह्वलः सङ्ख्ये प्रहारजनितच्छविः ।
अपयानकृतोत्साहो निरुत्साहश्च भारत ॥ ८०
दुर्योधनं रणे दृष्ट्वा लज्जमानो मुहुर्मुहुः ।
नापयासीत्ततः पार्थ सोऽभिमन्योर्महारणे ॥ ८१
दृष्ट्वा द्रोणं वधोपायमभिमन्योश्च पृष्टवान् ।
श्रुत्वा द्रोणवचः क्रूरं ततश्चिच्छेद कार्मुकम् ॥ ८२
ततश्छिन्नायुधं तेन दृष्ट्वा पञ्च महारथाः ।
स चैव निकृतिप्राज्ञः प्राहिणोच्छरवृष्टिभिः ॥ ८३
प्रहसन्स तु दुष्टात्मा कर्णो राजा च कौरवः ।
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ।
प्रमुखे पाण्डवेयानां कुरूणां चैव पश्यताम् ॥ ८४
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं पृथुश्रोणि वृणीष्व मृदुभाषिणि ॥ ८५
एषा त्वं धृतराष्ट्रस्य दासीभूता निवेशनम् ।
प्रविशारालपक्ष्माक्षि न सन्ति पतयस्तव ॥ ८६
न पाण्डवाः प्रभवन्ति तव कृष्णे कथंचन ।
दासभार्या च पाञ्चालि स्वयं दासी च शोभने ॥ ८७
अद्य दुर्योधनो राजा पृथिव्यां नृपतिः स्मृतः ।
सर्वे चास्य महिपाला योगक्षेममुपासते ॥ ८८
पश्येदानीं यदा भद्रे निविष्टाः पाण्डवाः समम् ।
अन्योन्यं समुदीक्षन्ते धार्तराष्ट्रस्य तेजसा ॥ ८९
व्यक्तं षण्डतिला ह्येते नरके च निमज्जिताः ।
प्रेष्यवच्चापि राजानमुपस्थास्यन्ति कौरवम् ॥ ९०
उक्तवान्स च पापात्मा तथा परमदुर्मतिः ।
पापः पापवचः कर्णः पश्यतस्ते धनञ्जय ॥ ९१
अस्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः ।
शमयन्ति शिलाधौता नाशयन्तोऽस्य जीवितम् ॥
अद्य कर्णं रणे ग्रस्तं पश्यन्तु कुरवस्त्वया ।
स्वर्गावतरणे यत्नं स्वर्गद्वारगतं यथा ॥ ९३
अद्य ते समरे वीर्यं पश्यन्तु कुरुयोधिनः ।
सूतपुत्रे हते पार्थ जानन्तु त्वां महारथम् ॥ ९४
अद्य काकबला गृध्रा वायसा जम्बुकास्तथा ।
विप्रकर्षन्तु गात्राणि सूतपुत्रस्य मारिष ॥ ९५
अद्याधिरथिराक्षिप्तो निहतश्च त्वया रणे ।
कुरूणां शोकमाधत्तां पाण्डवानां मुदं तदा ॥ ९६
अद्य त्वां प्रतिमर्दन्तु पाञ्चालाः पाण्डवैः सह ।
यथा वृत्रवधे वृत्ते देवाः सर्वे शतक्रतुम् ॥ ९७
अद्य कर्णं रणे हत्वा प्राप्य चैवोत्तमं यशः ।
विशोको विज्वरः पार्थ भव बन्धुपुरस्कृतः॥ ९८
नरसिंहवपुः कृत्वा यथा शस्तो महासुरः ।
हिरण्यकशिपुर्दैत्यो विष्णुना प्रभविष्णुना ॥ ९९
तथा त्वमपि राधेयं घोरां कृत्वा महातनुम् ।
जहि युद्धे महाबाहो त्रायस्व च भयात्स्वकान् १००
कर्णं हाहाकृतं दीनं विषण्णं त्वच्छरार्दितम् ।
प्रपतन्तं महीं कर्णं पश्यन्तु वसुधाधिपाः ॥ १०१
तं च स्वशोणिते मग्नं शयानं पतितं भुवि ।
अपविद्धायुधं कर्णमद्य पश्यन्तु बान्धवाः ॥ १०२
तच्चैवाद्य महत्कर्म गाण्डीवप्रेषितैः शरैः ।
रथोपस्थे विशीर्येत ताराराज इवाम्बरात् ॥ १०३
आशु चाद्य शरास्तस्य संपतन्तो महाजवैः ।
त्वच्छरैः संनिकृत्ताग्रा विशीर्यन्ते महीतले ॥ १०४
त्वया चाद्य हते तस्य विक्रमे भरतर्षभ ।
विमुखाः सर्वराजानो भवन्तु गतजीविताः ॥ १०५
तथा चाधिरथौ याते प्रयान्तु कुरवो दिशः ।
मन्वानास्तं रथश्रेष्ठं सर्वलोकेषु धन्विनाम् ॥ १०६
स वै चाद्य भयात्त्यक्त्वा धार्तराष्ट्रो महाचमूम् ।
दुर्योधनो भयोद्विग्नो द्रवतु स्वं निवेशनम् ॥ १०७
तथा चाद्य हतं श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
क्षणेन निपतेद्भूमौ विसंज्ञो वै महीपतिः ॥ १०८
अद्य जानन्तु ते पार्थ विक्रमं सर्वयोधिनः ।
यदुवाच सभामध्ये परुषं भारत त्वयि ॥ १०९
यानि चान्यानि दुष्टात्मा पापानि कृतवांस्त्वयि ।
तान्यद्य भरतश्रेष्ठ नाशयन्तु शरास्तव ॥ ११०

शान्तिं कुरु परिक्लेशा कृष्णायाः शत्रुतापन ।
हत्वा शत्रुं रणे श्लाघ्यं गर्जन्तमतिपौरुषम् ॥ १११
अद्य चाधिरथिर्विद्धस्तव बाणैः समन्ततः ।
मन्यतां त्वां नरव्याघ्र प्रवरं सर्वधन्विनाम्॥ ११२
गाण्डीवप्रसृतान्बाणानद्य गात्रस्पृशः शरान् ।
यातु कर्णो रणे पार्थ श्वाविच्छललतो यथा ॥११३
तं कथं कर्णमासाद्य विद्रवेयुर्महारथाः ।
यस्त्वेकः सर्वपाञ्चालानहन्यहनि नाशयन् ।
कालवच्चरते वीर पाञ्चालानां रथव्रजे ॥ ११४
तमप्यासाद्य समरे मित्रार्थे मित्रवत्सल ।
तथा ज्वलन्तमस्त्रैश्च शूरं सर्वधनुष्मताम् ।
निर्दहन्तं समारूढं दुर्धर्षं द्रोणमञ्जसा ॥ ११५
ते नित्यमुदिता जेतुं युधि शत्रुमरिन्दमाः ।
न चेदाधिरथेर्भीताः पाञ्चालाः स्युः पराङ्मुखाः॥
तेषामापततां शूरः पाञ्चालानां तरस्विनाम् ।
आदत्तामूञ्शरैः कर्णः पतङ्गानामिवानलः ॥११७
एते द्रवन्ति पाञ्चाला द्राव्यन्ते योधिभिर्ध्रुवम् ।
कर्णेन भरतश्रेष्ठ पश्यपश्य तथाकृतान् ॥ ११८
तान्समारोहतः शूरान्मित्रार्थे त्यक्तजीवितान् ।
निस्तारय महाबाहो कर्णाख्यात्पावकोपमात्॥११९
अस्त्रं हि रामात्कर्णेन भार्गवादृषिसत्तमात् ।
यदवाप्तं तदा घोरं तस्य रूपमुदीर्यते ॥ १२०
तापनं सर्वसैन्यस्य घोररूपं भयानकम् ।
यमाश्रित्य महासेना ज्वलते स्वेन तेजसा ॥ १२१
एते चरन्ति संग्रामे कर्णचापच्युताः शराः ।
भ्रमया इह शत्रूणां घातयन्तो जनान्प्रभो ॥ १२२
एते भ्रमन्ति पाञ्चाला उत्क्रमन्ति च मारिष ।
कर्णास्त्रं समरे प्राप्य दुर्निवार्यं महात्मभिः ॥ १२३
एष भीमो दृढक्रोधो वृतः पार्थ समन्ततः ।
सृञ्जयैर्योऽजयत्कर्णं पीड्यते निशितैः शरैः ॥१२४
पाञ्चालान्सृञ्जयांश्चैव पाण्डवांश्चैव भारत ।
उपेक्षितो दहेत्कर्णो रोगो देहमिवान्तकः ॥ १२५
नान्यं त्वत्तो हि पश्यामि योधं यौधिष्ठिरे बले ।
यः समासाद्य राधेयं स्वस्तिमानाव्रजेद्गृहान् ॥१२६
तमद्य निशितैर्बाणैर्निहत्य भरतर्षभ ।
यथा प्रतिज्ञां त्वं पार्थ तीर्त्वा कीर्तिमवाप्स्यसि ॥
त्वं हि शक्तो रणे कर्णं विजेतुं सह पार्थिवैः ।
नान्यो युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ १२८
एतत्कृत्वा महत्कर्म हत्वा कर्णं महारथम् ।
कृतार्थः सफलः पार्थ सुखी भव नरोत्तम ॥ १२९

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

अर्जुनेन कृष्णाग्रे कर्णवधानन्तरभाव्यर्थानुवर्णनपूर्वकं तद्वधप्रतिज्ञा ॥ १ ॥

सञ्जय उवाच ।
स केशवस्य बीभत्सुः श्रुत्वा भारत भाषितम् ।
विशोकः संप्रहृष्टश्च क्षणेन समपद्यत ॥ १
ततो ज्यामभिमृज्याशु व्याक्षिपद्गाण्डिवं धनुः ।
दध्रे कर्णविनाशाय केशवं चाभ्यभाषत ॥ २
त्वया नाथेन गोविन्द ध्रुव एव जयो मम ।
प्रसन्नो यस्य भगवान्भूतभव्यभविष्यकृत् ॥ ३
त्वत्सहायो ह्यहं कृष्ण त्रींल्लोकान्वै समागतान् ।
प्रापयेयं परं लोकं किमु कर्णं महाहवे ॥ ४
पश्यामि द्रवतीं सेनां पाञ्चालानां जनार्दन ।
पश्यामि कर्णं समरे विचरन्तमभीतवत् ॥ ५
भार्गवास्त्रं च पश्यामि ज्वलन्तं कृष्ण सर्वशः ।
सृष्टं कर्णेन वार्ष्णेय शक्रेणेव महाशनिम् ॥ ६
अनेन खलु संग्रामे यत्तु कृष्ण मया कृतम् ।
कथयिष्यन्ति भूतानि यावद्भूमिर्धरिष्यति ॥ ७
अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे ।
गाण्डीवमुक्ताः क्षिण्वन्तो मम हस्तप्रचोदिताः ॥८
अद्य राजा धृतराष्ट्रः स्वां बुद्धिमवमंस्यते ।

परिक्लेशा परिक्लेशानाम् ॥१११॥ सप्तसप्ततितमोऽध्यायः ॥७७॥

ज्वलन्तम् । पुंस्त्वमार्षम् ॥ ६ ॥

दुर्योधनमराज्यार्हं यया राज्येऽभ्यषेचयत् ॥ ९
अद्य राज्यात्सुखाच्चैव श्रियो राष्ट्रात्तथा पुरात् ।
पुत्रेभ्यश्च महाबाहो धृतराष्ट्रो विमोक्ष्यति ॥ १०
गुणवन्तं हि यो हित्वा निर्गुणं कुरुते प्रभुम् ।
स शोचति चिरं कृष्ण क्षिप्रमेवागते क्षये ॥ ११
यथा च पुरुषः कश्चिच्छित्त्वा चाम्रवणं महत् ।
पलाशसेचने बुद्धिं कृत्वा शोचति मन्दधीः ॥ १२
दृष्ट्वा पुष्पं पले गृध्नुः फलं दृष्ट्वाऽनुशोचति ।
तथेदं धृतराष्ट्रस्य पुष्पलुब्धस्य मानद ।
फलं दृष्ट्वा भृशं दुःखं भविष्यति जनार्दन ॥ १३
मृतपुत्रे हते त्वद्य निराशो भविता प्रभुः ॥ १४
अद्य दुर्योधनो राज्याज्जीविताच्च निराशकः ।
भविष्यति हते कर्णे कृष्ण सत्यं ब्रवीमि ते ॥ १५
अद्य दृष्ट्वा मया कर्णं शरैर्विशकलीकृतम् ।
स्मरतां तव वाक्यानि शमं प्रति जनेश्वरः ॥ १६
अद्यासौ सौबलः कृष्ण ग्लहाञ्जानातु वै शरान् ।
दुरोदरं च गाण्डीवं मण्डलं च रथं मम ॥ १७
अद्य कुन्तीसुतस्याहं दृढं राज्ञः प्रजागरम् ।
व्यपनेष्यामि गोविन्द हत्वा कर्णं शितैः शरैः ॥ १८
अद्य कुन्तीसुतो राजा हते सूतसुते मया ।
सुप्रहृष्टमनाः प्रीतश्चिरं सुखमवाप्स्यति ॥ १९
अद्य चाहमनाधृष्यं केशवाप्रतिमं शरम् ।
उत्स्रक्ष्यामीह यः कर्णं जीविताद्भ्रंशयिष्यति ॥ २०
यस्य चैतद्व्रतं मह्यं वधे किल दुरात्मनः ।
पादौ न धावये तावद्यावद्धन्यां न फल्गुनम् ॥ २१
मृषा कृत्वा व्रतं तस्य पापस्य मधुसूदन ।
पातयिष्ये रथात्कायं शरैः सन्नतपर्वभिः ॥ २२
योऽसौ रणे नरं नान्यं पृथिव्यामनुमन्यते ।
तस्याद्य सूतपुत्रस्य भूमिः पास्यति शोणितम् ॥ २३
अपतिर्ह्यसि कृष्णेति सूतपुत्रो यदब्रवीत् ।
धृतराष्ट्रमते कर्णः श्लाघमानः स्वकान्गुणान् ॥ २४
अनृतं तत्करिष्यन्ति मामका निशिताः शराः ।
आशीविषा इव क्रुद्धास्तस्य पास्यन्ति शोणितम् २५
मया हस्तवता मुक्ता नाराचा वैद्युतत्विषः ।
गाण्डीवसृष्टा दास्यन्ति कर्णस्य परमां गतिम् ॥ २६
अद्य तप्स्यति राधेयः पाञ्चालीं यत्तदब्रवीत् ।
सभामध्ये वचः क्रूरं कुत्सयन्पाण्डवान्प्रति ॥ २७
एते षण्डतिलाः कृष्णे निर्वीर्या हतविक्रमाः ।
अहं वः पाण्डवेयेभ्यो भयात्रास्येति चाब्रवीत् ।
हन्ताऽहं पाण्डवान्सर्वान्सपुत्रानिह भारत ॥ २८
अनृतं तत्करिष्यन्ति मामका निशिताः शराः ।
हते वैकर्तने कर्णे सूतपुत्रे दुरात्मनि ॥ २९
यस्य वीर्यं समाश्रित्य धार्तराष्ट्रो बृहन्मनाः ।
तमद्य कर्णं हन्तास्मि समरे मधुसूदन ॥ ३०
अद्य कर्णे हते कृष्ण धार्तराष्ट्राः सराजकाः ।
विद्रवन्ति दिशो भीताः सिंहं दृष्ट्वा मृगा इव ॥ ३१
अद्य दुर्योधनो राजा पृथिवीं नान्ववेक्षते ।
हते कर्णे मया सङ्ख्ये सपुत्रे ससुहृज्जने ॥ ३२
अद्य कर्णं हतं दृष्ट्वा धार्तराष्ट्रोऽत्यमर्षणः ।
जानातु मां रणे कृष्ण प्रवरं सर्वधन्विनाम् ॥ ३३
सपुत्रपौत्रः सामात्यः ससुहृच्च निराशिषः ।
पित्र्ये राज्ये निराशश्च धार्तराष्ट्रो निराश्रयः ३४
अद्य राजा धर्मपुत्रो हतामित्रो भविष्यति ।
अद्य दुर्योधनो दीप्तां श्रियं राज्यं च हास्यति ॥ ३५
हते वैकर्तने कर्णे भीष्मे द्रोणे च संयुगे ।
कातरं तद्बलं कृष्ण प्रविष्टं मोक्ष्यते तु यत् ॥ ३६
अद्यप्रभृति राजानं धर्मपुत्रं युधिष्ठिरम् ।
अनुमोदन्तु सुहृदो ज्ञातपूर्वाश्च ब्राह्मणाः ॥ ३७
अद्य तं निहतं श्रुत्वा कर्णं वैकर्तनं मया ।
करोतु पटहोन्मिश्रं देवतास्थानपूजनम् ॥ ३८
अद्य कृष्ण हते कर्णे कुरुतां चिरसंभृतम् ।
याजनं वै महाबाहो देवतानां यथाविधि ॥ ३९
अद्य त्वम्बा च कृष्णा च त्वरमाणे परस्परम् ।
सस्वजेतां हृषीकेश संपूर्णेऽस्मिन्मनोरथे ॥ ४०
अद्य त्वं पाण्डवो ज्येष्ठस्तथाऽऽर्यश्च वृकोदरः ।
उदीक्षेतां हते कर्णे कृष्ण सौम्येन चक्षुषा ॥ ४१

स्मरतां स्मरतु ॥ १६ ॥ मण्डलं द्यूते शारीस्थापनपट्टम् । दुरोदरं पाशम् ॥ १७ ॥ अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

अभिवाद्य गुरूनद्य कनिष्ठैश्चाभिवादितः ।
सस्वजानो ह्यहं दोर्भ्यां प्राप्स्यामि विपुलं यशः ४२
अद्य कर्णे हते कृष्ण प्रशंसन्तोऽर्जुनं सुराः ।
त्रिदिवं यान्तु संहृष्टाः संगताश्च तपोधनाः ॥ ४३
अद्य लोकास्त्रयः कृष्ण जानन्तु मम पौरुषम् ।
दृष्ट्वा कर्णं हतं युद्धे द्वैरथे सव्यसाचिना ॥ ४४
अद्याहमनृणः कृष्ण भविष्यामि धनुष्मताम् ।
रथस्य च शराणां च धनुषो गाण्डिवस्य च ॥ ४५
मोक्ष्याम्यद्य महद्दुःखं त्रयोदशसमार्जितम् ।
हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव ॥ ४६
अद्य कर्णे हते युद्धे सोमकानां महारथाः ।
कृतकार्याः प्रमोदन्तां मित्रकार्येप्सवो युधि ॥ ४७
न जाने च कथं प्रीतिः शैनेयस्याद्य माधव ।
अहं हत्वा रणे कर्णं पुत्रांश्चास्य जयाधिकान् ।
प्रीतिं दास्यामि भीमस्य सात्यकेर्यमयोस्तथा ४८
धृष्टद्युम्नस्य वीरस्य तथैव च शिखण्डिनः ।
अद्यानृण्यं गमिष्यामि हत्वा कर्णं महाहवे ।
धर्मराजस्य संश्रुत्य वार्ष्णेयशपथं मिथः ॥ ४९
अद्य पश्यन्तु सङ्ग्रामे धनञ्जयममर्षणम् ।
युध्यन्तं कौरवैः सार्धं पातयन्तं च सूतजम् ॥ ५०
भवत्समक्षं वक्ष्यामि पुनरेवात्मसंस्तवम् ।
इत्यप्यमित्रप्रवरमद्याहं हन्मि सूतजम् ॥ ५१
धनुर्वेदे मत्समः को नु लोके
पराक्रमे वा मम कोऽस्ति तुल्यः ।
को वाऽप्यन्यो मत्समोऽस्ति क्षमायां
ममानृशंस्ये सदृशोऽस्ति कोऽन्यः ॥ ५२
अहं धनुष्मान्ससुरासुरांश्च
सर्वाणि भूतानि च संगतानि ।
स्वबाहुवीर्याद्गमये पराभवं
मत्पौरुषं विद्धि परं परेभ्यः ॥ ५३
शरार्चिषा गाण्डिवेनाहमेकः
सर्वान्कुरून्बाह्लिकांश्चाभिपन्नः ।
हिमात्यये कक्षगतो यथाऽग्निः
स निर्दहेयं सहसा प्रगृह्य ॥ ५४
पाणी पृषत्कालिखितौ ममैतौ
धनुश्च सव्ये विततं सबाणम् ।
पादौ चेमौ सुरथौ सध्वजौ च
न मादृशं युद्धगतं भजन्ति ॥ ५५

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

द्वन्द्वयुद्धम् ॥ १ ॥

धृतराष्ट्र उवाच ।
समागमे पाण्डवसृञ्जयानां
महाभये मामकानामगाधे ।
धनंजये तात रणाय याते
कर्णेन तद्युद्धमथोऽत्र कीदृक् ॥ ] १
[सञ्जय उवाच ।
तेषामनीकानि महाध्वजानि
रणे समृद्धानि सुसंगतानि ।
भेरीनिनादोन्मुखराण्यगर्ज-
न्मेघा इव प्रावृषि मारुतास्ताः ॥ २
महागजाभ्राकुलमस्त्रतोयं
वादित्रनेमीतलशब्दवच्च ।
हिरण्यचित्रायुधविद्युतं च
शरासिनाराचमहास्त्रधारम् ॥ ३
तद्भीमवेगं रुधिरौघवाहि
खड्गाकुलं क्षत्रियजीवघाति ।
अनार्तवं क्रूरमनिष्टवर्षं
बभूव संरम्भकरं प्रजानाम् ॥ ४
एकं रथं संपरिवार्य मृत्युं
नयन्त्यनेके च रथाः समेताः ।
एकस्तथैकं रथिनं रथाग्र्यां-
स्तथा रथश्चापि रथाननेकान् ॥ ५
रथं ससूतं सहयं च कंचि-
त्कश्चिद्रथी मृत्युवशं निनाय ।

निनाय चाप्येकगजेन कश्चि-
द्रथान्बहून्मृत्युवशे तथाश्वान् ॥ ६
रथान्समूतान्सहयान्गजांश्च
सर्वानरीन्मृत्युवशं शरौघैः ।
निन्ये हयांश्चैव तथा ससादी-
न्पदातिसङ्घांश्च तथैव पार्थः ॥ ७
कृपः शिखण्डी च रणे समेतौ
दुर्योधनं सात्यकिरभ्यगच्छत् ।
श्रुतश्रवा द्रोणपुत्रेण सार्धं
युधामन्युश्चित्रसेनेन सार्धम् ॥ ८
कर्णस्य पुत्रं तु रथी सुषेणं
समागतं सृञ्जयश्चोत्तमौजाः ।
गान्धारराजं सहदेवोऽक्षधूर्तं
महर्षभं सिंह इवाभ्यधावत् ॥ ९
शतानीको नाकुलिः कर्णपुत्रं
युवा युवानं वृषसेनं शरौघैः ।
समार्पयत्कर्णपुत्रश्च शूरः
पाञ्चालेयं शरवर्षैरनेकैः ॥ १०
रथर्षभः कृतवर्माणमार्च्छ-
न्माद्रीपुत्रो नकुलश्चित्रयोधी ।
पाञ्चालानामधिपो याज्ञसेनिः
सेनापतिः कर्णमार्च्छत्ससैन्यम् ॥ ११
दुःशासनो भारत भारतं तु
व्यात्ताननं क्रूरमिवान्तकाभम् ।
भीमं रणे शस्त्रभृतां वरिष्ठं
भीमं समाच्छैत्तमसह्यवेगम् ॥ १२
कर्णात्मजं तत्र जघान वीर-
स्तथाच्छिनच्चोत्तमौजाः प्रसह्य ।
तस्योत्तमाङ्गं निपपात भूमौ
निनादयद्द्यां निनदेन खं च ॥ १३
सुषेणशीर्षं पतितं पृथिव्यां
विलोक्य कर्णोऽथ तदार्तरूपः ।
क्रोधाद्धयांस्तस्य रथं ध्वजं च
बाणैः सुधारैर्निशितैरकृन्तत् ॥ १४
स तूत्तमौजा निशितैः पृषत्कै-
र्विव्याध खड्गेन च भास्वरेण ।
पार्ष्णिग्रहांश्चैव कृपस्य हत्वा
शिखण्डिवाहं स ततोऽध्यरोहत् ॥ १५
कृपं तु दृष्ट्वा विरथं रथस्थो
नैच्छच्छरैस्ताडयितुं शिखण्डी ।
तं द्रौणिरावार्य रथं कृपस्य
समुज्जह्रे पङ्कगतां यथा गाम् ॥ १६
हिरण्यवर्मा निशितैः पृषत्कै-
स्तवात्मजानामनिलात्मजो वै ।
अतापयत्सैन्यमतीव भीमः
काले शुचौ मध्यगतो यथाऽर्कः ॥ १७

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ॥ ८० ॥

भीमसेनविशोकयोः संवादः ॥ १ ॥

सञ्जय उवाच ।
अथ त्विदानीं तुमुले विमर्दे
द्विषद्भिरेको बहुभिः समावृतः ।
महारणे सारथिमित्युवाच
भीमश्चमूं वाहय धार्तराष्ट्रीम् ।
त्वं सारथे याहि जवेन वाहै-
र्नयाम्येतान्धार्तराष्ट्रान्यमाय ॥ १
संचोदितो भीमसेनेन चैवं
स सारथिः पुत्रबलं त्वदीयम् ।
प्रायात्ततः सत्वरमुग्रवेगो
यतो भीमस्तद्बलं गन्तुमैच्छत् ॥ २

पाञ्चालेयं पाञ्चालीतनयं नाकुलिम् ॥ १० ॥

एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

ततोऽपरे नागरथाश्वपत्तिभिः
प्रत्युद्ययुस्तं कुरवः समन्तात् ।
भीमस्य वाहाग्र्यमुदारवेगं
समन्ततो बाणगणैर्निजघ्नुः ॥ ३

ततः शरानापततो महात्मा
चिच्छेद बाणैस्तपनीयपुङ्खैः ।
ते वै निपेतुस्तपनीयपुङ्खा
द्विधा त्रिधा भीमशरैर्निकृत्ताः ॥ ४

ततो राजन्नागरथाश्वयूनां
भीमाहतानां वरराजमध्ये ।
घोरो निनादः सुमहानभूत्तदा
वज्राहतानामिव पर्वतानाम् ॥ ५

ते वध्यमानाश्च नरेन्द्रमुख्या
निर्भिद्यन्तो भीमशरप्रवेकैः ।
भीमं समन्तात्समरेऽभ्यरोहन्
वृक्षं शकुन्ता इव पुष्पहेतोः ॥ ६

ततोऽभियाते तव सैन्ये स भीमः
प्रादुश्चक्रे वेगमनन्तवेगः ।
यथाऽन्तकाले क्षपयन्दिधक्षु-
र्भूतान्तकृत्काल इवात्तदण्डः ॥ ७

तस्यातिवेगस्य रणेऽतिवेगं
नाशक्नुवन्धारयितुं त्वदीयाः ।
व्यात्ताननस्यापततो यथैव
कालस्य काले हरतः प्रजा वै ॥ ८

ततो बलं भारत भारतानां
प्रदह्यमानं समरे महात्मना ।
भीतं दिशोऽकीर्यत भीमनुन्नं
महानिलेनाभ्रगणा यथैव ॥ ९

ततो धीमान्सारथिमब्रवीद्बली
स भीमसेनः पुनरेव हृष्टः ॥ १०

सूताभिजानीहि परान्स्वकान्वा
रथान्ध्वजांश्चापततः समेतान् ।
युध्यन्ह्यहं नाभिजानामि किंचि-
न्मा सैन्यं स्वं छादयिष्ये प्रमत्तः ॥ ११

अरीन्विशोकाभि निरीक्ष्य सर्वतो
महांश्च मन्युः पुनरेति मां भृशम् ।
राजातुरो नागमद्यत्किरीटी
बहूनि दुःखान्यभिचिन्तयामि ॥ १२

एतद्दुःखं धारये धर्मराजो
यन्मां हित्वा यातवाञ्शत्रुमध्ये ।
नैनं जीवं नाभिजानाम्यजीवं
बीभत्सुं वा तन्ममाद्यातिदुःखम् ॥ १३

सोऽहं द्विषत्सैन्यमुदग्रकल्पं
विनाशयिष्ये परमप्रतीतः ।
एतन्निहत्याजिमध्ये समेतं
प्रीतो भविष्यामि सह त्वयाद्य ॥ १४

सर्वांस्तूणान्सायकानामवेक्ष्य
किं शिष्टं स्यात्सायकानां रथे मे ।
का वा जातिः किं प्रमाणं च तेषां
ज्ञात्वा व्यक्तं तत्समाचक्ष्व सूत ।
'कति वा सहस्राणि कति वा शतानि
ह्याचक्ष्व मे सारथे क्षिप्रमेव ॥ १५

विशोक उवाच ।

सर्वं विदित्वैवमहं वदामि
तवार्थसिद्धिंप्रदमद्य वीर ।
कैकेयकाम्भोजसुराष्ट्रबाह्लिका
म्लेच्छाश्च सुह्माः परतङ्कणाश्च ॥ १६

मद्राश्च वङ्गा मगधाः कुणिन्दा
आनर्तकावर्तकाः पार्वतीयाः ।
सर्वे गृहीतप्रवरायुधास्त्वां
संवेष्ट्य संवेष्ट्य ततो विनेदुः ॥ १७

रथे तवासिन्निशिताः सुपीता-
स्ततो भल्ला द्वादश वै सहस्राः ।'
षण्मार्गणानामयुतानि वीर
क्षुराश्च भल्लाश्च तथायुताख्याः ॥ १८

नाराचानां द्वे सहस्रे च वीर
त्रीण्येव च प्रदराणां स पार्थ ।

प्रदरा बाणविशेषाः ॥ १९ ॥

अस्त्यायुधं पाण्डवेयावशिष्टं
न यद्वहेच्छकटं षड्गवीयम् ॥ १९
एतद्विद्वन्मुञ्च सहस्रशोऽपि
गदासिबाहुद्रविणं च तेऽस्ति ।
प्रासाश्च मुद्गराः शक्तयस्तोमराश्च
माभैषीस्त्वं संक्षयादायुधानाम् ॥ २०
भीमसेन उवाच ।
'अद्यैव नूनं कथयन्तु सिद्धां
मम प्रतिज्ञां सर्वलोके विशोक ।
न मोक्ष्यते समरे भीमसेन
एकः शत्रून्समरे वाप्यजैषीत् ।
आशंसितानामिदमेकमस्तु
तन्मे देवाः सकलं साधयन्तु ॥' २१
मृताद्य मद्बाहुयुतैः समस्ता-
न्समाहनद्भिः पार्थिवानाशुवेगैः ।
च्छन्नं बाणैराहवं घोररूपं
नष्टादित्यं मृत्युलोकेन तुल्यम् ॥ २२
अद्यैतद्वै विदितं पार्थिवानां
भविष्यति ह्याकुमारं च सूत ।
निमग्नो वा समरे भीमसेन
एकः कुरून्वा समरे व्यजैषीत् ॥ २३
सर्वे सङ्ख्ये कुरवो निष्पतन्तु
मां वा लोकाः कीर्तयन्त्वाकुमारम् ।
सर्वानेकस्तानहं पातयिष्ये
ते वा सर्वे भीमसेनं तुदन्तु ॥ २४
आशास्तारः कर्म चाप्युत्तमं ये
तन्मे देवाः सफलं साधयन्तु ।
आयातीह केशवसारथी रथी
शक्रस्तूर्णं यज्ञ इवोपहूतः ॥ २५
ईक्षस्वैतां भारतीं दीर्यमाणा-
मेते कस्माद्विद्रवन्ते नरेन्द्राः ।
व्यक्तं धीमान्सव्यसाची नराग्र्यः
सैन्यं ह्येतच्छादयत्याशु बाणैः ॥ २६
पश्य ध्वजांश्च द्रवतो विशोक
नागान्हयान्पत्तिसङ्घांश्च सङ्ख्ये ।
रथान्विकीर्णाञ्शरशक्तिताडिता-
न्पश्यस्वैतान्रथिनश्चैव सूत ॥ २
आपूर्यते कौरवी चाप्यभीक्ष्णं
सेना ह्यसौ सुभृशं हन्यमाना ।
धनंजयस्याशनितुल्यवेगै-
र्ग्रस्ता शरैः काञ्चनबर्हजालैः ॥ २
एते द्रवन्ति स्म रथाश्वनागाः
पदातिसङ्घानतिमर्दयन्तः ।
संमुह्यमानाः कौरवाः सर्व एव
द्रवन्ति नागा इव दाहभीताः ॥ २
हाहाकृताश्चैव रणे विशोक
मुञ्चन्ति नादान्विपुलान्गजेन्द्राः ॥ ३
विशोक उवाच ।
किं भीम नैनं त्वमिहाशृणोषि
विस्फारितं गाण्डिवस्यातिघोरम् ।
क्रुद्धेन पार्थेन विकृष्यतोऽद्य
कच्चिन्नेमौ तव कर्णौ विनष्टौ ॥ ३
सर्वे कामाः पाण्डव ते समृद्धाः
कपिर्ह्यसौ दृश्यते हस्तिसैन्ये ।
नीलाद्घनाद्विद्युतमुच्चरन्तीं
तथा पश्य विस्फुरन्तीं धनुर्ज्याम् ॥ ३
कपिर्ह्यसौ वीक्षते सर्वतो वै
ध्वजाग्रमारुह्य धनञ्जयस्य ।
वित्रासयन्रिपुसङ्घान्विमर्दे
बिभेम्यस्मादात्मनैवाभिवीक्ष्य ॥ ३
विभ्राजते चातिमात्रं किरीटं
विचित्रमेतच्च धनञ्जयस्य ।
दिवाकराभो मणिरेष दिव्यो
विभ्राजते चैव किरीटसंस्थः ॥ ३
पार्श्वे भीमं पाण्डुराभ्रप्रकाशं
पश्यस्व शङ्खं देवदत्तं सुघोषम् ।
अभीषुहस्तस्य जनार्दनस्य
विगाहमानस्य चमूं परेषाम् ॥ ३
रविप्रभं वज्रनाभं क्षुरान्तं
पार्श्वे स्थितं पश्य जनार्दनस्य ।

चक्रं यशोवर्धनं केशवस्य
सदार्चितं यदुभिः पश्य वीर ॥ ३६
महाद्विपानां सरलद्रुमोपमाः
करा निकृत्ताः प्रपतन्त्यमी क्षुरैः।
किरीटिना तेन पुनः ससादिनः
शरैर्निकृत्ताः कुलिशैरिवाद्रयः ॥ ३७
तथैव कृष्णस्य च पाञ्चजन्यं
महार्हमेतं द्विजराजवर्णम्।
कौन्तेय पश्योरसि कौस्तुभं च
जाज्वल्यमानं विजयां स्रजं च ॥ ३८
ध्रुवं रथाग्र्यः समुपैति पार्थो
विद्रावयन्सैन्यमिदं परेषाम्।
सिताभ्रवर्णैरसितप्रयुक्तै-
र्हयैर्महार्हैं रथिनां वरिष्ठः ॥ ३९
रथान्हयान्पत्तिगणांश्च सायकै-
र्विदारितान्पश्य पतन्त्यमी यथा।
तवानुजेनामरराजतेजसा
महावनानीव सुपर्णवायुना ॥ ४०
चतुःशतान्पश्य रथानिमान्हतान्
सवाजिसूतान्समरे किरीटिना।
महेषुभिः सप्तशतानि दन्तिनां
पदातिसादींश्च रथाननेकशः ॥ ४१
अयं समभ्येति तवान्तिकं बली
निघ्नन्कुरूंश्चित्र इव ग्रहोऽर्जुनः।
समृद्धकामोऽसि हतास्तवाहिता
बलं तवायुश्च चिराय वर्धताम् ॥ ४२
भीमसेन उवाच।
ददानि ते ग्रामवरांश्चतुर्दश
प्रियाख्याने सारथे सुप्रसन्नः।
दासीशतं चापि रथांश्च विंशतिं
यदर्जुनं वेदयसे विशोक ॥ ४३

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

पार्थपराक्रमः ॥ १ ॥ भीमेन दुर्योधनचोदितस्य शकुनेः पराजयः ॥ २ ॥

सञ्जय उवाच।
श्रुत्वा तु रथनिर्घोषं सिंहनादं च संयुगे।
अर्जुनः प्राह गोविन्दं शीघ्रं वाहय वाजिनः ॥ १
अर्जुनस्य वचः श्रुत्वा गोविन्दोऽर्जुनमब्रवीत्।
एष गच्छामि सुक्षिप्रं यत्र भीमो व्यवस्थितः ॥ २
तं यान्तमश्वा हिमशङ्खवर्णाः
सुवर्णमुक्तामणिजालनद्धाः।
जम्भं जिघांसुं प्रगृहीतवज्रं
हया यथा तत्र यथा वहंस्तदा ॥ ३
रथाश्वमातङ्गपदातिसङ्घा
बाणस्वनैर्नेमिखुरस्वनैश्च।
संनादयन्तो वसुधां दिशश्च
क्रुद्धा नृसिंहा जयमभ्युदीयुः ॥ ४
तेषां च पार्थस्य च मारिषासी-
द्देहासुपापक्षपणं सुयुद्धम्।
त्रैलोक्यहेतोरसुरैर्यथासी-
द्देवस्य विष्णोर्जयतां वरस्य ॥ ५
तैरस्तमुच्चावचमायुधं त-
देकः प्रचिच्छेद किरीटमाली।
क्षुरार्धचन्द्रैर्निशितैश्च भल्लैः
शिरांसि तेषां बहुधा च बाहून् ॥ ६
छत्राणि वालव्यजनानि केतू-
नश्वान्रथान्पत्तिगणान्द्विपांश्च।
ते पेतुरुर्व्यां बहुधा विरूपा
वातप्रणुन्नानि यथा वनानि ॥ ७

असितप्रयुक्तैः कृष्णप्रयुक्तैः ॥ ३९ ॥

अशीतितमोऽध्यायः ॥ ८० ॥

सुवर्णजालावनता महागजाः
सवैजयन्तीध्वजयोधकल्पिताः ।
सुवर्णपुङ्खैरिषुभिः समाचिता-
श्चकाशिरे प्रज्वलिता यथाचलाः ॥ ८
विदार्य नागाश्वरथान्धनञ्जयः
शरोत्तमैर्वासववज्रसन्निभैः ।
द्रुतं ययौ कर्णजिघांसया तथा
यथा मरुत्वान्बलभेदने पुरा ॥ ९
ततः स पुरुषव्याघ्रस्तव सैन्यमरिंदमः ।
प्रविवेश महाबाहुर्मकरः सागरं यथा ॥ १०
तं दृष्ट्वास्तावका राजन्रथपत्तिसमन्विताः ।
गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ॥ ११
तेषामापततां पार्थमारावः सुमहानभूत् ।
सागरस्येव क्षुब्धस्य यथा स्यात्सलिलस्वनः ॥१२
ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः ।
अभ्यद्रवन्त संग्रामे त्यक्त्वा प्राणकृतं भयम् ॥ १३
तेषामापततां तत्र शरवर्षाणि मुञ्चताम् ।
अर्जुनो व्यधमत्सैन्यं महावातो घनानिव ॥ १४
तेऽर्जुनं सहिता भूत्वा रथवंशैः प्रहारिणः ।
अभियाय महेष्वासा विव्यधुर्निशितैः शरैः ॥१५
ततोऽर्जुनः सहस्राणि रथवारणवाजिनाम् ।
प्रेषयामास विशिखैर्यमस्य सदनं प्रति ॥ १६
ते वध्यमानाः समरे पार्थचापच्युतैः शरैः ।
तत्रतत्र स्म लीयन्ते भये जाते महारथाः ॥ १७
तेषां चतुःशतान्वीरान्यतमानान्महारथान् ।
अर्जुनो निशितैर्बाणैरनयद्यमसादनम् ॥ १८
ते वध्यमानाः समरे नानालिङ्गैः शितैः शरैः ।
अर्जुनं समभित्यज्य दुद्रुवुर्वै दिशो दश ॥ १९
तेषां शब्दो महानासीद्द्रवतां वाहिनीमुखे ।
मेघौघस्येव भद्रं ते गिरिमासाद्य दीर्यतः ॥ २०
तां तु सेनां भृशं विद्ध्वा द्रावयित्वाऽर्जुनः शरैः ।
प्रायादभिमुखः पार्थः सूतानीकं हि मारिष ॥ २१
तस्य शब्दो महानासीत्परानभिमुखस्य वै ।
गरुडस्येव पततः पन्नगार्थे यथा पुरा ॥ २२

तं तु शब्दमभिश्रुत्य भीमसेनो महाबलः ।
बभूव परमप्रीतः पार्थदर्शनलालसः ॥ २
श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान् ।
त्यक्त्वा प्राणान्महाराज सेनां तव ममर्द ह ॥२
स वायुवीर्यप्रतिमो वायुवेगसमो जवे ।
वायुवद्व्यचरद्भीमो वायुपुत्रः प्रतापवान् ॥ २
तेनार्द्यमाना राजेन्द्र सेना तव विशांपते ।
व्यभ्रश्यत महाराज भिन्ना नौरिव सागरे ॥२
तां तु सेनां तदा भीमो दर्शयन्पाणिलाघवम् ।
शरैरवचकर्तोग्रैः प्रेषयिष्यन्यमक्षयम् ॥ २
तत्र भारत भीमस्य बलं दृष्ट्वातिमानुषम् ।
व्यत्रस्यन्त रणे योधाः कालस्येव युगक्षये ॥ २
तथाऽर्दितान्भीमबलान्भीमसेनेन भारत ।
दृष्ट्वा दुर्योधनो राजा इदं वचनमब्रवीत् ॥ २
सैनिकांश्च महेष्वासान्योधांश्च भरतर्षभ ।
समादिशन्रणे सर्वान्हत भीममिति स्म ह ॥ ३
तस्मिन्हते हतं मन्ये पाण्डुसैन्यमशेषतः ॥ ३
प्रतिगृह्य च तामाज्ञां तव पुत्रस्य पार्थिवाः ।
भीमं प्रच्छादयामासुः शरवर्षैः समन्ततः ॥ ३
गजाश्च बहुला राजन्नराश्च जयगृद्धिनः ।
रथे स्थिताश्च राजेन्द्र परिवव्रुर्वृकोदरम् ॥ ३
स तैः परिवृतः शूरैः शूरो राजन्समन्ततः ।
शुशुभे भरतश्रेष्ठो नक्षत्रैरिव चन्द्रमाः ॥ ३
परिवेषी यथा सोमः परिपूर्णो विराजते ।
स रराज तथा सङ्ख्ये दर्शनीयो नरोत्तमः ।
निर्विशेषो महाराज विजयेनैव संयुगे ॥ ३
तस्य ते पार्थिवाः सर्वे शरवृष्टिं समासृजन् ।
क्रोधरक्तेक्षणाः शूरा हन्तुकामा वृकोदरम् ॥
तां विदार्य महासेनां शरैः सन्नतपर्वभिः ।
निश्चक्राम रणाद्भीमो मत्स्यो जालादिवांभसि
हत्वा दशसहस्राणि गजानामनिवर्तिनाम् ।
नृणां शतसहस्रे द्वे द्वे शते चैव भारत ॥
पञ्च चाश्वसहस्राणि रथानां शतमेव च ।
हत्वा प्रास्यन्दयद्भीमो नदीं शोणितवाहिनीम् ।

शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
नरमीनाश्वनक्रान्तां केशशैवलशाद्वलाम् ॥ ४०
संछिन्नभुजनागेन्द्रां बहुरत्नापहारिणीम् ।
ऊरुग्राहां मज्जपङ्कां शीर्षोपलसमावृताम् ॥ ४१
धनुःकाशां शरावापां गदापरिघकेतनाम् ।
हंसछत्रध्वजोपेतामुष्णीषवरफेनिलाम् ॥ ४२
हारपद्माकरां चैव भूमिरेणूर्मिमालिनीम् ।
आर्यवृत्तवतीं सङ्ख्ये सुतरां भीरुदुस्तराम् ॥ ४३
योधग्राहवतीं सङ्ख्ये वहन्तीं पितृसादनम् ।
क्षणेन पुरुषव्याघ्रः प्रावर्तयत निम्नगाम् ॥ ४४
यथा वैतरणीमुग्रां दुस्तरामकृतात्मभिः ।
तथा दुस्तरणीं घोरां भीरूणां भयवर्धनीम् ॥ ४५
यतोयतः पाण्डवेयः प्रविष्टो रथसत्तमः ।
ततस्ततः प्रापतन्वै योधाः शतसहस्रशः ॥ ४६
एवं दृष्ट्वा कृतं कर्म भीमसेनेन संयुगे ।
दुर्योधनो महाराज शकुनिं वाक्यमब्रवीत् ॥ ४७
जहि मातुल संग्रामे भीमसेनं महाबलम् ।
अस्मिञ्जिते जितं मन्ये पाण्डवेयं महाबलम् ॥ ४८
ततः प्रायान्महाराज सौबलेयः प्रतापवान् ।
रणाय महते युक्तो भ्रातृभिः परिवारितः ॥ ४९
स समासाद्य संग्रामे भीमं भीमपराक्रमम् ।
वारयामास तं वीरो वेलेव मकरालयम् ॥ ५०
संन्यवर्तत तं भीमो वार्यमाणः शितैः शरैः ।
शकुनिस्तस्य राजेन्द्र वामपार्श्वे स्तनान्तरे ।
प्रेषयामास नाराचान्रुक्मपुङ्खाञ्शिलाशितान् ५१
वर्म भित्त्वा तु ते घोराः पाण्डवस्य महात्मनः ।
न्यमज्जन्त महाराज कङ्कबर्हिणवाससः ॥ ५२
सोऽतिविद्धो रणे भीमः शरं रुक्मविभूषितम् ।
प्रेषयामास स रुषा सौबलं प्रति भारत ॥ ५३
तमायान्तं शरं घोरं शकुनिः शत्रुतापनः ।
चिच्छेद सप्तधा राजन्कृतहस्तो महाबलः ॥ ५४
तस्मिन्निपतिते भूमौ भीमः क्रुद्धो विशांपते ।
धनुश्छिच्छेद भल्लेन सौबलस्य हसन्निव ॥ ५५
तदपास्य धनुश्छिन्नं सौबलेयः प्रतापवान् ।
अन्यदादाय वेगेन धनुर्भल्लांश्च षोडश ।
तैस्तस्य तु महाराज भल्लैः सन्नतपर्वभिः ॥ ५६
द्वाभ्यां स सारथिं ह्याच्छेद्भीमं सप्तभिरेव च ।
ध्वजमेकेन चिच्छेद द्वाभ्यां छत्रं विशांपते ।
चतुर्भिश्चतुरो वाहान्विव्याध सुबलात्मजः ॥ ५७
ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
शक्तिं चिक्षेप समरे रुक्मदण्डामयस्मयीम् ॥ ५८
सा भीमभुजनिर्मुक्ता नागजिह्वेव चञ्चला ।
निपपात रणे तूर्णं सौबलस्य महात्मनः ॥ ५९
ततस्तामेव संगृह्य शक्तिं कनकभूषणाम् ।
भीमसेनाय चिक्षेप क्रुद्धरूपो विशांपते ॥ ६०
सा निर्भिद्य भुजं सव्यं पाण्डवस्य महात्मनः ।
निपपात तदा भूमौ यथा विद्युन्नभश्च्युता ॥ ६१
अथोत्क्रुष्टं महाराज धार्तराष्ट्रैः समन्ततः ।
न तु तं ममृषे भीमः सिंहनादं तरस्विनाम् ॥ ६२
अन्यद्गृह्य धनुः सज्यं त्वरमाणो महाबलः ।
मुहूर्तादिव राजेन्द्र च्छादयामास सायकैः ।
सौबलस्य बलं सङ्ख्ये त्यक्त्वा नादं महाबलः ॥ ६३
तस्याश्वांश्चतुरो हत्वा सूतं चैव विशांपते ।
ध्वजं चिच्छेद भल्लेन त्वरमाणः पराक्रमी ॥ ६४
हताश्वं रथमुत्सृज्य त्वरमाणो नरोत्तमः ।
तस्थौ विस्फारयंश्चापं क्रोधरक्तेक्षणः श्वसन् ॥ ६५
शरैश्च बहुधा राजन्भीममाच्छेत्समन्ततः ॥ ६६
प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान् ।
धनुश्चिच्छेद संक्रुद्धो विव्याध च शितैः शरैः ॥ ६७
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
निपपात तदा भूमौ किंचित्प्राणो नराधिपः ॥ ६८
ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशांपते ।
अपोवाह रथेनाजौ भीमसेनस्य पश्यतः ॥ ६९
शकुनिं विह्वलं दृष्ट्वा धार्तराष्ट्राः पराङ्मुखाः ।
प्रदुद्रुवुर्दिशो भीता भीमसेनभयात्प्रभो ॥ ७०
सौबले निर्जिते राजन्भीमसेनेन धन्विना ।
भयेन महताऽऽविष्टः पुत्रो दुर्योधनस्तव ।
अपायाज्जवनैरश्वैः सापेक्षो मातुलं प्रति ॥ ७१

पराङ्मुखं तु राजानं दृष्ट्वा सैन्यानि भारत ।
विप्रजग्मुः समुत्सृज्य द्वैरथानि समन्ततः ॥ ७२
तान्दृष्ट्वा विद्रुतान्सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
जवेनाभ्यापतद्भीमः किरञ्शरशतान्बहून् ॥ ७३
ते वध्यमाना भीमेन धार्तराष्ट्राः पराङ्मुखाः ।
कर्णमासाद्य समरे स्थिता राजन्समन्ततः ॥ ७४
स हि तेषां महावीर्यो द्वीपोऽभूत्सुमहाबलः ।
भिन्ननौका यथा राजन्द्वीपमासाद्य निर्वृताः ॥ ७५
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्यये ।
तथा कर्णं समासाद्य तावकाः पुरुषर्षभ ॥ ७६
समाश्वस्ताः स्थिता राजन्संप्रहृष्टाः परस्परम् ।
समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्तनम् ॥ ७७

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

कर्णपराक्रमवर्णनम् ॥ १ ॥

---

धृतराष्ट्र उवाच ।
ततो भग्नेषु सैन्येषु भीमसेनेन संयुगे ।
दुर्योधनोऽब्रवीत्किं नु सौबलो वाऽपि संजय ॥ १
कर्णो वा जयतां श्रेष्ठो योधा वा मामका युधि ।
कृपो वा कृतवर्मा वा द्रौणिर्दुःशासनोऽपि वा ॥
अत्यद्भुतमहं मन्ये पाण्डवेयस्य विक्रमम् ।
यदेकः समरे सर्वान्योधयामास मामकान् ॥ ३
यथाप्रतिज्ञं योधानां राधेयः कृतवानपि ।
कुरूणामथ सर्वेषां कर्णः शत्रुनिषूदनः ।
शर्म वर्म प्रतिष्ठा च जीविताशा च सञ्जय ॥ ४
तद्भग्नं स्वबलं दृष्ट्वा कौन्तेयेनामितौजसा ।
धनुर्धराणां प्रवरः कर्णः किमकरोद्युधि ॥ ५
पुत्रा वा मम दुर्धर्षा राजानो वा महारथाः ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ६
सञ्जय उवाच ।
अपराह्णे महाराज सूतपुत्रः प्रतापवान् ।
जघान सोमकान्सर्वान्भीमसेनस्य पश्यतः ॥ ७
भीमोऽप्यतिबलं सैन्यं धार्तराष्ट्रं व्यपोथयत् ॥ ८
द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन धीमता ।
यन्तारमब्रवीत्कर्णः पाञ्चालानेव मां वह ॥ ९
मद्रराजस्ततः शल्यः श्वेतानश्वान्महाजवान् ।
प्राहिणोच्चेदिपाञ्चालान्करूशांश्च महाबलः ॥ १०
प्रविश्य च महत्सैन्यं शल्यः परबलार्दनः ।
न्ययच्छत्तुरगान्हृष्टो यत्रयत्र च ते रथाः ॥ ११
तं रथं मेघसङ्काशं वैयाघ्रपरिवारणम् ।
संदृश्य पाण्डुपञ्चालास्त्रस्ता ह्यासन्विशांपते ॥ १२
ततो रथस्य निनदः प्रादुरासीन्महारणे ।
पर्जन्यसमनिर्घोषः पर्वतस्येव दीर्यतः ॥ १३
ततः शरशतैस्तीक्ष्णैः कर्ण आकर्णनिःसृतैः ।
जघान पाण्डवबलं शतशोऽथ सहस्रशः ॥ १४
तं तथा समरे कर्म कुर्वाणमपराजितम् ।
परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः ॥ १५
तं शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः ।
नकुलः सहदेवश्च द्रौपदेयाश्च सात्यकिः ॥ १६
परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः ।
सात्यकिस्तु तदा कर्णं विंशत्या निशितैः शरैः ॥ १७
अताडयद्रणे शूरो जत्रुदेशे नरोत्तमः ।
शिखण्डी पञ्चविंशत्या धृष्टद्युम्नश्च सप्तभिः ॥ १८
द्रौपदेयाश्चतुःषष्ट्या सहदेवश्च सप्तभिः ।
नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः ॥ १९
भीमसेनस्तु राधेयं नवत्या नतपर्वणाम् ।
विव्याध समरे क्रुद्धो जत्रुदेशे महाबलः ॥ २०
अथ प्रहस्याधिरथिर्व्याक्षिपद्धनुरुत्तमम् ।
मुमोच निशितान्बाणान्पीडयन्सुमहाबलः ॥ २१
तान्प्रत्यविध्यद्राधेयः पञ्चभिः पञ्चभिः शरैः ।
सात्यकेस्तु धनुश्छित्त्वा ध्वजं च भरतर्षभ ॥ २२
तं तथा नवभिर्बाणैराजघान स्तनान्तरे ।
भीमसेनं ततः क्रुद्धो विव्याध त्रिंशता शरैः ॥ २३

सहदेवस्य भल्लेन ध्वजं चिच्छेद मारिष ।
सारथिं च त्रिभिर्बाणैराजघान परंतपः ॥ २४
विरथान्द्रौपदेयांश्च चकार भरतर्षभ ।
अक्ष्णोर्निमेषमात्रेण तदद्भुतमिवाभवत् ॥ २५
विमुखीकृत्य तान्सर्वाञ्शरैः सन्नतपर्वभिः ।
पाञ्चालानहनच्छूरांश्चेदीनां च महारथान् ॥ २६
ते वध्यमानाः समरे चेदिमत्स्या विशांपते ।
कर्णमेकमभिद्रुत्य शरसङ्घैः समार्पयन् ॥ २७
ताञ्जघान शितैर्बाणैः सूतपुत्रो महारथः ।
ते वध्यमानाः समरे चेदिमात्स्या विशांपते ।
प्राद्रवन्त रणे भीताः सिंहत्रस्ता मृगा इव ॥ २८
एतदत्यद्भुतं कर्म दृष्टवानसि भारत ।
यदेकः समरे शूरान्सूतपुत्रः प्रतापवान् ॥ २९
यतमानान्परं शक्त्या योधयानांश्च धन्विनः ।
पाण्डवेयान्महाराज शरैर्वारितवान्रणे ॥ ३०
तत्र भारत कर्णस्य लाघवेन महात्मनः ।
तुतुषुर्देवताः सर्वाः सिद्धाश्च सह चारणैः ॥ ३१
अपूजयन्महेष्वासा धार्तराष्ट्रा नरोत्तमम् ।
कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्वधनुष्मताम् ॥ ३२
ततः कर्णो महाराज ददाह रिपुवाहिनीम् ।
कक्षमिद्धो यथा वह्निर्निदाघे ज्वलितो महान् ॥ ३३
ते वध्यमानाः कर्णेन पाण्डवेयास्ततस्ततः ।
प्राद्रवन्त रणे भीताः कर्णं दृष्ट्वा महारथम् ॥ ३४
तत्राक्रन्दो महानासीत्पाञ्चालानां महारणे ।
वध्यतां सायकैस्तीक्ष्णैः कर्णचापवरच्युतैः ॥ ३५
तेन शब्देन वित्रस्ता पाण्डवानां महाचमूः ।
कर्णमेकं रणे योधं मेनिरे तत्र शात्रवाः ॥ ३६
तत्राद्भुतं पुनश्चक्रे राधेयः शत्रुकर्शनः ।
यदेनं पाण्डवाः सर्वे न शेकुरभिवीक्षितुम् ॥ ३७
जलौघः पर्वतश्रेष्ठं यथासाद्य प्रभिद्यते ।
तथा तत्पाण्डवं सैन्यं कर्णमासाद्य दीर्यते ॥ ३८
कर्णोऽपि समरे राजन्विधूमोऽग्निरिव ज्वलन् ।
दहंस्तस्थौ महाबाहुः पाण्डवानां महाचमूम् ॥ ३९
शिरांसि च महाराज कर्णांश्चैव सकुण्डलान् ।
बाहूंश्च वीरो वीराणां चिच्छेद लघु चेषुभिः ॥ ४०
हस्तिदन्तत्सरून्खड्गान्ध्वजाञ्शक्तीर्हयान्गजान् ।
रथांश्च विविधान्राजन्पताका व्यजनानि च ॥ ४१
अक्षं च युगयोक्त्राणि चक्राणि विविधानि च ।
चिच्छेद बहुधा कर्णो योधव्रतमनुष्ठितः ॥ ४२
तत्र भारत कर्णेन निहतैर्गजवाजिभिः ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ४३
विषमं च समं चैव हतैरश्वपदातिभिः ।
रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किंचन ॥ ४४
नापि स्वे न परे योधाः प्राज्ञायन्त परस्परम् ।
घोरे शरान्धकारे तु कर्णास्त्रे च विजृम्भिते ॥ ४५
राधेयचापनिर्मुक्तैः शरैः काञ्चनभूषणैः ।
संछादिता महाराज पाण्डवानां महारथाः ॥ ४६
ते पाण्डवेयाः समरे राधेयेन पुनःपुनः ।
अभज्यन्त महाराज यतमाना महारथाः ॥ ४७
मृगसङ्घान्यथा क्रुद्धः सिंहो द्रावयते वने ।
पञ्चालानां रथश्रेष्ठान्द्रावयञ्शात्रवांस्तथा ॥ ४८
कर्णस्तु समरे योधांस्त्रासयन्सुमहायशाः ।
कालयामास तत्सैन्यं यथा पशुगणान्वृकः ॥ ४९
दृष्ट्वा तु पाण्डवीं सेनां धार्तराष्ट्राः पराङ्मुखीम् ।
तत्राजग्मुर्महेष्वासा रुदन्तो भैरवान्रवान् ॥ ५०
दुर्योधनो हि राजेन्द्र मुदा परमया युतः ।
वादयामास संहृष्टो नानावाद्यानि सर्वशः ॥ ५१
पाञ्चालाश्च महेष्वासा भग्नास्तत्र नरोत्तमाः ।
न्यवर्तन्त तदा शूरा मृत्युं कृत्वा निवर्तनम् ॥ ५२
तान्निवृत्तान्रणे शूरान्राधेयः शत्रुतापनः ।
अनेकशो महाराज बभञ्ज पुरुषर्षभः ॥ ५३
तत्र भारत कर्णेन पाञ्चाला विंशती रथाः ।
निहताः सायकैः क्रोधाच्चेदयश्च परंशताः ॥ ५४
कृत्वा शून्यान्रथोपस्थान्वाजिपृष्ठांश्च भारत ।
निर्मनुष्यान्गजस्कन्धान्पादातांश्चैव विद्रुतान् ५५
आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परंतपः ।
कालान्तकवपुः शूरः सूतपुत्रोऽभ्यराजत ॥ ५६
एवमेतन्महाराज नरवाजिरथद्विपान् ।
हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः ॥ ५७

यथा भूतगणान्हत्वा कालस्तिष्ठेन्महाबलः ।
तथा स सोमकान्हत्वा तस्थावेको महारथः ॥ ५८
तत्राद्भुतमपश्याम पाञ्चालानां पराक्रमम् ।
वध्यमानाऽपि यत्कर्णं नाजह्रू रणमूर्धनि ॥ ५९
राजा दुःशासनश्चैव कृपः शारद्वतस्तथा ।
अश्वत्थामा कृतवर्मा शकुनिश्च महाबलः ।
न्यहनन्पाण्डवीं सेनां शतशोऽथ सहस्रशः ॥६०
कर्णपुत्रौ तु राजेन्द्र भ्रातरौ सत्यविक्रमौ ।
निजघ्नाते बलं क्रुद्धौ पाण्डवानामितस्ततः ॥ ६१
तत्र युद्धं महच्चासीत्क्रूरं विशसनं महत् ॥ ६२
तथैव पाण्डवाः शूरा धृष्टद्युम्नशिखण्डिनौ ।
द्रौपदेयाश्च संक्रुद्धा अभ्यघ्नंस्तावकं बलम् ॥ ६३
एवमेष क्षयो वृत्तः पाण्डवानां ततस्ततः ।
तावकानामपि रणे भीमं प्राप्य महाबलम् ॥६४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

पार्थचोदनया कृष्णेन कर्णसमीपंप्रति रथप्रापणम् ॥ १ ॥ शल्येन कर्णप्रोत्साहनम् ॥ २ ॥ कर्णेन पार्थप्रशंसनपूर्वकं तद्वधप्रतिज्ञा ॥ ३ ॥ संकुलयुद्धम् ॥ ४ ॥

सञ्जय उवाच ।
हत्वा तु फल्गुनः सेनां कौरवाणां पृथक्पृथक् ।
सूतपुत्रस्य संरम्भं दृष्ट्वा चैव महारणे ॥ १
शोणितोदां नदीं कृत्वा मांसमज्जास्थिपङ्किलाम् ।
मनुष्यशीर्षपाषाणां हस्त्यश्वकृतरोधसम् ॥ २
शूरास्थिचयसंकीर्णां काकगृध्रानुनादिताम् ।
छत्रहंसप्लवोपेतां वीरवृक्षापहारिणीम् ॥ ३
हारपद्माकरवतीमुष्णीषवरफेनिलाम् ।
धनुःशरध्वजोपेतां नरक्षुद्रकपालिनीम् ॥ ४
चर्मवर्मभ्रमोपेतां रथोडुपसमाकुलाम् ।
जयैषिणां च सुतरां भीरूणां च सुदुस्तराम् ॥ ५
नदीं प्रावर्तयित्वा च बीभत्सुः परवीरहा ।
वासुदेवमिदं वाक्यमब्रवीत्पुरुषर्षभः ॥ ६
अर्जुन उवाच ।
एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते ।
भीमसेनादयश्चैते योधयन्ति महारथम् ॥ ७
एते द्रवन्ति पाञ्चालाः कर्णत्रस्ता जनार्दन ।
एष दुर्योधनो राजा श्वेतच्छत्रेण धार्यते ॥ ८
कर्णेन भग्नान्पाञ्चालान्द्रावयन्बहु शोभते ।
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ॥ ९
एते रक्षन्ति राजानं सूतपुत्रेण रक्षिताः ।
अवध्यमानास्तेऽस्माभिर्योधयिष्यन्ति सोमकान् ॥
एष शल्यो रथोपस्थे रश्मिसंग्राहकोविदः ।
सूतपुत्ररथं कृष्ण वाहयन्बहु शोभते ॥ ११
तत्र मे बुद्धिरुत्पन्ना वाहयात्र रथं मम ।
नाहत्वा समरे कर्णं निवर्तिष्ये कथंचन ॥ १२
मा स कर्णो रणे पार्थान्सृञ्जयांश्च महारथान् ।
निःशेषान्समरे कुर्यात्पश्यतां नो जनार्दन ॥ १३
सञ्जय उवाच ।
ततः प्रायाज्जवेनाशु केशवस्तव वाहिनीम् ।
कर्णं प्रति महेष्वासं द्वैरथे सव्यसाचिनः ॥ १४
स प्रयातो रथेनाशु कृष्णो राजन्महाहवे ।
आश्वासयन्रणे चाशु पाण्डुसैन्यानि सर्वशः ॥ १५
रथघोषस्ततस्तस्य पाण्डवस्य बभूव ह ।
वासवास्त्रनिपातेन पर्वतेष्विव मारिष ॥ १६
महता रथघोषेण पाण्डवः सत्यविक्रमः ।
अभ्ययादप्रमेयात्मा निर्जयंस्तव वाहिनीम् ॥ १७
तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिम् ।
मद्रराजोऽब्रवीत्कर्णं केतुं दृष्ट्वा महात्मनः ॥ १८
अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः ।
निघ्नन्नमित्रान्समरे यं कर्ण परिपृच्छसि ॥ १९
एष तिष्ठति कौन्तेयः संस्पृशन्गाण्डिवं धनुः ।
तं हनिष्यसि चेदद्य तन्नः श्रेयो भविष्यति ॥ २०
धनुर्ज्या चन्द्रताराङ्का पताकाकिङ्किणीयुता ।

पश्य कर्णार्जुनस्यैषा सौदामन्यम्बरे यथा ॥ २१
एष ध्वजाग्रे पार्थस्य प्रेक्षमाणः समन्ततः ।
दृश्यते वानरो भीमो वीक्षतां भयवर्धनः ॥ २२
एतच्चक्रं गदा शङ्खः शार्ङ्गं कृष्णस्य च प्रभो ।
दृश्यते पाण्डवरथे वाहयानस्य वाजिनः ॥ २३
एतत्कूजति गाण्डीवं विसृष्टं सव्यसाचिना ।
एते हस्तवता मुक्ता घ्नन्त्यमित्राञ्शिताः शराः२४
विशालायतताम्राक्षैः पूर्णचन्द्रनिभाननैः ।
एषा भूः कीर्यते राज्ञां शिरोभिरपलायिनाम् २५
एते परिघसंकाशाः पुण्यगन्धानुलेपनाः ।
उद्धता रणशूराणां पात्यन्ते सायुधा भुजाः॥२६
निरस्तजिह्वा नेत्रान्ता वाजिनः सह सादिभिः ।
पातिताः पात्यमानाश्च क्षितौ क्षीणा विशेरते ॥ २७
एते पर्वतशृङ्गाणां तुल्या हैमवता गजाः ।
संछिन्नकुम्भाः पार्थेन प्रपतन्त्यद्रयो यथा ॥ २८
गन्धर्वनगराकारा रथा हतनरेश्वराः ।
विमानादिव पुण्यान्ते स्वर्गिणो निपतन्त्यमी २९
व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना ।
नानामृगसहस्राणां यूथं केसरिणा यथा ॥ ३०
त्वामभिप्रेप्सुरायाति कर्ण निघ्नन्वरान्रथान् ।
असज्जमानो राधेय तं याहि प्रति भारत ॥ ३१
एषा विदीर्यते सेना धार्तराष्ट्री समन्ततः ।
अर्जुनस्य भयात्तूर्णं निघ्नतः शात्रवान्बहून् ॥ ३२
वर्जयन्सर्वसैन्यानि त्वरते हि धनञ्जयः ।
त्वदर्थमिति मन्येऽहं यथास्योदीर्यते वपुः ॥ ३३
न ह्यवस्थास्यते पार्थो युयुत्सुः केनचित्सह ।
त्वामृते क्रोधदीप्तो हि पीड्यमाने वृकोदरे ॥ ३४
विरथं धर्मराजं तु दृष्ट्वा सुदृढविक्षतम् ।
शिखण्डिनं सात्यकिं च धृष्टद्युम्नं च पार्षतम्॥३५
द्रौपदेयान्युधामन्युमुत्तमौजसमेव च ।
नकुलं सहदेवं च वशगांस्ते समीक्ष्य तु ॥ ३६
सहसैकरथः पार्थस्त्वामभ्येति परंतपः ।
क्रोधरक्तेक्षणः क्रुद्धो जिघांसुः सर्वपार्थिवान् ॥३७
त्वरितोऽभिपतत्यस्मांस्त्यक्त्वा सैन्यान्यसंशयम् ।
त्वं कर्ण प्रतियाह्येनं नास्त्यन्यो हि धनुर्धरः ३८
न तं पश्यामि लोकेऽस्मिंस्त्वत्तो ह्यन्यं धनुर्धरम् ।
अर्जुनं समरे क्रुद्धं यो वेलामिव वारयेत् ॥ ३९
न चास्य रक्षां पश्यामि पार्श्वतो न च पृष्ठतः ।
एक एवाभियाति त्वां पश्य साफल्यमात्मनः ४०
त्वं हि कृष्णौ रणे शक्तो योद्धुमेतौ परंतपौ ।
तवैव भारो राधेय प्रत्युद्याहि धनञ्जयम् ॥ ४१
समानो ह्यसि भीष्मेण द्रोणद्रौणिकृपेण च ।
सव्यसाचिनमायान्तं निवारय महारणे ॥ ४२
लेलिहानं यथा सर्पं गर्जन्तमृषभं यथा ।
वनस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयम् ॥ ४३
एते द्रवन्ति समरान्निरपेक्षा नराधिपाः ।
अर्जुनस्य भयत्रस्ता धार्तराष्ट्रा महाबलाः ॥ ४४
द्रवतामथ तेषां तु नान्योऽस्ति युधि मानवः ।
भयहा यो भवेद्वीरस्त्वामृते सूतनन्दन ॥ ४५
एते त्वां कुरवः सर्वे द्वीपमासाद्य संयुगे ।
धिष्ठिताः पुरुषव्याघ्र त्वत्तः शरणकाङ्क्षिणः ॥ ४६
वैदेहाम्बष्ठकाम्भोजास्तथा नग्नजितस्त्वया ।
गान्धाराश्च यया धृत्या जिताः सङ्ख्ये सुदुर्जयाः ।
तां धृतिं कुरु राधेय ततः प्रत्येहि पाण्डवम् ॥ ४७
वासुदेवं च वार्ष्णेयं प्रीयमाणं किरीटिना ।
प्रत्युद्याहि महाबाहो पौरुषे महति स्थितः ॥ ४८
कर्ण उवाच ।
प्रकृतिस्थोऽसि मे शल्य इदानीं संमतस्तथा ।
प्रतिभासि महाबाहो अभीतश्च धनञ्जयात् ॥ ४९
पश्य बाह्वोर्बलं मेऽद्य शिक्षितस्य च पश्य मे ।
एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूम् ॥
कृष्णौ च पुरुषव्याघ्र ततः सत्यं ब्रवीमि ते ।
नाहत्वा युधि तौ वीरौ व्यपयास्ये कथञ्चन ॥ ५१
शिश्ये वा निहतस्ताभ्यामनित्यो हि रणे जयः ।
कृतार्थोऽद्य भविष्यामि हत्वा वाप्यथ वा हतः ५२
शल्य उवाच ।
अजय्यमेनं प्रवदन्ति युद्धे
महारथाः कर्ण रथप्रवीरम् ।
एकाकिनं किमु कृष्णाभिगुप्तं
विजेतुमेनं क इहोत्सहेत ॥ ५३

कर्ण उवाच ।

नैतादृशो जातु बभूव लोके
रथोत्तमो यावदुपश्रुतं नः ।
तमीदृशं प्रतियोत्स्यामि पार्थं
महाहवे पश्य च पौरुषं मे ॥ ५४
रणे चरत्येष रथप्रवीरः
सितैर्हयैः कौरवराजपुत्रः ।
स वाऽद्य मां नेष्यति कृच्छ्रमेत-
त्कर्णोऽस्यान्तेऽप्यत्र भवेत्समर्थः ॥ ५५
अस्वेदिनौ राजपुत्रस्य हस्ता-
ववेपमानौ जातकिणौ बृहन्तौ ।
दृढायुधः कृतिमान्क्षिप्रहस्तो
न पाण्डवेयेन समोऽस्ति योधः ॥ ५६
गृह्णात्यनेकानपि कङ्कपत्रा-
नेकं यथा तान्प्रतियोज्य चाशु ।
ते क्रोशमात्रे निपतन्त्यमोघाः
कस्तेन योधोऽस्ति समः पृथिव्याम् ॥५७
अतोषयत्खाण्डवे यो हुताशं
कृष्णद्वितीयोऽतिरथस्तरस्वी ।
लेभे चक्रं यत्र कृष्णो महात्मा
धनुर्गाण्डीवं पाण्डवः सव्यसाची ॥ ५८
श्वेताश्वयुक्तं च सुघोषमुग्रं
रथं महाबाहुरदीनसत्वः ।
महेषुधी चाक्षये दिव्यरूपे
शस्त्राणि दिव्यानि च हव्यवाहात् ॥५९
यस्त्विन्द्रलोके निजघान दैत्या-
नसङ्ख्येयान्कालकेयांश्च सर्वान् ।
लेभे शङ्खं देवदत्तं स तत्र
को नाम तेनाभ्यधिकः पृथिव्याम् ॥६०
महादेवं तोषयामास योऽस्त्रैः
साक्षात्सुयुद्धेन महानुभावः ।
लेभे ततः पाशुपतं सुघोरं
त्रैलोक्यसंहारकरं महास्त्रम् ॥ ६१
पृथक्पृथग्लोकपालाः समेता
ददुर्महास्त्राण्यप्रमेयाणि सङ्ख्ये ।
यैस्ताञ्जघानाशु रणे नृसिंहः
सकालकेयानसुरान्समेतान् ॥ ६२
तथा विराटस्य पुरे समेता-
न्सर्वानस्मानेकरथेन जित्वा ।
जहार तद्गोधनमाजिमध्ये
वस्त्राणि चादत्त महारथेभ्यः ॥ ६३
तमीदृशं वीर्यगुणोपपन्नं
कृष्णद्वितीयं परमं नृपाणाम् ।
तमाह्वयन्साहसमुत्तमं वै
जाने स्वयं सर्वलोकस्य शल्य ॥ ६४
अनन्तवीर्येण च केशवेन
नारायणेनाप्रतिमेन गुप्तः ।
वर्षायुतैर्यस्य गुणा न शक्या
वक्तुं समेतैरपि सर्वलोकैः ॥ ६५
महात्मनः शङ्खचक्रासिपाणे-
र्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ।
भयं न मे जायते साध्वसं च
दृष्ट्वा कृष्णावेकरथे समेतौ ॥ ६६
अतीवायं धनुषि राजपुत्रे-
ष्वतीवान्यान्केशवश्चक्रयुद्धे ।
एवंविधौ पाण्डववासुदेवौ
चलेत्स्वदेशाद्धिमवान्न कृष्णौ ॥ ६७
उभौ हि शूरौ बलिनौ दृढायुधौ
महारथौ संहननोपपन्नौ ।
एतौ वीरौ नरवीरौ समेतौ
स्थानाच्युतौ देवकुमाररूपौ ॥ ६८
अग्न्यादित्याविन्द्रबृहस्पती वा
यमान्तकौ वा शशिपूषणौ वा ।
भगांशमित्रावरुणावश्विनौ वा
मरुद्गणौ वा वसवः समेताः ।
व्यस्ताः समस्ताश्च युधा न शक्ता
जेतुं प्रसह्यार्जुनं चाच्युतं च ॥ ६९
एतौ हि तावर्जुनवासुदेवौ
कोऽन्यः प्रतीयान्मदृते तु शल्य ॥ ७०

सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥ ७१
तावुभौ पुरुषव्याघ्रौ समाने स्यन्दने स्थितौ ।
मामेकमभियोद्धारौ सुजातं बत शल्य मे ॥ ७२
नैतच्चिरं क्षिप्रमिमं रथं मे
प्रवर्तयैतावभियामि चैवम् ।
अस्मिन्मुहूर्ते निहतौ पश्य कृष्णौ
ताभ्यां हतं वा युधि मां रिपुभ्याम् ॥ ७३
एवं ब्रुवाणः सहसा महारथ-
स्त्वभ्यद्रवत्पाण्डवं सूतपुत्रः ॥ ७४
अभ्येत्य पुत्रेण तवाभिनन्दिताः
समेत्य चोक्ताः कुरुवीरसत्तमाः ।
कृपश्च भोजश्च महारथावुभौ
तथैव गान्धारपतिः सहानुजः ।
गुरोः सुतस्तस्य तवात्मजास्तथा
पदातिसङ्घा द्विरदास्तथा तदा ॥ ७५
निरुध्यताभिद्रवताच्युतार्जुनौ
श्रमेण संयोजयताशु सर्वशः ।
यथा भवद्भिर्भृशविक्षतावुभौ
सुखेन हन्यान्मम वाहिनीपतिः ॥ ७६
तथेति चोक्त्वा त्वरिताः स्म तेऽर्जुनं
जिघांसवो वीरतराः समाययुः ।
शरैश्च जघ्नुर्युधि तं महारथा
धनञ्जयं कर्णनिदेशकारिणः ।
नदीनदं भूरिजलो महार्णवो
यथा तथा तान्समरेऽर्जुनोऽग्रसत् ॥ ७७
न संदधानो न तथा शरोत्तमान्
प्रमुञ्चमानो रिपुभिः प्रदृश्यते ।
धनञ्जयास्तैः स्म शरैर्विदारिता
हता निपेतुर्नरवाजिकुञ्जराः ॥ ७८
शरार्चिषं गाण्डिवचारुमण्डलं
युगान्तसूर्यप्रतिमानतेजसम् ।
न कौरवाः शेकुरुदीक्षितुं जयं
यथा रविं व्याधितचक्षुषो जनाः ॥ ७९

शरोत्तमान्संप्रहितान्महारथै-
श्चिच्छेद पार्थः प्रहसञ्छरौघैः ।
भूयश्च तानहनद्बाणसङ्घान्
गाण्डीवधन्वायतपूर्णमण्डलम् ॥ ८०
यथोग्ररश्मिः शुचिशुक्रमध्यगः
सुखं विवस्वान्हरते जलौघान् ।
तथार्जुनो बाणगणान्निरस्य
ददाह सेनां तव पार्थिवेन्द्र ॥ ८१
तमभ्यधावद्विसृजन्कृपः शरां-
स्तथैव भोजस्तव चात्मजः स्वयम् ।
महारथो द्रोणसुतश्च सायकै-
रवाकिरंस्तोयधरा यथाऽचलम् ॥ ८२
जिघांसुभिस्तान्कुशलैः शरोत्तमान्
महात्मभिः संप्रहितान्प्रयत्नतः ।
शरैः प्रचिच्छेद स पाण्डवस्त्वरन्
परान्विनिर्भिद्य च तांस्त्रिभिस्त्रिभिः ॥ ८३
स गाण्डिवव्यायतपूर्णमण्डल-
स्तपन्रिपूनर्जुनभास्करो बभौ ।
शरोग्ररश्मिः शुचिशुक्रमध्यगो
यथैव सूर्यः परिवेषवांस्तथा ॥ ८४
अथाग्र्यबाणैर्दशभिर्धनञ्जयं
पराभिनद्द्रोणसुतोऽच्युतं त्रिभिः ।
चतुर्भिरश्वांश्चतुरः कपिं ततः
शरैश्च नाराचवरैरवाकिरत् ॥ ८५
तथा ततः प्रस्फुरदस्य कार्मुकं
त्रिभिः शरैर्यन्तृशिरश्चकर्त ह ।
हयांश्चतुर्भिश्चतुरस्त्रिभिर्ध्वजं
धनञ्जयो द्रौणिरथादपातयत् ॥ ८६
स रोषपूर्णो ह्यतिवज्रहाटकै-
रलंकृतं तक्षकभोगवर्चसम् ।
स तद्वधे कार्मुकमन्यदाददे
यथा महाहिप्रवरं तथैव च ॥ ८७
स्वमायुधं चापि विकीर्य भूतले
धनुश्च कृत्वा सगुणं गुणाधिकः ।

शुचिशुक्रयोः आषाढज्येष्ठयोर्मध्ये गतः ॥ ८१ ॥

समानयंस्तावजितौ नरोत्तमौ
शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ॥ ८८
कृपश्च भोजश्च तवात्मजश्च ते
शरैरनेकैर्युधि पाण्डवर्षभम् ।
महारथाः संयुगमूर्धनि स्थिता-
स्तमोनुदं वारिधरा इवापतन् ॥ ८९
कृपस्य पार्थः सशरं शरासनं
हयान्ध्वजान्सारथिमेव पत्रिभिः ।
[समार्पयद्बाहुसहस्रविक्रम-
स्तथा यथा वज्रधरः पुरा बलेः ॥ ९०
स पार्थबाणैर्विनिपातितायुधो
ध्वजावमर्दे च कृते महाहवे ।
कृतः कृपो बाणसहस्रयन्त्रितो
यथापगेयः प्रथमं किरीटिना ॥] ९१
शरैः प्रचिच्छेद तवात्मजस्य
ध्वजं धनुश्च प्रचकर्त नर्दतः ।
जघान चाश्वान्कृतवर्मणः शुभान्
ध्वजं च चिच्छेद तवात्मजस्य ह ॥ ९२
सवाजिसूतेष्वसनान्सकेतना-
ञ्जघान नागाश्वरथांश्च स त्वरन् ।
ततः प्रकीर्णं सुमहद्बलं तव
प्रपीडितं सवितुरिवौजसा भृशम् ॥ ९३

ततोऽर्जुनस्याशु रथेन केशव-
श्चकार शत्रूनपसव्यमातुरान् ।
ततः प्रयातं त्वरितं धनञ्जयं
शतक्रतुं वृत्रनिजघ्नुषं यथा ।
समन्वधावन्पुनरुत्थितैर्ध्वजै
रथैः सुयुक्तैरपरे युयुत्सवः ॥ ९४
अथाभिसृत्य प्रतिवार्य चाहितान्
धनञ्जयस्यानुचरान्महारथाः ।
शिखण्डिशैनेययमाः शितैः शरै-
र्विदारयन्तो व्यनदन्सुभैरवम् ॥ ९५
ततोऽभिजघ्नुः कुपिताः परस्परं
शरैस्तदाञ्जोगतिभिः सुतेजनैः ।
कुरुप्रवीराः सह सृञ्जयैर्यथा
सुरारयो देवपतिं यथा तथा ॥ ९६
जयेप्सवः स्वर्गमनाय चोत्सुकाः
पतन्ति नागाश्वरथाः परंतप ।
तथैव सर्वे बहवश्च विव्यधुः
शरैः सुमुक्तैरितरेतरं पृथक् ॥ ९७
शरान्धकारे तु महात्मभिः कृते
महामृधे योधवरैः परस्परम् ।
चतुर्दिशो वै विदिशश्च पार्थिव
प्रभा च सूर्यस्य तमोवृताऽभवत् ॥ ९८

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
राजन्कुरूणां प्रवरैर्बलैर्भीममभिद्रुतम् ।
मज्जन्तमिव कौन्तेयमुज्जिहीर्षुर्धनञ्जयः ॥ १
विमृद्य सूतपुत्रस्य सेनां भारत सायकैः ।
प्राहिणोन्मृत्युलोकाय परवीरान्धनञ्जयः ॥ २
ततोऽस्याम्बरमाश्रित्य शरजालानि भागशः ।
अदृश्यन्त तथान्ये च निजघ्नुस्तव वाहिनीम् ॥ ३
स पक्षिसङ्घाचरितमाकाशं पूरयञ्शरैः ।
धनञ्जयो महाबाहुः कुरूणामन्तकोऽभवत् ॥ ४
ततो भल्लैः क्षुरप्रैश्च नाराचैर्विमलैरपि ।
गात्राणि प्राच्छिनत्पार्थः शिरांसि च चकर्त ह ॥ ५
छिन्नगात्रैर्विकवचैर्विशिरस्कैः समन्ततः ।

तथार्जुनस्याधिरथेन केशव इति ख. ट. पाठः । अथार्जुनस्याधि-रथेश्च केशव इति क. ङ. पाठः ॥ ९४ ॥ त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

पातितैश्च पतद्भिश्च योधैरासीत्समावृता ॥ ६
धनञ्जयशराभ्यस्तैः स्यन्दनाश्वरथद्विपैः ।
संछिन्नभिन्नविध्वस्तैर्व्यङ्गाङ्गावयवैः स्तृता ।
गतसत्वैः ससत्वैश्च संवृताऽऽसीद्वसुन्धरा ॥ ७
सुदुर्गमा सुविषमा घोराऽत्यर्थं सुदुर्दशा ।
रणभूमिरभूद्राजन्महावैतरणी यथा ॥ ८
ईषाचक्राक्षभङ्गैश्च व्यश्वैः साश्वैश्च युध्यताम् ।
ससूतैर्हतसूतैश्च रथैः स्तीर्णाऽभवन्मही ॥ ९
सुवर्णवर्मसन्नाहैर्योधैः कनकमालिभिः ।
आस्थिताः क्लृप्तवर्माणो भद्रा नित्यमदा द्विपाः १०
क्रुद्धाः क्रूरैर्महामात्रैः प्रेषितार्जुनमभ्ययुः ।
चतुःशता रथवरा हताः पेतुः किरीटिना ॥ ११
पर्यस्तानीव शृङ्गाणि ससत्वानि महागिरेः ।
धनञ्जयशराभ्यस्तैः स्तीर्णा भूर्वरवारणैः ॥ १२
समन्ताज्जलदप्रख्यान्वारणान्मदवर्षिणः ।
अभिपेदेऽर्जुनरथो घनान्भिन्दन्निवांशुमान् ॥ १३
हतैर्गजमनुष्याश्वैर्भिन्नैश्च बहुधा रथैः ।
विशस्त्रयन्त्रकवचैर्युद्धशौण्डैर्गतासुभिः ।
अपविद्धायुधैर्मार्गः स्तीर्णोऽभूत्फल्गुनेन वै ॥ १४
विस्फारितं च गाण्डीवमत्यासीद्भैरवस्वनम् ।
सुघोषं वज्रनिष्पेषं स्तनयन्निव तोयदः ॥ १५
ततः प्रादीर्यत चमूर्धनञ्जयशराहता ।
महावातसमाविद्धा महानौरिव सागरे ॥ १६
नानारूपाः प्राणहराः शरा गाण्डीवचोदिताः ।
अलातोल्काशनिप्रख्यास्तव सैन्यं विनिर्दहन् १७
महागिरौ वेणुवनं निशि प्रज्वलितं यथा ।
तथा तव महासैन्यं प्रास्फुरच्छरपीडितम् ॥ १८
तद्भिनष्टं सुविध्वस्तं तव सैन्यं किरीटिना ।
हतप्रविहतं बाणैः सर्वतः प्रद्रुतं दिशः ॥ १९
सश्वापदा मृगगणा दावाग्नित्रासिता यथा ।
कुरवः पर्यवर्तन्त निर्दग्धाः सव्यसाचिना ॥ २०
उत्सृज्य च महाबाहुं भीमसेनं तथा रणे ।
बलं कुरूणामुद्विग्नं सर्वमासीत्पराङ्मुखम् ॥ २१
ततः कुरुषु भग्नेषु बीभत्सुरपराजितः ।
भीमसेनं समासाद्य मुहूर्तं सोऽभ्यवर्तत ॥ २२
समागम्य च भीमेन मन्त्रयित्वा च फल्गुनः ।
विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् ॥ २३
भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः ।
नादयन्रथघोषेण पृथिवीं द्यां च भारत ॥ २४
ततः परिवृतो वीरैर्दशभिः शत्रुतापनः ।
दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः ॥ २५
ते तमभ्यर्दयन्बाणैरुल्काभिरिव कुञ्जरम् ।
आततेष्वसना वीरा नृत्यन्त इव भारत ॥ २६
अपसव्यांस्तु तांश्चक्रे रथेन मधुसूदनः ।
नियुक्तान्हि स तान्मेने यमायाशु किरीटिना ॥ २७
तथान्ये प्राणदन्मूढाः पराङ्मुखमिवार्जुनम् ॥ २८
तेषां नानदतां केतूनश्वांश्चापानि सारथीन् ।
नाराचैरर्धचन्द्रैश्च क्षिप्रं पार्थो न्यकृन्तत ॥ २९
*अथान्यैर्दशभिर्भल्लैः शिरांस्येषामपातयत् ।
रोषसंरक्तनेत्राणि संदष्टौष्ठानि भूतले ॥ ३०
तेषां वक्त्राणि विबभुर्व्योम्नि तारागणा इव ॥ ३१
तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौरवान् ।
रुक्माङ्गदान्रुक्मपुङ्खैर्हत्वा प्रायादमित्रहा ॥ ३२

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

संकुलयुद्धम् ॥ १ ॥

[स]ञ्जय उवाच ।
[त]मायान्तं महावेगैरश्वैः कपिवरध्वजम् ।
युद्धायाभ्यद्रवन्वीराः कुरूणां नवती रथाः ॥ १
कृत्वा संशप्तका घोरं शपथं पारलौकिकम् ।

विनिर्दहन्नित्यत्राऽभाव आर्षः ॥ १७ ॥

चतुरशीतितमोऽध्यायः ॥ ८४ ॥

* अत्रार्जुनकृतं दशधृतराष्ट्रपुत्रहननं विचारणीयम् ।

परिवव्रुर्नरव्याघ्रा नरव्याघ्रं रणेऽर्जुनम् ॥ २
कृष्णः श्वेतान्महावेगानश्वान्काञ्चनभूषणान् ।
मुक्ताजालप्रतिच्छन्नान्प्रैषीत्कर्णरथं प्रति ॥ ३
प्रेक्ष्य कर्णरथं यान्तमरिघ्नं तं धनञ्जयम् ।
बाणवर्षैरभिघ्नन्तः संशप्तकगणा ययुः ॥ ४
त्वरमाणांस्तु तान्सर्वान्ससूतेष्वसनध्वजान् ।
जघान नवतिं वीरानर्जुनो निशितैः शरैः ॥ ५
तेऽपतन्त हता बाणैर्नानारूपैः किरीटिना ।
विमानेभ्यः सुकृतिनः स्वर्गात्पुण्यक्षये यथा ॥ ६
ततः सरथनागाश्वाः कुरवः कुरुसत्तमम् ।
निर्भया भरतश्रेष्ठमभ्यवर्तन्त फल्गुनम् ॥ ७
तदायस्तमनुष्याश्वमुदीर्णवरवारणम् ।
पुत्राणां ते महासैन्यं समरौत्सीद्धनञ्जयम् ॥ ८
शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंशसायकैः ।
प्राच्छादयन्महेष्वासाः कुरवः कुरुनन्दनम् ॥ ९
तामन्तरिक्षे विततां शस्त्रवृष्टिं समन्ततः ।
व्यधमत्पाण्डवो बाणैस्तमः सूर्य इवांशुभिः ॥ १०
ततो म्लेच्छाः स्थिता मत्तैस्त्रयोदशशतैर्गजैः ।
पार्श्वतो व्यहनन्पार्थं तव पुत्रस्य शासनात् ॥ ११
कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः ।
कम्पनैर्भिण्डिपालैश्च रथस्थं पार्थमार्दयन् ॥ १२
तां शस्त्रवृष्टिमतुलां द्विपस्थैः प्रेषितां प्रभुः ।
चिच्छेद निशितैर्भल्लैरर्धचन्द्रैश्च फल्गुनः ॥ १३
अथ तान्द्विरदान्सर्वान्नानालिङ्गैः शरोत्तमैः ।
सपताकध्वजारोहान्गिरीन्वज्रैरिवाभिनत् ॥ १४
ते हेमपुङ्खैरिषुभिरार्दिता हेममालिनः ।
हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ॥ १५
ततो गाण्डीवनिर्घोषो महानासीद्विशांपते ।
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् ॥ १६
कुञ्जराश्च हता राजन्दुद्रुवुस्ते समन्ततः ।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ १७
रथा हीना महाराज रथिभिर्वाजिभिस्तथा ।
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः ॥ १८
अश्वारोहा महाराज धावमाना इतस्ततः ।

तत्रतत्रैव दृश्यन्ते निहताः पार्थसायकैः ॥ १
तस्मिन्क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत ।
यत्सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि ॥ २
असंयुक्ताश्च ते राजन्परिवृत्ता रणं प्रति ।
नरा नागा रथाश्चैव नदन्तोऽर्जुनमभ्ययुः ॥ २
ततस्त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृतं राजन्भीमसेनः किरीटिनम् ॥ २
हतावशेषानुत्सृज्य त्वदीयान्कतिचिद्रथान् ।
जवेनाभ्यद्रवद्भीमो धनञ्जयरथं प्रति ॥ २३
ततस्तत्प्राद्रवत्सैन्यं हतभूयिष्ठमातुरम् ।
दृष्ट्वाऽर्जुनं तदा भीममागतं भ्रातरं प्रति ॥ २४
हतावशिष्टांस्तुरगानर्जुनेन महाबलः ।
भीमो व्यधमदश्रान्तो गदापाणिर्महाहवे ॥ २५
'गदापाणिं तदा दृष्ट्वा भीमं भारत भारताः ।
मेनिरे तमनुप्राप्तं दण्डपाणिमिवान्तकम् ॥' २६
कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम् ।
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् ॥ २७
गदां तुरगनाशाय त्वरन्भीमो व्यवासृजत् ।
सा जघान बहूनश्वानश्वारोहांश्च मारिष ॥ २८
कांस्यायसतनुत्रांश्च नरानश्वांश्च पाण्डवः ।
पोथयामास गदया सशब्दं तेऽपतन्हताः ॥ २९
दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः ।
भग्नमूर्धास्थिचरणाः क्रव्यादगणभोजनाः ॥ ३०
असृङ्मांसवसाभिश्च तृप्तिमभ्यागता गदा ।
अस्थीन्यप्यश्नती तस्थौ कालरात्रीव दुर्दृशा ॥ ३१
सहस्राणि दशाश्वानां हत्वा पत्तींश्च भूयसः ।
भीमोऽभ्यधावत्संक्रुद्धो गदापाणिरितस्ततः ॥ ३२
गदापाणिं ततो भीमं दृष्ट्वा भारत तावकाः ।
मेनिरे समनुप्राप्तं कालदण्डोद्यतं यमम् ॥ ३३
स मत्त इव मातङ्गः संक्रुद्धः पाण्डुनन्दनः ।
प्रविवेश गजानीकं मकरः सागरं यथा ॥ ३४
विगाह्य च गजानीकं प्रगृह्य महतीं गदाम् ।
क्षणेन भीमः संक्रुद्धस्तन्निन्ये यमसादनम् ॥ ३५
गजान्सकङ्कटान्मत्तान्सारोहान्सपताकिनः ।

मुसलैर्भिन्दिपालैश्च इति झ· पाठः ॥ १२ ॥

पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

पततः समपश्याम सपक्षान्पर्वतानिव ॥ ३६
हत्वा तु तद्गजानीकं भीमसेनो महाबलः ।
पुनः स्वरथमास्थाय पृष्ठतोऽर्जुनमभ्ययात् ॥ ३७
ततः पराङ्मुखीभूतं निरुत्साहं बलं तव ।
तदानीं तु महाराज प्रायशः शस्त्रवेष्टितम् ॥ ३८
विलम्बमानं तत्सैन्यमप्रगल्भमवस्थितम् ।
दृष्ट्वा प्राच्छादयद्बाणैरर्जुनः शस्त्रवृष्टिभिः ॥ ३९
नराश्वरथमातङ्गा युधि गाण्डीवधन्वना ।
शरव्रातैश्चिता रेजुः कदम्बा इव केसरैः ॥ ४०
ततः कुरूणामभवदार्तनादो महान्नृप ।
नराश्वनागासुहरान्दृष्ट्वा बाणान्किरीटिनः ॥ ४१
हाहाकृतं भृशं त्रस्तं लीयमानं परस्परम् ।
अलातचक्रवत्सैन्यं तदा बभ्राम तावकम् ॥ ४२
ततोऽर्जुनशरध्वस्तं कुरूणां सुमहद्बलम् ।
न ह्यत्रासीदनिर्भिन्नो रथः सादी हयो गजः ॥ ४३
आदीप्तमिव तत्सैन्यं शरैश्छिन्नतनुच्छदम् ।
आसीत्स्वशोणितक्लिन्नं रौद्रं नष्टं विशांपते ॥ ४४
तत्सैन्यं हतभूयिष्ठमाहतं निशितैः शरैः ।
न जहौ समरं प्राप्य फल्गुनं शत्रुतापनम् ॥ ४५
तत्राद्भुतमपश्याम कौरवाणां पराक्रमम् ।
वध्यमानोऽपि यत्पार्थं न जहौ भरतर्षभ ॥ ४६
तं दृष्ट्वा विक्रमं तस्य कुरवः सव्यसाचिनः ।
नेराशाः समपद्यन्त सर्वे कर्णस्य जीविते ॥ ४७
अविषह्यं तु पार्थस्य शरसंस्पर्शमाहवे ।
मत्वा न्यवर्तन्कुरवो जिता गाण्डीवधन्वना ॥ ४८
ते हित्वा समरे पार्थं वध्यमानाश्च सायकैः ।
प्रदुद्रुवुर्दिशो भीताश्चुक्रुशुश्चापि सूतजम् ॥ ४९
तान्विद्रावयते पार्थः किरञ्शरशतान्बहून् ।
हर्षयन्पाण्डवीं सेनां राजानं च युधिष्ठिरम् ॥ ५०
पुत्रास्तव महाराज जग्मुः कर्णरथं प्रति ।
अगाधे मज्जतां तेषां द्वीपः कर्णोऽभवत्तदा ॥ ५१
कुरवो हि महाराज निर्विषाः पन्नगा इव ।
कर्णमेवोपलीयन्त भयाद्गाण्डीवधन्वनः ॥ ५२
यथा सर्वाणि भूतानि मृत्योर्भीतानि मारिष ।
उपलीयन्ति सन्त्रासाद्धर्मं लोकपरायणम् ॥ ५३
तथा कर्णं महेष्वासं पुत्रास्तव नराधिप ।
उपालीयन्त सन्त्रासात्पाण्डवस्य महात्मनः ॥ ५४
ताञ्शोणितपरिक्लिन्नान्विषमस्थाञ्शरातुरान् ।
मा भैष्टेत्यब्रवीत्कर्णो भीतानाविष्टचेतसः ॥ ५५
संभग्नं हि बलं दृष्ट्वा बलात्पार्थेन तावकम् ।
धनुर्विस्फारयन्कर्णस्तस्थौ शत्रुजिघांसया ॥ ५६
तान्प्रद्रुतान्कुरून्दृष्ट्वा कर्णः शस्त्रभृतां वरः ।
संचिन्तयित्वा पार्थस्य वधे दध्रे मनः श्वसन् ॥ ५७
विस्फार्य सुमहच्चापं ततश्चाधिरथिर्वृषः ।
पाञ्चालान्पुनराधावत्पश्यतः सव्यसाचिनः ॥ ५८
ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः ।
शरौघैश्छादयामासुर्महामेघा इवाचलम् ॥ ५९
ततः शरसहस्राणि कर्णमुक्तानि मारिष ।
पाञ्चालानां हरन्प्राणांस्तमांसीव तमोनुदः ॥ ६०
महदासीत्तदा युद्धं पाञ्चालानां महामते ।
वध्यतां सूतपुत्रेण मित्रार्थे मित्रगृद्धिना ॥ ६१

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ॥ ८६ ॥

संकुलयुद्धम् ॥ १ ॥ भीमदुःशासनयोः समागमः संवादश्च ॥ २ ॥

सञ्जय उवाच ।
ततः कर्णः कुरुषु प्रद्रुतेषु
वरूथिना श्वेतहयेन राजन् ।
पाञ्चालपुत्रान्व्यधमत्सूतपुत्रो
महेषुभिर्वात इवाभ्रसङ्घान् ॥ १

सूतं रथादञ्जलिकैर्निपात्य
जघान चाश्वाञ्जनमेजयस्य ।
शतानीकं सुतसोमं च भल्लै-
रवाकिरद्धनुषी चाप्यकृन्तत् ॥ २
धृष्टद्युम्नं निर्बिभेदाथ षड्भि-
र्जघानाश्वान्दक्षिणांस्तस्य सङ्ख्ये ।
हत्वा चाश्वान्सात्यकेः सूतपुत्रः
कैकेयपुत्रं न्यवधीद्विशोकम् ॥ ३
तमभ्यधावन्निहते कुमारे
सेनापतिः कैकयो मित्रवर्मा ।
शरैर्विधुन्वन्भृशमुग्रवेगैः
कर्णात्मजं चाप्यहनत्सुदेवम् ॥ ४
तस्यार्धचन्द्रैस्त्रिभिरुच्चकर्त
प्रहस्य बाहू च शिरश्च कर्णः ।
स स्यन्दनाद्गामगमद्गतासुः
परश्वथैः साल इवावरुग्णः ॥ ५
हताश्वमञ्जोगतिभिः सुषेणः
शिनिप्रवीरं निशितैः पृषत्कैः ।
प्रच्छाद्य नृत्यन्निव कर्णपुत्रः
शैनेयबाणाभिहतः पपात ॥ ६
पुत्रे हते क्रोधपरीतचेताः
कर्णः शिनीनां प्रवरं जिघांसुः ।
हतोऽसि हे सात्यक इत्युदीर्य
व्यवासृजद्बाणममित्रसाहम् ॥ ७
तमस्य चिच्छेद शरं शिखण्डी
त्रिभिस्त्रिभिश्च प्रतुतोद कर्णम् ।
शिखण्डिनः कार्मुकं च ध्वजं च
छित्त्वा क्षुराभ्यां न्यहनत्सुजातः ॥ ८
शिखण्डिनं षड्भिरविध्यदुग्रो
धार्ष्टद्युम्नेः स शिरश्चोच्चकर्त ।
ततोऽभिनत्सुतसोमं क्षुरेण
सुसंशितेनाधिरथिर्महात्मा ॥ ९
अथाक्रन्दे तुमुले वर्तमाने
धार्ष्टद्युम्ने निहते तत्र कृष्णः ।
अपाञ्चाल्यं क्रियते याहि पार्थ
कर्णं जहीत्यब्रवीद्राजसिंह ॥ १
ततः प्रहस्याशु नरप्रवीरो
रथं रथेनाधिरथेर्जगाम ।
भये तेषां त्राणमिच्छन्सुबाहु-
रभ्याहतानां रथयूथपेन ॥ १
ततोऽपरे भारत दुष्प्रकम्प्याः
पाञ्चालानां रथसङ्घाः समेताः ।
प्रतिश्रिता ह्यन्तरिक्षे ग्रहाभा
धनुःप्रवीरास्तु रथप्रवीराः ॥ १
विस्फार्य गाण्डीवमथोग्रघोषं
ज्यया समाहत्य तले भृशं च ।
बाणान्धकारं सहसैव कृत्वा
जघान नागाश्वरथध्वजांश्च ॥ १
[प्रतिश्रुतः प्राचरदन्तरिक्षे
गुहा गिरीणामपतन्वयांसि ।
यन्मण्डलज्येन विजृम्भमाणो
रौद्रे मुहूर्तेऽभ्यपतत्किरीटी ॥] ११
तं भीमसेनोऽनुययौ रथेन
पृष्ठे रक्षन्पाण्डवमेकवीरः ।
तौ राजपुत्रौ त्वरितौ रथाभ्यां
कर्णाय यातावरिभिर्विषक्तौ ॥ १५
तत्रान्तरे सुमहान्सूतपुत्र-
श्चक्रे युद्धं सोमकान्संप्रमथ्य ।
रथाश्वमातङ्गगणाञ्जघान
प्रच्छादयामास शरैर्दिशश्च ॥ १६
तमुत्तमौजा जनमेजयश्च
क्रुद्धौ युधामन्युशिखण्डिनौ च ।
कर्णं बिभेदुः सहिताः पृषत्कैः
सन्नर्दमानाः सह पार्षतेन ॥ १७
ते पञ्च पाञ्चालरथाः समेता
वैकर्तनं कर्णमभिद्रवन्तः ।
तस्माद्रथाच्च्यावयितुं न शेकु-
र्धैर्यात्कृतात्मानमिवेन्द्रियार्थाः ॥ १८

प्रतिश्रुतः प्रतिस्वनः ॥ १४ ॥

षडशीतितमोऽध्यायः ॥ ८६ ॥

तेषां धनूंषि ध्वजवाजिसूतां-
स्तूर्णं पताकाश्च निकृत्य बाणैः ।
तान्पाश्चालानभ्यहनत्पृषत्कैः
कर्णस्ततः सिंह इवोन्ननाद ॥ १९
तस्यास्यतस्तानभिनिघ्नतश्च
ज्याबाणहस्तस्य धनुःस्वनेन ।
साद्रिद्रुमा स्यात्पृथिवी विशीर्णे-
त्यतीव मत्वा जनता व्यषीदत् ॥ २०
स शक्रचापप्रतिमेन धन्वना
भृशायतेनाधिरथिः शरान्सृजन् ।
बभौ रणे दीप्तमरीचिमण्डलो
यथांशुमाली परिवेषवांस्तथा ॥ २१
शिखण्डिनं द्वादशभिः पराभिन-
च्छितैः शरैः षड्भिरथोत्तमौजसम् ।
त्रिभिर्युधामन्युमविध्यदाशुगै-
स्त्रिभिस्त्रिभिः सोमकपार्षतात्मजौ ॥ २२
पराजिताः पञ्च महारथास्तु ते
महाहवे सूतसुतेन मारिष ।
निरुद्यमास्तस्थुरमित्रनन्दना
यथेन्द्रियार्थात्मवता पराजिताः ॥ २३
निमज्जतस्तानथ कर्णसागरे
विपन्ननावो वणिजो यथार्णवे ।
उद्दध्रिरे नौभिरिवार्णवाद्रथैः
सुकल्पितैर्द्रौपदिजाः स्वमातुलान् ॥ २४
ततः शिनीनामृषभः शितैः शरै-
र्निकृत्य कर्णप्रहितानिषून्बहून् ।
विदार्य कर्णं निशितैरयस्मयै-
स्तवात्मजं ज्येष्ठमविध्यदष्टभिः ॥ २५
कृपोऽथ भोजश्च तवात्मजस्तथा
स्वयं च कर्णो निशितैरताडयत् ।
स तैश्चतुर्भिर्युयुधे यदूत्तमो
दिगीश्वरैर्दैत्यपतिर्यथा तथा ॥ २६
समाततेनेष्वसनेन कूजता
महास्वनेनाशनिपातदीधितिः ।
बभूव दुर्धर्षतरः स सात्यकिः
शरन्नभोमध्यगतो यथा रविः ॥ २७
पुनः समास्थाय रथान्सुदंशिताः
शिनिप्रवीरं जुगुपुः परंतपाः ।
समेत्य पाश्चालमहारथा रणे
मरुद्गणाः शक्रमिवारिनिग्रहे ॥ २८
ततोऽभवद्युद्धमतीव दारुणं
तवाहितानां तव सैनिकैः सह ।
रथाश्वमातङ्गविनाशनं तथा
यथा सुराणामसुरैः पुराऽभवत् ॥ २९
रथा द्विपा वाजिपदातयस्तथा
भ्रमन्ति नानाविधशस्त्रवेष्टिताः ।
परस्परेणाभिहताश्च चस्खलु-
र्विनेदुरार्ता व्यसवोऽपतंस्तथा ॥ ३०
तथागतं भीममभीस्तवात्मजः
ससार राजावरजः किरञ्शरैः ।
तमभ्यधावत्त्वरितो वृकोदरो
महारुरुं सिंह इवाभिपेदिवान् ॥ ३१
ततस्तयोर्युद्धमतीव दारुणं
प्रदीव्यतोः प्राणदुरोदरं द्वयोः ।
परस्परेणाभिनिविष्टरोषयो-
रुदग्रयोः शम्बरशक्रयोर्यथा ॥ ३२
शरैः शरीरार्तिकरैः सुतेजनै-
र्निजघ्नतुस्तावितरेतरं भृशम् ।
सकृत्प्रभिन्नाविव वासितान्तरे
महागजौ दोर्भिरदीनघातिनौ ॥ ३३
आलोक्य तौ चैव परस्परं ततः
समं च शूरौ च ससारथी तदा ।
भीमोऽब्रवीद्याहि दुःशासनाय
दुःशासनो याहि वृकोदराय ॥ ३४
तयो रथौ सारथिसंप्रचोदितौ
समं रथौ तौ सहसा समीयतुः ।
नानायुधच्छत्रपताकिकाध्वजौ
दिवीव पूर्वं बलशक्रयो रणे ॥ ३५

भीम उवाच ।
दिष्ट्याऽसि दुःशासन अद्य दृष्टः
क्षणं प्रतीच्छे सहवृद्धि मूलम् ।
चिरोदितं यन्मया ते सभायां
कृष्णाभिमर्शेन गृहाण मत्तः ॥ ३६
स एवमुक्तस्तु ततो महात्मा
दुःशासनो वाक्यमुवाच वीरः ।
सर्वं स्मरन्नेव विसंस्मरामि
उदीर्यमाणं शृणु भीमसेन ॥ ३७
स्मरामि चात्मप्रभवं चिराय
यज्जातुषे वेश्मनि रात्र्यहानि ।
विश्वासहीना मृगयां चरन्तो
वसन्ति सर्वत्र निराकृतास्तु ॥ ३८
महाभयं रात्र्यहानि स्मरन्त-
स्तथोपभोगाच्च सुखाच्च हीनाः ।
वनेष्वटन्तो गिरिगह्वराणि
पाञ्चालराजस्य पुरं प्रविष्टाः ॥ ३९
मायां यूयं कामपि संप्रविष्टा
यतो वृतः कृष्णया फल्गुनो वः ।
संभूय पापैस्तदनार्यवृत्तं
कृतं तदा मातृकृतानुरूपम् ॥
एका वृता पञ्चभिः साभिपन्ना
ह्यलज्जमानैश्च परस्परस्य ।
स्मरे सभायां सुबलात्मजेन
दासीकृता यत्सह कृष्णया च ॥
सञ्जय उवाच ।
इत्येवमुक्तस्तु तवात्मजेन
पाण्डोः सुतः कोपवशं जगाम ।
तवात्मजस्याथ वृकोदरो भृशं
धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत् ।
ललाटमप्यस्य बिभेद पत्रिणा
शिरश्च कायात्प्रजहार सारथेः ॥ ४
स राजपुत्रोऽन्यदवाप्य कार्मुकं
वृकोदरं द्वादशभिः पराभिनत् ।
स्वयं नियच्छंस्तुरगानजिह्मगैः
शरैश्च भीमं पुनरप्यवीवृषत् ॥ ४

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे षडशीतितमोऽध्यायः ॥ ८६ ॥

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

भीमेन राज्ञां समक्षं दुःशासनवक्षसो रक्तपानम् ॥ १ ॥

सञ्जय उवाच ।
स राजपुत्रेण समार्च्छदुग्र-
दुःशासनेन निकृतो निकृत्या ॥ १
तत्राकरोद्दुष्करं राजपुत्रो
दुःशासनः कुरुवीरो महात्मा ।
यद्भीमसेनं प्रतियोधयद्रणे
जम्भो यथा शक्रमुदारवीर्यम् ॥ २
धनुश्छित्त्वा भीमसेनस्य सङ्ख्ये
षड्भिः शरैः सारथिमभ्यविध्यत् ।
ततोऽविध्यत्त्रिंशता भीमसेनं
वरेषुभिर्वन्यमिव द्विपेन्द्रम् ॥ ३
स कार्मुकं गृह्य तु भारसाधनं
भीमस्तदा राजपुत्रं ह्यविध्यत् ।
पञ्चाशतैर्बाणगणैः स्तनान्तरे
तोत्रैर्यथा तीव्रवेगं द्विपेन्द्रम् ॥ ४
ततस्तु राजन्विरथं महात्मा
दुःशासनो भीमसेनं चकार ।
निहत्य सङ्ख्ये चतुरोऽस्य वाहा-
न्छित्त्वा रथेषां पुनरेव चाक्षिपत् ॥ ५
ततः क्षितिस्थो ह्यवरुह्य याना-
द्वृकोदरो गदया तस्य वाहान् ।

यमक्षयं प्रेषयित्वा महात्मा
रथं समाकर्षत राजसूनोः ॥ ६
तस्मादवप्लुत्य रथात्ससर्ज
दुःशासनस्तोमरमुग्रवेगम् ।
स तेन विद्धो ह्युरसि ह्यप्रमेयो
गदां तस्मै विससर्जाप्रमेयाम् ॥ ७
ततः क्रोधाद्भीमसेनः कृतानि
सर्वाणि दुःखान्यनुसंस्मरन्वै ।
संस्मृत्य संस्मृत्य तथा प्रतिज्ञा-
मुग्रामसौ राजपुत्रो व्यषीदत् ॥ ८
संचिन्तितं रोषमतीव वेगा-
त्रयोदशाब्दं पुरुषप्रवीरः ।
प्रगृह्य वज्राशनितुल्यवेगां
गदां करेणाथ वृकोदरो रुषा ॥ ९
निपातयित्वा पृथिवीतले भृशं
स ताडयामास वृकोदरो बली ।
अतीव संताडितभिन्नगात्रो
दुःशासनो वै निपपात भूमौ ॥ १०
आक्रम्य कण्ठे युधि राजपुत्रं
संरक्तनेत्रो ह्यब्रवीद्धार्तराष्ट्रम् ।
तद्ब्रूहि किं त्वं परिमार्गमाणो
ह्यस्मान्पराभूय इहागतः पुनः ॥ ११
दिदीपयंस्तद्भृशदीपितं मे
चिरार्जितं रोषमतिप्रदीप्तम् ।
मधु प्रपास्ये तव कोष्टभाजना-
दित्यब्रवीद्भीमसेनस्तरस्वी ॥ १२
दुःशासनं कण्ठदेशे प्रमृद्नं-
स्ततः क्रूरं भीमसेनश्चकार ।
तं व्यंसयित्वा सहसा ससार
बलादसौ धार्तराष्ट्रस्तरस्वी ॥ १३
भीमोऽभिदुद्राव सुतं त्वदीयं
सपत्नतां दर्शयन्धार्तराष्ट्रे ।
मृगं मुहुः सिंहशिशुर्यथा वने
तथाश्वभिद्रुत्य महाबलं बली ॥ १४
निगृह्य चैनं परमेण कर्मणा
उत्क्षिप्य चोत्क्षिप्य च तूर्णमेनम् ।
भूमौ तदा निष्पिपेषाथ वीर
असिं विकोशं विमलं चकार ॥ १५
तं पातयित्वा तु वृकोदरोऽथ
जगर्ज हर्षेण विनादयन्दिशः ।
नादेन तेनाखिलपार्श्ववर्तिनो
मूर्च्छाकुलाः पतितास्त्वाजमीढ ॥ १६
दुःशासनं तत्र समीक्ष्य राज-
न्भीमो महाबाहुरचिन्त्यकर्मा ।
स्मृत्वा च केशग्रहणं च देव्या
वस्त्रापहारं च रजस्वलायाः ॥ १७
अनागसो भर्तृपराङ्मुखाया
दुःखानि दत्तान्यपि विप्रचिन्त्य ।
जज्वाल कोपादथ भीमसेन
आज्यप्रसिक्तो हि यथा हुताशः ॥ १८
तत्राह कर्णं च सुयोधनं च
कृपं द्रौणिं कृतवर्माणमेव ।
निहन्मि दुःशासनमद्य पापं
संरक्ष्यतामद्य समस्तयोधाः ॥ १९
इत्येवमुक्त्वा सहसाभ्यधाव-
न्निहन्तुकामोऽतिबलस्तरस्वी ।
तथा तु विक्रम्य रणे वृकोदरो
महागजं केसरिको यथैव ।
निगृह्य दुःशासनमेकवीरः
सुयोधनस्याधिरथेः समक्षम् ॥ २०
असिं समुद्यम्य सितं सुधारं
कण्ठे पदाक्रम्य च वेपमानम् ।
उवाच तद्गौरिति यद्ब्रुवाणो
हृष्टोऽवदः कर्णसुयोधनाभ्याम् ॥ २१
ये राजसूयावभृथे पवित्रा
जाताः कचा याज्ञसेन्या दुरात्मन् ।
ते पाणिना कतरेणावकृष्टा-
स्तद्ब्रूहि त्वां पृच्छति भीमसेनः ॥ २२

श्रुत्वा तु तद्भीमवचः सुघोरं
दुःशासनो भीमसेनं निरीक्ष्य ।
जज्वाल भीमं स तदा स्मयेन
संशृण्वतां कौरवसोमकानाम् ।
उक्तस्तदाजौ स तथा सरोषं
जगाद भीमं परिवृत्तनेत्रः ॥ २३
अयं करिकराकारः पीनस्तनविमर्दनः ।
गोसहस्रप्रदाता च क्षत्रियान्तकरः करः ॥ २४
अनेन याज्ञसेन्या मे भीम केशा विकर्षिताः ।
पश्यतां कुरुमुख्यानां युष्माकं च सभासदाम् २५
एवं त्वसौ राजसुतं निशम्य
ब्रुवन्तमाजौ विनिपीड्य वक्षः ।
भीमो बलात्तं प्रतिगृह्य दोर्भ्या-
मुच्चैर्ननादाथ समस्तयोधान् ॥ २६
उवाच यस्यास्ति बलं स रक्ष-
त्वसौ भवेदद्य निरस्तबाहुः ।
दुःशासनं जीवितं प्रोत्सृजन्त-
माक्षिप्य योधांस्तरसा महाबलः ॥ २७
एवं क्रुद्धो भीमसेनः करेण
उत्पाटयामास भुजं महात्मा ।
दुःशासनं तेन स वीरमध्ये
जघान वज्राशनिसंनिभेन ॥ २८
कण्ठे समाक्रम्य च वेपमानं
कृत्वाऽनु रूपं परमं सुघोरम् ।
कालान्तकाभ्यां सदृशं तदानीं
विदार्य वक्षश्च महारथस्य ॥ २९

दुःशासनस्य रिपुशासनस्य
उद्धृत्य वक्षः पतितस्य भूमौ ।
ततोऽपिबच्छोणितमस्य कोष्ण-
मास्वाद्य चास्वाद्य च वीक्षमाणः ॥ ३
क्रुद्धः प्रहृष्टो निजगाद वाक्यं
स्तन्यस्य मातुः पयसोऽमृतस्य ।
माध्वीकजस्येव रसस्य तस्य
मधोश्च पानाद्यवकस्य पानात् ॥ ३
पयोदधिभ्यां मथिताच्च मुख्या-
त्तथेक्षुसारस्य मनोहरस्य ।
सर्वेभ्य एवाभ्यधिको रसोऽस्य
मतो ममाद्याहितलोहितस्य ॥ ३
एवं ब्रुवाणं पुनरुत्थितं त-
मास्फोट्य वल्गन्तमतिप्रहृष्टम् ।
ये भीमसेनं ददृशुस्तदानीं
प्रायेण तेऽपि व्यथिता निपेतुः ॥ ३
ये चापि नासन्पतिता मनुष्या-
स्तेषां करेभ्यः पतितं तु शस्त्रम् ।
भयाच्च संचुक्रुशुरस्वरैस्तदा
निमीलिताक्षा मुमुहुश्च तत्र ॥ ३
ये तत्र भीमं रुधिरं पिबन्तं
दुःशासनस्य ददृशुः प्रपन्नाः ।
नायं मनुष्यस्त्विति भाषमाणाः
सर्वेऽपलायन्त भयाभिपन्नाः ॥ ३

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

दुःशासनवधक्रोधादात्मानमभिद्रुतवतां तदनुजानां भीमेन वधः ॥ १ ॥ दुःशासनादिनिधनाद्भिभ्यतः कर्णस्य शल्ये प्रोत्साहनम् ॥ २ ॥ संकुलयुद्धम् ॥ ३ ॥

सञ्जय उवाच ।
स पीत्वा रुधिरं तस्य चरणौ गृह्य भारत ।
इत्युच्चैर्वचनं प्राह प्रतिनृत्यन्वृकोदरः ॥ १
एष ते रुधिरं तीव्रं पिबामि पुरुषादवत् ।
वदेदानीं सुसंरब्धः पुनर्गौरिति गौरिति ॥
ये चास्मान्प्रतिनृत्यन्ति तदा गौरिति गौरिति

योधानाक्षिप्य उवाचेत्यन्वयः ॥२७॥ अहितस्य शत्रोःदुःशासनस्य लोहितस्य रक्तस्य ॥३२॥ सप्ताशीतितमोऽध्यायः ॥८७

तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ ३
प्रमाणकोट्यां शयनं कालकूटकभोजनम् ।
दंशनं चाहिभिस्तीक्ष्णैर्दाहं जतुगृहे च यत् ॥ ४
द्यूते च दोषभूयस्त्वमरण्ये वसतिश्च या ।
इष्वस्त्राणि च सङ्ग्रामे अनिलानिलवेश्मसु ॥ ५
दुःखान्येवाभिजानीमो न सुखानि कदाचन ।
धृतराष्ट्रस्य दौरात्म्यात्सपुत्रस्य वयं सदा ॥ ६
इत्युच्चैर्वचनं प्रोच्य जयं प्राप्य वृकोदरः ।
पुनरेव महाराज तव सैन्यमभिद्रवत् ॥ ७

रक्तार्द्रपाणिस्तु ततो महात्मा
गदापाणिः काल इवान्तकाले ।
विभीषयंस्तव पुत्रस्य सैन्य-
मितस्ततो धावति वाहिनीं ते ॥ ८
ततः क्षणाद्भारत शून्यमासी-
दायोधनं घोरतरं कुरूणाम् ।
यत्राजिमध्ये प्रापिबद्भीमसेनो
दुःशासनस्य रुधिरं क्रोधदीप्तः ॥ ९

हत्वा समरे राजन्राजपुत्रं महाबलम् ।
र्णकामो मदोदग्रः सिंहो रुरुमिवोत्कटः ॥ १०
धिरार्द्रो महाराज व्यशोभत परंतपः ।
पुष्पः किंशुक इव रक्तरक्ततरो बभौ ॥ ११
धिराक्तो घोरवेषः क्रुद्धो राजन्वचोऽब्रवीत् ।
हीदानीं पापमते नृशंस पतितो ह्यसि ॥ १२

दुःशासने यादृशं संश्रुतं न-
स्तदवाप्तं पाण्डवैः सर्वमेव ।
अत्रैवमाप्स्याम्यपरं द्वितीयं
दुर्योधनं यज्ञपशुं विशस्य ॥ १३
शिरो मृदित्वाऽस्य पुनश्च शान्तिं
यास्याम्यहं कौरवाणां समक्षम् ।
या साऽपतिः सा सपतिर्हि जाता
यास्ताः सपत्न्योऽपतयस्तु जाताः ॥ १४
पश्यन्तु चित्रं विविधं हि लोके
ये वै तिलाः षण्डतिला बभूवुः ।
ते चेत्संसिद्धा निधनं गताः परे
किं चित्ररूपं बत जीवलोके ॥ १५
एतावदुक्त्वा वचनं प्रहृष्टः
प्राक्रोशदुच्चै रुधिरार्द्रवक्त्रः ।
ननर्त चैवातिबलो महात्मा
वृत्रं निहत्येव सहस्रनेत्रः ॥ १६
दृष्ट्वा तु नृत्यन्तमुदग्रवीर्यं
कालं यथा त्वन्तकाले प्रजानाम् ।
महद्भयं चाधिरथिं विवेश
जये निराशाश्च सुतास्त्वदीयाः ॥ १७

दुःशासने तु निहते पुत्रास्तव महारथाः ।
महत्क्रोधविषं वीरा धारयन्तो महाबलाः ।
ते तु राजन्महावीर्या भीमं प्राच्छादयञ्छरैः ॥ १८
निषङ्गी कवची खड्गी दण्डधारो धनुर्धरः ।
अलम्बुर्जलसन्धश्च वातवेगसुवर्चसौ ॥ १९
एते समेत्य सहिता भ्रातृव्यसनकर्शिताः ।
भीमसेनं महाबाहुं पीडयामासुरञ्जसा ॥ २०
स वध्यमानो विशिखैः समन्तात्तैर्महारथैः ।
भीमः क्रोधाभिरक्ताक्षः क्रुद्धः कालइवाबभौ ॥ २१
ततः परिवृतो राजन्नवभिः शत्रुतापनैः ।
दुःशासनादवरजैः पुत्रैस्तव वृकोदरः ॥ २२
तांस्तु भल्लैर्महावेगैर्नवभिर्नव भारत ।
रुक्माङ्गदान्रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ॥ २३
हतेषु तव पुत्रेषु बलं तद्विप्रदुद्रुवे ।
पश्यतः सूतपुत्रस्य पाण्डवस्य भयार्दितम् ॥ २४
ततः कर्णं महाराज प्रविवेश महद्भयम् ।
दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव ॥ २५
तस्य त्वाकारभावज्ञः शल्यः समितिशोभनः ।
उवाच वचनं कर्णं प्राप्तकालं हितं तदा ॥ २६
मा व्यथां कुरु राधेय नैवं त्वय्युपपद्यते ॥ २७
एते द्रवन्ति राजानो भीमसेनभयार्दिताः ।
दुर्योधनश्च संमूढो भ्रातृव्यसनकर्शितः ॥ २८
दुःशासनस्य रुधिरे पीयमाने महात्मना ।
व्यापन्नचेताः सहसा शोकोपहतचेतनः ॥ २९
उपासते त्वामेते हि परिवार्य महारथाः ।
कृपप्रभृतयः कर्ण हतशेषाः सहोदराः ॥ ३०
पाण्डवा लब्धलक्षाश्च धनञ्जयपुरोगमाः ।

त्वामेवाभिमुखाः शूरा युद्धाय समुपस्थिताः ॥ ३१
स त्वं पुरुषशार्दूल पौरुषे महति स्थितः ।
क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयम् ॥ ३२
भारो हि धार्तराष्ट्रेण त्वयि सर्वः समाहितः ।
तमुद्वह महाबाहो यथाशक्ति यथाबलम् ॥ ३३
जये स्याद्विपुला कीर्तिर्ध्रुवः स्वर्गः पराजये ।
वृषसेनश्च राधेय संक्रुद्धस्तनयस्तव ।
त्वयि मोहं समापन्ने पाण्डवानभिधावति ॥ ३४
सञ्जय उवाच ।
एतच्छ्रुत्वा तु वचनं शल्यस्यामिततेजसः ।
हृदि मानुष्यकं भावं कृत्वा युद्धाय सुस्थिरम् ॥ ३५

ततः क्रुद्धो वृषसेनोऽभ्यधाव-
द्भीमं समायान्तममित्रसाहम् ।
बाणैः किरन्तं प्रतियाति चोग्रं
व्यात्ताननं कालमिवापतन्तम् ॥ ३६
तमभ्यधावन्नकुलः प्रवीर-
मारादमित्रं प्रतुदन्पृषत्कैः ।
कर्णस्य पुत्रं समरे प्रहृष्टं
जिष्णुर्जिघांसुर्मघवेव जम्भम् ॥ ३७
ततो ध्वजं स्फाटिकहेमचित्रं
चिच्छेद धैर्यान्नकुलः क्षुरेण ।
कर्णात्मजस्येष्वसनं च चित्रं
भल्लेन जाम्बूनदचित्रनद्धम् ॥ ३८
अथान्यदादाय धनुः स शीघ्रं
कर्णात्मजः पाण्डवमभ्यविध्यत् ।
दिव्यैरस्त्रैरभ्यवर्षत्तदैनं
कर्णस्य पुत्रो नकुलं कृतास्त्रम् ॥ ३९
ततः क्रुद्धो नकुलः कर्णपुत्रं
शरैर्महोल्काभिरिवाभ्यपीडयत् ।
स कर्णपुत्रो नकुलस्य राज-
न्सर्वानस्त्रान्वारयदुत्तमास्त्रैः ॥ ४०
आसीत्सुघोरं भरतप्रवीर
युद्धं तदा कर्णजपाण्डवाभ्याम् ॥ ४१
वनायुजान्सुकुमारान्सुशुभ्रा-
नलंकृताञ्जातरूपेण चित्रान् ।
जघान चाश्वान्नकुलस्य वीरो
रणाजिरे सूतपुत्रस्य पुत्रः ॥
ततो हताश्वादवरुह्य याना-
च्चर्माऽऽददे रुचिरं बर्हिचित्रम् ।
आकाशसंकाशमसिं प्रगृह्य
प्रकाशमानः खगवच्चचार ॥
ततोऽस्य पक्षाननयद्यमाय
द्विसाहस्रान्नकुलः क्षिप्रकारी ।
ते प्रापतन्नसिना वै विशस्ता
यथाऽश्वमेधे पशवः शमित्रा ॥ ४
ततस्ततो विजिता युद्धशौण्डा
नानादेश्याः सुहृदः सत्यसन्धाः ।
एकेन शीघ्रं नकुलेन नुन्नाः
सारेप्सुनेवोत्तमचन्दनस्य ॥ ४
भूमौ चरन्तं नकुलं रथौघाः
समन्ततः सायकैः प्रत्यगृह्णन् ।
स तुद्यमानो नकुलो विहङ्ग-
श्चचार सङ्ख्ये द्विषतो विनिघ्नन् ॥ ४
तं कर्णपुत्रोऽपि चरन्तमाजौ
नराश्वमातङ्गरथप्रवीरान् ।
निघ्नन्तमष्टादशभिः पृषत्कै-
र्विव्याध वीरः स चुकोप विद्धः ॥ ४
ततोऽभ्यधावत्समरे जिघांसुः
कर्णात्मजं पाण्डुसुतो नृवीरम् ।
तस्येषुभिर्व्यधमत्सूतपुत्रो
महारणे वर्म सहस्रभारम् ॥ ४८
तस्याथ कांस्यं सुशितं सुपीत-
मसिप्रवीरं गुरुभारसाहम् ।
द्विषच्छरीरापहरं सुघोर-
माधून्वतः सर्पमिवात्तकोशम् ॥ ४९
क्षिप्रं शरैः षड्भिरमित्रसाह-
श्चकर्त खड्गं निशितैः सुधारैः ।
पुनश्च पार्श्वे निशितैः पृषत्कैः
स्तनान्तरे क्षिप्रमिवात्यविध्यत् ॥ ५०

स भीमसेनस्य रथं च गत्वा
ववर्ष वै शरवर्षं सुघोरम् ॥ ५१
नकुलमथ विदित्वा छिन्नबाणासनासिं
विरथमरिभिरार्तं कर्णपुत्रास्त्रमग्नम् ।
पवनचलपताका ह्लादिनो वल्गिताश्वाः
परपुरुषनियुक्ताः स्वै रथैः शीघ्रमीयुः॥५२
द्रुपदसुतवरिष्ठाः पञ्च शैनेयषष्ठा
द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः ।
द्विरदरथनराश्वान्सूदयन्तस्त्वदीयान्
भगवत इव रुद्राः सञ्जयया हेतिमन्तः॥५३

अथ तव रथमुख्यास्तान्प्रतीयुस्त्वरन्तः
कृपहृदिकसुतौ च द्रौणिदुर्योधनौ च ।
शकुनिशुकवृकाश्च क्राथदेवावृधौ च
द्विरदजलदघोषैः स्यन्दनैः कार्मुकैश्च ॥५४
अथ तव रथवर्यास्तान्दशैकप्रवीरा-
निषुभिरशनिकल्पैस्ताडयन्तो न्यरुन्धन् ।
नवजलदसवर्णैर्हस्तिभिस्तान्स वव्रु-
र्गिरिशिखरनिकाशैर्भीमवेगैः कुणिन्दाः॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

संकुलयुद्धम् ॥ ॥

सञ्जय उवाच ।
सुकल्पिता हैमवता मदोत्कटा
रणाभिकामैः कृतिभिः समास्थिताः ।
सुवर्णजालैर्वितता बभुर्गजा-
स्तथा यथा खे जलदाः सविद्युतः ॥ १
कुणिन्दपुत्रो दशभिर्महायसैः
कृपं ससूताश्वमपीडयद्भृशम् ।
ततः शरद्वत्सुतसायकैर्हतः
सहैव नागेन पपात भूतले ॥ २
कुणिन्दपुत्रावरजस्तु तोमरै-
र्दिवाकरांशुप्रतिमैरयस्मयैः ।
जघान भोजस्य हयानथापतन्
क्षणाद्विशस्ताः कृतवर्मणे हयाः ॥ ३
अथापरे द्रौणिहता महाद्विपा-
स्त्रयः ससर्वायुधयोधकेतनाः ।
निपेतुरुर्व्यां व्यसवो विचेतना-
स्तथा यथा वज्रहता महाचलाः ॥ ४
कुणिन्दराजावरजादनन्तरः
स्तनान्तरे पत्रिवरैरताडयत् ।

तवात्मजं तस्य तवात्मजः शरैः
शितैः शरीरं व्यहनद्द्विपं च तम् ॥ ५
स नागराजः सह राजसूनुना
पपात रक्तं बहु सर्वतः क्षरन् ।
महेन्द्रवज्रप्रहतोऽम्बुदागमे
यथा जलं गैरिकपर्वतस्तथा ॥ ६
कुणिन्दपुत्रप्रहितोऽपरो द्विपः
क्राथं ससूताश्वरथं व्यपोथयत् ।
ततोऽपतत्क्राथशराभिघातितः
सहेश्वरो वज्रहतो यथा गिरिः ॥ ७
रथी द्विपस्थेन हतोऽपतच्छरैः
क्राथाधिपः पर्वतजेन दुर्जयः ।
सवाजिसूतेष्वसनध्वजस्तथा
यथा महावातहतो महाद्रुमः ॥ ८
वृको द्विपस्थं गिरिराजवासिनं
भृशं शरैर्द्वादशभिः पराभिनत् ।
ततो वृकं साश्वरथं महाद्विपो
द्रुतं चतुर्भिश्चरणैर्व्यपोथयत् ॥ ९
स पोथितो नागवरेण वीर्यवा-
न्पराभिनद्द्वादशभिः शिलीमुखैः ।

वृकेण बाणाभिहतोऽपतत्क्षितौ
सवारणो वभ्रुसुतेन सार्धम् ॥ १०
कुणिन्दराजस्य सुतोऽपरस्तदा
स चापि शूरः सहसा समर्पितः ।
पपात बाणैः सुबलस्य सूनुना
विषाणपुच्छापरगात्रपातिना ॥ ११
गजेन वाहाञ्शकुनेः कुणिन्दजो
निनाय वैवस्वतमन्दिरं रणे ।
रथं च संक्षुभ्य ननाद नर्दत-
स्ततोऽस्य गान्धारपतिः शिरोऽहरत् ॥ १२
ततः कुणिन्देषु गतेषु तेषु
प्रहृष्टरूपास्तव ते महारथाः ।
भृशं प्रदध्मुर्लवणाम्बुसंभवा-
न्वरांश्च बाणासनपाणयोऽभ्ययुः ॥ १३
तथाऽभवद्युद्धमतीव दारुणं
पुनः कुरूणां सह पाण्डुसृञ्जयैः ।
शरासिशक्त्यृष्टिगदापरश्वधै-
र्नराश्वनागासुहरं भृशाकुलम् ॥ १४
रथाश्वमातङ्गपदातयस्ततः
परस्परं विप्रहताः क्षितौ पतन् ।
यथा सविद्युत्तटितो जलप्रदाः
समुत्थितैर्दिग्भ्य इवोग्रमारुतैः ॥
ततः शतानीकहता महागजा
हया रथाः पत्तिगणाश्च तावकाः ।
सुपर्णवातप्रहता यथोरगा-
स्तथा गता गां विवशा विचूर्णिताः ॥
ततोऽभ्यविध्यद्बहुभिः शितैः शरैः
स विन्दपुत्रो नकुलात्मजं स्मयन् ।
ततोऽस्य कोपाद्विचकर्त नाकुलिः
शिरः क्षुरेणाम्बुजसन्निभाननम् ॥
ततः शतानीकमविध्यदायसै-
स्त्रिभिः शरैः कर्णसुतोऽर्जुनं त्रिभिः ।
त्रिभिश्च भीमं नकुलं च सप्तभि-
र्जनार्दनं द्वादशभिश्च सायकैः ॥ १
तदस्य कर्मातिमनुष्यकर्मणः
समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन् ।
पराक्रमज्ञास्तु धनञ्जयस्य ये
हुतोऽयमग्नाविति ते तु मेनिरे ॥ १

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ॥ ९० ॥

अर्जुनेन कर्णसूनोर्वृषसेनस्य वधः ॥ १ ॥

सञ्जय उवाच ।
ततः किरीटी परवीरघाती
हताश्वमालोक्य नरप्रवीरः ।
माद्रीसुतं नकुलं लोकमध्ये
समीक्ष्य कृष्णं भृशविक्षतं च ।
समभ्यधावद्वृषसेनमाहवे
स सूतजस्य प्रमुखे स्थितस्तदा ॥ १
तमापतन्तं नरवीरमुग्रं
महाहवे बाणसहस्रधारिणम् ।
अभ्यापतत्कर्णसुतो महारथं
यथा महेन्द्रं नमुचिः पुरा तथा ॥ २
तौ तत्र शूरौ रथकुञ्जरौ रणे
परस्परस्याभिमुखौ महारथौ ।
ससर्जतुः शरसङ्घाननेका-
न्संभ्रान्तरूपौ सुभृशं तदानीम् ॥
ततो द्रुतं चैकशरेण पार्थं
शितेन विद्ध्वा युधि कर्णपुत्रः ।
ननाद नादं सुमहानुभावो
विद्ध्वेव शक्रं नमुचिः स वीरः ॥ ४
पुनः स पार्थं वृषसेन उग्रै-
र्बाणैरविध्यद्भुजमूले तु सव्ये ।

तथैव कृष्णं नवभिः समार्द्य-
स्पुनश्च पार्थं दशभिर्जघान ॥ ५
पूर्वं यथा वृषसेनप्रयुक्तै-
रभ्याहतः श्वेतहयः शरैस्तैः ।
संरम्भमीषद्गमितो वधाय
कर्णात्मजस्याथ मनः प्रदध्रे ॥ ६
ततः किरीटी रणमूर्ध्नि कोपात्
कृत्वा त्रिशाखां भ्रुकुटिं ललाटे ।
मुमोच तूर्णं विशिखान्महात्मा
वधे धृतः कर्णसुतस्य सङ्ख्ये ।
आरक्तनेत्रोऽन्तकशत्रुहन्ता
उवाच कर्णं भृशमुत्स्मयंस्तदा ॥ ७
दुर्योधनं द्रौणिमुखांश्च सर्वा-
नहं रणे वृषसेनं तमुग्रम् ।
सम्पश्यतः कर्ण तवाद्य सङ्ख्ये
नयामि लोकं निशितैः पृषत्कैः ॥ ८
ऊनं च तावद्धि जना वदन्ति
सर्वैर्भवद्भिर्मम सूनुर्हतोऽसौ ।
एको रथो मद्विहीनस्तरस्वी
अहं हनिष्ये भवतां समक्षम् ॥ ९
संरक्ष्यतां रथसंस्थाः सुतोऽय-
महं हनिष्ये वृषसेनमुग्रम् ।
पश्चाद्वधिष्ये त्वामपि सम्प्रमूढ-
महं हनिष्येऽर्जुन आजिमध्ये ॥ १०
तमद्य मूलं कलहस्य सङ्ख्ये
दुर्योधनापाश्रय जातदर्पम् ।
त्वामद्य हन्ताऽस्मि रणे प्रसह्य
अस्यैव हन्ता युधि भीमसेनः ।
दुर्योधनस्याधमपूरुषस्य
यस्यानयादेष महान्क्षयोऽभवत् ॥ ११
स एवमुक्त्वा विनिमृज्य चापं
लक्ष्यं हि कृत्वा वृषसेनमाजौ ।
ससर्ज बाणान्विशिखान्महात्मा
वधाय राजन्कर्णसुतस्य सङ्ख्ये ॥ १२
विव्याध चैनं दशभिः पृषत्कै-
र्मर्मस्वशङ्कं प्रहसन्किरीटी ।
चिच्छेद चास्येष्वसनं भुजौ च
क्षुरैश्चतुर्भिर्निशितैः शिरश्च ॥ १३
स पार्थबाणाभिहतः पपात
रथाद्विबाहुर्विशिरा धरायाम् ।
सुपुष्पितो वज्रहतोऽतिमात्रो
भग्नो यथा साल इवावकृत्तः ॥ १४
तं पार्थबाणाभिहतं पतन्तं
सम्प्रेक्ष्य कर्णः सुतमाशुकारी ।
रथं रथेनाशु जगाम रोषा-
त्किरीटिनः पुत्रवधाभितप्तः ॥ १५

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे नवतितमोऽध्यायः* ॥ ९० ॥

---

ऊनमिति । अभिमन्युं साधनैरिति शेषः । साधनैरूनं वदन्तीत्यन्वयः ॥ ९ ॥ नवतितमोऽध्यायः ॥ ९० ॥

---

* एतदनन्तरं झ. पुस्तके एकोऽध्यायोऽधिको दृश्यते ।

ञ्जय उवाच ।
मायान्तमभिप्रेक्ष्य वेलोद्धृत्तमिवार्णवम् ।
र्जन्तं सुमहाकायं दुर्निवारं सुरैरपि ।
र्जुनं प्राह दाशार्हः प्रहस्य पुरुषर्षभः ॥ १
यं सरथ आयाति श्वेताश्वः शल्यसारथिः ।
न ते सह योद्धव्यं स्थिरो भव धनञ्जय ॥ २
श्य चैनं समायुक्तं रथं कर्णस्य पाण्डव ।
तवाजिसमायुक्तं युक्तं राधासुतेन च ॥ ३
नापताकाकलिलं किङ्किणीजालमालिनम् ।
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः ॥ ४
ध्वजं च पश्य कर्णस्य नागकक्षं महात्मनः ।
आखण्डलधनुःप्रख्यमुल्लिखन्तमिवाम्बरम् ॥ ५
पश्य कर्णं समायान्तं धार्तराष्ट्रप्रियैषिणम् ।
शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम् ॥ ६
एष मद्रेश्वरो राजा रथाग्रे पर्यवस्थितः ।
नियच्छति हयानस्य राधेयस्यामितौजसः ॥ ७
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दं च दारुणम् ।
सिंहनादांश्च विविधाञ्शृणु पाण्डव सर्वतः ॥ ८

## एकनवतितमोऽध्यायः ॥ ९१ ॥

द्वन्द्वयुद्धाय कर्णार्जुनयोः समागमः ॥ १ ॥ तदवलोकनाय दिवि देवगन्धर्वादीनां समागमः ॥ २ ॥ देवासुरादीनां कर्णार्जुनसमाश्रयणेन द्वैधीभावः ॥ ३ ॥

सञ्जय उवाच ।
वृषसेनं हतं दृष्ट्वा क्रोधामर्षसमन्वितः ।
पुत्रशोकोद्भवं वारि नेत्राभ्यां समवासृजत् ॥ १
रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपुम् ।
युद्धायामर्षताम्राक्षः समाहूय धनञ्जयम् ॥ २
तौ रथौ सूर्यसङ्काशौ वैयाघ्रपरिवारितौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ समुद्गतौ ॥ ३
श्वेताश्वौ पुरुषादित्यावास्थितावरिमर्दनौ ।
शुशुभाते महात्मानौ चन्द्रादित्यौ यथा दिवि ।
'रथौ चतुर्भिर्जलदैर्भगमित्राविवाम्बरे ॥' ४
तौ दृष्ट्वा विस्मयं जग्मुः सर्वसैन्यानि मारिष ।
त्रैलोक्यविजये यत्ताविन्द्रवैरोचनाविव ॥ ५
रथज्यातलनिर्ह्रादैर्बाणशङ्खरवैस्तथा ।
तौ रथावभ्यधावन्त क्षत्रियाः सर्व एव हि ॥ ६
ध्वजावालोक्य वीराणां विस्मयः समपद्यत ।
हस्तिकक्ष्यां च कर्णस्य वानरं च किरीटिनः ॥ ७
तौ रथौ संप्रसक्तौ तु दृष्ट्वा भारत पार्थिवाः ।
सिंहनादरवांश्चक्रुः साधुवादांश्च पुष्कलान् ॥ ८
श्रुत्वा तयोर्द्वैरथं च तत्र योधाः सहस्रशः ।
चक्रुर्बाहुस्वनांश्चैव तथा बाणरवं महत् ॥ ९
आजघ्नुः कुरवस्तत्र वादित्राणि समन्ततः ।
राधेयमभितो दध्मुः शङ्खाञ्शतसहस्रशः ॥ १०
तथैव पाण्डवाः सर्वे हर्षयन्तो धनञ्जयम् ।
तूर्यशङ्खनिनादेन दिशः सर्वा व्यनादयन् ॥ ११
क्ष्वेलितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् ।
बाहुशब्दैश्च शूराणां कर्णार्जुनसमागमे ॥ १२
तौ दृष्ट्वा पुरुषव्याघ्रौ रथस्थौ रथिनां वरौ ।
प्रगृहीतमहाचापौ शरशक्तिध्वजायुतौ ॥ १३
वर्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ शङ्खशोभितौ ।
तूणीरवरसंपन्नौ द्वावप्येतौ सुदर्शनौ ॥ १४
रक्तचन्दनदिग्धाङ्गौ समदौ गोवृषाविव ।
चापविद्युद्ध्वजोपेतौ शस्त्रसंपत्तियोधिनौ ॥ १५

अन्तर्धाय महाशब्दान्कर्णेनामिततेजसा ।
दोधूयमानस्य भृशं धनुषः शृणु निःस्वनम् ॥ ९
एते दीर्यन्ति सगणाः पाञ्चालानां महारथाः ।
दृष्ट्वा केसरिणं क्रुद्धं मृगा इव महावने ॥ १०
सर्वयत्नेन कौन्तेय हन्तुमर्हसि सूतजम् ।
न हि कर्णशरानन्यः सोढुमुत्सहते नरः ॥ ११
सदेवासुरगन्धर्वांस्त्रीँल्लोकान्सचराचरान् ।
त्वं हि जेतुं रणे शक्तस्तथैव विदितं मम ॥ १२
भीममुग्रं महात्मानं त्र्यक्षं शर्वं कपर्दिनम् ।
न शक्ता द्रष्टुमीशानं किं पुनर्योधितुं प्रभुम् ॥ १३
त्वया साक्षान्महादेवः सर्वभूतशिवः शिवः ।
युद्धेनाराधितः स्थाणुर्देवाश्च वरदास्तव ॥ १४
तस्य पार्थ प्रसादेन देवदेवस्य शूलिनः ।
जहि कर्णं महाबाहो नमुचिं वृत्रहा यथा ॥ १५
श्रेयस्तेऽस्तु सदा पार्थ युद्धे जयमवाप्नुहि ॥ १६
अर्जुन उवाच ।
ध्रुव एव जयः कृष्ण मम नास्त्यत्र संशयः ।
सर्वलोकगुरुर्यस्त्वं तुष्टोऽसि मधुसूदन ॥ १७
चोदयाश्वान्हृषीकेश रथं मम महारथ ।
नाहत्वा समरे कर्णं निवर्तिष्यति फल्गुनः ॥ १८
अद्य कर्णं हतं पश्य मच्छरैः शकलीकृतम् ।
मां वा द्रक्ष्यसि गोविन्द कर्णेन निहतं शरैः ॥ १९
उपस्थितमिदं घोरं युद्धं त्रैलोक्यमोहनम् ।
यज्जनाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥ २०
एवं ब्रुवंस्तदा पार्थः कृष्णमक्लिष्टकारिणम् ।
प्रत्युद्ययौ रथेनाशु गजं प्रतिगजो यथा ॥ २१
पुनरप्याह तेजस्वी पार्थः कृष्णमरिंदम ।
चोदयाश्वान्हृषीकेश कालोऽयमतिवर्तते ॥ २२
एवमुक्तस्तदा तेन पाण्डवेन महात्मना ।
जयेन सम्पूज्य स पाण्डवं तदा
प्रचोदयामास हयान्मनोजवान् ॥ २३
स पाण्डुपुत्रस्य रथो मनोजवः
क्षणेन कर्णस्य रथाग्रगोऽभवत् ॥ २४

इति कर्णपर्वणि अध्यायः ॥ श्रीः ॥

चामरव्यंजनोपेतौ श्वेतच्छत्रोपशोभितौ ।
कृष्णशल्यरथोपेतौ तुल्यरूपौ महारथौ ॥ १६
सिंहस्कन्धौ दीर्घभुजौ रक्ताक्षौ हेममालिनौ ।
सिंहस्कन्धप्रतीकाशौ व्यूढोरस्कौ महाबलौ ।
अन्योन्यवधमिच्छन्तावन्योन्यजयकाङ्क्षिणौ॥ १७
अन्योन्यमभिधावन्तौ गोष्ठे गोवृषभाविव ।
प्रभिन्नाविव मातङ्गौ सुसंरब्धाविवाचलौ ॥ १८
आशीविषशिशुप्रख्यौ यमकालान्तकोपमौ ।
इन्द्रवृत्राविव क्रुद्धौ सूर्यचन्द्रसमप्रभौ ॥ १९
महाग्रहाविव क्रुद्धौ युगान्ताय समुत्थितौ ।
देवगर्भौ देवसमौ देवतुल्यौ च रूपतः ॥ २०
यदृच्छया समायातौ सूर्याचन्द्रमसौ यथा ।
बलिनौ समरे दृप्तौ नानाशस्त्रधरौ युधि ॥ २१
तौ दृष्ट्वा पुरुषव्याघ्रौ शार्दूलाविव धिष्ठितौ ।
बभूव परमो हर्षस्तावकानां विशांपते ॥ २२
संशयः सर्वभूतानां विजये समपद्यत ।
समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनञ्जयौ ॥ २३
उभौ वरायुधधरावुभौ रणकृतश्रमौ ।
उभौ च बाहुशब्देन नादयन्तौ नभस्तलम् ॥ २४
उभौ विश्रुतकर्माणौ पौरुषेण बलेन च ।
उभौ च सदृशौ युद्धे शम्बरामरराजयोः ॥ २५
कार्तवीर्यसमौ चोभावुभौ दाशरथेः समौ ।
विष्णुवीर्यसमौ चोभावुभौ भवसमौ युधि ॥ २६
उभौ श्वेतहयौ राजन्रथप्रवरवाहिनौ ।
सारथिप्रवरौ चापि उभौ मद्रजनार्दनौ ॥ २७
ततो दृष्ट्वा महाराज राजमानौ महारथौ ।
सिद्धचारणसङ्घानां विस्मयः समपद्यत ॥ २८
धार्तराष्ट्रास्ततस्तूर्णं सबला भरतर्षभ ।
परिवव्रुर्महात्मानं कर्णमाहवशोभिनम् ॥ २९
तथैव पाण्डवा हृष्टा धृष्टद्युम्नपुरोगमाः ।
?मौ च चेकितानश्च प्रहृष्टाश्च प्रभद्रकाः ॥ ३०
?ानादेश्याश्च ये शूराः शिष्टा युद्धाभिनन्दिनः ।
? सर्वे सहिता हृष्टाः परिवव्रुर्धनञ्जयम् ॥ ३१
?रेरक्षिषन्तः शत्रुघ्नाः पत्त्यश्वरथकुञ्जराः ।
?नञ्जयस्य विजये धृताः कर्णवधेऽपि च ॥ ३२
तथैव तावकाः सर्वे यत्ताः सेनाप्रहारिणः ।
दुर्योधनमुखा राजन्कर्णं जुगुपुराहवे ॥ ३३
तावकानां रणे कर्णो ग्लहो ह्यासीद्विशांपते ।
तथैव पाण्डवेयानां ग्लहः पार्थोऽभवत्तदा ॥ ३४
तयोस्तु सभ्यास्तत्रासन्प्रेक्षकाश्चाभवन्युधि ।
तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ ॥ ३५
ताभ्यां द्यूतं समासक्तं विजयायेतराय वा ।
अस्माकं पाण्डवानां च स्थितानां रणमूर्धनि ॥३६
तौ तु स्थितौ महाराज समरे युद्धशालिनौ ।
अन्योन्यं प्रतिसंरब्धावन्योन्यवधकाङ्क्षिणौ ॥ ३७
तावुभौ प्रजिहीर्षन्ताविन्द्रवृत्राविव प्रभो ।
भीमरूपधरावास्तां महाधूमाविव ग्रहौ ॥ ३८
ततोऽन्तरिक्षे संजज्ञे विवादो भरतर्षभ ।
मिथो भेदाश्च भूतानामासन्कर्णार्जुनान्तरे ॥ ३९
व्याश्रयन्त द्विधा भिन्नाः सर्वे लोकास्तु मारिष ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
प्रतिपक्षग्रहं चक्रुः कर्णार्जुनसमागमे ॥ ४०
द्यौरासीत्कर्णपक्षेऽत्र सनक्षत्रा विशांपते ।
भूर्विशाला पार्थमाता पुत्रस्य जयकाङ्क्षिणी ॥४१
सागराश्चैव गिरयः सरितश्च नरोत्तम ।
महीजा जलजाश्चैव व्याश्रयन्त किरीटिनम् ॥४२
असुरा यातुधानाश्च गुह्यकाश्च परंतप ।
कर्णः समभवद्यत्र खेचराणि वयांसि च ॥ ४३
रत्नानि निधयः सर्वे वेदाश्चाख्यानपञ्चमाः ।
सोपवेदोपनिषदो व्याश्रयन्त किरीटिनम् ॥ ४४
वासुकिश्चित्रसेनश्च तक्षकश्चोपतक्षकः ।
महीवियज्जलचराः काद्रवेयाश्च सान्वयाः ।
विषवन्तो महानागा वेगिनश्चार्जुनेऽभवन् ॥ ४५
ऐरावताः सौरभेया वैशालेयाश्च भोगिनः ।
एतेऽभवन्नर्जुनस्य पापाः सर्पाश्च कर्णतः ॥ ४६
ईहामृगा व्यालमृगा मङ्गला मृगपक्षिणः ।
मङ्गलाः पशवश्चैव सिंहव्याघ्रास्तथैव च ।
पार्थस्य विजये राजन्सर्व एव समाश्रिताः ॥ ४७
वसवो मरुतः साध्या रुद्रा देवाश्विनावपि ।
अग्नी रुद्रश्च सोमश्च पन्नगाश्च दिशो दश ।

कर्णतः समपद्यन्त श्वसृगालवयांसि च ॥ ४८
वसवश्च महेन्द्रेण मरुतश्च सहाग्निना ।
धनञ्जयस्य ते वर्गा आदित्याः कर्णतोऽभवन् ॥ ४९
देवताः पितृभिः सार्धमृषिभिश्च परन्तप ।
तुम्बुरुप्रमुखाः सर्वे गन्धर्वा भरतर्षभ ।
यमो वैश्रवणश्चैव वरुणश्च यतोऽर्जुनः ॥ ५०
देवर्षिब्रह्मर्षिगणाः सर्वे च खचराश्च ये ।
प्रालेयाः सहमौनेयाः शुभाश्चाप्सरसां गणाः ॥ ५१
सहाप्सरोभिः शुभ्राभिर्देवदूताश्च गुह्यकाः ।
किरीटिनं संश्रिताः स्म पुण्यगन्धा मनोरमाः ॥ ५२
अमनोज्ञाश्च ये गन्धास्ते सर्वे कर्णमाश्रिताः ।
विपरीतान्यनिष्टानि भवन्ति विनशिष्यताम् ॥ ५३
ये त्वन्तकाले पुरुषं विपरीतमुपाश्रितम् ।
प्रविशन्ति नरं क्षिप्रं मृत्युकालेऽभ्युपागते ।
ते भावाः सहिताः कर्णं प्रविष्टाः सूतनन्दनम् ॥ ५४
ओजस्तेजश्च सिद्धिश्च प्रहर्षः सत्यविक्रमौ ।
मनस्तुष्टिर्जयश्चापि तथाऽऽनन्दो नृपोत्तम ॥ ५५
ईदृशानि नरव्याघ्र तस्मिन्संग्रामसागरे ।
निमित्तानि च शुभ्राणि विविशुर्जिष्णुमाहवे ॥ ५६
ऋषयो ब्राह्मणैः सार्धमभजन्त किरीटिनम् ॥ ५७
ततो देवगणैः सार्धं सिद्धाश्च सह चारणैः ।
द्विधा भूता महाराज व्याश्रयन्त नरोत्तमौ ॥ ५८
विमानानि विचित्राणि गुणवन्ति च सर्वशः ।
समारुह्य समाजग्मुर्द्वैरथं कर्णपार्थयोः ।
अन्तरिक्षे महाराज देवगन्धर्वराक्षसाः ॥ ५९
एवं सर्वेषु भूतेषु द्विधा भूतेषु भारत ।
आशंसमानेषु जयं राधेयस्यार्जुनस्य च ।
विमानायुतसंबाधमाकाशमभवत्तदा ॥ ६०
ईहामृगव्यालमृगैर्द्विपाश्वरथपङ्क्तिभिः ।
ऊह्यमानाः परे मेघैर्वायुना च मनीषिणः ।
दिदृक्षवः समाजग्मुः कर्णार्जुनसमागमम् ॥ ६१
देवदानवगन्धर्वा नागयक्षपतत्त्रिणः ।
महर्षयो देवगणाः पितरश्च स्वधाभुजः ॥ ६२
तपोविद्यौषधीसिद्धा नानारूपाम्बरत्विषः ।
अन्तरिक्षे महाराज विवदन्तोऽवतस्थिरे ॥ ६३
ब्रह्मा ब्रह्मर्षिभिः सार्धं प्रजापतिभिरेव च ।
आस्थितो यानमाकाशे दिव्यं तेजः समागताः ६४
ततः प्रजापतिस्तूर्णमाजगाम महामते ।
द्वैरथं युधि तं द्रष्टुं कर्णपाण्डवयोस्तदा ॥ ६५
विजित्य कर्णः स्विदिमां वसुंधरा-
मथार्जुनः स्वित्प्रतिपद्यतेऽखिलाम् ।
इतीश्वरस्यापि बभूव संशयः
प्रजापतेः प्रेक्ष्य तयोर्महद्बलम् ॥ ६६

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे एकनवतितमोऽध्यायः ॥ ९१ ॥

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

कर्णार्जुनसमाश्रयात् लोकक्षयभीरुणा प्रजापतिना ब्रह्माणं प्रति उभयोः साम्येन जयप्रार्थना ॥ १ ॥ इन्द्रेण सकारण-निरूपणमर्जुनस्यैव जये प्रार्थिते ब्रह्मेशानाभ्यां तदङ्गीकारे देवैर्हर्षात्पुष्पवर्षणम् ॥ २ ॥

सञ्जय उवाच ।
प्रजापतिस्तु तं दृष्ट्वा देवभागं समागतम् ।
अब्रवीत्तु ततो राजन्पश्यतो वै स्वयंभुवः ॥ १
उभावतिरथौ शूरावुभौ दृढपराक्रमौ ।
उभौ सदृशकर्माणौ वज्रिचक्रायुधोपमौ ॥ २
अहो बत महद्युद्धं कर्णार्जुनसमागमे ।
भविष्यति महाघोरं वृत्रवासवयोरिव ॥ ३
प्रजापतिरथोक्त्वैवं स्वयंभुवमचोदयत् ।
समोऽस्तु विजयः काममुभयोर्नरसिंहयोः ॥ ४
कर्णार्जुनविवादेन मा नश्येदखिलं जगत् ।
स्वयंभो ब्रूहि तद्वाक्यं समोऽस्तु विजयोऽनयोः ॥ ५
एवमुक्तस्तु भगवाञ्जये ताभ्यामनिश्चिते ।
इत्यब्रवीन्महाराज महाब्रह्मा प्रजापतिम् ॥ ६
द्वावप्येतौ हि कृतिनौ द्वावप्यतिबलोत्कटौ ।

भविष्यत्यनयोर्युद्धं त्रैलोक्यस्य भयावहम् ॥ ७
ततः प्रजापतिं तत्र सहस्राक्षोऽभ्यचोदयत् ।
विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः ॥ ८
मनस्वी बलवाञ्शूरः कृतविद्यस्तपोधनः ।
बिभर्ति च महातेजा धनुर्वेदमशेषतः ॥ ९
पार्थः सर्वगुणोपेतो देवकार्यमिदं यतः ।
क्लिश्यन्ते पाण्डवा नित्यं वनवासादिभिर्भृशं ॥१०
संपन्नस्तपसा चैव पर्याप्तः पुरुषर्षभः ।
अतिक्रामेच्च माहात्म्याद्दिष्टमप्यविचारयन् ॥११
अतिक्रमे च लोकानामभावो नियतो भवेत् ।
नावस्थानं च पश्यामि क्रुद्धयोः कृष्णयोः क्वचित् ॥
स्रष्टारौ जगतश्चैतौ ततश्च पुरुषर्षभौ ।
नरनारायणावेतौ पुराणावृषिसत्तमौ ॥ १३
अनियम्यौ नियन्तारौ जगतः पुरुषर्षभौ ।
[नैतयोस्तु समः कश्चिद्दिवि वा मानुषेषु वा ॥ १४
अनुगम्यास्त्रयो लोकाः सह देवर्षिचारणैः ।
सर्वदेवगणाश्चापि सर्वभूतानि यानि च ।
अनयोस्तु प्रभावेन वर्तते निखिलं जगत् ॥] १५
कामं तु सुकृताँल्लोकानाप्नोतु पुरुषर्षभः ।
कर्णो वैकर्तनः शूरो विजयस्त्वस्तु कृष्णयोः ॥ १६
वसूनां समलोकत्वं मरुतां वासमाप्नुयात् ।
सहितो द्रोणभीष्माभ्यां नाकपृष्ठे महीयताम् ॥१७
'क्लेशितो हि वने पार्थो दिर्घकालं पितामह ।
तस्मादेष जयेद्युद्धे तपसाऽभ्यधिकोऽर्जुनः ॥ १८
पूर्वं भगवता प्रोक्तः कृष्णयोर्विजयो ध्रुवः ।
तत्तथास्तु नमस्तेऽस्तु प्रभो ब्रूहि पितामह ॥ १९
तत्सहस्राक्षवचनं निशम्य भगवान्प्रभुः ।
नोवाच तज्जयं तुल्यं तयोः कर्णकिरीटिनोः ॥ २०
तस्मादाशां गतः शक्रस्तूष्णींभूते पितामहे ।
विजयः पाण्डवेयस्य कर्णस्य च वधो भवेत् ॥ २१
ब्रह्मेशानौ ततो वाक्यमूचतुर्भुवनेश्वरम् ।
विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः ॥ २२
मनस्वी जयतां शूरः कृतविद्यस्तपोधनः ।
बिभर्ति च महातेजा धनुर्वेदमशेषतः ॥ २३
अतिक्रामेच्च माहात्म्याद्दिष्टमप्यविचारयन् ।
अतिक्रमे च लोकानामभावो नियतो भवेत् ॥ २४
न च विद्म ह्यवस्थानं क्रुद्धयोः कृष्णयोः क्वचित् ।
स्रष्टारौ जगतश्चैव सतश्च पुरुषर्षभौ ॥ २५
कामं तु सुकृताँल्लोकान्प्राप्नोत्वेष परंतपः ।
कर्णो वैकर्तनः शूरो विजयस्तु नरे ध्रुवः ॥ २६
तथोक्ते देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः ।
आमन्त्र्य सर्वभूतानि ब्रह्मेशानानुशासनात् ॥ २७
श्रुतं भवद्भिर्यत्प्रोक्तं भगवद्भ्यां जगद्धितम् ।
तत्तथा व्येतु ते रोगः शमाप्नुत विमन्यवः ॥ २८
इति श्रुत्वेन्द्रवचनं सर्वभूतानि मारिष ।
विस्मितान्यभवन्राजन्पूजयांचक्रिरे तदा ।
नोचुस्तदा जयं तुल्यं तयोः पुरुषसिंहयोः ॥ २९
व्यसृजंश्च सुगन्धीनि पुष्पवर्षाणि हर्षिताः ।
नानारूपाणि विबुधा देवतूर्याण्यवादयन् ॥ ३०
दिदृक्षवश्चाप्रतिमं द्वैरथं नरसिंहयोः ।
विस्मयोत्फुल्लनयना नान्या बुबुधिरे क्रियाः ॥ ३१

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

शल्यकर्णयोः सँलापः ॥ १ ॥ कृष्णार्जुनयोः सँलापः ॥ २ ॥ अर्जुनेन कृष्णंप्रति स्वसामर्थ्यकथनम् ॥ ३ ॥

सञ्जय उवाच ।
रथौ तयोः श्वेतहयौ दिव्यौ युक्तौ महास्वनौ ।
समास्थितौ लोकवीरौ शङ्खान्दध्मुः पृथक्पृथक् ।
वासुदेवार्जुनौ वीरौ कर्णशल्यौ च भारत ॥ १
तद्भीरुसंत्रासकरं युद्धं समभवत्तदा ।
अन्योन्यस्पर्धिनोरुग्रं शक्रशम्बरयोरिव ॥ २

दिष्टमपि दैवविहितमपि ॥ ११ ॥

द्विनवतितमोऽध्यायः ॥ ९२ ॥

तयोर्ध्वजौ हि विमलौ शुशुभाते रथे स्थितौ ।
राहुकेतू यथाऽऽकाशे उदितौ जगतः क्षये ॥ ३
कर्णस्याशीविषनिभा रत्नसारमयी दृढा ।
पुरन्दरधनुःप्रख्या हस्तिकक्ष्या विराजते ॥ ४
कपिश्रेष्ठस्तु पार्थस्य व्यादितास्य इवान्तकः ।
दंष्ट्राभिर्भीषयन्भाभिर्दुर्निरीक्ष्यो रविर्यथा ॥ ५
युद्धाभिलाषुको भूत्वा ध्वजो गाण्डीवधन्वनः ।
कर्णध्वजमुपातिष्ठत्स्वस्थानाद्वेगवान्कपिः ॥ ६
उत्पत्य च महावेगः कक्ष्यामभ्याहनत्तदा ।
नखैश्च दशनैश्चैव गरुडः पन्नगं यथा ॥ ७
सा किङ्किणीकाभरणा कालपाशोपमा तदा ।
अभ्यद्रवत्सुसंरब्धा हस्तिकक्ष्याऽथ तं कपिम् ॥ ८
तयोर्घोरतरे युद्धे द्वैरथे द्यूत आहिते ।
प्राकुर्वतां ध्वजौ युद्धं पूर्वं पूर्वतरं तदा ॥ ९
हया हयानभ्यहेषन्स्पर्धमानाः परस्परम् ।
अविध्यत्पुण्डरीकाक्षः शल्यं नयनसायकैः ।
शल्यश्च पुण्डरीकाक्षं तथैवाभिसमैक्षत ॥ १०
तत्राजयद्वासुदेवः शल्यं नयनसायकैः ।
कर्णं चाप्यजयद्दृष्ट्या कुन्तीपुत्रो धनञ्जयः ॥ ११
अथाब्रवीत्सूतपुत्रः शल्यमाभाष्य सस्मितम् ॥ १२
यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित् ।
किं करिष्यसि सङ्ग्रामे शल्य सत्यमथोच्यताम् १३
शल्य उवाच ।
यदि कर्णं रणे हन्यादद्य त्वां श्वेतवाहनः ।
उभावेकरथेनाहं हन्यां माधवपाण्डवौ ॥ १४
सञ्जय उवाच ।
एवमेव तु गोविन्दमर्जुनः प्रत्यभाषत ।
तं प्रहस्याब्रवीत्कृष्णः पार्थं परमिदं वचः ॥ १
पतेद्दिवाकरः स्थानाच्छीर्येद्बहुधा क्षितिः ।
शैत्यमग्निरियान्न त्वां हन्यात्कर्णो धनञ्जय ॥ १
यदि चैतत्कथंचित्स्याल्लोकपर्यसनं भवेत् ।
हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ॥१
इति कृष्णवचः श्रुत्वा प्रहसन्कपिकेतनः ।
अर्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणम् ॥ १
मम तावदपर्याप्तौ कर्णशल्यौ जनार्दन ।
सपताकध्वजं कर्णं सशल्यरथवाजिनम् ॥ १
सच्छत्रकवचं चैव सशक्तिशरकार्मुकम् ।
द्रष्टाऽस्यद्य रणे कृष्ण शरैश्छिन्नमनेकधा ॥ २
अद्यैव सरथं साश्वं सशक्तिकवचायुधम् ।
संचूर्णितमिवारण्ये वृक्षं पश्याद्य दन्तिना ॥ २
अद्य राधेयभार्याणां वैधव्यं समुपस्थितम् ।
ध्रुवं स्वप्नेष्वनिष्टानि ताभिर्दृष्टानि माधव ॥ २
द्रष्टासि ध्रुवमद्यैव विधवाः कर्णयोषितः ।
न हि मे शाम्यते मन्युर्यदनेन पुरा कृतम् ॥ २३
कृष्णां सभागतां दृष्ट्वा मूढेनादीर्घदर्शिना ।
अस्मांस्तथाऽवहसता क्षिपता च पुनःपुनः ॥ २४
अद्य द्रष्टासि गोविन्द कर्णमुन्मथितं मया ।
वारणेनेव मत्तेन पुष्पितं जगतीरुहम् ॥ २५
अद्य ता मधुरा वाचः श्रोतासि मधुसूदन ।
दिष्ट्या जयसि वार्ष्णेय इति कर्णे निपातिते ॥२६
अद्याभिमन्युजननीं प्रहृष्टः सांत्वयिष्यसि ।
कुन्तीं पितृष्वसारं च प्रहृष्टः सन् जनार्दन ॥ २७
अद्य बाष्पमुखीं कृष्णां सान्त्वयिष्यसि माधव ।
वाग्भिश्चामृतकल्पाभिर्धर्मराजं च पाण्डवम् ॥२८

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

कर्णार्जुनयोर्युद्धारम्भः ॥ १ ॥ द्रौणिना दुर्योधनाय हिताख्यानम् ॥ २ ॥ तेन तदनादृत्य रणाय सेनानियोजनम् ॥ ३ ॥

सञ्जय उवाच ।
तद्देवनागासुरसिद्धयक्षै-
र्गन्धर्वरक्षोप्सरसां च सङ्घैः ।
ब्रह्मर्षिराजर्षिसुपर्णजुष्टं
बभौ वियद्विस्मयनीयरूपम् ॥ १

क्रुद्धोऽभिलषितं गत्वा इति ख. ट. पाठः ॥६॥ द्यूत आह्वये इति ख. ट. पाठः ॥ ९ ॥ त्रिनवतितमोऽध्यायः ॥ ९३ ॥

नानद्यमानं निनदैर्मनोज्ञै-
वादित्रगीतस्तुतिनृत्यहासैः ।
सर्वेऽन्तरिक्षं ददृशुर्मनुष्याः
खस्थाश्च तद्विस्मयनीयरूपम् ॥ २
ततः प्रहृष्टाः कुरुपाण्डुयोधा
वादित्रशङ्खस्वनसिंहनादैः ।
विनादयन्तो वसुधां दिशश्च
स्वनेन सर्वान्द्विषतो निजघ्नुः ॥ ३
नराश्वमातङ्गरथैः समाकुलं
शरासिशक्त्यृष्टिनिपातदुःसहम् ।
अभीरुजुष्टं हतदेहसंकुलं
रणाजिरं लोहितमाबभौ तदा ॥ ४
[ बभूव युद्धं कुरुपाण्डवानां
यथा सुराणामसुरैः सहाभवत् ।]
तथा प्रवृत्ते तुमुले सुदारुणे
धनञ्जयश्चाधिरथिश्च सायकैः ।
दिशश्च सैन्यं च शितैरजिह्मगैः
परस्परं प्रावृणुतां सुदंशितौ ॥ ५
ततस्त्वदीयाश्च परे च सायकैः
कृतेऽन्धकारे ददृशुर्न किंचन ।
भयातुरा एकरथौ समाश्रयं-
स्ततोऽभवत्त्वद्भुतमेव सर्वतः ॥ ६
ततोऽस्त्रमस्त्रेण परस्परं तौ
विधूय वाताविव पूर्वपश्चिमौ ।
घनान्धकारे वितते तमोनुदौ
यथोदितौ तद्वदतीव रेजतुः ॥ ७
न चाभिसर्तव्यमिति प्रचोदिताः
परे त्वदीयाश्च तथाऽवतस्थिरे ।
महारथौ तौ परिवार्य सर्वतः
सुरासुराः शम्बरवासवाविव ॥ ८
मृदङ्गभेरीपणवानकस्वनै-
र्निनादिते वाहनशङ्खनिस्वनैः ।
तौ सिंहनादैर्बभतुर्नरोत्तमौ
पतङ्गचन्द्राविव दुःसहावुभौ ॥ ९
महाधनुर्मण्डलमध्यगावुभौ
सुवर्चसौ बाणसहस्रदीधिती ।
दिधक्षमाणौ सचराचरं जग-
द्युगान्तसूर्याविव दुःसहौ रणे ॥ १०
उभावजेयावहितान्तकावुभा-
वुभौ जिघांसू कृतिनौ परस्परम् ।
महाहवे वीतभयौ समीयतु-
र्महेन्द्रजम्भाविव कर्णपाण्डवौ ॥ ११
ततो महास्त्राणि महाधनुर्धरौ
विमुञ्चमानाविषुभिर्भयानकैः ।
नराश्वनागानमितान्निजघ्नतुः
परस्परं चापि महारथौ नृप ॥ १२
ततो विसस्रुः पुनरर्दिता नरा
नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः ।
सनागपत्त्यश्वरथा-दिशो द्रुता-
स्तथा यथा सिंहहता वनौकसः ॥ १३
ततस्तु दुर्योधनभोजसौबलाः
कृपो गुरोश्चापि सुतो महाहवे ।
महारथाः पञ्च धनञ्जयाच्युतौ
शरैः शरीरार्तिकरैरताडयन् ॥ १४
धनूंषि तेषामिषुधीन्ध्वजान्हया-
न्रथांश्च सूतांश्च धनञ्जयः शरैः ।
समं प्रमथ्याशु परान्समन्ततः
शरोत्तमैर्द्वादशभिश्च सूतजम् ॥ १५
अथाभ्यधावंस्त्वरिताः शतं रथाः
शतं गजाश्चार्जुनमाततायिनः ।
शकास्तुषारा यवनाश्च सादिनः
सहैव काम्भोजवरैर्जिघांसवः ॥ १६
वरायुधान्पाणिगतैः शरैः सह
क्षुरैर्न्यकृन्तन्प्रपतञ्छिरांसि च ।

एकौ मुख्यौ रथौ रथिनौ कर्णार्जुनौ ॥ ६ ॥ तमोनुदौ सूर्येन्द्रौ ॥ ७ ॥ नच अभिसर्तव्यं नापयातव्यमिति नियमेन प्रचोदिताः प्रेरिताः ॥ ८ ॥

हयांश्च नागांश्च रथांश्च युध्यतो
धनञ्जयः शत्रुगणान्क्षितौ क्षिणोत् ॥१७
ततोऽन्तरिक्षे सुरतूर्यनिःस्वनाः
ससाधुवादा हृषितैः समीरिताः ।
निपेतुरप्युत्तमपुष्पवृष्टयः
सुरूपगन्धाः पवनेरिताः शुभाः ॥ १८
तदद्भुतं देवमनुष्यसाक्षिकं
समीक्ष्य भूतानि विसिस्मियुस्तदा ।
तवात्मजः सूतसुतश्च न व्यथां
न विस्मयं जग्मतुरेकनिश्चयौ ॥ १९
अथाब्रवीद्द्रोणसुतस्तवात्मजं
करं करेण प्रतिपीड्य सान्त्वयन् ।
प्रसीद दुर्योधन शाम्य पाण्डवै-
रलं विरोधेन धिगस्तु विग्रहम् ॥ २०
हतो गुरुर्ब्रह्मसमो महास्त्रवि-
त्तथैव भीष्मप्रमुखा महारथाः ।
अहं त्ववध्यो मम चापि मातुलः
प्रशाधि राज्यं सह पाण्डवैश्चिरम् ॥ २१
धनञ्जयः स्थास्यति वारितो मया
जनार्दनो नैव विरोधमिच्छति ।
युधिष्ठिरो भूतहिते रतः सदा
वृकोदरस्तद्वशगस्तथा यमौ ॥ २२
त्वया तु पार्थैश्च कृते च संविदे
प्रजाः शिवं प्राप्नुयुरिच्छया तव ।
व्रजन्तु शेषाः स्वपुराणि पार्थिवा
निवृत्तवैराश्च भवन्तु सैनिकाः ।
न चेद्वचः श्रोष्यसि मे नराधिप
ध्रुवं हि तप्तोऽसि हतोऽरिभिर्युधि ॥ २३
वृद्धं पितरमालोक्य गान्धारीं च यशस्विनीम् ।
कृपालुर्धर्मराजो हि याचितः शममेष्यति ॥ २४
यथोचितं च वै राज्यमनुज्ञास्यति ते प्रभुः ।
विपश्चित्सुमतिर्वीरः सर्वशास्त्रार्थतत्त्ववित् ॥ २५
वैरं नेष्यति धर्मात्मा स्वजने नास्त्यतिक्रमः ।
न विग्रहमतिः कृष्णा स्वजने प्रतिनन्दति ॥ २६

भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ।
वासुदेवमते चैव पाण्डवस्य च धीमतः ।
स्थास्यन्ति पुरुषव्याघ्रास्तयोर्वचनगौरवात् ॥ २७
रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
जीवने यत्नमातिष्ठ जीवन्भद्राणि पश्यति ॥ २८
राज्यं श्रीश्चैव भद्रं ते जीवमाने च कल्पते ।
मृतस्य तु खलु कौरव्य नैव राज्यं कुतः सुखम् ॥२९
लोकवृत्तमिदं वृत्तं प्रवृत्तं पश्य भारत ।
शाम्य त्वं पाण्डवैः सार्धं शेषं रक्ष कुलस्य च ॥ ३०
मा भूत्स कालः कौरव्य यदाऽहमहितं वचः ।
ब्रूयां कामं महाबाहो माऽवमंस्था वचो मम ॥ ३१
धर्मिष्ठमिदमत्यर्थं राज्ञश्चैव कुलस्य च ।
एतद्धि परमं श्रेयः कुरुवंशस्य वृद्धये ।
प्रयाहि तं च गान्धारे कुलस्य च सुखावहम् ॥ ३२
पथ्यमायतिसंयुक्तं कर्णोऽप्यर्जुनमाहवे ।
न जेष्यति नरव्याघ्र इति मे निश्चिता मतिः ॥ ३३
रोचतां ते नरश्रेष्ठ ममैतद्वचनं शुभम् ।
अतोऽन्यथा हि राजेन्द्र विनाशः सुमहान्भवेत् ३४
इदं च दृष्टं जगता सह त्वया
कृतं यदेकेन किरीटमालिना ।
यथा न कुर्याद्बलभिन्न चान्तको
न च प्रचेता भगवान्न यक्षराट् ॥ ३५
अतोऽपि भूयान्स्वगुणैर्धनञ्जयो
न चातिवर्तिष्यति मे वचोऽखिलम् ।
तवानुयात्रां च सदा करिष्यति
प्रसीद राजेन्द्र शमं त्वमाप्नुहि ॥ ३६
ममाभिमानः परमः सदा त्वयि
ब्रवीम्यतस्त्वां परमाच्च सौहृदात् ।
निवारयिष्यामि च कर्णमाहवे
महान्हि मेऽस्ति प्रणयोऽथ सूतजे ॥ ३७
वदन्ति मैत्रीं सहजां विचक्षणा-
स्तथैव साम्ना च धनेन चार्जिताम् ।
प्रतापतश्चोपनतां चतुर्विधां
तदस्ति सर्वं तव पाण्डवेषु ॥ ३८

ध्रुवं हि तप्तासि इति क. ख. ङ. पाठः ॥ २३ ॥

निसर्गतस्ते तव वीर बान्धवाः
पुनश्च साम्ना हितमाप्नुयुः प्रभो ।
त्वयि प्रसन्ने यदि मित्रतां गते
हितं कृतं स्याज्जगतस्त्वयाऽतुलम् ॥ ३९
इतीदमुक्तः सुहृदा वचो हितं
विचिन्त्य निःश्वस्य च दुर्मनाऽब्रवीत् ।
यथा भवानाह सखे तथैव त-
न्ममापि विज्ञापयतो वचः शृणु ॥ ४०
निहत्य दुःशासनमुक्तवान्बहु
प्रहस्य शार्दूलवदेष दुर्मतिः ।
वृकोदरस्तद्धृदये मम स्थितं
न तत्परोक्षं भवतः कुतः शमः ॥ ४१
न चापि कर्णं प्रसहेद्रणेऽर्जुनो
महागिरिं मेरुमिवोग्रमारुतः ।
न चाश्वसिष्यन्ति पृथात्मजा मयि
प्रसह्य वैरं बहुशो विचिन्त्य ॥ ४२
न चापि कर्णं गुरुपुत्र संयुगा-
दुपारमेत्यर्हसि वीर भाषितुम् ।
श्रमेण युक्तो महताद्य फल्गुन-
स्तमेष कर्णः प्रसभं हनिष्यति ॥ ४३
'वसुंधरायाः परिवर्तनं भवे-
द्व्रजेच्च शोषं मकरालयोऽर्णवः ।
प्लवेयुरप्यद्रिवरा महाम्बुधौ
न चार्जुनो जेष्यति कर्णमाहवे ॥ ४४
अपां पृथिव्या नभसो नभस्वतः
सुतिग्मदीप्तेश्च हिरण्यरेतसः ।
अभाव एषामपि सर्वतो भवे-
न्न चार्जुनो जेष्यति कर्णमाहवे ॥' ४५
तमेवमुक्त्वाऽप्यनुनीय चासकृ-
त्तवात्मजः स्वाननुशास्ति सैनिकान् ।
द्रुतं घ्नताभिद्रवताहितानिमा-
नहीनसत्वाः किमु जोषमासते ॥ ४६

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

रणे कर्णस्यार्जुनसाम्यमसहमानेन भीमेन सकोपं पार्थप्रोत्साहनम् ॥ १ ॥

सञ्जय उवाच ।
तौ शङ्खभेरीनिनदे समृद्धे
समीयतुः श्वेतहयौ नराग्र्यौ ।
वैकर्तनः सूतपुत्रोऽर्जुनश्च
दुर्मन्त्रिते ते ससुतस्य राजन् ॥ १
'आशीविषावग्निमिवोत्सृजन्तौ
तथा मुखाभ्यामभिनिःश्वसन्तौ ।
यशस्विनौ जज्वलतुर्मृधे तदा
घृतावसिक्ताविव हव्यवाहौ ॥' २
यथा गजौ हैमवतौ प्रभिन्नौ
प्रवृद्धदन्ताविव वासितार्थे ।
तथा समाजग्मतुरुग्रवीर्यौ
धनञ्जयश्चाधिरथिश्च वीरौ ॥ ३
बलाहकेनेव महाबलाहको
यदृच्छया वा गिरिणा यथा गिरिः ।
तथा धनुर्ज्यातलनेमिनिःस्वनौ
समीयतुस्ताविषुवर्षवर्षिणौ ॥ ४
शरास्त्रशक्त्यृष्टिगदासिसर्पौ
रोषानिलोद्धूतमहोर्मिमालौ ।
यथाऽचलौ द्वौ चलतस्तथा तौ
यथाऽर्णवौ चाशु चतुर्युगान्ते ॥' ५
प्रवृद्धशृङ्गद्रुमवीरुदोषधी
प्रवृद्धनानाविधनिर्झरौघौ ।

---

[शास]सनमुक्तवान्वच इति झ. पाठः तत्र वचो दुर्योधनस्य [...]स्य शिरः पदा ताडयिष्यामीत्येवंरूपम् ॥ ४१ ॥

चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

यथाऽचलौ वा चलितौ महाजलै-
स्तथा महास्त्रैरितरेतरं हतः ॥ ६
स सन्निपातो रथयोर्महानभू-
न्सुरेशवैरोचनयोर्यथा पुरा ।
शरैर्विनुन्नाश्वनियन्तृदेहयोः
सुदुःसहास्त्रैः परिभिन्नदेहयोः ॥ ७
प्रभूतपद्मोत्पलमत्स्यकच्छपौ
महाह्रदौ पक्षिगणानुनादितौ ।
सुसन्निकृष्टावनिलोद्धतौ यथा
तथा रथौ तौ ध्वजिनौ समीयतुः ॥ ८
उभौ महेन्द्रस्य समानविक्रमा-
वुभौ महेन्द्रप्रतिमौ महारथौ ।
महेन्द्रवज्रप्रतिमैश्च सायकै-
र्महेन्द्रवृत्राविव संप्रजघ्नतुः ॥ ९
सनागपत्त्यश्वरथे उभे बले
विचित्रवर्माभरणाम्बरायुधे ।
चकम्पतुश्चोन्नदतुश्च विस्मया-
द्वरा वियच्चार्जुनकर्णसंगमे ॥ १०
भुजाः सवस्त्राङ्गुलयः समुच्छ्रिताः
ससिंहनादैर्हृषितैर्दिदृक्षुभिः ।
यदाऽर्जुनं मत्त इव द्विपो द्विपं
समभ्ययादाधिरथिर्जिघांसया ॥ ११
उदक्रोशन्सोमकास्तत्र पार्थं
त्वरस्व याह्यर्जुन भिन्धि कर्णम् ।
छिन्ध्यस्य मूर्धानमलं चिरेण
श्रद्धां च राज्याद्धृतराष्ट्रसूनोः ॥ १२
तथाऽस्माकं बहवस्तत्र योधाः
कर्णं तथा याहि याहीत्यवोचन् ।
जह्यर्जुनं कर्ण ततः सुदीनाः
पुनर्वनं यान्त्वचिराय पार्थाः ॥ १३
कर्णोऽथ पूर्वं दशभिः पृषत्कै-
र्गाण्डीवधन्वानमविध्यदाशु ।
जघान तं चापि ततः किरीटी
शरैस्तदाष्टादशभिः सुमुक्तैः ॥ १४

पुनश्च कर्णस्त्वरितोऽपि पार्थं
रथेषुभिस्तं दशभिर्जघान ।
तं चापि पार्थो दशभिः शिताग्रैः
कक्ष्यान्तरे तीक्ष्णमुखैरविध्यत् ॥
कर्णस्ततो भारत सांपराये
घोरेऽतिवेलं रणसंविमर्दी ।
जघान पार्थं नवभिः शिताग्रैः
कक्ष्यान्तरे नागमिव प्रभिन्नम् ॥ १
ततोऽपराभ्यां युधि सूतपुत्रो
द्वाभ्यां क्षुराभ्यां हरिमाशुकारी ।
समाजघान त्वरया महात्मा
यथा सुरेन्द्रं नमुचिः प्रसह्य ॥ १
तं पाण्डवः पञ्चभिरायसाग्रै-
राकर्णपूर्णैर्निजघान कर्णम् ।
ते शोणितं तस्य पपुस्तदानीं
कालस्य दूता इव पार्थबाणाः ॥ १
कर्णोऽपि पार्थं सह वासुदेवं
समाचिनोद्भारत वत्सदन्तैः ।
परस्परं तौ विशिखैः प्रमुक्तै-
स्ततक्षतुः सूतपुत्रोऽर्जुनश्च ॥ १
परस्परं छिद्रदिदृक्षया च
सुभीममभ्याययतुः प्ररुष्टौ ॥ २
ततोऽस्त्रमाग्नेयममित्रतापनं
मुमोच कर्णाय सुरेश्वरात्मजः ।
धनञ्जयात्संयुगमूर्ध्नि निःसृतं
तदा प्रजज्वाल तदस्त्रमुत्तमम् ॥ २
समीक्ष्य कर्णो ज्वलनास्त्रमुद्यतं
स वारुणं तत्प्रशमार्थमाहवे ।
समुत्सृजत्सूतपुत्रः प्रतापवान्
स तेन वह्निं शमयांचकार ॥ २
बलाहकास्त्रेण दिशस्तरस्वी
चकार सर्वास्तिमिरेण संवृताः ।
अपावहन्मेघगणांस्ततस्तान्
समीरणास्त्रेण समीरितेन ॥ २३

हतः जघ्नतुरित्यर्थः ॥ ६ ॥ सुदुःसहान्यैः परिशोणितोदकैः इति क. ट. पाठः ॥ ७ ॥

ततः सोऽस्त्रं दयितं देवराज्ञः
प्रादुश्चक्रे वज्रममित्रतापनः ।
गाण्डीवज्यां विमृशंश्चातिमन्यु-
र्धनञ्जयः शत्रुसङ्घप्रमाथी ॥ २४
नाराचनालीकवराहकर्णा
गाण्डीवतः प्रादुरासन्सुतीक्ष्णाः ।
सहस्रशो वज्रसमानवेगा-
स्ते सर्वतः पर्यधावन्त घोराः ॥ २५
पार्थेषवः कर्णरथं विलग्ना
अधोमुखाः पक्षिगणा दिनान्ते ।
निशानिकेतार्थमिवाशु वृक्षं
जग्राह तान्सूतपुत्रः पृषत्कैः ॥ २६
क्षिप्तांस्तथा पाण्डवबाणसङ्घा-
नमृष्यमाणस्य धनञ्जयस्य ।
रणाजिरे त्वन्तकतुल्यकर्मा
वैकर्तनो रोषपरीतचेताः ॥ २७
ज्योतिष्प्रभां यद्वदुपागतः स-
न्दिवाकरो नाशयते क्षणेन ।
पार्थस्य तान्बाणगणान्समग्रा-
न्व्यनाशयद्युध्यत एव कर्णः ॥ २८
रोषात्प्रदीप्तः सुमहाविमर्दे
भीमस्ततोऽक्रुध्यददीनसत्वः ।
पाणिं स्वपाणौ स विनिष्पिष्य रोषा-
दमर्षितो वाक्यमुवाच पार्थम् ॥ २९
त्वां सूतपुत्रो नु कथं किरीटि-
न्नथेषुभिर्हन्ति शिताग्रधारैः ।
धृत्या हि भूतानि ययाऽजयस्त्वं
ग्रासं ददत्खाण्डवे पावकाय ॥ ३०
धृत्या तया सूतपुत्रं जहि त्व-
महं वैनं गदया पोथयिष्ये ।
समेत्य पार्थं सुनृशंसवादी
जीवन्नायं यास्यति कालपक्वः ॥ ३१

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः ॥ ९६ ॥

कर्णे युधि वर्धमाने कृष्णेनार्जुनप्रोत्साहनम् ॥ १ ॥ ततोऽर्जुनेन स्वसामर्थ्यप्रकाशनम् ॥ २ ॥

सञ्जय उवाच ।
अथाब्रवीच्चक्रधरोऽपि पार्थं
दृष्ट्वा रथेषून्प्रतिहन्यमानान् ।
अमूमुषत्पश्यत एव तेऽद्य
ह्यस्त्राणि कर्णोऽस्त्रगणैः किरीटिन् ॥ १
स पार्थ किं मुह्यसि वेत्सि चैव ता-
न्दृष्ट्वा समेतानदतः कुरूंस्त्वम् ।
कर्णं पुरस्कृत्य विदुर्हि सर्वे
तवास्त्रमस्त्रैर्विनिहन्यमानम् ॥ २
यया धृत्या तामसं जघ्निवांस्त्वं
तत्संयुगे तामसांश्चातिघोरान् ।
दम्भोद्भवं चासुरमाहवे त्वं
दर्पोत्सिक्तं वीर्यवन्तं किरीटिन् ।
तया धृत्या त्वं जहि कर्णमद्य
पार्थाहवे त्यक्तुमस्त्रं समर्थः ॥ ३
अनेन चाशु क्षुरनेमिनाद्य
मया विसृष्टेन सुदर्शनेन ।
छिन्ध्यस्य मूर्धानमरेः प्रसह्य
वज्रेण शक्रो नमुचेरिवारेः ॥ ४
किरातरूपी भगवान्यया च
त्वया महात्मा परितोषितोऽभूत् ।
स तां पुनर्वीर धृतिं गृहीत्वा
सहानुबन्धं जहि सूतपुत्रम् ॥ ५
ततो महीं सागरमेखलां त्वं
सपत्तनां ग्रामवतीं समृद्धाम् ।

---

मा जीवनं यास्यति सूतपुत्र इति क. पाठः ॥ ३१ ॥

पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

प्रयच्छ राज्ञे निहतारिसङ्घां
यशश्च पार्थातुलमाप्नुहि त्वम् ॥ ६
कर्णं पुरस्कृत्य नदन्ति सर्वे
तवास्त्रमग्र्यं प्रतिहत्य वीराः ।
कुरु प्रयत्नं भरतप्रवीर
द्रवन्त्यमी सृंजयाः सोमकाश्च ।
दृष्ट्वाथ कर्णं समरे प्रहृष्टं
त्वां चापि दृष्ट्वा परिहीयमानम् ॥ ७

सञ्जय उवाच ।

संचोदितो भीमजनार्दनाभ्यां
स्मृत्वा तदात्मानमवेत्य सर्वम् ।
इहात्मनश्चागमने विदित्वा
प्रयोजनं केशवमित्युवाच ॥ ८
प्रादुष्करोम्येष महास्त्रमुग्रं
शिवाय लोकस्य वधाय सौतेः ।
तन्मेऽनुजानातु भवान्सुराश्च
ब्रह्मा शिवो ब्रह्मविदश्च सर्वे ॥ ९
इति स्रोक्त्वा पाण्डवः सव्यसाची
नमस्कृत्वा ब्रह्मणे सोऽमितात्मा ।
अनुत्तमं ब्राह्ममसह्यमस्त्रं
प्रादुश्चक्रे मनसा यद्विधेयम् ॥ १०
ततो दिशश्च प्रदिशश्च सर्वाः
समावृणोत्सायकैर्भूरितेजाः ।
गाण्डीवमुक्तैर्भुजगैरिवोग्रै-
र्दिवाकरांशुप्रतिमैर्ज्वलद्भिः ॥ ११
सृष्टास्तु बाणा भरतर्षभेण
शतं शतं भीममुखाः सुतीक्ष्णाः ।
प्राच्छादयन्कर्णरथं क्षणेन
युगान्तकालार्ककरप्रकाशाः ॥ १२
वैकर्तनेनाशु तदाजिमध्ये
सहस्रशो बाणगणा विसृष्टाः ।
ते चाक्षयाः पाण्डवमभ्युपेयुः
पर्जन्यसृष्टा इव वारिधाराः ॥ १३
ततः स कृष्णं च किरीटिनं च
वृकोदरं चाप्रतिमप्रभावः ।
त्रिभिस्त्रिभिर्भीमबलो निहत्य
ननाद घोरं महता स्वनेन ॥
ततः स बाणाभिहतः किरीटी
भीमं तथा प्रेक्ष्य जनार्दनं च ।
अमृष्यमाणः पुनरेव पार्थः
शरान्दशाष्टौ समसुद्रवर्ष ॥
स केतुमेकेन शरेण विद्ध्वा
शल्यं चतुर्भिस्त्रिभिरेव कर्णम् ।
ततः सुमुक्तैर्दशभिर्जघान
सेनापतिं काञ्चनवर्मनद्धम् ॥
स राजपुत्रो विशिरा विबाहु-
र्विवाजिसूतो विधनुर्विकेतुः ।
अथो रथाग्रादपतत्प्ररुग्णः
परश्वथैः साल इवावकृत्तः ॥ १
पुनश्च कर्णं त्रिभिरष्टभिश्च
द्वाभ्यां चतुर्भिर्दशभिश्च विद्ध्वा ।
चतुश्शतं द्विरदानां निपात्य
रथाञ्जघानाष्टरथान्किरीटी ।
सहस्रमश्वांश्च पुनश्च सादी-
नष्टौ सहस्राणि च पत्तिवीरान् ॥ १
दृष्ट्वा तु मुख्यावतिविध्यमानौ
वरेषुभिः शूरवरावरिघ्नौ ।
कर्णं च पार्थं च नियम्य वाहा-
न्सर्वे वरिष्ठाश्च ततोऽवतस्थुः ॥ १
प्रच्छादयामास ततः पृषत्कैः
सघोषमाच्छिद्य च गाण्डिवज्याम् ।
अस्मिन्क्षणे फल्गुनं सूतपुत्रः
समाचिनोत्क्षुद्रकाणां शतेन ॥ २
निर्मुक्तसर्पप्रतिमैश्च तीक्ष्णै-
स्तैलप्रधौतैः खगपत्रवाजैः ।
षष्ट्या बिभेदाशु च वासुदेवं
तदन्तरे प्राद्रवन्सोमकाश्च ॥ २
ततो नवज्यां सुदृढां किरीटी
स्वबाहुविक्षेपसहां प्रगृह्य ।

समादधे गाण्डिवे क्षिप्रकारी
निमेषमात्रेण महाधनुष्मान् ॥ २२
ज्याछेदनं ज्याविधानं च तस्य
नैवावबुध्यत्सूतपुत्रो लघुत्वात् ।
पार्थस्य सङ्ख्ये द्विषतां निहन्तु-
स्तदद्भुतं तत्र बभूव राजन् ॥ २३
पार्थोऽपि तां ज्यामवधाय तूर्णं
शरासनज्यामाधिरथेर्विहत्य ।
सुसंरब्धः कर्णशरैः क्षताङ्गो
रणे योधांस्तावकान्प्रत्यगृह्णात् ॥ २४
नैवापतत्पक्षिगणोऽन्तरिक्षे
पार्थेन चास्त्रेण कृतेऽन्धकारे ॥ २५
शल्यं तु पार्थो दशभिर्निमेषा-
द्भृशं तनुत्रे प्रहसन्नविध्यत् ।
ततः कर्णं द्वादशभिः पृषत्कै-
र्विद्ध्वा पुनः सप्तभिरप्यविध्यत् ॥ २६
स पार्थबाणासनवेगनुन्नै-
र्दृढाहतः पत्रिभिरुग्रवेगैः ।
विभिन्नगात्रः क्षतजोक्षिताङ्गः
कर्णो बभौ रुद्र इवान्तकाले ॥ २७
ततस्त्रिभिस्तं त्रिदशाधिपोपमं
शरैर्बिभेदाधिरथिर्धनञ्जयम् ।
शरांश्च पञ्च ज्वलनानिवोरगा-
न्प्रवेशयामास जिघांसुरच्युते ॥ २८
सुवर्णचित्रं पुरुषोत्तमस्य
वर्माथ भित्त्वाभ्यपतन्सुपुङ्खाः ।
वेगेन गां ते विविशुश्च राज-
न्स्नात्वा कर्णाऽभिमुखाः प्रतीयुः ॥ २९
तान्पञ्चभल्लैर्दशभिः सुमुक्तै-
स्त्रिधात्रिधैकैकमथोच्चकर्त ।
धनञ्जयस्ते न्यपतन्पृथिव्यां
यथाऽहयस्तार्क्ष्यमुखेन कृत्ताः ॥ ३०
ततः प्रजज्वाल किरीटमाली
क्रोधेन कक्षं प्रदहन्निवाग्निः ।
स कर्णमाकर्णविकृष्टसृष्टैः
शरैः शरीरान्तकरैर्ज्वलद्भिः ।
मर्मस्वविध्यत्स चचाल दुःखा-
द्धैर्यात्तु तस्थावतिमात्रधैर्यः ॥ ३१
शादुश्चकाराथ शरान्महात्मा
देहं विचिन्वन्निव सूतजस्य ।
शरास्तु ते काञ्चनचित्रपुङ्खाः
संपेतुरुर्व्यां शतशो महान्तः ॥ ३२
ततः शरौघैः प्रदिशो दिशश्च
रविप्रभाः कर्णरथश्च राजन् ।
अदृश्य आसीत्कुपिते धनञ्जये
तुषारनीहारवृतो गिरिर्यथा ॥ ३३
सचक्ररक्षा अपि पृष्ठगोपाः
कर्णस्य ये चापि पुरःसराश्च ।
भीता द्रवन्ति स्म निहन्यमाना
महेषुभिः पार्थकरप्रणुन्नैः ॥ ३४
ततोऽर्जुनो वै भरतप्रवीरो
महानुभावः समरे निहन्ता ।
सुयोधनेनानुमतान्विनिघ्न-
न्समुच्छ्रितान्सरथान्सारभूतान् ॥ ३५
गाण्डीवधन्वा द्विगुणं सहस्रं
कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान्सरथान्ससूता-
न्निनाय राजन्क्षयमेकवीरः ॥ ३६
अथो पलायन्त विहाय कर्णं
तवात्मजा ये कुरवश्च शिष्टाः ।
एतानवाकीर्य शरक्षतांश्च
विलप्यमानांस्तनयान्विमृद्नन् ॥ ३७
सर्वे प्रणेशुः कुरवो विभग्नाः
पार्थेषुभिः संपरितप्यमानाः ।
सुयोधनेनाथ पुनर्वरिष्ठाः
प्रचोदिताः कर्णरथानुयाने ॥ ३८
भोः क्षत्रियाः शूरतमास्तु सर्वे
क्षत्रे च धर्मे निरताः स्थ यूयम् ।
न युक्तरूपं भवतां समीपा-
त्पलायनं कर्णमतिप्रहाय ॥ ३९

तत्रात्मजेनापि तथोच्यमाना
नैवावतिष्ठन्त भयाद्विवर्णाः ।
क्षणेन नष्टाः प्रदिशो दिशश्च
सर्वे ततः प्रेक्ष्य दिशो विशून्याः ॥ ४०

भयावदीर्णाः कुरुभिर्विहीनः
पार्थेषुभिः संपरितप्यमानः ।
न विव्यथे भारत तत्र कर्णः
प्रतीपमेवार्जुनमभ्यधावत् ॥ ४१

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

रणे हीयमानेन कर्णेनार्जुनस्य शिरो लक्षीकृत्य नागास्त्रप्रयोगः ॥ १ ॥ कृष्णेन पार्थरथे पादनिपीडनेन धरण्यां किंचिन्निमज्जिते तदस्त्रेण शिरोवर्जं पार्थकिरीटमात्रापहारः ॥ २ ॥ कर्णस्य रथचक्रे विप्रशापात् धरण्यां निमग्ने तदुद्दिधीर्षया तेन पार्थंप्रति मुहूर्तमयुद्धप्रार्थनम् ॥ ३ ॥

सञ्जय उवाच ।
ततोऽपयाताः शरपातमात्र-
मवस्थिता वै कुरवो नरेन्द्र ।
विद्युत्प्रकाशं ददृशुः समन्ता-
द्धनञ्जयास्त्रं समुदीर्यमाणम् ॥ १
ततोऽग्रसत्सूतपुत्रोऽर्जुनस्य
वियद्गतं घोरतरं शरैस्तत् ।
क्रुद्धेन पार्थेन शरं विसृष्टं
वधाय कर्णस्य महाविमर्दे ॥ २
[उदीर्यमाणं स कुरून्दहन्तं
सुवर्णपुङ्खैर्विशिखैर्ममर्द ।
कर्णस्त्वमोघेष्वसनं दृढज्यं
विस्फारयित्वा विसृजञ्छरौघान् ॥] ३
रामादुपात्तेन महामहिम्ना
ह्याथर्वणेनारिविनाशनेन ।
तदर्जुनास्त्रं व्यधमद्दहन्तं
पार्थं च बाणैर्निशितैरविध्यत् ॥ ४
ततो विमर्दः सुमहान्बभूव
तत्रार्जुनस्याधिरथेश्च राजन् ।
अन्योन्यमासादयतोः पृषत्कै-
र्विषाणघातैर्द्विपयोरिवाजौ ॥ ५
ततोऽस्त्रसंघातसमावृतं तदा
बभूव राजंस्तुमुलं रणाजिरम् ।
यत्कर्णपार्थौ शरवृष्टिसङ्घै-
र्निरन्तरं चक्रतुरम्बरं तदा ॥ ६

[ततो जालं बाणमयं महान्तं
सर्वेऽद्राक्षुः कुरवः सोमकाश्च ।
नान्यं च भूतं ददृशुस्तदा ते
बाणान्धकारे तुमुलेऽथ किंचित् ॥ ७
तौ सन्दधानावनिशं च राजन्
समस्यन्तौ चापि शराननेकान् ।
सन्दर्शयेतां युधि मार्गान्विचित्रा-
न्धनुर्धरौ तौ विविधैः कृतास्त्रैः ॥ ८
तयोरेवं युध्यतोराजिमध्ये
सूतात्मजोऽभूदधिकः कदाचित् ।
पार्थः कदाचित्त्वधिकः किरीटी
वीर्यास्त्रमायाबलपौरुषेण ॥ ९
दृष्ट्वा तयोस्तं युधि संप्रहारं
परस्परस्यान्तरमीक्षमाणयोः ।
घोरं तयोर्दुर्विषहं रणेऽन्यै-
र्योधाः सर्वे विस्मयमभ्यगच्छन् ॥ १०
ततो भूतान्यन्तरिक्षस्थितानि
तौ कर्णपार्थौ प्रशशंसुर्नरेन्द्र ।
भोः कर्ण साध्वर्जुन साधु चेति
वियत्सु वाणी श्रूयते सर्वतोपि ॥ ११
तस्मिन्विमर्दे रथवाजिनागै-
स्तदाऽभिघातैर्दलिते हि भूतले ।
ततस्तु पातालतले शयानो
नागोऽश्वसेनः कृतवैरोऽर्जुनेन ॥ १२

राजंस्तदा खाण्डवदाहमुक्तो
　　विवेश कोपाद्वसुधातले यः ।
अथोत्पपातोर्ध्वगतिर्जवेन
　　सन्दृश्य कर्णार्जुनयोर्विमर्दम् ॥ १३
अयं हि कालोऽस्य दुरात्मनो वै
　　पार्थस्य वैरप्रतियातनाय ।
सञ्चिन्त्य तूर्णं प्रविवेश चैव
　　कर्णस्य राजन्शररूपधारी ॥ १४
ततोऽस्त्रसङ्घातसमाकुलं तदा
　　बभूव जन्यं विततांशुजालम् ।
तत्कर्णपार्थौ शरसङ्घवृष्टिभि-
　　र्निरन्तरं चक्रतुरंबरं तदा ॥ १५
तद्बाणजालैकमयं महान्तं
　　सर्वेऽत्रसन्कुरवः सोमकाश्च ।
नान्यत्किञ्चिद्ददृशुः सम्पतद्वै
　　बाणान्धकारे तुमुलेऽतिमात्रम् ॥ १६
तस्तौ पुरुषव्याघ्रौ सर्वलोकधनुर्धरौ ।
यक्तप्राणौ रणे वीरौ युद्धश्रममुपागतौ ॥ १७
मुत्क्षेपैर्वीक्षमाणौ सिक्तौ चन्दनवारिणा ।
वालव्यजनैर्दिव्यैर्दिविस्थैरप्सरोगणैः ।
क्रसूर्यकराब्जाभ्यां प्रमार्जितमुखावुभौ ॥ १८
कर्णोऽथ पार्थं न विशेषयद्यदा
　　भृशं च पार्थेन शराभितप्तः ।
ततस्तु वीरः शरविक्षताङ्गो
　　दध्रे मनो ह्येकशयस्य तस्य ॥] १९
ततो रिपुघ्नं समधत्त कर्णः
　　सुसंचितं सर्पमुखं ज्वलन्तम् ।
रौद्रं शरं सन्नतमुग्रधौतं
　　पार्थार्थमित्येव चिराभिगुप्तम् ॥ २०
सदार्चितं चन्दनचूर्णशायितं
　　सुवर्णतूणीरशयं महार्चिषम् ।
आकर्णपूर्णं विचकर्ष कर्णो
　　विमोक्तुकामः शरमुग्रवेगम् ॥ २१

प्रदीप्तमैरावतवंशसंभवं
　　शिरो जिहीर्षुर्युधि सव्यसाचिनः ।
ततः प्रजज्वाल दिशो नभश्च
　　उल्काश्च घोराः शतशः प्रपेतुः ॥ २२
तस्मिंस्तु नागे धनुषि प्रयुक्ते
　　हाहाकृता लोकपालाः सशक्राः ॥ २३
स सूतपुत्रस्तमपाङ्गदेशे
　　अवाङ्मुखं संधयति स्म रोपात् ।
न तं स जानाति महानुभाव-
　　मपाङ्गदेशेऽभिनिविष्टमाजौ ॥ २४
[न चापि तं बुबुधे सूतपुत्रो
　　बाणे प्रविष्टं योगबलेन नागम् ।
दशशतनयनोऽहिं दृश्य बाणे प्रविष्टं
　　निहत इति सुतो मे स्रस्तगात्रो बभूव ।
जलजकुसुमयोनिः श्रेष्ठभावो जितात्मा
　　त्रिदशपतिमवोचन्मा व्यथिष्ठा जये श्रीः॥]
ततोऽब्रवीन्मद्रराजो महात्मा
　　दृष्ट्वा कर्णं प्रहितेषुं तमुग्रम् ।
ग्रीवायतः कर्ण न संहितोऽयं
　　समीक्ष्य संधत्स्व शरं परघ्नम् ॥ २६
अथाब्रवीत्क्रोधसंरक्तनेत्रो
　　मद्राधिपं सूतपुत्रो मनस्वी ।
न संधत्ते द्विः शरं शल्य कर्णो
　　न मादृशा जिह्मयुद्धा भवन्ति ॥ २७
इतीदमुक्त्वा विससर्ज तं शरं
　　प्रयत्नतो वर्षगणाभिपूजितम् ।
हतोसि रे फल्गुन इत्यधिक्षिप-
　　न्नुवाच चोच्चैर्गिरमूर्जितां वृषः ॥ २८
स सायकः कर्णभुजप्रसृष्टो
　　हुताशनार्कप्रतिमः सुघोरः ।
गुणच्युतः कर्णधनुःप्रमुक्तो
　　वियद्गतः प्राज्वलदन्तरिक्षे ॥ २९
तमापतन्तं ज्वलितं निरीक्ष्य
　　वियद्गतं वृष्णिकुलप्रवीरः ।

बाणजालैकमयं दृष्ट्वेति शेषः ॥ १६ ॥ पदा विनिष्पिष्य रथोत्तमं स प्रावेशयत्पृथिवीं किंचिदेव । क्षिति गता जानु-

रथस्य चक्रं सहसा निपीड्य
पञ्चाङ्गुलं मज्जयति स वीरः ॥ ३०
ततोऽन्तरिक्षे सुमहान्निनादः
संपूजनार्थं मधुसूदनस्य ।
[दिव्याश्च वाचः सहसा बभूवु-
र्दिव्यानि पुष्पाण्यथ सिंहनादाः ।
तस्मिंस्तथा वै धरणीं निमग्ने
रथे प्रयत्नान्मधुसूदनस्य ॥] ३१
ततः किरीटं बहुरत्नचित्रं
जघान नागोऽर्जुनमूर्धतो बलात् ।
गिरेः सुजाताङ्कुरपुष्पितद्रुमं
महेन्द्रवज्रं शिखरं यथोत्तमम् ॥ ३२
ततः किरीटं तपनीयचित्रं
पार्थोत्तमाङ्गादहरत्तरस्वी ।
तद्द्रुमजालावनतं सुघोरं
संप्रज्वलत्तन्निपपात भूमौ ॥ ३३
ततोऽर्जुनस्योत्तमगात्रभूषणं
सुवर्णमुक्तामणिवज्रचित्रितम् ।
धरावियद्द्योसलिलेषु विश्रुतं
बलं निसर्गोत्तममन्युभिः सदा ॥ ३४
शरेण मूर्ध्नि प्रजहार सूतजो
दिवाकरेन्दुज्वलनग्रहत्विषम् ।

सुवर्णमुक्तामणिवज्रभूषणं
पुरन्दरार्थं तपसा प्रयत्नतः ॥ ३५
स्वयं कृतं यद्विधिना स्वयंभुवा
महार्हरूपं द्विषतां भयंकरम् ।
निजघ्नते देवरिपून्सुरेश्वरः
स्वयं ददौ यद्धि मुदाऽर्जुनाय ॥ ३६
हरिप्रचेतोहरिवित्तगोप्तृभिः
पिनाकपाशाशनिदण्डधारिभिः ।
सुरोत्तमैरप्यविषह्यमर्दितुं
प्रसह्य नागेन जहार तद्वृषा ॥ ३७
तदुत्तमेषून्मथितं विषाहिना
प्रदीप्तमर्चिष्मदतीव सुन्दरम् ।
पपात पार्थस्य किरीटमुत्तमं
दिवाकरोऽस्तादिव पर्वताज्ज्वलन् ॥ ३८
महीवियद्द्योसलिलानि वायुना
प्रसह्य रुग्णानि विघूर्णितानि वा ।
इतीव शब्दं भुवनेषु तत्तथा
जना व्यवस्यन्ति दिशश्च विह्वलाः ॥ ३९
विना किरीटं शुशुभे स पार्थः
श्यामो युवा शैल इव त्रिशृङ्गैः ॥ ४०
ततः समुद्ग्रथ्य सितेन वाससा
स्वमूर्धजानव्यथितस्तदाऽर्जुनः ।

भिन्नोऽथ वाहा हेमच्छन्नाश्चन्द्रमरीचिवर्णाः इति झ. पाठः ॥ ३० ॥

* एतदारभ्य गरुडस्य वक्र इत्यन्तानां चतुर्णां श्लोकानां स्थाने अधोदृश्यमाना एकादश श्लोका झ. पुस्तके विद्यन्ते

[विना किरीटं शुशुभे स पार्थः
श्यामो युवा नील इवोच्चशृङ्गः ।
ततः समुद्ग्रथ्य सितेन वाससा
स्वमूर्धजानव्यथितस्तदाऽर्जुनः ।
विभासितः सूर्यमरीचिना दृढं
शिरोगतेनोदयपर्वतो यथा ॥ १ ॥

गोकर्णा सुमुखी कृतेन इषुणा गोपुत्रसंप्रेषिता
गोशब्दात्मजभूषणं सुविहितं सुव्यक्तगोऽसुप्रभं ।
दृष्ट्वा गोगतकं जहार मुकुटं गोशब्दगोपूरि वै
गोकर्णासनमर्दनश्च न ययावप्राप्य मृत्योर्वशं २
स सायकः कर्णभुजप्रसृष्टो
हुताशनार्कप्रतिमो महार्हः ।

गोकर्णा मुकुटं जहारेत्यन्वयः । अर्जुनस्य मुकुटहरणमपि महत्कर्मेति सूचयन्मुकुटं विशिनष्टि । गवि चक्षुषि कर्णौ यस्याः सा गोकर्णा चक्षुःश्रवाः सर्पिणी अर्जुनेन खाण्डवे निहता सती इह निमित्तभूता तस्य मुकुटमेव जहार हतवती नतु शिरः । कथं हताया हनननिमित्तत्वमत आह । सुमुखी कृतेन इषुणा गोपुत्रसंप्रेषिता । संधिरविवक्षितत्वान्न भवति । शोभनं पुत्रजननकरं मुखं यस्याः सा सुमुखी । सा हि पुत्रं निगीर्य दह्यमानात् खाण्डवादुत्पतन्ती शिरोदेशे अर्जुनेन च्छिन्ना सती स्वयं मृता पुत्रं च रक्षितवतीत्यादिपर्वण्युपाख्यायते । कृतेन स्वयं निर्मितेन पुत्रेण त्रातेन इषुणा इषुभावं गतेन । आत्मा वै पुत्रनामासीति श्रुतेरिष्वाकारपुत्ररूपेण संपन्ना सती । गोमतो रश्मिमतोऽर्कस्य पुत्रेण कर्णेन प्रेषिता । इषुणेतीत्थंभावे तृतीया । गोपुत्रेति मतुब्लोप आर्षः । किंकृत्वा मुकुटं जहारेत्यत आह । सुव्यक्तगोऽसुप्रभं गोगतकं दृष्ट्वा सुव्यक्ताः अतिशयेनाविर्भूता

बभौ सुसंपूर्णमरीचिनेन्दुना
शिरोगतेनोदयपर्वतो यथा ॥ ४१
स चापि राधेयभुजप्रमुक्तो
हुताशनार्कप्रतिमद्युतिर्महान् ।
महोरगः कृतवैरोऽर्जुनेन
किरीटमाहृत्य समुत्पपात ॥ ४२
तमुत्पतन्तं द्विपदां वरिष्ठो
दृष्ट्वा वचः पार्थमुवाच कृष्णः ।
महोरगं पाण्डव पश्यपश्य
प्रयोजितं त्वन्निधनार्थमुग्रम् ॥ ४३
स एवमुक्तो मधुसूदनेन
गाण्डीवधन्वा हरिमुग्रवाचा ।
उवाच को न्वेष ममाद्य नागः
क्षयाय नागाद्गरुडस्य वक्त्रम् ॥ ४४
कृष्ण उवाच ।
योऽसौ त्वया खाण्डवे चित्रभानुं
संतर्पयाणेन धनुर्धरेण ।
वियद्गतो जननीगुप्तदेहो
मत्त्वैकरूपं निहताऽस्य माता ॥ ४५
स एष तद्वैरमनुस्मरन्वै
त्वां प्रार्थयत्यात्मवधाय नूनम् ।

महोरगः कृतवैरोऽर्जुनेन
किरीटमाहृत्य ततो व्यतीयात् ॥ ३ ॥
तं चापि दग्ध्वा तपनीयचित्रं
किरीटमाकृष्य तदर्जुनस्य ।
इयेष गन्तुं पुनरेव तूर्णं
दृष्टश्च कर्णेन ततोऽब्रवीत्तम् ॥ ४ ॥
मुक्तस्त्वयाऽहं त्वसमीक्ष्य कर्ण
शिरो हृतं यन्न मयाऽर्जुनस्य ।
समीक्ष्य मां मुञ्च रणे त्वमाशु
हन्ताऽस्मि शत्रुं तव चात्मनश्च ॥ ५ ॥
स एवमुक्तो युधि सूतपुत्र-
स्तमब्रवीत्को भवानुग्ररूपः ।
नागोऽब्रवीद्विद्धि कृतागसं मां
पार्थेन मातुर्वधजातवैरम् ॥ ६ ॥
यदि स्वयं वज्रधरोऽस्य गोप्ता
तथापि याता पितृराजवेश्मनि ।
कर्ण उवाच ।
न नाग कर्णोऽद्य रणे परस्य
बलं समास्थाय जयं बुभूषेत् ॥ ७ ॥
न संदध्यां द्विः शरं चैव नाग
यद्यर्जुनानां शतमेव हन्याम् ।
तमाह कर्णः पुनरेव नागं
तदाऽजिमध्ये रविसूनुसत्तमः ॥ ८ ॥
व्यालास्त्रसर्गोत्तमयत्नमन्युभि-
र्हन्ताऽस्मि पार्थं सुसुखी व्रज त्वम् ।
इत्येवमुक्तो युधि नागराजः
कर्णेन रोषादसहंस्तस्य वाक्यम् ॥ ९ ॥
स्वयं प्रायात्पार्थवधाय राजन्
कृत्वा स्वरूपं विजिघांसुरुग्रः ।
ततः कृष्णः पार्थमुवाच सङ्ख्ये
महोरगं कृतवैरं जहि त्वम् ॥ १० ॥
स एवमुक्तो मधुसूदनेन
गाण्डीवधन्वा रिपुवीर्यसाहः ।
उवाच को ह्येष ममाद्य नागः
स्वयं य आयाद्गरुडस्य वक्त्रम् ॥ ११ ॥ ]

गावो रश्मयस्तेज इति यावत् । सुव्यक्तैर्गोभिरसुभिश्च प्रकर्षेण भासमानं निरतिशयतेजोबलमर्जुनम् । गोगतकं गोशब्देन हयरश्मीनां प्रदेशो लक्ष्यते । तत्र गतं विद्यमानं कं शिरो यस्य तम् । अर्जुनस्य ग्रीवादेशं कर्णेन लक्षीकृतं विज्ञाय भगवता स्वभारेणाश्वेषु जानुभ्यामवनीं गमितेषु रश्मिभिः समसूत्रदेशेऽर्जुनस्य शिरो दृष्ट्वापि वेगातिशयात्स्वयं नीचीभवितुमशक्ता सती तद्देशस्थं मुकुटं जहारेत्यर्थः । गोशब्दात्मजभूषणं सुविहितमिति । गौः पृथिवी तया शब्द्यते गोशब्दा अदितिः । इयं वा अदितिरिति पृथिव्या अदितेर्निर्देशात् । तस्या आत्मजस्येन्द्रस्य भूषणं सुविहितं वेधसेति शेषः । तथाचात्रैवोक्तम् । पुरंदरार्थे तपसा प्रयत्नतः स्वयं कृतं यद्विधिना स्वयंभुवेति । कीदृशं मुकुटम् । वै निश्चितं प्रसिद्धं वा । गोशब्दगोपूरि गोभिः रश्मिभिः शब्द्यते रश्मिमानिति कथ्यत इति सूर्यस्तस्येव भुवनगर्भव्यापिनो गावः किरणास्तैर्भुवनं पूरयितुं शीलमस्य तत्तथा । सूर्यसमप्रभमित्यर्थः । ननु चेतनाधिष्ठितो बाणः पुनरेत्यार्जुनं कुतो न हतवानित्यत आह । गोकर्णासनमर्दनश्च न ययावप्राप्य मृत्योर्वशमिति । गोकर्णे सर्पे पुनरर्जुनं हन्तुमिच्छन्तमसनेन बाणक्षेपेण मर्दयति यः स तथाभूतोऽर्जुनश्च तमेव सर्पमनवाप्य मृत्योर्वशं न ययौ । सर्पस्य पुनरागमनं वधश्चात्रैव कीर्त्यते । गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमस्विति कोशः ॥ २ ॥

नभश्च्युतां प्रज्वलितामिवोल्कां
पश्यैनमायान्तममित्रसाह ॥ ४६
सञ्जय उवाच ।
ततः स जिष्णुः परिवृत्य रोषा-
च्चिच्छेद पङ्क्तिर्निशितैः सुधारैः ।
नागं वियत्तिर्यगिवोत्पतन्तं
स च्छिन्नगात्रो निपपात भूमौ ॥ ४७
[ गते च तस्मिन्भुजगे किरीटिना
स्वयं विभुः पार्थिव भूतलादथ ।
समुज्जहाराशु पुनः पतन्तं
रथं भुजाभ्यां पुरुषोत्तमस्ततः ॥ ] ४८
तस्मिन्मुहूर्ते दशभिः पृषत्कैः
शिलाशितैर्बर्हिणबर्हवाजितैः ।
विव्याध कर्णः पुरुषप्रवीरो
धनञ्जयं तिर्यगवेक्षमाणः ॥ ४९
ततोऽर्जुनो द्वादशभिः सुमुक्तै-
र्वराहकर्णैर्निशितैः समर्प्य ।
नाराचमाशीविषतुल्यवेग-
माकर्णपूर्णायतमुत्ससर्ज ॥ ५०
स चित्रवर्मेषुवरो विदार्य
प्राणान्निरस्यन्निव साधुमुक्तः ।
कर्णस्य पीत्वा रुधिरं विवेश
वसुंधरां शोणितदिग्धवाजः ॥ ५१
ततो वृषो बाणनिपातकोपितो
महोरगो दण्डविघट्टितो यथा ।
तदाऽऽशुकारी व्यसृजच्छरोत्तमान्
महाविषः सर्प इवोत्तमं विषम् ॥ ५२
जनार्दनं द्वादशभिः पराभिन-
न्नवैर्नवत्या च शरैस्तथाऽर्जुनम् ।
शरेण घोरेण पुनश्च पाण्डवं
विदार्य कर्णो व्यनदज्जहास च ॥ ५३
तमस्य हर्षं ममृषे न पाण्डवो
बिभेद मर्माणि ततोऽस्य मर्मवित् ।
परःशतैः पत्रिभिरिन्द्रविक्रम-
स्तथा यथेन्द्रो बलमोजसा रणे ॥ ५
ततः शराणां नवतिं तदाऽर्जुनः
ससर्ज कर्णेऽन्तकदण्डसंनिभाम् ।
तैः पत्रिभिर्विद्धतनुः स विव्यथे
तथा यथा वज्रविदारितोऽचलः ॥ ५
मणिप्रवेकोत्तमवज्रहाटकै-
रलंकृतं चास्य वराङ्गभूषणम् ।
प्रविद्धमुर्व्यां निपपात पत्रिभि-
र्धनञ्जयेनोत्तमकुण्डलेपि च ॥ ५१
महाधनं शिल्पिवरैः प्रयत्नतः
कृतं यदस्योत्तमवर्म भास्वरम् ।
सुदीर्घकालेन ततोऽस्य पाण्डवः
क्षणेन बाणैर्बहुधा व्यशातयत् ॥ ५७
'तस्येषुभिः खण्डितकुण्डलोऽन्तः
परिक्षतश्चाभ्यधिकं तदानीम् ।
स लोहिताङ्गश्रवणश्चकाशे
सलोहिताङ्गश्रवणो यथा दिवि ॥' ५८
स तं विवर्माणमथोत्तमेषुभिः
शितैश्चतुर्भिः कुपितः पराभिनत् ।
स विव्यथेऽत्यर्थमरिप्रताडितो
यथाऽऽतुरः पित्तकफानिलज्वरैः ॥ ५९
महाधनुर्मण्डलनिःसृतैः शितैः
क्रियाप्रयत्नप्रहितैर्बलेन च ।
ततक्ष कर्णं बहुभिः शरोत्तमै-
र्बिभेद मर्मस्वपि चार्जुनस्त्वरन् ॥ ६०
दृढाहतः पत्रिभिरुग्रवेगैः
पार्थेन कर्णो विविधैः शिताग्रैः ।
बभौ गिरिर्गैरिकधातुरक्तः
क्षरन्प्रपातैरिव रक्तमम्भः ॥ ६१
[ततोऽर्जुनः कर्णमवक्रगैर्नवैः
सुवर्णपुङ्खैः सुदृढैरयस्मयैः ।

गते गमिते । विभुः समर्थः ॥ ४८ ॥ बर्हिणानां बर्हा एव वाजाः पक्षाः संजाता येषां तैर्बर्हिणबर्हवाजितैः ॥ ४९ ॥

यमाग्निदण्डप्रतिमैः स्तनान्तरे
पराभिनत्क्रौञ्चमिवाद्रिमग्निजः ॥ ६२
ततः शरावापमपास्य सूतजो
धनुश्च तच्छक्रशरासनोपमम् ।
ततो रथस्थः स मुमोह च स्खलन्
प्रशीर्णमुष्टिः सुभृशाहतः प्रभो ॥ ६३
न चार्जुनस्तं व्यसने तदेषिवा-
न्निहन्तुमार्यः पुरुषव्रते स्थितः ।
ततस्तमिन्द्रावरजः सुसंभ्रमा-
दुवाच किं पाण्डव हे प्रमाद्यसे ॥ ६४
नैवाहितानां सततं विपश्चितः
क्षणं प्रतीक्षन्त्यपि दुर्बलीयसाम् ।
विशेषतोऽरीन्व्यसनेषु पण्डितो
निहत्य धर्मं च यशश्च विन्दते ॥ ६५
तदेकवीरं तव चाहितं सदा
त्वरस्व कर्ण सहसाऽभिमर्दितुम् ।
पुरा समर्थः समुपैति सूतजो
भिन्धि त्वमेनं नमुचिं यथा हरिः ॥ ६६
ततस्तदेवेत्यभिपूज्य सत्वरं
जनार्दनं कर्णमविध्यदर्जुनः ।
शरोत्तमैः सर्वकुरूत्तमस्त्वरं-
स्तथा यथा शम्बरहा पुरा बलिम् ॥] ६७
साश्वं तु कर्णं सरथं किरीटी
समाचिनोद्भारत वत्सदन्तैः ।
प्रच्छादयामास दिशश्च बाणैः
सर्वप्रयत्नात्तपनीयपुङ्खैः ॥ ६८
सवत्सदन्तैः पृथुपीनवक्षाः
समाचितः सोऽधिरथिर्विभाति ।
सुपुष्पिताशोकपलाशशाल्मलि-
र्यथाऽचलश्चन्दनकाननायुतः ॥ ६९
शरैः शरीरे बहुभिः समर्पितै-
र्विभाति कर्णः समरे विशांपते ।
महीरुहैराचितसानुकन्दरो
यथा गिरीन्द्रः स्फुटकर्णिकारवान् ॥ ७०
स बाणसङ्घान्बहुधा व्यवासृजन्
विभाति कर्णः शरजालरश्मिवान् ।
स लोहितो रक्तगभस्तिमण्डलो
दिवाकरोऽस्ताभिमुखो यथा तथा ॥ ७१
बाह्वन्तरादाधिरथेर्विमुक्तान्
बाणान्महाहीनिव दीप्यमानान् ।
व्यध्वंसयन्नर्जुनबाहुमुक्ताः
शराः समासाद्य दिशः शिताग्राः ॥ ७२
[ततः स कर्णः समवाप्य धैर्यं
बाणान्विमुञ्चन्कुपिताहिकल्पान् ।
विव्याध पार्थं दशभिः पृषत्कैः
कृष्णं च षड्भिः कुपिताहिकल्पैः ॥ ७३
ततः किरीटी भृशमुग्रनिःस्वनं
महाशरं सर्पविषानलोपमम् ।
अयस्मयं रौद्रमहास्त्रसंभृतं
महाहवे क्षेप्तुमना महामतिः ॥] ७४
कालो ह्यदृश्यो नृप विप्रशापा-
न्निदर्शयन्कर्णवधं ब्रुवाणः ।
भूमिस्तु चक्रं ग्रसतीत्यवोच-
त्कर्णस्य तस्मिन्वधकाल आगते ॥ ७५
न चास्य घोरं प्रतिभाति चास्त्रं
यद्भार्गवोऽस्मै प्रददौ महात्मा ।
चक्रं च वामं ग्रसते भूमिरस्य
प्राप्ते तस्मिन्वधकाले नृवीर ॥ ७६
ततो रथो घूर्णितवान्नरेन्द्र
शापात्तदा ब्राह्मणसत्तमस्य ।
प्राप्ते वधं शंसति चाप्यथास्त्रं
प्रणश्यमानं द्विजमुख्यशापात् ॥ ७७
[ततश्चक्रमपतत्तस्य भूमौ
स विह्वलः समरे सूतपुत्रः ।
सवेदिकश्चैत्य इवातिमात्रः
सुपुष्पितो भूमितले निमग्नः ॥] ७८
मग्ने रथे ब्राह्मणशापमूढो
ह्यस्त्रं च तं मोघमिषुं च सर्पम् ।

अग्निजः कार्तिकेयः ॥ ६२ ॥ ईषिवान् मनसि कृतवान् ॥ ६४ ॥ चैत्यः सवेदिको ग्रामसूचको महाद्रुमः ॥ ७८ ॥

अमृष्यमाणो व्यसनानि तानि
हस्तौ विधुन्वन्विजगर्ह धर्मम् ॥ ७९
धर्मप्रधानं किल पाति धर्म
इत्यब्रुवन्धर्मविदः सदैव ।
वयं च धर्मे प्रयताम नित्यं
चर्तुं यथाशक्ति यथाश्रुतं च ।
स चापि निघ्नाति न पाति भक्तान्
मन्ये न नित्यं परिपाति धर्मः ॥ ८०
एवं ब्रुवन्प्रस्खलिताश्वसूतो
विचाल्यमानोऽर्जुनबाणपातैः ।
मर्माभिघाताच्छिथिलः क्रियासु
पुनः पुनर्धर्ममसौ जगर्ह ॥ ८१
ततः शरैर्भीमतरैरविध्यत्त्रिभिराहवे ।
हस्ते कृष्णं तथा पार्थमभ्यविध्यच्च सप्तभिः ॥ ८२
ततोऽर्जुनः सप्तदश तिग्मवेगानजिह्मगान् ।
इन्द्राशनिसमान्घोरानसृजत्पावकोपमान् ॥ ८३
निर्भिद्य ते भीमवेगा ह्यपतन्पृथिवीतले ।
कम्पितात्मा ततः कर्णः शक्त्या चेष्टामदर्शयत् ८४
बलेनाथ स संस्तभ्य ब्रह्मास्त्रं समुदैरयत् ।
ऐन्द्रं ततोऽर्जुनश्चापि तं दृष्ट्वाऽभ्युपमन्त्रयत् ॥ ८५
गाण्डीवं ज्यां च बाणांश्च सोऽनुमन्त्र्य परंतपः ।
व्यसृजच्छरवर्षाणि वर्षाणीव पुरंदरः ॥ ८६
ततस्तेजोमया बाणा रथात्पार्थस्य निःसृताः ।
प्रादुरासन्महावीर्याः कर्णस्य रथमन्तिकात् ।
स कर्णोऽग्रसदस्त्रास्त्रं कुर्वन्मोक्षं महारथः ॥ ८७
ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रे विनाशिते ।
विसृजास्त्रं परं पार्थ राधेयो ग्रसते शरान् ॥ ८८
ततो ब्रह्मास्त्रमत्युग्रं संमन्त्र्य समयोजयत् ।
छादयित्वा ततो बाणैः कर्णं प्रत्यस्यदर्जुनः ॥ ८९
ततः कर्णः शितैर्बाणैर्ज्यां चिच्छेद सुतेजनैः ।
[ द्वितीयां च तृतीयां च चतुर्थीं पञ्चमीं तथा ९०
षष्ठीमथास्य चिच्छेद सप्तमीं च तथाऽष्टमीम् ।
नवमीं दशमीं चास्य तथा चैकादशीं वृषः ।
ज्याशतं शतसंधानः स कर्णो नावबुध्यते ॥ ] ९१
ततो ज्यां विनिधायान्यामभिमन्त्र्य च पाण्डवः ।
शरैरवाकिरत्कर्णं दीप्यमानैरिवाहिभिः ॥ ९२
तस्य ज्याच्छेदनं कर्णो ज्यावधानं च संयुगे ।
नान्वबुध्यत शीघ्रत्वात्तदद्भुतमिवाभवत् ॥ ९३
अस्त्रैरस्त्राणि संवार्य प्रनिघ्नन्सव्यसाचिनः ।
चक्रे चाप्यधिकं पार्थात्स्ववीर्यमतिदर्शयन् ॥ ९४
ततः कर्णोऽर्जुनं दृष्ट्वा स्वस्यास्त्रेण च पीडितम् ।
अभ्यसेत्यब्रवीत्पार्थमातिष्ठास्त्रं व्रजेति च ॥ ९५
ततोऽग्निसदृशं घोरं शरं सर्पविषोपमम् ।
अश्मसारमयं दिव्यमभिमन्त्र्य परंतपः ।
रौद्रमस्त्रं समाधाय क्षेप्तुकामः किरीटिने ॥ ९६
ततोऽग्रसन्मही चक्रं राधेयस्य तदा नृप ॥ ९७
[ततोऽवतीर्य राधेयो रथादाशु समुद्यतः ।
चक्रं भुजाभ्यामालम्ब्य समुत्क्षेप्तुमियेष सः ॥ ९८
सप्तद्वीपा वसुमती सशैलवनकानना ।
गीर्णचक्रा समुत्क्षिप्ता कर्णेन चतुरङ्गुलम् ॥] ९९
ग्रस्तचक्रस्तु राधेयः क्रोधादश्रूण्यवर्तयत् ।
अर्जुनं वीक्ष्य संरब्धमिदं वचनमब्रवीत् ॥ १००
भोभो पार्थ महेष्वास मुहूर्तं परिपालय ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ॥ १०१
सव्यं चक्रं महीग्रस्तं दृष्ट्वा दैवादिदं मम ।
पार्थ कापुरुषाचीर्णमभिसन्धिं विसर्जय ॥ १०२
न त्वं कापुरुषाचीर्णं मार्गमास्थातुमर्हसि ।
ख्यातस्त्वमसि कौन्तेय विशिष्टो रणकर्मसु ।
विशिष्टतरमेव त्वं कर्तुमर्हसि पाण्डव ॥ १०३
प्रकीर्णकेशे विमुखे ब्राह्मणेऽथ कृताञ्जलौ ।
शरणागते न्यस्तशस्त्रे याचमाने तथाऽर्जुन ॥ १०४
अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ।
न विमुञ्चन्ति शस्त्राणि शूराः साधुव्रते स्थिताः ॥
त्वं च शूरतमो लोके साधुवृत्तश्च पाण्डव ।

प्रत्यस्यत्प्रतिप्राक्षिपत् ॥ ८९ ॥ अभ्यस पुनः पुनः अस्त्रं आतिष्ट व्रज प्रेरयेत्यब्रवीदिति योजना। ततः कृष्णोऽर्जुनं दृष्ट्वा कर्णास्त्रेण च पीडितम् इति झ. पाठः ॥ ९५ ॥ क्षेप्तुकामः किरीटवान् इति झ. पाठः ॥ ९६ ॥ सप्तनवतितमोऽध्यायः ॥ ९७ ॥

अभिज्ञो युद्धधर्माणां तस्मात्क्षम मुहूर्तकम् ॥ १०६
दिव्यास्त्रविदमेयात्मा कार्तवीर्यसमो युधि ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज ॥ १०७
न मां रथस्थो भूमिष्ठं विकलं हन्तुमर्हसि ।
न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहम् ॥ १०८
त्वं हि क्षत्रियदायादो महाकुलविवर्धनः ।
अतस्त्वां प्रब्रवीम्येष मुहूर्तं क्षम पाण्डव ॥ १०९

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

पार्थाय धर्मानुवादकं कर्णंप्रति कृष्णेन तत्कृतदुष्कृतानुस्मारणपूर्वकं मर्मोद्घाटनम् ॥ १ ॥ कर्णेन स्वबाणाहतिनिर्विण्णेऽर्जुने तदन्तरे रथादवरुह्य तच्चक्रोद्धरणोद्यमः ॥ २ ॥ तदन्तरे कृष्णचोदनया पार्थेन कर्णशिरश्छेदः ॥ ३ ॥

सञ्जय उवाच ।
अथाब्रवीद्वासुदेवो महात्मा
राधेय दिष्ट्या स्मरसीह धर्मम् ।
'धर्मे हि बद्धा सततं हि पार्था-
स्तेभ्यस्ततो वृद्धिमसौ ददाति ॥ १
धर्मादपेताः परिपन्थिनस्ते
तस्माद्गता वै कुरवो विनाशम् ।'
प्रायेण नीचा व्यसनेषु मग्ना
निन्दन्ति दैवं न तु दुष्कृतं स्वम् ॥ २
कृष्णां सभां कर्ण यदेकवस्त्रा-
मानीतवांस्त्वं च सुयोधनश्च ।
दुःशासनः शकुनिः सौबलश्च
धर्मस्तदा ते रुचितो न कस्मात् ॥ ३
यदा सभायां राजानमनक्षज्ञं युधिष्ठिरम् ।
आनीय जितवन्तो वै क्व ते धर्मस्तदा गतः ॥ ४
वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे ।
न प्रयच्छसि यद्राज्यं क्व ते धर्मस्तदा गतः ॥ ५
यद्भीमसेनं सर्पैश्च विषयुक्तैश्च भोजनैः ।
आचरस्त्वन्मते राजा क्व ते धर्मस्तदा गतः ॥ ६
यद्वारणावते पार्थान्सुप्ताञ्जतुगृहे तदा ।
हन्तुकामास्तदा यूयं क्व ते धर्मस्तदा गतः ॥ ७
यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम् ।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः ॥ ८
यदनार्यैः पुरा कृष्णां क्लिश्यमानामनागसम् ।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः ॥ ९
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं वृणीष्वेति वदंस्त्वं गजगामिनीम् ।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः ॥ १०
राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवान् ।
यदा शकुनिमाश्रित्य क्व ते धर्मस्तदा गतः ॥ ११
यदाऽभिमन्युं बहवो युद्धे जघ्नुर्महारथाः ।
परिवार्य रणे बालं क्व ते धर्मस्तदा गतः ॥ १२
[यद्येष धर्मस्तत्र न विद्यते हि
किं सर्वथा तालुविशोषणेन ।
अद्येह धर्म्याणि विधत्स्व सूत
तथापि जीवन्न विमोक्ष्यसे हि ॥ १३
नलो ह्यक्षैर्निर्जितः पुष्करेण
पुनर्यशो राज्यमवाप वीर्यात् ।
प्राप्तास्तथा पाण्डवा बाहुवीर्या-
त्सर्वैः समेताः परिवृत्तलोभाः ॥ १४
निहत्य शत्रून्समरे प्रवृद्धा-
न्ससोमका राज्यमवाप्नुयुस्ते ।
तथा गता धार्तराष्ट्रा विनाशं
धर्माभिगुप्तैः सततं नृसिंहैः ॥] १५
सञ्जय उवाच ।
एवमुक्तस्तदा कर्णो वासुदेवेन भारत ।
लज्जयावनतो भूत्वा नोत्तरं किंचिदुक्तवान् ॥ १६
क्रोधात्प्रस्फुरमाणौष्ठो धनुरुद्यम्य भारत ।
योधयामास वै पार्थं महावेगपराक्रमः ॥ १७
ततोऽब्रवीद्वासुदेवः फल्गुनं पुरुषर्षभम् ।

दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबल ॥ १८
एवमुक्तस्तु देवेन क्रोधमागात्तदाऽर्जुनः ।
मन्युमभ्याविशद्धोरं स्मृत्वा तत्तु धनञ्जयः॥ १९
तस्य क्रुद्धस्य सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः ।
प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत् ॥ २०
तत्समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनञ्जयम् ।
अभ्यवर्षत्पुनर्यत्नमकरोद्रथसर्जने ॥ २१
ब्रह्मास्त्रेणैव तं पार्थो ववर्ष शरवृष्टिभिः ।
तदस्त्रमस्त्रेणावार्य प्रजहार च पाण्डवः ॥ २२
ततोऽन्यदस्त्रं कौन्तेयो दयितं जातवेदसः ।
मुमोच कर्णमुद्दिश्य तत्प्रजज्वाल तेजसा ॥ २३
वारुणेन ततः कर्णः शमयामास पावकम् ।
जीमूतैश्च दिशः सर्वाश्चक्रे तिमिरदुर्दिनाः ॥ २४
पाण्डवेयस्त्वसंभ्रान्तो वायव्यास्त्रेण वीर्यवान् ।
अपोवाह तदाऽभ्राणि राधेयस्य प्रपश्यतः ॥ २५
[ ततः शरं महाघोरं ज्वलन्तमिव पावकम् ।
आददे पाण्डुपुत्रस्य सूतपुत्रो जिघांसया ॥ २६
योज्यमाने ततस्तस्मिन्बाणे धनुषि पूजिते ।
चचाल पृथिवी राजन्सशैलवनकानना ॥ २७
ववौ सशर्करो वायुर्दिशश्च रजसा वृताः ।
हाहाकारश्च संजज्ञे सुराणां दिवि भारत ॥ २८
तमिषुं सन्धितं दृष्ट्वा सूतपुत्रेण मारिष ।
विषादं परमं जग्मुः पाण्डवा दीनचेतसः ॥ २९
स सायकः कर्णभुजप्रमुक्तः
शक्राशनिप्रख्यरुचिः शिताग्रः ।
भुजान्तरं प्राप्य धनञ्जयस्य
विवेश वल्मीकमिवोरगोत्तमः ॥ ३०
स गाढविद्धः समरे महात्मा
विघूर्णमानः श्लथहस्तगाण्डिवः ।
चचाल बीभत्सुरमित्रमर्दनः
क्षितेः प्रकम्पे च यथाऽचलोत्तमः ॥ ३१
तदन्तरं प्राप्य वृषो महारथो
रथाङ्गमुर्वीगतमुज्जिहीर्षुः ।
रथादवप्लुत्य निगृह्य दोर्भ्यां
शशाक दैवान्न महाबलोऽपि ॥ ३२

ततः किरीटी प्रतिलभ्य संज्ञां
जग्राह बाणं यमदण्डकल्पम् ।
ततोऽर्जुनः प्राञ्जलिकं महात्मा
ततोऽब्रवीद्वासुदेवोऽपि पार्थम् ॥
छिन्ध्यस्य मूर्धानमरेः शरेण
न यावदारोहति वै रथं वृषः ।
तथैव संपूज्य स तद्वचः प्रभो-
स्ततः शरं प्रज्वलितं प्रगृह्य ।
जघान कक्षाममलार्कवर्णां
महारथे रथचक्रे विमग्ने ॥ :
तं हस्तिकक्षाप्रवरं सुकेतुं
सुवर्णमुक्तामणिवज्रजुष्टम् ।
कलाप्रकृष्टोत्तमशिल्पियत्नैः
कृतं सुरूपं तपनीयचित्रम् ॥ ३
जयास्पदं तव सैन्यस्य नित्य-
ममित्रवित्रासनमीड्यरूपम् ।
विख्यातमादित्यसुतस्य लोके
त्विषा समं पावकभानुचन्द्रैः ॥ ३
ततः क्षुरप्रेण सुसंशितेन
सुवर्णपुङ्खेन हुताग्निवर्चसा ।
श्रिया ज्वलन्तं ध्वजमुन्ममाथ
महारथस्याधिरथेः किरीटी ॥ ३
यशश्च दर्पश्च तथा प्रियाणि
सर्वाणि कार्याणि च तेन केतुना ।
साकं कुरूणां हृदयानि चापतन्
बभूव हाहेति च निःस्वनो महान् ॥ ३
दृष्ट्वा ध्वजं पातितमाशुकारिणा
कुरुप्रवीरेण निकृत्तमाहवे ।
नाशंसिरे सूतपुत्रस्य सर्वे
जयं तदा भारत ये त्वदीयाः ॥ ३
अथ त्वरन्कर्णवधाय पार्थो
महेन्द्रवज्रानलदण्डसन्निभम् ।
आदत्त चाथाञ्जलिकं निषङ्गा-
त्सहस्ररश्मेरिव रश्मिमुत्तमम् ॥ ४

मर्मच्छिदं शोणितमांसदिग्धं
वैश्वानरार्कप्रतिमं महार्हम् ।
नराश्वनागासुहरं त्र्यरत्निं
षड्वाजमञ्जोगतिमुग्रवेगम् ॥ ४१
सहस्रनेत्राशनितुल्यवीर्यं
कालानलं व्यात्तमिवातिघोरम् ।
पिनाकनारायणचक्रसन्निभं
भयंकरं प्राणभृतां विनाशनम् ॥ ४२
जग्राह पार्थः स शरं प्रहृष्टो
यो देवसङ्घैरपि दुर्निवार्यः ।
संपूजितो यः सततं महात्मा
देवासुरान्यो विजयेन्महेषुः ॥ ४३
तं वै प्रमृष्टं प्रसमीक्ष्य युद्धे
चचाल सर्वं सचराचरं जगत् ।
कृत्स्नं जगत्स्वस्त्यृषयोऽभिचक्रु-
स्तमुद्यतं प्रेक्ष्य महाहवेषुम् ॥ ४४
ततस्तु तं वै शरमप्रमेयं
गाण्डीवधन्वा धनुषि व्ययोजयत् ।
युक्त्वा महास्त्रेण परेण चापं
विकृष्य गाण्डीवमुवाच सत्वरम् ॥ ४५
अयं महास्त्रप्रहितो महाशरः
शरीरहृच्चासुहरश्च दुर्हृदः ।
तपोऽस्ति तप्तं गुरवश्च तोषिता
मया यदीष्टं सुहुतं यदि श्रुतम् ॥ ४६
अनेन सत्येन निहन्त्वयं शरः
सुसंहितः कर्णमरिं ममोर्जितम् ।
इत्यूचिवांस्तं प्रमुमोच बाणं
धनञ्जयः कर्णवधाय घोरम् ॥ ४७
कृत्या ह्यथर्वाङ्गिरसी प्रचोदिता
यथा तथा त्वं जहि शात्रवं मम ।
ब्रुवन्किरीटी तमतिप्रहृष्टो-
ऽसृजद्देवानां जयहेतुं महेषुम् ॥ ४८
जिघांसुरर्केन्दुसमप्रभावः
कर्णं वशी पाण्डवः क्षिप्रकारी ।
ततो विमुक्तो बलिना महेषुः
प्रज्वालयामास नभो दिशश्च ॥ ४९
सैन्यान्यनेकानि च विप्रमोह्य
गाण्डीवमुक्तेन ततो महात्मा ।
तेनार्जुनस्तन्महनीयमस्य
शिरोऽहरत्सूतपुत्रस्य राजन् ॥ ५०
शरोत्तमेनाञ्जलिकेन राजं-
स्तदा महास्त्रप्रतिमन्त्रितेन ।
पार्थोऽपराह्णे शिर उच्चकर्त
वैकर्तनस्याथ महेन्द्रसूनुः ।
छिन्नं पपाताञ्जलिकेन तूर्णं
कायश्च पश्चाद्धरणीं जगाम ॥ ५१
तदुद्यतादित्यसमानतेजसं
शरन्नभोमध्यगभास्करोपमम् ।
वराङ्गमुर्व्यामपतच्चमूमुखे
दिवाकरोऽस्तादिव रक्तमण्डलः ॥ ५२
ततोऽस्य देहं सततं सुखैधितं
सुरूपमत्यर्थसुखं सुगन्धि च ।
परेण कृच्छ्रेण शिरः समत्यज-
द्गृहं महर्द्धीन्निवसन्निवेश्वरः ॥ ५३
शरैर्विभिन्नं व्यसु तत्सुवर्चसः
पपात कर्णस्य शरीरमुच्छ्रितम् ।
स्रवद्व्रणं गैरिकतोयविस्रवं
गिरेर्यथा वज्रहतं महाशिरः ॥ ५४
देहाच्च कर्णस्य निपातितस्य
तेजः सूर्यं खं वितत्याविवेश ।
तदद्भुतं सर्वमनुष्ययोधाः
संदृष्टवन्तो निहते स्म कर्णे ॥ ५५
ततः शङ्खान्पाण्डवा दध्मुरुच्चै-
र्दृष्ट्वा कर्णं पातितं फल्गुनेन ।
तथैव कृष्णश्च धनञ्जयश्च
हृष्टौ यमौ दध्मतुर्वारिजातौ ॥ ५६
तं सोमकाः प्रेक्ष्य हतं शयानं
सैन्यैः सार्धं सिंहनादान्प्रचक्रुः ।

तूर्याणि संजघ्नुरतीव हृष्टा
वासांसि चैवादुधुवुर्भुजांश्च ॥ ५७
संवर्धयन्तश्च नरेन्द्र योधाः
पार्थं समाजग्मुरतीव हृष्टाः ।
बलान्विताश्चापरे ह्यप्यनृत्य-
न्नन्योन्यमाश्लिष्य नदन्त ऊचुः ॥ ५८
दृष्ट्वा तु कर्णं भुवि वा विपन्नं
कृत्तं रथात्सायकैरर्जुनस्य ।
महानिलेनाद्रिमिवापविद्धं
यज्ञावसानेऽग्निमिव प्रशान्तम् ॥ ५९
तदाननं सूर्यसुतस्य राज-
न्विभ्राजते पद्ममिवावनालम् ।
रराज कर्णस्य शिरो निकृत्त-
मस्तंगतं भास्करस्येव बिम्बम् ॥ ६०
शरैराचितसर्वाङ्गः शोणितौघपरिप्लुतः ।
रराज देहः कर्णस्य स्वरश्मिभिरिवांशुमान् ॥ ६१
प्रताप्य सेनामामित्रीं दीप्तैः शरगभस्तिभिः ।
बलिनार्जुनकालेन नीतोऽस्तं कर्णभास्करः ॥ ६२
अस्तं गच्छन्यथाऽऽदित्यः प्रभामादाय गच्छति ।
तथा जीवितमादाय कर्णस्येषुर्जगाम सः ॥ ६३
अपराह्णेऽपराह्णस्य सूतपुत्रस्य मारिष ।
छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ ६४
उपर्युपरि सैन्यानां विनिघ्नन्नितराञ्जनान् ।
शिरः कर्णस्य सोऽत्सेधमिषुः सोऽप्यहरद्द्रुतम् ॥ ६५
कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराज-
श्छिन्नध्वजेनाथ ययौ रथेन ॥ ६
हते कर्णे कुरवः प्राद्रवन्त
भयार्दिता गाढविद्धाश्च सङ्ख्ये ।
अवेक्षमाणा मुहुरर्जुनस्य
ध्वजं महान्तं वपुषा ज्वलन्तम् ॥ ६
तच्छिरो भरतश्रेष्ठ शोभयामास मेदिनीम् ।
यदृच्छयेव पतितं मण्डलं चण्डदीधितेः ॥ ६
तं दृष्ट्वा समरविमर्द(बद्ध)लब्धनिद्रं
दष्टोष्ठं रुधिरपरीतकातराक्षम् ।
राधेयं रथवरपृष्ठसंनिषण्णं
हीनांशुर्दिवसकरो मुहूर्तमासीत् ॥ ६९
निःशब्दतूर्यं हतयोधमुख्यं
प्रशान्तदर्पं धृतराष्ट्रसैन्यम् ।
न शोभते सूर्यसुतेन हीनं
वृन्दं ग्रहाणामिव चन्द्रहीनम् ॥ ७०
सहस्रनेत्रप्रतिमानकर्मणः
सहस्रपत्रप्रतिमाननं शुभम् ।
सहस्ररश्मिर्दिवसक्षये यथा
तथाऽपतत्कर्णशिरो वसुन्धराम् ॥ ७१
व्यूढोरस्कं कमलवदनं तप्तहेमावभासं
कर्णं दृष्ट्वा भुवि निपतितं पार्थबाणाभितप्तम् ।
पांसुग्रस्तं मलिनमसकृत्पुत्रमन्वीक्षमाणो
मन्दंमन्दं व्रजति सविता मन्दिरं मन्दरश्मिः ॥

॥ इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## एकोनशततमोऽध्यायः ॥ ९९ ॥

शल्येन कर्णमरणाद्व्याकुलमनसो दुर्योधनस्य समाश्वासनम् ॥ १ ॥ तथा तंप्रति रणाङ्गणवर्णनम् ॥ २ ॥ देवगन्धर्वादीनां स्वस्वस्थानगमनम् ॥ ३ ॥

सञ्जय उवाच ।
कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
यदृच्छया सूर्यमिवावनिं गतं
दिदृक्षवः संपरिवार्य तस्थुः ॥ १

अपराह्णे दिवसस्य पश्चिमे भागे । अपरं चरमम् अहः मरण- दिनं यस्य ॥ ६४ ॥ अष्टनवतितमोऽध्यायः ॥ ९८ ॥

प्रहृष्टवित्रस्तविषण्णविस्मिता-
स्तथाऽपरे शोकसमन्विताऽभवन् ।
परे त्वदीयाश्च रणे विशांपते
यथायथेष्टं पृतना तथा गता ॥ २
प्रविद्धवर्माभरणायुधाम्बरं
धनञ्जयेन प्रहतं महारथम् ।
निशाम्य कर्णं कुरवः प्रदुद्रुवु-
र्हतर्षभं केसरिणेव गोकुलम् ॥ ३
कृत्वा विमर्दं भृशमर्जुनेन
कर्णं हतं केसरिणेव नागम् ।
दृष्ट्वा शयानं युधि मद्रराज-
श्छिन्नध्वजेनापययौ रथेन ॥ ४
कर्णे हते पार्थभयात्प्रदुद्रुवु-
र्वैकर्तने धार्तराष्ट्राः सशल्याः ।
अवेक्षमाणा मुहुरर्जुनस्य
केतुं महान्तं यशसा ज्वलन्तम् ॥ ५
शल्यस्तु कर्णार्जुनयोर्विमर्दे
बलानि दृष्ट्वा मृदितध्वजानि ।
ययौ स तेनैव रथेन तूर्णं
हेलीकृतः सृञ्जयसोमकैश्च ॥ ६
निपातितस्यन्दनवाजिनागं
बलं च दृष्ट्वा हतसूतपुत्रम् ।
भीमस्तु भीमेन तदा स्वरेण
समुन्नदद्रोदसी कम्पयंश्च । ७
आस्फोटयन्नृत्यति वल्गते च
हते कर्णे त्रासयन्धार्तराष्ट्रान् ।
तदा राजन्सृञ्जयाः सोमकाश्च
शङ्खान्दध्मुः सस्वजुश्चापि सर्वे ॥ ८
परस्परं क्षत्रिया हृष्टरूपाः
सूतात्मजे वै निहते तदानीम् ।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो
दीनो मुहुर्निश्वसन्नार्तरूपः ॥ ९
मद्राधिपश्चापि *विमूढचेता-
स्तूर्णं ध्वजेनापहृतेन तेन ।
रथेन दुर्योधनमेत्य तूर्णं
पश्यन्सुदुःखार्त्तमुवाच राजन् ॥ १०
विशीर्णनागाश्वरथप्रवीरं
बलं त्वदीयं यमराष्ट्रकल्पम् ।
अन्योन्यमासाद्य हतैः शयानै-
र्नराश्वनागैर्गिरिकूटकल्पैः ॥ ११
नैतादृशं भारत युद्धमासी-
द्यथा हि कर्णार्जुनयोर्बभूव ।
ग्रस्तौ हि कर्णेन समेत्य कृष्णा-
वन्ये हि सर्वे तव शात्रवेयाः ॥ १२
दैवं तु यत्तत्स्ववशे प्रवृत्तं
तत्पाण्डवान्पाति निहन्ति चास्मान् ।
तवार्थसिद्ध्यर्थकरा हि सर्वे
प्रसह्य वीरा निहता द्विषद्भिः ॥ १३
कुबेरवैवस्वतवासवानां
तुल्यप्रभावा वरुणस्य चापि ।
वीर्येण शौर्येण पराक्रमेण
तैश्चापि युक्ता विमलैर्गुणौघैः ॥ १४
अवध्यकल्पा निहता नरेन्द्रा-
स्तवार्थकामा युधि पाण्डवेयैः ।
तन्मा शुचो भारत दिष्टमेत-
त्पर्यायसिद्धिर्न तु नित्यसिद्धिः ॥ १५
एतद्वचो मद्रपतेर्निशम्य
स्वं चाविनीतं मनसा विचिन्त्य ।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो
मुहुर्मुहुर्निश्वसन्नार्तरूपः ॥ १६
तं†ध्यानमूकं कृपणं भृशार्त-
मार्तायनिर्दीनमुवाच राजन् ।

प्रहृष्टाः अर्जुनादयः । वित्रस्ताः भीरवः । विषण्णाः शत्रवः । विस्मिताः प्रेक्षकाः ॥ २ ॥

* अत्र झ. पाठे ६१ श्लोका अधिका दृश्यन्ते
[धृतराष्ट्र उवाच ।
तस्मिंस्तु कर्णार्जुनयोर्विमर्दे
दग्धस्य रौद्रेऽहनि विद्रुतस्य ।
बभूव रूपं कुरुसृञ्जयानां
बलस्य बाणोन्मथितस्य कीदृक् ॥

पश्येदमुग्रैर्नरवाजिनागै-
गायोधनं वीर हतैः सुपूर्णम् ॥ १७

महीधराभैः पतितैश्च नागैः
सकृत्प्रयत्नैः शरभिन्नगात्रैः ।

सञ्जय उवाच ।
शृणु राजन्नवहितो यथा वृत्तो महाक्षयः ।
घोरो मनुष्यदेहानामाजौ च गजवाजिनाम् ॥ २
यत्र कर्णे हते पार्थः सिंहनादमथाकरोत् ।
तदा तव सुतान्राजन्नाविवेश महद्भयम् ॥ ३
न संधातुमनीकानि न चैवाशु पराक्रमे ।
आसीद्बुद्धिर्हते कर्णे तव योधस्य कर्हिचित् ॥ ४
वणिजो नावि भिन्नायामगाधे विप्लवे यथा ।
अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ॥ ५
सूतपुत्रे हते राजन्वित्रस्ताः शस्त्रविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहैरिवार्दिताः ॥ ६
भग्नशृङ्गा वृषा यद्वद्भग्नदंष्ट्रा इवोरगाः ।
प्रत्युपायाम सायाह्ने निर्जिताः सव्यसाचिना ॥ ७
हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः ।
सूतपुत्रे हते राजन्पुत्रास्ते दुद्रुवुर्भयात् ॥ ८
विध्वस्तयन्त्रकवचाः कांदिग्भूता विचेतसः ।
अन्योन्यमवमृद्नन्तो वीक्षमाणा भयार्दिताः ॥ ९
मामेव नूनं बीभत्सुर्मामेव च वृकोदरः ।
अभियातीति मन्वानाः पेतुर्मम्लुश्च संभ्रमात् ॥ १०
हयानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसंपन्नाः पदातीन्प्रजहुर्भयात् ॥ ११
कुञ्जरैः स्यन्दनाः क्षुण्णाः सादिनश्च महारथैः ।
पदातिसङ्घाश्चाश्वौघैः पलायद्भिर्भयार्दितैः ॥ १२
व्यालतस्करसंकीर्णे सार्थहीना यथा वने ।
सूतपुत्रे हते राजंस्तव योधास्तथाऽभवन् ॥ १३
हतारोहा यथा नागाश्छिन्नहस्ता यथा नराः ।
सर्वे पार्थमयं लोकं संपश्यन्तो भयार्दिताः ॥ १४
संप्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान् ।
दुर्योधनोऽथ स्वं सूतं हाहाकृत्वेदमब्रवीत् ॥ १५
नातिक्रमेच्च मां पार्थो धनुष्पाणिमवस्थितम् ।
जघने सर्वसैन्यानां शनैरश्वान्प्रचोदय ॥ १६
युध्यमानं हि कौन्तेयं हनिष्यामि न संशयः ।
नोत्सहेन्मामतिक्रान्तुं वेलामिव महोदधिः ॥ १७
अद्यार्जुनं सगोविन्दं मानिनं च वृकोदरम् ।
अन्याञ्शिष्टांस्तथा शत्रून्कर्णस्यानृण्यमाप्नुयाम् ॥ १८
तच्छ्रुत्वा कुरुराजस्य शूरार्यसदृशं वचः ।
सूतो हेमपरिच्छन्नाञ्शनैरश्वानचोदयत् ॥ १९
रथाश्वनागहीनास्तु पादातास्तव मारिष ।
पञ्चविंशतिसाहस्रा युद्धायैव व्यवस्थिताः ॥ २०
तान्भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः ।
बलेन चतुरङ्गेण संवृत्याजघ्नतुः शरैः ॥ २१
प्रत्ययुध्यन्त समरे भीमसेनं सपार्षतम् ।
पार्थपार्षतयोश्चान्ये जगृहुस्तत्र नामनी ॥ २२
अक्रुध्यत रणे भीमस्तैस्तदा पर्यवस्थितैः ।
सोऽवतीर्य रथात्तूर्णं गदापाणिरयुध्यत ॥ २३
न तान्रथस्थो भूमिष्ठान्धर्मापेक्षी वृकोदरः ।
योधयामास कौन्तेयो भुजवीर्यव्यपाश्रयः ॥ २४
जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम् ।
अवधीत्तावकान्सर्वान्दण्डपाणिरिवान्तकः ॥ २५
पदातिनोऽपि संत्यक्त्वा प्रियं जीवितमात्मनः ।
भीममभ्यद्रवन्सङ्ख्ये पतङ्गा ज्वलनं यथा ॥ २६
आसाद्य भीमसेनं तु संरब्धा युद्धदुर्मदाः ।
विनेशुः सहसा दृष्ट्वा भूतग्रामा इवान्तकम् ॥ २७
श्येनवद्विचरन्भीमो गदाहस्तो महाबलः ।
पञ्चविंशतिसाहस्रांस्तावकानवपोथयत् ॥ २८
हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य तस्थौ तत्र महाबलः ॥ २९
धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ।
माद्रीपुत्रौ तु शकुनिं सात्यकिश्च महारथः ।
जवेनाभ्यपतन्हृष्टा घ्नन्तो दौर्योधनं बलम् ॥ ३०
तस्याश्वसादीन्सुबहूंस्ते निहत्य शितैः शरैः ।
समभ्यधावंस्त्वरितास्तत्र युद्धमभून्महत् ॥ ३१
धनञ्जयोऽपि चाभ्येत्य रथानीकं तव प्रभो ।
विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन्धनुः ॥ ३२
कृष्णसारथिमायान्तं दृष्ट्वा श्वेतहयं रथम् ।
अर्जुनं चापि योद्धारं त्वदीयाः प्राद्रवन्भयात् ॥ ३३
विप्रहीणरथाश्चैव शरैश्च परिकर्शिताः ।
पञ्चविंशतिसाहस्राः कालमार्छन्पदातयः ॥ ३४
हत्वा तान्पुरुषव्याघ्रः पाञ्चालानां महारथः ।
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महामनाः ॥ ३५
भीमसेनं पुरस्कृत्य नचिरात्प्रत्यदृश्यत ।
महाधनुर्धरः श्रीमानमित्रगणतापनः ॥ ३६

प्रविह्वलद्भिश्च गतासुभिश्च
प्रध्वस्तवर्मायुधसर्वयोधैः ॥ १८
वज्रापविद्धैरिव चाचलौघै-
र्विभिन्नपाषाणमृगद्रुमौघैः ।
प्रविद्धघण्टाङ्कुशतोमरध्वजैः
सहेमजालै रुधिरौघसंप्लवैः ॥ १९
शरावनुन्नैः पतितैस्तुरङ्गै-
स्तनद्भिरार्तैः क्षतजं वमद्भिः ।

दीनैस्त्रसद्भिः परिवृत्तनेत्रै-
र्मही पतद्भिः कृपणा बभूव ॥ २०
तथाऽपविद्धैर्गजवाजियूथै-
र्मन्दासुभिश्चापि गतासुभिश्च ।
रथैश्च नागैस्तुरगैश्च तुन्नै-
र्मही महावैतरणीव भाति ॥ २१
गजैर्निकृत्तापरहस्तगात्रै-
रुद्वेपमानैः पतितैः पृथिव्याम् ।

पारावतसवर्णाश्वं कोविदारमयध्वजम् ।
धृष्टद्युम्नं रणे दृष्ट्वा त्वदीयाः प्राद्रवन्भयात् ॥ ३७
गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ ।
नचिरात्प्रत्यदृश्येतां माद्रीपुत्रौ ससात्यकी ॥ ३८
चेकितानः शिखण्डी च द्रौपदेयाश्च मारिष ।
हत्वा त्वदीयं सुमहत्सैन्यं शङ्खांस्तथाऽधमन् ॥ ३९
ते सर्वे तावकान्प्रेक्ष्य द्रवतोऽपि पराङ्मुखान् ।
अभ्यवर्तन्त संरब्धान्वृषाञ्जित्वा यथा वृषाः ॥ ४०
सेनावशेषं तं दृष्ट्वा तव सैन्यस्य पाण्डवः ।
व्यवस्थितः सव्यसाची चुक्रोध बलवान्नृप ॥ ४१
धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ।
विश्रुतं त्रिषु लोकेषु व्याक्षिपद्गाण्डिवं धनुः ॥ ४२
तत एनाञ्शरव्रातैः सहसा समवाकिरत् ।
तमसा संवृतेनाथ न स्म किंचिद्व्यदृश्यत ॥ ४३
अन्धकारीकृते लोके रजोभूते महीतले ।
योधाः सर्वे महाराज तावकाः प्राद्रवन्भयात् ॥ ४४
संभज्यमाने सैन्ये तु कुरुराजो विशांपते ।
परानभिमुखांश्चैव सुतस्ते समुपाद्रवत् ॥ ४५
ततो दुर्योधनः सर्वानाजुहावाथ पाण्डवान् ।
युद्धाय भरतश्रेष्ठ देवानिव पुरा बलिः ॥ ४६
त एनमभिगर्जन्तः सहिताः समुपाद्रवन् ।
नानाशस्त्रभृतः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ ४७
दुर्योधनोऽप्यसंभ्रान्तस्तान्रणे निशितैः शरैः ।
तत्रावधीत्ततः क्रुद्धः शतशोऽथ सहस्रशः ॥ ४८
तत्सैन्यं पाण्डवेयानां योधयामास सर्वतः ॥ ४९
तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेकः सहितान्सर्वान्रणेऽयुध्यत पाण्डवान् ।
ततोऽपश्यन्महात्मा स स्वसैन्यं भृशदुःखितम् ॥ ५०

ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः ।
हर्षयन्निव तान्योधानिदं वचनमब्रवीत् ॥ ५१
न तं देशं प्रपश्यामि यत्र याता भयार्दिताः ।
गतानां यत्र वै मोक्षः पाण्डवात्किं गतेन वः ॥ ५२
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
अद्य सर्वान्हनिष्यामि ध्रुवो हि विजयो भवेत् ॥ ५३
विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतकिल्बिषान् ।
अनुसृत्य वधिष्यन्ति श्रेयान्नः समरे वधः ॥ ५४
सुखं सांग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम् ।
मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ॥ ५५
शृणुध्वं क्षत्रियाः सर्वे यावन्तः स्थ समागताः ।
यदा शूरं च भीरुं च मारयत्यन्तको यमः ॥ ५६
को न मूढो न युध्येत मादृशः क्षत्रियव्रतः ।
द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथ ॥ ५७
पितामहैराचरितं न धर्मं हातुमर्हथ ।
न ह्यधर्मोऽस्ति पापीयान्क्षत्रियस्य पलायनात् ॥ ५८
न युद्धधर्माच्छ्रेयो हि पन्थाः स्वर्गस्य कौरवाः ।
अचिरेण हता लोकान्सद्यो योधाः समश्नुत ॥ ५९
सञ्जय उवाच ।
एवं ब्रुवति पुत्रे ते सैनिका भृशविक्षताः ।
अनवेक्ष्यैव तद्वाक्यं प्राद्रवन्सर्वतो दिशः ॥ ६०

अध्यायः ॥ ७७ ॥

सञ्जय उवाच ।
दृष्ट्वा तु सैन्यं परिवृत्यमानं
पुत्रेण ते मद्रपतिस्तदानीम् ।
संत्रस्तरूपः परिमूढचेता
दुर्योधनं वाक्यमिदं बभाषे ॥]

रथप्रभग्नैर्नागवराश्वयोधैः
पदातिभिश्चाभिमुखैः परैर्हतैः ॥ २२
विशीर्णवर्माभरणाम्बरायुधै-
र्युता प्रशान्तैरिव पावकैर्मही ।
शरप्रहाराभिहतैर्महाबलै-
रवेक्ष्यमाणैः पतितैः समन्ततः ॥ २३
प्रनष्टसंज्ञैः पुनराश्वसद्भि-
र्मही बभौ कुम्भगतैरिवाग्निभिः ।
रत्नैश्च्युतैर्भूरतिदीप्तिमद्भि-
र्नक्तं ग्रहैर्द्यौर्विमलैर्विभाति ॥ २४
शरास्तु कर्णार्जुनबाहुमुक्ता
विदार्य नागांश्च मनुष्यदेहान् ।
प्राणान्निरस्याशु महीं प्रतीयु-
र्महोरगा वासमिवाभिनम्राः ॥ २५
हतैर्मनुष्यैश्च गजैश्च सङ्ख्ये
शरावभिन्नै रुधिरप्रदिग्धैः ।
धनञ्जयस्याधिरथेश्च मार्गे
हतैरगम्या वसुधाऽतिदुर्गा ॥ २६
रथैर्महेषून्मथितैः सुकल्पितैः
सनागयोधाश्ववरायुधध्वजैः ।
विशीर्णयोक्त्रैर्विनिकीर्णबन्धनै-
र्निकृत्तचक्राक्षयुगत्रिवेणुभिः ॥ २७
विमुक्तयोक्त्रैश्च रथैरुपस्करैः
कृताभिषङ्गैर्विनिबद्धकूबरैः ।
प्रभग्ननीडैर्मणिहेमभूषितै-
र्वृता मही द्यौरिव शारदैर्घनैः ॥ २८
निकृष्यमाणा जवनैस्तुरङ्गै-
र्हतेश्वरा राजरथाः सुकल्पिताः ।
मनुष्यमातङ्गरथाश्वसादिषु
द्रुतं व्रजन्तो बहुधा विचूर्णिताः ॥ २९
सहेमपृष्ठाः सपरश्वथायुधाः
शिताश्च शूला मुसलाः समुद्गराः ।
चित्राश्च खड्गा विमलाश्च कोशा
गजाश्च जाम्बूनदपट्टनद्धाः ॥ ३०

चापानि जाम्बूनदभूषितानि
शराश्च कार्तस्वरचित्रपुङ्खाः ।
ऋष्ट्यश्च पीता विमलाश्च कोशाः
प्रासाश्च दण्डाः कनकप्रभासाः ॥ ३
शुभ्राणि वालव्यजनानि शङ्खा-
श्छिन्नावरुद्धा विरुचः स्रजश्च ।
कुथाः पताकाम्बरवेष्टनानि
किरीटमाला मकुटाश्च शुभ्राः ॥ ३
प्रकीर्णका विप्रतिकीर्णकाश्च
प्रधानमुख्यास्तरलाश्च हाराः ।
आपीडकेयूरवराङ्गदानि
ग्रैवेयनिष्काः ससुवर्णसूत्राः ॥ ३
मण्युत्तमा वज्रसुवर्णयुक्ता
रत्नानि चोच्चावचमङ्गलानि ।
गात्राणि चाभान्ति सुखोचितानि
शिरांसि चेन्दुप्रतिमाननानि ॥ ३
देहांश्च भोगांश्च परिच्छदांश्च
त्यक्त्वा मनोज्ञा निहताः सुखानि ।
स्वधर्मनिष्ठां महतीमवाप्य
प्राप्ताश्च लोकान्यशसा गतास्ते ॥ ३
निवर्त दुर्योधन यान्तु सैनिका
व्रजस्व राजञ्शिबिराणि मानद ।
दिवाकरोऽप्येष विलम्बते प्रभो
पुनस्त्वमेवात्र नरेन्द्र कारणम् ॥

सञ्जय उवाच ।

एतावदुक्त्वा विरराम शल्यो
दुर्योधनं चैव निवर्तयित्वा ।
युद्धाय राजन्विनिविष्टबुद्धि-
र्हा कर्ण हा कर्ण इति ब्रुवाणम् ॥
तं द्रोणपुत्रप्रमुखा नरेन्द्राः
सर्वे समाश्वास्य ततः प्रजग्मुः ।
निरीक्षमाणा ध्वजमर्जुनस्य
रथं च दिव्यं यशसा ज्वलन्तम् ॥

नराश्वमातङ्गशरीरजेन
रक्तेन सिक्तां रुधिरेण भूमिम् ।
रक्ताम्बरस्रक्तपनीययोगा-
न्नारीं प्रकाशामिव सर्वरम्याम् ॥ ३९
प्रच्छन्नरूपां रुधिरेण राज-
न्रौद्रे मुहूर्तेऽतिविराजमाने ।
नैवावतस्थुः कुरवः समीक्ष्य
प्रव्राजिता नरदेवा यथाऽक्षैः ॥ ४०
वधेन कर्णस्य सुदुःखितास्ते
हा कर्ण हा कर्ण इति ब्रुवाणाः ।
द्रुतं प्रजग्मुः शिबिराणि राज-
न्दिवाकरं रक्तमवेक्षमाणाः ॥ ४१
गाण्डीवमुक्तैस्तु सुवर्णपुङ्खैः
शिलाशितैः शोणितदिग्धवाजैः ।
शरैश्चिताङ्गोऽपि रराज कर्णो
हतोऽपि दीप्तांशुरिवांशुजालैः ॥ ४२
कर्णस्य देहं रुधिराम्बुसिक्तं
पुत्रानुकम्पी भगवान्विवस्वान् ।
स्पृष्ट्वा कराग्रैः क्षतजानुरूपैः
स्नातुं तदाऽगादपरं समुद्रम् ॥ ४३
इतीव संचिन्त्य सुरर्षभाश्च
संप्रस्थितास्ते तु यथानिकेतम् ।
संचिन्त्य सर्वा जनता विसस्रु-
र्यथासुखं खे च महीतले च ॥ ४४
तदद्भुतं प्राणभृतां भयंकरं
निशाम्य युद्धं कुरुवीरमुख्ययोः ।
समाचितौ कर्णशरैः परंतपौ
तथैव संरेजतुरच्युतार्जुनौ ॥ ४५
तमो निहत्याभ्युदितौ यथाऽमलौ
शशाङ्कसूर्याविव रश्मिमालिनौ ।
विहाय तान्बाणगणान्महाबलौ
सुहृद्वृतावप्रतिमानविक्रमौ ॥ ४६
सुखप्रविष्टौ सुखदौ विरेजतुः
सदस्यचिन्त्याविव विष्णुवासवौ ।
सदेवगन्धर्वमनुष्यचारणै-
र्महर्षिभिर्यक्षमहोरगैरपि ।
जयाभिवृद्ध्या परयाऽभिपूजितौ
निहत्य कर्णं परमाहवे तदा ॥ ४७
यथानुरूपं प्रतिपूज्य तानथ
प्रशस्यमानावतुलैश्च कर्मभिः ।
ननन्दतुश्चैव सुहृद्भिरावृतौ
बलं निहत्येव सुरेशकेशवौ ॥ ४८

॥ इति श्रीमन्महाभारते कर्णपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

---

## शततमोऽध्यायः ॥ १०० ॥

कर्णवधानन्तरं कृष्णार्जुनयोर्युधिष्ठिरसमीपगमनम् ॥ १ ॥

सञ्जय उवाच ।
शरसंकृत्तवर्माणं रुधिरोक्षितवक्षसम् ।
गतासुमपि राधेयं नैव लक्ष्मीर्विमुञ्चति ॥ १
तप्तजाम्बूनदनिभं बालार्कसदृशद्युतिम् ।
जीवन्तमिव तं शूरं सर्वभूतानि मेनिरे ॥ २
हतस्यापि महाराज सूतपुत्रस्य संयुगे ।
वित्रेसुः सर्वतो योधाः सिंहस्येवेतरे मृगाः ॥ ३
हतोऽपि पुरुषव्याघ्रो व्याहरन्निव लक्ष्यते ।
नाभवद्विकृतिः काचिन्मृतस्यापि महात्मनः ॥ ४
चारुवेषधरं राजंश्चारुमौलिशिरोधरम् ।
तन्मुखं सूतपुत्रस्य पूर्णचन्द्रसमद्युति ॥ ५
कनकोत्तमसंकाशो ज्वलन्निव विभावसुः ।
स शान्तः पुरुषव्याघ्रः पार्थसायकवारिणा ॥ ६
यथाऽग्निर्ज्वलनो दीप्तो जलमासाद्य शाम्यति ।

कर्णाग्निः समरे तद्वत्पार्थमेघेन शामितः ॥ ७
आहृत्य स यशो दीप्तं सुयुद्धेनात्मनो भुवि ।
सपुत्रः समरे कर्णः प्रशान्तः पार्थतेजसा ॥ ८
प्रताप्य पाण्डवान्सर्वान्पाञ्चालानस्त्रतेजसा ।
नानाभरणवान्राजंस्तप्तजाम्बूनदप्रभः ॥ ९
वर्षित्वा शरवर्षाणि प्रताप्य रिपुवाहिनीम् ।
श्रीमानिव सहस्रांशुर्ज्वलन्सर्वान्प्रताप्य च ।
हतो वैकर्तनः कर्णः पादपोऽङ्कुरवानिव ॥ १०
ददानीत्येव यः प्रादान्न नास्तीत्यर्थितोऽवदत् ।
सद्भिः सदा सत्पुरुषः स हतो द्वैरथे वृषा ॥ ११
यस्य ब्राह्मणसात्सर्वं वित्तमासीन्महात्मनः ।
नादेयं ब्राह्मणेष्वासीद्यस्य स्वमपि जीवितम् ॥ १२
स दातॄणां प्रियो राजन्दाता चैव मनोरथान् ।
स पार्थास्त्रविनिर्दग्धो गतः परमिकां गतिम् ॥ १३
यमाश्रित्याकरोद्वैरं सुतस्ते स गतो दिवम् ।
आदाय तव पुत्राणां जयाशां शर्म वर्म च ॥ १४

हते च कर्णे सरितो न सस्रु-
र्जगाम चास्तं कलुषो दिवाकरः ।
श्वेतो ग्रहश्च ज्वलितार्कवर्णो
यमस्य पुत्रोऽभ्युदितः स तिर्यक् ॥ १५
नभश्चचालाथ ननाद चोर्वी
ववुश्च वाताः परुषाश्च घोराः ।
दिशो बभूवुर्ज्वलिताः सधूमा
महार्णवाः सस्वनुश्चुक्षुभुश्च ॥ १६
सकाननाश्चाद्रिवराश्चकम्पिरे
प्रविव्यथुर्भूतगणाश्च मारिष ।
बृहस्पतिः संपरिवार्य रोहिणीं
बभूव चन्द्रार्कसमो विशांपते ॥ १७
हते कर्णे न दिशो विप्रचाराः
सचन्द्रार्का द्यौर्विचचाल भूमिः ।
पपात चोल्का ज्वलनप्रभा च
निशाचरा हृष्टतरा बभूवुः ॥ १८

शशिप्रकाशाननमर्जुनो यदा
जहार कर्णस्य शिरः शरेण ।
ततोऽन्तरिक्षे सहसैव शब्दो
बभूव हाहेति सुरैर्विमुक्तः ॥ १९
सदेवगन्धर्वमनुष्यपूजितं
निहत्य कर्णं रिपुमाहवेऽर्जुनः ।
रराज राजन्परमेण तेजसा
यथा पुरा वृत्रवधे शतक्रतुः ॥ २०
पताकिना भीमनिनादकेतुना
रथेन शङ्खस्फटिकावभासिना ।
महेन्द्रवाहप्रतिमेन तावुभौ
महेन्द्रवीर्यप्रतिमानपौरुषौ ॥ २१
सुवर्णमुक्तामणिवज्रविद्रुमै-
रलंकृतेनाप्रतिमेन रंहसा ।
नरोत्तमौ यादवपाण्डुनन्दनौ
दिवाकरौ दीप्तहुताशनाविव ।
रणाजिरे वीतभयौ विरेजतुः
समानयोगाविव विष्णुवासवौ ॥ २२
ततो धनुर्ज्यातलनेमिनिस्वनैः
प्रसह्य कृत्वा च रिपून्गतप्रभान् ।
स साधयित्वा च रिपूञ्शरौघैः
कपिध्वजः पक्षिवरध्वजश्च ।
प्रदध्मतुः शङ्खवरौ सुघोषौ
मनांस्यरीणामुपतापयन्तौ ॥ २३
सुवर्णजालावततौ महास्वनौ
हिमावदातौ परिगृह्य पाणिभिः ।
चुचुम्बतुः शङ्खवरौ नृणां वरौ
विघोषयन्तौ विजयं जगत्त्रये ॥ २४
पाञ्चजन्यस्य निर्घोषो देवदत्तस्य चोभयोः ।
पृथिवीमन्तरिक्षं च दिशश्च समपूरयत् ॥ २५
वित्रस्ताश्चाभवन्सर्वे कुरवो राजसत्तम ।
शूरयोः शङ्खशब्देन माधवस्यार्जुनस्य च ॥ २६

सदा स्त्रीणां प्रिय इति झ. पाठः ॥ १३ ॥

शततमोऽध्यायः ॥ १०० ॥

तौ शङ्खशब्देन निनादयन्तौ
वनानि शैलान्सरितो गुहाश्च ।
वित्रासयन्तौ तव पुत्रसेनां
युधिष्ठिरं नन्दयितुं प्रयातौ ॥ २७
ततः प्रजग्मुः कुरवो जवेन
श्रुत्वैव शङ्खस्वनमीर्यमाणम् ।
विहाय मद्राधिपतिं पतिं च
दुर्योधनं भारत भारतानाम् ॥ २८
ततो रथेनाम्बुदवृन्दनादिना
शरद्यहर्मध्यदिवाकरत्विषा ।
धनञ्जयस्याधिरथेश्च विस्मिताः
प्रशंसमानाः प्रययुस्तदाऽर्जुनम् ॥ २९
महाहवे तं बहुशोभमानं
धनञ्जयं योधगणैः समेताः ।
तावन्वमोदंश्च जनाः प्रकामं
प्रभाकरावभ्युदितौ यथैव ॥ ३०

॥ इति श्रीमन्महाभारते कर्णपर्वणि शततमोऽध्यायः ॥ १०० ॥

---

## एकाधिकशततमोऽध्यायः ॥ १०१ ॥

कर्णवधानन्तरमर्जुनेन युधिष्ठिराभिवादनम् ॥ १ ॥ तेन कृष्णार्जुनप्रशंसनम् ॥ २ ॥ कृष्णयुधिष्ठिरसंवादः ॥ ३ ॥

सञ्जय उवाच ।
हते वैकर्तने कर्णे कुरवो भयपीडिताः ।
वीक्षमाणा दिशः सर्वाः पलायन्त सहस्रशः ॥ १
रावणं निहतं दृष्ट्वा राक्षसा राघवेण वा ।
दिशो भीता द्रवन्नेव तावका भयपीडिताः ॥ २
ततो महारवं चक्रुर्योधा राजन्समन्ततः ।
वार्यमाणा भृशोद्विग्नास्तव पुत्रेण भारत ॥ ३
तेषां तु मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
अवहारं ततश्चक्रे शल्यस्यानुमतेन च ॥ ४
कृतवर्मा रणे तूर्णं वृतो भारत तावकैः ।
नारायणावशिष्टैश्च शिबिरायैव दुद्रुवे ॥ ५
अश्वत्थामा ततः शूरो विनिश्वस्य मुहुर्मुहुः ।
पाण्डवानां जयं दृष्ट्वा शिबिरायैव दुद्रुवे ॥ ६
कृपः शारद्वतो राजन्नागानीकेन भारत ।
महता मेघकल्पेन शिबिरायैव दुद्रुवे ॥ ७
गान्धाराणां सहस्रेण शकुनिः परिवारितः ।
सुशर्मा च ययौ राजन्वीक्षमाणो भयार्दितः ॥ ८
दुर्योधनोऽपि स ययौ हृतसर्वस्व आतुरः ।
ज्ञातिशोकसमापन्नश्चिन्तयित्वा मुहुर्मुहुः ॥ ९
छिन्नध्वजेन शल्यस्तु रथेन रथिनां वरः ।
प्रययौ शिबिरायैव वीक्षमाणो दिशो दश ॥ १०
ततोऽपरे सुबहुशो भारतानां महारथाः ।
व्यद्रवन्त दिशो भीता भयविह्वलचेतसः ॥ ११
अश्रुपूर्णा भयोद्विग्ना वेपमाना भयातुराः ।
कुरवः प्राद्रवन्सर्वे दृष्ट्वा कर्णं निपातितम् ॥ १२
प्रशंसन्तोऽर्जुनं केचित्केचित्कर्णं महारथाः ।
प्राद्रवन्त रणे भीताः कुरवः कुरुसत्तम ॥ १३
तेषां योधसहस्राणां तावकानां महामृधे ।
नासीत्तत्र पुमान्कश्चिद्यस्तु युद्धे मनो दधे ॥ १४
कर्णे हते महाराज निराशाः कुरवोऽभवन् ।
जीवनेषु च राज्येषु दारेषु च धनेषु च ॥ १५
तान्समानीय पुत्रस्ते यत्नेन महता विभो ।
निवेशाय मनो दध्रे दुःखशोकसमन्वितः ॥ १६
तस्याज्ञां शिरसा दीनाः प्रतिगृह्य विशांपते ।
विषण्णमनसो भीत्या न्यविशन्त महारथाः ॥ १७
चिन्तयन्तो वधं घोरं सूतपुत्रस्य संयुगे ।
अर्जुनस्य जयं युद्धे चिन्तयानाः पुनःपुनः ॥ १८
पाण्डवाश्च महेष्वासा न्यविशन्त परंतपाः ।
प्रहृष्टमनसः सर्वे जित्वा शत्रुं महारथाः ॥ १९
ततो युधिष्ठिरं तत्र निविष्टं वै मुदान्वितम् ।
समेत्य सर्वे पाञ्चाला वर्धयन्तो यथाविधि ॥ २०
अर्जुनस्तु रथात्तूर्णमवरुह्य महायशाः ।

धर्मराजस्य चरणौ पीडयामास हृष्टवत् ॥ २१
तमुत्थाप्य महाराज धर्मपुत्रः प्रतापवान् ।
सस्वजे भरतश्रेष्ठमुपजिघ्रन्नुपस्पृशन् ॥ २२
नकुलः सहदेवश्च पाण्डवश्च वृकोदरः ।
अभिवाद्य महाराजमस्वजन्त स्म फल्गुनम् ॥ २३
धृष्टद्युम्नः शिखण्डी च पाण्डवानां च ये रथाः ।
वर्धयन्ते स्म राजानं निहते सूतनन्दने ॥ २४
ततः कृष्णो महाराज सात्यकिश्चापि सात्वतः ।
वर्धयन्ते स्म राजानं निहते सूतनन्दने ॥ २५
वासुदेवश्च कौन्तेयं प्रणयादिदमब्रवीत् ।
अद्य राजन्हताः सर्वे धार्तराष्ट्राः सराजकाः ।
हते वैकर्तने कर्णे रथानां प्रवरे रथे ॥ २६
यदि लोकास्त्रयः सर्वे योधयेयुः सवासवाः ।
तथापि दुर्जयः सूतस्तव कोपात्तु सूदितः ॥ २७
एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ॥ २८
तव प्रसादाद्गोविन्द हतः कर्णो महायशाः ।
पाण्डवाश्च जयं प्राप्ता नाशिताश्चापि शत्रवः ॥ २९
त्वं हि शक्तो भयात्त्रातुं यस्य कस्यचिदाहवे ।
त्वमस्य जगतो गोप्ता पाण्डवानां च सर्वदा ॥ ३०
त्वां समासाद्य शक्रोऽपि मोदते दिवि नित्यशः ।
त्वं पाता पाण्डुपुत्राणां यथैव जगतस्तथा ॥ ३१
अनाश्चर्यो जयस्तेषां भक्तिर्येषां त्वयि प्रभो ॥ ३२
त्वया नाथेन गोविन्द नाथवन्तो वयं युधि ।
यथेन्द्रेण पुरा देवास्त्वया चापि जनार्दन ॥ ३३
स्वप्स्याम्यद्य सुखं कृष्ण निद्रां लप्स्ये त्वहं क्षपाम् ।
विगतं हि भयं मेऽद्य त्वत्प्रसादान्न संशयः ॥ ३४
एवमुक्तस्तु पार्थेन केशवः प्राह पाण्डवम् ।
निमित्तमात्रं हि वयं तवाप्यस्मिन्मुदागमे ॥ ३५
यस्य ते भ्रातरः शूरा भीमसेनादयो नृप ।
संबन्धिनश्चेन्द्रवीर्याः पार्षतप्रमुखास्तथा ॥ ३६
अर्हते च भवान्नित्यं प्रियं नित्यं च मद्धितम् ।
प्रियो हि मे त्वमेतेन वचनेन नरोत्तम ॥ ३७
इत्युक्तो धर्मराजस्तु स्वरथं हेमभूषितम् ।
दन्तवर्णैर्हयैर्युक्तं कालवालैर्महीपतिः ॥ ३८
आस्थाय पुरुषव्याघ्रः स्वबलेनापि संवृतः ।
प्रययौ बहुवृत्तान्तं द्रष्टुमायोधनं प्रति ॥ ३९
संभाषमाणौ तौ वीर उभौ माधवपाण्डवौ ॥ ४०
स ददर्श रणे कर्णं शयानं पुरुषर्षभम् ।
गाण्डीवमुक्तैर्विशिखैः सर्वतः संनिपीडितम् ॥ ४१
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ ॥ ४२
अद्य राजाऽस्मि सर्वस्यां पृथिव्यां मधुसूदन ।
दिष्ट्या जयसि गोविन्द दिष्ट्या शत्रुर्निपातितः ४३
एवं सुबहुशो राजन्प्रशशंस जनार्दनम् ।
अर्जुनं च कुरुश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ४४
दृष्ट्वा च निहतं कर्णं सपुत्रं पार्थसायकैः ।
पुनर्जातमिवात्मानं मेने कुरुकुलोद्वहः ॥ ४५
समेत्य च कुरुश्रेष्ठं कुन्तीपुत्रं युधिष्ठिरम् ।
वर्धयन्ति स्म राजानो हर्षयुक्ता महारथाः ॥ ४६
सञ्जय उवाच ।
एवमेष क्षयो वृत्तः सुमहाल्लोमहर्षणः ।
तव दुर्मन्त्रिते राजन्दिष्ट्या त्वमनुशोचसि ॥ ४७
वैशंपायन उवाच ।
श्रुत्वैतदप्रियं राजा धृतराष्ट्रो महीपतिः ।
पपात भूमौ निश्चेष्टः कौरव्यः परमासनात् ।
तथा सत्यव्रता देवी गान्धारी दिव्यदर्शना ॥ ४८
ततस्तूर्णं तु विदुरस्तं नृपं सञ्जयस्तथा ।
पर्याश्वासयतां चैतावुभावेव तु भूमिपम् ॥ ४९
तथैवाश्वासयामासुर्गान्धारीं कुरुयोषितः ॥ ५०
स दैवं परमं मेने भवितव्यं च भारत ।
ताभ्यामाश्वासितो राजा तूष्णीमास्ते विशांपते ५१
एवमाख्याय राज्ञे च सञ्जयो राजसत्तम ।
जगाम शिबिरं भूयो हते कर्णे महात्मनि ॥ ५२
स दृष्ट्वा निहतं शल्यं राजानं च सुयोधनम् ।
शकुनिं सुबहून्राजन्सैनिकांश्च सहस्रशः ॥ ५३
तथैव पाण्डवीं सेनां निहतां प्रेक्ष्य सञ्जयः ।
सौप्तिके द्रौणिना राजन्हतवाजिनरद्विपाम् ॥ ५४

स हि दृष्ट्वा हतान्सर्वान्समन्ताद्युधि सञ्जयः ।
प्रयातो हास्तिनपुरं शोकार्तो भयविह्वलः ॥ ५५
हतेषु पुनरेतेषु प्रभूतगजवाजिषु ।
योधैश्च तैर्महाराज नानादेशसमुद्भवैः ॥ ५६
कुरुक्षेत्रं तु तत्सर्वं शून्यमासीद्विशांपते ।
निहतैः पाण्डवेयैश्च धार्तराष्ट्रैश्च संयुगे ॥ ५७
यथाहि विषयं वृत्तं धार्तराष्ट्रस्य संजयः ।
निवेदयति तत्सर्वं यथावृत्तं यथाविधि ॥ ५८

एवं महायुद्धमिदं महात्मनो
धनञ्जयस्याधिरथेश्च यः पठेत् ।
स सम्यगिष्टस्य मखस्य यत्फलं
तदाप्नुयाद्यः शृणुयाच्च नित्यशः ॥
मखो हि विष्णुर्भगवान्सनातनो
वहन्ति यं चाप्यनिलेन्दुभानवः ।
अतोऽनसूयुः शृणुयात्पठेच्च यः
स सर्वलोकांश्च जयेत्सुखी भवेत् ॥

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां कर्णपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१

॥ कर्णपर्व समाप्तम् ॥ ८ ॥

---

अतः परं शल्यपर्व भविष्यति ।
तस्यायमाद्यः श्लोकः ॥
जनमेजय उवाच ।
एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥

इदं कर्णपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां
निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२९ सन १९०७.

# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

---

## SHALYAPARVA IX.


EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam..



*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press.*

**BOMBAY.**

---

1907.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## शल्यपर्व ९.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८२९ प्लवंगनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।



## शल्यपर्व ९ ।

### (अथ शल्यवधपर्व ॥ १ ॥)

#### प्रथमोऽध्यायः ॥ १ ॥

दुर्योधनेन शल्यस्य सैनापत्येऽभिषेचनपूर्वकं पुनर्युद्धाय निर्याणम् ॥ १ ॥ सञ्जयाच्छल्यदुर्योधनादिवधश्रवणेन मूर्च्छितस्य धृतराष्ट्रस्य विदुरेण समाश्वासनम् ॥ २ ॥

॥ श्रीवेदव्यासाय नमः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं (व्यासं) चैव ततो जयमुदीरयेत् ॥ १

जनमेजय उवाच ।
एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ १
विदीर्यमाणं च बलं दृष्ट्वा राजा सुयोधनः ।
पाण्डवैः प्राप्तकालं च किं प्रापद्यत कौरवः ॥ २
एतदिच्छाम्यहं श्रोतुं तदाचक्ष्व द्विजोत्तम ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ३

वैशंपायन उवाच ।
ततः कर्णे हते राजन्धार्तराष्ट्रः सुयोधनः ।
भृशं शोकार्णवे मग्नो निराशः सर्वतोऽभवत् ॥ ४
हा कर्ण हा कर्ण इति शोचमानो मुहुर्मुहुः ।
कृच्छ्रात्स्वशिबिरं प्रायाद्धतशिष्टैर्नृपैः सह ॥ ५
स समाश्वास्यमानोऽपि हेतुभिः शास्त्रनिश्चितैः ।
राजन्विभूतिमिच्छद्भिः सूतपुत्रमनुस्मरन् ॥ ६
स दैवं बलवन्मत्वा प्रभाते विमले सति ।
सङ्ग्रामे निश्चयं कृत्वा पुनर्युद्धाय निर्ययौ ॥ ७
शल्यं सेनापतिं कृत्वा विधिवद्राजसत्तमम् ।
रणाय निर्ययौ राजा हतशिष्टैर्नृपैः सह ॥ ८
ततः सुतुमुलं युद्धं कुरुपाण्डवसेनयोः ।
बभूव भरतश्रेष्ठ देवासुररणोपमम् ॥ ९
ततः शल्यो महाराज कृत्वा कदनमाहवे ।
पाण्डुसैन्येऽथ मध्याह्ने धर्मराजेन पातितः ॥ १०
ततो दुर्योधनो राजा हतबन्धू रणाजिरात् ।
अपसृत्य ह्रदं घोरं विवेश रिपुजाद्भयात् ॥ ११
अथापराह्ने तस्याह्नः परिवार्य महारथैः ।
ह्रदादाहूय युद्धाय भीमसेनेन पातितः ॥ १२
तस्मिंस्तु निहते वीरे महेष्वासास्त्रयो रणे ।
कृतवर्मा कृपो द्रौणिर्जघ्नुः पाण्डवसैनिकान् ॥ १३
ततः पूर्वाह्णसमये शिबिरादेत्य सञ्जयः ।
प्रविवेश पुरीं दीनो दुःखशोकसमन्वितः ॥ १४
स प्रविश्य पुरीं सूतो भुजावुच्छ्रित्य दुःखितः ।
वेपमानस्ततो राज्ञः प्रविवेश निवेशनम् ॥ १५
धावतश्चाप्यपश्यत्स तत्रत्यान्पुरुषर्षभान् ।
नष्टचित्तानिवोन्मत्ताञ्शोकेन भृशदुःखितान् १६
दृष्ट्वैव च नराञ्शीघ्रं व्याजहारातिदुःखितः ।
अहो बत विपन्नोऽसि निधनेन महात्मनः ॥ १७
अहो सुबलवान्कालो गतिश्च परमा तथा ।
शक्रतुल्यबलाः सर्वे यत्राहन्यन्त पार्थिवाः ॥ १८

अपराह्ने अपरार्धे ॥ १२ ॥

तं दृष्ट्वैव पुरे राजञ्जनः सर्वः स सञ्जयम् ।
प्ररुरोद भयोद्विग्नो हा राजन्निति सुस्वरम् ॥ १९
आकुमारं नरव्याघ्र तत्पुरं वै समन्ततः ।
आर्तनादं महच्चक्रे श्रुत्वा विनिहतं नृपम् ॥ २०
तथा स विह्वलः सूतः प्रविश्य नृपतिक्षयम् ।
ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् ॥ २१
दृष्ट्वा चासीनमनघं समन्तात्परिवारितम् ।
स्नुषाभिर्भरतश्रेष्ठ गान्धार्या विदुरेण च ।
तथाऽन्यैश्च सुहृद्भिश्च ज्ञातिभिश्च हितैषिभिः॥२२
तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति ।
रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ॥ २३
नातिहृष्टमनाः सूतो बाष्पसंदिग्धया गिरा ।
सञ्जयोऽहं नरव्याघ्र नमस्ते भरतर्षभ ॥ २४
मद्राधिपो हतः शल्यः शकुनिः सौबलस्तथा ।
उलूकः पुरुषव्याघ्र कैतव्यो दृढविक्रमः ॥ २५
संशप्तका हताः सर्वे काम्भोजाश्च शकैः सह ।
म्लेच्छाश्च पार्वतीयाश्च यवनाश्च निपातिताः॥२६
प्राच्या हता महाराज दाक्षिणात्याश्च सर्वशः ।
उदीच्याश्च हताः सर्वे प्रतीच्याश्च नरोत्तमाः ।
राजानो राजपुत्राश्च सर्वे विनिहता नृप ॥ २७
कर्णपुत्रो हतः शूरः सत्यसेनो महाबलः ॥ २८
दुर्योधनो हतो राजा यथोक्तं पाण्डवेन ह ।
भग्नसक्थो महाराज शेते पांसुषु रूषितः ॥ २९
धृष्टद्युम्नो हतो राजञ्शिखण्डी चापराजितः ।
उत्तमौजा युधामन्युस्तथा सर्वे प्रभद्रकाः ॥ ३०
पाञ्चालश्च नरव्याघ्र चेदयश्च निषूदिताः ।
तव पुत्रा हताः सर्वे द्रौपदेयाश्च भारत ॥ ३१
नरा विनिहताः सर्वे गजाश्च विनिपातिताः ।
रथिनश्च नरव्याघ्र हयाश्च निहता युधि ॥ ३२
निःशेषं शिबिरं राजंस्तावकानां कृतं प्रभो ।
पाण्डवानां च शूराणां समासाद्य परस्परम्॥३३
प्रायः स्त्रीशेषमभवज्जगत्कालेन मोहितम् ।
सप्त पाण्डवतः शिष्टा धार्तराष्ट्रास्त्रयो रथाः॥३४
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
कृपश्च कृतवर्मा च द्रौणिश्च जयतां वरः ॥ ३५
एते शेषा महाराज रथिनो नृपसत्तम ।
अक्षौहिणीनामष्टानां दशानां च न संशयः॥३६
एते शेषा महाराज सर्वेऽन्ये निधनं गताः ।
कालेन निहतं सर्वं जगद्वै भरतर्षभ ।
दुर्योधनं वै पुरतः कृत्वा सर्वे नरा हताः ॥ ३७
वैशंपायन उवाच ।
एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः ।
निपपात स राजेन्द्रो गतसत्वो महीतले ॥ ३८
तस्मिन्निपतिते वीरे विदुरोऽपि महायशाः ।
निपपात महाराज शोकव्यसनकर्शितः ॥ ३९
गान्धारी च महाभागा सर्वाश्च कुरुयोषितः ।
पतिताः सहसा भूमौ श्रुत्वा घोरतरं वचः ॥४०
निःसंज्ञं पतितं भूमौ तदाऽऽसीद्राजमण्डलम् ।
विलापमुक्तोपहतं चित्रं न्यस्तं पटे यथा ॥ ४१
कृच्छ्रेण तु ततो राजा धृतराष्ट्रो महीपतिः ।
शनैरलभत प्राणान्पुत्रव्यसनकर्शितः ॥ ४२
लब्ध्वा तु स नृपः प्राणान्वेपमानः सुदुःखितः ।
निरीक्ष्य च दिशः सर्वाः क्षत्तारं वाक्यमब्रवीत् ४३
विद्धि क्षत्तर्महाप्राज्ञ त्वं गतिर्भरतर्षभ ।
ममानाथस्य सुभृशं पुत्रैर्हीनस्य सर्वशः ।
एवमुक्त्वा ततो भूयो विसंज्ञो निपपात ह ॥ ४४
तं तथा पतितं दृष्ट्वा बान्धवा येऽस्य केचन ।
शीतैस्ते सिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि ॥ ४५
स तु दीर्घेण कालेन प्रत्याश्वस्तो नराधिपः ।
तूष्णीमासीन्महीपालः पुत्रव्यसनकर्शितः ॥ ४६
निःश्वसञ्जिह्मग इव कुम्भक्षिप्तोऽभवन्नृपः ॥ ४७
सञ्जयोऽप्यरुदत्तत्र दृष्ट्वा राजानमातुरम् ।
तथा सर्वाः स्त्रियश्चैव गान्धारी च यशस्विनी ॥ ४८
ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत् ।
धृतराष्ट्रो नरश्रेष्ठ मुह्यमानो मुहुर्मुहुः ॥ ४९
गच्छन्तु योषितः सर्वा गान्धारी च यशस्विनी ।

विलापयुक्तोपहतं इति ङ. पाठः । विलापयुक्तं सुमहत् इति घ. पाठः ॥ ४१ ॥ प्रथमोऽध्यायः ॥ १ ॥

तथेमे सुहृदः सर्वे मुह्यते मे मनो भृशम् ॥ ५०
एवमुक्तस्ततः क्षत्ता ताः स्त्रियो भरतर्षभ ।
विसर्जयामास शनैर्मुह्यमानः पुनःपुनः ॥ ५१
निश्चक्रमुस्ततः सर्वाः स्त्रियो भरतसत्तम ।
सुहृदश्च तथा सर्वे दृष्ट्वा राजानमातुरम् ॥ ५२
ततो नरपतिस्तत्र लब्ध्वा संज्ञां परंतपः ।
गतिर्मे को भवेदद्य इति चिन्तासमाकुलः ।
अपृच्छत्सञ्जयं तत्र रोदमानं भृशातुरम् ॥ ५३
प्राञ्जलिं सञ्जयं दृष्ट्वा रोदमानं मुहुर्मुहुः ।
ज्ञातीन्स्त्रियोऽथ निर्याप्य प्रविश्य विदुरः पुनः ५४
राजानं शोचमानस्तु तं शोचन्तं मुहुर्मुहुः ।
समाश्वासयत क्षत्ता वचसा मधुरेण च ॥ ५५

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

धृतराष्ट्रेण सञ्जयस्य पुरतो दुर्योधनवचनानुस्मरणेन विलापः ॥ १ ॥

वैशंपायन उवाच ।
विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः ।
विललाप महाराज दुःखाद्दुःखतरं गतः ॥ १
सधूममिव निःश्वस्य करौ धुन्वन्पुनःपुनः ।
बहु संचिन्तयित्वा तु सञ्जयं वाक्यमब्रवीत् ॥ २
धृतराष्ट्र उवाच ।
अहो बत महद्दुःखं यदहं पाण्डवान्रणे ।
क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै ॥ ३
वज्रसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा निहतान्पुत्रान्दीर्यते न सहस्रधा ॥ ४
चिन्तयित्वा वचस्तेषां बालक्रीडां च सञ्जय ।
अद्य चैव हताञ्श्रुत्वा दीर्यते मे भृशं मनः ॥ ५
अन्धत्वाद्यदि पुत्राणां न मे रूपनिदर्शनम् ।
पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता ॥ ६
बालभावमतिक्रम्य यौवनस्थांश्च तानहम् ।
श्रियं प्राप्तांश्च ताञ्श्रुत्वा हृष्ट आसं तदाऽनघ ॥ ७
तानद्य निहताञ्श्रुत्वा हतैश्वर्यान्हतौजसः ।
न लभेयं क्वचिच्छान्तिं पुत्राधिभिरभिप्लुतः ॥ ८
एह्येहि वत्स राजेन्द्र ममानाथस्य पुत्रक ।
त्वया हीनो महाबाहो कां नु यास्याम्यहं गतिम् ९
कथं त्वं पृथिवीपालांस्त्यक्त्वा तात समागतान् ।
शेषे विनिहतो भूमौ प्राकृतः कुनृपो यथा ॥ १०
गतिर्भूत्वा महाराज ज्ञातीनां सुहृदां तथा ।
अन्धं वृद्धं च मां वीर विहाय क्व नु यास्यसि ॥ ११
सा कृपा सा च ते प्रीतिः सा च राजसु मानिता ।
कथं त्वं निहतः पार्थैः संयुगेष्वपराजितः ॥ १२
को नु मामुत्थितः काले ताततातेति वक्ष्यति ।
महाराजेति सततं लोकनाथेति चासकृत् ॥ १३
परिष्वज्य च कं कण्ठे स्नेहेन क्लिन्नलोचनः ।
अनुशास्ताऽसि कौरव्य तत्साधु वद मे वचः ॥ १४
ननु नामाहमश्रौषं वचनं तव पुत्रक ।
भूयसी मम पृथ्वीयं तात पार्थस्य नो तथा ॥ १५
भगदत्तः कृपः शल्य आवन्त्योऽथ जयद्रथः ।
भूरिश्रवाः सोमदत्तो महाराजश्च बाह्लिकः ॥ १६
अश्वत्थामा च भोजश्च मागधश्च महाबलः ।
बृहद्बलश्च क्राथश्च शकुनिश्चापि सौबलः ॥ १७
म्लेच्छाश्च शतसाहस्राः शकाश्च यवनैः सह ।
सुदक्षिणश्च काम्भोजस्त्रिगर्ताधिपतिस्तथा ॥ १८
भीष्मः पितामहश्चैव भारद्वाजोऽथ गौतमः ।
श्रुतायुश्चाश्रुतायुश्च शतायुश्चापि वीर्यवान् ॥ १९
जलसन्धोऽथार्ष्यशृङ्गी राक्षसश्चाप्यलायुधः ।
अलम्बुसो वीरबाहुः सुबाहुश्च महारथः ॥ २०

सधूममिव अत्युष्णमित्यर्थः ॥ २ ॥ परिष्वज्य च मां कण्ठे स्नेहेन क्लिन्नलोचनः । अनुशाधीति कौरव्य तत्साधु वद मे वचः इति झ. पाठः ॥ १४ ॥

एते चान्ये च बहवो राजानो-राजसत्तम ।
मदर्थे प्रहरिष्यन्ति प्राणांस्त्यक्त्वा धनानि च॥२१
तेषां मध्ये स्थितो युद्धे भ्रातृभिः परिवारितः ।
योधयिष्याम्यहं पार्थान्पाञ्चालांश्चैव सर्वशः॥२२
चेदींश्च नृपशार्दूल द्रौपदेयांश्च संयुगे ।
सात्यकिं कुन्तिभोजं च राक्षसं च घटोत्कचम् २३
एकोऽप्येषां महाराज समर्थः संनिवारणे ।
समरे पाण्डवेयानां संक्रुद्धो ह्यभिधावताम् ॥२४
किं पुनः सहिता वीराः कृतवैराश्च पाण्डवैः ।
अथवा सर्व एवैते पाण्डवस्यानुयायिभिः ॥ २५
योत्स्यन्ते सह राजेन्द्र हनिष्यन्ति च तान्मृधे ।
कर्ण एको मया सार्धं निहनिष्यति पाण्डवान्॥२६
ते वै नृपतयो वीराः स्थास्यन्ति मम शासने ॥ २७
यश्च तेषां प्रणेता वै वासुदेवो महाबलः ।
न स संनह्यते राजन्निति मामब्रवीद्वचः ॥ २८
एवं च वदतः सूत बहुशो मम सन्निधौ ।
युक्तितो ह्यनुपश्यामि निहतान्पाण्डवान्रणे ॥ २९
तेषां मध्ये स्थिता यत्र हन्यन्ते मम पुत्रकाः ।
व्यायच्छमानाः समरे किमन्यद्भागधेयतः ॥ ३०
भीष्मश्च निहतो यत्र लोकनाथः प्रतापवान् ।
शिखण्डिनं समासाद्य मृगेन्द्र इव जम्बुकम्॥३१
द्रोणश्च ब्राह्मणो यत्र सर्वशस्त्रास्त्रपारगः ।
निहतः पाण्डवैः सङ्ख्ये किमन्यद्भागधेयतः ॥ ३२
कर्णश्च निहतः सङ्ख्ये दिव्यास्त्रज्ञो महाबलः ।
भूरिश्रवा हतो यत्र सोमदत्तश्च संयुगे ।
बाह्लिकश्च महाराज किमन्यद्भागधेयतः ॥ ३३
भगदत्तो हतो यत्र गजयुद्धविशारदः ।
जयद्रथश्च निहतः किमन्यद्भागधेयतः ॥ ३४
सुदक्षिणो हतो यत्र जलसन्धश्च पौरवः ।
श्रुतायुश्चाश्रुतायुश्च किमन्यद्भागधेयतः ॥ ३५
बलस्तथा पाण्ड्यः सर्वशस्त्रभृतां वरः ।
हतः पाण्डवैः सङ्ख्ये किमन्यद्भागधेयतः ॥३६
बृहद्बलो हतो यत्र मागधश्च महाबलः ।
उग्रायुधश्च विक्रान्तः प्रतिमानं धनुष्मताम्॥ ३७

प्रतिमानं केतुभूतः ॥ ३७ ॥

आवन्त्यो निहतो यत्र त्रैगर्तश्च जनाधिपः ।
संशप्तकाश्च निहताः किमन्यद्भागधेयतः ॥ ३८
अलम्बुसस्तथा राजन्राक्षसश्चाप्यलायुधः ।
आर्ष्यशृङ्गिश्च निहतः किमन्यद्भागधेयतः ॥ ३९
नारायणा हता यत्र गोपाला युद्धदुर्मदाः ।
म्लेच्छाश्च बहुसाहस्राः किमन्यद्भागधेयतः॥४०
शकुनिः सौबलो यत्र कैतव्यश्च महाबलः ।
निहतः सबलो वीरः किमन्यद्भागधेयतः ॥ ४१
एते चान्ये च बहवः कृतास्त्रा युद्धदुर्मदाः ।
राजानो राजपुत्राश्च शूराः परिघबाहवः ।
निहता बहवो यत्र किमन्यद्भागधेयतः ॥ ४२
यत्र शूरा महेष्वासाः कृतास्त्रा युद्धदुर्मदाः ।
बहवो निहताः सूत महेन्द्रसमविक्रमाः ॥ ४३
नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय ।
निहताः समरे सर्वे किमन्यद्भागधेयतः ॥ ४४
पुत्राश्च मे विनिहताः पौत्राश्चैव महाबलाः ।
वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः ॥ ४५
भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः ।
यस्तु भाग्यसमायुक्तः स शुभं प्राप्नुयान्नरः ॥ ४६
अहं वियुक्तस्तैर्भाग्यैः पुत्रैश्चैवेह सञ्जय ।
कथमद्य भविष्यामि वृद्धः शत्रुवशं गतः ॥ ४७
नान्यदत्र परं मन्ये वनवासादृते प्रभो ।
सोऽहं वनं गमिष्यामि निर्बन्धुर्ज्ञातिसंक्षये ॥४८
न हि मेऽन्यद्भवेच्छ्रेयो वनाभ्युपगमादृते ।
इमामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय ॥ ४९
दुर्योधनो हतो यत्र शल्यश्च निहतो युधि ।
दुःशासनो विविंशश्च विकर्णश्च महाबलः ॥ ५०
कथं हि भीमसेनस्य श्रोष्येऽहं शब्दमुत्तमम् ।
एकेन समरे येन हतं पुत्रशतं मम ॥ ५१
असकृद्वदतस्तस्य दुर्योधनवधेन च ।
दुःखशोकाभिसंतप्तो न श्रोष्ये परुषा गिरः ॥ ५२
वैशंपायन उवाच ।
एवं स शोकसंतप्तः पार्थिवो हतबान्धवः ।
मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः ॥ ५३

विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः ।
दीर्घमुष्णं स निःश्वस्य चिन्तयित्वा पराभवम् ॥५४
दुःखेन महता राजन्संतप्तो भरतर्षभः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ५५
धृतराष्ट्र उवाच ।
भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्रं च पातितम् ।
सेनापतिं प्रणेतारं कमकुर्वत मामकाः ॥ ५६
यं यं सेनाप्रणेतारं युधि कुर्वन्ति मामकाः ।
अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः ॥५७
रणमूर्ध्नि हतो भीष्मः पश्यतां वः किरीटिना ।
एवमेव हतो द्रोणः सर्वेषामेव पश्यताम् ॥ ५८
एवमेव हतः कर्णः सूतपुत्रः प्रतापवान् ।
सराजकानां सर्वेषां पश्यतां वः किरीटिना ॥ ५९
पूर्वमेवाहमुक्तो वै विदुरेण महात्मना ।
दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥ ६०
केचिन्न सम्यक्पश्यन्ति मूढाः सम्यगवेक्ष्य च ।
तदिदं मम मूढस्य तथाभूतं वचः स तत् ॥ ६१
यदब्रवीत्स धर्मात्मा विदुरो दीर्घदर्शिवान् ।
तत्तथा समनुप्राप्तं वचनं सत्यवादिनः ॥ ६२
दैवोपहतचित्तेन यन्मयाऽनुष्ठितं पुरा ।
अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ॥ ६३
को वा मुखमनीकानामासीत्कर्णे निपातिते ।
अर्जुनं वासुदेवं च को वा प्रत्युद्ययौ रथी ॥ ६४
केऽरक्षन्दक्षिणं चक्रं मद्रराजस्य संयुगे ।
वामं च योद्धुकामस्य के वा वीरस्य पृष्ठतः ॥ ६५
कथं च वः समेतानां मद्रराजो महारथः ।
निहतः पाण्डवैः सङ्ख्ये पुत्रो वा मम सञ्जय ॥ ६६
ब्रूहि सर्वं यथातत्त्वं भरतानां महाक्षयम् ।
यथा च निहतः सङ्ख्ये पुत्रो दुर्योधनो मम ॥६७
पाञ्चालाश्च यथा सर्वे निहताः सपदानुगाः ।
धृष्टद्युम्नः शिखण्डी च द्रौपद्याः पञ्च चात्मजाः ॥
पाण्डवाश्च यथा मुक्तास्तथोभौ माधवौ युधि ।
कृपश्च कृतवर्मा च भारद्वाजस्य चात्मजः ॥ ६९
यद्यथा यादृशं चैव युद्धं वृत्तं च सांप्रतम् ।
अखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय ॥७०

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

केचित्सम्यक्प्रपश्यन्ति मूढास्तु न तथा परे इति ख. पाठः । सम्यगवेक्ष्य निपुणं विभाव्यापि मूढास्तथाभूतं तद्वचः केचिन्न पश्यन्तीति सम्बन्धः । तथाभूतं यथार्थम् ॥ ६१ ॥ द्वितीयोऽध्यायः ॥ २ ॥

---

* एतदनन्तरं झ. पाठे एकोऽध्यायोऽधिको दृश्यते ।

## प्रक्षिप्तोऽध्यायः ॥

पार्थेन निहते कर्णे पाण्डवभयात्पलायमानां सेनां निवर्त्य दुर्योधनस्य पुनर्युद्धोद्यमः ॥ १ ॥

[सञ्जय उवाच ।
शृणु राजन्नवहितो यथावृत्तो महान्क्षयः ।
कुरूणां पाण्डवानां च समासाद्य परस्परम् ॥ १
निहते सूतपुत्रे तु पाण्डवेन महात्मना ।
विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् ॥ २
घोरे मनुष्यदेहानामाजौ नरवरक्षये ।
यत्तत्कर्णे हते पार्थः सिंहनादमथाकरोत् ॥ ३
तदा तव सुतान्राजन्प्राविशत्सुमहद्भयम् ॥ ४
न सन्धातुमनीकानि न चैवाथ पराक्रमे ।
आसीद्बुद्धिर्हते कर्णे तव योधस्य कस्यचित् ॥ ५
वणिजो नावि भिन्नायामगाधे विप्लवा इव ।
अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ॥ ६
सूतपुत्रे हते राजन्वित्रस्ताः शरविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहार्दिता इव ॥ ७
भग्नशृङ्गा इव वृषा शीर्णदंष्ट्रा इवोरगाः ।
प्रत्युपायाम सायाह्ने निर्जिताः सव्यसाचिना ॥ ८
हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः ।
सूतपुत्रे हते राजन्पुत्रास्ते प्राद्रवंस्ततः ॥ ९
विध्वस्तकवचाः सर्वे कांदिशीका विचेतसः ।
अन्योन्यमभिनिघ्नन्तो वीक्षमाणा भयाद्दिशः ॥ १०
मामेव नूनं बीभत्सुर्मामेव च वृकोदरः ।
अभियातीति मन्वानाः पेतुर्मम्लुश्च भारत ॥ ११

अश्वानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसंपन्नाः पादातान्प्रजहुर्भयात् ॥ १२
कुञ्जरैः स्यन्दना भग्नाः सादिनश्च महारथैः ।
पदातिसङ्घाश्चाश्वौघैः पलायद्भिर्भृशं हताः ॥ १३
व्यालतस्करसंकीर्णे सार्थहीना यथा वने ।
तथा त्वदीया निहते सूतपुत्रे तदाऽभवन् ॥ १४
हतारोहास्तथा नागाश्छिन्नहस्तास्तथाऽपरे ।
सर्वं पार्थमयं लोकमपश्यन्वै भयार्दिताः ॥ १५
तान्प्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान् ।
दुर्योधनोऽथ स्वं सूतं हाहाकृत्वैवमब्रवीत् ॥ १६
नातिक्रमिष्यते पार्थो धनुष्पाणिमवस्थितम् ।
जघने युध्यमानं मां तूर्णमश्वान्प्रचोदय ॥ १७
समरे युध्यमानं हि कौन्तेयो मां धनञ्जयः ।
नोत्सहेताप्यतिक्रान्तुं वेलामिव महार्णवः ॥ १८
अद्यार्जुनं सगोविन्दं मानिनं च वृकोदरम् ।
निहत्य शिष्टाञ्शत्रूंश्च कर्णस्यानृण्यमाप्नुयाम् ॥ १९
तच्छ्रुत्वा कुरुराजस्य शूरार्यसदृशं वचः ।
सूतो हेमपरिच्छन्नाञ्शनैरश्वानचोदयत् ॥ २०
गजाश्वरथहीनास्तु पादाताश्चैव मारिष ।
पञ्चविंशतिसाहस्राः प्राद्रवञ्शनकैरिव ॥ २१
तान्भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः ।
बलेन चतुरङ्गेण परिक्षिप्याहनच्छरैः ॥ २२
प्रत्ययुध्यंस्तु ते सर्वे भीमसेनं सपार्षतम् ।
पार्थपार्षतयोश्चान्ये जगृहुस्तत्र नामनी ॥ २३
अक्रुध्यत रणे भीमस्तैर्मृधे प्रत्यवस्थितैः ।
सोऽवतीर्य रथात्तूर्णं गदापाणिरयुध्यत ॥ २४
न तान्रथस्थो भूमिष्ठान्धर्मापेक्षी वृकोदरः ।
योधयामास कौन्तेयो भुजवीर्यमुपाश्रितः ॥ २५
जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम् ।
न्यवधीत्तावकान्सर्वान्दण्डपाणिरिवान्तकः ॥ २६
पदातयो हि संरब्धास्त्यक्तजीवितबान्धवाः ।
भीममभ्यद्रवन्सङ्ख्ये पतङ्गा इव पावकम् ॥ २७
आसाद्य भीमसेनं ते संरब्धा युद्धदुर्मदाः ।
विनेदुः सहसा दृष्ट्वा भूतग्रामा इवान्तकम् ॥ २८
श्येनवद्व्यचरद्भीमः खड्गेन गदया तथा ।
पञ्चविंशतिसाहस्रांस्तावकानां व्यपोथयत् ॥ २९
हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य पुनस्तस्थौ महाबलः ॥ ३०
धनञ्जयो रथानीकमन्वपद्यत वीर्यवान् ॥ ३१
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महाबलः ।
जवेनाभ्यपतन्हृष्टा घ्नन्तो दौर्योधनं बलम् ॥ ३२
तस्याश्ववाहान्सुबहूंस्ते निहत्य शितैः शरैः ।
तमन्वधावंस्त्वरितास्तत्र युद्धमवर्तत ॥ ३३

ततो धनञ्जयो राजन्रथानीकमगाहत ।
विश्रुतं त्रिषु लोकेषु गाण्डीवं व्याक्षिपन्धनुः ॥ ३४
कृष्णसारथिमायान्तं दृष्ट्वा श्वेतहयं रथम् ।
अर्जुनं चापि योद्धारं त्वदीयाः प्राद्रवन्भयात् ॥ ३५
विप्रहीनरथाश्वाश्च शरैश्च परिवारिताः ।
पञ्चविंशतिसाहस्राः पार्थमार्च्छन्पदातयः ॥ ३६
हत्वा तत्पुरुषानीकं पाञ्चालानां महारथः ।
भीमसेनं पुरस्कृत्य न चिरात्प्रत्यदृश्यत ॥ ३७
महाधनुर्धरः श्रीमानमित्रगणमर्दनः ।
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महायशाः ॥ ३८
पारावतसवर्णाश्वं कोविदारवरध्वजम् ।
धृष्टद्युम्नं रणे दृष्ट्वा त्वदीयाः प्राद्रवन्भयात् ॥ ३९
गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ ।
अचिरात्प्रत्यदृश्येतां माद्रीपुत्रौ ससात्यकी ॥ ४०
चेकितानः शिखण्डी च द्रौपदेयाश्च मारिष ।
हत्वा त्वदीयं सुमहत्सैन्यं शङ्खानथाधमन् ॥ ४१
ते सर्वे तावकान्प्रेक्ष्य द्रवतो वै पराङ्मुखान् ।
अभ्यधावन्त निघ्नन्तो वृषाञ्जित्वा वृषा इव ॥ ४२
सेनावशेषं तं दृष्ट्वा तव पुत्रस्य पाण्डवः ।
अवस्थितं सव्यसाची चुक्रोध बलवन्नृप ॥ ४३
तत एनं शरै राजन्सहसा समवाकिरत् ।
रजसा चोद्गतेनाथ न स्म किंचन दृश्यते ॥ ४४
अन्धकारीकृते लोके शरीभूते महीतले ।
दिशः सर्वा महाराज तावकाः प्राद्रवन्भयात् ॥ ४५
भज्यमानेषु सर्वेषु कुरुराजो विशांपते ।
परेषामात्मनश्चैव सैन्ये ते समुपाद्रवत् ॥ ४६
ततो दुर्योधनः सर्वानाजुहावाथ पाण्डवान् ।
युद्धाय भरतश्रेष्ठ देवानिव पुरा बलिः ॥ ४७
त एनमभिगर्जन्तं सहिताः समुपाद्रवन् ।
नानाशस्त्रसृजः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ ४८
दुर्योधनोऽप्यसंभ्रान्तस्तानरीन्व्यधमच्छरैः ॥ ४९
तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेनं पाण्डवाः सर्वे न शेकुरतिवर्तितुम् ॥ ५०
नातिदूरापयातं च कृतबुद्धिं पलायने ।
दुर्योधनः स्वकं सैन्यमपश्यद्भृशविक्षतम् ॥ ५१
ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः ।
हर्षयन्निव तान्योधांस्ततो वचनमब्रवीत् ॥ ५२
न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु च ।
यत्र यातान्न वो हन्युः पाण्डवाः किं सृतेन वः ॥ ५३
स्वल्पं चैव बलं तेषां कृष्णौ च भृशविक्षतौ ।
यदि सर्वेऽत्र तिष्ठामो ध्रुवं नो विजयो भवेत् ॥ ५४
विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतकिल्बिषान् ।
अनुसृत्य हनिष्यन्ति श्रेयो नः समरे वधः ॥ ५५

## तृतीयोऽध्यायः ॥ ३ ॥

कृपेण कर्णवधदुःखितं दुर्योधनं प्रति स्वपरपक्षयोर्दौर्बल्यप्राबल्याभिधानपूर्वकमुपायं प्रदर्श्य संधिविधानम् ॥ १ ॥

सञ्जय उवाच ।
शृणु राजन्नवहितो यथावृत्तो महान्क्षयः ।
कुरूणां पाण्डवानां च समासाद्य परस्परम् ॥ १
निहते सूतपुत्रे च फल्गुनेन महात्मना ।
विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् ॥ २
विमुखे तव पुत्रे च शोकोपहतचेतसि ।
भृशोद्विग्नेषु सैन्येषु दृष्ट्वा पार्थस्य विक्रमम् ॥ ३
ध्यायमानेषु योधेषु दुःखं प्राप्तेषु भारत ।
बलानां मथ्यमानानां श्रुत्वा निनदमुत्तमम् ॥ ४
अभिज्ञानं नरेन्द्राणां विकृतं प्रेक्ष्य संयुगे ।
पतितानवनीपालान्ध्वजांश्चैव महात्मनाम् ।
रणे विनिहतान्नागान्दृष्ट्वा पत्तींश्च भारत ॥ ५
आयोधनं महाघोरं रुद्रस्याक्रीडसंनिभम् ।
अप्रख्यातिं गतानां तु राज्ञां शतसहस्रशः ॥ ६
कृपाविष्टः कृपो दृष्ट्वा वयःशीलसमन्वितः ।
अब्रवीत्तत्र तेजस्वी सोऽभिसृत्य जनाधिपम् ।
दुर्योधनमनुक्रोशाद्वाक्यं वाक्यविशारदः ॥ ७
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव ।
श्रुत्वा कुरु महाराज यदि ते रोचतेऽनघ ॥ ८
न युद्धधर्माच्छ्रेयान्वै पन्था राजेन्द्र विद्यते ।
यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ ॥ ९
पुत्रो भ्राता पिता चैव स्वस्रीयो मातुलस्तथा ।
संबन्धिबान्धवाश्चैव योद्धव्याः क्षत्रजीविनः ॥ १०
वधे चैव परो धर्मस्तथाऽधर्मः पलायने ।
ते स्म घोरां समापन्ना जीविकां जीविताथिनः ।
तदत्र प्रतिवक्ष्यामि किंचिदेव हितं वचः ॥ ११
हते भीष्मे च द्रोणे च कर्णे चैव महारथे ।
जयद्रथे च निहते तव भ्रातृषु चानघ ।
लक्ष्मणे तव पुत्रे च किं शेषं पर्युपास्महे ॥ १२
येषु भारं समासज्य राज्ये मतिमकुर्महि ।
ते संत्यज्य तनूर्याताः शूरा ब्रह्मविदां गतिम् ॥ १३
वयं त्विह विनाभूता गुणवद्भिर्महारथैः ।
कृपणं वर्तयिष्यामः पातयित्वा नृपान्बहून् ॥ १४
सर्वैरथ च जीवद्भिर्बीभत्सुरपराजितः ।
कृष्णनेत्रो महाबाहुर्देवैरपि दुरासदः ॥ १५
इन्द्रकार्मुकवज्राभमिन्द्रकेतुमिवोच्छ्रितम् ।
वानरं केतुमासाद्य संचचाल महाचमूः ॥ १६
सिंहनादेन भीमस्य पाञ्चजन्यस्वनेन च ।
गाण्डीवस्य च निर्घोषात्संमुह्यन्ते मनांसि नः ॥ १७
स्फुरन्तीव महाविद्युन्मुष्णन्ती नयनप्रभाम् ।
अलातमिव चाविद्धं गाण्डीवं समदृश्यत ॥ १८
जाम्बूनदविचित्रं च धूयमानं महद्धनुः ।
दृश्यते दिक्षु सर्वासु विद्युदभ्रघनेष्विव ॥ १९
उह्यमानश्च कृष्णेन वायुनेव बलाहकः ।
तावकं तद्बलं राजन्नर्जुनोऽस्त्रविशारदः ।
गहनं शिशिरापाये ददाहाग्निरिवोल्बणः ॥ २०

शेषास्त्वां पर्युपास्महे इति ङ. पाठः ॥ १२ ॥ कृष्णो नेत्रं नेता यस्य स तथा ॥ १५ ॥

सुखः साङ्ग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम् ।
मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ॥ ५६
शृण्वन्तु क्षत्रियाः सर्वे यावन्तोऽत्र समागताः ।
द्विषतो भीमसेनस्य वशमेष्यथ विद्रुताः ॥ ५७
पितामहैराचरितं न धर्मं हातुमर्हथ ।
नान्यत्कर्मास्ति पापीयः क्षत्रियस्य पलायनात् ॥ ५८
न युद्धधर्माच्छ्रेयान्हि पन्थाः स्वर्गस्य कौरवाः ।
सुचिरेणार्जितांल्लोकान्सद्यो युद्धात्समश्नुते ॥ ५९
तस्य तद्वचनं राज्ञः पूजयित्वा महारथाः ।
पुनरेवाभ्यवर्तन्त क्षत्रियाः पाण्डवान्प्रति ।
पराजयममृष्यन्तः कृतचित्ताश्च विक्रमे ॥ ६०
ततः प्रववृते युद्धं पुनरेव सुदारुणम् ।
तावकानां परेषां च देवासुररणोपमम् ॥ ६१
युधिष्ठिरपुरोगांश्च सर्वसैन्येन पाण्डवान् ।
अन्वधावन्महाराज पुत्रो दुर्योधनस्तव ॥] ६२

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अध्यायः ॥

गाहमानमनीकानि महेन्द्रसदृशप्रभम् ।
विक्षोभयन्तं सेनां वै त्रासयन्तं च पार्थिवान् ।
धनञ्जयमपश्याम नलिनीमिव कुञ्जरम् ॥ २१
त्रासयन्तं तथा योधान्धनुर्घोषेण पाण्डवम् ।
भूय एनमपश्याम सिंहं मृगगणानिव ॥ २२
सर्वलोकमहेष्वासौ वृषभौ सर्वधन्विनाम् ।
आमुक्तकवचौ कृष्णौ लोकमध्ये विरेजतुः ॥ २३
अद्य सप्तदशाहानि वर्तमानस्य भारत ।
सङ्ग्रामस्यातिघोरस्य युध्यतां चाभितो युधि ॥ २४
वायुनेव विधूतानि तव सैन्यानि गच्छता ।
शरदम्भोदजालानि विशीर्यन्ते समन्ततः ॥ २५
तां नावमिव पर्यस्तां मज्जमानां महार्णवे ।
तव सेनां महाराज सव्यसाची व्यकम्पयत् ॥ २६
क्व नु ते सूतपुत्रोऽभूत्क्व नु द्रोणः सहात्मजः ।
अहं क्व च क्व चात्मा ते हार्दिक्यश्च तथा क्व नु ॥ २७
दुःशासनश्च ते भ्राता भ्रातृभिः सहितः क्व नु २८
बाणगोचरसंप्राप्तं युध्यमानं जयद्रथम् ।
संबन्धिनस्ते भ्रातॄंश्च सहायान्मातुलांस्तथा ।
सर्वान्विक्रम्य मिषतो लोकमाक्रम्य मूर्धनि ॥२९
जयद्रथो हतो राजन्किंनु शेषमुपास्महे ।
को वेह स पुमानस्ति यो विजेष्यति पाण्डवम् ॥३०
तस्य चास्त्राणि दिव्यानि विदितानि महात्मनः ।
गाण्डीवस्य च निर्घोषो धैर्याणि हरते हि नः ॥३१
नष्टचन्द्रा यथा रात्रिः सेनेयं हतनायका ।
नागभग्नद्रुमा शुष्का नदीव प्रतिभाति मे ॥ ३२
ध्वजिन्यां हतनेत्रायां यथेष्टं श्वेतवाहनः ।
चरिष्यति महाराजः कक्षेष्वग्निरिव ज्वलन् ॥ ३३
सात्यकेश्चैव यो वेगो भीमसेनस्य चोभयोः ।
दारयेत गिरीन्सर्वाञ्शोषयेच्चैव सागरान् ॥ ३४
उवाच वाक्यं यद्भीमः सभामध्ये विशांपते ।
कृतं तत्सफलं सर्वं भूयश्चैव करिष्यति ॥ ३५
प्रमुखस्थे तदा कर्णे बलं पाण्डवरक्षितम् ।
दुरासदं तदा गुप्तं व्यूढं गाण्डीवधन्वना ॥ ३६
युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु ।
अकारणकृतान्येव तेषां वः फलमागतम् ॥ ३७
आत्मनोऽर्थे त्वया लोको यत्नतः सर्व आहृतः ।
स ते संशयितस्तात आत्मा च भरतर्षभ ॥ ३८
रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ॥ ३९
हीयमानेन वै सन्धिः पर्येष्टव्यः समेन वा ।
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ॥ ४०
ते वयं पाण्डुपुत्रेभ्यो हीनाः स्म बलशक्तितः ।
अत्र ते पाण्डवैः सार्धं सन्धिं मन्ये क्षमं प्रभो ॥ ४१
न जानीते हि यः श्रेयः श्रेयसश्चावमन्यते ।
स क्षिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दति ॥४२
प्रणिपत्य हि राजानं राज्यं यदि लभेमहि ।
श्रेयः स्यान्न तु मौढ्येन राजन्गन्तुं पराभवम् ॥ ४३
वैचित्रवीर्यवचनात्कृपाशीलो युधिष्ठिरः ।
विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च ॥ ४४
'अजातशत्रुः कौरव्यो गुरुशुश्रूषणे रतः ।
धृतराष्ट्रस्य वचनं नावमंस्यति धार्मिकः ॥ ४५
कुर्वन्ति भ्रातरश्चास्य वचनं नात्र संशयः ॥' ४६
यद्ब्रूयाद्धि हृषीकेशो राजानमपराजितम् ।
अर्जुनो भीमसेनश्च सर्वे कुर्युरसंशयम् ॥ ४७
नातिक्रमिष्यते कृष्णो वचनं पाण्डवस्य तु ।
धृतराष्ट्रस्य मन्येऽहं नापि कृष्णस्य पाण्डवः ॥४८
एतत्क्षममहं मन्ये तव पार्थैरविग्रहम् ।
न त्वां ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात् ॥ ४९
पथ्यं राजन्ब्रवीमि त्वां तत्परासुः स्मरिष्यसि ॥ ५०
इति वृद्धो विलप्यैतत्कृपः शारद्वतो वचः ।
दीर्घमुष्णं च निःश्वस्य शुशोच च मुमोह च ॥ ५१

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

वर्तमानस्य सङ्ग्रामस्य अभितो वध्यतां वध्यमानानां च अद्य सप्तदशाहानि जातानीत्यन्वयः । जातानीति शेषः ॥ २४ ॥ अर्जुनं भीमसेनं च इति झ. पाठः । असंशयं गतवैरमित्यर्थः ॥ ४७ ॥ वचनं कौरवस्य तु इति झ. पाठः ॥ ४८ ॥ तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

दुर्योधनेन कृपंप्रति कारणकथनपूर्वकं सन्ध्यनङ्गीकरणम् ॥ १ ॥

सञ्जय उवाच ।
एवमुक्तस्ततो राजा गौतमेन तपस्विना ।
निःश्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशांपते ॥ १
ततो मुहूर्तं स ध्यात्वा तव पुत्रो महामनाः ।
कृपं शारद्वतं वाक्यमित्युवाच परंतपः ॥ २
यत्किंचित्सुहृदा वाच्यं तत्सर्वं श्रावितो ह्यहम् ।
कृतं च भवता सर्वं प्राणान्संत्यज्य युध्यता ॥ ३
गाहमानमनीकानि युध्यमानं महारथैः ।
पाण्डवैरतितेजोभिर्लोकस्त्वामनुदृष्टवान् ॥ ४
सुहृदा यदिदं वाक्यं भवता श्रावितो ह्यहम् ।
न मां प्रीणाति तत्सर्वं मुमूर्षोरिव भेषजम् ॥ ५
हेतुकारणसंयुक्तं हितं वचनमुत्तमम् ।
उच्यमानं महाबाहो न मे विप्राग्र्य रोचते ॥ ६
राज्याद्विनिकृतोऽस्माभिःकथं सोऽस्मासु विश्वसेत् ७
अक्षद्यूते च नृपतिर्जितोऽस्माभिर्महाधनः ।
स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ॥ ८
तथा दूत्येन संप्राप्तः कृष्णः पार्थहिते रतः ।
प्रलब्धश्च हृषीकेशस्तच्च कर्माविचारितम् ।
स च मे वचनं ब्रह्मन्कथमेवाभिमन्यते ॥ ९
विललाप च यत्कृष्णा सभामध्ये समेयुषी ।
न तन्मर्षयते कृष्णो न राज्यहरणं तथा ॥ १०
एकप्राणावुभौ कृष्णावन्योन्यमभिसंश्रितौ ।
पुरा यच्छ्रुतमेवासीदद्य पश्यामि तत्प्रभो ॥ ११
स्वस्रीयं निहतं दृष्ट्वा दुःखं स्वपिति केशवः ।
कृतागसो वयं तस्य हितं मे स कथं चरेत् ॥ १२
अभिमन्योर्विनाशेन न शर्म लभतेऽर्जुनः ।
स कथं मद्धिते यत्नं प्रकरिष्यति याचितः ॥ १३
मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः ।
प्रतिज्ञातं च तेनोग्रं भज्येतापि न संनमेत् ॥ १४
उभौ तौ बद्धनिस्त्रिंशावुभौ चाबद्धकङ्कटौ ।
कृतवैरावुभौ वीरौ यमावपि यमोपमौ ॥ १५
धृष्टद्युम्नः शिखण्डी च कृतवैरौ मया सह ।
तौ कथं मद्धिते यत्नं कुर्यातां द्विजसत्तम ॥ १६
दुःशासनेन यत्कृष्णा एकवस्त्रा रजस्वला ।
परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः ॥ १७
तथा विवसनां दीनां स्मरन्त्यद्यापि पाण्डवाः ।
न निवारयितुं शक्याः संग्रामात्ते परंतपाः ॥ १८
यदा च द्रौपदी क्लिष्टा मद्विनाशाय दुःखिता ।
उग्रं तेपे तपः कृष्णा भर्तॄणामर्थसिद्धये ।
स्थण्डिले नित्यदा शेते यावद्वैरस्य यातनम् ॥ १९
निक्षिप्य मानं दर्पं च वासुदेवसहोदरा ।
कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा ॥ २०
इति सर्वं समुन्नद्धं न निर्वाति कथंचन ।
अभिमन्योर्विनाशेन स सन्धेयः कथं मया ॥ २१
कथं च राजा भुक्त्वेमां पृथिवीं सागराम्बराम् ।
पाण्डवानां प्रसादेन भोक्ष्ये राज्यमहं कथम् ॥ २२
उपर्युपरि राज्ञां वै ज्वलित्वा भास्करो यथा ।
युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् ॥ २३
कथं भुक्त्वा स्वयं भोगान्दत्त्वा दायांश्च पुष्कलान् ।
कृपणं वर्तयिष्यामि कृपणैः सह जीविकाम् ॥ २४
नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया २५
न तु सन्धिमहं मन्ये प्राप्तकालं कथंचन ।
सुनीतमनुपश्यामि सुयुद्धेन परंतप ॥ २६
नायं क्लीबायितुं कालः संयोद्धुं काल एव नः ॥ २७
इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणाः ।
प्राप्ताः कामाः श्रुता वेदाः शत्रूणां मूर्ध्नि च स्थितम्
भृत्या मे सुभृतास्तात दीनश्चाभ्युद्धृतो जनः ।
नोत्सहेऽद्य द्विजश्रेष्ठ पाण्डवान्वक्तुमीदृशम् ॥ २९
जितानि परराष्ट्राणि स्वराष्ट्रमनुपालितम् ।
भुक्ताश्च विविधा भोगास्त्रिवर्गः सेवितो मया ॥ ३०

पुरा यच्छान्तमेवासीत् इति क॰ पाठः । पुरा यः शन्तमो नासीदद्य पश्यामि तं कथम् इति ङ॰ पाठः ॥ ११ ॥

उरश्छदः कङ्कटक इत्यमरः ॥ १५ ॥

पितॄणां गतमानृण्यं क्षत्रधर्मस्य चोभयोः ।
न ध्रुवं सुखमस्तीह कुतो राष्ट्रं कुतो यशः ।
इह कीर्तिर्विचेतव्या सा च युद्धेन नान्यथा ॥ ३१
वृथा च यत्क्षत्रियस्य निधनं तद्विगर्हितम् ।
अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ ३२
अरण्ये यो विमुच्येत संग्रामे वा तनुं नृपः ।
क्रतूनाहृत्य महतो महिमानं स गच्छति ॥ ३३
कृपणं विलपन्नार्तो जरयाऽभिपरिप्लुतः ।
म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥ ३४
त्यक्त्वा तु विविधान्भोगान्प्राप्तानां परमां गतिम् ।
अपीदानीं सुयुद्धेन गच्छेयं यत्सलोकताम् ॥ ३५
शूराणामार्यवृत्तानां संग्रामेष्वनिवर्तिनाम् ।
धीमतां सत्यसन्धानां सर्वेषां क्रतुयाजिनाम् ।
शस्त्रावभृथपूतानां ध्रुवो वासस्त्रिविष्टपे ॥ ३६
मुदा नूनं प्रपश्यन्ति युद्धे ह्यप्सरसां गणाः ॥ ३७
पश्यन्ति नूनं पितरः पूजितान्सुरसंसदि ।
अप्सरोभिः परिवृतान्मोदमानांस्त्रिविष्टपे ॥ ३८
पन्थानममरैर्यान्तं शूरैश्चैवानिवर्तिभिः ।
अपि तत्संगतं मार्गं वयमध्यारुहेमहि ॥ ३९
पितामहेन वृद्धेन तथाऽऽचार्येण धीमता ।
जयद्रथेन कर्णेन तथा दुःशासनेन च ॥ ४०
घटमाना मदर्थेऽस्मिन्हताः शूरा जनाधिपाः ।
शेरते लोहिताक्ताङ्गाः पृथिव्यां शरविक्षताः ॥ ४१
उत्तमास्त्रविदः शूरा यथोक्तक्रतुयाजिनः ।
त्यक्त्वा प्राणान्यथान्यायमिन्द्रसद्मसु धिष्ठिताः ॥
तैः स्वयं रचितो मार्गो दुर्गमो हि पुनर्भवेत् ।
संपतद्भिर्महावेगैरितो यास्यामि सद्गतिम् ॥ ४३
ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन् ।
ऋणं तत्प्रतियुञ्जानो न राज्ये मन आदधे ॥ ४४
पातयित्वा वयस्यांश्च भ्रातॄनथ पितामहान् ।
जीवितं यदि रक्षेयं लोको मां गर्हयेद्ध्रुवम् ॥ ४५
कीदृशं च भवेद्राज्यं मम हीनस्य बन्धुभिः ।
सखिभिश्च विशेषेण प्रणिपत्य च पाण्डवम् ॥ ४६
सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम् ।
सुयुद्धेन हतः स्वर्गं प्राप्स्यामि न तदन्यथा ॥ ४७
सञ्जय उवाच ।
एवं दुर्योधनेनोक्ते सर्वे संपूज्य तद्वचः ।
साधुसाध्विति राजानं क्षत्रियाः संबभाषिरे ॥ ४८
पराजयमशोचन्तः कृतचित्ताश्च विक्रमे ।
सर्वे सुनिश्चिता योद्धुमुदग्रमनसोऽभवन् ॥ ४९
ततो वाहान्समाश्वास्य सर्वे युद्धाभिनन्दिनः ।
ऊने द्वियोजने गत्वा प्रत्यतिष्ठन्त कौरवाः ॥ ५०
आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतः शुभे ।
अरुणां सरस्वतीं प्राप्य पपुः सस्नुश्च ते जलम् ॥ ५१
तव पुत्रकृतोत्साहाः पर्यवर्तन्त ते ततः ।
पर्यवस्थाप्य चात्मानमन्योन्येन पुनस्तदा ।
सर्वे राजन्व्यवर्तन्त क्षत्रियाः कालचोदिताः ॥ ५२

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ॥ ५ ॥

दुर्योधनेन सैनापत्यविधानप्रार्थनायां अश्वत्थाम्ना शल्यस्य सेनापतित्वविधानम् ॥ १ ॥ दुर्योधनेन शल्यंप्रति सैनापत्यस्वीकारप्रार्थना ॥ २ ॥

सञ्जय उवाच ।
अथ हैमवते प्रस्थे स्थिता युद्धाभिनन्दिनः ।
सर्व एव महायोधास्तत्रतत्र समागताः ॥ १
शल्यश्च चित्रसेनश्च शकुनिश्च महारथः ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ २
सुषेणोऽरिष्टसेनश्च धृतसेनश्च वीर्यवान् ।

विप्रवन्मरणं गृहे इति क. पाठः । विण्मूत्रमरणं गृहे इति ङ. पाठः ॥ ३२ ॥ चतुर्थोऽध्यायः ॥ ४ ॥

प्रस्थे शिखरे ॥ १ ॥

जयत्सेनश्च राजानस्ते रात्रिमुषितास्ततः ॥ ३
रणे कर्णे हते वीरे त्रासिता जितकाशिभिः ।
नालभञ्शर्म ते पुत्रा हिमवन्तमृते गिरिम् ॥ ४
तेऽब्रुवन्सहितास्तत्र राजानं शल्यसन्निधौ ।
कृतयत्ना रणे राजन्संपूज्य विधिवत्तदा ॥ ५
कृत्वा सेनाप्रणेतारं परांस्त्वं योद्धुमर्हसि ।
येनाभिगुप्ताः संग्रामे जयेमासुहृदो वयम् ॥ ६
ततो दुर्योधनः स्थित्वा रथे रथवरोत्तमम् ।
सर्वयुद्धविभावज्ञमन्तकप्रतिमं युधि ॥ ७
स्वङ्गं प्रच्छन्नशिरसं कम्बुग्रीवं प्रियंवदम् ।
व्याकोचपद्मपत्राक्षं व्याघ्रास्यं मेरुगौरवम् ॥ ८
स्थाणोर्वृषस्य सदृशं स्कन्धनेत्रगतिस्वरैः ।
पुष्टश्लिष्टायतभुजं सुविस्तीर्णवरोरसम् ॥ ९
बले जवे च सदृशमरुणानुजवातयोः ।
आदित्यस्यार्चिषा तुल्यं बुद्ध्या चोशनसा समं १०
कान्तिरूपमुखैश्वर्यैस्त्रिभिश्चन्द्रमसा समम् ।
काञ्चनोपलसंघातैः सदृशं श्लिष्टसन्धिकम् ॥ ११
सुवृत्तोरुकटीजङ्घं सुपादं स्वङ्गुलीनखम् ।
स्मृत्वा स्मृत्वैव तु गुणान्धात्रा यत्नाद्विनिर्मितं १२
सर्वलक्षणसंपन्नं निपुणं श्रुतिसागरम् ।
जेतारं तरसाऽरीणामजेयमरिभिर्बलात् ॥ १३
'प्रयोगबलसंहारप्रायश्चित्तं सुमङ्गलम् ।
प्रयोगविनियोगौ च स्मृतिं यस्य गुणान्विदुः' १४
दशाङ्गं यश्चतुष्पादमिष्वस्त्रं वेद तत्त्वतः ।
साङ्गांस्तु चतुरो वेदान्सम्यगाख्यानपञ्चमान् १५
आराध्य त्र्यम्बकं यत्नाद्व्रतैरुग्रैर्महातपाः ।
अयोनिजायामुत्पन्नो द्रोणेनायोनिजेन यः ॥ १६
तमप्रतिमकर्माणं रूपेणाप्रतिमं भुवि ।
पारगं सर्वविद्यानां गुणार्णवमनिन्दितम् ।
तमभ्येत्यात्मजस्तुभ्यमश्वत्थामानमब्रवीत् ॥ १७
गुरुपुत्राद्य सर्वेषामस्माकं परमा गतिः ।
भवांस्तस्मान्नियोगात्ते कोऽस्तु सेनापतिर्मम ।
यं पुरस्कृत्य सहिता युधि जेष्याम पाण्डवान् ॥ १८
द्रौणिरुवाच ।
अयं कुलेन रूपेण तेजसा यशसा श्रिया ।
सर्वैर्गुणैः समुदितः शल्यो नोऽस्तु चमूपतिः ॥ १९
भागिनेयान्निजांस्त्यक्त्वा कृतज्ञोऽस्मानुपागतः ।
महासेनो महाबाहुर्महासेन इवापरः ॥ २०
एनं सेनापतिं कृत्वा नृपतिं नृपसत्तम ।
शक्यः प्राप्तुं जयोऽस्माभिर्देवैः स्कन्दमिवाजितम् ॥
तथोक्ते द्रोणपुत्रेण सर्व एव नराधिपाः ।
परिवार्य स्थिताः शल्यं जयशब्दांश्च चक्रिरे ॥ २२
युद्धाय च मतिं चक्रुरावेशं च परं ययुः ॥ २३
ततो दुर्योधनः शल्यं भूमौ स्थित्वा रथे स्थितम् ।
उवाच प्राञ्जलिर्भूत्वा द्रोणभीष्मसमं रणे ॥ २४
अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।
यत्र मित्रममित्रं वा परीक्षन्ते बुधा जनाः ॥ २५
स भवानस्तु नः शूरः प्रणेता वाहिनीमुखे ।
रणं याते च भवति पाण्डवा मन्दचेतसः ।
भविष्यन्ति सहामात्याः पाञ्चालाश्च निरुद्यमाः ॥
दुर्योधनवचः श्रुत्वा शल्यो मद्राधिपस्तदा ।
उवाच वाक्यं वाक्यज्ञो राजानं राजसन्निधौ ॥ २७
यत्र मां मन्यसे राजन्कुरुराज करोमि तत् ।
त्वत्प्रियार्थं हि मे सर्वं प्राणा राज्यं धनानि च ॥ २८
दुर्योधन उवाच ।
सैनापत्येन वरये त्वामहं मातुलातुलम् ।
सोऽस्मान्पाहि युधां श्रेष्ठ स्कन्दो देवानिवाहवे २९
अभिषिच्यस्व राजेन्द्र देवानामिव पावकिः ।
जहि शत्रून्रणे वीर महेन्द्रो दानवानिव ॥ ३०

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

ततस्तत्र ॥ ३ ॥ स्वङ्गं शोभनाङ्गम् ॥ ८ ॥ स्थाणोः संबन्धिनो वृषस्य ॥ ९ ॥ तुभ्यं तव ॥ १७ ॥ महासेनइव कार्तिकेयइव ॥ २० ॥ पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

दुर्योधनेन शल्यस्य सेनापत्येऽभिषेचनम् ॥ १ ॥ कृष्णेन युधिष्ठिरंप्रति शल्यवधविधानम् ॥ २ ॥

सञ्जय उवाच ।
एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान् ।
दुर्योधनं तदा राजन्वाक्यमेतदुवाच ह ॥ १
दुर्योधन महाबाहो शृणु वाक्यविदां वर ।
यावेतौ मन्यसे कृष्णौ रथस्थौ रथिनांवरौ ।
न मे तुल्यावुभावेतौ बाहुवीर्ये कथंचन ॥ २
उद्यतां पृथिवीं सर्वां ससुरासुरमानवाम् ।
योधयेयं रणमुखे संक्रुद्धः किमु पाण्डवान् ॥ ३
विजेष्यामि रणे पार्थान्सोमकांश्च समागतान् ।
अहं सेनाप्रणेता ते भविष्यामि न संशयः ॥ ४
तं च व्यूहं विधास्यामि न क(त)रिष्यन्ति यं परे ।
इति सत्यं ब्रवीम्येष दुर्योधन न संशयः ॥ ५
'अद्यैवाहं रणे सर्वान्पाञ्चालान्सह पाण्डवैः ।
निहनिष्यामि वा राजन्स्वर्गं यास्यामि वा हतः ॥ ६
अद्य पश्यन्तु मां लोका विचरन्तमभीतवत् ॥ ७
अद्य पाण्डुसुताः सर्वे वासुदेवः ससात्यकिः ।
पाञ्चालाश्चेदयश्चैव द्रौपदेयाश्च सर्वशः ।
धृष्टद्युम्नः शिखण्डी च सर्वे चापि प्रभद्रकाः ॥ ८
विक्रमं मम पश्यन्तु धनुषश्च महद्बलम् ।
लाघवं चास्त्रवीर्यं च भुजयोश्च बलं युधि ॥ ९
अद्य पश्यन्तु मे पार्थाः सिद्धाश्च सह चारणैः ।
यादृशं मे बलं बाह्वोः संपदस्त्रेषु या च मे ॥ १०
अद्य मे विक्रमं दृष्ट्वा पाण्डवानां महारथाः ।
प्रतीकारपरा भूत्वा चेष्टन्ते विविधाः क्रियाः ११
अद्य सैन्यानि पाण्डूनां द्रावयिष्ये समन्ततः १२
द्रोणभीष्मावति विभो सूतपुत्रं च संयुगे ।
विचरिष्ये रणमुखे प्रियार्थं तव कौरव ॥ १३
सञ्जय उवाच ।'
एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा ।
अभ्यषिञ्चत सेनाया मध्ये भरतसत्तम ।
विधिना शास्त्रदृष्टेन क्लिष्टरूपो विशांपते ॥ १४
अभिषिक्ते ततस्तस्मिन्सिंहनादो महानभूत् ।
तव सैन्येऽभ्यवाद्यन्त वादित्राणि च भारत ॥ १
हृष्टाश्चासंस्तथा योधा मद्रकाश्च महारथाः ।
तुष्टुवुश्चैव राजानं शल्यमाहवशोभिनम् ॥ १
जय राजंश्चिरं जीव जहि शत्रून्समागतान् ।
तव बाहुबलं प्राप्य धार्तराष्ट्रो महाबलः ।
निखिलां पृथिवीं सर्वां प्रशास्तु निहतद्विषम् १
त्वं हि शक्तो रणे जेतुं ससुरासुरमानवान् ।
मर्त्यधर्माण इह तु किमु सृञ्जयसोमकान् ॥ १
एवं संपूज्यमानस्तु मद्राणामधिपो बली ।
हर्षं प्राप तदा वीरो दुरापमकृतात्मभिः ॥ १
सञ्जय उवाच ।
अभिषिक्ते तथा शल्ये तव सैन्येषु मानद ।
न कर्णव्यसनं किंचिन्मेनिरे तत्र भारत ॥ २
हृष्टाः सुमनसश्चैव बभूवुस्तत्र सैनिकाः ।
मेनिरे निहतान्पार्थान्मद्रराजवशंगतान् ॥ २
प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ ।
तां रात्रिं सुखिता सुप्ता हर्षचित्ता च साभवत् ॥ २
सैन्यस्य तव तं शब्दं श्रुत्वा राजा युधिष्ठिरः ।
वार्ष्णेयमब्रवीद्वाक्यं सर्वक्षत्रस्य पश्यतः ॥ २
मद्रराजः कृतः शल्यो धार्तराष्ट्रेण माधव ।
सेनापतिर्महेष्वासः सर्वसैन्येषु पूजितः ॥ २
एतज्ज्ञात्वा यथाभूतं कुरु माधव यत्क्षमम् ।
भवान्नेता च गोप्ता च विधत्स्व यदनन्तरम् ॥ २
तमब्रवीन्महाराज वासुदेवो जनाधिपम् ।
आर्तायनिमहं जाने यथातत्त्वेन भारत ॥ २
वीर्यवांश्च महातेजा महात्मा च विशेषतः ।
कृती च चित्रयोधी च संयुक्तो लाघवेन च ॥ २
यादृग्भीष्मस्तथा द्रोणो यादृक्कर्णश्च संयुगे ।
तादृशस्तद्विशिष्टो वा मद्रराजो मतो मम ॥ २८
युध्यमानस्य तस्याहं चिन्तयानश्च भारत ।

क्लिष्टरूपः पराजयनिश्चयात् ॥ १४ ॥ मर्त्यधर्माणः मर्त्यधर्मिणः ॥ १८ ॥ षष्ठोऽध्यायः ॥ ६ ॥

योद्धारं नाधिगच्छामि तुल्यरूपं जनाधिप ॥ २९
शिखण्ड्यर्जुनभीमानां सात्वतस्य च भारत ।
धृष्टद्युम्नस्य च तथा बलेनाभ्यधिको रणे ॥ ३०
मद्रराजो महाराजः सिंहद्विरदविक्रमः ।
विचरिष्यत्यभीः काले कालः क्रुद्धः प्रजास्विव ३१
तस्याद्य न प्रपश्यामि प्रतियोद्धारमाहवे ।
त्वामृते पुरुषव्याघ्र शार्दूलसमविक्रमम् ॥ ३२
स त्वमेको हि लोकेऽस्मिन्नान्यस्त्वत्तः पुमान्भवेत् ।
मद्रराजं रणे क्रुद्धं यो हन्यात्कुरुनन्दन ॥ ३३
अहन्यहनि युध्यन्तं क्षोभयन्तं बलं तव ।
तस्माज्जहि रणे शल्यं मघवानिव शम्बरम् ॥ ३४
सौतेः पश्चादसौ वीरो धार्तराष्ट्रेण सत्कृतः ।
तवैव हि जयो नूनं हते मद्रेश्वरे युधि ।
तस्मिन्हते हतं सर्वं धार्तराष्ट्रबलं महत् ॥ ३५
एतच्छ्रुत्वा महाराज वचनं मम सांप्रतम् ।
प्रत्युद्याहि रणे पार्थ मद्रराजं महारथम् ॥ ३६
जहि चैनं महाबाहो वासवो नमुचिं यथा ॥ ३७
न चैवात्र दया कार्या मातुलोऽयं ममेति वै ।
क्षत्रधर्मं पुरस्कृत्य जहि मद्रजनेश्वरम् ॥ ३८
द्रोणभीष्मार्णवं तीर्त्वा कर्णपातालसंभवम् ।
मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम् ३९
यच्च ते तपसो वीर्यं यच्च क्षात्रं बलं तव ।
तद्दर्शय रणे सर्वं जहि चैनं महारथम् ॥ ४०
सञ्जय उवाच ।
एतावदुक्त्वा वचनं केशवः परवीरहा ।
जगाम शिबिरं सायं पूज्यमानोऽथ पाण्डवैः ॥ ४१
केशवे तु तदा याते धर्मपुत्रो युधिष्ठिरः ।
विसृज्य सर्वान्भ्रातॄंश्च पाञ्चालानथ सोमकान् ।
सुष्वाप रजनीं तां तु विशल्य इव कुञ्जरः ॥ ४२
ते च सर्वे महेष्वासाः पाञ्चालाः पाण्डवास्तथा ।
कर्णस्य निधने हृष्टाः सुषुपुस्तां निशां तदा ॥ ४३
गतज्वरं महेष्वासं तीर्णपारं महारथम् ।
बभूव पाण्डवेयानां सैन्यं च मुदितं निशि ।
सूतपुत्रस्य निधनाज्जयं लब्ध्वा च मारिष ॥ ४४

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

उभयसैन्यानां व्यूहरचनापूर्वकं द्वन्द्वीभूय युद्धाय निर्गमनम् ॥ १ ॥

सञ्जय उवाच ।
व्यतीतायां रजन्यां तु राजा दुर्योधनस्तदा ।
अब्रवीत्तावकान्सर्वान्सन्नह्यन्तां महारथाः ॥ १
राज्ञश्च मतमाज्ञाय समनह्यत सा चमूः ।
अयोजयन्रथांस्तूर्णं पर्यधावंस्तथा परे ॥ २
अकल्प्यन्त च मातङ्गाः समनह्यन्त पत्तयः ।
हयानास्तरणोपेतांश्चक्रुरन्ये सहस्रशः ॥ ३
वादित्राणां च निनदः प्रादुरासीद्विशांपते ।
योधानां सैन्यमुख्यानामन्योन्यं प्रतिगर्जताम् ॥ ४
ततो बलानि सर्वाणि हतशिष्टानि भारत ।
संनद्धानि व्यदृश्यन्त मृत्युं कृत्वा निवर्तनम् ॥ ५
शल्यं सेनापतिं कृत्वा मद्रराजं महारथाः ।
प्रविभज्य बलं सर्वमनीकेषु व्यवस्थिताः ॥ ६
ततः सर्वे समागम्य पुत्रेण तव सैनिकाः ।
कृपश्च कृतवर्मा च द्रौणिः शल्योऽथ सौबलः ।
अन्ये च पार्थिवाः शेषाः समयं चक्रुराहताः ॥ ७
'अद्याचार्यसुतो द्रौणिर्नैको युध्येत शत्रुभिः ।'
न न एकेन योद्धव्यं कथंचिदपि पाण्डवैः ॥ ८
यो ह्येकः पाण्डवैर्युध्येद्यो वा युध्यन्तमुत्सृजेत् ।
स पञ्चभिर्भवेद्युक्तः पातकैश्चोपपातकैः ।
अन्योन्यं परिरक्षद्भिर्योद्धव्यं सहितैश्च नः ॥ ९
एवं ते समयं कृत्वा सर्वे तत्र महारथाः ।
मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन्परान् ॥ १०
तथैव पाण्डवा राजन्व्यूह्य सैन्यं महारणे ।

अभ्ययुः कौरवान्युद्धे योत्स्यमानाः समन्ततः ११
ततो बलं समभवत्क्षुब्धार्णवसमस्वनम् ।
समुद्धूतार्णवाकारमुदीर्णरथकुञ्जरम् ॥ १२
धृतराष्ट्र उवाच ।
द्रोणस्य चैव भीष्मस्य राधेयस्य च मे श्रुतम् ।
पातनं शंस मे भूयः शल्यस्याथ सुतस्य मे ॥ १३
कथं रणे हतः शल्यो धर्मराजेन सञ्जय ।
भीमेन च महाबाहुः पुत्रो दुर्योधनो मम ॥ १४
सञ्जय उवाच ।
क्षयं मनुष्यदेहानां तथा नागाश्वसंक्षयम् ।
शृणु राजन्स्थिरो भूत्वा संग्रामं शंसतो मम ॥ १५
आशा बलवती राजन्पुत्राणां तेऽभवत्तदा ॥ १६
हते द्रोणे च भीष्मे च सूतपुत्रे च पातिते ।
शल्यः पार्थान्रणे सर्वान्निहनिष्यति मारिष ॥ १७
तामाशां हृदये कृत्वा समाश्वस्य च भारत ।
मद्रराजं च समरे समाश्रित्य महारथम् ।
नाथवन्तं तदाऽऽत्मानममन्यत सुतस्तव ॥ १८
यदा कर्णे हते पार्थाः सिंहनादं प्रचक्रिरे ।
तदा राजन्धार्तराष्ट्रान्प्रविवेश महद्भयम् ॥ १९
तान्समाश्वास्य तु तदा मद्रराजः प्रतापवान् ।
व्यूह्य व्यूहं महाराज सर्वतोभद्रमृद्धिमत् ॥ २०
प्रत्युद्ययौ रणे पार्थान्मद्रराजः प्रतापवान् ।
विधून्वन्कार्मुकं चित्रं भारघ्नं वेगवत्तरम् ।
रथप्रवरमास्थाय सैन्धवाश्वं महारथः ॥ २१
तस्य सूतो महाराज रथस्थोऽशोभयद्रथम् ।
स तेन संवृतो वीरो रथेनामित्रकर्शनः ।
तस्थौ शूरो महाराज पुत्राणां ते भयप्रणुत् ॥ २२
प्रयाणे मद्रराजोऽभून्मुखं व्यूहस्य दंशितः ।
मद्रकैः सहितो वीरैः कर्णपुत्रैश्च दुर्जयैः ॥ २३
सव्येऽभूत्कृतवर्मा च त्रिगर्तैः परिवारितः ।
गौतमो दक्षिणे पार्श्वे शकैश्च यवनैः सह ॥ २४
अश्वत्थामा पृष्ठतोऽभूत्काम्भोजैः परिवारितः ।
दुर्योधनोऽभवन्मध्ये रक्षितः कुरुपुङ्गवैः ॥ २५
हयानीकेन महता सौबलश्चापि संवृतः ।
प्रययौ सर्वसैन्येन कैतव्यश्च महारथः ॥ २६
पाण्डवाश्च महेष्वासा व्यूह्य सैन्यमरिंदमाः ।
त्रिधाभूता महाराज तव सैन्यमुपाद्रवन् ॥ २७
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः ।
शल्यस्य वाहिनीं हन्तुमभिदुद्रुवुराहवे ॥ २८
ततो युधिष्ठिरो राजा स्वेनानीकेन संवृतः ।
शल्यमेवाभिदुद्राव जिघांसुर्भरतर्षभः ॥ २९
हार्दिक्यं च महेष्वासमर्जुनः शत्रुपूगहा ।
संशप्तकगणांश्चैव वेगितोऽभिविदुद्रुवे ॥ ३०
गौतमं भीमसेनो वै सोमकाश्च महारथाः ।
अभ्यद्रवन्त राजेन्द्र जिघांसन्तः परान्युधि ॥ ३१
माद्रीपुत्रौ तु शकुनिमुलूकं च महारथम् ।
ससैन्यौ सहसैन्यौ तावुपतस्थतुराहवे ॥ ३२
तथैवायुतशो योधास्तावकाः पाण्डवान्रणे ।
अभ्यवर्तन्त संक्रुद्धा विविधायुधपाणयः ॥ ३३
धृतराष्ट्र उवाच ।
हते भीष्मे महेष्वासे द्रोणे कर्णे जयद्रथे ।
कुरुष्वल्पावशिष्टेषु पाण्डवेषु च संयुगे ॥ ३४
संरब्धेषु च पार्थेषु पराक्रान्तेषु सञ्जय ।
मामकानां परेषां च किं शिष्टमभवद्बलम् ॥ ३५
सञ्जय उवाच ।
यथा वयं परे राजन्युद्धाय समुपस्थिताः ।
यावच्चासीद्बलं शिष्टं सङ्ग्रामे तन्निबोध मे ॥ ३६
एकादश सहस्राणि रथानां भरतर्षभ ।
दश दन्तिसहस्राणि सप्त चैव शतानि च ॥ ३७
पूर्णे शतसहस्रे द्वे हयानां तत्र भारत ।
पत्तिकोट्यस्तथा तिस्रो बलमेतत्तवाभवत् ॥ ३८
रथानां षट्सहस्राणि षट्सहस्राश्च कुञ्जराः ।
दश चाश्वसहस्राणि पत्तिकोटी च भारत ॥ ३९
एतद्बलं पाण्डवानामभवच्छेषमाहवे ।
एत एव समाजग्मुर्युद्धाय भरतर्षभ ॥ ४०
एवं विभज्य राजेन्द्र मद्रराजमते स्थिताः ।

पत्तिकोटी इति द्विवचनम् ॥ ३९ ॥

सप्तमोऽध्यायः ॥ ७ ॥

पाण्डवान्प्रत्युदीयाम जयगृद्धाः प्रमन्यवः ॥ ४१
तथैव पाण्डवाः शूराः समरे जितकाशिनः ।
उपयाता नरव्याघ्राः पाञ्चालाश्च यशस्विनः ४२
एवमेते बलौघेन परस्परवधैषिणः ।
उपयाता नरव्याघ्राः पूर्वां सन्ध्यां प्रति प्रभो ॥४३
ततः प्रववृते युद्धं घोररूपं भयानकम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ ४४

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टादशदिवसयुद्धारम्भः ॥ १ ॥ संकुलयुद्धम् ॥ २ ॥

सञ्जय उवाच ।
ततः प्रववृते युद्धं कुरूणां भयवर्धनम् ।
सृञ्जयैः सह राजेन्द्र घोरं देवासुरोपमम् ॥ १
नरा रथा गजौघाश्च वाजिनश्च सहस्रशः ।
वाजिनश्च पराक्रान्ताः समाजग्मुः परस्परम् ॥ २
गजानां भीमरूपाणां द्रवतां निःस्वनो महान् ।
अश्रूयत यथा काले जलदानां नभस्तले ॥ ३
नागैरभ्याहताः केचित्सरथा रथिनोऽपतन् ।
व्यद्रवन्त रणे भीता द्राव्यमाणा मदोत्कटैः ॥ ४
हयौघान्पादरक्षांश्च रथिनस्तत्र शिक्षिताः ।
शरैः संप्रेषयामासुः परलोकाय भारत ॥ ५
सादिनः शिक्षिता राजन्परिवार्य महारथान् ।
विचरन्तो रणेऽभ्यघ्नन्प्रासशक्त्यृष्टिभिस्तथा ॥ ६
न्विनः पुरुषाः केचित्परिवार्य महारथान् ।
कं बहव आसाद्य प्रैषयन्यमसादनम् ॥ ७
गान्रथवरांश्चान्ये परिवार्य महारथाः ।
सोत्तरा युधि निर्जघ्नुर्द्रवमाणं महारथम् ॥ ८
तथा च रथिनं क्रुद्धं विकिरन्तं शरान्बहून् ।
नागा जघ्नुर्महाराज परिवार्य समन्ततः ॥ ९
नागा नागमभिद्रुत्य रथी च रथिनं रणे ।
शक्तितोमरनाराचैर्निजघ्नुस्तत्र भारत ॥ १०
पादातानवमृद्नन्तो रथवारणवाजिनः ।
रणमध्ये व्यदृश्यन्त कुर्वन्तो महदाकुलम् ॥ ११
हयाश्च पर्यधावन्त चामरैरुपशोभिताः ।
हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम् ॥ १२
तेषां तु वाजिनां भूमिः खुरैश्चित्रा विशांपते ।
अशोभत यथा नारी करजैः क्षतविक्षता ॥ १३
वाजिनां खुरशब्देन रथनेमिस्वनेन च ।
पत्तीनां चापि शब्देन नागानां बृंहितेन च ॥१४
वादित्राणां च घोषेण शङ्खानां निनदेन च ।
अभवन्नादिता भूमिर्निर्घातैरिव भारत ॥ १५
धनुषां कूजमानानां शस्त्रौघानां च पात्यताम् ।
कवचानां प्रभाभिश्च न प्राज्ञायत किंचन ॥ १६
बहवो बाहवश्छिन्ना नागराजकरोपमाः ।
उद्वेष्टन्ते विचेष्टन्ते वेगं कुर्वन्ति दारुणम् ॥ १७
शिरसां च महाराज पततां धरणीतले ।
च्युतानामिव तालेभ्यः फलानां श्रूयते स्वनः ॥१८
शिरोभिः पतितैर्भाति रुधिरार्द्रैर्वसुंधरा ।
तपनीयनिभैः काले नलिनैरिव भारत ॥ १९
उद्वृत्तनयनैस्तैस्तु गतसत्त्वैः सुविक्षतैः ।
व्यभ्राजत मही राजन्पुण्डरीकैरिवावृता ॥ २०
बाहुभिश्चन्दनादिग्धैः सकेयूरैर्महाधनैः ।
पतितैर्भाति राजेन्द्र महाशक्रध्वजैरिव ॥ २१
ऊरुभिश्च नरेन्द्राणां विनिकृत्तैर्महाहवे ।
हस्तिहस्तोपमैर्जज्ञे संवृतं तद्रणाङ्गणम् ॥ २२
कबन्धशतसंकीर्णं छत्रचामरसंकुलम् ।
सेनावनं तच्छुशुभे वनं पुष्पाचितं यथा ॥ २३
तत्र योधा महाराज विचरन्तो ह्यभीतवत् ।
दृश्यन्ते रुधिराक्ताङ्गाः पुष्पिता इव किंशुकाः ॥२४
मातङ्गाश्चाप्यदृश्यन्त शरतोमरपीडिताः ।
पतन्तस्तत्र तत्रैव छिन्नाभ्रसदृशा रणे ॥ २५
गजानीकं महाराज वध्यमानं महात्मभिः ।

व्यदीर्यत दिशः सर्वा वातनुन्ना घना इव ॥ २६
ते गजा घनसंकाशाः पेतुरुर्व्यां समन्ततः ।
वज्रनुन्ना इव बभुः पर्वता युगसंक्षये ॥ २७
हयानां सादिभिः सार्धं पतितानां महीतले ।
राशयः स्म प्रदृश्यन्ते गिरिमात्रास्ततस्ततः ॥ २८
संजज्ञे रणभूमौ तु परलोकवहा नदी ।
शोणितोदा रथावर्ता ध्वजवृक्षास्थिशर्करा ॥ २९
भुजनक्रा धनुःस्रोता हस्तिशैला हयोपला ।
मेदोमज्जाकर्दमिनी छत्रहंसा गदोडुपा ॥ ३०
कवचोष्णीषसंछन्ना पताकारुचिरद्रुमा ।
चक्रचक्रावलीजुष्टा त्रिवेणूरगसंवृता ॥ ३१
शूराणां हर्षजननी भीरूणां भयवर्धनी ।
प्रावर्तत नदी रौद्रा कुरुसृञ्जयसंगमे । ३२
तां नदीं परलोकाय वहन्तीमतिभैरवाम् ।
तेरुर्वाहननौभिस्ते शूराः परिघबाहवः ॥ ३३
वर्तमाने तदा युद्धे निर्मर्यादे विशांपते ।
चतुरङ्गक्षये घोरे युद्धे देवासुरोपमे ॥ ३४
व्याक्रोशन्बान्धवानन्ये तत्र तत्र परंतप ।
क्रोशद्भिर्दयितैरन्ये भयार्ता न निवर्तिरे ॥ ३५
निर्मर्यादे तथा युद्धे वर्तमाने भयानके ।
अर्जुनो भीमसेनश्च मोहयांचक्रतुः परान् ॥ ३६
सा वध्यमाना महती सेना तव नराधिप ।
अमुह्यत्तत्र तत्रैव योषिन्मदवशादिव ॥ ३७
मोहयित्वा च तां सेनां भीमसेनधनंजयौ ।
दध्मतुर्वारिजौ तत्र सिंहनादांश्च चक्रतुः ॥ ३८
श्रुत्वैव तु महाशब्दं धृष्टद्युम्नशिखण्डिनौ ।
धर्मराजं पुरस्कृत्य मद्रराजमभिद्रुतौ ॥ ३९
तत्राश्चर्यमपश्याम घोररूपं महद्भयम् ।
शल्येन संगताः शूरा यदयुध्यन्त भागशः ॥ ४०
माद्रीपुत्रौ तु रभसौ कृतास्त्रौ युद्धदुर्मदौ ।
अभ्ययातां त्वरायुक्तौ जिगीषन्तौ बलं तव ॥ ४१
ततोऽभ्यावर्तत बलं तावकं भरतर्षभ ।
शरैः प्रणुन्नं बहुधा पाण्डवैर्जितकाशिभिः ॥ ४२
वध्यमाना चमूः सा तु पुत्राणां प्रेक्षतां तव ।
भेजे दश दिशो राजन्प्रणुन्ना शरवृष्टिभिः ॥ ४३
हाहाकारो महाञ्जज्ञे योधानां तत्र भारत ।
तिष्ठतिष्ठेति चाप्यासीद्द्रावितानां महात्मनाम् ॥ ४४
क्षत्रियाणां तथाऽन्योन्यं संयुगे जयमिच्छताम् ।
प्राद्रवन्नेव संभग्नाः पाण्डवैस्तव सैनिकाः ॥ ४५
त्यक्त्वा युद्धे प्रियान्पुत्रान्भ्रातॄनथ पितामहान् ।
मातुलान्भागिनेयांश्च वयस्यानपि भारत ॥ ४६
हयान्द्विपांस्त्वरयन्तो योधा जग्मुः समन्ततः ।
आत्मत्राणकृतोत्साहास्तावका भरतर्षभ ॥ ४७

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ॥ ९ ॥

नकुलेन कर्णपुत्राणां त्रयाणां मारणम् ॥ १ ॥

सञ्जय उवाच ।
तत्प्रभग्नं बलं दृष्ट्वा मद्रराजः प्रतापवान् ।
उवाच सारथिं तूर्णं चोदयाश्वान्महाजवान् ॥ १
एष तिष्ठति वै राजा पाण्डुपुत्रो युधिष्ठिरः ।
छत्रेण ध्रियमाणेन पाण्डुरेण विराजता ॥ २
अत्र मां प्रापय क्षिप्रं पश्य मे सारथे बलम् ।
न समर्था हि मे पार्थाः स्थातुमद्य पुरो युधि ॥ ३
एवमुक्तस्ततः प्रायान्मद्रराजस्य सारथिः ।
यत्र राजा सत्यसन्धो धर्मपुत्रो युधिष्ठिरः ॥ ४
आपतन्तं च सहसा पाण्डवानां महद्बलम् ।
दधारैको रणे शल्यो वेलोद्वृत्तमिवार्णवम् ॥ ५
पाण्डवानां बलौघस्तु शल्यमासाद्य मारिष ।
व्यतिष्ठत तदा युद्धे सिन्धोर्वेग इवाचलम् ॥ ६
मद्रराजं तु समरे दृष्ट्वा युद्धाय धिष्ठितम् ।

---

न निवर्तिरे न निवर्तिताः ॥ ३५ ॥

अष्टमोऽध्यायः ॥ ८ ॥

कुरवः सन्न्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ॥ ७
तेषु राजन्निवृत्तेषु व्यूढानीकेषु सर्वशः ।
प्रावर्तत महारौद्रः सङ्ग्रामः शोणितोदकः ॥ ८
समाच्छेच्चित्रसेनं तु नकुलो युद्धदुर्मदः ।
तौ परस्परमासाद्य चित्रकार्मुकधारिणौ ॥ ९
मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ ।
शरतोयैः सिषिचतुस्तौ परस्परमाहवे ॥ १०
नान्तरं तत्र पश्यामः पाण्डवस्येतरस्य च ।
उभौ कृतास्त्रौ बलिनौ रथचर्याविशारदौ ।
परस्परवधे यत्तौ छिद्रान्वेषणतत्परौ ॥ ११
चित्रसेनस्तु भल्लेन पीतेन निशितेन च ।
नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः ॥ १२
अथैनं छिन्नधन्वानं रुक्मपुङ्खैः शिलाशितैः ।
त्रिभिः शरैरसंभ्रान्तो ललाटे वै समार्पयत् ॥ १३
हयांश्चास्य शरैस्तीक्ष्णैः प्रेषयामास मृत्यवे ।
तथा ध्वजं सारथिं च त्रिभिस्त्रिभिरपातयत् ॥ १४
स शत्रुभुजनिर्मुक्तैर्ललाटस्थैस्त्रिभिः शरैः ।
नकुलः शुशुभे राजंस्त्रिशृङ्ग इव पर्वतः ॥ १५
स च्छिन्नधन्वा विरथः खड्गमादाय चर्म च ।
रथादवातरद्वीरः शैलाग्रादिव केसरी ॥ १६
पद्भ्यामापततस्तस्य शरवृष्टिं समासृजत् ।
नकुलोऽप्यग्रसत्तां वै चर्मणा लघुविक्रमः ॥ १७
चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः ।
आरुरोह महाबाहुः सर्वसैन्यस्य पश्यतः ॥ १८
सकुण्डलं समुकुटं सुनसं स्वायतेक्षणम् ।
चित्रसेनशिरः कायादपाहरत पाण्डवः ॥ १९
स पपात रथात्तस्माद्दिवाकरसमद्युतिः ॥ २०
चित्रसेनशिरस्तत्तु दृष्ट्वा तत्र महारथाः ।
साधुवादस्वनांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ २१
विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्रौ महारथौ ।
सुशर्मा सत्यसेनश्च मुञ्चन्तौ विविधाञ्शरान् ॥ २२
ततोऽभ्यधावतां तूर्णं पाण्डवं रथिनां वरम् ।
जिघांसन्तौ यथा नागं व्याघ्रौ राजन्महावने ॥ २३
तावभ्येत्य महाबाहू द्वावप्यतिमहारथौ ।
शरौघान्सम्यगस्यन्तौ जीमूतौ सलिलं यथा ॥ २४
स शरैः सर्वतो विद्धः प्रहृष्ट इव पाण्डवः ।
अन्यत्कार्मुकमादाय रथमारुह्य वेगवान् ।
अतिष्ठत रणे वीरः क्रुद्धरूप इवान्तकः ॥ २५
तस्य तौ भ्रातरौ राजञ्शरैः सन्नतपर्वभिः ।
रथं विशकलीकर्तुं समारब्धौ विशांपते ॥ २६
ततः प्रहस्य नकुलश्चतुर्भिश्चतुरो रणे ।
जघान निशितैर्बाणैः सत्यसेनस्य वाजिनः ॥ २७
ततः सन्धाय नाराचं रुक्मपुङ्खं शिलाशितम् ।
धनुश्चिच्छेद राजेन्द्र सत्यसेनस्य पाण्डवः ॥ २८
अथान्यं रथमास्थाय धनुरादाय चापरम् ।
सत्यसेनः सुशर्मा च पाण्डवं पर्यधावताम् ॥ २९
अविध्यत्तावसंभ्रान्तौ माद्रीपुत्रः प्रतापवान् ।
द्वाभ्यां द्वाभ्यां महाराज शराभ्यां रणमूर्धनि ३०
सुशर्मा तु ततः क्रुद्धः पाण्डवस्य महद्धनुः ।
चिच्छेद प्रहसन्युद्धे क्षुरप्रेण महारथः ॥ ३१
अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः ।
सुशर्माणं पञ्चभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ॥ ३२
सत्यसेनस्य स धनुर्हस्तावापं च मारिष ।
चिच्छेद तरसा युद्धे तत उच्चुक्रुशुर्जनाः ॥ ३३
अथान्यद्धनुरादाय वेगघ्नं भारसाधनम् ।
शरैः संछादयामास समन्तात्पाण्डुनन्दनम् ॥ ३४
सन्निवार्य तु तान्बाणान्नकुलः परवीरहा ।
सत्यसेनसुशर्माणौ द्वाभ्यां द्वाभ्यामविध्यत ॥ ३५
तावेनं प्रत्यविध्येतां पृथक्पृथगजिह्मगैः ।
सारथिं चास्य राजेन्द्र शितैर्विव्यधतुः शरैः ॥ ३६
सत्यसेनो रथेषां तु नकुलस्य धनुस्तथा ।
पृथक् शराभ्यां चिच्छेद कृतहस्तः प्रतापवान् ॥ ३७
स रथेऽतिरथस्तिष्ठन्रथशक्तिं परामृशत् ॥ ३८
स्वर्णदण्डामकुण्ठाग्रां तैलधौतां सुनिर्मलाम् ।
लेलिहानामिव विभो नागकन्यां महाविषाम् ॥ ३९
समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे ॥ ४०
सा तस्य हृदयं गत्वा बिभेद शतधा नृप ।
स पपात रथाद्भूमिं गतसत्त्वोऽल्पचेतनः ॥ ४१

चित्रसेनः कर्णपुत्रः ॥ ९ ॥

नवमोऽध्यायः ॥ ९ ॥

भ्रातरं निहतं दृष्ट्वा सुशर्मा क्रोधमूर्च्छितः ।
अभ्यवर्षच्छरैस्तूर्णं पादातं पाण्डुनन्दनम् ॥ ४२
चतुर्भिश्चतुरो वाहान्ध्वजं छित्त्वा च पञ्चभिः ।
त्रिभिर्वै सारथिं हत्वा कर्णपुत्रो ननाद ह ॥ ४३
नकुलं विरथं दृष्ट्वा द्रौपदेयो महारथम् ।
सुतसोमोऽभिदुद्राव परीप्सन्पितरं रणे ॥ ४४
ततोऽधिरुह्य नकुलः सुतसोमस्य तं रथम् ।
शुशुभे भरतश्रेष्ठो गिरिस्थ इव केसरी ॥ ४५
अन्यत्कार्मुकमादाय सुशर्माणमयोधयत् ॥ ४६
तत्र तौ शरवर्षाभ्यां समासाद्य परस्परम् ।
परस्परवधे यत्नं चक्रतुः सुमहारथौ ॥ ४७
सुशर्मा तु ततः क्रुद्धः पाण्डवं विशिखैस्त्रिभिः ।
सुतसोमं तु विंशत्या बाह्वोरुरसि चार्पयत् ॥ ४८
ततः क्रुद्धो महाराज नकुलः परवीरहा ।
शरैस्तस्य दिशः सर्वाश्छादयामास वीर्यवान् ४९
ततो गृहीत्वा तीक्ष्णाग्रमर्धचन्द्रं सुतेजनम् ।
आकर्णपूर्णं चिक्षेप कर्णपुत्राय संयुगे ॥ ५०
तस्य तेन शिरः कायाज्जहार नृपसत्तम ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ ५१
स हतः प्रापतद्राजन्नकुलेन महात्मना ।
नदीवेगादिवारुग्णस्तीरजः पादपो महान् ॥ ५२
कर्णपुत्रवधं दृष्ट्वा नकुलस्य च विक्रमम् ।
प्रदुद्राव भयात्सेना तावकी भरतर्षभ ॥ ५३
तां तु सेनां महाराज मद्रराजः प्रतापवान् ।
अपालयद्रणे शूरः सेनापतिररिंदमः ॥ ५४
विभीस्तस्थौ महाराज व्यवस्थाप्य च वाहिनीम् ।
सिंहनादं भृशं कृत्वा धनुःशब्दं च दारुणम् ॥ ५५
तावकाः समरे राजन्रक्षिता दृढधन्वना ।
प्रत्युद्ययुश्च तांस्ते तु समन्ताद्विगतव्यथाः ॥ ५६
मद्रराजं महेष्वासं परिवार्य समन्ततः ।
स्थिता राजन्महासेना योद्धुकामा समन्ततः ॥ ५७
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
युधिष्ठिरं पुरस्कृत्य ह्रीनिषेवमरिंदमम् ॥ ५८
परिवार्य रणे वीराः सिंहनादं प्रचक्रिरे ।
बाणशङ्खरवांस्तीव्रान्क्ष्वेलाश्च विविधा दधुः ॥५९
तथैव तावकाः सर्वे मद्राधिपतिमञ्जसा ।
परिवार्य सुसंरब्धाः पुनर्युद्धमरोचयन् ॥ ६०
ततः प्रववृते युद्धं भीरूणां भयवर्धनम् ।
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ॥ ६१
यथा देवासुरं युद्धं पूर्वमासीद्विशांपते ।
अभीतानां तथाऽऽसीत्तद्यमराष्ट्रविवर्धनम् ॥ ६२
ततः कपिध्वजो राजन्हत्वा संशप्तकान्रणे ।
अभ्यद्रवत तां सेनां कौरवीं पाण्डुनन्दनः ॥ ६३
तथैव पाण्डवाः सर्वे धृष्टद्युम्नपुरोगमाः ।
अभ्यधावन्त तां सेनां विसृजन्तः शिताञ्शरान् ६४
पाण्डवैरवकीर्णानां संमोहः समजायत ।
न च जज्ञुस्त्वनीकानि दिशो वा विदिशस्तथा ६५
आपूर्यमाणा निशितैः शरैः पाण्डवचोदितैः ।
हतप्रवीरा विध्वस्ता वार्यमाणा समन्ततः ।
कौरव्यवध्यत चमूः पाण्डुपुत्रैर्महारथैः ॥ ६६
तथैव पाण्डवं सैन्यं शरै राजन्समन्ततः ।
रणेऽहन्यत पुत्रैस्ते शतशोऽथ सहस्रशः ॥ ६७
ते सेने भृशसंतप्ते वध्यमाने परस्परम् ।
व्याकुले समपद्येतां वर्षासु सरिताविव ॥ ६८
आविवेश ततस्तीव्रं तावकानां महद्भयम् ।
पाण्डवानां च राजेन्द्र तथाभूते महाहवे ॥ ६९

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

संकुलयुद्धम् ॥ १ ॥

संजय उवाच ।
तस्मिन्विलुलिते सैन्ये वध्यमाने परस्परम् ।
द्रवमाणेषु योधेषु विद्रवत्सु च दन्तिषु ॥ १
कूजतां स्तनतां चैव पदातीनां महाहवे ।

निहतेषु महाराज हयेषु बहुधा तदा ॥ २
अक्षये दारुणे घोरे संहारे सर्वदेहिनाम् ।
नानाशस्त्रसमावापे व्यतिषक्तरथद्विपे ॥ ३
हर्षणे युद्धशौण्डानां भीरूणां भयवर्धने ।
गाहमानेषु योधेषु परस्परवधैषिषु ॥ ४
प्राणादाने महाघोरे वर्तमाने दुरोदरे ।
संग्रामे घोररूपे तु यमराष्ट्रविवर्धने ॥ ५
पाण्डवास्तावकं सैन्यं व्यधमन्निशितैः शरैः ।
तथैव तावका योधा जघ्नुः पाण्डवसैनिकान् ॥ ६
तस्मिंस्तथा वर्तमाने युद्धे भीरुभयावहे ।
पूर्वाह्णे चापि संप्राप्ते भास्करोदयनं प्रति ॥ ७
लब्धलक्षाः परे राजन्रक्षितास्तु महात्मना ।
अयोधयंस्तव बलं मृत्युं कृत्वा निवर्तनम् ॥ ८
बलिभिः पाण्डवैर्दृप्तैर्लब्धलक्षैः प्रहारिभिः ।
कौरव्यसीदत्पृतना मृगीवाग्निभयाकुला ॥ ९
तां दृष्ट्वा सीदतीं सेनां पङ्के गामिव दुर्बलाम् ।
उज्जिहीर्षुस्तदा शल्यः प्रायात्पाण्डुसुतान्प्रति ॥ १०
मद्रराजः सुसंक्रुद्धो गृहीत्वा धनुरुत्तमम् ।
अभ्यद्रवत संग्रामे पाण्डवानाततायिनः ॥ ११
पाण्डवा अपि भूपाल समरे जितकाशिनः ।
मद्रराजं समासाद्य बिभिदुर्निशितैः शरैः ॥ १२
ततः शरशतैस्तीक्ष्णैर्मद्रराजो महारथः ।
अर्दयामास तां सेनां धर्मराजस्य पश्यतः ॥ १३
प्रादुरासन्निमित्तानि नानारूपाण्यनेकशः ।
चचाल शब्दं कुर्वाणा मही चापि सपर्वता ॥ १४
[सदण्डशूला दीप्ताग्रा दीर्यमाणाः समन्ततः ।]
उल्का भूमिं दिवः पेतुराहत्य रविमण्डलम् ॥ १५
मृगाश्च महिषाश्चापि पक्षिणश्च विशांपते ।
अपसव्यं तदा चक्रुः सेनां ते बहुशो नृप ॥ १६
[भृगुसूनुधरापुत्रौ शशिजेन समन्वितौ ।
चरमं पाण्डुपुत्राणां पुरस्तात्सर्वभूभुजाम् ॥ १७
शस्त्राग्रेष्वभवज्ज्वाला नेत्राण्याहत्य वर्षती ।
शिरःस्वलीयन्त भृशं काकोलूकाश्च केतुषु] ॥ १८
ततस्तद्युद्धमत्युग्रमभवत्सहचारिणाम् ।
तथा सर्वाण्यनीकानि सन्निपत्य जनाधिप ॥ १९
अभ्ययात्कौरवो राजा पाण्डवानामनीकिनीम् ।
शल्यस्तु शरवर्षेण वर्षन्निव सहस्रदृक् ॥ २०
अभ्यवर्षत धर्मात्मा कुन्तीपुत्रं युधिष्ठिरम् ।
भीमसेनं शरैश्चापि रुक्मपुङ्खैः शिलाशितैः ॥ २१
द्रौपदेयांस्तथा सर्वान्माद्रीपुत्रौ च पाण्डवौ ।
धृष्टद्युम्नं च शैनेयं शिखण्डिनमथापि च ॥ २२
एकैकं दशभिर्बाणैर्विव्याध स महाबलः ।
ततोऽसृजद्बाणवर्षं घर्मान्ते मघवानिव ॥ २३
ततः प्रभद्रका राजन्सोमकाश्च सहस्रशः ।
पतिताः पात्यमानाश्च दृश्यन्ते शल्यसायकैः ॥ २४
भ्रमराणामिव व्राताः शलभानामिव व्रजाः ।
ह्रादिन्य इव मेघेभ्यः शल्यस्य न्यपतञ्शराः ॥ २५
द्विरदास्तुरगाश्चार्ताः पत्तयो रथिनस्तथा ।
शल्यस्य बाणैरपतन्बभ्रमुर्व्यनदंस्तथा ॥ २६
आविष्ट इव मद्रेशो मन्युना पौरुषेण च ।
प्राच्छादयदरीन्सङ्ख्ये कालसृष्ट इवान्तकः ।
विनर्दमानो मद्रेशो मेघह्रादो महाबलः ॥ २७
सा वध्यमाना शल्येन पाण्डवानामनीकिनी ।
अजातशत्रुं कौन्तेयमभ्यधावद्युधिष्ठिरम् ॥ २८
तां संमर्द्य शतैः सङ्ख्ये लघुहस्तः शितैः शरैः ।
बाणवर्षेण महता युधिष्ठिरमताडयत् ॥ २९
तमापतन्तं जात्यश्वैः क्रुद्धो राजा युधिष्ठिरः ।
अवारयच्छरैस्तीक्ष्णैर्महाद्विपमिवाङ्कुशैः ॥ ३०
तस्य शल्यः शरं घोरं मुमोचाशीविषोपमम् ।
सोऽभ्यविध्यन्महात्मानं वेगेनाभ्यपतच्च गाम् ३१
ततो वृकोदरः क्रुद्धः शल्यं विव्याध सप्तभिः ।
पञ्चभिः सहदेवस्तु नकुलो दशभिः शरैः ॥ ३२
द्रौपदेयाश्च शत्रुघ्नं शूरमार्तायनिं शरैः ।
अभ्यवर्षन्महाराज मेघा इव महीधरम् ॥ ३३

भृग्विति । सर्वभूभुजां कृत्स्नपृथ्वीपतीनां पाण्डुपुत्राणां पाण्डवानां चरमं विलोमगणनया प्रथमं युधिष्ठिरमभिलक्ष्य शुक्रभौमबुधाः सप्तमस्थाने बलवहाः आसन् । एतच्च सर्वभूभुजामिति फलस्य जनकमित्यर्थः ॥ १७ ॥ आहत्य स्पृष्ट्वा । वर्षती भुवि पतन्ती ॥ १८ ॥

ततो दृष्ट्वा वार्यमाणं शल्यं पार्थैः समन्ततः ।
कृतवर्मा कृपश्चैव संक्रुद्धावभ्यधावताम् ॥ ३४
उलूकश्च महावीर्यः शकुनिश्चापि सौबलः ।
समागम्याथ शनकैरश्वत्थामा महाबलः ।
तव पुत्राश्च कार्त्स्न्येन जुगुपुः शल्यमाहवे ॥ ३५
भीमसेनं त्रिभिर्विद्ध्वा कृतवर्मा शिलीमुखैः ।
बाणवर्षेण महता क्रुद्धरूपमवारयत् ।
धृष्टद्युम्नं ततः क्रुद्धो बाणवर्षैरपीडयत् ॥ ३६
द्रौपदेयांश्च शकुनिर्यमौ च द्रौणिरभ्ययात् ॥ ३७
दुर्योधनो युधांश्रेष्ठ आहवे केशवार्जुनौ ।
समभ्ययादुग्रतेजाः शरैश्चाप्यहनद्बली ॥ ३८
एवं द्वन्द्वशतान्यासंस्त्वदीयानां परैः सह ।
घोररूपाणि चित्राणि तत्रतत्र विशांपते ॥ ३९
ऋक्षवर्णाञ्जघानाश्वान्भोजो भीमस्य संयुगे ।
सोऽवतीर्य रथोपस्थाद्धताश्वात्पाण्डुनन्दनः ।
कालो दण्डमिवोद्यम्य गदापाणिरयुध्यत ॥ ४०
प्रमुखे सहदेवस्य जघानाश्वान्स मद्रराट् ।
ततः शल्यस्य तनयं सहदेवोऽसिनावधीत् ॥ ४१
गौतमः पुनराचार्यो धृष्टद्युम्नमयोधयत् ।
असंभ्रान्तमसंभ्रान्तो यत्नवान्यत्नवत्तरम् ॥ ४२
द्रौपदेयांस्तथा वीरानेकैकं दशभिः शरैः ।
अविध्यदाचार्यसुतो नातिक्रुद्धो हसन्निव ॥ ४३
[पुनश्च भीमसेनस्य जघानाश्वांस्तथाऽऽहवे ।
सोऽवतीर्य रथात्तूर्णं हताश्वः पाण्डुनन्दनः ॥ ४४
कालो दण्डमिवोद्यम्य गदां क्रुद्धो महाबलः ।
पोथयामास तुरगान्रथं च कृतवर्मणः ।
कृतवर्मा त्ववप्लुत्य रथात्तस्मादपाक्रमत् ॥] ४५
शल्योऽपि राजन्संक्रुद्धो निघ्नन्सोमकपाण्डवान् ।
पुनरेव शितैर्बाणैर्युधिष्ठिरमपीडयत् ॥ ४६
तस्य भीमो रणे क्रुद्धः संदश्य दशनच्छदम् ।
विनाशायाभिसंधाय गदामादाय वीर्यवान् ॥ ४
यमदण्डप्रतीकाशां कालरात्रिमिवोद्यताम् ।
गजवाजिमनुष्याणां देहान्तकरणीमति ॥ ४
हेमपट्टपरिक्षिप्तामुल्कां प्रज्वलितामिव ।
शैक्यां व्यालीमिवात्युग्रां वज्रकल्पामयोमयीम् ४
चन्दनागुरुपङ्काक्तां प्रमदामीप्सितामिव ।
वसामेदोपदिग्धाङ्गीं जिह्वां वैवस्वतीमिव ॥ ५
पट्टघण्टाशतरवां वासवीमशनीमिव ।
निर्मुक्ताशीविषाकारां पृक्तां गजमदैरपि ॥ ५
त्रासनीं सर्वभूतानां स्वसैन्यपरिहर्षिणीम् ।
मनुष्यलोके विख्यातां गिरिशृङ्गविदारणीम् ॥ ५
यया कैलासभवने महेश्वरसखं बली ।
आह्वयामास कौन्तेयः संक्रुद्धमलकाधिपम् ॥ ५
यया मायामयान्दृप्तान्सुबहून्धनदालये ।
जघान गुह्यकान्क्रुद्धो मन्दारार्थे महाबलः ।
निवार्यमाणो बहुभिर्द्रौपद्याः प्रियमास्थितः ॥ ५४
तां वज्रमणिरत्नौघकल्माषां वज्रगौरवाम् ।
समुद्यम्य महाबाहुः शल्यमभ्यपतद्रणे ॥ ५५
गदया युद्धकुशलस्तया दारुणनादया ।
पोथयामास शल्यस्य चतुरोऽश्वान्महाजवान् ॥ ५६
ततः शल्यो रणे क्रुद्धः पीने वक्षसि तोमरम् ।
निचखान नदन्वीरो वर्म भित्त्वा च सोऽभ्ययात् ५७
वृकोदरस्त्वसंभ्रान्तस्तमेवोद्धृत्य तोमरम् ।
यन्तारं मद्रराजस्य निर्बिभेद तदा हृदि ॥ ५८
स भिन्नवर्मा रुधिरं वमन्वित्रस्तमानसः ।
पपाताभिमुखो भीमं मद्रराजस्त्वपाक्रमत् ॥ ५९
कृतप्रतिकृतं दृष्ट्वा शल्यो विस्मितमानसः ।
गदामाश्रित्य धर्मात्मा प्रत्यमित्रमवैक्षत ॥ ६०
ततः सुमनसः पार्था भीमसेनमपूजयन् ।
ते दृष्ट्वा कर्म संग्रामे घोरमक्लिष्टकर्मणः ॥ ६१

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे दशमोऽध्यायः ॥ १० ॥

परिक्षिप्तां परिच्छन्नाम् ॥ ४९ ॥ वासवीमैन्द्रीम् । रासनीमिति पाठे शब्दवतीम् ॥ ५१ ॥ महेश्वरसखं कुबेरम् ॥ ५३ ॥

दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

शल्यभीमयोर्गदायुद्धम् ॥ १ ॥

सञ्जय उवाच ।
पतितं प्रेक्ष्य यन्तारं शल्यः शैक्यायसीं गदाम् ।
आदाय तरसा राजंस्तस्थौ गिरिरिवाचलः ॥ १
तं दीप्तमिव कालाग्निं पाशहस्तमिवान्तकम् ।
सशृङ्गमिव कैलासं सवज्रमिव वासवम् ॥ २
सशूलमिव हर्यक्षं सचक्रमिव चक्रिणम् ।
सशक्तिमिव सेनान्यं वने मत्तमिव द्विपम् ।
जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ॥ ३
ततः शङ्खप्रणादश्च तूर्याणां च सहस्रशः ।
सिंहनादश्च संजज्ञे शूराणां हर्षवर्धनः ॥ ४
प्रैक्षन्त सर्वतस्तौ हि योधा मत्ताविव द्विपौ ।
तावकाश्चापरे चैव साधुसाध्वित्यपूजयन् ॥ ५
न हि मद्राधिपादन्यो रामाद्वा यदुनन्दनात् ।
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ॥ ६
तथा मद्राधिपस्यापि गदावेगं महात्मनः ।
सोढुमुत्सहते नान्यः पुमान्युधि वृकोदरात् ॥ ७
तौ वृषाविव नर्दन्तौ मण्डलानि विचेरतुः ।
आवर्तितौ गदाहस्तौ मद्रराजवृकोदरौ ॥ ८
मण्डलावर्तमार्गेषु गदाविहरणेषु च ।
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ ९
तप्तहेममयैः शुभ्रैर्बभूव भयवर्धिनी ।
अग्निज्वालैरिवाबद्धा पट्टैः शल्यस्य सा गदा ॥१०
तथैव चरतो मार्गान्मण्डलेषु महात्मनः ।
विद्युदभ्रप्रतीकाशा भीमस्य शुशुभे गदा ॥ ११
ताडिता मद्रराजेन भीमस्य गदया गदा ।
दह्यमानेव खे राजन्साऽसृजत्पावकार्चिषः ॥ १२
तथा भीमेन शल्यस्य ताडिता गदया गदा ।
अङ्गारवर्षं मुमुचे तदद्भुतमिवाभवत् ॥ १३
दन्तैरिव महानागौ शृङ्गैरिव महर्षभौ ।
तौ विरेजतुरन्योन्यं गदाग्राभ्यां परिक्षतौ ॥ १४
तौ गदाभिहतैर्गात्रैः क्षणेन रुधिरोक्षितौ ।
प्रेक्षणीयतरावास्तां पुष्पिताविव किंशुकौ ॥ १५
गदया मद्रराजस्य सव्यदक्षिणमाहतः ।
भीमसेनो महाबाहुर्न चचालाचलो यथा ॥ १६
तथा भीमगदावेगैस्ताड्यमानो मुहुर्मुहुः ।
शल्यो न विव्यथे राजन्दन्तिनेव महागिरिः ॥१७
शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः ।
गदानिपातसंह्रादो वज्रयोरिव निःस्वनः ॥ १८
निवृत्य तु महावीर्यौ समुच्छ्रितमहागदौ ।
पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ १९
अथाभ्येत्य पदान्यष्टौ सन्निपातोऽभवत्तयोः ।
उद्यम्य लोहदण्डाभ्यामतिमानुषकर्मणोः ॥ २०
पोथयन्तौ तदाऽन्योन्यं मण्डलानि विचेरतुः ।
क्रियाविशेषं कृतिनौ दर्शयामासतुस्तदा ॥ २१
अभ्युद्यतगदौ वीरौ सशृङ्गाविव पर्वतौ ।
तावाजघ्नतुरन्योन्यं मण्डलानि विचेरतुः ॥ २२
क्रियाविशेषकृतिनौ रणभूमितलेऽचलौ ।
तौ परस्परसंरम्भाद्गदाभ्यां सुभृशाहतौ ॥ २३
युगपत्पेततुर्वीरावुभाविन्द्रबली इव ।
उभयोः सेनयोर्योधास्तदा हाहाकृताभवन् ॥ २४
भृशं मर्मस्वभिहतावुभावास्तां सुविह्वलौ ॥ २५
ततः स्वरथमारोप्य मद्राणामृषभं रणे ।
अपोवाह कृपः शल्यं तूर्णमायोधनादथ ॥ २६
क्षीबवद्विह्वलत्वात्तु निमेषात्पुनरुत्थितः ।
भीमसेनो गदापाणिः समाह्वयत मद्रपम् ॥ २७
ततस्तु तावकाः शूरा नानाशस्त्रसमायुताः ।
नानावादित्रशब्देन पाण्डुसेनामयोधयन् ॥ २८
भुजावुच्छ्रित्य शस्त्रं च शब्देन महता ततः ।
अभ्यद्रवन्महाराज दुर्योधनपुरोगमाः ॥ २९
तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः ।
प्रययुः सिंहनादेन दुर्योधनवधेप्सया ॥ ३०
तेषामापततां तूर्णं पुत्रस्ते भरतर्षभ ।

हर्यक्षं रुद्रम् ॥ ३ ॥ शुभ्रैर्दीप्तिमद्भिः ॥ १० ॥

एकादशोऽध्यायः ॥ ११ ॥

प्रासेन चेकितानं वै विव्याध हृदये भृशम् ॥ ३१
स पपात रथोपस्थे तव पुत्रेण पातितः ।
रुधिरौघपरिक्लिन्नः प्रविश्य विपुलं तमः ॥ ३२
चेकितानं हतं दृष्ट्वा पाण्डवेया महारथाः ।
असक्तमभ्यवर्षन्त शस्त्रवर्षाणि भागशः ॥ ३३
तावकानामनीकेषु पाण्डवा जितकाशिनः ।
व्यचरन्त महाराज प्रेक्षणीयाः समन्ततः ॥ ३४
कृपश्च कृतवर्मा च सौबलश्च महारथः ।
अयोधयन्धर्मराजं मद्रराजपुरस्कृताः ॥ ३५
भारद्वाजस्य हन्तारं भूरिवीर्यपराक्रमम् ।
दुर्योधनो महाराज धृष्टद्युम्नमयोधयत् ॥ ३६
त्रिसाहस्रास्तथा राजंस्तव पुत्रेण चोदिताः ।
अयोधयन्त विजयं जैगतानां महारथाः ॥ ३७
विजये धृतसंकल्पाः समरे त्यक्तजीविताः ।
प्राविशंस्तावका राजन्हंसा इव महत्सरः ॥ ३८
ततो युद्धमभूद्घोरं परस्परवधैषिणाम् ।
अन्योन्यवधसंयुक्तमन्योन्यप्रीतिवर्धनम् ॥ ३९
तस्मिन्प्रवृत्ते संग्रामे राजन्वीरवरक्षये ।
अनिलेनेरितं घोरमुत्तस्थौ पार्थिवं रजः ॥ ४०
श्रवणान्नामधेयानां पार्थिवानां च कीर्तनात् ।
परस्परं विजानीमस्तदायुध्यन्नभीतवत् ॥ ४१
तद्रजः पुरुषव्याघ्र शोणितेन प्रशामितम् ।
दिशश्च विमला जातास्तस्मिन्रजसि नाशिते ॥ ४२
तथा प्रवृत्ते संग्रामे घोररूपे भयानके ।
तावकानां परेषां च नासीत्कश्चित्पराङ्मुखः ॥ ४३
ब्रह्मलोकपरा भूत्वा प्रार्थयन्तो जयं युधि ।
सुयुद्धेन पराक्रान्ता नराः स्वर्गमभीप्सवः ॥ ४४
भर्तृपिण्डविमोक्षार्थं भर्तृकार्यविनिश्चिताः ।
स्वर्गसंसक्तमनसो योधा युयुधिरे तदा ॥ ४५
नानारूपाणि शस्त्राणि विसृजन्तो महारथाः ।
अन्योन्यमभिगर्जन्तः प्रहरन्तः परस्परम् ॥ ४६
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत ।
इति स्म वाचः श्रूयन्ते तव तेषां च वै बले ॥ ४७
ततः शल्यो महाराज धर्मपुत्रं युधिष्ठिरम् ।
विव्याध निशितैर्बाणैर्हन्तुकामो महारथम् ।
तस्य पार्थो महाराज नाराचान्वै चतुर्दश ।
मर्माण्युद्दिश्य मर्मज्ञो निचखान हसन्निव ॥
आवार्य पाण्डवं बाणैर्हन्तुकामो महाबलः ।
विव्याध समरे क्रुद्धो बहुभिः कङ्कपत्रिभिः ॥
अथ मद्रो महाराज शरेणानतपर्वणा ।
युधिष्ठिरं समाजघ्ने सर्वसैन्यस्य पश्यतः ॥
धर्मराजोऽपि संक्रुद्धो मद्रराजं महाबलः ।
विव्याध निशितैर्बाणैः कङ्कबर्हिणवाजितैः ॥
चन्द्रसेनं च सप्तत्या सूतं च नवभिः शरैः ।
द्रुमसेनं चतुःषष्ट्या निजघान महारथः ॥
चक्ररक्षे हते शल्यः पाण्डवेन महात्मना ।
निजघान ततो राजंश्चेदीन्वै पञ्चविंशतिम् ॥
सात्यकिं पञ्चविंशत्या भीमसेनं च पञ्चभिः ।
माद्रीपुत्रौ शतेनाजौ विव्याध निशितैः शरैः ॥
एवं विचरतस्तस्य संग्रामे राजसत्तम ।
संप्रैषयच्छितान्पार्थः शरानाशीविषोपमान् ॥ ५
ध्वजाग्रं चास्य समरे कुन्तीपुत्रो युधिष्ठिरः ।
प्रमुखे वर्तमानस्य भल्लेनापाहरद्रथात् ॥ ५
पाण्डुपुत्रेण वै तस्य केतुं छिन्नं महात्मना ।
निपतन्तमपश्याम गिरिशृङ्गमिवाहतम् ॥ ५
ध्वजं निपतितं दृष्ट्वा पाण्डवं च व्यवस्थितम् ।
संक्रुद्धो मद्रराजोऽभूच्छरवर्षं मुमोच ह ॥ ५
शल्यः सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियान्क्षत्रियर्षभः ॥ ६
सात्यकिं भीमसेनं च माद्रीपुत्रौ च पाण्डवौ ।
एकैकं पञ्चभिर्विद्ध्वा युधिष्ठिरमपीडयत् ॥ ६१
ततो बाणमयं जालं विततं पाण्डवोरसि ।
अपश्याम महाराज मेघजालमिवोद्गतम् ॥ ६२
तस्य शल्यो रणे क्रुद्धः शरैः सन्नतपर्वभिः ।
दिशः संछादयामास प्रदिशश्च महारथः ॥ ६३
ततो युधिष्ठिरो राजा बाणजालेन पीडितः ।
बभूव हतविक्रान्तो जम्भो वृत्रहणा यथा ॥ ६४

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

शल्यपराक्रमवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
पीडिते धर्मराजे तु मद्रराजेन मारिष ।
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
परिवार्य रथैः शल्यं पीडयामासुराहवे ॥ १
तमेकं बहुभिर्दृष्ट्वा पीड्यमानं महारथैः ।
साधुवादो महाञ्जज्ञे सिद्धाश्चासन्प्रहर्षिताः ॥ २
आश्चर्यमित्यभाषन्त मुनयश्चापि संगताः ॥ ३
भीमसेनो रणे शल्यं शल्यभूतं पराक्रमे ।
एकेन विद्ध्वा बाणेन पुनर्विव्याध सप्तभिः ॥ ४
सात्यकिश्च शतेनैनं धर्मपुत्रपरीप्सया ।
मद्रेश्वरमवाकीर्य सिंहनादमथानदत् ॥ ५
नकुलः पञ्चभिश्चैनं सहदेवश्च पञ्चभिः ।
विद्ध्वा तं तु पुनस्तूर्णं ततो विव्याध सप्तभिः ॥ ६
स तु शूरो रणे यत्तः पीडितस्तैर्महारथैः ।
विकृष्य कार्मुकं घोरं भारघ्नं वेगवत्तरम् ॥ ७
सात्यकिं पञ्चविंशत्या शल्यो विव्याध मारिष ।
भीमसेनं तु सप्तत्या नकुलं सप्तभिस्तथा ॥ ८
ततः स विशिखं चापं सहदेवस्य धन्विनः ।
छित्त्वा भल्लेन समरे विव्याधैनं त्रिसप्तभिः ॥ ९
सहदेवस्तु समरे मातुलं भूरिवर्चसम् ।
सज्यमन्यद्धनुः कृत्वा पञ्चभिः समताडयत् ।
शरैराशीविषाकारैर्ज्वलज्ज्वलनसन्निभैः ॥ १०
सारथिं चास्य समरे शरेणानतपर्वणा ।
विव्याध भृशसंक्रुद्धस्तं वै भूयस्त्रिभिः शरैः ॥ ११
भीमसेनस्तु सप्तत्या सात्यकिर्नवभिः शरैः ।
धर्मराजस्तथा षष्ट्या गात्रे शल्यं समार्पयत् ॥ १२
ततः शल्यो महाराज निर्विद्धस्तैर्महारथैः ।
सुस्राव रुधिरं गात्रैर्गैरिकं पर्वतो यथा ॥ १३
तांश्च सर्वान्महेष्वासान्पञ्चभिः पञ्चभिः शरैः ।
विव्याध तरसा राजंस्तदद्भुतमिवाभवत् ॥ १४
ततोऽपरेण भल्लेन धर्मपुत्रस्य मारिष ।
धनुश्चिच्छेद समरे सज्यं स सुमहारथः ॥ १५
अथान्यद्धनुरादाय धर्मपुत्रो युधिष्ठिरः ।
साश्वसूतध्वजरथं शल्यं प्राच्छादयच्छरैः ॥ १६
स च्छाद्यमानः समरे धर्मपुत्रस्य सायकैः ।
युधिष्ठिरमथाविध्यद्दशभिर्निशितैः शरैः ॥ १७
सात्यकिस्तु ततः क्रुद्धो धर्मपुत्रे शरार्दिते ।
मद्राणामधिपं शूरं शरैर्विव्याध पञ्चभिः ॥ १८
स सात्यकेः प्रचिच्छेद क्षुरप्रेण महद्धनुः ।
भीमसेनमुखांस्तांश्च त्रिभिस्त्रिभिरताडयत् ॥ १९
तस्य क्रुद्धो महाराज सात्यकिः सत्यविक्रमः ।
तोमरं प्रेषयामास स्वर्णदण्डं महारणे ॥ २०
भीमसेनोऽथ नाराचं ज्वलन्तमिव पन्नगम् ।
नकुलः समरे शक्तिं सहदेवो गदां शुभाम् ।
धर्मराजः शतघ्नीं च जिघांसुः शल्यमाहवे ॥ २१
तानापतत एवाशु मश्वानां वै भुजच्युतान् ।
वारयामास समरे शस्त्रसङ्घैः स मद्रराट् ॥ २२
सात्यकिप्रहितं शल्यो भल्लैश्चिच्छेद तोमरम् ।
प्रहितं भीमसेनेन शरं कनकभूषणम् ॥ २३
द्विधा चिच्छेद समरे कृतहस्तः प्रतापवान् ।
नकुलप्रेषितां शक्तिं हेमदण्डां भयावहाम् ॥ २४
गदां च सहदेवेन शरौघैः समवारयत् ।
शराभ्यां च शतघ्नीं तां राज्ञश्चिच्छेद भारत ॥ २५
पश्यतां पाण्डुपुत्राणां सिंहनादं ननाद च ।
नामृष्यत्तत्र शैनेयः शत्रोर्विजयमाहवे ॥ २६
अथान्यद्धनुरादाय सात्यकिः क्रोधमूर्च्छितः ।
द्वाभ्यां मद्रेश्वरं विद्ध्वा सारथिं च त्रिभिः शरैः ॥ २७
ततः शल्यो रणे राजन्सर्वांस्तान्दशभिः शरैः ।
विव्याध भृशसंक्रुद्धस्तोत्रैरिव महाद्विपान् ॥ २८
ते वार्यमाणाः समरे मद्रराज्ञा महारथाः ।
न शेकुः संमुखे स्थातुं तस्य शत्रुनिषूदनाः ॥ २९
ततो दुर्योधनो राजा दृष्ट्वा शल्यस्य विक्रमम् ।

सहदेवेन प्रेषितामिति पूर्वस्मात्संबध्यते ॥ २५ ॥ सारथिं च विव्याधेत्युत्तरस्मादपकृष्यते ॥ २७ ॥

निहतान्पाण्डवान्मेने पाञ्चालानथ सृञ्जयान् ३०
'तथाविधं महाराज मद्रराजस्य विक्रमम् ।
अमर्त्यं मानवं युद्धे तद्बभूव नरर्षभ ॥' ३१
ततो राजन्महाबाहुर्भीमसेनः प्रतापवान् ।
संत्यज्य मनसा प्राणान्मद्राधिपमयोधयत् ॥ ३२
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
परिवार्य तदा शल्यं समन्ताद्व्यकिरञ्शरैः ॥ ३३
स चतुर्भिर्महेष्वासैः पाण्डवानां महारथः ।
वृतस्तान्योधयामास मद्रराजः प्रतापवान् ॥ ३४
तस्य धर्मसुतो राजन्क्षुरप्रेण महाहवे ।
चक्ररक्षं जघानाशु मद्रराजस्य पार्थिवः ॥ ३५
तस्मिंस्तु निहते शूरे चक्ररक्षे महारथे ।
मद्रराजोऽपि बलवान्सैनिकानावृणोच्छरैः ॥ ३६
समावृतांस्ततस्तांस्तु राजन्वीक्ष्य स्वसैनिकान् ।
चिन्तयामास समरे धर्मपुत्रो युधिष्ठिरः ॥ ३७
कथं नु न भवेत्सत्यं तन्माधववचो महत् ।
अपि क्रुद्धो रणे राजन्क्षपयेत बलं मम ॥ ३८
*अहं मद्भ्रातरश्चैव सात्यकिश्च महारथः ।
पाञ्चालाः सृञ्जयाश्चैव न शक्ताः स्म हि मद्रपम् ३९
निहनिष्यति चैवाद्य मातुलोऽस्मान्महाबलः ।
गोविन्दवचनं सत्यं कथं भवति किंन्विदम् ॥४०

ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज
मद्रराजं समासेदुः पीडयन्तः समन्ततः ।
नानाशस्त्रौघबहुलां शस्त्रवृष्टिं समुद्यताम् ।
व्यधमत्समरे राजा महाभ्राणीव मारुतः ।
ततः कनकपुङ्खां तां शल्यक्षिप्तां वियद्गताः
शरवृष्टिमपश्याम शलभानामिवायतिम् ॥
ते शरा मद्रराजेन प्रेषिता रणमूर्धनि ।
संपतन्तः स्म दृश्यन्ते शलभानां व्रजा इव ॥
मद्रराजधनुर्मुक्तैः शरैः कनकभूषणैः ।
निरन्तरमिवाकाशं संबभूव जनाधिप ॥
न पाण्डवानां नास्माकं तत्र किंचिद्व्यदृश्यत
बाणान्धकारे महति कृते तत्र महाहवे ॥
मद्रराजेन बलिना लाघवाच्छरवृष्टिभिः ।
चाल्यमानं तु तं दृष्ट्वा पाण्डवानां बलार्णवम्
विस्मयं परमं जग्मुर्देवगन्धर्वदानवाः ॥ ४
स तु तान्सर्वतो यत्ताञ्शरैः संछाद्य मारिष ।
धर्मराजमवच्छाद्य सिंहवद्व्यनदन्मुहुः ॥ ४
ते छन्नाः समरे तेन पाण्डवानां महारथाः ।
नाशक्नुवंस्तदा युद्धे प्रत्युद्यातुं महारथम् ॥ ४
धर्मराजपुरोगास्तु भीमसेनमुखा रथाः ।
निजघ्नुः समरे शूरं शल्यमाहवशोभिनम् ॥ ५

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ॥ १३ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
अर्जुनो द्रौणिना विद्धो युद्धे बहुभिरायसैः ।
तस्य चानुचरैः शूरैस्त्रिगर्तानां महारथैः ॥ १
द्रौणिं विव्याध समरे त्रिभिरेव शिलीमुखैः ।
तथेतरान्महेष्वासान्द्वाभ्यां द्वाभ्यां धनञ्जयः ।
भूयश्चैव महाराज शरवर्षैरवाकिरत् ॥ २
शरकण्टकितास्ते तु तावका भरतर्षभ ।

न जहुः पार्थमासाद्य ताड्यमानाः शितैः शरैः ॥ ३
अर्जुनं रथवंशेन द्रोणपुत्रपुरोगमाः ।
परिवार्य मुदा युक्ता योधयन्तश्चकाशिरे ॥ ४
तैस्तु क्षिप्ताः शरा राजन्कार्तस्वरविभूषिताः ।
अर्जुनस्य रथोपस्थं पूरयामासुरञ्जसा ॥ ५
तथा कृष्णौ महेष्वासौ वृषभौ सर्वधन्विनाम् ।
विव्यधुश्च शरैर्घोरैः प्रहृष्टा युद्धदुर्मदाः ॥ ६

---

*कथं नु समरे शक्यं—नहि क्रुद्धो रणे इति झ. पाठः ॥ ३८ ॥

द्वादशोऽध्यायः ॥ १२ ॥

कूबरं रथचक्राणि ईषा योक्त्राणि वा विभो ।
युगं चैवानुकर्षं च शरभूतमभूत्तदा ॥ ७
नैतादृशं दृष्टपूर्वं राजन्नेव च नः श्रुतम् ।
यादृशं तत्र पार्थस्य तावकाः संप्रचक्रिरे ॥ ८
स रथः सर्वतो भाति चित्रपुङ्खैः शितैः शरैः ।
उल्काशतैः संप्रदीप्तं विमानमिव भूतले ॥ ९
ततोऽर्जुनो महाराज शरैः सन्नतपर्वभिः ।
अवाकिरत्तां पृतनां मेघो वृष्ट्येव पर्वतम् ॥ १०
ते वध्यमानाः समरे पार्थनामाङ्कितैः शरैः ।
पार्थभूतममन्यन्त प्रेक्षमाणास्तथाविधम् ॥ ११
कोपोद्भूतशरज्वालो धनुःशब्दानिलो महान् ।
सैन्येन्धनं ददाहाशु तावकं पार्थपावकः ॥ १२
चक्राणां पततां चापि युगानां च धरातले ।
तूणीराणां पताकानां ध्वजानां च रथैः सह ॥ १३
ईषाणामनुकर्षाणां त्रिवेणूनां च भारत ।
अक्षाणामथ योक्त्राणां प्रतोदानां च राशयः ॥ १४
शिरसां पततां चापि कुण्डलोष्णीषधारिणाम् ।
भुजानां च महाभाग स्कन्धानां च समन्ततः ॥ १५
छत्राणां व्यजनैः सार्धं मकुटानां च राशयः ।
समदृश्यन्त पार्थस्य रथमार्गेषु भारत ॥ १६
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ।
भीरूणां त्रासजननी शूराणां हर्षवर्धिनी ।
बभूव भरतश्रेष्ठ रुद्रस्याक्रीडनं यथा ॥ १७
हत्वा तु समरे पार्थः सहस्रे द्वे परंतपः ।
रथानां सवरूथानां विधूमोऽग्निरिव ज्वलन् ॥ १८
यथा हि भगवानग्निर्जगद्दग्ध्वा चराचरम् ।
विधूमो दृश्यते राजंस्तथा पार्थो धनञ्जयः ॥ १९
द्रौणिस्तु समरे दृष्ट्वा पाण्डवस्य पराक्रमम् ।
रथेनातिपताकेन पाण्डवं प्रत्यवारयत् ॥ २०
तावुभौ पुरुषव्याघ्रौ श्वेताश्वौ धन्विनां वरौ ।
समीयतुस्तदाऽन्योन्यं परस्परवधैषिणौ ॥ २१
तयोरासीन्महाराज बाणवर्षं सुदारुणम् ।
जीमूतयोर्यथा वृष्टिस्तपान्ते भरतर्षभ ॥ २२
अन्योन्यस्पर्धिनौ तौ तु शरैः सन्नतपर्वभिः ।
ततक्षतुस्तदाऽन्योन्यं शृङ्गाभ्यां वृषभाविव ॥ २३
तयोर्युद्धं महाराज चिरं सममिवाभवत् ।
शस्त्राणां संगमश्चैव घोरस्तत्राभवत्पुनः ॥ २४
ततोऽर्जुनं द्वादशभी रुक्मपुङ्खैः सुतेजनैः ।
वासुदेवं च दशभिर्द्रौणिर्विव्याध भारत ॥ २५
ततः प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः ।
मानयित्वा मुहूर्तं तु गुरुपुत्रं महाहवे ॥ २६
व्यश्वसूतरथं चक्रे सव्यसाची परंतपः ।
मृदुपूर्वं ततश्चैनं पुनःपुनरताडयत् ॥ २७
हताश्वे तु रथे तिष्ठन्द्रोणपुत्रस्त्वयस्मयम् ।
मुसलं पाण्डुपुत्राय चिक्षेप परिघोपमम् ॥ २८
तमापतन्तं सहसा हेमपट्टविभूषितम् ।
चिच्छेद सप्तधा वीरः पार्थः शत्रुनिबर्हणः ॥ २९
स च्छिन्नं मुसलं दृष्ट्वा द्रौणिः परमकोपनः ।
आददे परिघं घोरं नगेन्द्रशिखरोपमम् ।
चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ॥ ३०
तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः ।
अर्जुनस्त्वरितो जघ्ने पञ्चभिः सायकोत्तमैः ॥ ३१
स च्छिन्नः पतितो भूमौ पार्थबाणैर्महाहवे ।
दारयन्पृथिवीन्द्राणां मनः शब्देन भारत ॥ ३२
ततोऽपरैस्त्रिभिर्भल्लैर्द्रौणिं विव्याध पाण्डवः ॥ ३३
सोऽतिविद्धो बलवता पार्थेन सुमहात्मना ।
नाकम्पत तदा द्रौणिः पौरुषेषु व्यवस्थितः ॥ ३४
सुरथं च ततो राजन्भारद्वाजो महारथम् ।
अवाकिरच्छरव्रातैः सर्वक्षत्रस्य पश्यतः ॥ ३५
ततस्तु सुरथोऽप्याजौ पाञ्चालानां महारथः ।
रथेन मेघघोषेण द्रौणिमेवाभ्यधावत ॥ ३६
विकर्षन्वै धनुःश्रेष्ठं सर्वभारसहं दृढम् ।
ज्वलनाशीविषनिभैः शरैश्चैनमवाकिरत् ॥ ३७
सुरथं तं ततः क्रुद्धमापतन्तं महारथम् ।
चुकोप समरे द्रौणिर्दण्डाहत इवोरगः ॥ ३८
त्रिशिखां भ्रुकुटीं कृत्वा सृक्किणी परिसंलिहन् ।
उद्वीक्ष्य सुरथं रोषाद्धनुर्ज्यामवमृज्य च ।
मुमोच तीक्ष्णं नाराचं यमदण्डोपमद्युतिम् ॥ ३९
स तस्य हृदयं भित्त्वा प्रविवेशातिवेगितः ।
शक्राशनिरिवोत्सृष्टो विदार्य धरणीतलम् ॥ ४०

ततः स पतितो भूमौ नाराचेन समाहतः ।
वज्रेण च यथा शृङ्गं पर्वतस्येव दीर्यतः ॥ ४१
तस्मिन्विनिहते वीरे द्रोणपुत्रः प्रतापवान् ।
आरुरोह रथं तूर्णं तमेव रथिनां वरः ॥ ४२
ततः सज्जो महाराज द्रौणिराहवदुर्मदः ।
अर्जुनं योधयामास संशप्तकवृतो रणे ॥ ४३
तत्र युद्धं महच्चासीदर्जुनस्य परैः सह ।
मध्यंदिनगते सूर्ये यमराष्ट्रविवर्धनम् ॥ ४
तत्राश्चर्यमपश्याम दृष्ट्वा तेषां पराक्रमम् ।
यदेको युगपद्वीरान्समयोधयदर्जुनः ॥ ४
विमर्दः सुमहानासीदर्जुनस्य परैः सह ।
शतक्रतोर्यथापूर्वं महत्या दैत्यसेनया ॥ ४

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ॥ १४ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
दुर्योधनो महाराज धृष्टद्युम्नश्च पार्षतः ।
चक्रतुः सुमहद्युद्धं शरशक्तिसमाकुलम् ॥ १
ततो राजन्समापेतुः शरधाराः सहस्रशः ।
अम्बुदानां यथा काले जलधाराः समन्ततः ॥२
राजा च पार्षतं विद्ध्वा शरैः पञ्चभिराशुगैः ।
द्रोणहन्तारमुग्रेषुं पुनर्विव्याध सप्तभिः ॥ ३
धृष्टद्युम्नस्तु समरे बलवान्दृढविक्रमः ।
सप्तत्या विशिखानां वै दुर्योधनमपीडयत् ॥ ४
पीडितं वीक्ष्य राजानं सोदर्या भरतर्षभ ।
महत्या सेनया सार्धं परिवव्रुः स पार्षतम् ॥ ५
स तैः परिवृतः शूरः सर्वतोऽतिरथैर्भृशम् ।
व्यचरत्समरे राजन्दर्शयन्नस्त्रलाघवम् ॥ ६
शिखण्डी कृतवर्माणं गौतमं च महारथम् ॥
प्रभद्रकैः समायुक्तो योधयामास धन्विनौ ॥ ७
तत्रापि सुमहद्युद्धं घोररूपं विशांपते ।
प्राणान्संत्यजतां युद्धे प्राणद्यूताभिदेवने ॥ ८
शल्यः सायकवर्षाणि विमुञ्चन्सर्वतोदिशम् ।
पाण्डवान्पीडयामास ससात्यकिवृकोदरान् ॥ ९
तथा तौ तु यमौ युद्धे यमतुल्यपराक्रमौ ।
योधयामास राजेन्द्र वीर्येणास्त्रबलेन च ॥ १०
शल्यसायकनुन्नानां पाण्डवानां महामृधे ।
त्रातारं नाध्यगच्छन्त केचित्तत्र महारथाः ॥ ११
ततस्तु नकुलः शूरो धर्मराजे प्रपीडिते ।
अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः ॥ १
संछाद्य समरे वीरं नकुलः परवीरहा ।
विव्याध चैनं दशभिः स्मयमानः स्तनान्तरे ॥ १
सर्वपारसवैर्बाणैः कर्मारपरिमार्जितैः ।
स्वर्णपुङ्खैः शिलाधौतैर्धनुर्यन्त्रप्रचोदितैः ॥ १
शल्यस्तु पीडितस्तेन स्वस्रीयेण हि मातुलः ।
नकुलं पीडयामास पत्रिभिर्नतपर्वभिः ॥ १
ततो युधिष्ठिरो राजा भीमसेनोऽथ सात्यकिः
सहदेवश्च माद्रेयो मद्रराजमुपाद्रवन् ॥ १
तानापतत एवाशु पूरयाणान्रथस्वनैः ।
दिशश्च विदिशश्चैव कम्पयानांश्च मेदिनीम् ।
प्रतिजग्राह समरे सेनापतिरमित्रजित् ॥ १
युधिष्ठिरं त्रिभिर्विद्ध्वा भीमसेनं च पञ्चभिः ।
सात्यकिं च शतेनाजौ सहदेवं त्रिभिः शरैः ॥ १
ततस्तु सशरं चापं नकुलस्य महात्मनः ।
मद्रेश्वरः क्षुरप्रेण मध्ये चिच्छेद मारिष ॥ १
तदपास्य धनुश्छिन्नं ततः शल्यस्य सायकैः ।
अथान्यद्धनुरादाय माद्रीपुत्रो महारथः ।
मद्रराजरथं तूर्णं पूरयामास पत्रिभिः ॥ २
युधिष्ठिरस्तु मद्रेशं सहदेवश्च मारिष ।
दशभिर्दशभिर्बाणैरुरस्येनमविध्यताम् ॥ २
भीमसेनस्तु तं षष्ट्या सात्यकिर्दशभिः शरैः ।
मद्रराजमभिद्रुत्य जघ्नतुः कङ्कपत्रिभिः ॥ २
मद्रराजस्ततः क्रुद्धः सात्यकिं नवभिः शरैः ।

विव्याध भूयः सप्तत्या शराणां नतपर्वणाम् २३
अथास्य सशरं चापं मुष्टौ चिच्छेद मारिष ।
हयांश्च चतुरः सङ्ख्ये प्रेषयामास मृत्यवे ॥ २४
विरथं सात्यकिं कृत्वा मद्रराजो महारथः ।
विशिखानां शतेनैनमाजघान समन्ततः ॥ २५
माद्रीपुत्रं च संरब्धो भीमसेनं च पाण्डवम् ।
युधिष्ठिरं च कौरव्य विव्याध दशभिः शरैः ॥२६
तत्राद्भुतमपश्याम मद्रराजस्य पौरुषम् ।
यदेनं सहिताः पार्था नाभ्यवर्तन्त संयुगे ॥ २७
अथान्यं रथमास्थाय सात्यकिः सत्यविक्रमः ।
पीडितान्पाण्डवान्दृष्ट्वा मद्रराजवशं गतान् ।
अभिदुद्राव वेगेन मद्राणामधिपं बलात् ॥ २८
आपतन्तं रथं तस्य शल्यः समितिशोभनः ।
प्रत्युद्ययौ रथेनैव मत्तो मत्तमिव द्विपम् ॥ २९
स सन्निपातस्तुमुलो बभूवाद्भुतदर्शनः ।
सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च ।
यादृशो वै पुरा वृत्तः शम्बरामरराजयोः ॥ ३०
सात्यकिः प्रेक्ष्य समरे मद्रराजमवस्थितम् ।
विव्याध दशभिर्बाणैस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ३१
मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना ।
सात्यकिं प्रतिविव्याध चित्रपुङ्खैः शितैः शरैः ३२
ततः पार्था महेष्वासाः सात्वताभिसृतं नृपम् ।
अभ्यवर्तन्रथैस्तूर्णं मातुलं वधकाङ्क्षया ॥ ३३
तत आसीत्परामर्दस्तुमुलः शोणितोदकः ।
शूराणां युध्यमानानां सिंहानामिव नर्दताम् ३४
तेषामासीन्महाराज व्यधिक्षेपः परस्परम् ।
सिंहानामामिषेप्सूनां कूजतामिव संयुगे ॥ ३५
तेषां बाणसहस्रौघैराकीर्णा वसुधाऽभवत् ।
अन्तरिक्षं च सहसा बाणभूतमभूत्तदा ॥ ३६
शरान्धकारं सहसा कृतं तेन समन्ततः ।
अभ्रच्छायेव संजज्ञे शरैर्मुक्तैर्महात्मभिः ॥ ३७
तत्र राजञ्शरैर्मुक्तैर्निर्मुक्तैरिव पन्नगैः ।
स्वर्णपुङ्खैः प्रकाशद्भिर्व्यरोचन्त दिशस्तदा ॥ ३८
तत्राद्भुतं परं चक्रे शल्यः शत्रुनिबर्हणः ।
यदेकः समरे शूरो योधयामास वै बहून् ॥ ३९
मद्रराजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः ।
संपतद्भिः शरैर्घोरैरवाकीर्यत मेदिनी ॥ ४०
तत्र शल्यरथं राजन्विचरन्तं महाहवे ।
अपश्याम यथापूर्वं शक्रस्यासुरसंक्षये ॥ ४१

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ॥ १५ ॥

शल्ययुधिष्ठिरयोर्युद्धम् ॥ १ ॥

सञ्जय उवाच ।
ततः सेना तव विभो मद्रराजपुरस्कृता ।
पुनरभ्यद्रवत्पार्थान्वेगेन महता रणे ॥ १
पीडितास्तावकाः सर्वे प्रधावन्तो रणोत्कटाः ।
क्षणेन चैव पार्थास्ते बहुत्वात्समलोडयन् ॥ २
ते वध्यमानाः समरे पाण्डवा नावतस्थिरे ।
क्षणेनैव महाराज पश्यतोः कृष्णपार्थयोः ॥ ३
ततो धनञ्जयः क्रुद्धः कृपं सह पदानुगैः ।
अवाकिरच्छरौघेण कृतवर्माणमेव च ॥ ४
शकुनिं सहदेवस्तु सहसैन्यमवाकिरत् ।
नकुलः पार्श्वतः स्थित्वा मद्रराजमयोधयत् ॥ ५
द्रौपदेया नरेन्द्राश्च भूयिष्ठान्समवारयन् ।
द्रोणपुत्रं च पाञ्चाल्यः शिखण्डी समवारयत् ॥ ६
भीमसेनस्तु राजानं गदापाणिरवारयत् ।
शल्यं तु सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ॥ ७
ततः समभवद्युद्धं संसक्तं तत्रतत्र ह ।
तावकानां परेषां च संग्रामेष्वनिवर्तिनाम् ॥ ८
तत्र पश्यामहे कर्म शल्यस्यातिमहद्रणे ।
यदेकः सर्वसैन्यानि पाण्डवानामयोधयत् ॥ ९
व्यदृश्यत तदा शल्यो युधिष्ठिरसमीपतः ।

क्रूरश्चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः ॥ १०
पीडयित्वा तु राजानं शरैराशीविषोपमैः ।
अभ्यधावत्पुनर्भीमं शरवर्षैरवाकिरत् ॥ ११
तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्रताम् ।
अपूजयन्ननीकानि परेषां तावकानि च ॥ १२
पीड्यमानास्तु शल्येन पाण्डवा भृशविक्षताः ।
प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे ॥ १३
वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः ।
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः ॥ १४
ततः पौरुषमास्थाय मद्रराजमताडयत् ।
जयो वाऽस्तु वधो वेति कृतबुद्धिर्महारथः ॥ १५
समाहूयाब्रवीत्सर्वान्भ्रातॄन्कृष्णं च पाण्डवः ॥ १६
भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः ।
कौरवार्थे पराक्रान्ताः संग्रामे निधनं गताः ।
यथाभागं यथोत्साहं भवन्तः कृतपौरुषाः ॥ १७
भागोऽवशिष्ट एकोऽयं मम शल्यो महारथः ।
सोऽहमद्य युधा जेतुमाशंसे मद्रकाधिपम् ॥ १८
तत्र यन्मानसं मह्यं तत्सर्वं निगदामि वः ।
चक्ररक्षाविमौ वीरौ मम माद्रवतीसुतौ ॥ १९
अजेयौ वासवेनापि समरे शूरसंमतौ ।
साध्विमौ मातुलं युद्धे क्षत्रधर्मपुरस्कृतौ ॥ २०
मदर्थे प्रतियुध्येतां मानार्हौ सत्यसंगरौ ।
मां वा शल्यो रणे हन्ता तं वाऽहं भद्रमस्तु वः ।
इति सत्यामिमां वाणीं लोकवीरा निबोधत ॥ २१
योत्स्येऽहं मातुलेनाद्य क्षात्रधर्मेण पार्थिवाः ।
स्वमंशमभिसंधाय विजयायेतराय वा ॥ २२
तस्य मेऽप्यधिकं शस्त्रं सर्वोपकरणानि च ।
संयुज्यन्तां रथे क्षिप्रं शास्त्रवद्रथयोजकैः ॥ २३
शैनेयो दक्षिणं चक्रं धृष्टद्युम्नस्तथोत्तरम् ।
पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः ॥ २४
पुरःसरो ममाद्यास्तु भीमः शस्त्रभृतां वरः ।
एवमभ्यधिकः शल्याद्भविष्यामि महामृधे ॥ २५
एवमुक्तास्तथा चक्रुस्तदा राज्ञः प्रियैषिणः ॥ २६
ततः प्रहर्षः सैन्यानां पुनरासीत्तदा मृधे ।
पाञ्चालानां सोमकानां मात्स्यानां च विशेषतः ॥
प्रतिज्ञातं च संग्रामे धर्मराजस्य पूजयन् ।
ततः शङ्खांश्च भेरीश्च शतशश्चैव पुष्करान् ।
अवादयन्त पाञ्चालाः सिंहनादांश्च नेदिरे ॥ २
तेऽभ्यधावन्त संरब्धा मद्रराजं तरस्विनम् ।
महता हर्षजेनाथ नादेन कुरुपुङ्गवाः ॥ २
ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
तूर्यशब्देन महता नादयन्तश्च मेदिनीम् ॥ ३
तान्प्रत्यगृह्णात्पुत्रस्ते मद्रराजश्च वीर्यवान् ।
महामेघानिव बहूञ्शैलावस्तोदयावुभौ ॥ ३
शल्यस्तु समरश्लाघी धर्मराजमरिंदमम् ।
ववर्ष शरवर्षेण शम्बरं मघवा इव ॥ ३
तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः ।
द्रोणोपदेशान्विविधान्दर्शयानो महामनाः ।
ववर्ष शरवर्षाणि चित्रं लघु च सुष्ठु च ॥ ३
न चास्य विवरं कश्चिद्ददर्श चरतो रणे ॥ ३
तावुभौ विविधैर्बाणैस्ततक्षाते परस्परम् ।
शार्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे ॥ ३
भीमस्तु तव पुत्रेण युद्धशौण्डेन सङ्गतः ॥ ३
पाञ्चाल्यः सात्यकिश्चैव माद्रीपुत्रौ च पाण्डवौ
शकुनिप्रमुखान्वीरान्प्रत्यगृह्णन्समन्ततः ॥
तदासीत्तुमुलं युद्धं पुनरेव जयैषिणाम् ।
तावकानां परेषां च राजन्दुर्मन्त्रिते तव ॥
दुर्योधनस्तु भीमस्य शरेणानतपर्वणा ।
चिच्छेदादिश्य सङ्ग्रामे ध्वजं हेमपरिष्कृतम् ॥
स किङ्किणीकजालेन महता चारुदर्शनः ।
पपात रुचिरः सिंहो भीमसेनस्य पश्यतः ॥
पुनश्चास्य धनुश्चित्रं गजराजकरोपमम् ।
क्षुरेण शितधारेण प्रचकर्त नराधिपः ॥
स च्छिन्नधन्वा तेजस्वी रथशक्त्या सुतं तव ।
बिभेदोरसि विक्रम्य स रथोपस्थ आविशत् ॥
तस्मिन्मोहमनुप्राप्ते पुनरेव वृकोदरः ।
यन्तुरेव शिरः कायात्क्षुरप्रेणाहरत्तदा ॥
हतसूता हयास्तस्य रथमादाय भारत ।

रथशक्त्या रथस्थया शक्त्या ॥ ४२ ॥

व्यद्रवन्त दिशो राजन्हाहाकारस्तदाऽभवत् ॥ ४४
तमभ्यधावंस्त्राणार्थं द्रोणपुत्रो महारथः ।
कृपश्च कृतवर्मा च पुत्रं ते हि परीप्सवः ॥ ४५
तस्मिन्विलुलिते सैन्ये त्रस्तांस्तस्य पदानुगान् ।
गाण्डीवधन्वा विस्फार्य धनुस्तानहनच्छरैः ॥ ४६
युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः ।
स्वयं सन्नोदयन्नश्वान्दन्तवर्णान्मनोजवान् ॥ ४७
तत्राश्चर्यमपश्याम कुन्तीपुत्रे युधिष्ठिरे ।
पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत् ४८
विवृताक्षश्च कौन्तेयो वेपमानश्च मन्युना ।
चिच्छेद योधान्निशितैः शरैः शतसहस्रशः॥ ४९
यांयां प्रत्युद्ययौ सेनां तांतां ज्येष्ठः स पाण्डवः ।
शरैरपातयद्राजन्गिरीन्वज्रैरिवोत्तमैः ॥ ५०
साश्वसूतध्वजरथान्रथिनः पातयन्बहून् ।
अक्रीडदेको बलवान्पवनस्तोयदानिव ॥ ५१
साश्वारोहांश्च तुरगान्पत्तींश्चैव सहस्रधा ।
व्यपोथयत सङ्ग्रामे क्रुद्धो रुद्रः पशूनिव ॥ ५२
शून्यमायोधनं कृत्वा शरवर्षैः समन्ततः ।
अभ्यद्रवत मद्रेशं तिष्ठतिष्ठेति चाब्रवीत् ॥ ५३
तस्य तच्चरितं दृष्ट्वा संग्रामे भीमकर्मणः ।
वित्रेसुस्तावकाः सर्वे शल्यस्त्वेनं समभ्ययात्॥५४
ततस्तौ भृशसंक्रुद्धौ प्रध्माय सलिलोद्भवौ ।
समाहूय तदाऽन्योन्यं भर्त्सयन्तौ समीयतुः॥५५
शल्यस्तु शरवर्षेण पीडयामास पाण्डवम् ।
मद्रराजं तु कौन्तेयः शरवर्षैरवाकिरत् ॥ ५६
अदृश्येतां तदा राजन्कङ्कपत्रिभिराचितौ ।
उद्भिन्नरुधिरौ शूरौ मद्रराजयुधिष्ठिरौ ।
पुष्पिताविव रेजाते वने शाल्मलिकिंशुकौ ॥५७
दीव्यमानौ महात्मानौ प्राणद्यूतेन दुर्मदौ ।
दृष्ट्वा सर्वाणि सैन्यानि नाध्यवस्यंस्तयोर्जयम् ५८
हत्वा मद्राधिपं पार्थो भोक्ष्यतेऽद्य वसुंधराम् ।
शल्यो वा पाण्डवं हत्वा दद्याद्दुर्योधनाय गाम् ५९
इतीव निश्चयो नाभूद्योधानां तत्र भारत ।
प्रदक्षिणमभूत्सर्वं धर्मराजस्य युध्यतः ॥ ६०
ततः शरशतं शल्यो मुमोचाशु युधिष्ठिरे ।
धनुश्चास्य शिताग्रेण बाणेन निरकृन्तत ॥ ६१
सोऽन्यत्कार्मुकमादाय शल्यं शरशतैस्त्रिभिः ।
अविध्यत्कार्मुकं चास्य क्षुरेण निरकृन्तत ॥ ६२
अथास्य निजघानाश्वांश्चतुरो नतपर्वभिः ।
द्वाभ्यामतिशिताग्राभ्यामुभौ तत्पार्ष्णिसारथी ६३
ततोऽस्य दीप्यमानेन पीतेन निशितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरद्ध्वजम् ॥ ६४
ततः प्रभग्नं तत्सैन्यं दौर्योधनमरिंदम ॥ ६५
ततो मद्राधिपं द्रौणिरभ्यधावत्तथा कृतम् ।
आरोप्य चैनं स्वरथं त्वरमाणः प्रदुद्रुवे ॥ ६६
मुहूर्तमिव तौ गत्वा नर्दमाने युधिष्ठिरे ।
गत्वा ततो मद्रपतिरन्यं स्यन्दनमास्थितः ॥ ६७
विधिवत्कल्पितं शुभ्रं महाम्बुदनिनादिनम् ।
सज्जयन्त्रोपकरणं द्विषतां रोमहर्षणम् ॥ ६८
तथान्यद्धनुरादाय बलवान्वेगवत्तरम् ।
युधिष्ठिरं मद्रपतिर्भित्त्वा सिंह इवानदत् ॥ ६९
ततः स शरवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियान्क्षत्रियर्षभः ॥ ७०
सात्यकिं दशभिर्विद्ध्वा भीमसेनं त्रिभिः शरैः ।
सहदेवं त्रिभिर्विद्ध्वा युधिष्ठिरमपीडयत् ॥ ७१
तांस्तानन्यान्महेष्वासान्साश्वान्सरथकूबरान् ।
अर्दयामास विशिखैरुल्काभिरिव कुञ्जरान् ॥ ७२
कुञ्जरान्कुञ्जरारोहानश्वानश्वप्रयायिनः ।
रथांश्च रथिभिः सार्धं जघान रथिनां वरः ॥ ७३
बाहूंश्चिच्छेद तरसा सायुधान्केतनानि च ।
चकार च महीं योधैः स्तीर्णां वेदीं कुशैरिव ७४
तथा तमरिसैन्यानि घ्नन्तं मृत्युमिवान्तकम् ।
परिवव्रुर्भृशं क्रुद्धाः पाण्डुपाञ्चालसोमकाः ॥ ७५

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे पञ्चदशोऽध्यायः ॥ १५ ॥

---

यां यामभ्यगमत्सेनां तां तां सद्यो व्यनीनशत् । न्यपातयत कौन्तेयो गिरीन्वज्र इवोत्तमान् । इति क. ख. पाठः ॥ ५० ॥

मुहूर्तमिव तान्हत्वा नर्दमाने युधिष्ठिरे इति क. ख. पाठः ॥ ६७ ॥ पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

युधिष्ठिरेण शल्यशल्यानुजयोर्वधः ॥ १ ॥

सञ्जय उवाच ।

तं भीमसेनश्च शिनेश्च नप्ता
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
समागतं भीमबलेन राज्ञा
पर्यापुरन्योन्यमथाह्वयन्त ॥ १

ततस्तु शूराः समरे नरेन्द्र
नरेश्वरं प्राप्य युधां वरिष्ठम् ।
आवार्य चैनं समरे नृवीरा
जघ्नुः शितैः पत्रिभिरुग्रवेगैः ॥ २

संरक्षितो भीमसेनेन राजा
माद्रीसुताभ्यामथ माधवेन ।
मद्राधिपं पत्रिभिरुग्रवेगैः
स्तनान्तरे धर्मसुतो निजघ्ने ॥ ३

ततो रणे तावकानां रथौघाः
समीक्ष्य मद्राधिपतिं शरार्तम् ।
पर्याववुः प्रवराः सर्वयोधा
दुर्योधनस्यानुमते पुरस्तात् ॥ ४

ततो द्रुतं मद्रजनाधिपो रणे
युधिष्ठिरं सप्तभिरभ्यविद्ध्यत् ।
तं चापि पार्थो नवभिः पृषत्कै-
र्विव्याध राजंस्तुमुले महात्मा ॥ ५

आकर्णपूर्णायतसंप्रयुक्तैः
शरैस्तदा संयति तैलधौतैः ।
अन्योन्यमाच्छादयतां महारथौ
मद्राधिपश्चापि युधिष्ठिरश्च ॥ ६

ततस्तु तूर्णं समरे महारथौ
परस्परस्यान्तरमीक्षमाणौ ।
शरैर्भृशं विव्यधतुर्नृपोत्तमौ
महाबलौ शत्रुभिरप्रधृष्यौ ॥ ७

तयोर्धनुर्ज्यातलनिःस्वनो महा-
न्महेन्द्रवज्राशनितुल्यनिःस्वनः ।
परस्परं बाणगणैर्महात्मनोः
प्रवर्षतोर्मद्रपपाण्डुवीरयोः ॥ ८

तौ चेरतुर्व्याघ्रशिशुप्रकाशौ
महावनेष्वामिषगृद्धिनाविव ।
विषाणिनौ नागवराविवोभौ
ततक्षतुः संयति जातदर्पौ ॥ ९

ततस्तु मद्राधिपतिर्महात्मा
युधिष्ठिरं भीमबलं प्रसह्य ।
विव्याध वीरं हृदयेऽतिवेगं
शरेण सूर्याग्निसमप्रभेण ॥ १०

ततोऽतिविद्धोऽथ युधिष्ठिरोऽपि
सुसंप्रयुक्तेन शरेण राजन् ।
जघान मद्राधिपतिं महात्मा
मुदं च लेभे वृषभः कुरूणाम् ॥ ११

ततो मुहूर्तादिव पार्थिवेन्द्रो
लब्ध्वा संज्ञां क्रोधसंरक्तनेत्रः ।
शरेण पार्थं त्वरितो जघान
सहस्रनेत्रप्रतिमप्रभावः ॥ १२

त्वरंस्ततो धर्मसुतो महात्मा
शल्यस्य कोपान्नवभिः पृषत्कैः ।
भित्त्वा ह्युरस्तपनीयं च वर्म
जघान षड्भिस्त्वपरैः पृषत्कैः ॥ १३

ततस्तु मद्राधिपतिः प्रकृष्टं
धनुर्विकृष्य व्यसृजत्पृषत्कान् ।
द्वाभ्यां शराभ्यां च तथैव राज्ञ-
श्चिच्छेद चापं कुरुपुङ्गवस्य ॥ १४

नवं ततोऽन्यत्समरे प्रगृह्य
राजा धनुर्घोरतरं महात्मा ।
शल्यं तु विव्याध शरैः समन्ता-
द्यथा महेन्द्रो नमुचिं शिताग्रैः ॥ १५

ततस्तु शल्यो नवभिः पृषत्कै-
र्भीमस्य राज्ञश्च युधिष्ठिरस्य ।

निकृत्य रौक्मे पट्टवर्मणी तयो-
विदारयामास भुजौ महात्मा ॥ १६
ततोऽपरेण ज्वलनार्कतेजसा
क्षुरेण राज्ञो धनुरुन्ममाथ ।
कृपश्च तस्यैव जघान सूतं
षड्भिः शरैः सोऽभिमुखः पपात ॥ १७
मद्राधिपश्चापि युधिष्ठिरस्य
शरैश्चतुर्भिर्निजघान वाहान् ।
वाहांश्च हत्वा व्यकरोन्महात्मा
योधक्षयं धर्मसुतस्य राज्ञः ॥ १८
'यदद्भुतं कर्म न शक्यमन्यैः
सुदुःसहं तत्कृतवन्तमेकम् ।
शल्यो नरेन्द्रः सविषण्णभावा-
द्विचिन्तयामास मृदङ्गकेतुः ॥ १९
किमेतदिन्द्रावरजस्य वाक्यं
मोघं भवत्यद्य विधेर्बलेन ।
जहीति शल्यं ह्यवदत्तदाऽऽजौ
न लोकनाथस्य वचोऽन्यथा स्यात् ॥' २०
तथा कृते राजनि भीमसेनो
मद्राधिपस्याथ ततो महात्मा ।
छित्त्वा धनुर्वेगवता शरेण
द्वाभ्यामविध्यत्सुभृशं नरेन्द्रम् ॥ २१
तथापरेणास्य जहार यन्तुः
कायाच्छिरः संहननीयमध्यात् ।
जघान चाश्वांश्चतुरः सुशीघ्रं
तथा भृशं कुपितो भीमसेनः ॥ २२
तमग्रणीः सर्वधनुर्धराणा-
मेकं चरन्तं समरेऽतिवेगम् ।
भीमः शतेन व्यकिरच्छराणां
माद्रीपुत्रः सहदेवस्तथैव ॥ २३
तैः सायकैर्मोहितं वीक्ष्य शल्यं
भीमः शरैरस्य चकर्त वर्म ।
स भीमसेनेन निकृत्तवर्मा
मद्राधिपश्चर्म सहस्रतारम् ॥ २४
प्रगृह्य खड्गं च रथान्महात्मा
प्रस्कन्द्य कुन्तीसुतमभ्यधावत् ।
छित्त्वा रथेषां नकुलस्य सोऽथ
युधिष्ठिरं भीमबलोऽभ्यधावत् ॥ २५
तं चापि राजानमथोत्पतन्तं
क्रुद्धं यथैवान्तकमापतन्तम् ।
धृष्टद्युम्नो द्रौपदेयाः शिखण्डी
शिनेश्च नप्ता सहसा परीयुः ॥ २६
अथास्य चर्माप्रतिमं न्यकृन्त-
द्भीमो महात्मा नवभिः पृषत्कैः ।
खड्गं च भल्लैर्निचकर्त मुष्टौ
नदन्प्रहृष्टस्तव सैन्यमध्ये ॥ २७
तत्कर्म भीमस्य समीक्ष्य हृष्टा-
स्ते पाण्डवानां प्रवरा रथौघाः ।
नादं च चक्रुर्भृशमुत्स्मयन्तः
शङ्खांश्च दध्मुः शशिसन्निकाशान् ॥ २८
तेनाथ शब्देन विभीषणेन
तथाऽभितप्तं बलमप्रधृष्यम् ।
स्वेदाभिभूतं रुधिरोक्षिताङ्गं
विसंज्ञकल्पं च तदा विषण्णम् ॥ २९
स मद्रराजः सहसा विकीर्णो
भीमाग्रगैः पाण्डवयोधमुख्यैः ।
युधिष्ठिरस्याभिमुखं जवेन
सिंहो यथा मृगहेतोः प्रयातः ॥ ३०
स धर्मराजो निहताश्वसूतः
क्रोधेन दीप्तो ज्वलनप्रकाशः ।
दृष्ट्वा च मद्राधिपतिं स तूर्णं
समभ्यधावत्तमरिं बलेन ॥ ३१
गोविन्दवाक्यं त्वरितं विचिन्त्य
दध्रे मतिं शल्यविनाशनाय ।
स धर्मराजो निहताश्वसूतो
रथे तिष्ठञ्शक्तिमथान्वकर्षत् ॥ ३२
तच्चापि शल्यस्य निशाम्य कर्म
तमात्मनो भागमथावशिष्टम् ।

संहननीयो दृढसंधिको मध्यो यस्य तस्मात्कायात् ॥ २२ ॥

कृत्वा मनः शल्यवधे महात्मा
यथोक्तमिन्द्रावरजस्य चक्रे ॥ ३३
स धर्मराजो मणिहेमदण्डां
जग्राह शक्तिं कनकप्रकाशाम् ।
नेत्रे च दीप्ते सहसा विवृत्य
मद्राधिपं क्रुद्धमना निरैक्षत् ॥ ३४
निरीक्षितो धर्मसुतेन राज्ञा
पूतात्मना निर्हृतकल्मषेण ।
आसीन्न यद्भस्मसान्मद्रराज-
स्तदद्भुतं मे प्रतिभाति राजन् ॥ ३५
ततस्तु शक्तिं रुचिरोग्रदण्डां
मणिप्रवेकोज्ज्वलितां प्रदीप्ताम् ।
चिक्षेप वेगात्सुभृशं महात्मा
मद्राधिपाय प्रवरः कुरूणाम् ॥ ३६
दीप्तामथैनां प्रहितां बलेन
सविस्फुलिङ्गां सहसापतन्तीम् ।
प्रैक्षन्त सर्वे कुरवः समेता
दिवो युगान्ते महतीमिवोल्काम् ॥ ३७
तां कालरात्रीमिव पाशहस्तां
यमस्य धात्रीमिव चोग्ररूपाम् ।
स ब्रह्मदण्डप्रतिमाममोघां
ससर्ज यत्तो युधि धर्मराजः ॥ ३८
गन्धस्रगग्र्यासनपानभोजनै-
रभ्यर्चितां पाण्डुसुतैः प्रयत्नात् ।
सांवर्तकाग्निप्रतिमां ज्वलन्तीं
कृत्यामथर्वाङ्गिरसीमिवोग्राम् ॥ ३९
ईशानहेतोः प्रतिनिर्मितां तां
त्वष्ट्रा रिपूणामसुदेहभक्ष्याम् ।
भूम्यन्तरिक्षद्युजलाश्रयाणि
प्रसह्य भूतानि निहन्तुमीशाम् ॥ ४०
घण्टापताकां मणिवज्रभूषां
वैदूर्यचित्रां तपनीयदण्डाम् ।
त्वष्ट्रा प्रयत्नान्नियमेन क्लृप्तां
ब्रह्मद्विषामन्तकरीममोघाम् ॥ ४१

बलप्रयत्नादनिरोधवेगां
मन्त्रैश्च घोरैरपि पूरयित्वा ।
ससर्ज मार्गेण च तां खगानां
वधाय मद्राधिपतेस्तदानीम् ॥ ४
हतो ह्यसावित्यभिगर्जमानो
रुद्रोऽन्धकायान्तकरं यथेषुम् ।
प्रसार्य बाहुं सुदृढं सुपाणिं
क्रोधेन नृत्यन्निव धर्मराजः ॥ ४
'स्फुरत्प्रभामण्डलिनोंशुजालै-
र्धर्मात्मनो मद्रविनाशकाले ।
पुरत्रयप्रोत्सरणे पुरस्ता-
न्माहेश्वरं रूपमभूत्तदानीम् ॥ ४
आवर्तनाकुञ्चितबाहुदण्डः
सन्ध्याविहारी तनुवृत्तमध्यः ।
विशालवक्षा भगवान्हरो यथा
सुदुर्निरीक्ष्योऽभवदर्जुनाग्रजः ॥' ४
तां सर्वशक्त्या प्रहितां सुशक्तिं
युधिष्ठिरेणाप्रतिवार्यवीर्याम् ।
प्रतिग्रहायाभिननन्द शल्यः
सम्यग्घुतामग्निरिवाज्यधाराम् ॥ ४
सा तस्य वर्माभिविदार्य शुभ्र-
मुरो विशालं च तथैव भित्त्वा ।
विवेश गां तोयमिवाप्रसक्ता
यशो विशालं नृपतेर्हरन्ती ॥ ४
नासाक्षिकर्णास्यविनिःसृतेन
प्रस्यन्दता च व्रणसंभवेन ।
संसिक्तगात्रो रुधिरेण सोऽभू-
त्क्रौञ्चो यथा स्कन्दहतो महाद्रिः ॥ ४
प्रसार्य बाहू च रथाद्गतो गां
संछिन्नवर्मा कुरुनन्दनेन ।
महेन्द्रवाहप्रतिमो महात्मा
वज्राहतं शृङ्गमिवाचलस्य ॥ ४
ततो निपतितः सोऽभूदिन्द्रध्वज इवोच्छ्रितः
बाहू प्रसार्याभिमुखो धर्मराजस्य मद्रराट् ।

तोयमिव सुप्रवेशाङ्गाम् । अप्रसक्ता अप्रतिहता । नृपतेः शल्यस्य ॥ ४७ ॥

स तथा भिन्नसर्वाङ्गो रुधिरेण समुक्षितः ॥ ५०
प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुङ्गवः ।
प्रियया कान्तया कान्तः पतमान इवोरसि ॥ ५१
चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः ।
सर्वैरङ्गैः समाश्लिष्य प्रसुप्त इव चाभवत् ॥ ५२
धर्म्ये धर्मात्मना युद्धे निहतो धर्मसूनुना ।
सम्यक्स्फीत इवोत्सृष्टः प्रशान्तोऽग्निरिवाध्वरे ५३
शक्त्या विभिन्नहृदयं विप्रविद्धायुधध्वजम् ।
संशान्तमपि मद्रेशं लक्ष्मीर्नैव विमुञ्चति ॥ ५४
ततो युधिष्ठिरश्चापमादायेन्द्रधनुष्प्रभम् ।
व्यधमद्द्विषतः सङ्ख्ये खगराडिव पन्नगान् ।
देहान्सुनिशितैर्भल्लै रिपूणां नाशयन्क्षणात् ॥ ५५
ततः पार्थस्य बाणौघैरावृताः सैनिकास्तव ।
निमीलिताक्षाः क्षिण्वन्ति भृशमन्योन्यकर्शिताः ।
क्षरन्तो रुधिरं देहैर्विशस्त्रायुधजीविताः ॥ ५६
ततः शल्ये निपतिते मद्रराजानुजो युवा ।
भ्रातुस्तुल्यो गुणैः सर्वै रथी पाण्डवमभ्ययात् ५७
विव्याध च नरश्रेष्ठो नाराचैर्बहुभिस्त्वरन् ।
हतस्यापचितिं भ्रातुश्चिकीर्षुर्युद्धदुर्मदः ॥ ५८
तं विव्याधाशुगैः षड्भिर्धर्मराजस्त्वरन्निव ।
कार्मुकं चास्य चिच्छेद क्षुराभ्यां ध्वजमेव च ॥ ५९
ततोऽस्य दीप्यमानेन सुदृढेन शितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरच्छिरः ॥ ६०
सकुण्डलं तद्ददृशे पतमानं शिरो रथात् ।
पुण्यक्षयमनुप्राप्य पतन्स्वर्गादिव च्युतः ॥ ६१
तस्यापकृत्तशीर्षं तु शरीरं पतितं रथात् ।
रुधिरेणावसिक्ताङ्गं दृष्ट्वा सैन्यमभज्यत ॥ ६२
विचित्रकवचे तस्मिन्हते मद्रनृपानुजे ।
हाहाकारं प्रकुर्वाणाः कुरवोऽभिप्रदुद्रुवुः ॥ ६३
शल्यानुजं हतं दृष्ट्वा तावकास्त्यक्तजीविताः ।
वित्रेसुः पाण्डवभयात्प्रविध्वस्तास्तदा भृशम् ॥ ६४
तांस्तथा भज्यमानांस्तु कौरवान्भरतर्षभ ।
शिनेर्नप्ताऽकिरन्बाणैरभ्यवर्तत सात्यकिः ॥ ६५
तमायान्तं महेष्वासं दुष्प्रसह्यं दुरासदम् ।
हार्दिक्यस्त्वरितो राजन्प्रत्यगृह्णादभीतवत् ॥ ६६
तौ समेतौ महात्मानौ वार्ष्णेयौ वरवाजिनौ ।
हार्दिक्यः सात्यकिश्चैव सिंहाविव बलोत्कटौ ॥ ६७
इषुभिर्विमलाभासैश्छादयन्तौ परस्परम् ।
अर्चिर्भिरिव सूर्यस्य दिवाकरसमप्रभौ ॥ ६८
चापमार्गबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः ।
आकाशगानपश्याम पतङ्गानिव शीघ्रगान् ॥ ६९
सात्यकिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः ।
चापमेकेन चिच्छेद हार्दिक्यो नतपर्वणा ॥ ७०
तन्निकृत्तं धनुःश्रेष्ठमपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन धनुर्जलदनिःस्वनम् ॥ ७१
तदादाय धनुःश्रेष्ठं वरिष्ठः सर्वधन्विनाम् ।
हार्दिक्यं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ७२
ततो युगं रथेषां च च्छित्त्वा भल्लैः सुसंयतैः ।
अश्वांस्तस्यावधीत्तूर्णमुभौ च पार्ष्णिसारथी ॥ ७३
हार्दिक्यं विरथं दृष्ट्वा कृपः शारद्वतः प्रभो ।
अपोवाह ततः क्षिप्रं रथमारोप्य वीर्यवान् ॥ ७४
मद्रराजे हते राजन्विरथे कृतवर्मणि ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ७५
स्वे परे नान्वबुध्यन्त सैन्येन रजसा वृते ।
बलं तु हतभूयिष्ठं त्रस्तमासीत्पराङ्मुखम् ॥ ७६
ततो मुहूर्तात्तेऽपश्यन्रजो भौमं समुत्थितम् ।
विविधैः शोणितस्रावैः प्रशान्तं पुरुषर्षभ ॥ ७७
ततो दुर्योधनो दृष्ट्वा भग्नं स्वबलमन्तिकात् ।
जवेनापततः पार्थानेकः सर्वानवारयत् ॥ ७८
पाण्डवान्सरथान्दृष्ट्वा धृष्टद्युम्नं च पार्षतम् ।
आनर्तं च दुराधर्षं शितैर्बाणैरवारयत् ॥ ७९
तं परे नाभ्यवर्तन्त मर्त्या मृत्युमिवागतम् ।
अथान्यं रथमास्थाय हार्दिक्योऽपि न्यवर्तत ॥ ८०
ततो युधिष्ठिरो राजा त्वरमाणो महारथः ।
चतुर्भिर्निजघानाश्वान्पत्रिभिः कृतवर्मणः ।
विव्याध गौतमं चापि षड्भिर्भल्लैः सुतेजनैः ॥ ८१
अश्वत्थामा ततो राज्ञा हताश्वं विरथीकृतम् ।
तमपोवाह हार्दिक्यं स्वरथेन युधिष्ठिरात् ॥ ८२

ततः शारद्वतः षड्भिः प्रत्यविध्यद्युधिष्ठिरम् ।
विव्याध चाश्वान्निशितैस्तस्याष्टाभिः शिलीमुखैः ॥
एवमेतन्महाराज युद्धशेषमवर्तत ।
तव दुर्मन्त्रिते राजन्सहपुत्रस्य भारत ॥ ८४
तस्मिन्महेष्वासधरे विशस्ते
सङ्ग्राममध्ये कुरुपुङ्गवेन ।
पार्थाः समेताः परमप्रहृष्टाः
शङ्खान्प्रदध्मुर्हतमीक्ष्य शल्यम् ॥
युधिष्ठिरं च प्रशशंसुराजौ
पुरा सुरा वृत्रवधे यथेन्द्रम् ।
चक्रुश्च नानाविधवाद्यशब्दा-
न्निनादयन्तो वसुधां समन्तात् ॥

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ॥ १७ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
शल्येऽथ निहते राजन्मद्रराजपदानुगाः ।
रथाः सप्तशता वीरा दुद्रुवुर्महतो बलात् ॥ १
दुर्योधनस्तु द्विरदमारुह्याचलसन्निभम् ।
छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः ।
न गन्तव्यं न गन्तव्यमिति मद्रानवारयत् ॥ २
दुर्योधनेन ते वीरा वार्यमाणाः पुनः पुनः ।
युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन्बलम् ॥ ३
ते तु शूरा महाराज कृतचित्ताश्च योधने ।
धनुःशब्दं महत्कृत्वा सहायुध्यन्त पाण्डवैः ॥ ४
श्रुत्वा च निहतं शल्यं धर्मपुत्रं च पीडितम् ।
मद्रराजप्रिये युक्तैर्मद्रकाणां महारथैः ॥ ५
आजगाम ततः पार्थो गाण्डीवं विक्षिपन्धनुः ।
पूरयन्रथघोषेण दिशः सर्वा महारथः ॥ ६
ततोऽर्जुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ ।
सात्यकिश्च नरव्याघ्रो द्रौपदेयाश्च सर्वशः ॥ ७
धृष्टद्युम्नः शिखण्डी च पाञ्चालाः सह सोमकैः ।
युधिष्ठिरं परीप्सन्तः समन्तात्पर्यवारयन् ॥ ८
ते समन्तात्परिवृताः पाण्डवैः पुरुषर्षभैः ।
क्षोभयन्ति स्म तां सेनां मकराः सागरं यथा ।
वृक्षानिव महावाताः कम्पयन्ति स्म तावकाः ॥ ९
पुरोवातेन गङ्गेव क्षोभ्यमाणा महानदी ।
अक्षोभ्यत तदा राजन्पाण्डूनां ध्वजिनी ततः ॥ १०
प्रस्कन्द्य सेनां महतीं महात्मानो महारथाः ।
बहवश्चुक्रुशुस्तत्र क्व स राजा युधिष्ठिरः ।
भ्रातरो वाऽस्य ते शूरा दृश्यन्ते नेह केचन ॥ १
धृष्टद्युम्नोऽथ शैनेयो द्रौपदेयाश्च सर्वशः ।
पाञ्चालाश्च महावीर्याः शिखण्डी च महारथः १
एवं तान्वादिनः शूरान्द्रौपदेया महारथाः ।
अभ्यघ्नन्युयुधानश्च मद्रराजपदानुगान् ॥ १
चक्रैर्विमथितैः केचित्केचिच्छिन्नैर्महाध्वजैः ।
संप्रदृश्यन्त समरे तावका निहताः परैः ॥ १
आलोक्य पाण्डवान्युद्धे योधा राजन्समन्ततः
वार्यमाणा ययुर्वेगात्पुत्रेण तव भारत ॥ १
दुर्योधनश्च तान्वीरान्वारयामास सान्त्वयन् ।
न चास्य शासनं केचित्तत्र चक्रुर्महारथाः ॥ १
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
दुर्योधनं महाराज वचनं वचनक्षमम् ॥ १
किं नः संप्रेक्षमाणानां मद्राणां हन्यते बलम्
न युक्तमेतत्समरे त्वयि तिष्ठति भारत ॥ १
सहितैर्नाम योद्धव्यमित्येष समयः कृतः ।
अथ कस्मात्स्परन्नेव घ्नतो मर्षयसे नृप ॥ १
दुर्योधन उवाच ।
वार्यमाणा मया पूर्वं नैते चक्रुर्वचो मम ।
एते विनिहताः सर्वे प्रस्कन्नाः पाण्डुवाहिनीम् २

---

प्रस्कन्नाः प्रपन्नाः ॥ २० ॥ सप्तदशोऽध्यायः ॥ १७ ॥

शकुनिरुवाच ।
न भर्तुः शासनं वीरा रणे कुर्वन्त्यमर्षिताः ।
अलं क्रोद्धुमथैतेषां नायं काल उपेक्षितुम् ॥ २१
यामः सर्वेऽत्र संभूय सवाजिरथकुञ्जराः ।
परित्रातुं महेष्वासान्मद्रराजपदानुगान् ॥ २२
अन्योन्यं परिरक्षामो यत्नेन महता नृप ।
एवं सर्वेऽनुसंचिन्त्य प्रययुर्यत्र सैनिकाः ॥ २३
सञ्जय उवाच ।
एवमुक्तस्तदा राजा बलेन महता वृतः ।
प्रययौ सिंहनादेन कम्पयन्निव मेदिनीम् ॥ २४
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत ।
इत्यासीत्तुमुलः शब्दस्तव सैन्यस्य भारत ॥ २५
पाण्डवास्तु रणे दृष्ट्वा मद्रराजपदानुगान् ।
सहितानभ्यवर्तन्त गुल्ममास्थाय मध्यमम् ॥ २६
ते मुहूर्ताद्रणे वीरा हस्ताहस्ति विशांपते ।
निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः ॥ २७
ततो नः संप्रयातानां हता मद्रास्तरस्विनः ।
हृष्टाः किलकिलाशब्दमकुर्वन्सहिताः परे ॥ २८
अथोत्थितानि रुण्डानि समदृश्यन्त सर्वशः ।
पपात महती चोल्का मध्येनादित्यमण्डलम् ॥ २९
रथैर्भग्नयुगाक्षैश्च निहतैश्च महारथैः ।
अश्वैर्निपातितैश्चैव संछन्नाऽभूद्वसुंधरा ॥ ३०
वातायमानैस्तुरगैर्युगासक्तैस्ततस्ततः ।
अदृश्यन्त महाराज योधास्तत्र रणाजिरे ॥ ३१
भग्नचक्रान्रथान्केचिदहरंस्तुरगा रणे ।
रथार्धं केचिदादाय दिशो दश विबभ्रमुः ।
तत्रतत्र व्यदृश्यन्त योक्त्रैः श्लिष्टाः स्म वाजिनः ३२
रथिनः पतमानाश्च दृश्यन्ते स्म नरोत्तमाः ।
गगनात्प्रच्युताः सिद्धाः पुण्यानामिव संक्षये ॥ ३३
निहतेषु च शूरेषु मद्रराजानुगेषु वै ।
अस्मानापततश्चापि दृष्ट्वा पार्था महारथाः ॥ ३४
अभ्यवर्तन्त वेगेन जयगृद्धाः प्रहारिणः ।
बाणशब्दरवान्कुर्वन्विमिश्राञ्शङ्खनिःस्वनैः ॥ ३५
अस्मांस्तु पुनरासाद्य लब्धलक्षाः प्रहारिणः ।
शरासनानि धुन्वानाः सिंहनादान्प्रचुक्रुशुः ॥ ३६
ततो हतमभिप्रेक्ष्य मद्रराजबलं महत् ।
मद्रराजं च समरे दृष्ट्वा शूरं निपातितम् ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ३७
वध्यमानं महाराज पाण्डवैर्जितकाशिभिः ।
दिशो भेजेऽथ संभ्रान्तं त्रासितं दृढधन्विभिः ३८

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
पातिते युधि दुर्धर्षे मद्रराजे महारथे ।
तावकास्तव पुत्राश्च प्रायशो विमुखाऽभवन् ॥ १
वणिजो नावि भिन्नायां यथागाधे महार्णवे ।
अपारे पारमिच्छन्तो हते शूरे महात्मनि ॥ २
मद्रराजे महाराज वित्रस्ताः शरविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहार्दिता इव ॥ ३
वृषा यथा भग्नशृङ्गाः शीर्णदन्ता यथा गजाः ।
मध्याह्ने प्रत्यपायाम निर्जिताऽजातशत्रुणा ॥ ४
न संस्थातुमनीकानि न च राजन्पराक्रमे ।
आसीद्बुद्धिर्हते शल्ये तव योधस्य कस्यचित् ॥ ५
भीष्मे द्रोणे च निहते सूतपुत्रे च पातिते ।
यद्दुःखं तव योधानां भयं चासीद्विशांपते ॥ ६
तद्भयं स च नः शोको भूय एवाभ्यवर्तत ।
निराशाश्च जये राजन्हते शल्ये महारथे ॥ ७
हतप्रवीरा विध्वस्ता निकृत्ताश्च शितैः शरैः ।
मद्रराजे हते राजन्योधास्ते प्राद्रवन्भयात् ॥ ८
अश्वानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसंपन्नाः पादाताः प्राद्रवंस्तथा ॥ ९
द्विसाहस्राश्च मातङ्गा गिरिरूपाः प्रहारिणः ।

संप्राद्रवन्हते शल्ये अङ्कुशाङ्गुष्ठनोदिताः ॥ १०
ते रणाद्रथश्रेष्ठ तावकाः प्राद्रवन्दिशः ।
धावतश्चाप्यपश्याम श्वसमानाञ्शराहतान् ॥ ११
तान्प्रभग्नान्हतान्दृष्ट्वा हतोत्साहान्पराजितान् ।
अभ्यवर्तन्त पाञ्चालाः पाण्डवाश्च जयैषिणः ॥ १२
बाणशब्दरवाश्चापि सिंहनादाश्च पुष्कलाः ।
शङ्खशब्दश्च शूराणां दारुणः समपद्यत ॥ १३
दृष्ट्वा तु कौरवं सैन्यं भयत्रस्तं प्रविद्रुतम् ।
अन्योन्यं समभाषन्त पाञ्चालाः पाण्डवैः सह १४
अद्य राजा सत्यधृतिर्हतामित्रो युधिष्ठिरः ।
अद्य दुर्योधनो हीनो दीप्तया नृपतिश्रिया ॥ १५
अद्य श्रुत्वा हतं पुत्रं धृतराष्ट्रो जनेश्वरः ।
निःसंज्ञः पतितो भूमौ किल्बिषं प्रतिपत्स्यते ॥ १६
अद्य जानाति बीभत्सुं समर्थं सर्वधन्विनाम् ।
अद्यात्मानं च दुर्मेधा गर्हयिष्यति पापकृत् ॥ १७
अद्य क्षत्तुर्वचः सत्यं स्मरतां ब्रुवतो हितम् ।
अद्यप्रभृति पार्थं च प्रेष्यभूत इवाचरन् ।
विजानातु नृपो दुःखं यत्प्राप्तं पाण्डुनन्दनैः ॥ १८
अद्य कृष्णस्य माहात्म्यं विजानातु महीपतिः ।
अद्यार्जुनधनुर्घोषं घोरं जानातु संयुगे ॥ १९
अस्त्राणां च बलं सर्वं बाह्वोश्च बलमाहवे ।
'पुत्राणां च वधं घोरं भीमेन श्रोष्यते नृपः ॥' २०
अद्य ज्ञास्यति भीमस्य बलं घोरं महात्मनः ।
हते दुर्योधने युद्धे शक्रेणेव तु शम्बरे ॥ २१
यत्कृतं भीमसेनेन दुःशासनवधे तदा ।
कोऽन्यः कर्ताऽस्ति तल्लोके ऋते भीमान्महाबलात्
अद्य ज्येष्ठस्य जानीतां पाण्डवस्य पराक्रमम् ।
मद्रराजं हतं श्रुत्वा देवैरपि सुदुःसहम् ॥ २३
अद्य ज्ञास्यति सङ्ग्रामे माद्रीपुत्रौ सुदुःसहौ ।
निहते सौबले वीरे गान्धारेषु च सर्वशः ॥ २४
कथं जयो न तेषां स्याद्येषां योद्धा धनञ्जयः ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ २५
द्रौपद्यास्तनयाः पञ्च माद्रीपुत्रौ च पाण्डवौ ।
शिखण्डी च महेष्वासो राजा चैव युधिष्ठिरः ॥ २६
येषां च जगतो नाथो नाथः कृष्णो जनार्दनः ।
कथं तेषां जयो न स्याद्येषां धर्मो व्यपाश्रयः ॥ २
'लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषां नाथो हृषीकेशः सर्वलोकविभुर्हरिः ॥' २
भीष्मं द्रोणं च कर्णं च मद्रराजानमेव च ।
तथाऽन्यान्नृपतीन्वीराञ्शतशोऽथ सहस्रशः ॥ २
कोऽन्यः शक्तो रणे जेतुमृते पार्थाद्युधिष्ठिरात् ।
यस्य नाथो हृषीकेशः सदा सत्ययशोनिधिः ॥ ३
इत्येवं वदमानास्ते हर्षेण महता युताः ।
प्रभग्नांस्तावकान्योधान्संहृष्टाः पृष्ठतोऽन्वयुः ॥ ३
धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ।
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महारथः ॥ ३
तान्प्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान् ।
दुर्योधनस्तदा सूतमब्रवीद्विस्मयन्निव ॥ ३
मामतिक्रमते पार्थो धनुष्पाणिमवस्थितम् ।
जघने सर्वसैन्यानां शनैरश्वान्प्रचोदय ॥ ३
जघने युध्यमानं हि कौन्तेयो मां न संशयः ।
नोत्सहेदभ्यतिक्रान्तुं वेलामिव महोदधिः ॥ ३
पश्य सैन्यं महत्सूत पाण्डवैः समभिद्रुतम् ।
सैन्यरेणुं समुद्धूतं पश्य चैनं समन्ततः ॥ ३
सिंहनादांश्च बहुशः शृणु घोरान्भयावहान् ।
तस्माद्याहि शनैः सूत जघनं परिपालय ॥ ३
मयि स्थिते च समरे निरुद्धेषु च पाण्डुषु ।
पुनरावर्तते तूर्णं मामकं बलमोजसा ॥ ३
तच्छ्रुत्वा तव पुत्रस्य शूरस्य सदृशं वचः ।
सारथिर्हेमसंछन्नाञ्शनैरश्वानचोदयत् ॥ ३
गजाश्वरथिभिर्हीनास्त्यक्त्वात्मानः पदातयः ।
एकविंशतिसाहस्राः संयुगायावतस्थिरे ॥ ४
नानादेशसमुद्भूता नानारञ्जितवाससः ।
अवस्थितास्तदा योधाः प्रार्थयन्तो महद्यशः ॥ ४
तेषामापततां तत्र संहृष्टानां परस्परम् ।
संमर्दः सुमहाञ्जज्ञे घोररूपो भयानकः ॥ ४
भीमसेनं तदा राजन्धृष्टद्युम्नं च पार्षतम् ।
बलेन चतुरङ्गेण नानादेश्यानवारयत् ॥ ४

न मातिक्रमते पार्थः इति ङ. पाठः । न मानमंस्यते इति क. पाठः ॥ ३४ ॥ अष्टादशोऽध्यायः ॥ १८ ॥

भीममेवाभ्यवर्तन्त रणेऽन्ये तु पदातयः ।
क्ष्वेड्यास्फोट्य संहृष्टा वीरलोकं यियासवः ॥४४
आसाद्य भीमसेनं तु संरब्धा युद्धदुर्मदाः ।
धार्तराष्ट्रा विनेदुर्हि नान्यामकथयन्कथाम् ।
परिवार्य रणे भीमं निजघ्नुस्ते समन्ततः ॥ ४५
स वध्यमानः समरे पदातिगणसंवृतः ।
न चचाल ततः स्थानान्मैनाक इव पर्वतः ॥ ४६
ते तु क्रुद्धा महाराज पाण्डवस्य महारथम् ।
निग्रहीतुं प्रवृत्ता हि योधांश्चान्यानवारयन् ॥ ४७
अक्रुध्यत रणे भीमस्तैस्तदा पर्यवस्थितैः ।
सोऽवतीर्य रथात्तूर्णं पदातिः समवस्थितः ॥ ४८
जातरूपप्रतिच्छन्नां प्रगृह्य महतीं गदाम् ।
अवधीत्तावकान्योधान्दण्डपाणिरिवान्तकः ॥ ४९
रथाश्वविप्रहीणांस्तु तान्भीमो गदया बली ।
एकविंशतिसाहस्रान्पदातीन्समपोथयत् ॥ ५०
हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य न चिरात्प्रत्यदृश्यत ॥ ५१
पादाता निहता भूमौ शिश्यिरे रुधिरोक्षिताः ।
संभग्ना इव वातेन कर्णिकाराः सुपुष्पिताः ॥ ५२
नानाशस्त्रसमायुक्ता नानाकुण्डलधारिणः ।
नानाजात्या हतास्तत्र नानादेशसमागताः ॥ ५३
पताकाध्वजसंछन्नं पदातीनां महद्बलम् ।
निकृत्तं विबभौ रौद्रं घोररूपं भयावहम् ॥ ५४
युधिष्ठिरपुरोगाश्च सहसैन्या महारथाः ।
अभ्यधावन्महात्मानं पुत्रं दुर्योधनं तव ॥ ५५
ते सर्वे तावकान्दृष्ट्वा महेष्वासान्पराङ्मुखान् ।
नाभ्यवर्तन्त ते पुत्रं वेलामिव महोर्मयः ॥ ५६
तदद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेकं सहिताः पार्था न शेकुरतिवर्तितुम् ॥ ५७
नातिदूरापयातं तु कृतबुद्धिं पलायने ।
दुर्योधनः स्वकं सैन्यमब्रवीद्भृशविक्षतम् ॥ ५८
न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु च ।
यत्र यातान्न वा हन्युः पाण्डवाः किं सृतेन वः ५९
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
यदि सर्वेऽत्र तिष्ठामो ध्रुवं नो विजयो भवेत् ॥६०
विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतविप्रियाः ।
अनुयाय हनिष्यन्ति श्रेयान्नः समरे वधः ॥ ६१
शृण्वन्तु क्षत्रियाः सर्वे यावन्तोऽत्र समागताः ।
यदा शूरं च भीरुं च मारयत्यन्तकः सदा ॥ ६२
को नु मूढो न युध्येत पुरुषः क्षत्रियो ध्रुवम् ।
श्रेयान्नो भीमसेनस्य क्रुद्धस्याभिमुखे स्थितः ॥६३
सुखः साङ्ग्रामिको मृत्युर्दुःखो व्याधिजरादिभिः ।
मर्त्येनावश्यमर्तव्यं गृहेष्वपि कदाचन ॥ ६४
युध्यतः क्षत्रधर्मेण मृत्युरेष सनातनः ।
हत्वेह सुखमाप्नोति हतः प्रेत्य महत्फलम् ॥ ६५
न युद्धधर्माच्छ्रेयान्वै पन्थाः स्वर्गस्य कौरवाः ।
अचिरेणैव ताँल्लोकान्हतो युद्धे समश्नुते ॥ ६६
श्रुत्वा तद्वचनं तस्य पूजयित्वा च पार्थिवाः ।
पुनरेवाभ्यवर्तन्त पाण्डवानाततायिनः ॥ ६७
तानापतत एवाशु व्यूढानीकाः प्रहारिणः ।
प्रत्युद्ययुस्तदा पार्था जयगृद्धाः प्रमन्यवः ॥ ६८
धनञ्जयो रथेनाजावभ्यवर्तत वीर्यवान् ।
विश्रुतं त्रिषु लोकेषु व्याक्षिपन्गाण्डिवं धनुः ॥ ६९
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महाबलः ।
जवेनाभ्यपतन्हृष्टा यत्ता वै तावकं बलम् ॥ ७०

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

सात्यकिना साल्ववधः ॥ १ ॥

सञ्जय उवाच ।
सन्निवृत्तेषु सैन्येषु साल्वो म्लेच्छगणाधिपः ।
अभ्यद्रवत्सुसंक्रुद्धः पाण्डवानां महद्बलम् ॥ १
आस्थाय सुमहानागं प्रभिन्नं पर्वतोपमम् ।

हृष्टमैरावतप्रख्यममित्रगणमर्दनम् ॥ २
योऽसौ महान्भद्रकुलप्रसूतः
सुपूजितो धार्तराष्ट्रेण नित्यम् ।
सुकल्पितः शास्त्रविनिश्चयज्ञैः
सदोपवाह्यः समरेषु राजन् ॥ ३
ऐरावतं दैत्यगणान्विमृद्न-
ञ्शक्रो यथा सञ्जनयन्भयानि ।
तमास्थितो राजवरो बभूव
यथोदयस्थः सविता क्षपान्ते ॥ ४
स तेन नागप्रवरेण राज-
न्नभ्युद्ययौ पाण्डुसुतान्समेतान् ।
शितैः पृषत्कैर्विददार वेगै-
र्महेन्द्रवज्रप्रतिमैः सुघोरैः ॥ ५
ततः शरान्वै सृजतो महारणे
योधांश्च राजन्नयतो यमालयम् ।
नास्यान्तरं ददृशुः स्वे परे वा
यथा पुरा वज्रधरस्य दैत्याः ॥ ६
ते पाण्डवाः सोमकाः सृञ्जयाश्च
तमेकनागं ददृशुः समन्तात् ।
सहस्रशो वै विचरन्तमेकं
यथा महेन्द्रस्य गजं समीपे ॥ ७
संद्राव्यमाणं तु बलं परेषां
परेतकल्पं विबभौ समन्ततः ।
नैवावतस्थे समरे भृशं भया-
द्विमृद्यमानं तु परस्परं तदा ॥ ८
ततः प्रभग्ना सहसा महाचमूः
सा पाण्डवी तेन नराधिपेन ।
दिशश्चतस्रः सहसा विधाविता
गजेन्द्रवेगं तमपारयन्ती ॥ ९
दृष्ट्वा च तां वेगवता प्रभग्नां
सर्वे त्वदीया युधि योधमुख्याः ।
अपूजयंस्ते तु नराधिपं तं
दध्मुश्च शङ्खाञ्शशिसन्निकाशान् ॥ १०
श्रुत्वा निनादं त्वथ कौरवाणां
हर्षाद्विमुक्तं सह शङ्खशब्दैः ।
सेनापतिः पाण्डवसृञ्जयानां
पाञ्चालपुत्रो ममृषे न कोपात् ॥ ११
ततस्तु तं वै द्विरदं महात्मा
प्रत्युद्ययौ त्वरमाणो जयाय ।
जम्भो यथा शक्रसमागमे वै
नागेन्द्रमैरावणमिन्द्रवाह्यम् ॥ १२
तमापतन्तं सहसा तु दृष्ट्वा
पाञ्चालपुत्रं युधि राजसिंहः ।
तं वै द्विपं प्रेषयामास तूर्णं
वधाय राजन्द्रुपदात्मजस्य ॥ १३
स तं द्विपेन्द्रं सहसापतन्त-
मविध्यदग्निप्रतिमैः पृषत्कैः ।
कर्मारधौतैर्निशितैर्ज्वलद्भि-
र्नाराचमुख्यैस्त्रिभिरुग्रवेगैः ॥ १४
ततोऽपरान्पञ्चशतान्महात्मा
नाराचमुख्यान्विससर्ज कुम्भे ।
स तैस्तु विद्धः परमद्विपो रणे
तदा परावृत्य भृशं प्रदुद्रुवे ॥ १५
तं नागराजं सहसा प्रणुन्नं
विद्राव्यमाणं विनिवर्त्य साल्वः ।
तोत्राङ्कुशैः प्रेषयामास तूर्णं
पाञ्चालराजस्य सुतं प्रदिश्य ॥ १६
दृष्ट्वा पतन्तं सहसा तु नागं
धृष्टद्युम्नः स्वरथाच्छीघ्रमेव ।
गदां प्रगृह्योग्रजवेन वीरो
भूमिं प्रपन्नो भयविह्वलाङ्गः ॥ १७
स तं रथं हेमविभूषिताङ्गं
साश्वं ससूतं सहसा विमृद्य ।
उत्क्षिप्य हस्तेन नदन्महाद्विपो
विपोथयामास वसुंधरातले ॥ १८
पाञ्चालराजस्य सुतं च दृष्ट्वा
तदार्दितं नागवरेण तेन ।
तमभ्यधावत्सहसा जवेन
भीमः शिखण्डी च शिनेश्च नप्ता ॥ १९

शरैश्च वेगं सहसा निगृह्य
तस्याभितो व्यापततो गजस्य ।
स संगृहीतो रथिभिर्गजो वै
चचाल तैर्वार्यमाणश्च सङ्ख्ये ॥ २०
ततः पृषत्कान्प्रववर्ष राजा
सूर्यो यथा रश्मिजालं समन्तात् ।
तैराशुगैर्वध्यमाना रथौघाः
प्रदुद्रुवुः सहितास्तत्रतत्र ॥ २१
तत्कर्म साल्वस्य समीक्ष्य सर्वे
पाञ्चालपुत्रा नृप सृञ्जयाश्च ।
हाहाकारैर्नादयन्ति स्म युद्धे
द्विपं समन्ताद्रुरुधुर्नराग्र्याः ॥ २२
पाञ्चालपुत्रस्त्वरितस्तु शूरो
गदां प्रगृह्याचलशृङ्गकल्पाम् ।
ससंभ्रमं भारत शत्रुघाती
जवेन वीरोऽनुससार नागम् ॥ २३
ततस्तु नागं धरणीधराभं
मदं स्रवन्तं जलदप्रकाशम् ।
गदां समाविध्य भृशं जघान
पाञ्चालराजस्य सुतस्तरस्वी ॥ २४
स भिन्नकुम्भः सहसा विनद्य
मुखात्प्रभूतं क्षतजं विमुञ्चन् ।
पपात नागो धरणीधराभः
क्षितिप्रकम्पाच्चलितो यथाऽद्रिः ॥ २५
निपात्यमाने तु तदा गजेन्द्रे
हाहाकृते तव पुत्रस्य सैन्ये ।
स साल्वराजस्य शिनिप्रवीरो
जहार भल्लेन शिरः शितेन ॥ २६
हृतोत्तमाङ्गो युधि सात्वतेन
पपात भूमौ सह नागराज्ञा ।
यथाऽद्रिशृङ्गं सुमहत्प्रणुन्नं
वज्रेण देवाधिपचोदितेन ॥ २७

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

सात्यकिना कृतवर्मपराजयः ॥ १ ॥

सञ्जय उवाच ।
तस्मिंस्तु निहते शूरे साल्वे समितिशोभने ।
तवाभज्यद्बलं वेगाद्वातेनेव महाद्रुमः ॥ १
तत्प्रभग्नं बलं दृष्ट्वा कृतवर्मा महारथः ।
दधार समरे शूरः शत्रुसैन्यं महाबलः ॥ २
सन्निवृत्तास्तु ते शूरा दृष्ट्वा सात्वतमाहवे ।
शैलोपमं स्थिरं राजन्कीर्यमाणं शरैर्युधि ॥ ३
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह ।
निवृत्तानां महाराज मृत्युं कृत्वा निवर्तनम् ॥ ४
तत्राश्चर्यमभूद्युद्धं सात्वतस्य परैः सह ।
यदेको वारयामास पाण्डुसेनां दुरासदाम् ॥ ५
तेषामन्योन्यसुहृदां कृते कर्मणि दुष्करे ।
सिंहनादः प्रहृष्टानां दिविस्पृक्सुमहानभूत् ॥ ६
तेन शब्देन वित्रस्तान्पाञ्चालान्भरतर्षभ ।
शिनेर्नप्ता महाबाहुरन्वपद्यत सात्यकिः ॥ ७
स समासाद्य राजानं क्षेमधूर्तिं महाबलम् ।
सप्तभिर्निशितैर्बाणैरनयद्यमसादनम् ॥ ८
तमायान्तं महाबाहुं प्रवपन्तं शिताञ्शरान् ।
जवेनाभ्यपतद्धीमान्हार्दिक्यः शिनिपुङ्गवम् ॥ ९
तौ सिंहाविव नर्दन्तौ धन्विनौ रथिनां वरौ ।
अन्योन्यमभिधावन्तौ शस्त्रप्रवरधारिणौ ॥ १०
पाण्डवाः सहपाञ्चाला योधाश्चान्ये नृपोत्तमाः ।
प्रेक्षकाः समपद्यन्त तयोः पुरुषसिंहयोः ॥ ११
नाराचैर्वत्सदन्तैश्च वृष्ण्यन्धकमहारथौ ।
अभिजघ्नतुरन्योन्यं प्रहृष्टाविव कुञ्जरौ ॥ १२
चरन्तौ विविधान्मार्गान्हार्दिक्यशिनिपुङ्गवौ ।

सात्वतं कृतवर्माणम् ॥ ३ ॥

विंशोऽध्यायः ॥ २० ॥

मुहुरन्तर्दधाते तौ बाणवृष्ट्या परस्परम् ॥ १३
चापवेगबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः ।
आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ॥ १४
तमेकं सत्यकर्माणमासाद्य हृदिकात्मजः ।
अविध्यन्निशितैर्बाणैश्चतुर्भिश्चतुरो हयान् ॥ १५
स दीर्घबाहुः संक्रुद्धस्तोत्रार्दित इव द्विपः ।
अष्टभिः कृतवर्माणमविध्यत्परमेषुभिः ॥ १६
ततः पूर्णायतोत्सृष्टैः कृतवर्मा शिलाशितैः ।
सात्यकिं त्रिभिराहत्य धनुरेकेन चिच्छिदे ॥ १७
निकृत्तं तद्धनुःश्रेष्ठमपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन शैनेयः सशरं धनुः ॥ १८
तदादाय धनुःश्रेष्ठं वरिष्ठः सर्वधन्विनाम् ।
आरोप्य च धनुः शीघ्रं महावीर्यो महाबलः ॥ १९
अमृष्यमाणो धनुषश्छेदनं कृतवर्मणा ।
कुपितोऽतिरथः शीघ्रं कृतवर्माणमभ्ययात् ॥ २०
ततः सुनिशितैर्बाणैर्दशभिः शिनिपुङ्गवः ।
जघान सूतं चाश्वांश्च ध्वजं च कृतवर्मणः ॥ २१
ततो राजन्महेष्वासः कृतवर्मा महारथः ।
हताश्वसूतं संप्रेक्ष्य रथं हेमपरिष्कृतम् ॥ २२
रोषेण महताऽऽविष्टः शूलमुद्यम्य मारिष ।
चिक्षेप भुजवेगेन जिघांसुः शिनिपुङ्गवम् ॥ २३
तच्छूलं सात्वतो ह्याजौ निर्भिद्य निशितैः शरैः ।
चूर्णितं पातयामास मोहयन्निव माधवम् ।
ततोऽपरेण भल्लेन हृद्येनं समताडयत् ॥ २४
सुयुद्धे युयुधानेन हताश्वो हतसारथिः ।
कृतवर्मा कृतास्त्रेण धरणीमन्वपद्यत ॥ २५
तस्मिन्सात्यकिना वीरे द्वैरथे विरथीकृते ।
समपद्यत सर्वेषां सैन्यानां सुमहद्भयम् ॥ २६
पुत्राणां तव चात्यर्थं विषादः समजायत ।
हतसूते हताश्वे तु विरथे कृतवर्मणि ॥ २७
हताश्वं च समालक्ष्य हतसूतमरिंदम ।
अभ्यधावत्कृपो राजञ्जिघांसुः शिनिपुङ्गवम् २८
तमारोप्य रथोपस्थे मिषतां सर्वधन्विनाम् ।
अपोवाह महाबाहुं तूर्णमायोधनादपि ॥ २९
शैनेयेऽधिष्ठिते राजन्विरथे कृतवर्मणि ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ३०
तत्परे नान्वबुध्यन्त सैन्येन रजसा वृताः ।
तावकाः प्रद्रुता राजन्दुर्योधनमृते नृपम् ॥ ३१
दुर्योधनस्तु संप्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
जवेनाभ्यपतत्तूर्णं सर्वांश्चैको न्यवारयत् ॥ ३२
पाण्डूंश्च सर्वान्संक्रुद्धो धृष्टद्युम्नं च पार्षतम् ।
शिखण्डिनं द्रौपदेयान्पाञ्चालानां च ये गणाः ३३
केकयान्सोमकांश्चैव सृञ्जयांश्चैव मारिष ।
असंभ्रमं दुराधर्षः शितैर्बाणैरवाकिरत् ॥ ३४
अतिष्ठदाहवे यत्तः पुत्रस्तव महाबलः ।
यथा यज्ञे महानग्निर्मन्त्रपूतः प्रकाशते ।
तथा दुर्योधनो राजा सङ्ग्रामे सर्वतोऽभवत् ॥ ३५
तं परे नाभ्यवर्तन्त मर्त्या मृत्युमिवाहवे ।
अथान्यं रथमास्थाय हार्दिक्यः समपद्यत ॥ ३६

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ॥ २१ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
पुत्रस्तु ते महाराज रथस्थो रथिनां वरः ।
दुरुत्सहो बभौ युद्धे यथा रुद्रः प्रतापवान् ॥ १
तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही ।
परांश्च सिषिचे बाणैर्धाराभिरिव पर्वतान् ॥ २
न च सोऽस्ति पुमान्कश्चित्पाण्डवानां बलार्णवे
हयो गजो रथो वाऽपि यः स्याद्बाणैरविक्षतः ॥ ३
यं यं हि समरे योधं प्रपश्यामि विशांपते ।
स स बाणैश्चितोऽभूद्वै पुत्रेण तव भारत ॥ ४
यथा सैन्येन रजसा समुद्धूतेन वाहिनी ।

ग्रदृश्यत संछन्ना तथा बाणैर्महात्मनः ॥ ५
णभूतामपश्याम पृथिवीं पृथिवीपते ।
र्योधनेन प्रकृतां क्षिप्रहस्तेन धन्विना ॥ ६
ु योधसहस्रेषु तावकेषु परेषु च ।
स्ति दुर्योधनसमः पुमानिति मतिर्मम ॥ ७
ाद्भुतमपश्याम तव पुत्रस्य विक्रमम् ।
ेकं सहिताः पार्था नाभ्यवर्तन्त भारत ॥ ८
धेष्ठिरं शतेनाजौ विव्याध भरतर्षभ ।
मसेनं च सप्तत्या सहदेवं च पञ्चभिः ॥ ९
ुलं च चतुःषष्ट्या धृष्टद्युम्नं च पञ्चभिः ।
ञभिर्द्रौपदेयांश्च त्रिभिर्विव्याध सात्यकिम् ॥१०
ुश्चिच्छेद भल्लेन सहदेवस्य मारिष ।
ृपास्य धनुश्छिन्नं माद्रीपुत्रः प्रतापवान् ॥ ११
भ्यद्रवत राजानं प्रगृह्यान्यन्महद्धनुः ।
ो दुर्योधनं सङ्ख्ये विव्याध दशभिः शरैः ॥ १२
ुलस्तु ततो वीरो राजानं नवभिः शरैः ।
रूपैर्महेष्वासो विव्याध च ननाद च ॥ १३
ात्यकिश्चैव राजानं शरेणानतपर्वणा ।
पदेयास्त्रिसप्तत्या धर्मराजश्च पञ्चभिः ।
शीत्या भीमसेनश्च शरै राजानमार्पयन् ॥ १४
मन्तात्कीर्यमाणस्तु बाणसङ्घैर्महात्मभिः ।
चचाल महाराज सर्वसैन्यस्य पश्यतः ॥ १५
ाघवात्सौष्ठवाच्चापि वीर्याच्चापि महात्मनः ।
ति सर्वाणि भूतानि ददृशुः सर्वपार्थिवाः ॥१६
ार्तराष्ट्रा हि राजेन्द्र योधास्तु स्वल्पमन्तरम् ।
पश्यमाना राजानं पर्यवर्तन्त दंशिताः । १७
ामापततां घोरस्तुमुलः समपद्यत ।
ब्धस्य हि समुद्रस्य प्रावृट्काले यथा स्वनः ॥ १८
मासाद्य रणे ते तु राजानमपराजितम् ।
युधयुर्महेष्वासाः पाण्डवानाततायिनः ॥ १९
ामसेनं रणे क्रुद्धो द्रोणपुत्रो न्यवारयत् ।
ग्रोर्बाणैर्महाराज प्रमुक्तैः सर्वतोदिशम् ।
ज्ञायन्त रणे वीरा न दिशः प्रदिशस्तथा ॥ २०
ावुभौ क्रूरकर्माणावुभौ भारतदुःसहौ ।
ारूपमयुध्येतां कृतप्रतिकृतैषिणौ ॥ २१

त्रासयन्तौ दिशः सर्वा ज्याक्षेपकठिनत्वचौ ।
शकुनिस्तु रणे वीरो युधिष्ठिरमपीडयत् ॥ २२
तस्याश्वांश्चतुरो हत्वा सुबलस्य सुतो विभो ।
नादं चकार बलवत्सर्वसैन्यानि कम्पयन् ॥ २३
एतस्मिन्नन्तरे वीरं राजानमपराजितम् ।
अपोवाह रथेनाजौ सहदेवः प्रतापवान् ॥ २४
अथान्यं रथमास्थाय धर्मपुत्रो युधिष्ठिरः ।
शकुनिं नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ।
ननाद च महानादं प्रवरः सर्वधन्विनाम् ॥ २५
तद्युद्धमभवच्चित्रं घोररूपं च मारिष ।
प्रेक्षतां प्रीतिजननं सिद्धचारणसेवितम् ॥ २६
उलूकस्तु महेष्वासं नकुलं युद्धदुर्मदम् ।
अभ्यवर्षदमेयात्मा शरवर्षैः समन्ततः ॥ २७
तथैव नकुलः शूरः सौबलस्य सुतं रणे ।
शरवर्षेण महता समन्तात्पर्यवारयत् ॥ २८
तौ तत्र समरे वीरौ कुलपुत्रौ महारथौ ।
योधयन्तावपश्येतां कृतप्रतिकृतैषिणौ ॥ २९
तथैव कृतवर्माणं शैनेयः शत्रुतापनः ।
योधयञ्शुशुभे राजन्बलिं शक्र इवाहवे ॥ ३०
दुर्योधनो धनुश्छित्त्वा धृष्टद्युम्नस्य संयुगे ।
अथैनं छिन्नधन्वानं विव्याध निशितैः शरैः ॥३१
धृष्टद्युम्नोऽपि समरे प्रगृह्य परमायुधम् ।
राजानं योधयामास पश्यतां सर्वधन्विनाम् ॥ ३२
तयोर्युद्धं महच्चासीत्सङ्ग्रामे भरतर्षभ ।
प्रभिन्नयोर्यथा सक्तं मत्तयोर्वनहस्तिनोः ॥ ३३
गौतमस्तु रणे क्रुद्धो द्रौपदेयान्महाबलान् ।
विव्याध बहुभिः शूरः शरैः सन्नतपर्वभिः ॥ ३४
तस्य तैरभवद्युद्धमिन्द्रियैरिव देहिनः ।
घोररूपमसंवार्यं निर्मर्यादमवर्तत ॥ ३५
ते च संपीडयामासुरिन्द्रियाणीव बालिशम् ।
स च तान्प्रतिसंरब्धः प्रत्ययोधयदाहवे ॥ ३६
एवं चित्रमभूद्युद्धं तस्य तैः सह भारत ।
उत्थायोत्थाय हि यथा देहिनामिन्द्रियैर्विभो ३७
नराश्चैव नरैः सार्धं दन्तिनो दन्तिभिस्तथा ।
हया हयैः समासक्ता रथिनो रथिभिः सह ॥ ३८

संकुलं चाभवद्भूयो घोररूपं विशांपते ॥ ३९
इदं चित्रमिदं घोरमिदं रौद्रमिति प्रभो ।
युद्धान्यासन्महाराज घोराणि च बहूनि च ॥ ४०
ते समासाद्य समरे परस्परमरिंदमाः ।
व्यनदंश्चैव जघ्नुश्च समासाद्य महाहवे ॥ ४१
तेषां पत्रसमुद्भूतं रजस्तीव्रमदृश्यत ।
वातेन चोद्धतं राजन्धावद्भिश्चाश्वसादिभिः ॥ ४२
रथनेमिसमुद्भूतं निःश्वासैश्चापि दन्तिनाम् ।
रजः सन्ध्याभ्रकलिलं दिवाकरपथं ययौ ॥ ४३
रजसा तेन संपृक्तो भास्करो निष्प्रभः कृतः ।

संछादिताऽभवद्भूमिस्ते च शूरा महारथाः ॥
मुहूर्तादिव संवृत्तं नीरजस्कं समन्ततः ।
वीरशोणितसिक्तायां भूमौ भरतसत्तम ॥
उपाशाम्यत्ततस्तीव्रं तद्रजो घोरदर्शनम् ॥
ततोऽपश्यमहं भूयो द्वन्द्वयुद्धानि भारत ।
यथाप्राणं यथाश्रेष्ठं मध्याह्ने वै सुदारुणम् ॥
वर्मणां तत्र राजेन्द्र व्यदृश्यन्तोज्ज्वलाः प्रभा
शब्दश्च तुमुलः सङ्ख्ये शराणां पतताममभूत् ।
महावेणुवनस्येव दह्यमानस्य पर्वते ॥

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः ॥ २२ ॥

संकुलयुद्धम् ॥ १ ॥

सञ्जय उवाच ।
वर्तमाने तदा युद्धे घोररूपे भयानके ।
अभज्यत बलं तत्र तव पुत्रस्य पाण्डवैः ॥ १
तांस्तु सर्वानयत्नेन सन्निवार्य महारथाः ।
पुत्रास्ते योधयामासुः पाण्डवानामनीकिनीम् ॥ २
निवृत्ताः सहसा योधास्तव पुत्रजयैषिणः ।
सन्निवृत्तेषु तेष्वेवं युद्धमासीत्सुदारुणम् ।
तावकानां परेषां च देवासुररणोपमम् ॥ ३
परेषां तावकानां च नासीत्कश्चित्पराङ्मुखः ॥ ४
अनुमानेन युध्यन्ते संज्ञाभिश्च परस्परम् ।
तेषां क्षयो महानासीद्युध्यतामितरेतरम् ॥ ५
ततो युधिष्ठिरो राजा क्रोधेन महता युतः ।
जिगीषमाणः सङ्ग्रामे धार्तराष्ट्रान्सराजकान् ॥ ६
त्रिभिः शारद्वतं विद्ध्वा रुक्मपुङ्खैः शिलाशितैः ।
चतुर्भिर्निजघानाश्वान्कल्याणान्कृतवर्मणः ॥ ७
अश्वत्थामा तु हार्दिक्यमपोवाह यशस्विनम् ।
अथ शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम् ॥ ८
ततो दुर्योधनो राजा रथान्सप्तशतान्रणे ।
प्रैषयद्यत्र राजाऽसौ धर्मपुत्रो युधिष्ठिरः ॥ ९

ते रथा रथिभिर्युक्ता मनोमारुतरंहसः ।
अभ्यद्रवन्त सङ्ग्रामे कौन्तेयस्य रथं प्रति ॥
ते समन्तान्महाराज परिवार्य युधिष्ठिरम् ।
अदृश्यं सायकैश्चक्रुर्मेघा इव दिवाकरम् ॥
तं दृष्ट्वा धर्मराजानं कौरवेयैस्तथावृतम् ।
नामृष्यन्त सुसंरब्धाः शिखण्डिप्रमुखा रथाः॥
रथैरश्ववरैर्युक्तैः किङ्किणीजालसंवृतैः ।
आजग्मुरथ रक्षन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥
ततः प्रववृते रौद्रः सङ्ग्रामः शोणितोदकः ।
पाण्डवानां कुरूणां च यमराष्ट्रविवर्धनः ॥
रथान्सप्तशतान्हत्वा कुरूणामाततायिनाम् ।
पाण्डवाः सह पाञ्चालैः पुनरेवाभ्यवारयन् ॥
तत्र युद्धं महच्चासीत्तव पुत्रस्य पाण्डवैः ।
न च तत्तादृशं दृष्टं नैव चापि परिश्रुतम् ॥
वर्तमाने तदा युद्धे निर्मर्यादे समन्ततः ।
वध्यमानेषु योधेषु तावकेष्वितरेषु च ॥
विनदत्सु च योधेषु शङ्खवर्यैश्च पूरितैः ।
उत्कुष्टैः सिंहनादैश्च गर्जितैश्चैव धन्विनाम् ॥
अतिप्रवृत्ते युद्धे च छिद्यमानेषु मर्मसु ।

पत्रं वाहनम् ॥ ४२ ॥

एकविंशोऽध्यायः ॥ २१ ॥

धावमानेषु योधेषु जयगृद्धिषु मारिष ॥ १९
संहारे सर्वतो जाते पृथिव्यां शोकसंभवे ।
बह्वीनामुत्तमस्त्रीणां सीमन्तोद्धरणे कृते ॥ २०
निर्मर्यादे महायुद्धे वर्तमाने सुदारुणे ।
प्रादुरासन्विनाशाय तदोत्पाताः सुदारुणाः ॥ २१
चचाल शब्दं कुर्वाणा सपर्वतवना मही ।
सदण्डाः सोल्मुका राजन्कीर्यमाणाः समन्ततः ॥
उल्काः पेतुर्दिवो भूमावाहत्य रविमण्डलम् ।
विष्वग्वाताः प्रादुरासन्नीचैः शर्करवर्षिणः ॥ २३
अश्रूणि मुमुचुर्नागा वेपथुं चास्पृशन्भृशम् ।
एतान्घोराननादृत्य समुत्पातान्सुदारुणान् ॥ २४
पुनर्युद्धाय संयत्ताः क्षत्रियास्तस्थुरव्यथाः ।
रमणीये कुरुक्षेत्रे पुण्ये स्वर्गं यियासवः ॥ २५
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
युध्यध्वमग्रतो यावत्पृष्ठतो हन्मि पाण्डवान् ॥ २६
ततो नः संप्रयातानां मद्रयोधास्तरस्विनः ।
हृष्टाः किलाकिलाशब्दमकुर्वत परे तथा ॥ २७
अस्मांस्तु पुनरासाद्य लब्धलक्षा दुरासदाः ।
शरासनानि धुन्वन्तः शरवर्षैरवाकिरन् ॥ २८
ततो हतं परैस्तत्र मद्रराजबलं तदा ।
दुर्योधनबलं दृष्ट्वा पुनरासीत्पराङ्मुखम् ॥ २९
गान्धारराजस्तु पुनर्वाक्यमाह ततो बली ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ ३०
अनीकं दशसाहस्रमश्वानां भरतर्षभ ।
आसीद्गान्धारराजस्य विशालप्रासयोधिनाम् ॥ ३१
बलेन तेन विक्रम्य वर्तमाने जनक्षये ।
पृष्ठतः पाण्डवानीकमभ्यघ्नन्निशितैः शरैः ॥ ३२
तदभ्रमिव वातेन क्षिप्यमाणं समन्ततः ।
अभज्यत महाराज पाण्डूनां सुमहद्बलम् ॥ ३३
ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
अभ्यनोदयदव्यग्रः सहदेवं महाबलम् ॥ ३४
असौ सुबलपुत्रो नो जघनं पीड्य दंशितः ।
सैन्यानि सूदयत्येष पश्य पाण्डव दुर्मतिः ॥ ३५
गच्छ त्वं द्रौपदेयैश्च शकुनिं सौबलं जहि ।
रथानीकमहं धक्ष्ये पाञ्चालसहितोऽनघ ॥ ३६
गच्छन्तु कुञ्जराः सर्वे वाजिनश्च सह त्वया ।
पादाताश्च त्रिसाहस्राः शकुनिं तैर्वृतो जहि ॥ ३७
ततो गजाः सप्तशताश्चापपाणिभिरास्थिताः ।
पञ्च चाश्वसहस्राणि सहदेवश्च वीर्यवान् ॥ ३८
पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्वशः ।
रणे ह्यभ्यद्रवंस्ते तु शकुनिं युद्धदुर्मदम् ॥ ३९
ततस्तु सौबलो राजन्नभ्यतिक्रम्य पाण्डवान् ।
जघान पृष्ठतः सेनां जयगृद्धः प्रतापवान् ॥ ४०
अश्वारोहास्तु संरब्धाः पाण्डवानां तरस्विनाम् ।
प्राविशन्सौबलानीकमभ्यतिक्रम्य तान्रथान् ४१
ते तत्र सादिनः शूराः सौबलस्य महद्बलम् ।
रणमध्ये व्यतिष्ठन्त शरवर्षैरवाकिरन् ॥ ४२
तदुद्यतगदाप्रासमकापुरुषसेवितम् ।
प्रावर्तत महद्युद्धं राजन्दुर्मन्त्रिते तव ॥ ४३
उपारमन्त ज्याशब्दाः प्रेक्षका रथिनोऽभवन् ।
न हि स्वेषां परेषां वा विशेषः प्रत्यदृश्यत ॥ ४४
शूरबाहुविसृष्टानां शक्तीनां भरतर्षभ ।
ज्योतिषामिव संपातमपश्यन्कुरुपाण्डवाः ॥ ४५
ऋष्टिभिर्विमलाभिश्च तत्रतत्र विशांपते ।
संपतन्तीभिराकाशमावृतं बह्वशोभत ॥ ४६
प्रासानां पततां राजन्रूपमासीत्समन्ततः ।
शलभानामिवाकाशे तदा भरतसत्तम ॥ ४७
रुधिरोक्षितसर्वाङ्गा विप्रविद्धैर्नियन्तृभिः ।
हयाः परिपतन्तिस्म शतशोऽथ सहस्रशः ॥ ४८
अन्योन्यं परिपिष्टाश्च समासाद्य परस्परम् ।
सुविक्षताः स्म दृश्यन्ते वमन्तो रुधिरं मुखैः ॥ ४९
ततोऽभवत्तमो घोरं सैन्येन रजसा वृतम् ।
तानपाक्रमतोऽद्राक्षं तस्माद्देशादरिंदम ॥ ५०
अश्वान्राजन्मनुष्यांश्च रजसा संवृते सति ।
भूमौ निपतिताश्चान्ये वमन्तो रुधिरं बहु ॥ ५१
केशाकेशि समालग्ना न शेकुश्चेष्टितुं नराः ।
अन्योन्यमश्वपृष्ठेभ्यो विकर्षन्तो महाबलाः ॥ ५२
मल्ला इव समासाद्य निजघ्नुरितरेतरम् ।
अश्वैश्च व्यपकृष्यन्त बहवोऽत्र गतासवः ॥ ५३

भूमौ निपतिताश्चान्ये बहवो विजयैषिणः ।
तत्रतत्र व्यदृश्यन्त पुरुषाः शूरमानिनः ॥ ५४
रक्तोक्षितैश्छिन्नभुजैरवकृष्टशिरोरुहैः ।
व्यदृश्यत मही कीर्णा शतशोऽथ सहस्रशः ॥ ५५
दूरं न शक्यं तत्रासीद्गन्तुमश्वेन केनचित् ।
साश्वारोहैर्हतैरश्वैरावृते वसुधातले ॥ ५६
रुधिरोक्षितसन्नाहैरात्तशस्त्रैरुदायुधैः ।
नानाप्रहरणैर्घोरैः परस्परवधैषिभिः ।
सुसन्निकृष्टे सङ्ग्रामे हतभूयिष्ठसैनिके ॥ ५७
स मुहूर्तं ततो युद्ध्वा सौबलोऽथ विशांपते ।
षट्साहस्रैर्हयैः शिष्टैरपायाच्छकुनिस्ततः ॥ ५८
तथैव पाण्डवानीकं रुधिरेण समुक्षितम् ।
षट्साहस्रैर्हयैः शिष्टैरपायाच्छ्रान्तवाहनम् ॥ ५९
अश्वारोहाश्च पाण्डूनामब्रुवन्रुधिरोक्षिताः ।
सुसन्निकृष्टे सङ्ग्रामे भूयिष्ठे त्यक्तजीविताः ॥ ६०
न हि शक्यं रथैर्योद्धुं कुत एव महागजैः ।
रथानेव रथा यान्तु कुञ्जराः कुञ्जरानपि ॥ ६१
प्रतियातो हि शकुनिः स्वमनीकमवस्थितः ।
न पुनः सौबलो राजा योद्धुमभ्यागमिष्यति ॥६२
ततस्तु द्रौपदेयाश्च ते च मत्ता महाद्विपाः ।
प्रययुर्यत्र पाञ्चाल्यो धृष्टद्युम्नो महारथः ॥ ६३
सहदेवोऽपि कौरव्य रजोमेघे समुत्थिते ।
एकाकी प्रययौ तत्र यत्र राजा युधिष्ठिरः ॥६४
ततस्तेषु प्रयातेषु शकुनिः सौबलः पुनः ।
पार्श्वतोऽभ्यहनत्क्रुद्धो धृष्टद्युम्नस्य वाहिनीम् ॥६५
तत्पुनस्तुमुलं युद्धं प्राणांस्त्यक्त्वाऽभ्यवर्तत ।
तावकानां परेषां च परस्परवधैषिणाम् ॥ ६६
ते चान्योन्यमवैक्षन्त तस्मिन्वीरसमागमे ।
योधाः पर्यपतन्राजञ्शतशोऽथ सहस्रशः ॥ ६७
असिभिश्छिद्यमानानां शिरसां लोकसंक्षये ।
प्रादुरासीन्महाञ्शब्दस्तालानां पततामिव ॥ ६८
विमुक्तानां शरीराणां छिन्नानां पततां भुवि ।
सायुधानां च बाहूनामूरूणां च विशांपते ।
आसीत्कटकटाशब्दः सुमहान्रोमहर्षणः ॥ ६९
निघ्नन्तो निशितैः शस्त्रैर्भ्रातॄन्पुत्रान्सखीनपि ।
योधाः परिपतन्ति स्म यथाऽऽमिषकृते खगाः ७०
अन्योन्यं प्रतिसंरब्धाः समासाद्य परस्परम् ।
अहंपूर्वमहंपूर्वमिति निघ्नन्सहस्रशः ॥ ७१
संघातेनासनभ्रष्टैरश्वारोहैर्गतासुभिः ।
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ॥ ७२
स्फुरतां प्रतिपिष्टानामश्वानां शीघ्रगामिनाम् ।
स्तनतां च मनुष्याणां सन्नद्धानां विशांपते ॥७३
शक्त्यृष्टिप्रासशब्दश्च तुमुलः समपद्यत ।
भिन्दतां परमर्माणि राजन्दुर्मन्त्रिते तव ॥ ७४
श्रमाभिभूताः संरब्धा श्रान्तवाहाः पिपासवः ।
विक्षताश्च शितैः शस्त्रैरभ्यवर्तन्त तावकाः ॥ ७५
मत्ता रुधिरगन्धेन बहवोऽत्र विचेतसः ।
जघ्नुः परान्स्वकांश्चैव प्राप्तान्प्राप्ताननन्तरान् ॥ ७६
बहवश्च गतप्राणाः क्षत्रिया जयगृद्धिनः ।
भूमावभ्यपतन्राजञ्शरवृष्टिभिरावृताः ॥ ७७
वृकगृध्रशृगालानां तुमुले मोदनेऽहनि ।
आसीद्बलक्षयो घोरस्तव पुत्रस्य पश्यतः ॥ ७८
नराश्वकायैः संछन्ना भूमिरासीद्विशांपते ।
रुधिरोदकचित्रा च भीरूणां भयवर्धिनी ॥ ७९
असिभिः पट्टसैः शूलैस्तक्षमाणाः पुनःपुनः ।
तावकाः पाण्डवेयाश्च न न्यवर्तन्त भारत ॥ ८०
प्रहरन्तो यथाशक्ति यावत्प्राणस्य धारणम् ।
योधाः परिपतन्ति स्म वमन्तो रुधिरं मुखैः ॥ ८१
शिरो गृहीत्वा केशेषु कबन्धः स्म प्रदृश्यते ।
उद्यम्य च शितं खड्गं रुधिरेण परिप्लुतम् ॥ ८२
तथोत्थितेषु बहुषु कबन्धेषु नराधिप ।
तथा रुधिरगन्धेन योधाः कश्मलमाविशन् ॥ ८३
मन्दीभूते ततः शब्दे पाण्डवानां महद्बलम् ।
अल्पावशिष्टैस्तुरगैरभ्यवर्तत सौबलः ॥ ८४
ततोऽभ्यधावंस्त्वरिताः पाण्डवा जयगृद्धिनः ।
पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः ॥ ८५
कोष्ठकीकृत्य चाप्येनं परिक्षिप्य च सर्वशः ।
शस्त्रैर्नानाविधैर्जघ्नुर्युद्धपारं तितीर्षवः ॥ ८६
त्वदीयास्तांस्तु संप्रेक्ष्य सर्वतः समभिद्रुतान् ।
रथाश्वपत्तिद्विरदाः पाण्डवानभिदुद्रुवुः ॥ ८७

केचित्पदातयः पद्भिर्मुष्टिभिश्च परस्परम् ।
निजघ्नुः समरे शूराः क्षीणशस्त्रास्ततोऽपतन्॥८८
रथेभ्यो रथिनः पेतुर्द्विपेभ्यो हस्तिसादिनः ।
विमानेभ्यो दिवो भ्रष्टाः सिद्धाः पुण्यक्षयादिव ॥
एवमन्योन्यमायत्ता योधा जघ्नुर्महाहवे ।
पितॄन्भ्रातॄन्वयस्यांश्च पुत्रानपि तथा परे ॥ ९०
एवमासीदमर्यादं युद्धं भरतसत्तम ।
प्रासासिबाणकलिलं वर्तमाने सुदारुणे ॥ ९१

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ॥ २३ ॥

अर्जुनेन दुर्योधनगर्हणपूर्वकं तत्सेनानिबर्हणम् ॥ १ ॥

---

सञ्जय उवाच ।
अल्पावशिष्टे सैन्ये तु पाण्डवैर्निहते बले ।
अश्वैः सप्तसहस्रैस्तु उपावर्तत सौबलः ॥ १
स यात्वा वाहिनीं तूर्णं चोदयानः स्वकान्युधि ।
युध्यध्वमिति संहृष्टाः पुनःपुनररिंदमाः ॥ २
अपृच्छत्क्षत्रियांस्तत्र क नु राजा महाबलः ।
शकुनेस्तद्वचः श्रुत्वा तमूचुर्भरतर्षभ ॥ ३
असौ तिष्ठति कौरव्यो रणमध्ये महाबलः ।
यत्रैतत्सुमहच्छत्रं पूर्णचन्द्रसमप्रभम् ॥ ४
यत्र ते सतनुत्राणा रथास्तिष्ठन्ति दंशिताः ।
यत्रैष तुमुलः शब्दः पर्जन्यनिनदोपमः ॥ ५
तत्र गच्छ द्रुतं राजंस्ततो द्रक्ष्यसि कौरवम् ।
एवमुक्तस्तु तैर्योधैः शकुनिः सौबलस्तदा ॥ ६
प्रययौ तत्र यत्रास्ते पुत्रस्तव नराधिप ।
सर्वतः संवृतो वीरैः समरे चित्रयोधिभिः ॥ ७
ततो दुर्योधनं दृष्ट्वा रथानीके व्यवस्थितम् ।
स रथांस्तावकान्सर्वान्हर्षयञ्शकुनिस्ततः ॥ ८
दुर्योधनमिदं वाक्यं हृष्टरूपो विशांपते ।
कृतकार्यमिवात्मानं मन्यमानोऽब्रवीन्नृपम् ॥ ९
जहि राजन्रथानीकमश्वाः सर्वे जिता मया ।
नात्यक्त्वा जीवितं सङ्ख्ये शक्यो जेतुं युधिष्ठिरः १०
हते तस्मिन्रथानीके पाण्डवेनाभिपालिते ।
गजानेतान्हनिष्यामः पदातींश्चेतरांस्तथा ॥ ११
श्रुत्वा तु वचनं तस्य तावका जयगृद्धिनः ।
जवेनाभ्यपतन्हृष्टाः पाण्डवानामनीकिनीम् ॥१२
बद्धनिस्त्रिंशहस्ताश्च प्रगृहीतशरासनाः ।
शरासनानि धून्वानाः सिंहनादान्प्रचक्रिरे ॥ १३
ततो ज्यातलनिर्घोषः पुनरासीद्विशांपते ।
प्रादुरासीच्छराणां च सुमुक्तानां सुदारुणः ॥ १४
तान्समीपगतान्दृष्ट्वा जवानुद्यतकार्मुकान् ।
उवाच देवकीपुत्रं कुन्तीपुत्रो धनञ्जयः ॥ १५
चोदयाश्वानसंभ्रान्तः प्रविशैतद्बलार्णवम् ।
अन्तमद्य गमिष्यामि शत्रूणां निशितैः शरैः ॥१६
अष्टादश दिनान्यद्य युद्धस्यास्य जनार्दन ।
वर्तमानस्य महतः समासाद्य परस्परम् ॥ १७
अनन्तकल्पा ध्वजिनी भूत्वा ह्येषां महात्मनाम् ।
क्षयमद्य गता युद्धे पश्य दैवं यथाविधम् ॥ १८
समुद्रकल्पं च बलं धार्तराष्ट्रस्य माधव ।
अस्मानासाद्य संजातं गोष्पदोपममच्युत ॥ १९
हते भीष्मे धीर्ममासीच्छमः स्यादिति माधव ।
न च तत्कृतवान्मूढो धार्तराष्ट्रः सुबालिशः ॥ २०
उक्तं भीष्मेण यद्वाक्यं हितं तथ्यं च माधव ।
तच्चापि नासौ कृतवान्वीतबुद्धिः सुयोधनः ॥२१
तस्मिंस्तु निहते भीष्मे प्रच्युते पृथिवीपतौ ।
न जाने कारणं किंतु येन युद्धमवर्तत ॥ २२
मूढांस्तु सर्वथा मन्ये धार्तराष्ट्रान्सुबालिशान् ।
पतिते शन्तनोः पुत्रे येऽकार्षुः संयुगं पुनः ॥ २३
अनन्तरं च निहते द्रोणे ब्रह्मविदां वरे ।
राधेये च विकर्णे च नैव शाम्यति वैशसम् ॥ २४
अल्पावशिष्टे सैन्येऽस्मिन्सूतपुत्रे च पातिते ।
सपुत्रे वै नरव्याघ्रे नैव शाम्यति वैशसम् ॥ २५

श्रुतायुषि हते वीरे जलसन्धे च मागधे ।
श्रुतायुधे च नृपतौ नैव शाम्यति वैशसम् ॥ २६
भूरिश्रवसि शल्ये च साल्वे चैव जनार्दन ।
आवन्त्येषु च वीरेषु नैव शाम्यति वैशसम् ॥ २७
जयद्रथे च निहते राक्षसे चाप्यलायुधे ।
बाह्लिके सोमदत्ते च नैव शाम्यति वैशसम् ॥ २८
भगदत्ते हते शूरे काम्भोजे च सुदारुणे ।
दुःशासने च निहते नैव शाम्यति वैशसम् ॥ २९
दृष्ट्वा विनिहताञ्शूरान्पृथङ्माण्डलिकान्नृपान् ।
बलिनश्च रणे कृष्ण नैव शाम्यति वैशसम् ॥ ३०
अक्षौहिणीपतीन्दृष्ट्वा भीमसेननिपातितान् ।
मोहाद्वा यदि वा लोभान्नैव शाम्यति वैशसम् ३१
'हतप्रवीरां विध्वस्तां दृष्ट्वा चेमां चमूं रणे ।
अलम्बले च निहते नैव शाम्यति वैशसम् ॥ ३२
भ्रातॄन्विनिहतान्दृष्ट्वा वयस्यान्मातुलानपि ।
पुत्रान्विनिहतान्दृष्ट्वा नैव शाम्यति वैशसम् ॥' ३३
को नु राजकुले जातः कौरवेषु विशेषतः ।
निरर्थकं महद्वैरं कुर्यादन्यः सुयोधनात् ॥ ३४
गुणतोऽभ्यधिकाञ्ज्ञात्वा बलतः शौर्यतोपि वा ।
अमूढः को नु युध्येत जानन्प्राज्ञो हिताहितम् ३५
किंनु तस्य मनो ह्यासीत्त्वयोक्तस्य हितं वचः ।
प्रशमे पाण्डवैः सार्धं सोन्यस्य शृणुयात्कथम् ॥ ३६
येन शान्तनवो भीष्मो द्रोणो विदुर एव च ।
प्रत्याख्याताः शमस्यार्थे किंनु तस्याद्य भेषजम् ३७
मौर्ख्याद्येन पिता वृद्धः प्रत्याख्यातो जनार्दन ।
तथा माता हितं वाक्यं भाषमाणा हितैषिणी ॥ ३८
प्रत्याख्याता ह्यसत्कृत्य स कस्मै रोचयेद्वचः ।
कुलान्तकरणो व्यक्तं जात एष जनार्दन ॥ ३९
तथास्य दृश्यते चेष्टा नीतिश्चैव विशांपते ।
नैष दास्यति नो राज्यमिति मे मतिरच्युत ॥ ४०
उक्तोऽहं बहुशस्तात विदुरेण महात्मना ।
न जीवन्दास्यते भागं धार्तराष्ट्रः सुयोधनः ॥ ४१
यावत्प्राणा धरिष्यन्ति धार्तराष्ट्रस्य दुर्मतेः ।
तावद्युष्मास्वपापेषु प्रचरिष्यति पापकम् ॥ ४२
न च युक्तोऽन्यथा जेतुमृते युद्धेन माधव ।
इत्यब्रवीत्सदा मां हि विदुरः सत्यदर्शनः ॥ ४३
तत्सर्वमद्य जानामि व्यवसायं दुरात्मनः ।
यदुक्तं वचनं तेन विदुरेण महात्मना ॥ ४४
यो हि श्रुत्वा वचः पथ्यं जामदग्न्याद्यथातथम् ।
अवामन्यत दुर्बुद्धिर्ध्रुवं नाशमुखे स्थितः ॥ ४५
उक्तं हि बहुभिः सिद्धैर्जातमात्रे सुयोधने ।
एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति ॥ ४६
तदिदं वचनं तेषां निरुक्तं वै जनार्दन ।
क्षयं याता हि राजानो दुर्योधनकृते भृशम् ॥ ४७
सोऽद्य सर्वान्रणे योधान्निहनिष्यामि माधव ४८
क्षत्रियेषु हतेष्वाशु शून्ये च शिबिरे कृते ।
वधाय चात्मनोऽस्माभिः संयुगं रोचयिष्यति ४९
तदन्तं हि भवेद्वैरमनुमानेन माधव ।
एवं पश्यामि वार्ष्णेय चिन्तयन्प्रज्ञया स्वया ।
विदुरस्य च वाक्येन चेष्टया च दुरात्मनः ॥ ५०
तस्माद्याहि चमूं वीर यावद्धन्मि शितैः शरैः ।
दुर्योधनं महाबाहो वाहिनीं चास्य संयुगे ॥ ५१
क्षेममद्य करिष्यामि धर्मराजस्य माधव ।
हत्वैतद्दुर्बलं सैन्यं धार्तराष्ट्रस्य पश्यतः ॥ ५२
सञ्जय उवाच ।
अभीशुहस्तो दाशार्हस्तथोक्तः सव्यसाचिना ।
तद्बलौघममित्राणामभीतः प्राविशद्बलात् ॥ ५३
शरासनवनं घोरं शक्तिकण्टकसंकुलम् ।
गदापरिघपाषाणं रथनागमहाद्रुमम् ॥ ५४
हयपत्तिलताकीर्णं गाहमानो महायशाः ।
व्यचरत्तत्र गोविन्दो रथेनातिपताकिना ॥ ५५
ते हयाः पाण्डुरा राजन्वहन्तोऽर्जुनमाहवे ।
दिक्षु सर्वास्वदृश्यन्त दाशार्हेण प्रचोदिताः ॥ ५६
ततः प्रायाद्रथेनाजौ सव्यसाची परंतपः ।
किरञ्शरशतांस्तीक्ष्णान्वारिधारा घनो यथा ५७
प्रादुरासीन्महाञ्शब्दः शराणां नतपर्वणाम् ।

पापक प्रचरिष्यति आचरिष्यति धार्तराष्ट्र इति शेषः ॥ ४२ ॥

त्रयोविंशोऽध्यायः ॥ २३ ॥

इषुभिश्छाद्यमानानां समरे सव्यसाचिना ॥ ५८
असज्जन्तस्तनुत्रेषु शरौघाः प्रापतन्भुवि ।
इन्द्राशनिसमस्पर्शा गाण्डीवप्रेषिताः शराः ॥ ५९
नरान्नागान्समाहत्य हयांश्चापि विशांपते ।
अपतन्त रणे बाणाः पतङ्गा इव घोषिणः ॥ ६०
आसीत्सर्वमवच्छन्नं गाण्डीवप्रेषितैः शरैः ।
न प्राज्ञायन्त समरे दिशो वा प्रदिशोऽपि वा ६१
सर्वमासीज्जगत्पूर्णं पार्थनामाङ्कितैः शरैः ।
रुक्मपुङ्खैस्तैलधौतैः कर्मारपरिमार्जितैः ॥ ६२
ते दह्यमानाः पार्थेन पावकेनेव कुञ्जराः ।
पार्थं न प्राजहुर्घोरा वध्यमानाः शितैः शरैः॥६३
शरचापधरः पार्थः प्रज्वलन्निव भास्करः ।
ददाह समरे योधान्कक्षमग्निरिव ज्वलन् ॥ ६४
यथा वनान्ते वनपैर्विसृष्टः
कक्षं दहेत्कृष्णगतिः सुघोषः ।
भूरिद्रुमं शुष्कलतावितानं
भृशं समृद्धो ज्वलनः प्रतापी ॥ ६५
एवं स नाराचगणप्रतापी
शरार्चिरुच्चावचतिग्मतेजाः ।
ददाह सर्वां तव पुत्रसेना-
ममृष्यमाणस्तरसा तरस्वी ॥ ६६
तस्येषवः प्राणहराः सुमुक्ता
नासज्जन्वै वर्मसु रुक्मपुङ्खाः ।
न च द्वितीयं प्रमुमोच बाणं
नरे हये वा परमद्विपे वा ॥ ६७
अनेकरूपाकृतिभिर्हि बाणै-
र्महारथानीकमनुप्रविश्य ।
स एव एकस्तव पुत्रस्य सेनां
जघान दैत्यानिव वज्रपाणिः । ६८

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः ॥ २४ ॥

धृष्टद्युम्नपराजितेन दुर्योधनेनाश्वारोहणेन पलायनम् ॥ १ ॥ अश्वत्थामादिभिस्तदन्वेषणम् ॥ २ ॥

सञ्जय उवाच ।
युध्यतां यतमानानां शूराणामनिवर्तिनाम् ।
संकल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ १
इन्द्राशनिसमस्पर्शानविषह्यान्महौजसः ।
विसृजन्दृश्यते बाणान्धारा मुञ्चन्निवाम्बुदः ॥२
तत्सैन्यं भरतश्रेष्ठ वध्यमानं किरीटिना ।
संप्रदुद्राव संग्रामात्तव पुत्रस्य पश्यतः ॥ ३
पितॄन्भ्रातॄन्परित्यज्य वयस्यानपि चापरे ॥ ४
हतधुर्या रथाः केचिद्धतसूतास्तथा परे ।
भग्नाक्षयुगचक्रेषाः केचिदासन्विशांपते ॥ ५
अन्येषां सायकाः क्षीणास्तथाऽन्ये बाणपीडिताः।
अक्षता युगपत्केचित्प्राद्रवन्भयपीडिताः ॥ ६
केचित्पुत्रानुपादाय हतभूयिष्ठबान्धवाः ।
विचुक्रुशुः पितॄंस्त्वन्ये सहायानपरे पुनः ॥ ७
बान्धवांश्च नरव्याघ्र भ्रातॄन्संबन्धिनस्तथा ।
दुद्रुवुः केचिदुत्सृज्य तत्रतत्र विशांपते ॥ ८
बहवोऽत्र भृशं विद्धा मुह्यमाना महारथाः ।
निःश्वसन्ति स्म दृश्यन्ते पार्थबाणहता नराः ॥ ९
तानन्ये रथमारोप्य ह्याश्वास्य च मुहूर्तकम् ।
विश्रान्ताश्च वितृष्णाश्च पुनर्युद्धाय जग्मिरे ॥ १०
तानपास्य गताः केचित्पुनरेव युयुत्सवः ।
कुर्वन्तस्तव पुत्रस्य शासनं युद्धदुर्मदाः ॥ ११
पानीयमपरे पीत्वा पर्याश्वास्य च वाहनम् ।
वर्माणि च समारोप्य केचिद्भरतसत्तम ॥ १२
समाश्वास्यापरे भ्रातॄन्निक्षिप्य शिबिरेऽपि च ।
पुत्रानन्ये पितॄनन्ये पुनर्युद्धमरोचयन् ॥ १३

संप्रदुद्रावेति पूर्वस्थं संप्रदुद्रुवुरिति विपरिणामेन संबध्यते ॥ ४ ॥ चतुर्विंशोऽध्यायः ॥ २४ ॥

मज्जयित्वा रथान्केचिद्यथामुख्यं विशांपते ।
आप्लुत्य पाण्डवानीकं पुनर्युद्धमरोचयन् ॥ १४
ते ह्रगाः किङ्किणीजालैः समाच्छन्ना बभासिरे ।
त्रैलोक्यविजये युक्ता यथा दैतेयदानवाः ॥ १५
आगम्य सहसा केचिद्रथैः स्वर्णविभूषितैः ।
पाण्डवानामनीकेषु धृष्टद्युम्नमयोधयन् ॥ १६
धृष्टद्युम्नोऽपि पाञ्चाल्यः शिखण्डी च महारथः ।
नाकुलिस्तु शतानीको रथानीकमयोधयन् ॥ १७
पाञ्चाल्यस्तु ततः क्रुद्धः सैन्येन महता वृतः ।
अभ्यद्रवत्सुसंक्रुद्धस्तावकान्हन्तुमुद्यतः ॥ १८
ततस्त्वापततस्तस्य तव पुत्रो जनाधिप ।
बाणसङ्घाननेकान्वै प्रेषयामास भारत ॥ १९
धृष्टद्युम्नस्ततो राजंस्तव पुत्रेण धन्विना ।
नाराचैरर्धनाराचैर्बहुभिः क्षिप्रकारिभिः ॥ २०
वत्सदन्तैश्च बाणैश्च कर्मारपरिमार्जितैः ।
अश्वांश्च चतुरो हत्वा बाह्वोरुरसि चार्पितः ॥ २१
सोऽतिविद्धो महेष्वासस्तोत्रार्दित इव द्विपः ।
तस्याश्वांश्चतुरो बाणैः प्रेषयामास मृत्यवे ।
सारथेश्चास्य भल्लेन शिरः कायादपाहरत् ॥ २२
ततो दुर्योधनो राजा पृष्ठमारुह्य वाजिनः ।
अपाक्रामद्धतरथो नातिदूरमरिंदमः ॥ २३
दृष्ट्वा तु हतविक्रान्तं स्वमनीकं महाबलः ।
तव पुत्रो महाराज प्रययौ यत्र सौबलः ॥ २४
ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः ।
पाण्डवान्रथिनः सर्वान्समन्तात्पर्यवारयन् ॥ २५
ते वृताः समरे पञ्च गजानीकेन भारत ।
अशोभन्त महाराज ग्रहास्तारागणैरिव ॥ २६
ततोऽर्जुनो महाराज लब्धलक्षो महाभुजः ।
विनिर्ययौ रथेनैव श्वेताश्वः कृष्णसारथिः ॥ २७
तैः समन्तात्परिवृतः कुञ्जरैः पर्वतोपमैः ।
नाराचैर्विमलैस्तीक्ष्णैर्गजानीकमयोधयत् ॥ २८
तत्रैकबाणनिहतानपश्याम महागजान् ।
पतितान्पात्यमानांश्च निर्भिन्नान्सव्यसाचिना २९
भीमसेनस्तु तान्दृष्ट्वा नागान्मत्तगजोपमः ।
करेणादाय महतीं गदामभ्यपतद्बली ।
अथाप्लुत्य रथात्तूर्णं दण्डपाणिरिवान्तकः ॥ ३०
तमुद्यतगदं दृष्ट्वा पाण्डवानां महारथम् ।
वित्रेसुस्तावकाः सैन्याः शकृन्मूत्रं च सुस्रुवुः ३१
आविग्नं च बलं सर्वं गदाहस्ते वृकोदरे ॥ ३२
गदया भीमसेनेन भिन्नकुम्भान्निपातितान् ।
धावमानानपश्याम कुञ्जरान्पर्वतोपमान् ॥ ३३
प्राद्रवन्कुञ्जरास्ते तु भीमसेनगदाहताः ।
पेतुरार्तस्वरं कृत्वा छिन्नपक्षा इवाद्रयः ॥ ३४
प्रभिन्नकुम्भांस्तु बहून्द्रवमाणानितस्ततः ।
पतमानांश्च संप्रेक्ष्य वित्रेसुस्तव सैनिकाः ॥ ३५
युधिष्ठिरोऽपि संक्रुद्धो माद्रीपुत्रौ च पाण्डवौ ।
गार्ध्रपत्रैः शितैर्बाणैर्जघ्नुर्वै गजयोधिनः ॥ ३६
धृष्टद्युम्नस्तु समरे पराजित्य नराधिपम् ।
अपक्रान्ते तव सुते हयपृष्ठं समाश्रिते ॥ ३७
दृष्ट्वा च पाण्डवान्सर्वान्कुञ्जरैः परिवारितान् ।
धृष्टद्युम्नो महाराज सहसा समुपाद्रवत् ॥ ३८
पुत्रः पाञ्चालराजस्य जिघांसुः कुञ्जरान्ययौ ।
अदृष्ट्वा तु रथानीके दुर्योधनमरिंदमम् ॥ ३९
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
अपृच्छन्क्षत्रियांस्तत्र क्व नु दुर्योधनो गतः ॥ ४०
तेऽपश्यमाना राजानं वर्तमाने जनक्षये ।
मन्वाना निहतं तत्र तव पुत्रं महारथाः ।
विवर्णवदना भूत्वा पर्यपृच्छन्त ते सुतम् ॥ ४१
आहुः केचिद्धते सूते प्रयातो यत्र सौबलः ।
हित्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ ४२
अपरे त्वब्रुवंस्तत्र क्षत्रिया भृशविक्षताः ।
दुर्योधनेन किं कार्यं द्रक्ष्यध्वं यदि जीवति ।
युध्यध्वं सहिताः सर्वे किं वो राजा करिष्यति ४३
ते क्षत्रियाः क्षतैर्गात्रैर्हतभूयिष्ठवाहनाः ।
शरैः संपीड्यमानास्तु नातिव्यक्तमथाब्रुवन् ॥ ४४
इदं सर्वं बलं हन्मो येन स्म परिवारिताः ।
एते सर्वे गजान्हत्वा उपयान्ति स्म पाण्डवाः ४५
श्रुत्वा तु वचनं तेषामश्वत्थामा महाबलः ।

भित्त्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ ४६
कृपश्च कृतवर्मा च प्रययौ यत्र सौबलः ।
रथानीकं परित्यज्य शूराः सुदृढधन्विनः ॥ ४७
ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरस्कृताः ।
आययुः पाण्डवा राजन्विनिघ्नन्तः स्म तावकान् ॥
दृष्ट्वा तु तानापततः संप्रहृष्टान्महारथान् ।
पराक्रान्तास्ततो वीरा निराशा जीविते तदा ॥४९
विवर्णमुखभूयिष्ठमभवत्तावकं बलम् ।
परिक्षीणायुधान्दृष्ट्वा तानहं परिवारितान् ॥ ५०
राजन्बलेन त्र्यङ्गेन त्यक्त्वा जीवितमात्मनः ।
आत्मना पञ्चमोऽयुध्यं पाञ्चालस्य बलेन ह ॥ ५१
तस्मिन्देशे व्यवस्थाय यत्र शारद्वतः स्थितः ।
संप्रद्रुता वयं पञ्च किरीटिशरपीडिताः ॥ ५२
धृष्टद्युम्नं महारौद्रं तत्र नाभूद्रणो महान् ।
जितास्तेन वयं सर्वे व्यपयाम रणात्ततः ॥ ५३
अथापश्यं सात्यकिं तमुपायातं महारथम् ।
रथैश्चतुःशतैर्वीरो मामभ्यद्रवदाहवे ॥ ५४
धृष्टद्युम्नादहं मुक्तः कथंचिच्छ्रान्तवाहनात् ।
पतितो माधवानीकं दुष्कृती नरकं यथा ॥ ५५
तत्र युद्धमभूद्घोरं मुहूर्तमतिदारुणम् ॥ ५६
सात्यकिस्तु महाबाहुर्मम हत्वा परिच्छदम् ।
जीवग्राहमगृह्णान्मां मूर्च्छितं पतितं भुवि ॥ ५७
ततो मुहूर्तादिव तद्गजानीकमविध्यत ।
गदया भीमसेनेन नाराचैरर्जुनेन च ॥ ५८
अभिपिष्टैर्महानागैः समन्तात्पर्वतोपमैः ।
नातिप्रसिद्धैव गतिः पाण्डवानामजायत ॥ ५९
रथमार्गं ततश्चक्रे भीमसेनो महाबलः ।
पाण्डवानां महाराज व्यपाकर्षन्महागजान् ॥ ६०
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
अपश्यन्तो रथानीके दुर्योधनमरिंदमम् ।
राजानं मृगयामासुस्तव पुत्रं महारथम् ॥ ६१
परित्यज्य च पाञ्चाल्यं प्रयाता यत्र सौबलः ।
राज्ञोऽदर्शनसंविग्ना वर्तमाने जनक्षये ॥ ६२

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ॥ २५ ॥

भीमेनावशिष्टानां दुर्योधनानुजानां वधः ॥ १ ॥

सञ्जय उवाच ।
गजानीके हते तस्मिन्पाण्डुपुत्रेण भारत ।
वध्यमाने बले चैव भीमसेनेन संयुगे ॥ १
चरन्तं च प्रपश्यामो भीमसेनमरिंदमम् ।
दण्डहस्तं यथा क्रुद्धमन्तकं प्राणहारिणम् ॥ २
समेत्य समरे राजन्हतशेषाः सुतास्तव ।
अदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव ।
सोदर्याः सहिता भूत्वा भीमसेनमुपाद्रवन् ॥ ३
श्रुतर्वा संजयश्चैव जयत्सेनः श्रुतान्तकः ।
दुर्विमोचनकश्चैव तथा दुर्विषहो बली ॥ ४
दुर्मर्षणः सुजातश्च जैत्रो भूरिबलो रविः ।
इत्येते सहिता भूत्वा तव पुत्राः समन्ततः ।
भीमसेनमभिद्रुत्य रुरुधुः सर्वतो दिशम् ॥ ५
ततो भीमो महाराज स्वरथं पुनरास्थितः ।
मुमोच निशितान्बाणान्पुत्राणां तव मर्मसु ॥ ६
ते कीर्यमाणा भीमेन पुत्रास्तव महारणे ।
भीमसेनमुपासेदुः प्रवाता इव कुञ्जरम् ॥ ७
ततः क्रुद्धो रणे भीमः शिरो दुर्मर्षणस्य ह ।
क्षुरप्रेण प्रमथ्याशु पातयामास भूतले ॥ ८
ततोऽपरेण भल्लेन सर्वावरणभेदिना ।
श्रुतान्तमवधीद्भीमस्तव पुत्रं महारथः ॥ ९
जयत्सेनं ततो विद्ध्वा नाराचेन हसन्निव ।

प्रवणादिव कुञ्जरमिति झ. पाठः ॥ ७ ॥

पातयामास कौरव्यं रथोपस्थादरिंदमः ।
स पपात रथाद्राजन्भूमौ तूर्णं ममार च ॥ १०
श्रुतर्वा तु ततो भीमं क्रुद्धो विव्याध मारिष ।
शतेन गृध्रवाजानां शराणां नतपर्वणाम् ॥ ११
ततः क्रुद्धो रणे भीमो जैत्रं भूरिबलं रविम् ।
त्रीनेतांस्त्रिभिरानर्च्छद्विषाग्निप्रतिमैः शरैः ॥ १२
ते हता न्यपतन्भूमौ स्यन्दनेभ्यो महारथाः ।
वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः ॥१३
ततोऽपरेण भल्लेन तीक्ष्णेन च परंतपः ।
दुर्विमोचनमाहत्य प्रेषयामास मृत्यवे ॥ १४
स हतः प्रापतद्भूमौ स्वरथाद्रथिनां वरः ।
गिरेस्तु कूटजो भग्नो मारुतेनेव पादपः ॥ १५
दुष्प्रधर्षं ततश्चैव सुजातं च सुतं तव ।
एकैकं न्यहनत्सङ्ख्ये द्वाभ्यांद्वाभ्यां चमूमुखे ।
तौ शिलीमुखविद्धाङ्गौ पेततू रथसत्तमौ ॥ १६
ततः पतन्तं समरे अभिवीक्ष्य सुतं तव ।
भल्लेन पातयामास भीमो दुर्विषहं रणे ॥ १७
स पपात हतो वाहात्पश्यतां सर्वधन्विनाम् ॥१८
दृष्ट्वा तु निहतान्भ्रातॄन्बहूनेकेन संयुगे ।
अमर्षवशमापन्नः श्रुतर्वा भीममभ्ययात् ॥ १९
विक्षिपन्सुमहच्चापं कार्तस्वरविभूषितम् ।
विसृजन्सायकांश्चैव विषाग्निप्रतिमान्बहून् ॥ २०
स तु राजन्धनुश्छित्त्वा पाण्डवस्य महामृधे ।
अथैनं छिन्नधन्वानं विंशत्या समवाकिरत् ॥२१
ततोऽन्यद्धनुरादाय भीमसेनो महाबलः ।
अवाकिरत्तव सुतं तिष्ठतिष्ठेति चाब्रवीत् ॥ २२
महदासीत्तयोर्युद्धं चित्ररूपं भयानकम् ।
यादृशं समरे पूर्वं जम्भवासवयोर्युधि ॥ २३
तयोस्तत्र शितैर्मुक्तैर्यमदण्डनिभैः शरैः ।
समाच्छन्ना धरा सर्वा खं दिशो विदिशस्तथा ॥२४
ततः श्रुतर्वा संक्रुद्धो धनुरादाय सायकैः ।
भीमसेनं रणे राजन्बाह्वोरुरसि चार्पयत् ॥
सोऽतिविद्धो महाराज तव पुत्रेण धन्विना ।
भीमः संचुक्षुभे क्रुद्धः पर्वणीव महोदधिः ॥
ततो भीमो रुषाविष्टः पुत्रस्य तव मारिष ।
सारथिं चतुरश्चाश्वाञ्शरैर्निन्ये यमक्षयम् ॥ २
विरथं तं समालक्ष्य विशिखैर्लोमवाहिभिः ।
अवाकिरदमेयात्मा दर्शयन्पाणिलाघवम् ॥ २
श्रुतर्वा विरथो राजन्नाददे खड्गचर्मणी ।
अथास्याददतः खड्गं शतचन्द्रं च भानुमत् ।
क्षुरप्रेण शिरः कायात्पातयामास पाण्डवः ॥ २
छिन्नोत्तमाङ्गस्य ततः क्षुरप्रेण महात्मना ।
पपात कायः स्वरथाद्वसुधामनुनादयन् ॥ ३
तस्मिन्निपतिते वीरे तावका भयमोहिताः ।
अभ्यद्रवन्त सङ्ग्रामे भीमसेनं युयुत्सवः ॥ ३
तानापतत एवाशु हतशेषाद्बलार्णवात् ।
दंशितान्प्रतिजग्राह भीमसेनः प्रतापवान् ॥ ३
ते तु तं वै समासाद्य परिवव्रुः समन्ततः ॥ ३
ततस्तु संवृतो भीमस्तावकान्निशितैः शरैः ।
पीडयामास तान्सर्वान्सहस्राक्ष इवासुरान् ॥ ३
ततः पञ्चशतान्हत्वा सवरूथान्महारथान् ।
जघान कुञ्जरानीकं पुनः सप्तशतं युधि ॥ ३
हत्वा शतसहस्राणि पत्तीनां परमेषुभिः ।
वाजिनां च शतान्यष्टौ पाण्डवः स विराजते ३६
भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव ।
मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ॥ ३७
तं तथा युध्यमानं च विनिघ्नन्तं च तावकान् ।
ईक्षितुं नोत्सहन्ते स्म तव सैन्या नराधिप ॥ ३८
विद्राव्य च कुरून्सर्वांस्तांश्च हत्वा पदानुगान् ।
दोर्भ्यां शब्दं ततश्चक्रे त्रासयानो महाद्विपान् ३९
हतभूयिष्ठयोधा तु तव सेना विशांपते ।
किंचिच्छेषा महाराज कृपणं समपद्यत ॥ ४०

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

कृष्णार्जुनयोः संवादः ॥ १ ॥ संकुलयुद्धम् ॥ २ ॥ भीमेन सुदर्शननाम्नो दुर्योधनानुजस्य वधः ॥ ३ ॥

सञ्जय उवाच ।
दुर्योधनो महाराज सुदर्शश्चापि ते सुतः ।
हतशेषौ तदा सङ्ख्ये वाजिमध्ये व्यवस्थितौ ॥ १
ततो दुर्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितम् ।
उवाच देवकीपुत्रः कुन्तीपुत्रं धनञ्जयम् ॥ २
शत्रवो हतभूयिष्ठा ज्ञातयः परिपालिताः ।
गृहीत्वा सञ्जयं चासौ निवृत्तः शिनिपुङ्गवः ॥ ३
परिश्रान्तश्च नकुलः सहदेवश्च भारत ।
योधयित्वा रणे पापान्धार्तराष्ट्रान्सहानुगान् ॥ ४
दुर्योधनमतिक्रम्य त्रय एते व्यवस्थिताः ।
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ॥ ५
असौ तिष्ठति पाञ्चाल्यः श्रिया परमया युतः ।
दुर्योधनबलं हत्वा सह सर्वैः प्रभद्रकैः ॥ ६
असौ दुर्योधनः पार्थ वाजिमध्ये व्यवस्थितः ।
छत्रेण ध्रियमाणेन प्रेक्षमाणो मुहुर्मुहुः ॥ ७
प्रतिव्यूह्य बलं सर्वं रणमध्ये व्यवस्थितः ।
एनं हत्वा शितैर्बाणैः कृतकृत्यो भविष्यसि ॥ ८
गजानीकं हतं दृष्ट्वा त्वां च प्राप्तमरिंदम ।
यावन्न विद्रवन्त्येते तावज्जहि सुयोधनम् ॥ ९
यातु कश्चित्तु पाञ्चाल्यं क्षिप्रमागम्यतामिति ।
परिश्रान्तबलस्तात नैष मुच्येत किल्बिषी ॥ १०
हत्वा तव बलं सर्वं संग्रामे धृतराष्ट्रजः ।
जितान्पाण्डुसुतान्मत्वा रूपं धारयते महत् ॥ ११
निहतं स्वबलं दृष्ट्वा पीडितं चापि पाण्डवैः ।
ध्रुवमेष्यति संग्रामे वधायैवात्मनो नृपः ॥ १२
एवमुक्तः फल्गुनस्तु कृष्णं वचनमब्रवीत् ।
धृतराष्ट्रसुताः सर्वे हता भीमेन माधव ।
यावेतावास्थितौ कृष्ण तावद्य नभविष्यतः ॥ १३
हतो भीष्मो हतो द्रोणः कर्णो वैकर्तनो हतः ।
मद्रराजो हतः शल्यो हतः कृष्ण जयद्रथः ॥ १४
हयाः पञ्चशताः शिष्टाः शकुनेः सौबलस्य च ।
रथानां तु शते शिष्टे द्वे एव तु जनार्दन ।
दन्तिनां च शतं साग्रं त्रिसाहस्राः पदातयः ॥ १५
अश्वत्थामा कृपश्चैव त्रिगर्ताधिपतिस्तथा ।
उलूकः शकुनिश्चैव कृतवर्मा च सात्वतः ॥ १६
एतद्बलमभूच्छेषं धार्तराष्ट्रस्य माधव ।
मोक्षो न नूनं कालात्तु विद्यते भुवि कस्यचित् ॥ १७
तथा विनिहते सैन्ये पश्य दुर्योधनं स्थितम् ।
अद्याह्ना हि महाराजो हतामित्रो भविष्यति ।
न हि मे मोक्ष्यते कश्चित्परेषामिह चिन्तये ॥ १८
ये त्वद्य समरं कृष्ण न हास्यन्ति मदोत्कटाः ।
तान्वै सर्वान्हनिष्यामि यद्यपि स्युरमानुषाः ॥ १९
अद्य युद्धे समुत्पन्नं दीर्घं राज्ञः प्रजागरम् ।
अपनेष्यामि गान्धारिं घातयित्वा शितैः शरैः २०
निकृत्या वै दुराचारो यानि रत्नानि सौबलः ।
सभायामहरद्द्यूते पुनस्तान्याहराम्यहम् ॥ २१
अद्य वेत्स्यन्ति मर्च्छन्ति सर्वा नागपुरे स्त्रियः ।
श्रुत्वा पतींश्च पुत्रांश्च पाण्डवैर्निहतान्युधि ॥ २२
समाप्तमद्य वै कर्म सर्वं कृष्ण भविष्यति ।
अद्य दुर्योधनो दीप्तां श्रियं प्राणांश्च मोक्ष्यति ॥ २३
नापयाति भयात्कृष्ण संग्रामाद्यदि चेन्मम ।
निहतं विद्धि वार्ष्णेय धार्तराष्ट्रं सुबालिशम् ॥ २४
मम ह्येतदपर्याप्तं वाजिवृन्दमरिंदम ।
सोढुं ज्यातलनिर्घोषं याहि यावन्निहन्म्यहम् ॥ २५
सञ्जय उवाच ।
एवमुक्तस्तु दाशार्हः पाण्डवेन यशस्विना ।
अचोदयद्धयान्राजन्दुर्योधनबलं प्रति ॥ २६
तदनीकमभिप्रेक्ष्य त्रयः सज्जा महारथाः ।
भीमसेनोऽर्जुनश्चैव सहदेवश्च मारिष ।
प्रययुः सिंहनादेन दुर्योधनजिघांसया ॥ २७
तान्प्रेक्ष्य सहितान्सर्वाञ्जवेनोद्यतकार्मुकान् ।
सौबलोऽभ्यद्रवद्युद्धे पाण्डवानाततायिनः ॥ २८
सुदर्शनस्तव सुतो भीमसेनं समभ्ययात् ।

मोक्षो नूनं कालसृष्टः इति क. पाठः ॥ १७ ॥

सुशर्मा शकुनिश्चैव युयुधाते किरीटिना ॥ २९
सहदेवं तव सुतो हयपृष्ठगतोऽभ्ययात् ॥ ३०
ततो हि यत्नतः क्षिप्रं तव पुत्रो जनाधिप ।
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् ॥ ३१
सोपाविशद्रथोपस्थे तव पुत्रेण ताडितः ।
रुधिराप्लुतसर्वाङ्ग आशीविष इव श्वसन् ॥ ३२
प्रतिलभ्य ततः संज्ञां सहदेवो विशांपते ।
दुर्योधनं शरैस्तीक्ष्णैः संक्रुद्धः समवाकिरत् ॥३३
पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनञ्जयः ।
शूराणामश्वपृष्ठेभ्यः शिरांसि निचकर्त ह ॥ ३४
तदनीकं तदा पार्थो व्यधमद्बहुभिः शरैः ।
पातयित्वा हयान्सर्वांस्त्रिगर्तानां रथान्ययौ ॥३५
ततस्ते सहिता भूत्वा त्रिगर्तानां महारथाः ।
अर्जुनं वासुदेवं च शरवर्षैरवाकिरन् ॥ ३६
सत्यकर्माणमाक्षिप्य क्षुरप्रेण महायशाः ।
ततोऽस्य स्यन्दनस्येषां चिच्छिदे पाण्डुनन्दनः॥३७
शिलाशितेन च विभो क्षुरप्रेण महायशाः ।
शिरश्चिच्छेद सहसा तप्तकुण्डलभूषणम् ॥ ३८
सत्येषुमथ चादत्त योधानां मिषतां ततः ।
यथा सिंहो वने राजन्मृगं परि बुभुक्षितः ॥ ३९
तं निहत्य ततः पार्थः सुशर्माणं त्रिभिः शरैः ।
विद्ध्वा तानहनत्सर्वान्रथान्रुक्मविभूषितान् ॥४०
ततः प्रायात्त्वरन्पार्थो दीर्घकालं सुसंवृतम् ।
मुञ्चन्क्रोधविषं तीक्ष्णं प्रस्थलाधिपतिं प्रति ॥ ४१
तमर्जुनः पृषत्कानां शतेन भरतर्षभ ।
पूरयित्वा ततो वाहान्प्राहरत्तस्य धन्विनः ॥ ४२
ततः शरं समादाय यमदण्डोपमं तदा ।
सुशर्माणं समुद्दिश्य चिक्षेपाशु हसन्निव ॥ ४३
स शरः प्रेषितस्तेन क्रोधदीप्तेन धन्विना ।
सुशर्माणं समासाद्य बिभेद हृदयं रणे ॥ ४४
स गतासुर्महाराज पपात धरणीतले ।
नन्दयन्पाण्डवान्सर्वान्व्यथयंश्चापि तावकान् ४५
सुशर्माणं रणे हत्वा पुत्रानस्य महारथान् ।
सप्त चाष्टौ च त्रिंशच्च सायकैरनयत्क्षयम् ॥ ४६
ततोऽस्य निशितैर्बाणैः सर्वान्हत्वा पदानुगान् ।
अभ्यगाद्भारतीं सेनां हतशेषां महारथः ॥ ४७
भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप ।
सुदर्शनमदृश्यन्तं शरैश्चक्रे हसन्निव ॥ ४८
ततोऽस्य प्रहसन्क्रुद्धः शिरः कायादपाहरत् ।
क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि ॥ ४९
तस्मिंस्तु निहते वीरे ततस्तस्य पदानुगाः ।
परिवव्रू रणे भीमं किरन्तो विविधाञ्शरान् ॥५०
ततस्तु निशितैर्बाणैस्तवानीकं वृकोदरः ।
इन्द्राशनिसमस्पर्शैः समन्तात्पर्यवाकिरत् ॥ ५१
ततः क्षणेन तद्भीमो न्यहनद्भरतर्षभ ॥ ५२
तेषु तूत्साद्यमानेषु सेनाध्यक्षा महारथाः ।
भीमसेनं समासाद्य ततोऽयुध्यन्त भारत ॥ ५३
स तान्सर्वाञ्शरैर्घोरैरवाकिरत पाण्डवः ।
तथैव तावका राजन्पाण्डवेयान्महारथान् ।
शरवर्षेण महता समन्तात्पर्यवारयन् ॥ ५४
व्याकुलं तदभूत्सर्वं पाण्डवानां परैः सह ।
तावकानां च समरे पाण्डवेयैर्युयुत्सताम् ॥ ५५
तत्र योधास्तदा पेतुः परस्परसमाहताः ।
उभयोः सेनयो राजन्संशोचन्तः स्म बान्धवान् ५६

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः ॥ २७ ॥

सहदेवेन शकुन्युलूकयोर्वधः ॥ १ ॥

---

सञ्जय उवाच ।
तस्मिन्प्रवृत्ते सङ्ग्रामे गजवाजिनरक्षये ।
शकुनिः सौबलो राजन्सहदेवं समभ्ययात् ॥ १
ततोऽस्यापततस्तूर्णं सहदेवः प्रतापवान् ।
शरौघान्प्रेषयामास पतङ्गानिव शीघ्रगान् ।
उलूकं च रणे राजन्विव्याध दशभिः शरैः ॥ २

शकुनिश्च महाराज भीमं विद्ध्वा त्रिभिः शरैः ।
नवत्या निशितैर्बाणैः सहदेवमवाकिरत् ॥ ३
ते शूराः समरे राजन्समासाद्य परस्परम् ।
विव्यधुर्निशितैर्बाणैः कङ्कबर्हिणवाजितैः ।
स्वर्णपुङ्खैः शिलाधौतैराकर्णप्रहितैः शरैः ॥ ४
तेषां चापगुणोत्सृष्टा शरवृष्टिर्विशांपते ।
आच्छादयद्दिशः सर्वा धाराभिरिव तोयदः ॥ ५
ततः क्रुद्धो रणे भीमः सहदेवश्च भारत ।
चेरतुः कदनं सङ्ख्ये कुर्वन्तौ सुमहाबलौ ॥ ६
ताभ्यां शरशतैश्छन्नं तद्बलं तव भारत ।
सान्धकारमिवाकाशमभवत्तत्रतत्र ह ॥ ७
अश्वैर्विपरिधावद्भिः शरच्छन्नैर्विशांपते ।
तत्रतत्र कृतो मार्गो विकर्षद्भिर्हतान्बहून् ॥ ८
निहतानां हयानां च सहैव हयसादिभिः ।
वर्मभिर्विनिकृत्तैश्च प्रासैश्छिन्नैश्च मारिष ॥ ९
ऋष्टिभिः शक्तिभिश्चैव सासिप्रासपरश्वधैः ।
संछन्ना पृथिवी जज्ञे कुसुमैः शबला इव ॥ १०
योधास्तत्र महाराज समासाद्य परस्परम् ।
व्यचरन्त रणे क्रुद्धा विनिघ्नन्तः परस्परम् ॥ ११
उद्वृत्तनयनै रोषात्संदष्टौष्ठपुटैर्मुखैः ।
सकुण्डलैर्मही च्छन्ना पद्मकिञ्जल्कसन्निभैः ॥ १२
भुजैश्छिन्नैर्महाराज नागराजकरोपमैः ।
साङ्गदैः सतनुत्रैश्च सासिप्रासपरश्वधैः ॥ १३
कबन्धैरुत्थितैश्छिन्नैर्नृत्यद्भिश्चापरैर्युधि ।
क्रव्यादगणसंछन्ना घोराऽभूत्पृथिवी विभो ॥ १४
अल्पावशिष्टे सैन्ये तु कौरवेयान्महाहवे ।
प्रहृष्टाः पाण्डवा भूत्वा निन्यिरे यमसादनम् ॥ १५
एतस्मिन्नन्तरे शूरः सौबलेयः प्रतापवान् ।
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् ॥ १६
स विह्वलो महाराज रथोपस्थ उपाविशत् ॥ १७
सहदेवं तथा दृष्ट्वा भीमसेनः प्रतापवान् ।
सर्वसैन्यानि संक्रुद्धो वारयामास भारत ॥ १८
निर्बिभेद च नाराचैः शतशोऽथ सहस्रशः ।
स निर्भिद्याकरोच्चैव सिंहनादमरिंदमः ॥ १९
तेन शब्देन वित्रस्ताः सर्वे सहयवारणाः ।
प्राद्रवन्सहसा भीताः शकुनेश्च पदानुगाः ॥ २०
प्रभग्नानथ तान्दृष्ट्वा राजा दुर्योधनोऽब्रवीत् ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ २१
इह कीर्तिं समाधाय प्रेत्य लोकान्समश्नुते ।
प्राणाञ्जहाति यो धीरो युद्धे पृष्ठमदर्शयन् ॥ २२
एवमुक्तास्तु ते राज्ञा सौबलस्य पदानुगाः ।
पाण्डवानभ्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ॥ २३
द्रवद्भिस्तत्र राजेन्द्र कृतः शब्दोऽतिदारुणः ।
क्षुब्धसागरसंकाशः क्षुभितैः सर्वतो दिशम् ॥ २४
तांस्ततः पुरतो दृष्ट्वा सौबलस्य पदानुगान् ।
प्रत्युद्ययुर्महाराज पाण्डवा विजयोद्यताः ॥ २५
प्रत्याश्वस्य च दुर्धर्षः सहदेवो विशांपते ।
शकुनिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः ।
धनुश्चिच्छेद च शरैः सौबलस्य हसन्निव ॥ २६
अथान्यद्धनुरादाय शकुनिर्युद्धदुर्मदः ।
विव्याध नकुलं षष्ट्या भीमसेनं च सप्तभिः ॥ २७
उलूकोऽपि महाराज भीमं विव्याध सप्तभिः ।
सहदेवं च सप्तत्या परीप्सन्पितरं रणे ॥ २८
तं भीमसेनः समरे विव्याध नवभिः शरैः ।
शकुनिं च चतुःषष्ट्या पार्श्वस्थांश्च त्रिभिस्त्रिभिः ॥ २९
ते हन्यमाना भीमेन नाराचैस्तैलपायितैः ।
सहदेवं रणे क्रुद्धाश्छादयञ्शरवृष्टिभिः ।
पर्वतं वारिधाराभिः सविद्युत इवाम्बुदाः ॥ ३०
ततोऽस्यापततः शूरः सहदेवः प्रतापवान् ।
उलूकस्य महाराज भल्लेनापाहरच्छिरः ॥ ३१
स जगाम रथाद्भूमिं सहदेवेन पातितः ।
रुधिराप्लुतसर्वाङ्गो नन्दयन्पाण्डवान्युधि ॥ ३२
पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत ।
साश्रुकण्ठो विनिःश्वस्य क्षत्तुर्वाक्यमनुस्मरन् ॥ ३३
चिन्तयित्वा मुहूर्तं स बाष्पपूर्णेक्षणः श्वसन् ।
सहदेवं समासाद्य त्रिभिर्विव्याध सायकैः ॥ ३४
तानपास्य शरान्मुक्ताञ्शरसङ्घैः प्रतापवान् ।

अलंकृतमिवाकाशं इति क. पाठः ॥ ७ ॥

सहदेवो महाराज धनुश्चिच्छेद संयुगे ॥ ३५
छिन्ने धनुषि राजेन्द्र शकुनिः सौबलस्तदा ।
प्रगृह्य विपुलं खड्गं सहदेवाय प्राहिणोत् ॥ ३६
तमापतन्तं सहसा घोररूपं विशांपते ।
द्विधा चिच्छेद समरे सौबलस्य हसन्निव ॥ ३७
असिं दृष्ट्वा द्विधा च्छिन्नं प्रगृह्य महतीं गदाम् ।
प्राहिणोत्सहदेवाय सा मोघा न्यपतद्भुवि ॥ ३८
ततः शक्तिं महाघोरां कालरात्रीमिवोद्यताम् ।
प्रेषयामास संक्रुद्धः पाण्डवं प्रति सौबलः ॥ ३९
तामापतन्तीं सहसा शरैः कनकभूषणैः ।
त्रिधा चिच्छेद समरे सहदेवो हसन्निव ॥ ४०
सा पपात त्रिधा च्छिन्ना भूमौ कनकभूषणा ।
शीर्यमाणा यथा दीप्ता गगनाद्वै शतह्रदा ॥ ४१
शक्तिं विनिहतां दृष्ट्वा सौबलं च भयार्दितम् ।
दुद्रुवुस्तावकाः सर्वे भये जाते ससौबलाः ॥ ४२
अथोत्क्रुष्टं महच्चासीत्पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रास्ततः सर्वे प्रायशो विमुखाऽभवन् ॥ ४३
तान्वै विमनसो दृष्ट्वा माद्रीपुत्रः प्रतापवान् ।
शरैरनेकसाहस्रैर्वारयामास संयुगे ॥ ४४
ततो गान्धारकैर्गुप्तं पुष्टैरश्वैर्जये धृतम् ।
आससाद रणे यान्तं सहदेवोऽथ सौबलम् ॥ ४५
स्वमंशमवशिष्टं तं संस्मृत्य शकुनिं नृप ।
रथेन काञ्चनाङ्गेन सहदेवः समभ्ययात् ॥ ४६
अधिज्यं बलवत्कृत्वा व्याक्षिपन्सुमहद्धनुः ।
स सौबलमभिद्रुत्य गार्ध्रपत्रैः शिलाशितैः ॥ ४७
भृशमभ्यहनत्क्रुद्धस्तोत्रैरिव महाद्विपम् ।
उवाच चैनं मेधावी विगृह्य स्मारयन्निव ॥ ४८
क्षत्रधर्मे स्थिरो भूत्वा युध्यस्व पुरुषो भव ।
यत्तदा भाषसे मूढ गृह्णन्नक्षान्सभातले ।
फलमद्य प्रपद्यस्व कर्मणस्तस्य दुर्मते ॥ ४९
निहतास्ते दुरात्मानो येऽस्मानवहसन्पुरा ।
दुर्योधनः कुलाङ्गारः शिष्टस्त्वं चास्य मातुलः ॥ ५०
अद्य ते निहनिष्यामि क्षुरेणोन्मथितं शिरः ।
वृक्षात्फलमिवाविद्धं लगुडेन प्रमाथिना ॥ ५१
एवमुक्त्वा महाराज सहदेवो महाबलः ।
संक्रुद्धो रणशार्दूलो वेगेनाभिजगाम तम् ॥ ५२
अभिगम्य सुदुर्धर्षः सहदेवो युधां पतिः ।
विकृष्य बलवच्चापं क्रोधेन प्रज्वलन्निव ॥ ५३
शकुनिं दशभिर्विद्ध्वा चतुर्भिश्चास्य वाजिनः ।
छत्रं ध्वजं धनुश्चास्य च्छित्त्वा सिंह इवानदत् ॥ ५४
छिन्नध्वजधनुश्छत्रः सहदेवेन सौबलः ।
कृतो विद्धश्च बहुभिः सर्वमर्मसु सायकैः ॥ ५५
ततो भूयो महाराज सहदेवः प्रतापवान् ।
शकुनेः प्रेषयान्मास शरवृष्टिं दुरासदाम् ॥ ५६

ततस्तु क्रुद्धः सुबलस्य पुत्रो
माद्रीसुतं सहदेवं विमर्दे ।
प्रासेन जाम्बूनदभूषणेन
जिघांसुरेकोऽभिपपात शीघ्रम् ॥ ५७
माद्रीसुतस्तस्य समुद्यतं तं
प्रासं सुवृत्तौ च भुजौ रणाग्रे ।
भल्लैस्त्रिभिर्युगपत्संचकर्त
ननाद चोच्चैस्तरसाऽऽजिमध्ये ॥ ५८
तस्याशुकारी सुसमाहितेन
सुवर्णपुङ्खेन दृढायसेन ।
भल्लेन सर्वावरणातिगेन
शिरः शरीरात्प्रममाथ भूयः ॥ ५९
शरेण कार्तस्वरभूषितेन
दिवाकराभेण सुसंहितेन ।
हृतोत्तमाङ्गो युधि पाण्डवेन
पपात भूमौ सुबलस्य पुत्रः ॥ ६०
स तच्छिरो वेगवता शरेण
सुवर्णपुङ्खेन शिलाशितेन ।
प्रावेरयत्कुपितः पाण्डुपुत्रो
यत्तत्कुरूणामनयस्य मूलम् ॥ ६१
भुजौ सुवृत्तौ प्रचकर्त वीरः
पश्चात्कबन्धं रुधिरावसिक्तम् ।

यत्तदा हृष्यसे मूढ ग्लहन्नक्षैः सभातले इति झ. पाठः ॥ ४९ ॥

सप्तविंशोऽध्यायः ॥ २७ ॥

विस्पन्दमानं निपपात घोरं
रथोत्तमात्पार्थिव पार्थिवस्य ॥ ६२
हृतोत्तमाङ्गं शकुनिं समीक्ष्य
भूमौ शयानं रुधिरार्द्रगात्रम् ।
योधास्त्वदीया भयनष्टसत्त्वा
दिशः प्रजग्मुः प्रगृहीतशस्त्राः ॥ ६३
प्रविद्रुताः शुष्कमुखा विसंज्ञा
गाण्डीवघोषेण समाहताश्च ।
भयार्दिता भग्नरथाश्वनागाः
पदातयश्चैव सधार्तराष्ट्राः ॥ ६४
ततो रथाच्छकुनिं पातयित्वा
मुदान्विता भारत पाण्डवेयाः ।
शङ्खान्प्रदध्मुः समरेऽतिहृष्टाः
सकेशवाः सैनिकान्हर्षयन्तः ॥ ६५
तं चापि सर्वे प्रतिपूजयन्तो
दृष्ट्वा ब्रुवाणाः सहदेवमाजौ ।
दिष्ट्या हतो नैकृतिको महात्मा
सहात्मजो वीर रणे त्वयेति ॥ ६६

॥ इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अष्टादशदिवसयुद्धे सप्तविंशोऽध्यायः ॥ २७ ॥

॥ इति शल्यवधपर्व ॥

---

## ( अथ ह्रदप्रवेशपर्व ॥ २ ॥ )

### अष्टाविंशोऽध्यायः ॥ २८ ॥

हतावशिष्टे बले पाण्डवैर्निहते दुर्योधनेन पलायने निर्धारणम् ॥ १ ॥

सञ्जय उवाच ।
ततः क्रुद्धा महाराज सौबलस्य पदानुगाः ।
त्यक्त्वा जीवितमाक्रन्दे पाण्डवान्पर्यवारयन् ॥ १
तानर्जुनः प्रत्यगृह्णात्सहदेवजये धृतः ।
भीमसेनश्च तेजस्वी क्रुद्धाशीविषदर्शनः ॥ २
शक्त्यृष्टिप्रासहस्तानां सहदेवं जिघांसताम् ।
संकल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ३
संगृहीतायुधान्बाहून्योधानामभिधावताम् ।
भल्लैश्चिच्छेद बीभत्सुः शिरांस्यपि हयानपि ॥ ४
ते हयाः प्रत्यपद्यन्त वसुधां विगतासवः ।
चरता लोकवीरेण प्रहताः सव्यसाचिना ॥ ५
ततो दुर्योधनो राजा दृष्ट्वा स्वबलसंक्षयम् ।
हतशेषान्समानीय क्रुद्धो रथगणान्बहून् ॥ ६
कुञ्जरांश्च हयांश्चैव पादातांश्च समन्ततः ।
उवाच दुःखितान्सर्वान्धार्तराष्ट्र इदं वचः ॥ ७
समासाद्य रणे सर्वान्पाण्डवान्ससुहृद्गणान् ।
पाञ्चाल्यं चापि सबलं हत्वा शीघ्रं न्यवर्तत ॥ ८
तस्य ते शिरसा गृह्य वचनं युद्धदुर्मदाः ।
अभ्युद्ययू रणे पार्थांस्तव पुत्रस्य शासनात् ॥ ९
तानभ्यापततः शीघ्रं हतशेषान्महारणे ।
शरैराशीविषाकारैः पाण्डवाः समवाकिरन् ॥ १०
तत्सैन्यं भरतश्रेष्ठ मुहूर्तेन महात्मभिः ।
अवध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत ॥ ११
पलायमानं तु भयान्नावतिष्ठति दंशितम् ।
अश्वैर्विपरिधावद्भिः सैन्येन रजसा वृते ॥ १२
न प्राज्ञायन्त समरे दिशः सप्रदिशस्तथा ।
ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः ॥ १३
अभ्यघ्नंस्तावकान्युद्धे मुहूर्तादिव भारत ।
ततो निःशेषमभवत्तत्सैन्यं तव भारत ॥ १४
अक्षौहिण्यः समेतास्तु तव पुत्रस्य भारत ।
एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः ॥ १५
तेषु राजसहस्रेषु तावकेषु महात्मसु ।
एको दुर्योधनो राजन्नदृश्यत भृशं क्षतः ॥ १६
ततो वीक्ष्य दिशः सर्वा दृष्ट्वा शून्यां च मेदिनीम् ।

विहीनः सर्वयोधैश्च पाण्डवान्वीक्ष्य संयुगे ॥ १७
मुदितान्सर्वतः सिद्धान्नर्दमानान्समन्ततः ।
बाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनाम् ॥ १८
दुर्योधनो महाराज कश्मलेनाभिसंवृतः ।
अपयाने मनश्चक्रे विहीनबलवाहनः ॥ १९

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

पाण्डवैर्निहतसहायस्य दुर्योधनस्य गदामादाय ह्रदं प्रति प्रस्थानम् ॥ १ ॥ सञ्जयसंहारायासिमुद्यच्छता सात्यकिना व्यासवचनात्तद्विमोचनम् ॥ २ ॥ हास्तिनपुरं गच्छतः सञ्जयस्य मध्येमार्गं दुर्योधनदर्शनम् ॥ ३ ॥ तेन तस्मिन्धृतराष्ट्राय स्ववृत्तान्तनिवेदनचोदनपूर्वकं ह्रदं प्रविश्य मायया जलस्तम्भनम् ॥ ४ ॥ तत्रागतैर्द्रौणिकृपकृतवर्मभिः सञ्जयाद्दुर्योधनस्य ह्रदप्रवेशं विज्ञाय विलप्य पुनः शिबिरगमनम् ॥ ५ ॥ ततो वृद्धपरिजनैर्युयुत्सुना च राजदाराणां नगरप्रापणम् ॥ ६ ॥

धृतराष्ट्र उवाच ।
निहते मामके सैन्ये निःशेषे शिबिरे कृते ।
पाण्डवानां बले सूत किंनु शेषमभूत्तदा ॥ १
एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि सञ्जय ।
यच्च दुर्योधनो मानी कृतवांस्तनयो मम ।
बलक्षयं तथा दृष्ट्वा स एकः पृथिवीपतिः ॥ २
सञ्जय उवाच ।
रथानां द्वे सहस्रे तु सप्त नागशतानि च ।
पञ्च चाश्वसहस्राणि पत्तीनामयुतानि च ॥ ३
एतच्छेषमभूद्राजन्पाण्डवानां महद्बलम् ।
परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः ॥ ४
एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः ।
नापश्यत्समरे कंचित्सहायं रथिनां वरः ॥ ५
नर्दमानान्परान्दृष्ट्वा स्वबलस्य च संक्षयम् ।
दृष्ट्वा भरतशार्दूलः कश्मलेनाभिसंवृतः ।
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ॥ ६
एकादशचमूभर्ता पुत्रो दुर्योधनस्तव ।
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम् ॥ ७
नातिदूरं ततो गत्वा पद्भ्यामेव नराधिपः ।
सस्मार वचनं क्षत्तुर्धर्मशीलस्य धीमतः ॥ ८
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा ।
महद्व्यसनमस्माकं क्षत्रियाणां च सर्वशः ॥ ९
एवं विचिन्तयानस्तु प्रविविक्षुर्ह्रदं नृपः ।
दुःखसंतप्तहृदयो दृष्ट्वा राजन्बलक्षयम् ॥ १०
'दशैकाक्षौहिणीभर्ता तदा दुर्योधनोऽपि सन् ।
प्राप्तवान्व्यसनं तीव्रं दैवं हि बलवत्तरम् ॥' ११
पाण्डवास्तु महाराज धृष्टद्युम्नपुरोगमाः ।
अभ्यद्रवन्त संक्रुद्धास्तव राजन्बलं प्रति ॥ १२
शक्त्यृष्टिप्रासहस्तानां बलानामभिगर्जताम् ।
संकल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ १३
तान्हत्वा निशितैर्बाणैः सामात्यान्सह बन्धुभिः ।
रथे श्वेतहये तिष्ठन्नर्जुनो बह्वशोभत ॥ १४
सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे ।
महावनमिव च्छिन्नमभवत्तावकं बलम् ॥ १५
अनेकशतसाहस्रे बले दुर्योधनस्य ह ।
नान्यो महारथो राजञ्जीवमानो व्यदृश्यत ॥ १६
द्रोणपुत्रादृते वीरात्तथैव कृतवर्मणः ।
कृपाच्च गौतमाद्राजन्पार्थिवाच्च तवात्मजात् ॥ १७
धृष्टद्युम्नस्तु मां दृष्ट्वा हसन्सात्यकिमब्रवीत् ।
किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ॥ १८
धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः ।
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा ॥ १९
तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ।
मुच्यतां सञ्जयो जीवन्न हन्तव्यः कथंचन ॥ २०
द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः ।
ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय ॥ २१
अनुज्ञातस्त्वहं तेन न्यस्तवर्मा निरायुधः ।
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ॥ २२

क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम् ।
एकं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ॥ २३
स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम् ।
उपप्रैक्षत मां दृष्ट्वा तथा दीनमवस्थितम् ॥ २४
तं चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे ।
मुहूर्तं नाशकं वक्तुमतिदुःखपरिप्लुतः ॥ २५
'यस्य मूर्धाभिषिक्तानां सहस्रमणिमौलिनाम् ।
आहृत्य च करं सर्वे स्वस्य वेश्म समागतम् ॥ २६
चतुःसागरपर्यन्ता पृथिवी रत्नभूषिता ।
कर्णेनैकेन यस्यार्थे करमाहारिता पुरा ॥ २७
यस्याज्ञा परराष्ट्रेषु कर्णेनैव प्रसारिता ।
नाभवद्यस्य शस्त्रेषु खेदो राज्ञः प्रशासतः ॥ २८
आसीनो हास्तिनपुरे क्षेमं राज्यमकण्टकम् ।
अन्वपालयदैश्वर्यात्कुबेरमपि नास्मरत् ॥ २९
भवनाद्भवनं राजन्प्रयातुं पृथिवीपते ।
देवालयप्रदेशे च पन्था यस्य हिरण्मयः ॥ ३०
पताकावृतसूर्यांशुतोरणोच्छ्रितशोभिताः ।
प्रयाणे पृथिवीभर्तुर्धन्यानामभवन्गृहाः ॥ ३१
आरुह्यैरावतप्रख्यं नागमिन्द्रसमो बली ।
विभूत्या सुमहत्या यः प्रयाति पृथिवीपते ॥ ३२
तं भृशक्षतसर्वाङ्गं पद्भ्यामेव धरातले ।
तिष्ठन्तमेकं दृष्ट्वा तु ममाभूत्क्लेश उत्तमः ॥ ३३
तस्य चैवंविधस्याद्य जगन्नाथस्य भूपते ।
आपद्प्रतिमैवाभूद्बलीयान्विधिरेव हि ॥' ३४
ततोऽस्मै तदहं सर्वमुक्तवान्ग्रहणं तदा ।
द्वैपायनप्रसादाच्च जीवतो मोक्षमाहवे ॥ ३५
स मुहूर्तमिव ध्यात्वा प्रतिलभ्य च चेतनाम् ।
भ्रातॄंश्च सर्वसैन्यानि पर्यपृच्छत मां ततः ॥ ३६
तस्मै तदहमाचक्षे सर्वं प्रत्यक्षदर्शिवान् ।
भ्रातॄंश्च निहतान्सर्वान्सैन्यं च विनिपातितम् ३७
त्रयः किल रथाः शिष्टास्तावकानां नराधिप ।
इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत् ॥ ३८
स दीर्घमिव निःश्वस्य प्रत्यवेक्ष्य पुनः पुनः ।
असौ मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत ३९
त्वदन्यो नेह संग्रामे कश्चिज्जीवति सञ्जय ।
द्वितीयं नेह पश्यामि ससहायाश्च पाण्डवाः ॥ ४०
ब्रूयाः सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरम् ।
दुर्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ॥ ४१
सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च ।
पाण्डवैश्च हृते राज्ये को नु जीवेत मादृशः ॥ ४२
आचक्षीथाः सर्वमिदं मां च मुक्तं महाहवात् ।
अस्मिंस्तोयह्रदे गुप्तं जीवन्तं भृशविक्षतम् ॥ ४३
एवमुक्त्वा महाराज प्राविशत्तं महाह्रदम् ।
अस्तम्भयत तोयं च मायया मनुजाधिपः ॥ ४४
तस्मिन्ह्रदं प्रविष्टे तु त्रीन्रथाञ्श्रान्तवाहनान् ।
अपश्यं सहितानेकस्तं देशं समुपेयुषः ॥ ४५
कृपं शारद्वतं वीरं द्रौणिं च रथिनां वरम् ।
भोजं च कृतवर्माणं सहिताञ्शरविक्षतान् ॥ ४६
ते सर्वे मामभिप्रेक्ष्य तूर्णमश्वाननोदयन् ।
उपयाय तु मामूचुर्दिष्ट्या जीवसि सञ्जय ॥ ४७
अपृच्छंश्चैव मां सर्वे पुत्रं तव जनाधिपम् ।
कच्चिद्दुर्योधनो राजा स नो जीवति सञ्जय ॥ ४८
आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम् ।
तच्चैव सर्वमाचक्षं यन्मां दुर्योधनोऽब्रवीत् ॥ ४९
ह्रदं चैवाहमाचक्षं यं प्रविष्टो नराधिपः ।
अश्वत्थामा तु तद्राजन्निशम्य वचनं मम ॥ ५०
तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्यदेवयत् ।
अहो धिक्स न जानाति जीवतोऽस्मान्नराधिपः ।
पर्याप्ता हि वयं तेन सह योधयितुं परान् ॥ ५१
ते तु तत्र चिरं कालं विलप्य च महारथाः ।
प्राद्रवन्रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान्रणे ॥ ५२
ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम् ।
सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः ॥ ५३
तत्र गुल्माः परिक्षिप्ताः सूर्ये चास्तमिते सति ।
सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव संक्षयम् ॥ ५४
ततो वृद्धा महाराज योषितां रक्षिणो नराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ ५५
तत्र विक्रोशमानानां रुदतीनां च सर्वशः ।

अस्मासु च परा शक्तिर्न तु कालः पराक्रमे ॥१८
विश्रम्यैकां निशामद्य भवद्भिः सहितो रणे ।
प्रतियोत्स्याम्यहं शत्रूञ्श्वो न स्याच्च श्रमो मम १९
सञ्जय उवाच ।
एवमुक्तोऽब्रवीद्द्रौणी राजानं युद्धदुर्मदम् ।
उत्तिष्ठ राजन्भद्रं ते विजेष्यामो वयं परान् ॥ २०
इष्टापूर्तेन दानेन सत्येन च जपेन च ।
शपे राजन्यथा ह्यद्य निहनिष्यामि सोमकान् २१
मा स्म यज्ञकृतां प्रीतिमाप्नुयां सज्जनोचिताम् ।
यदीमां रजनीं व्युष्टां न हि हन्मि परान्रणे॥२२
नाहत्वा सर्वपाञ्चालान्विमोक्ष्ये कवचं विभो ।
उत्तिष्ठ त्वं ब्रवीम्येतत्तन्मे शृणु जनाधिप ॥ २३
तेषु संभाषमाणेषु व्याधास्तं देशमाययुः ।
मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया ॥ २४
ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः ।
मांसभारानुपाजह्रुर्भक्त्या परमया विभो ॥ २५
ते तत्र धिष्ठितास्तेषां सर्वं तद्वचनं रहः ।
दुर्योधनवचश्चैव शुश्रुवुः संगता मिथः ॥ २६
तेऽपि सर्वे महेष्वासा अयुद्धार्थिनि कौरवे ।
निर्बन्धं परमं चक्रुस्तदा वै युद्धकाङ्क्षिणः ॥ २७
तांस्तथा समुदीक्ष्याथ कौरवाणां महारथान् ।
अयुद्धमनसं चैव राजानं स्थितमम्भसि ॥ २८
तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः ।
व्याधा ह्यजानन्राजेन्द्र सलिलस्थं सुयोधनम् ॥२९
ते पूर्वं पाण्डुपुत्रेण पृष्टा ह्यासन्सुतं तव ।
यदृच्छोपगतास्तत्र राजानं परिमार्गता ॥ ३०
ततस्ते पाण्डुपुत्रस्य स्मृत्वा तद्भाषितं तदा ।
अन्योन्यमब्रुवन्राजन्मृगव्याधाः शनैरिव ॥ ३१
दुर्योधनं ख्यापयामो धनं दास्यति पाण्डवः ।
सुव्यक्तमिह नः ख्यातो ह्रदे दुर्योधनो नृपः ॥ ३२
तस्माद्गच्छामहे सर्वे यत्र राजा युधिष्ठिरः ।
आख्यातुं सलिले सुप्तं दुर्योधनममर्षणम् ॥ ३३
धृतराष्ट्रात्मजं तस्मै भीमसेनाय धीमते ।
शयानं सलिले सर्वे कथयामो धनुर्भृते ॥ ३४
स नो दास्यति सुप्रीतो धनानि बहुलान्युत ।
किं नो मांसेन शुष्केण परिक्लिष्टेन शोषिणा ॥ ३५
एवमुक्त्वा तु ते व्याधाः संप्रहृष्टा धनार्थिनः ।
मांसभारानुपादाय प्रययुः शिबिरं प्रति ॥ ३६
पाण्डवाश्च महाराज लब्धलक्षाः प्रहारिणः ।
अपश्यमानाः समरे दुर्योधनमवस्थितम् ॥ ३७
निकृतिज्ञस्य पापस्य तस्याभिगमनेप्सया ।
चारान्संप्रेषयामासुः समन्तात्तद्रणाजिरे ॥ ३८
आगम्य तु ततः सर्वे नष्टं दुर्योधनं नृपम् ।
न्यवेदयन्त सहिता धर्मराजस्य सैनिकाः ॥ ३९
तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ ।
चिन्तामभ्यगमत्तीव्रां निशश्वास च पार्थिवः ४०
'अरिशेषे जीवति तु संदिग्धो विजयो भवेत् ।
राज्यं लभे कथं तद्धि पूजितं विजयाधिभिः ॥' ४१
अथ स्थितानां पाण्डूनां दीनानां भरतर्षभ ।
तस्माद्देशादपक्रम्य त्वरिता लुब्धका विभो ॥४२
आजग्मुः शिबिरं हृष्टा दृष्ट्वा दुर्योधनं नृपम् ।
वार्यमाणाः प्रविष्टाश्च भीमसेनस्य पश्यतः ॥ ४३
ते तु पाण्डवमासाद्य भीमसेनं महाबलम् ।
तस्मै तत्सर्वमाचख्युर्यद्वृत्तं यच्च वै श्रुतम् ॥ ४४
ततो वृकोदरो राजन्दत्त्वा तेषां धनं बहु ।
धर्मराजाय तत्सर्वमाचचक्षे परंतपः ॥ ४५
असौ दुर्योधनो राजन्विज्ञातो मम लुब्धकैः ।
संस्तभ्य सलिलं शेते यस्यार्थे परितप्यसे ॥ ४६
तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशांपते ।
अजातशत्रुः कौन्तेयो हृष्टोऽभूत्सह सोदरैः ॥ ४७
तं च श्रुत्वा महेष्वासं प्रविष्टं सलिलह्रदे ।
क्षिप्रमेव ततोऽगच्छन्पुरस्कृत्य जनार्दनम् ॥ ४८
ततः किलकिलाशब्दः प्रादुरासीद्विशांपते ।
पाण्डवानां प्रहृष्टानां पाञ्चालानां च सर्वशः ४९
सिंहनादांस्ततश्चक्रुः क्ष्वेडाश्च भरतर्षभ ।
त्वरिताः क्षत्रिया राजन्नुदक्रोशन्परस्परम् ॥ ५०

अस्मासु च परा भक्तिर्दर्शिता कार्यगौरवात् । इति ङ. पाठः ॥ १८ ॥ यज्ञकृतां प्रीतिं यज्ञादिजस्य पुण्यस्य फलम् ॥ २२ ॥ नष्टं अदृश्यत्वं गतं लीनमित्यर्थः ॥ ३९ ॥ त्रिंशोऽध्यायः ॥ ३० ॥

ज्ञातः पापो धार्तराष्ट्रो दृष्टश्चेत्यसकृद्रणे ।
प्राक्रोशन्सोमकास्तत्र हृष्टरूपाः समन्ततः ॥ ५१
तेषामाशु प्रयातानां रथानां तत्र वेगिनाम् ।
बभूव तुमुलः शब्दो दिवस्पृक् पृथिवीपते ॥ ५२
दुर्योधनं परीप्सन्तस्तत्रतत्र युधिष्ठिरम् ।
अन्वयुस्त्वरितास्ते वै राजानं श्रान्तवाहनाः॥५३
अर्जुनो भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी चापराजितः॥५४
उत्तमौजा युधामन्युः सात्यकिश्च महारथः ।
पाञ्चालानां च ये शिष्टा द्रौपदेयाश्च भारत ।
हयाश्च सर्वे नागाश्च शतशश्च पदातयः ॥ ५५
ततः प्राप्तो महाराज धर्मराजः प्रतापवान् ।
द्वैपायनह्रदं घोरं यत्र दुर्योधनोऽभवत् ॥ ५६
शीतामलजलं हृद्यं द्वितीयमिव सागरम् ।
मायया सलिलं स्तभ्य यत्राभूत्ते स्थितः सुतः ५७
अत्यद्भुतेन विधिना दैवयोगेन भारत ।
सलिलान्तर्गतः शेते दुर्दर्शः कस्यचित्प्रभो ।
मानुषस्य मनुष्येन्द्र गदाहस्तो जनाधिपः ॥ ५८
ततो दुर्योधनो राजा सलिलान्तर्गतो वसन् ।
शुश्रुवे तुमुलं शब्दं जलदोपमनिःस्वनम् ॥ ५९
युधिष्ठिरश्च राजेन्द्र तं ह्रदं सह सोदरैः ।
आजगाम महाराज तव पुत्रवधाय वै ॥ ६०
महता शङ्खनादेन रथनेमिस्वनेन च ।
ऊर्ध्वं धुन्वन्महारेणुं कम्पयंश्चापि मेदिनीम् ॥ ६१
यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः ।
कृतवर्मा कृपो द्रौणी राजानमिदमब्रुवन् ॥ ६२
इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः ।
अपयास्यामहे तावदनुजानातु नो भवान् ॥ ६३
दुर्योधनस्तु तच्छ्रुत्वा तेषां तत्र तरस्विनाम् ।
तथेत्युक्त्वा ह्रदं तं वै मायया स्तम्भयत्प्रभो ॥ ६४
ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः ।
जग्मुर्दूरं महाराज कृपप्रभृतयो रथाः ॥ ६५
ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष ।
न्यविशन्त भृशं श्रान्ताश्चिन्तयन्तो नृपं प्रति ६६
विष्टभ्य सलिलं सुप्तो धार्तराष्ट्रो महाबलः ।
पाण्डवाश्चापि संप्राप्तास्तं देशं युद्धमीप्सवः ॥ ६७
कथं नु युद्धं भविता कथं राजा भविष्यति ।
कथं नु पाण्डवा राजन्प्रतिपत्स्यन्ति कौरवम् ६८
इत्येवं चिन्तयानास्तु रथेभ्योऽश्वान्विमुच्य ते ।
तत्रासांचक्रिरे राजन्कृपप्रभृतयो रथाः ॥ ६९

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

युधिष्ठिरेण ह्रदस्थं दुर्योधनं प्रति निष्ठुरोक्तिभिः संतर्जनम् ॥ १ ॥ युधिष्ठिरदुर्योधनयोः संवादः ॥ २ ॥

सञ्जय उवाच ।
ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः ।
तं ह्रदं प्रत्यपद्यन्त यत्र दुर्योधनोऽभवत् ॥ १
आसाद्य च कुरुश्रेष्ठ तदा द्वैपायनं ह्रदम् ।
स्तम्भितं धार्तराष्ट्रेण दृष्ट्वा तं सलिलाशयम् ॥ २
वासुदेवमिदं वाक्यमब्रवीत्कुरुनन्दनः ।
पश्येमां धार्तराष्ट्रेण मायामप्सु प्रयोजिताम् ॥ ३
विष्टभ्य सलिलं शेते नास्य मानुषतो भयम् ।
दैवीं मायामिमां कृत्वा सलिलान्तर्गतो ह्ययम् ॥ ४
निकृत्या निकृतिप्रज्ञो न मे जीवन्विमोक्ष्यते ।
यद्यस्य समरे साह्यं कुरुते वज्रभृत्स्वयम् ।
तथाप्येनं हतं युद्धे लोका द्रक्ष्यन्ति माधव ॥ ५
वासुदेव उवाच ।
मायाविन इमां मायां मायया जहि भारत ।
मायावी मायया वध्यः सत्यमेतद्युधिष्ठिर ॥ ६
क्रियाभ्युपायैर्बहुभिर्मायामप्सु प्रयोज्य च ।

क्रियाभ्युपायैः शत्रुक्रियानुरूपैः प्रतीकारैर्धर्म्यैरधर्म्यैर्वे-त्यर्थः । एतेतु च्छलकारिणश्छलैरेव हन्तव्या इति भावः ।

जहि त्वं भरतश्रेष्ठ मायात्मानं सुयोधनम् ॥ ७
क्रियाभ्युपायैरिन्द्रेण निहता दैत्यदानवाः ।
क्रियाभ्युपायैर्बलिभिर्बलिर्बद्धो महात्मना ॥ ८
क्रियाभ्युपायपूर्वं वै हिरण्याक्षो महासुरः ।
हिरण्यकशिपुश्चैव क्रिययैव निषूदितौ ॥ ९
वृत्रश्च निहतो राजन्क्रिययैव महाबलः ।
तथा पौलस्त्यतनयो रावणो नाम राक्षसः ।
रामेण निहतो राजन्सानुबन्धः सहानुगः ॥ १०
क्रियया योगमास्थाय तथा त्वमपि विक्रम ॥ ११
क्रियाभ्युपायैर्निहतौ मया राजन्पुरातनौ ।
तारकश्च महादैत्यो विप्रचित्तिश्च वीर्यवान् ॥१२
वातापिरिल्वलश्चैव त्रिशिराश्च तथा विभो ।
सुन्दोपसुन्दावसुरौ क्रिययैव निषूदितौ ॥ १३
क्रियाभ्युपायैरिन्द्रेण त्रिदिवं भुज्यते विभो ।
क्रिया बलवती राजन्नान्यत्किंचिद्युधिष्ठिर ॥ १४
दैत्याश्च दानवाश्चैव राक्षसाः पार्थिवास्तथा ।
क्रियाभ्युपायैर्निहताः क्रियां तस्मात्समाचर ॥१५
सञ्जय उवाच ।
इत्युक्तो वासुदेवेन पाण्डवः संशितव्रतः ।
जलस्थं तं महाराज तव पुत्रं महाबलम् ।
अभ्यभाषत कौन्तेयः प्रहसन्निव भारत ॥ १६
सुयोधन किमर्थोऽयमारम्भोऽप्सु कृतस्त्वया ।
सर्वं क्षत्रं घातयित्वा स्वकुलं च विशांपते ॥ १७
जलाशयं प्रविष्टोऽद्य वाञ्छञ्जीवितमात्मनः ।
उत्तिष्ठ राजन्युध्यस्व सहास्माभिः सुयोधन ॥१८
स ते दर्पो नरश्रेष्ठ स च मानः क्व ते गतः ।
यस्त्वं संस्तभ्य सलिलं भीतो राजन्व्यवस्थितः १९
सर्वे त्वां शूर इत्येवं जना जल्पन्ति संसदि ।
व्यर्थं तद्भवतो मन्ये शौर्यं सलिलशायिनः ॥ २०
उत्तिष्ठ राजन्युध्यस्व क्षत्रियोऽसि कुलोद्भवः ।
कौरवेयो विशेषेण कुलं जन्म च संस्मर ॥ २१
स कथं कौरवे वंशे प्रशंसञ्जन्म चात्मनः ।
युद्धात्त्रस्तस्ततस्तोयं प्रविश्य प्रतितिष्ठसि ॥ २२
अयुद्धेन व्यवस्थानं नैष धर्मः सनातनः ॥ २३
अनार्यजुष्टमस्वर्ग्यं रणे राजन्पलायनम् ।
कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः ॥ २४
इमान्निपतितान्दृष्ट्वा पुत्रान्भ्रातॄन्पितॄंस्तथा ।
संबन्धिनो वयस्यांश्च मातुलान्बान्धवांस्तथा ।
घातयित्वा कथं तात ह्रदे तिष्ठसि सांप्रतम् ॥२५
शूरमानी न शूरस्त्वं मृषा वदसि भारत ।
शूरोऽहमिति दुर्बुद्धे सर्वलोकस्य शृण्वतः ॥ २६
न हि शूराः पलायन्ते शत्रून्दृष्ट्वा कथंचन ।
ब्रूहि वा त्वं यया वृत्त्या शूर त्यजसि संगरम् ॥२७
स त्वमुत्तिष्ठ युध्यस्व विहाय भयमात्मनः ।
घातयित्वा सर्वसैन्यं भ्रातॄंश्चैव सुयोधन ॥ २८
नेदानीं जीविते बुद्धिः कार्या धर्मचिकीर्षया ।
क्षत्रधर्ममुपाश्रित्य त्वद्विधेन सुयोधन ॥ २९
यत्तु कर्णमुपाश्रित्य शकुनिं चापि सौबलम् ।
दुःशासनं च मोहात्त्वमात्मानं नावबुद्धवान् ॥३०
तत्पापं सुमहत्कृत्वा प्रतियुध्यस्व भारत ।
कथं हि त्वद्विधो मोहाद्रोचयेत पलायनम् ॥ ३१
क्व ते तत्पौरुषं यातं क्व च मानः सुयोधन ।
क्व च विक्रान्तता याता क्व च विस्फूर्जितं महत् ३२
क्व ते कृतास्त्रता याता किं नु शेषे जलाशये ।
स त्वमुत्तिष्ठ युध्यस्व क्षत्रधर्मेण भारत ॥ ३३
अस्मांस्तु वा पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोऽस्माभिर्भूमौ स्वप्स्यसि भारत ॥ ३४
एष ते परमो धर्मः सृष्टो धात्रा महात्मना ।
तं कुरुष्व यथातथ्यं पौरुषे स्वे व्यवस्थितः ॥ ३५

माययैव सुयोधनं इति क. पाठः ॥ ७ ॥ विक्रम विक्रमं कुरुष्व क्रियया योगमास्थाय हतस्त्वाष्ट्रोऽपि विक्रमात् इति क. पाठः ॥ ११ ॥ क्रियाभ्युपायैर्निहतो मयो नाम महासुरः । इति क. पाठः ॥ १२ ॥ हे शूरेति साधिक्षेपसंबोधनम् । यया वृत्त्या निमित्तभूतया । वानप्रस्थत्वेन वा न्यस्तशस्त्रत्वेन वा क्लीबत्वेन वा त्वं संगरं त्यजसि तां वृत्तिं ब्रूहि । न त्वं वानप्रस्थोऽसि राज्यार्थित्वात् । नापि न्यस्तशस्त्रो गदाधारित्वात् । परिशेषात् क्लीबोऽस्मीति मा भाषस्व । युद्धं कुर्विति भावः ॥ २७ ॥ पौरुषं यत्नः । विक्रान्तता शौर्यम् । विस्फूर्जितं गर्जनम् ॥ ३२ ॥

सञ्जय उवाच ।
एवमुक्तो महाराज धर्मपुत्रेण धीमता ।
सलिलस्थस्तव सुत इदं वचनमब्रवीत् ॥ ३६
नैतच्चित्रं महाराज यद्भीः प्राणिनमाविशेत् ।
न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत ॥ ३७
अरथश्चानिषङ्गी च निहतः पार्ष्णिसारथिः ।
एकश्चाप्यगणः सङ्ख्ये प्रत्याश्वासमरोचयम् ॥ ३८
न प्राणहेतोर्न भयान्न विषादाद्विशांपते ।
इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितम् ॥ ३९
त्वं चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव ।
अहमुत्थाय वः सर्वान्प्रतियोत्स्यामि संयुगे ॥ ४०
युधिष्ठिर उवाच ।
आश्वस्ता एव सर्वे स्म चिरं त्वां मृगयामहे ।
तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ॥ ४१
हत्वा वा समरे पार्थान्स्फीतं राज्यमवाप्नुहि ।
निहतो वा रणेऽस्माभिर्वीरलोकमवाप्स्यसि ॥ ४२
दुर्योधन उवाच ।
यदर्थं राज्यमिच्छामि कुरूणां कुरुनन्दन ।
त इमे निहताः सर्वे भ्रातरो मे जनेश्वर ॥ ४३
क्षीणरत्नां च पृथिवीं हतक्षत्रियपुङ्गवाम् ।
न ह्युत्सहाम्यहं भोक्तुं विधवामिव योषितम् ॥ ४४
अद्यापि त्वहमाशंसे त्वां विजेतुं युधिष्ठिर ।
भङ्क्त्वा पाञ्चालपाण्डूनामुत्साहं भरतर्षभ ४५
न त्विदानीमहं मन्ये कार्यं युद्धेन कर्हिचित् ।
द्रोणे कर्णे च संशान्ते निहते च पितामहे ॥ ४६
अस्त्विदानीमियं राजन्केवला पृथिवी तव ।
असहायो हि को राजा राज्यमिच्छेत्प्रशासितुम् ४७
सुहृदस्तादृशान्हत्वा पुत्रान्भ्रातॄन्पितॄनपि ।
भवद्भिश्च हृते राज्ये को नु जीवेत मादृशः ॥ ४८
अहं वनं गमिष्यामि ह्यजिनैः प्रतिवासितः ।
रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत ॥ ४९
हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा ।
एषा ते पृथिवी राजन्भुङ्क्ष्वैनां विगतज्वरः ॥ ५०
वनमेव गमिष्यामि वसानो मृगचर्मणी ।
न हि मे निर्जनस्यास्ति जीवितेऽद्य स्पृहा विभो ॥
गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं निहतेश्वराम् ।
हतयोधां नष्टरत्नां क्षीणक्षत्रां यथासुखम् ॥ ५२
[सञ्जय उवाच ।
दुर्योधनं तव सुतं सलिलस्थं महायशाः ।
श्रुत्वा तु करुणं वाक्यमभाषत युधिष्ठिरः ॥] ५३
युधिष्ठिर उवाच ।
आर्तप्रलापान्मा तात सलिलस्थः प्रभाषथाः ।
नैतन्मनसि मे राजन्वाशितं शकुनेरिव ॥ ५४
यदि वापि समर्थः स्यास्त्वं दानाय सुयोधन ।
नाहमिच्छेयमवनिं त्वया दत्तां प्रशासितुम् ॥ ५५
अधर्मेण न गृह्णीयां त्वया दत्तां महीमिमाम् ।
न हि धर्मः स्मृतो राजन्क्षत्रियस्य प्रतिग्रहः ॥ ५६
त्वया दत्तां न चेच्छेयं पृथिवीमखिलामहम् ।
त्वां तु युद्धे विनिर्जित्य भोक्तास्मि वसुधामिमाम्
अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि ।
त्वयेयं पृथिवी राजन्किं न दत्ता तदैव हि ॥ ५८
धर्मतो याचमानानां प्रशमार्थं कुलस्य नः ।
वार्ष्णेयं प्रथमं राजन्प्रत्याख्याय महाबलम् ॥ ५९
किमिदानीं ददासि त्वं को हि ते चित्तविभ्रमः ।
अभियुक्तस्तु को राजा दातुमिच्छेद्धि मेदिनीं ६०
न त्वमद्य महीं दातुमीशः कौरवनन्दन ।
आच्छेत्तुं वा बलाद्राजन्स कथं दातुमिच्छसि ॥ ६१
मां तु निर्जित्य संग्रामे पालयेमां वसुंधराम् ।
सूच्यग्रेणापि यद्भूमेरपि भिद्येत भारत ॥ ६२
तन्मात्रमपि तन्मह्यं न ददाति पुरा भवान् ।
स कथं पृथिवीमेतां प्रददासि विशांपते ॥ ६३
सूच्यग्रं नात्यजः पूर्वं स कथं त्यजसि क्षितिम् ६४
एवमैश्वर्यमासाद्य प्रशास्य पृथिवीमिमाम् ।
को हि मूढो व्यवस्येत शत्रोर्दातुं वसुंधराम् ॥ ६५
त्वं तु केवलमौर्ख्येण विमूढो नावबुध्यसे ।
पृथिवीं दातुकामोऽपि जीवंस्त्वं नैव मोक्ष्यसे ६६

हतापक्षस्य भारत इति क. पाठः ॥ ४९ ॥ निहतत्विषमिति क, ङ. पाठः ॥ ५२ ॥ एकत्रिंशोऽध्यायः ॥ ३१ ॥

असान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोऽस्माभिर्व्रज लोकाननुत्तमान् ॥ ६७
आवयोर्जीवतो राजन्मयि च त्वयि च ध्रुवम् ।
संशयः सर्वभूतानां विजये नौ भविष्यति ॥ ६८
जीवितं त्वयि दुष्प्राप्यं मयि यत्परिवर्तते ।
जीवयेयमहं कामं न तु त्वं जीवितुं क्षमः ॥ ६९
दहने हि कृतो यत्नस्त्वयाऽस्मासु विशेषतः ।
आशीविषैर्विषैश्चापि जले चापि प्रवेशनैः ।
त्वया विनिकृता राजन्राज्यस्य हरणेन च ॥ ७०
अप्रियाणां च वचनैर्द्रौपद्याः कर्षणेन च ।
एतस्मात्कारणात्पाप जीवितं ते न विद्यते ॥ ७१
उत्तिष्ठोत्तिष्ठ युध्यस्व युद्धे श्रेयो भविष्यति ॥ ७२
एवं तु विविधा वाचो जययुक्ताः पुनःपुनः ।
कीर्तयन्ति स्म ते वीरास्तत्रतत्र जनाधिप ॥ ७३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

युधिष्ठिरकटुभाषणरुष्टेन सुयोधनेन गदयासह ह्रदादुत्थानम् ॥ १ ॥ युधिष्ठिरदुर्योधनयोः संवादः ॥ २ ॥

धृतराष्ट्र उवाच ।
एवं संतर्ज्यमानस्तु मम पुत्रो महीपतिः ।
प्रकृत्या मन्युमान्वीरः कथमासीत्परंतपः ॥ १
न हि संतर्जना तेन श्रुतपूर्वा कथंचन ।
राजभावेन मान्यश्च सर्वलोकस्य सोऽभवत् ॥ २
[यस्यातपत्रच्छायापि स्वका भानोस्तथा प्रभा ।
खेदायैवाभिमानित्वात्सहेत्सैवं कथं गिरः ॥] ३
इयं च पृथिवी सर्वा सम्लेच्छाटविका भृशम् ।
प्रसादाद्ध्रियते यस्य प्रत्यक्षं तव सञ्जय ॥ ४
स तथा तर्ज्यमानस्तु पाण्डुपुत्रैर्विशेषतः ।
विहीनश्च स्वकैर्भृत्यैर्निर्जने चावृतो भृशम् ॥ ५
स श्रुत्वा कटुका वाचो जययुक्ताः पुनःपुनः ।
किमब्रवीत्पाण्डवेयांस्तन्ममाचक्ष्व सञ्जय ॥ ६
सञ्जय उवाच ।
तर्ज्यमानस्तदा राजन्नुदकस्थस्तवात्मजः ।
युधिष्ठिरेण राजेन्द्र भ्रातृभिः सहितेन ह ॥ ७
श्रुत्वा स कटुका वाचो विषमस्थो नराधिपः ।
दीर्घमुष्णं च निःश्वस्य सलिलस्थः पुनःपुनः ॥८
सलिलान्तर्गतो राजा धुन्वन्हस्तौ पुनःपुनः ।
मनश्चकार युद्धाय राजानं चाभ्यभाषत ॥ ९
यूयं ससुहृदः पार्थाः सर्वे सरथवाहनाः ।
अहमेकः परिद्यूनो विरथो हतवाहनः ॥ १०
आत्तशस्त्रै रथोपेतैर्बहुभिः परिवारितः ।
कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सहे ॥ ११
एकैकशश्च मां यूयं योधयध्वं युधिष्ठिर ।
न ह्येको बहुभिर्वीरैर्न्याय्यो योधयितुं युधि ॥ १२
विशेषतो विकवचः श्रान्तश्चापत्समाश्रितः ।
भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः ॥ १३
न मे त्वत्तो भयं राजन्न च पार्थाद्वृकोदरात् ।
फल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथवा पुनः १४
यमाभ्यां युयुधानाद्वा ये चान्ये तव सैनिकाः ।
एकः सर्वानहं क्रुद्धो वारयिष्ये युधि स्थितः ॥१५
धर्ममूला सतां कीर्तिर्मनुष्याणां जनाधिप ।
धर्मं चैवेह कीर्तिं च पालयन्प्रब्रवीम्यहम् ॥ १६
अहमुत्थाय सर्वान्वै प्रतियोत्स्यामि संयुगे ।
अन्वभ्याशं गतान्सर्वान्निहनिष्यामि भारत ॥१७
अद्य वः सरथान्साश्वानशस्त्रो विरथोऽपि सन् ।
नक्षत्राणीव सर्वाणि सविता रात्रिसंक्षये ॥ १८
तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः ।
अद्यानृण्यं गमिष्यामि क्षत्रियाणां यशस्विनां १९
बाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः ।
जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः ॥ २०
मद्रराजस्य शल्यस्य भूरिश्रवस एव च ।
पुत्राणां भरतश्रेष्ठ शकुनेः सौबलस्य च ॥ २१

आतपत्रेण दुर्योधनः सूर्याद्रक्षित इत्येष प्रवादोऽपि यस्य न स इति भावः ॥ ३ ॥ परिद्यूनः परिश्रान्तः ॥ १० ॥

असान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोऽस्माभिर्व्रज लोकाननुत्तमान् ॥ ६७
आवयोर्जीवतो राजन्मयि च त्वयि च ध्रुवम् ।
संशयः सर्वभूतानां विजये नौ भविष्यति ॥ ६८
जीवितं त्वयि दुष्प्रापं मयि यत्परिवर्तते ।
जीवयेयमहं कामं न तु त्वं जीवितुं क्षमः ॥ ६९
दहने हि कृतो यत्नस्त्वयाऽस्मासु विशेषतः ।
आशीविषैर्विषैश्चापि जले चापि प्रवेशनैः ।
त्वया विनिकृता राजन्राज्यस्य हरणेन च ॥ ७०
अप्रियाणां च वचनैर्द्रौपद्याः कर्षणेन च ।
एतस्मात्कारणात्पाप जीवितं ते न विद्यते ॥ ७१
उत्तिष्ठोत्तिष्ठ युध्यस्व युद्धे श्रेयो भविष्यति ॥ ७२
एवं तु विविधा वाचो जययुक्ताः पुनःपुनः ।
कीर्तयन्ति स्म ते वीरास्तत्रतत्र जनाधिप ॥ ७३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

युधिष्ठिरकटुभाषणरुष्टेन सुयोधनेन गदयासह ह्रदादुत्थानम् ॥ १ ॥ युधिष्ठिरदुर्योधनयोः संवादः ॥ २ ॥

धृतराष्ट्र उवाच ।
एवं संतर्ज्यमानस्तु मम पुत्रो महीपतिः ।
प्रकृत्या मन्युमान्वीरः कथमासीत्परंतपः ॥ १
न हि संतर्जना तेन श्रुतपूर्वा कथंचन ।
राजभावेन मान्यश्च सर्वलोकस्य सोऽभवत् ॥ २
[यस्यातपत्रच्छायापि स्वका भानोस्तथा प्रभा ।
खेदायैवाभिमानित्वात्सहेत्सैवं कथं गिरः ॥] ३
इयं च पृथिवी सर्वा सम्लेच्छाटविका भृशम् ।
प्रसादाद्ध्रियते यस्य प्रत्यक्षं तव सञ्जय ॥ ४
स तथा तर्ज्यमानस्तु पाण्डुपुत्रैर्विशेषतः ।
विहीनश्च स्वकैर्भृत्यैर्निर्जने चावृतो भृशम् ॥ ५
स श्रुत्वा कटुका वाचो जययुक्ताः पुनःपुनः ।
किमब्रवीत्पाण्डवेयांस्तन्ममाचक्ष्व सञ्जय ॥ ६
सञ्जय उवाच ।
तर्ज्यमानस्तदा राजन्नुदकस्थस्तवात्मजः ।
युधिष्ठिरेण राजेन्द्र भ्रातृभिः सहितेन ह ॥ ७
श्रुत्वा स कटुका वाचो विषमस्थो नराधिपः ।
दीर्घमुष्णं च निःश्वस्य सलिलस्थः पुनःपुनः ॥ ८
सलिलान्तर्गतो राजा धुन्वन्हस्तौ पुनःपुनः ।
मनश्चकार युद्धाय राजानं चाभ्यभाषत ॥ ९
यूयं ससुहृदः पार्थाः सर्वे सरथवाहनाः ।
अहमेकः परिद्यूनो विरथो हतवाहनः ॥ १०
आत्तशस्त्रै रथोपेतैर्बहुभिः परिवारितः ।
कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सहे ॥ ११
एकैकशश्च मां यूयं योधयध्वं युधिष्ठिर ।
न ह्येको बहुभिर्वीरैर्न्याय्यो योधयितुं युधि ॥ १२
विशेषतो विकवचः श्रान्तश्चापत्समाश्रितः ।
भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः ॥ १३
न मे त्वत्तो भयं राजन्न च पार्थाद्वृकोदरात् ।
फल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथवा पुनः १४
यमाभ्यां युयुधानाद्वा ये चान्ये तव सैनिकाः ।
एकः सर्वानहं क्रुद्धो वारयिष्ये युधि स्थितः ॥ १५
धर्ममूला सतां कीर्तिर्मनुष्याणां जनाधिप ।
धर्मं चैवेह कीर्तिं च पालयन्प्रब्रवीम्यहम् ॥ १६
अहमुत्थाय सर्वान्वै प्रतियोत्स्यामि संयुगे ।
अन्वभ्याशं गतान्सर्वान्निहनिष्यामि भारत ॥ १७
अद्य वः सरथान्साश्वानशस्त्रो विरथोऽपि सन् ।
नक्षत्राणीव सर्वाणि सविता रात्रिसंक्षये ॥ १८
तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः ।
अद्यानृण्यं गमिष्यामि क्षत्रियाणां यशस्विनां १९
बाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः ।
जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः ॥ २०
मद्रराजस्य शल्यस्य भूरिश्रवस एव च ।
पुत्राणां भरतश्रेष्ठ शकुनेः सौबलस्य च ॥ २१

आतपत्रेण दुर्योधनः सूर्याद्रक्षित इत्येष प्रवादोऽपि यस्य न स इति भावः ॥ ३ ॥ परिद्यूनः परिश्रान्तः ॥ १० ॥

स मेघनिनदो हर्षान्नर्दन्निव च गोवृषः ।
आजुहाव ततः पार्थान्गदया युधि वीर्यवान् ॥५१
दुर्योधन उवाच ।
एकैकेन च मां यूयमासीदत युधिष्ठिर ।
न ह्येको बहुभिर्न्याय्यो वीरो योधयितुं युधि ॥५२
न्यस्तवर्मा विशेषेण श्रान्तश्चाप्सु परिप्लुतः ।
भृशं विक्षतगात्रश्च हतवाहनसैनिकः ॥ ५३
[अवश्यमेव योद्धव्यं सर्वैरेव मया सह ।
युक्तं त्वयुक्तमित्येतद्वेत्सि त्वं चैव सर्वदा ॥]५४
युधिष्ठिर उवाच ।
मा भूदियं तव प्रज्ञा कथमेकं सुयोधन ।
यदाऽभिमन्युं बहवो जघ्नुर्युधि महारथाः ॥ ५५
[क्षत्रधर्मं भृशं क्रूरं निरपेक्षं सुनिर्घृणम् ।
अन्यथा तु कथं हन्युरभिमन्युं तथागतम् ॥ ५६
सर्वे भवन्तो धर्मज्ञाः सर्वे शूरास्तनुत्यजः ।
न्यायेन युध्यतां प्रोक्ता शक्रलोकगतिः परा॥५७
यद्येकस्तु न हन्तव्यो बहुभिर्धर्म एव तु ।
तदाऽभिमन्युं बहवो निजघ्नुस्त्वन्मते कथम्॥५८
सर्वो विमृशते जन्तुः कृच्छ्रस्थो धर्मदर्शनम् ।
पदस्थः पिहितं द्वारं परलोकस्य पश्यति ॥] ५९
आमुञ्च कवचं वीर मूर्धजान्यमयस्व च ।
यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत ॥ ६०
इममेकं च ते कामं वीर भूयो ददाम्यहम् ।
पञ्चानां पाण्डवेयानां येन त्वं योद्धुमिच्छसि ॥६
तं हत्वा वै भवान्राजा हतो वा स्वर्गमाप्नुहि
ऋते च जीविताद्वीर युद्धे किं कुर्म ते प्रियम् ॥६
सञ्जय उवाच ।
ततस्तव सुतो राजन्वर्म जग्राह काञ्चनम् ।
विचित्रं च शिरस्त्राणं जाम्बूनदपरिष्कृतम् ॥ ६
सोऽवबद्धशिरस्त्राणः शुभकाञ्चनवर्मभृत् ।
रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव ॥ ६
सन्नद्धः सगदो राजन्सज्जः संग्राममूर्धनि ।
अब्रवीत्पाण्डवान्सर्वान्पुत्रो दुर्योधनस्तव ॥ ६
भ्रातॄणां भवतामेको युध्यतां गदया मया ।
सहदेवेन वा योत्स्ये भीमेन नकुलेन वा ॥ ६
अथवा फल्गुनेनाद्य त्वया वा भरतर्षभ ।
योत्स्येऽहं संगरं प्राप्य विजेष्ये च रणाजिरे ॥६
अहमद्य गमिष्यामि वैरस्यान्तं सुदुर्गमम् ।
गदया पुरुषव्याघ्र हेमपट्टनिबद्धया ॥ ६
गदायुद्धे न मे कश्चित्सदृशोऽस्तीति चिन्तये ।
गदया वो हनिष्यामि सर्वानेव समागतान् ॥६
[न मे समर्थाः सर्वे वै योद्धुं न्यायेन केचन ।
न युक्तमात्मना वक्तुमेवं गर्वोद्धतं वचः ।
अथवा सफलं ह्येतत्करिष्ये भवतां पुरः ॥ ७
अस्मिन्मुहूर्ते सत्यं वा मिथ्या वै तद्भविष्यति
गृह्णातु च गदां यो वै योत्स्यतेऽद्य मया सह॥ ७

॥ इति श्रीमन्महाभारते शल्यपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

युधिष्ठिरेण दुर्योधनंप्रति स्वेष्वन्यतमपराजयेनापि तस्य राज्यप्राप्तिवचने कृष्णेन तंप्रति सकोपं भीमेनापि दुर्योधन राजये स्वस्य संशयोक्तिः ॥ १ ॥ भीमेन कृष्णंप्रति स्वसामर्थ्यप्रकथनपूर्वकं स्वेन दुर्योधनवधस्य सुकरत्वे कथिते कृष्ण दिभिस्तत्प्रशंसनम् ॥ २ ॥ भीमदुर्योधनयोर्वीरवादपूर्वकं युद्धोद्यमः ॥ ३ ॥

सञ्जय उवाच ।
एवं दुर्योधने राजन्गर्जमाने मुहुर्मुहुः ।
युधिष्ठिरस्य संक्रुद्धो वासुदेवोऽब्रवीदिदम् ॥ १
यदि नाम ह्ययं युद्धे वरयेत्त्वां युधिष्ठिर ।
अर्जुनं नकुलं चैव सहदेवमथापि वा ॥
किमिदं साहसं राजंस्त्वया व्याहृतमीदृशम् ।

क्षत्रधर्मं अस्तीति शेषः । धर्मोऽस्त्री पुण्यआचारे इति मेदिनी ॥ ५६ ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

एकमेव निहत्याजौ भव राजा कुरुष्विति ॥ ३
एतेन हि कृता योग्या वर्षाणीह त्रयोदश ।
आयसे पुरुषे राजन्भीमसेनजिघांसया ॥ ४
कथं नाम भवेत्कार्यमस्माद्भिः भरतर्षभ ।
साहसं कृतवांस्त्वं तु ह्यनुक्रोशान्नृपोत्तम ॥ ५
नान्यमस्यानुपश्यामि प्रतियोद्धारमाहवे ।
ऋते वृकोदरात्पार्थात्स च नातिकृतश्रमः ॥ ६
तदिदं द्यूतमारब्धं पुनरेव यथा पुरा ।
विषमं शकुनेश्चैव तव चैव विशेषतः ॥ ७
बली भीमः समर्थश्च कृती राजा सुयोधनः ।
बलवान्वा कृती वेति कृती राजन्विशिष्यते ॥ ८
सोऽयं राजंस्त्वया शत्रुः समे पथि निवेशितः ।
न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयम् ॥ ९
कोऽनु सर्वान्विनिर्जित्य शत्रूनेकेन वैरिणा ।
[ कृच्छ्रप्राप्तेन च तथा हारयेद्राज्यमागतम् ।]
पातितश्चैकबाणेन शोचयेदेवमाहवे ॥ १०
न हि पश्यामि तं लोके योऽद्य दुर्योधनं रणे ।
गदाहस्तं विजेतुं वै शक्तः स्यादमरोपि हि ॥ ११
फल्गुनो वा भवान्वाथ माद्रीपुत्रावथापि वा ।
न समर्थानहं मन्ये गदाहस्तस्य संयुगे ॥ १२
न त्वं भीमो न नकुलः सहदेवोऽथ फल्गुनः ।
जेतुं न्यायेन शक्तो वै कृती राजा सुयोधनः १३
स कथं वदसे शत्रुं युध्यस्व गदयेति हि ।
एकं च नो निहत्याजौ भव राजेति भारत ॥१४
वृकोदरं समासाद्य संशयो वै जये हि नः ।
न्यायतो युध्यमानानां कृती ह्येष महाबलः॥१५
[ नूनं न राज्यभागेषा पाण्डोः कुन्त्याश्च संततिः ।
अत्यन्तवनवासाय सृष्टा भैक्ष्याय वा पुनः ॥] १६
भीमसेन उवाच ।
मधुसूदन माकार्षीर्विषादं यदुनन्दन ।
अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमम् ॥ १७
अहं सुयोधनं सङ्ख्ये हनिष्यामि न संशयः ।
विजयो वै ध्रुवः कृष्ण धर्मराजस्य दृश्यते ॥ १८
अध्यर्धेन गुणेनेयं गदा गुरुतरी मम ।
न तथा धार्तराष्ट्रस्य माकार्षीर्माधव व्यथाम् ॥१९
अनया गदया चाहं संयुगे योद्धुमुत्सहे ।
भवन्तः प्रेक्षकाः सर्वे मम सन्तु जनार्दन ॥ २०
सामरानपि लोकांस्त्रीन्नानाशस्त्रधरान्युधि ।
योधयेयं रणे कृष्ण किमुताद्य सुयोधनम् ॥ २१
सञ्जय उवाच ।
तथा संभाषमाणं तु वासुदेवो वृकोदरम् ।
हृष्टः संपूजयामास वचनं चेदमब्रवीत् ॥ २२
त्वामाश्रित्य महाबाहो धर्मराजो युधिष्ठिरः ।
निहतारिः स्वकां दीप्तां श्रियं प्राप्नोत्यसंशयम् ॥ २३
त्वया विनिहताः सर्वे धृतराष्ट्रसुता रणे ।
राजानो राजपुत्राश्च नागाश्च विनिपातिताः ॥ २४
कलिङ्गा मागधाः प्राच्या गान्धाराः कुरवस्तथा ।
त्वामासाद्य महायुद्धे निहताः पाण्डुनन्दन ॥ २५
हत्वा दुर्योधनं चापि प्रयच्छोर्वी ससागराम् ।
धर्मराजाय कौन्तेय यथा विष्णुः शचीपतेः॥२६
त्वां च प्राप्य रणे पापो धार्तराष्ट्रो विनङ्क्ष्यति ।
त्वमस्य सक्थिनी भंक्त्वा प्रतिज्ञां पालयिष्यसि२७
यत्नेन तु त्वया पापो योद्धव्यो धृतराष्ट्रजः ।
कृती च बलवांश्चैव युद्धशौण्डश्च नित्यदा ॥ २८
ततस्तु सात्यकी राजन्पूजयामास पाण्डवम् ।
विविधाभिश्च तं वाग्भिर्भीमसेनं जनेश्वर ॥ २९
पाञ्चालाः पाण्डवेयाश्च धर्मराजपुरोगमाः ।
तद्वचो भीमसेनस्य सर्व एवाभ्यपूजयन् ॥ ३०
ततो भीमबलो भीमो युधिष्ठिरमथाब्रवीत् ।
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ३१
अहमेतेन संगम्य संयुगे योद्धुमुत्सहे ।
न हि शक्तो रणे जेतुं मामेष पुरुषाधमः ॥ ३२
अद्य क्रोधं विमोक्ष्यामि निहितं हृदये भृशम् ।
सुयोधने धार्तराष्ट्रे खाण्डवेऽग्निमिवार्जुनः ॥ ३३
शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् ।
निहते गदया पापे अद्य राजन्सुखी भव ॥ ३४

योग्या अभ्यासः । योग्यः प्रवीणेत्याद्युपक्रम्य स्त्र्यभ्यासार्कयोषितोरिति मेदिनी ॥ ४ ॥ शकुनेश्च तव च यथापुरा तथैवेदमिति संबन्धः ॥ ७ ॥ पणित्वा चैकपाणेन रोचयेदेवमाहवम् इति झ. पाठः ॥ १० ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

अद्य कीर्तिमयीं मालां प्रतिमोक्ष्ये तवानघ ।
प्राणाञ्श्रियं च राज्यं च मोक्ष्यतेऽद्य सुयोधनः ३५
राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ३६
इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य वीर्यवान् ।
उदतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ३७
[तदाह्वानममृष्यन्वै तव पुत्रोऽतिवीर्यवान् ।
प्रत्युपस्थित एवाशु मत्तो मत्तमिव द्विपम् ॥ ३८
गदाहस्तं तव सुतं युद्धाय समुपस्थितम् ।
ददृशुः पाण्डवाः सर्वे कैलासमिव शृङ्गिणम् ॥] ३९
तमेकाकिनमासाद्य धार्तराष्ट्रं महाबलम् ।
वियूथमिव मातङ्गं समहृष्यन्त पाण्डवाः ॥ ४०
[न संभ्रमो न च भयं न च ग्लानिर्न च व्यथा ।
आसीद्दुर्योधनस्यापि स्थितः सिंह इवाहवे ॥] ४१
समुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनस्तदा राजन्दुर्योधनमथाब्रवीत् ॥ ४२
राज्ञापि धृतराष्ट्रेण त्वया चास्मासु यत्कृतम् ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ ४३
द्रौपदी च परामृष्टा सभामध्ये रजस्वला ।
द्यूते च वञ्चितो राजा शकुनेर्बुद्धिलाघवात् ॥ ४४
यानि चान्यानि दुष्टात्मन्पापानि कृतवानसि ।
अनागःसु च पार्थेषु तस्य पश्य महत्फलम् ॥ ४५
त्वत्कृते निहतः शेते शरतल्पे महायशाः ।
गाङ्गेयो भरतश्रेष्ठः सर्वेषां नः पितामहः ॥ ४६
हतो द्रोणश्च कर्णश्च हतः शल्यः प्रतापवान् ।
वैराग्नेरादिकर्ता च शकुनिर्निहतो रणे ॥ ४७
भ्रातरस्ते हताः शूराः पुत्राश्च सहसैनिकाः ।
राजानश्च हताः शूराः समरेष्वनिवर्तिनः ॥ ४८
एते चान्ये च निहता बहवः क्षत्रियर्षभाः ।
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ४९
अवशिष्टस्त्वमेवैकः कुलघ्नोऽधमपूरुषः ।
त्वामप्यद्य हनिष्यामि गदया नात्र संशयः ॥५०
अद्य तेऽहं रणे दर्पं सर्वं नाशयिता नृप ।
राज्याशां विपुलां चापि पाण्डवेषु च दुष्कृतम् ५१
दुर्योधन उवाच ।
किं कत्थितेन बहुना युध्यस्वाद्य मया सह ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर ॥ ५२
किं न पश्यसि मां पाप गदायुद्धे व्यवस्थितम् ।
हिमवच्छिखराकारां प्रगृह्य महतीं गदाम् ॥ ५३
गदिनं कोऽद्य मां पाप हन्तुमुत्सहते रिपुः ।
न्यायतो युध्यमानश्च देवेष्वपि पुरंदरः ॥ ५४
मा वृथा गर्ज कौन्तेय शारदाभ्रमिवाजलम् ।
दर्शयस्व बलं युद्धे यावत्तन्मासून्निहन्मि ते ॥ ५५
तस्य तद्वचनं श्रुत्वा पाण्डवाः सहसृञ्जयाः ।
सर्वे संपूजयामासुस्तद्वचो विजिगीषवः ॥ ५६
उन्मत्तमिव मातङ्गं तलशब्देन मानवाः ।
भूयः संहर्षयामासू राजन्दुर्योधनं द्विषः ॥ ५७
बृंहन्ति कुञ्जरास्तत्र हया हेषन्ति चासकृत् ।
शस्त्राणि संप्रदीप्यन्ते पाण्डवानां जयैषिणाम् ५८

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

गदायुद्धारम्भे बलभद्रागमनम् ॥ १ ॥ तस्मिन्पाण्डवादिभिरार्चितोपविष्टे पुनर्गदायुद्धारम्भः ॥ २ ॥

सञ्जय उवाच ।
तस्मिन्युद्धे महाराज सुसंवृत्ते सुदारुणे ।
उपविष्टेषु सर्वेषु पाण्डवेषु महात्मसु ॥ १
ततस्तालध्वजो रामस्तयोर्युद्ध उपस्थिते ।
श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुधः ॥ २
तं दृष्ट्वा परमप्रीताः पाण्डवाः सहकेशवाः ।
उपगम्योपसंगृह्य विधिवत्प्रत्यपूजयन् ॥ ३
पूजयित्वा ततः पश्चादिदं वचनमब्रुवन् ।
शिष्ययोः कौशलं युद्धे पश्य रामेति पार्थिव ॥ ४
अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं सपाण्डवम् ।

दुर्योधनं च कौरव्यं गदापाणिमवस्थितम् ॥ ५
राम उवाच ।
चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै ।
पुष्येण संप्रयातोऽस्मि श्रवणे पुनरागतः ।
शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव ॥ ६
ततो युधिष्ठिरो राजा परिष्वज्य हलायुधम् ।
स्वागतं कुशलं चास्मै पर्यपृच्छद्यथातथम् ॥ ७
कृष्णौ चापि महेष्वासावभिवाद्य हलायुधम् ।
सस्वजाते परिप्रीतौ प्रीयमाणौ यशस्विनौ ॥ ८
माद्रीपुत्रौ तथा शूरौ द्रौपद्याः पञ्च चात्मजाः ।
अभिवाद्य स्थिता राजन्रौहिणेयं महाबलम् ॥ ९
भीमसेनोऽथ बलवान्पुत्रस्तव जनाधिप ।
तथैव चोद्यतगदौ पूजयामासतुर्बलम् ॥ १०
स्वागतेन च ते तत्र प्रतिपूज्य पुनःपुनः ।
पश्य युद्धं महाबाहो इति ते राममब्रुवन् ॥ ११
एवमूचुर्महात्मानं रौहिणेयं नराधिपाः ॥ १२
परिष्वज्य तदा रामः पाण्डवान्सह सृञ्जयान् ।
अपृच्छत्कुशलं सर्वान्पार्थिवांश्चामितौजसः ।
तथैव ते समासाद्य पप्रच्छुस्तमनामयम् ॥ १३
प्रत्यभ्यर्च्य हली सर्वान्क्षत्रियांश्च महात्मनः ।
कृत्वा कुशलसंप्रश्नं संविदं च यथावयः ॥ १४
जनार्दनं सात्यकिं च प्रेम्णा संपरिषस्वजे ।
मूर्ध्नि चैतावुपाघ्राय कुशलं पर्यपृच्छत ॥ १५
तौ च तं विधिवद्राजन्पूजयामासतुर्गुरुम् ।
ब्रह्माणमिव देवेशमिन्द्रोपेन्द्रौ मुदान्वितौ ॥ १६
ततोऽब्रवीद्धर्मसुतो रौहिणेयमरिंदमम् ।
इदं भ्रात्रोर्महायुद्धं पश्य रामेति भारत ॥ १७
तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः ।
न्यविशत्परमप्रीतः पूज्यमानो महारथः ॥ १८
स बभौ राजमध्यस्थो नीलवासाः सितप्रभः ।
दिवीव नक्षत्रगणैः परिवीतो निशाकरः ॥ १९
ततस्तयोः संनिपातस्तुमुलो रोमहर्षणः ।
आसीदन्तकरो राजन्वैरस्यान्तं विधित्सतोः ॥२०

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

जनमेजयेन वैशंपायनंप्रति बलरामस्य तीर्थयात्राप्रकारप्रश्नः ॥ १ ॥ तेन तंप्रति तत्कथनमुपक्रम्य प्रभासतीर्थस्य तत्पदवाच्यत्वे हेतुकथनम् ॥ २ ॥

जनमेजय उवाच ।
पूर्वमेव यदा रामस्तस्मिन्युद्ध उपस्थिते ।
आमन्त्र्य केशवं यातो वृष्णिभिः सहितः प्रभुः ॥१
साहाय्यं धार्तराष्ट्रस्य न च कर्तास्मि केशव ।
न चैव पाण्डुपुत्राणां गमिष्यामि यथागतम् ॥ २
एवमुक्त्वा तदा रामो यातः शत्रुनिबर्हणः ।
तस्य चागमनं भूयो ब्रह्मञ्शंसितुमर्हसि ॥ ३
आख्याहि मे विस्तरशः कथं राम उपस्थितः ।
कथं च दृष्टवान्युद्धं कुशलो ह्यसि सत्तम ॥ ४
वैशंपायन उवाच ।
उपप्लाव्ये निविष्टेषु पाण्डवेषु महात्मसु ।
प्रेषितो धृतराष्ट्रस्य समीपं मधुसूदनः ॥ ५
शमं प्रति महाबाहो हितार्थं सर्वदेहिनाम् ॥ ६
स गत्वा हास्तिनपुरं धृतराष्ट्रं समेत्य च ।
उक्तवान्वचनं पथ्यं हितं चैव विशेषतः ॥ ७
न च तत्कृतवान्राजा यथाऽऽख्यातं हि तत्पुरा ॥८
अनवाप्य शमं तत्र कृष्णः पुरुषसत्तमः ।
आगच्छत महाबाहुरुपप्लाव्यं जनाधिप ॥ ९
ततः प्रत्यागतः कृष्णो धार्तराष्ट्रविसर्जितः ।
आजगाम नरव्याघ्रः पाण्डवानामनीकिनीम् ।
यथोक्तं च यथावृत्तं गत्वा पाण्डवमब्रवीत् ॥१०
न कुर्वन्ति वचो मह्यं कुरवः कालनोदिताः ।
निर्गच्छध्वं पाण्डवेयाः पुष्येण सहिता मया ॥११
ततो विभज्यमानेषु बलेषु बलिनां वरः ।

प्रोवाच भ्रातरं कृष्णं रौहिणेयो महामनाः ॥१२
तेषामपि महाबाहो साहाय्यं मधुसूदन ।
क्रियतामिति तत्कृष्णो नास्य चक्रे वचस्तदा॥१३
ततो मन्युपरीतात्मा जगाम यदुनन्दनः ।
तीर्थयात्रां हलधरः सरस्वत्यां महायशाः ।
मैत्रनक्षत्रयोगे स सहितः सर्वयादवैः ॥ १४
आश्रयामास भोजस्तु दुर्योधनमरिंदमः ।
युयुधानेन सहितो वासुदेवस्तु पाण्डवान् ॥१५
रौहिणेये गते शूरे पुष्येण मधुसूदनः ।
पाण्डवेयान्पुरस्कृत्य ययावभिमुखः कुरून् ॥१६
गच्छन्नेव पथिस्थस्तु रामः प्रेष्यानुवाच ह ।
संभारांस्तीर्थयात्रायां सर्वोपकरणानि च ॥ १७
आनयध्वं द्वारकाया अग्नीन्वै याजकांस्तथा ।
सुवर्णरजतं चैव धेनूर्वासांसि वाजिनः ॥ १८
कुञ्जरांश्च रथांश्चैव खरोष्ट्रं वाहनानि च ।
क्षिप्रमानीयतां सर्वं तीर्थहेतोः परिच्छदम् ॥१९
प्रतिस्रोतः सरस्वत्या गच्छध्वं शीघ्रगामिनः ।
ऋत्विजश्चानयध्वं वै शतशश्च द्विजर्षभान् ॥२०
एवं संदिश्य तु प्रेष्यान्बलदेवो महाबलः ।
तीर्थयात्रां ययौ राजन्कुरूणां वैशसे तदा ॥२१
सरस्वत्याः प्रतिस्रोतः समुद्रादभिजग्मिवान् ।
रामो यदूत्तमः श्रीमांस्तीर्थयात्रामनुस्मरन् ॥२२
ऋत्विग्भिश्च सुहृद्भिश्च तथाऽन्यैर्द्विजसत्तमैः ।
रथैर्गजैस्तथाऽश्वैश्च प्रेष्यैश्च भरतर्षभ ।
गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्वृतः ॥ २३
श्रान्तानां क्लान्तवपुषां शिशूनां विपुलायुषाम् ।
देशेदेशे तु देयानि दानानि विविधानि च॥२४
अर्चायै चार्थिनां राजन्क्लृप्तानि बहुशस्तथा ।
तानि यानीह देशेषु प्रतीक्षन्ति स्म भारत ॥२५
बुभुक्षितानामर्थाय क्लृप्तमन्नं समन्ततः ॥ २६
योयो यत्र द्विजो भोज्यं भोक्तुं कामयते तदा।
तस्यतस्य तु तत्रैवमुपजह्रुस्तदा नृप ॥ २७
तत्रतत्र स्थिता राजन्रौहिणेयस्य शासनात् ।
भक्ष्यपेयस्य कुर्वन्ति राशींस्तत्र समन्ततः ॥ २८
वासांसि च महार्हाणि पर्यङ्कास्तरणानि च ।
पूजार्थं तत्र क्लृप्तानि विप्राणां सुखमिच्छताम् ॥२९
यत्र यः स्वपते विप्रो यो वा जागर्ति भारत ।
तत्रतत्रैव सर्वस्य क्लृप्तं सर्वमपश्यत ॥ ३०
यथासुखं जनः सर्वो याति तिष्ठति वै तदा ।
यातुकामस्य यानानि पानानि तृषितस्य च ॥३१
बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ ।
उपजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च ॥ ३२
स पन्थाः प्रबभौ राजन्सर्वस्यैव सुखावहः ।
स्वर्गोपमस्तदा वीर नराणां तत्र गच्छताम्॥ ३२
नित्यप्रमुदितोपेतः स्वादुभक्ष्यो जलान्वितः ।
विपण्यापणपण्यानां नानाजनशतैर्वृतः ।
नानाद्रुमलतोपेतो नानारत्नविभूषितः ॥ ३४
ततो महात्मा नियतो मनस्विनां
पुण्येषु तीर्थेषु वसूनि राजन् ।
ददौ द्विजेभ्यः क्रतुदक्षिणाश्च
यदुप्रवीरो हलभृत्प्रतीतः ॥ ३५
दोग्ध्रीश्च धेनूश्च सहस्रशो वै
सुवाससः काञ्चनबद्धशृङ्गीः ।
हयांश्च नानाविधदेशजातान्
यानानि दासांश्च शुभान्द्विजेभ्यः ॥ ३६
रत्नानि मुक्तामणिविद्रुमं चा-
प्यग्र्यं सुवर्णं रजतं सुशुद्धम् ।
अयस्मयं ताम्रमयं च भाण्डं
ददौ द्विजातिप्रवरेषु रामः ॥ ३७
एवं स वित्तं प्रददौ महात्मा
सरस्वतीतीर्थगतेषु भूरि ।
ययौ क्रमेणाप्रतिमप्रभाव-
स्ततः कुरुक्षेत्रमुदारवृत्तः ॥ ३८

मैत्रनक्षत्रयोगे अनुराधायां ॥ १४ ॥ भोजः कृतवर्मा ॥ १५ ॥ पुष्येण हि पाण्डवेभ्यः प्रयाणं अनुराधातस्तीर्थयात्रार्थमिति विवेकः ॥ १६ ॥ विपणिः पण्यवीथिका । आपणा हट्टाः । पण्यानि विक्रेयद्रव्याणि ॥ ३४ ॥ कृतदक्षिणाश्चेति क. ङ. पाठः ॥ ३५ ॥

जनमेजय उवाच ।
सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे ।
फलं च द्विपदां श्रेष्ठ कर्म निर्वृत्तिमेव च ॥ ३९
यथाक्रमेण भगवंस्तीर्थानामनुपूर्वशः ।
ब्रूहि ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ॥ ४०
वैशंपायन उवाच ।
तीर्थानां च फलं राजन्गुणोत्पत्तिं च सर्वशः ।
मयोच्यमानं वै पुण्यं शृणु राजेन्द्र कृत्स्नशः ॥ ४१
पूर्वं महाराज यदुप्रवीर
ऋत्विक्सुहृद्विप्रगणैश्च सार्धम् ।
पुण्यं प्रभासं समुपाजगाम
यत्रोडुराड्यक्ष्मणा क्षीयमाणः ॥ ४२
विमुक्तशापः पुनराप्य तेजः
सर्वं जगद्भासयते नरेन्द्र ।
एतत्तु तीर्थप्रवरं पृथिव्यां
प्रभासनात्तस्य ततः प्रभासः ॥ ४३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

चन्द्रे स्वभार्यास्वश्विन्यादिदक्षपुत्रीषु इतरोपेक्षणेन रोहिण्यामेवासक्ते दक्षेण रोषाच्चन्द्रे यक्ष्मप्रक्षेपः ॥ १ ॥ देवैः प्रसादितदक्षवचनाच्चन्द्रेण प्रभासतीर्थनिमज्जनेन क्षयरोगपरिहरणम् ॥ २ ॥ बलभद्रेण तत्तीर्थे मज्जनादि ॥ ३ ॥

जनमेजय उवाच ।
किमर्थं भगवान्सोमो यक्ष्मणा समगृह्यत ।
कथं च तीर्थप्रवरे तस्मिंश्चन्द्रो न्यमज्जत ॥ १
कथमाप्लुत्य तस्मिंस्तु पुनराप्यायितः शशी ।
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ॥ २
वैशंपायन उवाच ।
दक्षस्य तनयास्तात प्रादुरासन्विशांपते ।
स सप्तविंशतिं कन्या दक्षः सोमाय वै ददौ ॥ ३
नक्षत्रयोगनिरताः सङ्ख्यानार्थं च ताभवन् ।
पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभकर्मणः ॥ ४
तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमाऽभवन् ।
अत्यरिच्यत तासां तु रोहिणी रूपसंपदा ॥ ५
ततस्तस्यां स भगवान्प्रीतिं चक्रे निशाकरः ।
साऽस्य हृद्या बभूवाथ तस्मात्तां बुभुजे सदा ॥ ६
ततस्ताः कुपिताः सर्वा नक्षत्राख्या महात्मनः ।
ता गत्वा पितरं प्राहुः प्रजापतिमतन्द्रिताः ॥ ७
सोमो वसति नास्मासु रोहिणीं भजते सदा ।
ता वयं सहिताः सर्वास्त्वत्सकाशे प्रजेश्वर ।
वत्स्यामो नियताहारास्तपश्चरणतत्पराः ॥ ८
श्रुत्वा तासां तु वचनं दक्षः सोममथाब्रवीत् ।
समं वर्तस्व सर्वासु मा त्वाऽधर्मो महान्स्पृशेत् ॥ ९
तास्तु सर्वाऽब्रवीद्दक्षो गच्छध्वं शशिनोन्तिकम् ।
समं वत्स्यति सर्वासु चन्द्रमा मम शासनात् ॥ १०
विसृष्टास्तास्तथा जग्मुः शीतांशोर्भवनं शुभाः ।
तथाऽपि सोमो भगवान्पुनरेव महीपते ।
रोहिण्या सार्धमवसत्प्रीयमाणो मुहुर्मुहुः ॥ ११
ततस्ताः सहिताः सर्वा भूयः पितरमब्रुवन् ॥ १२
सोमो वसति नास्मासु नाकरोद्वचनं तव ।
तव शुश्रूषणे युक्ता वत्स्यामो हि तवान्तिके ॥ १३
तासां तद्वचनं श्रुत्वा दक्षः सोममथाब्रवीत् ।
समं वर्तस्व सर्वासु मा त्वां शप्स्ये विरोचन ॥ १४
अनादृत्य तु तद्वाक्यं दक्षस्य भगवाञ्शशी ।
रोहिण्या सार्धमवसत्ततस्ताः कुपिताः पुनः ॥ १५
गत्वा च पितरं प्राहुः प्रणम्य शिरसा तदा ।
सोमो वसति नास्मासु तस्मान्नः शरणं भव ॥ १६
रोहिण्यामेव भगवान्सदा वसति चन्द्रमाः ।

---

गुणान् रमणीयत्वादीन् । उत्पत्तिं संभवम् । कर्मनिर्वृत्तिं तीर्थयात्राविधिसिद्धम् । निवृत्तिमपि कर्मणाम् इति क. ङ. पाठः ॥ ३९ ॥ यथाक्रमेण तीर्थक्रमापेक्षया अनुपूर्वशः गुणोत्पत्त्यादिक्रमापेक्षया ॥ ४० ॥ प्रभासः प्रभासत्वम् ॥ ४३ ॥

पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

त्वा त्वां अधर्मः मा स्पृशेत् ॥ ९ ॥ विरोचन हे विशेषेण रोचमान । त्वां माशप्स्ये । तव रोचनां यथाहं शापेन न हरामि तथा यतस्वेत्यर्थः ॥ १४ ॥

न त्वद्वचो गणयति नास्मासु स्नेहमिच्छति ॥ १७
तस्मान्नस्त्राहि सर्वा वै यथा नः सोम आविशेत् ।
तच्छ्रुत्वा भगवान्क्रुद्धो यक्ष्माणं पृथिवीपते ॥ १८
ससर्ज रोषात्सोमाय स चोडुपतिमाविशत् ।
स यक्ष्मणाऽभिभूतात्मा क्षीयताहरहः शशी ॥ १९
यत्नं चाप्यकरोद्राजन्मोक्षार्थं तस्य यक्ष्मणः ।
इष्टेष्टिभिर्महाराज विविधाभिर्निशाकरः ॥ २०
न चामुच्यत शापाद्वै क्षयं चैवाधिगच्छति ।
क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे ॥ २१
निरास्वादरसाः सर्वा हतवीर्याश्च सर्वशः ।
ओषधीनां क्षये जाते प्राणिनामपि संक्षयः ॥ २२
कृशाश्चासन्प्रजाः सर्वाः क्षीयमाणे निशाकरे ।
ततो देवाः समागम्य सोममूचुर्महीपते ॥ २३
किमिदं भवतो रूपमीदृशं संप्रकाशते ।
कारणं ब्रूहि नः सर्वं येनेदं ते महद्भयम् ॥ २४
श्रुत्वा तु कारणं त्वत्तो विधास्यामस्ततो वयम् ।
एवमुक्तः प्रत्युवाच सर्वांस्ताञ्शशलक्षणः ॥ २५
शापस्य कारणं चैव यक्ष्माणं च तथाऽऽत्मनः ।
देवास्तस्य वचः श्रुत्वा गत्वा दक्षमथाऽब्रुवन् ॥ २६
प्रसीद भगवन्सोमे शापोऽयं विनिवर्त्यताम् ।
असौ हि चन्द्रमाः क्षीणः किंचिच्छेषो हि लक्ष्यते ॥
क्षयाच्चैवास्य देवेश प्रजाश्चैव गताः क्षयम् ।
वीरुदोषधयश्चैव बीजानि विविधानि च ।
तथा नरा लोकगुरो प्रसादं कर्तुमर्हसि ॥ २८
एवमुक्तस्ततो देवान्प्राह वाक्यं प्रजापतिः ।
नैतच्छक्यं मम वचो व्यावर्तयितुमञ्जसा ॥ २९
हेतुना तु महाभागा निवर्तिष्यति केनचित् ।
समं वर्ततु सर्वासु शशी भार्यासु नित्यशः ॥ ३०
सरस्वत्या वरे तीर्थे निमज्जञ्शशलक्षणः ।
पुनर्वर्धिष्यते देवास्तद्वै सत्यं वचो मम ॥ ३१
मासार्धं च क्षयं सोमो नित्यमेव गमिष्यति ।
मासार्धं तु पुनर्वृद्धिं सत्यमेतद्वचो मम ॥ ३२
समुद्रं पश्चिमं गत्वा सरस्वत्यब्धिसंगमम् ।
आराधयतु देवेशं ततः कान्तिमवाप्स्यति ॥ ३३
सरस्वतीं ततः सोमः स जगामर्षिशासनात् ।
प्रभासं प्रथमं तीर्थं सरस्वत्या जगाम ह ॥ ३४
अमावास्यां महातेजास्तत्रामज्जन्महाद्युतिः ।
लोकान्प्रभासयामास शीतांशुत्वमवाप च ॥ ३५
देवास्तु सर्वे राजेन्द्र प्रसादं प्राप्य पुष्कलम् ।
सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ॥ ३६
ततः प्रजापतिः सर्वा विससर्जाथ देवताः ।
सोमं च भगवान्प्रीतो भूयो वचनमब्रवीत् ॥ ३७
मावमंस्थाः स्त्रियः पुत्र मा च विप्रान्कदाचन ।
गच्छ युक्तः सदा भूत्वा कुरु वै शासनं मम ॥ ३८
स विसृष्टो महाराज जगामाथ स्वमालयम् ।
प्रजाश्च मुदिता भूत्वा ईजिरे च यथा पुरा ॥ ३९
एवं ते सर्वमाख्यातं यथा शप्तो निशाकरः ।
प्रभासं च यथा तीर्थं तीर्थानां प्रवरं महत् ॥ ४०
अमावास्यां महाराज नित्यशः शशलक्षणः ।
स्नात्वाह्याप्यायते श्रीमान्प्रभासे तीर्थउत्तमे ॥ ४१
अतश्चैतत्प्रजानन्ति प्रभासमिति भूमिप ।
प्रभां हि परमां लेभे तस्मिन्नुन्मज्ज्य चन्द्रमाः ॥ ४२
'लोकान्प्रभासयामास पुपोष च वपुस्तथा ।
तत्र स्नात्वा हली रामो दत्त्वा प्रीतोऽथ दक्षिणाः ॥'
ततस्तु चमसोद्भेदमभीतस्त्वगमद्बली ।
चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत ॥ ४४
तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः ।
उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा ॥ ४५
उदपानमथागच्छत्त्वरावान्केशवाग्रजः ।
आद्यं स्वस्त्ययनं चैव तत्रावाप्य महाबलः ॥ ४६
स्निग्धत्वादोषधीनां च भूमेश्च जनमेजय ।
जानन्ति सिद्धा राजेन्द्र निगूढां तां सरस्वतीम् ४७

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

गच्छयत्तः इति क. पाठः ॥ ३८ ॥

षट्त्रिंशोऽध्यायः ॥ ३६ ॥

न त्वद्वचो गणयति नास्मासु स्नेहमिच्छति ॥ १७
तस्मान्नस्त्राहि सर्वा वै यथा नः सोम आविशेत् ।
तच्छ्रुत्वा भगवान्क्रुद्धो यक्ष्माणं पृथिवीपते ॥ १८
ससर्ज रोषात्सोमाय स चोडुपतिमाविशत् ।
स यक्ष्मणाऽभिभूतात्मा क्षीयताहरहः शशी ॥ १९
यत्नं चाप्यकरोद्राजन्मोक्षार्थं तस्य यक्ष्मणः ।
इष्टेष्टिभिर्महाराज विविधाभिर्निशाकरः ॥ २०
न चामुच्यत शापाद्वै क्षयं चैवाधिगच्छति ।
क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे ॥ २१
निरास्वादरसाः सर्वा हतवीर्याश्च सर्वशः ।
ओषधीनां क्षये जाते प्राणिनामपि संक्षयः ॥ २२
कृशाश्चासन्प्रजाः सर्वाः क्षीयमाणे निशाकरे ।
ततो देवाः समागम्य सोममूचुर्महीपते ॥ २३
किमिदं भवतो रूपमीदृशं संप्रकाशते ।
कारणं ब्रूहि नः सर्वं येनेदं ते महद्भयम् ॥ २४
श्रुत्वा तु कारणं त्वत्तो विधास्यामस्ततो वयम् ।
एवमुक्तः प्रत्युवाच सर्वांस्ताञ्शशलक्षणः ॥ २५
शापस्य कारणं चैव यक्ष्माणं च तथाऽऽत्मनः ।
देवास्तस्य वचः श्रुत्वा गत्वा दक्षमथाऽब्रुवन् ॥ २६
प्रसीद भगवन्सोमे शापोऽयं विनिवर्त्यताम् ।
असौ हि चन्द्रमाः क्षीणः किंचिच्छेषो हि लक्ष्यते ॥
क्षयाच्चैवास्य देवेश प्रजाश्चैव गताः क्षयम् ।
वीरुदोषधयश्चैव बीजानि विविधानि च ।
तथा नरा लोकगुरो प्रसादं कर्तुमर्हसि ॥ २८
एवमुक्तस्ततो देवान्प्राह वाक्यं प्रजापतिः ।
नैतच्छक्यं मम वचो व्यावर्तयितुमञ्जसा ॥ २९
हेतुना तु महाभागा निवर्तिष्यति केनचित् ।
समं वर्ततु सर्वासु शशी भार्यासु नित्यशः ॥ ३०
सरस्वत्या वरे तीर्थे निमज्जञ्शशलक्षणः ।
पुनर्वर्धिष्यते देवास्तद्वै सत्यं वचो मम ॥ ३१
मासार्धं च क्षयं सोमो नित्यमेव गमिष्यति ।
मासार्धं तु पुनर्वृद्धिं सत्यमेतद्वचो मम ॥ ३२
समुद्रं पश्चिमं गत्वा सरस्वत्यब्धिसंगमम् ।
आराधयतु देवेशं ततः कान्तिमवाप्स्यति ॥ ३३
सरस्वतीं ततः सोमः स जगामर्षिशासनात् ।
प्रभासं प्रथमं तीर्थं सरस्वत्या जगाम ह ॥ ३४
अमावास्यां महातेजास्तत्रामज्जन्महाद्युतिः ।
लोकान्प्रभासयामास शीतांशुत्वमवाप च ॥ ३५
देवास्तु सर्वे राजेन्द्र प्रसादं प्राप्य पुष्कलम् ।
सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ॥ ३६
ततः प्रजापतिः सर्वा विससर्जाथ देवताः ।
सोमं च भगवान्प्रीतो भूयो वचनमब्रवीत् ॥ ३७
मावमंस्थाः स्त्रियः पुत्र मा च विप्रान्कदाचन ।
गच्छ युक्तः सदा भूत्वा कुरु वै शासनं मम ॥ ३८
स विसृष्टो महाराज जगामाथ स्वमालयम् ।
प्रजाश्च मुदिता भूत्वा ईजिरे च यथा पुरा ॥ ३९
एवं ते सर्वमाख्यातं यथा शप्तो निशाकरः ।
प्रभासं च यथा तीर्थं तीर्थानां प्रवरं महत् ॥ ४०
अमावास्यां महाराज नित्यशः शशलक्षणः ।
स्नात्वाह्याप्यायते श्रीमान्प्रभासे तीर्थउत्तमे ॥ ४१
अतश्चैतत्प्रजानन्ति प्रभासमिति भूमिप ।
प्रभां हि परमां लेभे तस्मिन्नुन्मज्ज्य चन्द्रमाः ॥४२
'लोकान्प्रभासयामास पुपोष च वपुस्तथा ।
तत्र स्नात्वा हली रामो दत्त्वा प्रीतोऽथ दक्षिणाः ॥'
ततस्तु चमसोद्भेदमभीतस्त्वगमद्बली ।
चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत ॥ ४४
तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः ।
उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा ॥ ४५
उदपानमथागच्छत्त्वरावान्केशवाग्रजः ।
आद्यं स्वस्त्ययनं चैव तत्रावाप्य महाबलः ॥ ४६
स्निग्धत्वादोषधीनां च भूमेश्च जनमेजय ।
जानन्ति सिद्धा राजेन्द्र निगूढां तां सरस्वतीम् ४७

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टादशदिवसयुद्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

गच्छयुक्तः इति क. पाठः ॥ ३८ ॥

षट्त्रिंशोऽध्यायः ॥ ३६ ॥

तं ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ ।
वृकत्रासाच्च लोभाच्च समुत्सृज्य प्रजग्मतुः ॥२६
भ्रातृभ्यां पशुलुब्धाभ्यामुत्सृष्टः स महातपाः ।
उदपाने तदा राजन्निर्जले पांसुसंवृते ॥ २७
त्रित आत्मानमालक्ष्य कूपे वीरुत्तृणावृते ।
निमग्नं भरतश्रेष्ठ नरके दुष्कृती यथा ॥ २८
ततो ह्यचिन्तयत्प्राज्ञो मृतभूतो ह्यसोमपः ।
सोमः कथं तु पातव्य इहस्थेन मया भवेत् ॥२९
स एवमभिसंचिन्त्य तस्मिन्कूपे महातपाः ।
ददर्श वीरुधं तत्र लम्बमानां यदृच्छया ॥ ३०
पांसुग्रस्ते ततः कूपे न्यखनत्सलिलं मुनिः ।
अग्नीन्संकल्पयामास होतॄनात्मानमेव च ॥ ३१
ततस्तां वीरुधं सोमं संकल्प्य सुमहातपाः ।
ऋचो यजूंषि सामानि मनसा चिन्तयन्मुनिः ३२
ग्रावाणः शर्कराः कृत्वा प्रचक्रेऽभिषवं नृप ।
आज्यं च सलिलं चक्रे भागांश्च त्रिदिवौकसाम् ३३
सोमस्याभिषवस्याग्रे प्रवृत्तस्तुमुलो ध्वनिः ।
स चाविशद्दिवं राजन्स्वरश्चैव त्रितस्य वै ॥ ३४
समवाप च तं यज्ञं यथोक्तं ब्रह्मवादिभिः ॥ ३५
वर्तमाने महायज्ञे त्रितस्य सुमहात्मनः ।
आविग्नं त्रिदिवं सर्वं कारणं च न बुध्यते ॥३६
ततः सुतुमुलं शब्दं शुश्रावाथ बृहस्पतिः ।
श्रुत्वा चैवाब्रवीत्सर्वान्देवान्देवपुरोहितः ॥ ३७
त्रितस्य वर्तते यज्ञस्तत्र गच्छामहे सुराः ।
स हि क्रुद्धः सृजेदन्यान्देवानपि महातपाः ॥ ३८
तच्छ्रुत्वा वचनं तस्य सहिताः सर्वदेवताः ।
प्रययुस्तत्र यत्रास्ते त्रितयज्ञश्च वर्तते ॥ ३९
ते तत्र गत्वा विबुधास्तं कूपं यत्र स त्रितः ।
ददृशुस्तं महात्मानं दीक्षितं यज्ञकर्मसु ॥ ४०
दृष्ट्वा चैनं महात्मानं श्रिया परमया युतम् ।
ऊचुश्चैनं महाभागं प्राप्ता भागार्थिनो वयम् ॥४१
अथाब्रवीदृषिर्देवान्पश्यध्वं मां दिवौकसः ।
अस्मिन्प्रतिभये कूपे निमग्नं नष्टचेतसम् ॥ ४२
ततस्त्रितो महाराज भागांस्तेषां यथाविधि ।
मन्त्रयुक्तान्समददात्तेन प्रीतास्तदाऽभवन् ॥ ४३
ततो यथाविधि प्राप्तान्भागान्प्राप्य दिवौकसः ।
प्रीतात्मानो ददुस्तस्मै वरान्यान्मनसेच्छति ॥ ४४
स तु वव्रे वरं देवांस्त्रातुमर्हथ मामितः ।
यश्चाम्भोपस्पृशेत्कूपे स सोमपगतिं लभेत् ॥४५
तत्र चोर्मिमती राजन्नुत्पपात सरस्वती ।
तयोत्क्षिप्तस्त्रितस्तस्थौ पूजयंस्त्रिदिवौकसः ॥ ४६
तथेति चोक्त्वा विबुधा जग्मू राजन्यथाऽऽगताः ।
त्रितश्चाभ्यागमत्प्रीतः स्वमेव निलयं तदा ॥ ४७
क्रुद्धस्तु स समासाद्य तावृषी भ्रातरौ तदा ।
उवाच परुषं वाक्यं शशाप च महातपाः ॥ ४८
पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ ।
तस्माद्वृकाकृती रौद्रौ दंष्ट्रिणावभितश्चरौ ॥ ४९
भवितारौ मया शप्तौ पापेनानेन कर्मणा ।
प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः ॥ ५०
इत्युक्तेन तदा तेन क्षणादेव विशांपते ।
तथाभूतावदृश्येतां वचनात्सत्यवादिनः ॥ ५१
तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुधः ।
दत्त्वा च विविधान्देयान्पूजयित्वा च वै द्विजान् ५२
उदपानं च तं वीक्ष्य प्रशस्य च पुनःपुनः ।
नदीगतमदीनात्मा प्राप्तो विनशनं तदा ॥ ५३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

बलभद्रस्य सरस्वतीतीरस्थनानातीर्थयात्राप्रकारवर्णनम् ॥ १ ॥ तत्तत्तीर्थमहिमानुवर्णनं च ॥ २ ॥

वैशंपायन उवाच ।
ततो विनशनं राजन्नाजगाम हलायुधः ।
शूद्राभीरान्प्रति द्वेषाद्यत्र नष्टा सरस्वती ।
तस्मात्तामृषयो नित्यं प्राहुर्विनशनेति च ॥ १

यश्चेहोपस्पृशेदिति झ. पाठः ॥४५॥ सप्तत्रिंशोऽध्यायः ॥३७॥

शूद्राभीरान्द्विष्टमाना—इति क. पाठः ॥ १ ॥

तत्राप्युपस्पृश्य बलः सरस्वत्यां महाबलः ।
सुभूमिकं ततोऽगच्छत्सरस्वत्यास्तटे वरे ॥ २
तत्र चाप्सरसः शुभ्रा नित्यकालमतन्द्रिताः ।
क्रीडाभिर्विमलाभिश्च क्रीडन्ति विमलाननाः ॥ ३
तत्र देवाः सगन्धर्वा मासिमासि जनेश्वर ।
अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितम् ॥ ४
तत्र नृत्यन्ति गन्धर्वास्तथैवाप्सरसां गणाः ।
समेत्य सहिता राजन्यथाप्राप्तं यथासुखम् ॥ ५
तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः ।
पुण्यैः पुष्पैः सदा दिव्यैः कीर्यमाणाः पुनःपुनः ६
आक्रीडभूमिः सा राजंस्तासामप्सरसां शुभा ।
सुभूमिकेति विख्याता सरस्वत्यास्तटे वरे ॥ ७
तत्र स्नात्वा च दत्त्वा च वसु विप्रेषु माधवः ।
श्रुत्वा गीतं च तद्दिव्यं वादित्राणां च निःस्वनम् ८
शय्याश्च विपुला दृष्ट्वा देवगन्धर्वरक्षसाम् ।
गन्धर्वाणां ततस्तीर्थमागच्छद्रोहिणीसुतः ॥ ९
विश्वावसुमुखास्तत्र गन्धर्वाप्सरसां गणाः ।
नृत्तवादित्रगीतं च कुर्वंति सुमनोरमम् ॥ १०
तत्र दत्त्वा हलधरो विप्रेभ्यो विविधं वसु ।
अजाविकं गोखरोष्ट्रं सुवर्णं रजतं तथा ॥ ११
भोजयित्वा द्विजान्कामैः संतर्प्य च महाधनैः ।
प्रययौ सहितो विप्रैः स्तूयमानश्च माधवः ॥ १२
तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिंदमः ।
गर्गस्रोतो महातीर्थमाजगामैककुण्डली ॥ १३
तत्र गर्गेण वृद्धेन तपसा भावितात्मना ।
कालज्ञानगतिश्चैव ज्योतिषां च व्यतिक्रमः ॥ १४
उत्पाता दारुणाश्चैव शुभाश्च जनमेजय ।
सरस्वत्याः शुभे तीर्थे विदिता वै महात्मना ॥ १५
तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम् ॥ १६
तत्र गर्गं महाभागमृषयः सुव्रता नृप ।
उपासांचक्रिरे नित्यं कालज्ञानं प्रति प्रभो ॥ १७
तत्र गत्वा महाराज बलः श्वेतानुलेपनः ।
विधिवद्धि धनं दत्त्वा मुनीनां भावितात्मनाम् १८
उच्चावचांस्तथा भक्ष्यान्विप्रेभ्यो विप्रदाय सः ।
नीलवासास्तदाऽगच्छच्छङ्खतीर्थं महायशाः ॥ १९
तत्रापश्यन्महाशङ्खं महामेरुमिवोच्छ्रितम् ।
श्वेतपर्वतसंकाशमृषिसङ्घैर्निषेवितम् ।
सरस्वत्यास्तटे जातं नगं तालध्वजो बली ॥ २०
यक्षा विद्याधराश्चैव राक्षसाश्चामितौजसः ।
पिशाचाश्चामितबला यत्र सिद्धाः सहस्रशः ॥ २१
ते सर्वे ह्यशनं त्यक्त्वा फलं तस्य वनस्पतेः ।
व्रतैश्च नियमैश्चैव कालेकाले स्म भुञ्जते ॥ २२
प्राप्तैश्च नियमैस्तैस्तैर्विचरन्तः पृथक्पृथक् ।
अदृश्यमाना मनुजैर्व्यचरन्पुरुषर्षभ ॥ २३
एवं ख्यातो नरव्याघ्र लोकेऽस्मिन्स वनस्पतिः ।
तत्र तीर्थं सरस्वत्याः पावनं लोकविश्रुतम् ॥ २४
तस्मिंश्च यदुशार्दूलो दत्त्वा तीर्थे पयस्विनीः ।
ताम्रायसानि भाण्डानि वस्त्राणि विविधानि च २५
पूजयित्वा द्विजांश्चैव पूजितश्च तपोधनैः ।
पुण्यं द्वैतवनं राजन्नाजगाम हलायुधः ॥ २६
तत्र गत्वा मुनीन्दृष्ट्वा नानावेषधरान्बलः ।
आप्लुत्य सलिले चापि पूजयामास वै द्विजान् ॥ २७
तथैव दत्त्वा विप्रेभ्यः परिभोगान्सुपुष्कलान् ।
ततः प्रायाद्बलो राजन्दक्षिणेन सरस्वतीम् ॥ २८
गत्वा चैवं महाबाहुर्नातिदूरे महायशाः ।
धर्मात्मा नागधन्वानं तीर्थमागमदच्युतः ॥ २९
यत्र पन्नगराजस्य वासुकेः सन्निवेशनम् ।
महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतम् ॥ ३०
ऋषीणां हि सहस्राणि तत्र नित्यं चतुर्दश ।
यत्र देवाः समागम्य वासुकिं पन्नगोत्तमम् ।
सर्वपन्नगराजानमभ्यषिञ्चन्यथाविधि ॥ ३१
पन्नगेभ्यो भयं तत्र विद्यते न स्म पौरव ॥ ३२
तत्रापि विधिवद्दत्त्वा विप्रेभ्यो रत्नसंचयान् ।
प्रायात्प्राचीं दिशं राजंस्तत्र तीर्थान्यनेकशः ॥ ३३
सहस्रशतसङ्ख्यानि प्रथितानि पदेपदे ।
आप्लुत्य तत्र तीर्थेषु यथोक्तं तत्र चर्षिभिः ॥ ३४

शुभ्राः शुचयः ॥ ३ ॥ छायाश्च विपुला इति ङ. पाठः ॥ ९ ॥ गन्धर्वाप्सरसान्विताः इति ङ. पाठः ॥ १० ॥ कालज्ञानं प्रति कालज्ञानार्थम् ॥ १७ ॥ शङ्खं शङ्खनामानम् । नगं वृक्षम् ॥ २० ॥ पुण्यं द्वैतवन इति झ. पाठः ॥ २६ ॥

दत्त्वा वसु द्विजाग्र्येभ्यो निर्जगाम महाबलः ।
तत्रस्थानृषिसङ्घांस्तानभिवाद्य हलायुधः ॥ ३५
ततो रामोऽगमत्तीर्थमृषिभिः सेवितं महत् ।
यत्र भूयो निववृते प्राङ्मुखा वै सरस्वती ॥ ३६
ऋषीणां नैमिषेयाणामवेक्षार्थं महात्मनाम् ।
निवृत्तां तां सरिच्छ्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली ।
बभूव विस्मितो राजन्बलः श्वेतानुलेपनः ॥ ३७
जनमेजय उवाच ।
कस्मात्सरस्वती ब्रह्मन्निवृत्ता प्राङ्मुखी भवत् ।
व्याख्यातमेतदिच्छामि सर्वमध्वर्युसत्तम ॥ ३८
कस्मिंश्चित्कारणे तत्र विस्मितो यदुनन्दनः ।
निवृत्ता हेतुना केन कथमेव सरिद्वरा ॥ ३९
वैशंपायन उवाच ।
पूर्वं कृतयुगे राजन्नैमिषेयास्तपस्विनः ।
वर्तमाने सुविपुले सत्रे द्वादशवार्षिके ॥ ४०
ऋषयो बहवो राजंस्तत्सत्रमभिपेदिरे ।
उषित्वा च महाभागास्तस्मिन्सत्रे यथाविधि ॥ ४१
निवृत्ते नैमिषे ये वै सत्रे द्वादशवार्षिके ।
आजग्मुर्ऋषयस्तत्र बहवस्तीर्थकारणात् ॥ ४२
ऋषीणां बहुलत्वात्तु सरस्वत्या विशांपते ।
तीर्थानि नगरायन्ते कूले वै दक्षिणोत्तरे ॥ ४३
समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः ।
तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ॥ ४४
जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनाम् ।
स्वाध्यायेनातिमहता बभूवुः पूरिता दिशः ॥ ४५
अग्निहोत्रैस्ततस्तेषां हूयमानैर्महात्मनाम् ।
अशोभत सरिच्छ्रेष्ठा दीप्यमानैः समन्ततः ॥ ४६
वालखिल्या महाराज अश्मकुट्टाश्च तापसाः ।
दन्तोलूखलिनश्चान्ये संप्रक्षालास्तथा परे ॥ ४७
वायुभक्षा जलाहाराः पर्णभक्षाश्च तापसाः ।
नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ॥ ४८
आसन्वै मुनयस्तत्र सरस्वत्याः समीपतः ।
शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ॥ ४९
शतशश्च समापेतुर्ऋषयः सत्रयाजिनः ।
तेऽवकाशं न ददृशुः सरस्वत्या महाव्रताः ।
तेऽवकाशं च ददृशुः कुरुक्षेत्रं(त्रे) महाव्रताः ॥ ५०
ततो यज्ञोपवीतैः स्वैस्तत्र कृत्वा सरस्वतीम् ।
जुहुवुश्चाग्निहोत्रांश्च चक्रुश्च विविधाः क्रियाः ॥ ५१
ततस्तमृषिसंघातं निराशं चिन्तयान्वितम् ।
दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ॥ ५२
ततः कुञ्जान्बहून्कृत्वा सन्निवृत्ता सरस्वती ।
ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ॥ ५३
ततो निवृत्त्य राजेन्द्र तेषामर्थे सरस्वती ।
भूयः प्रतीच्यभिमुखी प्रसुस्राव सरिद्वरा ॥ ५४
अमोघा गमनं कृत्वा तेषां भूयो जगाम ह ।
अत्यद्भुतं महच्चक्रे तदा राजन्महानदी ॥ ५५
एवं स कुञ्जो राजन्वै नैमिषीय इति स्मृतः ।
कुरुश्रेष्ठ कुरुक्षेत्रे कुरुष्व महतीं क्रियाम् ॥ ५६
तत्र कुञ्जान्बहून्दृष्ट्वा निवृत्तां च सरस्वतीम् ।
बभूव विस्मयस्तत्र रामस्याथ महात्मनः ॥ ५७
उपस्पृश्य तु तत्रापि विधिवद्यदुनन्दनः ।
दत्त्वा दायान्द्विजातिभ्यो भाण्डानि विविधानि च
भक्ष्यं भोज्यं च विविधं ब्राह्मणेभ्यः प्रदाय च ।
ततः प्रायाद्बलो राजन्पूज्यमानो द्विजातिभिः ५९
सरस्वतीतीर्थवरं नानाद्विजगणायुतम् ।
बदरेङ्गुदकाश्मर्यप्लक्षाश्वत्थबिभीतकैः ॥ ६०
कङ्कोलैश्च पलाशैश्च करीरैः पीलुभिस्तथा ।
सरस्वतीतीर्थरुहैस्तरुभिर्विविधैस्तथा ॥ ६१
करूषकवरैश्चैव बिल्वैराम्रातकैस्तथा ।
अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम् ॥ ६२
कदलीवनभूयिष्ठं दृष्टिकान्तं मनोहरम् ।
वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ॥ ६३
तथाऽश्मकुट्टैर्वानेयैर्मुनिभिर्बहुभिर्वृतम् ।
स्वाध्यायघोषसंघुष्टं मृगयूथशताकुलम् ॥ ६४
अहिंस्रैर्धर्मपरमैर्नृभिरत्यर्थसेवितम् ।

---

अवेक्षार्थमिष्टसिद्ध्यर्थम् ॥ ३७ ॥ इच्छामि श्रोतुमिति शेषः ॥ ३८ ॥ यज्ञोपवीतैः यज्ञसूत्रैः निराशं सरस्वतीजललाभे इत्यर्थः ॥ ५१ ॥ कुञ्जान् आत्मनो वासस्थानानि तिर्थविशेषानित्यर्थः ॥ ५३ ॥ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

दत्त्वा वसु द्विजाग्र्येभ्यो निर्जगाम महाबलः ।
तत्रस्थानृषिसङ्घांस्तानभिवाद्य हलायुधः ॥ ३५
ततो रामोऽगमत्तीर्थमृषिभिः सेवितं महत् ।
यत्र भूयो निववृते प्राङ्मुखा वै सरस्वती ॥ ३६
ऋषीणां नैमिषेयाणामवेक्षार्थं महात्मनाम् ।
निवृत्तां तां सरिच्छ्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली ।
बभूव विस्मितो राजन्बलः श्वेतानुलेपनः ॥ ३७
जनमेजय उवाच ।
कस्मात्सरस्वती ब्रह्मन्निवृत्ता प्राङ्मुखी भवत् ।
व्याख्यातमेतदिच्छामि सर्वमध्वर्युसत्तम ॥ ३८
कस्मिंश्चित्कारणे तत्र विस्मितो यदुनन्दनः ।
निवृत्ता हेतुना केन कथमेव सरिद्वरा ॥ ३९
वैशंपायन उवाच ।
पूर्वं कृतयुगे राजन्नैमिषेयास्तपस्विनः ।
वर्तमाने सुविपुले सत्रे द्वादशवार्षिके ॥ ४०
ऋषयो बहवो राजंस्तत्सत्रमभिपेदिरे ।
उषित्वा च महाभागास्तस्मिन्सत्रे यथाविधि ॥ ४१
निवृत्ते नैमिषे ये वै सत्रे द्वादशवार्षिके ।
आजग्मुर्ऋषयस्तत्र बहवस्तीर्थकारणात् ॥ ४२
ऋषीणां बहुलत्वात्तु सरस्वत्या विशांपते ।
तीर्थानि नगरायन्ते कूले वै दक्षिणोत्तरे ॥ ४३
समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः ।
तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ॥ ४४
जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनाम् ।
स्वाध्यायेनातिमहता बभूवुः पूरिता दिशः ॥ ४५
अग्निहोत्रैस्ततस्तेषां हूयमानैर्महात्मनाम् ।
अशोभत सरिच्छ्रेष्ठा दीप्यमानैः समन्ततः ॥ ४६
वालखिल्या महाराज अश्मकुट्टाश्च तापसाः ।
दन्तोलूखलिनश्चान्ये संप्रक्षालास्तथा परे ॥ ४७
वायुभक्षा जलाहाराः पर्णभक्षाश्च तापसाः ।
नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ॥ ४८
आसन्वै मुनयस्तत्र सरस्वत्याः समीपतः ।
शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ॥ ४९
शतशश्च समापेतुर्ऋषयः सत्रयाजिनः ।
तेऽवकाशं न ददृशुः सरस्वत्या महाव्रताः ।
तेऽवकाशं च ददृशुः कुरुक्षेत्रं(त्रे )महाव्रताः ॥ ५०
ततो यज्ञोपवीतैः स्वैस्तत्र कृत्वा सरस्वतीम् ।
जुहुवुश्चाग्निहोत्रांश्च चक्रुश्च विविधाः क्रियाः ॥ ५१
ततस्तमृषिसंघातं निराशं चिन्तयान्वितम् ।
दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ॥ ५२
ततः कुञ्जान्बहून्कृत्वा सन्निवृत्ता सरस्वती ।
ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ॥ ५३
ततो निवृत्त्य राजेन्द्र तेषामर्थे सरस्वती ।
भूयः प्रतीच्यभिमुखी प्रसुस्राव सरिद्वरा ॥ ५४
अमोघा गमनं कृत्वा तेषां भूयो जगाम ह ।
अत्यद्भुतं महच्चक्रे तदा राजन्महानदी ॥ ५५
एवं स कुञ्जो राजन्वै नैमिषीय इति स्मृतः ।
कुरुश्रेष्ठ कुरुक्षेत्रे कुरुष्व महतीं क्रियाम् ॥ ५६
तत्र कुञ्जान्बहून्दृष्ट्वा निवृत्तां च सरस्वतीम् ।
बभूव विस्मयस्तत्र रामस्याथ महात्मनः ॥ ५७
उपस्पृश्य तु तत्रापि विधिवद्यदुनन्दनः ।
दत्त्वा दायान्द्विजातिभ्यो भाण्डानि विविधानि च
भक्ष्यं भोज्यं च विविधं ब्राह्मणेभ्यः प्रदाय च ।
ततः प्रायाद्बलो राजन्पूज्यमानो द्विजातिभिः ५९
सरस्वतीतीर्थवरं नानाद्विजगणायुतम् ।
बदरेङ्गुदकाश्मर्यप्लक्षाश्वत्थबिभीतकैः ॥ ६०
कङ्कोलैश्च पलाशैश्च करीरैः पीलुभिस्तथा ।
सरस्वतीतीररुहैस्तरुभिर्विविधैस्तथा ॥ ६१
करूषकवरैश्चैव बिल्वैराम्रातकैस्तथा ।
अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम् ॥ ६२
कदलीवनभूयिष्ठं दृष्टिकान्तं मनोहरम् ।
वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ॥ ६३
तथाऽश्मकुट्टैर्वानेयैर्मुनिभिर्बहुभिर्वृतम् ।
स्वाध्यायघोषसंघुष्टं मृगयूथशताकुलम् ॥ ६४
अहिंस्रैर्धर्मपरमैर्नृभिरत्यर्थसेवितम् ।

अवेक्षार्थमिष्टसिद्ध्यर्थम् ॥ ३७ ॥ इच्छामि श्रोतुमिति शेषः ॥ ३८ ॥ यज्ञोपवीतैः यज्ञसूत्रैः निराशं सरस्वतीजललाभे इत्यर्थः ॥ ५१ ॥ कुञ्जान् आत्मनो वासस्थानानि तिर्थविशेषानित्यर्थः ॥ ५३ ॥ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

[ सुरेणुर्ऋषभे द्वीपे पुण्ये राजर्षिसेविते । ]
कुरोश्च यजमानस्य कुरुक्षेत्रे महात्मनः ।
आजगाम महाभागा सरिच्छ्रेष्ठा सरस्वती ॥ २६
ओघवत्यपि राजेन्द्र वसिष्ठेन महात्मना ।
समाहूता कुरुक्षेत्रे दिव्यतोया सरस्वती ॥ २७
दक्षेण यजता चापि गङ्गाद्वारे सरस्वती ।
सुवेणिरिति विख्याता प्रस्नुता शीघ्रगामिनी २८
विमलोदा भगवती ब्रह्मणा यजता पुनः ।
समाहूता ययौ तत्र पुण्ये हैमवते गिरौ ॥ २९
एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः ।
सप्तसारस्वतं तीर्थं ततस्तु प्रथितं भुवि ॥ ३०
इति सप्तसरस्वत्यो नामतः परिकीर्तिताः ।
सप्तसारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् ॥ ३१
शृणु मङ्कणकस्यापि कौमारब्रह्मचारिणः ।
आपगामवगाढस्य राजन्प्रक्रीडितं महत् ॥ ३२
दृष्ट्वा यदृच्छया तत्र स्त्रियमम्भसि भारत ।
स्नायन्तीं रुचिरापाङ्गीं दिग्वाससमनिन्दिताम् ।
सरस्वत्यां महाराज चस्कन्दे वीर्यमम्भसि ॥ ३३
तद्रेतः स तु जग्राह कलशे वै महातपाः ।
'ऋषिः परमधर्मात्मा तदा पुरुषसत्तम ॥' ३४
सप्तधा प्रविभागं तु कलशस्थं जगाम ह ।
तत्रर्षयः सप्त जाता जज्ञिरे मरुतां गणाः ॥ ३५
वायुवेगो वायुबलो वायुहा वायुमण्डलः ।
वायुज्वालो वायुरेता वायुचक्रश्च वीर्यवान् ।
एवमेते समुत्पन्ना मरुतां जनयिष्णवः ॥ ३६
इदमन्यच्च राजेन्द्र शृण्वाश्चर्यतरं भुवि ।
महर्षेश्चरितं यादृक् त्रिषु लोकेषु विश्रुतम् ॥ ३७
पुरा मङ्कणकः सिद्धः कुशाग्रेणेति नः श्रुतम् ।
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ॥३
स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ॥ ३९
ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ ४०
ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः ।
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ।
नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ॥ ४१
ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह ।
सुराणां हितकामार्थं महादेवोऽभ्यभाषत ॥ ४२
भोभो ब्राह्मण धर्मज्ञ किमर्थं नृत्यते भवान् ।
हर्षस्थानं किमर्थं च तवेदमधिकं मुने ।
तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ॥ ४३
ऋषिरुवाच ।
किं न पश्यसि मे ब्रह्मन्कराच्छाकरसं स्रुतम् ।
यं दृष्ट्वा संप्रनृत्तो वै हर्षेण महता विभो ॥ ४४
तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ।
अहं न विस्मयं विप्र गच्छामीति प्रपश्य माम् ॥ ४५
एवमुक्त्वा मुनिश्रेष्ठं महादेवेन धीमता ।
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽभवत् ॥ ४६
ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभम् ॥ ४७
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः ।
मेने देवं महादेवमिदं चोवाच विस्मितः ॥ ४८
नान्यं देवादहं मन्ये रुद्रात्परतरं महत् ।
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् ॥ ४९
त्वया सृष्टमिदं विश्वं वदन्तीह मनीषिणः ।
त्वामेव सर्वं विशति पुनरेव युगक्षये ॥ ५०
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ।
त्वयि सर्वे स्म दृश्यन्ते भावा ये जगति स्थिताः ॥ ५१
त्वामुपासन्त वरदं देवा ब्रह्मादयोऽनघ ।
सर्वस्त्वमसि देवानां कर्ता कारयिता च ह ॥ ५२
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः ।
'त्वं प्रभुः परमैश्वर्यादधिकं भासि शंकर ॥ ५३
त्वयि ब्रह्मा च विष्णुश्च लोकान्संधाय तिष्ठतः ।
त्वन्मूलं च जगत्सर्वं भूतस्थावरजंगमम् ॥ ५४
स्वर्गं च परमं स्थानं नृणामभ्युदयार्थिनाम् ।
ददासि च प्रसन्नस्त्वं भक्तानां परमेश्वर ॥ ५५
अनावृत्तिपदं नृणां नित्यं निश्श्रेयसार्थिनाम् ।
ददासि कर्मिणां कर्म भावयन्ध्यानयोगतः ॥ ५६

इति झ. पाठः ॥ २५ ॥ सुरेणुरिति झ. पाठः ॥ २८ ॥ राजन्प्रजपितं महत् इति क. पाठः ॥ ३२ ॥ स्नायन्तीं स्नान्तीम् ॥ ३३ ॥ मरुतां प्राणवायूनां एकोनपञ्चाशताम् । एतेषां तपसा मरुतो दित्यामुत्पन्ना इति कल्पान्तरविषयोऽयमर्थः ॥ ३६ ॥

न वृथाऽस्ति महादेव प्रसादस्ते महेश्वर ।
यस्मात्त्वयोपकरणात्करोमि कमलेक्षण ॥ ५७
प्रपद्ये शरणं शंभुं सर्वदा सर्वतः स्थितम् ।
कर्मणा मनसा वाचा तमेवाभिभजाम्यहम् ॥५८
जनमेजय उवाच ।'
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत् ॥५९
यदिदं चापलं देव कृतमेतत्स्मयादिकम् ।
ततः प्रसादयामि त्वां तपो मे न क्षरेदिति ॥ ६०
ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत् ।
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा ॥ ६१
आश्रमे चेह वत्स्यामि त्वया सार्धमहं सदा ।
सप्तसारस्वते चास्मिन्यो मामर्चिष्यते नरः ॥ ६२
न तस्य दुर्लभं किंचिद्भवितेह परत्र वा ।
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ॥ ६३
एतन्मङ्कणकस्यापि चरितं भूरितेजसः ।
स हि पुत्रः सुकन्यायामुत्पन्नो मातरिश्वना ॥ ६४

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः ॥ ४० ॥

बलरामस्यौशनसतीर्थगमनम् ॥ १ ॥ तत्तीर्थस्य कपालमोचननामप्राप्तिहेतूक्तिः ॥ २ ॥ बलस्य उशंग्वाश्रमगमनम् ॥ ३ ॥ उशङ्गुचरित्रकथनं बलस्य पृथूदकतीर्थे स्नानदानादि ॥ ४ ॥

वैशंपायन उवाच ।
उषित्वा तत्र रामस्तु संपूज्याश्रमवासिनः ।
तथा मङ्कणके प्रीतिं शुभां चक्रे हलायुधः ॥ १
दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च ।
पूजितो मुनिसङ्घैश्च प्रातरुत्थाय लाङ्गली ॥ २
अनुज्ञाप्य मुनीन्सर्वान्स्पृष्ट्वा तोयं च भारत ।
प्रययौ त्वरितो रामस्तीर्थहेतोर्महाबलः ॥ ३
ततस्त्वौशनसं तीर्थमाजगाम हलायुधः ।
कपालमोचनं नाम यत्र मुक्तो महामुनिः ॥ ४
महता शिरसा राजन्ग्रस्तजङ्घो महोदरः ।
राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा ॥ ५
तत्र पूर्वं तपस्तप्तं काव्येन सुमहात्मना ।
यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः ।
यत्रस्थश्चिन्तयामास दैत्यदानवविग्रहम् ॥ ६
तत्प्राप्य च बलो राजंस्तीर्थप्रवरमुत्तमम् ।
विधिवद्वै ददौ वित्तं ब्राह्मणानां महात्मनाम् ॥ ७
जनमेजय उवाच ।
कपालमोचनं ब्रह्मन्कथं यत्र महामुनिः ।
मुक्तः कथं चास्य शिरो लग्नं केन च हेतुना ॥ ८
वैशंपायन उवाच ।
पुरा वै दण्डकारण्ये राघवेण महात्मना ।
वसता राजशार्दूल राक्षसाञ्शमयिष्यता ॥ ९
जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः ।
क्षुरेण शितधारेण तत्पपात महावने ॥ १०
महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया ।
वने विचरतो राजन्नस्थि भित्त्वाऽस्फुरत्तदा ॥ ११
स तेन लग्नेन तदा द्विजातिर्न शशाक ह ।
अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च ॥ १२
स पूतिना विस्रवता वेदनार्तो महामुनिः ।
जगाम सर्वतीर्थानि पृथिव्यां चेति नः श्रुतम् ॥ १३
स गत्वा सरितः सर्वाः समुद्रांश्च महातपाः ।
कथयामास तत्सर्वमृषीणां भावितात्मनाम् ॥ १४
आप्लुत्य सर्वतीर्थेषु न च मोक्षमवाप्तवान् ।
स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् ॥ १५
सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा ।
सर्वपापप्रशमनं सिद्धिक्षेत्रमनुत्तमम् ॥ १६
स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः ॥ १७
तत औशनसे तीर्थे तस्योपस्पृशतस्तदा ।

---

स्मयादिकं गर्वादिकम् ॥६०॥ एकोनचत्वारिंशोऽध्यायः ॥३९॥

तीर्थमुपास्पृशदिति शेषः ॥ १७ ॥

ाच्छिरश्चरणं मुक्त्वा पपातान्तर्जले तदा ॥ १८
वेमुक्तस्तेन शिरसा परं सुखमवाप ह ।
त चाप्यन्तर्जले मूर्धा जगामादर्शनं विभो ॥१९
ातः स विरुजो राजन्पूतात्मा वीतकल्मषः ।
ाजगामाश्रमं प्रीतः कृतकृत्यो महोदरः ॥ २०
ोऽथ गत्वाऽऽश्रमं पुण्यं विप्रमुक्तो महातपाः ।
ृथयामास तत्सर्वमृषीणां भावितात्मनाम् ॥२१
ो श्रुत्वा वचनं तस्य ततस्तीर्थस्य मानद ।
ृपालमोचनमिति नाम चक्रुः समागताः ॥२२
त चापि तीर्थप्रवरं पुनर्गत्वा महानृषिः ।
ीत्वा पयः सुविपुलं सिद्धिमायात्तदा मुनिः ॥२३
ात्र दत्त्वा बहून्देयान्विप्रान्संपूज्य माधवः ।
जगाम तत्र राजेन्द्र उशङ्गोराश्रमं तदा ॥ २४
ात्र तप्तं तपो घोरमार्ष्टिषेणेन भारत ।
ााह्मण्यं लब्धवान्यत्र विश्वामित्रो महामुनिः ॥२५
र्वकामसमृद्धं च तदाश्रमपदं महत् ।
ुनिभिर्ब्राह्मणैश्चैव सेवितं सर्वदा विभो ॥ २६
ातो हलधरः श्रीमान्ब्राह्मणैः परिवारितः ।
जगाम तत्र राजेन्द्र उशङ्कुस्तनुमत्यजत् ॥ २७
शङ्कुर्ब्राह्मणो वृद्धस्तपोनित्यश्च भारत ।
ेहन्यासे कृतमना विचिन्त्य बहुधा तदा ॥ २८

ततः सर्वानुपादाय तनयान्वै महातपाः ।
उशङ्कुरब्रवीत्तत्र नयध्वं मां पृथूदकम् ॥ २९
विज्ञायातीतवयसमुशङ्कुं ते तपोधनाः ।
तं च तीर्थमपानिन्युः सरस्वत्यास्तपोधनम् ॥ ३०
स तैः पुत्रैस्तदा धीमानानीतो वै सरस्वतीम् ।
पुण्यां तीर्थशतोपेतां विप्रसङ्घैर्निषेविताम् ॥ ३१
स तत्र विधिना राजन्नाप्लुत्य सुमहातपाः ।
ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः ।
सुप्रीतः पुरुषव्याघ्र सर्वान्पुत्रानुपासतः ॥ ३२
सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैनं श्वो मरणं तपेत् ॥ ३३
'इत्युक्त्वा स्वां तनुं त्यक्त्वा प्रपेदे वैष्णवं पदम् ।'
तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः ।
दत्त्वा चैव बहून्देयान्विप्राणां विप्रवत्सलः ॥३४
ससर्ज यत्र भगवाँल्लोकाँल्लोकपितामहः ॥ ३५
यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः ।
तपसा महता राजन्प्राप्तवानृषिसत्तमः ॥ ३६
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।
ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रस्तथा मुनिः ३७
महातपस्वी भगवानुग्रतेजा महातपाः ।
तत्राजगाम बलवान्बलभद्रः प्रतापवान् ॥ ३८

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

आर्ष्टिषेणेन पृथूदकतीर्थे तपश्चर्यया कृत्स्नवेदाधिगमः ॥ १ ॥ विश्वामित्रादीनां तत्तत्तीर्थे तपश्चर्यया ब्राह्मण्याधिगमः २ ॥ बलभद्रस्य तत्र स्नानादिपूर्वकं बकाश्रमंप्रति गमनम् ॥ ३ ॥

ानमेजय उवाच ।
ार्ष्टिषेणस्तथा ब्रह्मन्विपुलं तप्तवांस्तपः ।
संधुद्वीपः कथं चापि ब्राह्मण्यं लब्धवांस्तदा ॥ १
ेवापिश्च कथं ब्रह्मन्विश्वामित्रश्च सत्तम ।
न्ममाचक्ष्व भगवन्परं कौतूहलं हि मे ॥ २
ैशंपायन उवाच ।

पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः ।
वसन्गुरुकुले नित्यं नित्यमध्ययने रतः ॥ ३
तस्य राजन्गुरुकुले वसतो नित्यमेव च ।
समाप्तिं नागमद्विद्या नापि वेदा विशांपते ॥ ४
स निर्विण्णस्ततो राजंस्तपस्तेपे महातपाः ।
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ॥ ५

---

ेशङ्कोराश्रमं तदा इति क. पाठः । रुशङ्गोराश्रमं तदा इति झ. ाठः ॥ २४ ॥ अक्षयं स्वर्गमाप्नोतीत्यर्थः ॥ ३३ ॥ ब्राह्मणं ब्रह्मसंघातो वेदसमूह इति यावत् । ततः स्वार्थे ष्यञ् । ब्राह्मणं ब्रह्मसंघाते इति मेदिनी ॥ ३६ ॥ चत्वारिंशोऽध्यायः ॥ ४० ॥

स विद्वान्वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः ।
तत्र तीर्थे वरान्प्रादात्त्रीनेव सुमहातपाः ॥ ६
अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः ।
आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलम् ॥ ७
अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति ।
अपि चाल्पेन कालेन फलं प्राप्स्यति पुष्कलम् ॥ ८
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ॥ ९
तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् ॥ १०
तथाच कौशिकस्तात तपोनित्यो जितेन्द्रियः ।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ११
गाधिर्नाम महानासीत्क्षत्रियः प्रथितो भुवि ।
तस्य पुत्रोऽभवद्राजन्विश्वामित्रः प्रतापवान् ॥ १२
स राजा कौशिकस्तात महायोग्यभवत्किल ।
स पुत्रमभिषिच्याथ विश्वामित्रं महातपाः ॥ १३
देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः ।
न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात् १४
एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्ततः ।
विश्वस्य जगतो गोप्ता भविष्यति सुतो मम ॥ १५
इत्युक्त्वा तु ततो गाधिर्विश्वामित्रं निवेश्य च ।
जगाम त्रिदिवं राजन्विश्वामित्रोऽभवन्नृपः ॥ १६
न स शक्नोति पृथिवीं यत्नवानपि रक्षितुम् ।
ततः शुश्राव राजा स राक्षसेभ्यो महाभयम् ॥ १७
निर्ययौ नगराच्चापि चतुरङ्गबलान्वितः ।
स गत्वा दूरमध्वानं वसिष्ठाश्रममभ्ययात् ॥ १८
तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान्बहून् ।
ततस्तु भगवान्विप्रो वसिष्ठो श्रममभ्ययात् ।
ददृशेऽथ ततः सर्वं भज्यमानं महावनम् ॥ १९
तस्य क्रुद्धो महाराज वसिष्ठो मुनिसत्तमः ।
सृजस्व शबरान्घोरानिति स्वां गामुवाच ह ॥ २०
तथोक्ता साऽसृजद्धेनुः पुरुषान्घोरदर्शनान् ।
ते तु तद्बलमासाद्य बभञ्जुः सर्वतोदिशम् ॥ २१
तच्छ्रुत्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः ।
तपः परं मन्यमानस्तपस्येव मनो दधे ॥ २२
सोऽस्मिंस्तीर्थवरे राजन्सरस्वत्याः समाहितः ।
नियमैश्चोपवासैश्च कर्शयन्देहमात्मनः ॥ २३
जलाहारो वायुभक्षः पर्णाहारश्च सोऽभवत् ।
तथा स्थण्डिलशायी च ये चान्ये नियमाः पृथक् २४
असकृत्तस्य देवास्तु व्रतविघ्नं प्रचक्रिरे ।
न चास्य नियमाद्बुद्धिरपयाति महात्मनः ॥ २५
ततः परेण यत्नेन तप्त्वा बहुविधं तपः ।
तेजसा भास्कराकारो गाधिजः समपद्यत ॥ २६
तपसा तु तथायुक्तं विश्वामित्रं पितामहः ।
अमन्यत महातेजा वरदोऽदर्शयत्तदा ॥ २७
स तु वव्रे वरं राजन्स्यामहं ब्राह्मणस्त्विति ।
तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः ॥ २८
स लब्ध्वा तपसोग्रेण ब्राह्मणत्वं महायशाः ।
विचचार महीं कृत्स्नां कृतकामः सुरोपमः ॥ २९
तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु ।
पयस्विनीस्तथा धेनूर्यानानि शयनानि च ॥ ३०
अथ वस्त्राण्यलंकारं भक्ष्यं पेयं च शोभनम् ।
अददन्मुदितो राजन्पूजयित्वा द्विजोत्तमान् ॥ ३१
ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात् ।
यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः ॥ ३२

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

बलदेवस्यावाकीर्णतीर्थगमनम् ॥ १ ॥ बकमुनिचरित्रकथनम् ॥ २ ॥ बलदेवस्य ततो वसिष्ठापवाहतीर्थगमनम् ॥ ३ ॥

वैशंपायन उवाच ।
ब्रह्मयोनिभिराकीर्णं जगाम यदुनन्दनः ।
यत्र दाल्भ्यो बको राजन्पश्वर्थं सुमहातपाः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं कोपसमन्वितः ॥ १

ब्रह्मयोनेरवाकीर्णमिति झ. पाठः । तत्र ब्रह्मयोनेः ब्राह्मण्योत्पादकात्तीर्थादवाकीर्णं नाम दाल्भ्यसेवितं तीर्थं जगामेत्यर्थः

तपसा घोररूपेण कर्शयन्देहमात्मनः ।
क्रोधेन महताऽऽविष्टो धर्मात्मा वै प्रतापवान् ॥ २
पुरा हि नैमिशीयानां सत्रे द्वादशवार्षिके ।
वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् ॥ ३
तत्रेश्वरमयाचन्त दक्षिणार्थं मनस्विनः ।
'तत्र ते लेभिरे राजन्पाञ्चालेभ्यो महर्षयः ।'
बलान्वितान्वत्सतरान्निर्व्याधीन्सप्तविंशतिम् ॥ ४
तानब्रवीद्बको दाल्भ्यो विभजध्वं पशूनिति ।
पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ॥ ५
एवमुक्त्वा बको राजन्नृषीन्सर्वान्प्रतापवान् ।
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ॥ ६
स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम् ।
अयाचत पशून्दाल्भ्यः स चैनं रुषितोऽब्रवीत् ॥ ७
यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तमः ।
एतान्पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि ॥ ८
ऋषिस्त्वथ बकः क्रुद्धश्चिन्तयामास धर्मवित् ।
अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ॥९
चिन्तयित्वा मुहूर्तेन रोषाविष्टो द्विजोत्तमः ।
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः ॥ १०
स तूत्कृत्य मृतानां वै मांसानि मुनिसत्तमः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा ॥ ११
अवाकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकम् ।
बको दाल्भ्यो महाराज नियमं परमं स्थितः ॥ १२
स तैरेव जुहावाग्नौ राष्ट्रं मांसैर्महातपाः ॥ १३
तस्मिंस्तु विधिवत्सत्रे संप्रवृत्ते सुदारुणे ।
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ॥ १४
छिद्यमानं यथा कान्तं वनं परशुना विभो ।
बभूवापद्गतं तच्च व्यवकीर्णमचेतनम् ॥ १५
दृष्ट्वा तथाऽवकीर्णं तु राष्ट्रं स मनुजाधिपः ।
बभूव दुर्मना राजा चिन्तयामास च प्रभुः ॥१६
मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा ।
न च श्रेयोऽध्यगच्छत्तु क्षीयते राष्ट्रमेव च ॥ १७
यदा स पार्थिवः खिन्नस्ते च विप्रास्तदाऽनघ ॥१८
यदा चापि न शक्नोति राष्ट्रं मोक्षयितुं नृपः ।
अथ विप्रादिकांस्तत्र पप्रच्छ जनमेजय ॥ १९
ततो विप्रादिकाः प्राहुः पशुविप्रकृतस्त्वया ।
मांसैरभिजुहोतीदं तव राष्ट्रं मुनिर्बकः ॥ २०
तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान् ।
तस्यैतत्तपसः कर्म येन तेऽद्य लयो महान् ॥ २१
'यदीच्छसि महाबाहो शान्तिं राष्ट्रस्य भूमिप ।'
अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव ॥ २२
वैशंपायन उवाच ।
सरस्वतीं ततो गत्वा स राजा बकमब्रवीत् ।
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ ॥ २३
प्रसादये त्वां भगवन्नपराधं क्षमस्व मे ।
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः ।
त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि ॥ २४
तं तथा विलपन्तं तु शोकोपहतचेतसम् ।
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तस्य व्यमोचयत् ॥२५
ऋषिः प्रसन्नस्तस्याभूत्संरम्भं च विहाय सः ।
मोक्षार्थं तस्य राज्यस्य जुहाव पुनराहुतिम् ॥ २६
मोक्षयित्वा ततो राष्ट्रं प्रतिगृह्य पशून्बहून् ।
हृष्टात्मा नैमिशारण्यं जगाम पुनरेव सः ॥ २७
धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः ।
स्वमेव नगरं राजन्प्रतिपेदे महर्द्धिमत् ॥ २८
तत्र तीर्थे महाराज बृहस्पतिरुदारधीः ।
असुराणामभावाय भवाय च दिवौकसाम् ॥ २९
मांसैरभिजुहावेष्टिमक्षीयन्त ततोऽसुराः ।
दैवतैरपि संभग्ना जितकाशिभिराहवे ॥ ३०
तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः ।
वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान् ॥ ३१
रत्नानि च महार्हाणि धनं धान्यं च पुष्कलम् ।
ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते ॥ ३२
तत्र यज्ञे ययातेश्च महाराज सरस्वती ।
सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ॥ ३३

॥ १ ॥ पाञ्चालान्विश्वजितो यज्ञस्यान्ते अगमन् ॥ ३ ॥ ईश्वरं पाञ्चालराजम् ॥ ४ ॥ एतान्पाञ्चालराजदत्तान् । स्वयं तत्र भाग न गृहीतवानित्यर्थः ॥ ५ ॥ अथ वै प्राश्निकांस्तत्रेति झ. पाठः ॥ १९ ॥ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

तपसा घोररूपेण कर्शयन्देहमात्मनः ।
क्रोधेन महताऽऽविष्टो धर्मात्मा वै प्रतापवान् ॥ २
पुरा हि नैमिशीयानां सत्रे द्वादशवार्षिके ।
वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् ॥ ३
तत्रेश्वरमयाचन्त दक्षिणार्थं मनस्विनः ।
'तत्र ते लेभिरे राजन्पाञ्चालेभ्यो महर्षयः ।'
बलान्वितान्वत्सतरान्निर्व्याधीन्सप्तविंशतिम् ॥ ४
तानब्रवीद्बको दाल्भ्यो विभजध्वं पशूनिति ।
पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ॥ ५
एवमुक्त्वा बको राजन्नृषीन्सर्वान्प्रतापवान् ।
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ॥ ६
स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम् ।
अयाचत पशून्दाल्भ्यः स चैनं रुषितोऽब्रवीत् ॥ ७
यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तमः ।
एतान्पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि ॥ ८
ऋषिस्त्वथ बकः क्रुद्धश्चिन्तयामास धर्मवित् ।
अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ॥ ९
चिन्तयित्वा मुहूर्तेन रोषाविष्टो द्विजोत्तमः ।
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः ॥ १०
स तूत्कृत्य मृतानां वै मांसानि मुनिसत्तमः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा ॥ ११
अवाकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकम् ।
बको दाल्भ्यो महाराज नियमं परमं स्थितः ॥ १२
स तैरेव जुहावाग्नौ राष्ट्रं मांसैर्महातपाः ॥ १३
तस्मिंस्तु विधिवत्सत्रे संप्रवृत्ते सुदारुणे ।
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ॥ १४
छिद्यमानं यथा कान्तं वनं परशुना विभो ।
बभूवापद्गतं तच्च व्यवकीर्णमचेतनम् ॥ १५
दृष्ट्वा तथाऽवकीर्णं तु राष्ट्रं स मनुजाधिपः ।
बभूव दुर्मना राजा चिन्तयामास च प्रभुः ॥ १६
मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा ।
न च श्रेयोऽध्यगच्छत्तु क्षीयते राष्ट्रमेव च ॥ १७
यदा स पार्थिवः खिन्नस्ते च विप्रास्तदाऽनघ ॥ १८
यदा चापि न शक्नोति राष्ट्रं मोक्षयितुं नृपः ।
अथ विप्रादिकांस्तत्र पप्रच्छ जनमेजय ॥ १९
ततो विप्रादिकाः प्राहुः पशुविप्रकृतस्त्वया ।
मांसैरभिजुहोतीदं तव राष्ट्रं मुनिर्बकः ॥ २०
तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान् ।
तस्यैतत्तपसः कर्म येन तेऽद्य लयो महान् ॥ २१
'यदीच्छसि महाबाहो शान्तिं राष्ट्रस्य भूमिप ।'
अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव ॥ २२

वैशंपायन उवाच ।

सरस्वतीं ततो गत्वा स राजा बकमब्रवीत् ।
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ ॥ २३
प्रसादये त्वां भगवन्नपराधं क्षमस्व मे ।
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः ।
त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि ॥ २४
तं तथा विलपन्तं तु शोकोपहतचेतसम् ।
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तस्य व्यमोचयत् ॥ २५
ऋषिः प्रसन्नस्तस्याभूत्संरम्भं च विहाय सः ।
मोक्षार्थं तस्य राज्यस्य जुहाव पुनराहुतिम् ॥ २६
मोक्षयित्वा ततो राष्ट्रं प्रतिगृह्य पशून्बहून् ।
हृष्टात्मा नैमिशारण्यं जगाम पुनरेव सः ॥ २७
धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः ।
स्वमेव नगरं राजन्प्रतिपेदे महर्द्धिमत् ॥ २८
तत्र तीर्थे महाराज बृहस्पतिरुदारधीः ।
असुराणामभावाय भवाय च दिवौकसाम् ॥ २९
मांसैरभिजुहावेष्टिमक्षीयन्त ततोऽसुराः ।
दैवतैरपि संभग्ना जितकाशिभिराहवे ॥ ३०
तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः ।
वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान् ॥ ३१
रत्नानि च महार्हाणि धनं धान्यं च पुष्कलम् ।
ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते ॥ ३२
तत्र यज्ञे ययातेश्च महाराज सरस्वती ।
सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ॥ ३३

॥ १ ॥ पाञ्चालान्विश्वजितो यज्ञस्यान्ते अगमन् ॥ ३ ॥ ईश्वरं पाञ्चालराजम् ॥ ४ ॥ एतान्पाञ्चालराजदत्तान् । स्वयं तत्र भाग न गृहीतवानित्यर्थः ॥ ५ ॥ अथ वै प्राश्निकांस्तत्रेति झ. पाठः ॥ १९ ॥ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

मा तस्य वचनं श्रुत्वा ज्ञात्वा पापं चिकीर्षितम् ।
वसिष्ठस्य प्रभावं च जानन्त्यप्रतिमं भुवि ॥ २०
साऽभिगम्य वसिष्ठं च इदमर्थमचोदयत् ।
यदुक्ता सरितांश्रेष्ठा विश्वामित्रेण धीमता ॥ २१
उभयोः शापयोर्भीता वेपमाना पुनःपुनः ।
चिन्तयित्वा महाशापमृषिवित्रासिता भृशम् २२
तां कृशां च विवर्णां च दृष्ट्वा चिन्तासमन्विताम् ।
उवाच राजन्धर्मात्मा वसिष्ठो द्विपदां वरः ॥ २३
पाह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनी ।
विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणाम्
तस्य तद्वचनं श्रुत्वा कृपाशीलस्य सा सरित् ।
चिन्तयामास कौरव्य किं कृत्वा सुकृतं भवेत् ॥२५
तस्याश्चिन्ता समुत्पन्ना वसिष्ठो मय्यतीव हि ।
कृतवान्हि दयां नित्यं तस्य कार्यं हितं मया ॥२६
अथ कूले स्वके राजञ्जपन्तमृषिसत्तमम् ।
जुह्वानं कौशिकं प्रेक्ष्य सरस्वत्यभ्यचिन्तयत् ॥ २७
इदमन्तरमित्येवं ततः सा सरितां वरा ।
कूलापहारमकरोत्स्वेन वेगेन सा सरित् ॥ २८
तेन कूलापहारेण मैत्रावरुणिरौह्यत ।
उह्यमानः स तुष्टाव तदा राजन्सरस्वतीम् ॥ २९
पितामहस्य सरसः प्रवृत्ताऽसि सरस्वति ।
व्याप्तं चेदं जगत्सर्वं तवैवाम्भोभिरुत्तमैः ॥ ३०
त्वमेवाकाशगा देवि मेघेषु सृजसे पयः ।
सर्वाश्चापस्त्वमेवेति यथा वयमधीमहि ॥ ३१
पुष्टिर्द्युतिस्तथा कीर्तिः सिद्धिर्बुद्धिरुमा तथा ।
त्वमेव वाणी स्वाहा त्वं तवायत्तमिदं जगत् ।
त्वमेव सर्वभूतेषु वससीह चतुर्विधा ॥ ३२
वैशंपायन उवाच ।
एवं सरस्वती राजन्स्तूयमाना महर्षिणा ।
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति ॥ ३३
न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिम् ३४
तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः ।
अथान्वेषत्प्रहरणं वसिष्ठान्तकरं तदा ॥ ३५
तं तु क्रुद्धमभिप्रेक्ष्य ब्रह्मवध्याभयान्नदी ।
अपोवाह वसिष्ठं तु प्राचीं दिशमतन्द्रिता ।
उभयोः कुर्वती वाक्यं वञ्चयित्वा च गाधिजम् ३६
ततोपवाहितं दृष्ट्वा वसिष्ठमृषिसत्तमम् ।
अब्रवीत्त्वथ संक्रुद्धो विश्वामित्रः सरस्वतीम् ॥ ३७
यस्मान्मां त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता ।
शोणितं वह कल्याणि राक्षसानां च संमतम् ॥ ३८
ततः सरस्वती शप्ता विश्वामित्रेण धीमता ।
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ॥ ३९
अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तदा ।
सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ॥ ४०
एवं वसिष्ठापवाहो लोके ख्यातो जनाधिप ।
आगच्छच्च पुनर्मार्गं स्वमेव सरितां वरा ॥ ४१

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

विश्वामित्रशापाद्रुधिरजलायाः सरस्वत्या ऋषिभिस्तपसा शोधनम् ॥ १ ॥ इन्द्रेण सरस्वत्यरुणासंगमे यजनादिना ब्रह्महत्यापरिहरणम् ॥ २ ॥ बलरामस्य तत्र स्नानादिपूर्वकं तस्मात्सोमतीर्थगमनम् ॥ ३ ॥

वैशंपायन उवाच ।
सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता ।
तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत् ॥ १
अथाजग्मुस्ततो राजन्राक्षसास्तत्र भारत ।
तत्र ते शोणितं सर्वे पिबन्तः सुखमासते ॥ २
तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः ।
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा ॥ ३
कस्यचित्त्वथ कालस्य ऋषयः सुतपोधनाः ।

वयं ऋषयः त्वत्तोऽधीमहि वेदान् । कदाचिदनावृष्ट्या मृतेषु ऋषिषु संप्रदायोच्छेदे सतीति भावः ॥ ३१ ॥

त्रिचत्वारिंशोऽध्यायः ॥ ४२ ॥

तीर्थयात्रां समाजग्मुः सरस्वत्यां महीपते ॥ ४
तेषु सर्वेषु तीर्थेषु स्वाप्लुत्य मुनिपुङ्गवाः ।
प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः ५
प्रययुर्हि ततो राजन्येन तीर्थमसृग्वहम् ।
अथागम्य महाभागास्तत्तीर्थं दारुणं तदा ॥ ६
दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतम् ।
पीयमानं च रक्षोभिर्बहुभिर्नृपसत्तम ॥ ७
तान्दृष्ट्वा राक्षसान्राजन्मुनयः संशितव्रताः ।
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे ॥ ८
ते तु सर्वे महाभागाः समागम्य महाव्रताः ।
आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन् ॥ ९
कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम् ।
एवमग्राह्यतां यातः श्रुत्वाऽध्यास्यामहे वयम् १०
ततः सा सर्वमाचष्ट यथावृत्तं प्रवेपती ।
दुःखितामथ तां दृष्ट्वा ऊचुस्ते वै तपोधनाः ॥ ११
कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे ।
करिष्यन्ति तु यत्प्राप्तं सर्व एव तपोधनाः ॥ १२
एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परम् ।
विमोचयामहे सर्वे शापादेतां सरस्वतीम् ॥ १३
ते सर्वे ब्राह्मणा राजंस्तपोभिर्नियमैस्तथा ।
उपवासैश्च विविधैर्यमैः कष्टव्रतैस्तथा ॥ १४
आराध्य पशुभर्तारं महादेवं जगत्पतिम् ।
मोक्षयामासुस्तां देवीं सरिच्छ्रेष्ठां सरस्वतीम् १५
तेषां तु सा प्रभावेण प्रकृतिस्था सरस्वती ।
प्रसन्नसलिला जज्ञे यथा पूर्वं तथैव हि ।
निर्मुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा॥१६
दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतम् ।
तानेव शरणं जग्मू राक्षसाः क्षुधितास्तथा ॥१७
कृत्वाञ्जलिं ततो राजन्राक्षसाः क्षुधयाऽर्दिताः ।
ऊचुस्तान्वै मुनीन्सर्वान्कृपायुक्तान्पुनःपुनः ॥१८
वयं च क्षुधिताश्चैव धर्माद्धीनाश्च शाश्वतात् ।
न च नः कामकारोऽयं यद्वयं पापकारिणा ॥ १९
युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा ।

अध्यास्यामहे अध्यवसायं करिष्यामहे ॥ १० ॥

पक्षोऽयं वर्धतेऽस्माकं यतः स्मो ब्रह्मराक्षसाः ।
योषितां चैव पापेन योनिदोषकृतेन च ॥ २०
एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च ।
ये ब्राह्मणान्प्रद्विषन्ति ते भवन्तीह राक्षसाः ॥२१
'शक्तिमन्तोऽपि ये केचिदाश्रितानां च रक्षणम् ।
न कुर्वन्ति मनुष्यास्ते संभवन्तीह राक्षसाः ॥'२२
आचार्यमृत्विजं चैव गुरुं वृद्धजनं तथा ।
प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः ॥२३
तत्कुरुध्वमिहास्माकं तारणं द्विजसत्तमाः ।
शक्ता भवन्तः सर्वेषां लोकानामपि तारणे ॥२४
तेषां तु वचनं श्रुत्वा तुष्टुवुस्तां महानदीम् ।
मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः ॥ २५
ऋषय ऊचुः ।
क्षुतं कीटावपन्नं च यच्चोच्छिष्टाचितं भवेत् ।
सकेशमवधूतं च रुदितोपहतं च यत् ॥ २६
श्वभिः संसृष्टमन्नं च भागोऽसौ रक्षसामिह ।
तस्माज्ज्ञात्वा सदा विद्वानेतान्यत्नाद्विवर्जयेत् ।
राक्षसान्नमसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशम् ॥ २७
शोधयित्वा ततस्तीर्थमृषयस्ते तपोधनाः ।
मोक्षार्थं राक्षसानां च नदीं तां प्रत्यचोदयन् ॥२८
महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा ।
अरुणामानयामास स्वां तनुं पुरुषर्षभ ॥ २९
तस्यान्ते राक्षसाः स्नात्वा तनूस्त्यक्त्वा दिवं गताः ।
अरुणायां महाराज ब्रह्मवध्यापहा हि सा ॥३०
एतमर्थमभिज्ञाय देवराजः शतक्रतुः ।
तस्मिंस्तीर्थे वरे स्नात्वा विमुक्तः पाप्मना किल ३१
जनमेजय उवाच ।
किमर्थं भगवाञ्शक्रो ब्रह्मवध्यामवाप्तवान् ।
कथमस्मिंश्च तीर्थे वै आप्लुत्याकल्मषोऽभवत् ॥ ३२
वैशंपायन उवाच ।
शृणुष्वैतदुपाख्यानं यथावृत्तं जनेश्वर ।
यथा बिभेद समयं नमुचेर्वासवः पुरा ॥ ३३
नमुचिर्वासवाद्भीतः सूर्यरश्मिं समाविशत् ।
तेनेन्द्रः सख्यमकरोत्समयं चेदमब्रवीत् ॥ ३४

न चार्द्रेण न शुष्केण न रात्रौ नापि चाहनि ।
वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे ॥ ३५
एवं स कृत्वा समयं दृष्ट्वा नीहारमीश्वरः ।
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ॥ ३६
तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वियात् ।
भोभो मित्रह पापेति ब्रुवाणं शक्रमन्तिकात् ३७
एवं स शिरसा तेन चोद्यमानः पुनःपुनः ।
पितामहाय संतप्त एतमर्थं न्यवेदयत् ॥ ३८
तमब्रवील्लोकगुरुररुणायां यथाविधि ।
इष्ट्वोपस्पृश देवेन्द्र तीर्थे पापभयापहे ॥ ३९
[ एषा पुण्यजला शक्र कृता मुनिभिरेव तु ।
निगूढमस्यागमनमिहासीत्पूर्वमेव तु ॥ ४०
ततोऽभ्येत्यारुणां देवीं प्लावयामास वारिणा ।
सरस्वत्यारुणायाश्च पुण्योऽयं संगमो महान् ॥ ४१
इह त्वं यज देवेन्द्र दद दानान्यनेकशः ।
अत्राप्लुत्य सुघोरात्त्वं पातकाद्विप्रमोक्ष्यसे ॥] ४२
इत्युक्तः स सरस्वत्याः कुञ्जे वै जनमेजय ।
इष्ट्वा यथावद्बलभिदरुणायामुपास्पृशत् ॥ ४३
स मुक्तः पाप्मना तेन ब्रह्मवध्याकृतेन च ।
जगाम संहृष्टमनास्त्रिदिवं त्रिदशेश्वरः ॥ ४४
शिरस्तच्चापि नमुचेस्तत्रैवाप्लुत्य भारत ।
लोकान्कामदुघान्प्राप्तमक्षयान्राजसत्तम ॥ ४५
वैशंपायन उवाच ।
तत्राप्युपस्पृश्य बलो महात्मा
दत्त्वा च दानानि पृथग्विधानि ।
अवाप्य धर्मं परमार्यकर्मा
जगाम सोमस्य महत्सुतीर्थम् ॥ ४६
यत्रायजद्राजसूयेन सोमः
साक्षात्पुरा विधिवत्पार्थिवेन्द्र ।
अत्रिर्धीमान्ब्रह्मपुत्रो बभूव
होता यस्मिन्क्रतुमुख्ये महात्मा ॥ ४७
यस्यान्तेऽभूत्सुमहद्दानवानां
दैतेयानां राक्षसानां च देवैः ।
संग्रामो वै तारकाख्यः सुतीव्रो
यत्र स्कन्दस्तारकाख्यं जघान ॥ ४८
सैनापत्यं लब्धवान्दैवतानां
महासेनो यत्र दैत्यान्तकर्ता ।
साक्षाच्चैवं न्यवसत्कार्तिकेयः
सदा कुमारो यत्र स प्लक्षराजः ॥ ४९

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

कुमारोत्पत्तिवर्णनम् ॥ १ ॥

जनमेजय उवाच ।
सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम ।
कुमारस्याभिषेकं तु ब्रह्मन्नाख्यातुमर्हसि ॥ १
यस्मिन्देशे च काले च यथा च वदतां वर ।
यैश्चाभिषिक्तो भगवान्विधिना येन च प्रभुः ॥ २
स्कन्दो यथा च दैत्यानामकरोत्कदनं महत् ।
तथा मे सर्वमाचक्ष्व परं कौतूहलं हि मे ॥ ३
वैशंपायन उवाच ।
कुरुवंशस्य सदृशं कौतूहलमिदं तव ।
हर्षमुत्पादयत्येव वचो मे जनमेजय ॥ ४
हन्त ते कथयिष्यामि शृण्वानस्य नराधिप ।
अभिषेकं कुमारस्य प्रभावं च महात्मनः ॥ ५
तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा ।
तत्सर्वं भगवानग्निर्नाशकद्दग्धुमक्षयम् ॥ ६
तेन सीदति तेजस्वी दीप्तिमान्हव्यवाहनः ।
न चैनं धारयामास ब्रह्मणे उक्तवान्प्रभुः ॥ ७

सदा कुमारो यत्र नक्षत्रधर्मा इति क. पाठः । यत्र नक्षत्रकामः इति ङ. पाठः ॥ ४९ ॥ चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

तत्सर्वभक्षो भगवान्नाशकद्दग्धुमक्षयमिति झ. पाठः ॥ ६ ॥ तेनासीदति तेजस्वी इति झ. ङ. पाठः ॥ ७ ॥

स गङ्गामुपसंगम्य नियोगाद्ब्रह्मणः प्रभुः ।
गर्भमाहितवान्दिव्यं भास्करोपमतेजसम् ॥ ८
अथ गङ्गापि तं गर्भमसहन्ती विधारणे ।
उत्ससर्ज गिरौ रम्ये हिमवत्यमरार्चिते ॥ ९
स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः ।
ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः ॥ १०
शरस्तम्बे महात्मानमनलात्मजमीश्वरम् ।
ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचुक्रुशुः ॥
तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः ।
प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा ॥ १२
तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः ।
परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः ॥ १३
यत्रोत्सृष्टश्च गर्भः स गङ्गया गिरिमूर्धनि ।
स शैलः काञ्चनः सर्वः संबभौ मेरुवत्तदा ॥ १४
वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता ।
अतश्च सर्वे संवृत्ता गिरयः काञ्चनात्मकाः॥ १५
कुमारः सुमहावीर्यः कार्तिकेय इति स्मृतः ।
गाङ्गेयः पूर्वमभवन्महाकायो बलान्वितः ॥ १६
शमेन तपसा चैव वीर्येण च समन्वितः ।
ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः ॥ १७
स तस्मिन्काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः ।
स्तूयमानः सदा शेते गन्धर्वैर्मुनिभिस्तथा ॥ १८
तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः ।
दिव्यवादित्रनृत्यज्ञाः स्तुवन्त्यश्चारुदर्शनाः॥ १९
अन्वयुश्चाग्रयः सर्वे गङ्गा च सरितां वरा ।
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम् ॥ २०
जातकर्मादिकास्तस्य क्रियाश्चक्रे बृहस्पतिः ।
वेदश्चैनं चतुर्मूर्तिरुपतस्थे कृताञ्जलिः ॥ २१
धनुर्वेदश्चतुष्पादः शस्त्रग्रामः ससंग्रहः ।
तत्रैनं समुपातिष्ठत्साक्षाद्वाणी च केवला ॥ २२
स ददर्श महात्मानं देवदेवमुमापतिः ।
शैलपुत्र्या समागम्य भूतसङ्घशतैर्वृतः ॥ २३
निकाया भूतसङ्घानां परमाद्भुतदर्शनाः ।
विकृता विकृताकारा विकृताभरणध्वजाः ॥ २४
व्याघ्रसिंहर्क्षवदना बिडालमकराननाः ।
वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा ॥ २५
उलूकवदनाः केचिद्गृध्रगोमायुदर्शनाः ।
क्रौञ्चपारावतनिभैर्वदनै राङ्कवैरपि ॥ २६
श्वाविच्छल्यकगोधानामजैडकगवां तथा ।
सदृशानि वपूंष्यन्ये तत्रतत्र व्यधारयन् ॥ २७
केचिच्छैलाम्बुदप्रख्याश्चक्रालातगदायुधाः ।
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ॥२८
सप्तमातृगणाश्चैव समाजग्मुर्विशांपते ।
साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा॥ २९
रुद्रादित्यास्तथा सिद्धा भुजगा दानवाः खगाः।
ब्रह्मा स्वयंभूर्भगवान्सपुत्रः सहविष्णुना ॥ ३०
शक्रस्तथाऽभ्ययाद्द्रष्टुं कुमारममितप्रभम् ।
नारदप्रमुखाश्चापि देवगन्धर्वसत्तमाः ॥ ३१
देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः ।
पितरो जगतः श्रेष्ठा देवानामपि देवताः ।
तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्वशः ॥ ३२
स तु बालोऽपि बलवान्महायोगबलान्वितः ।
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ॥ ३३
तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतम् ।
युगपच्छैलपुत्र्याश्च गङ्गायाः पावकस्य च ॥ ३४
कं नु पूर्वमयं बालो गौरवादभ्युपैष्यति ।
अपि मामिति सर्वेषां तेषामासीन्मनोगतम्॥ ३५
तेषामेतमभिप्रायं चतुर्णामुपलक्ष्य सः ।
युगपद्योगमास्थाय ससर्ज विविधास्तनूः ॥ ३६
ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान्प्रभुः ।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः ॥ ३७
एवं स कृत्वा ह्यात्मानं चतुर्धा भगवान्प्रभुः ।
यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः॥ ३८
विशाखस्तु ययौ देवीं ततो गिरिवरात्मजाम् ।
शाखो ययौ स भगवान्दिव्यमूर्तिर्विभावसुम् ३९
नैगमेयोऽगमद्गङ्गां कुमारः पावकप्रभः ॥ ४०

बिडालवृषदंशौ मार्जारजातिभेदौ तत्सदृशाननौ ॥ २५ ॥ श्वानत्स्यकगोधानामिति क. पाठः ॥ २७ ॥ तस्य स्कन्दस्य पृष्ठतः पश्चात् शाखविशाखनैगमेयाः आसन् । ते स्कन्देन सह चत्वारः ॥ ३७ ॥ वायुमूर्तिर्विभावसुमिति ङ. पाठः ॥ ३९ ॥

सर्वे भासुरदेहास्ते चत्वारः समरूपिणः ।
तान्समभ्ययुरव्यग्रास्तदद्भुतमिवाभवत् ॥ ४१
हाहाकारो महानासीद्देवदानवरक्षसाम् ।
तद्दृष्ट्वा महदाश्चर्यमद्भुतं रोमहर्षणम् ॥ ४२
ततो रुद्रश्च देवी च पावकश्च पितामहम् ।
गङ्गया सहिताः सर्वे प्रणिपेतुर्जगत्पतिम् ॥ ४३
प्रणिपत्य ततस्ते तु विधिवद्राजपुङ्गव ।
इदमूचुर्वचो राजन्कार्तिकेयप्रियेप्सया ॥ ४४
अस्य बालस्य भगवन्नाधिपत्यं यथेप्सितम् ।
अस्मत्प्रियार्थं देवेश सदृशं दातुमर्हसि ॥ ४५
ततः स भगवान्धीमान्सर्वलोकपितामहः ।
मनसा चिन्तयामास किमयं लभतामिति ॥ ४६
ऐश्वर्याणि च सर्वाणि देवगन्धर्वरक्षसाम् ।
भूतयक्षविहङ्गानां पन्नगानां च सर्वशः ॥ ४७
सर्वमेवादिदेशासौ कौरवेय महात्मनः ।
समर्थं च तमैश्वर्ये महामतिरमन्यत ॥ ४८
ततो मुहूर्तं स ध्यात्वा देवानां श्रेयसि स्थितः ।
सैनापत्यं ददौ तस्मै सर्वभूतेषु भारत ॥ ४९
सर्वदेवनिकायानां ये राजानः परिश्रुताः ।
तान्सर्वान्व्यादिदेशास्मै सर्वभूतपितामहः ॥ ५०
ततः कुमारमादाय देवा ब्रह्मपुरोगमाः ।
अभिषेकार्थमाजग्मुः शैलेन्द्रं सहितास्ततः ॥ ५१
पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीम् ।
समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ॥ ५२
तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते ।
निषेदुर्देवगन्धर्वाः सर्वे संपूर्णमानसाः ॥ ५३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

बृहस्पत्यादिभिः स्कन्दस्य सैनापत्येऽभिषेचनम् ॥ १ ॥ ब्रह्मादिभिः स्कन्दाय स्वस्वपारिषदानां दानम् ॥ २ ॥

वैशंपायन उवाच ।
ततोऽभिषेकसंभारान्सर्वान्संभृत्य शास्त्रतः ।
बृहस्पतिः समिद्धेऽग्नौ जुहावाग्निं यथाविधि ॥ १
ततो हिमवता दत्ते मणिप्रवरशोभिते ।
दिव्यरत्नाचिते पुण्ये निषण्णं परमासने ॥ २
सर्वमङ्गलसंभारैर्विधिमन्त्रपुरस्कृतम् ।
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ ३
इन्द्राविष्णू महावीर्यौ सूर्याचन्द्रमसौ तथा ।
धाता चैव विधाता च तथा चैवानिलानलौ ॥ ४
पूष्णा भगेनार्यम्णा च अंशेन च विवस्वता ।
रुद्रश्च सहितो धीमान्मित्रेण वरुणेन च ॥ ५
रुद्रैर्वसुभिरादित्यैरश्विभ्यां च वृतः प्रभुः ।
विश्वैर्देवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ॥ ६
गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ।
देवर्षिभिरसङ्ख्यातैस्तथा ब्रह्मर्षिभिस्तथा ॥ ७
वैखानसैर्वालखिल्यैर्वाय्वाहारैर्मरीचिपैः ।
भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः ॥ ८
सर्वैर्विद्याधरैः पुण्यैर्योगसिद्धैस्तथा वृतः ।
पितामहः पुलस्त्यश्च पुलहश्च महातपाः ॥ ९
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ।
क्रतुर्हरिः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ १०
ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशांपते ।
मूर्तिमत्यश्च सरितो वेदाश्चैव सनातनाः ॥ ११
समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ।
पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ॥ १२
अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ।
उमा शची सिनीवाली तथैवानुमतिः कुहूः ॥ १३
राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् ।
हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान् ॥ १४
ऐरावतः सानुचरः कलाः काष्ठास्तथैव च ।
मासार्धमासा ऋतवस्तथा रात्र्यहनी नृप ॥ १५
उच्चैःश्रवा हयश्रेष्ठो नागराजश्च वासुकिः ।

अद्भुतमदृष्टपूर्वम् ॥ ४२ ॥ पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

नागराजश्च वामन इति ख. पाठः ॥ १६ ॥

अरुणो गरुडश्चैव वृक्षाश्चौषधिभिः सह ॥ १६
धर्मश्च भगवान्देवः समाजग्मुर्हि संगताः ।
कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ॥ १७
बहुलत्वाच्च नोक्ता ये विविधा देवतागणाः ।
ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः ॥ १८
जगृहुस्ते तदा राजन्सर्व एव दिवौकसः ।
आभिषेचनिकं भाण्डं मङ्गलानि च सर्वशः ॥ १९
दिव्यसंभारसंयुक्तैः कलशैः काञ्चनैर्नृप ।
सारस्वताभिः पुण्याभिरद्भिस्ताभिरलङ्कृतम् ॥ २०
अभ्यषिञ्चन्कुमारं वै संप्रहृष्टा दिवौकसः ।
सैनापत्ये महात्मानमसुराणां भयंकरम् ॥ २१
पुरा यथा महाराज वरुणं वै जलेश्वरम् ।
तथाऽभ्यषिञ्चद्भगवान्सर्वलोकपितामहः ॥ २२
कश्यपश्च महातेजा ये चान्ये लोककीर्तिताः ।
तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः ॥ २३
कामवीर्यधरान्सिद्धान्महापारिषदान्प्रभुः ।
नन्दिसेनं लोहिताक्षं घण्टाकर्णं च संमतम् ॥ २४
चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनम् ।
तत्र स्थाणुर्महातेजा महापारिषदं प्रभुः ॥ २५
मायाशतधरं कामं कामवीर्यबलान्वितम् ।
ददौ स्कन्दाय राजेन्द्र सुरारिविनिबर्हणम् ॥ २६
स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम् ।
जघान दोर्भ्यां संक्रुद्धः प्रयुतानि चतुर्दश ॥ २७
तथा देवा ददुस्तस्मै सेनां नैर्ऋतसंकुलाम् ।
देवशत्रुक्षयकरीमजय्यां विश्वरूपिणीम् ॥ २८
जयशब्दं तथा चक्रुर्देवाः सर्वे सवासवाः ।
गन्धर्वा यक्षरक्षांसि मुनयः पितरस्तथा ॥ २९
ततः प्रादादनुचरौ यमः कालोपमावुभौ ।
उन्माथं च प्रमाथं च महावीर्यौ महाद्युती ॥ ३०
सुभ्राजो भास्वरश्चैव यौ तौ सूर्यानुयायिनौ ।
तौ सूर्यः कार्तिकेयाय ददौ प्रीतः प्रतापवान् ॥ ३१
कैलासशृङ्गसंकाशौ श्वेतमाल्यानुलेपनौ ।
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च ॥ ३२
ज्वालाजिह्वं तथा ज्योतिरात्मजाय हुताशनः ।
ददावनुचरौ शूरौ परसैन्यप्रमाथिनौ ॥ ३३
परिघं च वटं चैव भीमं च सुमहाबलम् ।
दहतिं दहनं चैव प्रचण्डौ वीर्यसंमतौ ॥ ३४
अंशोऽप्यनुचरान्पञ्च ददौ स्कन्दाय धीमते ।
उत्क्रोशं सत्करं चैव वज्रदण्डधरावुभौ ॥ ३५
ददावनलपुत्राय वासवः परवीरहा ।
तौ हि शत्रून्महेन्द्रस्य जघ्नतुः समरे बहून् ॥ ३६
चक्रं विक्रमकं चैव संक्रमं च महाबलम् ।
स्कन्दाय त्रीननुचरान्ददौ विष्णुर्महायशाः ॥ ३७
वर्धनं नन्दनं चैव सर्वविद्याविशारदौ ।
स्कन्दाय ददतुः प्रीतावश्विनौ भिषजां वरौ ॥ ३८
कुन्दं च कुसुमं चैव कुमुदं च महायशाः ।
डम्बराडम्बरौ चैव ददौ धाता महात्मने ॥ ३९
वक्रानुवक्रौ बलिनौ मेषवक्त्रौ बलोत्कटौ ।
ददौ त्वष्टा महामायौ स्कन्दायानुचरावुभौ ॥ ४०
सुव्रतं सत्यसन्धं च ददौ मित्रो महात्मने ।
कुमाराय महात्मानौ तपोविद्याधरौ प्रभुः ॥ ४१
सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ ।
सुव्रतं च महात्मानं शुभकर्माणमेव च ॥ ४२
कार्तिकेयाय संप्रादाद्विधाता लोकविश्रुतौ ।
पाणीतकं कालिकं च महामायाविनावुभौ ॥ ४३
पूषा च पार्षदौ प्रादात्कार्तिकेयाय भारत ।
बलं चातिबलं चैव महावक्त्रौ महाबलौ ॥ ४४
प्रददौ कार्तिकेयाय वायुर्भरतसत्तम ।
यमं चातियमं चैव तिमिवक्त्रौ महाबलौ ॥ ४५
प्रददौ कार्तिकेयाय वरुणः सत्यसंगरः ।
सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम् ॥ ४६
हिमवान्प्रददौ राजन्हुताशनसुताय वै ।
काञ्चनं च महात्मानं मेघमालिनमेव च ॥ ४७
ददावनुचरौ मेरुरग्निपुत्राय भारत ।
स्थिरं चातिस्थिरं चैव मेरुरेवापरौ ददौ ॥ ४८
महात्मा त्वग्निपुत्राय महाबलपराक्रमौ ।

घसं चातिघसं चैवेति ख. पाठः ॥ ४५ ॥

षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

उच्छ्रृङ्गं चातिशृङ्गं च महापाषाणयोधिनौ ॥ ४९
प्रददावग्निपुत्राय विन्ध्यः पारिषदावुभौ ।
संग्रहं विग्रहं चैव समुद्रोऽपि गदाधरौ ॥ ५०
प्रददावग्निपुत्राय महापारिषदावुभौ ।
उन्मादं शंकुकर्णं च पुष्पदन्तं तथैव च ॥ ५१
प्रददावग्निपुत्राय पार्वती शुभदर्शना ।
जयं महाजयं चैव गङ्गा ज्वलनसूनवे ॥ ५२
प्रददौ पुरुषव्याघ्र वासुकिः पन्नगेश्वरः ।
एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा ॥ ५३
सागराः सरितश्चैव गिरयश्च महाबलाः ।
ददुः सेनागणाध्यक्षाञ्शूलपट्टसधारिणः ॥ ५४
दिव्यप्रहरणोपेतान्नानावेषविभूषितान् ।
शृणु नामानि चाप्येषां येऽन्ये स्कन्दस्य सैनिकाः ॥
विविधायुधसंपन्नाश्चित्राभरणभूषिताः ।
शङ्कुकर्णो निकुम्भश्च पद्मः कुमुद एव च ॥ ५६
अनन्तो द्वादशभुजस्तथा कृष्णोपकृष्णकौ ।
घ्राणश्रवाः कपिस्कन्धः काञ्चनाक्षो जलंधमः ५७
अक्षः संतर्जनो राजन्कुनदीकस्तमोन्तकृत् ।
एकाक्षो द्वादशाक्षश्च तथैवैकजटः प्रभुः ॥ ५८
सहस्रबाहुर्विकटो व्याघ्राक्षः क्षितिकम्पनः ।
पुण्यनामा सुनामा च सुचक्रः प्रियदर्शनः ॥ ५९
परिश्रुतः कोकनदः प्रियमाल्यानुलेपनः ।
अजोदरो गजशिराः स्कन्धाक्षः शतलोचनः ६०
ज्वालाजिह्वः करालाक्षः शितिकेशो जटी हरिः ।
परिश्रुतः कोकनदः कृष्णकेशो जटाधरः ॥ ६१
चतुर्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवाः ।
विद्युताक्षो धनुर्वक्रो जाठरो मारुताशनः ॥ ६२
उदाराक्षो रथाक्षश्च वज्रनाभो वसुप्रभः ।
समुद्रवेगो राजेन्द्र शैलकम्पी तथैव च ॥ ६३
वृषो मेषः प्रवाहश्च तथा नन्दोपनन्दकौ ।
धूम्रः श्वेतः कलिङ्गश्च सिद्धार्थो वरदस्तथा ॥ ६४
प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान् ।
आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा ॥ ६५
क्षेमवाहः सुवाहश्च सिद्धपात्रश्च भारत ।
गोव्रजः कनकापीडो महापारिषदेश्वरः ॥ ६६
गायनो हसनश्चैव बाणः खड्गश्च वीर्यवान् ।
वैताली गतिताली च तथा कथकवातिकौ ॥ ६७
हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह ।
रणोत्कटः प्रहासश्च श्वेतसिद्धश्च नन्दनः ॥ ६८
कालकण्ठः प्रभासश्च तथा कुम्भाण्डकोदरः ।
कालकक्षः सितश्चैव भूतानां मथनस्तथा ॥ ६९
यज्ञवाहः सुवाहश्च देवयाजी च सोमपः ।
मज्जानश्च महातेजाः क्रथक्राथौ च भारत ॥ ७०
तुहरश्च तुहारश्च चित्रदेवश्च वीर्यवान् ।
मधुरः सुप्रसादश्च किरीटी च महाबलः ॥ ७१
वत्सलो मधुवर्णश्च कलशोदर एव च ।
धर्मदो मन्मथकरः सूचीवक्त्रश्च वीर्यवान् ॥ ७२
श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः ।
दण्डबाहुः सुबाहुश्च रजः कोकिलकस्तथा ॥ ७३
अचलः कनकाक्षश्च बालानामपि यः प्रभुः ।
संचारकः कोकनदो गृध्रपत्रश्च जम्बुकः ॥ ७४
लोहाजवक्त्रो जवनः कुम्भवक्त्रश्च कुम्भकः ।
स्वर्णग्रीवश्च कृष्णौजा हंसवक्त्रश्च चन्द्रभः ॥ ७५
पाणिकूर्चाश्च शम्बूकः पञ्चवक्त्रश्च शिक्षकः ।
चाषवक्त्रश्च जम्बूकः शाकवक्त्रश्च कुञ्जलः ॥ ७६
योगयोक्ता महात्मानः सततं ब्राह्मणप्रियाः ।
पैतामहा महात्मानो महापारिषदाश्च ये ॥ ७७
यौवनस्थाश्च बालाश्च वृद्धाश्च जनमेजय ।
सहस्रशः पारिषदाः कुमारमुपतस्थिरे ॥ ७८
वक्त्रैर्नानाविधैर्ये तु शृणु ताञ्जनमेजय ।
कूर्मकुक्कुटवक्त्राश्च शशोलूकमुखास्तथा ॥ ७९
खरोष्ट्रवदनाश्चान्ये वराहवदनास्तथा ।
मार्जारशशवक्त्राश्च दीर्घवक्त्राश्च भारत ॥ ८०
नकुलोलूकवक्त्राश्च काकवक्त्रास्तथा परे ।
आखुबभ्रुकवक्त्राश्च मयूरवदनास्तथा ॥ ८१
मत्स्यमेषाननाश्चान्ये अजाविमहिषाननाः ।
ऋक्षशार्दूलवक्त्राश्च द्वीपिसिंहाननास्तथा ॥ ८२
भीमा गजाननाश्चैव तथा नक्रमुखाश्च ये ।

गरुडाननाः कङ्कमुखा वृककाकमुखास्तथा ॥ ८३
गोखरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा ।
महाजठरपादाङ्गास्तारकाक्षाश्च भारत ॥ ८४
पारावतमुखाश्चान्ये तथा वृषमुखाः परे ।
कोकिलाभाननाश्चान्ये श्येनतित्तिरिकाननाः ८५
कृकलासमुखाश्चैव विरजोम्बरधारिणः ।
व्यालवक्त्राः शूलमुखाश्चण्डवक्त्राः शुभाननाः ८६
आशीविषाश्चीरधरा गोनासावदनास्तथा ।
स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः ८७
ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषणाः ।
गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः ॥ ८८
स्कन्धेमुखा महाराज तथाप्युदरतोमुखाः ।
पृष्ठेमुखा हनुमुखास्तथा जङ्घामुखा अपि ॥ ८९
पार्श्वाननाश्च बहवो नानादेशमुखास्तथा ।
तथा कीटपतङ्गानां सदृशास्या गणेश्वराः ॥ ९०
नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः ।
नानावृक्षभुजाः केचित्कटिशीर्षास्तथा परे ॥ ९१
भुजङ्गभोगवदना नानागुल्मनिवासिनः ।
चीरसंवृतगात्राश्च नानाकनकवाससः ॥ ९२
नानावेषधराश्चैव नानामाल्यानुलेपनाः ।
नानावस्त्रधराश्चैव चर्मवासस एव च ॥ ९३
उष्णीषिणो मुकुटिनः सुग्रीवाश्च सुवर्चसः ।
किरीटिनः पञ्चशिखास्तथा काञ्चनमूर्धजाः ॥ ९४
त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे ।
शिखण्डिनो मुकुटिनो मुण्डाश्च जटिलास्तथा ॥ ९५
चित्रमालाधराः केचित्केचिद्रोमाननास्तथा ।
विग्रहैकरसा नित्यमजेयाः सुरसत्तमैः ॥ ९६
कृष्णा निर्मांसवक्त्राश्च दीर्घपृष्ठास्तनूदराः ।
स्थूलपृष्ठा ह्रस्वपृष्ठाः प्रलम्बोदरमेहनाः ॥ ९७
महाभुजा ह्रस्वभुजा ह्रस्वगात्राश्च वामनाः ।
कुब्जाश्च ह्रस्वजङ्घाश्च हस्तिकर्णशिरोधराः ॥ ९८
हस्तिनासाः कूर्मनासा वृकनासास्तथा परे ।
दीर्घोच्छ्वासा दीर्घजङ्घा विकराला ह्यधोमुखाः ९९
महादंष्ट्रा ह्रस्वदंष्ट्राश्चतुर्दंष्ट्रास्तथा परे ।
वारणेन्द्रनिभाश्चान्ये भीमा राजन्सहस्रशः १००
सुविभक्तशरीराश्च दीप्तिमन्तः स्वलङ्कृताः ।
पिङ्गाक्षाः शङ्कुकर्णाश्च रक्तनासाश्च भारत ॥ १०१
पृथुदंष्ट्रा महादंष्ट्राः स्थूलौष्ठा हरिमूर्धजाः ।
नानापादौष्ठदंष्ट्राश्च नानाहस्तशिरोधराः ॥ १०२
नानाचर्मभिराच्छन्ना नानाभाषाश्च भारत ।
कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वराः ॥
हृष्टाः परिपतन्ति स्म महापारिषदास्तथा ।
दीर्घग्रीवा दीर्घनखा दीर्घपादशिरोभुजाः ॥ १०४
पिङ्गाक्षा नीलकण्ठाश्च लम्बकर्णाश्च भारत ।
वृकोदरनिभाश्चैव केचिदञ्जनसन्निभाः ॥ १०५
श्वेताक्षा लोहितग्रीवाः पिङ्गाक्षाश्च तथा परे ।
कल्माषा बहवो राजंश्चित्रवर्णाश्च भारत ॥ १०६
चामरापीडकनिभाः श्वेतलोहितराजयः ।
नानावर्णाः सवर्णाश्च मयूरसदृशप्रभाः ॥ १०७
पुनः प्रहरणान्येषां कीर्त्यमानानि मे शृणु ।
शेषैः कृतः पारिषदैरायुधानां परिग्रहः ॥ १०८
पाशोद्यतकराः केचिद्व्यादितास्याः खराननाः ।
पृथ्वक्षा नीलकण्ठाश्च तथा परिघबाहवः ॥ १०९
शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः ।
असिमुद्गरहस्ताश्च दण्डहस्ताश्च भारत ॥ ११०
गदाभुशुण्डिहस्ताश्च तथा तोमरपाणयः ।
आयुधैर्विविधैर्घोरैर्महात्मानो महाजवाः ॥ १११
महाबला महावेगा महापारिषदास्तथा ।
अभिषेकं कुमारस्य दृष्ट्वा हृष्टा रणप्रियाः ॥ ११२
घण्टाजालपिनद्धाङ्गा ननृतुस्ते महौजसः ।
एते चान्ये च बहवो महापारिषदा नृप ॥ ११३
उपतस्थुर्महात्मानं कार्तिकेयं यशस्विनम् ।
दिव्याश्चाप्यान्तरिक्षाश्च पार्थिवाश्चानिलोपमाः ॥
व्यादिष्टा दैवतैः शूराः स्कन्दस्यानुचराऽभवन् ।
तादृशानां सहस्राणि प्रयुतान्यर्बुदानि च ।
अभिषिक्तं महात्मानं परिवार्योपतस्थिरे ॥ ११५

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

कुमारमातृगणस्य नामकीर्तनम् ॥ १ ॥ कुमारेण तारकासुरवधः क्रौञ्चपर्वतभेदनं च ॥ २ ॥

वैशंपायन उवाच ।
शृणु मातृगणान्राजन्कुमारानुचरानिमान् ।
कीर्त्यमानान्मया वीर सपत्नगणसूदनान् ॥ १
यशस्विनीनां मातॄणां शृणु नामानि भारत ।
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिश्च भागशः॥
प्रभावती विशालाक्षी पालिता गोस्तनी तथा ।
श्रीमती बहुला चैव तथैव बहुपुत्रिका ॥ ३
अप्सुजाता च गोपाली बृहदम्बालिका तथा ।
जयावती मालतिका ध्रुवरत्ना भयंकरी ॥ ४
वसुदामा च दामा च विशोका नन्दिनी तथा ।
एकचूडा महाचूडा चक्रनेमिश्च भारत ॥ ५
उत्तेजनी जयत्सेना कमलाक्ष्यथ शोभना ।
शत्रुंजया तथा चैव क्रोधना शलभी खरी ॥ ६
माधवी शुभवक्त्रा च तीर्थसेनिश्च भारत ।
गीतप्रिया च कल्याणी रुद्ररोमाऽमिताशना ॥ ७
मेघस्वना भोगवती सुभ्रूश्च कनकावती ।
अलाताक्षी वीर्यवती विद्युज्जिह्वा च भारत ॥ ८
पद्मावती सुनक्षत्रा कन्दरा बहुयोजना ।
संतानिका च कौरव्य कमला च महाबला ॥ ९
सुदामा बहुदामा च सुप्रभा च यशस्विनी ।
नृत्यप्रिया च राजेन्द्र शतोलूखलमेखला ॥ १०
शतघण्टा शतानन्दा भगनन्दा च भाविनी ।
वपुष्मती चन्द्रशीता भद्रकाली च भारत ॥ ११
ऋक्षाम्बिका निष्कुटिका वामा चत्वरवासिनी ।
सुमङ्गला स्वस्तिमती बुद्धिकामा जयप्रिया ॥ १२
धनदा सुप्रसादा च भवदा च जलेश्वरी ।
एडी भेडी समेडी च वेतालजननी तथा ॥ १३
कण्डूतिः कालिका चैव देवमित्रा च भारत ।
वसुश्रीः कोटरा चैव चित्रसेना तथाऽचला ॥ १४
कुक्कुटिका शङ्खलिका तथा शकुनिका नृप ।
कुण्डारिका कौकुलिका कुम्भिकाऽथ शतोदरी १५
उत्क्राथिनी जलेला च महावेगा च कङ्कणा ।
मनोजवा कण्टकिनी प्रघसा पूतना तथा ॥ १६
केशयन्त्री त्रुटिर्वामा क्रोशनाऽथ तडित्प्रभा ।
मन्दोदरी च मुण्डी च कोटरा मेघवाहिनी ॥ १७
सुभगा लम्बिनी लम्बा ताम्रचूडा विकाशिनी ।
ऊर्ध्ववेणीधरा चैव पिङ्गाक्षी लोहमेखला ॥ १८
पृथुवस्त्रा मधुलिका मधुकुम्भा तथैव च ।
पक्षालिका मत्कुलिका जरायुर्जर्जरानना ॥ १९
ख्याता दहदहा चैव तथा धमधमा नृप ।
खण्डखण्डा च राजेन्द्र पूषणा मणिकुट्टिका ॥२०
अमोघा चैव कौरव्य तथा लम्बपयोधरा ।
वेणुवीणाधरा चैव पिङ्गाक्षी लोहमेखला ॥ २१
शशोलूकमुखी कृष्णा खरजङ्घा महाजवा ।
शिशुमारमुखी श्वेता लोहिताक्षी विभीषणा ॥२२
जटालिका कामचरी दीर्घजिह्वा बलोत्कटा ।
कालेहिका वामनिका मुकुटा चैव भारत ॥ २३
लोहिताक्षी महाकाया हरिपिण्डा च भूमिप ।
एकत्वचा सुकुसुमा कृष्णकर्णी च भारत ॥ २४
क्षुरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा ।
चतुष्पथनिकेता च गोकर्णी महिषानना ॥ २५
खरकर्णी महाकर्णी भेरीस्वनमहास्वना ।
शङ्खकुम्भश्रवाश्चैव भगदा च महाबला ॥ २६
गणा च सुगणा चैव तथा भीत्यथ कामदा ।
चतुष्पथरता चैव भूतितीर्थान्यगोचरी ॥ २७
पशुदा वित्तदा चैव सुखदा च महायशाः ।
पयोदा गोमहिषदा सविशाला च भारत ॥ २८
प्रतिष्ठा सुप्रतिष्ठा च रोचमाना सुरोचना ।
नौकर्णी मुखकर्णी च विशिरा मन्थिनी तथा ॥२९
एकचन्द्रा मेघकर्णा मेघमाला विरोचना ।
एताश्चान्याश्च बहवो मातरो भरतर्षभ ॥ ३०
कार्तिकेयानुयायिन्यो नानारूपाः सहस्रशः ।
दीर्घनख्यो दीर्घदन्त्यो दीर्घतुण्ड्यश्च भारत ॥३१
सबला मधुराश्चैव यौवनस्थाः स्वलङ्कृताः ।

माहात्म्येन च संयुक्ताः कामरूपधरास्तथा॥३२
निर्मांसगात्र्यः श्वेताश्च तथा काञ्चनसन्निभाः ।
कृष्णमेघनिभाश्चान्या धूम्राश्च भरतर्षभ ॥ ३३
अरुणाभा महाभोगा दीर्घकेश्यः सिताम्बराः ।
ऊर्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो लम्बमेखलाः॥३४
लम्बोदर्यो लम्बकर्णास्तथा लम्बपयोधराः ।
ताम्राक्ष्यस्ताम्रवर्णाश्च हर्यक्ष्यश्च तथाऽपराः॥ ३५
वरदाः कामचारिण्यो नित्यं प्रमुदितास्तथा ।
याम्या रौद्रास्तथा सौम्याः कौबेर्योऽथ महाबलाः॥
वारुण्योऽथ च माहेन्द्र्यस्तथाऽऽग्नेय्यः परंतप ।
वायव्यश्चाथ कौमार्यो ब्राह्म्यश्च भरतर्षभ ॥ ३७
वैष्णव्यश्च तथा सौर्यो वाराह्यश्च महाबलाः ।
रूपेणाप्सरसां तुल्या मनोहार्यो मनोरमाः॥ ३८
परपुष्टोपमा वाक्ये तथर्द्ध्या धनदोपमाः ।
शक्रवीर्योपमा युद्धे दीप्त्या वह्निसमास्तथा॥ ३९
शत्रूणां विग्रहे नित्यं भयदास्ता भवन्त्युत ।
कामरूपधराश्चैव जवे वायुसमास्तथा ॥ ४०
अचिन्त्यबलवीर्याश्च तथाऽचिन्त्यपराक्रमाः ।
वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः ॥ ४१
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः ।
नानाभरणधारिण्यो नानामाल्याम्बरास्तथा॥४२
नानाविचित्रवेषाश्च नानाभाषास्तथैव च ।
एते चान्ये च मातॄणां गणाः शत्रुभयंकराः॥ ४३
अनुजग्मुर्महात्मानं त्रिदशेन्द्रस्य संमते ।
ततः शक्त्यस्त्रमदद्भगवान्पाकशासनः ॥ ४४
गुहाय राजशार्दूल विनाशाय सुरद्विषाम् ।
महास्वनां महाघण्टां द्योतमानां सितप्रभाम्॥४५
अरुणादित्यवर्णां च पताकां भरतर्षभ ।
ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम् ॥ ४६
उग्रां नानाप्रहरणां तपोवीर्यबलान्विताम् ।
अजेयां स्वगणैर्युक्तां नाम्ना सेनां धनञ्जयाम्॥४७
रुद्रतुल्यबलैर्युक्तां योधानामयुतैस्त्रिभिः ।
न सा विजानाति रणात्कदाचिद्विनिवर्तितुम् ४८
विष्णुर्ददौ वैजयन्तीं मालां बलविवर्धिनीम् ।
उमा ददौ विरजसी वाससी रविसप्रभे ॥ ४९
गङ्गा कमण्डलुं दिव्यममृतोद्भवमुत्तमम् ।
ददौ प्रीत्या कुमाराय दण्डं चैव बृहस्पतिः॥ ५०
गरुडो दयितं पुत्रं मयूरं चित्रबर्हिणम् ।
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम् ॥ ५१
छागं तु वरुणो राजा बलवीर्यसमन्वितम् ।
कृष्णाजिनं ततो ब्रह्मा ब्रह्मण्याय ददौ प्रभुः ।
समरेषु जयं चैव प्रददौ लोकभावनः ॥ ५२
सैनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह ।
शुशुभे ज्वलितोऽर्चिष्मान्द्वितीय इव पावकः॥५३
ततः पारिषदैश्चैव मातृभिश्च समन्वितः ।
ययौ दैत्यविनाशाय ह्लादयन्सुरपुङ्गवान् ॥ ५४
सा सेना नैर्ऋती भीमा सघण्टोच्छ्रितकेतना ।
सभेरीशङ्खमुरजा सायुधा सपताकिनी ॥ ५५
शारदी द्यौरिवाभाति ज्योतिर्भिरिव शोभिता ५६
ततो देवनिकायास्ते नानाभूतगणास्तथा ।
वादयामासुरव्यग्रा भेरीः शङ्खांश्च पुष्कलान्॥५७
पटहाञ्झर्झरांश्चैव क्रकचान्गोविषाणिकान् ।
आडम्बरान्गोमुखांश्च डिण्डिमांश्च महास्वनान्५८
तुष्टुवुस्ते कुमारं तु सर्वे देवाः सवासवाः ।
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ५९
ततः प्रीतो महासेनस्त्रिदशेभ्यो वरं ददौ ।
रिपून्हन्ताऽस्मि समरे ये वो वधचिकीर्षवः॥ ६०
प्रतिगृह्य वरं देवास्तस्माद्विबुधसत्तमात् ।
प्रीतात्मानो महात्मानो मेनिरे निहतान्रिपून् ६१
सर्वेषां भूतसङ्घानां हर्षान्नादः समुत्थितः ।
अपूरयत लोकांस्त्रीन्वरे दत्ते महात्मना ॥ ६२
स निर्ययौ महासेनो महत्या सेनया वृतः ।
वधाय युधि दैत्यानां रक्षार्थं च दिवौकसाम्॥ ६३
व्यवसायो जयो धर्मः सिद्धिर्लक्ष्मीर्धृतिः स्मृतिः।
महासेनस्य सैन्यानामग्रे जग्मुर्नराधिप ॥ ६४
स तया भीमया देवः शूलमुद्गरहस्तया ।
ज्वलितालातधारिण्या चित्राभरणवर्मया ॥ ६५
गदामुसलनाराचशक्तितोमरहस्तया ।
दृप्तसिंहनिनादिन्या विनद्य प्रययौ गुहः ॥ ६६
तं दृष्ट्वा सर्वदैतेया राक्षसा दानवास्तथा ।

व्यद्रवन्त दिशः सर्वा भयोद्विग्नाः समन्ततः ॥ ६७
अभ्यद्रवन्त देवास्तान्विविधायुधपाणयः ।
दृष्ट्वा च स ततः क्रुद्धः स्कन्दस्तेजोबलान्वितः ६८
शक्त्यस्त्रं भगवान्भीमं पुनःपुनरवाकिरत् ।
आदधच्चात्मनस्तेजो हविषेद्ध इवानलः ॥ ६९
अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनामिततेजसा ।
उल्काज्वाला महाराज पपात वसुधातले ॥ ७०
संह्रादयन्तश्च तथा निर्घाताश्चापतन्क्षितौ ।
यथान्तकालसमये सुघोराः स्युस्तथा नृप ॥ ७१
क्षिप्ता ह्येका यदा शक्तिः सुघोराऽनलसूनुना ।
ततः कोट्यो विनिष्पेतुः शक्तीनां भरतर्षभ ॥ ७२
ततः प्रीतो महासेनो जघान भगवान्प्रभुः ।
दैत्येन्द्रं तारकं नाम महाबलपराक्रमम् ॥ ७३
वृतं दैत्यायुतैर्वीरैर्बलिभिर्दशभिर्नृप ।
महिषं चाष्टभिः पद्मैर्वृतं सङ्ख्ये निजघ्निवान् ॥ ७४
त्रिपादं चायुतशतैर्जघान दशभिर्वृतम् ।
ह्रदोदरं निखर्वैश्च वृतं दशभिरीश्वरः ॥ ७५
जघानानुचरैः सार्धं विविधायुधपाणिभिः ।
तथाऽकुर्वन्त विपुलं नादं वध्यत्सु शत्रुषु ॥ ७६
कुमारानुचरा राजन्पूरयन्तो दिशो दश ।
ननृतुश्च ववल्गुश्च जहसुश्च मुदान्विताः ॥ ७७
शक्त्यस्त्रस्य तु राजेन्द्र ततोऽर्चिभिः समन्ततः ।
त्रैलोक्यं त्रासितं सर्वं जृम्भमाणाभिरेव च ॥ ७८
दग्धाः सहस्रशो दैत्या नादैः स्कन्दस्य चापरे ।
पताकयावधूताश्च हताः केचित्सुरद्विषः ॥ ७९
केचिद्घण्टारवत्रस्ता निषेदुर्वसुधातले ।
केचित्प्रहरणैश्छिन्ना विनिष्पेतुर्गतायुषः ॥ ८०
एवं सुरद्विषोऽनेकान्बलवानाततायिनः ।
जघान समरे वीरः कार्तिकेयो महाबलः ॥ ८१
बाणो नामाथ दैतेयो बलेः पुत्रो महाबलः ।
क्रौञ्चं पर्वतमाश्रित्य देवसङ्घानबाधत ॥ ८२
तमभ्ययान्महासेनः सुरशत्रुमुदारधीः ।
स कार्तिकेयस्य भयात्क्रौञ्चं शरणमीयिवान् ॥ ८३
ततः क्रौञ्चं महामन्युः क्रौञ्चनादनिनादितम् ।
शक्त्या बिभेद भगवान्कार्तिकेयोऽग्निदत्तया ॥ ८४
ससालस्कन्धशबलं त्रस्तवानरवारणम् ।
प्रोड्डीनोद्भ्रान्तविहगं विनिष्पतितपन्नगम् ॥ ८५
गोलाङ्गूलर्क्षसङ्घैश्च द्रवद्भिरनुनादितम् ।
कुरङ्गमविनिर्घोषनिनादितवनान्तरम् ॥ ८६
विनिष्पतद्भिः शरभैः सिंहैश्च सहसा द्रुतैः ।
शोच्यामपि दशां प्राप्तो रराजेव सपर्वतः ॥ ८७
विद्याधराः समुत्पेतुस्तस्य शृङ्गनिवासिनः ।
किन्नराश्च समुद्विग्नाः शक्तिपातरवोद्धताः ॥ ८८
ततो दैत्या विनिष्पेतुः शतशोऽथ सहस्रशः ।
प्रदीप्तात्पर्वतश्रेष्ठाद्विचित्राभरणस्रजः ॥ ८९
तान्निजघ्नुरतिक्रम्य कुमारानुचरा मृधे ।
स चैव भगवान्क्रुद्धो दैत्येन्द्रस्य सुतं तदा ॥ ९०
सहानुजं जघानाशु वृत्रं देवपतिर्यथा ।
बिभेद क्रौञ्चं शक्त्या च पावकिः परवीरहा ९१
बहुधा चैकधा चैव कृत्वाऽऽत्मानं महाबलः ।
शक्तिः क्षिप्ता रणे तस्य पाणिमेति पुनःपुनः ९२
एवंप्रभावो भगवांस्ततो भूयश्च पावकिः ।
शौर्याद्द्विगुणयोगेन तेजसा यशसा श्रिया ॥ ९३
क्रौञ्चस्तेन विनिर्भिन्नो दैत्याश्च शतशो हताः ॥ ९४
ततः स भगवान्देवो निहत्य विबुधद्विषः ।
सभाज्यमानो विबुधैः परं हर्षमवाप ह ॥ ९५
ततो दुन्दुभयो राजन्नेदुः शङ्खाश्च भारत ।
मुमुचुर्देवयोषाश्च पुष्पवर्षमनुत्तमम् ।
योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ॥ ९६
दिव्यगन्धमुपादाय ववौ पुण्यश्च मारुतः ।
गन्धर्वास्तुष्टुवुश्चैनं यज्वानश्च महर्षयः ॥ ९७
केचिदेनं व्यवस्यन्ति पितामहसुतं प्रभुम् ।
सनत्कुमारं सर्वेषां ब्रह्मयोनिं तमग्रजम् ॥ ९८
केचिन्महेश्वरसुतं केचित्पुत्रं विभावसोः ।
उमायाः कृत्तिकानां च गङ्गायाश्च वदन्त्युत ॥ ९९
एकधा च द्विधा चैव चतुर्धा च महाबलम् ।
योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ॥ १००
एतत्ते कथितं राजन्कार्तिकेयाभिषेचनम् ।
शृणु चैव सरस्वत्यास्तीर्थवंशस्य पुण्यताम् ॥ १०१

बभूव तीर्थप्रवरं हतेषु सुरशत्रुषु ।
कुमारेण महाराज त्रिविष्टपमिवापरम् ॥ १०२
ऐश्वर्याणि च तत्रस्थो ददावीशः पृथक्पृथक् ।
ददौ नैर्ऋतमुख्येभ्यस्त्रैलोक्यं पावकात्मजः १०३
एवं स भगवांस्तस्मिंस्तीर्थे दैत्यकुलान्तकः ।
अभिषिक्तो महाराज देवसेनापतिः सुरैः ॥ १०४
औशनं नाम तत्तीर्थं यत्र पूर्वमपांपतिः ।
अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ ॥ १०५
अस्मिंस्तीर्थवरे स्नात्वा स्कन्दं चाभ्यर्च्य लाङ्गली ।
ब्राह्मणेभ्यो ददौ रुक्मं वासांस्याभरणानि च १०६
उषित्वा रजनीं तत्र माधवः परवीरहा ।
पूज्यतीर्थवरं तच्च स्पृष्ट्वा तोयं च लाङ्गली ॥ १०७
हृष्टः प्रीतमनाश्चैव ह्यभवन्माधवोत्तमः ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ १०८
यथाऽभिषिक्तो भगवान्स्कन्दो देवैः समागतैः ।
'सेनानीश्च कृतो राजन्बाल एव महाबलः ॥' १०९

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

देवैर्वरुणस्य जलाधिपत्येऽभिषेचनम् ॥ १ ॥ बलभद्रस्याग्नितीर्थकौबेरतीर्थगमनं तन्महिमानुवर्णनं च ॥ २ ॥

जनमेजय उवाच ।
अत्यद्भुतमिदं ब्रह्मञ्श्रुतवानसि तत्त्वतः ।
अभिषेकं कुमारस्य विस्तरेण यथाविधि ॥ १
यच्छ्रुत्वा पूतमात्मानं विजानामि तपोधन ।
प्रहृष्टानि च रोमाणि प्रसन्नं च मनो मम ॥ २
अभिषेकं कुमारस्य दैत्यानां च वधं तथा ।
श्रुत्वा मे परमा प्रीतिर्भूयः कौतूहलं हि मे ॥ ३
अपांपतिः कथं ह्यस्मिन्नभिषिक्तः पुरा सुरैः ।
तन्मे ब्रूहि महाप्रज्ञ कुशलो ह्यसि सत्तम ॥ ४
वैशंपायन उवाच ।
शृणु राजन्निदं चित्रं पूर्वकाले यथाऽभवत् ॥ ५
आदौ कृतयुगे राजन्वर्तमाने यथाविधि ।
वरुणं देवताः सर्वाः समेत्येदमथाब्रुवन् ॥ ६
यथाऽस्मान्सुरराट् शक्रो भयेभ्यः पाति सर्वदा ।
तथा त्वमपि सर्वासां सरितां वै पतिर्भव ॥ ७
वासश्च ते सदा देव सागरे मकरालये ।
समुद्रोऽयं तव वशे भविष्यति नदीपतिः ॥ ८
सोमेन सार्धं च तव हानिवृद्धी भविष्यतः ।
एवमस्त्विति तान्देवान्वरुणो वाक्यमब्रवीत् ॥ ९
समागम्य ततः सर्वे वरुणं सागरालयम् ।
अपांपतिं प्रचक्रुर्हि विधिदृष्टेन कर्मणा ॥ १०
अभिषिच्य ततो देवा वरुणं यादसांपतिम् ।
जग्मुः स्वान्येव स्थानानि पूजयित्वा जलेश्वरम् ११
अभिषिक्तस्ततो देवैर्वरुणोऽपि महायशाः ।
सरितः सागरांश्चैव नदांश्चापि सरांसि च ।
पालयामास विधिना यथा देवाञ्शतक्रतुः ॥ १२
ततस्तत्राप्युपस्पृश्य दत्त्वा च विविधं वसु ।
अग्नितीर्थं महाप्राज्ञो जगामाथ प्रलम्बहा ।
नष्टो न दृश्यते यत्र शमीगर्भे हुताशनः ॥ १३
लोकालोकविनाशे च प्रादुर्भूते तदाऽनघ ।
उपतस्थुः सुरा यत्र सर्वलोकपितामहम् ॥ १४
अग्निः प्रनष्टो भगवान्कारणं च न विद्महे ।
सर्वभूतक्षयो राजन्संपादय विभोऽनलम् ॥ १५
जनमेजय उवाच ।
किमर्थं भगवानग्निः प्रनष्टो लोकभावनः ।
विज्ञातश्च कथं देवैस्तन्ममाचक्ष्व तत्त्वतः ॥ १६
वैशंपायन उवाच ।
भृगोः शापाद्भृशं भीतो जातवेदाः प्रतापवान् ।
शमीगर्भमथासाद्य ननाश भगवांस्ततः ॥ १७
प्रनष्टे तु तदा वह्नौ देवाः सर्वे सवासवाः ।
अन्वैषन्त तदा नष्टं ज्वलनं भृशदुःखिताः ॥ १८
ततोऽग्नितीर्थमासाद्य शमीगर्भस्थमेव हि ।
ददृशुर्ज्वलनं तत्र वसमानं यथाविधि ॥ १९
देवाः सर्वे नरव्याघ्र बृहस्पतिपुरोगमाः ।

ज्वलनं तं समासाद्य प्रीताऽभूवन्सवासवाः ॥ २०
पुनर्यथागतं जग्मुः सर्वभक्षश्च सोऽभवत् ।
भृगोः शापान्महाभाग यदुक्तं ब्रह्मवादिना ॥ २१
तत्राप्याप्लुत्य मतिमान्ब्रह्मशापान्मुमोच ह ॥ २२
तत्राप्लुत्य ततो ब्रह्मा सह देवैः प्रभुः पुरा ।
ससर्ज चान्नानि तथा देवतानां यथाविधि ॥ २३
तत्र स्नात्वा च दत्त्वा च वसूनि विविधानि च ।
कौबेरं प्रययौ तीर्थं यत्र तप्त्वा महत्तपः ॥ २४
धनाधिपत्यं संप्राप्तो राजन्नैलविलः प्रभुः ॥ २५
तत्रस्थमेव तं राजन्धनानि निधयस्तथा ।
उपतस्थुर्नरश्रेष्ठ तत्तीर्थं लाङ्गली बलः ॥ २६
गत्वा स्नात्वा च विधिवद्ब्राह्मणेभ्यो धनं ददौ ।
ददृशे तत्र तत्स्थानं कौबेरे काननोत्तमे ॥ २७
पुरा यत्र तपस्तप्तं विपुलं सुमहात्मना ।
यक्षराज्ञा कुबेरेण वरा लब्धाश्च पुष्कलाः ॥ २८
धनाधिपत्यं सख्यं च रुद्रेणामिततेजसा ।
सुरत्वं लोकपालत्वं पुत्रं च नलकूबरम् ॥ २९
यत्र लेभे महाबाहो धनाधिपतिरञ्जसा ।
अभिषिक्तश्च तत्रैव समागम्य मरुद्गणैः ॥ ३०
वाहनं चास्य तद्दत्तं हंसयुक्तं मनोजवम् ।
विमानं पुष्पकं दिव्यं नैर्ऋतैश्वर्यमेव च ॥ ३१
तत्राप्लुत्य बलो राजन्दत्त्वा दायांश्च पुष्कलान् ।
जगाम त्वरितो रामस्तीर्थं श्वेतानुलेपनः ॥ ३२
निषेवितं सर्वसत्त्वैर्नाम्ना बदरपाचनम् ।
नानर्तुकवनोपेतं सदा पुष्पफलं शुभम् ॥ ३३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

बलरामस्य बदरपाचनतीर्थगमनम् ॥ १ ॥ श्रुतावत्यरुन्धत्योर्महिमानुवर्णनम् ॥ २ ॥

वैशंपायन उवाच ।
ततस्तीर्थवरं रामो ययौ बदरपाचनम् ।
तपस्विसिद्धचरितं यत्र कन्या धृतव्रता ॥ १
भरद्वाजस्य दुहिता रूपेणाप्रतिमा भुवि ।
श्रुतावती नाम विभो कुमारी ब्रह्मचारिणी ॥ २
तपश्चचार सात्युग्रं नियमैर्बहुभिर्वृता ।
भर्ता मे देवराजः स्यादिति निश्चित्य भामिनी ॥ ३
समास्तस्या व्यतिक्रान्ता बह्व्यः कुरुकुलोद्वह ।
चरन्त्या नियमांस्तांस्तान्स्त्रीभिस्तीव्रान्सुदुश्चरान् ४
तस्यास्तु तेन वृत्तेन तपसा च विशांपते ।
भक्त्या च भगवान्प्रीतः परया पाकशासनः ॥ ५
आजगामाश्रमं तस्यास्त्रिदशाधिपतिः प्रभुः ।
आस्थाय रूपं विप्रर्षेर्वसिष्ठस्य महात्मनः ॥ ६
सा तं दृष्ट्वोग्रतपसं वसिष्ठं तपतां वरम् ।
आचारैर्मुनिभिर्दृष्टैः पूजयामास भारत ॥ ७
उवाच नियमज्ञा च कल्याणी सा प्रियंवदा ।
भगवन्मुनिशार्दूल किमाज्ञापयसि प्रभो ॥ ८
सर्वमद्य यथाशक्ति तव दास्यामि सुव्रत ।
शक्रभक्त्या च ते पाणिं न दास्यामि कथंचन ॥ ९
व्रतैश्च नियमैश्चैव तपसा च तपोधन ।
शक्रस्तोषयितव्यो वै मया त्रिभुवनेश्वरः ॥ १०
इत्युक्तो भगवान्देवः स्मयन्निव निरीक्ष्य ताम् ।
उवाच नियमं ज्ञात्वा सान्त्वयन्निव भारत ॥ ११
उग्रं तपश्चरसि वै विदिता मेऽसि सुव्रते ।
यदर्थमयमारम्भस्तव कल्याणि हृद्गतः ॥ १२
तच्च सर्वं यथाभूतं भविष्यति वरानने ।
तपसा लभ्यते सर्वं यथाभूतं भविष्यति ॥ १३
यथा स्थानानि दिव्यानि विबुधानां शुभानने ।
तपसा तानि प्राप्याणि तपोमूलं महत्सुखम् ॥ १४
इति कृत्वा तपो घोरं देहं संन्यस्य मानवाः ।

ऐलविलः कुबेरः ॥ २५ ॥

अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

देवत्वं यान्ति कल्याणि शृणुष्वैकं वचो मम ॥ १५
पश्च चैतानि सुभगे बदराणि शुभव्रते ।
इत्युक्त्वा तु भगवाञ्जगाम बलसूदनः ॥ १६
आमन्त्र्य तां तु कल्याणीं ततो जप्यं जजाप सः ।
अविदूरे ततस्तस्मादाश्रमात्तीर्थमुत्तमम् ॥ १७
तच्च तीर्थं महाराज यत्र जप्यं जजाप सः ।
इन्द्रतीर्थेति विख्यातं त्रिषु लोकेषु मानद ॥ १८
तस्य जिज्ञासनार्थं स भगवान्पाकशासनः ।
बदराणामपचनं चकार विबुधाधिपः ॥ १९
ततः प्रतप्ता सा राजन्वाग्यता विगतक्लमा ।
तत्परा शुचिसंवीता पावके समधिश्रयत् ।
अपचद्राजशार्दूल बदराणि महाव्रता ॥ २०
तस्याः पचन्त्याः सुमहान्कालोऽगात्पुरुषर्षभ ।
न च स्म तान्यपच्यन्त दिनं च क्षयमभ्यगात् ॥ २१
हुताशनेन दग्धश्च यस्तस्याः काष्ठसंचयः ।
अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथादहत् ॥ २२
पादौ प्रक्षिप्य सा पूर्वं पावके चारुदर्शना ।
दग्धौ दग्धौ पुनः पादावुपावर्तयतानघ ॥ २३
चरणे दह्यमाने च नाचिन्तयदनिन्दिता ।
दुःखं कमलपत्राक्षी महर्षिप्रियकाम्यया ॥ २४
न वैमनस्यं तस्यास्तु मुखभेदोऽथवाऽभवत् ।
शरीरमग्निना दीप्य जलमध्ये यथा स्थिता ॥ २५
तच्चास्याः पचने यत्नं न न्यवर्तत भारत ।
सर्वथा बदराण्येव पक्तव्यानीति कन्यका ॥ २६
सा तन्मनसि कृत्वैव महर्षेर्वचनं शुभा ।
अपचद्बदराण्येव न चापच्यन्त भारत ॥ २७
तस्यास्तु चरणौ वह्निर्ददाह भगवान्स्वयम् ।
न च तस्या मनोदुःखं स्वल्पमप्यभवत्तदा ॥ २८
अथ तत्कर्म दृष्ट्वाऽस्याः प्रीतस्त्रिभुवनेश्वरः ।
ततः संदर्शयामास कन्यायै रूपमात्मनः ॥ २९
उवाच च सुरश्रेष्ठस्तां कन्यां सुदृढव्रताम् ।
प्रीतोऽस्मि ते शुभे भक्त्या तपसा नियमेन च ३०
तस्माद्योऽभिमतः कामः स ते संपत्स्यते शुभे ।
देहं त्यक्त्वा महाभागे त्रिदिवे मयि वत्स्यसि ३१
इदं च ते तीर्थवरं स्थिरं लोके भविष्यति ।
सर्वपापापहं सुभ्रु नाम्ना बदरपाचनम् ।
विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिरभिप्लुतम् ॥ ३२
अस्मिन्खलु महाभागे शुभे तीर्थवरेऽनघे ।
त्यक्त्वा सप्तर्षयो जग्मुर्हिमवन्तमरुन्धतीम् ॥ ३३
ततस्ते वै महाभागा गत्वा तत्र सुसंशिताः ।
वृत्त्यर्थं फलमूलानि समाहर्तुं ययुः किल ॥ ३४
तेषां वृत्त्यर्थिनां तत्र वसतां हिमवद्वने ।
अनावृष्टिरनुप्राप्ता तदा द्वादशवार्षिकी ॥ ३५
ते कृत्वा चाश्रमं तत्र न्यवसन्त तपस्विनः ।
अरुन्धत्यपि कल्याणी तपोनित्याऽभवत्तदा ३६
अरुन्धतीं ततो दृष्ट्वा तीव्रं नियममास्थिताम् ।
अथागमत्त्रिनयनः सुप्रीतो वरदस्तदा ॥ ३७
ब्राह्मं रूपं ततः कृत्वा महादेवो महायशाः ।
तामभ्येत्याब्रवीद्देवो भिक्षामिच्छाम्यहं शुभे ॥ ३८
प्रत्युवाच ततः सा तं ब्राह्मणं चारुदर्शना ।
क्षीणोऽन्नसंचयो विप्र बदराणीह भक्षय ॥ ३९
ततोऽब्रवीन्महादेवः पचस्वैतानि सुव्रते ।
इत्युक्ता साऽपचत्तानि ब्राह्मणप्रियकाम्यया ।
अधिश्रित्य समिद्धेऽग्नौ बदराणि यशस्विनी ॥ ४०
दिव्या मनोरमाः पुण्याः कथाः शुश्राव सा तदा ।
अतीता सा त्वनावृष्टिर्घोरा द्वादशवार्षिकी ॥ ४१
अनश्नन्त्याः पचन्त्याश्च शृण्वन्त्याश्च कथाः शुभाः ।
दिनोपमः स तस्याथ कालोऽतीतः सुदारुणः ४२
ततस्तु मुनयः प्राप्ताः फलान्यादाय पर्वतात् ।
ततः स भगवान्प्रीतः प्रोवाचारुन्धतीं ततः ॥ ४३
उपसर्पस्व धर्मज्ञे यथापूर्वमिमानृषीन् ।
प्रीतोऽस्मि तव धर्मज्ञे तपसा नियमेन च ॥ ४४
ततः संदर्शयामास स्वरूपं भगवान्हरः ।
ततोऽब्रवीत्तदा तेभ्यस्तस्याश्च चरितं महत् ॥ ४५

एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

उपावर्तयत अग्रेऽग्रे प्रसारितवती ॥ २३ ॥ तच्चास्या वचनं नित्यमवर्तद्धृदि भारत इति झ. पाठः ॥ २६ ॥

भवद्भिर्हिमवत्पृष्ठे यत्तपः समुपार्जितम् ।
अस्याश्च यत्तपो विप्रा न समं तन्मतं मम ॥ ४६
अनया हि तपस्विन्या तपस्तप्तं सुदुश्चरम् ।
अनश्नन्त्या पचन्त्या च समा द्वादश पारिताः ४७
ततः प्रोवाच भगवांस्तामेवारुन्धतीं पुनः ।
वरं वृणीष्व कल्याणि यत्तेऽभिलषितं हृदि ॥४८
साऽब्रवीत्पृथुताम्राक्षी देवं सप्तर्षिसंसदि ।
भगवान्यदि मे प्रीतस्तीर्थं स्यादिदमद्भुतम् ॥ ४९
सिद्धदेवर्षिदयितं नाम्ना बदरपाचनम् ।
तथाऽस्मिन्देवदेवेश त्रिरात्रमुषितः शुचिः ॥ ५०
प्राप्नुयादुपवासेन फलं द्वादशवार्षिकम् ।
एवमस्त्विति तां देवः प्रत्युवाच तपस्विनीम् ॥५१
सप्तर्षिभिः स्तुतो देवस्ततो लोकं ययौ तदा ।
ऋषयो विस्मयं जग्मुस्तां दृष्ट्वा चाप्यरुन्धतीम् ।
अश्रान्तां चाविवर्णां च क्षुत्पिपासाऽसमायुताम् ॥
एवं सिद्धिः परा प्राप्ता अरुन्धत्या विशुद्धया ।
यथा त्वया महाभागे मदर्थं संशितव्रते ॥ ५३
विशेषो हि त्वया भद्रे व्रते ह्यस्मिन्समर्पितः ।
तथा चेदं ददाम्यद्य नियमेन सुतोषितः ।
विशेषं तव कल्याणि प्रयच्छामि वरं वरे ॥ ५४
अरुन्धत्या वरस्तस्या यो दत्तो वै महात्मना ।
तस्य चाहं प्रभावेन तव कल्याणि तेजसा ।
प्रवक्ष्यामि परं भूयो वरमत्र यथाविधि ॥ ५५
यस्त्वेकां रजनीं तीर्थे वत्स्यते सुसमाहितः ।
स स्नात्वा प्राप्स्यते लोकान्देहन्यासात्सुदुर्लभान् ॥
इत्युक्त्वा भगवान्देवः सहस्राक्षः प्रतापवान् ।
श्रुतावतीं ततः पुण्यां जगाम त्रिदिवं पुनः ॥ ५७
गते वज्रधरे राजंस्तत्र वर्षं पपात ह ।
पुष्पाणां भरतश्रेष्ठ दिव्यानां पुण्यगन्धिनाम् ॥५८
देवदुन्दुभयश्चापि नेदुस्तत्र महास्वनाः ।
मारुतश्च ववौ पुण्यः पुण्यगन्धो विशांपते ॥ ५९
उत्सृज्य तु शुभा देहं जगामास्य च भार्यताम् ।
तपसोग्रेण तं लब्ध्वा तेन रेमे सहाच्युत ॥ ६०
जनमेजय उवाच ।
का तस्या भगवन्माता क्व संवृद्धा च शोभना ।
श्रोतुमिच्छाम्यहं विप्र परं कौतूहलं हि मे ॥ ६१
वैशंपायन उवाच ।
भरद्वाजस्य विप्रर्षेः स्कन्नं रेतो महात्मनः ।
दृष्ट्वाऽप्सरसमायान्तीं घृताचीं पृथुलोचनाम् ॥६२
स तु जग्राह तद्रेतः करेण जपतां वरः ।
तदाऽपतत्पर्णपुटे तत्र सा संभवत्सुता ॥ ६३
तस्यास्तु जातकर्मादि कृत्वा सर्वं तपोधनः ।
नाम चास्याः स कृतवान्भरद्वाजो महामुनिः ॥ ६४
श्रुतावतीति धर्मात्मा देवर्षिगणसंसदि ।
स च तामाश्रमे न्यस्य जगाम हिमवद्वनम् ॥ ६५
तत्राप्युपस्पृश्य महानुभावो
वसूनि दत्त्वा च महाद्विजेभ्यः ।
जगाम तीर्थं सुसमाहितात्मा
शक्रस्य वृष्णिप्रवरस्तदानीम् ॥ ६६

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

## पञ्चाशोऽध्यायः ॥ ५० ॥

बलभद्रस्येन्द्रतीर्थादिगमनम् ॥ १ ॥ तत्तत्तीर्थमाहात्म्यकथनम् ॥ २ ॥

वैशंपायन उवाच ।
इन्द्रतीर्थं ततो गत्वा यदूनां प्रवरो बली ।
विप्रेभ्यो धनरत्नानि ददौ स्नात्वा यथाविधि ॥ १
तत्र ह्यमरराजो वै ईजे क्रतुशतेन ह ।
बृहस्पतेश्च देवेशः प्रददौ विपुलं धनम् ॥ २
अनर्गलान्सजारूथ्यान्सर्वान्विविधदक्षिणान् ।
आजहार क्रतूंस्तत्र यथोक्तं वेदपारगैः ॥ ३
तान्क्रतून्भरतश्रेष्ठ शतकृत्वो महाद्युतिः ।
पूरयामास विधिवत्ततः ख्यातः शतक्रतुः ॥ ४
तस्य नाम्ना तु तत्तीर्थं शिवं पुण्यं सनातनम् ।

इन्द्रतीर्थमिति ख्यातं सर्वपापप्रमोचनम् ॥ ५
उपस्पृश्य च तत्रापि विधिवन्मुसलायुधः ।
ब्राह्मणान्पूजयित्वा च पानाच्छादनभोजनैः ॥ ६
शुभं तीर्थवरं तस्माद्रामतीर्थं जगाम ह ।
यत्र रामो महाभागो भार्गवः सुमहातपाः ॥ ७
असकृत्पृथिवीं कृत्वा हतक्षत्रियपुङ्गवाम् ।
उपाध्यायं पुरस्कृत्य काश्यपं मुनिसत्तमम् ॥ ८
अयजद्वाजपेयेन सोऽश्वमेधशतेन च ।
प्रददौ दक्षिणार्थं च पृथिवीं सागराम्बराम् ॥ ९
रामो दत्त्वा धनं तत्र द्विजेभ्यो जनमेजय ।
उपस्पृश्य यथान्यायं पूजयित्वा तथा द्विजान् १०
पुण्यतीर्थे शुभे देशे वसु दत्त्वा हलायुधः ।
मुनींश्चैवाभिवाद्याथ यमुनातीर्थमागमत् ।
यत्रानयामास तदा राजसूयमपांपतिः ॥ ११
दितेः सुतान्महाभागो वरुणो वै सितप्रभः ।
यत्र निर्जित्य सङ्ग्रामे मानुषान्दानवांस्तथा ।
गन्धर्वान्राक्षसांश्चैव वरुणः परवीरहा ॥ १२
तस्मिन्क्रतुवरे वृत्ते सङ्ग्रामः समजायत ।
देवानां दानवानां च त्रैलोक्यस्य भयावहः॥१३
राजसूये क्रतुश्रेष्ठे निवृत्ते जनमेजय ।
जायते सुमहाघोरः संक्षयः क्षत्रियान्प्रति ॥ १४
हलायुधस्तदा रामस्तस्मिंस्तीर्थवरे शुभे ।
तत्र स्नात्वा च दत्त्वा च द्विजेभ्यो वसु माधवः॥१५
वनमाली ततो हृष्टः स्तूयमानो द्विजातिभिः ।
तस्मादादित्यतीर्थं च जगाम कमलेक्षणः ॥ १६
यत्रेष्ट्वा भगवाञ्ज्योतिर्भास्करो राजसत्तम ।
ज्योतिषामाधिपत्यं च प्रभावं चाभ्यपद्यत ॥ १७
तस्या नद्यास्तु तीरे वै सर्वे देवाः सवासवाः ।
विश्वेदेवाः समरुतो गन्धर्वाप्सरसश्च ह ॥ १८
द्वैपायनः शुकश्चैव कृष्णश्च मधुसूदनः ।
यक्षाश्च राक्षसाश्चैव पिशाचाश्च विशांपते ॥ १९
एते चान्ये च बहवो योगसिद्धाः सहस्रशः ।
तस्मिंस्तीर्थे सरस्वत्याः शिवे पुण्ये परंतप ॥ २०
तत्र हत्वा पुरा विष्णुरसुरौ मधुकैटभौ ।
आप्लुत्य भरतश्रेष्ठ तीर्थप्रवर उत्तमे ॥ २१
द्वैपायनश्च धर्मात्मा तत्रैवाप्लुत्य भारत ।
संप्राप्तः परमं योगं सिद्धिं च परमां गतः ॥ २२
असितो देवलश्चैव तस्मिन्नेव महातपाः ।
परमं योगमास्थाय ऋषिर्योगमवाप्तवान् ॥ २३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

## एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

देवलजैगीषव्ययोश्चरित्रकीर्तनम् ॥ १ ॥ बलभद्रस्यादित्यतीर्थात्सोमतीर्थगमनम् ॥ २ ॥

वैशंपायन उवाच ।
तस्मिन्नेव तु धर्मात्मा वसति स्म तपोधनः ।
गार्हस्थ्यं धर्ममास्थाय ह्यसितो देवलः पुरा ॥ १
धर्मनित्यः शुचिर्दान्तो यज्ञशीलो महातपाः ।
कर्मणा मनसा वाचा समः सर्वेषु जन्तुषु ॥ २
अक्रोधनो महाराज तुल्यनिन्दात्मसंस्तुतिः ।
प्रियाप्रिये तुल्यवृत्तिर्यमवत्समदर्शनः ॥ ३
काञ्चने लोष्ठके चैव समदर्शी महातपाः ।
देवानपूजयन्नित्यमतिथींश्च द्विजैः सह ।
ब्रह्मचर्यरतो नित्यं सदा धर्मपरायणः ॥ ४
ततोऽभ्येत्य महाभाग योगमास्थाय भिक्षुकः ।
जैगीषव्यो मुनिर्धीमांस्तस्मिंस्तीर्थे समाहितः ॥ ५
देवलस्याश्रमे राजन्न्यवसत्स महाद्युतिः ।
योगनित्यो महाराज सिद्धिं प्राप्तो महातपाः ॥ ६
तं तत्र वसमानं तु जैगीषव्यं महामुनिम् ।
देवलो दर्शयन्नेव नैवायुञ्जत धर्मतः ॥ ७

आनयामास मुनीनित्यनुषज्यते । राजसूयं कर्तुमिति शेषः ॥ ११ ॥ पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

नैवामुञ्चत धर्मतः इति छ. पाठः ॥ ७ ॥

एवं तयोर्महाराज दीर्घकालो व्यतिक्रमत् ॥ ८
जैगीषव्यो मुनिस्तं तु ददर्शाथ स केवलम् ।
आहारकाले मतिमान्परिव्राड् जनमेजय ॥ ९
उपातिष्ठत धर्मज्ञो भैक्षकाले स देवलम् ।
स दृष्ट्वा भिक्षुरूपेण प्राप्तं तत्र महामुनिम् ।
गौरवं परमं चक्रे प्रीतिं च विपुलां तथा ॥ १०
देवलस्तु यथाशक्ति पूजयामास भारत ।
ऋषिदृष्टेन विधिना समा बह्वीः समाहितः ॥११
कदाचित्तस्य नृपते देवलस्य महात्मनः ।
चिन्ता सुमहती जाता मुनिं दृष्ट्वा महाद्युतिम् ॥१२
समास्तु समतिक्रान्ता बह्वयः पूजयतो मम ।
न चायमलसो भिक्षुरभ्यभाषत किंचन ॥ १३
एवं विगणयन्नेव स जगाम महोदधिम् ।
अन्तरिक्षचरः श्रीमान्कलशं गृह्य देवलः ॥ १४
गच्छन्नेव स धर्मात्मा समुद्रं सरितां पतिम् ।
जैगीषव्यं ततोऽपश्यद्गतं प्रागेव भारत ॥ १५
ततः सविस्मयश्चिन्तां जगामाथासितप्रभः ।
कथं भिक्षुरयं प्राप्तः समुद्रे स्नात एव च ॥ १६
इत्येवं चिन्तयामास महर्षिरसितस्तदा ।
स्नात्वा समुद्रे विधिवच्छुचिर्जप्यं जजाप सः ॥१७
कृतजप्याह्निकः श्रीमानाश्रमं च जगाम ह ।
कलशं जलपूर्णं वै गृहीत्वा जनमेजय ॥ १८
ततः स प्रविशन्नेव स्वमाश्रमपदं मुनिः ।
आसीनमाश्रमे तत्र जैगीषव्यमपश्यत ॥ १९
न व्याहरति चैवैनं जैगीषव्यः कथंचन ।
काष्ठभूतोऽऽश्रमपदे वसति स्म महातपाः ॥ २०
तं दृष्ट्वा चाप्लुतं तोये सागरे सागरोपमम् ।
प्रविष्टमाश्रमं चापि पूर्वमेव ददर्श सः ॥ २१
असितो देवलो राजंश्चिन्तयामास बुद्धिमान् ।
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥२२
चिन्तयामास राजेन्द्र तदा स मुनिसत्तमः ।
मया दृष्टः समुद्रे च आश्रमे च कथंन्वयम् ॥२३
एवं विगणयन्नेव स मुनिर्मन्त्रपारगः ।
उत्पपाताश्रमात्तस्मादन्तरिक्षं विशांपते ।
जिज्ञासार्थं तदा भिक्षोर्जैगीषव्यस्य देवलः ॥२४
सोऽन्तरिक्षचरान्सिद्धान्समपश्यत्समाहितान् ।
जैगीषव्यं च तैः सिद्धैः पूज्यमानमपश्यत ॥२५
ततोऽसितः सुसंरब्धो व्यवसायी दृढव्रतः ।
अपश्यद्वै दिवं यातं जैगीषव्यं स देवलः ॥ २६
तस्माच्च पितृलोकं तं व्रजन्तं सोऽन्वपश्यत ।
पितृलोकाच्च तं यातं याम्यं लोकमपश्यत ॥ २७
'तस्मादादित्यलोकं च व्रजन्तं सोऽन्वपश्यत ।'
तस्मादपि समुत्पत्य सोमलोकमभिष्टुतम् ।
व्रजन्तमन्वपश्यत्स जैगीषव्यं स देवलः ॥ २८
लोकान्समुत्पतन्तं तु शुभानेकान्तयाजिनाम् ।
ततोऽग्निहोत्रिणां लोकांस्ततश्चाप्युत्पपात ह ॥२९
दर्शं च पौर्णमासं च ये यजन्ति तपोधनाः ।
तेभ्यः स ददृशे धीमाँल्लोकेभ्यः पशुयाजिनाम् ।
व्रजन्तं लोकममलमपश्यद्देवपूजितम् ॥ ३०
चातुर्मास्यैर्बहुविधैर्यजन्ते ये तपोधनाः ।
तेषां स्थानं ततो यातं तथाऽग्निष्टोमयाजिनाम् ३१
अग्निष्टुतेन च तथा ये यजन्ति तपोधनाः ।
तत्स्थानमनुसंप्राप्तमन्वपश्यत देवलः ॥ ३२
वाजपेयं क्रतुवरं तथा बहुसुवर्णकम् ।
आहरन्ति महाप्राज्ञास्तेषां लोकेष्वपश्यत ॥ ३३
यजन्ते राजसूयेन पुण्डरीकेण चैव ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ३४
अश्वमेधं क्रतुवरं नरमेधं तथैव च ।
आहरन्ति नरश्रेष्ठास्तेषां लोकेष्वपश्यत ॥ ३५
सर्वमेधं च दुष्प्रापं तथा सौत्रामणिं च ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ३६
द्वादशाहैश्च सत्रैश्च यजन्ते विविधैर्नृप ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ३७
मैत्रावरुणयोर्लोकानादित्यानां तथैव च ।
सलोकतामनुप्राप्तमपश्यत ततोऽसितः ॥ ३८
रुद्राणां च वसूनां च स्थानं यच्च बृहस्पतेः ।

व्यतिक्रमत् व्यत्यक्रामत् ॥ ८ ॥

असितप्रभ इति छ. पाठः ॥ १६ ॥

तानि सर्वाण्यतीतं च समपश्यत्ततोऽसितः ॥३९
आरुह्य च गवां लोकं प्रयान्तं ब्रह्मसत्रिणाम् ।
लोकानपश्यद्गच्छन्तं जैगीषव्यं ततोऽसितः ॥४०
त्रींल्लोकान्प्रवरान्विप्रमुत्पतन्तं स्वतेजसा ।
पतिव्रतानां लोकांश्च व्रजन्तं सोऽन्वपश्यत ॥४१
ततो मुनिवरं भूयो जैगीषव्यमथासितः ।
नान्वपश्यत लोकस्थमन्तर्हितमरिंदम ॥ ४२
सोऽचिन्तयन्महाभागो जैगीषव्यस्य देवलः ।
प्रभावं सुव्रतत्वं च सिद्धिं योगस्य चातुलाम् ॥ ४३
असितोऽपृच्छत तदा सिद्धाँल्लोकेषु सत्तमान् ।
प्रयतः प्राञ्जलिर्भूत्वा धीरस्तान्ब्रह्मचारिणः ॥ ४४
जैगीषव्यं न पश्यामि तं शंसन्तु तपोधनाः ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ४५
सिद्धा ऊचुः ।
शृणु देवल भूतार्थं शंसतां नो दृढव्रत ।
जैगीषव्यो गतो लोकं शाश्वतं ब्रह्मणोऽक्षयम् ॥४६
वैशंपायन उवाच ।
स श्रुत्वा वचनं तेषां सिद्धानां ब्रह्मचारिणाम् ।
असितो देवलस्तूर्णमुत्पपात पपात च ॥ ४७
ततः सिद्धास्त ऊचुर्हि देवलं पुनरेव ह ।
न देवलगतिस्तत्र तव गन्तुं तपोधन ।
ब्रह्मणः सदने विप्र जैगीषव्यो यदाप्तवान् ॥ ४८
वैशंपायन उवाच ।
तेषां तद्वचनं श्रुत्वा सिद्धानां देवलः पुनः ।
आनुपूर्व्येण लोकांस्तान्सर्वानवततार ह ॥ ४९
स्वमाश्रमपदं पुण्यमाजगाम पतङ्गवत् ।
प्रविशन्नेव चापश्यज्जैगीषव्यं स देवलः ॥ ५०
ततो बुद्ध्या व्यगणयद्देवलो धर्मयुक्तया ।
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ ५१
ततोऽब्रवीन्महात्मानं जैगीषव्यं स देवलः ।
विनयावनतो राजन्नुपसर्प्य महामुनिम् ।
मोक्षधर्मं समास्थातुमिच्छेयं भगवन्नहम् ॥ ५२
तस्य तद्वचनं श्रुत्वा उपदेशं चकार सः ।
विधिं योगस्य परमं कार्याकार्यस्य शास्त्रतः ॥ ५३
संन्यासे कृतबुद्धिं तं ततो दृष्ट्वा महातपाः ।
सर्वाश्चास्य क्रियाश्चक्रे विधिदृष्टेन कर्मणा ॥ ५४
संन्यासे कृतबुद्धिं तं भूतानि पितृभिः सह ।
ततो दृष्ट्वा प्ररुरुदुः कोऽस्मान्संविभजिष्यति॥५५
देवलस्तु वचः श्रुत्वा भूतानां करुणं तथा ।
दिशो दश व्याहरतां मोक्षं त्यक्तुं मनो दधे ॥ ५६
ततस्तु फलमूलानि पवित्राणि च भारत ।
पुष्पाण्योषधयश्चैव रोरूयन्ते सहस्रशः ॥ ५७
पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्मतिः ।
अभयं सर्वभूतेभ्यो यो दत्त्वा नावबुध्यते ॥ ५८
ततो भूयो व्यगणयत्स्वबुद्ध्या मुनिसत्तमः ।
मोक्षे गार्हस्थ्यधर्मे वा किंनु श्रेयस्करं भवेत् ॥ ५९
इति निश्चित्य मनसा देवलो राजसत्तम ।
त्यक्त्वा गार्हस्थ्यधर्मं स मोक्षधर्ममरोचयत् ॥ ६०
एवमादीनि संचिन्त्य देवलो निश्चयान्वितः ।
प्राप्तवान्परमां सिद्धिं परं योगं च भारत ॥ ६१
ततो देवाः समागम्य बृहस्पतिपुरोगमाः ।
जैगीषव्यं तपश्चास्य प्रशंसन्ति तपस्विनः ॥ ६२
अथाब्रवीदृषिवरो देवान्वै नारदस्तथा ।
जैगीषव्ये तपो नास्ति विस्मापयति योऽसितम् ६३
तमेवंवादिनं धीरं प्रत्यूचुस्ते दिवौकसः ।
नैवमित्येव शंसन्तो जैगीषव्यं महामुनिम् ॥ ६४
नातः परतरं किंचित्तुल्यमस्ति प्रभावतः ।
तेजसस्तपसश्चास्य योगस्य च महात्मनः ॥ ६५
एवं प्रभावो धर्मात्मा जैगीषव्यस्तथाऽसितः ।
तयोरिदं स्थानवरं तीर्थं चैव महात्मनोः ॥ ६६

भूतार्थं यथाभूतार्थम् ॥ ४६ ॥ उत्पपात ब्रह्मलोकं गन्तुमिति शेषः । पपात च गगनात् ॥ ४७ ॥ सर्वाः क्रिया उत्सर्गेष्ट्यादयः ॥ ५४ ॥ मोक्षं संन्यासं त्यक्तुं मनो दधे । उत्सृष्टानामग्नीनां पुनराधानं कर्तुमैच्छत् ॥ ५६ ॥ असितो देवलः ॥ ६६ ॥ एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

तत्राप्युपस्पृश्य ततो महात्मा
दत्त्वा च वित्तं हलभृद्द्विजेभ्यः ।
अवाप्य धर्मं परमार्थकर्मा
जगाम सोमस्य महत्सुतीर्थम् ॥ ६७

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

दधीचिसारस्वतयोश्चरितवर्णनम् ॥ १ ॥

वैशंपायन उवाच ।
यत्रेजिवानुडुपती राजसूयेन भारत ।
यस्मिन्वृत्ते महानासीत्संग्रामस्तारकामयः ॥ १
तत्राप्युपस्पृश्य बलो दत्त्वा दानानि चात्मवान् ।
सारस्वतस्य धर्मात्मा मुनेस्तीर्थं जगाम ह ॥ २
यत्र द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान् ।
वेदानध्यापयामास पुरा सारस्वतो मुनिः ॥ ३
जनमेजय उवाच ।
कथं द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान् ।
वेदानध्यापयामास पुरा सारस्वतो मुनिः ॥ ४
वैशंपायन उवाच ।
आसीत्पूर्वं महाराज मुनिर्धीमान्महातपाः ।
दधीचिरिति विख्यातो ब्रह्मचारी जितेन्द्रियः ॥५
तस्यातितपसः शक्रो बिभेति सततं विभो ।
न स लोभयितुं शक्यः फलैर्बहुविधैरपि ॥ ६
प्रलोभनार्थं तस्याथ प्राहिणोत्पाकशासनः ।
दिव्यामप्सरसं पुण्यां दर्शनीयामलम्बुसाम् ॥ ७
तस्य तर्पयतो देवान्सरस्वत्यां महात्मनः ।
समीपतो महाराज सोपातिष्ठत भामिनी ॥ ८
तां दिव्यवपुषं दृष्ट्वा तस्यर्षेर्भावितात्मनः ।
रेतः स्कन्नं सरस्वत्यां तत्सा जग्राह निम्नगा ॥ ९
कुक्षौ चाप्यदधद्दृष्टा तद्रेतः पुरुषर्षभ ।
सा दधार च तं गर्भं पुत्रहेतोर्महात्मनः ॥ १०
सुषुवे चापि समये पुत्रं सारस्वतं वरम् ।
जगाम पुत्रमादाय तमृषिं प्रति च प्रभो ॥ ११
ऋषिसंसदि तं दृष्ट्वा सा नदी मुनिसत्तमम् ।
ततः प्रोवाच राजेन्द्र ददती पुत्रमस्य तम् ।
ब्रह्मर्षे तव पुत्रोऽयं त्वद्भक्त्या धारितो मया ॥ १२
दृष्ट्वा तेऽप्सरसं रेतो यत्स्कन्नं प्रागलम्बुसाम् ।
तत्कुक्षिणाऽहं ब्रह्मर्षे त्वद्भक्त्या धृतवत्यहम् ॥१३
न विनाशमिदं गच्छेत्त्वत्तेज इति निश्चयात् ।
प्रतिगृह्णीष्व पुत्रं स्वं मया दत्तमनिन्दितम् ॥ १४
इत्युक्तः प्रतिजग्राह प्रीतिं चावाप पुष्कलाम् ।
पितृवच्चोपजिघ्रत्तं मूर्ध्नि प्रेम्णा द्विजोत्तमः ॥ १५
परिष्वज्य चिरं कालं तदा भरतसत्तम ।
सरस्वत्यै वरं प्रादात्प्रीयमाणो महामुनिः ॥ १६
विश्वेदेवाः सपितरो गन्धर्वाप्सरसां गणाः ।
तृप्तिं यास्यन्ति सुभगे तर्प्यमाणास्तवाम्भसा १७
इत्युक्त्वा स तु तुष्टाव वचोभिर्वै महानदीम् ।
प्रीतः परमहृष्टात्मा यथावच्छृणु पार्थिव ॥ १८
दधीचिरुवाच ।
प्रसुताऽसि महाभागे सरसो ब्रह्मणः पुरा ।
जानन्ति त्वां सरिच्छ्रेष्ठे मुनयः संशितव्रताः॥१९
मम प्रियकरी चापि सततं प्रियदर्शने ।
तस्मात्सारस्वतं पुत्रमदधा वरवर्णिनि ॥ २०
तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः ।
सारस्वत इति ख्यातो भविष्यति महातपाः २१
एष द्वादशवार्षिक्यामनावृष्ट्यां द्विजर्षभान् ।
सारस्वतो महाभागे वेदानध्यापयिष्यति ॥ २२
पुण्याभ्यश्च सरिद्भ्यस्त्वं सदा पुण्यतमा शुभे ।
भविष्यसि महाभागे मत्प्रसादात्सरस्वति ॥ २३
एवं सा संस्तुता तेन वरं लब्ध्वा महानदी ।

दधीच इति इति छ. झ. पाठः ॥ ५॥ ऋषिसंसादितं दृष्ट्वेति क. छ. पाठः । तत्र संसादितं परिवारितमित्यर्थः ॥ १२ ॥

पुत्रमादाय मुदिता जगाम भरतर्षभ ॥ २४
एतस्मिन्नेव काले तु विरोधे देवदानवैः ।
शक्रः प्रहरणान्वेषी लोकांस्त्रीन्विचचार ह ॥ २५
न चोपलेभे भगवाञ्शक्रः प्रहरणं तदा ।
यद्वै तेषां भवेद्योग्यं वधाय विबुधद्विषाम् ॥ २६
ततोऽब्रवीत्सुराञ्शक्रो न मे शक्याः सुरारयः ।
ऋतेऽस्थिभिर्दधीचस्य निहन्तुं त्रिदशद्विषः ॥ २७
तस्माद्यत्नादृषिश्रेष्ठो याच्यतां कार्यसिद्धये ।
दधीचास्थीनि देहीति तैर्वधिष्यामहे रिपून् ॥ २८
स च तैर्याचितोऽस्थीनि यत्नादृषिवरस्तदा ।
साहाय्यं नः कुरुष्वेति चकारैवाविचारयन् ॥२९
स लोकानक्षयान्प्राप्तो देवप्रियकरस्तदा ।
तस्यास्थिभिरथो शक्रः संप्रहृष्टमनास्तदा ॥ ३०
कारयामास दिव्यानि नानाप्रहरणान्युत ।
गदा वज्राणि चक्राणि गुरून्दण्डांश्च पुष्कलान् ३१
स हि तीव्रेण तपसा संभृतः परमर्षिणा ।
प्रजापतिसुतेनाथ भृगुणा लोकभावनः ॥ ३२
अतिकायः स तेजस्वी लोकसारो विनिर्मितः ।
जज्ञे शैलगुरुः प्रांशुर्महिम्ना प्रथितः प्रभुः ॥ ३३
नित्यमुद्विजते चास्य तेजसः पाकशासनः ॥ ३४
तेन वज्रेण भगवान्मन्त्रयुक्तेन भारत ।
भृशं क्रोधविसृष्टेन ब्रह्मतेजोद्भवेन च ।
दैत्यदानववीराणां जघान नवतीर्नव ॥ ३५
अथ काले व्यतिक्रान्ते महत्यतिभयंकरी ।
अनावृष्टिरनुप्राप्ता राजन्द्वादशवार्षिकी ॥ ३६
तस्यां द्वादशवार्षिक्यामनावृष्ट्यां महर्षयः ।
वृत्त्यर्थं प्राद्रवन्राजन्क्षुधार्ताः सर्वतोदिशम् ॥ ३७
दिग्भ्यस्तान्प्रद्रुतान्दृष्ट्वा मुनिः सारस्वतस्तदा ।
गमनाय मतिं चक्रे तं प्रोवाच सरस्वती ॥ ३८
न गन्तव्यमितः पुत्र तवाहारमहं सदा ।
दास्यामि मत्स्यप्रवरानुष्यतामिह भारत ॥ ३९
इत्युक्तस्तर्पयामास स पितॄन्देवतास्तथा ।
आहारमकरोन्नित्यं प्राणान्वेदांश्च धारयन् ॥ ४०
अथ तस्यामनावृष्ट्यामतीतायां महर्षयः ।
अन्योन्यं परिपप्रच्छुः पुनः स्वाध्यायकारणात् ४१
तेषां क्षुधापरीतानां नष्टा वेदा विधावताम् ।
सर्वेषामेव राजेन्द्र न किंचित्प्रतिभाति ह ॥ ४२
अथ कश्चिदृषिस्तेषां सारस्वतमुपेयिवान् ।
कुर्वाणं संशितात्मानं स्वाध्यायमृषिसत्तमम् ॥ ४३
स गत्वाऽचष्ट तेभ्यश्च सारस्वतमृषिं प्रभुम् ।
स्वाध्यायममरप्रख्यं कुर्वाणं विजने वने ॥ ४४
ततः सर्वे समाजग्मुस्तत्र राजन्महर्षयः ।
सारस्वतं मुनिश्रेष्ठमिदमूचुः समागताः ॥ ४५
अस्मानध्यापयस्वेति तानुवाच ततो मुनिः ।
शिष्यत्वमुपगच्छध्वं विधिना च ममेत्युत ॥ ४६
तत्राब्रुवन्मुनिगणा बालस्त्वमसि पुत्रक ।
स तानाह न मे धर्मो नश्येदिति पुनर्मुनीन् ॥ ४७
यो ह्यधर्मेण वै ब्रूयाद्गृह्णीयाद्योऽप्यधर्मतः ।
म्रियेतां तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ ॥ ४८
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ४९
एतच्छ्रुत्वा वचस्तस्य मुनयस्ते विधानतः ।
तस्माद्वेदाननुप्राप्य पुनर्धर्मं प्रचक्रिरे ॥ ५०
षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे ।
सारस्वतस्य विप्रर्षेर्वेदस्वाध्यायकारणात् ॥ ५१
मुष्टिं मुष्टिं ततः सर्वे दर्भाणां ते ह्युपाहरन् ।
तस्यासनार्थं विप्रर्षेर्बालस्यापि वशे स्थिताः ॥ ५२
तत्रापि दत्त्वा वसु रौहिणेयो
महाबलः केशवपूर्वजोऽथ ।
जगाम तीर्थं मुदितः क्रमेण
तं वृद्धकन्याश्रममेव वीरः ॥ ५३

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

दधीचोऽस्थीनीति छ. पाठः ॥ २८ ॥ प्राणत्यागं कुरुश्रेष्ठ चकारैवाविचारयन्निति झ. पाठः ॥ २९ ॥ अस्य मुनेः ॥३४॥ तेन तदस्थिजेन वज्रेण नवतीर्नव दशाधिकां अष्टशतीम् ॥ ३५ ॥ द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

वृद्धकन्याचरित्रकथनम् ॥ १ ॥

जनमेजय उवाच ।
कथं कुमारी भगवंस्तपोयुक्ता ह्यभूत्पुरा ।
किमर्थं च तपस्तेपे को वाऽस्या नियमोऽभवत् ॥ १
सुदुष्करमिदं ब्रह्मंस्त्वत्तः श्रुतमनुत्तमम् ।
आख्याहि तत्त्वमखिलं यथा तपसि सा स्थिता ॥२
वैशंपायन उवाच ।
ऋषिरासीन्महावीर्यः कुणिर्गार्ग्यो महायशाः ।
स तप्त्वा विपुलं राजंस्तपो वै तपतां वरः ।
तपसाऽथ सुतां सुभ्रूं समुत्पादितवान्विभुः ॥ ३
तां च दृष्ट्वा मुनिः प्रीतः कुणिर्गार्ग्यो महायशाः ।
जगाम त्रिदिवं राजन्संत्यज्येह कलेवरम् ॥ ४
सुभ्रूः सा ह्यथ कल्याणी पुण्डरीकनिभेक्षणा ।
महता तपसोग्रेण कृत्वाश्रममनिन्दिता ॥ ५
उपवासैः पूजयन्ती पितॄन्देवांश्च सा पुरा ।
तस्यास्तु तपसोग्रेण महान्कालोऽत्यगान्नृप ॥ ६
सा पित्रा दीयमानापि पतिं नैच्छदनिन्दिता ।
आत्मनः सदृशं सा तु भर्तारं नान्वपश्यत ॥ ७
ततः सा तपसोग्रेण पीडयित्वाऽऽत्मनस्तनुम् ।
पितृदेवार्चनरता बभूव विजने वने ॥ ८
साऽऽत्मानं मन्यमाना तु कृतकृत्यं श्रमान्विता ।
'जगाम वृद्धभावं तु कौमारब्रह्मचारिणी ॥' ९
वार्धकेन च राजेन्द्र तपसा चैव कर्शिता ।
सा नाशकद्यदा गन्तुं पदात्पदमपि स्वयम् ॥ १०
चकार गमने बुद्धिं परलोकाय वै तदा ।
मोक्तुकामां तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत् ॥११
असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ।
एवं तु श्रुतमस्माभिर्देवलोके महाव्रते ॥ १२
तपः परमकं प्राप्तं न तु लोकास्त्वया जिताः ।
तन्नारदवचः श्रुत्वा साऽब्रवीदृषिसंसदि ॥ १३
तपसोऽर्धं प्रयच्छामि पाणिग्राहस्य सत्तमाः ।
इत्युक्तेऽस्यास्तु जग्राह पाणिं गालवसंभवः ॥१४
ऋषिः प्राक् शृङ्गवान्नाम समयं चेममब्रवीत् ।
समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने ॥ १५
यद्येकरात्रं वस्तव्यं त्वया सह मयेति ह ।
तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा ॥ १६
यथादृष्टेन विधिना हुत्वा चाग्निं विधानतः ।
चक्रे च पाणिग्रहणं तस्योद्वाहं च गालविः ॥१७
सा रात्रावभवद्राजंस्तरुणी वरवर्णिनी ।
दिव्याभरणवस्त्रा च दिव्यगन्धानुलेपना ॥ १८
तां दृष्ट्वा गालविः प्रीतो दीपयन्तीमिव श्रिया ।
उवास च क्षपामेकां प्रभाते साऽब्रवीच्च तम् ॥१९
यस्त्वया समयो विप्र कृतो मे तपतां वर ।
तेनोषिताऽस्मि भद्रं ते स्वस्ति तेऽस्तु व्रजाम्यहम् ॥
सा तु ध्यात्वाऽब्रवीद्भूयो योऽस्मिंस्तीर्थे समाहितः ।
वसते रजनीमेकां तर्पयित्वा दिवौकसः ॥ २१
चत्वारिंशतमष्टौ च द्वौ चाष्टौ सम्यगाचरेत् ।
यो ब्रह्मचर्यं वर्षाणि फलं तस्य लभेत सः ॥ २२
एवमुक्त्वा ततः साध्वी देहं त्यक्त्वा दिवं गता ।
ऋषिरप्यभवद्दीनस्तस्या रूपं विचिन्तयन् ॥ २३
समयेन तपोऽर्धं च कृच्छ्रात्प्रतिगृहीतवान् ।
साधयित्वा तदाऽऽत्मानं तस्याः स गतिमाप्तवान् ।
दुःखितो भरतश्रेष्ठ तस्या रूपबलात्कृतः ॥ २४
एतत्ते वृद्धकन्याया व्याख्यातं चरितं महत् ।
तथैव ब्रह्मचर्यं च स्वर्गस्य च गतिः शुभा ॥२५
तत्रस्थश्चापि शुश्राव हतं शल्यं हलायुधः ॥ २६
तत्रापि दत्त्वा दानानि द्विजातिभ्यः परंतपः ।
शुशोच शल्यं संग्रामे निहतं पाण्डवैस्तदा ॥२७

तपसा संयुता सुभ्रूः समुत्पन्ना महात्मनः इति छ. पाठः ॥ ३ ॥ चत्वारिंशतमष्टौ चेति । प्रतिवेदं द्वादशवर्षाणीति वेदचतुष्टयाध्ययनायाष्टाचत्वारिंशद्वर्षाणि । ततो द्वौ वत्सरौ स्नातकेन गुरोरानृण्यार्थं सेवा कार्या । ततोऽष्टवार्षिकीं कन्यां परिणीय तस्या यौवनावध्यष्टवर्षाणीत्यष्टपञ्चाशद्वर्षाणि ब्रह्मचर्यं सर्वस्येष्टम् ॥२२॥ संगतिमन्वियात् इति छ. पाठः॥२४॥त्रिपञ्चाशोऽध्यायः ॥५३॥

समन्तपञ्चकद्वारात्ततो निष्क्रम्य माधवः ।
पप्रच्छर्षिगणान्रामः कुरुक्षेत्रस्य यत्फलम् ॥ २८
ते पृष्टा यदुसिंहेन कुरुक्षेत्रफलं विभो ।
समाचख्युर्महात्मानस्तस्मै सर्वं यथातथम् ॥ २९

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

बलभद्राय महर्षिभिः कुरुक्षेत्रमहिमानुवर्णनम् ॥ १ ॥

ऋषय ऊचुः ।
प्रजापतेरुत्तरवेदिरुच्यते
सनातनं राम समन्तपञ्चकम् ।
समीजिरे यत्र पुरा दिवौकसो
वरेण सत्रेण महावरप्रदाः ॥ १
पुरा च राजर्षिवरेण धीमता
बहूनि वर्षाण्यमितेन तेजसा ।
प्रकृष्टमेतत्कुरुणा महात्मना
ततः कुरुक्षेत्रमितीह पप्रथे ॥ २
राम उवाच ।
किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना ।
एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः ॥ ३
ऋषय ऊचुः ।
पुरा किल कुरुं राम कर्षन्तं सततोत्थितम् ।
अभ्येत्य शक्रस्त्रिदिवात्पर्यपृच्छत कारणम् ॥ ४
इन्द्र उवाच ।
किमिदं वर्तते कर्म प्रयत्नेन परेण च ।
राजर्षे किमभिप्रेत्य येनेयं कृष्यते क्षितिः ॥ ५
कुरुरुवाच ।
इह ये पुरुषाः क्षेत्रे जनिष्यन्ति शतक्रतो ।
ते गमिष्यन्ति सुकृतां लोकान्पापविवर्जितान् ॥६
अपहास्य तु तं शक्रो जगाम त्रिदिवं पुनः ।
राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुंधराम् ॥ ७
आगम्यागम्य चैवैनं भूयोभूयोऽपहास्य च ।
शतक्रतुरनिर्विण्णं पृष्ट्वापृष्ट्वा जगाम ह ॥ ८
यदा तु तपसोग्रेण चकर्ष वसुधां नृपः ।
ततः शक्रोऽब्रवीद्देवान्राजर्षेर्यच्चिकीर्षितम् ॥ ९
एतच्छ्रुत्वाऽब्रुवन्देवाः सहस्राक्षमिदं वचः ।
वरेण च्छन्द्यतां शक्र राजर्षिर्यदि शक्यते ॥ १०
यदि ह्यत्र प्रमृता वै स्वर्गं गच्छन्ति मानवाः ।
अस्माननिष्ट्वा क्रतुभिर्भागो नो न भविष्यति ॥११
आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत् ।
अलं खेदेन भवतः क्रियतां वचनं मम ॥ १२
मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः ।
युधि वा निहताः सम्यगपि तिर्यग्गता नृप ॥ १३
ते स्वर्गभाजो राजेन्द्र भवन्त्विह हतास्तु ये ।
तथास्त्विति ततो राजा कुरुः शक्रमुवाच ह ॥१४
ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना ।
जगाम त्रिदिवं भूयः क्षिप्रं बलनिषूदनः ॥ १५
एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा ।
शक्रेण चाभ्यनुज्ञातः पुण्ये प्राणान्मुमोच ह ॥१६
[शक्रेण चाभ्यनुज्ञातं ब्रह्माद्यैश्च सुरैस्तथा ।
नातः परतरं पुण्यं भूमेः स्थानं भविष्यति ॥१७
इह तप्स्यन्ति ये केचित्तपः परमकं नराः ।
देहत्यागेन ते सर्वे यास्यन्ति ब्रह्मणः क्षयम् ॥१८
ये पुनः पुण्यभाजो वै दानं दास्यन्ति मानवाः ।
तेषां सहस्रगुणितं भविष्यत्यचिरेण वै ॥ १९
ये चेह नित्यं मनुजा निवत्स्यन्ति शुभैषिणः ।
यमस्य विषयं ते तु न द्रक्ष्यन्ति कदाचन ॥ २०
यक्ष्यन्ति ये च क्रतुभिर्महद्भिर्मनुजेश्वराः ।
तेषां त्रिविष्टपे वासो यावद्भूमिर्धरिष्यति ॥] २१

पप्रथे प्रसिद्धं बभूव ॥ २ ॥ मरिष्यन्ति शतक्रतो इति झ. पाठः ॥ ६ ॥ प्रमीता वै इति झ. पाठः ॥ ११ ॥ ब्रह्मणः क्षयं निवासम् ॥ १८ ॥

अपि चात्र स्वयं शक्रो जगौ गाथां सुराधिपः ।
कुरुक्षेत्रनिबद्धां वै तां शृणुष्व हलायुध ॥ २२
पांसवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ २३
'कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
इत्येवं निश्चितो भूत्वा तेन स्वर्गं गमिष्यति ॥ २४
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
तथा स्नानं च मौनं च वीरासनमुपास्महे ॥ २५
एवं प्रलपमानोऽपि चिन्तयंश्च मुहुर्मुहुः ।
दूरस्थो यदि वा तिष्ठँल्लभेत्स्वर्गं सुनिश्चितम् ॥' २६
सुरर्षभा ब्राह्मणसत्तमाश्च
तथा नृगाद्या नरदेवमुख्याः ।
इष्ट्वा महार्हैः क्रतुभिर्नृसिंह
संत्यज्य देहान्सुगतिं प्रपन्नाः ॥ २७
तरन्तुकारन्तुकयोर्यदन्तरं
रामह्रदानां च मचक्रुकस्य च ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं
प्रजापतेरुत्तरवेदिरुच्यते ॥ २८
शिवं महापुण्यमिदं दिवौकसां
सुसंमतं स्वर्गगुणैः समन्वितम् ।
अतश्च सर्वे निहता नृपा रणे
यास्यन्ति पुण्यां गतिमक्षयां सदा ॥ २९
[इत्युवाच स्वयं शक्रः सह ब्रह्मादिभिस्तदा ।
तच्चानुमोदितं सर्वं ब्रह्मविष्णुमहेश्वरैः ॥] ३०

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

मित्रावरुणाश्रमे नारदाद्भीमदुर्योधनयोर्गदायुद्धोपक्रमश्राविणा बलरामेण तद्दिदृक्षया कुरुक्षेत्रं प्रत्यागमनम् ॥ १ ॥

वैशंपायन उवाच ।
कुरुक्षेत्रं ततो दृष्ट्वा दत्त्वा देयांश्च सात्वतः ।
आश्रमं सुमहत्पुण्यमगमज्जनमेजय ॥ १
मधूकाम्रवणोपेतं प्लक्षन्यग्रोधसंकुलम् ।
चिरबिल्वयुतं पुण्यं पनसार्जुनसंकुलम् ॥ २
तं दृष्ट्वा यादवश्रेष्ठः प्रवरं पुण्यलक्षणम् ।
पप्रच्छ तानृषीन्सर्वान्कस्याश्रमवरस्त्वयम् ॥ ३
ते तु सर्वे महात्मानमूचू राजन्हलायुधम् ।
शृणु विस्तरशो राम यस्यायं पूर्वमाश्रमः ॥ ४
अत्र विष्णुः पुरा देवस्तप्तवांस्तप उत्तमम् ।
अत्रास्य विधिवद्यज्ञाः सर्वे वृत्ताः सनातनाः ॥ ५
अत्रैव ब्राह्मणी वृद्धा कौमारब्रह्मचारिणी ।
योगयुक्ता दिवं याता तपोयुक्ता विशांपते ॥ ६
बभूव श्रीमती राजञ्शाण्डिल्यस्य महात्मनः ।
सुता धृतव्रता साध्वी नियता ब्रह्मचारिणी ॥ ७
साऽपि प्राप्य परं योगं गता स्वर्गमनुत्तमम् ।
भुक्त्वाऽश्रमेऽश्वमेधस्य फलं फलवतः शुभम् ॥ ८
गता स्वर्गं महाराज पूजिता च महात्मभिः ।
अभिगम्याश्रमं पुण्यं स दृष्ट्वा यदुनन्दनः ॥ ९
ऋषींस्तानभिवाद्याथ पार्श्वे हिमवतोऽच्युतः ।
सन्ध्याकार्याणि सर्वाणि निर्वर्त्यारुरुहेऽचलम् १०
नातिदूरं ततो गत्वा नगं तालध्वजो बली ।
पुण्ये तीर्थवरे स्नात्वा विस्मयं परमं गतः ॥ ११
प्रभवं च सरस्वत्याः प्लक्षप्रस्रवणं बलः ।
संप्राप्तः कारपचनं तीर्थप्रवरमुत्तमम् ॥ १२
हलायुधस्तु तत्रापि दत्त्वा दानं महाबलः ।
आप्लुतः सलिले पुण्ये सुशीते विमले शुचौ ।
संतर्पयामास पितॄन्देवांश्च रणदुर्मदः ॥ १३

आरुन्दुकारुन्दकयोर्यदन्तरं रामह्रदाना च समन्दुकस्य इति क. पाठः । परमन्दुकस्येति ङ. छ. पाठः ॥ २८ ॥ चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

स्कन्धावाराणि सर्वाणीति क. ङ. छ. पाठः ॥ १० ॥ प्लक्षप्रस्रवणं बिलमिति क. पाठः ॥ १२ ॥

तत्रोष्यैकां तु रजनीं यतिभिर्ब्राह्मणैः सह ।
मित्रावरुणयोः पुण्यं जगामाश्रममच्युतः ॥ १४
इन्द्रोऽग्निरर्यमा चैव यत्र प्राक् प्रीतिमाप्नुवन् ।
तं देशं कारपचनात्स तस्मादाजगामह ॥ १५
स्नात्वा तत्र च धर्मात्मा परां प्रीतिमवाप्य च ।
ऋषिभिश्चैव सिद्धैश्च सहितो वै महाबलः ।
उपविष्टः कथाः शुभ्राः शुश्राव यदुपुङ्गवः ॥ १६
तथा तु तिष्ठतां तेषां नारदो भगवानृषिः ।
आजगामाथ तं देशं यत्र रामो व्यवस्थितः ॥ १७
जटामण्डलसंवीतः कुशचीरी महातपाः ।
हेमदण्डधरो राजन्कमण्डलुधरस्तथा ॥ १८
महतीं सुखशब्दां तां गृह्य वीणां मनोरमाम् ।
नृत्ये गीते च कुशलो देवब्राह्मणपूजितः ॥ १९
प्रभवः कलहानां च नित्यं च कलहप्रियः ।
तं देशमगमद्यत्र श्रीमान्रामो व्यवस्थितः ॥ २०
प्रत्युत्थाय च तं रामः पूजयित्वा यतव्रतम् ।
देवर्षिं पर्यपृच्छत्स यथावृत्तं कुरून्प्रति ॥ २१
तदाऽस्याकथयद्राजन्नारदः सर्ववेदवित् ।
सर्वमेतद्यथावृत्तमतीतं कुरुसंक्षयम् ॥ २२
ततोऽब्रवीद्रौहिणेयो नारदं दीनया गिरा ।
किमवस्थं तु तत्क्षत्रं ये तु तत्राभवन्नृपाः ॥ २३
श्रुतमेतन्मया पूर्वं सर्वमेव तपोधन ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥ २४
नारद उवाच ।
पूर्वमेव हतो भीष्मो द्रोणः सिन्धुपतिस्तथा ।
हतो वैकर्तनः कर्णः पुत्राश्चास्य महारथाः ॥ २५
भूरिश्रवा रौहिणेय मद्रराजश्च वीर्यवान् ।
एते चान्ये च बहवो हतास्तत्र महाबलाः ॥ २६
प्रियान्प्राणान्परित्यज्य प्रियार्थं कौरवस्य वै ।
राजानो राजपुत्राश्च समरेष्वनिवर्तिनः ॥ २७
अहतांस्तु महाबाहो शृणु मे तत्र माधव ॥ २८
धार्तराष्ट्रबले शेषास्त्रयः समितिमर्दनाः ।
कृपश्च कृतवर्मा च द्रोणपुत्रश्च वीर्यवान् ।
तेऽपि वै विद्रुता राम दिशो दश भयात्तदा ॥ २९
दुर्योधनो हते सैन्ये विद्रुतेषु पदातिषु ।
ह्रदं द्वैपायनं नाम विवेश भृशदुःखितः ॥ ३०
शयानं धार्तराष्ट्रं तु सलिले स्तम्भिते तदा ।
पाण्डवाः सह कृष्णेन वाग्भिरुग्राभिरार्दयन् ॥ ३१
स तुद्यमानो बलवान्वाग्भी राम समन्ततः ।
उत्थितः स ह्रदाद्वीरः प्रगृह्य महतीं गदाम् ॥ ३२
स चाप्युपगतो योद्धुं भीमेन सह साम्प्रतम् ।
भविष्यति तयोरद्य युद्धं राम सुदारुणम् ॥ ३३
यदि कौतूहलं तेऽस्ति व्रज माधव मा चिरम् ।
पश्य युद्धं महाघोरं शिष्ययोर्यदि मन्यसे ॥ ३४
वैशंपायन उवाच ।
नारदस्य वचः श्रुत्वा तानभ्यर्च्य द्विजर्षभान् ।
सर्वान्विसर्जयामास ये तेनाभ्यागताः सह ।
गम्यतां द्वारकां चेति सोऽन्वशादनुयायिनः ॥ ३५
सोऽवतीर्याचलश्रेष्ठात्प्लक्षप्रस्रवणाच्छुभात् ।
ततः प्रीतमना रामः श्रुत्वा तीर्थफलं महत् ।
विप्राणां सन्निधौ श्लोकमगायदिममच्युतः ॥ ३६

सरस्वतीवाससमा कुतो रतिः
सरस्वतीवाससमाः कुतो गुणाः ।
सरस्वतीं प्राप्य दिवं गता जनाः
सदा स्मरिष्यन्ति नदीं सरस्वतीम् ॥ ३७
सरस्वती सर्वनदीषु पुण्या
सरस्वती लोकशुभावहा सदा ।
सरस्वतीं प्राप्य जनाः सुदुष्कृतं
सदा न शोचन्ति परत्र चेह च ॥ ३८

ततो मुहुर्मुहुः प्रीत्या प्रेक्षमाणः सरस्वतीम् ।

कच्छपीं सुखशब्दां तामिति क. छ. झ. पाठः ॥ १९ ॥ दुर्योधनो हते शल्ये विद्रुतेषु कृपादिषु इति झ. पाठः ॥ ३० ॥ सरस्वतीं हीनविदेशवासिनः सदा स्मरिष्यन्ति इति ङ. पाठः । सरस्वतीहीनविदेशवासिनः इति क. पाठः ॥ ३८ ॥ पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

हयैर्युक्तं रथं शुभ्रमारुरोह परंतपः ॥ ३९
स शीघ्रगामिना तेन रथेन यदुपुङ्गवः ।
दिदृक्षुरभिसंप्राप्तः शिष्ययुद्धमुपस्थितम् ॥ ४०
एवं तदभवद्युद्धं तुमुलं जनमेजय ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ४१

धृतराष्ट्र उवाच ।

रामं संनिहितं श्रुत्वा गदायुद्ध उपस्थिते ।
मम पुत्रः कथं भीमं प्रत्ययुध्यत सञ्जय ॥ ४२

॥ इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

समाप्तं ह्रदप्रवेशपर्व ॥ २ ॥

---

# ( अथ गदायुद्धपर्व ॥ ३ ॥ )

## षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

गदायुद्धाय संनद्धयोर्भीमदुर्योधनयोर्वर्णनम् ॥ १ ॥

सञ्जय उवाच ।
रामसान्निध्यमागम्य पुत्रो दुर्योधनस्तव ।
योद्धुकामो महाबाहुः समहृष्यत वीर्यवान् ॥ १
दृष्ट्वा लाङ्गलिनं राजा प्रत्युत्थाय च भारत ।
प्रीत्या* परमया युक्तो युधिष्ठिरमथाब्रवीत् ॥ २
दुर्योधन उवाच ।
समन्तपञ्चकं पुण्यमितो याम विशांपते ।
प्रथितोत्तरवेदी सा देवलोके प्रजापतेः ॥ ३
तस्मिन्महापुण्यतमे त्रैलोक्यस्य सनातने ।
सङ्ग्रामे निधनं प्राप्य ध्रुवं स्वर्गं गमिष्यसि ॥ ४
तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः ।
समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ॥ ५
ततो दुर्योधनो राजा प्रगृह्य महतीं गदाम् ।
पद्भ्याममर्षी द्युतिमानगच्छत्पाण्डवैः सह ॥ ६
तथा यान्तं गदाहस्तं वर्मणा चापि दंशितम् ।
अन्तरिक्षचरा देवाः साधुसाध्वित्यपूजयन् ॥ ७
वादकाश्च नरास्तत्र दृष्ट्वा ते हर्षमागताः ॥ ८
स पाण्डवैः परिवृतः कुरुराजस्तवात्मजः ।
मत्तस्येव गजेन्द्रस्य गतिमास्थाय सोऽव्रजत् ॥ ९
ततः शङ्खनिनादैश्च भेरीणां च महास्वनैः ।
सिंहनादैश्च शूराणां दिशः सर्वाः प्रपूरिताः ॥ १०
ततस्ते तु कुरुक्षेत्रं प्राप्ता नरवरोत्तमाः ।
प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते ।
दक्षिणेन सरस्वत्याः स्वयनं तीर्थमुत्तमम् ॥ ११
तस्मिन्देशे त्वनिरिणे ते तु युद्धमरोचयन् ॥ १२
ततो भीमो महाकोटिं गदां गृह्याथ वर्मभृत् ।
बिभ्रद्रूपं महाराज सदृशं हि गरुत्मतः ॥ १३
अवबद्धशिरस्त्राणः शुद्धकाञ्चनवर्मभृत् ।
रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव ॥ १४
तौ तथा संगतौ वीरौ भीमदुर्योधनावुभौ ।
संयुगे संप्रकाशेते संरब्धाविव कुञ्जरौ ॥ १५
रथमण्डलमध्यस्थौ भ्रातरौ तौ नरर्षभौ ।
अशोभेतां महाराज चन्द्रसूर्याविवोदितौ ॥ १६
तावन्योन्यं निरीक्षेतां क्रुद्धाविव महोरगौ ।
दहन्तौ लोचनै राजन्परस्परवधैषिणौ ॥ १७
संप्रहृष्टमना राजन्गदामादाय कौरवः ।
सृक्किणी संलिहन्राजन्क्रोधरक्तेक्षणः श्वसन् ॥ १८
ततो दुर्योधनो राजन्गदामादाय वीर्यवान् ।
भीमसेनमभिप्रेक्ष्य गजो गजमिवाह्वयत् ॥ १९
अद्रिसारमयीं भीमस्तथैवादाय वीर्यवान् ।
आह्वयामास नृपतिं सिंहः सिंहं यथा वने ॥ २०
तावुद्यतगदापाणी दुर्योधनवृकोदरौ ।
संयुगे संप्रकाशेतां गिरी सशिखराविव ॥ २१
तावुभौ समतिक्रुद्धावुभौ भीमपराक्रमौ ।
उभौ शिष्यौ गदायुद्धे रौहिणेयस्य धीमतः ॥ २२
उभौ सदृशकर्माणौ वरुणस्य महाबलौ ।

वातिकाश्चारणा ये तु इति झ. पाठः । तत्र वातिकाः वातेन सह गच्छन्ति ते आकाशचारिणः । चारणाः सिद्धविशेषा इत्यर्थः ॥ ८ ॥ स्वयनं सुगतिदम् ॥ ११ ॥ अनिरिणे अनूषरे ॥ १२ ॥

* एतच्छ्लोकस्य स्थाने झ. पुस्तके अधोलिखिताः पञ्च श्लोका वर्तन्ते । ते च ।

प्रीत्या परमया युक्तः समभ्यर्च्य यथाविधि ।
आसनं च ददौ तस्मै पर्यपृच्छदनामयम् ॥ १
ततो युधिष्ठिरं रामो वाक्यमेतदुवाच ह ।
मधुरं धर्मसंयुक्तं शूराणां हितमेव च ॥ २
मया श्रुतं कथयतामृषीणां राजसत्तम ।
कुरुक्षेत्रं परं पुण्यं पावनं स्वर्ग्यमेव च ॥ ३
दैवतैर्ऋषिभिर्जुष्टं ब्राह्मणैश्च महात्मभिः ।
तत्र वै योत्स्यमाना ये देहं त्यक्ष्यन्ति मानवाः ॥ ४
तेषां स्वर्गे ध्रुवो वासः शक्रेण सह मारिष ।
तस्मात्समन्तपञ्चकमितो याम द्रुतं नृप ॥ ५

वासुदेवस्य रामस्य तथा वैश्रवणस्य च ॥ २३
सदृशौ तौ महाराज मधुकैटभयोरपि ।
उभौ सदृशकर्माणौ तथा सुन्दोपसुन्दयोः ॥ २४
[रामरावणयोश्चैव वालिसुग्रीवयोस्तथा ।]
तथैव कालस्य समौ मृत्योश्चैव परंतपौ ॥ २५
अन्योन्यमभिधावन्तौ मत्ताविव महाद्विपौ ।
वासितासंगमे दृप्तौ शरदीव मदोत्कटौ ॥ २६
उभौ क्रोधविषं दीप्तं वमन्तावुरगाविव ।
अन्योन्यमभिसंरब्धौ प्रेक्षमाणावरिंदमौ ॥ २७
उभौ भरतशार्दूलौ विक्रमेण समन्वितौ ।
सिंहाविव दुराधर्षौ गदायुद्धविशारदौ ॥ २८
नखदंष्ट्रायुधौ वीरौ व्याघ्राविव दुरुत्सहौ ।
प्रजासंहरणे क्षुब्धौ समुद्राविव दुस्तरौ ॥ २९
लोहिताङ्गाविव क्रुद्धौ प्रतपन्तौ महारथौ ।
[पूर्वपश्चिमजौ मेघौ प्रेक्षमाणावरिंदमौ ॥ ३०
गर्जमानौ सुविषमं क्षरन्तौ प्रावृषीव हि ।
रश्मियुक्तौ महात्मानौ दीप्तिमन्तौ महाबलौ ३१
ददृशाते कुरुश्रेष्ठौ कालसूर्याविवोदितौ ।
व्याघ्राविव सुसंरब्धौ गर्जन्ताविवतोयदौ ॥ ३२
जहृषाते महाबाहू सिंहकेसरिणाविव ।
गजाविव सुसंरब्धौ ज्वलिताविव पावकौ ॥ ३३
ददृशाते महात्मानौ सशृङ्गाविव पर्वतौ ।
रोषात्प्रस्फुरमाणोष्ठौ निरीक्षन्तौ परस्परम् ॥ ३४
तौ समेतौ महात्मानौ गदाहस्तौ नरोत्तमौ ।]
उभौ परमसंहृष्टावुभौ परमसंमतौ ॥ ३५
सदश्वाविव हेषन्तौ बृंहन्ताविव कुञ्जरौ ।
वृषभाविव गर्जन्तौ दुर्योधनवृकोदरौ ।
दैत्याविव बलोन्मत्तौ रेजतुस्तौ नरोत्तमौ ॥ ३६
ततो दुर्योधनो राजन्निदमाह युधिष्ठिरम् ।
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ३७
इदं व्यवसितं युद्धं मम भीमस्य चोभयोः ।
उपोपविष्टाः पश्यध्वं विमर्दं नृपसत्तमाः ॥ ३८
ततः समुपविष्टं तत्सुमहद्राजमण्डलम् ।
विराजमानं ददृशे दिवीवादित्यमण्डलम् ॥ ३९
तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः ।
उपविष्टो महाराज पूज्यमानः समन्ततः ॥ ४०
शुशुभे राजमध्यस्थो नीलवासाः सितप्रभः ।
नक्षत्रैरिव संपूर्णो वृतो निशि निशाकरः ॥ ४१
तौ तथा तु महाराज गदाहस्तौ सुदुःसहौ ।
अन्योन्यं वाग्भिरुग्राभिस्तक्षमाणौ व्यवस्थितौ ४२
अप्रियाणि ततोऽन्योन्यमुक्त्वा तौ कुरुसत्तमौ ।
उदीक्षन्तौ स्थितौ तत्र वृत्रशक्रौ यथाऽऽहवे ॥ ४३

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

भीमदुर्योधनयोर्वीरवादः ॥ १ ॥

वैशंपायन उवाच ।
ततो वाग्युद्धमभवत्तुमुलं जनमेजय ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ १
धिगस्तु खलु मानुष्यं यस्य निष्ठेयमीदृशी ।
एकादशचमूभर्ता यत्र पुत्रो ममानघ ॥ २
आज्ञाप्य सर्वान्नृपतीन्भुक्त्वा चेमां वसुंधराम् ।
गदामादाय चैकाकी पदातिः प्रस्थितो रणम् ॥ ३
भूत्वा हि जगतो नाथो ह्यनाथ इव मे सुतः ।
गदामुद्यम्य यो याति किमन्यद्भागधेयतः ॥ ४
अहो दुःखं महत्प्राप्तं पुत्रेण मम सञ्जय ।
एवमुक्त्वा स दुःखार्तो विरराम जनाधिपः ॥ ५
सञ्जय उवाच ।
स मेघनिनदो हर्षान्निनदन्निव गोवृषः ।
आजुहाव तदा पार्थं युद्धाय युधि वीर्यवान् ॥ ६

वासितासंगमे एककरिणीसंगमार्थे दृप्तौ मोहितौ ॥ २६ ॥ लोहिताङ्गौ द्वौ कुजाविवेत्यभूतोपमा ॥ ३० ॥ जहृषाते हर्षं प्रापतुः ॥ ३३ ॥ षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

भीममाह्वयमाने तु कुरुराजे महात्मनि ।
प्रादुरासन्सुघोराणि रूपाणि विविधान्युत ॥ ७
ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च ।
बभूवुश्च दिशः सर्वास्तिमिरेण समावृताः ॥ ८
महास्वनाः सुनिर्वातास्तुमुला रोमहर्षणाः ।
पेतुस्तथोल्काः शतशः स्फोटयन्त्यो नभस्तलात् ९
राहुश्चाग्रसदादित्यमपर्वणि विशांपते ।
चकम्पे च महाकम्पं पृथिवी सवनद्रुमा ॥ १०
रूक्षाश्च वाताः प्रववुर्नीचैः शर्करकर्षिणः ।
गिरीणां शिखराण्येव न्यपतन्त महीतले ॥ ११
मृगा बहुविधाकाराः संपतन्ति दिशो दश ।
दीप्ताः शिवाश्चाप्यनदन्घोररूपाः सुदारुणाः १२
निर्घाताश्च महाघोरा बभूवू रोमहर्षणाः ।
दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवादिनः ॥१३
उदपानगताश्चापो व्यवर्धन्त समन्ततः ।
अशरीरा महानादाः श्रूयन्ते स्म भयानकाः ॥ १४
एवमादीनि दृष्ट्वा स निमित्तानि वृकोदरः ।
उवाच भ्रातरं ज्येष्ठं धर्मराजं युधिष्ठिरम् ॥ १५
एष शक्यो मया जेतुं मन्दात्मा च सुयोधनः १६
अद्य क्रोधं विमोक्ष्यामि निगूढं हृदयेशयम् ।
सुयोधने कौरवेन्द्रे खाण्डवेऽग्निमिवार्जुनः ॥ १७
शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् ।
निहत्य गदया पापमिमं कुरुकुलान्तकम् ॥ १८
अद्य कीर्तिमयीं मालां प्रतिमोक्ष्याम्यहं त्वयि ।
हत्वेमं पापकर्माणं गदया रणमूर्धनि ॥ १९
अद्योरुगदया राजन्भेत्ताऽस्मि समरेऽनया ।
नायं प्रवेष्टा नगरं पुनर्वारणसाह्वयम् ॥ २०
सर्पोत्सर्गस्य शयने विषदानस्य भोजने ।
प्रमाणकोट्यां पातस्य दाहस्य जतुवेश्मनि ॥ २१
सभायामवहासस्य सर्वस्वहरणस्य च ।
वर्षमज्ञातवासस्य वनवासस्य चानघ ॥ २२
अद्यान्तमेषां दुःखानां गन्ताऽहं भरतर्षभ ।
एकाह्ना विनिहत्येमं भविष्याम्यात्मनोऽनृणः २३
अद्यायुर्धार्तराष्ट्रस्य दुर्मतेरकृतात्मनः ।
समाप्तं भरतश्रेष्ठ मातापित्रोश्च दर्शनम् ॥ २४
अद्य सौख्यं तु राजेन्द्र कुरुराजस्य दुर्मतेः ।
समाप्तं च महाराज नारीणां दर्शनं पुनः ॥ २५
अद्यायं कुरुराजस्य शन्तनोः कुलपांसनः ।
प्राणाञ्श्रियं च राज्यं च त्यक्त्वा शेष्यति भूतले ॥
राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं निपातितम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ २७
इत्युक्त्वा राजशार्दूल गदामादाय वीर्यवान् ।
अभ्यतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ २८
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनः पुनः क्रुद्धो दुर्योधनमुवाच ह ॥ २९
राज्ञश्च धृतराष्ट्रस्य तथा त्वमपि चात्मनः ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ ३०
द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला ।
द्यूते च वञ्चितो राजा यत्त्वया सौबलेन च ॥ ३१
वने दुःखं च यत्प्राप्तमस्माभिस्त्वत्कृतं महत् ।
विराटनगरे चैव योन्यन्तरगतैरिव ।
तत्सर्वं पातयाम्यद्य दिष्ट्या दृष्टोऽसि दुर्मते ॥३२
त्वत्कृतेऽसौ हतः शेते शरतल्पे पितामहः ।
गाङ्गेयो रथिनां श्रेष्ठो रथिना याज्ञसेनिना ॥ ३३
हतो द्रोणश्च कर्णश्च तथा शल्यः प्रतापवान् ।
वैराग्नेरादिकर्तासौ शकुनिः सौबलो हतः ॥ ३४
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ।
भ्रातरस्ते हताः सर्वे शूरा विक्रान्तयोधिनः ॥३५
एते चान्ये च बहवो निहतास्त्वत्कृते नृपाः ।
त्वामद्य निहनिष्यामि गदया नात्र संशयः॥ ३६
इत्येवमुच्चै राजानं भाषमाणं वृकोदरम् ।
उवाच गतभी राजन्पुत्रस्ते सत्यविक्रमः ॥ ३७
किं कत्थनेन बहुना युध्यस्वेह वृकोदर ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां कुलाधम ॥३८
इति दुर्योधनोऽक्षुद्रस्त्वया क्षुद्रबलेन वै ।
शक्यस्त्रासयितुं वाचा न चान्यः प्राकृतो यथा ३९

---

नैष शक्तो रणे जेतुं मन्दात्मा मां सुयोधन इति झ. पाठः ॥ १६ ॥

चिरकालेप्सितं दिष्ट्या हृदयस्थमिदं मम ।
त्वया सह गदायुद्धं त्रिदशैरुपपादितम् ॥ ४०
किं वाचा बहुनोक्तेन कत्थितेन च दुर्मते ।
वाणी संकोच्यतामेषा कर्मणा मा चिरं कृथाः ॥४१
तस्य तद्वचनं श्रुत्वा सर्व एवाभ्यपूजयन् ।
राजानः सोमकाश्चैव ये तत्रासन्समागताः ॥ ४२
ततः संपूजितः सर्वैः संप्रहृष्टतनूरुहः ।
भूयो धीरां मतिं चक्रे युद्धाय कुरुनन्दनः ॥ ४३
तं मत्तमिव मातङ्गं तलशब्दैर्नराधिपाः ।
भूयः संहर्षयांचक्रुर्दुर्योधनममर्षणम् ॥ ४४
तं महात्मा महात्मानं गदामुद्यम्य पाण्डवः ।
अभिदुद्राव वेगेन धार्तराष्ट्रं वृकोदरः ॥ ४५
बृंहन्ति कुञ्जरास्तत्र हया ह्रेषन्ति चासकृत् ।
शस्त्राणि चाप्यदीप्यन्त पाण्डवानां जयैषिणां ४६

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

भीमदुर्योधनयोर्गदायुद्धवर्णनम् ॥ १ ॥

सञ्जय उवाच ।
ततो दुर्योधनो दृष्ट्वा भीमसेनं तथाऽऽगतम् ।
प्रत्युद्ययावदीनात्मा वेगेन महता नदन् ॥ १
समापेततुरन्योन्यं शृङ्गिणौ वृषभाविव ।
महानिर्घातघोषश्च प्रहाराणामजायत ॥ २
अभवच्च तयोर्युद्धं तुमुलं रोमहर्षणम् ।
जिघृक्षतोर्यथाऽन्योन्यमिन्द्रप्रह्लादयोरिव ॥ ३
रुधिरोक्षितसर्वाङ्गौ गदाहस्तौ मनस्विनौ ।
ददृशाते महात्मानौ पुष्पिताविव किंशुकौ ॥ ४
तथा तस्मिन्महायुद्धे वर्तमाने सुदारुणे ।
खद्योतसङ्घैरिव खं दर्शनीयं व्यरोचत ॥ ५
तथा तस्मिन्वर्तमाने संकुले तुमुले भृशम् ।
उभावपि परिश्रान्तौ युध्यमानावरिंदमौ ॥ ६
तौ मुहूर्तं समाश्वस्य पुनरेव परंतपौ ।
संप्रहारयतां चित्रे संप्रगृह्य गदे शुभे ॥ ७
तौ तु दृष्ट्वा महावीर्यौ समाश्वस्तौ नरर्षभौ ।
बलिनौ वारणौ यद्वद्वासितार्थे मदोत्कटौ ॥ ८
समानवीर्यौ संप्रेक्ष्य प्रगृहीतगदावुभौ ।
प्रहर्षं परमं जग्मुर्देवगन्धर्वदानवाः ॥ ९
प्रगृहीतगदौ दृष्ट्वा दुर्योधनवृकोदरौ ।
संशयः सर्वभूतानां विजये समपद्यत ॥ १०
समागम्य ततो भूयो भ्रातरौ बलिनां वरौ ।
अन्योन्यस्यान्तरप्रेप्सू प्रचक्रातेऽन्तरं प्रति ॥ ११
यमदण्डोपमां गुर्वीमिन्द्राशनिमिवोद्यताम् ।
ददृशुः प्रेक्षका राजन्रौद्रीं विशसनीं गदाम् ॥ १२
आविध्यतो गदां तस्य भीमसेनस्य संयुगे ।
शब्दः सुतुमुलो घोरो मुहूर्तं समपद्यत ॥ १३
आविध्यन्तमरिं प्रेक्ष्य धार्तराष्ट्रोऽथ पाण्डवम् ।
गदामतुलवेगां तां विस्मितः संबभूव ह ॥ १४
चरंश्च विविधान्मार्गान्मण्डलानि च भारत ।
अशोभत तदा वीरो भूय एव वृकोदरः ॥ १५
तौ परस्परमासाद्य यत्तावन्योन्यसूदने ।
मार्जाराविव भक्षार्थे ततक्षाते मुहुर्मुहुः ॥ १६
अचरद्भीमसेनस्तु मार्गान्बहुविधांस्तथा ।
मण्डलानि विचित्राणि गतप्रत्यागतानि च ॥१७
गोमूत्रिकाणि चित्राणि स्थानानि विविधानि च ।
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ १८
अभिद्रवणमाक्षेपमवस्थानं सविग्रहम् ।
मत्स्योद्वृत्तं सोरुवृत्तमवप्लुतमुपप्लुतम् ॥ १९
उपन्यस्तमपन्यस्तं गदायुद्धविशारदौ ।
एवं तौ विचरन्तौ तु न्यघ्नतां वै परस्परम् ॥ २०
वञ्चयानौ पुनश्चैव चेरतुः कुरुसत्तमौ ।

वाणी संपद्यतामिति झ. पाठः ॥४१॥ सप्तपञ्चाशत्तमोऽध्यायः ५७
जिगीषतोर्यथेति झ. पाठः ॥ ३ ॥

विक्रीडन्तौ सुबलिनौ मण्डलानि विचेरतुः ॥ २१
[ तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः ।
गदाभ्यां सहसाऽन्योन्यमाजघ्नतुररिंदमौ ॥ २२
परस्परं समासाद्य दंष्ट्राभ्यां द्विरदौ यथा ।
अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ २३
एवं तदभवद्युद्धं घोररूपं परंतप ।
परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ॥ ] २४
गदाहस्तौ ततस्तौ तु मण्डलावस्थितौ बली ।
दक्षिणं मण्डलं राजन्धार्तराष्ट्रोऽभ्यवर्तत ।
सव्यं तु मण्डलं तत्र भीमसेनोऽभ्यवर्तत ॥ २५
तथा तु चरतस्तस्य भीमस्य रणमूर्धनि ।
दुर्योधनो महाराज पार्श्वदेशेऽभ्यताडयत् ॥ २६
आहतस्तु ततो भीमः पुत्रेण तव भारत ।
आविध्यत गदां गुर्वीं प्रहारं तमचिन्तयन् ॥ २७
इन्द्राशनिसमां घोरां यमदण्डमिवोद्यताम् ।
ददृशुस्ते महाराज भीमसेनस्य तां गदाम् ॥ २८
आविध्यन्तं गदां दृष्ट्वा भीमसेनं तवात्मजः ।
समुद्यम्य गदां घोरां प्रत्यविध्यत्परंतपः ॥ २९
गदामारुतवेगेन तव पुत्रस्य भारत ।
शब्द आसीत्सुतुमुलस्तेजश्च समजायत ॥ ३०
स चरन्विविधान्मार्गान्मण्डलानि च भागशः ।
समशोभत तेजस्वी भूयो भीमात्सुयोधनः ॥ ३१
आविद्धा सर्ववेगेन भीमेन महती गदा ।
सधूमं सार्चिषं चाग्निं मुमोचोग्रमहास्वना ॥ ३२
आधूतां भीमसेनेन गदां दृष्ट्वा सुयोधनः ।
अद्रिसारमयीं गुर्वीमाविध्यन्बह्वशोभत ॥ ३३
गदामारुतवेगं हि दृष्ट्वा तस्य महात्मनः ।
भयं विवेश पाण्डूंस्तु सर्वानेव ससात्यकीन् ॥ ३४
तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः ।
गदाभ्यां सहसाऽन्योन्यमाजघ्नतुररिंदमौ ॥ ३५
तौ परस्परमासाद्य दंष्ट्राभ्यां द्विरदौ यथा ।
अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ ३६
एवं तदभवद्युद्धं घोररूपमसंवृतम् ।
परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ॥ ३७
दृष्ट्वा व्यवस्थितं भीमं तव पुत्रो महाबलः ।
चरंश्चित्रतरान्मार्गान्कौन्तेयमभिदुद्रुवे ॥ ३८
तस्य भीमो महावेगां जाम्बूनदपरिष्कृताम् ।
अतिक्रुद्धस्य क्रुद्धस्तु ताडयामास तां गदाम् ३९
सविस्फुलिङ्गो निर्ह्रादस्तयोस्तत्राभिघातजः ।
प्रादुरासीन्महाराज सृष्टयोर्वज्रयोरिव ॥ ४०
वेगवत्या तया तत्र भीमसेनप्रमुक्तया ।
निपतन्त्या महाराज पृथिवी समकम्पत ॥ ४१
तां नामृष्यत कौरव्यो गदां प्रतिहतां रणे ।
मत्तो द्विप इव क्रुद्धः प्रतिकुञ्जरदर्शनात् ॥ ४२
स सव्यं मण्डलं राजा उद्भ्राम्य कृतनिश्चयः ।
आजघ्ने मूर्ध्नि कौन्तेयं गदया भीमवेगया ॥ ४३
तया त्वभिहतो भीमः पुत्रेण तव पाण्डवः ।
नाकम्पत महाराज तदद्भुतमिवाभवत् ॥ ४४
आश्चर्यं चापि तद्राजन्सर्वसैन्यान्यपूजयन् ।
यद्गदाभिहतो भीमो नाकम्पत पदात्पदम् ॥ ४५
ततो गुरुतरां दीप्तां गदां हेमपरिष्कृताम् ।
दुर्योधनाय व्यसृजद्भीमो भीमपराक्रमः ॥ ४६
तं प्रहारमसंभ्रान्तो लाघवेन महाबलः ।
मोघं दुर्योधनश्चक्रे तत्राभूद्विस्मयो महान् ॥ ४७
सा तु मोघा गदा राजन्पतन्ती भीमचोदिता ।
चालयामास पृथिवीं महानिर्घातनिःस्वना ॥ ४८
आस्थाय कौशिकान्मार्गानुत्पतन्स पुनःपुनः ।
गदानिपातं प्रज्ञाय भीमसेनं च वञ्चितम् ॥ ४९
वञ्चयित्वा तदा भीमं गदया कुरुसत्तमः ।
ताडयामास संक्रुद्धो वक्षोदेशे महाबलः ॥ ५०
गदया निहतो भीमो मुह्यमानो महारणे ।
नाभ्यमन्यत कर्तव्यं पुत्रेणाभ्याहतस्तव ॥ ५१
तस्मिंस्तथा वर्तमाने राजन्सोमकपाण्डवाः ।
भृशोपहतसंकल्पा नहृष्टमनसोऽभवन् ॥ ५२

आस्थायेति । कौशिकान् कुश उन्मत्तस्तदाचरितान्मार्गानास्थाय पुनःपुनरुत्पतनेन वञ्चनेन च भीममुन्मत्तीकृत्य गदया ताडयामासेति द्वयोः संबन्धः ॥ ४९ ॥ नहृष्टमनसः खिन्नचेतसः ॥ ५२ ॥

स तु तेन प्रहारेण मातङ्ग इव रोषितः ।
हस्तिवद्धस्तिसंकाशमभिदुद्राव ते सुतम् ॥ ५३
ततस्तु तरसा भीमो गदया तनयं तव ।
अभिदुद्राव वेगेन सिंहो वनगजं यथा ॥ ५४
उपसृत्य तु राजानं गदामोक्षविशारदः ।
आविध्यत गदां राजन्समुद्दिश्य सुतं तव ॥ ५५
अताडयद्भीमसेनः पार्श्वे दुर्योधनं तदा ।
स विह्वलः प्रहारेण जानुभ्यामगमन्महीम् ॥ ५६
तस्मिन्कुरुकुलश्रेष्ठे जानुभ्यामवनीं गते ।
उदतिष्ठत्ततो नादः सृञ्जयानां जगत्पते ॥ ५७
तेषां तु निनदं श्रुत्वा सृञ्जयानां नरर्षभः ।
अमर्षाद्भरतश्रेष्ठ पुत्रस्ते समकुप्यत ॥ ५८
उत्थाय तु महाबाहुर्महानाग इव श्वसन् ।
दिधक्षन्निव नेत्राभ्यां भीमसेनमवैक्षत ॥ ५९
ततः स भरतश्रेष्ठो गदापाणिरभिद्रवन् ।
प्रमथिष्यन्निव शिरो भीमसेनस्य संयुगे ॥ ६०
स महात्मा महात्मानं भीमं भीमपराक्रमः ।
अताडयच्छङ्खदेशे न चचालाचलोपमः ॥ ६१
स भूयः शुशुभे पार्थस्ताडितो गदया रणे ।
उद्भिन्नरुधिरो राजन्प्रभिन्न इव कुञ्जरः ॥ ६२

ततो गदां वीरहणीमयोमयीं
प्रगृह्य वज्राशनितुल्यनिःस्वनाम् ।
अताडयच्छत्रुममित्रकर्शनो
बलेन विक्रम्य धनञ्जयाग्रजः ॥ ६३
स भीमसेनाभिहतस्तवात्मजः
पपात संकम्पितदेहबन्धनः ।
सुपुष्पितो मारुतवेगताडितो
वने महासाल इवावघूर्णितः ॥ ६४
ततः प्रणेदुर्जहृषुश्च पाण्डवाः
समीक्ष्य पुत्रं पतितं क्षितौ तव ।
ततः सुतस्ते प्रतिलभ्य चेतनां
समुत्पपात द्विरदो यथा ह्रदात् ॥ ६५
स पार्थिवो नित्यममर्षितस्तदा
महारथः शिक्षितवत्परिभ्रमन् ।
अताडयत्पाण्डवमग्रतः स्थितं
स विह्वलाङ्गो जगतीमुपास्पृशत् ॥ ६६
स सिंहनादं विननाद कौरवो
निपात्य भूमौ युधि भीममोजसा ।
बिभेद चैवाशनितुल्यमोजसा
गदानिपातेन शरीररक्षणम् ॥ ६७
ततोऽन्तरिक्षे निनदो महानभू-
द्दिवौकसामप्सरसां च नेदुषाम् ।
पपात चोच्चैरमरप्रवेरितं
विचित्रपुष्पोत्करवर्षमुत्तमम् ॥ ६८
ततः परानाविशदुत्तमं भयं
समीक्ष्य भूमौ पतितं नरोत्तमम् ।
अहीयमानं च बलेन कौरवं
निशाम्य भेदं सुदृढस्य वर्मणः ॥ ६९
ततो मुहूर्तादुपलभ्य चेतनां
प्रमृज्य वक्त्रं रुधिराक्तमात्मनः ।
धृतिं समालम्ब्य विवृत्य लोचने
बलेन संस्तभ्य वृकोदरः स्थितः ॥ ७०
'ततो यमौ यमसदृशौ पराक्रमे
सपार्षतः शिनितनयश्च वीर्यवान् ।
समाह्वयन्नहमहमित्यभित्वरं-
स्तवात्मजं समभिययुर्वधैषिणः ॥ ७१
निवर्त्य तान्पुनरपि पाण्डवो बली
तवात्मजं स्वयमभिगम्य कालवत् ।
चचार चाप्यपगतखेदवेपथुः
सुरेश्वरो नमुचिमिवोत्तमं रणे ॥' ७२

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

शङ्खदेशे ललाटप्रान्ते ॥ ६१ ॥ नेदुषां नादं कृतवतीनाम् ॥ ६८ ॥ अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

भीमसेनेन दुर्योधनस्योरुभेदनम् ॥ १ ॥

सञ्जय उवाच ।
समुदीर्णं ततो दृष्ट्वा सङ्ग्रामं कुरुमुख्ययोः ।
अब्रवीदर्जुनस्तत्र वासुदेवं यशस्विनम् ॥ १
अनयोर्वीरयोर्युद्धे को ज्यायान्भवतो मतः ।
कस्य वा को गुणो ज्यायानेतद्वद जनार्दन ॥ २
वासुदेव उवाच ।
उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः ।
कृती यत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥ ३
भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति ।
अन्यायेन तु युध्यन्वै हन्यादेव सुयोधनम् ॥ ४
मायया निर्जिता देवैरसुरा इति नः श्रुतम् ।
विरोचनस्तु शक्रेण मायया निर्जितः स वै ॥ ५
मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः ।
तस्मान्मायामयं वीर आतिष्ठतु वृकोदरः ॥ ६
प्रतिज्ञातं च भीमेन द्यूतकाले धनञ्जय ।
ऊरू भेत्स्यामि ते सङ्ख्ये गदयेति सुयोधनम् ॥ ७
सोऽयं प्रतिज्ञां तां चापि पारयत्वरिकर्शनः ।
मायाविनं तु राजानं माययैव निकृन्ततु ॥ ८
यद्येष बलमास्थाय न्यायेन प्रहरिष्यति ।
विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः ॥ ९
पुनरेव तु वक्ष्यामि पाण्डवेय निबोध मे ।
धर्मराजापराधेन भयं नः पुनरागतम् ॥ १०
कृत्वा हि सुमहत्कर्म हत्वा भीष्ममुखान्कुरून् ।
जयः प्राप्तो यशः प्राग्र्यं वैरं च प्रतियातितम् ।
तदेवं विजयः प्राप्तः पुनः संशयितः कृतः ॥ ११
अबुद्धिरेषा महती धर्मराजस्य पाण्डव ।
यदेकविजये वीर पणितं कृतमीदृशम् ॥ १२
सुयोधनः कृती वीर एकायनगतस्तथा ॥ १३
अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः ।
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु ॥ १४
पुनरावर्तमानानां भग्नानां जीवितैषिणाम् ।
भेतव्यमरिशेषाणामेकायनगता हि ते ॥ १५
[साहसोत्पतितानां च निराशानां च जीविते ।
न शक्यमग्रतः स्थातुं शक्रेणापि धनञ्जय ॥] १६
सुयोधनमिमं भग्नं हतसैन्यं ह्रदं गतम् ।
पराजितं वनप्रेप्सुं निराशं राज्यलम्भने ।
कोऽन्विष्य संयुगे प्राज्ञः पुनर्द्वन्द्वे समाह्वयेत् ॥ १७
अपि नो निर्जितं राज्यं न हरेत सुयोधनः ।
यस्त्रयोदशवर्षाणि गदया कृतनिश्रमः ।
चरत्यूर्ध्वं च तिर्यक्च भीमसेनजिघांसया ॥ १८
एनं चेन्न महाबाहुरन्यायेन हनिष्यति ।
एष वः कौरवो राजा धार्तराष्ट्रो भविष्यति ॥ १९
सञ्जय उवाच ।
धनञ्जयस्तु श्रुत्वैतत्केशवस्य महात्मनः ।
प्रेक्षतो भीमसेनस्य सव्यमूरुमताडयत् ॥ २०
गृह्य संज्ञां ततो भीमो गदया व्यचरद्रणे ।
मण्डलानि विचित्राणि यमकानीतराणि च ॥ २१
दक्षिणं मण्डलं सव्यं गोमूत्रिकमथापि च ।
व्यचरत्पाण्डवो राजन्नरिं संमोहयन्निव ॥ २२
तथैव तव पुत्रोऽपि गदामार्गविशारदः ।
व्यचरल्लघु चित्रं च भीमसेनजिघांसया ॥ २३
आधुन्वन्तौ गदे घोरे चन्दनागरुरूषिते ।
वैरस्यान्तं परीप्सन्तौ रणे क्रुद्धाविवान्तकौ ॥ २४
अन्योन्यं तौ जिघांसन्तौ प्रवीरौ पुरुषर्षभौ ।
युयुधाते गरुत्मन्तौ यथा नागामिषैषिणौ ॥ २५
मण्डलानि विचित्राणि चरतोर्नृपभीमयोः ।
गदासंपातजास्तत्र प्रजज्ञुः पावकार्चिषः ॥ २६
समं प्रहरतोस्तत्र शूरयोर्बलिनोर्मृधे ।
क्षुब्धयोर्वायुना राजन्द्वयोरिव समुद्रयोः ॥ २७
तयोः प्रहरतोस्तुल्यं मत्तकुञ्जरयोरिव ।
गदानिर्घातसंह्रादः प्रहाराणामजायत ॥ २८
तस्मिंस्तदा संप्रहारे दारुणे संकुले भृशम् ।

अरिशेषाणां पञ्चम्यर्थे षष्ठी ॥ १५ ॥

उभावपि परिश्रान्तौ युध्यमानावरिंदमौ ॥ २९
तौ मुहूर्तं समाश्वस्य पुनरेव परंतप ।
अभ्यहारयतां क्रुद्धौ प्रगृह्य महती गदे ॥ ३०
तयोः समभवद्युद्धं घोररूपमसंवृतम् ।
गदानिपातै राजेन्द्र तक्षतोर्वै परस्परम् ॥ ३१
समरे प्रद्रुतौ तौ तु वृषभाक्षौ तरस्विनौ ।
अन्योन्यं जघ्नतुर्वीरौ पङ्कस्थौ महिषाविव ॥ ३२
जर्जरीकृतसर्वाङ्गौ रुधिरेणाभिसंप्लुतौ ।
ददृशाते हिमवति पुष्पिताविव किंशुकौ ॥ ३३
दुर्योधनस्तु पार्थेन विवरे संप्रदर्शिते ।
ईषदुत्स्मयमानस्तु सहसा प्रससार ह ॥ ३४
तमभ्याशगतं प्राज्ञः क्षणे प्रेक्ष्य वृकोदरः ।
अवाक्षिपद्गदां तस्मिन्वेगेन महता बली ॥ ३५
अवक्षेपं तु तं दृष्ट्वा पुत्रस्तव विशांपते ।
अपासर्पत्ततः स्थानात्सा मोघा न्यपतद्भुवि ॥ ३६
मोक्षयित्वा प्रहारं तं सुतस्तव सुसंभ्रमात् ।
भीमसेनं च गदया प्राहरत्कुरुसत्तम ॥ ३७
तस्य विस्यन्दमानेन रुधिरेणामितौजसः ।
प्रहारगुरुपाताच्च मूर्छेव समजायत ॥ ३८
तन्नाबुध्यत पुत्रस्ते पीडितं पाण्डवं रणे ।
धारयामास भीमोऽपि शरीरमतिपीडितम् ॥ ३९
अमन्यत स्थितं ह्येनं प्रहरिष्यन्तमाहवे ।
अतो न प्राहरत्तस्मै पुनरेव तवात्मजः ॥ ४०
ततो मुहूर्तमाश्वस्य दुर्योधनमुपस्थितम् ।
वेगेनाभ्यपतद्राजन्गदामादाय पाण्डवः ॥ ४१
तमापतन्तं संप्रेक्ष्य संरब्धममितौजसम् ।
मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ॥ ४२
अवस्थाने मतिं कृत्वा पुत्रस्तव महामनाः ।
इयेषोत्पतितुं राजञ्छलयिष्यन्वृकोदरम् ॥ ४३
अबुध्यद्भीमसेनस्तु राज्ञस्तस्य चिकीर्षितम् ।
अथास्य समभिद्रुत्य समुत्पत्य च सिंहवत् ॥ ४४
सृत्या वञ्चयतो राजन्पुनरेवोत्पतिष्यतः ।
ऊरुभ्यां प्राहिणोद्राजन्गदां वेगेन पाण्डवः ४५
सा वज्रनिष्पेषसमा प्रहिता भीमकर्मणा ।
ऊरू दुर्योधनस्याथ बभञ्ज प्रियदर्शनौ ॥ ४६
स पपात नरव्याघ्रो वसुधामनुनादयन् ।
भग्नोरुर्भीमसेनेन पुत्रस्तव महीपते ॥ ४७
ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च ।
चचाल पृथिवी चापि सवृक्षक्षुपपर्वता ॥ ४८
तस्मिन्निपतिते वीरे पत्यौ सर्वमहीक्षिताम् ।
महास्वना पुनर्दीप्ता सनिर्घाता भयंकरी ।
पपात चोल्का महती पतिते पृथिवीपतौ ॥ ४९
तथा शोणितवर्षं च पांसुवर्षं च भारत ।
ववर्ष मघवांस्तत्र तव पुत्रे निपातिते ॥ ५०
यक्षाणां राक्षसानां च पिशाचानां तथैव च ।
अन्तरिक्षे महान्नादस्तत्र भारत शुश्रुवे ॥ ५१
तेन शब्देन घोरेण मृगाणामथ पक्षिणाम् ।
जज्ञे घोरतरः शब्दो बहूनां सर्वतोदिशम् ॥ ५२
ये तत्र वाजिनः शेषा गजाश्च मनुजैः सह ।
मुमुचुस्ते महानादं तव पुत्रे निपातिते ॥ ५३
भेरीशङ्खमृदङ्गानामभवच्च स्वनो महान् ।
अन्तर्भूमिगतश्चैव तव पुत्रे निपातिते ॥ ५४
[बहुपादैर्बहुभुजैः कबन्धैर्घोरदर्शनैः ।
नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप ॥ ५५
ध्वजवन्तोऽस्त्रवन्तश्च शस्त्रवन्तस्तथैव च ।
प्राकम्पन्त ततो राजंस्तव पुत्रे निपातिते ॥] ५६
ह्रदाः कूपाश्च रुधिरमुद्वेमुर्नृपसत्तम ।
नद्यश्च सुमहावेगाः प्रतिस्रोतोवहाऽभवन् ॥ ५७
पुल्लिङ्गा इव नार्यस्तु स्त्रीलिङ्गाः पुरुषाऽभवन् ।
दुर्योधने तदा राजन्पतिते तनये तव ॥ ५८
दृष्ट्वा तानद्भुतोत्पातान्पाञ्चालाः पाण्डवैः सह ।
आविग्नमनसः सर्वे बभूवुर्भरतर्षभ ॥ ५९
ययुर्देवा यथाकामं गन्धर्वाप्सरसस्तथा ।
कथयन्तोऽद्भुतं युद्धं सुतयोस्तव भारत ॥ ६०

---

सहसैवाभिसारित इति क. छ. पाठः ॥ ३४ ॥ सृत्या वञ्चयत इति क. छ. पाठः ॥ ४५ ॥ क्षुपः क्षुद्रवृक्षः ॥ ४८ ॥

एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

तथैव सिद्धा राजेन्द्र तथा वातिकचारणाः । नरसिंहौ प्रशंसन्तौ विप्रजग्मुर्यथागतम् ॥ ६१

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

भीमसेनेन दुर्योधनापनयानुसारणपूर्वकं वामपादेन तच्छिरस्ताडनम् ॥ १ ॥ युधिष्ठिरेण दुर्योधनसमाश्वासनम् ॥ २ ॥

सञ्जय उवाच ।
तं पातितं ततो दृष्ट्वा महासालमिवोद्गतम् ।
प्रहृष्टमनसः सर्वे बभूवुस्तत्र पाण्डवाः ॥ १
उन्मत्तमिव मातङ्गं सिंहेन विनिपातितम् ।
ददृशुर्हृष्टरोमाणः सर्वे ते चापि सोमकाः ॥ २
ततो दुर्योधनं हत्वा भीमसेनः प्रतापवान् ।
पातितं कौरवेन्द्रं तमुपगम्येदमब्रवीत् ॥ ३
गौर्गौरिति पुरा मन्द द्रौपदीमेकवाससम् ।
यत्सभायां हसन्नस्मांस्तदा वदसि दुर्मते ।
तस्यावहासस्य फलमद्य त्वं समवाप्नुहि ॥ ४
एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत् ।
शिरश्च राजसिंहस्य पादेन समलोडयत् ॥ ५
तथैव क्रोधसंरक्तो भीमः परबलार्दनः ।
पुनरेवाब्रवीद्वाक्यं यत्तच्छृणु नराधिप ॥ ६
येऽस्मान्पुरा प्रनृत्यन्ति मूढा गौरिति गौरिति ।
तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ ७
नास्माकं निकृतिर्वह्निर्नाक्षद्यूतं न वञ्चना ।
स्वबाहुबलमाश्रित्य प्रबाधामो वयं रिपून् ॥ ८
सोऽवाप्य वैरस्य चिरस्य पारं
वृकोदरः प्राह शनैः प्रहस्य ।
युधिष्ठिरं केशवसञ्जयांश्च
धनञ्जयं माद्रवतीसुतौ च ॥ ९
रजस्वलां द्रौपदीमानयन्ये
ये चाप्यकुर्वन्त सदस्यवस्त्राम् ।
तान्पश्यध्वं पाण्डवैर्धार्तराष्ट्रान्
रणे हतांस्तपसा याज्ञसेन्याः ॥ १०
ये नः पुरा षण्ढतिलानवोचन्
क्रूरा राज्ञो धृतराष्ट्रस्य पुत्राः ।
ते नो हताः सगणाः सानुबन्धाः
कामं स्वर्गं नरकं वा व्रजामः ॥ ११
पुनश्च राज्ञः पतितस्य भूमौ
स तां गदां स्कन्धगतां प्रगृह्य ।
वामेन पादेन शिरः प्रमृद्य
दुर्योधनं नैकृतिकेत्यवोचत् ॥ १२
हृष्टेन राजन्कुरुपार्थिवस्य
क्षुद्रात्मना भीमसेनेन पादम् ।
दृष्ट्वा कृतं मूर्धनि नाभ्यनन्दन्
धर्मात्मानः सोमकानां प्रबर्हाः ॥ १३
तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम् ।
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम् ॥ १४
गतोऽसि वैरस्यानृण्यं प्रतिज्ञा पूरिता त्वया ।
शुभेनाथाशुभेनैव कर्मणा विरमाधुना ॥ १५
मा शिरोऽस्य पदाऽमर्दीमा धर्मस्तेऽतिगो भवेत् ।
राजा ज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ ॥ १६
एकादशचमूनाथं कुरूणामधिपं तथा ।
मास्प्राक्षीर्भीम पादेन राजानं ज्ञातिमेव च ॥ १७
हतबन्धुर्हतामात्यो भ्रष्टसैन्यो हतो मृधे ।
सर्वाकारेण शोच्योऽयं नावहास्योऽयमीश्वरः ॥ १८
विध्वस्तोऽयं हतामात्यो हतबन्धुर्हतात्मजः ।
उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं कृतं त्वया १९
धार्मिको भीमसेनोऽसावित्याहुस्त्वां पुरा जनाः ।
स कस्माद्भीमसेन त्वं राजानमधितिष्ठसि ॥ २०
इत्युक्त्वा भीमसेनं तु साश्रुकण्ठो युधिष्ठिरः ।
उपसृत्याब्रवीद्दीनो दुर्योधनमरिंदमम् ॥ २१
तात मन्युर्न ते कार्यो नात्मा शोच्यस्त्वया तथा ।
नूनं पूर्वकृतं कर्म सुघोरमनुभूयते ॥ २२

धात्रोपदिष्टं विषमं नूनं फलमसंस्कृतम् ।
यद्वयं त्वां जिघांसामस्त्वं चास्मान्कुरुसत्तम ॥२३
आत्मनो ह्यपराधेन महद्व्यसनमीदृशम् ।
प्राप्तवानसि यल्लोभान्मदाद्बाल्याच्च भारत ॥ २४
घातयित्वा वयस्यांश्च भ्रातॄनथ पितॄंस्तथा ।
पुत्रान्पौत्रांस्तथा चान्यांस्ततोसि निधनं गतः २५
तवापराधादस्माभिर्भ्रातरस्ते निपातिताः ।
निहता ज्ञातयश्चापि दिष्टं मन्ये दुरत्ययम् ॥ २६
[आत्मा न शोचनीयस्ते श्लाघ्यो मृत्युस्तवानघ ।
वयमेवाधुना शोच्याः सर्वावस्थासु कौरव ॥ २७
कृपणं वर्तयिष्यामस्तैर्हीना बन्धुभिः प्रियैः ।
भ्रातॄणां चैव पुत्राणां तथा वै शोकविह्वलाः २८
कथं द्रक्ष्यामि विधवा वधूः शोकपरिप्लुताः ।
त्वमेकः सुस्थितो राजन्स्वर्गे ते निलयो ध्रुवः ।
वयं नरकसंज्ञं वै दुःखं प्राप्स्याम दारुणम् ॥ ] २९
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः ।
गर्हयिष्यन्ति नो नूनं विधवाः शोककर्शिताः ३०
सञ्जय उवाच ।
एवमुक्त्वा सुदुःखार्तो निशश्वास स पार्थिवः ।
विललाप चिरं चापि धर्मपुत्रो युधिष्ठिरः ॥ ३१

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

भीमे अपनयबुद्ध्या क्रुद्धेन बलरामेण लाङ्गलमुद्यम्य तंप्रत्यभिगमनम् ॥ १ ॥ कृष्णेन तत्सान्त्वनं ततो बलस्य द्वारकागमनम् ॥ २ ॥ युधिष्ठिरस्य कृष्णेन भीमेन च संलापः ॥ ३ ॥

धृतराष्ट्र उवाच ।
अधर्मेण हतं दृष्ट्वा राजानं माधवोत्तमः ।
किमब्रवीत्तदा सूत बलदेवो महाबलः ॥ १
गदायुद्धविशेषज्ञो गदायुद्धविशारदः ।
कृतवान्रौहिणेयो यत्तन्ममाचक्ष्व सञ्जय ॥ २
सञ्जय उवाच ।
शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतम् ।
रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली ॥ ३
ततो मध्ये नरेन्द्राणामूर्ध्वबाहुर्हलायुधः ।
कुर्वन्नार्तस्वरं घोरं धिग्धिग्भीमेत्युवाच ह ॥ ४
अहो धिग्यदधो नाभेः प्रहृतं धर्मविग्रहे ।
नैतद्दृष्टं गदायुद्धे कृतवान्यद्वृकोदरः ॥ ५
अधो नाभ्या न हन्तव्यमिति शास्त्रस्य निश्चयः ।
अयं तु शास्त्रमुत्सृज्य स्वच्छन्दात्संप्रवर्तते ॥ ६
तस्य तत्तद्ब्रुवाणस्य रोषः समभवन्महान् ।
[ततो राजानमालोक्य रोषसंरक्तलोचनः ।
बलदेवो महाराज ततो वचनमब्रवीत् ॥ ७
न चैष पतितः कृष्ण केवलं मत्समोऽसमः ।
आश्रितस्य तु दौर्बल्यादाश्रयः परिभर्त्स्यते ॥ ] ८
ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली ॥ ९
तस्योर्ध्वबाहोः सदृशं रूपमासीन्महात्मनः ।
बहुधातुविचित्रस्य श्वेतस्येव महागिरेः ॥ १०
'भ्रातृभिः सहितो वीरैः सार्जुनैरस्त्रकोविदैः ।
न विव्यथे महाराज दृष्ट्वा हलधरं बली ॥' ११
अथ रामं निजग्राह केशवो विनयान्वितः ।
बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलवद्बली ॥ १२
सितासितौ यदुवरौ शुशुभातेऽधिकं तदा ।
'संगताविव राजेन्द्र कैलासाञ्जनपर्वतौ ।
नभोगतौ यथा राजंश्चन्द्रसूर्यौ दिनक्षये ॥ १३
उवाच चैनं संरब्धं शमयन्निव केशवः ॥ १४
आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा ।
विपरीतं द्विषत्स्वेतत्षड्विधा वृद्धिरात्मनः ॥ १५
आत्मन्यपि च मित्रे च विपरीतं यदा भवेत् ।

आत्मवृद्धिः शत्रुक्षयः स्वमित्रस्य वृद्धिः शत्रुमित्रस्य क्षयः स्व- मित्रमित्रस्य वृद्धिः शत्रुमित्रमित्रस्य क्षयः एवं षड्विधा आत्मनो

ादा विद्यान्मनोग्लानिमाशु शान्तिकरो भवेत् ॥
अस्माकं सहजं मित्रं पाण्डवाः शुद्धपौरुषाः ।
ञकाः पितृष्वसुः पुत्रास्ते परैर्निकृता भृशम् ॥१७
प्रतिज्ञापालनं धर्मः क्षत्रियस्येति वेत्थ तत् ॥ १८
दुर्योधनस्य गदया भक्ताऽस्म्यूरू महाहवे ।
इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले ॥ १९
मैत्रेयेणाभिशप्तश्च पूर्वमेव महर्षिणा ।
ऊरू ते भेत्स्यते भीमो गदयेति परंतप ।
अतो दोषं न पश्यामि मा क्रुध्यस्व प्रलम्बहन् २०
यौनः स्वैः सुखहार्दैश्च संबन्धः सह पाण्डवैः ।
तेषां वृद्ध्या हि वृद्धिर्नो मा क्रुधः पुरुषर्षभ॥ २१
वासुदेववचः श्रुत्वा सीरभृत्प्राह धर्मवित्॥ २२
धर्मश्च धारितः सद्भिः स च द्वाभ्यां नियच्छति।
अर्थश्चाप्यतिलुब्धस्य कामश्चातिप्रसङ्गिणः॥ २३
धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन् ।
धर्मार्थकामान्योऽभ्येति सोऽत्यन्तं सुखमश्नुते॥२४
तदिदं व्याकुलं सर्वं कृतं धर्मस्य पीडनात् ।
भीमसेनेन गोविन्द कामं त्वं तु यथाऽऽत्थ माम्॥
कृष्ण उवाच ।
अरोषणो हि धर्मात्मा सततं धर्मवत्सलः ।
भवान्प्रख्यायते लोके तस्मात्संशाम्य मा क्रुधः ॥
प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च ।
आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः ।
'ततः पुरुषशार्दूलो हत्वा नैकृतिकं रणे ॥ २७
निकृत्या निकृतिप्रज्ञं यो हन्याद्वैरिणं रणे ।
अधर्मो विद्यते नात्र यद्भीमो हतवान्रिपुम्॥ २८
युध्यमानं रणे वीरं कुरुवृष्णियशस्करम् ।
अनेन कर्णः संदिष्टः पृष्ठतो धनुरच्छिनत् ॥ २९
ततः संछिन्नधन्वानं विरथं पौरुषे स्थितम् ।
व्यायुधीकृत्य बहवः सौभद्रमपलायिनम् ॥ ३०
जन्मप्रभृति लुब्धश्च पापात्मा चैष दुर्मतिः ।
निहतो भीमसेनेन दुर्बुद्धिः कुलपांसनः ॥ ३१
प्रतिज्ञां भीमसेनेन त्रयोदशसमार्जिताम् ।
किमर्थं नाभिजानाति युध्यमानो हि शत्रुभिः ३२
ऊर्ध्वमाक्रम्य वेगेन जिघांसन्तं वृकोदरः ।
बिभेद गदया चोरू न स्थाने न च मण्डले॥' ३३
सञ्जय उवाच ।
धर्मच्छलमिमं श्रुत्वा केशवात्स विशांपते ।
नैव प्रीतमना रामो वचनं प्राह संसदि ॥ ३४
हत्वाऽधर्मेण राजानं धर्मात्मानं सुयोधनम् ।
जिह्मयोधीति लोकेऽस्मिन्ख्यातिं यास्यति पाण्डवः
दुर्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम्।
ऋजुयोधी हतो राजा धर्मराष्ट्रो नराधिपः॥ ३६
युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च ।
हुत्वाऽऽत्मानममित्राग्नौ प्राप चावभृथं यशः ।
'स्वर्गं गन्ता महाराजः ससुहृज्ज्ञातिबान्धवः॥'३७
इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान् ।
श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति ॥ ३८
पाञ्चालाश्च सवार्ष्णेयाः पाण्डवाश्च विशांपते ।
रामे द्वारवतीं याते नातिप्रमनसोऽभवन् ॥ ३९
ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखम् ।
शोकोपहतसंकल्पं वासुदेवोऽब्रवीदिदम् ॥ ४०
वासुदेव उवाच ।
धर्मराज किमर्थं त्वमधर्ममनुमन्यसे ।
हतबन्धोर्यदेतस्य पतितस्य विचेतसः ॥ ४१
दुर्योधनस्य भीमेन मृद्यमानं शिरः पदा ।
उपप्रेक्षसि कस्मात्त्वं धर्मज्ञः सन्नराधिप ॥ ४२
युधिष्ठिर उवाच ।
न ममैतत्प्रियं कृष्ण यद्राजानं वृकोदरः ।
पदा मूर्ध्न्यस्पृशत्क्रोधान्न च हृष्ये कुलक्षये॥ ४३

---

द्धिः ॥ १५ ॥ यदि चेदात्मनो ग्लानिस्तदा शान्तिकर इति क. पाठः ॥१६॥ भक्ता भङ्क्ष्ये ॥१९॥ यौनः योनिनिमित्तः संबन्धः । अस्माकं पितामहः पाण्डवानां मातामहश्चैक इति यौनसंबन्धः ॥२१॥ सीरभृत् रामः ॥२२॥ धर्मइति । नियच्छति नियममेति अर्थकामाभ्यां धर्मः संकोचमेतीत्यर्थः ॥ २३ ॥ धर्मार्थौ कामेनापीडयन् धर्मकावर्थेनापीडयन् कामार्थौ धर्मेण चापीडयन्नि-त्यर्थः ॥ २४ ॥ कामं यथेष्टं त्वं मां प्रति उक्तवानसि नतु धर्म्यं ॥ २५ ॥ कलियुगारम्भे एतावत्पापं नातीव खेदावहमिति भावः ॥ २७ ॥ अधर्ममनुपश्यसीति क. छ. पाठः ॥ ४१ ॥

निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्वयम् ।
बहूनि परुषाण्युक्त्वा वनं प्रस्थापिता वयम् ॥ ४४
भीमसेनस्य तद्दुःखमतीव हृदि वर्तते ।
इति संचिन्त्य वार्ष्णेय मयैतत्समुपेक्षितम् ॥ ४५
तस्माद्धत्वाऽकृतप्रज्ञं लुब्धं कामवशानुगम् ।
लभतां पाण्डवः कामं धर्मोऽधर्मोऽथवा कृतः ॥ ४६
सञ्जय उवाच ।
इत्युक्तवति कौन्तेये धर्मराजे युधिष्ठिरे ।
वासुदेवो महाबाहुर्युधिष्ठिरमभाषत ।
काममस्त्वेतदिति वै कृच्छ्राद्यदुकुलोद्वहः ॥ ४७
इत्युक्त्वा वासुदेवोऽपि वायुपुत्रप्रियेप्सया ।
अन्वमोदत तत्सर्वं यद्भीमेन कृतं युधि ॥ ४८
'अर्जुनोऽपि महाबाहुरप्रीतेनान्तरात्मना ।
नोवाच किंचिद्वचनं भ्रातरं साध्वसाधु वा ॥' ४९
भीमसेनोऽपि हत्वाऽऽजौ तव पुत्रममर्षणः ।
अभिवाद्याग्रतः स्थित्वा संप्रहृष्टः कृताञ्जलिः ॥ ५०
प्रोवाच सुमहातेजा धर्मराजं युधिष्ठिरम् ।
हर्षादुत्फुल्लनयनो जितकाशी विशांपते ॥ ५१
तवाद्य पृथिवी सर्वा क्षेमा निहतकण्टका ।
तां प्रशाधि महाराज स्वधर्ममनुपालय ॥ ५२
यस्तु कर्ताऽस्य वैरस्य निकृत्या निकृतिप्रियः ।
सोऽयं विनिहतः शेते पृथिव्यां पृथिवीपते ॥ ५३
दुःशासनप्रभृतयः सर्वे ते चोग्रवादिनः ।
राधेयः शकुनिश्चैव हताश्च तव शत्रवः ॥ ५४
सेयं रत्नसमाकीर्णा मही सवनपर्वता ।
उपावृत्ता महाराज त्वामद्य निहतद्विषम् ॥ ५५
युधिष्ठिर उवाच ।
गतो वैरस्य निधनं हतो राजा सुयोधनः ।
कृष्णस्य मतमास्थाय विजितेयं वसुंधरा ॥ ५६
दिष्ट्या गतस्त्वमानृण्यं मातुः कोपस्य चोभयोः ।
दिष्ट्या जयसि दुर्धर्ष दिष्ट्या शत्रुर्निपातितः ॥ ५७

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

पाञ्चालादिभिर्भीमस्तुतिः ॥ १ ॥ कृष्णदुर्योधनयोः परस्परगर्हणम् ॥ २ ॥ दुर्योधनेनात्मस्तुतौ तन्मूर्ध्नि गन्धर्वैः पुष्पवर्षणम् ॥ ३ ॥ भीष्मादिस्मरणेन दुःखितानां पाण्डवानां कृष्णेन समाश्वासनम् ॥ ४ ॥

धृतराष्ट्र उवाच ।
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
पाण्डवाः सृञ्जयाश्चैव किमकुर्वत सञ्जय ॥ १
सञ्जय उवाच ।
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
सिंहेनेव महाराज मत्तं वनगजं यथा ॥ २
प्रहृष्टमनसस्तत्र कृष्णेन सह पाण्डवाः ।
पाञ्चालाः सृञ्जयाश्चैव निहते कुरुनन्दने ।
आविध्यन्नुत्तरीयाणि सिंहनादांश्च नेदिरे ॥ ३
नैतान्हर्षसमाविष्टानियं सेहे वसुंधरा ॥ ४
धनूंष्येके व्याक्षिपन्त ज्याश्चाप्यन्ये तथाऽक्षिपन् ।
दध्मुरन्ये महाशङ्खानन्ये जघ्नुश्च दुन्दुभीन् ॥ ५
चिक्रीडुश्च तथैवान्ये जहसुश्च तवाहिताः ।
अब्रुवंश्चासकृद्वीरा भीमसेनमिदं वचः ॥ ६
दुष्करं भवता कर्म रणेऽद्य सुमहत्कृतम् ।
कौरवेयं रणे हत्वा गदयाऽतिकृतश्रमम् ॥ ७
इन्द्रेणेव हि वृत्रस्य वधं परमसंयुगे ।
त्वया कृतममन्यन्त शत्रोर्वधमिमं जनाः ॥ ८
चरन्तं विविधान्मार्गान्मण्डलानि च सर्वशः ।
दुर्योधनमिमं शूरं कोऽन्यो हन्याद्वृकोदरात् ॥ ९
वैरस्य च गतः पारं त्वमिहान्यैः सुदुर्गमम् ।
अशक्यमेतदन्येन संपादयितुमीदृशम् ॥ १०
कुञ्जरेणेव मत्तेन वीरसंग्राममूर्धनि ।
दुर्योधनशिरो दिष्ट्या पादेन मृदितं त्वया ॥ ११

धर्मोऽधर्मे च वा कृते इति झ. पाठः ॥ ४६ ॥

सिंहेन महिषस्येव कृत्वा संगरमुत्तमम् ।
दुःशासनस्य रुधिरं दिष्ट्या पीतं त्वयाऽनघ ॥१२
ये विप्रकुर्वन्राजानं धर्मात्मानं युधिष्ठिरम् ।
मूर्ध्नि तेषां कृतः पादो दिष्ट्या ते स्वेन कर्मणा॥१३
अमित्राणामधिष्ठानाद्वधाद्दुर्योधनस्य च ।
भीम दिष्ट्या पृथिव्यां ते प्रथितं सुमहद्यशः॥१४
एवं नूनं हते वृत्रे शक्रं नन्दन्ति बन्दिनः ।
तथा त्वां निहतामित्रं वयं नन्दाम भारत॥ १५
दुर्योधनवधे यानि रोमाणि हृषितानि नः ।
अद्यापि न विकृष्यन्ते तानि तद्विद्धि भारत ।
इत्यब्रुवन्भीमसेनं वातिकास्तत्र संगताः ॥ १६
तान्हृष्टान्पुरुषव्याघ्रान्पाञ्चालान्पाण्डवैः सह ।
ब्रुवतोऽसदृशं तत्र प्रोवाच मधुसूदनः ॥ १७
न न्याय्यं निहतं शत्रुं भूयो हन्तुं नराधिपाः।
असकृद्वाग्भिरुग्राभिर्निहतो ह्येष मन्दधीः ॥ १८
तदैवैष हतः पापो यदैव निरपत्रपः ।
लुब्धः पापसहायश्च सुहृदां शासनातिगः ॥ १९
बहुशो विदुरद्रोणकृपगाङ्गेयसृञ्जयैः ।
पाण्डुभ्यः प्रार्थ्यमानोऽपि पित्र्यमंशं न दत्तवान्॥
नैव तेभ्योऽद्य मित्रं वा शत्रुर्वा पुरुषाधमः।
किमनेन वितुन्नेन वाग्भिः काष्ठसधर्मणा ॥ २१
रथेष्वारोहत क्षिप्रं गच्छामो वसुधाधिपाः ।
दिष्ट्या हतोऽयं पापात्मा सामात्यज्ञातिबान्धवः॥
इति श्रुत्वा त्वधिक्षेपं कृष्णाद्दुर्योधनो नृपः।
अमर्षवशमापन्न उदतिष्ठद्विशांपते ॥ २३
स्फिग्देशेनोपविष्टः स दोर्भ्यां विष्टभ्य मेदिनीम् ।
दृष्टिं भ्रूसंकटां कृत्वा वासुदेवे न्यपातयत्॥ २४
अर्धोन्नतशरीरस्य रूपमासीन्नृपस्य तु ।
क्रुद्धस्याशीविषस्येव च्छिन्नपुच्छस्य भोगिनः॥ २५
प्राणान्तकरिणीं घोरां वेदनामप्यचिन्तयन् ।
दुर्योधनो वासुदेवं वाग्भिरुग्राभिरार्दयत् ॥ २६
कंसदासस्य दायाद न ते लज्जाऽस्त्यनेन वै ।
अधर्मेण गदायुद्धे यदहं विनिपातितः ।
ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्याप्रयच्छता २७
किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः ।
घातयित्वा महीपालानृजुयुद्धान्सहस्रशः ।
जिह्मैरुपायैर्बहुभिर्न ते लज्जा न ते घृणा ॥ २८
अहन्यहनि शूराणां कुर्वाणः कदनं महत् ।
शिखण्डिनं पुरस्कृत्य घातितस्ते पितामहः॥ २९
अश्वत्थाम्नः सनामानं हत्वा नागं सुदुर्मते ।
आचार्यो न्यासितः शस्त्रं किं तन्न विदितं मया ३०
स चानेन नृशंसेन धृष्टद्युम्नेन वीर्यवान् ।
पात्यमानस्त्वया दृष्टो न चैनं त्वमवारयः ॥ ३१
वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च ।
घटोत्कचे व्यंसयतः कस्त्वत्तः पापकृत्तमः ॥ ३२
छिन्नहस्तः प्रायगतस्तथा भूरिश्रवा बली ।
त्वयाऽभिसृष्टेन हतः शैनेयेन दुरात्मना ॥ ३३
कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिगीषया ।
व्यंसनेनाश्वसेनस्य पन्नगेन्द्रस्य वै पुनः ॥ ३४
पुनश्च पतिते चक्रे व्यसनार्तः पराजितः ।
पातितः समरे कर्णश्चक्रव्यग्रोऽग्रणीर्नृणाम् ॥ ३५
यदि मां चापि कर्णं च भीष्मद्रोणौ च संयुगे ।
ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवम् ॥३६
त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः ।
स्वधर्ममनुतिष्ठन्तो वयं चान्ये च घातिताः ॥ ३७
'त्वया मायाविना कृष्ण मायां मर्कप्रमोषिणीम् ।
कृत्वा हतः सिन्धुपतिः किं तन्न विदितं मम॥'३८
वासुदेव उवाच ।
हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः ।
सगणः ससुहृच्चैव पापं मार्गमनुष्ठितः ॥ ३९
तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ ।
कर्णश्च निहतः सङ्ख्ये तव शीलानुवर्तकः ॥ ४०
याच्यमानं मया मूढ पित्र्यमंशं न दित्ससि ।
पाण्डवेभ्यः स्वराज्यं च लोभाच्छकुनिनिश्चयात्॥

नैष योग्योऽद्य मित्रं वेति झ. पाठः ॥ २१ ॥

द्विषष्टितमोऽध्यायः ॥ ६२ ॥

विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवाः ।
प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ॥ ४२
सभायां याज्ञसेनी च कृष्टा द्यूते रजस्वला ।
तदैव तावद्दुष्टात्मन्वध्यस्त्वं निरपत्रप ॥ ४३
अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षवेदिना ।
निकृत्या यत्पराजैषीस्तस्मादसि हतो रणे ॥ ४४
जयद्रथेन पापेन यत्कृष्णा क्लेशिता वने ।
यातेषु मृगयां चैव तृणविन्दोरथाश्रमम् ॥ ४५
अभिमन्युश्च यद्बाल एको बहुभिराहवे ।
त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे ॥ ४६
'कुर्वाणं कर्म समरे पाण्डवानर्थकाङ्क्षिणम् ।
यच्छिखण्ड्यवधीद्भीष्मं मित्रार्थे न व्यतिक्रमः ४७
स्वधर्मं पृष्ठतः कृत्वा आचार्यस्त्वत्प्रियेप्सया ।
पार्षतेन हतः सङ्ख्ये वर्तमानोऽसतां पथि ॥ ४८
प्रतिज्ञामात्मनः सत्यां चिकीर्षन्समरे रिपुम् ।
हतवान्सात्वतो विद्वान्सौमदत्तिं महारथम् ॥ ४९
अर्जुनः समरे राजन्युध्यमानः कदाचन ।
निन्दितं पुरुषव्याघ्रः करोति न कथंचन ॥ ५०
लब्ध्वाऽपि बहुधा छिद्रं वीरवृत्तमनुस्मरन् ।
निजघान रणे कर्णं मैवं वोचः सुदुर्मते ॥ ५१
देवानां मतमाज्ञाय तेषां प्रियहितेप्सया ।
अर्जुनस्य महानागं मया व्यंसितमस्त्रजम् ॥ ५२
त्वं च भीष्मश्च कर्णश्च द्रोणो द्रौणायनिस्तथा ।
विराटनगरे तस्य ह्यानृशंस्येन जीविताः ॥ ५३
स्मर पार्थस्य विक्रान्तं गन्धर्वेषु कृतं तथा ।
अधर्मं नात्र गान्धारे पाण्डवैर्यत्कृतं त्वयि ॥ ५४
स्वबाहुबलमास्थाय स्वधर्मेण परंतपाः ।
जितवन्तो रणे वीराः पापोसि निधनं गतः ॥' ५५
[यान्यकार्याणि चास्माकं कृतानीति प्रभाषसे ।
वैगुण्येन तवात्यर्थं सर्वं हि तदनुष्ठितम् ॥ ५६
बृहस्पतेरुशनसो नोपदेशः श्रुतस्त्वया ।
वृद्धा नोपासिताश्चैव हितं वाक्यं न ते श्रुतम् ॥ ५७
लोभेनातिबलेन त्वं तृष्णया च वशीकृतः ।
कृतवानस्यकार्याणि विपाकस्तस्य भुज्यताम् ] ५८

दुर्योधन उवाच ।
अधीतं विधिवद्दत्तं भूः प्रभुक्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ५९
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् ।
तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया ॥ ६०
देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः ।
ऐश्वर्यं चोत्तमं प्राप्तं को नु स्वन्ततरो मया ॥ ६१
ससुहृत्सानुबन्धश्च स्वर्गं गन्ताऽहमच्युत ।
यूयं गर्हितसंकल्पाः शोचन्तो वर्तयिष्यथ ॥ ६२
'न मे विषादो भीमेन पादेन शिर आहतम् ।
काका वा कङ्कगृध्रा वा निधास्यन्ति पदं क्षणात् ॥'
सञ्जय उवाच ।
अस्य वाक्यस्य निधने कुरुराजस्य धीमतः ।
अपतत्सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनाम् ॥ ६४
अवादयन्त गन्धर्वा वादित्रं सुमनोहरम् ॥ ६५
जगुश्चाप्सरसो राज्ञो यशःसंबद्धमेव च ।
सिद्धाश्च मुमुचुर्वाचः साधुसाध्विति पार्थिव ॥ ६६
ववौ च सुरभिर्वायुः पुण्यगन्धो मृदुः सुखः ।
व्यराजंश्च दिशः सर्वा नभो वैदूर्यसन्निभम् ॥ ६७
अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः ।
दुर्योधनस्य पूजां तु दृष्ट्वा व्रीडामुपागमन् ॥ ६८
हतांश्चाधर्मतः श्रुत्वा शोकार्ताः शुशुचुर्हि ते ।
भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ॥ ६९
तांस्तु चिन्तापरान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ॥ ७०
नैष शक्योऽतिशीघ्रास्त्रस्ते च सर्वे महारथाः ।
ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे ॥ ७१
उपायान्निहता ह्येते मया तस्मान्नराधिपाः ।
अन्यथा पाण्डवेयानां नाभविष्यज्जयः क्वचित् ७२
ते हि सर्वे महेष्वासाश्चत्वारोऽतिरथा भुवि ।
अशक्या धर्मतो हन्तुं लोकपालैरपि स्वयम् ७३
तथैवायं गदापाणिर्धार्तराष्ट्रो गतश्रमः ।
अशक्यो धर्मतो हन्तुं कालेनापि हि दण्डिना ॥ ७४

सि कर्तव्यं यदयं निहतो नृपः ।
ार्योच्छलोपायैर्बहवः शत्रवो हताः ॥ ७५
तो मार्गो देवैरसुरघातिभिः ।
नुगतः पन्थाः सर्वैरनुगमिष्यते ॥ ७६
धात्रा विहितं स्वयमेषां महात्मनाम् ।
षकारेण न शक्यमतिवर्तितुम् ॥ ७७
यं भविष्यच्च निमेषाद्यो हनिष्यति ।
न्यथा कर्तुं नेच्छेत्सोऽयं धनञ्जय ॥'७८
ाः स सायाह्ने निवासं रोचयामहे ।
गरथाः सर्वे विश्राम्यन्तु नराधिपाः ॥७९
वचः श्रुत्वा तदानीं पाण्डवैः सह ।
ा भृशसंहृष्टा विनेदुः सिंहसङ्घवत् ॥८०

ततः प्राध्मापयच्छङ्खं पाञ्चजन्यं जनार्दनः ।
'देवदत्तं प्रहृष्टात्मा शङ्खप्रवरमर्जुनः ॥ ८१
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥८२
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ।
धृष्टद्युम्नस्तथा जैत्रं सात्यकिर्नन्दिवर्धनम् ॥ ८३
तेषां नादेन महता शङ्खानां भरतर्षभ ।
आपुपूरे नभः सर्वं पृथिवी च चचाल ह ॥ ८४
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
पाण्डुसैन्येष्ववाद्यन्त स शब्दस्तुमुलोऽभवत् ॥८५
अस्तुवन्पाण्डवानन्ये निर्भीश्च स्तुतिमङ्गलैः ।'
हृष्टा दुर्योधनं दृष्ट्वा निहतं पुरुषर्षभाः ॥ ८६

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

ल्यादिषु स्वस्वशिबिराण्युपगतेषु पाण्डवैर्दुर्योधनशिबिरमेत्य स्वस्वरथेभ्योऽवतरणम् ॥ १ ॥ कृष्णे रथात्प्रथमं ार्थं पश्चात्स्वयमप्यवतीर्णे अग्निना तद्रथस्य भस्मीकरणम् ॥ २ ॥ कृष्णेनार्जुनंप्रति रथदाहस्य कारणकथनम् ॥ ३ ॥ ्नया पाण्डवैरोघवतीतीरे रात्रौ निवसनम् ॥ ४ ॥ कृष्णेन युधिष्ठिरचोदनया गान्धार्याश्वासनाय हास्तिनपु- ः ॥ ५ ॥

उवाच ।
प्रययुः सर्वे निवासाय महीक्षितः ।
ध्मापयन्तो वै हृष्टाः परिघबाहवः ॥ १
ान्गच्छतश्चापि शिबिरं नो विशांपते ।
सोऽन्वगात्पश्चाद्युयुत्सुः सात्यकिस्तथा ॥२
ः शिखण्डी च द्रौपदेयाश्च सर्वशः ।
ान्ये महेष्वासा ययुः स्वशिबिराण्युत ॥ ३
प्राविशन्पार्था हतत्विट्कं हतेश्वरम् ।
नस्य शिबिरं रङ्गवन्निःसृते जने ॥ ४
सवं पुरमिव हृतनागमिव ह्रदम् ।
वरभूयिष्ठं वृद्धामात्यैरधिष्ठितम् ॥ ५
न्पर्युपातिष्ठन्दुर्योधनपुरःसराः ।

कृताञ्जलिपुटा राजन्काषायमलिनाम्बराः ॥ ६
शिबिरं समनुप्राप्य कुरुराजस्य पाण्डवाः ।
अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ॥ ७
ततो गाण्डीवधन्वानमभ्यभाषत केशवः ।
स्थितः प्रियहिते नित्यमतीव भरतर्षभ ॥ ८
अवरोपय गाण्डीवमक्षयौ च महेषुधी ।
अथाहमवरोक्ष्यामि पश्चाद्भरतसत्तम ।
स्वयं चैवावरोह त्वमेतच्छ्रेयस्तवानघ ॥ ९
तच्चाकरोत्तथा वीरः पाण्डुपुत्रो धनञ्जयः ॥ १०
अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनाम् ।
अवारोहत मेधावी रथाद्गाण्डीवधन्वनः ॥ ११
अथावतीर्णे भूतानामीश्वरे सुमहात्मनि ।

---

रः षण्ढः ॥ ५ ॥ दुर्योधनस्य पुरसराः दुर्योधनपुरःसराः ॥ ६ ॥

कपिरप्याश्वपाक्रामत्सहदेवैर्ध्वजालयैः ॥ १२
स दग्धो द्रोणकर्णाभ्यां दिव्यैरस्त्रैर्महारथः ।
अथ दीप्तोऽग्निना ह्याशु प्रजज्वाल महीपते ॥ १३
सोपासङ्गः सरश्मिश्च साश्वः सयुगबन्धनः ।
भस्मीभूतोऽपतद्भूमौ रथो गाण्डीवधन्वनः ॥१४
तं तथा भस्मभूतं तु दृष्ट्वा पाण्डुसुताः प्रभो ।
अभवन्विस्मिता राजन्नर्जुनश्चेदमब्रवीत् ॥ १५
कृताञ्जलिः सप्रणयं प्रणिपत्याभिवाद्य ह ।
गोविन्द कस्माद्भगवन्रथो दग्धोऽयमग्निना ॥१६
किमेतन्महदाश्चर्यमभवद्यदुनन्दन ।
तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि मन्यसे ॥१७
वासुदेव उवाच ।
द्रोणकर्णास्त्रनिर्दग्धः पूर्वमेवायमर्जुन ।
मदास्थितत्वात्समरे न विशीर्णः परंतप ॥ १८
इदानीं तु विशीर्णोऽयं दग्धो ब्रह्मास्त्रतेजसा ।
मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्मणि ॥१९
सञ्जय उवाच ।
ईषदुत्स्मयमानस्तु भगवान्केशवोऽरिहा ।
परिष्वज्य च राजानं युधिष्ठिरमभाषत ॥ २०
दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो जिताः ।
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ॥२१
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ ।
मुक्ता वीरक्षयादस्मात्संग्रामान्निहतद्विषः ।
क्षिप्रमुत्तरकालानि कुरु कार्याणि भारत ॥ २२
उपयातमुपप्लाव्यं सह गाण्डीवधन्वना ।
आनीय मधुपर्कं मां यत्पुरा त्वमवोचथाः ॥ २३
एष भ्राता सखा चैव तव कृष्ण धनञ्जयः ।
रक्षितव्यो महाबाहो सर्वास्वापत्स्विति प्रभो ॥२४
तव चैव ब्रुवाणस्य तथेत्येवाहमब्रुवम् ॥ २५
स सव्यसाची गुप्तस्ते विजयी च जनेश्वर ।
भ्रातृभिः सह राजेन्द्र शूरः सत्यपराक्रमः ।
मुक्तो वीरक्षयादस्मात्संग्रामाद्रोमहर्षणात् ॥ २६
एवमुक्तस्तु कृष्णेन धर्मराजो युधिष्ठिरः ।
हृष्टरोमा महाराज प्रत्युवाच जनार्दनम् ॥ २७
युधिष्ठिर उवाच ।
प्रमुक्तं द्रोणकर्णाभ्यां ब्रह्मास्त्रमरिमर्दन ।
कस्त्वदन्यः सहेत्साक्षादपि वज्री पुरंदरः ॥ २८
भवतस्तु प्रसादेन संग्रामे बहवो हताः ।
महारणगतः पार्थो यच्च नासीत्पराङ्मुखः ॥ २९
तथा तव महाबाहो पर्यायैर्बहुभिर्मया ।
कर्मणामनुसंधानात्तेजस्वी जगति श्रुता ॥ ३०
उपप्लाव्ये महर्षिर्मे कृष्णद्वैपायनोऽब्रवीत् ।
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ ३१
'एवमुक्तस्ततः कृष्णः प्रत्युवाच युधिष्ठिरम् ।
अक्षौहिण्यो दशाष्टौ च तव तेषां च भारत ।
न तुल्याश्चार्जुनस्येह बलेन कुरुनन्दन ॥ ३२
स एष सर्वाण्यस्त्राणि दिव्यानि प्राप्य शङ्करात् ।
मत्समो वा विशिष्टो वा रणे त्वमिति पाण्डवः ।
अनुज्ञातः पाण्डुसुतः पुनः प्रत्यागमन्महीम् ॥३३
भूतं भव्यं भविष्यच्च अनुज्ञातस्त्वया विभो ।
निमेषार्धान्नरव्याघ्रो नयेदिति मतिर्मम ॥ ३४
द्रोणं भीष्मं कृपं कर्णं द्रोणपुत्रं जयद्रथम् ।
निहन्तुं शक्नुयात्क्रुद्धो निमेषार्धाद्धनञ्जयः ॥ ३५
सदेवासुरगन्धर्वान्सयक्षोरगराक्षसान् ।
त्रीन्वा लोकान्विजेतुं स शक्तः किमिह मानुषान् ॥
विधिना विहितं चासौ मया संचोदितोऽपि सन् ।
न चकार मतिं हन्तुं ततस्ते बलवत्तराः ॥ ३७
अत्र गीता मया सुष्ठु गिरः सत्या महीपते ।
दर्शितं मयि सर्वं च तेनासौ जितवान्रिपून् ॥ ३८
अर्जुनोऽपि महाबाहुर्मया तुल्यो महीपते ।
स महेश्वरलब्धास्त्रः किं न कुर्याद्विभुः प्रभो ॥'३९
इत्येवमुक्ते ते वीराः शिबिरं तव भारत ।

तेजस्वीति गतिः श्रुता इति छ. पाठः । तथैव च महाबाहो—मनुसंतानं तेजसश्च गतीः शुभाः इति झ. पाठः ॥ ३० ॥

त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

प्रविश्य प्रत्यपद्यन्त कोशरत्नर्धिसंचयान् ।। ४०
रजतं जातरूपं च मणीनथ च मौक्तिकान् ।
भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च ४१
'गजानश्वात्रथांश्चैव महान्ति शयनानि च' ।
दासीदासमसंख्येयं राज्योपकरणानि च ।। ४२
ते प्राप्य धनमक्षय्यं त्वदीयं भरतर्षभ ।
उदक्रोशन्महाभागा नरेन्द्र विजितारयः ।। ४३
ते तु वीराः समाश्वस्य वाहनान्यवमुच्य च ।
अतिष्ठन्त मुहुः सर्वे पाण्डवा विगतज्वराः ।। ४४
अथाब्रवीन्महाराज वासुदेवो महायशाः ।
अस्माभिर्मङ्गलार्थाय वस्तव्यं शिबिराद्बहिः ।। ४५
तथेत्युक्त्वा हि ते सर्वे पाण्डवाः सात्यकिस्तथा ।
वासुदेवेन सहिता मङ्गलार्थं बहिर्ययुः ।। ४६
ते समासाद्य सरितं पुण्यामोघवतीं नृप ।
न्यवसन्नथ तां रात्रिं पाण्डवा हतशत्रवः ।। ४७
युधिष्ठिरस्ततो राजा प्राप्तकालमचिन्तयत् ।। ४८
तत्र ते गमनं प्राप्तं रोचते तव माधव ।
गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिंदम ।।४९
हेतुकारणयुक्तैश्च वाक्यैः कालसमीरितैः ।
क्षिप्रमेव महाभाग गान्धारीं प्रशमिष्यसि ।
पितामहश्च भगवान्व्यासस्तत्र भविष्यति ।। ५०
ततः संप्रेषयामासुर्यादवं नागसाह्वयम् ।। ५१
स च प्रायाज्जवेनाशु वासुदेवः प्रतापवान् ।
दारुकं रथमारोप्य येन राजाऽम्बिकासुतः ।। ५२
तमूचुः संप्रयास्यन्तं शैब्यसुग्रीववाहनम् ।
प्रत्याश्वासय गान्धारीं हतपुत्रां यशस्विनीम् ।।५३
स प्रायात्पाण्डवैरुक्तस्तत्पुरं सात्वतां वरः ।
आससाद ततः क्षिप्रं गान्धारीं निहतात्मजाम् ५४

।। इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि त्रिषष्टितमोऽध्यायः ।। ६३ ।।

## चतुःषष्टितमोऽध्यायः ।। ६४ ।।

जनमेजयेन गान्धार्याश्वासनकारणप्रश्ने वैशंपायनेन तत्कथनम् ।। १ ।। कृष्णेन गान्धारीधृतराष्ट्रौ समाश्वास्य पुनः पाण्डवसमीपागमनम् ।। २ ।।

जनमेजय उवाच ।
किमर्थं द्विजशार्दूल धर्मराजो युधिष्ठिरः ।
गान्धार्याः प्रेषयामास वासुदेवं परंतपम् ।। १
यदा पूर्वं गतः कृष्णः शमार्थं कौरवान्प्रति ।
न च तं लब्धवान्कामं ततो युद्धमभूदिदम् ।। २
निहतेषु तु योधेषु हते दुर्योधने तदा ।
पृथिव्यां पाण्डवेयस्य निःसपत्ने कृते युधि ।। ३
विद्रुते शिबिरे शून्ये प्राप्ते यशसि चोत्तमे ।
किं नु तत्कारणं ब्रह्मन्येन कृष्णो गतः पुनः ।। ४
न चैतत्कारणं ब्रह्मन्नल्पं विप्रतिभाति मे ।
यत्रागमदमेयात्मा स्वयमेव जनार्दनः ।। ५
तत्त्वतो वै समाचक्ष्व सर्वमध्वर्युसत्तम ।
यच्चात्र कारणं ब्रह्मन्कार्यस्यास्य विनिश्चये ।। ६

वैशंपायन उवाच ।
त्वद्युक्तोऽयमनुप्रश्नो यन्मां पृच्छसि पार्थिव ।
तत्तेऽहं संप्रवक्ष्यामि यथावद्भरतर्षभ ।। ७
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
व्युत्क्रम्य समयं राजन्धार्तराष्ट्रं महाबलम् ।। ८
अन्यायेन हतं दृष्ट्वा गदायुद्धेन भारत ।
युधिष्ठिरं महाराज महद्भयमथाविशत् ।। ९
सोऽचिन्तयन्महाभागां गान्धारीं तपसान्विताम् ।
घोरेण तपसा युक्तां त्रैलोक्यमपि सा दहेत् ।।१०
तस्य चिन्तयमानस्य बुद्धिः समभवत्तदा ।
गान्धार्याः क्रोधदीप्तायाः पूर्वं प्रशमनं भवेत् ।।११
सा हि पुत्रवधं श्रुत्वा कृतमस्माभिरीदृशम् ।
मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति ।। १२

कथं दुःखमिदं तीव्रं गान्धारी संप्रशक्ष्यति ।
श्रुत्वा विनिहतं पुत्रं छलेनाजिह्मयोधिनम् ॥ १३
एवं विचिन्त्य बहुधा भयशोकसमन्वितः ।
वासुदेवमिदं वाक्यं धर्मराजोऽभ्यभाषत ॥ १४
तव प्रसादाद्गोविन्द राज्यं निहतकण्टकम् ।
अप्राप्यं मनसाऽपीदं प्राप्तमस्माभिरच्युत ॥ १५
प्रत्यक्षं मे महाबाहो संग्रामे रोमहर्षणे ।
विमर्दः सुमहान्प्राप्तस्त्वया यादवनन्दन ॥ १६
त्वया देवासुरे युद्धे वधार्थममरद्विषाम् ।
यथा साह्यं पुरा दत्तं हताश्च विबुधद्विषः ॥ १७
साह्यं तथा महाबाहो दत्तमस्माकमच्युत ।
सारथ्येन च वार्ष्णेय भवता हि धृता वयम् ॥ १८
यदि न त्वं भवेन्नाथः फल्गुनस्य महारणे ।
कथं शक्यो रणे जेतुं भवेदेष बलार्णवः ॥ १९
गदाप्रहारा विपुलाः परिघैश्चापि ताडनम् ।
शक्तिभिर्भिण्डिपालैश्च तोमरैः सपरश्वधैः ॥ २०
असत्कृते त्वया कृष्ण वाचः सुपरुषाः श्रुताः ।
शस्त्राणां च निपाता वै वज्रस्पर्शोपमा रणे ॥२१
ते च ते सफला जाता हते दुर्योधनेऽच्युत ।
तत्सर्वं न यथा नश्येत्पुनः कृष्ण तथा कुरु ॥२२
संदेहडोलां प्राप्तं नश्चेतः कृष्ण जये सति ।
गान्धार्या हि महाबाहो क्रोधं शमय माधव ॥२३
सा हि नित्यं महाभागा तपसोग्रेण कर्शिता ।
पुत्रपौत्रवधं श्रुत्वा ध्रुवं नः संप्रधक्ष्यति ।
तस्याः प्रसादनं वीर प्राप्तकालं मतं मम ॥ २४
कश्च तां क्रोधसंदीप्तां पुत्रव्यसनकर्शिताम् ।
वीक्षितुं पुरुषः शक्तस्त्वामृते पुरुषोत्तम ॥ २५
तत्र मे गमनं प्राप्तं रोचते तव माधव ।
गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिंदम ॥२६
त्वं हि कर्ता विकर्ता च लोकानां प्रभवाप्ययः ।
हेतुकारणसंयुक्तैर्वाक्यैः कालसमीरितैः ॥ २७
क्षिप्रमेव महाबाहो गान्धारीं शमयिष्यसि ।
पितामहश्च भगवान्कृष्णस्तत्र भविष्यति ॥ २८
सर्वथा ते महाबाहो गान्धार्याः क्रोधनाशनम् ।
कर्तव्यं सात्वतां श्रेष्ठ पाण्डवानां हितार्थिना ॥२९
धर्मराजस्य वचनं श्रुत्वा यदुकुलोद्वहः ।
आमन्त्र्य दारुकं प्राह रथः सज्जो विधीयताम् ॥३०
केशवस्य वचः श्रुत्वा त्वरमाणोऽथ दारुकः ।
न्यवेदयद्रथं सज्जं केशवाय महात्मने ॥ ३१
तं रथं यादवश्रेष्ठः समारुह्य परंतपः ।
जगाम हास्तिनपुरं त्वरितः केशवो विभुः ॥ ३२
ततः प्रायान्महाराज माधवो भगवान्रथी ।
नागसाह्वयमासाद्य प्रविवेश च वीर्यवान् ॥ ३३
प्रविश्य नगरं वीरो रथघोषेण नादयन् ।
विदितो धृतराष्ट्रस्य सोऽवतीर्य रथोत्तमात् ।
अभ्यगच्छददीनात्मा धृतराष्ट्रनिवेशनम् ॥ ३४
पूर्वं चाभिगतं तत्र सोऽपश्यदृषिसत्तमम् ॥ ३५
पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्दनः ।
अभ्यवादयदव्यग्रो गान्धारीं चापि केशवः ॥३६
ततस्तु यादवश्रेष्ठो धृतराष्ट्रमधोक्षजः ।
पाणिमालम्ब्य राजेन्द्र सुस्वरं प्ररुरोद ह ॥ ३७
स मुहूर्तादिवोत्सृज्य बाष्पं शोकसमुद्भवम् ।
प्रक्षाल्य वारिणा नेत्रे ह्याचम्य च यथाविधि ।
उवाच प्रश्रितं वाक्यं धृतराष्ट्रमरिंदमः ॥ ३८
न तेऽस्त्यविदितं किंचिद्भूतं भव्यं च भारत ।
कालस्य च यथावृत्तं तत्ते सुविदितं प्रभो ॥ ३९
यदिदं पाण्डवैः सर्वैस्तव चित्तानुरोधिभिः ।
कथं कुलक्षयो न स्यात्तथा क्षत्रस्य भारत ॥ ४०
भ्रातृभिः समयं कृत्वा क्षान्तवान्धर्मवत्सलः ।
द्यूतच्छलजितैः शुद्धैर्वनवासो ह्युपागतः ॥ ४१
अज्ञातवासचर्या च नानावेषसमावृतैः ।
अन्ये च बहवः क्लेशास्त्वशक्तैरिव सर्वदा ॥ ४२
मया च स्वयमागम्य युद्धकाल उपस्थिते ।
सर्वलोकस्य सान्निध्ये ग्रामांस्त्वं पञ्च याचितः॥४३

हेतुकारणसंयुक्तैः हेतवो दृष्टा अपराधाः । कारणानि अदृष्टान्यवश्यंभावीनि तैर्युक्तानि तैः ॥ २७ ॥ प्रायादगच्छत् ॥ ३३ ॥ विदितं धृतराष्ट्रस्येति झ. पाठः ॥ ३४ ॥ कृष्णस्य व्यासस्य ॥ ३६ ॥

त्वया कालोपसृष्टेन लोभतो नापवर्जिताः ।
तवापराधान्नृपते सर्वं क्षत्रं क्षयं गतम् ॥ ४४
भीष्मेण सोमदत्तेन बाह्लीकेन कृपेण च ।
द्रोणेन च सपुत्रेण विदुरेण च धीमता ।
याचितस्त्वं शमं नित्यं न च तत्कृतवानसि ॥ ४५
कालोपहतचित्ता हि सर्वे मुह्यन्ति भारत ।
यथा मूढो भवान्पूर्वमस्मिन्नर्थे समुद्यते ॥ ४६
किमन्यत्कालयोगाद्धि दिष्टमेव परायणम् ।
मा च दोषान्महाप्राज्ञ पाण्डवेषु निवेशय ॥ ४७
अल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम् ।
धर्मतो न्यायतश्चैव स्नेहतश्च परंतप ॥ ४८
एतत्सर्वं तु विज्ञाय ह्यात्मदोषकृतं फलम् ।
तन्मन्युं पाण्डुपुत्रेषु न भवान्कर्तुमर्हति ॥ ४९
कुलं वंशश्च पिण्डाश्च यच्च पुत्रकृतं फलम् ।
गान्धार्यास्तव वै नाथ पाण्डवेषु प्रतिष्ठितम् ॥ ५०
त्वं चैव कुरुशार्दूल गान्धारी च यशस्विनी ।
मा शुचो नरशार्दूल पाण्डवान्प्रतिकिल्बिषम् ॥ ५१
एतत्सर्वमनुध्याय आत्मनश्च व्यतिक्रमम् ।
शिवेन पाण्डवान्ध्याहि नमस्ते भरतर्षभ ॥ ५२
जानासि च महाबाहो धर्मराजस्य या त्वयि ।
भक्तिर्भरतशार्दूल स्नेहश्चापि स्वभावतः ॥ ५३
एतच्च कदनं कृत्वा शत्रूणामपकारिणाम् ।
दह्यते स दिवारात्रौ न च शर्माधिगच्छति ॥ ५४
त्वां चैव नरशार्दूल गान्धारीं च यशस्विनीम् ।
स शोचन्नरशार्दूलः शान्तिं नैवाधिगच्छति ॥ ५५
ह्रिया च परयाऽविष्टो भवन्तं नाधिगच्छति ।
पुत्रशोकाभिसंतप्तं बुद्धिव्याकुलितेन्द्रियम् ॥ ५६
एवमुक्त्वा महाराज धृतराष्ट्रं यदूत्तमः ।
उवाच परमं वाक्यं गान्धारीं शोककर्शिताम् ॥ ५७
सौबलेयि निबोध त्वं यत्त्वां वक्ष्यामि सुव्रते ।
त्वत्समा नास्ति लोकेऽस्मिन्नद्य सीमन्तिनी शुभे ॥
जानासि च यथा राज्ञि सभायां मम सन्निधौ ।
धर्मार्थसहितं वाक्यमुभयोः पक्षयोर्हितम् ॥ ५९
उक्तवत्यसि कल्याणि न च ते तनयैः कृतम् ।
दुर्योधनस्त्वया चोक्तो जयार्थी परुषं वचः ॥ ६०
शृणु मूढ वचो मह्यं यतो धर्मस्ततो जयः ।
तदिदं समनुप्राप्तं तव वाक्यं नृपात्मजे ॥ ६१
एवं विदित्वा कल्याणि मा स्म शोके मनः कृथाः ।
पाण्डवानां विनाशाय मा ते बुद्धिः कदाचन ॥ ६२
शक्ता चासि महाभागे पृथिवीं सचराचराम् ।
चक्षुषा क्रोधदीप्तेन निर्दग्धुं तपसो बलात् ॥ ६३
वासुदेववचः श्रुत्वा गान्धारी वाक्यमब्रवीत् ।
एवमेतन्महाबाहो यथा वदसि केशव ॥ ६४
आधिभिर्दह्यमानाया मतिः संचलिता मम ।
सा मे व्यवस्थिता श्रुत्वा तव वाक्यं जनार्दन ॥ ६५
राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य केशव ।
त्वं गतिः सहितैर्वीरैः पाण्डवैर्द्विपदां वर ॥ ६६
एतावदुक्त्वा वचनं मुखं प्रच्छाद्य वाससा ।
पुत्रशोकाभिसंतप्ता गान्धारी प्ररुरोद ह ॥ ६७
तत एनां महाबाहुः केशवः शोककर्शिताम् ।
हेतुकारणसंयुक्तैर्वाक्यैराश्वासयत्प्रभुः ॥ ६८
समाश्वास्य च गान्धारीं धृतराष्ट्रं च माधवः ।
द्रौणिसंकल्पितं भावमन्वबुध्यत केशवः ॥ ६९
ततस्त्वरित उत्थाय पादौ मूर्ध्ना प्रणम्य च ।
द्वैपायनस्य राजेन्द्र ततः कौरवमब्रवीत् ॥ ७०
आपृच्छे त्वां कुरुश्रेष्ठ मा च शोके मनः कृथाः ।
द्रौणेः पापोऽस्त्यभिप्रायस्तेनास्मि सहसोत्थितः ॥
पाण्डवानां वधे रात्रौ बुद्धिस्तेन प्रदर्शिता ॥ ७२
एतच्छ्रुत्वा तु वचनं गान्धार्या सहितोऽब्रवीत् ।
धृतराष्ट्रो महाबाहुः केशवं केशिसूदनम् ॥ ७३
शीघ्रं गच्छ महाबाहो पाण्डवान्परिपालय ।
भूयस्त्वया समेष्यामि क्षिप्रमेव जनार्दन ॥ ७४
प्रायात्ततस्तु त्वरितो दारुकेण सहाच्युतः ॥ ७५
वासुदेवे गते राजन्धृतराष्ट्रं जनेश्वरम् ।
आश्वासयदमेयात्मा व्यासो लोकनमस्कृतः ॥ ७६

चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

असूयां पाण्डुपुत्रेष्विति झ. पाठः ॥ ४९ ॥

वासुदेवोऽपि धर्मात्मा कृतकृत्यो जगाम ह ।
शिबिरं हास्तिनपुराद्दिदृक्षुः पाण्डवान्नृप ॥ ७७

आगम्य शिबिरं रात्रौ सोऽभ्यगच्छत पाण्डवान् ।
तच्च तेभ्यः समाख्याय सहितस्तैः समाहितः ॥ ७८

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

सञ्जयेन धृतराष्ट्रंप्रति दुर्योधनविलापप्रकारकथनम् ॥ १ ॥ वादिकैरश्वत्थाम्नि दुर्योधनपातननिवेदनम् ॥ २ ॥

---

धृतराष्ट्र उवाच ।
अधिष्ठितः पदा मूर्ध्नि भग्नसक्थो महीं गतः ।
शौटीर्यमानी पुत्रो मे किमभाषत सञ्जय ॥ १
अत्यर्थं कोपनो राजा जातवैरश्च पाण्डुषु ।
व्यसनं परमं प्राप्तः किमाह परमाहवे ॥ २
सञ्जय उवाच ।
शृणु राजन्प्रवक्ष्यामि यथावृत्तं नराधिप ।
राज्ञा यदुक्तं मग्नेन तस्मिन्व्यसनसागरे ॥ ३
भग्नसक्थो नृपो राजन्पांसुना सोऽवकुण्ठितः ।
यमयन्मूर्धजांस्तत्र वीक्ष्य चैव दिशो दश ॥ ४
केशान्नियम्य यत्नेन निःश्वसन्नुरगो यथा ।
संरम्भाश्रुपरीताभ्यां नेत्राभ्याममिवीक्ष्य माम् ५
बाहू धरण्यां निष्पिष्य सुदुर्मत्त इव द्विपः ।
प्रकीर्णान्मूर्धजान्धुन्वन्दन्तैर्दन्तानुपस्पृशन् ।
गर्हयन्पाण्डवं ज्येष्ठं निःश्वस्येदमथाब्रवीत् ॥ ६
भीष्मे शान्तनवे नाथे कर्णे शस्त्रभृतां वरे ।
गौतमे शकुनौ चापि द्रोणे चास्त्रभृतां वरे ॥ ७
अश्वत्थाम्नि तथा शल्ये शूरे च कृतवर्मणि ।
अन्येष्वपि च शूरेषु न्यस्तभारो महात्मसु ।
इमामवस्थां प्राप्तोऽस्मि कालो हि दुरतिक्रमः ॥ ८
एकादशचमूभर्ता सोऽहमेतां दशां गतः ।
कालं प्राप्य महाबाहो न कश्चिदतिवर्तते ॥ ९
आख्यातव्यं मदीयानां येऽस्मिञ्जीवन्ति संयुगे ।
यथाऽहं भीमसेनेन व्युत्क्रम्य समयं हतः ॥ १०

बहूनि सुनृशंसानि कृतानि खलु पाण्डवैः ।
भूरिश्रवसि कर्णे च भीष्मे द्रोणे च धीमति ॥ ११
इदं च गर्हितं कर्म नृशंसैः पाण्डवैः कृतम् ।
येन ते वाच्यतां सत्सु गमिष्यन्तीति मे मतिः १२
का प्रीतिः सत्वयुक्तस्य कृत्वोपाधिकृतं जयम् ।
को वा समयभेत्तारं बुधः संमन्तुमर्हति ॥ १३
अधर्मेण जयं लब्ध्वा को नु हृष्येत पण्डितः ।
यथा संहृष्यते पापः पाण्डुपुत्रो वृकोदरः ॥ १४
किंनु चित्रमितस्त्वद्य भग्नसक्थस्य यन्मम ।
क्रुद्धेन भीमसेनेन पादेन मृदितं शिरः ॥ १५
प्रतपन्तं श्रिया जुष्टं वर्तमानं च बन्धुषु ।
एवं कुर्यान्नरो यो हि स वै संजय पूरुषः ॥ १६
अभिज्ञौ युद्धधर्मस्य मम माता पिता च यौ ।
तौ हि सञ्जय दुःखार्तौ विज्ञाप्यौ वचनाद्धि मे १७
इष्टं भृत्या भृताः सम्यग्भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां जीवतामेव सञ्जय ॥ १८
दत्ता दाया यथाशक्ति मित्राणां च प्रियं कृतम् ।
अमित्रा बाधिताः सर्वे को नु स्वन्ततरो मया ॥ १९
मानिता बान्धवाः सर्वे मान्यः संपूजितो जनः ।
त्रितयं सेवितं सर्वं को नु स्वन्ततरो मया ॥ २०
आज्ञप्तं नृपमुख्येषु मानः प्राप्तः सुदुर्लभः ।
आजानेयैस्तथा यातं को नु स्वन्ततरो मया २१
यातानि परराष्ट्राणि नृपा भुक्ताश्च दासवत् ।
प्रियेभ्यः प्रकृतं साधु को नु स्वन्ततरो मया २२

---

शौटीरः शूरः स एव शौटीर्यमात्मानं मन्यते शौटीर्यमानी ॥ १ ॥

स वै सञ्जयपूजित इति झ. पाठः ॥ १६ ॥ मया मत्तः ॥ २० ॥

अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयम् ।
स्वधर्मेण जिता लोकाः को नु स्वन्ततरो मया २३
दिष्ट्या नाहं जितः सङ्ख्ये परान्प्रेष्यवदाश्रितः ।
दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यगता विभो २४
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुतिष्ठताम् ।
निधनं तन्मया प्राप्तं को नु स्वन्ततरो मया ॥२५
दिष्ट्या नाहं परावृत्तो वैरात्प्राकृतवज्जितः ।
दिष्ट्या न विमतिं कांचिद्भजित्वा तु पराजितः २६
सुप्तं वाऽथ प्रमत्तं वा यथा हन्याद्विषेण वा ।
एवं व्युत्क्रान्तधर्मेण व्युत्क्रम्य समयं हतः ॥२७
अश्वत्थामा महाभागः कृतवर्मा च सात्वतः ।
कृपः शारद्वतश्चैव वक्तव्या वचनान्मम ॥ २८
अधर्मेण प्रवृत्तानां पाण्डवानामनेकशः ।
विश्वासं समयघ्नानां न यूयं गन्तुमर्हथ ॥ २९
वार्तिकांश्चाब्रवीद्राजा पुत्रस्ते सत्यविक्रमः ।
अधर्माद्भीमसेनेन निहतोऽहं यथा रणे ॥ ३०
सोऽहं द्रोणं स्वर्गगतं कर्णशल्यावुभौ तथा ।
वृषसेनं महावीर्यं शकुनिं चापि सौबलम् ॥ ३१
जलसन्धं महावीर्यं भगदत्तं च पार्थिवम् ।
सोमदत्तं महेष्वासं सैन्धवं च जयद्रथम् ॥ ३२
दुःशासनपुरोगांश्च भ्रातॄनात्मसमांस्तथा ।
दौःशासनिं च विक्रान्तं लक्ष्मणं चात्मजावुभौ ॥
एतांश्चान्यांश्च सुबहून्मदीयांश्च सहस्रशः ।
पृष्ठतोऽनुगमिष्यामि सार्थहीनो यथाऽध्वगः ३४
कथं भ्रातॄन्हताञ्श्रुत्वा भर्तारं च स्वसा मम ।
रोरूयमाणा दुःखार्ता दुःशला सा भविष्यति ३५
स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम ।
गान्धारीसहितश्चैव कां गतिं प्रतिपत्स्यति ॥ ३६
नूनं लक्ष्मणमाताऽपि हतपुत्रा हतेश्वरा ।
विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना ३७
यदि जानाति चार्वाकः परिव्राड्वाग्विशारदः ।
करिष्यति महाभागो ध्रुवं चापचितिं मम ॥ ३८
समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते ।
अहं निधनमासाद्य लोकान्प्राप्स्यामि शाश्वतान् ॥
ततो जनसहस्राणि बाष्पपूर्णानि मारिष ।
प्रलापं नृपतेः श्रुत्वा व्यद्रवन्त दिशो दश ॥४०
ससागरवना घोरा पृथिवी सचराचरा ।
चचालाथ सनिर्ह्रादा दिशश्चैवाविलाऽभवन् ॥४१
ते द्रोणपुत्रमासाद्य यथावृत्तं न्यवेदयन् ।
व्यवहारं गदायुद्धे पार्थिवस्य च पातनम् ॥ ४२
तदाख्याय ततः सर्वे द्रोणपुत्रस्य भारत ।
'वादिका दुःखसंतप्ताः शोकोपहतचेतसः ।'
ध्यात्वा च सुचिरं कालं जग्मुरार्ता यथागतम् ॥४३

॥ इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

द्रौणिकृपकृतवर्मभिर्दुर्योधनस्य भूपतनदर्शनेन शोचनम् ॥ १ ॥ द्रौणिदुर्योधनयोः संलापः ॥ २ ॥ द्रौणिना रात्रौ पाण्डववधप्रतिज्ञानम् ॥ ३ ॥ दुर्योधनवचनात् कृपेण द्रौणेः सैनापत्येऽभिषेचनम् ॥ ४ ॥

सञ्जय उवाच ।
वादिकानां सकाशात्तु श्रुत्वा दुर्योधनं हतम् ।
हतशिष्टास्तदा राजन्कौरवाणां महारथाः ॥ १
विनिर्भिन्नाः शितैर्बाणैर्गदातोमरशक्तिभिः ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
त्वरिता जवनैरश्वैरायोधनमुपागमन् ॥ २
तत्रापश्यन्महात्मानं धार्तराष्ट्रं निपातितम् ।
प्रभग्नं वायुवेगेन महासालं यथा वने ॥ ३

वार्तिकान्वार्ताहारिणः ॥ ३० ॥ चार्वाको ब्राह्मणवेषधारी राक्षसः । अपचितिं प्रतीकारम् ॥ ३८ ॥

पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

भूमौ विवेष्टमानं तं रुधिरेण समुक्षितम्।
महागजमिवारण्ये व्याधेन विनिपातितम्॥ ४
विवर्तमानं बहुशो रुधिरौघपरिप्लुतम्।
यदृच्छया निपतितं चन्द्रमादित्यगोचरात्॥ ५
युगान्तमारुतेनेव शोषितं मकरालयम्।
पूर्णचन्द्रमिव व्योम्नि तुषारावृतमण्डलम्॥ ६
रेणुध्वस्तं दीर्घभुजं मातङ्गमिव विक्रमे।
वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः॥ ७
यथा धनं लिप्समानैर्भृत्यैर्नृपतिसत्तमम्।
भ्रुकुटीकृतवक्त्रान्तं क्रोधादुद्वृत्तचक्षुषम्।
सामर्षं तं नरव्याघ्रं भीमं निपतितं तथा॥ ८
ते तं दृष्ट्वा महेष्वासं भूतले पतितं नृपम्।
मोहमभ्यागमन्सर्वे कृपप्रभृतयो रथाः॥ ९
अवतीर्य रथेभ्यश्च प्राद्रवन्राजसन्निधौ।
दुर्योधनं च संप्राप्य सर्वे भूमावुपाविशन्॥ १०
ततो द्रौणिर्महाराज बाष्पपूर्णेक्षणः श्वसन्।
उवाच भरतश्रेष्ठं सर्वलोकेश्वरेश्वरम्॥ ११
न नूनं विद्यते पुण्यं मानुषे किंचिदेव हि।
यत्र त्वं पुरुषव्याघ्र शेषे पांसुषु रूषितः॥ १२
भूत्वा हि नृपतिः पूर्वं समाज्ञाप्य च मेदिनीम्।
कथमेकोऽद्य राजेन्द्र तिष्ठसे निर्जने वने॥ १३
दुःशासनं न पश्यामि नापि कर्णं महारथम्।
नापि तान्सुहृदः सर्वान्किमिदं भरतर्षभ॥ १४
दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथंचन।
लोकनाथो भवान्यत्र शेषे पांसुषु रूषितः॥ १५
एष मूर्धाभिषिक्तानामग्रे गत्वा परंतपः।
सतृणं ग्रसते पांसुं पश्य कालस्य पर्ययम्॥ १६
क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव।
सा च ते महती सेना क्व गता पार्थिवोत्तम १७
दुर्विज्ञेया गतिर्नूनं कार्याणां कारणान्तरे।
यो वै लोकगुरुर्नाथो भवानेतां दशां गतः॥१८

अध्रुवा सर्वमर्त्येषु ध्रुवैव श्रीर्विचिन्त्यते।
भवतो व्यसनं दृष्ट्वा शक्रविस्पर्धिनो भृशम्॥ १
तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः।
उवाच राजन्पुत्रस्ते प्राप्तकालमिदं वचः॥ २
विमृज्य नेत्रे पाणिभ्यां शोकजं बाष्पमुत्सृजन्।
कृपादीन्स तदा वीरान्सर्वानेव नराधिपः॥ २
ईदृशो लोकधर्मोऽयं धात्रा निर्दिष्ट उच्यते।
विनाशः सर्वभूतानां कालपर्यायकारितः॥ २
सोऽयं मां समनुप्राप्तः प्रत्यक्षो भवतां हि यः
पृथिवीं पालयित्वाऽहमेतां निष्ठामुपागतः॥ २
दिष्ट्या नाहं परावृत्तो युद्धे कस्यांचिदापदि।
दिष्ट्याऽहं निहतः पापैश्छलेनैव विशेषतः॥ २
उत्साहश्च कृतो नित्यं मया दिष्ट्या युयुत्सता
दिष्ट्या चास्मिन्हतो युद्धे निहतज्ञातिबान्धवः २
दिष्ट्या च वोऽहं पश्यामि मुक्तानस्माज्जनक्षयात्
स्वस्तियुक्तांश्च कल्याणांस्तन्मे प्रियमनुत्तमम् २
मा भवन्तोऽत्र तप्यन्तां सौहृदान्निधनेन मे।
यदि वेदाः प्रमाणं वो जिता लोका मयाऽक्षयाः
जानमानः प्रभावं च कृष्णस्यामिततेजसः।
तेन न च्यावितश्चाहं क्षत्रधर्मात्स्वनुष्ठितात्॥ २
स मया समनुप्राप्तो नास्मि शोच्यः कथंचन।
कृतं भवद्भिः सदृशमनुरूपमिवात्मनः।
यतितं विजये शक्त्या दैवं तु दुरतिक्रमम्॥ २
एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः।
तूष्णींबभूव राजेन्द्र रुजाऽसौ विह्वलो भृशम् ३
तथा दृष्ट्वा तु राजानं बाष्पशोकसमन्वितम्।
द्रौणिः क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये ३
स च क्रोधसमाविष्टः पाणौ पाणिं निपीड्य च
बाष्पविह्वलया वाचा राजानमिदमब्रवीत्॥ ३
पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्मणा।
न तथा तेन तप्यामि यथा राजंस्त्वयाऽद्य वै॥ ३

आदित्यगोचरात्गगनात्। चक्रमादित्यगोचरमिति झ. पाठः तत्र चक्रमादित्यगोचरं सूर्यमण्डलमिवेति लुप्तोपमा॥ ५॥

कारणान्तरे अदृष्टरूपे सति। तेन दृष्टसामग्रीवैयर्थ्यं जाः इति भावः॥ १८॥ षट्षष्टितमोऽध्यायः॥ ६६॥

शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो ।
इष्टापूर्तेन दानेन धर्मेण सुकृतेन च ॥ ३४
अद्याहं सर्वपाञ्चालान्वासुदेवस्य पश्यतः ।
अद्य रात्रौ महाराज निहनिष्यामि पाण्डवान् ३५
अनुज्ञां तु महाराज भवान्मे दातुमर्हति ॥ ३६
तच्छ्रुत्वा वचनं द्रौणेर्धृतराष्ट्र तवात्मजः ।
मनसः प्रीतिजननं कृपं वचनमब्रवीत् ।

दुर्योधन उवाच ।

आचार्य शीघ्रं कलशं जलपूर्णं समानय ॥ ३७
स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः ।
कलशं पूर्णमादाय राज्ञोऽन्तिकमुपागमत् ॥ ३८
तमब्रवीन्महाराज पुत्रस्तव विशांपते ।
ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम् ।
सैनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ॥ ३९
राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः ।
वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः ॥ ४०
राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः ।
द्रौणिं राज्ञो नियोगेन सैनापत्येऽभ्यषेचयत् ४१
सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमम् ।
प्रययौ सिंहनादेन दिशः सर्वा विनादयन् ॥ ४२
दुर्योधनोऽपि राजेन्द्र शोणितेन परिप्लुतः ।
तां निशां प्रतिपेदेऽथ सर्वभूतभयावहाम् ॥ ४३
अपक्रम्य तु ते तूर्णं तस्मादायोधनान्नृप ।
शोकसंविग्नमनसश्चिन्तामापेदिरे भृशम् ॥ ४४

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां शल्यपर्वणि गदायुद्धपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## ॥ समाप्तं गदायुद्धपर्व शल्यपर्व च ॥ ९ ॥

---

अतः परं सौप्तिकं पर्व भविष्यति ।
तस्यायमाद्यः श्लोकः ।

सञ्जय उवाच ।

ततस्ते सहिताः सर्वे प्रयाता दक्षिणामुखाः ।
उपास्तमयवेलायां शिबिराभ्याशमागताः ॥ १

इदं शल्यपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां
निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२९ सन १९०७.

# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

## SAUPTIKAPARVA X.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press,*

**BOMBAY.**

1907.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## सौप्तिकपर्व १०.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२९ प्लवंगनामसंवत्सरे ।


सौप्तिकपर्व
वटवृक्ष.
शिबिर
अश्वत्थामा.
कृपाचार्य
कृतवर्मा

श्रीः ।

# श्रीमन्महाभारतम् ।



## सौप्तिकपर्व १० ।

### प्रथमोऽध्यायः ॥ १ ॥

सञ्जयधृतराष्ट्रयोः संलापः ॥ १ ॥ द्रौणिकृपकृतवर्मभिर्वनमध्यमेत्य न्यग्रोधस्याधस्तादुपवेशनम् ॥ २ ॥ तत्र रात्रौ घूकेन बहुकाकवधदर्शिना द्रौणिना तद्वत्स्वेनापि पाण्डववधनिर्धारणम् ॥ ३ ॥ ततः कृपकृतवर्माणौ समुद्बोध्य स्वकर्तव्यकथन-प्रार्थना ॥ ४ ॥

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १

सञ्जय उवाच ।

ततस्ते सहिताः सर्वे प्रयाता दक्षिणामुखाः ।
उपास्तमयवेलायां शिबिराभ्याशमागताः ॥ १
विमुच्य वाहांस्त्वरिता भीताः समनुबोधनात् ।
गहनं देशमासाद्य प्रच्छन्ना न्यविशन्त ते ॥ २
सेनानिवेशमभितो नातिदूरमवस्थिताः ।
[निकृत्ता निशितैः शस्त्रैः समन्तात्क्षतविक्षताः।]
दीर्घमुष्णं च निःश्वस्य पाण्डवानन्वचिन्तयन् ॥ ३
श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणाम् ।
अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन्पुनः ॥ ४
ते मुहूर्तात्ततो गत्वा श्रान्तवाहा पिपासिताः ।
नामृष्यन्त महेष्वासाः क्रोधामर्षवशंगताः ॥ ५
राज्ञो वधेन संतप्ता मुहूर्तं समवस्थिताः ॥ ६

धृतराष्ट्र उवाच ।

अश्रद्धेयमिदं कर्म कृतं भीमेन सञ्जय ।
यत्स नागायुतप्राणः पुत्रो मम निपातितः ॥ ७
अवध्यः सर्वभूतानां वज्रसंहननो युवा ।
पाण्डवैः समरे पुत्रो निहतो मम सञ्जय ॥ ८
न दिष्टमभ्यतिक्रान्तुं शक्यं गावल्गणे नरैः ।
यत्समेत्य रणे पार्थैः पुत्रो मम निपातितः ॥ ९
अद्रिसारमयं नूनं हृदयं मम सञ्जय ।
हतं पुत्रशतं श्रुत्वा यन्न दीर्णं सहस्रधा ॥ १०
कथं हि वृद्धमिथुनं हतपुत्रं भविष्यति ।
न ह्यहं पाण्डुपुत्रस्य विषये वस्तुमुत्सहे ॥ ११
कथं राज्ञः पिता भूत्वा स्वयं राजा च सञ्जय ।
प्रेष्यभूतः प्रवर्तेयं पाण्डवेयस्य शासनात् ॥ १२
प्रभुज्य पृथिवीं सर्वां स्थिता मूर्धनि सञ्जय ।
कथमद्य भविष्यामि प्रेष्यभूतो दुरन्तकृत् ॥ १३
कथं भीमस्य वाक्यानि श्रोतुं शक्ष्यामि सञ्जय ।
येन पुत्रशतं पूर्णमेकेन निहतं मम ॥ १४
कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः ।
अकुर्वता वचस्तस्य मम पुत्रेण सञ्जय ॥ १५
अधर्मेण हते तात पुत्रे दुर्योधने मम ।
कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय ॥ १६

ततः दुर्योधनेन सैनापत्येऽश्वत्थाम्नोऽभिषेकानन्तरं ते अश्वत्थामकृपाचार्यकृतवर्माणः ॥ १ ॥ शिबिरनिकटस्थं देशं आसाद्य वाहान्विमुच्य न्यविशन्तेति योजना ॥ २ ॥ अनुसारः पृष्ठगमनम् । प्राद्रवन्निति पुनर्वाहान्योजयित्वेति गम्यते ॥ ४ ॥ राज्ञो दुर्योधनस्य ॥ ६ ॥

सञ्जय उवाच ।
गत्वा तु तावका राजन्नातिदूरं मनस्विनः ।
अपश्यन्त वनं घोरं नानाद्रुमलतावृतम् ॥ १७
ते मुहूर्तं तु विश्रम्य लब्धतोयैर्हयोत्तमैः ।
सूर्यास्तमयवेलायां कौरवेयस्य शासनात् ॥ १८
नानामृगगणैर्जुष्टं नानापक्षिभिराकुलम् ।
नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितम् ॥ १९
नानातोयसमाकीर्णैस्तटाकैरुपशोभितम् ।
पद्मिनीशतसंछन्नं नीलोत्पलसमायुतम् ॥ २०
प्रविश्य तद्वनं घोरं वीक्षमाणाः समन्ततः ।
शाखासहस्रसंछन्नं न्यग्रोधं ददृशुस्ततः ॥ २१
उपेत्य तु तदा राजन्न्यग्रोधं ते महारथाः ।
ददृशुर्द्विपदां श्रेष्ठाः श्रेष्ठं तं वै वनस्पतिम् ॥ २२
तेऽवतीर्य रथेभ्यश्च विप्रमुच्य च वाजिनः ।
उपस्पृश्य यथान्यायं सन्ध्यामन्वासत प्रभो ॥२३
ततोऽस्तं पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे ।
सर्वस्य जगतो धात्री शर्वरी प्रत्यपद्यत ॥ २४
ग्रहनक्षत्रताराभिः प्रकीर्णाभिरलंकृतम् ।
नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः ॥ २५
इच्छया ते प्रवल्गन्ति ये सत्वा रात्रिचारिणः ।
दिवाचराश्च ये सत्वास्ते निद्रावशमागताः ॥ २६
रात्रिंचराणां सत्वानां निनादोऽभूत्सुदारुणः ।
क्रव्यादाश्च प्रमुदिता घोरा प्राप्ता च शर्वरी ॥२७
तस्मिन्रात्रिमुखे घोरे दुःखशोकसमन्विताः ।
कृतवर्मा कृपो द्रौणिरुपोपविविशुः समम् ॥ २८
उपोपविष्टाः शोचन्तो न्यग्रोधस्य समीपतः ।
तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयम् ॥ २९
निद्रया च परीताङ्गा निषेदुर्धरणीतले ।
श्रमेण सुदृढं युक्ता विक्षता विविधैः शरैः ॥ ३०
ततो निद्रावशं प्राप्तौ कृपभोजौ महाबलौ ।
सुखोचितावदुःखार्हौ निषण्णौ धरणीतले ॥ ३१
तौ तु सुप्तौ महाराज तस्मिन्देशे महारथौ ।
[महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ॥] ३२
क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत ।
न वै स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥३३
न लेभे स तु निद्रां वै दह्यमानोऽतिमन्युना ।
वीक्षांचक्रे महाबाहुस्तद्वनं घोरदर्शनम् ॥ ३४
वीक्षमाणो वनोद्देशं नानासत्वैर्निषेवितम् ।
अपश्यत महाबाहुर्न्यग्रोधं वायसावृतम् ॥ ३५
तत्र काकसहस्राणि तां निशां पर्यणामयन् ।
सुखं स्वपन्तः कौरव्य पृथक्पृथगुपाश्रयाः ॥ ३६
सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः ।
सोऽपश्यत्सहसा यान्तमुलूकं घोरदर्शनम् ॥ ३७
महास्वनं महाकायं हर्यक्षं बभ्रुपिङ्गलम् ।
सुतीक्ष्णघोणानखरं सुपर्णमिव वेगितम् ॥ ३८
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः ।
न्यग्रोधस्य ततः शाखां पातयामास भारत ॥३९
संनिपत्य तु शाखायां न्यग्रोधस्य विहंगमः ।
सुप्ताञ्जघान विस्रब्धान्वायसान्वायसान्तकः ॥४०
केषांचिदच्छिनत्पक्षाञ्शिरांसि च चकर्त ह ।
चरणांश्चैव केषांचिद्बभञ्ज चरणायुधः ॥ ४१
क्षणेनाघ्नत्स बलवान्येऽस्य दृष्टिपथे स्थिताः ॥४२
तेषां शरीरावयवैः शरीरैश्च विशांपते ।
न्यग्रोधमण्डलं सर्वं संछन्नं पर्वतोपमम् ॥ ४३
तांस्तु हत्वा ततः काकान्कौशिको मुदितोऽभवत् ।
प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः ॥ ४४
तद्दृष्ट्वा तादृशं कर्म कौशिकेन कृतं निशि ।
तद्भावे कृतसंकल्पो द्रौणिरेकोऽन्वचिन्तयत् ॥४५
उपदेशः कृतोऽनेन पक्षिणा मम संयुगे ।
शत्रूणां क्षपणं युक्तं प्राप्तः कालश्च मे मतः ॥ ४६
नाद्य शक्यं मया हन्तुं पाण्डवा जितकाशिनः ।
बलवन्तः कृतोत्साहा लब्धलक्षाः प्रहारिणः ॥ ४७
राज्ञः सकाशे तेषां च प्रतिज्ञातो वधो मया ।
पतङ्गाग्निसमां वृत्तिमास्थायात्मविनाशिनीम् ॥४८
न्यायतो युध्यमानस्य प्राणत्यागो न संशयः ।
छद्मना तु भवेत्सिद्धिः शत्रूणां च क्षयो महान् ॥४९

नानापुष्पोपशोभितमिति झ. पाठः ॥ २० ॥ अन्वासत उपासितवन्तः ॥ २३ ॥ अंशुकं वस्त्रम् ॥ २५ ॥ शयनोपेतौ प्रागिति शेषः ॥३२॥ पर्यणामयन् परिणीतवन्त आसन् ॥३६॥ हर्यक्षं हरिन्मणिनिभलोचनम् । घोणा नासा॥३८॥प्रथमोऽध्यायः ॥१॥

तत्र संशयितादर्थाद्योऽर्थो निःसंशयो भवेत् ।
तं जना बहुमन्यन्ते येऽर्थशास्त्रविशारदाः ॥ ५०
यच्चाप्यत्र भवेत्कार्यं गर्हितं लोकनिन्दितम् ।
कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता ॥ ५१
निन्दितानि च कर्माणि कुत्सितानि पदेपदे ।
सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः ॥ ५२
अस्मिन्नर्थे पुरा गीताः श्रूयन्ते धर्मवित्तमैः ।
श्लोका न्यायमवेक्षद्भिस्तत्त्वार्थास्तत्त्वदर्शिभिः ५३
परिश्रान्ते विदीर्णे वा भुञ्जाने वाऽपि शत्रुभिः ।
प्रस्थाने वा प्रवेशे वा प्रहर्तव्यं रिपोर्बलम् ॥ ५४
निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम् ।
भिन्नयोधं बलं यच्च द्विधा युक्तं च यद्भवेत् ॥ ५५
इत्येवं निश्चयं चक्रे सुप्तानां निशि मारणे ।
पाण्डूनां सह पाञ्चालैर्द्रोणपुत्रः प्रतापवान् ॥ ५६
स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः ।
सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च ॥ ५७
तौ प्रबुद्धौ महात्मानौ कृपभोजौ महाबलौ ।
नोत्तरं प्रतिपद्येतां तत्र युक्तं ह्रिया वृतौ ॥ ५८
स मुहूर्तमिव ध्यात्वा तावुभौ वाक्यमब्रवीत् ॥ ५९
हतो दुर्योधनो राजा एकवीरो महाबलः ।
यस्यार्थे वैरमस्माभिरासक्तं पाण्डवैः सह ॥ ६०
एकाकी बहुभिः क्षुद्रैराहवे शुद्धविक्रमः ।
पातितो भीमसेनेन एकादशचमूपतिः ॥ ६१
वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतम् ।
मूर्धाभिषिक्तस्य शिरः पादेन परिमृद्नता ॥ ६२
विनर्दन्ति च पाञ्चालाः क्ष्वेलन्ति च हसन्ति च ।
धमन्ति शङ्खाञ्शतशो हृष्टा घ्नन्ति च दुन्दुभीन् ६३
वादित्रघोषस्तुमुलो विमिश्रः शङ्खनिःस्वनैः ।
अनिलेनेरितो घोरो दिशः पूरयतीव ह ॥ ६४
अश्वानां हेषमाणानां गजानां चैव बृंहताम् ।
सिंहनादश्च शूराणां श्रूयते सुमहानयम् ॥ ६५
दिशं प्राचीं समाश्रित्य हृष्टानां गच्छतां भृशम् ।
रथनेमिस्वनाश्चैव श्रूयन्ते रोमहर्षणाः ॥ ६६
पाण्डवैर्धार्तराष्ट्राणां यदिदं कदनं कृतम् ।
वयमेव त्रयः शिष्टा अस्मिन्महति वैशसे ॥ ६७
केचिन्नागशतप्राणाः केचित्सर्वास्त्रकोविदाः ।
निहताः पाण्डवैर्यस्मिन्मन्ये कालस्य पर्ययम् ॥ ६८
एवमेतेन भाव्यं हि नूनं कार्येण तत्त्वतः ।
यथा ह्यस्येदृशी निष्ठा कृते यत्नेऽपि दुष्करे ॥ ६९
भवतोस्तु यदि प्रज्ञा न मोहादपचीयते ।
व्यसनेऽस्मिन्महत्यर्थे यन्नः श्रेयस्तदुच्यताम् ॥ ७०

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

कृपेण द्रौणिंप्रति कर्तव्योपदेशः ॥ १ ॥

कृप उवाच ।
श्रुतं ते वचनं सर्वं हेतुयुक्तं मया विभो ।
ममापि तु वचः किंचिच्छृणुष्वाद्य महाभुज ॥ १
आबद्धा मानुषाः सर्वे निबद्धाः कर्मणोर्द्वयोः ।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते ॥ २
न हि दैवेन सिध्यन्ति कार्याण्येकेन सत्तम ।
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥ ३
ताभ्यामुभाभ्यां सर्वार्था निबद्धा अधमोत्तमाः ।
प्रवृत्ताश्चैव दृश्यन्ते निवृत्ताश्चैव सर्वशः ॥ ४
पर्जन्यः पर्वते वर्षन्किंनु साधयते फलम् ।
कृष्टे क्षेत्रे तथा वर्षन्किं न साधयते फलम् ॥ ५
उत्थानं चापि दैवस्य ह्यनुत्थानं च दैवतम् ।
व्यर्थं भवति सर्वत्र पूर्वस्तत्र विनिश्चयः ॥ ६
सुवृष्टे च यथा देवे सम्यक् क्षेत्रे च कर्षिते ।

दैवे आसमन्तात् बद्धाः पुरुषकारे निहीनतया बद्धाः । तेन दैवं प्रधानं पुरुषकार उपसर्जनमित्युक्तं भवति । आरम्भा

मानुषाः सर्वे इति क. पाठः ॥२॥ उत्थानमिति । दैवस्य प्रधानस्योत्थानं पुरुषकारो व्यर्थं भवति तथाऽनुत्थानमुत्थानहीनं

बीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी ॥ ७
तयोर्दैवं तु दुश्चिन्त्यं स्ववशेनैव वर्तते ।
प्राज्ञाः पुरुषकारं तु वर्तन्ते दैवमास्थिताः ॥ ८
ताभ्यां सर्वे हि कार्यार्था मनुष्याणां नरर्षभ ।
विचेष्टन्तः स्म दृश्यन्ते निवृत्तास्तु तथैव च ॥ ९
कृतः पुरुषकारश्च सोऽपि दैवेन सिध्यति ।
तथास्य कर्मणः कर्तुरभिनिर्वर्तते फलम् ॥ १०
उत्थानं च मनुष्याणां दक्षाणां दैववर्जितम् ।
अफलं दृश्यते लोके सम्यगप्युपपादितम् ॥ ११
तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः ।
उत्थानं ते विगर्हन्ति प्राज्ञानां तन्न रोचते ॥ १२
प्रायशो हि कृतं कर्म नाफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म पश्येन्महाफलम् ॥१३
चेष्टामकुर्वँल्लभते यदि किंचिद्यदृच्छया ।
यो वा न लभते कृत्वा दुर्दशौ तावुभावपि ॥ १४
शक्नोति जीवितुं दक्षो नालसः सुखमेधते ।
दृश्यन्ते जीवलोकेऽस्मिन्दक्षाः प्रायो हितैषिणः १५
यदि दक्षः समारम्भात्कर्मणो नाश्नुते फलम् ।
नास्य वाच्यं भवेत्किंचिल्लब्धव्यं वाऽधिगच्छति १६
नाकृत्वा कर्म लोके हि फलं विन्दति कर्हिचित् ।
स तु वक्तव्यतां याति द्वेष्यो भवति भूयशः ॥१७
एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा ।
स करोत्यात्मनोऽनर्थानेष बुद्धिमतां नयः ॥ १८
हीनं पुरुषकारेण यदि दैवेन वा पुनः ।
कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत् ॥ १९
हीनं पुरुषकारेण कर्म त्विह न सिध्यति ॥ २०
दैवतेभ्यो नमस्कृत्य यस्त्वर्थान्सम्यगीहते ।
दक्षो दाक्षिण्यसंपन्नो न स मोघैर्विहन्यते ॥ २१
सम्यगीहा पुनरियं यो वृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेयः करोति च हितं वचः ॥२२
उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसंमताः ।
ते स्म योगे परं मूलं तन्मूला सिद्धिरुच्यते ॥ २३
वृद्धानां वचनं श्रुत्वा योऽभ्युत्थानं प्रयोजयेत् ।
उत्थानस्य फलं सम्यक्तदा स लभतेऽचिरात् ॥२४
रागात्क्रोधाद्भयाल्लोभाद्योऽर्थानीहेत मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः ॥२५
सोयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थः समारब्धो मूढत्वादविचिन्तितः ॥ २६
हितबुद्धीननादृत्य संमन्त्र्यासाधुभिः सह ।
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः ॥ २७
पूर्वमप्यतिदुःशीलो न धैर्यं कर्तुमर्हति ।
तपत्यर्थे विपन्ने हि मित्राणां न कृतं वचः ॥ २८
अनुवर्तामहे यत्तु तं वयं पापपूरुषम् ।
अस्मानप्यनयस्तस्मात्प्राप्तोऽयं दारुणो महान् ॥२९
अनेन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिन्तयते किंचित्स्वं श्रेयो नावबुध्यते ॥ ३०
मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो जनाः ।
तत्रास्य बुद्धिर्विनयस्तत्र श्रेयश्च पश्यति ॥ ३१
ततोऽस्य मूलं कार्याणां बुद्ध्या निश्चित्य वै बुधाः ।
तेऽत्र पृष्टा यथा ब्रूयुस्तत्कर्तव्यं तथा भवेत् ॥३२
ते वयं धृतराष्ट्रं च गान्धारीं च यशस्विनीम् ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥ ३३
ते पृष्टास्तु वदेयुर्यच्छ्रेयो नः समनन्तरम् ।
तदस्माभिः पुनः कार्यमिति मे नैष्ठिकी मतिः ॥३४
अनारम्भात्तु कार्याणां नार्थः संपद्यते क्वचित् ॥३५

---

दैवमपि व्यर्थमिति पक्षद्वयं सर्वत्र व्यवस्यति तत्र पूर्वएव पक्षः श्रेयानित्यर्थः ॥ ६ ॥ विचेष्टन्तः प्रवृत्ता दृश्यन्ते लोकदृष्ट्येत्यर्थः ॥ ९ ॥ कर्माकृत्वा दुःखं पश्येदित्यपि प्रायशोऽस्ति॥१३॥ दुर्दशौ दुर्लभौ॥१४॥स्पर्शं चास्याधिगच्छतीति छ. पाठः । तत्र अस्य कर्मणः स्पर्शं लोकस्य संबन्धं चाधिगच्छति लोकप्रियः स्यादित्यर्थः ॥ १६ ॥ अकृत्वा कर्म यो लोके फलं विन्दति धिष्ठित इति झ. पाठः । तत्र अदक्षस्तु परप्रयत्नार्जितेन जीवन्नपि भोक्तुमेवायं समर्थो नार्जयितुमिति निन्द्यत इति भावः। ॥ १७ ॥ एतत् दैवदाक्ष्ययोः साहित्यम् । अन्यथा तयोरन्यतरालम्बनेन ॥ १८ ॥ योगे अलब्धलाभे ॥ २३ ॥ अनीशः अजितचित्तः । अवमानी परमवजानन् ॥ २५ ॥ द्वितीयोऽध्यायः ॥ २ ॥

कृते पुरुषकारे तु येषां कार्यं न सिध्यति । दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥ ३६

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

द्रौणिना कृपवचनमनादृत्य कृपकृतवर्मणोः पुरतः निशि प्रसुप्तपाण्डुपाञ्चालहननप्रतिज्ञानम् ॥ १ ॥

सञ्जय उवाच ।
कृपस्य वचनं श्रुत्वा धर्मार्थसहितं शुभम् ।
अश्वत्थामा महाराज दुःखशोकसमन्वितः ॥ १
दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा ।
क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत ॥ २
पुरुषेपुरुषे बुद्धिर्या या भवति शोभना ।
तुष्यन्ति च पृथक्सर्वे प्रज्ञया ते स्वयास्वया ॥ ३
सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम् ।
सर्वस्यात्मा बहुमतः सर्वोत्मानं प्रशंसति ॥ ४
सर्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता ।
परबुद्धिं च निन्दन्ति स्वां प्रशंसन्ति चासकृत् ॥५
कारणान्तरयोगेन येषां संवदते मतिः ।
तेऽन्योन्येन च तुष्यन्ति बहुमन्यन्ति चासकृत् ६
तस्यैव तु मनुष्यस्य सासा बुद्धिस्तदातदा ।
कालयोगे विपर्यासं प्राप्यान्योन्यं विपद्यते ॥ ७
अनित्यत्वात्तु चित्तानां मनुष्याणां विशेषतः ।
चित्तवैक्लव्यमासाद्य सासा बुद्धिः प्रजायते ॥ ८
यथा हि वैद्यः कुशलो ज्ञात्वा व्याधिं यथाविधि ।
भैषज्यं कुरुते योगात्प्रशमार्थमिति प्रभो ॥ ९
एवं कार्यस्य योगार्थं बुद्धिं कुर्वन्ति मानवाः ।
प्रज्ञया च स्वया युक्त्या तां च गृह्णन्ति वै बुधाः १०
अन्यया यौवने बाल्ये बुद्ध्या भवति मोहितः ।
मध्येऽन्यया जरायां तु सोन्यां रोचयते मतिम् ११
व्यसनं वा महाघोरं समृद्धिं चापि तादृशीम् ।
अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम् ॥ १२
एकस्मिन्नेव पुरुषे सासा बुद्धिस्तदातदा ।
भवत्यनित्या प्रज्ञा हि सा तस्यैव न रोचते ॥ १३
निश्चित्य तु यथाप्रज्ञं यां मतिं साधु पश्यति ।
तया प्रकुरुते भावं सा तस्योद्योगकारिका ॥ १४
सर्वो हि पुरुषो भोज साध्वेतदिति निश्चितः ।
कर्तुमारभते प्रीतिं मरणादिषु कर्मसु ॥ १५
सर्वे हि युक्तां विज्ञाय प्रज्ञां वापि स्वकां नराः ।
चेष्टन्ते विविधां चेष्टां हितमित्येव जानते ॥ १६
उपजाता व्यसनजा येयमद्य मतिर्मम ।
युवयोस्तां प्रवक्ष्यामि सर्वेषां शोकनाशिनीम् १७
प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च ।
वर्णेवर्णे समाधत्त ह्येकैकं गुणवत्तरम् ॥ १८
ब्राह्मणे वेदमग्र्यं तु क्षत्रिये तेज उत्तमम् ।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् ॥ १९
अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियो मृतः ।
अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् ॥ २०
सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणैरभिपूजिते ।
मन्दभाग्यतयाऽस्म्येतं क्षत्रधर्ममनुष्ठितः ॥ २१
क्षत्रधर्मं विदित्वाऽहं यदि ब्राह्मण्यमाश्रितः ।
प्रकरिष्ये महत्कर्म न मे तत्साधुसंमतम् ॥ २२
धारयित्वा धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे ।
पितरं निहतं दृष्ट्वा किंनु वक्ष्यामि संसदि ॥ २३
सोऽहमद्य यथाकामं क्षत्रधर्ममवाप्य च ।

---

सर्वोत्मानमित्यत्र सर्वः आत्मानमिति च्छेदः । संधिरार्षः ॥ ४ ॥ योगे येषां समा गतिरिति झ. पाठः । तत्र योगे समुदाये इत्यर्थः ॥ ६ ॥ तां च निन्दन्ति मानवा इति झ. पाठः ॥ १० ॥ हे भोज हे कृतवर्मन् । एकमेव संबोधयन् कृपस्य वचसि अनादरं सूचयति ॥ १२ ॥ भवत्यकृतबुद्धित्वादिति झ. पाठः । तत्र अकृतधर्मत्वात् अवसरानुरोधात् । इदानीं मम शान्तिबुद्धिर्न रोचते इत्यर्थः ॥ १३ ॥ क्षत्रियोऽधम इति झ. पाठः ॥ २० ॥ विदित्वा आश्रित्य ॥ २२ ॥

गन्ताऽस्मि पदवीं गन्तुः पितुश्चापि महात्मनः २४
अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः।
विमुक्तयुग्यकवचा हर्षेण च समन्विताः।
वयं जिता मताश्चैषां श्रान्ता व्यायामकर्शिताः २५
तेषां निशि प्रसुप्तानां सुस्थानां शिबिरे स्वके।
अवस्कन्दं करिष्यामि शिबिरस्याद्य दुष्करम्॥ २६
तानवस्कन्द्य शिबिरे प्रेतभूतानचेतसः।
सूदयिष्यामि विक्रम्य मघवानिव दानवान्॥ २७
अद्य तान्सहितान्सर्वान्धृष्टद्युम्नपुरोगमान्।
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः॥ २८
निहत्य चैव पाञ्चालाञ्शान्तिं लब्धाऽस्मि सत्तम॥
पाञ्चालेषु चरिष्यामि सूदयन्नद्य संयुगे।
पिनाकपाणिः संक्रुद्धः स्वयं रुद्रः पशुष्विव॥ ३०
अद्याहं सर्वपाञ्चालान्निकृत्या च निकृष्य च।
अर्दयिष्यामि संहृष्टो रणे पाण्डुसुतांस्तथा।
'सूदयिष्यामि संक्रुद्धः पशूनिव पिनाकधृत्॥' ३१
अद्याहं सर्वपाञ्चालैः कृत्वा भूमिं शरीरिणीम्।
प्रहृत्यैकेन शस्त्रेण भविष्याम्यनृणः पितुः॥ ३२
दुर्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि।
गमिष्यामि निशावेलां पदवीमद्य दुर्गमाम्॥ ३३
अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि।
विरात्रे प्रमथिष्यामि पशोरिव शिरो बलात्॥३४
अद्य पाञ्चालपाण्डूनां शयितानां शिरो निशि।
खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम॥ ३५
अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके।
कृतकृत्यः सुखी चैव भविष्यामि महामते॥ ३६

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि तृतीयोऽध्यायः॥ ३॥

## चतुर्थोऽध्यायः॥ ४॥

द्रौणिकृपयोः संवादः॥ १॥

कृप उवाच।
दिष्ट्या ते प्रतिकर्तव्ये मतिर्जातेयमच्युत।
न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयम्॥ १
अनुयास्यावहे त्वां तु प्रभाते सहितावुभौ।
अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः॥ २
अहं त्वामनुयास्यामि कृतवर्मा च सात्वतः।
परानभिमुखं यान्तं रथावास्थाय दंशितौ॥ ३
आवाभ्यां सहितः शत्रूञ्श्वो निहन्ता समागमे।
विक्रम्य रथिनां श्रेष्ठ पाञ्चालान्सपदानुगान्॥ ४
शक्तस्त्वमसि विक्रम्य विश्रमस्व निशामिमाम्।
चिरं ते जाग्रतस्तात स्वप तावन्निशामिमाम्॥ ५
विश्रान्तश्च विनिद्रश्च स्वस्थचित्तश्च मानद।
समेत्य समरे शत्रून्वधिष्यसि न संशयः॥ ६
न हि त्वां रथिनां श्रेष्ठं प्रगृहीतवरायुधम्।
जेतुमुत्सहते कश्चिदपि देवेषु पावकिः॥ ७
कृपेण सहितं यान्तं गुप्तं च कृतवर्मणा।
को द्रौणिं युधि संरब्धं योधयेदपि देवराट्॥ ८
ते वयं निशि विश्रान्ता विनिद्रा विगतज्वराः।
प्रभातायां रजन्यां वै निहनिष्याम शात्रवान्॥ ९
तव ह्यस्त्राणि दिव्यानि मम चैव न संशयः।
सात्वतोपि महेष्वासो नित्यं युद्धेषु कोविदः॥ १०
ते वयं सहितास्तात सर्वाञ्शत्रून्समागतान्।
प्रसह्य समरे हत्वा प्रीतिं प्राप्स्याम पुष्कलाम्॥ ११
विश्रमस्व त्वमव्यग्रः स्वप चेमां निशां सुखम्।
अहं च कृतवर्मा च प्रभाते त्वां नरोत्तमम्॥ १२
अनुयास्याव सहितौ धन्विनौ परतापनौ।
रथिनं त्वरया यान्तं रथमास्थाय दंशितौ॥ १३
स गत्वा शिबिरं तेषां नाम विश्राव्य चाहवे।
ततः कर्ताऽसि शत्रूणां युध्यतां कदनं महत्॥ १४
कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि।

गन्ताऽस्मि गमिष्यामि। पदवीं आनृण्यम्॥ २४॥ गमयिष्यामि पाञ्चालान्पदवीमद्य दुर्गमामिति झ. पाठः॥ ३३॥

तृतीयोऽध्यायः॥ ३॥
निहन्ता निहनिष्यसि॥ ४॥

विहरस्व यथा शक्रः सूदयित्वा महासुरान् ॥ १५
त्वं हि शक्तो रणे जेतुं पाञ्चालानां वरूथिनीम् ।
दैत्यसेनामिव क्रुद्धः सर्वदानवसूदनः ॥ १६
मया त्वां सहितं सङ्ख्ये गुप्तं च कृतवर्मणा ।
न सहेत विभुः साक्षाद्वज्रपाणिरपि स्वयम् ॥ १७
न चाहं समरे तात कृतवर्मा न चैव हि ।
अनिर्जित्य रणे पाण्डूनपयास्यामि कर्हिचित् ॥१८
हत्वा च समरे क्षुद्रान्पाञ्चालान्पाण्डुभिः सह ।
निवर्तिष्यामहे सर्वे हता वा स्वर्गगा वयम् ॥ १९
सर्वोपायैः सहायास्ते प्रभाते वयमाहवे ।
सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ ॥ २०
एवमुक्तस्ततो द्रौणिर्मातुलेन हितं वचः ।
अब्रवीन्मातुलं राजन्क्रोधादुद्वृत्य लोचने ॥ २१
आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च ।
अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः ॥ २२
तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयम् ।
यस्य भागश्चतुर्थो मे स्वप्नमह्नाय नाशयेत् ॥ २३
किं नाम दुःखं लोकेऽस्मिन्पितुर्वधमनुस्मरन् ।
हृदयं निर्दहन्मेऽद्य रात्र्यहानि न शाम्यति ॥ २४
यथा च निहतः पापैः पिता मम विशेषतः ।
प्रत्यक्षमपि ते सर्वं तन्मे मर्माणि कृन्तति ॥ २५
कथं हि मादृशो लोके मुहूर्तमपि जीवति ।
द्रोणहन्तेति यद्वाचः पाञ्चालानां शृणोम्यहम् २६
धृष्टद्युम्नमहत्वा तु नाहं जीवितुमुत्सहे ।
स मे पितृवधाद्वध्यः पाञ्चाला ये च संगताः २७
विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः ।
स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् ॥ २८
कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत् ।
नृपतेर्भग्नसक्थस्य श्रुत्वा तादृग्वचः पुनः ॥ २९
यश्चायं मित्रपक्षो मे मयि जीवति निर्जितः ।
शोकं मे वर्धयत्येष वारिवेग इवार्णवम् ॥ ३०
एकाग्रमनसो मेऽद्य कुतो निद्रा कुतः सुखम् ॥३१
वासुदेवार्जुनाभ्यां च तानहं परिरक्षितान् ।
अविषह्यतमान्मन्ये महेन्द्रेणापि सत्तम ॥ ३२
न चापि शक्तः संयन्तुमस्मात्कार्यात्कथंचन ।
तं न पश्यामि लोकेऽस्मिन्यो मां कोपान्निवर्तयेत् ॥
इति मे निश्चिता बुद्धिरेषा साधुमता मम ॥ ३४
वार्दिकैः कथ्यमानस्तु मित्राणां मे पराभवः ।
पाण्डवानां च विजयो हृदयं दहतीव मे ॥ ३५
अहं तु कदनं कृत्वा शत्रूणामद्य सौप्तिके ।
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः ॥ ३६

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

कृपेण प्रसुप्तमारणस्याधार्मिकत्वकथनेन प्रतिषेधनेऽपि पितृवधामर्षिणा द्रौणिना जिघांसया रिपुशिबिरद्वारगमनम् ॥ १ ॥ कृपकृतवर्मभ्यामपि सौहार्दात्तदनुगमनम् ॥ २ ॥

कृप उवाच ।
शुश्रूषुरपि दुर्मेधाः पुरुषोऽनियतेन्द्रियः ।
नालं वेदयितुं कृत्स्नौ धर्मार्थाविति मे मतिः ॥१
तथैव तावन्मेधावी विनयं यो न शिक्षते ।
न च किंचन जानाति सोऽपि धर्मार्थनिश्चयम् ॥२
[चिरं ह्यपि जडः शूरः पण्डितं पर्युपास्य ह ।
न स धर्मान्विजानाति दर्वी सूपरसानिव ॥ ३
मुहूर्तमपि तं प्राज्ञः पण्डितं पर्युपास्य हि ।
क्षिप्रं धर्मान्विजानाति जिह्वा सूपरसानिव ॥ ४
शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः ।

---

चतुर्थं आतुरादीनां चतुर्णां मध्ये एको भागः अमर्षः । मे मम स्वप्नं अह्नाय झटिति नाशयेत् । तस्मात् स्वपेत्युक्तं तन्न युज्यते ॥२३॥ अनुस्मरन् अनुस्मरतः । न शाम्यति अमर्ष इत्यर्थः ॥ २४ ॥

स्वप्ता स्वप्स्यामि ॥ ३६ ॥ चतुर्थोऽध्यायः ॥ ४ ॥

अशुश्रूषुः सुदुर्मेधा इति ङ. पाठः । दुर्मेधाः मूढः । अनियतेतिच्छेदः ॥ १ ॥

जानीयादागमान्सर्वान्ग्राह्यं च न विरोधयेत् ॥ ५
अनयस्त्ववमानी यो दुरात्मा पापपूरुषः ।
दिष्टमुन्मृज्य कल्याणं करोति बहुपातकम् ॥ ६
नाथवन्तं तु सुहृदः प्रतिषेधन्ति पातकात् ।
निवर्तते तु लक्ष्मीवान्नालक्ष्मीवान्निवर्तते ॥ ७
यथा ह्युच्चावचैर्वाक्यैः क्षिप्तचित्तो नियम्यते ।
तथैव सुहृदा शक्यो नशक्यस्त्ववसीदति ॥ ८
तथैव सुहृदोऽप्राज्ञान्कुर्वाणान्कर्म पापकम् ।
प्राज्ञाः संप्रतिषेधन्ति यथाशक्ति पुनःपुनः ॥ ९
स कल्याणे मनः कृत्वा नियम्यात्मानमात्मना ।
कुरु मे वचनं तात येन पश्चान्न तप्स्यसे ॥ १०
न वधः पूज्यते लोके सुप्तानामिह धर्मतः ।
तथैव न्यस्तशस्त्राणां विमुक्तरथवाजिनाम् ॥ ११
ये च ब्रूयुस्तवास्मीति ये च स्युः शरणागताः ।
विमुक्तमूर्धजा ये च ये चापि हतवाहनाः ॥ १२
अद्य स्वप्स्यन्ति पाञ्चाला विमुक्तकवचा विभो ।
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः ॥ १३
यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः ।
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे ॥ १४
सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः ।
न च ते जातु लोकेऽस्मिन्सुसूक्ष्ममपि किल्बिषम् १५
त्वं पुनः सूर्यसंकाशः श्वोभूत उदिते रवौ ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् ॥१६
असंभावितरूपं हि त्वयि कर्म विगर्हितम् ।
शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम ॥ १७

अश्वत्थामोवाच ।

एवमेव यथाऽऽत्थ त्वमनुशाससि मातुल ।
तैस्तु पूर्वमयं सेतुः समन्ताद्विदलीकृतः ॥ १८
प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ १९
कर्णश्च पतिते चक्रे उत्थास्यन्रथिनां वरः ।
उत्तमे व्यसने मग्नो हतो गाण्डीवधन्वना ॥ २०
तथा शान्तनवो भीष्मो न्यस्तशस्त्रो निरायुधः ।
शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना ॥ २१
भूरिश्रवा महेष्वासस्तथा प्रायगतो रणे ।
क्रोशतां भूमिपालानां युयुधानेन पातितः ॥ २२
दुर्योधनश्च भीमेन समेत्य गदया मृधे ।
पश्यतां भूमिपालानामधर्मेण निपातितः ॥ २३
एकाकी बहुभिस्तत्र परिवार्य महारथैः ।
अधर्मेण नरव्याघ्रो भीमसेनेन पातितः ॥ २४
विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः ।
वादिकानां कथयतां स मे मर्माणि कृन्तति ॥२५
एवं चाधार्मिकाः पापाः पाञ्चाला भिन्नसेतवः ।
तानेवं भिन्नमर्यादान्किं भवान्न विगर्हति ॥ २६
पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके ।
कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै ॥२७
त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितम् ।
तस्य मे त्वरमाणस्य कुतो निद्रा कुतः सुखम् २८
न स जातः पुमाँल्लोके कश्चिन्न स भविष्यति ।
यो मे व्यावर्तयेदेतां वधे तेषां कृतां मतिम् ॥२९

सञ्जय उवाच ।

एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् ।
एकान्ते योजयित्वाऽश्वान्प्रायादभिमुखः परान् ३०
तमब्रूतां महात्मानौ भोजशारद्वतावुभौ ।
किमयं स्यन्दनो युक्तः किं च कार्यं चिकीर्षितम् ३१
एकसार्थप्रयातौ स्वस्त्वया सह नरर्षभ ।
समदुःखसुखौ चापि तस्माच्छंसितुमर्हसि ॥ ३२
अश्वत्थामा तु संक्रुद्धः पितुर्वधमनुस्मरन् ।
ताभ्यां तथ्यं तथाऽऽचख्यौ यदस्यात्मचिकीर्षितम् ।
हत्वा शतसहस्राणि योधानां निशितैः शरैः ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ३४
तं तथैव वधिष्यामि न्यस्तवर्माणमद्य वै ।
पुत्रं पाञ्चालराजस्य पापं पापेन कर्मणा ॥ ३५
तथा विनिहतः पापः पाञ्चाल्यः पशुवन्मया ।

अनेय इति झ. पाठः । तत्र अनेयः सन्मार्गं नेतुमशक्यः । दिष्टमुपदिष्टम् ॥ ६ ॥ उच्चावचैः सर्वैरिति क. छ. पाठः ॥ ८ ॥

अप्लवे इति च्छेदः ॥ १४ ॥ अधर्मेण नाभेरधस्तात्प्रहारेण ॥ २३ ॥ नावां शङ्कितुमर्हसीति झ. पाठः ॥ ३२ ॥

शस्त्रेण विजिताँल्लोकान्नाप्नुयादिति मे मतिः ३६
क्षिप्रं सन्नद्धकवचौ सखड्गावात्तकार्मुकौ ।
मामेवाद्य प्रतीक्षेतां रथवर्यौ परंतपौ ॥ ३७
इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् ।
तमन्वगात्कृपो राजन्कृतवर्मा च सात्वतः ॥ ३८
ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः ।
हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ॥ ३९
ययुश्च शिविरं तेषां संप्रसुप्तजनं विभो ।
द्वारदेशमनुप्राप्य द्रौणिस्तस्थौ महारथः ॥ ४०

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ॥ ६ ॥

अश्वत्थाम्नः शिबिरद्वारस्थमहाभूतदर्शनम् ॥ १ ॥ भूतजिगीषया द्रौणिविसृष्टानामस्त्रशस्त्राणां भूतेन ग्रसनम् ॥ २ ॥ तश्चिंतातान्तस्य द्रौणेर्महादेवोपासनाध्यवसायः ॥ ३ ॥

तराष्ट्र उवाच ।
ारदेशे ततो द्रौणिमवस्थितमवेक्ष्य तौ ।
कुर्वतां भोजकृपौ किं सञ्जय वदस्व मे ॥ १
ञ्जय उवाच ।
तवर्माणमामन्त्र्य कृपं च स महारथः ।
ाणिर्मन्युपरीतात्मा शिबिरद्वारमासदत् ॥ २
त्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम् ।
ोऽपश्यद्द्वारमावृत्य तिष्ठन्तं रोमहर्षणम् ॥ ३
ानं चर्म वैयाघ्रं वसारुधिरविस्रवम् ।
ष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम् ॥ ४
हुभिः स्वायतैर्भीमैर्नानाप्रहरणोद्यतैः ।
द्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् ॥ ५
ंष्ट्राकरालवदनं व्यादितास्यं भयानकम् ।
नानां सहस्रैश्च विचित्रैरभिभूषितम् ॥ ६
तस्य वपुः शक्यं प्रवक्तुं वेष एव च ।
था तु तदालक्ष्य स्फुटेयुरपि पर्वताः ॥ ७
ास्यनासिकाभ्यां च श्रवणाभ्यां च सर्वशः ।
यश्चाक्षिसहस्रेभ्यः प्रादुरासन्महार्चिषः ॥ ८
ा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः ।
ादुरासन्हृषीकेशाः शतशोऽथ सहस्रशः ॥ ९
त्यद्भुतमालोक्य भूतं लोकभयंकरम् ।
द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत् ॥ १०
द्रौणिमुक्ताञ्छरांस्तांस्तु तद्भूतं महदग्रसत् ।
उदधेरिव वार्योघान्पावको वडवामुखः ॥ ११
अश्वत्थामा तु संप्रेक्ष्य शरौघांस्तान्निरर्थकान् ।
रथशक्तिं मुमोचास्मै दीप्तामग्निशिखामिव ॥ १२
सा तमाहत्य दीप्ताग्रा रथशक्तिरदीर्यत ।
युगान्ते सूर्यमाहत्य महोल्केव दिवश्च्युता ॥ १३
अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्चसम् ।
कोशात्समुद्बवर्हाशु बिलाद्दीप्तमिवोरगम् ॥ १४
ततः खड्गवरं धीमान्भूताय प्राहिणोत्तदा ।
स तदासाद्य भूतं वै विलयं तूलवद्ययौ ॥ १५
ततः स कुपितो द्रौणिरिन्द्रकेतुनिभां गदाम् ।
ज्वलन्तीं प्राहिणोत्तस्मै भूतं तामपि चाग्रसत् ॥ १६
ततः सर्वायुधाभावे वीक्षमाणस्ततस्ततः ।
अपश्यत्कृतमाकाशमनाकाशं जनार्दनैः ॥ १७
तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः ।
अचिन्तयत्सुसंत्रस्तः कृपभोजवचः स्मरन् ॥ १८
ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः ।
स शोचत्यापदं प्राप्य यथाऽहमवमत्य तौ ॥ १९
शास्त्रदृष्टानविद्वान्यः समतीत्य जिघांसति ।
स पथः प्रच्युतो धर्म्यात्कुपथे प्रतिहन्यते ॥ २०

---

ान्निवर्जिताँल्लोकान्प्राप्नुयादिति मे मतिः इति ङ. पाठः ६ ॥ पञ्चमोऽध्यायः ॥ ५ ॥
थशक्तिं चक्रम् ॥ १२ ॥ युग्मान्ते सूर्यमिति झ. पाठः

तत्र युग्मांते मिथुनराशेरन्ते अतिदीप्तं इत्यर्थः ॥ १३ ॥ विलं नकुलवद्ययौ इति झ. पाठः ॥ १५ ॥ अनाकाशं निरवकाशम् ॥ १७ ॥ षष्ठोऽध्यायः ॥ ६ ॥

गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा ।
वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च ॥ २१
मत्तोन्मत्तप्रमत्तेषु न शस्त्राणि च पातयेत् ।
इत्येवं गुरुभिः पूर्वमुपदिष्टं नृणां सदा ॥ २२
सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम् ।
अमार्गेणैवमारभ्य घोरामापदमागतः ॥ २३
तां चापदं घोरतरां प्रवदन्ति मनीषिणः ।
यदुद्यम्य महत्कृत्यं भयादपि निवर्तते ॥ २४
अशक्यं चैव कः कर्तुं शक्तः शक्तिबलादिह ।
न हि दैवाद्गरीयो वै मानुष्यं किंचिदिष्यते ॥ २५
मानुष्यं कुर्वतः कर्म यदि दैवान्न सिध्यति ।
स पथः प्रच्युतो धर्म्याद्विपदं प्रतिपद्यते ॥ २६
प्रतिज्ञानं ह्यविज्ञानं प्रवदन्ति मनीषिणः ।
यदारभ्य क्रियां कांचिद्भयादिह निवर्तते ॥ २७
तदिदं दुष्प्रणीतेन भयं मां समुपस्थितम् ।
न हि द्रोणसुतः सङ्ख्ये निवर्तेत कथंचन ॥ २८
इदं च सुमहद्भूतं दैवदण्डमिवोद्यतम् ।
न चैतदभिजानामि चिन्तयन्नपि सर्वथा ॥ २९
ध्रुवं येयमधर्मेण प्रहिता कलुषा मतिः ।
तस्याः फलमिदं घोरं प्रतिघाताय कल्पते ॥ ३०
तदिदं दैवविहितं मम सङ्ख्ये निवर्तनम् ।
नान्यत्र दैवादुद्यन्तुमिह शक्यं कथंचन ॥ ३१
सोऽहमद्य महादेवं प्रपद्ये शरणं विभुम् ।
दैवदण्डमिमं घोरं स हि मे नाशयिष्यति ॥ ३२
कपर्दिनं प्रपद्येऽहं देवदेवमुमापतिम् ।
कपालमालिनं रुद्रं भगनेत्रहरं हरम् ॥ ३३
स हि देवोऽत्यगाद्देवांस्तपसा विक्रमेण च ।
तस्माच्छरणमभ्येष्ये गिरिशं शूलपाणिनम् ॥ ३४

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

द्रौणिना शिवस्तुतिः ॥ १ ॥ द्रौणेः पुरतः काञ्चनवेद्यामग्न्युद्भवः ॥ २ ॥ द्रौणेः समीपे नानाविधभीषणभूतगणानामागमनम् ॥ ३ ॥ शिवेन आत्मनो हविष्ट्वकल्पनपूर्वकमग्नौ प्रविष्टाय द्रौणये खड्गदानपूर्वकं तच्छरीरप्रवेशः ॥ ४ ॥ पुनरश्वत्थाम्नः शिबिरगमनम् ॥ ५ ॥

सञ्जय उवाच ।
एवं संचिन्तयित्वा तु द्रोणपुत्रो विशांपते ।
अवतीर्य रथोपस्थाद्दध्यौ स प्रयतः स्थितः ॥ १
द्रौणिरुवाच ।
उग्रं स्थाणुं शिवं रुद्रं शर्वमीशानमीश्वरम् ।
गिरिशं वरदं देवं भवभावनमव्ययम् ॥ २
शितिकण्ठमजं रुद्रं दक्षक्रतुहरं हरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ३
श्मशानवासिनं दृप्तं महागणपतिं विभुम् ।
खट्वाङ्गधारिणं मुण्डं जटिलं ब्रह्मचारिणम् ॥ ४
मनसा ह्यनुचिन्त्यैनं दुष्करेणाल्पचेतसा ।
अद्य भूतोपहारेण यक्ष्ये त्रिपुरघातिनम् ॥ ५
स्तुतं स्तुत्यं स्तूयमानममोघं कृत्तिवाससम् ।
विलोहितं नीलकण्ठमसह्यं दुर्निवारणम् ॥ ६
शुक्रं विश्वसृजं ब्रह्म ब्रह्मचारिणमेव च ।
व्रतवन्तं तपोनिष्ठमनन्तं तपतां गतिम् ॥ ७
बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियम् ।
धनाध्यक्षप्रियसखं गौरीहृदयवल्लभम् ॥ ८
कुमारपितरं पिङ्गं गोवृषोत्तमवाहनम् ।
कृत्तिवाससमत्युग्रमुमातोषणतत्परम् ॥ ९
परं परेभ्यः परमं परं यस्मान्न विद्यते ।
इष्वस्त्रोत्तमभर्तारं दिगन्तं देशरक्षिणम् ॥ १०
हिरण्यकवचं देवं चन्द्रमौलिविभूषणम् ।
प्रपद्ये शरणं देवं परमेण समाधिना ॥ ११

रथोपस्थाद्दध्यौ स प्रयतः स्थितः इति क. पाठः ॥ १ ॥ सोऽहमात्मोपहारेणेति झ. पाठः ॥ ५ ॥ उमाभूषणतत्परमिति झ. पाठः ॥ ९ ॥ हिरण्यदण्डकवचं चारुमौलिविभूषणमिति क. पाठः ॥ ११ ॥

इमां चेदापदं घोरां तराम्यद्य सुदुस्तराम् ।
सर्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिम् ॥१२
इति तस्य व्यवसितं ज्ञात्वा योगात्सुकर्मणः ।
पुरस्तात्काञ्चनी वेदी प्रादुरासीन्महात्मनः ॥१३
तस्यां वेद्यां तदा राजंश्चित्रभानुरजायत ।
स दिशो विदिशः खं च ज्वालाभिरिव पूरयन् ॥१४
दीप्तास्यनयनाश्चात्र नैकपादशिरोधराः ।
[रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ॥] १५
द्विपाः शैलप्रतीकाशाः प्रादुरासन्महागणाः ।
श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः ॥ १६
ऋक्षमार्जारवदना व्याघ्रद्वीपिमुखास्तथा ।
काकवक्त्राः प्लवमुखाः शुकवक्त्रास्तथैव च ॥ १७
महाजगरवक्त्राश्च हंसवक्त्राः शितप्रभाः ।
दार्वाघाटमुखाश्चापि चाषवक्त्राश्च भारत ॥ १८
कूर्मनक्रमुखाश्चैव शिंशुमारमुखास्तथा ।
महामकरवक्त्राश्च तिमिवक्त्रास्तथैव च ॥ १९
हरिवक्त्राः क्रौञ्चमुखाः कपोताभमुखास्तथा ।
पारावतमुखाश्चैव मद्गुवक्त्रास्तथैव च ॥ २०
पाणिकर्णाः सहस्राक्षास्तथैव च महोदराः ।
निर्मांसाः काकवक्त्राश्च श्येनवक्त्राश्च भारत ॥ २१
तथैवाशिरसो राजन्नृक्षवक्त्राश्च भीषणाः ।
प्रदीप्तनेत्रजिह्वाश्च ज्वालावर्णास्तथैव च ॥ २२
ज्वालाकेशाश्च राजेन्द्र ज्वलद्रोमचतुर्भुजाः ।
मेषवक्त्रास्तथैवान्ये तथा छागमुखा नृप ॥ २३
शङ्खाभाः शङ्खवक्त्राश्च शङ्खवर्णास्तथैव च ।
शङ्खमालापरिकराः शङ्खध्वनिसमस्वनाः ॥ २४
जटाधराः पञ्चशिखास्तथा मुण्डाः कृशोदराः ।
चतुर्दंष्ट्राश्चतुर्जिह्वाः शङ्कुकर्णाः किरीटिनः ॥ २५
मौञ्जीधराश्च राजेन्द्र तथा कुञ्चितमूर्धजाः ।
उष्णीषिणः कुण्डलिनश्चारुवक्त्राः स्वलंकृताः ॥२६
पद्मोत्पलापीडधरास्तथा मुकुटधारिणः ।
माहात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः ॥२७
शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः ।
भुशुण्डीपाशहस्ताश्च दण्डहस्ताश्च भारत ॥ २८
पृष्ठेषु बद्धेषुधयश्चित्रबाणोत्कटास्तथा ।
सध्वजाः सपताकाश्च सघण्टाः सपरश्वथाः ॥ २९
महापाशोद्यतकरास्तथा लगुडपाणयः ।
स्थूणाहस्ताः खड्गहस्ताः सर्पोच्छ्रितकिरीटिनः ॥३०
महासर्पाङ्गदधराश्चित्राभरणधारिणः ।
रजोध्वजाः पङ्कदिग्धाः सर्वे चित्राम्बरस्रजः ।
नीलाङ्गाः पिङ्गलाङ्गाश्च मुण्डवक्त्रास्तथैव च ॥ ३१
भेरीशङ्खमृदङ्गांश्च झर्झरानकगोमुखान् ।
अवादयन्पारिषदाः प्रहृष्टाः कनकप्रभाः ॥ ३२
गायमानास्तथैवान्ये संहृष्टाः पुरुषर्षभाः ।
लङ्घयन्तः प्लवन्तश्च वल्गन्तश्च महारथाः ॥ ३३
धावन्तो जवनाश्चण्डाः पावकोद्धूतमूर्धजाः ।
मत्ता इव महानागा विनदन्तो मुहुर्मुहुः ॥ ३४
सुभीमा घोररूपाश्च शूलपट्टसपाणयः ।
नानाविरागवसनाश्चित्रमाल्यानुलेपनाः ॥ ३५
रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ।
हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ॥ ३६
पातारोऽसृग्वसाज्यानां मांसान्त्रकृतभोजनाः ।
चूडालाः कर्णिकाराश्च प्रहृष्टाः पिठरोदराः ॥ ३७
अतिह्रस्वातिदीर्घाश्च प्रलम्बाश्चातिभैरवाः ।
विकटाः काललंबोष्ठा बृहच्छेफाण्डपिण्डिकाः ॥३८
महार्हनानाविकटा मुण्डाश्च जटिलाः परे ।
सार्केन्दुग्रहनक्षत्रां द्यां कुर्युस्ते महीतले ॥ ३९
उत्सहेरंश्च ये हन्तुं भूतग्रामं चतुर्विधम् ।
ये च वीतभया नित्यं हरस्य भ्रुकुटीसहाः ॥ ४०
कामकारकरा नित्यं त्रैलोक्यस्येश्वरेश्वराः ।
नित्यानन्दप्रमुदिता वागीशा वीतमत्सराः ॥ ४१
प्राप्याष्टगुणमैश्वर्यं ये न यास्यन्ति वै स्मयम् ।
येषां विस्मयते नित्यं भगवान्कर्मभिर्हरः ॥ ४२
मनोवाक्कर्मभिर्युक्तैर्नित्यमाराधितश्च यैः ।
मनोवाक्कर्मभिर्भक्तान्पाति पुत्रानिवौरसान् ॥ ४३
पिबन्तोऽसृग्वसाश्चान्ये क्रुद्धा ब्रह्मद्विषां सदा ।

प्लवमुखाः मण्डूकवक्त्राः ॥ १७ ॥ दार्वाघाटः पक्षिविशेषः । महागजसवक्त्राश्चेति क. पाठः ॥ १८ ॥ पिण्डिका जानुनोरधः पश्चाद्भागः ॥ ३८ ॥

चतुर्विधात्मकं सोमं ये पिबन्ति च सर्वदा ॥ ४४
श्रुतेन ब्रह्मचर्येण तपसा च दमेन च ।
ये समाराध्य शूलाङ्कं भवसायुज्यमागताः ॥ ४५
येगन्मभूतं भगवान्पार्वत्या च महेश्वरः ।
महाभूतगणैर्भुङ्क्ते भूतभव्यभवत्प्रभुः ॥ ४६
नानावादित्रहसितक्ष्वेडितोत्कृष्टगर्जितैः ।
संत्रासयन्तस्ते विश्वमश्वत्थामानमभ्ययुः ॥ ४७
संस्तुवन्तो महादेवं भाः कुर्वाणाः सुवर्चसः ।
विवर्धयिषवो द्रौणेर्महिमानं महात्मनः ॥ ४८
जिज्ञासमानास्तत्तेजः सौप्तिकं च दिदृक्षवः ।
भीमोग्रपरिघालातशूलपट्टसपाणयः ।
घोररूपाः समाजग्मुर्भूतसङ्घाः सहस्रशः ॥ ४९
जनयेयुर्भयं ये स्म त्रैलोक्यस्यापि दर्शनात् ।
न च तान्प्रेक्षमाणोऽपि व्यथामुपजगाम ह ॥५०
अथ द्रौणिर्धनुष्पाणिर्बद्धगोधाङ्गुलित्रवान् ।
स्वयमेवात्मनात्मानमुपहारमुपाहरत् ॥ ५१
धनूंषि समिधस्तत्र पवित्राणि सिताः शराः ।
हविरात्मवतश्चात्मा तस्मिन्भारत कर्मणि ॥ ५२
ततः सौम्येन मन्त्रेण द्रोणपुत्रः प्रतापवान् ।
उपहारं महामन्युरथात्मानमुपाहरत् ॥ ५३
तं रुद्रं रौद्रकर्माणं रौद्रैः कर्मभिरच्युतम् ।
अभिष्टुत्य महात्मानमित्युवाच कृताञ्जलिः ॥५४
द्रौणिरुवाच ।
इममात्मानमद्याहं जातमाङ्गिरसे कुले ।
स्वग्नौ जुहोमि भगवन्प्रतिगृह्णीष्व मां बलिम् ॥ ५५
भवद्भक्त्या महादेव परमेण समाधिना ।
अस्यामापदि विश्वात्मन्नुपाकुर्मि तवाग्रतः ॥ ५६
त्वयि सर्वाणि भूतानि सर्वभूतेषु चासि वै ।
गुणानां हि प्रधानानां कैवल्यं त्वयि तिष्ठति ॥५७
सर्वभूताश्रय विभो हविर्भूतमवस्थितम् ।
प्रतिगृहाण मां देव यद्यशक्याः परे मया ॥ ५८
इत्युक्त्वा द्रौणिरास्थाय तां वेदीं दीप्तपावकाम् ।
संत्यज्यात्मानमारुह्य कृष्णवर्त्मन्युपाविशत् ॥५९
तमूर्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितम् ।
अब्रवीद्भगवान्साक्षान्महादेवो हसन्निव ॥ ६०
सत्यशौचार्जवत्यागैस्तपसा नियमेन च ।
क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरा ॥
यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ ६२
कुर्वता तात संमानं त्वां च जिज्ञासता मया ।
पाञ्चालाः सर्वदा गुप्ता मायाश्च बहुशः कृताः ॥६३
कृतस्तस्यैव संमानः पाञ्चालान्रक्षता मया ।
अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम् ॥६४
एवमुक्त्वा महात्मानं भगवानात्मनस्तनुम् ।
आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ॥ ६५
अथाविष्टो भगवता भूयो जज्वाल तेजसा ।
वेगवांश्चाभवद्युद्धे देवसृष्टेन तेजसा ॥ ६६
तं दृष्ट्वा तानि भूतानि रक्षांसि च समाद्रवन् ।
अभितः शिबिरं यान्तं द्रोणपुत्रं महारथम् ।
देवदेवं हरं स्थाणुं यान्तं साक्षादिवेश्वरम् ॥ ६७

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ॥ ८ ॥

शिबिरद्वारे कृपकृतवर्माणौ संस्थाप्यान्तः प्रविष्टेन द्रौणिना धृष्टद्युम्नादिपाञ्चालानां द्रौपदेयादीनां च वधः ॥ १ ॥ भयाद्बहिर्निष्क्रान्तानां कृपकृतवर्मभ्यां वधः ॥ २ ॥

धृतराष्ट्र उवाच ।
तथा प्रयाते शिबिरं द्रोणपुत्रे महारथे ।
कच्चित्कृपश्च भोजश्च भयार्तौ न व्यवर्तताम् ॥ १
कच्चिन्न वारितौ क्षुद्रै रक्षिभिर्नोपलक्षितौ ।
असह्यमिति मन्वानौ न निवृत्तौ महारथौ ॥ २
कच्चिदुन्मथ्य शिबिरं हत्वा सोमकपाण्डवान् ।

सौम्येन सोमदैवत्येन मन्त्रेण ॥ ५३ ॥

सप्तमोऽध्यायः ॥ ७ ॥

'कृता प्रतिज्ञा सफला कच्चित्सञ्जय सा निशि ।।'३
दुर्योधनस्य पदवीं कच्चित्परमिकां रणे ।
'गत्वातिष्ठदसौ द्रौणिः कृत्वा कर्म सुदुष्करम् ।। ४
धृष्टद्युम्नशिखण्डिभ्यां द्रौपद्याश्च सुतैः किल ।
संछन्ना मेदिनी सुप्तैर्निहतैः पाण्डुसैनिकैः ।। ५
पाञ्चालैर्वा विनिहतैः शयानै रुधिरोक्षितैः ।
कच्चिन्महीतलं छन्नं तन्ममाचक्ष्व सञ्जय ।।' ६
[पाञ्चालैर्निहतौ वीरौ कच्चित्तु स्वपतां क्षितौ ।
कच्चित्ताभ्यां कृतं कर्म तन्ममाचक्ष्व सञ्जय।।] ७
सञ्जय उवाच ।
तस्मिन्प्रयाते शिबिरं द्रोणपुत्रे महात्मनि ।
कृपश्च कृतवर्मा च द्रौणिमेवाभ्यवर्तताम् ।। ८
अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ ।
प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत् ।। ९
यत्तौ भवन्तौ पर्याप्तौ सर्वक्षत्रस्य नाशने ।
किंपुनर्योधशेषस्य प्रसुप्तस्य विशेषतः ।। १०
अहं प्रवेक्ष्ये शिबिरं चरिष्यामि च कालवत् ।
यथा न कश्चिदपि वां जीवन्मुच्येत मानवः ।
तथा भवद्भ्यां कार्यं स्यादिति मे निश्चिता मतिः ११
इत्युक्त्वा प्राविशद्द्रौणिः पार्थानां शिबिरं महत् ।
अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः ।। १२
स प्रविश्य महाबाहुरुद्देशज्ञश्च तस्य ह ।
'द्रौणिः परमसंक्रुद्धस्तेजसा प्रज्वलन्निव ।
ततः पर्यचरत्सर्वं संप्रसुप्तं जनं निशि ।।' १३
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् ।। १४
ते तु कृत्वा महत्कर्म श्रान्ताश्च बलवद्रणे ।
प्रसुप्ता वै सुविश्वस्ताः स्वसैन्यपरिवारिताः ।। १५
अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत ।
पाञ्चाल्यं शयने द्रौणिरपश्यत्सुप्तमन्तिकात् ।। १६
क्षौमावदाते महति स्पर्ध्यास्तरणसंवृते ।
माल्यप्रवरसंयुक्ते धूपैश्चूर्णैश्च वासिते ।। १७
तं शयानं महात्मानं विस्रब्धमकुतोभयम् ।
अपोथयत पादेन शयनस्थं महीपते ।। १८
संबुध्य चरणस्पर्शादुत्थाय रणदुर्मदः ।
अभ्यजानादमेयात्मा द्रोणपुत्रं महारथम् ।। १९
तमुत्पतन्तं शयनादश्वत्थामा महाबलः ।
केशेष्वालभ्य पाणिभ्यां निष्पिपेष महीतले ।।२०
स बलात्तेन निष्पिष्टः साध्वसेन च भारत ।
अभ्याक्रान्तश्च निद्रान्धो नाशकच्चेष्टितुं तदा ।।२१
'निष्पिष्य तु ततो भूमौ पाञ्चाल्यं द्रौणिरञ्जसा ।
धनुषो ज्यां विमुच्याशु क्रूरबुद्धिरमर्षणः ।। २२
तस्य कण्ठेऽथ बद्ध्वा तां त्वरितः क्रोधमूर्च्छितः ।'
द्रौणिः क्रूरं मनः कृत्वा पाञ्चाल्यमवधीत्तदा ।।२३
तमाक्रम्य पदा राजन्कण्ठे चोरसि पादयोः ।
नदन्तं विस्फुरन्तं च पशुमारममारयत् ।। २४
'स वार्यमाणस्तरसा बलाद्बलवता बली ।'
तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत् ।। २५
आचार्यपुत्र शस्त्रेण जहि मां मा चिरं कृथाः ।
त्वत्कृते सुकृताँल्लोकान्गच्छेयं द्विपदांवर ।। २६
एवमुक्त्वा तु वचनं विरराम परंतपः ।
सुतः पाञ्चालराजस्य आक्रान्तो बलिना भृशम् २७
तस्याव्यक्तां तु तां वाचं संश्रुत्य द्रौणिरब्रवीत् ।
आचार्यघातिनां लोका न सन्ति कुलपांसन ।
तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्मते ।। २८
'नृशंसेनातिवृत्तेन त्वया मे निहतः पिता ।
तस्मात्त्वमपि वध्यश्च नृशंसेन नृशंसकृत् ।।' २९
एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपम् ।
मर्मस्वभ्यवधीत्क्रुद्धः पादघातैः सुदारुणैः ।। ३०
तस्य वीरस्य शब्देन मार्यमाणस्य वेश्मनि ।
अबुध्यन्त महाराज स्त्रियो ये चास्य रक्षिणः ।।३१
ते दृष्ट्वा धर्षयन्तं तमतिमानुषविक्रमम् ।
भूतमित्यध्यवस्यन्तो न स्म प्रव्याहरन्भयात् ।।३२
तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम् ।
अध्यतिष्ठत तेजस्वी रथं प्राप्य सुदर्शनम् ।। ३३

पाञ्चालैः पूर्वं निहतौ सन्तौ स्वपतां कच्चित् कोपात् स्वपतां पाञ्चालानां कर्म वधाख्यं ताभ्यां कच्चित्कृतमिति सम्बन्धः ।। ७ ।। शिबिरद्वार्यतिष्ठतामिति झ. पाठः ।। ८ ।। वां युवां प्राप्येति शेषः ।। ११ ।। उद्देशज्ञः धृष्टद्युम्नस्थलज्ञः ।। १३ ।। पादाष्ठीलैरिति झ. पाठः । तत्र पादाष्ठीलैः पादग्रन्थिभिः । पार्ष्णिघातैरित्यर्थः ।। ३० ।।

स तस्य भवनाद्राजन्निष्क्रम्यानादयन्दिशः ।
रथेन शिबिरं प्रायाज्जिघांसुर्द्विषतो बली ॥ ३४
अपक्रान्ते ततस्तस्मिन्द्रोणपुत्रे महारथे ।
सहितै रक्षिभिः सर्वैः प्राणेदुर्योषितस्तदा ॥ ३५
राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः ।
व्याक्रोशन्क्षत्रियाः सर्वे धृष्टद्युम्नस्य भारत ॥ ३६
तासां तु तेन शब्देन समीपे क्षत्रियर्षभाः ।
संभ्रान्ताः समनह्यन्त किमेतदिति चाब्रुवन् ॥ ३७
स्त्रियस्तु राजन्वित्रस्ता भारद्वाजं निरीक्ष्य ताः ।
अब्रुवन्दीनकण्ठेन क्षिप्रमाद्रवतेति वै ॥ ३८
राक्षसो वा मनुष्यो वा नैनं जानीम कोन्वयम् ।
हत्वा पाञ्चालराजानं रथमारुह्य तिष्ठति ॥ ३९
ततस्ते योधमुख्यास्तं सहसा पर्यवारयन् ।
स तानापततः सर्वान्रुद्रास्त्रेण व्यपोथयत् ॥ ४०
धृष्टद्युम्नं च हत्वा स तांश्चैवास्य पदानुगान् ।
अपश्यच्छयने सुप्तमुत्तमौजसमन्तिके ॥ ४१
तमप्याक्रम्य पादेन कण्ठे चोरसि तेजसा ।
तथैव मारयामास विनर्दन्तमरिंदमम् ॥ ४२
युधामन्युश्च विक्रान्तो मत्वा तं राक्षसं स सः ।
गदामुद्यम्य वेगेन हृदि द्रौणिमताडयत् ॥ ४३
'गदाप्रहाराभिहतो नाचलद्द्रौणिराहवे ।'
तमभिद्रुत्य वेगेन क्षितौ चैनमपातयत् ॥ ४४
विस्फुरन्तं च पशुवत्तथैवैनममारयत् ।
तथा स वीरो हत्वा तं ततोऽन्यान्समुपाद्रवत् ॥ ४५
संसुप्तानेव राजेन्द्र तत्र तत्र महारथान् ।
पाञ्चालवीरानाक्रम्य क्रुद्धो न्यहनदन्तिके ।
स्फुरतो वेपमानांश्च शमितेव पशून्मखे ॥ ४६
ततो निस्त्रिंशमादाय जघानान्यान्पृथक्पृथक् ।
भागशो विचरन्मार्गानसियुद्धविशारदः ॥ ४७
तथैव गुल्मे संप्रेक्ष्य शयानान्मध्यगौल्मिकान् ।
श्रान्तान्व्यस्तायुधान्सर्वानसिनैव व्यपोथयत् ॥४८
योधानश्वान्द्विपांश्चैव प्राच्छिनत्स वरासिना ।
रुधिरोक्षितसर्वाङ्गः कालसृष्ट इवान्तकः ॥ ४९

विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च ।
अवक्षेपेण चैवासेस्त्रिधा रक्तोक्षितोऽभवत् ॥ ५०
तस्य लोहितरक्तस्य दीप्तखड्गस्य युध्यतः ।
अमानुष इवाकारो बभौ परमभीषणः ॥ ५१
ये त्वजाग्रन्त कौरव्य तेऽपि शब्देन मोहिताः ।
वीक्षमाणास्तु ते तत्र द्रौणिं दृष्ट्वा प्रविव्यथुः ॥५२
तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्शनम् ।
राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ॥ ५३
स घोररूपो व्यचरत्कालवच्छिबिरे तदा ।
अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ॥ ५४
तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः ।
धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशांपते ।
अवाकिरञ्शरव्रातैर्भारद्वाजमभीतवत् ॥ ५५
ततस्तेन निनादेन संप्रबुद्धाः प्रभद्रकाः ।
शिलीमुखैः शिखण्डी च द्रोणपुत्रं समार्दयन् ॥५६
भारद्वाजः स तान्दृष्ट्वा शरवर्षाणि वर्षतः ।
ननाद बलवन्नादं जिघांसुस्तान्महारथान् ॥ ५७
ततः परमसंक्रुद्धः पितुर्वधमनुस्मरन् ।
अवरुह्य रथोपस्थात्त्वरमाणोऽभिदुद्रुवे ॥ ५८
सहस्रचन्द्रविमलं गृहीत्वा चर्म संयुगे ।
खड्गं च विमलं दिव्यं जातरूपपरिष्कृतम् ।
द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली ॥ ५९
ततः स नरशार्दूलः प्रतिविन्ध्यं महाहवे ।
कुक्षिदेशेऽवधीद्राजन्स हतो न्यपतद्भुवि ॥ ६०
प्रासेन विद्ध्वा द्रौणिं तु सुतसोमः प्रतापवान् ।
पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत् ॥ ६१
सुतसोमस्य सासिं तं बाहुं छित्त्वा नरर्षभ ।
पुनरप्याहनत्पार्श्वे स भिन्नहृदयोऽपतत् ॥ ६२
नाकुलिस्तु शतानीको रथचक्रेण वीर्यवान् ।
दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत् ॥ ६३
अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः ।
स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ॥ ६४
श्रुतकर्मा तु परिघं घोरं गृह्य दुरासदम् ।

---

तैश्छिन्नगात्रैर्विस्फुरद्भिस्तेषां शरीराद्रुच्चलद्भी रक्तबिन्दुभिरि-त्यर्थः ॥ ५० ॥

अताडयत्समुद्यम्य वेगेन द्रौणिमुत्स्मयन् ॥ ६५
स तु तं श्रुतकर्माणमास्ये जघ्ने वरासिना ।
स हतो न्यपतद्भूमौ विमूर्धा विकृताननः ॥ ६६
तेन शब्देन वीरस्तु श्रुतकीर्तिरबुध्यत ।
अश्वत्थामानमासाद्य शरवर्षैरवाकिरत् ॥ ६७
'शरैराच्छादितस्तेन द्रोणपुत्रो महारथः ।
अदृश्यत महाराज श्वाविच्छललतो यथा ॥' ६८
तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य सः ।
सकुण्डलं शिरः कायाद्भ्राजमानमपाहरत् ॥ ६९
ततो भीष्मनिहन्तारं सह सर्वैः प्रभद्रकैः ।
आहनत्सर्वतो वीरं नानाप्रहरणैर्बलात् ॥ ७०
शिलीमुखेन चाप्येनं भ्रुवोर्मध्ये समार्पयत् ॥ ७१
स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः ।
शिखण्डिनं समासाद्य द्विधा चिच्छेद सोसिना ७२
शिखण्डिनं ततो हत्वा क्रोधाविष्टः परंतपः ।
प्रभद्रकगणान्सर्वानभिदुद्राव वेगवान् ॥ ७३
यच्च शिष्टं विराटस्य बलं तु भृशमाद्रवत् ।
द्रुपदस्य च पुत्राणां पौत्राणां सुहृदामपि ।
चकार कदनं घोरं दृष्ट्वा तत्र महाबलः ॥ ७४
अन्यानन्यांश्च पुरुषानभिसृत्याभिसृत्य च ।
न्यकृन्तदसिना द्रौणिरसिमार्गविशारदः ॥ ७५
कालीं रक्तास्यनयनां रक्तमाल्यानुलेपनाम् ।
रक्ताम्बरधरां घोरां पाशहस्तां कुटुम्बिनीम् ॥ ७६
ददृशुः कालरात्रिं ते स्मयमानामिव स्थिताम् ।
नराश्वकुञ्जरान्पाशैर्बद्ध्वा घोरैः प्रतस्थुषीम् ॥ ७७
वहन्तीं विविधान्प्रेतान्पाशबद्धान्विमूर्धजान् ।
तथैव च सदा राजन्न्यस्तशस्त्रान्महारथान् ॥ ७८
स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष ।
ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिं च नित्यदा ॥ ७९
यतः प्रभृति संग्रामः कुरुपाण्डवसेनयोः ।
ततः प्रभृति तां कन्यामपश्यन्द्रौणिमेव च ॥ ८०
तांस्तु दैवहतान्पूर्वं पश्चाद्द्रौणिर्न्यपातयत् ।
त्रासयन्सर्वभूतानि विनदन्भैरवान्रवान् ॥ ८१

तदनुस्मृत्य ते वीरा दर्शनं पूर्वकालिकम् ।
इदं तदित्यमन्यन्त दैवेनोपनिपीडिताः ॥ ८
ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः ।
शिबिरे पाण्डवेयानां शतशोऽथ सहस्रशः ॥ ८
सोऽच्छिनत्कस्यचित्पादौ जघनं चैव कस्यचित्
कांश्चिद्बिभेद पार्श्वेषु कालसृष्ट इवान्तकः ॥ ८
अत्युग्रप्रतिपिष्टैश्च नदद्भिश्च भृशोत्कटैः ।
गजाश्वमथितैश्चान्यैर्मही कीर्णाऽभवत्प्रभो ॥ ८
क्रोशतां किमिदं कोऽयं कः शब्दः किंनु किं कृतम्
पाञ्चालानां तथा द्रौणिरन्तकः समपद्यत ॥ ८
अपेतशस्त्रसन्नाहान्सन्नद्धान्पाण्डुसृञ्जयान् ।
प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतां वरः ॥ ८
ततस्तच्छस्त्रवित्रस्ता भयादभ्यपतन्नराः ।
निद्रान्धा नष्टसंज्ञाश्च तत्रतत्र निपेतिरे ॥ ८
ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः ।
विनदन्तो भृशं त्रस्ता निरैक्षन्त परस्परम् ॥ ८
ततो रथं पुनर्द्रौणिरास्थितो भीमदर्शनः ।
धनुष्पाणिः शरैरन्यान्प्रैषयद्वै यमक्षयम् ॥ ९
पुनरुत्पततश्चापि दूरादपि नरोत्तमान् ।
शूरान्संपततश्चान्यान्कालरात्र्यै न्यवेदयत् ॥ ९
तथैव स्यन्दनाग्रेण प्रमथन्स व्यरोचत ।
शरवर्षैश्च विविधैरवर्षच्छात्रवांस्ततः ॥ ९
पुनश्च सुविचित्रेण शतचन्द्रेण चर्मणा ।
तेन चाकाशवर्णेन तथाचरत सोऽसिना ॥ ९
तथा स शिबिरं तेषां द्रौणिराहवदुर्मदः ।
व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः ॥ ९
उत्पेतुस्तेन शब्देन योधा राजन्विचेतसः ।
निद्रार्ताश्च भयार्ताश्च व्यधावन्त ततस्ततः ॥ ९
विस्वरं चुक्रुशुश्चान्ये बह्वबद्धं तथाऽवदन् ।
न च स्म प्रत्यपद्यन्त शस्त्राणि वसनानि च ॥ ९
विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन्परस्परम् ।
उत्पतन्तोऽपतञ्श्रान्ताः केचित्तत्राभ्रमंस्तदा ।
पुरीषमसृजन्केचित्केचिन्मूत्रं प्रसुस्रुवुः ॥ ९

पाण्डुसृञ्जयान् पाण्डवसंबन्धिनः सृञ्जयान् । पाण्डोर्गोत्रापत्यानि सृञ्जयाश्च तान्वा ॥ ८७ ॥

बन्धनानि च राजेन्द्र संछिद्य तुरगा द्विपाः ।
समं पर्यपतंश्चान्ये कुर्वन्तो महदाकुलम् ॥ ९८
तत्र केचिन्नरा भीता व्यलीयन्त महीतले ।
तथैव तान्निपतितानपिंषन्गजवाजिनः ॥ ९९
तस्मिंस्तथा वर्तमाने रक्षांसि पुरुषर्षभ ।
हृष्टानि व्यनदन्नुच्चैर्मुदा युक्तानि सत्तम ॥ १००
स शब्दः प्रेरितो राजन्भूतसङ्घैर्मुदा युतैः ।
अपूरयद्दिशः सर्वा दिवं चातिमहान्स्वनः ॥ १०१
तेषामार्तरवं श्रुत्वा वित्रस्ता गजवाजिनः ।
मुक्ताः पर्यपतन्राजन्मृद्नन्तः शिबिरे जनम् ॥ १०२
तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः ।
अकरोच्छिबिरे तेषां रजन्यां द्विगुणं तमः ॥ १०३
तस्मिंस्तमसि संजाते प्रमूढाः सर्वतो जनाः ।
नाजानन्पितरः पुत्रान्भ्रातॄन्भ्रातर एव च ॥ १०४
गजो गजानतिक्रम्य निर्मनुष्या हया हयान् ।
अताडयंस्तथाऽभञ्जंस्तथाऽमृद्नंश्च भारत ॥ १०५
ते भग्नाः प्रपतन्ति स्म मृद्नन्तश्च परस्परम् ।
न्यपातयंस्तथा चान्यान्पातयित्वा तदाऽपिषन् ॥
विचेतसः सनिद्राश्च तमसा चावृता नराः ।
जघ्नुः स्वानेव तत्राथ कालेनैव प्रचोदिताः ॥ १०७
त्यक्त्वाद्वाराणि च द्वास्थास्तथागुल्मानिगौल्मिकाः
प्राद्रवन्त यथाशक्ति कांदिशीका विचेतसः ॥१०८
विप्रनष्टाश्च तेऽन्योन्यं नाजानन्तस्तथा विभो ।
क्रोशन्तस्तात पुत्रेति दैवोपहतचेतसः ॥ १०९
पलायतां दिशस्तेषां स्वानप्युत्सृज्य बान्धवान् ।
गोत्रनामभिरन्योन्यमाक्रन्दन्त ततो जनाः ॥११०
हाहाकारं च कुर्वाणाः पृथिव्यां शेरते परे ।
तान्बुद्ध्वा रणमध्येऽसौ द्रोणपुत्रो व्यपोथयत् १११
तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः ।
शिबिरान्निष्पतन्ति स्म क्षत्रिया भयपीडिताः ११२
तांस्तु निष्पतितांस्त्रस्ताञ्शिबिराज्जीवितैषिणः ।
कृतवर्मा कृपश्चैव द्वारदेशे निजघ्नतुः ॥ ११३
विस्रस्तयन्त्रकवचान्मुक्तकेशान्कृताञ्जलीन् ।
वेपमानान्क्षितौ भीतान्नैव कांश्चिदमुच्यताम् ११४
नामुच्यत तयोः कश्चिन्निष्क्रान्तः शिबिराद्बहिः ॥
कृपश्चैव महाराज हार्दिक्यश्चैव दुर्मतिः ।
भूयश्चैव चिकीर्षन्तौ द्रोणपुत्रस्य तौ प्रियम् ।
त्रिषु देशेषु ददतुः शिबिरस्य हुताशनम् ॥ ११६
ततः प्रकाशे शिबिरे खड्गेन पितृनन्दनः ।
अश्वत्थामा महाराज व्यचरत्कृतहस्तवत् ॥ ११७
कांश्चिदापततो वीरानपरांश्चैव धावतः ।
व्ययोजयत खड्गेन प्राणैर्द्विजवरोत्तमः ॥ ११८
कांश्चिद्योधान्स खड्गेन मध्ये संछिद्य वीर्यवान् ।
अशातयद्द्रोणपुत्रः संरब्धस्तिलकाण्डवत् ॥ ११९
निनदद्भिर्भृशायस्तैर्नराश्वद्विरदोत्तमैः ।
पतितैरभवत्कीर्णा मेदिनी भरतर्षभ ॥ १२०
मानुषाणां सहस्रेषु हतेषु पतितेषु च ।
उदतिष्ठन्कबन्धानि बहून्युत्थाय चापतन् ॥ १२१
सायुधान्साङ्गदान्बाहून्विचकर्त शिरांसि च ।
हस्तिहस्तोपमानूरून्हस्तान्पादांश्च भारत ॥ १२२
पृष्ठच्छिन्नान्पार्श्वच्छिन्नाञ्शिरश्छिन्नांस्तथापरान् ।
स महात्माकरोद्द्रौणिः कांश्चिचापि पराङ्मुखान् ॥
मध्यदेशे नरानन्यांश्चिच्छेदान्यांश्च कर्णतः ।
अंसदेशे निहत्यान्यान्काये प्रावेशयच्छिरः॥ १२४
एवं हि बहुभिः शस्त्रैर्घ्नतोऽपि बलवत्तरान् ।
तमसा रजनी घोरा बभौ दारुणदर्शना ॥ १२५
किंचित्प्राणैश्च पुरुषैर्हतैश्चान्यैः सहस्रशः ।
बहुना च गजाश्वेन भूरभूद्भीमदर्शना ॥ १२६
यक्षरक्षःसमाकीर्णे रथाश्वद्विपदारुणे ।
क्रुद्धेन द्रोणपुत्रेण संछिन्नाः प्रापतन्भुवि ।
भ्रातॄनन्ये पितॄनन्ये पुत्रानन्ये विचुक्रुशुः ॥१२७
केचिदूचुर्न तत्क्रुद्धैर्धार्तराष्ट्रैः कृतं रणे ।
यत्कृतं नः प्रसुप्तानां रक्षोभिः क्रूरकर्मभिः ।
असान्निध्याद्धि पार्थानामिदं वः कदनं कृतम् १२८
न चासुरैर्न गन्धर्वैर्न यक्षैर्न च राक्षसैः ।
शक्यो विजेतुं कौन्तेयो नेता यस्य जनार्दनः ।

अभञ्जन् गात्राण्यनमयन् । अमृद्नन् परस्परं मर्दितवन्तः ॥ १०५ ॥ अपिषन् अपिंषन् ॥ १०६ ॥

ब्रह्मण्यः सत्यवाग्दान्तः सर्वभूतानुकम्पकः॥१२९
न च सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिम् ।
धावन्तं मुक्तकेशं वा हन्ति पार्थो धनञ्जयः॥१३०
तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्मभिः ।
इति लालप्यमानाः स्म शेरते बहवो जनाः॥१३१
स्तनतां च मनुष्याणामपरेषां च कूजताम् ।
ततो मुहूर्तात्प्राशाम्यत्स शब्दस्तुमुलो महान् १३२
शोणितव्यतिषिक्तायां वसुधायां च भूमिप ।
तद्रजस्तुमुलं घोरं क्षणेनान्तरधीयत ॥ १३३
स चेष्टमानानुद्विग्नान्निरुत्साहान्सहस्रशः ।
न्यपातयन्नरान्क्रुद्धः पशून्पशुपतिर्यथा ॥ १३४
अन्योन्यं संपरिष्वज्य शयानाञ्जीवतोऽपरान् ।
संलीनान्युध्यमानांश्च सर्वान्द्रौणिरपोथयत्॥१३५
दह्यमाना हुताशेन वध्यमानाश्च तेन ते ।
परस्परं तदा योधाननयद्यमसादनम् ॥ १३६
तस्या रजन्यास्त्वर्धेन पाण्डवानां महद्बलम् ।
गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् ॥ १३७
निशाचराणां सत्वानां रात्रिः सा हर्षवर्धिनी ।
आसीन्नरगजाश्वानां रौद्री क्षयकरी भृशम् ॥१३८
तत्रादृश्यन्त रक्षांसि पिशाचाश्च पृथग्विधाः ।
खादन्तो नरमांसानि पिबन्तः शोणितानि च१३९
करालाः पिङ्गला रौद्राः शैलदन्ता रजस्वलाः ।
जटिला भीमवक्त्राश्च पञ्चपादा महोदराः॥१४०
पश्चादङ्गुलयो रूक्षा विरूपा भैरवस्वनाः ।
गजाननाश्च ह्रस्वाश्च नीलवर्णा विभीषणाः ॥ १४१
सपुत्रदाराः सुक्रूराः सुदुर्दर्शाः सुनिर्घृणाः ।
विविधानि च रूपाणि तत्रादृश्यन्त रक्षसाम् १४२
पीत्वा च शोणितं हृष्टाः प्रानृत्यन्गणशोऽपरे ।
इदं परमिदं मेध्यमिदं स्वाद्विति चाब्रुवन् ॥ १४३
मेदोमज्जास्थिरक्तानां मांसानां च भृशाशिताः ।
परे मांसानि खादन्तः क्रव्यादा मांसजीविनः१४४
वसाश्चैवापरे पीत्वा पर्यधावन्विकुक्षिकाः ।
नानावक्त्रास्तथा रौद्राः क्रव्यादाः पिशिताशनाः॥

अयुतानि च तत्रासन्प्रयुतान्यर्बुदानि च ।
रक्षसां घोररूपाणां महतां क्रूरकर्मणाम् ॥ १४६
मुदितानां वितृप्तानां तस्मिन्महति वैशसे ।
समेतानि बहून्यासन्भूतानि च जनाधिप॥ १४७
एवंविधा हि सा रात्रिः सोमकानां जनक्षये ।
प्रसुप्तानां प्रमत्तानामासीत्सुभृशदारुणा ॥ १४८
असंशयं हि कालस्य पर्यायो दुरतिक्रमः ।
तादृशा निहता यत्र कृत्वाऽस्माकं जनक्षयम्॥१४९
धृतराष्ट्र उवाच ।
प्रागेव सुमहत्कर्म द्रौणिरेतन्महारथः ।
नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः॥ १५०
अथ कस्माद्धते क्षत्रे कर्मेदं कृतवानसौ ।
द्रोणपुत्रो महात्मा स तन्मे शंसितुमर्हसि॥ १५१
सञ्जय उवाच ।
तेषां नूनं भयान्नासौ कृतवान्कुरुनन्दन ।
असान्निध्याद्धि पार्थानां केशवस्य च धीमतः ।
सात्यकेश्चापि कर्मेदं द्रोणपुत्रेण साधितम्॥ १५२
को हि तेषां समक्षं तान्हन्यादपि मरुत्पतिः ।
एतदीदृशकं वृत्तं राजन्सुप्तजने विभो ॥ १५३
ततो जनक्षयं कृत्वा पाण्डवानां महात्ययम् ।
प्रत्यूषकाले शिबिरात्प्रतिगन्तुमियेष सः ॥ १५४
नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः ।
पाणिना सह संश्लिष्ट एकीभूत इव प्रभो ॥ १५५
स निःशेषानरीन्कृत्वा विरराम निशाक्षये ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः॥१५६
यथाप्रतिज्ञं तत्कर्म कृत्वा द्रौणायनिः प्रभो ।
दुर्गमां पदवीं गच्छन्पितुरासीद्गतज्वरः ॥ १५७
यथैव संसुप्तजने शिबिरे प्राविशन्निशि ।
तथैव हत्वा निःशब्दो निश्चक्राम नरर्षभः ॥ १५८
निष्क्रम्य शिबिरात्तस्मात्ताभ्यां संगम्य वीर्यवान् ।
आचख्यौ कर्म तत्सर्वं हृष्टः संहर्षयन्विभो॥ १५९
तावथाचख्यतुस्तस्मै प्रियं प्रियकरौ तदा ।
पाञ्चालान्सृञ्जयांश्चैव विनिकृत्तान्सहस्रशः॥१६०

भृशाशिताः भृशं संतर्पिताः ॥१४४॥ विकुक्षिकाः विपुलकुक्षयः ॥ १४५ ॥ अष्टमोऽध्यायः ॥ ८ ॥

ग्रीत्या चोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान् ।
दिष्ट्यादिष्ट्येति चान्योन्यं समेत्योचुर्महारथाः १६१
पर्यष्वजननो द्रौणिस्ताभ्यां संप्रतिनन्दितः ।
इदं हर्षात्तु सुमहदाददे वाक्यमुत्तमम् ॥ १६२
पाञ्चाला निहताः सर्वे द्रौपदेयाश्च सर्वशः ।
सोमका मत्स्यशेषाश्च सर्वे विनिहता मया ॥ १६३
इदानीं कृतकृत्याः स्म याम तत्रैव मा चिरम् ।
यदि जीवति नो राजा तस्मै शंसामहे प्रियम् ॥ १६४

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

द्रौणिकृपकृतवर्मभिर्दुर्योधनमेत्य शोचनम् ॥ १ ॥ दुर्योधनंप्रति द्रौणिना सुप्तजनवधकथनम् ॥ २ ॥ दुर्योधनेन प्राण त्यागः ॥ ३ ॥ द्रौण्यादीनां नगरगमनम् ॥ ४ ॥ सञ्जयस्य व्यासानुग्रहप्राप्तदिव्यज्ञाननाशः ॥ ५ ॥

सञ्जय उवाच ।
ते हत्वा सर्वपाञ्चालान्द्रौपदेयांश्च सर्वशः ।
आगच्छन्सहितास्तत्र यत्र दुर्योधनो हतः ॥ १
गत्वा चैनमपश्यन्त किंचित्प्राणं जनाधिपम् ।
ततो रथेभ्यः प्रस्कन्द्य परिवव्रुस्तवात्मजम् ॥ २
तं भग्नसक्थं राजेन्द्र कृच्छ्रप्राणमचेतसम् ।
वमन्तं रुधिरं वक्त्रादपश्यन्वसुधातले ॥ ३
वृतं समन्ताद्बहुभिः श्वापदैर्घोरदर्शनैः ।
सालावृकगणैश्चैव भक्षयिष्यद्भिरन्तिकात् ॥ ४
निवारयन्तं कृच्छ्रात्तांश्वापदांश्च चिखादिषून् ।
विचेष्टमानमुर्व्यां सुभृशं गाढवेदनम् ॥ ५
तं शयानं तथा दृष्ट्वा भूमौ सुरुधिरोक्षितम् ।
हतशिष्टास्त्रयो वीराः शोकार्ताः पर्यदेवयन् ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ६
तैस्त्रिभिः शोणितादिग्धैर्निःश्वसद्भिर्महारथैः ।
शुशुभे स वृतो राजा वेदी त्रिभिरिवाग्निभिः ॥ ७
ते तं शयानं संप्रेक्ष्य राजानमतथोचितम् ।
अविषह्येन दुःखेन ततस्ते रुरुदुस्त्रयः ॥ ८
ततस्तु रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य हि ।
रणे राज्ञः शयानस्य कृपः संपर्यदेवयत् ॥ ९
कृप उवाच ।
न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः ।
एकादशचमूभर्ता शेते दुर्योधनो हतः ॥ १०
पश्य चामीकराभस्य चामीकरविभूषिताम् ।
गदां गदाप्रियस्येमां समीपे पतितां भुवि ॥ ११
इयमेनं गदा शूरं न जहाति रणेरणे ।
स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनम् ॥ १२
पश्येमां सह वीरेण जाम्बूनदविभूषिताम् ।
शयानां शयने हर्म्ये भार्यां प्रीतिमतीमिव ॥ १३
योऽयं मूर्धाभिषिक्तानामग्रे याति परंतपः ।
स हतो ग्रसते पांसून्पश्य कालस्य पर्ययम् ॥ १४
येनाजौ निहता भूमौ शेरते क्षत्रियर्षभाः ।
स भूमौ निहतः शेते कुरुराजः परैरयम् ॥ १५
भयान्नमन्ति राजानो यस्य स्म शतसङ्घशः ।
स वीरशयने शेते क्रव्याद्भिः परिवारितः ॥ १६
यमुपासन्नृपाः पूर्वमर्थहेतोर्महीपतिम् ।
उपासते च तं ह्यद्य क्रव्यादा मांसगृद्धिनः ॥ १७
सञ्जय उवाच ।
तं शयानं कुरुश्रेष्ठं ततो भरतसत्तमम् ।
अश्वत्थामा समालिङ्ग्य करुणं पर्यदेवयत् ॥ १८
आहुस्त्वां राजशार्दूल मुख्यं सर्वधनुष्मताम् ।
धनाध्यक्षोपमं युद्धे शिष्यं संकर्षणस्य च ॥ १९
कथं विवरमद्राक्षीद्भीमसेनस्तवानघ ।
बलिनं कृतिनो नित्यं मूढः पापात्मवान्नृप ॥ २०
कालो नूनं महाराज लोकेऽस्मिन्बलवत्तरः ।
पश्यामो निहतं त्वां च भीमसेनेन संयुगे ॥ २१
कथं त्वां सर्वधर्मज्ञं क्षुद्रः पापो वृकोदरः ।

उपासत द्विजाः पूर्वमर्थहेतोर्यमीश्वरमिति झ. पाठः ॥ १७ ॥

निकृत्या हतवान्मन्दो नूनं कालो दुरत्ययः॥ २२
द्वन्द्वयुद्धे ह्यधर्मेण समाहूयौजसा मृधे ।
गदया भीमसेनेन निर्भग्ने सक्थिनी तव ॥ २३
अधर्मेण हतस्याजौ मृद्यमानं पदा शिरः ।
य उपेक्षितवान्क्षुद्रं धिक्तमस्तु युधिष्ठिरम् ॥ २४
युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरम् ।
यावत्स्थास्यन्ति भूतानि निकृत्या ह्यसि पातितः॥
ननु रामोऽब्रवीद्राजंस्त्वां सदा यदुनन्दनः ।
दुर्योधनसमो नास्ति गदायामिति वीर्यवान् ॥ २६
श्लाघते त्वां हि वार्ष्णेयो राजन्संसत्सु भारत ।
स शिष्यो मम कौरव्यो गदायुद्ध इति प्रभो ॥ २७
यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः ।
हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् ॥२८
दुर्योधन न शोचामि त्वामहं पुरुषर्षभ ।
हतपुत्रौ तु शोचामि गान्धारीं पितरं च ते ॥ २९
भावनाथौ कृतौ वीर त्वया नाथेन वर्धितौ ।
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम्॥३०
धिगस्तु कृष्णं वार्ष्णेयमर्जुनं चापि दुर्मतिम् ।
धर्मज्ञमानिनौ यौ त्वां वध्यमानमुपेक्षताम् ॥ ३१
ाण्डवाश्चापि ते सर्वे किं वक्ष्यन्ति नराधिप ।
ऽथं दुर्योधनोऽस्माभिर्हत इत्यनपत्रपाः ॥ ३२
ान्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः ।
यातोऽभिमुखः शत्रून्धर्मेण पुरुषर्षभ ॥ ३३
तपुत्रा हि गान्धारी निहतज्ञातिबान्धवा ।
ज्ञाचक्षुश्च दुर्धर्षः कां दशां प्रतिपत्स्यते ॥ ३४
ग्गस्तु कृतवर्माणं मां कृपं च महारथम् ।
वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवम् ॥ ३५
ातारं सर्वकामानां रक्षितारं प्रजाहितम् ।
द्वयं नानुगच्छाम त्वां धिगस्मान्नराधमान् ॥ ३६
पस्य तव वीर्येण मम चैव पितुश्च मे ।
भृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च ॥ ३७
त्र प्रसादादस्माभिः समित्रैः सह बान्धवैः ।
वाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः ॥ ३८
कुतश्चापीदृशं पापाः प्रवर्तिष्यामहे वयम् ।
यादृशेन पुरस्कृत्य त्वं गतः सर्वपार्थिवान् ॥ ३९
वयमेव त्रयो राजन्गच्छन्तं परमां गतिम् ।
यद्वै त्वां नानुगच्छामस्तेन तप्स्यामहे वयम्॥४०
तत्स्वर्गहीना हीनार्थाः स्मरन्तः सुकृतस्य ते ।
किं नाम तद्भवेत्कर्म येन त्वां न व्रजाम वै ॥४१
दुःखं नूनं कुरुश्रेष्ठ चरिष्याम महीमिमाम् ।
हीनानां नस्त्वया राजन्कुतः शान्तिः कुतः सुखं ४२
गत्वैव तु महाराज समेत्य च महारथान् ।
यथाज्येष्ठं यथाश्रेष्ठं पूजयेर्वचनान्मम ॥ ४३
आचार्यं पूजयित्वा च केतुं सर्वधनुष्मताम् ।
हतं मयाऽद्य शंसेथा धृष्टद्युम्नं नराधिप ॥ ४४
परिष्वजेथा राजानं बाह्लिकं सुमहारथम् ।
सैन्धवं सोमदत्तं च भूरिश्रवसमेव च ॥ ४५
तथा पूर्वगतानन्यान्स्वर्गे पार्थिवसत्तमान् ।
अस्मद्वाक्यात्परिष्वज्य संपृच्छेस्त्वमनामयम् ॥४६
सञ्जय उवाच ।
इत्येवमुक्त्वा राजानं भग्नसक्थमचेतसम् ।
अश्वत्थामा लघुप्राणं पुनर्वचनमब्रवीत् ॥ ४७
दुर्योधन जीवसि चेद्वाक्यं श्रोत्रसुखं शृणु ।
सप्त पाण्डवतः शिष्टा धार्तराष्ट्रास्त्रयो वयम् ॥ ४८
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
अहं च कृतवर्मा च कृपः शारद्वतस्तथा ॥ ४९
द्रौपदेया हताः सर्वे धृष्टद्युम्नस्य चात्मजाः ।
पञ्चाला निहताः सर्वे मत्स्यशेषं च भारत ॥ ५०
कृते प्रतिकृतं पश्य हतपुत्रा हि पाण्डवाः ।
सौप्तिके शिबिरं तेषां हतं सनरवाहनम् ॥ ५१
मया च पापकर्माऽसौ धृष्टद्युम्नो महीपते ।
प्रविश्य शिबिरं रात्रौ पशुमारेण मारितः ॥ ५२
दुर्योधनस्तु तां वाचं निशम्य मनसः प्रियाम् ।
प्रतिलभ्य पुनश्चेत इदं वचनमब्रवीत् ॥ ५३
न मेऽकरोत्तद्गाङ्गेयो न कर्णो न च ते पिता ।
यत्त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतम् ॥५४

धर्मयुद्धे ह्यधर्मेणेति झ॰ पाठः ॥ २३ ॥

नवमोऽध्यायः ॥ ९ ॥

स च सेनापतिः क्षुद्रो हतः सार्धं शिखण्डिना ।
तेन मन्ये मघवता ममात्मानमद्य वै ॥ ५५
स्वस्ति प्राप्नुत भद्रं वः स्वर्गे नः संगमः पुनः ।
इत्येवमुक्त्वा पुत्रस्ते कुरुराजो महामनाः ॥ ५६
प्राणानुपासृजद्वीरः सुहृदां दुःखमादधत् ।
अपाक्रामद्दिवं पुण्यां शरीरं क्षितिमाविशत् ॥ ५७
एवं ते निधनं यातः पुत्रो दुर्योधनो नृप ।
अग्रे यात्वा रणे शूरः पश्चाद्विनिहतः परैः ॥ ५८
तथैव ते परिष्वक्ताः परिष्वज्य च ते नृपम् ।
पुनः पुनः प्रेक्षमाणाः स्वकानारुरुहू रथान् ॥ ५९
इत्येवं द्रोणपुत्रस्य निशम्य करुणां गिरम् ।
प्रत्यूषकाले शोकार्ताः प्राद्रवन्नगरं प्रति ॥ ६
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
घोरो विशसनो रौद्रो राजन्दुर्मन्त्रिते तव ॥ ६
तव पुत्रे गते स्वर्गं शोकार्तस्य ममानघ ।
ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ॥ ६
वैशंपायन उवाच ।
इति श्रुत्वा स नृपतिर्ज्ञातिपुत्रवधं तदा ।
निःश्वस्य दीर्घमुष्णं च ततश्चिन्तापरोऽभवत् ॥ ६

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि नवमोऽध्यायः ॥ ९ ॥

समाप्तं सौप्तिकपर्व १ ।

## ( अथैषीकपर्व ॥ २ ॥ )

### दशमोऽध्यायः ॥ १० ॥

दैवादुर्वरितेन धृष्टद्युम्नसारथिना युधिष्ठिराय रात्रौ वृत्तशिबिरवृत्तान्तविनेदनम् ॥ १ ॥ तच्छ्रवणेन द्रौपद्यानयनाय नकुलमादिश्य शिबिरभुवमुपागतवता युधिष्ठिरेण मृतनिजजनावलोकनेन परिदेवनम् ॥ २ ॥

वैशंपायन उवाच ।
तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः ।
गत्वा शशंस पाण्डुभ्यः सौप्तिके कदनं कृतम् ॥१
सूत उवाच ।
द्रौपदेया हता राजन्द्रुपदस्यात्मजैः सह ।
प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिबिरे स्वके ॥२
गौतमेन नृशंसेन भोजेन कृतवर्मणा ।
अश्वत्थाम्ना च पापेन हतं वः शिबिरं निशि ॥ ३
एतैर्नरगजाश्वानां प्रासशक्तिपरश्वधैः ।
सहस्राणि निकृन्तद्भिर्निःशेषं शिबिरं कृतम् ॥ ४
'विकुष्टनानाविहगफलभारनतस्य ह ।'
छिद्यमानस्य महतो वनस्येव परश्वधैः ।
शुश्रुवे सुमहाञ्शब्दो बलस्य तव भारत ॥ ५
अहमेकोऽवशिष्टस्तु तस्मात्सैन्यान्महीपते ।
मुक्तः कथंचिद्धर्मात्मन्व्यग्राच्च कृतवर्मणः ॥ ६
तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः ।
पपात मह्यां धर्मात्मा पुत्रशोकसमन्वितः ॥ ७
पतन्तं तमतिक्रम्य परिजग्राह सात्यकिः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ८
लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा ।
जित्वा शत्रूञ्जितः पश्चात्पर्यदेवयदार्तवत् ॥ ९
'अगम्या गतिरर्थानां कर्मणामीश्वरस्य च ।'
दुर्विदा गतिरर्थानामपि ये दिव्यचक्षुषः ।
जीयमाना जयन्त्यन्ये जयमाना वयं जिताः ॥ १०
हत्वा भ्रातॄन्वयस्यांश्च पितॄन्पुत्रान्सुहृद्गणान् ।
बन्धूनमात्यान्पौत्रांश्च जित्वा सर्वाञ्जिता वयम् ११
अनर्थो ह्यर्थसंकाशस्तथाऽनर्थोऽर्थदर्शनः ।
जयोऽयमजयाकारो जयस्तस्मात्पराजयः ॥ १२

अतिक्रम्य धैर्यमर्यादां त्यक्त्वा पतन्तम् ॥ ८ ॥ अन्ये शत्रवः । जयमानाः जयन्तः । जितानां जयो जयतां पराजय

यज्जित्वा तप्यते पश्चादापन्न इव दुर्मतिः ।
कथं मन्येत विजयं ततो जिततरः परैः ॥ १३
येषामर्थाय पापं स्याद्विजयस्य सुहृद्वधैः ।
निर्जितैरप्रमत्तैर्हि विजिता जितकाशिनः ॥ १४
कर्णिनालीकदंष्ट्रस्य खड्गजिह्वस्य संयुगे ।
चापव्यात्तास्यरौद्रस्य ज्यातलस्वननादिनः ॥ १५
क्रुद्धस्य नरसिंहस्य संग्रामेष्वपलायिनः ।
ये व्यमुञ्चन्त कर्णस्य प्रमादात्त इमे हताः ॥ १६
रथह्रदं शरवर्षोर्मिमन्तं
रत्नाचितं वाहनयोधवृन्दम् ।
शक्त्यृष्टिमीनध्वजनागनक्रं
शरासनावर्तमहेषुफेनम् ॥ १७
संग्रामचन्द्रोदयवेगवेलं
द्रोणार्णवं ज्यातलनेमिघोषम् ।
ये तेरुरुच्चावचशस्त्रनौभि-
स्ते राजपुत्रा निहताः प्रमादात् ॥ १८
न हि प्रमादात्परमस्ति कश्चि-
द्वधो नराणामिह जीवलोके ।
प्रमत्तमर्था हि नरं समन्ता-
त्त्यजन्त्यनर्थाश्च समाविशन्ति ॥ १९
ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं
शरार्चिषं दीप्तमहापताकम् ।
महाधनुर्ज्यातलनेमिघोषं
तनुत्रनानाविधशस्त्रहोमम् ॥ २०
महाचमूकक्षदवाभिपन्नं
महाहवे भीष्ममहादवाग्निम् ।
ये तेरुरुच्चावचशस्त्रवेगै-
स्ते राजपुत्रा निहताः प्रमादात् ॥ २१
न हि प्रमत्तेन नरेण शक्य-
माप्तुं वसु श्रीर्विपुलं यशो वा ।
पश्याप्रमादेन निहत्य शत्रू-
न्सर्वान्महेन्द्रं सुखमेधमानम् ॥ २२
इन्द्रोपमान्पार्थिवपुत्रपौत्रा-
न्पश्याविशेषेण हतान्प्रमादात् ।
तीर्त्वा समुद्रं वणिजः समृद्धा
मग्नाः कुनद्यामिव सीदमानाः ॥ २३
अमर्षितैर्ये निहता नरेन्द्रा
निःसंशयं ते त्रिदिवं प्रपन्नाः ।
कृष्णां तु शोचामि कथं नु साध्वी
शोकार्णवं सा विषहिष्यतीति ॥ २४
भ्रातॄंश्च पुत्रांश्च हतान्निशम्य
पाञ्चालराजं पितरं च वृद्धम् ।
ध्रुवं विसंज्ञा पतिता पृथिव्यां
सा शोष्यते शोककृशाङ्गयष्टिः ॥ २५
तच्छोकजं दुःखमपारयन्ती
कथं भविष्यत्युचिता सुखानाम् ।
रोरूयते ज्ञातिवधाभितप्ता
प्रदह्यमानेव हुताशनेन ॥ २६
इत्येवमार्तः परिदेवयन्स
राजा कुरूणां नकुलं बभाषे ।
गच्छानयैनामिह मन्दभाग्यां
समातृपक्षामिति राजपुत्रीम् ॥ २७
माद्रीसुतस्तत्परिगृह्य वाक्यं
धर्मेण धर्मप्रथमस्य राज्ञः ।
ययौ रथेनालयमाशु देव्याः
पाञ्चालराजस्य च यत्र दाराः ॥ २८
प्रस्थाप्य माद्रीसुतमाजमीढः
शोकार्दितस्तैः सहितः सुहृद्भिः ।
रोरूयमाणः प्रययौ सुताना-
मायोधनं भूतगणानुकीर्णम् ॥ २९
स तत्प्रविश्याशिवमुग्ररूपं
ददर्श पुत्रान्सुहृदः सखींश्च ।
भूमौ शयानान्रुधिरार्द्रगात्रा-
न्विभिन्नदेहान्प्रहृतोत्तमाङ्गान् ॥ ३०

फलतोऽभूदिति महदाश्चर्यमित्यर्थः ॥ १० ॥ पश्चात्स पाप इव दुर्मतिरिति क. पाठः ॥ १३ ॥ व्यमुञ्चन्त मुक्ताः । कर्णस्य कर्णात् । प्रमादादसत्कृतादसान्निध्यात् ॥ १६ ॥ वाहनवाजियुक्तमिति झ. पाठः ॥ १७ ॥ तनुत्राणि नानाविधानि शस्त्राणि च तेषां होमः प्रक्षेपो यत्र तं तनुत्रनानाविधशस्त्रहोमम् ॥ २० ॥ भीष्ममयं भीष्मप्रधानं अग्निदाहम् । भीष्मरूपेण अग्निना दाहमित्यर्थः ॥ २१ ॥ निहताः शयाना इति झ. पाठः ॥ २४ ॥ दशमोऽध्यायः ॥ १० ॥

स तांस्तु दृष्ट्वा भृशमार्तरूपो
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
उच्चैः प्रचुक्रोश च कौरवाग्र्यः
पपात चोर्व्यां सगणो विसंज्ञः ॥ ३१

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

नकुलेन युधिष्ठिरसमीपं प्रति द्रौपद्यानयनम् ॥ १ ॥ द्रौपद्या द्रौणिमस्तकमणिहरणचोदितेन भीमेन नकुलसारथिना रथेन द्रौणिवधाय प्रस्थानम् ॥ २ ॥

वैशंपायन उवाच ।
स दृष्ट्वा निहतान्सङ्ख्ये पुत्रान्पौत्रान्सखींस्तथा ।
महादुःखपरीतात्मा बभूव जनमेजय ॥ १
ततस्तस्य महाञ्शोकः प्रादुरासीन्महात्मनः ।
स्मरतः पुत्रपौत्रांस्तान्भ्रातॄन्सुहृद एव च ॥ २
तमश्रुपरिपूर्णाक्षं वेपमानमचेतसम् ।
सुहृदो भृशसंविग्नाः सांत्वयांचक्रिरे तदा ॥ ३
'कृत्वा तु विधिवत्तेषां पुत्राणाममितौजसाम् ।
प्रेतकार्याणि सर्वेषां बभूव भृशदुःखितः ॥' ४
तस्मिन्मुहूर्ते जवनैर्वाजिभिर्हेममालिभिः ।
नकुलः कृष्णया सार्धमुपायात्परमार्तया ॥ ५
उपप्लाव्यं गता सा तु श्रुत्वा सुमहदप्रियम् ।
तदा विनाशं सर्वेषां पुत्राणां व्यथितेन्द्रिया ॥ ६
कम्पमानेव कदली वातेनाभिसमीरिता ।
कृष्णा राजानमासाद्य शोकार्ता न्यपतद्भुवि ॥ ७
न बभौ वदनं तस्या रुदन्त्याः शोककर्शितम् ।
फुल्लपद्मपलाशाक्ष्या मेघावृत इवोडुराट् ॥ ८
ततस्तां पतितां दृष्ट्वा संरम्भी सत्यविक्रमः ।
बाहुभ्यां परिजग्राह समुत्पत्य वृकोदरः ॥ ९
सा समाश्वासिता तेन भीमसेनेन भामिनी ।
रुदती पाण्डवज्येष्ठमिदं वचनमब्रवीत् ॥ १०
दिष्ट्या राजन्नवाप्येमामखिलां भोक्ष्यसे महीम् ।
आत्मजान्क्षत्रधर्मेण संप्रदाय यमाय वै ॥ ११
दिष्ट्या सर्वास्त्रकुशलं मत्तमातङ्गगामिनम् ।
अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ॥ १२
आत्मजान्क्षत्रधर्मेण श्रुत्वा शूरान्निपातितान् ।
स्थितो राज्ये मया सार्धं विहरन्न स्मरिष्यसि ॥ १३
प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा ।
शोको मां दहते गाढो हुताशन इवाश्रयम् ॥ १४
तस्य पापकृतो द्रौणेर्न चेदद्य दुरात्मनः ।
ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम् ॥ १५
इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः ।
न चेत्फलमवाप्नोति द्रौणिः पापस्य कर्मणः ॥ १६
एवमुक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत् ।
युधिष्ठिरं याज्ञसेनी धर्मराजं यशस्विनी ॥ १७
दृष्ट्वोपविष्टां राजा तु पाण्डवो महिषीं प्रियाम् ।
प्रत्युवाच स धर्मात्मा द्रौपदीं चारुदर्शनाम् ॥ १८
क्षत्रधर्मेण धर्मज्ञे प्राप्तास्ते निधनं शुभे ।
पुत्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि ॥ १९
स कल्याणि वनं दुर्गं दूरं द्रौणिरितो गतः ।
तस्य त्वं पातनं सङ्ख्ये कथं ज्ञास्यसि शोभने ॥ २०
द्रौपद्युवाच ।
द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः ।
निहत्य सङ्ख्ये तं पापं पश्येयं मणिमाहृतम् ।
द्रौणेः शिरस उत्कृत्य जीवेयमिति मे मतिः ॥ २१
इत्युक्त्वा पाण्डवं कृष्णा राजानं चारुदर्शना ।
भीमसेनकरे स्पृष्ट्वा कुपिता वाक्यमब्रवीत् ॥ २२
त्रातुमर्हसि मां भीम क्षत्रधर्ममनुस्मरन् ।
जहि तं पापकर्माणं शम्बरं मघवानिव ॥ २३
न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन ।
श्रुतं तत्सर्वलोकेषु परमव्यसने तथा ॥ २४
द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते ।

दिष्ट्येति । पुत्रनाशापेक्षया राज्यप्राप्तिसुखं तव महदित्यधिक्षेपः ॥ ११ ॥

हिडिम्बदर्शने चैव तथा त्वमभवो गतिः ॥ २५
तथा विराटनगरे कीचकेन भृशार्दिताम् ।
मामप्युद्धृतवान्कृच्छ्रात्पौलोमीं मघवानिव ॥ २६
यथैतान्यकृथाः पार्थ महाकर्माणि वै पुरा ।
तथा द्रौणिममित्रघ्न विनिहत्य सुखी भव ॥ २७
वैशंपायन उवाच ।
तस्या बहुविधं दुःखं निशम्य परिदेवितम् ।
न चामर्षत कौन्तेयो भीमसेनो महाबलः ॥ २८
स काञ्चनविचित्राङ्गमारुरोह महारथम् ।
आदाय रुचिरं चित्रं समार्गणगुणं धनुः ॥ २९
नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः ।
विस्फार्य सशरं चापं तूर्णमश्वानचोदयत् ॥ ३०
ते हयाः पुरुषव्याघ्र दीप्यमानाः स्वतेजसा ।
वहन्तः सहसा जग्मुर्हरयः शीघ्रगामिनः ॥ ३१
शिबिरात्स्वाद्गृहीत्वा स रथस्य पदमच्युतः ।
'द्रोणपुत्रगतेनाशु ययौ मार्गेण भारत ॥' ३२

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ॥ १२ ॥

द्रौणिजिघांसया भीमे प्रतिगते कृष्णेन युधिष्ठिरंप्रति द्रौणिदौःशील्यादिकथनपूर्वकं भीमस्य ततो रक्षणीयत्वकथनम् ॥ १ ॥

वैशंपायन उवाच ।
तस्मिन्प्रयाते दुर्धर्षे यदूनामृषभस्ततः ।
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ १
एष पाण्डव ते भ्राता पुत्रशोकपरायणः ।
जिघांसुर्द्रौणिमाक्रन्दे एक एवाभिधावति ॥ २
भीमः प्रियस्ते सर्वेभ्यो भ्रातृभ्यो भरतर्षभ ।
तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्युपपद्यसे ॥ ३
यत्तदाचष्ट पुत्राय द्रोणः परपुरंजयः ।
अस्त्रं ब्रह्मशिरो नाम दहेत पृथिवीमपि ॥ ४
तन्महात्मा महाभागः केतुः सर्वधनुष्मताम् ।
प्रत्यपादयदाचार्यः प्रीयमाणो धनञ्जयम् ॥ ५
तं पुत्रोऽप्येक एवैनमन्वयाचदमर्षणः ।
ततः प्रोवाच पुत्राय नातिहृष्टमना इव ॥ ६
विदितं चापलं ह्यासीदात्मजस्य दुरात्मनः ।
सर्वधर्मविदाचार्यः सोऽन्वशासत्सुतं ततः ॥ ७
परमापद्गतेनापि न स्म तात त्वया रणे ।
इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः ॥ ८
इत्युक्तवान्गुरुः पुत्रं द्रोणः पश्चादथोक्तवान् ।
न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ॥ ९
स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम् ।
निराशः सर्वकल्याणैः शोकात्पर्यचरन्महीम् ॥ १०
ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत ।
अवसद्द्वारकामेत्य वृष्णिभिः परमार्चितः ॥ ११
स कदाचित्समुद्रान्ते वसन्द्वारवतीमनु ।
एक एकं समागम्य मामुवाच हसन्निव ॥ १२
यत्तदुग्रं तपः कृष्ण चरन्नमितविक्रमः ।
अगस्त्याद्भारताचार्यः प्रत्यपद्यत मे पिता ॥ १३
अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् ।
तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ १४
अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदूत्तम ।
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहणं रणे ॥ १५
स राजन्प्रीयमाणेन मयाप्युक्तः कृताञ्जलिः ।
याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ॥ १६
देवदानवगन्धर्वमनुष्यपतगोरगाः ।
न समा मम वीर्यस्य शतांशेनापि पिण्डिताः ॥ १७
इदं धनुरियं शक्तिरिदं चक्रमियं गदा ।
यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददामि ते ॥ १८
यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वा रणे ।

---

चोदिता वातरंहस इति झ. पाठः ॥ ३१ ॥ पदं गमनमार्गचिह्नं गृहीत्वालक्ष्य ॥ ३२ ॥ एकादशोऽध्यायः ॥ ११ ॥

आक्रन्दे संग्रामे ॥ २ ॥ स्थाता स्थास्यसि ॥ ९ ॥

तद्गृहाण विनाऽस्त्रेण यन्मे दातुमभीप्ससि ॥ १९
स सुनाभं सहस्रारं वज्रनाभमयस्मयम् ।
वव्रे चक्रं महाभागो मत्तः स्पर्धन्मया सह ॥ २०
गृहाण चक्रमित्युक्तो मया तु तदनन्तरम् ।
जग्राहोत्पत्य सहसा चक्रं सव्येन पाणिना ॥ २१
न चैनमशकत्स्थानात्संचालयितुमच्युत ।
अथैनं दक्षिणेनापि ग्रहीतुमुपचक्रमे ॥ २२
सर्वयत्नेन तेनापि गृह्य नैनमकम्पयत् ॥ २३
ततः सर्वबलेनापि यदैनं न शशाक ह ।
उद्यन्तुं वा चालयितुं द्रौणिः परमदुर्मनाः ।
कृत्वा यत्नं परिश्रान्तः स न्यवर्तत भारत ॥ २४
निवृत्तमनसं तस्मादभिप्रायाद्विचेतसम् ।
अहमामन्त्र्य संविग्नमश्वत्थामानमब्रुवम् ॥ २५
यः स देवमनुष्येषु प्रमाणं परमं गतः ।
गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ॥ २६
यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम् ।
द्वन्द्वयुद्धे पुरा जिष्णुस्तोषयामास शंकरम् ॥ २७
यस्मात्प्रियतरो नास्ति ममान्यः पुरुषो भुवि ।
नादेयं यस्य मे किंचिदपि प्राणान्महात्मनः ॥ २८
तेनापि सुहृदा ब्रह्मन्पार्थेनाक्लिष्टकर्मणा ।
नोक्तपूर्वमिदं वाक्यं यस्त्वं मामभिभाषसे ॥ २९
ब्रह्मचर्यं महद्घोरं तीर्त्वा द्वादशवार्षिकम् ।
हिमवत्पार्श्वमास्थाय यो मया तपसाऽऽर्जितः ॥ ३०
समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत ।
सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ॥ ३१
तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं रणे ।
न प्रार्थितमभून्मूढ तदिदं प्रार्थितं त्वया ॥ ३२
रामेणातिबलेनैतन्नोक्तपूर्वं कदाचन ।
न गदेन न साम्बेन यदिदं प्रार्थितं त्वया ॥ ३३
द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः ।
नोक्तपूर्वमिदं क्षुद्रं तदिदं प्रार्थितं त्वया ॥ ३४
भारताचार्यपुत्रस्त्वं मानितः सर्वयादवैः ।
चक्रेण रथिनां श्रेष्ठ कं नु तात युयुत्ससे ॥ ३५
एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह ।
प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह ॥ ३६
प्रार्थितं ते मया चक्रं देवदानवपूजितम् ।
अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते ॥ ३७
सोऽहं तद्दुर्लभं चक्रमनवाप्यैव केशव ।
प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ॥ ३८
एतत्सुनाभं भोजानामृषभेण त्वया धृतम् ।
चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते ॥ ३९
एतावदुक्त्वा द्रौणिर्मां युग्यानश्वान्धनानि च ।
आदायोपययौ काले रत्नानि विविधानि च ॥ ४०
स संरम्भी दुरात्मा च चपलः क्रूर एव च ।
वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः ॥ ४१

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

कृष्णादिभिर्भागीरथीतीरे व्याससमीपसमासीनद्रौणिदर्शनम् ॥ १ ॥ तद्दर्शिना द्रौणिना अपाण्डवहेतोर्ब्रह्मशिरोस्त्रप्रयोगः ॥ २ ॥

वैशंपायन उवाच ।
एवमुक्त्वा कुरुश्रेष्ठं सर्वयादवनन्दनः ।
सर्वायुधवरोपेतमारुरोह रथोत्तमम् ॥ १
युक्तं परमकाम्भोजैस्तुरगैर्हेममालिभिः ।
उदितादित्यसंकाशं सर्वरत्नविभूषितम् ॥ २
दक्षिणं ह्यवहच्छैब्यः सुग्रीवः सव्यतो धुरम् ।
पार्ष्णिवाहौ तु तस्यास्तां मेघपुष्पबलाहकौ ॥ ३
विश्वकर्मकृता दिव्या रत्नधातुविभूषिता ।
उच्छ्रिता च रथे तस्मिन्ध्वजयष्टिरदृश्यत ॥ ४
वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान् ।

मे मह्यं दातुमिच्छसि तेन विनापि गृहाण । त्वदीयेऽस्त्रे ममेच्छा नास्तीति भावः ॥ १९ ॥ द्वादशोऽध्यायः ॥ १२ ॥

तस्य सत्यवतः केतुर्भुजगारिरदृश्यत ॥ ५
अथारोहद्धृषीकेशः केतुः सर्वधनुष्मताम् ।
अर्जुनः स च धर्मात्मा कुरुराजो युधिष्ठिरः ॥ ६
अशोभेतां महात्मानौ दाशार्हमभितः स्थितौ ।
रथस्थं शार्ङ्गधन्वानमश्विनाविव वासवम् ॥ ७
उभावारोप्य दाशार्हः स्यन्दनं लोकपूजितम् ।
प्रतोदेन जवोपेतान्परमाश्वानचोदयत् ॥ ८
ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमम् ।
आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च ॥ ९
वहतां शार्ङ्गधन्वानमश्वानां शीघ्रगामिनाम् ।
प्रादुरासीन्महाञ्शब्दः पक्षिणां पततामिव ॥ १०
ते समर्था महाबाहुं क्षणेन भरतर्षभ ।
भीमसेनं महेष्वासमनुसस्रुः सुवेगिताः ॥ ११
क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम् ।
नाशक्नुवन्वारयितुं समेत्यापि महारथाः ॥ १२
स तेषामग्रतः शूरः श्रीमतां दृढधन्विनाम् ।
ययौ भागीरथीतीरं हरिभिर्भृशवेगितैः ।
यत्र स श्रूयते द्रौणिः पुत्रहन्ता दुरात्मवान् ॥ १३
स ददर्श महात्मानमुदकान्ते यशस्विनम् ।
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह ॥ १४
तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् ।
रजसा ध्वस्तमासीनं ददर्श द्रौणिमन्तिके ॥ १५
तमभ्यधावत्कौन्तेयः प्रगृह्य सशरं धनुः ।
भीमसेनो महाबाहुस्तिष्ठतिष्ठेति चाब्रवीत् ॥ १६
तं दृष्ट्वा भीमकर्माणं प्रगृहीतशरासनम् ।
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ ।
व्यथितात्माऽभवद्द्रौणिः प्राप्तं चेदममन्यत ॥ १७
स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत् ।
जग्राह च स शरैषीकां द्रौणिः सव्येन पाणिना ॥ १८
स तामापदमासाद्य दिव्यमस्त्रमुदीरयत् ।
अमृष्यमाणस्ताञ्छूरान्दिव्यायुधधरान्स्थितान् ।
अपाण्डवायेति रुषा वाचमुत्सृज्य दारुणम् ॥ १९
इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान् ।
सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ॥ २०
ततस्तस्यामिषीकायां पावकः समजायत ।
प्रधक्ष्यन्निव लोकांस्त्रीन्कालान्तकयमोपमः ॥ २१

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ॥ १४ ॥

अर्जुनेन कृष्णाज्ञया द्रौण्यस्त्रप्रत्यस्त्रप्रयोगः ॥ १ ॥

वैशंपायन उवाच ।
इङ्गितेनैव दाशार्हस्तस्याभिप्रायमादितः ।
द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ १
अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्तते ।
द्रोणोपदिष्टं तस्यायं कालः संप्रति पाण्डव ॥ २
भ्रातॄणामात्मनश्चैव परित्राणाय भारत ।
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ ३
केशवेनैवमुक्तोऽथ पाण्डवः परवीरहा ।
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ ४
पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने ।
भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परंतपः ॥ ५
देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः ।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ ६
ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना ।
प्रजज्वाल महार्चिष्मद्युगान्तानलसन्निभम् ॥ ७
तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः ।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ ८
निर्घाता बहवश्चासन्पेतुरुल्काः सहस्रशः ।

---

अपाण्डवाय पाण्डवानामभावाय ॥ १९ ॥

त्रयोदशोऽध्यायः ॥ १३ ॥

महद्भयं च भूतानां सर्वेषां समजायत ॥ ९
सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम् ।
चचाल च मही कृत्स्ना सपर्वतवनद्रुमा ॥ १०
तावस्त्रतेजसा लोकांस्त्रासयन्तौ ततः स्थितौ ।
महर्षी महितौ तत्र दर्शयामासतुस्तदा ॥ ११
नारदः सर्वधर्मात्मा भरतानां पितामहः ।
उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ ॥ १२
तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैषिणौ ।
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ १३
तदन्तरमनाधृष्यावुपगम्य यशस्विनौ ।
आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ १४
प्राणभृद्भिरनाधृष्यौ देवदानवसंमतौ ।
अस्त्रतेजः शमयितुं लोकानां हितकाम्यया ॥ १५
ऋषी ऊचतुः ।
महास्त्रविदुषः पूर्वे येऽप्यतीता महारथाः ।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथंचन ।
किमिदं साहसं वीरौ कृतवन्तौ महात्ययम् ॥ १६

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ॥ १५ ॥

अर्जुनेन व्यासनारदभावानुरोधेन स्वप्रयुक्तब्रह्मशिरोस्त्रप्रतिसंहारः ॥ १ ॥ कृष्णेनाश्वत्थामानं प्रति उत्तरागर्भे ऐषीकास्त्रपातेऽपि मृतशिशोः स्वेन समुज्जीवनप्रतिज्ञा ॥ २ ॥ ब्रह्मचर्याभावादस्त्रप्रतिसंहारासमर्थेन द्रौणिना व्यासकृष्णावनादृत्य पाण्डवगर्भेष्वैषीकास्त्रोत्सर्जनम् ॥ ३ ॥

---

वैशंपायन उवाच ।
दृष्ट्वैव मुनिशार्दूलौ तावग्निसमतेजसौ ।
'गाण्डीवधन्वा संचिन्त्य प्राप्तकालं महारथः ।'
संजहार शरं दिव्यं त्वरमाणो धनञ्जयः ॥ १
उवाच वचनं श्रेष्ठस्तावृषी प्राञ्जलिस्तदा ।
प्रमुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ २
संहृते परमास्त्रेऽस्मिन्सर्वानस्मानशेषतः ।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ ३
यदत्र हितमस्माकं लोकानां चैव सर्वथा ।
भवन्तौ देवसंकाशौ तथा संमन्तुमर्हतः ॥ ४
इत्युक्त्वा संजहारास्त्रं पुनरेव धनञ्जयः ।
संहारो दुष्करस्तस्य देवैरपि हि संयुगे ॥ ५
विसृष्टस्य रणे तस्य परमास्त्रस्य संग्रहे ।
अशक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ॥ ६
ब्रह्मतेजोद्भवं तद्धि विसृष्टमकृतात्मना ।
न शक्यमावर्तयितुं ब्रह्मचर्यव्रतादृते ॥ ७
अचीर्णब्रह्मचर्यो यः सृष्ट्वाऽऽवर्तयते पुनः ।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ ८
ब्रह्मचारी व्रती चापि दुरवापमवाप्य तत् ।
परमव्यसनार्तोऽपि नार्जुनोऽस्त्रं व्यमुञ्चत ॥ ९
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः ।
गुरुवर्ती च तेनास्त्रं संजहारार्जुनः पुनः ॥ १०
द्रौणिरप्यथ संप्रेक्ष्य सोऽन्तरा तावृषी स्थितौ ।
न शशाक पुनर्घोरमस्त्रं संहर्तुमोजसा ॥ ११
अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे ।
द्रौणिर्दीनमना राजन्द्वैपायनमभाषत ॥ १२
उत्तमव्यसनार्तेन प्राणत्राणमभीप्सुना ।
मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने ॥ १३
अधर्मश्च कृतोऽनेन धार्तराष्ट्रं जिघांसता ।
मिथ्याचारेण भगवन्भीमसेनेन संयुगे ॥ १४
अतः सृष्टमिदं ब्रह्मन्मयाऽस्त्रमकृतात्मना ।
तस्य भूयोऽपि संहारं कर्तुं नाहमिहोत्सहे ॥ १५
निसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदम् ।
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै ॥ १६
तदिदं पाण्डवेयानामन्तायैवाभिसंहितम् ।

---

आवर्तयते उपसंहरति ॥ ८ ॥

इस्तुतान्सर्वाञ्जीविताद्भ्रंशयिष्यति ॥ १७
मिदं ब्रह्मन्रोषाविष्टेन चेतसा ।
स्य पार्थानां मयास्त्रं सृजता रणे ॥ १८
ाच ।
शिरस्तात विद्वान्पार्थो धनञ्जयः ।
नहिंसार्थं न रोषेण तवाहवे ॥ १९
तु रणे तव संशमयिष्यता ।
न्नेनेदं पुनश्च प्रतिसंहृतम् ॥ २०
न्यवाप्यैतदुपदेशात्पितुस्तव ।
महाबाहुर्नाकम्पत धनञ्जयः ॥ २१
मतः साधोः सर्वास्त्रविदुषः सतः ।
ध्वोः कस्मात्त्वं वधमस्य चिकीर्षसि ॥ २२
शिरो यत्र परमास्त्रेण वध्यते ।
श पर्जन्यस्तद्राष्ट्रं नाभिवर्षति ॥ २३
हाबाहुः शक्तिमानपि पाण्डवः ।
ात्तदस्त्रं तु प्रजाहितचिकीर्षया ॥ २४
त्वं च राष्ट्रं च सदा संरक्ष्यमेव नः ।
र दिव्यं त्वमस्त्रमेतन्महाभुज ॥ २५
च्चैवास्तु पार्थाः सन्तु निरामयाः ।
ग राजर्षिः पाण्डवो जेतुमिच्छति ॥ २६
प्रयच्छाद्य यस्ते शिरसि तिष्ठति ।
ग्र ते प्राणान्प्रतिदास्यन्ति पाण्डवाः॥ २७
ाच ।
नि रत्नानि यच्चान्यत्कौरवैर्धनम् ।
ड तेभ्योऽयं मणिर्मम विशिष्यते ॥ २८
भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् ।
ानवेभ्यो वा नागेभ्यो वा कथंचन ॥ २९
ोगणभयं न तस्करभयं तथा ।
मणिरयं न मे त्याज्यः कथंचन ॥ ३०

यत्तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहमिषीका तु पतिष्यति ।
गर्भेषु पाण्डुपुत्राणामुत्तरायास्तथोदरे ॥ ३१
वैशंपायन उवाच ।
प्राह द्रोणसुतं तत्र व्यासः परमदुर्मनाः ॥ ३२
एवं कुरु न चान्यत्र बुद्धिः कार्या कथंचन ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ ३३
'तमुवाच हृषीकेशः पाण्डवानां हिते मतः ।
भविष्यमेकमुत्सृज्य गर्भेष्वस्त्रं निपात्यताम् ॥ ३४
अहमेनं ददाम्येषां पिण्डदं कीर्तिवर्धनम् ।
राजर्षिं पुण्यकर्माणमनेकक्रतुयाजिनम् ॥ ३५
एवं कुरु न चान्या ते बुद्धिः कार्या कथंचन ।
आगर्भात्पाण्डवेयानां कृत्वा पातं विनङ्क्ष्यति' ३६
एवं ब्रुवाणं गोविन्दं वृषभं सर्वसात्वताम् ।
द्रौणिः परमसंक्रुद्धः प्रत्युवाचेदमुत्तरम् ॥ ३७
नैतदेवं यदात्थ त्वं पक्षपातेन केशव ।
वचनात्पुण्डरीकाक्ष तव मद्वाक्यमन्यथा ॥ ३८
पतिष्यत्येतदस्त्रं वै गर्भे तस्या मयोद्यतम् ।
विराटदुहितुः कृष्ण यं त्वं रक्षितुमर्हसि ॥ ३९
वासुदेव उवाच ।
अमोघः परमास्त्रस्य पातस्त्वद्य भविष्यति ।
'अभिमन्योः सृजेषीकां गर्भस्थः शाम्यतां शिशुः ॥
अहमेनं मृतं जातं जीवयिष्यामि बालकम् ।'
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ ४१
'इत्युक्तः प्रत्युवाचैनं द्रोणपुत्रः स्मयन्निव ।
यद्यस्त्रदग्धं गोविन्द जीवयस्येवमस्त्विति ॥' ४२
ततः परममस्त्रं तु द्रौणिरुद्यतमाहवे ।
द्वैपायनमनादृत्य गर्भेषु प्रमुमोच ह ॥ ४३

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

---

मादाय तव यास्यन्ति पाण्डवाः । इति क. पाठः
म वध्यभयं नास्तीति क. पाठः ॥ २९ ॥

पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

कृष्णेन स्ववचनोल्लङ्घनेनास्त्रप्रयोक्तुरश्वत्थाम्नः शापदानं व्यासेन तदनुमोदनं च ॥ १ ॥ भीमेन द्रौणिमस्तकमणिदानेन द्रौपदीसमाश्वासनम् ॥ २ ॥ युधिष्ठिरेण द्रौपदीवचनात्स्वमस्तके तन्मणिधारणम् ॥ ३ ॥

[वै]शंपायन उवाच ।
[त]दाज्ञाय हृषीकेशो विकृष्टं पापकर्मणा ।
[ह]ृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ॥ १
[व]ैराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः ।
[उ]पप्लाव्यगतां दृष्ट्वा व्रतवान्ब्राह्मणोऽब्रवीत् ॥ २
[प]रिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति ।
[ए]तदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ ३
[त]स्य तद्वचनं साधोः सत्यमेतद्भविष्यति ।
[प]रिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ॥ ४
[त्]वां तु कापुरुषं पापं विदुः सर्वे मनीषिणः ।
[अ]सकृत्पापकर्माणं बालजीवितघातकम् ॥ ५
[त]स्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ।
[त्र]ीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ॥ ६
[अ]प्राप्नुवन्कचित्कांचित्संविदं जातु केनचित् ।
[न]िर्जनानसहायस्त्वं देशान्प्रविचरिष्यसि ॥ ७
[भ]विन्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ।
[पू]यशोणितगन्धी च दुर्गकान्तारसंश्रयः ।
[व]िचरिष्यसि पापात्मंश्चिरमेको वसुंधराम् ॥ ८
[व]यः प्राप्य परिक्षित्तु देवव्रतमवाप्य च ।
[कृ]पाच्छारद्वताच्छूरः सर्वास्त्राण्युपपत्स्यते ॥ ९
[व]िदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः ।
[ष]ष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति ॥ १०
[इ]तश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति ।
[प]रिक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते ॥ ११
[अ]हं तं जीवयिष्यामि दग्धं शस्त्राग्नितेजसा ।]
[प]श्य मे तपसो वीर्यं सत्यस्य च नराधम ॥ १२

व्यास उवाच ।
यस्मादनादृत्य कृतं त्वयाऽस्मान्कर्म दारुणम् ।
ब्राह्मणस्य सतश्चेदं वृत्तमन्यायवर्तिनः ॥ १३
तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वचः ।
आलोकात्तव तद्भावि क्षुद्रकर्मन्व्रजेति ह ॥ १४
अश्वत्थामोवाच ।
सहैव भवता ब्रह्मन्स्थास्यामि पुरुषेष्विह ।
सत्यवागस्तु भगवानयं च पुरुषोत्तमः ॥ १५
वैशंपायन उवाच ।
प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनाम् ।
जगाम विमनास्तेषां सर्वेषां पश्यतां वनम् ॥ १६
पाण्डवाश्च सदाशार्हास्तानृषीनभिवाद्य च ।
कृष्णद्वैपायनं चैव नारदं चैव पर्वतम् ॥ १७
द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः ।
द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीम् ॥ १८
वैशंपायन उवाच ।
ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः ।
अभ्ययुः सहदाशार्हाः शिबिरं पुनरेव हि ॥ १९
अवतीर्य रथेभ्यस्तु त्वरमाणा महारथाः ।
ददृशुर्द्रौपदीं हृष्टामार्तामार्ततराः स्वयम् ॥ २०
तामुपेत्य निरानन्दां दुःखशोकसमन्विताम् ।
परिवार्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः ॥ २१
ततो राज्ञाऽभ्यनुज्ञातो भीमसेनो महाबलः ।
प्रददौ तं मणिं दिव्यं वचनं चेदमब्रवीत् ॥ २२
अयं भद्रे तव मणिः पुत्रहन्ता जितश्च ते ।
उत्तिष्ठ शोकमुत्सृज्य क्षात्रधर्ममनुसर ॥ २३

---

संविदं संलापम् ॥ ७ ॥ प्रायोपेतां मरणार्थं यो नियमस्तेन उपेताम् ॥ १८ ॥ हृष्टामश्वत्थाम्नः पराभवेन । आर्तां पुत्रादेः शोकेन ॥ २० ॥

प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे ।
यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनि २४
नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च ।
न वै त्वमिति गोविन्द शममिच्छति राजनि ॥ २५
उक्तवत्यसि तीव्राणि वाक्यानि पुरुषोत्तमम् ।
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि ॥ २६
हतो दुर्योधनः पापो राज्यस्य परिपन्थिकः ।
दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ॥ २७
वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ।
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ॥ २८
यशोऽस्य पतितं देवि शरीरं त्ववशेषितम् ।
वियोजितश्च मणिना भ्रंशितश्चायुधं भुवि ॥ २९
द्रौपद्युवाच ।
केवलानृण्यमाप्ताऽस्मि गुरुपुत्रो गुरुर्मम ।
शिरस्येतं मणिं राजा प्रतिबध्नातु भारत ॥ ३०
तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा ।
गुरोरुच्छेषमित्येव द्रौपद्या वचनादपि ॥ ३१
ततो दिव्यं मणिवरं शिरसा धारयन्प्रभुः ।
शुशुभे स तदा राजा सचन्द्र इव पर्वतः ॥ ३२
उत्तस्थौ पुत्रशोकार्ता ततः कृष्णा मनस्विनी ।
कृष्णं चापि महाबाहुः परिपप्रच्छ धर्मराट् ॥ ३३

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

युधिष्ठिरेण द्रौणेरेकस्य बहुमारणशक्तिप्रश्ने कृष्णेन रुद्रप्रसादादित्युक्त्वा रुद्रमहिमकथनम् ॥ १ ॥

वैशंपायन उवाच ।
हतेषु सर्वसैन्येषु सौप्तिके तै रथैस्त्रिभिः ।
शोचन्युधिष्ठिरो राजा दाशार्हमिदमब्रवीत् ॥ १
कथं नु कृष्ण पापेन क्षुद्रेण शठबुद्धिना ।
द्रौणिना निहताः सर्वे मम पुत्रा महारथाः ॥ २
तथा कृतास्त्रविक्रान्ताः संग्रामेष्वपलायिनः ।
द्रुपदस्यात्मजाश्चैव द्रोणपुत्रेण पातिताः ॥ ३
यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखम् ।
निजघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः ॥ ४
किंनु तेन कृतं कर्म तथायुक्तं नरर्षभ ।
यदेकः समरे सर्वानवधीन्नो गुरोः सुतः ॥ ५
श्रीभगवानुवाच ।
नूनं स देवदेवानामीश्वरेश्वरमव्ययम् ।
जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून् ॥ ६
प्रसन्नो हि महादेवो दद्यादमरतामपि ।
वीर्यं च गिरिशो दद्याद्येनेन्द्रमपि शातयेत् ॥ ७
वेदाहं हि महादेवं तत्त्वेन भरतर्षभ ।
यानि चास्य पुराणानि कर्माणि विविधानि च ॥ ८
आदिरेष हि भूतानां मध्यमन्तश्च भारत ।
विचेष्टते जगच्चेदं सर्वमस्यैव कर्मणा ॥ ९
एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः ।
पितामहोऽब्रवीच्चैनं भूतानि सृज माचिरम् ॥ १०
हरिकेशस्तथेत्युक्त्वा दीर्घदर्शी तदा प्रभुः ।
दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः ॥ ११
सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः ।
स्रष्टारं सर्वभूतानां ससर्ज मनसाऽपरम् ॥ १२
सोऽब्रवीद्भ्रातरं दृष्ट्वा गिरिशं सुप्तमम्भसि ।
यदि मे नाग्रजोऽस्त्यन्यस्ततः स्रक्ष्याम्यहं प्रजाः १३
तमब्रवीत्पिता नास्ति त्वदन्यः पुरुषोऽग्रजः ।
स्थाणुरेष जले मग्नो विस्रब्धः कुरु वै प्रजाः ॥ १४

मधुघातिनि मधुदैत्यहन्तरि ॥ २४ ॥ विवक्षतां वक्तुमिच्छतां वाच्याः निन्द्याः नैव स्म ॥ २८ ॥ षोडशोऽध्यायः ॥ १६ ॥

भूतान्यन्वसृजत्सप्त दक्षः क्षिप्रं प्रजापतिः ।
यैरिमं व्यकरोत्सर्वं भूतग्रामं चतुर्विधम् ॥ १५
ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्वाः प्रजापतिम् ।
विभक्षयिषवो राजन्सहसा प्राद्रवंस्तदा ॥ १६
स भक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत् ।
आभ्यो मां भगवांस्त्रातु वृत्तिरासां विधीयताम् १७
ततस्ताभ्यो ददावन्नमोषधीः स्थावराणि च ।
जङ्गमानि च भूतानि दुर्बलानि बलीयसाम् ॥ १८
विहितान्नाः प्रजास्तास्तु जग्मुस्तुष्टा यथागतम् ।
ततो ववृधिरे राजन्प्रीतिमत्यः स्वयोनिषु ॥ १९
भूतग्रामे विवृद्धे तु सृष्टे देवासुरे तदा ।
उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः ॥ २०
बहुरूपाः प्रजाः सृष्टा विवृद्धाश्च स्वतेजसा ।
चुक्रोध बलवद्दृष्ट्वा लिङ्गं स्वं चाप्यविध्यत ॥ २१
तत्प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत ।
तमुवाचाव्ययो ब्रह्मा वचोभिः शमयन्निव ॥ २२
किं कृतं सलिले शर्व चिरकालस्थितेन ते ।
किमर्थं चेदमुत्पाद्य लिङ्गं भूमौ प्रवेशितम् ॥ २३
सोऽब्रवीज्जातसंरम्भस्तथा लोकगुरुर्गुरुम् ।
प्रजाः सृष्टाः परेणेमाः किं करिष्याम्यनेन वै २४
तपसाऽधिगतं चान्नं प्रजार्थं मे पितामह ।
ओषध्यः परिवर्तेरन्यथैवं सततं प्रजाः ॥ २५
एवमुक्त्वा स सक्रोधो जगाम विमना भवः ।
गिरेर्मुञ्जवतः पादं तपस्तप्तुं महातपाः ॥ २६

॥ इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ॥ १८ ॥

कृष्णेन युधिष्ठिरंप्रति रुद्रस्य कोपप्रसादाभ्यां देवानां यज्ञनाशतत्प्रवृत्तिकथनपूर्वकं तत एवाश्वत्थामद्वारा पुत्रादिवधसंभवकथनम् ॥ १ ॥

---

श्रीभगवानुवाच ।
ततो देवयुगेऽतीते देवा वै समकल्पयन् ।
यज्ञं वेदप्रमाणेन विधिवद्यष्टुमीप्सवः ॥ १
कल्पयामासुरथ ते साधनानि हवींषि च ।
भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव च ॥ २
ता वै रुद्रमजानन्त्यो याथातथ्येन देवताः ।
नाकल्पयन्त देवस्य स्थाणोर्भागं नराधिप ॥ ३
सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः ।
तपसा यज्ञमन्विच्छन्धनुरादौ ससर्ज ह ॥ ४
लोकयज्ञः क्रियायज्ञो गृहयज्ञः सनातनः ।
पञ्चभूतनृयज्ञश्च जज्ञे सर्वमिदं जगत् ॥ ५
लोकयज्ञैर्नृयज्ञैश्च कपर्दी विदधे धनुः ।
धनुः सृष्टमभूत्तस्य पञ्चकिष्कुप्रमाणतः ॥ ६
वषट्कारोऽभवज्ज्या तु धनुषस्तस्य भारत ।
यज्ञाङ्गानि च चत्वारि तस्य संनहनेऽभवन् ॥ ७
ततः क्रुद्धो महादेवस्तदुपादाय कार्मुकम् ।
आजगामाथ तत्रैव यत्र देवाः समीजिरे ॥ ८
तमात्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम् ।
विव्यथे पृथिवी देवी पर्वताश्च चकम्पिरे ॥ ९
न ववौ पवनश्चैव नाग्निर्जज्वाल चैधितः ।
व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलम् ॥ १०
न बभौ भास्करश्चापि सोमः श्रीमुक्तमण्डलः ।
तिमिरेणाकुलं सर्वमाकाशं चाभवद्वृतम् ॥ ११
अभिभूतास्ततो देवा विषयान्न प्रजज्ञिरे ।

---

लोकयज्ञो लोकेषणा सर्वो मां साधुमेव जानात्विति वासनारूपः । क्रियायज्ञः गर्भाधानादिसंस्काररूपः । गृहयज्ञः पत्नीसाध्याग्निहोत्रादिः । पञ्चभूतनृयज्ञः पञ्चभूतानां गुणैः शब्दादिभिर्या नृणां प्रीतिस्तद्रूपः । विषयजं सुखमित्यर्थः । एतैरेव चतुर्भिर्यज्ञैः सर्वं जगत्सृष्टम् ॥ ५ ॥ तत्र मध्यमयोः शास्त्रोक्तयोर्यज्ञयोर्नाशार्थं प्रथमचरमयज्ञाभ्यामीश्वरो धनुः कृतवान् । किष्कुर्हस्तः ॥ ६ ॥ अष्टादशोऽध्यायः ॥ १८ ॥

न प्रत्यभाच्च यज्ञः स देवतास्वेसिरे तथा ॥ १२
ततः स यज्ञं विव्याध रौद्रेण हृदि पत्रिणा ।
अपक्रान्तस्ततो यज्ञो मृगो भूत्वा सपावकः ॥ १३
स तु तेनैव रूपेण दिविस्थो वै व्यराजत ।
अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले ॥ १४
अपक्रान्ते ततो यज्ञे संज्ञा न प्रत्यभात्सुरान् ।
नष्टसंज्ञेषु देवेषु न प्राज्ञायत किंचन ॥ १५
वितुर्बाहू भगस्य नयने तथा ।
पूष्णश्च दशनान्क्रुद्धो धनुष्कोट्या व्यशातयत् ॥ १६
प्राद्रवन्त ततो देवा यज्ञाङ्गानि च सर्वशः ।
केचित्तत्रैव घूर्णन्तो गतासव इवाभवन् ॥ १७
स तु विद्राव्य तत्सर्वं शितिकण्ठोऽवहस्य च ।
अवष्टभ्य धनुष्कोटिं रुरोध विबुधांस्ततः ॥ १८
ततो वागमरैरुक्ता ज्यां तस्य धनुषोऽच्छिनत् ।
अथ तत्सहसा राजंश्छिन्नज्यं विस्फुरद्धनुः ॥ १९
ततो विधनुषं देवा देवश्रेष्ठमुपागमन् ।
शरणं सह यज्ञेन प्रसादं चाकरोत्प्रभुः ॥ २०
ततः प्रसन्नो भगवान्प्रास्यत्कोपं जलाशये ।
स जलं पावको भूत्वा शोषयत्यनिशं प्रभो ॥ २१
भगस्य नयने चैव बाहू च सवितुस्तथा ।
प्रादात्पूष्णश्च दशनान्पुनर्यज्ञांश्च पाण्डव ॥ २२
ततः सुस्थमिदं सर्वं बभूव पुनरेव हि ।
सर्वाणि च हवींष्यस्य देवा भागमकल्पयन् ॥ २३
तस्मिन्क्रुद्धेऽभवत्सर्वमसुस्थं भुवनं प्रभो ।
प्रसन्ने च पुनः सुस्थं जगद्भवति भारत ॥ २४
ततस्ते निहताः सर्वे तव पुत्रा महारथाः ।
अन्ये च बहवः शूराः पाञ्चालस्य पदानुगाः ॥ २५
न तन्मनसि कर्तव्यं न च तद्द्रौणिना कृतम् ।
महादेवप्रसादः स कुरु कार्यमनन्तरम् ॥ २६

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां सौप्तिकपर्वणि ऐषीकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

समाप्तं ऐषीकपर्व ॥ २ ॥ सौप्तिकपर्व च समाप्तम् ॥ १० ॥

---

अस्यानन्तरं स्त्रीपर्व भविष्यति
तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥ १

इदं सौप्तिकपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां
निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२९ सन १९०७.

# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

---

## STRIPARVA XI.



EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.



*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press,*

**BOMBAY.**

---

1907.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## स्त्रीपर्व ११.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२९ प्लवंगनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।



## स्त्रीपर्व ११ ।

## (अथ जलप्रदानिकपर्व ॥ १ ॥)

### प्रथमोऽध्यायः ॥ १ ॥

सञ्जयेन पुत्रादीन्प्रति शोचतो धृतराष्ट्रस्य समाश्वासनम् ॥ १ ॥

श्रीवेदव्यासाय नमः ।

[रा]रायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
[दे]वीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १

[ज]नमेजय उवाच ।
[ह]ते दुर्योधने चैव हते सैन्ये च सर्वशः ।
[धृ]तराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥ १
[त]थैव कौरवो राजा धर्मपुत्रो महामनाः ।
[कृ]पप्रभृतयश्चैव किमकुर्वत ते त्रयः ॥ २
[अ]श्वत्थाम्नः कृतं कर्म शापश्चान्योन्यकारितः ।
[वृ]त्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ॥ ३

[वैश]ंपायन उवाच ।
[हते] पुत्रशते दीनं छिन्नशाखमिव द्रुमम् ।
[पुत्र]शोकाभिसंतप्तं धृतराष्ट्रं महीपतिम् ॥ ४
[ध्या]नमूकत्वमापन्नं चिन्तया समभिप्लुतम् ।
[सञ्ज]यो जयतां श्रेष्ठ राजानं वाक्यमब्रवीत् ॥ ५
[किं] शोचसि महाराज नास्ति शोके सहायता ।
[अक्ष]ौहिण्यो हताश्चाष्टौ दश चैव विशांपते ।
[निर्ज]नेयं वसुमती शून्या स्थास्यति केवलम् ॥ ६
नानादिग्भ्यः समागम्य नानाजात्या नराधिपाः ।
सहितास्तव पुत्रेण सर्वे वै निधनं गताः ॥ ७
पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदां तथा ।
गुरूणां चानुपूर्व्येण ये चान्येऽनुचरा हताः ।
प्रेतकार्याणि सर्वाणि कारयस्व नराधिप ॥ ८

वैशंपायन उवाच ।
तच्छ्रुत्वा करुणं वाक्यं पुत्रपौत्रवधार्दितः ।
पपात भुवि दुर्धर्षो वाताहत इव द्रुमः ॥ ९

धृतराष्ट्र उवाच ।
हतपुत्रो हतामात्यो हतसर्वसुहृज्जनः ।
दुःखं नूनं गमिष्यामि विचरन्पृथिवीमिमाम् ॥ १०
किंनु बन्धुविहीनस्य जीवितेन ममाद्य वै ।
लूनपक्षस्य इव मे वैनतेयस्य सञ्जय ॥ ११
हृतराज्यो हतसुहृद्धतपुत्रश्च वै तथा ।
न भ्राजिष्ये महाप्राज्ञ क्षीणरश्मिरिवांशुमान् ॥ १२
न कृतं सुहृदां वाक्यं जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ १३
सभामध्ये तु कृष्णेन यच्छ्रेयोऽभिहितं मम ।

[अ]श्वत्थाम्नः श्रुतं कर्म शापश्चान्योन्यकारित इति क. पाठः । [अश्व]त्थाम्नः श्रुतं कर्म शापादन्योन्यकरितादिति झ. पाठः । तत्र [अ]न्योन्यं कारितात्पाण्डवानां गर्भे ब्रह्मशिरोस्त्रं पतत्विल्यश्व[त्थाम्न]ा शापो दत्तः । सहस्रवर्षाणि गलत्कुष्ठो भविष्यसील्यश्व[त्थाम्न]ः कृष्णेन शापो दत्त इत्यर्थः ॥ ३ ॥ शून्या राजभिर्हीना

॥ ६ ॥ गुरूणां चानुपूर्व्येण प्रेतकार्याणि कारयेति झ. पाठः । तत्र आनुपूर्व्येणेति । आदौ हतानामादावेव पश्चाद्धतानां पश्चादेवेति पौर्वापर्येण प्रेतानां परेतानां कार्याणि पारलौकिकानि कर्माणील्यर्थः ॥ ८ ॥

अलं वैरेण ते राजन्पुत्रः संगृह्यतामिति ।
तच्च वाक्यमकृत्वाऽहं भृशं तप्यामि दुर्मतिः॥१४
न हि श्रोताऽस्मि भीष्मस्य शर्मयुक्तं प्रभाषितम्१५
दुर्योधनस्य च तथा वृषभस्येव नर्दतः ।
दुःशासनवधं श्रुत्वा कर्णस्य च विपर्ययम् ।
द्रोणसूर्योपरागं च हृदयं मे विदीर्यते ॥ १६
न स्मराम्यात्मनः किंचित्पुरा सञ्जय दुष्कृतम् ।
यस्येदं फलमद्येह मया मूढेन भुज्यते ॥ १७
नूनं व्यपकृतं किंचिन्मया पूर्वेषु जन्मसु ।
येन मां दुःखभागेषु धाता कर्मसु युक्तवान्॥ १८
परिणामश्च वयसः सर्वबन्धुक्षयश्च मे ।
सुहृन्मित्रविनाशश्च दैवयोगादुपागतः ॥ १९
कोन्वस्ति दुःखिततरो मत्तोऽन्यो हि पुमान्भुवि २०
तन्मामद्यैव पश्यन्तु पाण्डवाः संशितव्रताः ।
विवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम् ॥ २१
वैशंपायन उवाच ।
तस्य लालप्यमानस्य बहु शोकं विचिन्वतः ।
शोकापहं नरेन्द्रस्य संजयो वाक्यमब्रवीत् ॥ २२
शोकं राजन्व्यपनुद श्रुतास्ते वेदनिश्चयाः ।
शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम ॥ २३
सृञ्जये पुत्रशोकार्ते यदूचुर्मुनयः पुरा ।
यथा यौवनजं दर्पमास्थिते ते सुते नृप ॥ २४
न त्वया सुहृदां वाक्यं ब्रुवतामवधारितम् ।
स्वार्थश्च न कृतः कश्चिल्लुब्धेन फलगृद्धिना ॥२५
असिनैवैकधारेण स्वबुद्ध्या तु विचेष्टितम् ।
प्रायशोऽवृत्तसंपन्नाः सततं पर्युपासिताः ॥ २६
यस्य दुःशासनो मन्त्री राधेयश्च दुरात्मवान् ।
शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्मतिः ॥ २७
अनल्पं येन वै सर्वं शल्यभूतं कृतं जगत् ।
कुरुवृद्धस्य भीष्मस्य गान्धार्या विदुरस्य च ॥ २८
द्रोणस्य च महाराज कृपस्य च शरद्वतः ।
कृष्णस्य च महाबाहो नारदस्य च धीमतः ॥ २९
ऋषीणां च तथाऽन्येषां व्यासस्यामिततेजसः ।
न कृतं तेन वचनं तव पुत्रेण भारत ।
क्षपिताः क्षत्रियाः सर्वे शत्रूणां वर्धितं यशः ॥ ३०
अधर्मसंयुतं किंचिन्नित्यं युद्धमिति ब्रुवन् ।
मध्यस्थो हि त्वमप्यासीर्न क्षमं किंचिदुक्तवान् ३१
धूर्धरेण त्वया भारस्तुलया न समं धृतः ॥ ३२
आदावेव मनुष्येण वर्तितव्यं यथाक्रमम् ।
यथा नातीतमर्थं वै पश्चात्तापेन युज्यते ॥ ३३
पुत्रगृद्ध्या त्वया राजन्प्रियं तस्य चिकीर्षितम् ।
पश्चात्तापमिमं प्राप्तो न त्वं शोचितुमर्हसि ॥ ३४
मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति ।
स भ्रष्टो मधुलोभेन शोचत्येव यथा भवान् ॥ ३५
अर्थान्न शोचन्प्राप्नोति न शोचन्विन्दते सुखम् ।
न शोचञ्श्रियमाप्नोति न शोचन्विन्दते जयम् ३६
स्वयमुत्पादयित्वाऽग्निं परीतस्तेन योऽग्निना ।
दह्यमानः पुनस्तापं भजते न स पण्डितः ॥ ३७
त्वयैव ससुतेनायं वाक्यवायुसमीरितः ।
लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः॥३८
तस्मिन्समिद्धे पतिताः शलभा इव ते सुताः ।
तान्केशवाग्निनिर्दग्धान्न त्वं शोचितुमर्हसि ॥ ३९
यच्चाश्रुपातकलिलं वदनं वहसे नृप ।
अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः ॥ ४०
विस्फुलिङ्गा इव ह्येतान्दहन्ति किल मानवान् ।

श्रोतास्मि श्रुतवानस्मि ॥ १५ ॥ विपर्ययं विनाशम् ॥ १६ ॥ तन्मामिति । अद्यैव प्राणत्यागं करिष्यामीत्यर्थः ॥ २१ ॥ शोक वितन्वत इति झ. पाठः । तत्र वितन्वतः विरचयत इत्यर्थः ॥ २२ ॥ अवृत्तेति च्छेदः ॥ २६ ॥ शल्यश्च येन वै सर्वं इति झ. पाठः । तत्र शल्यश्च मन्त्रीति पूर्वेणान्वयः ॥ २८ ॥ न धर्मः स कृतः कश्चिन्नित्यं युद्धमभीप्सता । अल्पबुद्धिरहंकारी नित्यं युद्धमिति ब्रुवन् । क्रूरो दुर्मर्षणो नित्यमसंतुष्टश्च वीर्यवान् । श्रुतवानसि मेधावी सत्यवांश्चैव नित्यदा । न मुह्यन्तीदृशाः सन्तो बुद्धिमन्तो भवादृशाः । न धर्मः सत्कृतः कश्चित्तव पुत्रेण मारिष । इति झ. पाठः । अत्र ब्रुवन् दुर्योधन आसीदिति शेषः ॥ ३१ ॥ दुर्धरेणेति झ. ट. पाठः ॥ ३२ ॥ प्रपातं पर्वताग्राद्भ्रंशम् ॥ ३५ ॥

जहीहि मन्युं बुद्ध्या वै धारयात्मानमात्मना ॥ ४१
वैशंपायन उवाच ।
एवमाश्वासितं तेन सञ्जयेन महात्मना ।
विदुरो भूय एवाह बुद्धिपूर्वं परंतप ॥ ४२

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ॥ २ ॥

विदुरेण शास्त्रार्थकथनेन धृतराष्ट्रस्य शोकापनोदनम् ॥ १ ॥

वैशंपायन उवाच ।
ततोऽमृतसमैर्वाक्यैर्ह्लादयन्पुरुषर्षभम् ।
वैचित्रवीर्यं विदुरो यदुवाच निबोध तत् ॥ १
विदुर उवाच ।
उत्तिष्ठ राजन्किं शेषे धारयात्मानमात्मना ।
एषा वै सर्वसत्वानां लोकेश्वर परा गतिः ॥ २
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ३
यदा शूरं च भीरुं च यमः कर्षति भारत ।
तत्किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ ॥ ४
अयुध्यमानो म्रियते युध्यमानश्च जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ ५
अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ ६
न शोचन्मृतमन्वेति न शोचन्म्रियते नरः ।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ ७
कालः कर्षति भूतानि सर्वाणि विविधान्युत ।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ ८
यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ ९
एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्य कालः स यात्यग्रे तत्र का परिदेवना ॥ १०
न चाप्येतान्हतान्युद्धे राजञ्शोचितुमर्हसि ।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥ ११
सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ १२
अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
नैते तव न तेषां त्वं तत्र का परिदेवना ॥ १३
हतो हि लभते स्वर्गं जित्वा च लभते यशः ।
उभयं नो बहुगुणं नास्ति निष्फलता रणे ॥ १४
तेषां कामदुघाँल्लोकानिन्द्रः संकल्पयिष्यति ।
इन्द्रस्यातिथयो ह्येते भवन्ति भरतर्षभ ॥ १५
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया ।
स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः ॥ १६
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः ।
हूयमानाञ्शरांश्चैव सेहुस्तेजस्विनो मिथः ॥ १७
एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम् ।
न युद्धादधिकं किंचित्क्षत्रियस्येह विद्यते ॥ १८
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः ।
आशिषः परमाः प्राप्ता न शोच्याः सर्व एव हि ॥ १९
आत्मानमात्मनाऽऽश्वास्य मा शुचः पुरुषर्षभ ।
नाद्य शोकाभिभूतस्त्वं कायमुत्स्रष्टुमर्हसि ॥ २०
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ २१
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ २२

---

जहि मन्युं स्वबुद्ध्या वै इति क. छ ट. पाठः । दहन्ति शोका इत्यर्थात् । मन्युं दैन्यम् । मन्युर्दैन्ये क्रतौ क्रुधि इत्यमरः । आत्मानं चित्त आत्मना धैर्येण धारय । प्राणान्मात्याक्षीरित्यर्थः ॥ ४१ ॥ प्रथमोऽध्यायः ॥ १ ॥

एषा मरणान्ता । अत उत्तिष्ठ शोकं त्यज ॥ २ ॥ अभावादीनि दुःखानि दुःखमध्यानि भारतेति छ. पाठः ॥ ६ ॥ सांसिद्धिके स्वभावसिद्धे ॥ ७ ॥ संवर्तयति स्ववशं नयति ॥ ९ ॥ तत्र गामिनां परत्र गमनशीलानां यस्य काल उपस्थितः सोऽग्रे प्रयाति ॥ १० ॥ अदर्शनादज्ञानात् ॥ १३ ॥ नोऽस्माकं क्षत्रियाणाम् ॥ १४ ॥ आचक्षे कथयामि ॥ १८ ॥

न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ २३
कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ २४
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥ २५
न जानपदिकं दुःखमेकः शोचितुमर्हसि ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ २६
अशोचन्प्रतिकुर्वीत यदि पश्येत्पराक्रमम् ।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ २७
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ २८
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मानुषा मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः ॥ २९
नार्थो न धर्मो न सुखं यदेतदनुशोचति ।
तच्च नाप्नोति कार्यार्थं त्रिवर्गाच्चैव भ्रश्यते ॥ ३०
अन्योन्यबाधनावस्थां प्राप्य वैषयिकीं नराः ।
असंतुष्टाः प्रमुह्यन्ति संतोषं यान्ति पण्डिताः ॥ ३१
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ ३२
शयानं चानुशेते हि तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥ ३३
यस्यांयस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यांतस्यामवस्थायां तत्तत्फलमवाप्नुते ॥ ३४
[येनयेन शरीरेण यद्यत्कर्म करोति यः ।
तेनतेन शरीरेण तत्फलं समुपाश्नुते ॥ ३५
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च ॥ ३६
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं भवति सर्वत्र नाकृतं विद्यते क्वचित् ॥ ३७
न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥] ३८

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

विदुरेण धृतराष्ट्रशोकापनोदनाय शास्त्रार्थकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
सुभाषितं महाप्राज्ञ शोकोऽयं विगतो मम ।
भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः ॥ १
अनिष्टानां च संसर्गादिष्टानां च निवर्तनात् ।
कथं हि मानसं दुःखं विप्रयुज्यन्ति पण्डिताः ॥ २
विदुर उवाच ।
यतोयतो मनो दुःखात्सुखाद्वा विप्रमुच्यते ।
ततस्ततः शमं लब्ध्वा सुगतिं विन्दते बुधः ॥ ३
अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ ।
कदलीसन्निभो लोकः सारो ह्यस्य न विद्यते ॥ ४
[यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धनाः ।
सर्वे पितृवनं प्राप्य स्वपन्ति विगतज्वराः ॥ ५
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धिभिः ।
किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः ॥ ६
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ।
कस्मादन्योन्यमिच्छन्ति विप्रलब्धधियो नराः ॥] ७
गृहाण्येव हि मर्त्यानामाहुर्देहानि पण्डिताः ।
कालेन विनियुज्यन्ते सत्वमेकं तु शोभनम् ॥ ८

---

जानपदिकं सर्वसाधारणम् । अभावेन मरणेन । तच्च दुःखं च ॥ २६ ॥ नच नापैति कार्यार्थात्रिवर्गाच्चैव हीयते इति झ. पाठः । तत्र कार्यार्थान्नापैतीतिनापित्वपैत्येवेत्यर्थः ॥ ३० ॥ अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः । इति झ. पाठः ॥ ३१ ॥ अवस्थायां यौवनादिरूपायाम् ॥ ३४ ॥ येनेति । स्थूलेन देहेन कृते तत्तेनैव भुज्यते । मनःकृतं चेत्तेनैव भुज्यते स्वप्नादौ ॥ ३५ ॥ द्वितीयोऽध्यायः ॥ २ ॥

सुभाषितैरिति झ. पाठः ॥ १ ॥ पितृवनं मृत्युम् ॥ ५ ॥ सत्वमेकं तु शाश्वतमिति झ. पाठः । तत्र सत्वं लिङ्गशरीरम् । शाश्वतं मोक्षपर्यन्तं स्थायित्वात् इत्यर्थः ॥ ८ ॥

। जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु पूरुषः ।
द्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ९
त्रवीर्य सत्यं हि दुःखं वा यदि वा सुखम् ।
वन्तीह भूतानि स्वकृतेनैव कर्मणा ॥ १०
णा प्राप्यते स्वर्गः सुखं दुःखं च भारत ।
वहति तं भारमवशः स्ववशोऽपि वा ॥ ११
च मृन्मयं भाण्डं चक्रारूढं विपद्यते ।
चेत्प्रक्रियमाणं वा कृतमात्रमथापि वा ॥ १२
वाऽप्यवरोप्यं वा अवतीर्णमथापि वा ।
वाऽप्यथवा शुष्कं पच्यमानमथापि वा ॥ १३
तायन्तमापाकादुद्धृतं चापि भारत ।
वा परिभुञ्जन्तमेवं देहाः शरीरिणाम् ॥ १४

गर्भस्थो वा प्रसूतो वाऽप्यथवा दशरात्रिकः ।
अर्धमासगतो वाऽपि मासमात्रगतोऽपि वा ॥ १५
संवत्सरगतो वापि द्विसंवत्सर एव वा ।
यौवनस्थोऽथ मध्यस्थो वृद्धो वापि विपद्यते ॥ १६
प्राक्कर्मभिस्तु भूतानि भवन्ति नभवन्ति च ।
एवं संवर्धिते लोके किमर्थमनुतप्यसे ॥ १७
यथा तु सलिलं राजन्क्रीडार्थमनुसंचरन् ।
उन्मज्जेच्च निमज्जेच्च चेष्टते च नराधिप ॥ १८
एवं संसारगहने उन्मज्जननिमज्जने ।
कर्मयोगेन बध्यन्ते क्लिश्यन्ते चाल्पबुद्धयः ॥ १९
ये तु प्राज्ञाः स्थिता मध्ये संसारान्तगतैषिणः ।
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥ २०

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

वेदुरेण धृतराष्ट्रंप्रति जीवस्य गर्भवासप्रकारकथनम् ॥ १ ॥

राष्ट्र उवाच ।
संसारगहनं विज्ञेयं वदतां वर ।
दिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः ॥१
र उवाच ।
प्रभृति भूतानां क्रियाः सर्वास्तु लक्षयन् ।
वेह कलिले वसते किंचिदन्तरम् ॥ २
स पञ्चमेऽतीते मासे मांसमकल्पयत् ।
सर्वाङ्गसंपूर्णो गर्भो मासे तु जायते ॥ ३
ध्यमध्ये वसति मांसशोणितलेपने ।
तु वायुवेगेन ऊर्ध्वपादो ह्यधोमुखः ॥ ४
नेद्वारमुपागम्य बहून्क्लेशान्समृच्छति ।
नेसंपीडनाच्चैव पूर्वकर्मभिरन्वितः ॥ ५
न्मुक्तः स संसारादन्यान्पश्यत्युपद्रवान् ।

ग्रहास्तमनुगच्छन्ति सारमेया इवामिषम् ॥ ६
ततः कालान्तरे प्राप्ते व्याधयश्चापि तं तथा ।
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः ॥ ७
बद्धमिन्द्रियपाशैस्तं सङ्गकामुकमातुरम् ।
व्यसनान्यनुवर्तन्ते विविधानि नराधिप ॥ ८
बाध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः ।
[तदा नावैति चैवायं प्रकुर्वन्साध्वसाधु वा ॥] ९
तत्रैनं परिपश्यन्ति ये ध्यानपरिनिष्ठिताः ।
अयं न बुध्यते तावद्यमलोकादिहागमे ॥ १०
यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति ।
वाग्घीनस्य च या मात्रा इष्टानिष्टकृताऽस्य वै ।
भूय एवात्मनाऽऽत्मानं बध्यमानमुपैति सः॥ ११
अहो विनिकृतो लोको लोभेन च वशीकृतः ।

---

ोप्यन्तमितिपाठे अवरोप्यमाणम् ॥ १३ ॥ आपाकात् ळकृतात् पात्रपाककूटात् । अथवा परिभुञ्जन्तमिति झ. ॥ १४ ॥ एवं संसारगहनादुन्मज्जननिमज्जनात् इति क. ट. पाठः ॥ १९ ॥ तृतीयोऽध्यायः ॥ ३ ॥
कलिलं शुक्रशोणितसंयोगः । एकरात्रोषितं कलिलं भवति

पञ्चरात्राद्बुद्बुद इत्यादिशास्त्राद्गम्यते । तत्र कलिले वसते जीव इति शेषः । किंचिदन्तरं पूर्वदिनापेक्षया वृद्ध्यवस्थाभेदेन अल्पेन परिमाणान्तरेण ॥ २ ॥ पूर्वकर्मापदानत इति क. पाठः ॥ ५ ॥ मृगयन्पर्यटन्निलं सारमेया इति ट. पाठः ॥ ६ ॥ चतुर्थोऽध्यायः ॥ ४ ॥

लोभक्रोधमदोन्मत्तो नात्मानमवबुध्यते ॥ १२
कुलीनत्वे च रमते दुष्कुलीनान्विकुत्सयन् ।
धनदर्पेण दृप्तश्च दरिद्रान्परिकुत्सयन् ॥ १३
मूर्खानिति परानाह नात्मानं समवेक्षते ।
दोषान्क्षिपति चान्येषां नात्मानं शास्तुमिच्छति ॥
यदा प्राज्ञाश्च मूर्खाश्च धनवन्तश्च निर्धनाः ।
कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः॥१५
सर्वे पितृवनं प्राप्ताः स्वपन्ति विगतत्वचः ।
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनैः ॥ १६
किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः ।
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ॥ १७
यदा सर्वे समं न्यस्ताः स्वपन्ति धरणीतले ।
कस्मादन्योन्यमिच्छन्ति विप्रलब्धुमिहाबुधाः॥१८
प्रत्यक्षं च परोक्षं च यो निशम्य श्रुतिं त्विमाम्।
[अध्रुवे जीवलोकेऽस्मिन्यो धर्ममनुपालयन् ।]
जन्मप्रभृति वर्तेत प्राप्नुयात्परमां गतिम् ॥ १९
एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते ।
स प्रमोक्षयते चैव पन्थानं मनुजेश्वर ॥ २०

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ॥ ५ ॥

विदुरेण धृतराष्ट्रं प्रति उत्तराध्याये वक्ष्यमाणसंसारादीनां कान्तारादित्वेन रूपणम् ॥ १ ॥

धृतराष्ट्र उवाच ।
यदिदं धर्मगहनं बुद्ध्या समनुबुध्यते ।
एतद्विस्तरतः सर्वं बुद्धिमार्गं प्रशंस मे ॥ १
विदुर उवाच ।
अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयंभुवे ।
यथा संसारगहनं वदन्ति परमर्षयः ॥ २
कश्चिन्महति कान्तारे वर्तमानो द्विजः किल ॥
महद्दुर्गमनुप्राप्तो वनं क्रव्यादसंकुलम् ॥ ३
सिंहव्याघ्रगजर्क्षौघैरतिघोरमहास्वनैः ।
पिशितादैरतिभयैर्महोग्राकृतिभिस्तथा ॥ ४
समन्तात्संपरिक्षिप्तं यत्स्माद्द्रष्टुर्महद्भयम् ।
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम् ॥ ५
अभ्युच्छ्रयन्ति रोमाणि विक्रियाश्च परंतप ।
स तद्वनं व्यनुसरन्संप्रधावन्नितस्ततः ॥ ६
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेदिति ।
स तेषां नाशमन्विच्छन्प्रद्रुतो भयपीडितः ।
न च निर्याति वै दूरं न वा तैर्विप्रयुज्यते ॥ ७
अथापश्यद्वनं गूढं समन्ताद्वागुरावृतम् ।
बाहुभ्यां संपरिष्वक्तः स्त्रिया परमघोरया ॥ ८
पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः ।
नभःस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ॥ ९
वनमध्ये च तत्राभूदुदपानः समावृतः ।
वल्लीभिस्तृणनद्धाभिर्गूढाभिरभिसंवृतः ॥ १०
पपात स द्विजस्तत्र निगूढे सलिलाशये ।
विलग्नश्चाभवत्तस्मिँल्लतासंतानसंकुले ॥ ११
पनसस्य यथा जातं वृन्तबद्धं महाफलम् ।
स तथा लम्बते तत्र ह्यूर्ध्वपादो ह्यधःशिराः ॥ १२
अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः ।
कूपमध्ये महानागमपश्यत महाबलम् ॥ १३
कूपवीनाहवेलायामपश्यत महागजम् ॥ १४
षड्वक्त्रं कृष्णशबलं द्विषट्कपदचारिणम् ।
क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम् ॥ १५
तस्य शाखाप्रशाखासु वृक्षशाखावलम्बिनः ।
नानारूपा मधुकरा घोररूपा भयावहाः ॥ १६
आसते मधु संवृत्य पूर्वमेव निकेतजाः ।
भूयोभूयः समीहन्ते मधूनि भरतर्षभ ॥ १७
स्वादनीयानि भूतानां यैर्बालो न वितृप्यते ।
तेषां मधूनां बहुधा धारा प्रस्रवते तदा ॥ १८
आलम्बमानः स पुमान्धारां पिबति सर्वदा ।
न चास्य तृष्णा विरता पिबमानस्य संकटे ॥ १९

न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥२३
कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ २४
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥२५
न जानपदिकं दुःखमेकः शोचितुमर्हसि ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ २६
अशोचन्प्रतिकुर्वीत यदि पश्येत्पराक्रमम् ।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ २७
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ २८
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मानुषा मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः ॥ २९
नार्थो न धर्मो न सुखं यदेतदनुशोचति ।
तच्च नाप्नोति कार्यार्थं त्रिवर्गाच्चैव भ्रश्यते ॥ ३०
अन्योन्यबाधनावस्थां प्राप्य वैषयिकीं नराः ।

असंतुष्टाः प्रमुह्यन्ति संतोषं यान्ति पण्डिताः ।
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥
शयानं चानुशेते हि तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥
यस्यांयस्यामवस्थायां यत्करोति शुभाशुभम्
तस्यांतस्यामवस्थायां तत्तत्फलमवाप्नुते ॥
[येनयेन शरीरेण यद्यत्कर्म करोति यः ।
तेनतेन शरीरेण तत्फलं समुपाश्नुते ॥
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च ॥
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा
कृतं भवति सर्वत्र नाकृतं विद्यते क्वचित् ॥
न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

विदुरेण धृतराष्ट्रशोकापनोदनाय शास्त्रार्थकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
सुभाषितं महाप्राज्ञ शोकोऽयं विगतो मम ।
भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः ॥ १
अनिष्टानां च संसर्गादिष्टानां च निवर्तनात् ।
कथं हि मानसं दुःखं विप्रयुज्यन्ति पण्डिताः ॥ २
विदुर उवाच ।
यतोयतो मनो दुःखात्सुखाद्वा विप्रमुच्यते ।
ततस्ततः शर्म लब्ध्वा सुगतिं विन्दते बुधः ॥ ३
अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ ।

कदलीसन्निभो लोकः सारो ह्यस्य न विद्यते
[यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धनाः
सर्वे पितृवनं प्राप्य स्वपन्ति विगतज्वराः ॥
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धिभिः ।
किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः ॥
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ।
कस्मादन्योन्यमिच्छन्ति विप्रलब्धधियो नराः ।
गृहाण्येव हि मर्त्यानामाहुर्देहानि पण्डिताः ।
कालेन विनियुज्यन्ते सत्वमेकं तु शोभनम् ।

---

जानपदिकं सर्वसाधारणम् । अभावेन मरणेन । तच्च दुःखं च ॥ २६ ॥ नच नापैति कार्यार्थात्त्रिवर्गाच्चैव हीयते इति झ. पाठः । तत्र कार्यार्थान्नापैतीतिनापित्वपैत्येवेत्यर्थः ॥ ३० ॥ अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः । इति झ. पाठः ॥ ३१ ॥ अवस्थायां यौवनादिरूपायाम् ॥ ३४ ॥ येनेति । स्थूलेन देहेन कृते तत्तेनैव भुज्यते । मनःकृतं चेत्तेनैव भु स्वप्नादौ ॥ ३५ ॥ द्वितीयोऽध्यायः ॥ २ ॥

सुभाषितैरिति झ. पाठः ॥ १ ॥ पितृवनं मृत्युम् ॥ सत्वमेकं तु शाश्वतमिति झ. पाठः । तत्र सत्वं लिङ्गशरीर शाश्वतं मोक्षपर्यन्तं स्थायित्वात् इत्यर्थः ॥ ८ ॥

यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु पूरुषः ।
अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ९
वैचित्रवीर्य सत्यं हि दुःखं वा यदि वा सुखम् ।
प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा ॥ १०
कर्मणा प्राप्यते स्वर्गः सुखं दुःखं च भारत ।
ततो वहति तं भारमवशः स्ववशोऽपि वा ॥ ११
यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते ।
किंचित्प्रक्रियमाणं वा कृतमात्रमथापि वा ॥ १२
हीनं वाऽप्यवरोप्यं वा अवतीर्णमथापि वा ।
आर्द्रं वाऽप्यथवा शुष्कं पच्यमानमथापि वा ॥ १३
अवतार्यन्तमापाकादुद्धृतं चापि भारत ।
अथवा परिभुञ्जन्तमेवं देहाः शरीरिणाम् ॥ १४
गर्भस्थो वा प्रसूतो वाऽप्यथवा दशरात्रिकः
अर्धमासगतो वाऽपि मासमात्रगतोऽपि वा ॥
संवत्सरगतो वापि द्विसंवत्सर एव वा ।
यौवनस्थोऽथ मध्यस्थो वृद्धो वापि विपद्यते ॥
प्राक्कर्मभिस्तु भूतानि भवन्ति नभवन्ति च ।
एवं संवर्धिते लोके किमर्थमनुतप्यसे ॥
यथा तु सलिलं राजन्क्रीडार्थमनुसंचरन् ।
उन्मज्जेच्च निमज्जेच्च चेष्टते च नराधिप ॥
एवं संसारगहने उन्मज्जननिमज्जने ।
कर्मयोगेन बध्यन्ते क्लिश्यन्ते चाल्पबुद्धयः ॥
ये तु प्राज्ञाः स्थिता मध्ये संसारान्तगतैषिणः
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ॥ ४ ॥

विदुरेण धृतराष्ट्रंप्रति जीवस्य गर्भवासप्रकारकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
कथं संसारगहनं विज्ञेयं वदतां वर ।
एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः ॥१
विदुर उवाच ।
जन्मप्रभृति भूतानां क्रियाः सर्वास्तु लक्षयन् ।
पूर्वमेवेह कलिले वसते किंचिदन्तरम् ॥ २
ततः स पञ्चमेऽतीते मासे मांसमकल्पयत् ।
ततः सर्वाङ्गसंपूर्णो गर्भो मासे तु जायते ॥ ३
अमेध्यमध्ये वसति मांसशोणितलेपने ।
ततस्तु वायुवेगेन ऊर्ध्वपादो ह्यधोमुखः ॥ ४
योनिद्वारमुपागम्य बहून्क्लेशान्समृच्छति ।
योनिसंपीडनाच्चैव पूर्वकर्मभिरन्वितः ॥ ५
तस्मान्मुक्तः स संसारादन्यान्पश्यत्युपद्रवान् ।
ग्रहास्तमनुगच्छन्ति सारमेया इवामिषम् ॥
ततः कालान्तरे प्राप्ते व्याधयश्चापि तं तथा ।
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः ॥
बद्धमिन्द्रियपाशैस्तं सङ्गकामुकमातुरम् ।
व्यसनान्यनुवर्तन्ते विविधानि नराधिप ॥
बाध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः ।
[तदा नावैति चैवायं प्रकुर्वन्साध्वसाधु वा ॥]
तत्रैनं परिपश्यन्ति ये ध्यानपरिनिष्ठिताः ।
अयं न बुध्यते तावद्यमलोकादिहागमे ॥
यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति ।
वाग्घीनस्य च या मात्रा इष्टानिष्टकृताऽस्य वै
भूय एवात्मनाऽऽत्मानं बध्यमानमुपैति सः॥
अहो विनिकृतो लोको लोभेन च वशीकृतः

---

अवरोप्यन्तमितिपाठे अवरोप्यमाणम् ॥ १३ ॥ आपाकात् कुलालकृतात् पात्रपाककूटात् । अथवा परिभृज्जन्तमिति झ. पाठः ॥ १४ ॥ एवं संसारगहनादुन्मज्जननिमज्जनात् इति क. छ. ट. पाठः ॥ १९ ॥ तृतीयोऽध्यायः ॥ ३ ॥

कलिलं शुक्रशोणितसंयोगः । एकरात्रोषितं कलिलं भवति पञ्चरात्राद्बुद्बुद इत्यादिशास्त्राद्गम्यते । तत्र कलिले वसते इति शेषः । किंचिदन्तरं पूर्वदिनापेक्षया वृद्ध्यवस्थां अल्पेन परिमाणान्तरेण ॥ २ ॥ पूर्वकर्मोपदानत इति पाठः ॥ ५ ॥ मृगयन्पर्यटन्नित्यं सारमेया इति ट. पाठः ॥ चतुर्थोऽध्यायः ॥ ४ ॥

लोभक्रोधमदोन्मत्तो नात्मानमवबुध्यते ॥ १२
कुलीनत्वे च रमते दुष्कुलीनान्विकुत्सयन् ।
धनदर्पेण दृप्तश्च दरिद्रान्परिकुत्सयन् ॥ १३
मूर्खानिति परानाह नात्मानं समवेक्षते ।
दोषान्क्षिपति चान्येषां नात्मानं शास्तुमिच्छति ॥
यदा प्राज्ञाश्च मूर्खाश्च धनवन्तश्च निर्धनाः ।
कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः ॥ १५
सर्वे पितृवनं प्राप्ताः स्वपन्ति विगतत्वचः ।
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनैः ॥ १६
किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः ।
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ॥ १७
यदा सर्वे समं न्यस्ताः स्वपन्ति धरणीतले ।
कस्मादन्योन्यमिच्छन्ति विप्रलब्धुमिहाबुधाः ॥ १८
प्रत्यक्षं च परोक्षं च यो निशम्य श्रुतिं त्विमाम् ।
[अध्रुवे जीवलोकेऽस्मिन्यो धर्ममनुपालयन् ।]
जन्मप्रभृति वर्तेत प्राप्नुयात्परमां गतिम् ॥ १९
एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते ।
स प्रमोक्षयते चैव पन्थानं मनुजेश्वर ॥ २०

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ॥ ५ ॥

विदुरेण धृतराष्ट्रं प्रति उत्तराध्याये वक्ष्यमाणसंसारादीनां कान्तारादित्वेन रूपणम् ॥ १ ॥

धृतराष्ट्र उवाच ।
यदिदं धर्मगहनं बुद्ध्या समनुबुध्यते ।
एतद्विस्तरतः सर्वं बुद्धिमार्गं प्रशंस मे ॥ १
विदुर उवाच ।
अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयंभुवे ।
यथा संसारगहनं वदन्ति परमर्षयः ॥ २
कश्चिन्महति कान्तारे वर्तमानो द्विजः किल ॥
महद्दुर्गमनुप्राप्तो वनं क्रव्यादसंकुलम् ॥ ३
सिंहव्याघ्रगजर्क्षौघैरतिघोरमहास्वनैः ।
पिशितादैरतिभयैर्महोग्राकृतिभिस्तथा ॥ ४
समन्तात्संपरिक्षिप्तं यस्माद्दृष्ट्वा महद्भयम् ।
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम् ॥ ५
अभ्युच्छ्रयन्ति रोमाणि विक्रियाश्च परंतप ।
स तद्वनं व्यनुसरन्संप्रधावन्नितस्ततः ॥ ६
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेदिति ।
स तेषां नाशमन्विच्छन्प्रद्रुतो भयपीडितः ।
न च निर्याति वै दूरं न वा तैर्विप्रयुज्यते ॥ ७
अथापश्यद्वनं गूढं समन्ताद्वागुरावृतम् ।
बाहुभ्यां संपरिष्वक्तः स्त्रिया परमघोरया ॥ ८
पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः ।
नभःस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ॥ ९
वनमध्ये च तत्राभूदुदपानः समावृतः ।
वल्लीभिस्तृणनद्धाभिर्गूढाभिरभिसंवृतः ॥ १०
पपात स द्विजस्तत्र निगूढे सलिलाशये ।
विलग्नश्चाभवत्तस्मिँल्लतासंतानसंकुले ॥ ११
पनसस्य यथा जातं वृन्तबद्धं महाफलम् ।
स तथा लम्बते तत्र ह्यूर्ध्वपादो ह्यधःशिराः ॥ १२
अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः ।
कूपमध्ये महानागमपश्यत महाबलम् ॥ १३
कूपवीनाहवेलायामपश्यत महागजम् ॥ १४
षड्वक्त्रं कृष्णशबलं द्विषट्कपदचारिणम् ।
क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम् ॥ १५
तस्य शाखाप्रशाखासु वृक्षशाखावलम्बिनः ।
नानारूपा मधुकरा घोररूपा भयावहाः ॥ १६
आसते मधु संवृत्य पूर्वमेव निकेतजाः ।
भूयोभूयः समीहन्ते मधूनि भरतर्षभ ॥ १७
स्वादनीयानि भूतानां यैर्बालो न वितृप्यते ।
तेषां मधूनां बहुधा धारा प्रस्रवते तदा ॥ १८
आलम्बमानः स पुमान्धारां पिबति सर्वदा ।
न चास्य तृष्णा विरता पिबमानस्य संकटे ॥ १९

अभीप्सति च तां नित्यमतृप्तः स पुनःपुनः ।
न चास्य जीविते राजन्निर्वेदः समजायत ॥ २०
तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ।
कृष्णाः श्वेताश्च तं वृक्षं निकृन्तन्ति स्म मूषिकाः २१
व्यालैश्च तद्वनं दुर्गं स्त्रिया च परमोग्रया ।
कूपाधस्ताच्च नागेन वीनाहे कुञ्जरेण च ॥ २२
वृक्षप्रपाताच्च भयं मूषिकेभ्यश्च पञ्चमम् ।
मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयम् ॥ २३
एवं स वसते तत्र क्षिप्तः संसारसागरे ।
न चैव जीविताशायां निर्वेदमुपगच्छति ॥ २४

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

पूर्वाध्याये कान्तारादित्वेन रूपितानां संसारादीनां स्वस्वशब्दैः प्रतिपादनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
अहो खलु महद्दुःखं कृच्छ्रवासं वसत्यसौ ।
कथं तस्य रतिस्तत्र तुष्टिर्वा वदतां वर ॥ १
स देशः क्वनु यत्रासौ वसते धर्मसंकटे ।
कथं वा स विमुच्येत नरस्तस्मान्महाभयात् ॥ २
एतन्मे सर्वमाचक्ष्व साधु चेष्टामहे तदा ।
कृपा मे महती जाता तस्याभ्युद्धरणेन हि ॥ ३
विदुर उवाच ।
उपाख्यानमिदं राजन्मोक्षविद्भिरुदाहृतम् ।
सुगतिं विन्दते येन परलोकेषु मानवः ॥ ४
उच्यते यत्तु कान्तारं महासंसार एव सः ।
वनं दुर्गं हि यच्चैतत्संसारगहनं हि तत् ॥ ५
ये च ते कथिता व्याला व्याधयस्ते प्रकीर्तिताः ॥ ६
या सा नारी बृहत्काया अध्यतिष्ठत तत्र वै ।
तामाहुस्तु जरां प्राज्ञा रूपवर्णविनाशिनीम् ॥ ७
स यस्तु कूपो नृपते स तु देहः शरीरिणाम् ।
यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः ।
अन्तकः सर्वभूतानां देहिनां प्राणहार्यसौ ॥ ८
कूपमध्ये च या जाता वल्ली यत्र स मानवः
प्रोतो ययाऽभवल्लग्नो जीविताशा शरीरिणाम् ॥ ९
स यस्तु कूपवीनाहे तं वृक्षं परिसर्पति ।
षड्वक्त्रः कुञ्जरो राजन्स तु संवत्सरः स्मृतः ॥१०
मुखानि ऋतवो मासाः पादा द्वादश कीर्तिताः ।
ये तु वृक्षं निकृन्तन्ति मूषिकाः पन्नगास्तथा ॥ ११
रात्र्यहानि तु तान्याहुर्भूतानां परिचिन्तकाः ।
ये ते मधुकरास्तत्र कामास्ते परिकीर्तिताः ॥ १२
यास्तु ता बहुशो धाराः स्रवन्ति मधुनिस्रवम् ।
तांस्तु कामरसान्विन्द्याद्यत्र सज्जन्ति मानवाः १३
एवं संसारचक्रस्य परिवृत्तिं विदुर्बुधाः ।
येन संसारचक्रस्य पाशांश्छिन्दन्ति सर्वथा ॥ १४

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

विदुरेण धृतराष्ट्रंप्रति तत्त्वकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
अहोऽभिहितमाख्यानं भवता तत्त्वदर्शिना ।
भूय एव तु मे हर्षः श्रोतुं वागमृतं तव ॥ १
विदुर उवाच ।
शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरम् ।
यच्छ्रुत्वा विप्रमुच्यन्ते संसाराद्धि विचक्षणाः ॥ २

उपमानमिदं राजन्निति झ. पाठः ॥ ४ ॥
षष्ठोऽध्यायः ॥ ६ ॥

यथा तु पुरुषो राजन्दीर्घमध्वानमास्थितः ।
क्वचित्क्वचिच्छ्रमस्थानं कुरुते वासमेव वा ॥ ३
एवं संसारपर्याये गर्भवासेषु भारत ।
कुर्वन्ति दुर्बुधा वासं मुच्यन्ते तत्र पण्डिताः ॥ ४
तस्मादध्वानमेवैतमाहुः शास्त्रविदो जनाः ।
यत्तत्संसारगहनं वनमाहुर्मनीषिणः ॥ ५
सोयं लोकसमावर्तो मर्त्यानां भरतर्षभ ।
चराणां स्थावराणां च न गृध्येत्तत्र पण्डितः ॥ ६
शारीरा मानसाश्चैव मर्त्यानां व्याधयश्च ये ।
प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता बुधैः ॥ ७
क्लिश्यमानाश्च तैर्नित्यं मार्यमाणाश्च भारत ।
स्वकर्मभिर्महाव्यालैर्नोद्विजन्त्यल्पबुद्धयः ॥ ८
अथापि तैर्विमुच्येत व्याधिभिः पुरुषो नृप ।
आवृणोत्येव तं पश्चाज्जरा रूपविनाशिनी ॥ ९
शब्दरूपरसस्पर्शगन्धैश्च विविधैरपि ।
मज्जमानं महापङ्के निरालम्बे समन्ततः ॥ १०
संवत्सरर्तवो मासाः पक्षाहोरात्रसंधयः ।
क्रमेणास्य प्रवृञ्जन्ति रूपमायुस्तथैव च ॥ ११
एते कालस्य विधयो नैताञ्जानन्ति दुर्बुधाः ।
धात्राऽभिलिखितान्याहुः सर्वभूतानि कर्मणा १२
रथः शरीरं भूतानां सत्वमाहुस्तु सारथिम् ।
इन्द्रियाणि हयानाहुः कर्मबुद्धिस्तु रश्मयः ॥ १३
तेषां हयानां यो वेगं धावतामनु धावति ।
सतु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्तते ॥ १४
यस्तान्संयमते बुद्ध्या संयतो न निवर्तते ।
यस्तु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्तते ॥ १५
[भ्रममाणा न मुह्यन्ति संसारे न भ्रमन्ति ते ।
संसारे भ्रमतां राजन्दुःखमेतद्धि जायते ॥ १६
तस्मादस्य निवृत्त्यर्थं यत्नमेवाचरेद्बुधः ।
उपेक्षा नात्र कर्तव्या शतशाखः प्रवर्धते ॥ १७
यतेन्द्रियो नरो राजन्क्रोधलोभनिराकृतः ।
संतुष्टः सत्यवादी यः स शान्तिमधिगच्छति ॥] १८
याम्यमाहू रथं ह्येनं मुह्यन्ते येन दुर्बुधाः ।
स चैतत्प्राप्नुयाद्राजन्यत्त्वं प्राप्तो नराधिप ॥ १९
अनुतर्षुलमेवैतद्दुःखं भवति मारिष ।
राज्यनाशः सुहृन्नाशः सुतनाशश्च भारत ।
साधुः परमदुःखानां दुःखभैषज्यमारभेत् ॥ २०
ज्ञानौषधमवाप्येह दूरपारं महौषधम् ।
छिन्द्याद्दुःखमहाव्याधिं नरः संयतमानसः ॥ २१
न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः ।
तस्मान्मोचयते दुःखाद्यथात्मा स्थिरनिश्चयः ॥ २२
तस्मान्मैत्रं समास्थाय शीलमापदि भारत ।
दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः ॥ २३
शीलरश्मिसमायुक्ते स्थितो यो मानसे रथे ।
त्यक्त्वा मृत्युभयं राजन्ब्रह्मलोकं स गच्छति ॥ २४
अभयं सर्वभूतेभ्यो यो ददाति महीपते ।
स गच्छति परं स्थानं विष्णोः पदमनामयम् ॥ २५
न तत्क्रतुसहस्रेण नोपवासैश्च नित्यशः ।
अभयस्य च दानेन यत्फलं प्राप्नुयान्नरः ॥ २६
न ह्यात्मनः प्रियतरं किंचिद्भूतेषु निश्चितम् ।
अनिष्टं सर्वभूतानां मरणं नाम भारत ॥ २७
तस्मात्सर्वेषु भूतेषु दया कार्या विपश्चिता ॥ २८
नानायोगसमायुक्ता बुद्धिजालेन संवृताः ।
असूक्ष्मदृष्टयो मन्दा भ्राम्यन्ते तत्रतत्र ह ।
सुसूक्ष्मदृष्टयो राजन्व्रजन्ति ब्रह्मसाम्यताम् ॥ २९
एवं ज्ञात्वा महाप्राज्ञ स तेषामौर्ध्वदैहिकम् ।
कर्तुमर्हति तेनैव फलं प्राप्स्यति वै भवान् ॥ ३०

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

भ्रमाच्छ्रान्त इति झ. पाठः ॥ ३ ॥ वार्यमाणाश्च भारतेति झ. पाठः ॥ ८ ॥ अथापि तैर्न मुच्येतेति क. पाठः ॥ ९ ॥ मज्जमांसमहापङ्के इति झ. पाठः ॥ १० ॥ ये तु संसारचक्रेऽस्मिन्निति झ. पाठः ॥ १५ ॥ शतशाखः संसारवृक्षः ॥ १७ ॥ क्रोधलोभौ निराकृतौ येन सः ॥ १८ ॥ याम्यं यमलोकप्रापकं संसारगहनम् ॥ १९ ॥ अनुतर्षुल तृष्णाशीलं लक्षीकृत्य । अनुकर्षणमेवैतद्दुःखं भवति भारतेति क. छ. पाठः ॥ २० ॥ दूरपारं ब्रह्मज्ञानम् ॥ २१ ॥ ब्रह्मणः ब्रह्मलोकस्य प्रापका इति शेषः ॥ २३ ॥ सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

व्यासेन धृतराष्ट्रस्य शोकापनोदनम् ॥ १ ॥

वैशंपायन उवाच ।
विदुरस्य तु तद्वाक्यं निशम्य कुरुसत्तमः ।
पुत्रशोकाभिसंतप्तः पपात भुवि मूर्छितः ॥ १
तं तथा पतितं भूमौ निःसंज्ञं प्रेक्ष्य बान्धवाः ।
कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा ॥ २
सञ्जयः सुहृदश्चान्ये द्वास्था ये चास्य संमताः ।
जलेन सुखशीतेन तालवृन्तैश्च भारत ॥ ३
पस्पर्शुश्च करैर्गात्रं वीजमानाश्च यत्नतः ।
अन्वासत चिरं कालं धृतराष्ट्रं तथाविधम् ॥ ४
अथ दीर्घस्य कालस्य लब्धसंज्ञो महीपतिः ।
विललाप चिरं कालं पुत्राधिभिरभिप्लुतः ॥ ५
धिगस्तु खलु मानुष्यं मानुष्ये च परिग्रहम् ।
यतोमूलानि दुःखानि संभवन्ति पुनःपुनः ॥ ६
मित्रनाशेऽर्थनाशे च ज्ञातिसंबन्धिनामपि ।
प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो ॥ ७
येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति ।
येनाभिभूतः पुरुषो मरणं प्रतिपद्यते ॥ ८
तदिदं मरणं प्राप्तं मया भाग्यविपर्ययात् ।
[तस्यान्तं नाधिगच्छामि ऋते प्राणविमोक्षणात्] ९
तच्चैवाहं करिष्यामि अद्यैव द्विजसत्तम ।
इत्युक्त्वा तु महात्मानं पितरं ब्रह्मवित्तमम् ॥ १०
धृतराष्ट्रोऽभवन्मूढः स शोकं परमं गतः ।
अभूच्च तूष्णीं राजाऽसौ ध्यायमानो महीपतिः ११
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनः प्रभुः ।
पुत्रशोकाभिसंतप्तं पुत्रं वचनमब्रवीत् ॥ १२
व्यास उवाच ।
धृतराष्ट्र महाबाहो शृणु वक्ष्यामि पुत्रक ।
श्रुतवानसि मेधावी धर्मार्थकुशलः प्रभो ॥ १३
न तेऽस्त्यविदितं किंचिद्वेदितव्यं परंतप ।
अनित्यतां हि भूतानां विजानासि न संशयः ॥ १४
अध्रुवे जीवलोके च स्थाने वा शाश्वते सति ।
जीविते मरणान्ते च कस्माच्छोचसि पुत्रक ॥ १५
प्रत्यक्षं तव राजेन्द्र वैरस्यास्य समुद्भवः ।
पुत्रं ते कारणं कृत्वा कालयोगेन निर्मितः ॥ १६
अवश्यं भवितव्ये च कुरूणां संक्षये नृप ।
कस्माच्छोचसि ताञ्शूरान्गतान्परमिकां गतिम् १७
जानता च महाबाहो विदुरेण महात्मना ।
यतितं सर्वयत्नेन शमं प्रति जनेश्वर ॥ १८
न च दैवकृतो मार्गः शक्यो भूतेन केनचित् ।
घटताऽपि चिरं कालं नियन्तुमिति मे मतिः ॥ १९
देवतानां हि यत्कार्यं मया प्रत्यक्षतः श्रुतम् ।
तत्तेऽहं संप्रवक्ष्यामि यथा स्थैर्यं भवेत्तव ॥ २०
पुराऽहं परितो यातः सभामैन्द्रीं जितक्लमः ।
अपश्यं तत्र च सदा समवेतान्दिवौकसः ॥ २१
नारदप्रमुखांश्चापि सर्वान्देवर्षिसत्तमान् ।
तत्र चापि मया दृष्टा पृथिवी पृथिवीपते ॥ २२
कार्यार्थमुपसंपन्ना देवतानां समीपतः ।
उपगम्य तदा धात्री देवानाह समागतान् ॥ २३
यत्कार्यं मम युष्माभिर्ब्रह्मणः सदने तदा ।
प्रतिज्ञातं महाभागास्तच्छीघ्रं संविधीयताम् ॥ २४
तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः ।
उवाच वाक्यं प्रहसन्प्रभुस्तां देवसंसदि ॥ २५
धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठः शतस्य वै ।
दुर्योधन इति ख्यातः स ते कार्यं करिष्यति ॥ २६
तं च प्राप्य महीपालं कृतकृत्या भविष्यसि ।
तस्यार्थे पृथिवीपालाः कुरुक्षेत्रं समागताः ॥ २७
अन्योन्यं घातयिष्यन्ति दृढैः शस्त्रैः प्रहारिणः ।
ततस्ते भविता देवि भारस्य युधि नाशनम् ॥ २८
गच्छ शीघ्रं स्वकं स्थानं लोकान्धारय शोभने ।
स एष ते सुतो राजँल्लोकसंहारकारणात् ॥ २९
कलेरंशः समुत्पन्नो गान्धार्या जठरे नृप ।
अमर्षी बलवाञ्शूरः क्रोधनो दुष्प्रसाधनः ॥ ३०
दैवयोगात्समुत्पन्ना भ्रातरस्तस्य तादृशाः ।

कालः संहारकारणादिति क. छ. ठ. पाठः ॥ २९ ॥

शकुनिर्मातुलश्चैव कर्णश्च परमः सखा ॥ ३१
समुत्पन्ना विनाशार्थं पृथिव्यां सहिता नृपाः ।
[यादृशो जायते राजा तादृशोऽस्य जनो भवेत्॥३२
अधर्मो धर्मतां याति स्वामी चेद्धार्मिको भवेत् ।
स्वामिनो गुणदोषाभ्यां भृत्याः स्युर्नात्र संशयः३३
दुष्टं राजानमासाद्य गतास्ते तनया नृप ।]
एतमर्थं महाबाहो नारदो वेद तत्त्ववित् ॥ ३४
आत्मापराधात्पुत्रास्ते विनष्टाः पृथिवीपते ।
मा ताञ्शोचस्व राजेन्द्र न हि शोकेऽस्ति कारणम् ॥
न हि ते पाण्डवाः स्वल्पमपराध्यन्ति भारत ।
पुत्रास्तव दुरात्मानो यैरियं घातिता मही ॥ ३६
नारदेन च भद्रं ते पूर्वमेव न संशयः ।
युधिष्ठिरस्य समितौ राजसूये निवेदितम् ॥ ३७
पाण्डवाः कौरवाः सर्वे समासाद्य परस्परम् ।
नभविष्यन्ति कौन्तेय यत्ते कृत्यं तदाचर ॥ ३८
नारदस्य वचः श्रुत्वा तथाऽकुर्वत पाण्डवाः ।
एतत्ते सर्वमाख्यातं देवगुह्यं सनातनम् ॥ ३९
कथं ते शोकनाशः स्यात्प्राणेषु च दया प्रभो ।
स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिम् ॥ ४०
एष चार्थो महाबाहो पूर्वमेव मया श्रुतः ।
कथितो धर्मराजस्य राजसूये कुरूत्तम ॥ ४१
यतितं धर्मपुत्रेण मया गुह्ये निवेदिते ।
अविग्रहे कौरवाणां दैवं तु बलवत्तरम् ॥ ४२
अनतिक्रमणीयो हि विधी राजन्कथंचन ।
कृतान्तस्य तु भूतेन स्थावरेण चरेण च ॥ ४३
भवान्धर्मपरो यत्र बुद्धिश्रेष्ठश्च भारत ।
मुह्यते प्राणिनां ज्ञात्वा गतिं चागतिमेव च ॥ ४४
त्वां तु शोकेन संतप्तं मुह्यमानं मुहुर्मुहुः ।
ज्ञात्वा युधिष्ठिरो राजा प्राणानपि परित्यजेत् ॥ ४५
कृपालुर्नित्यशो वीरस्तिर्यग्योनिगतेष्वपि ।
स कथं त्वयि राजेन्द्र कृपां नैव करिष्यति ॥ ४६
मम चैव नियोगेन विधेश्चाप्यनिवर्तनात् ।
पाण्डवानां च कारुण्यात्प्राणान्धारय भारत ॥ ४७
एवं ते वर्तमानस्य लोके कीर्तिर्भविष्यति ।
धर्मार्थः सुमहांस्तात तप्तं स्याच्च तपश्चिरात् ॥ ४८
पुत्रशोकं समुत्पन्नं हुताशं ज्वलितं यथा ।
प्रज्ञाम्भसा महाराज निर्वापय सदा सता ॥ ४९
वैशंपायन उवाच ।
तच्छ्रुत्वा तस्य वचनं व्यासस्यामिततेजसः ।
मुहूर्तं समनुध्यायन्धृतराष्ट्रोऽभ्यभाषत ॥ ५०
महता शोकजालेन प्रणुन्नोऽस्मि द्विजोत्तम ।
नात्मानमवबुध्यामि मुह्यमानो मुहुर्मुहुः ॥ ५१
इदं तु वचनं श्रुत्वा तव देवनियोगजम् ।
धारयिष्याम्यहं प्राणान्यतिष्ये च न शोचितुं ५२
एतच्छ्रुत्वा तु वचनं व्यासः सत्यवतीसुतः ।
धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत ॥ ५३

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥*

---

नारदेन समाख्यातमिति क. छ. ठ. पाठः ॥ ३७ ॥ तदाऽशोचन्त पाण्डवा इति झ. पाठः ॥ ३९ ॥ धर्मश्च सुमहांस्तात तप्तस्य तपसश्चिरादिति क. छ. ठ. पाठः ॥ ४८ ॥ अष्टमोऽध्यायः ॥ ८ ॥

* अत्र झ. पाठे श्लोकद्वयसहित एकोऽध्यायोऽधिको दृश्यते ।

[जनमेजय उवाच ।
गते भगवति व्यासे धृतराष्ट्रो महीपतिः ।
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥ १
तथैव कौरवो राजा धर्मपुत्रो महामनाः ।
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः ॥ २
अश्वत्थाम्नः श्रुतं कर्म शापश्चान्योन्यकारितः ।
वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ॥ ३
वैशंपायन उवाच ।
हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
सञ्जयो विगतप्रज्ञो धृतराष्ट्रमुपस्थितः ॥ ४
सञ्जय उवाच ।
आगम्य नानादेशेभ्यो नानाजनपदेश्वराः ।
पितृलोकं गता राजन्सर्वे तव सुतैः सह ॥ ५

विगता प्रज्ञा व्यासदत्तं दिव्यज्ञानं यस्य स विगतप्रज्ञः ॥ ४ ॥

## नवमोऽध्यायः ॥ ९ ॥

धृतराष्ट्रेण गान्धारीप्रभृतिभिः स्त्रीभिः सह मृतजनावलोकनाय रणाङ्गणंप्रति प्रयाणम् ॥ १ ॥

'जनमेजय उवाच ।
गते व्यासे तु धर्मात्मा धृतराष्ट्रो महीपतिः ।
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥ १
वैशंपायन उवाच ।
एतच्छ्रुत्वा नरश्रेष्ठश्चिरं ध्यात्वा त्वचेतनः ।
सञ्जयं योजयेत्युक्त्वा विदुरं प्रत्यभाषत ॥ २
क्षिप्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः ।
कुन्तीं चैव तथा क्षत्तः समानय ममाऽन्तिकम् ॥' ३
एवमुक्त्वा स धर्मात्मा विदुरं धर्मवित्तमम् ।
शोकविप्रहतज्ञानो यानमेवान्वरोहत ॥ ४
गान्धारी पुत्रशोकार्ता भर्तुर्वचननोदिता ।
सह कुन्त्या यतो राजा सह स्त्रीभिरुपाद्रवत् ॥ ५
ताः समासाद्य राजानं भृशं शोकसमन्विताः ।
आमन्त्र्यान्योन्यमायस्ता भृशमुच्चुक्रुशुस्ततः ॥ ६
ताः समाश्वासयत्क्षत्ता ताभ्यश्चार्ततरः स्वयम् ।
अश्रुकण्ठीः समारोप्य ततोऽसौ निर्ययौ पुरात् ॥ ७
ततः प्रणादः संजज्ञे सर्वेषु कुरुवेश्मसु ।
आकुमारं पुरं सर्वमभवच्छोककर्शितम् ॥ ८
अदृष्टपूर्वा या नार्यः पुरा देवगणैरपि ।

समारोप्य वाहनेष्विति शेषः ॥ ७ ॥

याच्यमानेन सततं तव पुत्रेण भारत ।
घातिता पृथिवी सर्वा वैरस्यान्तं विधित्सता ॥ ६
पुत्राणामथ पौत्राणां पितॄणां च महीपते ।
आनुपूर्व्येण सर्वेषां प्रेतकार्याणि कारय ॥ ७
वैशंपायन उवाच ।
तच्छ्रुत्वा वचनं घोरं सञ्जयस्य महीपतिः ।
गतासुरिव निश्चेष्टो न्यपतत्पृथिवीतले ॥ ८
तं शयानमुपागम्य पृथिव्यां पृथिवीपतिम् ।
विदुरः सर्वधर्मज्ञ इदं वचनमब्रवीत् ॥ ९
उत्तिष्ठ राजन्किं शेषे मा शुचो भरतर्षभ ।
एषा वै सर्वसत्वानां लोकेश्वर परा गतिः ॥ १०
अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ ११
न शोचन्मृतमन्वेति न शोचन्म्रियते नरः ।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ १२
अयुध्यमानो म्रियते युध्यमानस्तु जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ १३
कालः कर्षति भूतानि सर्वाणि विविधानि च ।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ १४
यथा वायुस्तृणाग्राणि संवर्तयति सर्वतः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ १५
एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ १६
यांश्चापि निहतान्युद्धे राजंस्त्वमनुशोचसि ।
न शोच्या हि महात्मानः सर्वे ते त्रिदिवं गताः ॥ १७
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया ।
तथा स्वर्गमुपायान्ति यथा शूरास्तनुत्यजः ॥ १८
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ १९
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः ।
ह्रूयमानाञ्शरांश्चैव सेहुरुत्तमपूरुषाः ॥ २०
एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम् ।
न युद्धादधिकं किंचित्क्षत्रियस्येह विद्यते ॥ २१
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः ।
आशिषं परमां प्राप्ता न शोच्याः सर्व एव हि ॥ २२
आत्मनाऽऽत्मानमाश्वास्य मा शुचः पुरुषर्षभ ।
नाद्य शोकाभिभूतस्त्वं कार्यमुत्स्रष्टुमर्हसि ॥ २३

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि अध्यायः ॥

वैशंपायन उवाच ।
विदुरस्य तु तद्वाक्यं श्रुत्वा तु पुरुषर्षभः ।
युज्यतां यानमित्युक्त्वा पुनर्वचनमब्रवीत् ॥ १
धृतराष्ट्र उवाच ।
शीघ्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः ।
वधूं कुन्तीमुपादाय याश्चान्यास्तत्र योषितः ॥] २

शोकस्यातिगाढत्वात्पुनर्विदुरेणोक्तं अभावादीनीत्यादि ॥ ११ ॥ संवर्तयति वर्तुलयति कम्पयति वा ॥ १५ ॥ आचक्षे कथयामि ॥ २१ ॥ कार्यं अवश्यकर्तव्यमुदकदानादि ॥ २३ ॥ अध्यायः ॥

पृथग्जनेन दृश्यन्ते तास्तदा निहतेश्वराः ॥ ९
प्रकीर्य केशान्सुशुभान्भूषणान्यवमुच्य च ।
एकवस्त्रधरा नार्यः परिपेतुरनाथवत् ॥ १०
श्वेतपर्वतरूपेभ्यो गृहेभ्यस्ता निराक्रमन् ।
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ॥ ११
तान्युदीर्णानि नारीणां तदा वृन्दान्यनेकशः ।
शोकार्तान्यद्रवन्राजन्किशोरीणामिवाङ्गणे ॥ १२
प्रगृह्य बाहून्क्रोशन्त्यः पुत्रान्भ्रातॄन्पितॄनपि ।
दर्शयन्ति हता हि स्म युगान्ते लोकसंक्षयम् ॥ १३
विलपन्त्यो रुदन्त्यश्च धावमानास्ततस्ततः ।
शोकेनोपहतज्ञानाः कर्तव्यं न प्रजज्ञिरे ॥ १४
व्रीडां जग्मुः पुरा याः स्म सखीनामपि योषितः ।
ता एकवस्त्रा निर्लज्जाः श्वश्रूणां पुरतोऽभवन् ॥ १५
परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयन्ति याः ।
ताः शोकविह्वला राजन्नवैक्षन्त परस्परम् ॥ १६
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः ।
निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ॥ १७
शिल्पिनो वणिजो वैश्याः सर्वे कर्मोपजीविनः ।
ते पार्थिवं पुरस्कृत्य निर्ययुर्नगराद्बहिः ॥ १८
तेषां विक्रोशमानानामार्तानां कुरुसंक्षये ।
प्रादुरासीन्महाञ्शब्दो व्यथयन्भुवनान्युत ॥ १९
युगान्तकाले संप्राप्ते भूतानां दह्यतामिव ।
अभावस्योदयः प्राप्त इति भूतानि मेनिरे ॥ २०
भृशमुद्विग्नमनसस्ते पौराः कुरुसंक्षये ।
प्राक्रोशन्त महाराज स्वनुरक्तास्तदा भृशम् ॥ २१

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

मृतबन्धुदिदृक्षया समरभूमिं गच्छतो धृतराष्ट्रस्य मध्येमार्गं कृपकृतवर्मद्रौणिभिः समागमः ॥ १ ॥ तेषां त्रयाणां धृतराष्ट्राश्वासनपूर्वकं स्वाभिमतदेशगमनम् ॥ २ ॥

वैशंपायन उवाच ।
क्रोशमात्रं ततो गत्वा ददृशुस्तान्महारथान् ।
शारद्वतं कृपं द्रौणिं कृतवर्माणमेव च ॥ १
ते तु दृष्ट्वैव राजानं प्रज्ञाचक्षुषमीश्वरम् ।
अश्रुकण्ठा विनिःश्वस्य रुदन्तमिदमब्रुवन् ॥ २
पुत्रस्तव महाराज कृत्वा कर्म सुदुष्करम् ।
गतः सानुचरो राजञ्शक्रलोकं महीपते ॥ ३
दुर्योधनबलान्मुक्ता वयमेव त्रयो रथाः ।
सर्वमन्यत्परिक्षीणं सैन्यं ते भरतर्षभ ॥ ४
इत्येवमुक्त्वा राजानं कृपः शारद्वतस्ततः ।
गान्धारीं पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ५
अभीता युध्यमानास्ते घ्नन्तः शत्रुगणान्बहून् ।
वीरकर्माणि कुर्वाणाः पुत्रास्ते निधनं गताः ॥ ६
ध्रुवं संप्राप्य लोकांस्ते निर्मलाञ्शस्त्रनिर्जितान् ।
भास्वरं देहमास्थाय विहरन्त्यमरा इव ॥ ७
सर्वे ह्यभिमुखा राज्ञि युध्यमाना हता युधि ।
न हि कश्चिद्धि शूराणां युध्यमानः पराङ्मुखः ।
शस्त्रेण निधनं प्राप्तो न च कश्चित्कृताञ्जलिः ॥ ८
एतां तां क्षत्रियस्याहुः पुराणाः परमां गतिम् ।
शस्त्रेण निधनं सङ्ख्ये तान्न शोचितुमर्हसि ॥ ९
न चापि शत्रवस्तेषां ऋध्यन्ते राज्ञि पाण्डवाः ।
शृणु यत्कृतमस्माभिरश्वत्थामपुरोगमैः ॥ १०
अधर्मेण हतं श्रुत्वा भीमसेनेन ते सुतम् ।
सुप्तं शिबिरमासाद्य पाण्डूनां कदनं कृतम् ॥ ११
पाञ्चाला निहताः सर्वे धृष्टद्युम्नपुरोगमाः ।
द्रुपदस्यात्मजाश्चैव द्रौपदेयाश्च पातिताः ॥ १२
तथा विशसनं कृत्वा पुत्रशत्रुगणस्य ते ।
प्राद्रवाम रणे स्थातुं न हि शक्ष्यामहे त्रयः ॥ १३

पृषत्यश्चित्रहरिण्यः ॥ ११ ॥ किशोरीणां अश्वशावकीनां । अङ्गणे नृत्यशिक्षाभूमौ ॥ १२ ॥ नवमोऽध्यायः ॥ ९ ॥

ते हि शूरा महेष्वासाः क्षिप्रमेष्यन्ति पाण्डवाः ।
अमर्षवशमापन्ना वैरं प्रतिजिहीर्षवः ॥ १४
ते हतानात्मजाञ्श्रुत्वा प्रमत्ताः पुरुषर्षभाः ।
अन्विष्यन्तः पदं शूराः क्षिप्रमेष्यन्ति पाण्डवाः १५
तेषां तु किल्बिषं कृत्वा संस्थातुं नोत्सहामहे ।
अनुजानीहि नो राज्ञि मा च शोके मनः कृथाः १६
राजंस्त्वमनुजानीहि धैर्यमातिष्ठ चोत्तमम् ।
दिष्टान्तं पश्य चापि त्वं क्षात्रं धर्मं च केवलम् ॥१७
इत्येवमुक्त्वा राजानं कृत्वा चाभिप्रदक्षिणम् ।
कृपश्च कृतवर्मा च द्रोणपुत्रश्च भारत ॥ १८
अवेक्षमाणा राजानं धृतराष्ट्रं मनीषिणम् ।
गङ्गामनु महाराज तूर्णमश्वानचोदयन् ॥ १९
अपक्रम्य तु ते राजन्सर्वे एव महारथाः ।
आमन्त्र्यान्योन्यमुद्विग्नास्त्रिधा ते प्रययुस्तदा ॥ २०
जगाम हास्तिनपुरं कृपः शारद्वतस्तदा ।
स्वमेव राष्ट्रं हार्दिक्यो द्रौणिर्व्यासाश्रमं ययौ ॥२१
एवं ते प्रययुर्वीरा वीक्षमाणाः परस्परम् ।
भयार्ताः पाण्डुपुत्राणामागस्कृत्वा महात्मनाम् २२
समेत्य वीरा राजानं तदा त्वनुदिते रवौ ।
विप्रजग्मुर्महात्मानो यथेष्टकमरिंदमाः ॥ २३
[समासाद्याथ वै द्रौणिं पाण्डुपुत्रा महारथाः ।
व्यजयंस्ते रणे राजन्विक्रम्य तदनन्तरम् ॥] २४

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

युधिष्ठिरेण कृष्णादिभिः सह धृतराष्ट्रसमीपमेत्याभिवादनम् ॥ १ ॥ धृतराष्ट्रेण युधिष्ठिरं मृदुलमालिङ्ग्य पश्चाद्भावज्ञेन कृष्णेन पुरतः स्थापितलोहभीमस्य दृढालिङ्गनेन भञ्जनम् ॥ २ ॥

वैशंपायन उवाच ।
हतेषु सर्वसैन्येषु धर्मराजो युधिष्ठिरः ।
शुश्रुवे पितरं वृद्धं निर्यान्तं गजसाह्वयात् ॥ १
सोऽभ्ययात्पुत्रशोकार्तः पुत्रशोकपरिप्लुतः ।
शोचमानो महाराज भ्रातृभिः सहितस्तदा ॥ २
अन्वीयमानो वीरेण दाशार्हेण महात्मना ।
युयुधानेन च तथा तथैव च युयुत्सुना ॥ ३
तमन्वगात्सुदुःखार्ता द्रौपदी शोककर्शिता ।
सह पाञ्चालयोषिद्भिर्यास्तत्रासन्समागताः ॥ ४
संग्राममनु वृन्दानि स्त्रीणां भरतसत्तम ।
कुररीणामिवार्तानां क्रोशन्तीनां ददर्श ह ॥ ५
ताभिः परिवृतो राजा क्रोशन्तीभिः सहस्रशः ।
ऊर्ध्वबाहुभिरार्ताभी रुदतीभिः प्रियाप्रियैः ॥ ६
क्व नु धर्मज्ञता राज्ञः क्व नु साद्यानृशंसता ।
यच्चावधीत्पितॄन्भ्रातॄन्गुरुपुत्रान्सखीनपि ॥ ७
घातयित्वा कथं द्रोणं भीष्मं चापि पितामहम् ।
मनस्तेऽभून्महाबाहो हत्वा चापि जयद्रथम् ॥ ८
किं नु राज्येन ते कार्यं पितॄन्भ्रातॄनपश्यतः ।
अभिमन्युं च दुर्धर्षं द्रौपदेयांश्च भारत ॥ ९
वैशंपायन उवाच ।
अतीत्य ता महाबाहुः क्रोशन्तीः कुररीरिव ।
ववन्दे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः ॥ १०
ततोऽभिवाद्य पितरं क्रमेणामित्रकर्शनाः ।
न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्वशः ॥ ११
तमात्मजान्तकरणं पिता पुत्रवधार्दितः ।
अप्रीयमाणः शोकार्तः पाण्डवं परिषस्वजे ॥ १२
धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत ।
दुष्टात्मा भीममन्वैच्छद्दिधक्षुरिव पावकः ॥ १३
स कोपपावकस्तस्य शोकवायुसमीरितः ।
भीमसेनमयं दावं दिधक्षुरिव दृश्यते ॥ १४

वैरं प्रतिचिकीर्षव इति क. पाठः ॥ १४ ॥ दिष्टान्तं मरणम् ॥ १७ ॥ तदनन्तरं कृपाचार्यकृतवर्मभ्यां वियोगानन्तरम् ॥ २४ ॥ दशमोऽध्यायः ॥ १० ॥

स गङ्गामन्विति झ. पाठः ॥ ५ ॥ प्रियाप्रियैः पाण्डवा प्रियाः अभिमन्युप्रभृतयः अप्रियाः दुर्योधनादयः तैर्हेतुभिः क्रोशन्तीभिरिति संबन्धः ॥ ६ ॥

तस्य संकल्पमाज्ञाय भीमं प्रत्यशुभं हरिः ।
भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ।।१५
प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः ।
संविधानं महाप्राज्ञस्तत्र चक्रे जनार्दनः ।। १६
उपगुह्यैव पाणिभ्यां भीमसेनमयस्मयम् ।
बभञ्ज बलवान्राजा मन्यमानो वृकोदरम् ।। १७
नागायुतसमप्राणः स राजा भीममायसम् ।
भङ्क्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् ।।
ततः पपात मेदिन्यां तथैव रुधिरोक्षितः ।
प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ।। १९
प्रत्यगृह्णाच्च तं विद्वान्सूतो गावल्गणिस्तदा ।
मैवमित्यब्रवीच्चैनं शमयन्सान्त्वयन्निव ।। २०
हतो भीम इति ज्ञात्वा गतमन्युर्महामनाः ।
हाहाभीमेति चुक्रोश नृपः शोकसमन्वितः ।। २१
तं विदित्वा गतक्रोधं भीमसेनवधार्दितम् ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ।। २२

मा शुचो धृतराष्ट्र त्वं नैव भीमस्त्वया हतः ।
आयसी प्रतिमा ह्येषा त्वया निष्पातिता विभो ।।२३
त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ ।
मयाऽपकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः ।। २४
न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन ।
कः सहेत महाबाहो बाह्वोर्विग्रहणं नरः ।। २५
यथान्तकमनुप्राप्य जीवन्कश्चिन्न मुच्यते ।
एवं बाह्वन्तरं प्राप्य तव जीवेन्न कश्चन ।। २६
तस्मात्पुत्रेण या तेऽसौ प्रतिमा कारिताऽऽयसी ।
भीमस्य सेयं कौरव्य तवैवोपहृता मया ।। २७
पुत्रशोकाभिसंतप्तं धर्मादपकृतं मनः ।
तव राजेन्द्र तेन त्वं भीमसेनं जिघांससि ।। २८
न त्वेतत्ते क्षमं राजन्हन्यास्त्वं यद्वृकोदरम् ।
न हि पुत्रा महाराज जीवेयुस्ते कथंचन ।। २९
तस्माद्यत्कृतमस्माभिर्मन्यमानैः शमं प्रति ।
अनुमन्यस्व तत्सर्वं मा च शोके मनः कृथाः ।। ३०

।। इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि एकादशोऽध्यायः ।। ११ ।।

---

## द्वादशोऽध्यायः ।। १२ ।।

कृष्णवाक्याद्गतमन्युना धृतराष्ट्रेण भीमादीनामालिङ्गनम् ।। १ ।।

---

वैशंपायन उवाच ।
तत एनमुपातिष्ठञ्शौचार्थं परिचारकाः ।
कृतशौचं पुनश्चैनं प्रोवाच मधुसूदनः ।। १
राजन्नधीता वेदास्ते शास्त्राणि विविधानि च ।
श्रुतानि च पुराणानि राजधर्माश्च केवलाः ।। २
एवं विद्वान्महाप्राज्ञः समर्थः सन्बलाबले ।
आत्मापराधात्कस्मात्त्वं कुरुषे कोपमीदृशम् ।। ३
उक्तवांस्त्वां तदैवाहं भीष्मद्रोणौ च भारत ।
विदुरः सञ्जयश्चैव वाक्यं राजन्न तत्कृथाः ।। ४
स वार्यमाणो नास्माकमकार्षीर्वचनं तदा ।
पाण्डवानधिकाञ्जानन्बले शौर्ये च कौरव ।। ५

राजा हि यः स्थिरप्रज्ञः स्वयं दोषानवेक्षते ।
देशकालविभागं च परं श्रेयः स विन्दति ।। ६
उच्यमानस्तु यः श्रेयो गृह्णीते नो हिताहिते ।
आपदः समनुप्राप्य सोऽभ्येति विलयं किल ।।७
ततोऽन्यवृत्तमात्मानं समवेक्षस्व भारत ।
राजंस्त्वं ह्यविधेयात्मा दुर्योधनवशे स्थितः ।। ८
आत्मापराधादापन्नस्तत्किं भीमं जिघांससि ।
तस्मात्संयच्छ कोपं त्वं स्वमनुस्मृत्य दुष्कृतम् ।। ९
यस्तु तां स्पर्धया क्षुद्रः पाञ्चालीमानयत्सभाम् ।
स हतो भीमसेनेन वैरं प्रतिजिहीर्षता ।। १०
आत्मनोऽतिक्रमं पश्य पुत्रस्य च दुरात्मनः ।

---

आक्षिप्य निवार्य । आयसं लोहमयम् ।।१५।। स तु कोप समुत्सृज्येति झ. पाठः ।। २१ ।। पुत्रेति धर्मादपकृतमालिङ्गनच्छलेन भीमवधः कर्तव्य इत्याशया ।।२८।। एकादशोऽध्यायः ११

न तत्कृथाः तन्न कृतवानसि । अडभाव आर्षः ।। ४ ।। श्रेयो हिताहिते उच्यमानो न गृह्णीत इत्यन्वयः ।। ७ ।। वैरं प्रतिचिकीर्षतेति क. पाठः ।। १० ।।

यद्नागसि पाण्डूनां परित्यागस्त्वया कृतः ॥ ११
वैशंपायन उवाच ।
एवमुक्तः स कृष्णेन सर्वं सत्यं जनाधिप ।
उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः ॥ १२
एवमेतन्महाबाहो यथा वदसि माधव ।
पुत्रस्नेहस्तु बलवान्धर्मान्मां समचालयत् ॥ १३
दिष्ट्या तु पुरुषव्याघ्रो बलवान्सत्यविक्रमः ।
त्वद्गुप्तो नागमत्कृष्ण भीमो बाह्वन्तरं मम ॥ १४
इदानीं त्वहमव्यग्रो गतमन्युर्गतज्वरः ।
मध्यमं पाण्डवं वीरं स्प्रष्टुमिच्छामि माधव ॥ १५
हतेषु पार्थिवेन्द्रेषु पुत्रेषु निहतेषु च ।
पाण्डुपुत्रेषु मे धर्मः प्रीतिश्चाप्यवतिष्ठते ॥ १६
ततः स भीमं च धनञ्जयं च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
पस्पर्श गात्रैः प्ररुदन्सुगात्रा-
नाश्वास्य कल्याणमुवाच चैनान् ॥ १७

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ॥ १३ ॥

कृष्णयुधिष्ठिरादिभिर्गान्धारीसमीपगमनम् ॥ १ ॥ गान्धारीं युधिष्ठिरंशप्तुकामां विज्ञाय पूर्वमेवागतेन व्यासेन गान्धार्याः कोपापनोदनम् ॥ २ ॥

वैशंपायन उवाच ।
धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपुङ्गवाः ।
अभ्ययुर्भ्रातरः सर्वे गान्धारीं सहकेशवाः ॥ १
ततो ज्ञात्वा हतामित्रं धर्मराजं युधिष्ठिरम् ।
गान्धारी पुत्रशोकार्ता शप्तुमैच्छदनिन्दिता ॥ २
तस्याः पापमभिप्रायं विदित्वा पाण्डवान्प्रति ।
ऋषिर्गन्धवतीपुत्रः प्रागेव समबुध्यत ॥ ३
स गङ्गायामुपस्पृश्य ब्रह्मर्षिः प्रयतः शुचिः ।
तं देशमुपसंपेदे पाराशर्यो मनोजवः ॥ ४
दिव्येन चक्षुषा ज्ञात्वा मनसाऽनुद्धतेन च ।
सर्वप्राणभृतां भावं सततं स तु बुध्यति ॥ ५
स स्नुषामब्रवीत्काले कल्याणानि महातपाः ।
शापकालमवाक्षिप्य शमकालमुदीरयन् ॥ ६
न कोपः पाण्डवे कार्यो गान्धारि शममाप्नुहि ।
रजो निगृह्यतां चैव शृणु चेदं वचो मम ॥ ७
पुरोक्ता युद्धकाले त्वं पुत्रेण जयमिच्छता ।
जयमाशास्व मे मातर्युध्यमानस्य शत्रुभिः ॥ ८
सा तथा याच्यमाना त्वं युद्धकाले जयैषिणा ।
उक्तवत्यसि कल्याणि यतो धर्मस्ततो जयः ॥ ९
वाचाऽप्यतीते मा क्रोधे मनः कुरु यशस्विनि ।
स्मरामि भाषमाणां हि त्वामहं सत्यवादिनीम् ॥ १०
विग्रहे तुमुले राज्ञां गत्वा परमसंशयम् ।
जितं पाण्डुसुतैर्युद्धे नूनं धर्मस्ततोऽधिकः ॥ ११
क्षमाशीला पुरा भूत्वा साऽद्य न क्षमसे कथम् ।
अधर्मं जहि धर्मज्ञे यतो धर्मस्ततो जयः ॥ १२
सा त्वं धर्मं परिस्मृत्य वाचं चोक्तां मनस्विनि ।
कोपं संयच्छ गान्धारि पाण्डवेषु सुतेषु ते ॥ १३
गान्धार्युवाच ।
भगवन्नाभ्यसूयामि नैतानिच्छामि नश्यतः ।
पुत्रशोकेन तु बलान्मनो विह्वलतीव मे ॥ १४
यथैव कुन्त्या कौन्तेया रक्षितव्यास्तथा मया ।
तथैव धृतराष्ट्रेण रक्षितव्या यथा त्वया ॥ १५
दुःशासनापराधेन शकुनेः सौबलस्य च ।
कर्णदुर्योधनाभ्यां च कृतोऽयं कुरुसंक्षयः ॥ १६

---

अनागसि अपराधाभावे । परित्यागो राज्याप्रदानेन तिरस्कारः ॥ ११ ॥ द्वादशोऽध्यायः ॥ १२ ॥

न चाप्यतीतां गान्धारि वाचं ते वितथामहम् । स्मरामि तोषमाणायास्तथा प्रणिहिता ह्यसि इति झ. पाठे अस्य एनं दुर्योधनं तोषमाणाया आशीर्वचनेन तोषयन्त्यास्ते तव तां तां वाचं वितथां न स्मरामीत्यन्वयः ॥ १० ॥ सा त्वं धर्मं परित्यज्य वाचा चोक्त्वा मनस्विनि । इति छ. ट. पाठः ॥ १३ ॥

नापराध्यति बीभत्सुर्न च पार्थो वृकोदरः ।
नकुलः सहदेवश्च नैव राजा युधिष्ठिरः ॥ १७
युध्यमाना हि कौरव्याः कृतमानाः परस्परम् ।
निहताः सहिताश्चान्यैस्तत्र नास्त्यप्रियं मम ॥ १८
किं तु कर्माकरोद्भीमो वासुदेवस्य पश्यतः ।
दुर्योधनं समाहूय गदायुद्धे महामनाः ॥ १९
शिक्षयाऽभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे ।
अधो नाभ्याः प्रहृतवांस्तन्मे कोपमवर्धयत् ॥ २०
कथं नु धर्मं धर्मज्ञाः समुद्दिष्टं महात्मभिः ।
त्यजेयुराहवे शूराः प्राणहेतोः कथंचन ॥ २१

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

भीमगान्धारीसंवादः ॥ १ ॥

वैशंपायन उवाच ।
तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् ।
गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ॥ १
अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः ।
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥ २
न हि युद्धेन पुत्रस्ते धर्मेण स महाबलः ।
दुःशक्यः केनचिद्धन्तुमतो विषममाचरम् ॥ ३
अधर्मेण जितः पूर्वं तेन चापि युधिष्ठिरः ।
निकृताश्च सदैव स्म ततो विषममाचरम् ॥ ४
सैन्यस्यैकोऽवशिष्टोऽयं गदायुद्धे च वीर्यवान् ।
न त्यक्ष्यति हृतं राज्यमिति वै तत्कृतं मया ॥ ५
एकपत्नीं च पाञ्चालीमेकवस्त्रां रजस्वलाम् ।
भवत्या विदितं सर्वमुक्तवान्यत्सुतस्तव ॥ ६
सुयोधनं त्वसंहृत्य न शक्या भूः ससागरा ।
केवला भोक्तुमस्माभिरतश्चैतत्कृतं मया ॥ ७
तच्चाप्यप्रियमस्माकं पुत्रस्ते समुपाचरत् ।
द्रौपद्या यत्सभामध्ये सव्यमूरुमदर्शयत् ॥ ८
तत्रैव वध्यः सोऽस्माकं दुराचारोऽम्ब ते सुतः ।
धर्मराजाज्ञया चैव स्थिताः स्म समये पुरा ॥ ९
वैरमुद्दीपितं राज्ञि पुत्रेण तव यन्महत् ।
क्लेशिताश्च वने नित्यं तत एतत्कृतं मया ॥ १०
वैरस्यास्य गताः पारं हत्वा दुर्योधनं रणे ।
राज्यं युधिष्ठिरे प्राप्ते वयं च गतमन्यवः ॥ ११

गान्धार्युवाच ।
न तस्यैवं वधस्तात यं प्रशंससि मे सुतम् ।
कृतवांश्चापि तत्सर्वं यदिदं भाषसे मयि ॥ १२
हताश्वे नकुले यत्तु वृषसेनेन भारत ।
अपिबः शोणितं सङ्ख्ये दुःशासनशरीरजम् ॥ १३
सद्भिर्विगर्हितं घोरमनार्यजनसेवितम् ।
क्रूरं कर्माकृथास्तस्मात्तदयुक्तं वृकोदर ॥ १४

भीम उवाच ।
हताश्वं नकुलं दृष्ट्वा वृषसेनेन संयुगे ।
शत्रूणां तु प्रहृष्टानां त्रासः संजनितो मया ॥ १५
'स प्रतिज्ञामकरवं पिबाम्यसृगरेरिति ।'
रुधिरं नातिचक्राम दन्तोष्ठादम्ब मा शुचः ॥ १६
[अन्यस्यापि न पातव्यं रुधिरं किंपुनः स्वकम् ।
यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन ॥ १७]
वैवस्वतो हि तद्वेद यथावत्कुलनन्दिनि ।
मा कृथा हृदि तन्मातर्न तत्पीतं मयाऽनघे ॥ १८
केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते ।
क्रोधाद्यदब्रवं चाहं तच्च मे हृदि वर्तते ॥ १९
क्षत्रधर्माच्च्युतो राज्ञि भवेयं शाश्वतीः समाः ।
प्रतिज्ञां तामनिस्तीर्य ततस्तत्कृतवानहम् ॥ २०
अनिगृह्य पुरा पुत्रानस्मास्वनपकारिषु ।
न ममार्हसि कल्याणि दोषेण परिशङ्कितुम् ॥ २१

कृतमानाः कृताहंकाराः ॥ १८ ॥ त्रयोदशोऽध्यायः ॥ १३ ॥
उक्तवान् नहि ते पतयः सन्तीत्यादि । राजपुत्रीं च पाञ्चाली-
मिति झ. पाठः ॥ ६ ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

गान्धार्युवाच ।
वृद्धस्यास्य शतं पुत्रान्निघ्नंस्त्वमपराजितः ।
कस्मान्नाशेषयः कंचिद्येनाल्पमपराधितम् ॥ २२
संतानमावयोस्तात वृद्धयोर्हृतराज्ययोः ।
नाशेषयः कथं यष्टिमेकां वृद्धयुगस्य वै ॥ २३
शेषे ह्यवस्थिते तात पुत्राणामल्पकेऽपि च ।
मन्ददुःखं भवेदद्य यदि त्वं धर्ममाचरेः ॥ २४

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

युधिष्ठिरादिभिर्गान्धारीकुन्त्योरभिवादनम् ॥ १ ॥ सकुन्त्या गान्धार्या द्रौपदीसमाश्वासनम् ॥ २ ॥

वैशंपायन उवाच ।
तमेवमुक्त्वा गान्धारी युधिष्ठिरमपृच्छत ।
क्व स राजेति सक्रोधा पुत्रपौत्रवधार्दिता ॥ १
तामभ्यगच्छत्कौन्तेयो वेपमानः कृताञ्जलिः ।
युधिष्ठिरस्तु गान्धारीं मधुरं वाक्यमब्रवीत् ॥ २
पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः ।
शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम् ॥ ३
नहि मे जीवितेनार्थो न राज्येन सुखेन वा ।
तादृशान्सुहृदो हत्वा प्रमूढस्य सुहृद्द्रुहः ॥ ४
तमेवंवादिनं भीतं संनिकर्षगतं तदा ।
नोवाच किंचिद्गान्धारी निःश्वासपरमा नृप ॥ ५
तस्यावनतदेहस्य पादयोर्निपतिष्यतः ।
युधिष्ठिरस्य नृपतेर्धर्मज्ञा दीर्घदर्शिनी ॥ ६
अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा ।
ततः स कुनखीभूतो दर्शनीयनखो नृपः ॥ ७
तं दृष्ट्वा चार्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः ॥ ८
एवं संचेष्टमानांस्तानितश्चेतश्च भारत ।
गान्धारी विगतक्रोधा सांत्वयामास मातृवत् ॥ ९
ते पाण्डवा अनुज्ञाता मातरं वीतमत्सराः ।
अभ्यगच्छन्त सहिताः पृथां पृथुलवक्षसः ॥ १०
चिरस्य दृष्ट्वा पुत्रान्सा पुत्राधिभिरभिप्लुता ।
बाष्पमाहारयद्देवी वस्त्रेणावृत्य वै मुखम् ॥ ११
ततो बाष्पं समुत्सृज्य सह पुत्रैस्तदा पृथा ।
अपश्यदेनाञ्शस्त्रौघैर्बहुधा परिविक्षतान् ॥ १२
सा तानेकैकशः पुत्रान्संस्पृशन्ती पुनःपुनः ।
अन्वशोचत दुःखार्ता द्रौपदीं निहतात्मजाम् ।
रुदन्तीमथ पाञ्चालीं ददर्श पतितां भुवि ॥ १३
द्रौपद्युवाच ।
आर्ये पौत्रास्तु ते सर्वे सौभद्रसहिता गताः ।
न त्वां तेऽद्याभिगच्छन्ति चिरं दृष्ट्वा अनिन्दिते ।
किंनु राज्येन मे कार्यं विहीनायाः सुतैर्वरैः ॥ १४
तां समाश्वासयामास पृथा पृथुललोचना ।
उत्थाप्याङ्केन सुदतीं रुदतीं शोककर्शिताम् ॥ १५
तयैव सहिता चापि पुत्रैरनुगता पृथा ।
अभ्यगच्छत गान्धारीमार्तामार्ततरा स्वयम् ॥ १६
वैशंपायन उवाच ।
तामुवाचाथ गान्धारी सह कुन्त्या यशस्विनीम् ।
मैवं पुत्रीति शोकार्ता पश्य मामपि दुःखिताम् ॥ १७
मन्ये लोकविनाशोऽयं कालपर्यायनोदितः ।
अवश्यभावी संप्राप्तः स्वभावाद्रोमहर्षणः ॥ १८
इदं तत्समनुप्राप्तं विदुरस्य वचो महत् ।
असिद्धानुनये कृष्णे यदुवाच महामतिः ॥ १९
तस्मिन्नपरिहार्येऽर्थे व्यतीते च विशेषतः ।
मा शुचो न हि शोच्यास्ते संग्रामे निधनं गताः ॥
यथैवाहं तथैव त्वं को वामाश्वासयिष्यति ।
ममैव ह्यपराधेन कुलमग्र्यं विनाशितम् ॥ २१

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

## समाप्तं जलप्रदानिकं पर्व १ ।

कुनखीभूतो हस्तदेश इति शेषः ॥ ७ ॥ आर्ये पौत्रा हताः सर्वे इति क. छ. पाठः ॥ १४ ॥ वां आवाम् ॥ २१ ॥

पञ्चदशोऽध्यायः ॥ १५ ॥

# ( अथ स्त्रीविलापपर्व ॥ २ ॥ )

## षोडशोऽध्यायः ॥ १६ ॥

गान्धार्या व्यासप्रसादलब्धदिव्यचक्षुषा रणाङ्गणदर्शनम् ॥ १ ॥ धृतराष्ट्रयुधिष्ठिरादीनां स्त्रीभिः सह रणभूमिप्रवेशः ॥ २ ॥ स्त्रीणां विलापः ॥ ३ ॥ गान्धार्या कृष्णाय विलपत्स्नुषादिप्रदर्शनम् ॥ ४ ॥

वैशंपायन उवाच ।
एवमुक्त्वा तु गान्धारी कुरूणामवकर्तनम् ।
अपश्यत्तत्र तिष्ठन्ती सर्वं तत्र यथास्थितम् ॥ १
पतिव्रता महाभागा समानव्रतचारिणी ।
उग्रेण तपसा युक्ता सततं सत्यवादिनी ॥ २
वरदानेन कृष्णस्य महर्षेः पुण्यकर्मणः ।
दिव्यज्ञानबलोपेता विविधं पर्यदेवयत् ॥ ३
ददर्श सा बुद्धिमती दूरादपि यथाऽन्तिके ।
रणाजिरं तद्वीराणामद्भुतं रोमहर्षणम् ॥ ४
अस्थिकेशवसाकीर्णं शोणितौघपरिप्लुतम् ।
शरीरैर्बहुसाहस्रैर्विनिकीर्णं समन्ततः ॥ ५
गजाश्वरथयोधानामावृतं रुधिराविलैः ।
शरीरैरशिरस्कैश्च विदेहैश्च शिरोगणैः ॥ ६
गजाश्वनरवीराणां निःसत्वैरभिसंवृतम् ।
सृगालवलगोमायुकङ्ककाकनिषेवितम् ॥ ७
रक्षसां पुरुषादानां मोदनं कुरराकुलम् ।
अशिवाभिः शिवाभिश्च नादितं गृध्रसेवितम् ॥ ८
ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपतिः ।
पाण्डुपुत्राश्च ते सर्वे युधिष्ठिरपुरोगमाः ॥ ९
वासुदेवं पुरस्कृत्य हतबन्धुं च पार्थिवम् ।
कुरुस्त्रियः समादाय जग्मुरायोधनं प्रति ॥ १०
समासाद्य कुरुक्षेत्रं ताः स्त्रियो निहतेश्वराः ।
अपश्यन्त हतांस्तत्र पुत्रान्भ्रातॄन्पितॄन्पतीन् ॥ ११
क्रव्यादैर्भक्ष्यमाणांश्च गोमायुबलवायसैः ।
भूतैः पिशाचै रक्षोभिर्विविधैश्च निशाचरैः ॥ १२
रुद्राक्रीडनिभं दृष्ट्वा तदा विशसनं स्त्रियः ।
कुरर्य इव शोकार्ता विक्रोशन्त्यो निपेतिरे ॥ १३
अदृष्टपूर्वं पश्यन्त्यो दुःखार्ता भरतस्त्रियः ।
शरीरेषु स्खलन्त्यश्च न्यपतंश्च परासुवत् ॥ १४
श्रान्तानां चाप्यनाथानां क्रन्दन्तीनां भृशं तदा ।
पाञ्चालकुरुयोषाणां कृपणं तदभून्महत् ॥ १५
दुःखोपहतचित्ताभिः समन्तादनुनादितम् ।
दृष्ट्वाऽऽयोधनमत्युग्रं धर्मज्ञा सुबलात्मजा ॥ १६
ततः सा पुण्डरीकाक्षमामन्त्र्य पुरुषोत्तमम् ।
कुरूणां वैशसं दृष्ट्वा इदं वचनमब्रवीत् ॥ १७
पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः ।
प्रकीर्णकेशाः क्रोशन्तीः कुररीरिव माधव ॥ १८
अमूस्त्वभिसमागम्य स्मरन्त्यो भरतर्षभान् ।
पृथगेवानुपद्यन्ते पुत्रान्भ्रातॄन्पितॄन्पतीन् ॥ १९
वीरसूभिर्महाबाहो हतपुत्राभिरावृतम् ।
क्वचिच्च वीरपत्नीभिर्हतवीराभिरावृतम् ॥ २०
शोभितं पुरुषव्याघ्रैः कर्णभीष्माभिमन्युभिः ।
द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव पावकैः ॥ २१
काञ्चनैः कवचैर्निष्कैर्मणिभिश्च महाधनैः ।
अङ्गदैर्हस्तकेयूरैः स्रग्भिश्च समलंकृतम् ॥ २२
वीरबाहुविसृष्टाभिः शक्तिभिः परिघैरपि ।
खड्गैश्च विविधैस्तीक्ष्णैः सशरैश्च शरासनैः ॥ २३
क्रव्यादसङ्घैर्मुदितैस्तिष्ठद्भिः सहितैः क्वचित् ।
क्वचिदाक्रीडमानैश्च शयानैश्चापरैः क्वचित् ॥ २४
एतदेवंविधं वीर संपश्यायोधनं विभो ।
'त्वया तु श्रावितं कर्म पुष्कराक्ष महाद्युते ।'
पश्यमाना हि दह्यामि शोकेनाहं जनार्दन ॥ २५
पाञ्चालानां कुरूणां च विनाशं मधुसूदन ।
पञ्चानामपि भूतानामहं वधमचिन्तयम् ॥ २६
तान्सुपर्णाश्च गृध्राश्च कर्षयन्त्यसृगुक्षितान् ।
विगृह्य चरणैर्गृध्रा भक्षयन्ति सहस्रशः ॥ २७

अवकर्तनं युद्धस्थानम् । सर्वं दिव्येन चक्षुषेति झ. पाठः ॥१॥ पञ्चानां भूतानां पृथिव्यादीनाम् । कुरुपाञ्चालवधात्कृत्स्नं पाञ्च-भौतिकं जगन्नष्टमिति भावः ॥ २६ ॥

जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः ।
अभिमन्योर्विनाशं च कश्चिन्तयितुमर्हति ॥ २८
अवध्यकल्पान्निहतान्गतसत्वानचेतसः ।
गृध्रकङ्कबलश्येनश्वसृगालसमावृतान् ॥ २९
अमर्षवशमापन्नान्दुर्योधनवशे स्थितान् ।
पश्येमान्पुरुषव्याघ्रान्संशान्तान्पावकानिव ॥ ३०
शयनान्युचिताः सर्वे मृदूनि विमलानि च ।
विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ॥ ३१
बन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः ।
शिवानामशिवा घोराः शृण्वन्ति विविधा गिरः॥
ये पुरा शेरते वीराः शयनेषु यशस्विनः ।
चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांसुषु शेरते ॥ ३३
तेषामाभरणान्येते गृध्रगोमायुवायसाः ।
आक्षिपन्ति शिवा घोरा विनदन्त्यःपुनः पुनः ३४
बाणान्विनिशितान्पीतान्निस्त्रिंशान्विमला गदाः ।
युद्धाभिमानिनः सर्वे जीवन्त इव बिभ्रति ॥ ३५
सुरूपवर्णा बहवः क्रव्यादैरवघट्टिताः ।
ऋषभप्रतिरूपाक्षाः शेरते च सहस्रशः ॥ ३६
अपरे पुनरालिङ्ग्य गदाः परिघबाहवः ।
शेरतेऽभिमुखाः शूरा दयिता इव योषितः ॥ ३७
बिभ्रतः कवचान्यन्ये विमलान्यायुधानि च ।
न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ॥ ३८
क्रव्यादैः कृष्यमाणानामपरेषां महात्मनाम् ।
शातकौम्भ्यः स्रजश्चित्रा विप्रकीर्णाः समन्ततः ३९
एते गोमायवो भीमा निहतानां यशस्विनाम् ।
कण्ठान्तरगतान्हारानाक्षिपन्ति सहस्रशः ॥ ४०
सर्वेष्वपररात्रेषु यानवन्दन्त बन्दिनः ।
स्तुतिभिश्च परार्ध्याभिरुपचारैश्च शिक्षिताः ॥४१
तानद्य परिदेवन्ति दुःखार्ताः परमाङ्गनाः ।
कृपणा वृष्णिशार्दूल दुःखशोकार्दिता भृशम् ४२
रक्तोत्पलवनानीव विभान्ति रुचिराणि च ।
मुखानि परमस्त्रीणां परिशुष्काणि केशव ॥ ४३
रुदित्वा विरता ह्येता ध्यायन्त्यः सपरिक्रमाः ।
कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः॥४४
एतान्यादित्यवर्णानि तपनीयनिभानि च ।
पश्य रोदनताम्राणि वक्त्राणि कुरुयोषिताम् ॥४५
श्यामानां वरवर्णानां गौरीणामेकवाससाम् ।
दुर्योधनवरस्त्रीणां पश्य वृन्दानि केशव ॥ ४६
आसामपरिपूर्णार्थं निशम्य परिदेवितम् ।
इतरेतरसंक्रन्दान्न विजानन्ति योषितः ॥ ४७
एता दीर्घमिवोच्छ्वस्य विक्रुश्य च विलप्य च ।
विस्पन्दमाना दुःखेन वीरा जहति जीवितम् ४८
बह्वयो दृष्ट्वा शरीराणि क्रोशन्ति विलपन्ति च ।
पाणिभिश्चापरा घ्नन्ति शिरांसि मृदुपाणयः॥४९
शिरोभिः पतितैर्हस्तैः सर्वाङ्गैः खण्डशः कृतैः ।
इतरेतरसंपृक्तैराकीर्णा भाति मेदिनी ॥ ५०
विशिरस्कानथो कायान्दृष्ट्वा ह्येताननिन्दितान् ।
मुह्यन्त्यनुचिता नार्यो विदेहानि शिरांसि च ५१
शिरः कायेन संधाय प्रेक्षमाणा विचेतसः ।
अपश्यन्त्योऽपरं तत्र नेदमस्येऽति दुःखिताः॥५२
बाहूरुचरणानन्यान्विशिखोन्मथितान्पृथक् ।
संदधत्योऽसुखाविष्टा मूर्छन्त्येताः पुनःपुनः॥५३
उत्कृत्तशिरसश्चान्यान्विजग्धान्मृगपक्षिभिः ।
दृष्ट्वा काश्चिन्न जानन्ति भर्तॄन्भरतयोषितः ॥ ५४
पाणिभिश्चापरा घ्नन्ति शिरांसि मधुसूदन ।
प्रेक्ष्य भ्रातॄन्पितॄन्पुत्रान्पतींश्च निहतान्परैः ॥ ५५
बाहुभिश्च सखड्गैश्च शिरोभिश्च सकुण्डलैः ।
अगम्यकल्पा पृथिवी मांसशोणितकर्दमा ।
बभूव भरतश्रेष्ठ प्राणिभिर्गतजीवितैः ॥ ५६
न दुःखेषूचिताः पूर्वं दुःखं गाहन्त्यनिन्दिताः ।
भ्रातृभिः पतिभिः पुत्रैरुपाकीर्णां वसुंधराम् ॥ ५७
यूथानीव किशोरीणां सुकेशीनां जनार्दन ।
स्नुषाणां धृतराष्ट्रस्य पश्य वृन्दान्यनेकशः ॥ ५८
इतो दुःखतरं किंनु केशव प्रतिभाति मे ।
यदिमाः कुर्वते सर्वा रवमुच्चावचं स्त्रियः ॥ ५९
नूनमाचरितं पापं मया पूर्वेषु जन्मसु ।
या पश्यामि हतान्पुत्रान्पौत्रान्भ्रातॄंश्च माधव ॥ ६०

शयनानि आस्तीर्येति शेषः ॥३१॥ एताः शोचन्तीरभिलक्ष्येति शेषः ॥४८॥ विजग्धान्भक्षितान् ॥५४॥ षोडशोऽध्यायः॥१६॥

स्वशिरः पञ्चशाखाभ्यामभिहत्यायतेक्षणा ।
पतत्युरसि वीरस्य कुरुराजस्य माधव ॥ ३०
पुण्डरीकनिभा भाति पुण्डरीकान्तरप्रभा ।
मुखं प्रमृज्य पुत्रस्य भर्तुश्चैव तपस्विनी ॥ ३१
यदि सत्यागमाः सन्ति यदि वै श्रुतयस्तथा ।
ध्रुवं लोकानवाप्तोऽयं नृपो बाहुबलार्जितान् ॥ ३२

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

कृष्णंप्रति गान्धारीवचनम् ॥ १ ॥

गान्धार्युवाच ।
पश्य माधव पुत्रान्मे शतसङ्ख्याञ्जितक्लमान् ।
गदया भीमसेनेन भूयिष्ठं निहतान्रणे ॥ १
इदं दुःखतरं मेऽद्य यदिमा मुक्तमूर्धजाः ।
हतपुत्रा रणे बालाः परिधावन्ति मे स्नुषाः ॥ २
प्रासादतलचारिण्यश्चरणैर्भूषणान्वितैः ।
कायेनाद्य स्पृशन्तीमां रुधिरार्द्रां वसुंधराम् ॥ ३
कृच्छ्रादुत्सारयन्ति स्म गृध्रगोमायुवायसान् ।
दुःखेनार्ता विघूर्णन्त्यो मत्ता इव चरन्त्युत ॥ ४
एषाऽन्या त्वनवद्याङ्गी करसंमितमध्यमा ।
घोरमायोधनं दृष्ट्वा निपतत्यतिदुःखिता ॥ ५
दृष्ट्वा मे पार्थिवसुतामेतां लक्ष्मणमातरम् ।
राजपुत्रीं महाबाहो मनो न ह्युपशाम्यति ॥ ६
भ्रातॄंश्चान्याः पितॄंश्चान्याः पुत्रांश्च निहतान्भुवि ।
दृष्ट्वा परिपतन्त्येताः प्रगृह्य सुमहाभुजान् ॥ ७
मध्यमानां तु नारीणां वृद्धानां चापराजित ।
आक्रन्दं हतबन्धूनां दारुणे वैशसे शृणु ॥ ८
रथनीडानि देहांश्च हतानां गजवाजिनाम् ।
आश्रित्य श्रममोहार्ताः स्थिताः पश्य महाभुज ॥ ९
अन्या चापहृतं कायाच्चारुकुण्डलमुन्नसम् ।
स्वस्य बन्धोः शिरः कृष्ण गृहीत्वा पश्य तिष्ठति १०
पूर्वजातिकृतं पापं मन्ये नाल्पमिवानघ ।
एताभिर्निरवद्याभिर्मया चैवाल्पपुण्यया ।
यदिदं धर्मराजेन घातितं नो जनार्दन ॥ ११
न हि नाशोऽस्ति वार्ष्णेय कर्मणोः शुभपापयोः १२
प्रत्यग्रवयसः पश्य दर्शनीयकुचाननाः ।
कुलेषु जाता ह्रीमत्यः कृष्णपक्ष्माक्षिमूर्धजाः ॥ १३
हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः ।
सारस्य इव वाशन्त्यः पतिताः पश्य माधव ॥ १४
फुल्लपद्मप्रकाशानि पुण्डरीकाक्ष योषिताम् ।
अनवद्यानि वक्त्राणि तापयत्येष रश्मिवान् ॥ १५
सेर्ष्याणां मम पुत्राणां वासुदेवावरोधनम् ।
मत्तमातङ्गदर्पाणां पश्यन्त्यद्य पृथग्जनाः ॥ १६
शतचन्द्राणि चर्माणि ध्वजांश्चादित्यवर्चसः ।
रौक्माणि चैव वर्माणि निष्कानपि च काञ्चनान् ॥
शिरस्त्राणानि चैतानि पुत्राणां मे महीतले ।
पश्य दीप्तानि गोविन्द पावकान्सुहुतानिव ॥ १८
एष दुःशासनः शेते शूरेणामित्रघातिना ।
पीतशोणितसर्वाङ्गो युधि भीमेन पातितः ॥ १९
गदया भीमसेनेन पश्य माधव मे सुतम् ।
द्यूतक्लेशाननुस्मृत्य द्रौपदीचोदितेन च ॥ २०
उक्ता ह्यनेन पाञ्चाली सभायां द्यूतनिर्जिता ।
प्रियं चिकीर्षता भ्रातुः कर्णस्य च जनार्दन ॥ २१
सहैव सहदेवेन नकुलेनार्जुनेन च ।
दासीभूताऽसि पाञ्चालि क्षिप्रं प्रविश नो गृहान् ॥
ततोऽहमब्रुवं कृष्ण तदा दुर्योधनं नृपम् ।
मृत्युपाशपरिक्षिप्तां द्रौपदीं पुत्र वर्जय ॥ २३
निबोधैनं सुदुर्बुद्धिं मातुलं कलहप्रियम् ।
क्षिप्रमेनं परित्यज्य पुत्र संशाम्य पाण्डवैः ॥ २४
न बुद्ध्यसे त्वं दुर्बुद्धे भीमसेनममर्षणम् ।
वाङ्नाराचैस्तुदंस्तीक्ष्णैरुल्काभिरिव कुञ्जरम् ॥ २५
तानेवं रहसि क्रुद्धो वाक्शल्यानवधारयन् ।
उत्ससर्ज विषं तेषु सर्पो गोवृषभेष्विव ॥ २६

पञ्चशाखाभ्यां पञ्चाङ्गुलिभ्यां पाणिभ्याम् ॥ ३० ॥ सप्तदशोऽध्यायः ॥ १७ ॥

करसंमितमध्यमा मुष्टिप्रमितमध्या ॥ ५ ॥ क्षिप्तं शकुनिं पुत्र वर्जयेति झ. पाठः ॥ २३ ॥ अष्टादशोऽध्यायः ॥ १८ ॥

एवमार्ता विलपती समाभाष्य जनार्दनम् । गान्धारी पुत्रशोकार्ता ददर्श निहतं सुतम् ॥ ६१

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

गान्धार्या दुर्योधनमालिङ्ग्य परिदेवनम् ॥ १ ॥

वैशंपायन उवाच ।
दुर्योधनं हतं दृष्ट्वा गान्धारी शोककर्शिता ।
सहसा न्यपतद्भूमौ छिन्नेव कदली वने ॥ १
सा तु लब्ध्वा पुनः संज्ञां विक्रुश्य च विलप्य च ।
दुर्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितम् ॥ २
परिष्वज्याथ गान्धारी कृपणं पर्यदेवयत् ।
हाहापुत्रेति शोकार्ता विललापाकुलेन्द्रिया ॥ ३
सुगूढजत्रु विपुलं हारनिष्कविभूषितम् ।
वारिणा नेत्रजेनोरः सिञ्चन्ती शोकतापिता ॥ ४
समीपस्थं हृषीकेशमिदं वचनमब्रवीत् ।
उपस्थितेऽस्मिन्संग्रामे ज्ञातीनां संक्षये विभो ॥ ५
मामयं प्राह वार्ष्णेय प्राञ्जलिर्नृपसत्तमः ।
अस्मिञ्ज्ञातिसमुद्धर्षे जयमम्बा ब्रवीतु मे ॥ ६
इत्युक्ते जानती सर्वमहं स्वव्यसनागमम् ।
अब्रुवं पुरुषव्याघ्र यतो धर्मस्ततो जयः ॥ ७
तथा तु युध्यमानस्त्वं संप्रगृह्य सुपुत्रक ।
ध्रुवं शस्त्रजिताँल्लोकान्प्राप्स्यस्यमरवत्प्रभो ॥ ८
इत्येवमब्रुवं पूर्वं नैनं शोचामि वै प्रभो ।
धृतराष्ट्रं तु शोचामि कृपणं हतबान्धवम् ॥ ९
अमर्षणं युधां श्रेष्ठं कृतास्त्रं युद्धदुर्मदम् ।
शयानं वीरशयने पश्य माधव मे सुतम् ॥ १०
योऽयं मूर्धावसिक्तानामग्रे याति परंतपः ।
सोऽयं पांसुषु शेतेऽद्य पश्य कालस्य पर्ययम् ॥ ११
ध्रुवं दुर्योधनो वीरो गतिं न सुलभां गतः ।
तथा ह्यभिमुखः शेते शयने वीरसेविते ॥ १२
यं पुरा पर्युपासीना रमयन्ति वरस्त्रियः ।
तं वीरशयने सुप्तं रमयन्त्यशिवाः शिवाः ॥ १३
यं पुरा पर्युपासीना रमयन्ति महीक्षितः ।
महीतलस्थं निहतं गृध्रास्तं पर्युपासते ॥ १४
यं पुरा व्यजनैरम्यैरुपवीजन्ति योषितः ।
तमद्य पक्षव्यजनै रुपवीजन्ति पक्षिणः ॥ १५
एष शेते महाबाहुर्बलवान्सत्यविक्रमः ।
सिंहेनेव द्विपः सङ्ख्ये भीमसेनेन पातितः ॥ १६
पश्य दुर्योधनं कृष्ण शयानं रुधिरोक्षितम् ।
निहतं भीमसेनेन गदां संमृज्य भारत ॥ १७
अक्षौहिणीर्महाबाहुर्दश चैकां च केशव ।
आनयद्यः पुरा सङ्ख्ये सोऽनयान्निधनं गतः ॥ १८
एष दुर्योधनः शेते महेष्वासो महाबलः ।
शार्दूल इव सिंहेन भीमसेनेन पातितः ॥ १९
विदुरं ह्यवमत्यैष पितरं चैव मन्दभाक् ।
बालो वृद्धावमानेन मन्दो मृत्युवशं गतः ॥ २०
निःसपत्ना मही यस्य त्रयोदशसमाः स्थिता ।
स शेते निहतो भूमौ पुत्रो मे पृथिवीपतिः ॥ २१
अपश्यं कृष्ण पृथिवीं धार्तराष्ट्रानुशासिताम् ।
पूर्णां हस्तिगवाश्वैश्च वार्ष्णेय न तु तच्चिरम् ॥ २२
तामेवाद्य महाबाहो पश्याम्यन्यानुशासिताम् ।
हीनां हस्तिगवाश्वेन किंनु जीवामि माधव ॥ २३
इदं कष्टतरं पश्य पुत्रस्यापि वधान्मम ।
या इमाः पर्युपासन्ते हताञ्शूरान्रणे स्त्रियः ॥ २४
प्रकीर्णकेशां सुश्रोणीं दुर्योधनभुजाङ्कगाम् ।
रुक्मवेदिनिभां पश्य कृष्ण लक्ष्मणमातरम् ॥ २५
नूनमेषा पुरा बाला जीवमाने महाभुजे ।
भुजावाश्रित्य रमते सुभुजस्य मनस्विनी ॥ २६
कथं तु शतधा नेदं हृदयं मम दीर्यते ।
पश्यन्त्या निहतं पुत्रं पौत्रेण सहितं रणे ॥ २७
पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिन्दिता ।
दुर्योधनं तु वामोरूः पाणिना परिमार्जती ॥ २८
किंनु शोचति भर्तारं हतपुत्रं मनस्विनी ।
तथा ह्यवस्थिता भाति पुत्रं चाप्यभिवीक्ष्य सा ॥ २९

पुत्रेण सहितं रणे इति झ. पाठः ॥ २७ ॥

एष दुःशासनः शेते विक्षिप्य विपुलौ भुजौ ।
निहतो भीमसेनेन सिंहेनेव महागजः ॥ २७
अत्यर्थमकरोद्रौद्रं भीमसेनोऽत्यमर्षणः ।
दुःशासनस्य यत्क्रुद्धोऽपिबच्छोणितमाहवे ॥ २८

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

कृष्णंप्रति गान्धारीवचनम् ॥ १ ॥

गान्धार्युवाच ।
एष माधव पुत्रो मे विकर्णः प्राज्ञसंमतः ।
भूमौ विनिहतः शेते भीमेन शतधा कृतः ॥ १
गजमध्ये हतः शेते विकर्णो मधुसूदन ।
नीलमेघपरिक्षिप्तः शरदीव निशाकरः ॥ २
अस्य चापग्रहेणैव पाणिः कृतकिणो महान् ।
कथंचिच्छिद्यते गृध्रैरत्तुकामैस्तलत्रवान् ॥ ३
अस्य भार्याऽऽमिषप्रेप्सून्गृध्रकाकांस्तपस्विनी ।
वारयत्यनिशं बाला न च शक्नोति माधव ॥ ४
युवा वृन्दारकसमो विकर्णः पुरुषर्षभ ।
सुखोषितः सुखार्हश्च शेते पांसुषु माधव ॥ ५
कर्णिनालीकनाराचैर्भिन्नमर्माणमाहवे ।
अद्यापि न जहात्येनं लक्ष्मीर्भरतसत्तमम् ॥ ६
एष संग्रामशूरेण प्रतिज्ञां पालयिष्यता ।
दुर्मुखोऽभिमुखः शेते हतोऽरिगणहा रणे ॥ ७
तस्यैतद्वदनं कृष्ण श्वापदैरर्धभक्षितम् ।
विभात्यभ्यधिकं तात सप्तम्यामिव चन्द्रमाः ॥ ८
शूरस्य हि रणे कृष्ण पश्याननमथेदृशम् ।
स कथं निहतोऽमित्रैः पांसून्ग्रसति मे सुतः ॥ ९
यस्याहवमुखे सौम्य स्थाता नैवोपपद्यते ।
स कथं दुर्मुखोऽमित्रैर्हतो विबुधलोकजित् ॥ १०
चित्रसेनं हतं भूमौ शयानं मधुसूदन ।
धार्तराष्ट्रमिमं पश्य प्रतिमानं धनुष्मताम् ॥ ११
तं चित्रमाल्याभरणं युवत्यः शोककर्शिताः ।
क्रव्यादसङ्घैः सहिता रुदन्त्यः पर्युपासते ॥ १२
स्त्रीणां रुदितनिर्घोषः श्वापदानां च गर्जितम् ।
चित्ररूपमिदं कृष्ण विमृश्य प्रतिभाति मे ॥ १३
युवा वृन्दारको नित्यं प्रवरस्त्रीनिषेवितः ।
विविंशतिरसौ शेते ध्वस्तः पांसुषु माधव ॥ १४
शरसंकृत्तवर्माणं वीरं विशसने हतम् ।
परिवार्यासते गृध्राः परिविंशं विविंशतिम् ॥ १५
प्रविश्य समरे शूरः पाण्डवानामनीकिनीम् ।
स वीरशयने शेते परः सत्पुरुषोचिते ॥ १६
स्मितोपपन्नं सुनसं सुभ्रु ताराधिपोपमम् ।
अतीव सौम्यवदनं कृष्ण पश्य विविंशतेः ॥ १७
यं स्म तं पर्युपासन्ते बहुधा वरयोषितः ।
क्रीडन्तमिव गन्धर्वं देवकन्याः सहस्रशः ॥ १८
हन्तारं परसैन्यानां शूरं समितिशोभनम् ।
निबर्हणममित्राणां दुःसहं विषहेत कः ॥ १९
दुःसहस्यैतदाभाति शरीरं संवृतं शरैः ।
गिरिरात्मरुहैः फुल्लैः कर्णिकारैरिवाचितः ॥ २०
शातकौम्भ्या स्रजा भाति कवचेन च भास्वता ।
अग्निनेव गिरिः श्वेतो गतासुरपि दुःसहः ॥ २१

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

कृष्णंप्रति गान्धार्या रुदन्तीनां स्त्रीणां प्रदर्शनम् ॥ १ ॥

गान्धार्युवाच ।
अध्यर्धगुणमाहुर्यं बले शौर्ये च केशव ।
पित्रा त्वया च दाशार्ह दृप्तं सिंहमिवोत्कटम् ॥ १
यो बिभेद चमूमेको मम पुत्रस्य दुर्भिदाम् ।
स भूत्वा मृत्युरन्येषां स्वयं मृत्युवशं गतः ॥ २

अध्यर्धगुणं सार्धगुणम् ॥ १ ॥

तस्योपलक्षये कृष्ण कार्ष्णेरमिततेजसः ।
अभिमन्योर्हतस्यापि प्रभा नैवोपशाम्यति ॥ ३
एषा विराटदुहिता स्नुषा गाण्डीवधन्वनः ।
हतं बाला पतिं वीरं दृष्ट्वा शोचत्यनिन्दिता ॥ ४
तमेषा हि समागम्य भार्या भर्तारमन्तिके ।
विराटदुहिता कृष्ण पाणिना परिमार्जति ॥ ५
तस्य वक्त्रमुपाघ्राय सौभद्रस्य मनस्विनी ।
विबुद्धकमलाकारं कम्बुवृत्तशिरोधरम् ॥ ६
कामरूपवती चैषा परिष्वजति भामिनी ।
लज्जमाना पुरा चैनं माध्वीकमदमूर्च्छिता ॥ ७
तस्य क्षतजसंदिग्धं जातरूपपरिष्कृतम् ।
विमुच्य कवचं कृष्ण शरीरमभिवीक्षते ॥ ८
अवेक्षमाणा तं बाला कृष्ण त्वामभिभाषते ।
अयं ते पुण्डरीकाक्ष सदृशाक्षो निपातितः ॥ ९
बले वीर्ये च सदृशस्तेजसा चैव तेऽनघ ।
रूपेण च तथाऽत्यर्थं शेते भुवि निपातितः ॥१०
अत्यन्तं सुकुमारस्य राङ्कवाजिनशायिनः ।
कच्चिदद्य शरीरं ते भूमौ न परितप्यते ॥ ११
मातङ्गभुजवर्ष्माणौ ज्याक्षेपकठिनत्वचौ ।
काञ्चनाङ्गदिनौ शेते निक्षिप्य विपुलौ भुजौ ।
व्यायम्य बहुधा नूनं सुखसुप्तः श्रमादिव ॥ १२
एवं विलपतीमार्तां किं मां न प्रतिभाषसे ।
न स्माराम्यपराधं ते किं मां न प्रतिभाषसे ॥ १३
ननु मां त्वं पुरा दूरादभिवीक्ष्याभिभाषसे ।
न स्माराम्यपराधं मे किं मां न प्रतिभाषसे ॥ १४
आर्यामार्य सुभद्रां त्वमिमांश्च त्रिदशोपमान् ।
पितॄन्मां चैव दुःखार्तां विहाय क्व गमिष्यसि १५
तस्य शोणितदिग्धान्वै केशानुन्नम्य पाणिना ।
उत्सङ्गे वक्त्रमाधाय जीवन्तमिव पृच्छति ॥ १६
स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः ।
कथं त्वां रणमध्यस्थं जघ्नुरेते महारथाः ॥ १७
धिगस्तु क्रूरकर्तॄंस्तान्कृपकर्णजयद्रथान् ।
द्रोणद्रौणायनी चोभौ यैरहं विधवा कृता ॥ १८
रथर्षभाणां सर्वेषां कथमासीत्तदा मनः ।
बालं त्वां परिवार्यैकमनेकेषां च जघ्नताम् ॥ १९
कथं नु पाण्डवानां च पाञ्चालानां तु पश्यताम् ।
त्वं वीर निधनं प्राप्तो नाथवान्सन्ननाथवत् ॥ २०
दृष्ट्वा बहुभिराक्रन्दे निहतं त्वां पिता तव ।
वीरः पुरुषशार्दूलः कथं जीवति पाण्डवः ॥ २१
न राज्यलाभो विपुलः शत्रूणां च पराभवः ।
प्रीतिं धास्यति पार्थानां त्वामृते पुष्करेक्षण ॥२२
तव शस्त्रजिताँल्लोकान्धर्मेण च दमेन च ।
क्षिप्रमन्वागमिष्यामि तत्र मां प्रतिपालय ॥ २३
दुर्मरं पुनरप्राप्ते काले भवति केनचित् ।
यदहं त्वां रणे दृष्ट्वा हतं जीवामि दुर्भगा ॥ २४
कामिदानीं नरव्याघ्र श्लक्ष्णया स्मितया गिरा ।
पितृलोके समेत्यान्यां मामिवामन्त्रयिष्यसि ॥२५
नूनमप्सरसां स्वर्गे मनांसि प्रमथिष्यसि ।
परमेण च रूपेण गिरा च स्मितपूर्वया ॥ २६
प्राप्य पुण्यकृताँल्लोकानप्सरोभिः समेयिवान् ।
सौभद्र विहरन्काले स्मरेथाः सुकृतानि मे ॥ २७
एतावानिह संवासो विहितस्ते मया सह ।
षण्मासान्सप्तमे मासि त्वं वीर निधनं गतः ॥ २८
इत्युक्तवचनामेनामपकर्षन्ति दुःखिताम् ।
उत्तरां मोघसंकल्पां मत्स्यराजकुलस्त्रियः ॥ २९
उत्तरामपकृष्यैनामार्तामार्ततराः स्वयम् ।
विराटं निहतं दृष्ट्वा क्रोशन्ति विलपन्ति च ॥ ३०
द्रोणास्त्रशरसंकृत्तं शयानं रुधिरोक्षितम् ।
विराटं वितुदन्त्येते गृध्रगोमायुवायसाः ॥ ३१
वितुद्यमानं विहगैर्विराटमसितेक्षणाः ।
न शक्नुवन्ति विहगान्निवारयितुमातुराः ॥ ३२
आसामातपतप्तानामायासेन च योषिताम् ।
श्रमेण च विवर्णानां वक्त्राणां विप्लुतं वपुः ॥ ३३
उत्तरं चाभिमन्युं च काम्भोजं च सुदक्षिणम् ।

---

दुष्करं पुनरप्राप्तं काले भवति केनचित् इति क. पाठः । दुष्करं प्रति न प्राप्तमित्यादि छ. ट. पाठः ॥ २४ ॥

वपुः शस्ताकृतिः । वपुः क्लीब तनौ शस्ताकृतावपीति मेदिनी ॥ ३३ ॥ विंशतितमोऽध्यायः ॥ २० ॥

कार्ष्णिनाऽभिहतं पश्य लक्ष्मणं प्रियदर्शनम् । आयोधनशिरोमध्ये शयानं पश्य माधव ॥ ३४

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

कृष्णंप्रति गान्धार्या कर्णशरीरस्य विलपन्तीनां तत्स्त्रीणां च प्रदर्शनम् ॥ १ ॥

गान्धार्युवाच ।
एष वैकर्तनः शेते महेष्वासो महारथः ।
ज्वलितानलवत्सङ्ख्ये संशान्तः पार्थतेजसा ॥ १
पश्य वैकर्तनं कर्णं निहत्यातिरथान्बहून् ।
शोणितौघपरीताङ्गं शयानं पतितं भुवि ॥ २
अमर्षी दीर्घरोषश्च महेष्वासो महारथः ।
रणे विनिहतः शेते शूरो गाण्डीवधन्वना ॥ ३
यं स्म पाण्डवसंत्रासान्मम पुत्रा महारथाः ।
प्रायुध्यन्त पुरस्कृत्य मातङ्गा इव यूथपम् ॥ ४
शार्दूलमिव सिंहेन समरे सव्यसाचिना ।
मातङ्गमिव मत्तेन मातङ्गेन निपातितम् ॥ ५
तमेताः पुरुषव्याघ्र निहतं शूरमाहवे ।
प्रकीर्णमूर्धजास्तस्य स्त्रियस्तं पर्युपासते ॥ ६
उद्विग्नः सततं यस्माद्धर्मराजो युधिष्ठिरः ।
त्रयोदशसमा निद्रां चिन्तयन्नाध्यगच्छत ॥ ७
अनाधृष्यः परैर्युद्धे शत्रुभिर्मघवानिव ।
युगान्ताग्निरिवार्चिष्मान्हिमवानिव सुस्थिरः ॥ ८
स भूत्वा शरणं पूर्वं धार्तराष्ट्रस्य माधव ।
भूमौ विनिहतः शेते वातभग्न इव द्रुमः ॥ ९
पश्य कर्णस्य पत्नीं त्वं वृषसेनस्य मातरम् ।
लालप्यमानां करुणं रुदतीं पतितां भुवि ॥ १०

आचार्यशापोऽनुगतो ध्रुवं त्वां
यदग्रसच्चक्रमियं धरित्री ।
ततः शरेणापहृतं शिरस्ते
धनञ्जयेनाहवचक्रमध्ये ॥ ११
हाहा धिगेषा पतिता विसंज्ञा
समीक्ष्य जाम्बूनदबद्धकक्षम् ।
कर्णं महाबाहुमदीनसत्वं
सुषेणमाता रुदती भृशार्ता ॥ १२
अल्पावशेषोऽहि कृतो महात्मा
शरीरभक्षैः परिभक्षयद्भिः ।
द्रष्टुं न संप्रीतिकरः शशीव
कृष्णस्य पक्षस्य चतुर्दशाहे ॥ १३
सा वर्तमाना पतिता पृथिव्या-
मुत्थाय दीना पुनरेव चैषा ।
कर्णस्य वक्त्रं परिजिघ्रमाणा
रोरूयते पुत्रवधाभितप्ता ॥ १४

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

गान्धार्या कृष्णंप्रति बाह्लिकादीनां तथा तत्स्त्रीणां च प्रदर्शनम् ॥ १ ॥

गान्धार्युवाच ।
आवन्त्यं भीमसेनेन भक्षयन्ति निपातितम् ।
गृध्रगोमायवः शूरं दूरबन्धुमबन्धुवत् ॥ १
तं पश्य कदनं कृत्वा शूराणां मधुसूदन ।
शयानं वीरशयने रुधिरेण समुक्षितम् ॥ २
तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः ।
तेनतेन विकर्षन्ति पश्य कालस्य पर्ययम् ॥ ३
शयानं वीरशयने शूरमाक्रन्दकारिणम् ।
आवन्त्यमभितो नार्यो रुदत्यः पर्युपासते ॥ ४
प्रातिपेयं महेष्वासं हतं भीमेन बाह्लिकम् ।
प्रसुप्तमिव शार्दूलं पश्य कृष्णमनस्विनम् ॥ ५
अतीव मुखवर्णोऽस्य निहतस्यापि शोभते ।

कलावशेषो हि इति क. पाठः॥ १३ ॥ रोरूयते दुःखचयाभितप्ता इति क. ट. पाठः॥ १४ ॥ एकविंशतितमोऽध्यायः २१

सोमस्येवाभिपूर्णस्य पौर्णमास्यां समुद्यतः ॥ ६
पुत्रशोकाभितप्तेन प्रतिज्ञां चाभिरक्षता ।
पाकशासनिना सङ्ख्ये वार्धक्षत्रिर्निपातितः ॥ ७
एकादशचमूर्भित्त्वा रक्ष्यमाणं महात्मभिः ।
सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ॥ ८
सिन्धुसौवीरभर्तारं दर्पपूर्णं मनस्विनम् ।
भक्षयन्ति शिवा गृध्रा जनार्दन जयद्रथम् ॥ ९
संरक्ष्यमाणं भार्याभिरनुरक्ताभिरच्युत ।
भीषयन्त्यो विकर्षन्ति गहनं निम्नमन्तिकात् १०
तमेताः पर्युपासन्ते वीक्षमाणा महाभुजम् ।
सिन्धुसौवीरकाम्भोजगान्धारयवनस्त्रियः ॥ ११
यदा कृष्णामुपादाय प्राद्रवत्केकयैः सह ।
तदैव वध्यः पाण्डूनां जनार्दन जयद्रथः ॥ १२
दुःशलां मानयद्भिस्तु तदा मुक्तो जयद्रथः ।
कथमद्य न तां कृष्ण मानयन्ति स्म ते पुनः १३
सैन्धवं मे सुता बाला प्रस्खलन्तीव दुःखिता ।
प्रमापयन्ती चात्मानमाक्रोशन्तीव पाण्डवान् १४
किंनु दुःखतरं कृष्ण परं मम भविष्यति ।
यत्सुता विधवा बाला स्नुषाश्च निहतेश्वराः ॥१५
हाहा धिग्दुःशलां पश्य वीतशोकभयामिव ।
भर्तुः शिर अपश्यन्तीं धावमानामितस्ततः ॥ १६
वारयामास यः सर्वान्पाण्डवान्पुत्रगृद्धिनः ।
स हत्वा विपुलाः सेनाः स्वयं मृत्युवशं गतः १७
तं मत्तमिव मातङ्गं वीरं परमदुर्जयम् ।
परिवार्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः ॥ १८

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

कृष्णंप्रति गान्धार्या भीष्मद्रोणादिगुणानुवर्णनपूर्वकं तत्तच्छरीराणां विलपन्तीनां तत्तत्स्त्रीणां च प्रदर्शनम् ॥ १ ॥

गान्धार्युवाच ।
एष शल्यो हतः शेते साक्षान्नकुलमातुलः ।
धर्मज्ञेन हतस्तात धर्मराजेन संयुगे ॥ १
यस्त्वया स्पर्धते नित्यं सर्वत्र पुरुषर्षभ ।
स एष निहतः शेते मद्रराजो महाबलः ॥ २
'जयद्रथे यदि ब्रूयुरुपरोधं कथंचन ।
मद्रपुत्रे कथं ब्रूयुरपराधं विचक्षवः ॥' ३
येन संगृह्णता तात रथमाधिरथेर्युधि ।
जयार्थं पाण्डुपुत्राणां तदा तेजोवधः कृतः ॥ ४
अहो धिक्पश्य शल्यस्य पूर्णचन्द्रसुदर्शनम् ।
मुखं पद्मपलाशाक्षं काकैरादष्टमव्रणम् ॥ ५
एषा चामीकराभस्य तप्तकाञ्चनसप्रभा ।
आस्याद्विनिःसृता जिह्वा भक्ष्यते कृष्ण पक्षिभिः ६
युधिष्ठिरेण निहतं शल्यं समितिशोभनम् ।
रुदन्त्यः पर्युपासन्ते मद्रराजं कुलाङ्गनाः ॥ ७
एताः सुसूक्ष्मवसना मद्रराजं नरर्षभम् ।
क्रोशन्त्योऽथ समासाद्य क्षत्रियाः क्षत्रियर्षभम् ॥८
शल्यं निपतितं नार्यः परिवार्याभितः स्थिताः ।
वासिता गृष्टयः पङ्के परिमग्नमिवर्षभम् ॥ ९
शल्यं शरणदं शूरं पश्येमं वृष्णिनन्दन ।
शयानं वीरशयने शरैर्विशकलीकृतम् ॥ १०
एष शैलालयो राजा भगदत्तः प्रतापवान् ।
गजाङ्कुशधरः श्रीमाञ्शेते भुवि निपातितः ॥ ११
यस्य रुक्ममयी माला शिरस्येषा विराजते ।
श्वापदैर्भक्ष्यमाणस्य शोभयन्तीव मूर्धजान् ॥ १२
एतेन किल पार्थस्य युद्धमासीत्सुदारुणम् ।
रोमहर्षणमत्युग्रं शक्रस्य त्वहिना यथा ॥ १३
योधयित्वा महाबाहुरेष पार्थं धनञ्जयम् ।
संशयं गमयित्वा च कुन्तीपुत्रेण पातितः ॥ १४
यस्य नास्ति समो लोके शौर्ये वीर्ये च कश्चन ।
स एष निहतः शेते भीष्मो भीष्मकृदाहवे ॥ १५
पश्य शान्तनवं कृष्ण शयानं सूर्यवर्चसम् ।
युगान्त इव कालेन पातितं सूर्यमम्बरात् ॥ १६
एष तप्त्वा रणे शत्रूञ्शस्त्रतापेन वीर्यवान् ।

वार्धक्षत्रिर्जयद्रथः ॥ ७ ॥ द्वाविंशोऽध्यायः ॥ २२ ॥
परिमग्नमिव द्विपमिति झ. पाठः ॥ ९ ॥ अहिना वृत्रासुरेण ॥ १३ ॥ भीष्मकृत् भयकरकर्मकृत् ॥ १५ ॥

नरसूर्योऽस्तमभ्येति सूर्योऽस्तमिव केशव ॥ १७
शरतल्पगतं भीष्ममूर्ध्वरेतममच्युतम् ।
शयानं वीरशयने पश्य शूरनिषेवित ॥ १८
कर्णिनालीकनाराचैरास्तीर्य शयनोत्तमम् ।
आविश्य शेते भगवान्स्कन्दः शरवणं यथा ॥ १९
अनूलपूर्णं गाङ्गेयस्त्रिभिर्बाणैः समन्वितम् ।
उपधायोपधानाग्र्यं दत्तं गाण्डीवधन्वना ॥ २०
पालयानः पितुः शास्त्रमूर्ध्वरेता महायशाः ।
एष शान्तनवः शेते माधवाप्रतिमो युधि ॥ २१
धर्मात्मा तात सर्वज्ञः पारावर्येण निर्णये ।
अमर्त्य इव मर्त्यः सन्नेष प्राणानधारयत् ॥ २२
नास्ति युद्धे कृती कश्चिन्न विद्वान्न पराक्रमी ।
यत्र शान्तनवो भीष्मः शेतेऽद्य निहतः परैः ॥२३
स्वयमेतेन शूरेण पृच्छ्यमानेन पाण्डवैः ।
धर्मज्ञेनाहवे मृत्युरादिष्टः सत्यवादिना ॥ २४
प्रनष्टः कुरुवंशश्च पुनर्येन समुद्धृतः ।
स गतः कुरुभिः सार्धं महाबुद्धिः पराभवम् ॥२५
धर्मेण कुरवः केन परिप्रक्ष्यन्ति माधव ।
हते देवव्रते भीष्मे देवकल्पे नरर्षभे ॥ २६
अर्जुनस्य विनेतारमाचार्यं सात्यकेस्तथा ।
तं पश्य पतितं द्रोणं कुरूणां गुरुमुत्तमम् ॥ २७
अस्त्रं चतुर्विधं वेद यथैव त्रिदशेश्वरः ।
भार्गवो वा महावीर्यस्तथा द्रोणोऽपि माधव ॥२८
यस्य प्रसादाद्बीभत्सुः पाण्डवः कर्म दुष्करम् ।
चकार स हतः शेते नैनमस्त्राण्यपालयन् ॥ २९
यं पुरोधाय कुरव आह्वयन्ति स्म पाण्डवान् ।
सोऽयं शस्त्रभृतां श्रेष्ठो द्रोणः शस्त्रपृथक्कृतः ॥३०
यस्य निर्दहतः सेनां गतिरग्नेरिवाभवत् ।
स भूमौ निहतः शेते शान्तार्चिरिव पावकः ॥३१
धनुर्मुष्टिरशीर्णश्च हस्तावापश्च माधव ।
द्रोणस्य निहतस्यापि दृश्यते जीवतो यथा ॥ ३२
वेदा यस्माच्च चत्वारः सर्वाण्यस्त्राणि केशव ।
अनपेतानि वै शूराद्यथैवादौ प्रजापतेः ॥ ३३
चन्दनार्हाविमौ तस्य बन्दिभिर्वन्दितौ शुभौ ।
गोमायवो विकर्षन्ति पादौ शिष्यशतार्चितौ ३४
द्रोणं द्रुपदपुत्रेण निहतं मधुसूदन ।
कृपी कृपणमन्वास्ते दुःखोपहतचेतना ॥ ३५
तां पश्य रुदतीमार्तां मुक्तकेशीमधोमुखीम् ।
हतं पतिमुपासन्तीं द्रोणं शस्त्रभृतां वरम् ॥ ३६
बाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव ।
उपास्ते वै मृधे द्रोणं जटिला ब्रह्मचारिणी ॥ ३७
प्रेतकृत्ये च यतते कृपी कृपणमातुरा ।
हतस्य समरे भर्तुः सुकुमारी यशस्विनी ॥ ३८
अग्नीनाधाय विधिवच्चितां प्रज्वाल्य सर्वतः ।
द्रोणमाधाय गायन्ति त्रीणि सामानि सामगाः ॥
कुर्वन्ति च चितामेते जटिला ब्रह्मचारिणः ।
धनुर्भिः शक्तिभिश्चैव रथनीडैश्च माधव ॥ ४०
शरैश्च विविधैरन्यैर्धक्ष्यन्ते भूरितेजसम् ।
त एते द्रोणमादाय गायन्ति च रुदन्ति च ॥ ४१
सामभिस्त्रिभिरन्तस्थैरनुशंसन्ति चापरे ।
अग्नावग्निं समाधाय द्रोणं हुत्वा हुताशने ॥ ४२
गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः ।
अपसव्यां चितिं कृत्वा पुरस्कृत्य कृपीं तथा ॥४३

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः ॥ २४ ॥

कृष्णंप्रति गान्धार्या भूरिश्रवःप्रभृतिशरीराणां तत्तत्स्त्रीणां च प्रदर्शनम् ॥ १ ॥

गान्धार्युवाच ।
सोमदत्तसुतं पश्य युयुधानेन पातितम् ।
वितुद्यमानं विहगैर्बहुभिर्माधवान्तिके ॥ १
पुत्रशोकाभिसंतप्तः सोमदत्तो जनार्दन ।

---

शास्त्रं आज्ञाम् ॥ २१ ॥ निर्णये पारावर्येण । परावरौ परलोकेहलोकौ तद्विषयेण ज्ञानेन । तत्त्वज्ञानबलेन प्राणानधारयदित्यर्थः । पारंपर्येऽथ निर्णय इति छ. पाठः । पाराशर्यस्य निर्णये इति क. ट. पाठः ॥ २२ ॥ धर्मेषु कुरवः कं नु परिप्रक्ष्यन्ति माधव । गते देवव्रते स्वर्गं देवकल्पे नरर्षभे इति झ. पाठः ॥ २६ ॥ शिष्यशरार्चिताविति क. पाठः ॥ ३४ ॥ त्रयोविंशोऽध्यायः ॥ २३ ॥

युयुधानं महेष्वासं गर्हयन्निव दृश्यते ॥ २
असौ हि भूरिश्रवसो माता शोकपरिप्लुता ।
आश्वासयति भर्तारं सोमदत्तमनिन्दिता ॥ ३
दिष्ट्या नैनं महाराज दारुणं भरतक्षयम् ।
कुरुसंक्रन्दनं घोरं युगान्तमनुपश्यसि ॥ ४
दिष्ट्या यूपध्वजं पुत्रं वीरं भूरिसहस्रदम् ।
अनेकक्रतुयज्वानं निहतं नानुपश्यसि ॥ ५
दिष्ट्या स्नुषाणामाक्रन्दे घोरं विलपितं बहु ।
न शृणोषि महाराज सारसीनामिवार्णवे ॥ ६
एकवस्त्रास्तु पश्चैताः प्रकीर्णासितमूर्धजाः ।
स्नुषास्ते परिधावन्ति हतापत्या हतेश्वराः ॥ ७
श्वापदैर्भक्ष्यमाणं त्वमहो दिष्ट्या न पश्यसि ।
छिन्नबाहुं नरव्याघ्रमर्जुनेन निपातितम् ॥ ८
शलं विनिहतं सङ्ख्ये भूरिश्रवसमेव च ।
स्नुषाश्च विविधाः सर्वा दिष्ट्या नाद्येह पश्यसि ॥९
दिष्ट्या तत्काञ्चनं छत्रं यूपकेतोर्महात्मनः ।
विनिकीर्णं रथोपस्थे सौमदत्तेर्न पश्यसि ॥ १०
अमूस्तु भूरिश्रवसो भार्याः सात्यकिना हतम् ।
परिवार्यानुशोचन्ति भर्तारमसितेक्षणाः ॥ ११
एता विलप्य करुणं भर्तृशोकेन कर्शिताः ।
पतन्त्यभिमुखा भूमौ कृपणं बत केशव ॥ १२
बीभत्सुरतिबीभत्सं कर्मेदमकरोत्कथम् ।
प्रमत्तस्य यदच्छैत्सीद्बाहुं शूरस्य यज्वनः ॥ १३
ततः पापतरं कर्म कृतवानपि सात्यकिः ।
यस्मात्प्रायोपविष्टस्य प्राहार्षीत्संशितात्मनः ॥ १४
एको द्वाभ्यां हतः शेते क्षत्रधर्मेण धार्मिकः ।
किंनु वक्ष्यति वै सत्सु गोष्ठीषु च सभासु च ॥१५
अपुण्यमयशस्यं च कर्मेदं सात्यकिः स्वयम् ।
इति यूपध्वजस्यैताः स्त्रियः क्रोशन्ति माधव ॥१६
भार्या यूपध्वजस्यैषा करसंमितमध्यमा ।
कृत्वोत्सङ्गे भुजं भर्तुः कृपणं परिदेवति ॥ १७
अयं स हन्ता शूराणां मित्राणामभयप्रदः ।
प्रदाता गोसहस्राणां क्षत्रियान्तकरः करः ॥ १८
अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ १९
वासुदेवस्य सान्निध्ये पार्थेनाक्लिष्टकर्मणा ।
युध्यतः समरेऽन्येन प्रमत्तस्य निपातितः ॥ २०
किंनु वक्ष्यसि संसत्सु कथासु च जनार्दन ।
अर्जुनस्य महत्कर्म स्वयं वा स किरीटभृत् ॥ २१
इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना ।
तामेतामनुशोचन्ति सपत्न्यः स्वामिव स्नुषाम् २२
गान्धारराजः शकुनिर्बलवान्सत्यविक्रमः ।
निहतः सहदेवेन भागिनेयेन मातुलः ॥ २३
यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां स्म वीज्यते ।
स एष पक्षिभिः पक्षैः शयान उपवीज्यते ॥ २४
यः स्वरूपाणि कुरुते शतशोऽथ सहस्रशः ।
तस्य मायाविनो माया दग्धाः पाण्डवतेजसा २५
मायया निकृतिप्रज्ञो जितवान्यो युधिष्ठिरम् ।
सभायां विपुलं राज्यं स जहौ जीवितं कथम् २६
शकुन्ताः शकुनिं कृष्ण समन्तात्पर्युपासते ।
कितवं मम पुत्राणां विनाशायोपशिक्षितम् ॥२७
एतेनैतन्महद्वैरं प्रसक्तं पाण्डवैः सह ।
वधाय मम पुत्राणामात्मनः सगणस्य च ॥ २८
यथैव मम पुत्राणां लोकाः शस्त्रजिताः प्रभो ।
एवमस्यापि दुर्बुद्धेर्लोकाः शस्त्रेण वै जिताः ॥ २९
कथं च नायं तत्रापि पुत्रान्मे भ्रातृभिः सह ।
विरोधयेदृजुप्रज्ञाननृजुर्मधुसूदन ॥ ३०

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

---

बीभत्सुरतिनिर्मलकर्मा । अतिबीभत्सं अतिगर्हितम् ॥१३॥
एको द्वाभ्यां हतः शेषे त्वमधर्मेण धार्मिक इति झ. पाठः॥१५॥
स पुनर्जीवितं जित इति झ. पाठः ॥ २६ ॥ चतुर्विंशोऽध्यायः ॥ २४ ॥

सोमदत्ताद्विकर्णाच्च शूराच्च कृतवर्मणः ॥ ३१
ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः ।
त इमे निहताः सङ्ख्ये पश्य कालस्य पर्ययम् ॥ ३२
नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन ।
यदिमे निहताः शूराः क्षत्रियैः क्षत्रियर्षभाः ।
'शूराश्च कृतविद्याश्च मम पुत्रा मनस्विनः ॥' ३३
तदैव निहताः कृष्ण मम पुत्रास्तरस्विनः ।
यदैवाकृतकामस्त्वमुपप्लाव्यं गतः पुनः ॥ ३४
शन्तनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च ।
तदैवोक्तास्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ॥ ३५
तयोर्हि दर्शनं नैतन्मिथ्या भवितुमर्हति ।
अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन ॥ ३६
वैशंपायन उवाच ।
इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोकमूर्च्छिता ।
दुःखोपहतविज्ञाना धैर्यमुत्सृज्य भारत ॥ ३७
ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता ।
जगाद शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ॥ ३८
गान्धार्युवाच ।
पाण्डवा धार्तराष्ट्राश्च क्रुद्धाः कृष्ण परस्परम् ।
उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्दन ॥ ३९
शक्तेन बहुभृत्येन विपुले तिष्ठता बले ।
उभयत्र समर्थेन श्रुतवाक्येन चैव ह ॥ ४०
इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन ।
यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ ४१
पतिशुश्रूषया यन्मे तपः किंचिदुपार्जितम् ।
तेन त्वां दुरवापेन शपे चक्रगदाधरम् ॥ ४२
यस्मात्परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः ।
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन्वधिष्यसि ४३
त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ ४४
अनाथवदविज्ञातो लोकेष्वनभिलक्षितः ।
कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ॥ ४५
तवाप्येवं हतसुता निहतज्ञातिबान्धवाः ।
स्त्रियः परिपतिष्यन्ति यथैता भरतस्त्रियः ॥ ४६
वैशंपायन उवाच ।
तच्छ्रुत्वा वचनं घोरं वासुदेवो महामनाः ।
उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ॥ ४७
जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये ।
दैवादेव विनश्यन्ति वृष्णयो नात्र संशयः ॥ ४८
संहर्ता वृष्णिचक्रस्य नान्यो मद्विद्यते शुभे ।
अवध्यास्ते नरैरन्यैरपि वा देवदानवैः ॥ ४९
परस्परकृतं नाशं यतः प्राप्स्यन्ति यादवाः ।
इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः ।
बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते ॥ ५०

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

समाप्तं च स्त्रीविलापपर्व ॥ २ ॥

---

# ( अथ श्राद्धपर्व ॥ ३ ॥ )

## षड्विंशोऽध्यायः ॥ २६ ॥

शोकाद्भुवि पतिताया गान्धार्याः कृष्णेनाश्वासनम् ॥ १ ॥ युधिष्ठिराज्ञया विदुरसंजयादिभिर्मृतानां दाहक्रियाकरणम् ॥ २ ॥

श्रीभगवानुवाच ।
उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः ।
तवैव ह्यपराधेन कुरवो निधनं गताः ॥ १
यत्त्वं पुत्रं दुरात्मानमीर्षुमत्यन्तमानिनम् ।
दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ॥ २
निष्ठुरं वैरपुरुषं वृद्धानां शासनातिगम् ।
कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ॥ ३
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।

---

तयोर्भीष्मविदुरयोः दर्शनं अनागतावेक्षणम् ॥ ३६ ॥ जगाद शौरिं रोषेणेति ट. पाठः ॥ ३८ ॥ अभ्युत्स्मयन्नीषद्धसयन् ॥ ४७ ॥ चीर्णं चरसि मदनुष्ठितमेवानुतिष्ठसि । स्वतपोनाशार्थमिति भावः ॥ ४८ ॥ पञ्चविंशोऽध्यायः ॥ २५ ॥

दुष्कृतं दुराचरित स्वकीयम् ॥ २ ॥ वैरप्रियं पुरुषं वैरपुरुषम् ॥ ३ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

कृष्णंप्रति गान्धार्या कुरुपाण्डवसंक्षयस्य कृष्णोपेक्षणहेतुकत्वकथनपूर्वकं सर्वबन्धुसंक्षयाय शापदानम् ॥ १ ॥

गान्धार्युवाच ।
काम्भोजं पश्य दुर्धर्षं काम्भोजास्तरणोचितम् ।
शयानमृषभस्कन्धं हतं पांसुषु माधव ॥ १
अस्य क्षतजसंदिग्धौ बाहू चन्दनरूषितौ ।
अवेक्ष्य कृपणं भार्या विलपत्यतिदुःखिता ॥ २
इमौ तौ परिघप्रख्यौ बाहू चन्दनरूषितौ ।
ययोर्विवरमापन्नां न रतिर्मां पुराऽजहात् ॥ ३
कां गतिं तु गमिष्यामि त्वया हीना जनेश्वर ।
दूरबन्धुरनाथा च वेपन्ती मधुरस्वरा ॥ ४
आतपे क्लाम्यमानानां विविधानामिव स्रजाम् ।
क्लान्तानामपि नारीणां जहाति श्रीर्न वै तनूः ॥ ५
शयानमभितः शूरं कालिङ्गं मधुसूदन ।
पश्य दीप्ताङ्गदयुतं प्रतिमानं धनुष्मताम् ॥ ६
मागधानामधिपतिं जयत्सेनं जनार्दन ।
परिवार्य प्ररुदिता मागध्यः पश्य योषितः ॥ ७
हरिणायतनेत्राणां सुस्वराणां जनार्दन ।
मनःश्रुतिहरो नादो मनो मोहयतीव मे ॥ ८
प्रकीर्णवस्त्राभरणा रुदत्यः शोककर्शिताः ।
स्वास्तीर्णशयनोपेता मागध्यः शेरते भुवि ॥ ९
कोसलानामधिपतिं राजपुत्रं बृहद्बलम् ।
भर्तारं परिवार्यैताः पृथक्प्ररुदिताः स्त्रियः ॥ १०
अस्य गात्रगतान्बाणान्कार्ष्णिबाहुबलेरितान् ।
उद्धरन्त्यसुखाविष्टा मूर्च्छमानाः पुनः पुनः ॥ ११
आसां सर्वानवद्यानामातपेन परिश्रमात् ।
प्रम्लाननलिनाभानि भान्ति वक्त्राणि माधव ॥ १२
द्रोणेन निहताः शूरा शेरते रुचिराङ्गदाः ।
धृष्टद्युम्नसुताः सर्वे शिशवो हेममालिनः ॥ १३
रथाग्न्यगारं चापार्चिं शरशक्तिगदेन्धनम् ।
द्रोणमासाद्य निर्दग्धाः शलभा इव पावकम् ॥ १४
तथैव निहताः शूराः शेरते रुचिराङ्गदाः ।
द्रोणेनाभिमुखाः सङ्ख्ये भ्रातरः पञ्च केकयाः ॥ १५
तप्तकाञ्चनवर्माणस्तालध्वजरथव्रजाः ।
भासयन्ति महीं भासा ज्वलिता इव पावकाः ॥ १६
द्रोणेन द्रुपदं सङ्ख्ये पश्य माधव पातितम् ।
महाद्विपमिवारण्ये सिंहेन महता हतम् ॥ १७
पाञ्चालराज्ञो विमलं पुण्डरीकाक्ष पाण्डुरम् ।
आतपत्रं समाभाति शरदीव निशाकरः ॥ १८
एतास्तु द्रुपदं वृद्धं स्नुषा भार्याश्च दुःखिताः ।
दग्ध्वा गच्छन्ति पाञ्चालराजानमपसव्यतः ॥ १९
धृष्टकेतुं महात्मानं चेदिपुङ्गवमङ्गनाः ।
द्रोणेन निहतं शूरं हरन्ति हृतचेतसः ॥ २०
द्रोणास्त्रमभिहत्यैष विमर्दे मधुसूदन ।
महेष्वासो हतः शेते वज्राहत इव द्रुमः ॥ २१
एष चेदिपतिः शूरो धृष्टकेतुर्महारथः ।
शेते विनिहतः सङ्ख्ये हत्वा शत्रून्सहस्रशः ॥ २२
वितुद्यमानं विहगैस्तं भार्याः पर्युपाश्रिताः ।
चेदिराजं हृषीकेश हतं सबलबान्धवम् ॥ २३
दाशार्हपुत्रजं वीरं शयानं सत्यविक्रमम् ।
आरोप्याङ्के रुदन्त्येताश्चेदिराज वराङ्गनाः ॥ २४
अस्य पुत्रं हृषीकेश सुवक्त्रं चारुकुण्डलम् ।
द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः ॥ २५
पितरं नूनमाजिस्थं युध्यमानं परैः सह ।
नाजहात्पितरं वीरमद्यापि मधुसूदन ॥ २६
एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात् ।
दुर्योधनं महाबाहो लक्ष्मणः परवीरहा ॥ २७
विन्दानुविन्दावावन्त्यौ पतितौ पश्य माधव ।
हिमान्ते पुष्पितौ शालौ मरुता गलिताविव ॥ २८
काञ्चनाङ्गदवर्माणौ बाणखड्गधनुर्धरौ ।
ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ ॥ २९
अवध्याः पाण्डवाः कृष्ण सर्व एव त्वया सह ।
ये मुक्ता द्रोणभीष्माभ्यां कर्णाद्वैकर्तनात्कृपात् ३०
दुर्योधनाद्द्रोणसुतात्सैन्धवाच्च जयद्रथात् ।

काम्भोजास्तरणं कम्बलविशेषः ॥ १ ॥ बाहू शुभतलाङ्गुली इति झ. पाठः ॥ ३ ॥ दीप्ताङ्गदयुगप्रतिनद्धमहाभुजमिति झ. पाठः ॥ ६ ॥ दाशार्हपुत्रजमित्यत्र पुत्र्यामपि पुत्रशब्दः ॥ २४ ॥ पितरमिति पितृपदस्यावृत्तिः शोकाकुलत्वान्न दोषाय ॥ २६ ॥

दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ४
तपोर्थीयं ब्राह्मणी धत्त गर्भं
गांवोढारं धावितारं तुरङ्गी ।
शूद्रा दासं पशुपालं च वैश्या
वधार्थीयं त्वद्विधा राजपुत्री ॥ ५
वैशंपायन उवाच ।
तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियम् ।
तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ॥ ६
धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः ।
पर्यपृच्छत धर्मज्ञो धर्मराजं युधिष्ठिरम् ॥ ७
जीवतां परिमाणज्ञः सैन्यानामसि पाण्डव ।
हतानां यदि जानीषे परिमाणं वदस्व मे ॥ ८
युधिष्ठिर उवाच ।
दशायुतसहस्राणि सहस्राणि च विंशतिः ।
कोट्यः षष्टिश्च षट् चैव ह्यस्मिन्राजन्मृधे हताः ॥९
आलक्षाणां च वीराणां सहस्राणि चतुर्दश ।
दश चान्यानि राजेन्द्र शतं षष्टिश्च भारत ॥ १०
धृतराष्ट्र उवाच ।
युधिष्ठिरगतिं कां ते गताः पुरुषसत्तम ।
आचक्ष्व मे महाबाहो सर्वज्ञो ह्यसि मे मतः ॥११
युधिष्ठिर उवाच ।
यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे ।
देवराजसमाँल्लोकान्गतास्ते सत्यविक्रमाः ॥ १२
ये त्वहृष्टेन मनसा मर्तव्यमिति भारत ।
युध्यमाना हताः सङ्ख्ये गन्धर्वैः सह संगताः ॥१३
ये च संग्रामभूमिष्ठा याचमानाः पराङ्मुखाः ।
शस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान्प्रति ॥ १४
पाल्यमानाः परैर्ये तु हीयमाना निरायुधाः ।
ह्रीनिषेवा महात्मानः परानभिमुखा रणे ॥ १५
छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्मपरायणाः ।
हतास्ते ब्रह्मसदनं गता वीराः सुवर्चसः ॥ १६
ये त्वत्र निहता राजन्नन्तरायोधनं प्रति ।
यथाकथंचित्पुरुषास्ते गता ह्युत्तरां गतिम् ॥ १७
धृतराष्ट्र उवाच ।
केन ज्ञानबलेनैवं पुत्र पश्यसि सिद्धवत् ।
तन्मे वद महाबाहो श्रोतव्यं यदि वै मया ॥१८
युधिष्ठिर उवाच ।
निदेशाद्भवतः पूर्वं वने विचरता मया ।
तीर्थयात्राप्रसङ्गेन संप्राप्तोऽयमनुग्रहः ॥ १९
देवर्षिर्लोमशो दृष्टस्ततः प्राप्तोऽस्म्यनुस्मृतिम् ।
दिव्यं चक्षुरपि प्राप्तं ज्ञानयोगेन वै पुरा ॥ २०
धृतराष्ट्र उवाच ।
ये त्वनाथा जनास्तात नाथवन्तश्च पाण्डव ।
कच्चित्तेषां शरीराणि धक्ष्यन्ति विधिपूर्वकम् ॥ २१
युधिष्ठिर उवाच ।
न येषां शान्तिकर्तारो न च येऽत्राहिताग्नयः ।
वयं च तेषां कुर्यामो बहुत्वात्तात कर्मणाम् ॥ २२
यान्सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः ।
तेषां संकर्षणा लोका भविष्यन्ति न संशयः ॥ २३
वैशंपायन उवाच ।
एवमुक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः ।
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् ॥ २४
विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम् ।
इन्द्रसेनमुखान्भृत्यान्सूतांश्चैव सहस्रशः ॥ २५
भवन्तः कारयन्त्वेषां प्रेतकार्याण्यशेषतः ।
यथा नाथवतां किंचिच्छरीरं न विनश्यति ॥ २६
शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः ।
सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा ॥ २७
चन्दनागुरुकाष्ठानि तथा कालीयकान्युत ।
घृतं तैलं च गन्धांश्च क्षौमाणि वसनानि च ॥ २८
समाहृत्य महार्हाणि दारूणां चैव संचयान् ।
रथांश्च मृदितांस्तत्र नानाप्रहरणानि च ॥ २९
चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिपान् ।
दाहयामासुरव्यग्राः शास्त्रदृष्टेन कर्मणा ॥ ३०
दुर्योधनं च राजानं भ्रातॄंश्चास्य महारथान् ।
शल्यं शलं च राजानं भूरिश्रवसमेव च ॥ ३१

द्वौ पूर्वापरदुःखद्वयरूपौ ॥ ४ ॥ तपोरूपायार्थाय उत्पन्नं तपोर्थीयम् । त्वद्विधा वधार्थीयमेव गर्भं धत्ते । अन्या तु जयार्थीयं कीर्त्यार्थीयमपीति भावः । तपोर्थिनं, वधार्थिनं इति क. पाठः ॥ ५ ॥ ते गतास्तूत्तरान्कुरूनिति छ. पाठः । ते गतास्तूत्तमां गतिमिति ट. पाठः । ते गता ह्यधमां गतिमिति क. पाठः ॥ १७ ॥ सुधर्माणं दुर्योधनपुरोहितम् ॥ २४ ॥

जयद्रथं च राजानमभिमन्युं च भारत ।
दौःशासनिं लक्ष्मणं च धृष्टकेतुं च पार्थिवम् ॥ ३२
बृहद्बलं सोमदत्तं सृञ्जयं च महारथम् ।
राजानं क्षेमधन्वानं विराटद्रुपदौ तथा ॥ ३३
शिखण्डिनं च पाञ्चाल्यं धृष्टद्युम्नं च पार्षतम् ।
युधामन्युं च विक्रान्तमुत्तमौजसमेव च ॥ ३४
कौसल्यं द्रौपदेयांश्च शकुनिं चापि सौबलम् ।
अचलं वृषकं चैव भगदत्तं च पार्थिवम् ॥ ३५
कर्णं वैकर्तनं चैव सहपुत्रममर्षणम् ।
केकयांश्च महेष्वासांस्त्रिगर्तांश्च महारथान् ॥ ३६
घटोत्कचं राक्षसेन्द्रं बकभ्रातरमेव च ।
अलम्बुसं राक्षसेन्द्रं जलसन्धं च पार्थिवम् ॥ ३७
अन्यांश्चान्यांश्च सुबहून्पार्थिवांश्च सहस्रशः ।
घृतधाराहुतैर्दीप्तैः पावकैः समदाहयन् ॥ ३८
पितृमेधाश्च केषांचित्प्रावर्तन्त महात्मनाम् ।
सामभिश्चाप्यगायन्त तेऽन्वशासत चापरैः ॥ ३९
साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः ।
कश्मलं सर्वभूतानां निशायां समपद्यत ॥ ४०
हुताश्च तत्प्रदीप्ताश्च दीप्यमानाश्च पावकाः ।
नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः ॥ ४१
ये चाप्यनाथास्तत्रासन्नानादेशसमागताः ।
तांश्च सर्वान्समानीय राशीकृत्वा सहस्रशः ॥ ४२
चित्वा दारुभिरव्यग्रैः प्रभूतैः स्नेहपाचितैः ।
दाहयामास तान्सर्वान्विदुरो राजशासनात् ॥ ४३
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः ।
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ॥ ४४

॥ इति श्रीमन्महाभारते स्त्रीपर्वणि श्राद्धपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

मृतानामुदकदानाय धृतराष्ट्रयुधिष्ठिरादिभिर्गङ्गातीरगमनम् ॥ १ ॥ उदकदानारम्भे कुन्त्या युधिष्ठिरंप्रति कर्णस्य स्वपुत्रत्वकथनपूर्वकं तस्मा उदकदानचोदना ॥ २ ॥ धृतराष्ट्रयुधिष्ठिरादिभिर्बन्धुभ्यो जलदानम् ॥ ३ ॥

वैशंपायन उवाच ।
ते समासाद्य गङ्गां तु शिवां पुण्यजलान्विताम् ।
ह्रदिनीं च प्रसन्नां च महारूपां महावनाम् ॥ १
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च ।
कवचानि विचित्राणि गङ्गामवजगाहिरे ॥ २
ततः पितॄणां भ्रातॄणां पौत्राणां स्वजनस्य च ।
पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः ॥ ३
उदकं चक्रिरे सर्वा रुदन्त्यो भृशदुःखिताः ।
सुहृदां चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाम् ॥ ४
उदके क्रियमाणे तु वीराणां वीरपत्निभिः ।
सूपतीर्थाऽभवद्गङ्गा भूयो विप्रससार च ॥ ५
तन्महोदधिसंकाशं निरानन्दमनुत्सवम् ।
वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत ॥ ६
ततः कुन्ती महाराज रुदन्ती शोककर्शिता ।
व्रीडया मन्दया वाचा पुत्रान्वचनमब्रवीत् ॥ ७
यः स वीरो महेष्वासो रथयूथपयूथपः ।
अर्जुनेन हतः सङ्ख्ये वीरलक्षणलक्षितः ॥ ८
यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः ।
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ॥ ९
प्रत्ययुध्यत वः सर्वान्पुरा यः सपदानुगान् ।
दुर्योधनबलं सर्वं यः प्रकर्षन्व्यरोचत ॥ १०
यस्य नास्ति समो वीर्ये पृथिव्यामपि कश्चन ।
यो वृणीत यशः शूरः प्राणैरपि सदा भुवि ॥ ११
कर्णस्य सत्यसन्धस्य संग्रामेष्वपलायिनः ।
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ॥ १२
स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत ।
कुण्डली कवची शूरो दिवाकरसमप्रभः ॥ १३
श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम् ।
कर्णमेवानुशोचन्तो भूयश्चार्त्यातुरा भवन् ॥ १४

स्नेहपाचितैः स्नेहसंयुक्तैः ॥ ४३ ॥ षड्विंशोऽध्यायः ॥ २६ ॥
वेष्टनानि उष्णीषकटिबन्धनादीनि ॥ २ ॥ सूपतीर्था शोभनजलावतरणमार्गा ॥ ५ ॥ भवन् अभवन् । अडभाव आर्षः ॥ १४ ॥

ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निःश्वसन्निव पन्नगः ॥ १५
यः शरोर्मिर्ध्वजावर्तो महाभुजमहाग्रहः ।
तलशब्दप्रणुदितो महारथमहाह्रदः ॥ १६
यस्येषुपातमासाद्य कोऽन्यस्तिष्ठेद्धनञ्जयात् ।
कथं पुत्रो भवत्याः स देवगर्भः पुराऽभवत् ।
'कुण्डली कवची शूरो दिवाकरसमप्रभः ॥ १७
यस्य बाहुप्रतापेन तापिताः सर्वतो वयम् ।
तमग्निमिव वस्त्रेण कथं छादितवत्यसि ॥ १८
यस्य बाहुप्रभावेन वैरमस्मास्वरोचयत् ।
सुयोधनस्तु तं ज्येष्ठं कथं नोदितवत्यसि ॥ १९
तथा कर्णं महेष्वासं धार्तराष्ट्रैरुपासितम् ।
उपासितं यथाऽस्माभिर्बलं गाण्डीवधन्वनः ॥ २०
भूमिपानां च सर्वेषां बलं बलवतां वरः ।
नान्यः कुन्तीसुतात्कर्णादगृह्णाद्रथिनो रथी ॥ २१
स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः ।
असूत तं भवत्यग्रे कथमद्भुतविक्रमम् ॥ २२
अहो भवत्या मन्त्रस्य गूहनेन वयं हताः ।
निधनेन हि कर्णस्य पीडितास्तु सबान्धवाः ॥ २३
अभिमन्योर्विनाशेन द्रौपदेयवधेन च ।
पाञ्चालानां विनाशेन कुरूणां घातनादपि ॥ २४
ततः शतगुणं दुःखमिदमापतितं महत् ।
कर्णमेवानुशोचामि दह्याम्यग्नाविवाहितः ॥ २५
नेह स्म किंचिदप्राप्यं भवेदपि दिवि स्थितम् ।
न चेदं वैशसं घोरं कौरवान्तकरं भवेत् ॥ २६
एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः ।
व्यरुदच्छनकै राजंश्चकारास्योदकं प्रभुः ॥ २७
ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्वशः ।
अभितो याः स्थितास्तत्र तस्मिन्नुदककर्मणि ॥ २८
तत आनाययामास कर्णस्य सपरिच्छदाः ।
स्त्रियः कुरुपतिर्धीमान्भ्रातुः प्रेम्णा युधिष्ठिरः ॥ २९
स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम् ।
'सर्वं चकार कर्णस्य विधिवद्भूरिदक्षिणम् ॥ ३०
स राजा धृतराष्ट्रश्च कृत्वा जलमतन्द्रितः ।
समुत्ततार गङ्गाया भार्यया सह भारत ॥' ३१
[पापेनासौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः ।
अतो मनसि यद्गुह्यं स्त्रीणां तन्न भविष्यति ॥ ३२
इत्युक्त्वा स तु गङ्गाया उत्तताराकुलेन्द्रियः ।
भ्रातृभिः सहितः सर्वैर्गङ्गातीरमुपेयिवान् ॥] ३३

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां स्त्रीपर्वणि श्राद्धपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

**समाप्तमिदं श्राद्धपर्व ॥ ३ ॥ स्त्रीपर्व च समाप्तम् ॥ ११ ॥**

---

अतःपरं शान्तिपर्व भविष्यति तस्यायमाद्यः श्लोकः।
वैशंपायन उवाच ।
कृत्वोदकं ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥ १

---

दग्धामग्नाविवाहुतिमिति क. पाठः ॥ २५ ॥ कर्णे भ्रातृत्वेन ज्ञाते सति तदनुसारिणामस्माकमपि दुर्लभं नाभविष्यन्नापि कौरवाणां क्षयोऽभविष्यदित्यर्थः । न च मे किंचिदप्राप्यमिति क. पाठः ॥ २६ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

**इदं स्त्रीपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम्। शकाब्दाः १८२९ सन १९०७.**

# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

**THE SOUTH INDIAN TEXTS,**

With footnotes and Readings.

---

## SHANTIPARVA XII.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press,*

**BOMBAY.**

1907.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## शान्तिपर्व १२.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८२९ प्लवंगनामसंवत्सरे ।


शांति पर्व.
भीष्मः
कौरवाः
पांडवाः
श्रीकृष्णः
श्रीवेदव्यासः

श्रीः ।

# श्रीमन्महाभारतम् ।



## शान्तिपर्व १२ ।

### ( अथ राजधर्मपर्व ॥ १ ॥ )

#### प्रथमोऽध्यायः ॥ १ ॥

गङ्गातीरे बन्धूनां कृतोदकं युधिष्ठिरंप्रति व्यासनारदादिमहर्षीणां समागमनम् ॥ १ ॥ युधिष्ठिरेण तत्र नारदंप्रति कर्णवृत्तान्तकथनप्रार्थना ॥ २ ॥

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १

वैशंपायन उवाच ।

कृत्वोदकं ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥ १
तत्र ते सुमहात्मानो न्यवसन्कुरुनन्दनाः ।
शौचं निर्वर्तयिष्यन्तो मासमात्रं बहिः पुरात् ॥ २
कृतोदकं तु राजानं धर्मात्मानं युधिष्ठिरम् ।
अभिजग्मुर्महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः ॥ ३
द्वैपायनो नारदश्च देवलश्च महानृषिः ।
देवस्थानश्च कण्वश्च तेषां शिष्याश्च सत्तमाः ॥ ४
अन्ये च वेदविद्वांसः कृतप्रज्ञा द्विजातयः ।
गृहस्थाः स्नातकाः सन्तो ददृशुः कुरुसत्तमम् ॥ ५
तेऽभिगम्य महात्मानं पूजिताश्च यथाविधि ।
आसनेषु महार्हेषु विविशुः परमर्षयः ॥ ६
प्रतिगृह्य ततः पूजां तत्कालसदृशीं तदा ।
पर्युपासन्यथान्यायं परिवार्य युधिष्ठिरम् ॥ ७
पुण्ये भागीरथीतीरे शोकव्याकुलचेतसम् ।
आश्वासयन्तो राजेन्द्रं विप्राः शतसहस्रशः ॥ ८
नारदस्त्वब्रवीत्काले धर्मपुत्रं युधिष्ठिरम् ।
संभाष्य मुनिभिः सार्धं कृष्णद्वैपायनादिभिः ॥ ९

नारद उवाच ।

पार्थस्य बाहुवीर्येण प्रसादान्माधवस्य च ।
जिता सेयं मही कृत्स्ना धर्मेण च युधिष्ठिर ॥ १०
दिष्ट्या मुक्ताः स्थ संग्रामादस्माल्लोकभयंकरात् ।
क्षत्रधर्मरतश्चासि कच्चिन्मोदसि पाण्डव ॥ ११
कच्चिच्च निहतामित्रः प्रीणासि सुहृदो नृप ।
कच्चिच्छ्रियमिमां प्राप्य न त्वां शोकः प्रबाधते॥१२

युधिष्ठिर उवाच ।

विजितेयं मही कृत्स्ना कृष्णबाहुबलाश्रयात् ।
ब्राह्मणानां प्रसादेन भीमार्जुनबलेन च ॥ १३
इदं तु मे महद्दुःखं वर्तते हृदि नित्यदा ।
कृत्वा ज्ञातिक्षयमिमं महान्तं घोरदर्शनम् ॥ १४
सौभद्रं द्रौपदेयांश्च घातयित्वा सुतान्प्रियान् ।
जयोऽयमजयाकारो भगवन्प्रतिभाति मे ॥ १५
किंनु वक्ष्यति वार्ष्णेयी वधूर्मे मधुसूदनम् ।
द्वारकावासिनी कृष्णमितः प्रतिगतं हरिम् ॥ १६

---

कृतोदकास्ते इति झ. पाठः ॥ १ ॥ तत्र गङ्गातीरे ॥ २ ॥ आश्वासयन्तः हेतौ शतृप्रत्ययः । आश्वासनार्थं पर्युपासन्नित्यर्थः ॥ ८ ॥ वधूः कनिष्ठभ्रातृभार्यात्वात्स्नुषाभूता । वार्ष्णेयी सुभद्रा ॥ १६ ॥

द्रौपदी हतपुत्रेयं कृपणा हतबान्धवा ।
अस्मत्प्रियहिते युक्ता भूयः पीडयतीव माम् ॥ १७
इदमन्यच्च भगवन्यत्त्वां वक्ष्यामि नारद ।
मन्त्रसंवरणेनास्मि कुन्त्या दुःखेन योजितः ॥ १८
यः स नागायुतप्राणो लोकेऽप्रतिरथो रणे ।
सिंहविक्रान्तगामी च जितकाशी यतव्रतः ॥ १९
आश्रयो धार्तराष्ट्राणां मानी तीक्ष्णपराक्रमः ।
अमर्षी नित्यसंरम्भी क्षेप्ताऽस्माकं रणेरणे ॥ २०
शीघ्रास्त्रश्चित्रयोधी च कृती चाद्भुतविक्रमः ।
गूढोत्पन्नः सुतः कुन्त्या भ्राताऽस्माकमसौ किल २१
तोयकर्मणि तं कुन्ती कथयामास मे तदा ।
पुत्रं सर्वगुणोपेतं कर्णं त्यक्तं जले पुरा ॥ २२
मञ्जूषायां समाधाय गङ्गास्रोतस्यमज्जयत् ।
यं सूतपुत्रं लोकोऽयं राधेयं चाभ्यमन्यत ॥ २३
स सूर्यपुत्रः कुन्त्या वै भ्राताऽस्माकं च मातृतः ।
अजानता मया सङ्ख्ये राज्यलुब्धेन घातितः ।
तन्मे दहति गात्राणि तूलराशिमिवानलः ॥ २४
न हि तं वेद पार्थोऽपि भ्रातरं श्वेतवाहनः ।
नाहं न भीमो न यमौ स त्वस्मान्वेद तत्वतः ॥ २५
गता किल पृथा तस्य सकाशमिति नः श्रुतम् ।
अस्माकं शमकामा वै त्वं च पुत्रो ममेत्यथ ॥ २६
पृथाया न कृतः कामस्तेन चापि महात्मना ।
अतीवानुचितं मातरवोच इति सोऽब्रवीत् ॥ २७
न हि शक्ष्यामि संत्यक्तुमहं दुर्योधनं रणे ।
अनार्यत्वं नृशंसत्वं कृतघ्नत्वं च मे भवेत् ॥ २८
युधिष्ठिरेण सन्धिं हि यदि कुर्यां मते तव ।
भीतो रणे श्वेतवाहादिति मां मंस्यते जनः ॥ २९
सोऽहं निर्जित्य समरे विजयं सहकेशवम् ।
संधास्ये धर्मपुत्रेण पश्चादिति च सोऽब्रवीत् ॥ ३०
तमवोचत्किल पृथा पुनः पृथुलवक्षसम् ।
चतुर्णामभयं देहि कामं युध्यस्व फल्गुनम् ॥ ३१
सोऽब्रवीन्मातरं धीमान्वेपमानां कृताञ्जलिः ।
प्राप्तान्विषह्यांश्चतुरो न हनिष्यामि ते सुतान् ॥ ३२
पञ्चैव हि सुता देवि भविष्यन्ति तव ध्रुवाः ।
सार्जुना वा हते कर्णे सकर्णा वा हतेऽर्जुने ॥ ३३
तं पुत्रगृद्धिनी भूयो माता पुत्रमथाब्रवीत् ।
भ्रातॄणां स्वस्ति कुर्वीथा येषां स्वस्ति चिकीर्षसि ३४
एवमुक्त्वा किल पृथा विसृज्योपययौ गृहान् ।
सोऽर्जुनेन हतो वीरो भ्रात्रा भ्राता सहोदरः ॥ ३५
न चैव निःसृतो मन्त्रः पृथायास्तस्य वा मुने ।
अथ शूरो महेष्वासः पार्थेनाजौ निपातितः ॥ ३६
अहं त्वज्ञासिषं पश्चात्स्वसोदर्यं द्विजोत्तम ।
पूर्वजं भ्रातरं कर्णं पृथाया वचनात्प्रभो ॥ ३७
तेन मे दूयते तीव्रं हृदयं भ्रातृघातिनः ।
कर्णार्जुनसहायोऽहं जयेयमपि वासवम् ॥ ३८
सभायां क्लिश्यमानस्य धार्तराष्ट्रैर्दुरात्मभिः ।
सहसोत्पतितः क्रोधः कर्णं दृष्ट्वा प्रशाम्यति ॥ ३९
यदा ह्यस्य गिरो रूक्षाः शृणोमि कटुकोदयाः ।
सभायां गदतो द्यूते दुर्योधनहितैषिणः ॥ ४०
तदा नश्यति मे रोषः पादौ तस्य निरीक्ष्य ह ।
कुन्त्या हि सदृशौ पादौ कर्णस्येति मतिर्मम ॥ ४१
सादृश्यहेतुमन्विच्छन्पृथायास्तस्य चैव ह ।
कारणं नाधिगच्छामि कथंचिदपि चिन्तयन् ॥ ४२
कथं नु तस्य संग्रामे पृथिवी चक्रमग्रसत् ।
कथं नु शप्तो भ्राता मे तत्त्वं वक्तुमिहार्हसि ॥ ४३
श्रोतुमिच्छामि भगवंस्त्वत्तः सर्वं यथातथम् ।
भवान्हि सर्वविद्विद्वाँल्लोके वेद कृताकृतम् ॥ ४४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

मन्त्रसंवरणेन गूढोत्पन्नस्यास्मद्भ्रातुः कर्णस्याप्रकाशेन ॥ १८ ॥ अमर्षी परोत्कर्षासहिष्णुः । नित्यसंरम्भी सदा क्रोधवान् ॥ २० ॥ मातृतः मातृसंबन्धेन ॥ २४ ॥ पाण्डववत् त्वं च पुत्रो ममेत्यब्रवीदिति शेषः ॥ २६ ॥ कामोऽभिलषितम् ॥ २७ ॥ वध्यान्विषह्यानिति थ. पाठः । विषह्यान्वशगान् ॥ ३२ ॥ विसृज्य कर्णमिति शेषः ॥ ३५ ॥ चक्रं रथचक्रम् ॥ ४३ ॥ कृतं कार्यम् । अकृतं कारणम् ॥ ४४ ॥ प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

ब्रह्मास्त्रलाभाय द्रोणमुपगतेन कर्णेन तेन त्रैवर्णिकान्यत्वकथनेन प्रत्याख्याने परशुराममेत्य स्वस्य ब्राह्मण्यकथन' स्वार्थे तदन्तेवासित्वपरिग्रहः ॥ १ ॥ तत्र प्रमादेन विप्रगोवत्सघातिनः कर्णस्य विप्राच्छापप्राप्तिः ॥ २ ॥

वैशंपायन उवाच ।
स एवमुक्तस्तु तदा नारदो वदतांवरः ।
कथयामास तत्सर्वं यथा शप्तः स सूतजः ॥ १
नारद उवाच ।
एवमेतन्महाबाहो यथा वदसि भारत ।
न कर्णार्जुनयोः किंचिदविषह्यं भवेद्रणे ॥ २
गुह्यमेतत्तु देवानां कथयिष्यामि ते नृप ।
तन्निबोध महाबाहो यथावृत्तमिदं पुरा ॥ ३
क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो ।
संघर्षजननस्तस्मात्कन्यागर्भो विसर्जितः ॥ ४
स बालस्तेजसा युक्तः सूतपुत्रत्वमागतः ।
चकाराङ्गिरसां श्रेष्ठे धनुर्वेदं गुरौ तव ॥ ५
स बलं भीमसेनस्य फल्गुनस्यास्त्रलाघवम् ।
बुद्धिं च तव राजेन्द्र यमयोर्विनयं तथा ॥ ६
सख्यं च वासुदेवेन बाल्ये गाण्डीवधन्वनः ।
प्रजानामनुरागं च चिन्तयानो व्यदह्यत ॥ ७
स सख्यमगमद्बाल्ये राज्ञा दुर्योधनेन च ।
युष्माभिर्नित्यसंघृष्टो दैवाच्चापि स्वभावतः ॥ ८
विद्याधिकमथालक्ष्य धनुर्वेदे धनञ्जयम् ।
द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत् ॥ ९
ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्तनम् ।
अर्जुनेन समो युद्धे भवेयमिति मे मतिः ॥ १०
समः पुत्रेषु च स्नेहः शिष्येषु च तव ध्रुवम् ।
त्वत्प्रसादान्न मा ब्रूयुरकृतास्त्रं विचक्षणाः ॥ ११
द्रोणस्तथोक्तः कर्णेन सापेक्षः फल्गुनं प्रति ।
दौरात्म्यं चैव कर्णस्य विदित्वा तमुवाच ह ॥ १२
ब्रह्मास्त्रं ब्राह्मणो विद्याद्यथावच्चरितव्रतः ।
क्षत्रियो वा तपस्वी यो नान्यो विद्यात्कथंचन
इत्युक्तोऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च
जगाम सहसा राजन्महेन्द्रं पर्वतं प्रति ॥
स तु राममुपागम्य शिरसाऽभिप्रणम्य च ।
ब्राह्मणो भार्गवोऽस्मीति गौरवेणाभ्यवन्दत
रामस्तं प्रतिजग्राह पृष्ट्वा गोत्रादि सर्वशः ।
उष्यतां स्वागतं चेति प्रीतिमांश्चाभवद्भृशम्
तत्र कर्णस्य वसतो महेन्द्रे स्वर्गसंमिते ।
गन्धर्वै राक्षसैर्यक्षैर्देवैश्चासीत्समागमः ॥
स तत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठाद्यथाविधि ।
प्रियश्चाभवदत्यर्थं देवदानवरक्षसाम् ॥
स कदाचित्समुद्रान्ते विचरन्नाश्रमान्तिके ।
एकः खड्गधनुष्पाणिः परिचक्राम सूतजः ।
सोऽग्निहोत्रप्रसक्तस्य कस्यचिद्ब्रह्मवादिनः ।
जघानाज्ञानतः पार्थ होमधेनुं यदृच्छया ॥
तदज्ञानकृतं मत्वा ब्राह्मणाय न्यवेदयत् ।
कर्णः प्रसादयंश्चैनमिदमित्यब्रवीद्वचः ॥
अबुद्धिपूर्वं भगवन्धेनुरेषा हता तव ।
मया तत्र प्रसादं मे कुरुष्वेति पुनःपुनः ॥
तं स विप्रोऽब्रवीत्क्रुद्धो वाचा निर्भर्त्सयन्नि
दुराचार वधार्हस्त्वं फलं प्राप्स्यसि दुर्मते ।
येन विस्पर्धसे नित्यं यदर्थं घटसेऽनिशम् ।
युध्यतस्तेन ते पाप भूमिश्चक्रं ग्रसिष्यति ॥
ततश्चक्रे महीग्रस्ते मूर्धानं ते विचेष्टतः ।
पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम ॥
यथेयं गौर्हता मूढ प्रमत्तस्य त्वया मम ।
प्रमत्तस्यैव मे वाचा शिरस्ते पातयिष्यति ।

---

संघर्षजननो वैराग्युद्दीपकः । संचिन्त्य जनितस्तस्मादिति ट. ड. पाठः । कन्यागर्भो विनिर्मित इति झ. पाठः । तत्र कन्यागर्भो देवैः क्षत्रस्य स्वर्गमनाय निर्मित इत्यर्थः ॥ ४ ॥ चकाराऽधीतवान् । अङ्गिरसां श्रेष्ठे द्रोणे ॥ ५ ॥ दैवाद्देवानां संकल्पात् ॥ ८ ॥ रहस्यं तत्प्रसादनविधिर्निवर्तनमुपसंहारस्ताभ्यां सहितं सरहस्यनिवर्तनम् ॥ १० ॥ गुरुरेव पितेत्यां ॥ १५ ॥ समुद्रान्ते दक्षिणसमुद्रसमीपे ॥ १९ ॥ कर्णपर्वोक्तदिशा वत्सवध एवात्र धेनुवधो ज्ञेयः ॥ प्रमत्तेन त्वया मम । प्रमत्तस्य तथाऽरातिरिति झ ॥ २६ ॥

शप्तः प्रसादयामास कर्णस्तं द्विजसत्तमम् ।
गोभिर्धनैश्च रत्नैश्च स चैनं पुनरब्रवीत् ॥ २७
नेदमव्याहृतं कुर्याद्ब्रह्मलोकेऽपि केवलम् ।
गच्छ वा तिष्ठ वा यद्वा कार्यं यत्तत्समाचर ॥ २८
इत्युक्तो ब्राह्मणेनाथ कर्णो दैन्यादधोमुखः ।
राममभ्यागमद्भीतस्तदेव मनसा स्मरन् ॥ २९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

कदाचन रामे कर्णोत्सङ्गे शिरो निधाय निद्राणे केनचित्क्रिमिणा कर्णस्योरुभेदनम् ॥ १ ॥ तदूरोः प्रसुतरुधिरक्लेदात्प्रबुद्धेन रामेण कर्णस्य शापदानम् ॥ २ ॥ रामाज्ञया कर्णस्य स्वदेशगमनम् ॥ ३ ॥

नारद उवाच ।
कर्णस्य बाहुवीर्येण प्रश्रयेण दमेन च ।
तुतोष भृगुशार्दूलो गुरुशुश्रूषया तथा ॥ १
ततस्तस्मै महातेजा ब्रह्मास्त्रं सनिवर्तनम् ।
प्रोवाच सुमहाप्रज्ञः स तपस्वी तपस्विने ॥ २
विदितास्त्रस्ततः कर्णो रममाणोऽऽश्रमे भृगोः ।
चकार वै धनुर्वेदे यत्नमद्भुतविक्रमः ॥ ३
ततः कदाचिद्रामस्तु चरन्नाश्रममन्तिकात् ।
कर्णेन सहितो धीमानुपवासेन कर्शितः ॥ ४
सुष्वाप जामदग्न्यस्तु विस्रम्भोत्पन्नसौहृदः ।
तस्योत्सङ्गे समाधाय शिरः क्लान्तमना गुरुः ॥ ५
अथ क्रिमिः श्लेष्ममयो मांसशोणितभोजनः ।
दारुणो दारुणाकारः कर्णस्याभ्याशमागतः ॥ ६
स तस्योरुमथासाद्य बिभेद रुधिराशनः ।
न चैनमशकत्क्षेप्तुं वक्तुं वाऽपि गुरोर्भयात् ॥ ७
स दश्यमानोऽपि तथा कृमिणा तेन भारत ।
गुरोः प्रबोधनाकाङ्क्षी तमुपैक्षत सूर्यजः ॥ ८
कर्णस्तु वेदनां धैर्यादसह्यां विनिगृह्य ताम् ।
अकम्पयन्नव्यथयन्धारयामास भार्गवम् ॥ ९
यदा स रुधिरेणाङ्गे परिस्पृष्टोऽभवद्गुरुः ।
तदाऽबुध्यत तेजस्वी संरब्धश्चैनमब्रवीत् ॥ १०
अहोऽस्म्यशुचितां प्राप्तः किमिदं च कृतं त्वया ।
कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम ॥ ११
तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणम् ।
ददर्श रामस्तं चापि कृमिं सूकरसंस्थितम् ॥ १२
अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिः परिसंवृतम् ।
रोमभिः सन्निरुद्धाङ्गमलर्कं नाम नामतः ॥ १३
स दृष्टमात्रो रामेण क्रिमिः प्राणानवासृजत् ।
तस्मिन्नेवासृजि क्लिन्नस्तदद्भुतमिवाभवत् ॥ १४
ततोऽन्तरिक्षे ददृशे विश्वरूपः करालवान् ।
राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः ॥ १५
स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः ।
स्वस्ति ते भृगुशार्दूल गमिष्येऽहं यथागतम् ॥ १६
मोक्षितो नरकादस्माद्भवता मुनिसत्तम ।
भद्रं च तेऽस्तु सिद्धिश्च प्रियं मे भवता कृतम् ॥ १७
तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान् ।
कस्त्वं कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत् ॥ १८
सोऽब्रवीदहमासं प्राग्दंशो नाम महासुरः ।
पुरा देवयुगे तात भृगोस्तु सवया इव ॥ १९
सोऽहं भृगोः सुदयितां भार्यामपहरं बलात् ।
महर्षेरभिशापेन क्रिमिभूतोऽपतं भुवि ॥ २०
अब्रवीद्धि स मां क्रुद्धस्तव पूर्वपितामहः ।
मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे ॥ २१
शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रवम् ।

---

नेदं मद्वचनं कुर्याद्ब्रह्मलोकेऽपि चान्यथा इति ट. पाठः ॥ २८ ॥ द्वितीयोऽध्यायः ॥ २ ॥

दमेनेन्द्रियजयेन ॥ १ ॥ विस्रम्भो विश्वासः ॥ ५ ॥ श्लेष्ममेदोमांसेति झ. पाठः ॥ ६ ॥ क्षेप्तुं दूरीकर्तुम् । भयान्निद्राभङ्गभयात् ॥ ७ ॥ प्रबोधनाशङ्कीति झ. पाठः ॥ ८ ॥ सूकरस्येव संस्थित संस्थान यस्य तम् । सूकरसन्निभमिति झ. पाठः ॥ १२ ॥ सूचीभिरिव तीक्ष्णै रोमभिः संवृतम् । सन्निरुद्धाङ्ग त्रासेन संकुचिताङ्ग । नाम प्रसिद्धम् । नामतो नाम्ना ॥ १३ ॥ असृजि शोणिते ॥ १४ ॥ यास्को नामेति ङ. पाठः । ग्रस्तो नामेति थ. पाठः । देवयुगे सत्ययुगे ॥ १९ ॥

अत्यक्रामद्धार्तराष्ट्रं सा कन्या वरवर्णिनी ॥ ११
दुर्योधनस्तु कौरव्यो नामर्षयत लङ्घनम् ।
प्रत्यषेधच्च तां कन्यामसत्कृत्य नराधिपान् ॥ १२
स वीर्यमदमत्तत्वाद्भीष्मद्रोणावुपाश्रितः ।
रथमारोप्य तां कन्यामाजुहाव नराधिपान् ॥ १३
तमन्वगाद्रथी खड्गी बद्धगोधाङ्गुलित्रवान् ।
कर्णः शस्त्रभृतां श्रेष्ठः पृष्ठतः पुरुषर्षभ ॥ १४
ततो विमर्दः सुमहान्राज्ञामासीद्युयुत्सताम् ।
सन्नह्यतां तनुत्राणि रथान्योजयतामपि ॥ १५
तेऽभ्यधावन्त संक्रुद्धाः कर्णदुर्योधनावुभौ ।
शरवर्षाणि मुञ्चन्तो मेघाः पर्वतयोरिव ॥ १६
कर्णस्तेषामापततामेकैकेन शरेण ह ।
धनूंषि च शरव्रातान्पातयामास भूतले ॥ १७
ततो विधनुषः कांश्चित्कांश्चिदुद्यतकार्मुकान् ।
कांश्चिदुत्सृजतो बाणान्रथशक्तिगदास्तथा ॥ १८
लाघवाद्व्याकुलीकृत्य कर्णः प्रहरतां वरः ।
हतसूतांश्च भूयिष्ठान्स विजिग्ये नराधिपान् ॥ १९
ते स्वयं वाहयन्तोऽश्वान्याहि याहीति वादिनः ।
व्यपेयुस्ते रणं हित्वा राजानो भग्नमानसाः ॥ २०
दुर्योधनस्तु कर्णेन पाल्यमानोऽभ्ययात्तदा ।
हृष्टः कन्यामुपादाय नगरं नागसाह्वयम् ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

कर्णपराक्रमवर्णनम् ॥ १ ॥

नारद उवाच ।
आविष्कृतबलं कर्णं दृष्ट्वा राजा स मागधः ।
आह्वयद्द्वैरथेनाजौ जरासन्धो महीपतिः ॥ १
तयोः समभवद्युद्धं दिव्यास्त्रविदुषोर्द्वयोः ।
युधि नानाप्रहरणैरन्योन्यमभिवर्षतोः ॥ २
क्षीणबाणौ विधनुषौ भग्नखड्गौ महीं गतौ ।
बाहुभिः समसज्जेतामुभावतिबलान्वितौ ॥ ३
[बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युध्यतः ।]
बिभेद संधिं देहस्य जरया श्लेषितस्य हि ॥ ४
स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः ।
प्रीतोऽस्मीत्यब्रवीत्कर्णं वैरमुत्सृज्य दूरतः ॥ ५
प्रीत्या ददौ स कर्णाय मालिनीं नगरीमनु ।
अङ्गेषु नरशार्दूल स राजाऽऽसीत्सपत्नजित् ॥ ६
पालयामास चम्पां तु कर्णः परबलार्दनः ।
दुर्योधनस्यानुमते तवापि विदितं तथा ॥ ७
एवं शस्त्रप्रतापेन प्रथितः सोऽभवत्क्षितौ ।
त्वद्धितार्थं सुरेन्द्रेण भिक्षितो वर्मकुण्डले ॥ ८
स दिव्ये सहजे प्रादात्कुण्डले परमार्चिते ।
सहजं कवचं चापि मोहितो देवमायया ॥ ९
विमुक्तः कुण्डलाभ्यां च सहजेन च वर्मणा ।
निहतो विजयेनाजौ वासुदेवस्य पश्यतः ॥ १०
ब्राह्मणस्यापि शापेन रामस्य च महात्मनः ।
कुन्त्याश्च वरदानेन मायया च शतक्रतोः ॥ ११
भीष्मावमानात्सङ्ख्यायां रथानामर्धकीर्तनात् ।
शल्यतेजोवधाच्चापि वासुदेवनयेन च ॥ १२
रुद्रस्य देवराजस्य यमस्य वरुणस्य च ।
कुबेरद्रोणयोश्चैव कृपस्य च महात्मनः ॥ १३
अस्त्राणि दिव्यान्यादाय युधि गाण्डीवधन्वना ।
हतो वैकर्तनः कर्णो दिवाकरसमद्युतिः ॥ १४
एवं शप्तस्तव भ्राता बहुभिश्चापि वञ्चितः ।
न शोच्यः पुरुषव्याघ्र युद्धे हि निधनं गतः ॥ १५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

शिरांसि सशरांश्चापानिति ट. ड. थ. पाठः ॥ १७ ॥ व्यपेयुः व्यपगताः ॥ २० ॥ चतुर्थोऽध्यायः ॥ ४ ॥

बाहुकण्टकयुद्धेन बाहुकण्टकं केतकपत्रं तद्वयत्र बलिना दुर्बलस्य शरीरं पाट्यते तद्बाहुकण्टक नाम युद्धम् ॥ ४ ॥ विकारं पाटनरूपम् ॥ ५ ॥ पालयामास चम्पां चेति झ. पाठः ॥ ७ ॥ पञ्चमोऽध्यायः ॥ ५ ॥

भविता भार्गवाद्रामादिति मामब्रवीद्भृगुः ॥ २२
सोऽहमेनां गतिं प्राप्तो यथा नकुशलस्तथा ।
त्वया साधो समागम्य विमुक्तः पापयोनितः ॥ २३
एवमुक्त्वा नमस्कृत्य ययौ रामं महासुरः ।
रामः कर्णं तु सक्रोधमिदं वचनमब्रवीत् ॥ २४
अतिदुःखमिदं मूढ न जातु ब्राह्मणः सहेत् ।
क्षत्रियस्यैव ते धैर्यं कामया सत्यमुच्यताम् ॥ २५
तमुवाच ततः कर्णः शापाद्भीतः प्रसादयन् ।
ब्रह्मक्षत्रान्तरे जातं सूतं मां विद्धि भार्गव ॥ २६
राधेयः कर्ण इति मां प्रवदन्ति जना भुवि ।
प्रसादं कुरु मे ब्रह्मन्नस्त्रलुब्धस्य भार्गव ॥ २७
पिता गुरुर्न संदेहो वेदविद्याप्रदः प्रभुः ।
अतो भार्गव इत्युक्तं मया गोत्रं तवान्तिके ॥ २८
तमुवाच भृगुश्रेष्ठः सरोषः प्रदहन्निव ।
भूमौ निपतितं दीनं वेपमानं कृताञ्जलिम् ॥ २९
यस्मान्मिथ्याविचीर्णोऽहमस्त्रलोभादिह त्वया ।
तस्मादेतन्न ते मूढ ब्रह्मास्त्रं प्रतिभास्यति ॥ ३०
अन्यत्र वधकालात्ते सदृशे न समीयुषः ।
अब्राह्मणे न हि ब्रह्म चिरं तिष्ठेत्कदाचन ॥ ३१
गच्छेदानीं न ते स्थानमनृतस्येह विद्यते ।
न त्वया सदृशो युद्धे भविता क्षत्रियो भुवि ॥ ३२
एवमुक्तः स रामेण न्यायेनोपजगामह ।
दुर्योधनमुपागम्य कृतास्त्रोऽस्मीति चाब्रवीत् ॥ ३३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ॥ ४ ॥

दुर्योधनेन स्वयंवरमण्टपे कलिङ्गराजकन्याहरणम् ॥ १ ॥ कर्णेन तमनुद्रुतवतां राज्ञां पराजयः ॥ २ ॥

नारद उवाच ।
कर्णस्तु समवाप्यैवमस्त्रं भार्गवनन्दनात् ।
दुर्योधनेन सहितो मुमुदे भरतर्षभ ॥ १
ततः कदाचिद्राजानः समाजग्मुः स्वयंवरे ।
कलिङ्गविषये राजन्राज्ञश्चित्राङ्गदस्य च ॥ २
श्रीमद्राजपुरं नाम नगरं तत्र भारत ।
राजानः शतशस्तत्र कन्यार्थे समुपागमन् ॥ ३
श्रुत्वा दुर्योधनस्तत्र समेतान्सर्वपार्थिवान् ।
रथेन काञ्चनाङ्गेन कर्णेन सहितो ययौ ॥ ४
ततः स्वयंवरे तस्मिन्नानादेश्या महारथाः ।
समाजग्मुर्नृपतयः कन्यार्थे नृपसत्तम ॥ ५
शिशुपालो जरासन्धो भीष्मको वक्र एव च ।
कपोतरोमा नीलश्च रुक्मी च दृढविक्रमः ॥ ६
सृगालश्च महाराजः स्त्रीराज्याधिपतिश्च यः ।
विशोकः शतधन्वा च भोजो वीरश्च नामतः ॥ ७
एते चान्ये च बहवो दक्षिणां दिशमाश्रिताः ।
म्लेच्छाश्चार्याश्च राजानः प्राच्योदीच्यास्तथैव च ॥ ८
काञ्चनाङ्गदिनः सर्वे शुद्धजाम्बूनदप्रभाः ।
सर्वे भास्वरदेहाश्च व्याघ्रा इव बलोत्कटाः ॥ ९
ततः समुपविष्टेषु तेषु राजसु भारत ।
विवेश रङ्गं सा कन्या धात्रीवर्षवरान्विता ॥ १०
ततः संश्राव्यमाणेषु राज्ञां नामसु भारत ।

---

नकुशलः अभद्रः ॥ २३ ॥ कामया स्वरसेन । कामये सत्यमुच्यतामिति ट. ड. पाठः ॥ २५ ॥ ब्रह्मक्षत्रयोरन्तरे अन्यत्र जातम् ॥ २६ ॥ प्रहसन्निवेति थ. पाठः ॥ २९ ॥ तस्मादिति। हे मूढ ते तव वधकालादन्यत्र ब्रह्मास्त्रं न प्रतिभास्यतीति न किंतु वधकालएव न प्रतिभास्यति । कालान्तरे तु प्रतिभास्यत्येवेत्यर्थ इत्युत्तरेण संबन्धः ॥ ३० ॥ सदृशेऽर्जुनादौ शूरे ते पुरतः स्थिते समीयुषः युध्यमानस्य । समित्याजिसमिद्युध इति संपूर्वस्य इणो युद्धार्थत्वदर्शनात् । चिरं मरणावधि न तिष्ठेद्ब्रह्म ब्रह्मास्त्रम् ॥ ३१ ॥ न्यायेनाभिवन्दनादिपूर्वकं उपजगाम । इष्टं देशमिति शेषः ॥ ३३ ॥ तृतीयोऽध्यायः ॥ ३ ॥

विषये देशे ॥ २ ॥ भीष्मको बक एव चेति थ. पाठः ॥६॥ त्रैलोक्याधिपतिश्च य इति ट. ड. पाठः । त्रैराज्येति थ. पाठः ॥ ७ ॥ वर्षवरः पण्ढः ॥ १० ॥

## षष्ठोऽध्यायः ॥ ६ ॥

कुन्त्या कर्णवधानुशोचिनो युधिष्ठिरस्याश्वासनम् ॥ १ ॥ युधिष्ठिरेण कुन्तीप्रति स्त्रीणां मन्त्रगोपनं माभूदिति शापदानम् ॥ २ ॥

वैशंपायन उवाच ।
एतावदुक्त्वा देवर्षिर्विरराम स नारदः ।
युधिष्ठिरस्तु राजर्षिर्दध्यौ शोकपरिप्लुतः ॥ १
तं दीनमनसं वीरमधोवदनमातुरम् ।
निःश्वसन्तं यथा नागं पर्यश्रुनयनं तथा ॥ २
कुन्ती शोकपरीताङ्गी दुःखोपहतचेतना ।
अब्रवीन्मधुराभाषा काले वचनमर्थवत् ॥ ३
युधिष्ठिर महाबाहो नैनं शोचितुमर्हसि ।
जहि शोकं महाप्राज्ञ शृणु चेदं वचो मम ॥ ४
याचितः स मया पूर्वं भ्राता ज्ञापयितुं तव ।
भास्करेण च देवेन पित्रा धर्मभृतां वरः ॥ ५
यद्वाच्यं हितकामेन सुहृदां भूतिमिच्छता ।
तथा दिवाकरेणोक्तः स्वप्नान्ते मम चाग्रतः ॥ ६
न चैनमशकद्भानुरहं वा स्नेहकारणैः ।
पुरा प्रत्यनुनेतुं वा नेतुं वाऽप्येकतां त्वया ॥ ७
ततः कालपरीतः स वैरस्योद्धरणे रतः ।
प्रतीपकारी युष्माकमिति चोपेक्षितो मया ॥ ८
इत्युक्तो धर्मराजस्तु मात्रा बाष्पाकुलेक्षणः ।
उवाच वाक्यं धर्मात्मा शोकव्याकुललोचनः ॥ ९
भवत्या गूढमन्त्रत्वाद्वञ्चिताः स्म तदा भृशम् ॥ १०
शशाप च महातेजाः सर्वलोकेषु योषितः ।
न गुह्यं धारयिष्यन्तीत्येवं दुःखसमन्वितः ॥ ११
स राजा पुत्रपौत्राणां संबन्धिसुहृदां तदा ।
स्मरन्नुद्विग्नहृदयो बभूवोद्विग्नचेतनः ॥ १२
ततः शोकपरीतात्मा सधूम इव पावकः ।
निर्वेदमगमद्धीमान्राज्ये संतापपीडितः ॥ १३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ॥ ७ ॥

युधिष्ठिरस्य परिशोचनम् ॥ १ ॥

वैशंपायन उवाच ।
युधिष्ठिरस्तु धर्मात्मा शोकव्याकुलचेतनः ।
शुशोच दुःखसंतप्तः स्मृत्वा कर्णं महारथम् ॥ १
आविष्टो दुःखशोकाभ्यां निःश्वसंश्च पुनःपुनः ।
दृष्ट्वार्जुनमुवाचेदं वचनं शोककर्शितः ॥ २
युधिष्ठिर उवाच ।
यद्भैक्ष्यमाचरिष्याम वृष्ण्यन्धकपुरे वयम् ।
ज्ञातीन्निष्पुरुषान्कृत्वा नेमां प्राप्स्याम दुर्गतिम् ॥ ३
अमित्रा नः समृद्धार्था वृत्तार्थाः कुरवः किल ।
आत्मानमात्मना हत्वा किं धर्मफलमाप्नुमः ॥ ४
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम् ।
धिगस्तु चार्थं येनेमामापदं गमिता वयम् ॥ ५
साधु क्षमा दमः शौचमविरोधो विमत्सरः ।
अहिंसा सत्यवचनं नित्यानि वनचारिणाम् ॥ ६
वयं तु लोभान्मोहाच्च दम्भं मानं च संश्रिताः ।
इमामवस्थां संप्राप्ता राज्यक्लेशबुभुक्षया ॥ ७

---

दध्यौ भ्रातृवधजं दोषं चिन्तितवान् ॥ १ ॥ याचितः स मया पूर्वं भ्रात्र्यमिति झ. पाठः । तत्र याचितः प्रवर्तितस्तव तुभ्यं भ्रात्र्यं भ्रातुः कर्म कनिष्ठानां परिपालनं ज्ञापयितुं त्वया सौभ्रात्रं युधिष्ठिरादिभ्यः प्रदर्शनीयमित्यभ्यर्थित इत्यर्थः ॥ ५ ॥ प्रत्यनुनेतुं शमयितुम् ॥ ७ ॥ कालपरीतो मृत्युग्रस्तः । उद्धरणे शत्रूणां निःशेषनाशेनोन्मूलने ॥ ८ ॥ कर्मणिषष्ठ्यौ ॥ १२ ॥ निर्वेदं राज्यादौ वैराग्यम् ॥ १३ ॥ षष्ठोऽध्यायः ॥ ६ ॥

दुःखं देहेन्द्रियादीनां तापः । शोकस्तत्कृतं वैकल्यम् ॥ २ ॥ यद्यदि भैक्ष्यमाचीर्णं स्यात्तर्हि ज्ञातिवधाज्जाता दुर्गतिर्न प्राप्ता स्यादित्यर्थः । लिङ्निमित्ते लृङ्क्रियातिपत्तौ ॥ ३ ॥

त्रैलोक्यस्यापि राज्येन नास्मान्कश्चित्प्रहर्षयेत् ।
बान्धवान्निहतान्दृष्ट्वा पृथिव्यामामिषैषिणः ॥ ८
ते वयं पृथिवीहेतोरवध्यान्पृथिवीतले ।
संपरित्यज्य जीवामो हीनार्था हतबान्धवाः ॥ ९
आमिषे गृध्यमानानामशुभं वै शुनामिव ।
आमिषं चैव नो नष्टमामिषस्य च भोजिनाम् ॥ १०
न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
न गजाश्वेन सर्वेण ते त्याज्या य इमे हताः ॥ ११
काममन्युपरीतास्ते क्रोधामर्षसमन्विताः ।
मृत्युयानं समारुह्य गता वैवस्वतक्षयम् ॥ १२
बहुकल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।
तपसा ब्रह्मचर्येण वन्दनेन तितिक्षया ॥ १३
उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः ।
लभन्ते मातरो गर्भांस्तान्मासान्दश बिभ्रति ॥ १४
यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि ।
संभाविता जातबला विदध्युर्यदि नः सुखम् ।
इह चामुत्र चैवेति कृपणाः फलहेतवः ॥ १५
तासामयं समुद्योगो निर्वृत्तः केवलोऽफलः ।
यदासां निहताः पुत्रा युवानो मृष्टकुण्डलाः ॥ १६
अभुक्त्वा पार्थिवान्भोगानृणान्यनपहाय च ।
पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयम् ॥ १७
यदैषामम्ब पितरौ जातकर्मकराविह ।
संजातबालरूपेषु तदैव निहता नृपाः ॥ १८
संयुक्ताः काममन्युभ्यां क्रोधामर्षसमन्विताः ।
न ते जयफलं किंचिद्भोक्तारो जातु कर्हिचित् ॥ १९
पाञ्चालानां कुरूणां च हता एव हि ये हताः ।
न सकामा वयं ते च न चास्माभिर्न तैर्जितम् ॥ २०
न तैर्भुक्तेयमवनिर्न नार्यो गीतवादितम् ।
नामात्यसुहृदां वाक्यं न च श्रुतवतां श्रुतम् ।
न रत्नानि परार्ध्यानि न भूर्न द्रविणागमः ॥ २१
न च धर्म्यानिमाँल्लोकान्प्रपद्याम स्वकर्मभिः ।
वयमेवास्य लोकस्य विनाशे कारणं स्मृताः ।
धृतराष्ट्रस्य पुत्रेण निकृतिप्रीतिसंयुताः ॥ २२
सदैव निकृतिप्रज्ञो द्वेष्टा विद्वेषजीवनः ।
मिथ्यावृत्तश्च सततमस्मास्वनपराधिषु ॥ २३
ऋद्धिमस्मासु तां दृष्ट्वा विवर्णो हरिणः कृशः ।
धृतराष्ट्रश्च नृपतिः सौबलेन निवेदितः ॥ २४
तं पिता पुत्रगृध्नुत्वादनुमेनेऽनये स्थितम् ।
अनपेक्ष्यैव पितरं गाङ्गेयं विदुरं तथा ॥ २५
असंशयं त्वयं राजा यथैवाहं तथा गतः ।
अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगम् ॥ २६
यशसः पतितो दीप्ताद्घातयित्वा सहोदरान् ।
इमौ हि वृद्धौ शोकाग्नौ प्रक्षिप्य स सुयोधनः ।
अस्मत्प्रद्वेषसंतप्तः पापबुद्धिः सदैव ह ॥ २७
को हि बन्धुः कुलीनः संस्तथा ब्रूयात्सुहृज्जने ।
यथाऽसाववदद्वाक्यं युयुत्सुः कृष्णसंनिधौ ॥ २८
आत्मनो हि वयं दोषाद्विनष्टाः शाश्वतीः समाः ।
प्रदहन्तो दिशः सर्वा भास्वरा इव तेजसा ॥ २९
सोऽस्माकं वैरपुरुषो दुर्मतिः प्रग्रहं गतः ।
दुर्योधनकृते ह्येतत्कुलं नो विनिपातितम् ॥ ३०
अवध्यानां वधं कृत्वा लोके प्राप्ताः स्म वाच्यतां ३१
कुलस्यास्यान्तकरणं दुर्मतिं पापपूरुषम् ।

पृथिव्यां विजयैषिण इति झ० पाठः ॥ ८ ॥ अमिषे गृध्यमानानामशुभ वै शुनामिव । आमिषं चैव नोहीष्टमामिषस्य विवर्जनमिति झ. पाठः । तत्र आमिषे राज्यनिमित्ते । अशुभं ज्ञातिद्रोहाख्यम् । शुनामिवेतरेषां भवति नो ह्यस्माकं त्वामिषं चाऽऽमिषस्य विवर्जन चेति द्वयमपीष्टमित्यर्थः ॥ १० ॥ बन्धूनामर्थे सर्वं त्याज्यमित्यर्थः ॥ ११ ॥ व्रतानि गौरीव्रतादीनि । कौतुकानि दुर्गोत्सवादीनि । मङ्गलानि लक्ष्मीनारायणशिलादीनि तैः ॥ १४ ॥ यदा संनिहिताः पुत्रा इति थ. द. पाठः ॥ १६ ॥ अनपहाय अपरिहृत्य । अनवदायेति पाठे अपरिशोध्य । पितृभ्य इति षष्ठ्यर्थे चतुर्थी ॥ १७ ॥ अर्जुनेन सह वदन्नपि संनिहितां मातरं सम्बोधयति हे अम्बेति । पितरौ मातापितरौ गान्धारीधृतराष्ट्रौ यदैव जातकर्मकरौ तदैव ते नृपा दुर्योधनप्रभृतयो हताः ॥ १८ ॥ न ते जन्मफलं किंचिदिति द. पाठः ॥ १९ ॥ श्रुतवतां पण्डितानाम् । रत्नानीत्यादौ भुक्ता नीत्यादिर्यथालिङ्गं शेषः । नामात्यसमितौ कथ्यं इति ट. ड. थ. पाठः ॥ २१ ॥ हरिणः पाण्डुरः । धृतराष्ट्रस्य नृपतेरिति ड. थ. द. पाठः ॥ २४ ॥ पापबुद्धिः सुहृज्जनैरिति ट. ड. थ. पाठः ॥ २७ ॥ भास्करस्येव तेजसेति ट. ड. थ. पाठः ॥ २९॥ प्रग्रह दृढबन्धनम् । गतः प्राप्तः । नोऽस्माभिः ॥ ३० ॥

राजा राष्ट्रेश्वरं कृत्वा धृतराष्ट्रोऽद्य शोचति ॥ ३२
हताः शूराः कृतं पापं विषयोऽसौ विनाशितः ।
हत्वा नो विगतो मन्युः शोको मां दारयत्ययम् ३३
धनञ्जय कृतं पापं कल्याणेनोपहन्यते ।
[ख्यापनेनानुतापेन दानेन तपसाऽपि वा ।
निवृत्त्या तीर्थगमनाच्छ्रुतिस्मृतिजपेन वा ॥] ३४
त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ।
त्यागवाञ्जन्ममरणे नाप्नोतीति श्रुतिर्यतः ।
प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥ ३५
स धनञ्जय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः ।
वनमामन्त्र्य वः सर्वान्गमिष्यामि परंतप ॥ ३६
न हि कृत्स्नतमो धर्मः शक्यः प्राप्तुमिति श्रुतिः ।
परिग्रहवता तन्मे प्रत्यक्षमरिसूदन ॥ ३७
मया निसृष्टं पापं हि परिग्रहमभीप्सता ।
जन्मक्षयनिमित्तं च प्राप्तुं शक्यमिति श्रुतिः ॥ ३८
स परिग्रहमुत्सृज्य कृत्स्नं राज्यं सुखानि च ।
गमिष्यामि विनिर्मुक्तो विशोको निर्ममः क्वचित् ॥
प्रशासध्वमिमामुर्वीं क्षेमां निहतकण्टकाम् ।
न ममार्थोऽस्ति राज्येन भोगैर्वा कुरुनन्दन ॥ ४०
एतावदुक्त्वा वचनं कुरुराजो युधिष्ठिरः ।
उपारमत्ततः पार्थः कनीयान्प्रत्यभाषत ॥ ४१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ॥ ८ ॥

युधिष्ठिरंप्रत्यर्जुनवचनम् ॥ १ ॥

वैशंपायन उवाच ।
अथार्जुन उवाचेदमधिक्षिप्त इवाक्षमी ।
अभिनीततरं वाक्यं दृढवादपराक्रमः ॥ १
दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः ।
स्मयमानो महातेजाः सृक्किणी परिसंलिहन् ॥ २
अर्जुन उवाच ।
अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम् ।
यत्कृत्वाऽमानुषं कर्म त्यजेथाः श्रियमुत्तमाम् ॥३
शत्रून्हत्वा महीं लब्ध्वा स्वधर्मेणोपपादिताम् ।
हतामित्रः कथं स त्वं त्यजेथा बुद्धिलाघवात् ॥४
क्लीबस्य हि कुतो राज्यं दीर्घसूत्रस्य वा पुनः ।
किमर्थं च महीपालानवधीः क्रोधमूर्च्छितः ॥ ५
यो ह्याजिजीविषेद्भैक्षं कर्मणा नैव कस्य चित् ।
समारम्भान्बुभूषेत हतस्वस्तिरकिंचनः ।
सर्वलोकेषु विख्यातो न पुत्रपशुसंहितः ॥ ६
कापालीं नृप पापिष्ठां वृत्तिमासाद्य जीवतः ।
संत्यज्य राज्यमृद्धं ते लोकोऽयं किं वदिष्यति ॥७
सर्वारम्भान्समुत्सृज्य हतस्वस्तिरकिंचनः ।

---

विषयः आमिषम् । नोऽस्माकम् । तान्हत्वा विगतः ॥ ३३ ॥ कल्याणेनोपकारेण । निवृत्त्या त्यागेन ॥ ३४ ॥ श्रुतिस्त्यागेनैके अमृतत्वमानशुरिति । प्राप्तवर्त्मा लब्धयोगमार्गः । त्यागे यदा कृतमतिरिति ट. ड. द. पाठः ॥ ३५ ॥ नहि कश्चिद्गृहे धर्म इति ड. द. पाठः । परिग्रहवता गृहस्थेन नहि प्राप्तुं शक्यः ॥ ३७ ॥ सप्तमोऽध्यायः ॥ ७ ॥

दृढौ युक्तिशक्त्युपेतौ वादपराक्रमावुक्तिविक्रमौ यस्य स तथा ॥ १ ॥ दर्शयन्नैन्द्रमात्मानमिति ड. थ. द. पाठः ॥ २ ॥ क्लीबस्य स्वीयवधे कातरस्य । दीर्घसूत्रस्य परवधे अलसस्य ॥ ५ ॥ यः पुमान्हतस्वस्तिर्नष्टकल्याणः । अकिंचनो दरिद्रः । अतएव क्रमात्सर्वलोकेषु न विख्यातः । पुत्रपशुसंहितः पुत्रादिभिराश्लिष्टश्च न भवति । स भैक्षं आजिजीविषेदुपजीवितुमिच्छेत् । स कर्मणा पौरुषेण कस्यचिदपि परस्य । समारभ्यन्त इति समारम्भा अर्थास्तान्नैव बुभूषेत नैव प्राप्तुमिच्छेत् । त्वं तु प्राप्तकल्याणः संपन्नः ख्यातः पुत्राद्याश्लिष्टश्च पौरुषेणार्थाँल्लब्ध्वा भैक्ष्येण जीवितुमिच्छसीति विपर्यस्तबुद्धिरसीति भावः । यो नाजिजीविषेद्भैक्षं कर्मणा येन केनचित् । समारम्भाद्बुभूषेत हतस्वस्तिरकिंचनः । इति ट. ड. पाठः । यो ह्याजिजीविषेद्भैक्षं कर्मणा नैव केनचित् । इति थ. पाठः । सर्वलोकेन विख्यातो न पुत्रपशुसंहितः । कापालीं नृप पापिष्ठां वृत्तिमास्थाय जीवतीति ट. ड. थ. द. पाठः ॥ ६ ॥ कापालीं भिक्षापात्रवतीम् । संत्यज्य राज्यमृद्धिं त्वां लोकोऽयं प्रवदिष्यतीति ट. ड. पाठः ७ ॥ सर्वारम्भान्सर्वार्थान्धर्मादीन् प्राकृतवन्मूढ-

कस्मादाशंससे भैक्षं चर्तुं प्राकृतवत्प्रभो ॥ ८
कस्माद्राजकुले जातो जित्वा कृत्स्नां वसुंधराम् ।
धर्मार्थावखिलौ हित्वा वनं मौढ्यात्प्रतिष्ठसे ॥ ९
यदीमानि हवींषीह विमथिष्यन्त्यसाधवः ।
भवता विप्रहीणत्वात्प्राप्तं त्वामेव किल्बिषम् ॥१०
आकिंचन्यं मुनीनां च इति वै नहुषोऽब्रवीत् ।
कृत्वा नृशंसं ह्यधने धिगस्त्वधनतामिह ॥ ११
आश्वस्तन्यमृषीणां हि विद्यते वेद तद्भवान् ।
यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते ॥ १२
धर्मं स हरते तस्य धनं हरति यस्य यः ।
ह्रियमाणे धने राजन्वयं कस्य क्षमेमहि ॥ १३
अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।
दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति ॥ १४
पतितः शोच्यते राजन्निर्धनश्चापि शोच्यते ।
विशेषं नाधिगच्छामि पतितस्याधनस्य च ॥ १५
अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥१६
अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्राऽपि लोकस्य विना ह्यर्थं न सिद्ध्यति १७
अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा १८
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः १९
अधनेनार्थकामेन नार्थः शक्यो विधित्सितुम् ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥ २०
धर्मः कामश्च स्वर्गश्च हर्षः क्रोधः श्रुतं दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ २१
धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्धते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥ २२
नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलादभिनदी यथा ॥ २३
यः कृशार्थः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन्कृशो नाम न शरीरकृशः कृशः ॥ २४
अवेक्षस्व यथान्यायं पश्य देवासुरं यथा ।
राजन्किमन्यज्ज्ञातीनां वधादृध्यन्ति देवताः २५
न चेद्धर्तव्यमन्यस्य कथं तद्धर्ममारभेत् ।
एतावानेव वेदेषु निश्चयः कविभिः कृतः ॥ २६
अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता ।
सर्वथा धनमाहार्यं यष्टव्यं चापि यत्नतः ॥ २७
द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्वशः ।
द्रोहात्किमन्यज्ज्ञातीनां गृध्यन्ते येन देवताः ॥२८
इति देवा व्यवसिता वेदवादाश्च शाश्वताः ।
अधीयन्तेऽध्यापयन्ते यजन्ते याजयन्ति च ॥ २९
कृत्स्नं तदेव तच्छ्रेयो यदप्याददतेऽन्यतः ।
न पश्यामोऽनपकृतं धनं किंचित्क्वचिद्वयम् ॥ ३०
एवमेव हि राजानो यजन्ति पृथिवीमिमाम् ।
जित्वा ममेयं ब्रुवते पुत्रा इव पितुर्धनम् ॥ ३१
राजर्षयोऽपि ते स्वर्ग्या धर्मो ह्येषां निरुच्यते ॥३२
यथैव पूर्णादुदधेः स्यन्दन्त्यापो दिशो दश ।
एवं राजकुलाद्वित्तं पृथिवीं प्रतितिष्ठति ॥ ३३
आसीदियं दिलीपस्य नृगस्य नहुषस्य च ।
अंबरीषस्य मान्धातुः पृथिवी सा त्वयि स्थिता ॥३४
स त्वां द्रव्यमयो यज्ञः संप्राप्तः सर्वदक्षिणः ।
तं चेन्न यजसे राजन्प्राप्तस्त्वं राज्यकिल्बिषम् ॥ ३५
येषां राजाऽश्वमेधेन यजते दक्षिणावता ।
उपेत्य तस्यावभृथे पूताः सर्वे भवन्ति ते ॥ ३६
विश्वरूपो महादेवः सर्वमेधे महामखे ।
जुहाव सर्वभूतानि तथैवात्मानमात्मना ॥ ३७

वत् ॥ ८ ॥ आकिञ्चन्यं मुनीनां च राज्यादप्यधिकं मतमिति यद्वाक्यं तदुद्दिश्य नहुषो राजा अधनतामिह धिगस्त्वित्यब्रवीत्। अधने धनाभावे निमित्ते सति पुरुषो नृशंसं कर्म कृत्वा जीवतीति दारिद्र्यं पापहेतुत्वान्निन्दितवानित्यर्थः । आकिञ्चन्यमहीनस्य मृत्यवे इति ट. ड. थ. पाठः ॥ ११ ॥ यत्तूक्तं ज्ञातीनां परस्परं युद्धे हतानां हन्तॄणां च श्रेयो नास्तीति तच्छिष्टाचारदर्शनेन दूषयति । अवेक्षस्वेत्यादिना ॥ २५ ॥ अन्यस्य परस्य धनं चेन्न हर्तव्यं तर्हि राजा कथं धर्ममाचरेत्। तस्य वृत्त्यन्तराभावान्न कथंचिदित्यर्थः ॥ २६ ॥ निरुच्यते उत्कृष्टत्वेन कीर्त्यते ॥ ३२ ॥ स्यन्दन्ति प्रस्रवन्ति ॥ ३३ ॥ अष्टमोऽध्यायः ॥ ८ ॥

शाश्वतोऽयं भूतिपथो नास्त्यन्तमनुशुश्रुम । महाजनपथं गन्ता मा राजन्कुपथं गमः ॥ ३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ॥ ९ ॥

युधिष्ठिरस्य निर्वेदवचनम् ॥ १ ॥

---

युधिष्ठिर उवाच ।
मुहूर्तं तावदेकाग्रो मनः श्रोत्रेऽन्तरात्मनि ।
धारयन्नपि ते श्रुत्वा रोचते वचनं मम ॥ १
सार्थगम्यमहं मार्गं न जातु त्वत्कृते पुनः ।
गच्छेयं तं गमिष्यामि हित्वा ग्राम्यसुखान्युत ॥ २
क्षेम्यश्चैकाकिना गम्यः पन्था कोस्तीति पृच्छ माम् ।
अथवा नेच्छसि प्रष्टुमपृच्छन्नपि मे शृणु ॥ ३
हित्वा ग्राम्यसुखाचारं तप्यमानो महत्तपः ।
अरण्ये फलमूलाशी चरिष्यामि मृगैः सह ॥ ४
जुह्वानोऽग्निं यथाकालमुभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश्चर्मचीरजटाधरः ॥ ५
शीतवातातपसहः क्षुत्पिपासाश्रमक्षमः ।
तपसा विधिदृष्टेन शरीरमुपशोषयन् ॥ ६
मनःकर्णसुखा नित्यं शृण्वन्नुच्चावचा गिरः ।
मुदितानामरण्येषु नदतां मृगपक्षिणाम् ॥ ७
आजिघ्रन्पेशलान्गन्धान्फुल्लानां वृक्षवीरुधाम् ।
नानारूपान्वने पश्यन्रमणीयान्वनौकसः ॥ ८
वानप्रस्थजनस्यापि दर्शनं कुलवासिनः ।
नाप्रियाण्याचरिष्यामि किंपुनर्ग्रामवासिनाम् ॥ ९
एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन् ।
पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ १०
एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम् ।
सेवमानः प्रतीक्षिष्ये देहस्यास्य समापनम् ॥ ११
अथवैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन्भैक्षं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् ॥ १२
पांसुभिः समभिच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ १३
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्ममो भूत्वा निर्द्वन्द्वो निष्परिग्रहः ॥ १४
आत्मारामः प्रसन्नात्मा जडान्धबधिराकृतिः ।
अकुर्वाणः परैः कांचित्संविदं जातु कैरपि ॥ १५
जङ्गमाजङ्गमान्सर्वानविहिंसंश्चतुर्विधान् ।
प्रजाः सर्वाः स्वधर्मस्थाः समः प्राणभृतः प्रति ॥ १६
न चाप्यवहसन्कंचिन्न कुर्वन्भ्रुकुटीः क्वचित् ।
प्रसन्नवदनो नित्यं सर्वेन्द्रियसुसंयतः ॥ १७
अपृच्छन्कस्यचिन्मार्गं प्रव्रजन्नेव केनचित् ।
न देशं न दिशं कांचिद्गन्तुमिच्छन्विशेषतः ॥ १८
गमने निरपेक्षश्च पश्चादनवलोकयन् ।
ऋजुः प्रणिहितो गच्छन्त्रसस्थावरवर्जकः ॥ १९
स्वभावस्तु प्रयात्यग्रे प्रभवन्त्यशनान्यपि ।
द्वन्द्वानि च विरुद्धानि तानि सर्वाण्यचिन्तयन् २०
अल्पं वा स्वादु वा भोज्यं पूर्वालाभेन जातुचित् ।
अन्येष्वपि चरँल्लाभमलाभे सप्त पूरयन् ॥ २१
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसंचारे काले विगतभिक्षुके ॥ २२
एककालं चरन्भैक्षं त्रीनथ द्वे च पञ्च वा ।

---

मुहूर्तं तावदेकाग्रो मनः श्रोत्रेऽन्तरात्मनि । धारयन्नपि तच्छ्रुत्वा रोचेत वचनं ममेति झ. पाठः ॥ १ ॥ पेशलान्रम्यान् ॥ ८ ॥ आत्मारामः योगेनात्मन्येव रममाणः । प्रसन्नात्मा शुद्धसत्वः । केनचिन्निमित्तेन संविदं संवादमकुर्वाणः कृत्याभावात् ॥ १५ ॥ चतुर्विधान् जंगमस्य जरायुजाण्डजस्वेदजभेदेन त्रैविध्यात् । स्वधर्मस्थाः प्राणभृत इन्द्रियपोषकाश्च प्रजाः प्रति सम इत्यन्वयः ॥ १६ ॥ केनचिन्मार्गेण ॥ १८ ॥ प्रणिहितोऽन्तर्मुखः ॥ १९ ॥ पूर्वालाभेन पूर्वस्मिन् गृहेऽलाभेन हेतुना जातु कदाचित् । अन्येष्वपि गृहेषु लाभं लब्धमन्नं चरन्भक्षयन् ॥ २१ ॥ भैक्षकालमाह विधूमे इति । गृहे इति शेषः ॥ २२ ॥ त्रीन्गृहान् ॥ २३ ॥

स्नेहपाशं विमुच्याहं चरिष्यामि महीमिमाम् ॥ २३
अलाभे सति वा लाभे समदर्शी महातपाः ।
न जिजीविषुवत्किंचिन्न मुमूर्षुवदाचरन् ॥ २४
जीवितं मरणं चैव नाभिनन्दन्न च द्विषन् ।
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः २५
याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः ।
सर्वास्ताः समभित्यज्य निमेषादिव्यवस्थितः॥२६
तेषु नित्यमसक्तश्च त्यक्तसर्वेन्द्रियक्रियः ।
अपरित्यक्तसंकल्पः सुनिर्णिक्तात्मकल्मषः ॥२७
विमुक्तः सर्वसङ्गेभ्यो व्यतीतः सर्ववागुराः ।
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः ॥ २८
वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि मानसीम् ।
तृष्णया हि महत्पापमज्ञानादस्मि कारितः ॥२९
कुशलाकुशलान्येके कृत्वा कर्माणि मानवाः ।
कार्यकारणसंश्लिष्टं स्वजनं नाम बिभ्रति ॥ ३०
आयुषोऽन्ते प्रहायेदं क्षीणप्राणं कलेवरम् ।
प्रतिगृह्णाति तत्पापं कर्तुः कर्मफलं हि तत् ॥ ३१
एवं संसारचक्रेऽस्मिन्व्याविद्धे रथचक्रवत् ।
समेति भूतग्रामोऽयं भूतग्रामेण कार्यवान् ॥ ३२
जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ।
अपारमिव चास्वस्थं संसारं त्यजतः सुखम् ॥३३
दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु ।
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित् ॥ ३४
कृत्वा हि विविधं कर्म तत्तद्विविधलक्षणम् ।
पार्थिवैर्नृपतिः स्वल्पैः कारणैरेव बध्यते ॥ ३५
तस्मात्प्रज्ञामृतमिदं चिरान्मां प्रत्युपस्थितम् ।
तत्प्राप्य प्रार्थये स्थानमव्ययं शाश्वतं ध्रुवम्॥३६
एतया संततं धृत्या चरन्नेवंप्रकारया ।
जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ।
देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः॥ ३७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

युधिष्ठिरंप्रति भीमसेनवचनम् ॥ १ ॥

भीम उवाच ।
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥ १
आलस्ये कृतचित्तस्य राजधर्मानसूयतः ।
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ ॥ २
क्षमाऽनुकम्पा कारुण्यमानृशंस्यं न विद्यते ।
क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ॥
यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम् ।
शस्त्रं नैव ग्रहीष्यामो न वधिष्याम कंचन ॥
भैक्षमेवाचरिष्याम शरीरस्याविमोक्षणात् ।

जिजीविषुवद्धनादिसंग्रहन् । मुमूर्षुवद्न्नादित्यागम् ॥ २४ ॥ वासी तक्षायुधं तया ॥ २५ ॥ निमेषोन्मेषाशनपानादिशारीरनिर्वाहमात्रकर्मस्ववस्थित इत्यर्थः ॥ २६ ॥ तेष्वपि कर्मसु असक्तः । अपरित्यक्तो नित्यं वशीकृतः संकल्पो मनःक्रिया येन । दृढमना इत्यर्थः । सुनिर्णिक्तात्मकल्मषः सम्यग्दूरीकृतधीमलः ॥ २७ ॥ वागुराः स्नेहपाशान् ॥ २८ ॥ एके मूढाः कार्यकारणसंश्लिष्टं स्वसुखेन निमित्तभूतेन संलग्नं स्त्र्यादिकं बिभ्रत्यात्मोपकारकत्वेन पुष्णन्ति । कुशलाकुशलान्येवं कृत्वा कर्माणि मानवः । कार्यकारणसंश्लिष्टः स्वजनं नाभिनन्दति इति ङ. पाठः ॥ ३० ॥ व्याविद्धे भ्राम्यमाणे । समेति संयोगमेति ॥ ३२ ॥ विविधं सामाद्युपायवत् विविधलक्षण नानाविधकपटादिरूप कर्म कृत्वा स्वल्पैः पार्थिवैः क्षुद्रराजभिर्नृपतिर्महाराजो बध्यते । कारणैः स्वापमानादिभिर्हेतुभिः बहवो मिलित्वा एकं महान्तं घ्नन्तीत्यर्थः ॥ ३५ ॥ यस्माद्दुःखमयं क्षयिष्णु च ऐश्वर्यं तस्मात् । स्थानं मोक्षम् । अव्ययमपक्षयशून्यम् । शाश्वतमनादि । ध्रुवं सदैकरूपम् ॥ ३६ ॥ संस्थापयिष्यामि समापयिष्यामि ॥ ३७ ॥ नवमोऽध्यायः ॥ ९ ॥

श्रोत्रियस्य वेदपाठकस्य मन्दत्वादेवाविपश्चितोऽर्थज्ञानशून्यस्य । अनुवाकेन नित्यपाठेन हता नष्टा ॥ १ ॥ त्वदन्त

न चेदं दारुणं युद्धमभविष्यन्महीक्षिताम् ॥ ५
प्राणस्यान्नमिदं सर्वमिति वै कवयो विदुः ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥ ६
आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः ।
हन्तव्यास्त इति प्राज्ञाः क्षत्रधर्मविदो विदुः ॥ ७
ते सदोषा हताऽस्माभिरन्नस्य परिपन्थिनः ।
तान्हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ॥ ८
यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पङ्कदिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ॥ ९
यथाऽऽरुह्य महावृक्षमपहृत्य ततो मधु ।
अप्राप्य निधनं गच्छेत्कर्मेदं नस्तथोपमम् ॥ १०
यथा महान्तमध्वानमाशया पुरुषः पतन् ।
स निराशो निवर्तेत कर्मैतन्नस्तथोपमम् ॥ ११
यथा शत्रून्घातयित्वा पुरुषः कुरुनन्दन ।
आत्मानं घातयेत्पश्चात्कर्मेदं नस्तथोपमम् ॥ १२
यथान्नं क्षुधितो लब्ध्वा न भुञ्जीयाद्यदृच्छया ।
कामी च कामिनीं लब्ध्वा कर्मेदं नस्तथोपमम् १३
वयमेवात्र गर्ह्या हि यद्वयं मन्दचेतसम् ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥ १४
वयं हि बाहुबलिनः कृतविद्या मनस्विनः ।
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा ॥ १५
अगतीकगतीनस्मान्नष्टार्थानर्थसिद्धये ।
कथं वै नानुपश्येयुर्जनाः पश्यत यादृशम् ॥ १६

आपत्काले हि संन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन वा ॥ १७
तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते ।
धर्मव्यतिक्रमं चैव मन्यन्ते सूक्ष्मदर्शिनः ॥ १८
कथं तस्मात्समुत्पन्नास्तन्निष्ठास्तदुपाश्रयाः ।
तदेव निन्दां भाषेयुर्धाता तत्र न गर्ह्यते ॥ १९
श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम् ।
वेदवादस्य विज्ञानं सत्याभासमिवानृतम् ॥ २०
शक्यं तु मौनमास्थाय बिभ्रताऽऽत्मानमात्मना ।
धर्मच्छद्म समास्थाय च्यवितुं न तु जीवितुम् ॥ २१
शक्यं पुनररण्येषु सुखमेकेन जीवितुम् ।
अबिभ्रता पुत्रपौत्रान्देवर्षीनतिथीन्पितॄन् ॥ २२
नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः ।
अथान्येन प्रकारेण पुण्यमाहुर्न ते जनाः ॥ २३
यदि संन्यासतः सिद्धिं राजा कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥ २४
एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः ।
अपरिग्रहवन्तश्च सततं ब्रह्मचारिणः ॥ २५
अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते ।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ २६
औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः ।
तेषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते ॥ २७

त्वत्तोऽन्यत्र ॥ ३ ॥ प्राणस्य प्राणवतो बलिष्ठस्येद सर्वमन्नमिवान्नं भोग्यम् । भोजनं भुज्यते पाल्यते इति व्युत्पत्त्या पालनीयम् ॥ ६ ॥ हतास्माभिरिति संधिरार्षः । हत्वा निघ्नन् त्वं । हन्तेरन्येभ्योऽपि दृश्यत इति क्वनिप् अनुनासिकलोपो ह्रस्वस्येति तुक् । राज्यस्य परिपन्थिन इति झ. पाठः ॥ ८ ॥ तथा तेन प्रकारेणोपमीयत इति तथोपमम् ॥ ९ ॥ पतन् गच्छन् ॥ ११ ॥ अशक्तयः शक्तिहीनाः ॥ १५ ॥ अगतीकगतीननाथरक्षकान् । दैर्घ्यमार्षम् । एतत् यादृशं मम वचनं तादृशं पश्यत । युक्तमयुक्तं वेति परीक्षयतेत्यर्थः ॥ १६ ॥ व्यंसितेन दुर्गतिंप्रापितेन ॥ १७ ॥ त्यागं संन्यासम् । क्षत्रियस्य मौण्ड्यादिकं निषिद्धं तस्याचरणे धर्मव्यतिक्रमोऽस्त्येवेति भावः ॥ १८ ॥ हिंसार्थमुत्पन्ना हिंस्रयोनौ जाताः । हिंसैकजीवनास्तदेव तस्यैव हिंस्रधर्मस्य निन्दां कथं भाषेयुः । कथं वा तत्र धाता तस्य धर्मस्य स्रष्टा न गर्ह्यते न निन्द्यते । धातृविहितत्वात्सहजत्वाच्च नासौ धर्मो निन्द्य इत्यर्थः । तएव भूषयेयुर्ये ते श्रद्धाह्यत्र गर्ह्यते इति द. पाठः ॥ १९ ॥ श्रिया विहीनैरनयैर्नास्तिकैः संप्रकीर्तितम् । वेदाभासमिवाज्ञानमिति थ. पाठः । श्रिया त्रय्या विद्यया विहीनैः । अधनैर्लक्ष्म्या च हीनैः । इदमनृतं संप्रवर्तितम् । वेदयतीति वेदो विधिस्तस्य वादोऽर्थवादस्तत्संबन्धि विज्ञानं संन्यासविधिस्तुत्यर्थं भरतादिकीर्तनं प्रजापतिवपोत्खननवदर्थवादो नतु तावता मौण्ड्ये क्षत्रियस्याधिकारः सिध्यतीति भावः ॥ २० ॥ आत्मानं देहमात्मना स्वेनैव बिभ्रता निश्चलं स्थापयता धर्मच्छद्म कपटयोगं आस्थाय च्यवितुं मर्तुमेव शक्यं न जीवितुम् । केवलं प्रणिधानेन शरीरनाशो भवेदित्यर्थः ॥ २१ ॥ आत्मभाग्येषु स्वसंपत्सु अन्येषां सिद्धिं परकर्मार्जितं फलम् ॥ २६ ॥ दशमोऽध्यायः ॥ १० ॥

अवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत् । तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ २८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ॥ ११ ॥

अर्जुनेन युधिष्ठिरंप्रति गार्हस्थ्यस्य श्रैष्ठ्योपपादनम् ॥ १ ॥

अर्जुन उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
तापसैः सह संवादं शक्रस्य भरतर्षभ ॥ १
'शक्यं पुनररण्येषु सुखमेतेन जीवितुम् ।'
केचिद्गृहान्परित्यज्य वनमभ्यागमन्द्विजाः ।
अजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः ॥ २
धर्मोऽयमिति मन्वानाः समृद्धा धर्मचारिणः ।
त्यक्त्वा भ्रातॄन्पितॄंश्चैव तानिन्द्रोऽन्वकृपायत ॥ ३
स तान्बभाषे मघवान्पक्षीभूत्वा हिरण्मयः ।
सुदुष्करं मनुष्यैस्तु यत्कृतं विघसाशिभिः ॥ ४
पुण्यं भवति कर्मैषां प्रशस्तं चैव जीवितम् ।
सिद्धार्थास्ते गतिं मुख्यां प्राप्ताः कर्मपरायणाः ॥ ५
ऋषय ऊचुः ।
अहो बतायं शकुनिर्विघसाशान्प्रशंसति ।
अस्मान्नूनमयं शास्ति वयं च विघसाशिनः ॥ ६
शकुनिरुवाच ।
नाहं युष्मान्प्रशंसामि पङ्कदिग्धान्रजस्वलान् ।
उच्छिष्टभोजिनो मन्दानन्ये वै विघसाशिनः ॥ ७
ऋषय ऊचुः ।
इदं श्रेयः परमिति वयमेवममंस्महि ।
शकुने ब्रूहि यच्छ्रेयो वयं ते श्रद्दधामहे ॥ ८
शकुनिरुवाच ।
यदि मां नाभिशङ्कध्वं विभज्यात्मानमात्मना ।
ततोऽहं वः प्रवक्ष्यामि याथातथ्यं हितं वचः ॥ ९
ऋषय ऊचुः ।
शृणुमस्ते वचस्तात पन्थानो विदितास्तव ।
नियोगे चैव धर्मात्मन्स्थातुमिच्छाम शाधि नः १०
शकुनिरुवाच ।
चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ॥ ११
मन्त्रोऽयं जातकर्मादिर्ब्राह्मणस्य विधीयते ।
जीवतोऽपि यथाकालं श्मशाननिधनान्तकः ॥ १२
कर्माणि वैदिकान्यस्य स्वर्ग्यः पन्थास्त्वनुत्तमः ।
अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते ।
आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते ॥ १३
मासार्धमासा ऋतव आदित्यशशितारकम् ।
ग्रसन्ते कर्म भूतानि तदिदं कर्मशंसिनाम् ॥ १४
सिद्धिक्षेत्रमिदं पुण्यमयमेवाश्रमो महान् ॥ १५
अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः ।
मूढानामर्थहीनानां तेषामेनस्तु विद्यते ॥ १६
देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान् ।
संत्यज्य मूढा वर्तन्ते ततो यान्त्यशुचीन्पथः ॥ १७
एतद्वोऽस्तु तपोयुक्तं ददामीत्यृषिचोदितम् ।
तस्मात्तदध्यावसतस्तपस्वित्वमिहोच्यते ॥ १८
देववंशान्ब्रह्मवंशान्पितृवंशांश्च शाश्वतान् ।
संविभज्य गुरोश्चर्या तद्वै दुष्करमुच्यते ॥ १९
देवा वै दुष्करं कृत्वा विभूतिं परमां गताः ।
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः ॥ २०

---

विघसाशिभिः महायज्ञावशिष्टभोजिभिः ॥ ४ ॥ शास्ति ज्ञापयति । विघसं शीर्णतृणपर्णफलादिकं तददनशीलास्तु वयमेवातो विघसाशिनः श्रेयांसः स्म इति मेनिरे इत्यर्थः ॥ ६ ॥ पङ्कदिग्धान्रजस्वलानित्यागन्तुकस्वाभाविकदोषयुक्तत्वमुक्तं क्रमेण । उच्छिष्टभोजिन इति । प्रायेण शीर्णतृणपर्णफलानि मृगकीटपक्ष्युच्छिष्टानि भवन्ति तद्भोजिनः ॥ ७ ॥ ते तव वच इति शेषः ॥ ८ ॥ पन्थानः श्रेयोमार्गाः ॥ १० ॥ मन्त्रो मन्त्रोक्तसंस्कारः ॥ १२ ॥ ईहन्ते सर्वभूतानि तदिदं कर्मसंज्ञितमिति झ. पाठः ॥ १५ ॥

तपः श्रेष्ठं प्रजानां हि मूलमेतन्न संशयः ।
कुटुम्बविधिनाऽनेन यस्मिन्सर्वं प्रतिष्ठितम् ॥ २१
एतद्विदुस्तपो विप्रा द्वन्द्वातीता विमत्सराः ।
एतस्माद्वनमध्ये तु लोकेषु तप उच्यते ॥ २२
दुराधर्षं पदं चैव गच्छन्ति विघसाशिनः ।
सायंप्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि ॥ २३
दत्त्वाऽतिथिभ्यो देवेभ्यः पितृभ्यः स्वजनाय च ।
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः ॥ २४
तस्मात्स्वधर्ममास्थाय सुव्रताः सत्यवादिनः ।
लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः ॥
त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः ।
वसन्ति शाश्वतान्वर्षाञ्जना दुष्करकारिणः ॥
अर्जुन उवाच ।
ततस्ते तद्वचः श्रुत्वा धर्मार्थसहितं हितम् ।
उत्सृज्य नास्तिकमतिं गार्हस्थ्यं धर्ममाश्रिताः ॥
तस्मात्त्वमपि सर्वज्ञ धैर्यमालम्ब्य शाश्वतम् ।
प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नरोत्तम ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ॥ १२ ॥

युधिष्ठिरंप्रति नकुलवाक्यम् ॥ १ ॥

वैशंपायन उवाच ।
अर्जुनस्य वचः श्रुत्वा नकुलो वाक्यमब्रवीत् ।
राजानमभिसंप्रेक्ष्य सर्वधर्मभृतां वरम् ॥ १
अनुरुध्य महाप्राज्ञो भ्रातुश्चित्तमरिंदम ।
व्यूढोरस्को महाबाहुस्ताम्रास्यो मितभाषिता ॥ २
नकुल उवाच ।
विशाखयूपे देवानां सर्वेषामग्नयश्चिताः ।
तस्माद्विद्धि महाराज देवाः कर्मफले स्थिताः ॥ ३
अनास्तिकानां भूतानां प्राणदाः पितरश्च ये ।
तेऽपि कर्मैव कुर्वन्ति विधिं पश्यस्व पार्थिव ॥ ४
वेदवादापविद्धास्तु तान्विद्धि भृशनास्तिकान् ।
न हि वेदोक्तमुत्सृज्य विप्रः सर्वेषु कर्मसु ॥ ५
देवयानेन नाकस्य पृष्ठमाप्नोति भारत ।
अत्याश्रमानयं सर्वानित्याहुर्वेदनिश्चयाः ॥
ब्राह्मणाः श्रुतिसंपन्नास्तान्निबोध नराधिप ।
वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन् ॥
कृतात्मा स महाराज स वै त्यागी स्मृतो नरः ॥
अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः ।
आत्मत्यागी महाराज स त्यागी तापसो मतः ॥
अनिकेतः परिपतन्वृक्षमूलाश्रयो मुनिः ।
अयाचकः सदायोगी स त्यागी पार्थ भिक्षुकः ॥
क्रोधहर्षावनादृत्य पैशुन्यं च विशेषतः ।
विप्रो वेदानधीते यः स त्यागी गुरुपूजकः ॥
आश्रमांस्तुलया सर्वान्धृतानाहुर्मनीषिणः ।
एकतश्च त्रयो राजन्गृहस्थाश्रम एकतः ॥
समीक्ष्य तुलया पार्थ कामं स्वर्गं च भारत ।

---

एतस्मात् गार्हस्थ्यात् अनन्तरं वनमध्ये तप उच्यत इत्यन्वयः ॥ २२ ॥ अनुपस्कृताः निःसंशयाः ॥ २५ ॥ एकादशोऽध्यायः ॥ ११ ॥

तम्रास्यो दुःखेन विवर्णमुखः ॥ २ ॥ विशाखयूपे क्षेत्रविशेषे । देवानां देवैः । अग्नयोऽग्निस्थापनार्थानि स्थण्डिलानि । चिता इष्टकाभी रचिता अद्यापि दृश्यन्ते । तेन देवत्वमपि कर्मफलमेवेत्यर्थः । विशालयूप इति थ. पाठः ॥ ३ ॥ अनास्तिकानामास्तिक्यशून्यानामपि प्राणदा वृष्टिद्वारा अन्नप्रदाः । विधिं अग्नि वा अकामयतेत्यादि अग्न्यादिभावस्य कर्मसाध्यत्वज्ञापकम् । अनास्तिकनास्तिकानां प्राणदा इति थ. ड. पाठः ॥ ४ ॥ वे... वादः अपविद्धस्त्यक्तो यैस्तान् ॥ ५ ॥ देवयानेन मार्गे... पृष्ठमुपरिभागं ब्रह्मलोकमित्यर्थः । अय गृहाश्रमः सर्वानाश्र... अति अतिक्रान्तः । तेभ्यः श्रेष्ठ इत्यर्थः ॥ ६ ॥ तान्ब्राह्मण... गत्वा निबोध बुध्यस्व । अवासृजन् समार्पयन् ॥ ७ ॥ कृ... त्मा जितचित्तः ॥ ८ ॥ सुखादानं गार्हस्थ्यसुखभोगम् । ... वनादौ प्रतिष्ठितो निष्ठावान् सन्यः आत्मत्यागी देहत्... ॥ ९ ॥ परिपतन् भिक्षार्थं पर्यटन् ॥ १० ॥ आश्रमा... स्वर्गएवास्ति न कामः । गार्हस्थ्ये तूभयमस्तीति अयमेव ...

अयं पन्था महर्षीणामियं लोकविदां गतिः ।। १३
इति यः कुरुते भावं स त्यागी भरतर्षभ ।
नरः परित्यज्य गृहान्वनमेति विमूढवत् ।। १४
यदा कामान्समीक्षेत धर्मवैतंसिको नरः ।
अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् ।। १५
अभिमानकृतं कर्म नैतत्फलवदुच्यते ।
त्यागयुक्तं महाराज सर्वमेव महाफलम् ।। १६
शमो दमस्तथा धैर्यं सत्यं शौचमथार्जवम् ।
यज्ञो धृतिश्च धर्मश्च नित्यमार्षो विधिः स्मृतः ।। १७
पितृदेवातिथिकृते समारम्भोऽत्र शस्यते ।
अत्रैव हि महाराज त्रिवर्गः केवलं फलम् ।।१८
एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते ।
त्यागिनः प्रसृतस्येह नोच्छित्तिर्विद्यते क्वचित् ।। १९
असृजद्धि प्रजा राजन्प्रजापतिरकल्मषः ।
मां यक्ष्यन्तीति धर्मात्मा यज्ञैर्विविधदक्षिणैः ।।२०
वीरुधश्चैव वृक्षांश्च यज्ञार्थं वै तथौषधीः ।
पशूंश्चैव तथा मेध्यान्यज्ञार्थानि हवींषि च ।। २१
गृहस्थाश्रमिणस्तच्च यज्ञकर्माविरोधितम् ।
तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्लभं तथा ।। २२
तत्संप्राप्य गृहस्था ये पशुधान्यधनान्विताः ।
न यजन्ते महाराज शाश्वतं तेषु किल्बिषम् ।। २३
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथा परे ।
अथापरे महायज्ञान्मनसैव वितन्वते ।। २४
'इदमन्यन्महाराज विद्वद्भिः कथितं मम ।
भूमिरग्निश्च वायुश्च न चापो न दिवाकरः ।।२५
नक्षत्राणि न चन्द्रश्च न दिशः काल एव च ।
शब्दः स्पर्शश्च रूपं च न गन्धो न रसः क्वचित् ।।२६
न च सन्ति प्रमाणानि यैः प्रमेयं प्रसाध्यते ।
प्रत्यक्षमनुमानं च नोपमानमथागमः ।। २७
नार्थापत्तिर्न चैतिह्यं न दृष्टान्तो न संशयः ।
न क्वचिन्निर्णयो राजन्न धर्माधर्म एव च ।। २८
तिर्यक्च स्थावरं चैव न देवा न च मानुषाः ।
वर्णाश्रमविभागाश्च न च कर्ता न कामकृत् ।
न चार्थश्च विभूतिश्च न चार्थस्य विचेष्टितम् ।। २
तमोभूतमिदं सर्वमनालोकं जगन्नृप ।
न चात्मा विद्यमानोऽपि मनसा योगमिच्छति ।। ३
अचेतनं मनस्त्वासीदात्मा एव सचेतनः ।
ईश्वरश्चेतनस्त्वेकस्तेनेदं गहनीकृतम् ।
मन्त्राश्च चेतना राजन्न च देहेन योजिताः ।। ३
तेन विश्वसृजो नाम ऋषयो मन्त्रदेवताः ।
चैतन्यमीश्वरात्प्राप्य ब्रह्माण्डं तैर्विनिर्मितम् ।। ३
इष्ट्वा विश्वसृजं यज्ञं निर्मितः प्रपितामहः ।
सृष्टिस्तेन समारब्धा प्रसादादीश्वरस्य च ।। ३
चैतन्यमीश्वरस्येदं सचेतनमिदं जगत् ।
योगेन च समाविष्टं जगत्कृत्स्नं च शंभुना ।।३
धर्मश्चार्थश्च कामश्च उक्तो मोक्षश्च संक्षये ।
ब्रह्मणः परमेशस्य ईश्वरेण यदृच्छया ।। ३
अज्ञो जन्तुरनीशश्च भाजनं सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ।। ३
प्रधानं पुरुषं चैव आत्मानं सर्वदेहिनाम् ।
मनसा विषयैश्चैव चेतनेन प्रचोदिताः ।
सुखदुःखेन युज्यन्ते कर्मभिश्च प्रचोदिताः ।। ३
वर्णाश्रमविभागाश्च ईश्वरेण प्रवर्तिताः ।
सदेवासुरगन्धर्वं येनेदं निर्मितं जगत् ।। ३
त्वं चान्ये च महाराज ईश्वरस्य वशे स्थिताः ।
जीवन्ते च म्रियन्ते च न स्वतन्त्राः कथंचन ।। ३
हित्वाहित्वा च भूतानि हत्वा सर्वमिदं जगत् ।
यजन्ते कर्मणा देवा न स पापेन लिप्यते ।। ४
हिंसात्मकानि कर्माणि सर्वेषां गृहमेधिनाम् ।
देवतानामृषीणां च ते च यान्ति परां गतिम् ।। ४
पातिताः शत्रवः पूर्वं सर्वत्र वसुधाधिपैः ।
प्रजानां हितकामैश्च आत्मनश्च हितैषिभिः ।। ४
यदि तत्र भवेत्पापं कथं ते स्वर्गमास्थिताः ।
न प्राप्ता नरकं राजन्वेष्टिताः पापकर्मभिः ।।' ४

गतिश्चेत्यर्थः ।। १३ ।। धर्मवैतंसिको धर्मध्वजी ।। १५ ।। त्याग-युक्तं अभिमानत्यागोपेतम् ।। १६ ।। आर्षः ऋषीणां हितः ।। १७ ।। अत्र गार्हस्थ्ये ।। १८ ।। इह विधौ । प्रसृतस्य निष्ठ
वतः ।। १९ ।।

एवं मनःसमाधानं मार्गमातिष्ठतो नृप ।
द्विजातेर्ब्रह्मभूतस्य स्पृहयन्ति दिवौकसः ॥ ४४
स रत्नानि विचित्राणि संहृतानि ततस्ततः ।
मखेष्वनभिसन्त्यज्य नास्तिक्यमभिजल्पसि ॥ ४५
कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप ।
राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः ॥ ४६
ये चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः ।
तैर्यजस्व महीपाल शक्रो देवपतिर्यथा ॥ ४७
राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम् ।
अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥ ४८
अश्वान्गाश्चैव दासीश्च करेणूश्च स्वलंकृताः ।
ग्रामाञ्जनपदांश्चैव क्षेत्राणि च गृहाणि च ॥ ४९
अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः ।
वयं ते राजकलयो भविष्याम विशांपते ॥ ५०
अदातारोऽशरण्याश्च राजकिल्बिषभागिनः ।
दुःखानामेव भोक्तारो न सुखानां कदाचन ॥ ५१
अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम् ।
तीर्थेष्वनभिसंप्लुत्य प्रव्रजिष्यसि चेत्प्रभो ॥ ५
छिन्नाभ्रमिव गन्तासि विलयं मारुतेरितम् ।
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः ॥ ५
अन्तर्बहिश्च यत्किंचिन्मनोव्यासङ्गकारकम् ।
परित्यज्य भवेत्त्यागी न हित्वा प्रतितिष्ठति ॥ ५
एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते ।
ब्राह्मणस्य महाराज नोच्छित्तिर्विद्यते क्वचित् ॥ ५
निहत्य शत्रूंस्तरसा समृद्धा-
ञ्शक्रो यथा दैत्यबलानि सङ्ख्ये ।
कः पार्थ शोचेन्निरतः स्वधर्मे
पूर्वैः स्मृते पार्थिवशिष्टजुष्टे ॥
क्षात्रेण धर्मेण पराक्रमेण
जित्वा महीं मन्त्रविद्भ्यः प्रदाय ।
नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता
न शोचितव्यं भवताऽद्य पार्थ ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

युधिष्ठिरंप्रति सहदेववचनम् ॥ १ ॥

सहदेव उवाच ।
न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १
बाह्यद्रव्यविमुक्तस्य शारीरेष्वनुगृध्यतः ।
यो धर्मो यत्सुखं वा स्याद्द्विषतां तत्तथाऽस्तु नः ॥ २
शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः ।
यो धर्मो यत्सुखं वा स्यात्सुहृदां तत्तथाऽस्तु नः ॥ ३
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम् ॥ ४
ब्रह्ममृत्यू ततो राजन्नात्मन्येव समाश्रितौ ।
अदृश्यमानौ भूतानि योजयेतामसंशयम् ॥ ५
अविनाशोऽस्य सत्वस्य नियतो यदि भारत ।
हित्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥
अथापि च सहोत्पत्तिः सत्वस्य प्रलयस्तथा ।
नष्टे शरीरे नष्टः स्याद्वृथा च स्यात्क्रियापथः ॥
तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः ।
पन्था निषेवितः सद्भिः स निषेव्यो विजानता ॥
'स्वायंभुवेन मनुना तथाऽन्यैश्चक्रवर्तिभिः ।
यद्ययं ह्यधमः पन्थाः कस्मात्तैस्तैर्निषेवितः ॥
कृतत्रेतादियुक्तानि गुणवन्ति च भारत ।
युगानि बहुशस्तैश्च भुक्तेयमवनी नृप ॥' १
लब्ध्वाऽपि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम्

प्रमादो राज्याकरणम् । परिमुष्यतां लुप्यमानानाम् ॥ ४८ ॥ अन्तराले पिशाचयोनौ ॥ ५३ ॥ द्वादशोऽध्यायः ॥ १२ ॥
सुहृदां तत्तथास्तु न इति ङ. थ. पाठः ॥ २ ॥ ममेति स्वीकारः नममेति परित्यागश्च एतौ मृत्युशाश्वतौ संसारमोक्ष मूले इत्यर्थः ॥ ४ ॥ सत्वस्य कर्तृत्वधर्मवत्या बुद्धेः ॥ ६ ॥
त्रयोदशोऽध्यायः ॥ १३ ॥

न भुङ्क्ते यो नृपः सम्यक्किंफलं तस्य जीविते ॥ ११
अथवा वसतो राजन्वने वन्येन जीवतः ।
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्तते ॥ १२
बाह्यान्तराणां भूतानां स्वभावं पश्य भारत ।
ये तु पश्यन्ति तद्भूतं मुच्यन्ते ते महाभयात् ॥ १३
भवान्पिता भवान्माता भवान्भ्राता भवान्गुरुः
दुःखप्रलापानार्तस्य तन्मे त्वं क्षन्तुमर्हसि ॥ १
तथ्यं वा यदि वाऽतथ्यं यन्मयैतत्प्रभाषितम्
तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम ॥ १

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ॥ १४ ॥

युधिष्ठिरंप्रति द्रौपदीवचनम् ॥ १ ॥

वैशंपायन उवाच ।
अव्याहरति कौन्तेये धर्मराजे युधिष्ठिरे ।
भ्रातॄणां ब्रुवतां तांस्तान्विविधान्वेदनिश्चयान् ॥ १
महाभिजनसंपन्ना श्रीमत्यायतलोचना ।
अभ्यभाषत राजानं द्रौपदी योषितां वरा ॥ २
आसीनमृषभं राज्ञां भ्रातृभिः परिवारितम् ।
सिंहशार्दूलसदृशैर्वारणैरिव यूथपम् ॥ ३
अभिमानवती नित्यं विशेषेण युधिष्ठिरे ।
लालिता सततं राज्ञा धर्माधर्मनिदर्शिनी ॥ ४
आमन्त्रयित्वा सुश्रोणी साम्ना परमवल्गुना ।
भर्तारमभिसंप्रेक्ष्य ततो वचनमब्रवीत् ॥ ५
द्रौपद्युवाच ।
इमे ते भ्रातरः पार्थ शुष्यन्ते स्तोकका इव ।
वावाश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे ॥ ६
नन्दयैतान्महाराज मत्तानिव महाद्विपान् ।
उपपन्नेन वाक्येन सततं दुःखभागिनः ॥ ७
कथं द्वैतवने राजन्पूर्वमुक्त्वा तथा वचः ।
भ्रातॄनेतान्स्म सहिताञ्शीतवातातपार्दितान् ॥ ८
वयं दुर्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम् ।
संपूर्णां सर्वकामानामाहवे विजयैषिणः ॥ ९
नृवीरांश्च रथान्हत्वा निहत्य च महागजान् ।
संस्तीर्य च रथैर्भूमिं ससादिभिररिंदमाः ॥ १०
यजेम विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः ।
वनवासकृतं दुःखं भविष्यति सुखाय नः ॥ १
इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर ।
कथमद्य पुनर्वीर विनिहंसि मनांसि नः ॥ १
न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते ।
न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवासते ॥१
नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते
नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत ॥ १
'सदेवासुरगन्धर्वैरप्सरोभिर्विभूषितम् ।
रक्षोभिर्गुह्यकैर्नागैर्मनुष्यैश्च विभूषितम् ॥ १
त्रिवर्गेण च संपूर्णं त्रिवर्गस्यागमेन च ।
दण्डेनाभ्याहतं सर्वं जगद्भोगाय कल्पते ॥ १
स्वायंभुवं महीपाल आगमं शृणु शाश्वतम् ।
विप्राणां विदितश्चायं तव चैव विशांपते ॥ १
अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य लोकस्य राजानमसृजत्प्रभुः ।
महाकायं महावीर्यं पालने जगतः क्षमम् ॥ १
अनिलाग्नियमार्काणामिन्द्रस्य वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ १
यस्मादेषां सुरेन्द्राणां संभवत्यंशतो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ २
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥२
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमश्च धर्मराट् ।

स्तोककाश्चातका वावाश्यमानाः पुनःपुनः क्रन्दन्तः ॥ ६ ॥ उपपन्नेन युक्तियुक्तेन ॥ ७ ॥ सर्वकामानां सर्वैरर्थैः ॥ ९ ॥

क्लीबोऽधीरः । अविपाला इवासत इति. ट. ड. पाठः । वत्पाला इवासत इति थ. पाठः ॥ १३ ॥

स कुबेरः स वरुणः स महेन्द्रः प्रतापवान् ॥ २२
पितामहस्य देवस्य विष्णोः शर्वस्य चैव हि ।
ऋषीणां चैव सर्वेषां तस्मिंस्तेजः प्रतिष्ठितम् ॥ २३
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ २४
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥ २५
धृतराष्ट्रकुलं दग्धं क्रोधोद्भूतेन वह्निना ।
प्रत्यक्षमेतल्लोकस्य संशयो हि न विद्यते ॥ २६
कुलजो वृत्तसंपन्नो धार्मिकश्च महीपतिः ।
प्रजानां पालने युक्तः पूज्यते दैवतैरपि ॥ २७
कार्यं योऽवेक्ष्य शक्तिं च देशकालौ च तत्वतः ।
कुरुते धर्मसिद्ध्यर्थं वैश्वरूप्यं पुनःपुनः ॥ २८
तस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ २९
तं यस्तु द्वेष्टि संमोहात्स विनश्यति मानवः ।
तस्य ह्याशुविनाशाय राजाऽपि कुरुते मनः ॥ ३०
तस्माद्धर्मं यदिष्टेषु स व्यवस्यति पार्थिवः ।
अनिष्टं चाप्यनिष्टेषु तद्धर्मं न विचालयेत् ॥ ३१
तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥ ३२
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते धर्मान्न विचलन्ति च ॥ ३३
देशकालौ च शक्तिं च कार्यं चावेक्ष्य तत्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥ ३४
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
वर्णानामाश्रमाणां च धर्मप्रभुरथाव्ययः ॥ ३५
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ ३६
सुसमीक्ष्य धृतो दण्डः सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वशः ॥ ३७
यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।
जले मत्स्यानिवाभक्ष्यन्दुर्बलान्बलवत्तराः ॥ ३८
काकोऽद्याच्च पुरोडाशं श्वा चैवावलिहेद्धविः ।
स्वामित्वं न क्वचिच्च स्यात्प्रपद्येताधरोत्तरम् ॥ ३९
सर्वो दण्डजितो लोको दुर्लभस्तु शुचिर्नरः ।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ ४०
देवदानवगन्धर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनैवाभिपीडिताः ॥ ४१
दूष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः ।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ ४२
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ ४३
आहुस्तस्य प्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥ ४४
तं राजा प्रणयन्सम्यक्स्वर्गायाभिप्रवर्तते ।
कामात्मविषयी क्षुद्रो दण्डेनैव निहन्यते ॥ ४५
दण्डो हि सुमहातेजा दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥ ४६
ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम् ।
अन्तरिक्षगतांश्चैव मुनीन्देवांश्च हिंसति ॥ ४७
सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
अशक्यो न्यायतो नेतुं विषयांश्चैव सेवता ॥ ४८
शुचिना सत्यसन्धेन नीतिशास्त्रानुसारिणा ।
दण्डः प्रणेतुं शक्यो हि सुसहायेन धीमता ॥ ४९
स्वराष्ट्रे न्यायवर्ती स्याद्भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ५०
एवंवृत्तस्य राज्ञस्तु शिलोञ्छेनापि जीवतः ।
विस्तीर्येत यशो लोके तैलबिन्दुरिवाम्भसि ॥ ५१
अतस्तु विपरीतस्य नृपतेरकृतात्मनः ।
संक्षिप्येत यशो लोके घृतबिन्दुरिवाम्भसि ॥ ५२
देवदेवेन रुद्रेण ब्रह्मणा च महीपते ।
विष्णुना चैव देवेन शक्रेण च महात्मना ॥ ५३
लोकपालैश्च भूतैश्च पाण्डवैश्च महात्मभिः ।
धर्माद्विचलिता राजन्धार्तराष्ट्रा निपातिताः ।
अधार्मिका दुराचाराः ससैन्या विनिपातिताः ॥ ५४
तान्निहत्य न दोषस्ते स्वल्पोऽपि जगतीपते ।
छलेन मायया वाऽथ क्षत्रधर्मेण वा नृप ॥' ५५
मित्रता सर्वभूतेषु दानमध्ययनं तपः ।
ब्राह्मणस्यैव धर्मः स्यान्न राज्ञो राजसत्तम ॥ ५६

असतां प्रतिषेधश्च सतां च परिपालनम् ।
एष राज्ञां परो धर्मः समरे चापलायनम् ॥ ५७
यस्मिन्क्षमा च क्रोधश्च दानादाने भयाभये ।
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते ॥ ५८
न श्रुतेन न दानेन न सान्त्वेन न चेज्यया ।
त्वयेयं पृथिवी लब्धा न संकोचेन चाप्युत ॥ ५९
यत्तद्बलममित्राणां तथा वीरसमुद्यतम् ।
हस्त्यश्वरथसंपन्नं त्रिभिरङ्गैरनुत्तमम् ॥ ६०
रक्षितं द्रोणकर्णाभ्यामश्वत्थाम्ना कृपेण च ।
तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुंधराम् ॥ ६१
जम्बूद्वीपो महाराज नानाजनपदैर्युतः ।
त्वया पुरुषशार्दूल दण्डेन मृदितः प्रभो ॥ ६२
जम्बूद्वीपेन सदृशः क्रौञ्चद्वीपो नराधिप ।
अपरेण महामेरोर्दण्डेन मृदितस्त्वया ॥ ६३
क्रौञ्चद्वीपेन सदृशः शाकद्वीपो नराधिप ।
पूर्वेण तु महामेरोर्दण्डेन मृदितस्त्वया ॥ ६४
उत्तरेण महामेरोः शाकद्वीपेन संमितः ।
भद्राश्वः पुरुषव्याघ्र दण्डेन मृदितस्त्वया ॥ ६५
द्वीपाश्च सान्तरद्वीपा नानाजनपदाश्रयाः ।
विगाह्य सागरं वीर दण्डेन मृदितास्त्वया ॥ ६६
एतान्यप्रतिमेयानि कृत्वा कर्माणि भारत ।
न प्रीयसे महाराज पूज्यमानो द्विजातिभिः ॥ ६७
स त्वं भ्रातॄनिमान्दृष्ट्वा प्रतिनन्दस्व भारत ।
ऋषभानिव संमत्तान्गजेन्द्रान्गर्जितानिव ॥ ६८
अमरप्रतिमाः सर्वे शत्रुसाहाः परंतपाः ।
एकैकोऽपि सुखायैषां मम स्यादिति मे मतिः॥६९
किं पुनः पुरुषव्याघ्राः पतयो मे नरर्षभाः ।
समस्तानीन्द्रियाणीव शरीरस्य विचेष्टने ॥ ७०
अनृतं नाब्रवीच्छ्वश्रूः सर्वज्ञा सर्वदर्शिनी ।
युधिष्ठिरस्त्वां पाञ्चालि सुखे धास्यत्यनुत्तमे ॥ ७१
हत्वा राजसहस्राणि बहून्याशुपराक्रमः ।
तद्व्यर्थं संप्रपश्यामि मोहात्तव जनाधिप ॥ ७२
येषामुन्मत्तको ज्येष्ठः सर्वे तेऽप्यनुसारिणः ।
तवोन्मादान्महाराज सोन्मादाः सर्वपाण्डवाः॥७३
यदि हि स्युरनुन्मत्ता भ्रातरस्ते नराधिप ।
बद्ध्वा त्वां नास्तिकैः सार्धं प्रशासेयुर्वसुंधराम् ॥ ७४
कुरुते मूढ एवं हि यः श्रेयो नाधिगच्छति ।
धूपैरञ्जनयोगैश्च नस्यकर्मभिरेव च ॥ ७५
'उन्मत्तिरपनेतव्या तव राजन्यदृच्छया ।'
भेषजैः स चिकित्स्यः स्याद्य उन्मार्गेण गच्छति॥७६
साहं सर्वाधमा लोके स्त्रीणां भरतसत्तम ।
तथा विनिकृता पुत्रैर्याऽहमिच्छामि जीवितुम्॥७७
धृतराष्ट्रसुता राजन्नित्यमुत्पथगामिनः ।
तादृशानां वधे दोषं नाहं पश्यामि कर्हिचित् ॥ ७८
इमांश्चोशनसा गीताञ्श्लोकाञ्शृणु नराधिप ॥ ७९
आत्महन्ताऽर्थहन्ता च बन्धुहन्ता विषप्रदः ।
अकारणेन हन्ता च यश्च भार्यां परामृशेत् ॥ ८०
निर्दोषं वधमेतेषां षण्णामप्याततायिनाम् ।
ब्रह्मा प्रोवाच भगवान्भार्गवाय महात्मने ॥ ८१
ब्रह्मक्षत्रविशां राजन्सत्पथे वर्तिनामपि ।
प्रसह्यागारमागम्य हन्तारं गरदं तथा ॥ ८२
अभक्ष्यापेयदातारमग्निदं च निशातयेत् ।
मार्ग एष महीपानां गोब्राह्मणवधेषु च ॥ ८३
केशग्रहे च नारीणामपि युध्येत्पितामहम् ।
ब्रह्माणं देवदेवेशं किं पुनः पापकारिणम् ॥ ८४

गोब्राह्मणार्थे व्यसने च राज्ञां
राष्ट्रोपमर्दे स्वशरीरहेतोः ।
स्त्रीणां च विक्रुष्टरुतानि श्रुत्वा
विप्रोऽपि युध्येत महाप्रभावः ॥ ८५

धर्माद्विचलितं विप्रं निहन्यादाततायिनम् ।
तस्यान्यत्र वधं विद्वान्मनसाऽपि न चिन्तयेत्॥८६
गोब्राह्मणवधे वृत्तं मत्त्राणार्थमेव च ।
निहन्यात्क्षत्रियो विप्रं स्वकुटुम्बस्य चाप्तये ॥ ८७
तस्करेण नृशंसेन धर्मात्प्रचलितेन च ।

प्रतिषेधो दण्डो राज्यान्निर्वासनं वा ॥ ५७ ॥ दानं आदानं च ते ॥ ५८ ॥ संकोचेन याञ्चया ॥ ५९ ॥ अपरेण पश्चिमतः ॥ ६३ ॥ क्रौञ्चद्वीपादिवशीकरणं सिद्धद्वारा राजसूये ॥ ६४ ॥

सर्वे तेऽप्यवमानिता इति ट. ड. द. पाठः ॥ ७३ ॥ नस्यकर्म नासाद्वारा भेषजग्रहणम् ॥ ७५ ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

क्षत्रबन्धुः परं शक्त्या युध्येद्विप्रेण संयुगे ॥ ८८
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत् ॥८९
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाऽप्यन्त्यजोपि वा ।
न हन्याद्ब्राह्मणं शान्तं तृणेनापि कदाचन ॥ ९०
ब्राह्मणायावगुर्याद्यः स्पृष्ट्वा गुरुतरं महत् ।
वर्षाणां त्रिशतं पापः प्रतिष्ठां नाधिगच्छति ॥ ९१
सहस्राणि च वर्षाणि निहत्य नरके पतेत् ।
तस्मान्नैवावगुर्याद्धि नैव शस्त्रं निपातयेत् ॥ ९२
शोणितं यावतः पांसून्गृह्णातीति हि धारणा ।
तावतीः स समाः पापो नरके परिवर्तते ॥ ९३
त्वगस्थिभेदं विप्रस्य यः कुर्यात्कारयेत वा ।
ब्रह्महा स तु विज्ञेयः प्रायश्चित्ती नराधमः ॥ ९४
श्रोत्रियं ब्राह्मणं हत्वा तथाऽऽत्रेयीं च ब्राह्मणीम् ।
चतुर्विंशतिवर्षाणि चरेद्ब्रह्महणो व्रतम् ॥ ९५
द्विगुणा ब्रह्महत्येयं सर्वैः प्रोक्ता महर्षिभिः ।
प्रायश्चित्तमकुर्वाणं कृताङ्कं विप्रवासयेत् ॥ ९६
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं वा घातयेन्नृपः ।
ब्रह्मघ्नं तस्करं चैव माभूदेवं चरिष्यति ॥ ९७
छित्त्वा हस्तौ च पादौ च नासिकोष्ठौ च भूपतिः ।
ब्रह्मघ्नं चोत्तमं पापं नेत्रोद्धारेण योजयेत् ॥ ९८
शूद्रस्यैष स्मृतो दण्डस्तद्वद्राजन्यवैश्ययोः ।
प्रायश्चित्तमकुर्वाणं ब्राह्मणं तु प्रवासयेत् ॥ ९९
क्षत्रियं वैश्यशूद्रौ च शस्त्रेणैव च घातयेत् ।
ब्रह्मघ्नान्ब्राह्मणात्राजा कृताङ्कान्विप्रवासयेत् ॥ १००
विकलेन्द्रियांस्त्रिवर्णांश्च चण्डालैः सह वासयेत् ।
तैश्च यः संपिबेत्कश्चित्स पिबन्ब्रह्महा भवेत् ॥ १०१
प्रेतानां न च देयानि पिण्डदानानि केनचित् १०२
कृष्णवर्णा विरूपा च निर्णीता लम्बमूर्धजा ।
दुनोत्यदृष्ट्वा कर्तारं ब्रह्महत्येति तां विदुः ॥१०३
ब्रह्मघ्नेन पिबन्तश्च विप्रा देशाः पुराणि च ।
अचिरादेव पीड्यन्ते दुर्भिक्षव्याधितस्करैः ॥ १०४
ब्राह्मणं पापकर्माणं विप्राणामाततायिनम् ।
क्षत्रियं वैश्यशूद्रौ च नेत्रोद्धारेण योजयेत् ॥ १०५
दुर्बलानां बलं राजा बलिनो ये च साधवः ।
बलिनां दुर्बलानां च पापानां मृत्युरिष्यते ॥ १०६
सदोषमपि यो हन्यादश्राव्य जगतीपते ।
दुर्बलं बलवन्तं वा स पराजयमर्हति ॥ १०७
राजाज्ञां प्राड्विवाकं च नेच्छेद्यश्चापि निष्पतेत् ।
साक्षिणं साधुवाक्यं च जितं तमपि निर्दिशेत् १०८
बन्धनान्निष्पतेद्यश्च प्रतिभूर्न ददाति च ।
कुलजश्च धनाढ्यश्च स पराजयमर्हति ॥ १०९
राजाज्ञया समाहूतो यो न गच्छेत्सभां नरः ।
बलवन्तमुपाश्रित्य सायुधः स पराजितः ॥ ११०
तं दण्डेन विनिर्जित्य महासाहसिकं नरम् ।
वियुक्तदेहसर्वस्वं परलोकं विसर्जयेत् ॥ १११
मृतस्यापि न देयानि पिण्डदानानि केनचित् ।
दत्त्वा दण्डं प्रयच्छेत मध्यमं पूर्वसाहसम् ॥ ११२
कुलस्त्रीव्यभिचारं च राष्ट्रस्य च विमर्दनम् ।
ब्रह्महत्यां च चौर्यं च राजद्रोहं च पञ्चमम् ॥ ११३
युद्धादन्यत्र हिंसायां सुरापस्य च कीर्तने ।
महान्तं गुरुतल्पे च मित्रद्रोहे च पातकम् ॥ ११४
न कथंचिदुपेक्षेत महासाहसिकं नरम् ।
सर्वस्वमपहृत्याशु ततः प्राणैर्वियोजयेत् ॥ ११५
त्रिषु वर्णेषु यो दण्डः प्रणीतो ब्रह्मणा पुरा ।
महासाहसिकं विप्रं कृताङ्कं विप्रवासयेत् ॥ ११६
साहसो वा भवेद्दण्डः काञ्चनो देहनिष्क्रिया ।
चतुर्णामपि वर्णानामेवमाहोशना कविः ॥ ११७
नारीणां बालवृद्धानां गोपतेश्च महामतिः ।
पापानां दुर्विनीतानां प्राणान्तं च बृहस्पतिः ।
दण्डमाह महाभाग सर्वेषामाततायिनाम् ॥ ११८
सर्वेषां पापबुद्धीनां पापकर्मैव कुर्वताम् ।
धृतराष्ट्रस्य पुत्राणां दण्डो निर्दोष इष्यते ।
सौबलस्य च दुर्बुद्धेः कर्णस्य च दुरात्मनः ॥ ११९
पश्यतां चैव शूराणां याऽहं द्यूते सभां तदा ।
रजस्वला समानीता भवतां पश्यतां नृप ।
वाससैकेन संवीता तव दोषेण भूपते ॥ १२०
माभूद्धर्मविलोपस्ते धृतराष्ट्रकुलक्षयात् ।
क्रोधाग्निना तु दग्धं च सपशुद्रव्यसंचयम् ॥ १२१

साऽहमेवंविधं दुःखं संप्राप्ता तव हेतुना ।
आदित्यस्य प्रसादेन न च प्राणैर्वियोजिता ॥ १२२
रक्षिता देवदेवेन जगतः कालहेतुना ।
दिवाकरेण देवेन विवस्त्रा न कृता तदा ॥' १२३
एतेषां यतमानानां न मेऽद्य वचनं मृषा ।
त्वं तु सर्वां महीं त्यक्त्वा कुरुषे स्वयमापदम् ॥१२४
यथाऽऽस्तां संमतौ राज्ञां पृथिव्यां राजसत्तम ।
मांधाता चाम्बरीषश्च तथा राजन्विराजसे ॥१२५
प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालयन् ।
सपर्वतवनद्वीपां मा राजन्विमना भव ॥ १२६
यजस्व विविधैर्यज्ञैर्युध्यस्वारीन्प्रयच्छ च ।
धनानि भोगान्वासांसि द्विजातिभ्यो नृपोत्तम१२७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ॥ १५ ॥

युधिष्ठिरंप्रत्यर्जुनवाक्यम् ॥ १ ॥

वैशंपायन उवाच ।
याज्ञसेन्या वचः श्रुत्वा पुनरेवार्जुनोऽब्रवीत् ।
अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमीश्वरम् ॥ १
अर्जुन उवाच ।
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ २
दण्डः संरक्षते धर्मं तथैवार्थं जनाधिप ।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥ ३
दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते ।
एतद्विद्वानुपादाय स्वभावं पश्य लौकिकम् ॥ ४
राजदण्डभयादेके नराः पापं न कुर्वते ।
यमदण्डभयादेके परलोकभयादपि ॥ ५
परस्परभयादेके पापाः पापं न कुर्वते ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ ६
दण्डस्यैव भयादेके न खादन्ति परस्परम् ।
अन्धेतमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥ ७
यस्माददान्तान्दमयत्यशिष्टान्दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ ८
वाचि दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
धनदण्डाः स्मृता वैश्या निर्दण्डः शूद्र उच्यते ॥९
असंमोहाय मर्त्यानामर्थसंरक्षणाय च ।
मर्यादा स्थापिता लोके दण्डसंज्ञा विशांपते ॥१०
यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ ११
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥१२
नाभीतो यजते राजन्नाभीतो दातुमिच्छति ।
नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥ १३
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥१४
नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः ।
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
'माहेन्द्रं च गृहं लेभे लोकानां चेश्वरोऽभवत् ॥'१५
य एव देवा हन्तारस्ताँल्लोकोऽर्चयते भृशम् ।
हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ॥ १६
हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः ।
वसवो मरुतः साध्या विश्वेदेवाश्च भारत ॥ १७
एतान्देवान्नमस्यन्ति प्रतापप्रणता जनाः ।
न ब्रह्माणं न धातारं न पूषाणं कथंचन ॥ १८
मध्यस्थान्सर्वभूतेषु दान्ताञ्शमपरायणान् ।
यजन्ते मानवाः केचित्प्रशान्तान्सर्वकर्मसु ॥ १९
न हि पश्यामि जीवन्तं लोके कंचिदहिंसया ।

---

सांसिद्धिके पशुवत् दण्डार्हस्वभावे ॥ ६ ॥ दमयति ताडनादिना । दण्डयति वित्तमपहरति ॥ ८ ॥ भुज्यत इति भुजं भक्त तन्मात्रार्पणं वेतनप्रदानमित्यर्थः ॥ ९ ॥ श्यामः दृढाभिघातेन दण्ड्यस्यान्ध्यजनकत्वात् । लोहिताक्षो दण्डयितुः क्रोधातिशयात् । सूद्यतः सुतरामुद्यतः । साधु यथापराधम् ॥ ११ ॥

कार्यं तत्र न शोको वै भुङ्क्ष्व भोगान्यजस्व च ॥४६
सुखेन धर्मं श्रीमन्तश्चरन्ति शुचिवाससः ।
संवसन्तः प्रियैर्दारैर्भुञ्जानाश्चान्नमुत्तमम् ॥ ४७
अर्थे सर्वे समारम्भाः समायत्ता न संशयः ।
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ॥४८
लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् ।
अहिंसाऽसाधुहिंसेति श्रेयान्धर्मपरिग्रहः ॥ ४९
नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणम् ।
उभयं सर्वकार्येषु दृश्यते साध्वसाधु च ॥ ५०
पशूनां वृषणं छित्त्वा ततो भिन्दन्ति नस्तु तान् ।
वहन्ति बहवो भारान्बध्नन्ति दमयन्ति च ॥ ५१
एवं पर्याकुले लोके वितथैर्जर्जरीकृते ।
तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचर ॥ ५२
यज देहि प्रजा रक्ष धर्मं समनुपालय ।
अमित्राञ्जहि कौन्तेय मित्राणि परिपालय ॥ ५३
मा च ते निघ्नतः शत्रून्मन्युर्भवतु पार्थिव ।
न तत्र किल्बिषं किंचिद्धन्तुर्भवति भारत ॥ ५४
आततायी हि यो हन्यादाततायिनमागतम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमार्च्छति ॥५५
अवध्यः सर्वभूतानामन्तरात्मा न संशयः ।
अवध्ये चात्मनि कथं वध्यो भवति कस्यचित् ॥५६
यथा हि पुरुषः शालां पुनः संप्रविशेन्नवाम् ।
एवं जीवः शरीराणि तानितानि प्रपद्यते ॥ ५७
देहान्पुराणानुत्सृज्य नवान्संप्रतिपद्यते ।
एवं मृत्युमुखं प्राहुर्जना ये तत्त्वदर्शिनः ॥ ५८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

युधिष्ठिरंप्रति भीमवचनम् ॥ १ ॥

वैशंपायन उवाच ।
अर्जुनस्य वचः श्रुत्वा भीमसेनोऽत्यमर्षणः ।
धैर्यमास्थाय तं ज्येष्ठं भ्राता भ्रातरमब्रवीत् ॥ १
राजन्विदितधर्मोऽसि न तेऽस्त्यविदितं भुवि ।
उपशिक्षाम ते वृत्तं सदैव न च शक्नुमः ॥ २
न वक्ष्यामि न वक्ष्यामीत्येवं मे मनसि स्थितम् ।
अतिदुःखात्तु वक्ष्यामि तन्निबोध जनाधिप ॥ ३
भवतः संप्रमोहेन सर्वं संशयितं कृतम् ।
विक्लवत्वं च नः प्राप्तमबलत्वं तथैव च ॥ ४
कथं हि राजा लोकस्य सर्वशास्त्रविशारदः ।
मोहमापद्यसे दैन्याद्यथा कापुरुषस्तथा ॥ ५
आगतिश्च गतिश्चैव लोकस्य विदिता तव ।
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ॥६
एवं गते महाराज राज्यं प्रति जनाधिप ।
हेतुमात्रं तु वक्ष्यामि तमिहैकमनाः शृणु ॥ ७
द्विविधो जायते व्याधिः शारीरो मानसस्तथा ।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपलभ्यते ॥ ८
शारीराज्जायते व्याधिर्मानसो नात्र संशयः ।
मानसाज्जायते व्याधिः शारीर इति निश्चयः ॥ ९
शारीरमानसे दुःखे योऽतीते त्वनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ च विन्दति ॥ १०

राज्ये विहिते यज्ञधर्मेण । कार्यं तत्र न कार्यं च इति ङ. थ. पाठः ॥ ४६ ॥ संवर्धन्तः फलैर्दानैरिति झ. पाठः ॥ ४७ ॥ नस्तु नासिकासु । भिन्दन्ति मस्तकमिति पाठे मस्तकं भिन्दन्ति शृङ्गवृद्धिर्माभूदितीत्यर्थः ॥ ५१ ॥ जर्जरीकृते दण्डेन । तदभावे भारवहनादिकार्यं न स्यादतः पुराणमेव धर्ममाचर । नन्वत्र प्रवाहयानं हिंसादिदोषमवेक्षस्वेति भावः ॥ ५२ ॥ मन्युर्दैन्यम् ॥ ५४ ॥ आततायी शस्त्रपाणिः । मन्युः क्रोधः । मन्युं क्रोधमार्च्छति । आ सर्वत ऋच्छति प्राप्नोति । मन्युः कर्ता नाह कर्तेति श्रुतेस्तत्र न भ्रूणहा भवतीत्यर्थः ॥ ५५ ॥ पञ्चदशोऽध्यायः ॥ १५ ॥

नच शक्नुमः । कर्तुमिति शेषः ॥ २ ॥ अगतिश्च गतिश्चैवेति झ. पाठः । तत्र आयत्यामुत्तरकाले । तदात्वे वर्तमानकाले अगतिर्दुर्मार्गः । गतिः सन्मार्ग इत्यर्थः ॥ ६ ॥ निर्द्वन्द्वं शरीरं विना व्याधिर्नास्ति मनोविना आधिर्नास्तीत्यर्थः ॥ ८ ॥

शीतोष्णे चैव वायुश्च त्रयः शारीरजा गुणाः ।
तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणम् ॥ ११
तेषामन्यतमोद्रेके विधानमुपदिश्यते ।
उष्णेन बाध्यते शीतं शीतेनोष्णं प्रबाध्यते ।
'उभाभ्यां बाध्यते वायुर्विधानमिदमुच्यते॥' १२
सत्त्वं रजस्तम इति मानसाः स्युस्त्रयो गुणाः ।
तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणम्॥१३
तेषामन्यतमोद्रेके विधानमुपदिश्यते ।
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते ।
'उभाभ्यां बाध्यते मोहो विधानमिदमुच्यते ॥'१४
कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ।
कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति ॥ १५
स त्वं न दुःखी दुःखस्य न सुखी च सुखस्य च ।
नादुःखी दुःखभागस्य नासुखी च सुखस्य च ।
स्मर्तुमर्हसि कौरव्य दिष्टं हि बलवत्तरम् ॥ १६
अथवा ते स्वभावोऽयं येन पार्थिव तुष्यसे ।
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम् ।
मिषतां पाण्डुपुत्राणां न तस्य स्मर्तुमर्हसि ॥ १७
प्रव्राजनं च नगरादजिनैश्च विवासनम् ।
महारण्यनिवासश्च न तस्य स्मर्तुमर्हसि ॥ १८
जटासुरात्परिक्लेशं चित्रसेनेन चाहवम् ।
सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि ॥ १९
पुनरज्ञातचर्यायां कीचकेन पदा वधम् ।
द्रौपद्या राजपुत्र्याश्च कथं विस्मृतवानसि ॥ २०
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिंदम ।
मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ २१
यत्र नास्ति शरैः कार्यं न मित्रैर्न च बन्धुभिः ।
आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ २२
तस्मिन्ननिर्जिते युद्धे प्राणान्यदि विमोक्ष्यसे ।
अन्यं देहं समास्थाय ततस्तैरिह योत्स्यसे ॥ २३
'यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं तदल्पकम् ।
बहुपथ्यं बलवतो न किंचित्त्रायते बलम् ॥' २४
तस्मादद्यैव गन्तव्यं युध्यस्व भरतर्षभ ।
परमव्यक्तरूपस्य व्यक्तं त्यक्त्वा स्वकर्मभिः ॥२५
तस्मिन्ननिर्जिते युद्धे कामवस्थां गमिष्यसि ।
एतज्जित्वा महाराज कृतकृत्यो भविष्यसि ॥२६
एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम् ।
पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम् ॥२७
दिष्ट्या दुर्योधनः पापो निहतः सानुगो युधि ।
द्रौपद्याः केशपक्षस्य दिष्ट्या ते पदवीं गताः ॥ २८
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
वयं ते किंकराः पार्थ वासुदेवश्च वीर्यवान् ॥ २९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

भीमंप्रति युधिष्ठिरवचनम् ॥ १ ॥

युधिष्ठिर उवाच ।
असंतोषः प्रमादश्च मदो रागोऽप्रशान्तता ।
बलं मोहोऽभिमानश्चाप्युद्वेगश्चैव सर्वशः ॥ १
एभिः पाप्मभिराविष्टो राज्यं त्वमभिकाङ्क्षसे ।
निरामिषो विनिर्मुक्तः प्रशान्तः सुसुखी भव ॥ २
य इमामखिलां भूमिं शिष्यादेको महीपतिः ।
तस्याप्युदरमेकं वै किमिदं त्वं प्रशंससि ॥ ३
नाह्ना पूरयितुं शक्यां न मासैर्भरतर्षभ ।

शीतोष्णे कफपित्ते । वायुर्वातः ॥ ११ ॥ विधानं चिकित्सा । उष्णेन द्रव्येण ॥ १२ ॥ न दुःखी सुखजातस्य न सुखी दुःखजस्य वा इति झ. पाठः ॥ १६ ॥ येन पार्थिव क्लिश्यसे इति झ. पाठः ॥ १७ ॥ न तस्य स्मर्तुमर्हसीत्यत्र कथमिति वक्ष्यमाणं पदमपकृष्य योजना ॥ १८ ॥ यत्र नाभिसरैरिति द. पाठः । तत्र न अभिसरैरिति छेदः ॥ २२ ॥ तस्मिन्मनसि ॥ २३ ॥ युध्यस्व । मनोजयार्थं सन्नद्धो भवेत्यर्थः ॥ २५ ॥ तस्मिन्मनसि कामवस्थाम् । अवाच्यामित्यर्थः । एतन्मनः ॥ २६ ॥ दिष्ट्या त्वं पदवीं गत इति झ. पाठः ॥ २८ ॥ षोडशोऽध्यायः ॥ १६ ॥

सत्वैः सत्वा हि जीवन्ति दुर्बलैर्बलवत्तराः ॥ २०
नकुलो मूषिकानत्ति बिडालो नकुलं तथा ।
बिडालमत्ति श्वा राजञ्श्वानं व्यालमृगस्तथा ॥२१
तानत्ति पुरुषः सर्वान्पश्य धर्मो यथा गतः ।
प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् ॥ २२
विधानं दैवविहितं तत्र विद्वान्न मुह्यति ।
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥२३
विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः ।
विना वधं न कुर्वन्ति तापसाः प्राणयापनम् ॥२४
उदके बहवः प्राणाः पृथिव्यां च फलेषु च ।
न च कश्चिन्न तान्हन्ति किमन्यत्प्राणयापनम् ॥२५
सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः ॥ २६
ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः ।
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः ॥ २७
भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान्पशून् ।
मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च ॥ २८
दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥२९
दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः ।
जले मत्स्यानिवाभक्ष्यन्दुर्बलान्बलवत्तराः ॥ ३०

सत्यं ब्रूतेदं ब्रह्मणा पूर्वमुक्तं
दण्डः प्रजा रक्षति साधुनीतः ।
पश्याग्नयः पूतिमांसस्य भीताः
सन्तर्जिता दण्डभयाज्ज्वलन्ति ॥ ३१

अन्धंतम इवेदं स्यान्न प्रज्ञायेत किंचन ।
दण्डश्चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ ३२
येऽपि संभिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीडिताः ३३
सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्जनः ।
दण्डस्य हि भयाद्भीतो भोगायैव प्रकल्पते ॥ ३४
चातुर्वर्ण्यप्रमोदाय सुनीतिकरणाय च ।
दण्डो विधात्रा विहितो धर्मार्थौ भुवि रक्षितुम् ॥३५
यदि दण्डान्न बिभ्येयुर्वयांसि श्वापदानि च ।
अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च ॥ ३६
न ब्रह्मचार्यधीयीत न कल्यं दुहते च गौः ।
न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् ॥ ३७
विष्वग्लोपः प्रवर्तेत भिद्येरन्सर्वसेतवः ।
ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥३८
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥३९
चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात्कश्चिद्यदि दण्डो न पालयेत् ॥४०
न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः ।
युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ॥४१
न प्रेष्या वचनं कुर्युर्न बालो जातु कर्हिचित् ।
तिष्ठेत्पितुर्मते धर्मे यदि दण्डो न पालयेत् ॥ ४२
दण्डे स्थिताः प्रजाः सर्वा भयं दण्डे विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं च प्रतिष्ठितः ॥४३
न तत्र कूटं पापं वा वञ्चना वाऽपि दृश्यते ।
यत्र दण्डः सुविहितश्चरत्यरिविनाशनः ॥ ४४
हविः श्वा प्रलिहेद्दृष्ट्वा दण्डश्चेन्नोद्यतो भवेत् ।
हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत् ॥४५
यदीदं धर्मतो राज्यं विहितं यद्यधर्मतः ।

---

सत्वैः सत्वानीति ट. ड. थ. पाठः ॥ २० ॥ व्यालमृगश्चित्रव्याघ्रः ॥ २१ ॥ पश्य कालो यथा गत इति झ. पाठः । पश्य धर्मं यथागतमिति ड. त. पाठः ॥ २२ ॥ यथासृष्टः शौर्यं तेजो धृतिर्दाक्ष्यमित्याद्युक्तस्वभावः क्षत्रियः सृष्टोऽसि धात्रा ॥ २३ ॥ विनीतावपनीतौ क्रोधहर्षौ यैस्ते । मन्दाः अक्रियाः । वधं कन्दमूलादिवधम् ॥ २४ ॥ स्कन्धपर्ययो देहस्य नाशः ॥ २६ ॥ दण्डयुक्ता नीतिर्दण्डनीतिस्तस्यां प्रणीतायां प्रवर्तितायाम् ॥ २९ ॥ अभक्ष्यन् भक्षयेयुः ॥ ३० ॥ पश्याग्नयश्च प्रतिशाम्येति झ. पाठः । संतर्जिताः फूत्कारेण ॥ ३१ ॥ भोगाय पालनाय । मर्यादाया इति शेषः ॥ ३३ ॥ हन्युः पशूनिति ट. ड. पाठः ॥ ३६ ॥ न कल्याणीं दुहेत गामिति झ. पाठः । तत्र कल्याणीमपत्यवतीं न दुहेत लोक इत्यर्थः । उद्वहन न गच्छेत् किंतु व्यभिचरेदेव ॥ ३७ ॥ विश्वलोप इति ट. थ. पाठः । सेतवो मर्यादाः । ममत्वं परिच्छिन्नं न जानीयुः । सर्वः सर्वत्र ममत्वं कुर्यादित्यर्थः ॥ ३८ ॥ तिष्ठेयुरनुतिष्ठेयुः ॥३९॥ न तिष्ठेद्युवतीधर्मे इति झ. पाठः ॥४२॥ यदि दण्डवतो

अपूर्यां पूरयन्निच्छामायुषाऽपि न शक्नुयात् ॥ ४
यथेद्धः प्रज्वलत्यग्निरसमिद्धः प्रशाम्यति ।
अल्पाहारतयाग्निं त्वं शमयौदर्यमुत्थितम् ॥ ५
आत्मोदरकृतेऽप्राज्ञः करोति विशसं बहु ।
जयोदरं पृथिव्या ते श्रेयो निर्जितया जितम् ॥६
मानुषान्कामभोगांस्त्वमैश्वर्यं च प्रशंससि ।
अभोगिनोऽबलाश्चैव यान्ति स्थानमनुत्तमम् ॥ ७
योगः क्षेमश्च राष्ट्रस्य धर्माधर्मौ त्वयि स्थितौ ।
मुच्यस्व महतो भारात्त्यागमेवाभिसंश्रय ॥ ८
एकोदरकृते व्याघ्रः करोति विशसं बहु ।
तमन्येऽप्युपजीवन्ति मन्दवेगतरा मृगाः ॥ ९
विषयान्प्रतिसंगृह्य संन्यासे कुरुते मतिम् ।
न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा १०
पत्राहारैरश्मकुट्टैर्दन्तोलूखलिकैस्तथा ।
अब्भक्षैर्वायुभक्षैश्च तैरयं नरको जितः ॥ ११
यस्त्विमां वसुधां कृत्स्नां प्रशासेदखिलां नृपः ।
तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ॥१२
संकल्पेषु निरारम्भो निराशीर्निर्ममो भव ।
अशोकं स्थानमातिष्ठ इह चामुत्र चाव्ययम् ॥१३
निरामिषा न शोचन्ति शोचन्ति त्वामिषैषिणः ।
परित्यज्यामिषं सर्वं मृषावादात्प्रमोक्ष्यसे ॥ १४
पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ ।
ईजानाः पितृयानेन देवयानेन मोक्षिणः ॥ १५
तपसा ब्रह्मचर्येण स्वाध्यायेन महर्षयः ।
विमुच्य देहांस्ते यान्ति मृत्योरविषयं गताः ॥ १६
आमिषं बन्धनं लोके कर्मेहोक्तं तथाऽऽमिषम् ।
ताभ्यां विमुक्तः पापाभ्यां पदमाप्नोति तत्परम् १७
अपि गाथां पुरा गीतां जनकेन वदन्त्युत ।
निर्द्वन्द्वेन विमुक्तेन मोक्षं समनुपश्यता ॥ १८
अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे किंचित्प्रदह्यते ॥ १९
प्रज्ञाप्रासादमारुह्य न शोचेच्छोचतो जनान् ।
जगतीस्थोऽथवाऽद्रिस्थो मन्दबुद्धिर्नचेक्षते ॥ २०
दृश्यं पश्यति यः पश्यन्स चक्षुष्मान्स बुद्धिमान् ।
अज्ञातानां च विज्ञानात्संबोधाद्बुद्धिरुच्यते ॥ २१
यस्तु मानं विजानाति बहुमानमियात्स वै ।
ब्रह्मभावप्रभूतानां वैद्यानां भावितात्मनाम् ॥ २२
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ २३
ते जनास्तां गतिं यान्ति नाविद्वांसोऽल्पचेतसः ।
नाबुद्धयो नातपसः सर्वं बुद्धौ प्रतिष्ठितम् ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ॥ १८ ॥

अर्जुनेन युधिष्ठिरंप्रति जनकतद्भार्यासंवादकथनपूर्वकं कर्तव्योपदेशः ॥ १ ॥

वैशंपायन उवाच ।
तूष्णींभूतं तु राजानं पुनरेवार्जुनोऽब्रवीत् ।
संतप्तः शोकदुःखाभ्यां राजवाक्शल्यपीडितः ॥१
अर्जुन उवाच ।
कथयन्ति पुरावृत्तमितिहासमिमं जनाः ।
विदेहराज्ञः संवादं भार्यया सह भारत ॥ २
उत्सृज्य राज्यं भिक्षार्थं कृतबुद्धिं नरेश्वरम् ।
विदेहराजमहिषी दुःखिता प्रत्यभाषत ॥ ३
धनान्यपत्यं मित्राणि रत्नानि विविधानि च ।
पन्थानं पावनं हित्वा जनको मौढ्यमास्थितः ॥ ४
तं ददर्श प्रिया भार्या भैक्षवृत्तिमकिंचनम् ।
धानामुष्टिमुपासीनं निरीहं गतमत्सरम् ॥ ५

इद्धः प्रदीप्तः ॥ ५ ॥ विशसं विशसनम् ॥ ६ ॥ अबलास्तपःकृशाः ॥ ७ ॥ अलब्धलाभो योगः । लब्धसंरक्षणं क्षेमः ॥ ८ ॥ दृश्यं द्रष्टुं योग्यं कर्तव्यमकर्तव्यं च ॥ २१ ॥ यस्तु मानं विजानातीति झ॰ पाठः ॥ २२ ॥ ते बुद्धिमन्तः ॥ २४ ॥ सप्तदशोऽध्यायः ॥ १७ ॥

धाना भृष्टयवाः । निरीहं वितृष्णम् ॥ ५ ॥

तमुवाच समागत्य भर्तारमकुतोभयम्।
क्रुद्धा मनस्विनी भार्या विविक्ते हेतुमद्वचः॥ ६
कथमुत्सृज्य राज्यं स्वं धनधान्यसमन्वितम्।
कापालीं वृत्तिमास्थाय धान्यमुष्टिमुपाससे॥ ७
प्रतिज्ञा तेऽन्यथा राजन्विचेष्टा चान्यथा तव।
यद्राज्यं महदुत्सृज्य स्वल्पे लुभ्यसि पार्थिव॥८
नैतेनातिथयो राजन्देवर्षिपितरस्तथा।
अद्य शक्यास्त्वया भर्तुं मोघस्तेऽयं परिश्रमः॥९
देवतातिथिभिश्चैव पितृभिश्चैव पार्थिव।
सर्वैरेतैः परित्यक्तः परिव्रजसि निष्क्रियः॥ १०
यस्त्वं त्रैविद्यवृद्धानां ब्राह्मणानां सहस्रशः।
भर्ता भूत्वा च लोकस्य सोऽद्यान्यैर्भूतिमिच्छसि ११
श्रियं हित्वा प्रदीप्तां त्वं श्ववत्संप्रति वीक्ष्यसे।
अपुत्रा जननी तेऽद्य कौसल्या चापतिस्त्वया॥१२
आश्रिता धर्मकामास्त्वां क्षत्रियाः पर्युपासते।
त्वदाशामभिकाङ्क्षन्तः कृपणाः फलहेतुकाः॥ १३
तांश्च त्वं विफलान्कृत्वा कं नु लोकं गमिष्यसि।
राजन्संशयिते मोक्षे परतन्त्रेषु देहिषु॥ १४
नैव तेऽस्ति परो लोको नापरः पापकर्मणः।
धर्म्यान्दारान्परित्यज्य यस्त्वमिच्छसि जीवितुम्॥
स्रजो गन्धानलंकारान्वासांसि विविधानि च।
किमर्थमभिसंत्यज्य परिव्रजसि निष्क्रियः॥ १६
निपानं सर्वभूतानां भूत्वा त्वं पावनं महत्।
आढ्यो वनस्पतिर्भूत्वा सोन्यांस्त्वं पर्युपाससे॥१७
खादन्ति हस्तिनं न्यासे क्रव्यादा बहवोऽप्युत।
बहवः कृमयश्चैव किं पुनस्त्वामनर्थकम्॥ १८
य इमां कुण्डिकां भिन्द्यात्त्रिविष्टब्धं च यो हरेत्।
वासश्चापि हरेत्तस्मिन्कथं ते मानसं भवेत्॥ १९
यस्त्वं सर्वं समुत्सृज्य धानामुष्टिमनुग्रहः।
यदनेन कृतं सर्वं किमिदं मम दीयते॥ २०
धानामुष्टेरिहार्थश्चेत्प्रतिज्ञा ते विनश्यति।
का वाऽहं तव को मे त्वं कश्च ते मय्यनुग्रहः॥२१
प्रशाधि पृथिवीं राजन्यत्र तेऽनुग्रहो भवेत्।
प्रासादं शयनं यानं वासांस्याभरणानि च॥ २२
श्रियां निराशैरधनैस्त्यक्तमित्रैरकिंचनैः।
सौखिकैः संभृतो योऽर्थः स संत्यजति किंनु तं॥२३
योऽत्यन्तं प्रतिगृह्णीयाद्यश्च दद्यात्सदैव हि।
तयोस्त्वमन्तरं विद्धि श्रेयांस्ताभ्यां क उच्यते॥२४
सदैव याचमानेषु तथा दम्भान्वितेषु च।
एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतम्॥ २५
जातवेदा यथा राजन्नादग्ध्वैवोपशाम्यति।
सदैव याचमानो वै तथा शाम्यति न द्विजः॥ २६
सतां वै ददतोऽन्नं च लोकेऽस्मिन्प्रकृतिर्ध्रुवा।
न चेद्राजा भवेद्दाता कुतः स्युर्मोक्षकाङ्क्षिणः॥२७
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च।
अन्नात्प्राणः प्रभवति अन्नदः प्राणदो भवेत्॥२८
गृहस्थेभ्योऽपि निर्मुक्ता गृहस्थानेव संश्रिताः।
प्रभवं च प्रतिष्ठां च दान्ता विन्दन्त आसते॥ २९
त्यागान्न भिक्षुकं विन्द्यान्न मौढ्यान्न च याचनात्।
ऋजुस्तु योऽर्थं त्यजति तं मुक्तं विद्धि भिक्षुकम् ३०

स्वल्पे मुह्यसीति द. थ. पाठः। प्रतिज्ञा ते वृथेति ड. पाठः॥८॥ एतेन धानामुष्टिना॥९॥ कौसल्या पातिता त्वयेति ट. ड. थ. पाठः॥ १२॥ फलहेतुकाः फलार्थिनः॥ १३॥ निपीयतेऽस्मिन्स्वेच्छया गोभिर्जलमिति निपानं आहावः। कूपोपान्तस्थक्षुद्रजलाशय इतियावत्। तथा आढ्यः फलवान्॥ १७॥ हस्तिनमपि न्यासे कृते सति क्रव्यादा मांसादाः खादन्ति। अनर्थकं सर्वपुरुषार्थहीनम्॥ १८॥ त्रिविष्टब्धं त्रिदण्डम्॥ १९॥ अनुग्रहः अन्वग्रहीः। यदानेन समं सर्वं किमिद ह्यवसीयसे इति झ. पाठः। तत्र अवसीयसे अध्यवस्यसि। अनेन धानामुष्टिना सर्वं राज्यादिकं समम्। सञ्ज्ञित्वाविशेषात् इत्यर्थः॥ २०॥ सौखिकैः संभृतानर्थान्यः संत्यजति किंनु तत् इति झ. पाठः। तत्र सौखिकैः परमसुखार्थिभिः संन्यासिभिः। संभृतानर्थान् कुण्डिकादीन् वीक्ष्य यः स्वयमपि तथा करोति स किंनु तद्राज्यादिकं त्यजति। अपितु नैव त्यजति। किंतूचितं परिग्रहं त्यक्त्वा दैवोपहतत्वादनुचितं परिग्रहान्तरमेव करोतीत्यसङ्गत्वमस्य दुर्लभमित्यर्थः॥ २३॥ सदैव याचमानः परिव्राट्। सदैव याचमानेषु सत्सु (दण्ड) डम्भविवर्जिषु इति ट. ड. थ. द. पाठः॥ २५॥ सदैव याचमानो हि तथा शाम्यति वै द्विजः। इति झ. पाठः॥ २६॥ सतां संन्यासिनां प्रकृतिर्जीवनम्। सतां च वेदा अन्नं च लोकेऽस्मिन्प्रकृतिर्ध्रुवा। अन्नदाता भवेद्दाता कुशास्त्रं मोक्षकाङ्क्षिणः। इति ट. ड. थ. द. पाठः॥ २७॥

असक्तः शक्तवद्गच्छन्निःसङ्गो मुक्तबन्धनः ।
समः शत्रौ च मित्रे च स वै मुक्तो महीपते ॥ ३१
परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः ।
सिता बहुविधैः पाशैः संचिन्वन्तो वृथामिषम् ३२
त्रयीं च नामवार्तां च त्यक्त्वा पुत्रान्व्रजन्ति ये ।
त्रिविष्टब्धं च वासश्च प्रतिगृह्णन्त्यबुद्धयः ॥ ३३
अनिष्कषाये काषायमीहार्थमिति विद्धि तम् ।
धर्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे मतिः ३४
काषायैरजिनैश्चीरैर्नग्नान्मुण्डाञ्जटाधरान् ।
बिभ्रत्साधून्महाराज जय लोकाञ्जितेन्द्रियः ॥ ३५
अग्न्याधेयानि गुर्वर्थं क्रतूनपि सुदक्षिणान् ।
ददात्यहरहः पूर्वं को नु धर्मरतस्ततः ॥ ३
अर्जुन उवाच ।
तत्त्वज्ञो जनको राजा लोकेऽस्मिन्निति गीयते ।
सोऽप्यासीन्मोहसंपन्नो मा मोहवशमन्वगाः ॥ ३
एवं धर्ममनुक्रान्ता सदा दानतपःपराः ।
आनृशंस्यगुणोपेताः कामक्रोधविवर्जिताः ॥ ३
प्रजानां पालने युक्ता दममुत्तममास्थिताः ।
इष्ट्वा लोकानवाप्स्यामो गुरुवृद्धोपचायिनः ॥ ३
देवतातिथिभूतानां निर्वपन्तो यथाविधि ।
स्थानमिष्टमवाप्स्यामो ब्रह्मण्याः सत्यवादिनः ४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

अर्जुनंप्रति युधिष्ठिरवचनम् ॥ १ ॥

युधिष्ठिर उवाच ।
वेदाहं तात शास्त्राणि अपराणि पराणि च ।
उभयं वेदवचनं कुरु कर्म त्यजेति च ॥ १
आकुलानि च शास्त्राणि हेतुभिश्चिन्तितानि च ।
निश्चयश्चैव यो मन्त्रे वेदाहं तं यथाविधि ॥ २
त्वं तु केवलशास्त्रज्ञो वीरव्रतसमन्वितः ।
शास्त्रार्थं तत्त्वतो गन्तुं न समर्थः कथंचन ॥ ३
शास्त्रार्थतत्त्वदर्शी यो धर्मनिश्चयकोविदः ।
तेनाप्येवं न वाच्योऽयं यदि धर्मं प्रपश्यसि ॥ ४
भ्रातृसौहृदमास्थाय यदुक्तं वचनं त्वया ।
न्याय्यं युक्तं च कौन्तेय प्रीतोऽहं तेन तेऽर्जुन ॥५
‘महेश्वरसमं सत्त्वं ब्रह्मणा चैव यत्समम् ।
वासुदेवसमं चैव न भूतं न भविष्यति ॥ ६
तथा त्वं योधमुख्येषु सत्त्वं परममिष्यते ॥ ७
बलमिन्द्रे च वायौ च बलं यच्च जनार्दने ।
तद्बलं भीमसेने च त्वयि चार्जुन विद्यते ॥
त्वत्समश्चित्रयोधी च दूरपाती च पाण्डव ।
दिव्यास्त्रबलसंपन्नः को वाऽन्यस्त्वत्समो नरः ॥’
युद्धधर्मेषु सर्वेषु क्रियाणां नैपुणेषु च ।
न त्वया सदृशः कश्चित्त्रिषु लोकेषु विद्यते ॥ १
धार्मिकं धर्मयुक्तं च निःशेषं ज्ञायते मया ।
धर्मसूक्ष्मं तु यद्वाच्यं तत्र दुष्प्रतरं त्वया ।
धनञ्जय न मे बुद्धिमतिशङ्कितुमर्हसि ॥ १
युद्धशास्त्रविदेव त्वं न वृद्धाः सेवितास्त्वया ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ १
तपस्त्यागो विधिरिति निश्चयस्तात धीमताम् ।
परस्परं ज्याय एषामिति नः श्रेयसी मतिः ॥ १
यस्त्वेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति ।
तत्र ते वर्तयिष्यामि यथा नैतत्प्रधानतः ॥ १
तपःस्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः ।

परिव्रजन्ति येऽनर्था इति ट. ड. पाठः ॥ ३२ ॥ अनिष्कषाये रागादिदोषवर्जनाभावे । अनिष्कषायाः काषायमिति ड. थ. द. पाठः ॥ ३४ ॥ अष्टादशोऽध्यायः ॥ १८ ॥

अपराणि धर्मशास्त्राणि । पराणि ब्रह्मशास्त्राणि ॥ १ ॥ अमूलानि च शास्त्राणि हेतुभिश्चित्रितानि च । निश्चयश्चै यन्मन्त्र इति ट. ड. पाठः ॥ २ ॥ त्वं तु केवलमस्त्रज्ञ इति झ. पाठः ॥ ३ ॥ तत्र विषये दुष्प्रतरं दुरवगाहम् ॥ ११ ॥

कृत्स्नं च धनसंहारं कुर्वन्ति विधिकारणात् ।
आत्मना तृषितो बुद्ध्या भ्रूणहत्यां न बुध्यते ॥ ८
अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद्दानधर्मोऽपि दुष्करः ॥ ९
यज्ञाय सृष्टानि धनानि धात्रा
यज्ञादिष्टः पुरुषो रक्षिता च ।
तस्मात्सर्वं यज्ञ एवोपयोज्यं
धनं ततोऽनन्तर एव कामः ॥ १०
यज्ञैरिन्द्रो विविधै रत्नवद्भि-
र्देवान्सर्वानभ्ययाद्भूरितेजाः ।
तेनेन्द्रत्वं प्राप्य विभ्राजतेऽसौ
तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ ११
महादेवः सर्वयज्ञे महात्मा
हुत्वाऽऽत्मानं देवदेवो बभूव ।
विश्वाँल्लोकान्व्याप्य विष्टभ्य कीर्त्या
विराजते द्युतिमान्कृत्तिवासाः ॥ १२
आविक्षितः पार्थिवोऽसौ मरुत्तो
वृद्ध्या शक्रं योऽजयद्देवराजम् ।
यज्ञे यस्य श्रीः स्वयं सन्निविष्टा
यस्मिन्भाण्डं काञ्चनं सर्वमासीत् ॥ १३
हरिश्चन्द्रः पार्थिवेन्द्रः श्रुतस्ते
यज्ञैरिष्ट्वा पुण्यभाग्वीतशोकः ।
ऋद्ध्या शक्रं योऽजयन्मानुषः सं-
स्तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ १४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

युधिष्ठिरंप्रति देवस्थानस्य वचनम् ॥ १ ॥

देवस्थान उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रेण समये पृष्टो यदुवाच बृहस्पतिः ॥ १
संतोषो वै स्वर्गसमः संतोषः परमं सुखम् ।
तुष्टेर्न किंचित्परतः सा सम्यक्प्रतितिष्ठति ॥ २
यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदाऽऽत्मज्योतिरचिरात्स्वात्मन्येव प्रसीदति ॥ ३
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
कामद्वेषौ च जयति तदाऽऽत्मानं च पश्यति ॥ ४
यदाऽसौ सर्वभूतानां न द्रुह्यति न काङ्क्षति ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ५
एवं कौन्तेय भूतानि तंतं धर्मं तथातथा ।
तदाऽऽत्मना प्रपश्यन्ति तस्माद्बुध्यस्व भारत ॥ ६
अन्ये साम प्रशंसन्ति व्यायाममपरे जनाः ।
नैकं न चापरं केचिदुभयं च तथाऽपरे ॥ ७
यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः ।
'नैकं न चापरं केचिदुभयं च तथाऽपरे ॥' ८
दानमेके प्रशंसन्ति केचिच्चैव प्रतिग्रहम् ।
केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ॥ ९
राज्यमेके प्रशंसन्ति प्रजानां परिपालनम् ।
हत्वा छित्त्वा च भित्त्वा च केचिदेकान्तशीलिनः १०
एतत्सर्वं समालोक्य बुधानामेष निश्चयः ।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः ॥ ११
अद्रोहः सत्यवचनं संविभागो दया दमः ।
प्रजनं स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥ १२
एवं धर्मं प्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् ।
तस्मादेतत्प्रयत्नेन कौन्तेय प्रतिपालय ॥ १३
यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः ।

---

दूरादस्पर्शनं वरमिति न्यायात्तमिमं परधर्मं यः क्षत्रिय उपाश्रयेत स दूष्येतेत्याह भूयानिति ॥ ७ ॥ यज्ञार्थमेव आज्ञप्तो वेदेन ॥ १० ॥ भाण्डमुपकरणं पात्रादि ॥ १३ ॥ विंशतितमोऽध्यायः ॥ २० ॥

यदा प्रसीदति तदा तुष्टिः प्रतितिष्ठतीति पूर्वेण संबन्धः ॥ ३ ॥ साम प्रीतिम् । व्यायामं यत्नम् ॥ ७ ॥ प्रजनं पुत्रोत्पादनम् ॥ १२ ॥

ऋषयस्तपसा युक्ता येषां लोकाः सनातनाः ॥ १५
अजातश्मश्रवो धीरास्तथाऽन्ये वनवासिनः ।
अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः ॥ १६
उत्तरेण तु पन्थानमार्या विषयनिग्रहात् ।
अबुद्धिजं तमस्त्यक्त्वा लोकांस्त्यागवतां गताः१७
दक्षिणेन तु पन्थानं यं भास्वन्तं प्रचक्षते ।
एते क्रियावतां लोका ये श्मशानानि भेजिरे ॥ १८
अनिर्देश्या गतिः सा तु यां प्रपश्यन्ति मोक्षिणः ।
तस्मात्त्यागः प्रधानेष्टः स तु दुःखं प्रवेदितुम् ॥ १९
अनुस्मृत्य तु शास्त्राणि कवयः समवस्थिताः ।
अपीह स्यादपीह स्यात्सारासारदिदृक्षया ॥ २०
वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च ।
विपाट्य कदलीस्तम्भं सारं ददृशिरे न ते ॥ २१
अथैकान्तव्युदासेन शरीरे पाञ्चभौतिके ।
इच्छाद्वेषसमायुक्तमात्मानं प्राहुरिङ्गितैः ॥ २२
अग्राह्यं चक्षुषा सत्वमनिर्देश्यं च तद्गिरा ।
कर्महेतुपुरस्कारं भूतेषु परिवर्तते ॥ २३
कल्याणगोचरं कृत्वा मानं तृष्णां निगृह्य च ।
कर्मसंततिमुत्सृज्य स्यान्निरालम्बनः सुखी ॥ २४
अस्मिन्नेवं सूक्ष्मगम्ये मार्गे सद्भिर्निषेविते ।
कथमर्थमनर्थाढ्यमर्जुन त्वं प्रशंससि ॥ २५
पूर्वशास्त्रविदोऽप्येवं जनाः पश्यन्ति भारत ।
क्रियासु निरता नित्यं दाने यज्ञे च कर्मणि ॥ २६
भवन्ति सुदुरावर्ता हेतुमन्तोऽपि पण्डिताः ।
दृढपूर्वे स्मृता मूढा नैतदस्तीति वादिनः ॥ २७
अनृतस्यावमन्तारो वक्तारो जनसंसदि ।
चरन्ति वसुधां कृत्स्नां वावदूका बहुश्रुताः ॥२८
पार्थ यन्न विजानीमः कस्ताञ्ज्ञातुमिहार्हति ।
एवं प्राज्ञाः श्रुताश्चापि महान्तः शास्त्रवित्तमाः २९
तपसा महदाप्नोति बुद्ध्या वै विन्दते महत् ।
त्यागेन सुखमाप्नोति सदा कौन्तेय धर्मवित् ॥३०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ॥ २० ॥

युधिष्ठिरंप्रति देवस्थानस्य वचनम् ॥ १ ॥

वैशंपायन उवाच ।
अस्मिन्वाक्यान्तरे वक्ता देवस्थानो महातपाः ।
अभिनीततरं वाक्यमित्युवाच युधिष्ठिरम् ॥ १
देवस्थान उवाच ।
यद्वचः फल्गुनेनोक्तं न ज्यायोऽस्ति धनादिति ।
अत्र ते वर्तयिष्यामि तदेकान्तमनाः शृणु ॥ २
अजातशत्रो धर्मेण कृत्स्ना ते वसुधा जिता ।
तां जित्वा च वृथा राजन्न परित्यक्तुमर्हसि ॥ ३
चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
तां क्रमेण महाबाहो यथावज्जय पार्थिव ।
तस्मात्पार्थ महायज्ञैर्यजस्व बहुदक्षिणैः ॥ ४
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथाऽपरे ।
कर्मनिष्ठाश्च बुद्ध्यर्थास्तपोनिष्ठाश्च पार्थिव ॥ ५
वैखानसानां कौन्तेय वचनं श्रूयते यथा ॥ ६
ईहेत धनहेतोर्यस्तस्यानीहा गरीयसी ।
भूयान्दोषो हि वर्धेत यस्तत्कर्म समाश्रयेत् ॥ ७

---

अरुणाः केतवः ऋषिप्रभेदाः । अरण्ये बहवश्चैवेति झ. पाठ. ॥ १६ ॥ आरण्यकानि वेदान्तान् ॥ २१ ॥ मनस्तृष्णां निगृह्य चेति झ. पाठः ॥ २४ ॥ पूर्वशास्त्रविदः कर्मकाण्डविदोऽपि एवमर्थमनर्थत्वेन पश्यन्ति किमुत ज्ञानिनः ॥ २६ ॥ दुरावर्ताः दुःखेनापि सिद्धान्तं ग्राहयितुमशक्याः । दृढः पूर्वः प्राग्भवीयः संस्कारो येषां ते दृढपूर्वे । बहुव्रीहावप्यार्षी सर्वनामता ॥ २७ ॥ हे पार्थ यत् यान् लौकिकानप्यर्थान्न वयं विजानीमस्तान् इतरः को ज्ञातुमर्हति । न कोपि यथा । एवं प्राज्ञा अपि अस्माकमन्येषां च दुर्ज्ञेया इत्यर्थः ॥ २९ ॥ महद्वैराग्यम् । महत्परंब्रह्म ॥ ३० ॥ एकोनविंशोऽध्यायः ॥ १९ ॥

वाक्यान्तरे वाक्यावसरे । अभिनीततरं युक्तिमत्तरम् ॥ १ ॥ चतुष्पदी चतुराश्रमी ॥ ४ ॥ क्रमाद्ब्रह्मचारियतिगृहस्थवानप्रस्था इत्यर्थः ॥ ५ ॥ धनं हेतुः कारण यस्य तस्य यज्ञादेर्यज्ञाद्यर्थम् ईहेत धनं तस्यानीहैव गरीयसी । प्रक्षालनाद्धि पङ्कस्य

क्षत्रियो यज्ञशिष्टाशी राजा शास्त्रार्थतत्त्ववित् ॥ १४
असाधुनिग्रहरतः साधूनां प्रग्रहे रतः ।
धर्मवर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मतः ॥ १५
पुत्रसंक्रामितश्रीश्च वने वन्येन वर्तयेत् ।
विधानमाश्रमाणां वै कुर्यात्कर्माण्यतन्द्रितः ॥ १६
य एवं वर्तते राजन्स राजा धर्मनिश्चितः ।
तस्यायं च परश्चैव लोकः स्यात्सफलोदयः ॥ १७
निर्वाणं हि सुदुष्प्राप्यं बहुविघ्नं च मे मतम् ॥ १८
एवं धर्ममनुक्रान्ताः सत्यदानतपःपराः ।
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः ॥ १९
प्रजानां पालने युक्ता धर्ममुत्तममास्थिताः ।
गोब्राह्मणार्थे युध्यन्तः प्राप्ता गतिमनुत्तमाम् ॥ २०
एवं रुद्राः सवसवस्तथाऽऽदित्याः परंतप ।
साध्या राजर्षिसङ्घाश्च धर्ममेतं समाश्रिताः ।
अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

युधिष्ठिरंप्रत्यर्जुनवचनम् ॥ १ ॥

वैशंपायन उवाच ।
अस्मिन्नेकान्तरे वाक्यं पुनरेवार्जुनोऽब्रवीत् ।
निर्विण्णमनसं ज्येष्ठमिदं भ्रातरमच्युतम् ॥ १
क्षत्रधर्मेण धर्मज्ञ प्राप्य राज्यं सुदुर्लभम् ।
जित्वा चारीन्नरश्रेष्ठ तप्यते किं भृशं भवान् ॥ २
क्षत्रियाणां महाराज संग्रामे निधनं मतम् ।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ॥ ३
ब्राह्मणानां तपस्त्यागः प्रेत्य धर्मविधिः स्मृतः ।
क्षत्रियाणां च निधनं संग्रामे विहितं प्रभो ॥ ४
क्षात्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः ।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥ ५
ब्राह्मणस्यापि चेद्राजन्क्षत्रधर्मेण वर्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंभवम् ॥ ६
न त्यागो न पुनर्यज्ञो न तपो मनुजेश्वर ।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥ ७
स भवान्सर्वधर्मज्ञो धर्मात्मा भरतर्षभ ।
राजा मनीषी निपुणो लोके दृष्टपरावरः ॥ ८
त्यक्त्वा संतापजं शोकं दंशितो भव कर्मणि ।
क्षत्रियस्य विशेषेण हृदयं वज्रसन्निभम् ॥ ९
जित्वाऽरीन्क्षत्रधर्मेण प्राप्य राज्यमकण्टकम् ।
विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥ १०
इन्द्रो वै ब्रह्मणः पुत्रः क्षत्रियः कर्मणाऽभवत् ।
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ॥ ११
तच्चास्य कर्म पूज्यं च प्रशस्यं च विशांपते ।
तेनेन्द्रत्वं समापेदे देवानामिति नः श्रुतम् ॥ १२
स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः ।
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥ १३
मा त्वमेवं गते किंचिच्छोचेथाः क्षत्रियर्षभ ।
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् ॥ १४
भवितव्यं तथा तच्च यद्वृत्तं भरतर्षभ ।
दिष्टं हि राजशार्दूल न शक्यमतिवर्तितुम् ॥ १५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

प्रग्रहे संग्रहे ॥ १५ ॥ एकविंशतितमोऽध्यायः ॥ २१ ॥
अच्युतं धर्मात् ॥ १ ॥ त्यागः संन्यासः ॥ ४ ॥ यज्ञ आत्मयज्ञः । समाधिरिति यावत् ॥ ७ ॥ दंशितः सन्नद्धः ॥ ९ ॥
ब्रह्मणः कश्यपस्य । नवतीर्नव दशाधिक शताष्टकम् ॥ ११ ॥
इन्द्रत्वमैश्वर्यम् ॥ १२ ॥ द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

व्यासेन युधिष्ठिरंप्रति शङ्खलिखितोपाख्यानकथनपूर्वकं क्षात्रधर्मस्वीकरणचोदना ॥ १ ॥

वैशंपायन उवाच ।
एवमुक्तस्तु कौन्तेयो गुडाकेशेन भारत ।
नोवाच किंचित्कौरव्यस्ततो द्वैपायनोऽब्रवीत् ॥ १
व्यास उवाच ।
बीभत्सोर्वचनं सौम्य सत्यमेतद्युधिष्ठिर ।
शास्त्रदृष्टः परो धर्मः स्मृतो गार्हस्थ्य आश्रमः ॥२
स्वधर्मं चर धर्मज्ञ यथाशास्त्रं यथाविधि ।
न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ॥ ३
गृहस्थं हि सदा देवाः पितरोऽतिथयस्तथा ।
भृत्याश्चैवोपजीवन्ति तान्भरस्व महीपते ॥ ४
वयांसि पशवश्चैव भूतानि च जनाधिप ।
गृहस्थैरेव धार्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी ॥ ५
सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः ।
तं चराद्य विधिं पार्थ दुश्चरं दुर्बलेन्द्रियैः ॥ ६
वेदज्ञानं च ते कृत्स्नं तपश्चाचरितं महत् ।
पितृपैतामहं राज्यं धुर्यवद्वोढुमर्हसि ॥ ७
तपो यज्ञस्तथा विद्या भैक्ष्यमिन्द्रियसंयमः ।
ध्यानं विद्या समुत्थानं संतोषश्च श्रियं प्रति ।
तथा ह्येकान्तशीलत्वं तुष्टिर्दानं च शक्तितः ॥ ८
ब्राह्मणानां महाराज चेष्टा संसिद्धिकारिका ।
क्षत्रियाणां तु वक्ष्यामि तवापि विदितं पुनः ॥९
यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति ।
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ॥ १०
वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा ।
द्रविणोपार्जनं भूरि पात्रे च प्रतिपादनम् ॥ ११
एतानि राज्ञां कर्माणि सुकृतानि विशांपते ।
इमं लोकममुं चैव साधयन्तीति नः श्रुतम् ॥ १२
एषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते ।
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः ॥१३
एताश्चेष्टाः क्षत्रियाणां राजन्संसिद्धिकारिकाः ।
अपि गाथामिमां चापि बृहस्पतिरगायत ॥ १४
भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १५
सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात् ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ १६
युधिष्ठिर उवाच ।
भगवन्कर्मणा केन सुद्युम्नो वसुधाधिपः ।
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् ॥१७
व्यास उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ ॥ १८
तयोरावसथावास्तां रमणीयौ पृथक्पृथक् ।
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥ १९
ततः कदाचिल्लिखितः शङ्खस्याश्रममागतः ।
यदृच्छयाऽथ शङ्खोपि निष्क्रान्तोऽभवदाश्रमात् ॥२०
सोऽभिगम्याश्रमं भ्रातुश्चंक्रमँल्लिखितस्तदा ।
फलानि शातयामास सम्यक्परिणतान्युत ॥ २१
तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागतः ॥ २२
भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥२३
सोऽब्रवीद्भ्रातरं ज्येष्ठमुपसृत्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥ २४
तमब्रवीत्तथा शङ्खस्तीव्ररोषसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ॥२५
गच्छ राजानमासाद्य स्वकर्म कथयस्व वै ।
अदत्तादानमेवं हि कृतं पार्थिवसत्तम ॥ २६
स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय ।

---

गार्हस्थ्यः गृहस्थस्यायं गार्हस्थ्यः ॥ २ ॥ बिलशयान्मूषिकान् । अप्रवासिनं गृहादिसङ्गिनम् । सर्पो बिलशयाविवेति ङ. थ. पाठः ॥ १५ ॥ बाहुदां नदीमनु तत्समीपे ॥ १९ ॥ शङ्खस्य लिखितस्तदेति झ. पाठः ॥ २१ ॥ उपस्पृश्याभिवाद्य चेति ङ. थ. पाठः ॥ २४ ॥ हे पार्थिवसत्तम मया अदत्तादानं कृतमित्यस्मै राज्ञे कथयस्वेति संबन्धः ॥ २६ ॥

शीघ्रं धारय चोरस्य मम दण्डं नराधिप ॥ २७
इत्युक्तस्तस्य वचनात्सुद्युम्नं स नराधिपम् ।
अभ्यगच्छन्महाबाहो लिखितः संशितव्रतः ॥२८
सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत्सहामात्यः पद्भ्यामेव जनेश्वरः ॥ २९
तमब्रवीत्समागम्य स राजा धर्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन्कृतमेव तत् ॥ ३०
एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रुत्य करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥ ३१
अनिसृष्टानि गुरुणा फलानि मनुजर्षभ ।
भक्षितानि महाराज तत्र मां शाधि माचिरम् ३२
सुद्युम्न उवाच ।
प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥ ३३
स भवाननभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।
ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ३४
व्यास उवाच ।
संछन्द्यमानो ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं स वरयामास तस्माद्दण्डादृते वरम् ॥ ३५
ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ ३६
स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भवांस्तत्क्षन्तुमर्हति ॥ ३७
शङ्ख उवाच ।
न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम ।
'सुनिर्मलं कुलं ब्रह्मन्नस्मिञ्जगति विश्रुतम् ।'
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥३८
त्वं गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवानृषीन्पितॄंश्चैव मा चाधर्मे मनः कृथाः ॥३९
'ब्रह्महत्यां सुरापानं स्तेयं गुर्वङ्गनागमम् ।
महान्ति पातकान्याहुः संयोगं चैव तैः सह ४०
न स्तेयसदृशं ब्रह्मन्महापातकमस्ति हि ।
जगत्यस्मिन्महाभाग ब्रह्महत्यासमं हि तत् ॥ ४१
सर्वपातकिनां ब्रह्मन्दण्डः शारीर उच्यते ।
तस्करस्य विशेषेण नान्यो दण्डो विधीयते ॥४२
ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽथवा द्विज ।
सर्वे कामकृते पापे हन्तव्या न विचारणा ॥ ४३
राजभिर्धृतदण्डा वै कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ४४
उद्धृतं नः कुलं ब्रह्मन्नाज्ञादण्डे धृते त्वयि ॥' ४५
तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा ।
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥ ४६
प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥४७
ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया ।
मा च तेऽत्र विशङ्का भूद्दैवमत्र विधीयते ॥ ४८
लिखित उवाच ।
किंतु नाहं त्वया पूतः पूर्वमेव महाद्युते ।
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम ॥ ४९
शङ्ख उवाच ।
एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।
स च पूतो नरपतिस्त्वं चापि पितृभिः सह ॥ ५०
व्यास उवाच ।
स राजा पाण्डवश्रेष्ठ श्रेयान्वै तेन कर्मणा ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ ५१
एष धर्मः क्षत्रियाणां प्रजानां परिपालनम् ।
उत्पथेभ्यो महाराज मा स्म शोके मनः कृथाः ॥५२
भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम ।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥ ५३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

---

अन्तपालेभ्यो द्वारपालेभ्यः ॥ २९ ॥ करिष्येतीति संधिरार्षः ॥ ३१ ॥ अनिसृष्टान्यदत्तानि । गुरुणा ज्येष्ठभ्रात्रा ॥ ३२ ॥ यथा दण्डधारणे राजा प्रमाणं तथाऽनुज्ञायां हेतुः प्रमाणम् ॥ ३३ ॥ शुचिकर्मा मदनुज्ञयैव शोधितदोषः ॥ ३४ ॥ मम माम् निष्कृतिः प्रायश्चित्तम् ॥ ३८ ॥ उदकस्यार्थं प्रयोजनं आचमनादि कर्तुमिति शेषः ॥ ४६ ॥ त्रयोविंशोऽध्यायः॥२३॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

व्यासेन युधिष्ठिरंप्रति राजधर्मकथनपूर्वकं राज्यपालनचोदना ॥ १ ॥

वैशंपायन उवाच ।
पुनरेव महर्षिस्तं कृष्णद्वैपायनोऽर्थवत् ।
अजातशत्रुं कौन्तेयमिदं वचनमब्रवीत् ॥ १
अरण्ये वसतां तात भ्रातॄणां ते मनस्विनाम् ।
मनोरथा महाराज ये तत्रासन्युधिष्ठिर ॥ २
तानि मे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः ।
प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः ॥ ३
अरण्ये दुःखवसतिरनुभूता तपस्विभिः ।
दुःखस्यान्ते नरव्याघ्र सुखान्यनुभवन्तु वै ॥ ४
धर्ममर्थं च कामं च भ्रातृभिः सह भारत ।
अनुभूय ततः पश्चात्प्रस्थाताऽसि विशांपते ॥ ५
अर्थिनां च पितॄणां च देवतानां च भारत ।
आनृण्यं गच्छ कौन्तेय ततः स्वर्गं गमिष्यसि ॥ ६
सर्वमेधाश्वमेधाभ्यां यजस्व कुरुनन्दन ।
ततः पश्चान्महाराज गमिष्यसि परां गतिम् ॥ ७
भ्रातॄंश्च सर्वान्क्रतुभिः संयोज्य बहुदक्षिणैः ।
संप्राप्तः कीर्तिमतुलां पाण्डवेय गमिष्यसि ॥ ८
विद्मस्ते पुरुषव्याघ्र वचनं कुरुसत्तम ।
शृणुष्वैवं यथा कुर्वन्न धर्माच्च्यवसे नृप ॥ ९
आददानस्य विजयं विग्रहं च युधिष्ठिर ।
समानधर्मकुशलाः स्थापयन्ति नरेश्वर ॥ १०
'प्रत्यक्षमनुमानं च उपमानं तथाऽऽगमः ।
अर्थापत्तिस्तथैतिह्यं संशयो निर्णयस्तथा ॥ ११
आकार इङ्गितं चैव गतिश्चेष्टा च भारत ।
प्रतिज्ञा चैव हेतुश्च दृष्टान्तोपनयस्तथा ॥ १२
उक्तिर्निगमनं तेषां प्रमेयं च प्रयोजनम् ।
एतानि साधनान्याहुर्बहुवर्गप्रसिद्धये ॥ १३
प्रत्यक्षमनुमानं च सर्वेषां योनिरुच्यते ।
प्रमाणज्ञो हि शक्नोति दण्डयोनौ विचक्षणः ।
अप्रमाणवता नीतो दण्डो हन्यान्महीपतिम् ॥ १४
देशकालप्रतीक्षी यो दस्यून्मर्षयते नृपः ।
शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः ॥ १५
आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति ।
प्रतिगृह्णाति तत्पापं चतुर्थांशेन भूमिपः ॥ १६
निबोध च यथाऽऽतिष्ठन्धर्मान्न च्यवते नृपः ।
निग्रहाद्धर्मशास्त्राणामनुरुद्ध्यन्नपेतभीः ।
कामक्रोधावनादृत्य पितेव समदर्शनः ॥ १७
दैवेनाभ्याहतो राजा कर्मकाले महाद्युते ।
न साधयति यत्कर्म न तत्राहुरतिक्रमम् ॥ १८
तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।
पापैः सह न संदध्याद्राज्यं पुण्यं च कारयेत् ॥ १९
शूराश्चार्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर ।
गोमिनो धनिनश्चैव परिपाल्या विशेषतः ॥ २०
व्यवहारेषु धर्मेषु योक्तव्याश्च बहुश्रुताः ।
'प्रमाणज्ञा महीपाल न्यायशास्त्रावलम्बिनः ॥ २१
वेदार्थतत्त्वविद्राजंस्तर्कशास्त्रबहुश्रुताः ।
मन्त्रे च व्यवहारे च नियोक्तव्या विजानता ॥ २२
तर्कशास्त्रकृता बुद्धिर्धर्मशास्त्रकृता च या ।
दण्डनीतिकृता चैव त्रैलोक्यमपि साधयेत् ॥ २३
नियोज्या वेदतत्त्वज्ञा यज्ञकर्मसु पार्थिव ।
वेदज्ञा ये च शास्त्रज्ञास्ते च राजन्सुबुद्धयः ॥ २४
आन्वीक्षकीत्रयीवार्तादण्डनीतिषु पारगाः ।
ते तु सर्वत्र योक्तव्यास्ते च बुद्धेः परं गताः ॥' २५
गुणयुक्तेऽपि नैकस्मिन्विश्वसेत विचक्षणः ॥ २६
अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः ।
एनसा युज्यते राजा दुर्दान्त इति चोच्यते ॥ २७

---

वचनं हिंसाप्रधानः क्षत्रधर्मो मे मास्त्वित्येवंरूपम् ॥ ९ ॥ आददानस्य परस्वापहर्तुः । समानधर्मः अविषमो धर्मस्तत्र कुशलाः स्थापयन्ति अवश्यकर्तव्यतया व्यवस्थापयन्ति ॥ १० ॥ मर्षयते दस्यूनपि न हन्ति । एनसा तज्जेन पापेन ॥१५॥ धर्मशास्त्राणां निग्रहादतिलङ्घनाज्जातादधर्माद्भीतोऽश्च्यवते । तानि अनुरुध्यन्नपेतभीश्च भवति ॥ १७ ॥ राष्ट्रपण्यं न कारयेति ङ. थ. पाठः ॥ १९ ॥ गोमिनो गोमन्तः ॥ २० ॥ स्तब्धो मान्यानमानयन् । अभ्यसूयको गुणेषु दोषदृष्टिः ॥ २७ ॥

ये रक्ष्यमाणा हीयन्ते दैवेनाभ्याहता नृप ।
तस्करैश्चापि हीयन्ते सर्वे तद्राजकिल्बिषम् ॥ २८
सुमन्त्रिते सुनीते च सर्वतश्चोपपादिते ।
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर ॥ २९
विच्छिद्यन्ते समारब्धाः सिद्ध्यन्ते चापि दैवतः ।
कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम् ॥ ३०
अत्र ते राजशार्दूल वर्तयिष्ये कथामिमाम् ।
यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पाण्डव ॥ ३१
शत्रून्हत्वा हतस्याजौ शूरस्याक्लिष्टकर्मणः ।
असहायस्य संग्रामे निर्जितस्य युधिष्ठिर ॥ ३२
यत्कर्म वै निग्रहे शात्रवाणां
योगश्चाग्र्यः पालने मानवानाम् ।
कृत्वा कर्म प्राप्य कीर्तिं स युद्धा-
द्वाजिग्रीवो मोदते स्वर्गलोके ॥ ३३
संत्यक्तात्मा समरेष्वाततायी
शस्त्रैश्छिन्नो दस्युभिर्वध्यमानः ।
अश्वग्रीवः कर्मशीलो महात्मा
संसिद्धार्थो मोदते स्वर्गलोके ॥ ३४
धनुर्यूपो रशना ज्या शरः स्रु-
क्स्रुवः खड्गो रुधिरं यत्र चाज्यम् ।
रथो वेदी कामजो युद्धमग्नि-
श्चातुर्होत्रं चतुरो वाजिमुख्याः ॥ ३५
हुत्वा तस्मिन्यज्ञवह्नावथारी-
न्पापान्मुक्तो राजसिंहस्तरस्वी ।
प्राणान्हुत्वा चावभृथे रणे स
वाजिग्रीवो मोदते देवलोके ॥ ३६
राष्ट्रं रक्षन्बुद्धिपूर्वं नयेन
संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वाँल्लोकान्व्याप्य कीर्त्या मनस्वी
वाजिग्रीवो मोदते देवलोके ॥ ३७
दैवीं सिद्धिं मानुषीं दण्डनीतिं
योगन्यासैः पालयित्वा महीं च ।
तस्माद्राजा धर्मशीलो महात्मा
वाजिग्रीवो मोदते देवलोके ॥ ३८
विद्वांस्त्यागी श्रद्दधानः कृतज्ञ-
स्त्यक्त्वा लोकं मानुषं कर्म कृत्वा ।
मेधाविनां विदुषां संमतानां
तनुत्यजां लोकमाक्रम्य राजा ॥ ३९
सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य
सम्यग्राज्यं पालयित्वा महात्मा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
वाजिग्रीवो मोदते देवलोके ॥ ४०
जित्वा संग्रामान्पालयित्वा प्रजाश्च
सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान् ।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणे मोदते देवलोके ॥ ४१
वृत्तं यस्य श्लाघनीयं मनुष्याः
सन्तो विद्वांसोऽर्हयन्त्यर्हणीयम् ।
स्वर्गं जित्वा वीरलोकानवाप्य
सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

---

दैवेन अवर्षणादिना ॥ २८ ॥ यत्कर्म कर्तव्यं तत्कर्म कृत्वेति संबन्धः ॥ ३३ ॥ कामजः क्रोधो युद्धमूलभूतोऽग्निः । चातुर्होत्रं ब्रह्माद्याः ऋत्विजः चतुरश्चत्वारः ॥ ३५ ॥ संत्यक्तात्मा त्यक्ताहंकारः ॥३७॥ योगः क्रियायामुत्साहो न्यासा अभिमानत्यागास्तैर्युक्तां दैवीं सिद्धिं यज्ञादिक्रियामन्यदीयां मानुषीं च सिद्धिं दण्डनीतिं महीं च पालयित्वेति योजना । स्वयं च यज्ञशीलः ॥ ३८ ॥ मानुषं लोकमिति संबन्धः । तनुत्यजां प्रयागादौ ॥ ३९ ॥ चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

व्यासेन युधिष्ठिरंप्रति सेनजिद्वचनानुवादपूर्वकं राजधर्मकथनम् ॥ १ ॥

वैशंपायन उवाच ।
द्वैपायनवचः श्रुत्वा कुपिते च धनञ्जये ।
व्यासमामन्त्र्य कौन्तेयः प्रत्युवाच युधिष्ठिरः ॥ १
युधिष्ठिर उवाच ।
न पार्थिवमिदं राज्यं न भोगाश्च पृथग्विधाः ।
प्रीणयन्ति मनो मेऽद्य शोको मां दारयत्ययम् ॥ २
श्रुत्वा वीरविहीनानामपुत्राणां च योषिताम् ।
परिदेवयमानानां न शान्तिं मनसा लभे ॥ ३
इत्युक्तः प्रत्युवाचेदं व्यासो योगविदांवरः ।
युधिष्ठिरं महाप्राज्ञो धर्मज्ञो वेदपारगः ॥ ४
व्यास उवाच ।
न कर्मणा लभ्यते चेज्यया वा
नाप्यस्ति दाता पुरुषस्य कश्चित् ।
पर्याययोगाद्विहितं विधात्रा
कालेन सर्वं लभते मनुष्यः ॥ ५
न बुद्धिशक्त्याऽध्ययनेन शक्यं
प्राप्तुं विशेषं मनुजैरकाले ।
मूर्खोऽपि चाप्नोति कदाचिदर्था-
न्कालो हि सर्वं पुरुषस्य दाता ॥ ६
न भूरकालेषु फलं ददाति
शिल्पानि मन्त्राश्च तथौषधानि ।
तान्येव कालेन समाहितानि
सिद्ध्यन्ति वर्धन्ति च भूतिकाले ॥ ७
कालेन शीघ्राः प्रवहन्ति वाताः
कालेन वृष्टिर्जलदानुपैति ।
कालेन पद्मोत्पलवज्जलं च
कालेन पुष्यन्ति वनेषु वृक्षाः ॥ ८
ष्णाश्च सिताश्च रात्र्यः
न्द्रः परिपूर्णबिम्बः ।
नाकालतः पुष्पफलं द्रुमाणां
नाकालवेगाः सरितो वहन्ति ॥ ९
नाकालमत्ताः खगपन्नगाश्च
मृगद्विपाः शैलमृगाश्च लोके ।
नाकालतः स्त्रीषु भवन्ति गर्भा
नायन्त्यकाले शिशिरोष्णवर्षाः ॥ १०
नाकालतो म्रियते जायते वा
नाकालतो व्याहरते च बालः ।
नाकालतो यौवनमभ्युपैति
नाकालतो रोहति बीजमुप्तम् ॥ ११
नाकालतो भानुरुपैति योगं
नाकालतोऽस्तं गिरिमभ्युपैति ।
नाकालतो वर्धते हीयते च
चन्द्रः समुद्रोऽपि महोर्मिमाली ॥ १२
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं राज्ञा सेनजिता दुःखार्तेन युधिष्ठिर ॥ १३
सर्वानेवैष पर्यायो मर्त्यान्स्पृशति दुःसहः ।
कालेन परिपक्वा हि म्रियन्ते सर्वपार्थिवाः ॥ १४
घ्नन्ति चान्यान्नरान्राजंस्तानप्यन्ये तथा नराः ।
संज्ञैषा लौकिकी राजन्न हिनस्ति न हन्यते ॥ १५
हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः ।
स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ ॥ १६
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायन्दुःखस्यापचितिं चरेत् ॥ १७
स किं शोचसि मूढः सञ्शोच्यान्किमनुशोचसि ।
पश्य दुःखेषु दुःखानि भयेषु च भयान्यपि ॥ १८
आत्माऽपि चायं न मम सर्वाऽपि पृथिवी मम ।
यथा मम तथाऽन्येषामिति पश्यन्न मुह्यति ॥ १९
शोकस्थानसहस्राणि हर्षस्थानशतानि च ।

---

[illegible] राज्यकारणात् ॥ १ ॥ वीरविहीनानां पतिहीनानाम् ॥ ३ ॥ नलभ्यते वीरो हतवीराभिर्वीरपत्नीभिरित्यर्थः । नापि ताभ्यः कश्चित्पतिं दातुं समर्थोऽस्तीत्यर्थः ॥ ५ ॥ नाभूतिका-

लेभ्विति झ. पाठः ॥ ७ ॥ पुष्प्यन्तीति ङ. पाठः ॥ ८ ॥ पर्यायः कालगतिः ॥ १४ ॥ अपचितिं प्रतीकारम् ॥ १७ ॥ दुःखेषु शोकजेषु मनस्तापेषु । दुःखानि शिरस्ताडनादीनि ।

दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ २०
एवमेतानि कालेन प्रियद्वेष्याणि भागशः ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥ २१
दुःखमेवास्ति न सुखं तस्मात्तदुपलभ्यते ।
तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम् ॥ २२
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥ २३
सुखमेव हि दुःखान्तं कदाचिद्दुःखतः सुखम् ।
तस्मादेतद्द्वयं जह्याद्य इच्छेच्छाश्वतं सुखम् ॥ २४
सुखान्तप्रभवं दुःखं दुःखान्तप्रभवं सुखम् ।
यन्निमित्तो भवेच्छोकस्तापो वा दुःखमूर्च्छितः ।
आयासो वाऽपि यन्मूलस्तदेकाङ्गमपि त्यजेत् २५
सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ २६
ईषदप्यङ्ग दाराणां पुत्राणामाचरन्प्रियम् ।
ततो ज्ञास्यसि कः कस्य केन वा कथमेव च ॥ २७
ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
त एव सुखमेधन्ते मध्यमः क्लिश्यते जनः ॥ २८
इत्यब्रवीन्महाप्राज्ञो युधिष्ठिर स सेनजित् ।
परावरज्ञो लोकस्य धर्मवित्सुखदुःखवित् ॥ २९
परदुःखेन दुःखी यो न स जातु सुखी भवेत् ।
दुःखानां हि क्षयो नास्ति जायते ह्यपरात्परम् ॥ ३०

सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायतः सर्वमवाप्नुवन्ति
तस्मान्न मुह्येन्न च संप्रहृष्येत् ॥ ३१
दीक्षां राज्ञां संयुगे धर्ममाहु-
र्योगं राज्ये दण्डनीतिं च सम्यक् ।
वित्तत्यागं दक्षिणां चैव यज्ञे
सम्यग्दानं पावनानीति विद्यात् ॥ ३२
रक्षन्राज्यं बुद्धिपूर्वं नयेन
संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वाँल्लोकान्धर्मदृष्ट्यावलोक-
न्नूर्ध्वं देहान्मोदते देवलोके ॥ ३३
जित्वा संग्रामान्पालयित्वा च राष्ट्रं
सोमं पीत्वा वर्धयित्वा प्रजाश्च ।
युक्त्या दण्डं धारयित्वा प्रजानां
पश्चात्क्षीणायुर्मोदते देवलोके ॥ ३४
'यजन्ति यज्ञान्विजयन्ति राज्यं
रक्षन्ति राष्ट्राणि प्रियाणि चैषाम् ।'
सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य
सम्यग्राज्यं पालयित्वा च राजा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
पूतात्मा वै मोदते देवलोके ॥ ३५
यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ।
पौरजानपदामात्याः स राजा राजसत्तमः ॥ ३६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

---

दुःखादेर्द्विगुणीकरणं मूढकार्यमित्यर्थः ॥ १८ ॥ यानि प्रियाणि तान्येव काले दुःखानि भवन्ति । यानि द्वेष्याणि तान्येव सुखानि ॥ २१ ॥ तृष्णया याऽऽर्तिरनवस्थितचित्तता तज्जं दुःखम् । दुःखस्यार्तिर्विनाशस्तज्जं सुखम् ॥ २२ ॥ दुःखमूर्छितः दुःखेन वर्धितः । एकाङ्गमपि सर्पदष्टाङ्गुष्ठवत् त्यजेत् ॥ २५ ॥ केन हेतुना कथं केन प्रकारेण कस्य संबन्धीति ज्ञास्यसि ॥ २७ ॥ भवाभवौ ऐश्वर्यानैश्वर्ये ॥ ३१ ॥ संत्यक्तात्मा निरहंकारः ॥ ३३ ॥ पञ्चविंशोऽध्यायः ॥ २५ ॥

---

* एतदनन्तरं एकोऽध्यायः झ. पाठेऽधिको दृश्यते ।

[ वैशंपायन उवाच ।
अस्मिन्नेव प्रकरणे धनञ्जयमुदारधीः ।
अभिनीततरं वाक्यमित्युवाच युधिष्ठिरः ॥ १
यदेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति ।
न स्वर्गो न सुखं नार्थो निर्धनस्येति तन्मृषा ॥ २
स्वाध्याययज्ञसंसिद्धा दृश्यन्ते बहवो जनाः ।

तपोरताश्च मुनयो येषां लोकाः सनातनाः ॥ ३
ऋषीणां समयं शश्वद्ये रक्षन्ति धनञ्जय ।
आश्रिताः सर्वधर्मज्ञा देवास्तान्ब्राह्मणान्विदुः ॥ ४
स्वाध्यायनिष्ठान्हि ऋषीञ्ज्ञाननिष्ठांस्तथाऽपरान् ।
बुद्ध्येथाः संततं चापि धर्मनिष्ठान्धनञ्जय ॥ ५
ज्ञाननिष्ठेषु कार्याणि प्रतिष्ठाप्यानि पाण्डव ।
वैखानसानां वचनं यथा नो विदितं प्रभो ॥ ६
अजाश्च पृश्नयश्चैव सिकताश्चैव भारत ।
अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः ॥ ७
अवाप्यैतानि कर्माणि वेदोक्तानि धनञ्जय ।
दानमध्ययनं यज्ञो निग्रहश्चैव दुर्ग्रहः ॥ ८
दक्षिणेन च पन्थानमर्यम्णो ये दिवं गताः ।
एतान्क्रियावतां लोकानुक्तवान्पूर्वमप्यहम् ॥ ९
उत्तरेण तु पन्थानं नियमाद्यं प्रपश्यसि ।
एते यागवतां लोका भान्ति पार्थ सनातनाः ॥ १०
तत्रोत्तरां गतिं पार्थ प्रशंसन्ति पुराविदः ।
संतोषो वै स्वर्गतमः संतोषः परमं सुखम् ॥ ११
तुष्टेर्न किंचित्परमं सा सम्यक् प्रतितिष्ठति ।
विनीतक्रोधहर्षस्य सततं सिद्धिरुत्तमा ॥ १२
अत्राप्युदाहरन्तीमां गाथां गीतां ययातिना ।
योऽभिप्रेत्याहरेत्कामान्कूर्मोऽङ्गानीव सर्वशः ॥ १३
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ १४
यदा न भावं कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ १५
विनीतमानमोहश्च बहुसङ्गविवर्जितः ।
तदात्मज्योतिषः साधो निर्वाणमुपपद्यते ॥ १६
इदं तु शृणु मे पार्थ ब्रुवतः संयतेन्द्रियः ।
धर्ममन्ये वृत्तमन्ये धनमीहन्ति चापरे ॥ १७
धनहेतोर्य ईहेत तस्यानीहा गरीयसी ।
भूयान्दोषो हि वित्तस्य यश्च धर्मस्तदाश्रयः ॥ १८
प्रत्यक्षमनुपश्यामि त्वमपि द्रष्टुमर्हसि ।
वर्जनं वर्जनीयानामीहमानेन दुष्करम् ॥ १९
ये वित्तमभिपद्यन्ते सम्यक्त्वं तेषु दुर्लभम् ।
द्रुह्यतः प्रैति तत्प्राहुः प्रतिकूलं यथातथम् ॥ २०
यस्तु संभिन्नवृत्तः स्याद्वीतशोकभयो नरः ।
अल्पेन तृषितो द्रुह्यन् भ्रूणहत्यां न बुध्यते ॥ २१
दुष्यन्त्याददतो भृत्या नित्यं दस्युभयादिव ।
दुर्लभं च धनं प्राप्य भृशं दत्वाऽनुतप्यते ॥ २२
अधनः कस्य किं वाच्यो विमुक्तः सर्वशः सुखी ।
देवस्वमुपगृह्यैव धनेन न सुखी भवेत् ॥ २३
तत्र गाथां यज्ञगीतां कीर्तयन्ति पुराविदः ।
त्रयीमुपाश्रितां लोके यज्ञसंस्तरकारिकाम् ॥ २४

यज्ञाय सृष्टानि धनानि धात्रा
यज्ञाय सृष्टः पुरुषो रक्षिता च ।
तस्मात्सर्वं यज्ञ एवोपयोज्यं
धनं न कामाय हितं प्रशस्तम् ॥ २५

एतत्स्वार्थं च कौन्तेय धनं धनवतां वर ।
धाता ददाति मर्त्येभ्यो यज्ञार्थमिति विद्धि तत् ॥ २६
तस्माद्बुद्ध्यन्ति पुरुषा न हि तत्कस्यचिद्ध्रुवम् ।
श्रद्दधानस्ततो लोको दद्याच्चैव यजेत च ॥ २७
लब्धस्य त्यागमित्याहुर्न भोगं न च संक्षयम् ।
तस्य किं संचयेनार्थः कार्ये ज्यायसि तिष्ठति ॥ २८
ये स्वधर्मादपेतेभ्यः प्रयच्छन्त्यल्पबुद्धयः ।
शतं वर्षाणि ते प्रेत्य पुरीषं भुञ्जते जनाः ॥ २९
अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद्दानधर्मोऽपि दुष्करः ॥ ३०
लब्धानामपि वित्तानां बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥] ३१

अध्यायः ॥

समयं अध्ययनसंप्रदायस्याविच्छेदं आश्रिता आश्रमिणः । ब्रह्मचारिण इत्यर्थः ॥ ४ ॥ कार्याणि राजकार्याणि । प्रतिष्ठाप्यानि तद्वचसानुष्ठेयानीत्यर्थः । वैखानसानां वानप्रस्थानाम् ॥ ६ ॥ अजादयो वालखिल्यवदृषीणां गणविशेषाः ॥ ७ ॥ एतान् द्युरूपान् । क्रियावतां कर्मिणाम् ॥ ९ ॥ उत्तरेण उत्तरतः स्थितम् ॥ १० ॥ सा तुष्टिः परमवैराग्याभिधा उत्तमा सिद्धिः । विनीतक्रोधहर्षस्य क्रोधादिजयिनः सम्यक् प्रतितिष्ठति इतरस्य तु नेत्यर्थः ॥ १२ ॥ आत्मज्योतिषः आत्मज्ञस्य । निर्वाणं मोक्षः ॥ १६ ॥ वृत्तं शीलम् । ईहन्ति ईहन्ते ॥ १७ ॥ धनहेतोः धर्माय वित्तस्यार्जने इति शेषः । तदाश्रयो धर्मो यज्ञादिस्तस्मिन्नपि भूयान्दोषोऽस्ति ॥ १८ ॥ ईहमानेन धनार्थिना ॥ १९ ॥ सम्यक्त्वं साधुकर्म द्रुह्यतः । द्रोहयुक्तानेव तद्धनं प्रैति न त्वद्रोहानिति प्राहुः । हिंसां विना धनप्राप्तिर्नास्तीत्यर्थः । प्राप्तमपि यथायथं सर्वथा प्रतिकूलं नानाभयहेतुत्वात् ॥ २० ॥ अल्पार्थेऽपि ब्रह्महत्यामर्जयतीत्यर्थः ॥ २१ ॥ दुर्लभं धनं प्राप्यानुकूलेभ्योऽपि भृत्येभ्यो दत्त्वा दस्युभयादिव भृशमनुतप्यत इति संबन्धः । वित्तव्यये महद्दुःखं भवतीत्यर्थः ॥ २२ ॥ देवस्वं तथा–त्रैवार्षिकाधिकान्नो यः सहि सोमं पिबेद्विजः । प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेदिति स्मृतेरल्पमपि संचितं धनं देवस्वमेव । तदप्युपसंगृह्य देवेभ्योऽदत्त्वैव न तेन तावतापि सुखी भवेत्किं तु लाभाल्लोभः प्रवर्तत इतिन्यायेन तृष्णाधिक्याद्दुःखमेवानुभवतीत्यर्थः ॥ २३ ॥ गाथां वैदिकजने यज्ञप्रतिष्ठाकरीम् ॥ २४ ॥ चाद्यज्ञार्थेऽपि ॥ २६ ॥ इत्याहुः प्रशस्तमाहुरित्यर्थः । कार्ये त्यागरूपे ॥ २८ ॥ अध्यायः ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

युधिष्ठिरेण व्यासंप्रति निर्वेदवचनम् ॥ १ ॥ व्यासेन युधिष्ठिरंप्रति राज्यपालनविधानम् ॥ २ ॥

युधिष्ठिर उवाच ।
अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च ।
धृष्टद्युम्ने विराटे च द्रुपदे च महीपतौ ॥ १
वृषसेने च धर्मज्ञे धृष्टकेतौ तु पार्थिवे ।
तथाऽन्येषु नरेन्द्रेषु नानादेश्येषु संयुगे ॥ २
न च मुञ्चति मां शोको ज्ञातिघातिनमातुरम् ।
राज्यकामुकमत्युग्रं स्ववंशोच्छेदकारिणम् ॥ ३
यस्याङ्के क्रीडमानेन मया विपरिवर्तितम् ।
स मया राज्यलुब्धेन गाङ्गेयो युधि पातितः ॥ ४
यदा ह्येनं विघूर्णन्तं मदर्थे पार्थसायकैः ।
तक्ष्यमाणं यथा वज्रैः प्रेक्षमाणं शिखण्डिनम् ॥ ५
जीर्णसिंहमिव प्राज्ञं नरसिंहं पितामहम् ।
कीर्यमाणं शरैर्दीप्तैर्दृष्ट्वा मे व्यथितं मनः ॥ ६
प्राङ्मुखं सीदमानं च रथात्पररथारुजम् ।
घूर्णमानं यथा शैलं तदा मे कश्मलोऽभवत् ॥ ७
यः सबाणधनुष्पाणिर्योधयामास भार्गवम् ।
बहून्यहानि कौरव्यः कुरुक्षेत्रे महामृधे ॥ ८
समेतं पार्थिवं क्षत्रं वाराणस्यां नदीसुतः ।
कन्यार्थमाह्वयद्वीरो रथेनैकेन संयुगे ॥ ९
येन चोग्रायुधो राजा चक्रवर्ती दुरासदः ।
दग्धश्चास्त्रप्रतापेन स मया युधि पातितः ॥ १०
स्वयं मृत्युं रक्षमाणः पाञ्चाल्यं यः शिखण्डिनम् ।
न बाणैः पातयामास सोऽर्जुनेन निपातितः ॥ ११
यदैनं पतितं भूमावपश्यं रुधिरोक्षितम् ।
तदैवाविशदत्युग्रो ज्वरो मां मुनिसत्तम ॥ १२
येन संवर्धिता बाला येन स्म परिरक्षिताः ।
स मया राज्यलुब्धेन पापेन गुरुघातिना ।
अल्पकालस्य राज्यस्य कृते मूढेन पातितः ॥ १३
आचार्यश्च महेष्वासः सर्वपार्थिवपूजितः ।
अभिगम्य रणे मिथ्या पापेनोक्तः सुतं प्रति ॥ १४
तन्मे दहति गात्राणि यन्मां गुरुरभाषत ।
सत्यमाख्याहि राजंस्त्वं यदि जीवति मे सुतः ॥ १५
सत्यमामर्शयन्विप्रो मयि तत्परिपृष्टवान् ।
कुञ्जरं चान्तरं कृत्वा मिथ्योपचरितो मया ॥ १६
सुभृशं राज्यलुब्धेन पापेन गुरुघातिना ।
सत्यकञ्चुकमुन्मुच्य मया स गुरुराहवे ॥ १७
अश्वत्थामा हत इति निरुक्तः कुञ्जरे हते ।
काँल्लोकांस्तु गमिष्यामि कृत्वा कर्म सुदुष्करम् १८
अघातयं च यत्कर्णं समरेष्वपलायिनम् ।
ज्येष्ठभ्रातरमत्युग्रः को मत्तः पापकृत्तमः ॥ १९
अभिमन्युं च यद्बालं जातं सिंहमिवाद्रिषु ।
प्रावेशयमहं लुब्धो वाहिनीं द्रोणपालिताम् ॥ २०
तदाप्रभृति बीभत्सुं न शक्नोमि निरीक्षितुम् ।
कृष्णं च पुण्डरीकाक्षं किल्बिषी भ्रूणहा यथा २१
द्रौपदीं चाप्यदुःखार्हां पञ्चपुत्रैर्विनाकृताम् ।
शोचामि पृथिवीं हीनां पञ्चभिः पर्वतैरिव ॥ २२
सोऽहमागस्करः पापः पृथिवीनाशकारकः ।
आसीन एवमेवेदं शोषयिष्ये कलेवरम् ॥ २३
प्रायोपविष्टं जानीध्वमथ मां गुरुघातिनम् ।
जातिष्वन्यास्वपि यथा न भवेयं कुलान्तकृत् २४
न भोक्ष्ये न च पानीयमुपयोक्ष्ये कथंचन ।
शोषयिष्ये प्रियान्प्राणानिहस्थोऽहं तपोधनाः २५
यथेष्टं गम्यतां काममनुजाने प्रसाद्य वः ।
सर्वे मामनुजानीत त्यक्ष्यामीदं कलेवरम् ॥ २६
वैशंपायन उवाच ।
तमेवंवादिनं पार्थं बन्धुशोकेन विह्वलम् ।
मैवमित्यब्रवीद्व्यासो निगृह्य मुनिसत्तमः ॥ २७
व्यास उवाच ।
अतिवेलं महाराज न शोकं कर्तुमर्हसि ।
पुनरुक्तं तु वक्ष्यामि दिष्टमेतदिति प्रभो ॥ २८
संयोगा विप्रयोगाश्च जातानां प्राणिनां ध्रुवम् ।
बुद्बुदा इव तोयेषु भवन्ति नभवन्ति च ॥ २९

वृषसेने कर्णे ॥ २ ॥ पररथारुजं पररथानां पीडकम् ॥ ७ ॥ आमर्शयन्निश्चिन्वन् ॥ १६ ॥ अतिवेलमत्यर्थम् ॥ २८ ॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ३०
सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम् ।
भूतिः श्रीर्ह्रीर्धृतिः कीर्तिर्दक्षे वसति नालसे ॥३१
नालं सुखाय सुहृदो नालं दुःखाय शत्रवः ।
न च प्रज्ञालमर्थेभ्यो न सुखेभ्योऽप्यलं धनम् ३२
यथा सृष्टोऽसि कौन्तेय धात्रा कर्मसु तत्कुरु ।
अत एव हि सिद्धिस्ते नेशस्त्वं ह्यात्मनो नृप ॥३३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

व्यासेन युधिष्ठिरंप्रत्यश्मजनकसंवादानुवादपूर्वकं क्षात्रधर्मविधानम् ॥ १ ॥

वैशंपायन उवाच ।
ज्ञातिशोकाभितप्तस्य प्राणानिष्टांस्त्यजिष्यतः ।
ज्येष्ठस्य पाण्डुपुत्रस्य व्यासः शोकमपानुदत् ॥ १
व्यास उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अश्मगीतं नरव्याघ्र तन्निबोध युधिष्ठिर ॥ २
अश्मानं ब्राह्मणं प्राज्ञं वैदेहो जनको नृपः ।
संशयं परिपप्रच्छ दुःखशोकसमन्वितः ॥ ३
जनक उवाच ।
आगमे यदि वाऽपाये ज्ञातीनां द्रविणस्य च ।
नरेण प्रतिपत्तव्यं कल्याणं कथमिच्छता ॥ ४
अश्मोवाच ।
उत्पन्नमिममात्मानं नरस्यानन्तरं ततः ।
तानितान्यनुवर्तन्ते दुःखानि च सुखानि च ॥५
तेषामन्यतरापत्तौ यद्यदेवोपसेवते ।
तदस्य चेतनामाशु हरत्यभ्रमिवानिलः ॥ ६
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः।
इत्येभिर्हेतुभिस्तस्य त्रिभिश्चित्तं प्रसिच्यते ॥ ७
संप्रसक्तमना भोगान्विसृज्य पितृसंचितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥ ८
तमतिक्रान्तमर्यादमाददानमसांप्रतम् ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ ९
ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः ।
परेण ते वर्षशतान्न भविष्यन्ति पार्थिव ॥ १०
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
सर्वप्राणभृतां वृत्तं प्रेक्षमाणस्ततस्ततः ॥ ११
मानसानां पुनर्योनिर्दुःखानां चित्तविभ्रमः ।
अनिष्टोपनिपातो वा तृतीयं नोपपद्यते ॥ १२
एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते तथा संस्पर्शजान्यपि ॥ १३
जरामृत्यू हि भूतानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ १४
न कश्चिज्जात्वतिक्रामेज्जरामृत्यू हि मानवः ।
अपि सागरपर्यन्तां विजित्येमां वसुंधराम् ॥ १५
सुखं वा यदि वा दुःखं भूतानां पर्युपस्थितम् ।
प्राप्तव्यमवशैः सर्वं परिहारो न विद्यते ॥ १६
पूर्वे वयसि मध्ये वाऽप्युत्तरे वा नराधिप ।
अवर्जनीयास्तेऽर्था वै काङ्क्षिता ये ततोऽन्यथा १७
अप्रियैः सह संयोगो विप्रयोगश्च सुप्रियैः ।
अर्थानर्थौ सुखं दुःखं विधानमनुवर्तते ॥ १८

---

आलस्यं तत्काले सुखमपि दुःखान्तम् । दाक्ष्यं तत्काले दुःखमपि सुखोदयम् । भूतिः अणिमादिः ॥ ३१ ॥ षड्विंशतितमोऽध्यायः ॥ २६ ॥

प्राणानभ्युत्सिसृक्षत इति झ. पाठः । तत्र अभ्युत्सिसृक्षतः त्यक्तुमिच्छत इत्यर्थः ॥ १ ॥ आत्मानं देहम् । उत्पन्नमनु अनन्तरं अव्यवधानेनैव ॥ ५ ॥ प्रसिच्यते क्लिन्नं श्लथं भवतीत्यर्थः ॥ ७ ॥ भोगान् भोग्यार्थान् धनादीन् विसृज्य आदानं चौर्यं साधु हितम् ॥ ८ ॥ असांप्रतमयुक्तम् । लुब्धा व्याधाः ॥ ९ ॥ वर्षशतात् परेण ऊर्ध्वम् ॥ १० ॥ तेषां दारिद्र्योत्थानां भैषज्यं प्रतीकारम् ॥ ११ ॥ संस्पर्शजानि विषयसङ्गजानि ॥ १३ ॥ तेऽर्था जरादयः पदार्थाः । ततोऽन्यथाऽजरत्वादिरूपेण ये मनुष्यस्य काङ्क्षिता इष्टाः ॥१७॥ विधानमदृष्टम् ॥१८॥

प्रादुर्भावश्च भूतानां देहत्यागस्तथैव च ।
प्राप्तिव्यायामयोगश्च सर्वमेतत्प्रतिष्ठितम् ॥ १९
गन्धवर्णरसस्पर्शा निवर्तन्ते स्वभावतः ।
तथैव सुखदुःखानि विधानमनुवर्तते ॥ २०
आसनं शयनं यानमुत्थानं पानभोजनम् ।
नियतं सर्वभूतानां कालेनैव भवत्युत ॥ २१
वैद्याश्चाप्यातुराः सन्ति बलवन्तश्च दुर्बलाः ।
स्त्रीमन्तश्चापरे षण्ढा विचित्रः कालपर्ययः ॥ २२
कुले जन्म तथा वीर्यमारोग्यं रूपमेव च ।
सौभाग्यमुपभोगश्च भवितव्येन लभ्यते ॥ २३
सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम् ।
नास्ति पुत्रः समृद्धानां विचित्रं विधिचेष्टितम् २४
व्याधिरग्निर्जलं शस्त्रं बुभुक्षाश्वापदो विषम् ।
ज्वरश्च मरणं जन्तोरुच्चाच्च पतनं तथा ॥ २५
निर्याणे यस्य यद्दिष्टं तेन गच्छति सेतुना ।
दृश्यते नाप्यतिक्रामन्न निष्क्रान्तोऽथवा पुनः ।
दृश्यते चाप्यतिक्रामन्न निग्राह्योऽथवा पुनः ॥२६
दृश्यते हि युवैवेह विनश्यन्वसुमान्नरः ।
दरिद्रश्च परिक्लिष्टः शतवर्षो जरान्वितः ॥ २७
अकिञ्चनाश्च दृश्यन्ते पुरुषाश्चिरजीविनः ।
समृद्धे च कुले जाता विनश्यन्ति पतङ्गवत् ॥ २८
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
दरिद्राणां तु भूयिष्ठं काष्ठमश्मा हि जीर्यते ॥२९
अहमेतत्करोमीति मन्यते कालनोदितः ।
यद्यदिष्टमसंतोषाद्दुरात्मा पापमाचरेत् ॥ ३०
मृगयाक्षाः स्त्रियः पानं प्रसङ्गा निन्दिता बुधैः ।
दृश्यन्ते पुरुषाश्चात्र संप्रयुक्ता बहुश्रुताः ॥ ३१
इति कालेन सर्वार्थानीप्सितानीप्सितानिह ।
स्पृशन्ति सर्वभूतानि निमित्तं नोपलभ्यते ॥ ३२
वायुमाकाशमग्निं च चन्द्रादित्यावहःक्षपे ।
ज्योतींषि सरितः शैलान्कः करोति बिभर्ति च ॥३३
शीतमुष्णं तथा वर्षं कालेन परिवर्तते ।
एवमेव मनुष्याणां सुखदुःखे नरर्षभ ॥ ३४
नौषधानि न शस्त्राणि न होमा न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया चापि मानवम् ॥ ३५
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ३६
ये च निष्परुषैरुक्तगीतवाद्यैरुपस्थिताः ।
ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ॥३७
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ ३८
नैवास्य कश्चिद्भविता नायं भवति कस्यचित् ।
पथि संगतमेवेदं दारबन्धुसुहृज्जनैः ॥ ३९
कासे क्व च गमिष्यामि कोऽन्वहं किमिहास्थितः ।
कस्मात्किमनुशोचेयमित्येवं स्थापयेन्मनः ॥ ४०
अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ ।
पथि संगतमेवैतद्भ्राता माता पिता सखा ॥ ४१
न दृष्टपूर्वं प्रत्यक्षं परलोकं विदुर्बुधाः ।
आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता ॥ ४२
कुर्वीत पितृदैवत्यं धर्म्याणि च समाचरेत् ।
यजेच्च विद्वान्विधिवत्त्रिवर्गं चाप्युपाचरेत् ॥ ४३
सन्निमज्जेज्जगदिदं गम्भीरे कालसागरे ।
जरामृत्युमहाग्राहे न कश्चिदवबुध्यते ॥ ४४
आयुर्वेदमधीयानाः केवलं सपरिग्रहाः ।
दृश्यन्ते बहवो वैद्या व्याधिभिः समभिप्लुताः ॥४५
ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।
न मृत्युमतिवर्तन्ते वेलामिव महोदधिः ॥ ४६
रसायनविदश्चैव सुप्रयुक्तरसायनाः ।
दृश्यन्ते जरया भग्ना नागा नागैरिवोत्तमैः ॥ ४७
तथैव तपसोपेताः स्वाध्यायाध्ययने रताः ।

---

प्राप्तिर्लाभो व्यायामः श्रमः । अलाभ इतियावत् । तयोर्योगः प्रतिष्ठितं विधानमित्यनुषज्यते ॥ १९ ॥ फलस्था गन्धादयो निवर्तन्ते पूर्वेपूर्वे उत्तरेउत्तरे उपयान्ति तथैव सुखादीनि अप्रत्याख्येयानि अनुसृत्य वर्तते विद्वान् ॥ २० ॥ बुभुक्षाः क्षुत्प्रभृतयः ॥ २५ ॥ प्रसङ्गा युद्धविवादादयः । अत्र मृगयादौ ॥ ३१ ॥ उपस्थिताः सेविताः । कालो मृत्युः । ये चैव पुरुषाः स्त्रीभिर्गीतवाद्यैरुपस्थिता इति झ. पाठः ॥ ३७ ॥ संसारेषु व्यतीतेषु तानि तेषु तदा तदेति ड. थ. पाठः ॥ ३८ ॥ स्थापयेद्विचारे इति शेषः ॥ ४० ॥ नागा गजाः । उत्तमैर्बलिष्ठैः ॥ ४७ ॥

दारागारे यज्ञशीलाश्च न तरन्ति जरान्तकौ ॥ ४८
न ह्यहानि निवर्तन्ते न मासा न पुनः समाः ।
जातानां सर्वभूतानां न पुनर्वै समागमः ॥ ४९
सोऽयं विपुलमध्वानं कालेन ध्रुवमध्रुवः ।
स्रोतमेव समभ्येति सर्वभूतनिषेवितम् ॥ ५०
देहो वा जीविताद्येति देही वाऽप्येति देहतः ।
पथि संगतमेवेदं दारैरन्यैश्च बन्धुभिः ॥ ५१
नायमत्यन्तसंवासो लभ्यते जातु केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ५२
क्व नु तेऽद्य पिता राजन्क्व नु तेऽद्य पितामहाः ।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ ॥ ५३
न ह्येव पुरुषो द्रष्टा स्वर्गस्य नरकस्य च ।
आगमस्तु सतां चक्षुर्नृपते तमिहाचर ॥ ५४
चरितब्रह्मचर्यो हि प्रजायेत यजेत च ।
पितृदेवमनुष्याणामानृण्यादनसूयकः ॥ ५५
स यज्ञशीलः प्रजने निविष्टः
प्राग्ब्रह्मचारी प्रविभक्तभैक्षः ।
आराधयेत्स्वर्गमिमं च लोकं
परं च मुक्त्वा हृदयव्यलीकम् ॥ ५६
सम्यक्स्वधर्मं चरतो नृपस्य
द्रव्याणि चाभ्याहरतो यथावत् ।
प्रवृद्धचक्रस्य यशोऽभिवर्धते
सर्वेषु लोकेषु चराचरेषु ॥ ५७
इत्येवमाकर्ण्य विदेहराजो
वाक्यं समग्रं परिपूर्णहेतु ।
अश्मानमामन्त्र्य विशुद्धबुद्धि-
र्ययौ गृहं स्वं प्रति शान्तशोकः ॥ ५८
तथा त्वमप्यद्य विमुच्य शोक-
मुत्तिष्ठ शक्रोपम हर्षमेहि ।
क्षात्रेण धर्मेण मही जिता ते
तां भुङ्क्ष्व कुन्तीसुत मावमंस्थाः ॥ ५९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ॥ २८ ॥

कृष्णेन युधिष्ठिरंप्रति सृञ्जयाय नारदोक्तषोडशराजोपाख्यानकथनम् ॥ १ ॥

वैशंपायन उवाच ।
अव्याहरति राजेन्द्रे धर्मपुत्रे युधिष्ठिरे ।
गुडाकेशो हृषीकेशमभ्यभाषत पाण्डवः ॥ १
अर्जुन उवाच ।
ज्ञातिशोकाभिसंतप्तो धर्मपुत्रः परंतपः ।
एष शोकार्णवे मग्नस्तमाश्वासय माधव ॥ २
सर्वे स्म ते संशयिताः पुनरेव जनार्दन ।
अस्य शोकं महाप्राज्ञ प्रणाशयितुमर्हसि ॥ ३
वैशंपायन उवाच ।
एवमुक्तस्तु गोविन्दो विजयेन महात्मना ।
पर्यवर्तत राजानं पुण्डरीकेक्षणोऽच्युतः ॥ ४
अनतिक्रमणीयो हि धर्मराजस्य केशवः ।
बाल्यात्प्रभृति गोविंदः प्रीत्या चाभ्यधिकोऽर्जुनात् ॥
संप्रगृह्य महाबाहुर्भुजं चन्दनभूषितम् ।
शैलस्तम्भोपमं शौरिरुवाचाभिविनोदयन् ॥ ६
शुशुभे वदनं तस्य सुदंष्ट्रं चारुलोचनम् ।
व्याकोचमिव विस्पष्टं पद्मं सूर्यविबोधितम् ॥ ७
वासुदेव उवाच ।
मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणम् ।
न हि ते सुलभा भूयो ये हताऽस्मिन्रणाजिरे ॥ ८
स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने ।
तथा ते क्षत्रिया राजन्ये व्यतीता महारणे ॥ ९

संवासः सहावस्थानम् ॥ ५२ ॥ प्रजायेत पुत्रादीनुत्पादयेत् । आनृण्याद्धेतोः ॥ ५५ ॥ प्रजने प्रजोत्पादने । हृदयव्यलीकं हृत्स्थमप्रियम् ॥ ५६ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

ते वयम् ॥३॥ पर्यवर्तत अभिमुखोऽभूत् ॥४॥ भुजं राज्ञः । अभिविनादयन् इति ट. ड. थ. पाठः ॥ ६ ॥ व्याकोचं विकसितम् ॥ ७ ॥ हताः अस्मिन्संधिरार्षः ॥ ८ ॥ लाभाः अर्थाः

सर्वे ह्यभिमुखाः शूरा निहता रणशोभिनः ।
नैषां कश्चित्पृष्ठतो वा पलायन्वा निपातितः॥ १०
सर्वे त्यक्त्वाऽऽत्मनः प्राणान्युद्ध्वा वीरा महामृधे।
शस्त्रपूता दिवं प्राप्ता न ताञ्छोचितुमर्हसि॥ ११
क्षत्रधर्मरताः शूरा वेदवेदाङ्गपारगाः ।
प्राप्ता वीरगतिं पुण्यां तान्न शोचितुमर्हसि ।
मृतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन्॥ १२
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सृञ्जयं पुत्रशोकार्तं यथाऽयं नारदोऽब्रवीत्॥१३
नारद उवाच ।
सुखदुःखैरहं त्वं च प्रजाः सर्वाश्च सृञ्जय ।
अविमुक्ता मरिष्यामस्तत्र का परिदेवना॥ १४
महाभाग्यं पुरा राज्ञां कीर्त्यमानं मया शृणु ।
गच्छावधानं नृपते ततो दुःखं प्रहास्यसि॥ १५
मृतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् ।
शममानय संतापं शृणु विस्तरशश्च मे ।
क्रूरग्रहाभिशमनमायुर्वर्धनमुत्तमम्॥ १६
अग्रिमाणां क्षितिभुजामुदारं च मनोहरम् ।
आविक्षितं मरुत्तं च मृतं सृञ्जय शुश्रुम॥ १७
यस्य सेन्द्राः सवरुणा बृहस्पतिपुरोगमाः ।
देवा विश्वसृजो राज्ञो यज्ञमीयुर्महात्मनः॥ १८
यः स्पर्धामानयच्छक्रं देवराजं पुरंदरम् ।
शक्रप्रियैषी यं विद्वान्प्रत्याचष्ट बृहस्पतिः॥ १९
संवर्तो याजयामास यं पीडार्थं बृहस्पतेः॥ २०
यस्मिन्प्रशासति महीं नृपतौ राजसत्तम ।
अकृष्टपच्या पृथिवी विबभौ सस्यमालिनी॥ २१
आविक्षितस्य वै सत्रे विश्वेदेवाः सभासदः ।
मरुतः परिवेष्टारः साध्याश्चासन्महात्मनः॥ २२
मरुद्गणा मरुत्तस्य यत्सोममपिबंस्ततः ।
देवान्मनुष्यान्गन्धर्वानत्यरिच्यन्त दक्षिणाः॥ २३
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः॥ २४
सुहोत्रं च द्वैतिथिनं मृतं सृञ्जय शुश्रुम ।
यस्मै हिरण्यं ववृषे मघवा परिवत्सरम्॥ २
सत्यनामा वसुमती यं प्राप्यासीज्जनाधिपम् ।
हिरण्यमवहन्नद्यस्तस्मिञ्जनपदेश्वरे॥ २
मत्स्यान्कर्कटकान्नक्रान्मकराञ्छिशुकानपि ।
नदीष्ववासृजद्राजन्मघवा लोकपूजितः॥ २
हैरण्यान्पातितान्दृष्ट्वा मत्स्यान्मकरकच्छपान् ।
सहस्रशोऽथ शतशस्ततोऽस्मयत वैतिथिः॥ २
तद्धिरण्यमपर्यन्तमावृतं कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समार्पयत्॥२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
अदक्षिणमयज्वानं श्वैत्य संशाम्य माशुचः॥ ३
अङ्गं बृहद्रथं चैव मृतं सृञ्जय शुश्रुम ।
यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत्॥ ३
सहस्रं च सहस्राणां कन्या हेमपरिष्कृताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत्॥ ३
यः सहस्रं सहस्राणां गजानां पद्ममालिनाम् ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत्॥ ३
शतं शतसहस्राणि वृषाणां हेममालिनाम् ।
गवां सहस्रानुचरं दक्षिणामत्यकालयत्॥ ३
अङ्गस्य यजमानस्य तदा विष्णुपदे गिरौ ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः॥३
यस्य यज्ञेषु राजेन्द्र शतसङ्ख्येषु वै पुरा ।
देवान्मनुष्यान्गन्धर्वानत्यरिच्यन्त दक्षिणाः॥३
न जातो जनिता नान्यः पुमान्यः संप्रदास्यति
यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु॥ ३
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः॥ ३
शिबिमौशीनरं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत्समवेष्टयत्॥ ३
महता रथघोषेण पृथिवीमनुनादयन् ।

॥ ९ ॥ महाभाग्य माहात्म्यम् ॥ १५ ॥ श्वैत्यमानय संतापमिति ट. ङ. पाठः ॥ १६ ॥ याग मारुत्तिर्विति प्रत्याचष्ट प्रत्याख्यातवान् ॥ १९ ॥ चतुर्भद्रतरः चत्वारि धर्मज्ञानवैराग्यैश्वर्याख्यानि भद्राणि यस्मिन्स चतुर्भद्रः । त्वया अवधिभूते त्वत्तोऽतिशयेन चतुर्भद्र इत्यर्थः ॥ २४ ॥ अवासृजत् यज्ञामुत्सृष्टवान् ॥ ३१ ॥ अत्यकालयत् दत्तवान् ॥ ३२ ॥

एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ॥ ४०
यावदस्य गवाश्वं स्यादारण्यैः पशुभिः सह ।
तावतीः प्रददौ गाः स शिबिरौशीनरोऽध्वरे ॥४१
न वोढारं धुरं तस्य कंचिन्मेने प्रजापतिः ।
न भूतं न भविष्यं च सर्वराजसु सृञ्जय ।
अन्यत्रौशीनराच्छैब्याद्राजर्षेरिन्द्रविक्रमात् ॥ ४२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ४३
अदक्षिणमयज्वानं पुत्रं संस्मृत्य मा शुचः ॥४४
भरतं चैव दौष्यन्तिं मृतं सृञ्जय शुश्रुम ।
शाकुन्तलं महात्मानं भूरिद्रविणतेजसम् ॥ ४५
योऽबध्नात्त्रिशतं चाश्वान्देवेभ्यो यमुनामनु ।
सरस्वतीं विंशतिं च गङ्गामनु चतुर्दश ॥ ४६
अश्वमेधसहस्रेण राजसूयशतेन च ।
इष्टवान्स महातेजा दौष्यन्तिर्भरतः पुरा ॥ ४७
भरतस्य महत्कर्म सर्वराजसु पार्थिवाः ।
खं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ॥४८
परं सहस्राद्योऽबध्नाद्धयान्वेदीर्वितत्य च ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ॥ ४९
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ५०
रामं दाशरथिं चैव मृतं सृञ्जय शुश्रुम ।
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ५१
नाधनो यस्य विषये नानर्थः कस्यचिद्भवेत् ।
सर्वस्यासीत्पितृसमो रामो राज्यं यदन्वशात् ५२
कालवर्षी च पर्जन्यः सस्यानि समपादयत् ।
नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ॥५३
प्राणिनो नाप्सु मज्जन्ति नानर्थे पावकोऽदहत् ।
न व्यालतो भयं चासीद्रामे राज्यं प्रशासति ५४
आसन्वर्षसहस्रिण्यस्तथा वर्षसहस्रकाः ।
अरोगाः सर्वसिद्धार्था रामे राज्यं प्रशासति ॥५५
नान्योन्येन विवादोऽभूत्स्त्रीणामपि कुतो नृणाम् ।
धर्मनित्याः प्रजाश्चासन्रामे राज्यं प्रशासति ॥५६
संतुष्टाः सर्वसिद्धार्था निर्भयाः स्वैरचारिणः ।
नराः सत्यव्रताश्चासन्रामे राज्यं प्रशासति ॥ ५७
नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः ।
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ॥ ५८
स चतुर्दश वर्षाणि वने प्रोष्य महातपाः ।
दशाश्वमेधाञ्जारूथ्यानाजहार निरर्गलान् ॥ ५९
युवा श्यामो लोहिताक्षो मातङ्ग इव यूथपः ।
आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ॥६०
दशवर्षसहस्राणि दशवर्षशतानि च ।
अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ॥ ६१
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यं मा पुत्रमनुतप्यथाः ॥ ६२
भगीरथं च राजानं मृतं सृञ्जय शुश्रुम ।
यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ॥६३
असुराणां सहस्राणि बहूनि सुरसत्तमः ।
अजयद्बाहुवीर्येण भगवान्पाकशासनः ॥ ६४
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ ६५
सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः ।
शतंशतं रथे नागाः पद्मिनो हेममालिनः ॥ ६६
सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः ।
गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकम् ॥ ६७
उपह्वरे निवसतो यस्याङ्के निषसाद ह ।
गङ्गा भागीरथी तस्मादुर्वशी चाभवत्पुरा ॥ ६८
भूरिदक्षिणमिक्ष्वाकुं यजमानं भगीरथम् ।
त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ॥ ६९
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ७०

---

वर्षसहस्रिण्यः स्त्रियः । वर्षसहस्रकाः पुरुषाः ॥ ५५ ॥ द्रोणदुघाः द्रोणपरिमितं क्षीरं दुहन्ति ताः ॥ ५८ ॥ जारूथ्यान् स्तुत्यान् । त्रिगुणदक्षिणानित्यन्ये । निरर्गलानवारितद्वारान् ॥ ५९ ॥ चतुर्युजश्चतुरश्वाः ॥ ६६ ॥ उपह्वरे समीपे । अङ्के ऊरौ निषसाद आसांचक्रे । तस्माद्योगात्सा उर्वशी ऊरौ वासो यस्याः सा इति योगात् । ऊर्वसीत्यपेक्षिते ह्रस्वत्वं वर्णविपर्ययश्च पृषोदरादित्वात् ज्ञेयः ॥ ६८ ॥

दिलीपं च महात्मानं मृतं सृञ्जय शुश्रुम ।
यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ॥७१
य इमां वसुसंपूर्णां वसुधां वसुधाधिपः ।
ददौ तस्मिन्महायज्ञे ब्राह्मणेभ्यः समाहितः ॥७२
यस्येह यजमानस्य यज्ञेयज्ञे पुरोहितः ।
सहस्रं वारणान्हैमान्दक्षिणामत्यकालयत् ॥ ७३
यस्य यज्ञे महानासीद्यूपः श्रीमान्हिरण्मयः ।
तं देवाः कर्म कुर्वाणाः शक्रज्येष्ठा उपासत ॥ ७४
चषाले यस्य सौवर्णे तस्मिन्यूपे हिरण्मये ।
ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा ॥ ७५
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ॥ ७६
एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे ।
यस्येभा हेमसंछन्नाः पथि मत्ताः स्म शेरते ॥ ७७
राजानं शतधन्वानं दिलीपं सत्यवादिनम् ।
येऽपश्यन्सुमहात्मानं तेऽपि स्वर्गजितो नराः ॥७८
त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायशब्दः ज्याशब्दः शब्दो वै दीयतामिति ॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ८०
मान्धातारं यौवनाश्वं मृतं सृञ्जय शुश्रुम ।
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ॥ ८१
समृद्धो युवनाश्वस्य जठरे यो महात्मनः ।
पृषदाज्योद्भवः श्रीमांस्त्रिलोकविजयी नृपः ॥८२
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योन्यमब्रुवन्देवाः कमयं धास्यतीति वै ॥८३
मामेव धास्यतीत्येवमिन्द्रोऽथाभ्युपपद्यत ।
मांधातेति ततस्तस्य नाम चक्रे शतक्रतुः ॥ ८४
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥८५
तं पिबन्पाणिमिन्द्रस्य शतमह्ना व्यवर्धत ।
स आसीद्द्वादशसमो द्वादशाहेन पार्थिवः ॥ ८६
तमिमं पृथिवी सर्वा एकाह्ना समपद्यत ।
धर्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ॥ ८७
यश्चाङ्गारं तु नृपतिं मरुत्तमसितं गयम् ।
अङ्गं बृहद्रथं चैव मान्धाता समरेऽजयत् ॥ ८८
यौवनाश्वो यदाङ्गारं समरे प्रत्ययुध्यत ।
विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ॥ ८९
यत्र सूर्य उदेति स्म यत्र च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ९०
अश्वमेधशतेनेष्ट्वा राजसूयशतेन च ।
अददद्रोहितान्मत्स्यान्ब्राह्मणेभ्यो विशांपते ॥९१
हैरण्यान्योजनोत्सेधानायतान्दशयोजनम् ।
अतिरिक्तान्द्विजातिभ्यो व्यभजंस्त्वितरे जनाः ॥९२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ९३
ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं कृत्स्नां विजित्य सहसागराम् ॥९४
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्महीम् ।
ईजानः क्रतुभिर्मुख्यैः पर्यगच्छद्वसुन्धराम् ॥ ९५
इष्ट्वा क्रतुसहस्रेण वाजपेयशतेन च ।
तर्पयामास विप्रेन्द्रांस्त्रिभिः काञ्चनपर्वतैः ॥ ९६
व्यूढेनासुरयुद्धेन हत्वा दैतेयदानवान् ।
व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥९७
अन्त्येषु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान् ।
पूरुं राज्येऽभिषिच्याथ सदारः प्राविशद्वनम् ॥९८
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ९९

---

सप्तधा सप्तस्वरानुसारेणावादयदिति संबन्धः ॥ ७५ ॥ मम पुरत इति शेषः । मां लक्षीकृत्येत्यर्थः ॥ ७६ ॥ शतधन्वानं शतं अनन्तान् सहते धनुर्यस्य तं शतधन्वानम् । मध्यमपद-लोपी समासः ॥ ७८ ॥ पृषदाज्यं दधिमिश्रमाज्यं कस्यचिदर्थे पुत्रोत्पादनाय निर्मितं तद्युवनाश्वेन पीतं तत् रेतोरुधिरयोगं विनापि तदुदरे गर्भोऽभवत् । स पितुः पार्श्वं भित्त्वा निःसा-रितो देवैरित्याख्यायिकार्थोऽत्र सूचितः ॥ ८२ ॥ अह्ना एकेन शतं पलानि व्यवर्धत । द्वादशवर्षतुल्यः ॥ ८६ ॥ अभेदि भिन्ना ॥८९॥ मत्स्यान् हैरण्यानिति संबन्धः ॥९१॥ शम्या स्थूलबुध्नः काष्ठदण्डः स बलवता क्षिप्तो यावद्दूरं पतेत्तावान्देशः शम्यापातः तावतान्तरेण पुरःपुरो यज्ञवेदीं कुर्वाणो वसुधरां पर्यगच्छत् परित्यज्य समुद्रतीरं प्राप्त इत्यर्थः ॥ ९५ ॥ व्यभजत्पुत्रेभ्यो

दिलीपं च महात्मानं मृतं सृञ्जय शुश्रुम ।
यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ॥७१
य इमां वसुसंपूर्णां वसुधां वसुधाधिपः ।
ददौ तस्मिन्महायज्ञे ब्राह्मणेभ्यः समाहितः ॥७२
यस्येह यजमानस्य यज्ञेयज्ञे पुरोहितः ।
सहस्रं वारणान्हैमान्दक्षिणामत्यकालयत् ॥ ७३
यस्य यज्ञे महानासीद्यूपः श्रीमान्हिरण्मयः ।
तं देवाः कर्म कुर्वाणाः शक्रज्येष्ठा उपासत ॥ ७४
चषाले यस्य सौवर्णे तस्मिन्यूपे हिरण्मये ।
ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा ॥ ७५
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ॥ ७६
एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे ।
यस्येभा हेमसंछन्नाः पथि मत्ताः स्म शेरते ॥ ७७
राजानं शतधन्वानं दिलीपं सत्यवादिनम् ।
येऽपश्यन्सुमहात्मानं तेऽपि स्वर्गजितो नराः ॥७८
त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायशब्दः ज्याशब्दः शब्दो वै दीयतामिति ॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ८०
मान्धातारं यौवनाश्वं मृतं सृञ्जय शुश्रुम ।
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ॥ ८१
समृद्धो युवनाश्वस्य जठरे यो महात्मनः ।
पृषदाज्योद्भवः श्रीमांस्त्रिलोकविजयी नृपः ॥८२
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योन्यमब्रुवन्देवाः कमयं धास्यतीति वै ॥ ८३
मामेव धास्यतीत्येवमिन्द्रोऽथाभ्युपपद्यत ।
मांधातेति ततस्तस्य नाम चक्रे शतक्रतुः ॥ ८४
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥८५
तं पिबन्पाणिमिन्द्रस्य शतमह्ना व्यवर्धत ।
स आसीद्द्वादशसमो द्वादशाहेन पार्थिवः ॥ ८६
तमिमं पृथिवी सर्वा एकाह्ना समपद्यत ।
धर्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ॥ ८७
यश्चाङ्गारं तु नृपतिं मरुत्तमसितं गयम् ।
अङ्गं बृहद्रथं चैव मान्धाता समरेऽजयत् ॥ ८८
यौवनाश्वो यदाङ्गारं समरे प्रत्ययुध्यत ।
विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ॥ ८९
यत्र सूर्य उदेति स्म यत्र च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ९०
अश्वमेधशतेनेष्ट्वा राजसूयशतेन च ।
अददद्रोहितान्मत्स्यान्ब्राह्मणेभ्यो विशांपते ॥ ९१
हैरण्यान्योजनोत्सेधानायतान्दशयोजनम् ।
अतिरिक्तान्द्विजातिभ्यो व्यभजंस्त्वितरे जनाः ९२
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ९३
ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं कृत्स्नां विजित्य सहसागराम् ॥९४
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्महीम् ।
ईजानः क्रतुभिर्मुख्यैः पर्यगच्छद्वसुन्धराम् ॥ ९५
इष्ट्वा क्रतुसहस्रेण वाजपेयशतेन च ।
तर्पयामास विप्रेन्द्रांस्त्रिभिः काञ्चनपर्वतैः ॥ ९६
व्यूढेनासुरयुद्धेन हत्वा दैतेयदानवान् ।
व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥९७
अन्त्येषु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान् ।
पूरुं राज्येऽभिषिच्याथ सदारः प्राविशद्वनम् ॥९८
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ९९

---

सप्तधा सप्तस्वरानुसारेणावादयदिति संबन्धः ॥ ७५ ॥ मम पुरत इति शेषः । मां लक्षीकृत्येत्यर्थः ॥ ७६ ॥ शतधन्वानं शतं अनन्तान् सहते धनुर्यस्य तं शतधन्वानम् । मध्यमपदलोपी समासः ॥ ७८ ॥ पृषदाज्यं दधिमिश्रमाज्यं कस्यचिदर्थे पुत्रोत्पादनाय निर्मितं तद्युवनाश्वेन पीतं तत् रेतोरुधिरयोगं विनापि तदुदरे गर्भोऽभवत् । स पितुः पार्श्वं भित्त्वा निःसारितो देवैरित्याख्यायिकार्थोऽत्र सूचितः ॥ ८२ ॥ अह्ना एकेन शतं पलानि व्यवर्धत । द्वादशवर्षतुल्यः ॥ ८६ ॥ अभेदि भिन्ना ॥८९॥ मत्स्यान् हैरण्यानिति संबन्धः ॥९१॥ शम्या स्थूलबुध्नः काष्ठदण्डः स बलवता क्षिप्तो यावद्दूरं पतेत्तावान्देशः शम्यापातः तावतान्तरेण पुरःपुरो यज्ञवेदीं कुर्वाणो वसुधरां पर्यगच्छत् परित्यज्य समुद्रतीरं प्राप्त इत्यर्थः ॥ ९५ ॥ व्यभजत्पुत्रेभ्यो

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२९
सगरं च महात्मानं मृतं शुश्रुम सृञ्जय ।
ऐक्ष्वाकं पुरुषव्याघ्रमतिमानुषविक्रमम् ॥ १३०
षष्टिः पुत्रसहस्राणि यं यान्तमनुजग्मिरे ।
नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव ॥ १३१
एकच्छत्रा मही यस्य प्रतापादभवत्पुरा ।
योऽश्वमेधसहस्रेण तर्पयामास देवताः ॥ १३२
यः प्रादात्कनकस्तम्भं प्रासादं सर्वकाञ्चनम् ।
पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसंकुलम् ॥ १३३
द्विजातिभ्योऽनुरूपेभ्यः कामांश्च विविधान्बहून् ।
यस्यादेशेन तद्वित्तं व्यभजन्त द्विजातयः ॥ १३४
खानयामास यः कोपात्पृथिवीं सागराङ्किताम् ।
यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः ॥ १३५
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १३६
राजानं च पृथुं वैन्यं मृतं शुश्रुम सृञ्जय ।
यमभ्यषिञ्चन्संभूय महारण्ये महर्षयः ॥ १३७
प्रथयिष्यति वै लोकान्पृथुरित्येव शब्दितः ।
क्षताद्यो वै त्रायतीति स तस्मात्क्षत्रियः स्मृतः ॥ १३८
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताःस्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥ १३९
अकृष्टपच्या पृथिवी पुटकेपुटके मधु ।
सर्वा द्रोणदुघा गावो वैन्यस्यासन्प्रशासतः ॥ १४०
अरोगाः सर्वसिद्धार्था मनुष्या अकुतोभयाः ।
यथाऽभिकाममवसन्क्षेत्रेषु च गृहेषु च ॥ १४१
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
शैलाश्चापाद्दद्युर्दीर्यन्त ध्वजभङ्गश्च नाभवत् ।
हैरण्यांस्त्रिनरोत्सेधान्पर्वतानेकविंशतिम् ।
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥

किं वा तूष्णीं ध्यायसे सृञ्जय त्वं
न मे राजन्वाचमिमां शृणोषि ।
न चेन्मोघं विप्रलप्तं ममेदं
पथ्यं मुमूर्षोरिव सुप्रयुक्तम् ॥

सृञ्जय उवाच ।

शृणोमि ते नारद वाचमेनां
विचित्रार्थां स्रजमिव पुण्यगन्धाम् ।
राजर्षीणां पुण्यकृतां महात्मनां
कीर्त्या युक्तानां शोकनिर्नाशनार्थाम् ।
न ते मोघं विप्रलप्तं महर्षे
दृष्ट्वैवाहं नारद त्वां विशोकः ।
शुश्रूषे ते वचनं ब्रह्मवादि-
न्न ते तृप्याम्यमृतस्येव पानात् ॥
अमोघदर्शिन्मम चेत्प्रसादं
संतापदग्धस्य विभो प्रकुर्याः ।
सुतस्य संजीवनमद्य मे स्या-
त्तव प्रसादात्सुतसङ्गमाप्नुयाम् ॥

नारद उवाच ।

यस्ते पुत्रः शयितोयं विजातः
स्वर्णष्ठीवी यमदात्पर्वतस्ते ।
पुनस्त्वं ते पुत्रमहं ददामि
हिरण्यनाभं वर्षसहस्रिणं च ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

---

ऐक्ष्वाकं इक्ष्वाकुवंशजम् ॥ १३० ॥ आदेशेन आज्ञया तद्वित्तं स्वर्णप्रासादरूपम् ॥ १३४ ॥ वैन्यं वेनपुत्रम् । महारण्ये दण्डकारण्ये ॥ १३७ ॥ पुटकेपुटके पत्रेपत्रे इति प्राञ्चः ॥ १४० ॥ विप्रलप्तं विप्रलपितम् ॥ १४५ ॥ विशोक इति शेषः ॥ १४७ ॥ अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

कृष्णेन युधिष्ठिरंप्रति नारदपर्वतोपाख्यानकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
स कथं काञ्चनष्ठीवी सृञ्जयस्य सुतोऽभवत् ।
पर्वतेन किमर्थं वा दत्तस्तेन ममार च ॥ १
यदा वर्षसहस्रायुस्तदा भवति मानवः ।
कथमप्राप्तकौमारः सृञ्जयस्य सुतो मृतः ॥ २
उताहो नाममात्रं वै सुवर्णष्ठीविनोऽभवत् ।
कथं वा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ॥ ३
श्रीकृष्ण उवाच ।
अत्र ते वर्णयिष्यामि यथावृत्तं जनेश्वर ।
नारदः पर्वतश्चैव द्वावृषी लोकसत्तमौ ॥ ४
मातुलो भागिनेयश्च देवलोकादिहागतौ ।
विहर्तुकामौ संप्रीत्या मानुषेषु पुरा विभो ॥ ५
हविःपवित्रभोज्येन देवभोज्येन चैव हि ।
नारदो मातुलस्तत्र भागिनेयश्च पर्वतः ॥ ६
तावुभौ तपसोपेताववनीतलचारिणौ ।
भुञ्जानौ मानुषान्भोगान्यथावत्पर्यधावताम् ॥ ७
प्रीतिमन्तौ मुदा युक्तौ समयं चैव चक्रतुः ।
यो भवेद्धृदि संकल्पः शुभो वा यदि वाऽशुभः ॥ ८
अन्योन्यस्य च आख्येयो मृषा शापोऽन्यथा भवेत् ।
तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ ॥ ९
सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः ।
आवां भवति वत्स्यावः कंचित्कालं हिताय ते ॥ १०
यथावत्पृथिवीपाल आवयोः प्रगुणीभव ।
तथेति कृत्वा राजा तौ सत्कृत्योपचचार ह ॥ ११
ततः कदाचित्तौ राजा महात्मानौ तपोधनौ ।
अब्रवीत्परमप्रीतः सुतेयं देवरूपिणी ॥ १२
एकैव मम कन्यैषा युवां परिचरिष्यति ।
दर्शनीयानवद्याङ्गी शीलवृत्तसमाहिता ।
सुकुमारी कुमारी च पद्मकिञ्जल्कसुप्रभा ॥ १३
परमं सौम्यमित्युक्तं ताभ्यां राजा शशास ताम् ।
कन्ये विप्रावुपचर देववत्पितृवच्च ह ॥ १४
सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी ।
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह ॥ १५
तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च ।
नारदं हृच्छयस्तूर्णं सहसैवाभ्यपद्यत ॥ १६
ववृधे हि ततस्तस्य हृदि कामो महात्मनः ।
यथा शुक्लस्य पक्षस्य प्रवृत्तौ चन्द्रमाः शनैः ॥ १७
न च तं भागिनेयाय पर्वताय महात्मने ।
शशंस मन्मथं तीव्रं व्रीडमानः स धर्मवित् ॥ १८
तपसा चेङ्गितैश्चैव पर्वतोऽथ बुबोध तम् ।
कामार्तं नारदं क्रुद्धः शशापैनं ततो भृशम् ॥ १९
कृत्वा समयमव्यग्रो भवान्वै सहितो मया ।
यो भवेद्धृदि संकल्पः शुभो वा यदि वाऽशुभः ॥ २०
अन्योन्यस्य स आख्येय इति तद्वै मृषा कृतम् ।
भवता वचनं ब्रह्मंस्तस्मादेष शपाम्यहम् ॥ २१
न हि कामं प्रवर्तन्तं भवानाचष्ट मे पुरा ।
सुकुमार्यां कुमार्यां ते तस्मान्नैष क्षमाम्यहम् ॥ २२
ब्रह्मचारी गुरुर्यस्मात्तपस्वी ब्राह्मणश्च सन् ।
अकार्षीः समयभ्रंशमावाभ्यां यः कृतो मिथः ॥ २३
शप्स्ये तस्मात्सुसंक्रुद्धो भवन्तं तं निबोध मे ॥ २४
सुकुमारी च ते भार्या भविष्यति न संशयः ।
वानरत्वं च ते कन्या विवाहात्प्रभृति प्रभो ।
संद्रक्ष्यन्ति नराश्चान्ये स्वरूपेण विनाकृतम् ॥ २५
स तद्वाक्यं तु विज्ञाय नारदः पर्वतं तथा ।
अशपत्तमपि क्रोधाद्भागिनेयं स मातुलः ॥ २६
तपसा ब्रह्मचर्येण सत्येन च दमेन च ।
युक्तोऽपि नित्यधर्मश्च न वै स्वर्गमवाप्स्यसि ॥ २७
तौ तु शप्त्वा भृशं क्रुद्धौ परस्परममर्षणौ ।

---

हविःपवित्रभोज्येन शाल्यन्नेन देवभोज्येन घृतेन ताभ्यां विहर्तुकामाविति पूर्वेण संबन्धः ॥ ६ ॥ प्रगुणीभवानुकूलो भव ॥ ११ ॥ सुकुमारी नाम्ना ॥ १३ ॥ सौम्यमुत्तमम् ॥ १४ ॥ समयं कृत्वा भवानवसदिति शेषः ॥ २० ॥ प्रवर्तन्तं प्रवर्तमानम् । ते त्वाम् ॥ २२ ॥ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ ॥ २८
पर्वतः पृथिवीं कृत्स्नां विचचार महामतिः ।
पूज्यमानो यथान्यायं तेजसा स्वेन भारत ॥ २९
अथ तामलभत्कन्यां नारदः सृञ्जयात्मजाम् ।
धर्मेण विप्रप्रवरः सुकुमारीमनिन्दिताम् ॥ ३०
सा तु कन्या यथाशापं नारदं तं ददर्श ह ।
पाणिग्रहणमन्त्राणां नियोगादेव नारदम् ॥ ३१
सुकुमारी च देवर्षिं वानरप्रतिमाननम् ।
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् ॥ ३२
उपतस्थे च भर्तारं न चान्यं मनसाऽप्यगात् ।
देवं मुनिं वा यक्षं वा पतित्वे पतिवत्सला ॥ ३३
ततः कदाचिद्भगवान्पर्वतोऽनुचचार ह ।
वनं विरहितं किंचित्तत्रापश्यत्स नारदम् ॥ ३४
ततोऽभिवाद्य प्रोवाच नारदं पर्वतस्तदा ।
भवान्प्रसादं कुरुतात्स्वर्गादेशाय मे प्रभो ॥ ३५
तमुवाच ततो दृष्ट्वा पर्वतं नारदस्तथा ।
कृताञ्जलिमुपासीनं दीनं दीनतरः स्वयम् ॥ ३६
त्वयाऽहं प्रथमं शप्तो वानरस्त्वं भविष्यसि ।
इत्युक्तेन मया पश्चाच्छप्तस्त्वमपि मत्सरात् ॥३७
अद्यप्रभृति वै वासं स्वर्गे नावाप्स्यसीति ह ।
तव नैतद्धि सदृशं पुत्रस्थाने हि मे भवान् ॥ ३८
निवर्तयेतां तौ शापावन्योन्येन तदा मुनी ॥३९
श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम् ।
सुकुमारी प्रदुद्राव परपुंमविशङ्कया ॥ ४०
तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम् ।
अब्रवीत्तव भर्तैष नात्र कार्या विचारणा ॥ ४१
ऋषिः परमधर्मात्मा नारदो भगवान्प्रभुः ।
तवैवाभेद्यहृदयो मा ते भूदत्र संशयः ॥ ४२
सानुनीता बहुविधं पर्वतेन महात्मना ।
शापदोषं च तं भर्तुः श्रुत्वा प्रकृतिमागता ।
पर्वतोऽथ ययौ स्वर्गं नारदोऽभ्यगमद्गृहान् ॥४३
वासुदेव उवाच ।
प्रत्यक्षकर्ता सर्वस्य नारदो भगवानृषिः ।
एष वक्ष्यति ते पृष्टो यथावृत्तं नरोत्तम ॥ ४४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

नारदेन युधिष्ठिरंप्रति सुवर्णष्ठीविचरितवर्णनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत ।
भगवञ्श्रोतुमिच्छामि सुवर्णष्ठीविसंभवम् ॥ १
एवमुक्तस्तु स मुनिर्धर्मराजेन नारदः ।
आचचक्षे यथावृत्तं सुवर्णष्ठीविनं प्रति ॥ २
नारद उवाच ।
एवमेतन्महाबाहो यथाऽयं केशवोऽब्रवीत् ।
कार्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः ॥ ३
अहं च पर्वतश्चैव स्वस्रीयो मे महामुनिः ।
वस्तुकामावभिगतौ सृञ्जयं जयतां वरम् ॥ ४
तत्रावां पूजितौ तेन विधिदृष्टेन कर्मणा ।
सर्वकामैः सुविहितौ निवसावोऽस्य वेश्मनि ॥ ५
व्यतिक्रान्तासु वर्षासु समये गमनस्य च ।
पर्वतो मामुवाचेदं काले वचनमर्थवत् ॥ ६
आवामस्य नरेन्द्रस्य गृहे परमपूजितौ ।
उषितौ समये ब्रह्मंस्तद्विचिन्तय सांप्रतम् ॥ ७
ततोऽहमब्रुवं राजन्पर्वतं शुभदर्शनम् ।
सर्वमेतत्त्वयि विभो भागिनेयोपपद्यते ॥ ८
वरेण च्छन्द्यतां राजा लभतां यद्यदिच्छति ।
आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ॥ ९
तत आहूय राजानं सृञ्जयं जयतां वरम् ।
पर्वतोऽनुमतो वाक्यमुवाच कुरुपुङ्गव ॥ १०
प्रीतौ स्वो नृप सत्कारैर्भवदार्जवसंभृतैः ।
आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ॥ ११
देवानामविहिंसायां न भवेन्मानुषे क्षमम् ।

सांप्रतं कल्याणम् ॥ ७ ॥ न भवेन्मानुषक्षयमिति क्ष.

तद्गृहाण महाराज पूजार्हो नौ मतो भवान् ॥१२
सृञ्जय उवाच ।
प्रीतौ भवन्तौ यदि मे कृतमेतावता मम ।
एष एव परो लाभो निर्वृत्तो मे महाफलः ॥१३
तमेवंवादिनं भूयः पर्वतः प्रत्यभाषत ।
शृणु राजन्सुसंकल्पं यत्ते हृदि चिरं स्थितम् ॥१४
अभीप्ससि सुतं वीरं वीर्यवन्तं दृढव्रतम् ।
आयुष्मतं महाभागं देवराजसमद्युतिम् ॥ १५
भविष्यत्येव ते कामो न त्वायुष्मान्भविष्यति ।
देवराजाभिभूत्यर्थं संकल्पो ह्येष ते हृदि ॥ १६
सुवर्णष्ठीवनाच्चैव स्वर्णष्ठीवी भविष्यति ।
रक्ष्यश्च देवराजात्स देवराजसमद्युतिः ॥ १७
तच्छ्रुत्वा सृञ्जयो वाक्यं पर्वतस्य महात्मनः ।
प्रसादयामास तदा नैतदेवं भवेदिति ॥ १८
आयुष्मान्मे भवेत्पुत्रो भवतोस्तपसा मुने ।
न च तं पर्वतः किंचिदुवाचेन्द्रव्यपेक्षया ॥ १९
तमहं नृपतिं दीनमब्रवं पुनरेव च ।
स्मर्तव्योऽस्मि महाराज दर्शयिष्यामि ते सुतम् ॥२०
अहं ते दयितं पुत्रं प्रेतराजवशं गतम् ।
पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते ॥ २१
एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम् ।
सृञ्जयश्च यथाकामं प्रविवेश स्वमन्दिरम् ॥ २२
सृञ्जयस्याथ राजर्षेः कस्मिंश्चित्कालपर्यये ।
जज्ञे पुत्रो महावीर्यस्तेजसा प्रज्वलन्निव ॥ २३
ववृधे स यथाकालं सरसीव महोत्पलम् ।
बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् ॥ २४
तदद्भुततमं लोके पप्रथे कुरुसत्तम ।
बुबुधे तच्च देवेन्द्रो वरदानं मनीषिणोः ॥ २५
ततः स्वाभिभवाद्भीतो बृहस्पतिमते स्थितः ।
कुमारस्यान्तरप्रेक्षी नित्यमेवाभ्यवर्तत ॥ २६
चोदयामास तद्वज्रं दिव्यास्त्रं मूर्तिमत्स्थितम् ।
व्याघ्रो भूत्वा जहीमं त्वं राजपुत्रमिति प्रभो ॥२७
प्रवृद्धः किल वीर्येण मामेषोऽभिभविष्यति ।
सृञ्जयस्य सुतो यत्र यथैनं पर्वतोऽब्रवीत् ॥ २८
एवमुक्तस्तु शक्रेण वज्रः परपुरंजयः ।
कुमारमन्तरप्रेक्षी नित्यमेवान्वपद्यत ॥ २९
सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिम् ।
हृष्टः सान्तःपुरो राजा वननित्यो बभूव ह ॥ ३०
ततो भागीरथीतीरे कदाचिन्निर्जने वने ।
धात्रीद्वितीयो बालः स क्रीडार्थं पर्यधावत ॥३१
पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः ।
सहसोत्पतितं व्याघ्रमाससाद महाबलम् ॥ ३२
स बालस्तेन निष्पिष्टो वेपमानो नृपात्मजः ।
व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ॥३३
हत्वा तु राजपुत्रं स तत्रैवान्तरधीयत ।
शार्दूलो देवराजस्य माययान्तर्हितस्तदा ॥ ३४
धात्र्यास्तु निनदं श्रुत्वा रुदत्याः परमार्तवत् ।
अभ्यधावत तं देशं स्वयमेव महीपतिः ॥ ३५
स ददर्श शयानं तं गतासुं पीतशोणितम् ।
कुमारं विगतानन्दं निशाकरमिव च्युतम् ॥ ३६
स तमुत्सङ्गमारोप्य परिपीडितवक्षसम् ।
पुत्रं रुधिरसंसिक्तं पर्यदेवयदातुरः ॥ ३७
ततस्ता मातरस्तस्य रुदत्यः शोककर्शिताः ।
अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ॥३८
ततः स राजा सस्मार मामेव गतमानसः ।
तदाऽहं चिन्तनं ज्ञात्वा गतवांस्तस्य दर्शनम् ॥ ३९
मयैतानि च वाक्यानि श्रावितः शोकलालसः ।
यानि ते यदुवीरेण कथितानि महीपते ॥ ४०
संजीवितश्चापि पुनर्वासवानुमते तदा ।
भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा ॥ ४१
तत ऊर्ध्वं कुमारस्तु स्वर्णष्ठीवी महायशाः ।
चित्तं प्रसादयामास पितुर्मातुश्च वीर्यवान् ॥ ४२
कारयामास राज्यं च पितरि स्वर्गते नृप ।
वर्षाणां शतमेकं च सहस्रं भीमविक्रमः ॥ ४३
तत ईजे महायज्ञैर्बहुभिर्भूरिदक्षिणैः ।
तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः ॥ ४४

पाठः । तत्र येन देवपीडा मनुष्यक्षयश्च न भवति तत्तादृशं वरं गृहाणेति भावः ॥ १२ ॥ देवराजविभूत्यर्थमिति ङ. पाठः ॥१६॥

त्रिंशत्तमोऽध्यायः ॥ ३० ॥

उत्पाद्य च बहून्पुत्रान्कुलसंतानकारिणः ।
कालेन महता राजन्कालधर्ममुपेयिवान् ॥ ४५
स त्वं राजेन्द्र संजातं शोकमेनं निवर्तय ।
यथा त्वां केशवः प्राह व्यासश्च सुमहातपाः ॥ ४६
पितृपैतामहं राज्यमास्थाय धुरमुद्वह ।
इष्ट्वा पुण्यैर्महायज्ञैरिष्टं लोकमवाप्स्यसि ॥ ४७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥*

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

व्यासयुधिष्ठिरसंवादः ॥ १ ॥

वैशंपायन उवाच ।
तूष्णींभूतं तु राजानं शोचमानं युधिष्ठिरम् ।
तपस्वी धर्मतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ १
व्यास उवाच ।
प्रजानां पालनं धर्मो राज्ञां राजीवलोचन ।
धर्मः प्रमाणं लोकस्य नित्यं धर्मोऽनुवर्त्यताम् ॥ २
अनुतिष्ठस्व तद्राजन्पितृपैतामहं पदम् ।
ब्राह्मणेषु तु यो धर्मः स नित्यो वेदनिश्चितः ॥ ३
तत्प्रमाणं प्रमाणानां शाश्वतं भरतर्षभ ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥ ४
तथा यः प्रतिहन्त्यस्य शासनं विषये नरः ।
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥ ५
प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः ।
भृत्यो वा यदि वा पुत्रस्तपस्वी वाऽथ कश्चन ॥ ६
पापान्सर्वैरुपायैस्तान्नियच्छेच्छातयीत वा ।
अतोऽन्यथा वर्तमानो राजा प्राप्नोति किल्बिषम् ७
धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ।
ते त्वया धर्महन्तारो निहताः सपदानुगाः ॥ ८
स्वधर्मे वर्तमानस्त्वं किंनु शोचसि पाण्डव ।
राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥ ९
युधिष्ठिर उवाच ।
न तेऽतिशङ्के वचनं यद्ब्रवीषि तपोधन ।
अपरोक्षो हि ते धर्मः सर्वधर्मविदां वर ॥ १०
मया त्ववध्या बहवो घातिता राज्यकारणात् ।
तानि कर्माणि मे ब्रह्मन्दहन्ति च पचन्ति च ११
व्यास उवाच ।
ईश्वरो वा भवेत्कर्ता पुरुषो वाऽपि भारत ।
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् १२
ईश्वरेण नियुक्तो हि साध्वसाधु च भारत ।
कुरुते पुरुषः कर्म फलमीश्वरगामि तत् ॥ १३
यथाहि पुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव भवेत्पापं परशोर्न कथंचन ॥ १४
अथवा तदुपादानात्प्राप्नुयात्कर्मणः फलम् ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १५
न चैतदिष्टं कौन्तेय यदन्येन कृतं फलम् ।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥ १६
अथापि पुरुषः कर्ता कर्मणोः शुभपापयोः ।
न परो विद्यते तस्मादेवमप्यशुभं कुतः ॥ १७
न हि कश्चित्क्वचिद्राजन्दिष्टं प्रतिनिवर्तते ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १८
यदि वा मन्यसे राजन्हतमेकं प्रतिष्ठितम् ।
एवमप्यशुभं कर्म न भूतं न भविष्यति ॥ १९
अथाभिपत्तिर्लोकस्य कर्तव्या पुण्यपापयोः ।
अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनम् ॥ २०

शातयीत मारयेत् ॥ ७ ॥ मे माम् ॥ ११ ॥ नापरो वर्तते लोके कर्मजं वा फलं नृपु । इति ङ. थ. पाठः ॥ १२ ॥ प्राप्नुयात् परशोरुपादाता । एवं तर्हि येन परशोर्दण्डः शस्त्रं परशुश्च कृतस्तमेव पापं कर्तृ प्राप्नुयात्तस्य प्रथमप्रयोज्यत्वात् । पुरुषे उपादातरि तन्न विद्यते तस्य जघन्यत्वात् ॥ १५ ॥ यदि चैतन्नेष्टं एतत्किं यदन्येन प्रहर्त्रा कृत पापं तस्य फल शस्त्रकर्ता आप्नुयादिति । तर्हि जघन्यप्रयोज्ये त्वय्यपि पापाभावादीश्वरे एव तन्निवेशय ॥ १६ ॥ यतः कश्चिदपि दिष्टं प्रत्यदृष्टस्य प्रतिकूलो भूत्वावश्यंभाविनः कर्मणः सकाशान्न निवर्तते । दैवस्य दुर्लङ्घ्यत्वादिति भावः ॥ १८ ॥ पुण्यपापयोः सुख-

* द्रोणपर्वणि स्वर्णष्ठीविचरितमन्यादृशमत्र पर्वणित्वन्यादृशम् ।

तथापि लोके कर्माणि समावर्तन्ति भारत ।
शुभाशुभफलं चैते प्राप्नुवन्तीति मे मतिः ॥ २१
एवं पश्य शुभादेशं कर्मणस्तत्फलं ध्रुवम् ।
त्यज त्वं राजशार्दूल मैवं शोके मनः कृथाः ॥ २२
स्वधर्मे वर्तमानस्य सापवादेऽपि भारत ।
एवमात्मपरित्यागस्तव राजन्न शोभनः ॥ २३
विहितानि हि कौन्तेय प्रायश्चित्तानि कर्मणाम् ।
शरीरवांस्तानि कुर्यादशरीरः पराभवेत् ॥ २४
तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं करिष्यसि ।
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्ताऽसि भारत ॥ २५
युधिष्ठिर उवाच ।
हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलाश्च पितामहाः ॥ २६
क्षत्रियाश्च महात्मानः संबन्धिसुहृदस्तथा ।
वयस्या भागिनेयाश्च ज्ञातयश्च पितामह ॥ २७
बहवश्च मनुष्येन्द्रा नानादेशसमागताः ।
घातिता राज्यलुब्धेन मयैकेन पितामह ॥ २८
तांस्तादृशानहं हत्वा धर्मनित्यान्महीक्षितः ।
असकृत्सोमपान्वीरान्किं प्राप्स्यामि तपोधन ॥ २९
दह्याम्यनिशमद्यापि चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ३०
दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् ।
कोटिशश्च नरानन्यान्परितप्ये पितामह ॥ ३१
का नु तासां वरस्त्रीणामवस्थाऽद्य भविष्यति ।
विहीनानां तु तनयैः पतिभिर्भ्रातृभिस्तथा ॥ ३२
अस्मानन्तकरान्घोरान्पाण्डवान्वृष्णिसंहतान् ।
आक्रोशन्त्यः कृशा दीनाः प्रपतिष्यन्ति भूतले ३३
अपश्यन्त्यः पितॄन्भ्रातॄन्पतीन्पुत्रांश्च योषितः ।
त्यक्त्वा प्राणान्स्त्रियः सर्वा गमिष्यन्ति यमक्षयम् ॥
वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः ।
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामः स्त्रीवधं वयम् ॥
ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम् ।
नरके निपतिष्यामो ह्यधःशिरस एव ह ॥ ३६
शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम ।
आश्रमाणां विशेषं त्वमथाचक्ष्व पितामह ॥ ३७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

युद्धे राज्ञां हननेन पापशङ्कया विषीदन्तं युधिष्ठिरंप्रति व्यासेन तत्त्वकथनपूर्वकं क्षात्रधर्मविधानम् ॥ १ ॥

वैशंपायन उवाच ।
युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
परीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम् ॥ १
व्यास उवाच ।
मा विषादं कृथा राजन्क्षत्रधर्ममनुस्मरन् ।
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ॥ २
काङ्क्षमाणाः श्रियं कृत्स्नां पृथिव्यां च महद्यशः ।
कृतान्तविधिसंयुक्ताः कालेन निधनं गताः ॥ ३
न त्वं हन्ता न भीमोऽयं नार्जुनो न यमावपि ।
कालः पर्यायधर्मेण प्राणानादत्त देहिनाम् ॥ ४
न तस्य मातापितरौ नानुग्राह्यो हि कश्चन ।
कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ॥ ५
हेतुमात्रमिदं तस्य विहितं भरतर्षभ ।
यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ॥ ६
कर्म मूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः ।
सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ॥ ७
तेषामपि महाबाहो कर्माणि परिचिन्तय ।
विनाशहेतुकानि त्वं यैस्ते कालवशं गताः ॥ ८

दुःखयोः अभिपत्तिरुपपत्तिः कर्तव्या साच धर्माधर्मावन्तरेण न घटते तौच शास्त्रैकगम्याविति चेद्राज्ञामुद्यतदण्डनमुद्धतदमनं लोके शास्त्रे चोपपन्नतरमित्यर्थः ॥ २० ॥ सापवादे निन्द्येऽपि ॥ २३ ॥ एकत्रिंशोऽध्यायः ॥ ३१ ॥

कृतान्तविधिः परप्राणहरणं तेन संयुक्ताः। स्वापराधेनैव हता इत्यर्थः ॥ ३ ॥ इदं युद्धम्। अस्मै अस्य ऐश्वरं नियन्तृत्वम् ॥ ६ ॥

आत्मनश्च विजानीहि नियतव्रतशीलताम् ।
यदा त्वमीदृशं कर्म विधिनाऽऽक्रम्य कारितः ॥९
त्वष्ट्रेव विहितं यन्त्रं यथा चेष्टयितुर्वशे ।
कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् ॥ १०
पुरुषस्य हि दृष्ट्वेमामुत्पत्तिमनिमित्ततः ।
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ॥ ११
व्यलीकमपि यत्त्वत्र चित्तवैतंसिकं तव ।
तदर्थमिष्यते राजन्प्रायश्चित्तं तदाचर ॥ १२
इदं तु श्रूयते पार्थ युद्धे देवासुरे पुरा ।
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः॥ १३
तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल ॥ १४
एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तथा देवास्त्रिदिवं चाभिलेभिरे ॥१५
तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।
संश्रिता दानवानां वै साह्यार्थं दर्पमोहिताः॥ १६
शालावृका इति ख्यातास्त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥ १७
धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः॥१८
एकं हत्वा यदि कुले शिष्टानां स्यादनामयम् ।
कुलं हत्वा च राष्ट्रं च न तद्वृत्तोपघातकम् ॥ १९
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मरूपो ह्यधर्मश्च तच्च ज्ञेयं विपश्चिता ॥ २०
तस्मात्संस्तम्भयात्मानं श्रुतवानसि पाण्डव ।
देवैः पूर्वगतं मार्गमनुयातोऽसि भारत ॥ २१
न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ ।
भ्रातॄनाश्वासयैतांस्त्वं सुहृदश्च परंतप ॥ २२
यो हि पापसमारम्भे कार्ये तद्भावभावितः ।
कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः ॥ २३
तस्मिंस्तत्कलुषं सर्वं समस्तमिति शब्दितम् ।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः॥ २४
त्वं तु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ २५
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् ।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥ २६
मरुद्भिः सह जित्वाऽरीन्भगवान्पाकशासनः ।
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥ २७
धूतपाप्मा जितस्वर्गो लोकान्प्राप्य सुखोदयान् ।
मरुद्गणैर्वृतः शक्रः शुशुभे भासयन्दिशः ॥ २८
स्वर्गे लोके महीयन्तमप्सरोभिः शचीपतिम् ।
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् ॥ २९
सेयं त्वामनुसंप्राप्ता विक्रमेण वसुंधरा ।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ॥ ३०
तेषां पुराणि राष्ट्राणि गत्वा राजन्सुहृद्वृतः ।
भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय॥ ३१
बालानपि च गर्भस्थान्सांत्वेन समुदाचरन् ।
रञ्जयन्प्रकृतीः सर्वाः परिपाहि वसुंधराम् ॥ ३२
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यसि ॥ ३३
एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ॥ ३४
अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ ।
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ॥ ३५
अवाप्तः क्षत्रधर्मस्ते राज्यं प्राप्तमकण्टकम् ।
रक्ष स्वधर्मं कौन्तेय श्रेयान्यः प्रेत्यभाविकः ॥ ३६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

उत्पत्तिर्वृद्धिर्नाशोऽपि यादृच्छिक एवेति भावः ॥ ११ ॥ चित्तवैतंसिकं चित्तबन्धनं तदर्थं तन्निवृत्त्यर्थम् ॥ १२ ॥ यवीयसः यवीयांसः ॥ १३ ॥ समुच्छ्रयो विरोधः ॥ १४ ॥ संश्रिताः सन्नद्धाः। साह्यार्थं साहाय्यार्थम् ॥ १६ ॥ तत् एकस्य कुलस्य वा हननं वृत्तोपघातकम् धर्मनाशकं न भवति ॥ १९ ॥ तद्भावभावितः पापभावनां गतः । कुर्वन्पापमिति वर्तते ॥ २३ ॥ तस्य अपश्चात्तापिनो निर्लज्जस्य प्रायश्चित्तं वा तेन पापह्रासो वा नास्तीत्यर्थः ॥ २४ ॥ परदोषेण दुर्योधनदोषेण ॥ २५ ॥ महीयन्त महीयमानम् ॥ २९ ॥ कामाः आशेरतेऽस्मिन्कामाशयः । पूर्णकाम इत्यर्थः ॥ ३३ ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

व्यासेन युधिष्ठिरंप्रति प्रायश्चित्तप्रयोजकपापकर्मणां प्रायश्चित्तानां च कथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कानि कृत्वेह कर्माणि प्रायश्चित्तीयते नरः ।
किं कृत्वा मुच्यते तत्र तन्मे ब्रूहि पितामह ॥ १
व्यास उवाच ।
अकुर्वन्विहितं कर्म प्रतिषिद्धानि चाचरन् ।
प्रायश्चित्तीयते ह्येवं नरो मिथ्याऽनुवर्तयन् ॥ २
सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत ।
तथा सूर्याभिनिर्मुक्तः कुनखी श्यावदन्नपि ॥ ३
परिवित्तिः परिवेत्ता ब्रह्मज्यायाश्च दूषकः ।
दिधिषूपतिस्तथा यः स्यादग्रेदिधिषुरेव च ॥ ४
अवकीर्णी भवेद्यश्च द्विजातिवधकस्तथा ।
अतीर्थे ब्राह्मणस्त्यागी तीर्थे चाप्रतिपादकः ॥ ५
ग्रामयाजी च कौन्तेय मांसस्य परिविक्रयी ।
यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी ॥ ६
शूद्रस्त्रीवधको यश्च पूर्वः पूर्वस्तु गर्हितः ।
वृथा पशुसमालम्भी वनदाहस्य कारकः ॥ ७
अनृतेनोपवर्ती च प्रतिषेद्धा गुरोस्तथा ।
'स्वदत्तस्यापहर्ता च परदत्तनिरोधकः ॥ ८
वाग्दत्तं च मनोदत्तं धारादत्तं च यो हरेत् ।
पाकभेदेन भोक्ता च भुञ्जानस्याप्यनादरः ॥ ९
स्वजनैः कलहं चैव आश्रितानामरक्षणम् ।'
एतान्येनांसि सर्वाणि व्युत्क्रान्तसमयश्च यः ॥ १०
अकार्याणि तु वक्ष्यामि यानि तानि निबोध मे ।
लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु ॥ ११
स्वधर्मस्य परित्यागः परधर्मस्य च क्रिया ।
अयाज्ययाजनं चैव तथाऽभक्ष्यस्य भक्षणम् ॥१२
शरणागतसंत्यागो भृत्यस्याभरणं तथा ।
रसानां विक्रयश्चापि तिर्यग्योनिवधस्तथा ॥ १३
आधानादीनि कर्माणि शक्तिमान्न करोति यः ।
अप्रयच्छंश्च सर्वाणि नित्यदेयानि भारत ॥ १४
दक्षिणानामदानं च ब्राह्मणस्वाभिमर्शनम् ।
सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदो जनाः ॥१५
पित्रा विवदते पुत्रो यश्च स्याद्गुरुतल्पगः ।
अप्रजायन्नरव्याघ्र भवत्यधार्मिको नरः ॥ १६
उक्तान्येतानि कर्माणि विस्तरेणेतरेण च ॥ १७
यानि कुर्वन्नकुर्वंश्च प्रायश्चित्तीयते नरः ।
एतान्येव तु कर्माणि क्रियमाणानि मानवैः ।
येषुयेषु निमित्तेषु न लिप्यन्तेऽथ ताञ्शृणु ॥१८
प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ १९
इति चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते ।
वेदप्रमाणविहितं धर्मं च प्रब्रवीमि ते ॥ २०
अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम् ।
न तेन ब्रह्महा स स्यान्मन्युस्तन्मन्युमृच्छति ॥२१
प्राणात्यये तथा ज्ञानादाचरन्मदिरामपि ।
आदेशितो धर्मपरैः पुनः संस्कारमर्हति ॥ २२
एतत्ते सर्वमाख्यातं कौन्तेयाभक्ष्यभक्षणम् ।
प्रायश्चित्तविधानेन सर्वमेतेन शुद्ध्यति ॥ २३
गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम् ।
उद्दालकः श्वेतकेतुं जनयामास शिष्यतः ॥ २४
स्तेयं कुर्वंश्च गुर्वर्थमापत्सु न निषिध्यते ।
बहुशः कामकारेण न चेद्यः संप्रवर्तते ॥ २५

प्रायश्चित्तीयते प्रायश्चित्तेऽधिक्रियते ॥ १ ॥ मिथ्यानुवर्तयन्कापथ्यं चरन् ॥ २ ॥ अनूढे ज्येष्ठे ऊढवान् कनिष्ठः परिवेत्ता । परिवित्तिः पूर्वजः । ज्येष्ठायामनूढायां कनिष्ठामूढवानग्रेदिधिषुः । दिधिषूपतिस्तु कनिष्ठाविवाहोत्तरं ज्येष्ठामूढवान् ॥ ४ ॥ अवकीर्णी नष्टव्रतः । अतीर्थे अपात्रे त्यागी दाता ॥ ५ ॥ अपविध्येत त्यजेत् । ब्रह्मविक्रयी भृतकाध्यापकः ॥६॥ नित्यदेयानि गोग्रासादीनि ॥ १४ ॥ अप्रजायन् धर्मपत्न्यां काले मैथुनमकुर्वन् ॥ १६ ॥ इतरेण संक्षेपेण ॥ १७ ॥ जिघांसी हन्तुमिच्छावान् । इयात् गच्छेत् ॥ १९ ॥ मन्त्रो मन्युरकार्षीन्नमोनम इत्यादिर्मन्यवे स्वाहेत्यन्तः ॥ २० ॥ मन्युः क्रोधः तन्मन्युं शत्रोः क्रोधं प्रति ऋच्छति गच्छति । क्रोधएव तं प्रतीपीभूय परशरीरद्वारा हन्तीत्यर्थः ॥ २१ ॥ आदेशित उपदिष्टः ॥ २२ ॥ गुर्वर्थे गुर्वाज्ञया ॥ २४ ॥

अन्यत्र ब्राह्मणस्तेभ्य आददानो न दुष्यति ।
स्वयमप्राशिता यश्च न स पापेन लिप्यते ॥ २६
प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य च ।
गुर्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च ॥ २७
नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथंचन ।
आज्यहोमः समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ॥२८
पारिवित्त्यं तु पतिते नास्ति प्रव्रजिते तथा ।
भिक्षिते पारदार्यं च तद्धर्मस्य न दूषकम् ॥ २९
वृथा पशुसमालम्भं नैव कुर्यान्न कारयेत् ।
अनुग्रहः पशूनां हि संस्कारो विधिनोदितः ॥ ३०
अनर्हे ब्राह्मणे दत्तमज्ञानात्तन्न दूषकम् ।
सत्काराणां तथा तीर्थे नित्यं वा प्रतिपादनम् ३१
स्त्रियास्तथापचारिण्या निष्कृतिः स्याददूषिका ।
अपि सा पूयते तेन न तु भर्ता प्रदुष्यति ॥ ३२
तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददोषवान् ।
असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान् ॥ ३३
वनदाहो गवामर्थे क्रियमाणो न दूषकः ।
उक्तान्येतानि कर्माणि यानि कुर्वन्न दुष्यति ॥३४
प्रायश्चित्तानि वक्ष्यामि विस्तरेणैव भारत ।
'यानि कृत्वा नरः पूतो भविष्यति नराधिप ॥' ३५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

व्यासेन युधिष्ठिरंप्रति पापानां प्रायश्चित्तादिकथनम् ॥ १ ॥

व्यास उवाच ।
तपसा कर्मणा चैव प्रदानेन च भारत ।
पुनाति पापं पुरुषः पूतश्चेन्न प्रवर्तते ॥ १
एककालं तु भुञ्जानश्चरन्भैक्षं स्वकर्मकृत् ।
कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ॥ २
अनसूयुरधःशायी कर्म लोके प्रकाशयन् ।
पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महा विप्रमुच्यते ॥ ३
लक्ष्यः शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥४
जपन्वाऽन्यतमं वेदं योजनानां शतं व्रजेत् ।
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ॥ ५
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥ ६
षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः ।
मासेमासे समश्नंस्तु त्रिभिर्वर्षैः प्रमुच्यते ॥ ७
संवत्सरेण मासाशी पूयते नात्र संशयः ।
तथैवोपवसन्राजन्स्वल्पेनापि प्रपूयते ॥ ८
क्रतुना चाश्वमेधेन पूयते नात्र संशयः ।
ये चाप्यवभृथस्नाताः केचिदेवंविधा नराः ।
ते सर्वे धूतपाप्मानो भवन्तीति परा श्रुतिः ॥ ९
ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ॥ १०
गवां शतसहस्रं तु पात्रेभ्यः प्रतिपादयेत् ।
ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च ॥ ११
कपिलानां सहस्राणि यो दद्यात्पञ्चविंशतिम् ।
दोग्ध्रीणां स च पापेभ्यः सर्वेभ्यो विप्रमुच्यते ॥१२
गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये ।
साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्बिषात् ॥
शतं वै यस्तु काम्भोजान्ब्राह्मणेभ्यः प्रयच्छति ।
नियतेभ्यो महीपाल स च पापात्प्रमुच्यते ॥ १४
मनोरथं तु यो दद्यादेकस्मा अपि भारत ।

---

स्वयं प्रकाशितो यश्च इति ट. ड. थ. पाठः ॥२६॥ व्रत नावर्तते पुनरुपनयनं न कर्तव्यमित्यर्थः । आज्यहोमः पुनर्मामैत्विन्द्रियमिति मन्त्रेण ॥ २८ ॥ पतिते ज्येष्ठभ्रातरि । भिक्षिते धर्मार्थमपि रेतः सिञ्चेति स्त्रिया प्रार्थिते सति ॥ २९ ॥ पशूनामनुग्रहः अहिंसनं संस्कारः पावित्र्यमित्यन्वयः ॥ ३० ॥ त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥

तपसा कृच्छ्रचान्द्रायणादिना । कर्मणा यज्ञादिना पुनाति शोधयति ॥ १ ॥ कर्म ब्रह्महत्याम् ॥ ३ ॥ अवाक्शिराः यं कंचिद्वेदं जपन् योजनानां शतं त्रिर्व्रजेत् शतत्रययोजनं पदचारेण तीर्थयात्रायां वेदं जपन्मुच्यत इत्यर्थः ॥ ५ ॥ कृच्छ्रभोजी कृच्छ्ररीत्या भुञ्जानः ॥ ७ ॥

न कीर्तयेत दत्त्वा यः स च पापात्प्रमुच्यते ॥ १५
सुरापानं सकृत्कृत्वा योऽग्निवर्णां सुरां पिबेत् ।
स पावयत्यथात्मानमिह लोके परत्र च ॥ १६
मरुप्रपातं प्रपतञ्ज्वलनं वा समाविशन् ।
महाप्रस्थानमातिष्ठन्मुच्यते सर्वकिल्बिषैः ॥ १७
बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः ।
समितिं ब्राह्मणो गच्छेदिति वै ब्रह्मणः श्रुतिः ॥ १८
भूमिप्रदानं कुर्याद्यः सुरां पीत्वा विमत्सरः ।
पुनर्न च पिबेद्राजन्संस्कृतः स च शुध्यति ॥ १९
गुरुतल्पी शिलां तप्तामायसीमभिसंविशेत् ।
अवकृत्यात्मनः शेफं प्रव्रजेदूर्ध्वदर्शनः ॥ २०
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् ।
कर्मभ्यो विप्रमुच्यन्ते यताः संवत्सरं स्त्रियः ॥ २१
महाव्रतं चरेद्यस्तु दद्यात्सर्वस्वमेव तु ।
गुर्वर्थे वा हतो युद्धे स मुच्येत्कर्मणोऽशुभात् ॥ २२
अनृतेनोपवर्ती चेत्प्रतिरोद्धा गुरोस्तथा ।
उपाहृत्य प्रियं तस्मै तस्मात्पापात्प्रमुच्यते ॥ २३
अवकीर्णनिमित्तं तु ब्रह्महत्याव्रतं चरेत् ।
गोचर्मवासाः षण्मासांस्तथा मुच्येत किल्बिषात् २४
परदारोपसेवी तु परस्यापहरन्वसु ।
संवत्सरं व्रती भूत्वा तथा मुच्येत किल्बिषात् ॥ २५
धनं तु यस्यापहरेत्तस्मै दद्यात्समं वसु ।
विविधेनाभ्युपायेन तदा मुच्येत किल्बिषात् ॥ २६
कृच्छ्राद्द्वादशरात्रेण संयतात्मा व्रते स्थितः ।
परिवेत्ता भवेत्पूतः परिवित्तिस्तथैव च ॥ २७
निवेश्यं तु पुनस्तेन भवेत्तारयता पितॄन् ।
न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते ॥ २८
भोजनं ह्यन्तराशुद्धं चातुर्मास्ये विधीयते ।
स्त्रियस्तेन प्रशुध्यन्ति इति धर्मविदो विदुः ॥ २९
स्त्रियस्त्वाशङ्किताः पापे नोपगम्या विजानता ।
रजसा ता विशुध्यन्ते भस्मना भाजनं यथा ॥ ३०
पादजोच्छिष्टकांस्यं यद्गवा घ्रातमथापि वा ।
गण्डूषोच्छिष्टमपि वा विशुध्येद्दशभिस्तु तत् ॥ ३१
चतुष्पात्सकलो धर्मो ब्राह्मणस्य विधीयते ।
पादोन इष्टो राजन्ये तथा धर्मो विधीयते ॥ ३२
तथा वैश्ये च शूद्रे च पादः पादो विधीयते ।
विद्यादेवंविधेनैषां गुरुलाघवनिश्चयम् ॥ ३३
तिर्यग्योनिवधं कृत्वा द्रुमांश्छित्वोत्तरान्बहून् ।
त्रिरात्रं वायुभक्षः स्यात्कर्म च प्रथयन्नरः ॥ ३४
अगम्यागमने राजन्प्रायश्चित्तं विधीयते ।
आर्द्रवस्त्रेण षण्मासान्विभाव्यं भस्मशायिना ॥ ३५
एवमेव तु सर्वेषामकार्याणां विधिर्भवेत् ।
ब्रह्मणोक्तेन विधिना दृष्टान्तागमहेतुभिः ॥ ३६
सावित्रीमप्यधीयानः शुचौ देशे मिताशनः ।
अहिंस्रो मन्दकं जल्पन्मुच्यते सर्वकिल्बिषात् ३७
अहःसु सततं तिष्ठेदभ्याकाशं निशाः स्वपन् ।
त्रिरह्नि त्रिर्निशायां च सवासा जलमाविशेत् ॥ ३८
स्त्रीशूद्रपतितांश्चापि नाभिभाषेद्व्रतान्वितः ।
पापान्यज्ञानतः कृत्वा मुच्येदेवंव्रतो द्विजः ॥ ३९
शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकम् ।
अतिरिच्येत्तयोर्यस्तु तत्कर्ता लभते फलम् ॥ ४०
तस्माद्दानेन तपसा कर्मणा च फलं शुभम् ।

---

मरुप्रपातं निर्जलदेशे पर्वताग्रात्पतनम् । महाप्रस्थानं केदारे हिमवदारोहणम् ॥ १७ ॥ निष्पापःसन् ब्राह्मणसभामारोढुं योग्यो भवतीत्यर्थः ॥ १८ ॥ उदपानं शिवं कुर्यात्सुरामिति ङ. थ. पाठः ॥ १९ ॥ यताः त्यक्ताहारविहाराः ॥ २१ ॥ महाव्रतं मासमात्रं जलस्यापि त्यागः ॥ २२ ॥ खरचर्मवासाः षण्मासानिति ङ. थ. पाठः ॥ २४ ॥ तेन कनिष्ठेन निवेश्यं विवाहान्तरं कर्तव्यम् ॥ २८ ॥ अन्तराभोजनं धारणापारणव्रतेन मासचतुष्टयकृतेन शुध्यन्ति महापापयोगे । भाजनं त्वृतुनाशुद्धं चातुर्मास्यं विधीयते इति थ. पाठः । भाजनं पूतिना शुद्धमिति ङ. पाठः ॥ २९ ॥ शूद्रस्य उच्छिष्टं कांस्यं पात्रम् । दशभिः शोधनैः शुध्यति । तानि च पञ्चगव्येन मृत्तोयैर्भस्मनाम्लेन वह्निनेति ॥ ३१ ॥ विधीयते पादः पादोऽपकृष्ट इत्यर्थः । वैश्यस्य द्विपादः । शूद्रस्य पादमात्रः । धर्मः शौचादिः ॥ ३३ ॥ दृष्टान्तभूतो य आगमस्तत्रोक्तैर्हेतुभिर्यावदेन इत्याद्यैः ॥ ३६ ॥ तिष्ठेदित्युपवेशनादेर्व्यावृत्तिः । अभ्याकाशं निरावरणे स्थण्डिलादौ । अनुरूपं हि पापस्य अभ्याकाशमिति ट. पाठः ॥ ३८ ॥ यत्र पुण्ये पापे वातिरिच्येत् योऽधिको भवति स इतरेणेतरदभिभूयातिरिक्तस्य फलं भुङ्क्त इत्यर्थः । अतिरिच्येत यो यत्र इति झ. पाठः ॥ ४० ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

वर्धयेदशुभं कृत्वा यथा स्यादतिरेकवान् ॥ ४१
कुर्याच्छुभानि कर्माणि निमित्ते पापकर्मणाम् ।
दद्यान्नित्यं च वित्तानि तथा मुच्येत किल्बिषात्४२
अनुरूपं हि पापस्य प्रायश्चित्तमुदाहृतम् ।
महापातकवर्जं तु प्रायश्चित्तं विधीयते ॥ ४३
भक्ष्याभक्ष्येषु चान्येषु वाच्यावाच्ये तथैव च ।
अज्ञानज्ञानयो राजन्विहितान्यनुजानतः ॥ ४४
जानता तु कृतं पापं गुरु सर्वं भवत्युत ।
अज्ञानात्स्खलिते दोषे प्रायश्चित्तं विधीयते ॥४५
शक्यते विधिना पापं यथोक्तेन व्यपोहितुम् ।
आस्तिके श्रद्दधाने च विधिरेष विधीयते ॥ ४६
नास्तिकाश्रद्दधानेषु पुरुषेषु कदाचन ।
दम्भद्वेषप्रधानेषु विधिरेष न शिष्यते ॥ ४७
शिष्टाचारश्च दिष्टश्च धर्मो धर्मभृतां वर ।
सेवितव्यो नरव्याघ्र प्रेत्येह च हितेप्सुना ॥ ४८
स राजन्मोक्ष्यते पापात्तेन पूर्वेन हेतुना ।
त्राणार्थं वा वधे तेषामथवा नृपकर्मणा ॥ ४९
अथवा ते घृणा काचित्प्रायश्चित्तं चरिष्यसि ।
मा चैवानार्यजुष्टेन मृत्युना निधनं गमः ॥ ५०
वैशंपायन उवाच ।
एवमुक्तो भगवता धर्मराजो युधिष्ठिरः ।
चिन्तयित्वा मुहूर्तेन प्रत्युवाच तपोधनम् ॥ ५१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

व्यासेन युधिष्ठिरंप्रति भक्ष्याभक्ष्यपात्रापात्रविवेचनम् ॥ १ ॥

युधिष्ठिर उवाच ।
किं भक्ष्यं चाप्यभक्ष्यं च किंच देयं प्रशस्यते ।
किंच पात्रमपात्रं वा तन्मे ब्रूहि पितामह ॥ १
व्यास उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सिद्धानां चैव संवादं मनोश्चैव प्रजापतेः ॥ २
ऋषयस्तु व्रतपराः समागम्य पुरा विभुम् ।
धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम् ॥ ३
कथमन्नं कथं दानं गम्यागम्याः कथं स्त्रियः ।
कार्याकार्यं च यत्सर्वं शंस वै त्वं प्रजापते ॥ ४
तैरेवमुक्तो भगवान्मनुः स्वायंभुवोऽब्रवीत् ।
शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः ॥ ५
अनादेशे जपो होम उपवासस्तथैव च ।
आत्मज्ञानं पुण्यनद्यो यत्र प्रायश्च तत्पराः ॥ ६
अनादिष्टं तथैतानि पुण्यानि धरणीभृतः ।
सुवर्णप्राशनमपि रत्नादिस्नानमेव च ॥ ७
देवस्थानाभिगमनमाज्यप्राशनमेव च ।
एतानि मेध्यं पुरुषं कुर्वन्त्याशु न संशयः ॥ ८
न गर्वेण भवेत्प्राज्ञः कदाचिदपि मानवः ।
दीर्घमायुरथेच्छन्हि त्रिरात्रं चोष्णपो भवेत् ॥ ९
अदत्तस्यानुपादानं दानमध्ययनं तपः ।
अहिंसा सत्यमक्रोधं क्षमा धर्मस्य लक्षणम् ॥१०
स एव धर्मः सोऽधर्मो देशकाले प्रतिष्ठितः ।
आदानमनृतं हिंसा धर्मो ह्यात्यन्तिकः स्मृतः॥११
द्विविधौ चाप्युभावेतौ धर्माधर्मौ विजानताम् ।
अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः ॥ १२

---

प्रजापतिं मनुम् ॥ ३ ॥ कथं पात्रं दानमध्ययनं तप इति ख. पाठः । तत्र कथं केन प्रकारेण । अन्नमदनीयं किंद्रव्यकं कर्तव्यमित्यर्थः ॥ ४ ॥ व्यासो विस्तरः ॥ ५ ॥ अनादेशे विशेषतोऽनुक्ते दोषे । यत्र देशे तत्पराः जपादिपराः प्रायः बहुशः सन्ति सोऽपि गङ्गादिवत्पावन इत्यर्थः ॥ ६ ॥ तथा जपादिवत् । पुण्यान्येतानि वक्ष्यमाणानि । धरणीभृतः पर्वता ब्रह्मगिरिप्रभृतयः । आदिपदात्सुवर्णस्नानादि । अनादिष्टं प्रायश्चित्तं सामान्यमित्यर्थः ॥ ७ ॥ गर्वेण युक्तो न भवेत् पूजां नावगणयेत् । अवगणने तु त्रिरात्रमुष्णपो भवेदिति तप्तकृच्छ्रं धर्मशास्त्रोक्तं कुर्यादित्यर्थः ॥ ९ ॥ तप उपवासादि ॥ १० ॥ आदानं स्तेयम् । प्राणात्ययादावधर्मस्यापि स्तेयादेर्धर्मत्वमित्यर्थः ॥ ११ ॥ वैदिक्यौ प्रवृत्त्यप्रवृत्ती मर्त्यत्वामृतत्वप्रदे । लौकिक्यौ

अप्रवृत्तेरमर्त्यत्वं मर्त्यत्वं कर्मणः फलम् ।
अशुभस्याशुभं विद्याच्छुभस्य शुभमेव च ।
एतयोश्चोभयोः स्यातां शुभाशुभतया तथा ॥१३
दैवं च दैवसंयुक्तं प्राणश्च प्रलयस्तथा ।
अप्रेक्षापूर्वकरणादशुभानां शुभं फलम् ॥ १४
ऊर्ध्वं भवति संदेहादिहादिष्टार्थमेव च ।
अप्रेक्षापूर्वकरणात्प्रायश्चित्तं विधीयते ॥ १५
क्रोधमोहकृते चैव दृष्टान्तागमहेतुभिः ।
शरीराणामुपक्लेशो मनसश्च प्रियाप्रिये ।
तदौषधैश्च मन्त्रैश्च प्रायश्चित्तैश्च शाम्यति ॥ १६
उपवासेनैकरात्रं दण्डोत्सर्गे नराधिपः ।
विशुद्ध्येदात्मशुद्ध्यर्थं त्रिरात्रं तु पुरोहितः ॥ १७
क्षयं शोकं प्रकुर्वाणो न म्रियेत यदा नरः ।
शस्त्रादिभिरुपाविष्टस्त्रिरात्रं तत्र निर्दिशेत् ॥ १८
जातिश्रेण्यधिवासानां कुलधर्मांश्च शाश्वतान् ।
वर्जयन्ति च ये धर्मं तेषां धर्मो न विद्यते ॥ १९
दश वा वेदशास्त्रज्ञास्त्रयो वा धर्मपाठकाः ।
यद्ब्रूयुः कार्य उत्पन्ने स धर्मो धर्मसंशये ॥ २०
अनुष्णा मृत्तिका चैव तथा क्षुद्रपिपीलिकाः ।
श्लेष्मातकस्तथा विप्रैरभक्ष्यं विषमेव च ॥ २१
अभक्ष्या ब्राह्मणैर्मत्स्याः शकलैर्ये विवर्जिताः ।
चतुष्पात्कच्छपादन्यो मण्डूका जलजाश्च ये ॥२२
भासा हंसाः सुपर्णाश्च चक्रवाकाः प्लवा बकाः ।
काको मद्गुश्च गृध्रश्च श्येनोलूकस्तथैव च ॥ २३
क्रव्यादा दंष्ट्रिणः सर्वे चतुष्पात्पक्षिणश्च ये ।
येषां चोभयतो दन्ताश्चतुर्दंष्ट्राश्च सर्वशः ॥ २४
एडकाश्व मृगोष्ट्राणां सूकराणां गवामपि ।
मानुषीणां खरीणां च न पिबेद्ब्राह्मणः पयः ॥ २५
प्रेतान्नं सूतकान्नं च यच्च किंचिदनिर्दशम् ।
अभोज्यं चाप्यपेयं च धेनोर्दुग्धमनिर्दशम् ॥ २६
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नमवीरायाश्च योषितः ॥ २७
विष्ठा वार्धुषिकस्यान्नं गणिकान्नमथेन्द्रियम् ।
मृष्यन्ति ये चोपपतिं स्त्रीजितान्नं च सर्वशः ॥२८
दीक्षितस्य कदर्यस्य क्रतुविक्रयिकस्य च ।
तक्ष्णश्चर्मावकर्तुश्च पुंश्चल्या रजकस्य च ॥ २९
चिकित्सकस्य यच्चान्नमभोज्यं रक्षिणस्तथा ।
गणग्रामाभिशस्तानां रङ्गस्त्रीजीविनां तथा ॥ ३०
परिवित्तीनामपुंसां च बन्दिद्यूतविदां तथा ।
वामहस्ताहृतं चान्नं शुष्कं पर्युषितं च यत् ॥ ३१
सुरानुगतमुच्छिष्टमभोज्यं शेषितं च यत् ।
पिष्टमांसेक्षुशाकानामाविकाजापयस्तथा ।
सक्तु धाना करम्भाश्च नोपभोग्याश्चिरस्थिताः ॥३२
पायसं कृसरं मांसमपूपाश्च वृथा कृताः ।
अपेयाश्चाप्यभक्ष्याश्च ब्राह्मणैर्गृहमेधिभिः ॥ ३३
देवानृषीन्मनुष्यांश्च पितॄन्गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चाद्गृहस्थो भोक्तुमर्हति ॥ ३४
यथा प्रव्रजितो भिक्षुस्तथैव स्वे गृहे वसेत् ।
एवंवृत्तः प्रियैर्दारैः संवसन्धर्ममाप्नुयात् ॥ ३५
न दद्याद्यशसे दानं न भयान्नोपकारिणे ।

---

तु ते शुभे चेच्छुभफले अशुभे चेदशुभफले इत्याह द्वाभ्यां द्विविधाविति ॥ १२ ॥ एतयोर्लौकिकयोः । फले अपि कारणानुरूपे इत्यर्थः ॥ १३ ॥ दैवयुक्तं शास्त्रीय कर्म । प्राणो जीवनम् । एतेषां चतुर्णामप्रेक्षापूर्वं यत्किंचित्क्रियते तद्यशुभानां नीचानामपि पुंसां तस्य फलं शुभं भवति ॥ १४ ॥ सत्यपि संदेहे यल्लोकविगानपरिहारार्थं कृतं नित्यादि यच्च केवलं दृष्टार्थं कृतं श्येनादि तत्रोभयत्रापि ॥ १५ ॥ क्रोधादिना यन्मनसः प्रियमप्रियं कृतं तत्र दृष्टान्तागमहेतुभिः पूर्वोक्तैर्यावदेन इत्याद्यैः प्रमाणैर्देहस्य शोषणमुपवासादिकं प्रायश्चित्तं कर्तव्यम् । औषधैर्हविष्याशनैः । मन्त्रैश्च पवित्रजपैः । चादन्यदपि । तीर्थाटनश्रमादिभिस्तत्पापं शाम्यतीति सार्धम् ॥ १६ ॥ क्षयं पुत्रादिमरणनिमित्तमात्मवधार्थं प्रवृत्तो न म्रियेत चेत् त्रिरात्रमुपवासं चरेत् ॥ १८ ॥ जातिर्ब्राह्मणत्वादिः । श्रेणी गृहस्थादीनां पङ्क्तिः । अधिवासो जन्मभूमिः । जात्यादिधर्मांश्च ये वर्जयन्ति तेषां धर्मः प्रायश्चित्तादिस्वरूपो न विद्यते ॥ १९ ॥ पाठकाः शोधकाः । कार्ये प्रायश्चित्तनिमित्ते दोषे ॥ २० ॥ एडका मेषी ॥ २५ ॥ अभोज्यं पायसाद्यन्तर्गतम् ॥ २६ ॥ अवीरायाः पतिपुत्रहीनायाः ॥ २७ ॥ इन्द्रियं शुक्रम् । गणिकादित्रयाणामन्नम् ॥ २८ ॥ दीक्षितस्य अग्नीषोमीयवपाहोमात्प्राङ् न भोक्तव्यम् । कदर्यो धनव्ययभयाद्भोगत्यागहीनः ॥ २९ ॥ रक्षिणो ग्रामपालकस्य सीमादिरक्षिणो वा ॥ ३० ॥ वाद्यमानाहृतं चान्नमिति ट. ड. थ. पाठः ॥ ३१ ॥ शेषितं कुटुम्बायाऽदत्त्वात्मार्थं रक्षितम् । धाना भृष्टयवाः । करम्भा दधिसक्तवः ॥ ३२ ॥ कृसरं तिलमिश्र ओदनः । वृथाकृताः देवताद्युद्देशं

नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत ।
अग्रतो धर्मराजस्य गान्धारीसहितो ययौ ॥ ४०
कुरुस्त्रियश्च ताः सर्वाः कुन्ती कृष्णा च माधवी ।
यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः ॥ ४१
ततो रथाश्च बहुला नागाश्वसमलंकृताः ।
पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजन् ॥ ४२
ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितैः ।
स्तूयमानो ययौ राजा नगरं नागसाह्वयम् ॥ ४३
तत्प्रयाणं महाबाहोर्बभूवाप्रतिमं भुवि ।
आकुलाकुलमुत्कृष्टं हृष्टपुष्टजनाकुलम् ॥ ४४
अभियाने तु पार्थस्य नरैर्नगरवासिभिः ।
नगरं राजमार्गाश्च यथावत्समलंकृताः ॥ ४५
पाण्डुरेण च माल्येन पताकाभिश्च मेदिनी ।
संस्कृतो राजमार्गोऽभूद्धूपनैश्च प्रधूपितः ॥ ४६
अथ चूर्णैश्च गन्धानां नानापुष्पप्रियङ्गुभिः ।
माल्यदामभिरासक्तै राजवेश्माभिसंवृतम् ॥ ४७
कुम्भाश्च नगरद्वारि वारिपूर्णा नवा दृढाः ।
सिताः सुमनसो गौराः स्थापितास्तत्र तत्र ह ॥४८
तथा स्वलंकृतं द्वारं नगरं पाण्डुनन्दनः ।
स्तूयमानः शुभैर्वाक्यैः प्रविवेश सुहृद्वृतः ॥ ४९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

राजमार्गे नागरैः स्तूयमानस्य युधिष्ठिरस्य राजगृहमेत्य सभाप्रवेशः ॥ १ ॥ तत्र युधिष्ठिरं निन्दतश्चार्वाकराक्षसस्य ब्राह्मणैर्हुंकारेण भस्मीकरणम् ॥ २ ॥

वैशंपायन उवाच ।
प्रवेशने तु पार्थानां जनानां पुरवासिनाम् ।
दिदृक्षूणां सहस्राणि समाजग्मुः सहस्रशः ॥ १
स राजमार्गः शुशुभे समलंकृतचत्वरः ।
यथा चन्द्रोदये राजन्वर्धमानो महोदधिः ॥ २
गृहाणि राजमार्गेषु रत्नवन्ति महान्ति च ।
प्राकम्पन्तीव भारेण स्त्रीणां पूर्णानि भारत ॥ ३
ताः शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरम् ।
भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ ॥ ४
धन्या त्वमसि पाञ्चालि या त्वं पुरुषसत्तमान् ।
उपतिष्ठसि कल्याणि महर्षिमिव गौतमी ॥ ५
तव कर्माण्यमोघानि व्रतचर्या च भामिनि ।
इति कृष्णां महाराज प्रशशंसुस्तदा स्त्रियः ॥ ६
प्रशंसावचनैस्तासां मिथः शब्दैश्च भारत ।
प्रीतिजैश्च तदा शब्दैः पुरमासीत्समाकुलम् ॥ ७
तमतीत्य यथायुक्तं राजमार्गं युधिष्ठिरः ।
अलंकृतं शोभमानमुपायाद्राजवेश्म ह ॥ ८
ततः प्रकृतयः सर्वाः पौरा जानपदास्तदा ।
ऊचुः कर्णसुखा वाचः समुपेत्य ततस्ततः ॥ ९
दिष्ट्या जयसि राजेन्द्र शत्रूञ्छत्रुनिषूदन ।
दिष्ट्या राज्यं पुनः प्राप्तं धर्मेण च बलेन च ॥ १०
भव नस्त्वं महाराज राजेह शरदां शतम् ।
प्रजाः पालय धर्मेण यथेन्द्रस्त्रिदिवं तथा ॥ ११
एवं राजकुलद्वारि मङ्गलैरभिपूजितः ।
आशीर्वादान्द्विजैरुक्तान्प्रतिगृह्य समन्ततः ॥ १२
प्रविश्य भवनं राजा देवराजगृहोपमम् ।
श्रुत्वा विजयसंयुक्तं रथात्पश्चादवातरत् ॥ १३
प्रविश्याभ्यन्तरं श्रीमान्दैवतान्यभिगम्य च ।
पूजयामास रत्नैश्च गन्धमाल्यैश्च सर्वशः ॥ १४
निश्चक्राम ततः श्रीमान्पुनरेव महायशाः ।
ददर्श ब्राह्मणांश्चैव सोऽभिरूपानवस्थितान् ॥ १५
स संवृतस्तदा विप्रैराशीर्वादविवक्षुभिः ।
शुशुभे विमलश्चन्द्रस्तारागणवृतो यथा ॥ १६
तांस्तु वै पूजयामास कौन्तेयो विधिवद्द्विजान् ।

मेदिनी समलंकृतेत्यनुषज्यते । धूपनैः अगरुप्रभृतिभिर्धूपद्रव्यैः ॥ ४६ ॥ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

स्त्रीणां स्त्रीभिः ॥ ३ ॥ अभिरूपान्मङ्गलद्रव्यपाणीन् ॥ १५ ॥

सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा ।
गोभिर्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः ॥१७
धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च ।
'प्रविवेश सभां राजा सुधर्मां वासवो यथा ॥' १८
ततः पुण्याहघोषोऽभूद्दिवं स्तब्ध्वेव भारत ।
सुहृदां प्रीतिजननः पुण्यः श्रुतिसुखावहः ॥ १९
हंसवन्नेदुषां राजन्द्विजानां तत्र भारती ।
शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षरा ॥ २०
ततो दुन्दुभिनिर्घोषः शङ्खानां च मनोरमः ।
जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप ॥ २१
निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः ।
राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् २२
तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः ।
साङ्ख्यः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः २३
वृतः सर्वैस्तथा विप्रैराशीर्वादविवक्षुभिः ।
परस्सहस्रै राजेन्द्र तपोनियमसंस्थितैः ॥ २४
सुदुष्टः पापमाशंसुः पाण्डवानां महात्मनाम् ।
अनामन्त्र्यैव तान्विप्रांस्तमुवाच महीपतिम् ॥२५
चार्वाक उवाच ।
इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि ।
धिग्भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै ॥ २६
किं ते राज्येन कौन्तेय कृत्वेमं ज्ञातिसंक्षयम् ।
घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् ॥२७
इति ते वै द्विजाः श्रुत्वा तस्य दुष्टस्य रक्षसः ।
विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः ॥ २८
ततस्ते ब्राह्मणाः सर्वे स च राजा युधिष्ठिरः ।
व्रीडिताः परमोद्विग्नास्तूष्णीमासन्विशांपते ॥ २९
युधिष्ठिर उवाच ।
प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः ।
प्रत्यासन्नव्यसनिनं न मां धिक्कर्तुमर्हथ ॥ ३०
वैशंपायन उवाच ।
ततो राजन्ब्राह्मणास्ते सर्व एव विशांपते ।
ऊचुर्नैष द्विजोऽस्माकमन्यस्तु तव पार्थिव ॥ ३१
जज्ञुश्चैनं महात्मानस्ततस्तं ज्ञानचक्षुषा ।
ब्राह्मणा वेदविद्वांसस्तपोभिर्विमलीकृताः ॥ ३२
ब्राह्मणा ऊचुः ।
एष दुर्योधनसखा विश्रुतो ब्रह्मराक्षसः ।
परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ ३३
न वयं ब्रूम धर्मात्मन्व्येतु ते भयमीदृशम् ।
उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह ॥ ३४
वैशंपायन उवाच ।
ततस्ते ब्राह्मणाः सर्वे हुंकारैः क्रोधमूर्च्छिताः ।
निर्भर्त्सयन्तः शुचयो निजघ्नुः पापराक्षसम् ॥३५
स पपात विनिर्दग्धस्तेजसा ब्रह्मवादिनाम् ।
महेन्द्राशनिनिर्दग्धः पादपोऽङ्कुरवानिव ॥ ३६
पूजिताश्च ययुर्विप्रा राजानमभिनन्द्य तम् ।
राजा च हर्षमापेदे पाण्डवः ससुहृज्जनः ॥ ३७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

कृष्णेन युधिष्ठिरंप्रति चार्वाकराक्षसस्य पूर्ववृत्तकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततस्तत्र तु राजानं तिष्ठन्ते भ्रातृभिः सह ।
उवाच देवकीपुत्रः सर्वदर्शी जनार्दनः ॥ १
वासुदेव उवाच ।

किमिच्छसि किमिच्छसीति पृच्छद्भिर्भृत्यैर्विविधैर्गोवस्त्रादिद्रव्यैर्निमन्त्रयद्भिरित्यर्थः॥१७॥ स्तब्ध्वा व्याप्य ॥१९॥ साङ्ख्यः शिखीति झ. पाठः ॥ २३ ॥ प्रत्यासन्नाः समीपस्थाः व्यसनिनश्चिरदुःखिनो भ्रात्रादयो यस्य तम्। भ्रात्रादिदुःखपरिहारार्थं ममेदं राज्यकरणं ननु स्वसुखार्थमित्यर्थः ॥ ३० ॥ जज्ञुर्ज्ञातवन्तः ॥ ३२ ॥ चार्वाको नाम राक्षसः इति झ. पाठः ॥ ३३ ॥ सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

ब्राह्मणास्तात लोकेऽस्मिन्नर्चनीयाः सदा मम ।
एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ॥ २
पुरा कृतयुगे राजंश्चार्वाको नाम राक्षसः ।
तपस्तेपे महाबाहो बदर्यां बहुवार्षिकम् ॥ ३
वरेण च्छन्द्यमानश्च ब्रह्मणा च पुनः पुनः ।
अभयं सर्वभूतेभ्यो वरयामास भारत ॥ ४
द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम् ।
अभयं सर्वभूतेभ्यो ददौ तस्मै जगत्पतिः ॥ ५
स तु लब्धवरः पापो देवानमितविक्रमः ।
राक्षसस्तापयामास तीव्रकर्मा महाबलः ॥ ६
ततो देवाः समेताश्च ब्रह्माणमिदमब्रुवन् ।
वधाय रक्षसस्तस्य बलविप्रकृतास्तदा ॥ ७
तानुवाच ततो देवो विहितं तत्र वै मया ।
यथाऽस्य भविता मृत्युरचिरेणेति भारत ॥ ८
राजा दुर्योधनो नाम सखाऽस्य भविता नृषु ।
तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते ॥ ९
तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः ।
धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति १०
स एष निहतः शेते ब्रह्मदण्डेन राक्षसः ।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥ ११
हतास्ते क्षत्रधर्मेण ज्ञातयस्तव पार्थिव ।
स्वर्गताश्च महात्मानो वीराः क्षत्रियपुङ्गवाः ॥१२
स त्वमातिष्ठ कार्याणि मा ते भूद्बुद्धिरन्यथा ।
शत्रूञ्जहि प्रजा रक्ष द्विजांश्च परिपूजय ॥ १३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

कृष्णादिभिर्युधिष्ठिरस्य राज्येऽभिषेचनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः ।
काञ्चने प्राङ्मुखो हृष्टो न्यषीदत्परमासने ॥ १
तमेवाभिमुखौ पीठे प्रदीप्ते काञ्चने शुभे ।
सात्यकिर्वासुदेवश्च निषीदतुररिंदमौ ॥ २
मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ ।
निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ॥ ३
दान्ते शय्यासने शुभ्रे जाम्बूनदविभूषिते ।
पृथाऽपि सहदेवेन सहास्ते नकुलेन च ॥ ४
सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः ।
निषेदुर्ज्वलनाकारेष्वासनेषु पृथक्पृथक् ॥ ५
युयुत्सुः सञ्जयश्चैव गान्धारी च यशस्विनी ।
धृतराष्ट्रो यतो राजा ततः सर्वे समाविशन् ॥ ६
तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत् ।
स्वस्तिकानक्षतान्भूमिं सुवर्णं रजतं मणीन् ॥ ७
ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम् ।
ददृशुर्धर्मराजानमादाय बहुमङ्गलम् ॥ ८
पृथिवीं च सुवर्णं च रत्नानि विविधानि च ।
आभिषेचनिकं भाण्डं सर्वसंभारसंभृतम् ॥ ९
काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः ।
पूर्णकुम्भाः सुमनसो लाजा बर्हींषि गोरसाः ॥१०
शमीपिप्पलपालाशसमिधो मधुसर्पिषी ।
स्रुव औदुम्बरः शङ्खस्तथा हेमविभूषितः ॥ ११
दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः ।
प्रागुदक्प्रवणे वेदीं लक्षणेनोपलिख्य च ॥ १२
व्याघ्रचर्मोत्तरे शुक्ले सर्वतोभद्र आसने ।
दृढपादप्रतिष्ठाने हुताशनसमत्विषि ॥ १३
उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम् ।
जुहाव पावकं धीमान्विधिमन्त्रपुरस्कृतम् ॥ १४
तत उत्थाय दाशार्हः शङ्खमादाय पूरितम् ।

गतमन्युर्वीतदैन्यः । गतज्वरो वीतशोकः ॥ १ ॥ निषीदतुरिति निषेदतुरित्यर्थे आर्षम् ॥२॥ दान्ते गजदन्तमये ॥४॥ सुधर्मा दुर्योधनपुरोहितः ॥ ५ ॥ स्वस्तिकान्सर्वतोभद्राद्यङ्कितानि देवतापीठानि ॥ ७ ॥ भाण्डं उपकरणम् ॥ ९ ॥ औदुम्बरास्ताम्रमयाः ॥ १० ॥ उदुम्बरकाष्ठमयः स्रुवः ॥ ११ ॥

अभ्यषिञ्चन्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा ॥ १५
अनुज्ञातोऽथ कृष्णेन भ्रातृभिः सह पाण्डवः ।
पाञ्चजन्याभिषिक्तश्च राजाऽमृतमुखोऽभवत् ॥१६
ततोऽनुवादयामासुः पणवानकदुन्दुभीन् ॥ १७
धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्मतः ।
पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः ॥ १८
ततो निष्कसहस्रेण ब्राह्मणान्स्वस्त्यवाचयन् ।
वेदाध्ययनसंपन्नान्धृतिशीलसमन्वितान् ॥ १९
ते प्रीता ब्राह्मणा राजन्स्वस्त्यूचुर्जयमेव च ।
हंसा इव च नर्दन्तः प्रशशंसुर्युधिष्ठिरम् ॥ २०
युधिष्ठिर महाबाहो दिष्ट्या जयसि पाण्डव ।
दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते ॥२१
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ।
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ ॥२२
मुक्ता वीरक्षयात्तस्मात्संग्रामाद्विजितद्विषः ।
क्षिप्रमुत्तरकार्याणि कुरु सर्वाणि भारत ॥ २३
ततः प्रीत्याऽर्चितः सद्भिर्धर्मराजो युधिष्ठिरः ।
प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः ॥ ४० ॥

युधिष्ठिरेण भीमार्जुनादीनां तत्तद्योग्ययौवराज्याद्यधिकारेषु नियोजनम् ॥ १ ॥

वैशंपायन उवाच ।
प्रकृतीनां च तद्वाक्यं देशकालोपबृंहितम् ।
श्रुत्वा युधिष्ठिरो राजाऽथोत्तरं प्रत्यभाषत ॥ १
धन्याः पाण्डुसुता नूनं येषां ब्राह्मणपुङ्गवाः ।
तथ्यान्वाप्यथवाऽतथ्यान्गुणानाहुः समागताः २
अनुग्राह्या वयं नूनं भवतामिति मे मतिः ।
यदेवं गुणसंपन्नानस्मान्ब्रूथ विमत्सराः ॥ ३
धृतराष्ट्रो महाराजः पिता नो दैवतं परम् ।
शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः ॥४
एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत् ।
अस्य शुश्रूषणं कार्यं मया नित्यमतन्द्रिणा ॥ ५
यदि चाहमनुग्राह्यो भवतां सुहृदां तथा ।
धृतरा यथापूर्वं वृत्तिं वर्तितुमर्हथ ॥ ६
एष नाथो हि जगतो भवतां च मया सह ।
अस्य प्रसादे पृथिवी पाण्डवाः सर्व एव च ॥ ७
एतन्मनसि कर्तव्यं भवद्भिर्वचनं मम ।
अनुज्ञाप्याथ तान्राजा यथेष्टं गम्यतामिति ॥ ८
पौरजानपदान्सर्वान्विसृज्य कुरुनन्दनः ।
यौवराज्येन कौन्तेयं भीमसेनमयोजयत् ॥ ९
मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने ।
विदुरं बुद्धिसंपन्नं प्रीतिमान्स समादिशत् ॥ १०
कृताकृतपरिज्ञाने तथाऽऽयव्ययचिन्तने ।
संजयं योजयामास वृद्धं सर्वगुणैर्युतम् ॥ ११
बलस्य परिमाणे च भक्तवेतनयोस्तथा ।
नकुलं व्यादिशद्राजा कर्मणां चान्ववेक्षणे ॥ १२
परचक्रोपरोधे च दृप्तानां चावमर्दने ।
युधिष्ठिरो महाराज फल्गुनं व्यादिदेश ह ॥ १३
द्विजानां देवकार्येषु कार्येष्वन्येषु चैव ह ।
धौम्यं पुरोधसां श्रेष्ठं नित्यमेव समादिशत् ॥१४
सहदेवं समीपस्थं नित्यमेव समादिशत् ।
तेन गोप्यो हि नृपतिः सर्वावस्थो विशांपते ॥१५
यान्यानमन्यद्योग्यांश्च येषु येष्विह कर्मसु ।
तांस्तांस्तेष्वेव युयुजे प्रीयमाणो महीपतिः ॥ १६
विदुरं संजयं चैव युयुत्सुं च महामतिम् ।
अब्रवीत्परवीरघ्नो धर्मात्मा धर्मवत्सलः ॥ १७

---

अमृतमुखः अत्यन्तं दर्शनीयः ॥ १६ ॥

एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

उत्थायोत्थाय तत्कार्यमस्य राज्ञः पितुर्मम ।
सर्वं भवद्भिः कर्तव्यमप्रमत्तैर्यथा मम ॥ १८
पौरजानपदानां च यानि कार्याणि नित्यशः ।
राजानं समनुज्ञाप्य तानि कार्याणि धर्मतः ॥ १९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

युधिष्ठिरेण ज्ञातिप्रभृतीनामौर्ध्वदैहिककरणपूर्वकं तदीयादीनां परिपालनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा ज्ञातीनां ये हता युधि ।
श्राद्धानि कारयामास तेषां पृथगुदारधीः ॥ १
धृतराष्ट्रो ददौ राजा पुत्राणामौर्ध्वदेहिकम् ।
सर्वकामगुणोपेतमन्नं गाश्च धनानि च ।
रत्नानि च विचित्राणि महार्हाणि महायशाः ॥ २
युधिष्ठिरस्तु द्रोणस्य कर्णस्य च महात्मनः ।
धृष्टद्युम्नाभिमन्युभ्यां हेडिम्बस्य च रक्षसः ॥ ३
विराटप्रभृतीनां च सुहृदामुपकारिणाम् ।
द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ ॥ ४
ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् ।
धनै रत्नैश्च गोभिश्च वस्त्रैश्च समतर्पयत् ॥ ५
ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः ।
उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदेहिकम् ॥६
सभाः प्रपाश्च विविधास्तटाकानि च पाण्डवः ।
सुहृदां कारयामास सर्वेषामौर्ध्वदेहिकम् ॥ ७
स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम् ।
कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् ॥ ८
धृतराष्ट्रं यथापूर्वं गान्धारीं विदुरं तथा ।
सर्वांश्च कौरवान्मान्यान्भृत्यांश्च समपूजयत् ॥ ९
याश्च तत्र स्त्रियः काश्चिद्धतवीरा हतात्मजाः ।
सर्वास्ताः कौरवो राजा संपूज्यापालयद्घृणी ॥१०
दीनान्धकृपणानां च गृहाच्छादनभोजनैः ।
आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः ॥ ११
स विजित्य महीं कृत्स्नामानृण्यं प्राप्य वैरिषु ।
निःसपत्नः सुखी राजा विजहार युधिष्ठिरः ॥१२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

युधिष्ठिरेण नामशतकेन श्रीकृष्णस्तवनम् ॥ १ ॥

वैशंपायन उवाच ।
अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः ।
दाशार्हं पुण्डरीकाक्षमुवाच प्राञ्जलिः शुचिः ॥१
तव कृष्ण प्रसादेन नयेन च बलेन च ।
बुद्ध्या च यदुशार्दूल तथा विक्रमणेन च ॥ २
पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया ।
नमस्ते पुण्डरीकाक्ष पुनःपुनररिंदम ॥ ३
त्वामेकमाहुः पुरुषं त्वामाहुः सात्वतां पतिम् ।
नामभिस्त्वां बहुविधैः स्तुवन्ति प्रयता द्विजाः ॥४
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥ ५
अदित्याः सप्तधा त्वं तु पुराणो गर्भतां गतः ।

यत् अस्य कार्यं तच्च भवद्भिः कर्तव्यमित्यर्थः। अप्रमत्तैस्तथा मयेति ट. द. पाठः ॥ १८ ॥ तानि कार्याणि कर्तव्यानीत्यर्थः ॥ १९ ॥ चत्वारिंशोऽध्यायः ॥ ४० ॥

संपूज्यापालयत्प्रजा इति ड. थ. पाठः ॥ १० ॥ एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

सप्तधा विष्ण्वाख्य आदित्यो वामनश्चेति द्वेधा अदित्यामेव

पृश्निगर्भस्त्वमेवैकस्त्रियुगं त्वां वदन्त्यपि ॥ ६
शुचिश्रवा हृषीकेशो घृतार्चिर्हंस उच्यते ।
त्रिचक्षुः शंभुरेकस्त्वं विभुर्दामोदरोऽपि च ॥ ७
वराहोऽग्निर्बृहद्भानुर्वृषभस्तार्क्ष्यलक्षणः ।
अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ॥ ८
वरिष्ठ उग्रसेनानीः सत्यो वाजसनिर्गुहः ।
अच्युतश्च्यावनोऽरीणां संस्कृतो विकृतिर्वृषः ॥ ९
कृष्णधर्मस्त्वमेवादिर्वृषदर्भो वृषाकपिः ।
सिन्धुर्विधूर्मिस्त्रिककुप् त्रिधामा त्रिवृदच्युतः ॥ १०
सम्राड् विराट् स्वराट् चैव स्वराड्भूतमयो भवः ।
विभूर्भूरभिभूः कृष्णः कृष्णवर्त्मा त्वमेव च ॥ ११
स्विष्टकृद्भिषजावर्तः कपिलस्त्वं च वामनः ।
यज्ञो ध्रुवः पतङ्गश्च जयत्सेनस्त्वमुच्यसे ॥ १२
शिखण्डी नहुषो बभ्रुर्दिविस्पृक् त्वं पुनर्वसुः ।
सुबभ्रू रुक्मयज्ञश्च सुषेणो दुन्दुभिस्तथा ॥ १३
गभस्तिनेमिः श्रीपद्मः पुष्करः शुष्मधारणः ।
ऋभुर्विभुः सर्वसूक्ष्मस्त्वं धरित्री च पठ्यसे ॥ १४
अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धामवित् ।
हिरण्यगर्भः पुरुषः स्वधा स्वाहा च केशवः ॥ १५
योनिस्त्वमस्य प्रलयश्च कृष्ण
त्वमेवेदं सृजसि विश्वमग्रे ।
विश्वं चेदं त्वद्वशे विश्वयोने
नमोऽस्तु ते शार्ङ्गचक्रासिपाणे ॥ १६
वैशंपायन उवाच ।
एवं स्तुतो धर्मराजेन कृष्णः
सभामध्ये प्रीतिमान्पुष्कराक्षः ।
तमभ्यनन्दद्भारतं पुष्कलाभि-
र्वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्र्यः ॥ १७
'एतन्नामशतं विष्णोर्धर्मराजेन कीर्तितम् ।
यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥' १८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

युधिष्ठिराज्ञया भीमादिभिश्चतुर्भिर्दुर्योधनादिगृहपरिग्रहः ॥ १ ॥

वैशंपायन उवाच ।
ततो विसर्जयामास सर्वास्ताः प्रकृतीर्नृपः ।
विविशुश्चाभ्यनुज्ञाता यथास्वानि गृहाणि ते ॥ १
ततो युधिष्ठिरो राजा भीमं भीमपराक्रमम् ।
सान्त्वयन्नब्रवीच्छ्रीमानर्जुनं यमजौ तथा ॥ २
शत्रुभिर्विविधैः शस्त्रैः क्षतदेहा महारणे ।
श्रान्ता भवन्तः सुभृशं तापिताः शोकमन्युभिः ॥ ३
अरण्ये दुःखवसतिमत्कृते भरतर्षभाः ।
भवद्भिरनुभूता हि यथा कापुरुषैस्तथा ॥ ४
यथासुखं यथाजोषं जयोऽयमनुभूयताम् ।
विश्रान्ताँल्लब्धविश्वासान्श्वः समेताऽस्मि वः पुनः ॥ ५
ततो दुर्योधनगृहं प्रासादैरुपशोभितम् ।
बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ॥ ६
धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः ।
प्रतिपेदे महाबाहुर्मन्दिरं मघवानिव ॥ ७
यथा दुर्योधनगृहं तथा दुःशासनस्य तु ।
प्रासादमालासंयुक्तं हेमतोरणभूषितम् ॥ ८
दासीदाससुसंपूर्णं प्रभूतधनधान्यवत् ।
प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ॥ ९
दुर्मर्षणस्य भवनं दुःशासनगृहाद्वरम् ।

---

जन्म । ततोऽदितेे रूपान्तरेषु पृश्निप्रभृतिषु क्रमात्पृश्निगर्भः परशुरामः दाशरथीरामः यादवौ रामकृष्णौ चेति । सर्वेषु गर्भेषु एकएव त्वम् । त्रिषु कृतादिषु युगेषु भवं त्रियुगम् । आदित्याः सप्तरात्रं त्वा पुराणे धर्मतां गतः । इति थ. पाठः ॥ ६ ॥ नृचक्षुः शंभुरिति थ. द. पाठः ॥ ७ ॥ वरुणोऽग्निर्बृहद्भानुर्वृ-षण इति थ. द. पाठः ॥ ८ ॥ वाचिष्ठ उग्रसेनानीरिति ङ. थ. द. पाठः । संकृतिः प्रकृतिर्विभुरिति ङ. थ. पाठः ॥ ९ ॥ त्रिककुप् ऊर्ध्ववर्त्मा त्वमेवेति थ. द. पाठः ॥ १० ॥ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

कुबेरभवनप्रख्यं मणिहेमविभूषितम् ॥ १०
नकुलाय वराहाय कर्शिताय महावने ।
ददौ प्रीतो महाराज धर्मपुत्रो युधिष्ठिरः ॥ ११
दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषणम् ।
पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसंकुलम् ॥ १२
प्रददौ सहदेवाय संततं प्रियकारिणे ।
मुमुदे तच्च लब्ध्वाऽसौ कैलासं धनदो यथा ॥ १३
युयुत्सुर्विदुरश्चैव सञ्जयश्च विशांपते ।
सुधर्मा चैव धौम्यश्च यथा स्वाञ्जग्मुरालयान् १४
सह सात्यकिना शौरिरर्जुनस्य निवेशनम् ।
विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव ॥१५
तत्र भक्ष्यान्नपानैस्ते मुदिताः सुसुखोषिताः ।
सुखप्रबुद्धा राजानमुपतस्थुर्युधिष्ठिरम् ॥ १६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

युधिष्ठिरेण कृष्णमेत्य सुखशयनादिप्रश्नपूर्वकं तत्स्तुतिः ॥ १ ॥

जनमेजय उवाच ।
प्राप्य राज्यं महाबाहुर्धर्मपुत्रो युधिष्ठिरः ।
यदन्यदकरोद्विप्र तन्मे वक्तुमिहार्हसि ॥ १
भगवान्वा हृषीकेशस्त्रैलोक्यस्य परो गुरुः ।
ऋषे यदकरोद्वीरस्तच्च व्याख्यातुमर्हसि ॥ २
वैशंपायन उवाच ।
शृणु तत्त्वेन राजेन्द्र कीर्त्यमानं मयाऽनघ ।
वासुदेवं पुरस्कृत्य यदकुर्वत पाण्डवाः ॥ ३
प्राप्य राज्यं महाराज कुन्तीपुत्रो युधिष्ठिरः ।
वर्णान्संस्थापयामास नयेन विनयेन च ॥ ४
ब्राह्मणानां सहस्रं च स्नातकानां महात्मनाम् ।
सहस्रनिष्कैरेकैकं तर्पयामास पाण्डवः ॥ ५
तथाऽनुजीविनो भृत्यान्संश्रितानतिथीनपि ।
कामैः संतर्पयामास कृपणांस्तार्किकानपि ॥ ६
पुरोहिताय धौम्याय प्रादादयुतशः स गाः ।
धनं सुवर्णं रजतं वासांसि विविधान्यपि ॥ ७
कृपाय च महाराज पितृवत्तमतर्पयत् ।
विदुराय च राजाऽसौ पूजां चक्रे यतव्रतः ॥ ८
भक्ष्यान्नपानैर्विविधैर्वासोभिः शयनासनैः ।
सर्वान्संतोषयामास संश्रितान्ददतां वरः ॥ ९
लब्धप्रशमनं कृत्वा स राजा राजसत्तम ।
युयुत्सोर्धार्तराष्ट्रस्य पूजां चक्रे महायशाः ॥ १०
धृतराष्ट्राय तद्राज्यं गान्धार्यै विदुराय च ।
निवेद्य सुस्थवद्राजा सुखमास्ते युधिष्ठिरः ॥ ११
तथा सर्वं स नगरं प्रसाद्य भरतर्षभ ।
वासुदेवं महात्मानमभ्यगच्छत्कृताञ्जलिः ॥ १२
ततो महति पर्यङ्के मणिकाञ्चनभूषिते ।
ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम् ॥१३
जाज्वल्यमानं वपुषा दिव्याभरणभूषितम् ।
पीतकौशेयवसनं हेम्नेवोपगतं मणिम् ॥ १४
कौस्तुभेनोरसिस्थेन मणिनाऽभिविराजितम् ।
उद्यतेवोदयं शैलं सूर्येणाभिविराजितम् ॥ १५
नौपम्यं विद्यते तस्य त्रिषु लोकेषु किंचन ॥१६
सोऽभिगम्य महात्मानं विष्णुं पुरुषसत्तमम् ।
उवाच मधुरं राजा स्मितपूर्वमिदं तदा ॥ १७
सुखेन ते निशा कच्चिद्व्युष्टा बुद्धिमतां वर ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ॥ १८
तथैवोपश्रिता देवी बुद्धिर्बुद्धिमतां वर ।
वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता ॥१९
तव प्रसादाद्भगवंस्त्रिलोकगतिविक्रम ।
जयं प्राप्ता यशश्चाग्र्यं न च धर्माच्च्युता वयम् ॥२०

लब्धप्रशमनं लब्धस्य धनादेः यथोचितमशतः पात्रे समर्पणेन शान्तिकम् ॥ १० ॥ चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

तं तथा भाषमाणं तु धर्मराजमरिंदमम् । नोवाच भगवान्किंचिद्ध्यानमेवान्वपद्यत ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

कृष्णेन युधिष्ठिरंप्रति धर्मश्रवणाय भीष्मसमीपगमनचोदना ॥ १ ॥ तथा युधिष्ठिरप्रार्थनया स्वस्यापि तत्र गमनाय दारुकेण रथसंयोजनम् ॥ २ ॥

युधिष्ठिर उवाच ।
किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम ।
कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ॥ १
'इन्द्रियाणि मनश्चैव बुद्धौ संवेशितानि ते' ।
चतुर्थं ध्यानमार्गं त्वमालम्ब्य पुरुषर्षभ ।
अपक्रान्तो यतो जीवस्तेन मे विस्मितं मनः ॥ २
निगृहीतो हि वायुस्ते पञ्चकर्मा शरीरगः ।
इन्द्रियाणि च सर्वाणि मनसि स्थापितानि ते ॥ ३
वाक्‌ सत्त्वं च गोविन्द बुद्धौ संवेशितानि ते ।
सर्वे चैव गुणा देवाः क्षेत्रज्ञे ते निवेशिताः ॥ ४
नेङ्गन्ति तव रोमाणि स्थिरा बुद्धिस्तथा मनः ।
काष्ठकुड्यशिलाभूतो निरीहश्चासि माधव ॥ ५
यथा दीपो निवातस्थो निरिङ्गो ज्वलतेऽच्युत ।
तथाऽसि भगवन्देव निश्चलो योगनिश्चयात् ॥ ६
यदि श्रोतुमिहार्हामि न रहस्यं च ते यदि ।
छिन्धि मे संशयं देव प्रपन्नायाभियाचते ॥ ७
त्वं हि कर्ता विकर्ता च त्वं क्षरश्चाक्षरश्च ह ।
अनादिनिधनो ह्याद्यस्त्वमेकः पुरुषोत्तम ॥ ८
त्वं प्रपन्नाय भक्ताय शिरसा प्रणताय च ।
ध्यानस्यास्य यथातत्त्वं ब्रूहि धर्मभृतां वर ॥ ९
ततः स्वगोचरे न्यस्य मनोबुद्धीन्द्रियाणि च ।
स्मितपूर्वमुवाचेदं भगवान्वासवानुजः ॥ १०
वासुदेव उवाच ।
शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः ।
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥ ११
यस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
न सहेद्देवराजोऽपि तमस्मि मनसा गतः ॥ १२
येनाभिजित्य तरसा समस्तं राजमण्डलम् ।
ऊढास्तिस्रः पुरा कन्यास्तमस्मि मनसा गतः ॥ १३
त्रयोविंशतिरात्रं यो योधयामास भार्गवम् ।
न च रामेण निस्तीर्णस्तमस्मि मनसा गतः ॥ १४
यं गङ्गा गर्भविधिना धारयामास भारतम् ।
वसिष्ठशिष्यं तं तात गतोऽस्मि मनसा नृप ॥ १५
दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् ।
साङ्गांश्च चतुरो वेदांस्तमस्मि मनसा गतः ॥ १६
रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव ।
आधारं सर्वविद्यानां तमस्मि मनसा गतः ॥ १७
'एकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया ।
शरणं मामुपागच्छत्ततो मे तद्गतं मनः ॥' १८
स हि भूतं भविष्यच्च भवच्च भरतर्षभ ।
वेत्ति धर्मविदां श्रेष्ठस्तमस्मि मनसा गतः ॥ १९
तस्मिन्हि पुरुषव्याघ्रे शान्ते भीष्मे महात्मनि ।
भविष्यति मही पार्थ नष्टचन्द्रेव शर्वरी ॥ २०
तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमम् ।
अभिगम्योपसंगृह्य पृच्छ यत्ते मनोगतम् ॥ २१
चातुर्विद्यं चातुर्होत्रं चातुराश्रम्यमेव च ।
राजधर्मांश्च निखिलान्पृच्छैनं पृथिवीपते ॥ २२
तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरंधरे ।

चतुर्थं जाग्रत्स्वप्नसुषुप्तिभ्यः परम् । अपक्रान्तो यतो देव इति झ. पाठः ॥ २ ॥ पञ्चकर्मा प्राणनादिकारी ॥ ३ ॥ सत्त्वं मनः । वागुपलक्षितानीन्द्रियाणि च बुद्धौ महत्तत्त्वे । गुणाः शब्दादिगुणभाजो देवाः श्रोत्रादीनि इन्द्रियाणि ॥ ४ ॥ नेङ्गन्ति न कम्पन्ते । निरीहो निश्चेष्टः ॥५॥ निरिङ्गः अचलः ॥ ६ ॥ गोचरे स्वस्वस्थाने ॥ १० ॥ ध्याति ध्यायति ॥ ११ ॥ चतस्रो विद्याः धर्मार्थकाममोक्षविद्याः सर्ववर्णसाधारणाः । चातुर्होत्रं त्रैवर्णिकानां विशेषधर्मो यज्ञादिः ॥ २२ ॥

ज्ञानान्यल्पीभविष्यन्ति तस्मात्त्वां चोदयाम्यहम् ॥
तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम् ।
साश्रुकण्ठः स धर्मज्ञो जनार्दनमुवाच ह ॥ २४
यद्भवानाह भीष्मस्य प्रभावं प्रति माधव ।
तथा तन्नात्र संदेहो विद्यते मम माधव ॥ २५
महाभाग्यं च भीष्मस्य प्रभावश्च महाद्युते ।
श्रुतं मया कथयतां ब्राह्मणानां महात्मनाम् ॥२६
भवांश्च कर्ता लोकानां यद्ब्रवीत्यरिसूदन ।
तथा तदनभिध्येयं वाक्यं यादवनन्दन ॥ २७
यदि त्वनुग्रहवती बुद्धिस्ते मयि माधव ।
त्वामग्रतः पुरस्कृत्य भीष्मं यास्यामहे वयम् ॥२८
आवृत्ते भगवत्यर्के स हि लोकान्गमिष्यति ।
त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः ॥ २९
तव ह्याद्यस्य देवस्य क्षरस्यैवाक्षरस्य च ।
दर्शनं त्वस्य लाभः स्यात्त्वं हि ब्रह्ममयो निधिः ॥३०
वैशंपायन उवाच ।
श्रुत्वैवं धर्मराजस्य वचनं मधुसूदनः ।
पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ॥ ३१
सात्यकिस्त्वाशु निष्क्रम्य केशवस्य समीपतः ।
दारुकं प्राह कृष्णस्य युज्यतां रथ इत्युत ॥ ३२
स सात्यकेराशु वचो निशम्य
रथोत्तमं काञ्चनभूषिताङ्गम् ।
मसारगल्वर्कमयैर्विभङ्गै-
र्विभूषितं हेमनिबद्धचक्रम् ॥ ३३
दिवाकरांशुप्रभमाशुगामिनं
विचित्रनानामणिभूषितान्तरम् ।
नवोदितं सूर्यमिव प्रतापिनं
विचित्रतार्क्ष्यध्वजिनं पताकिनम् ॥ ३४
सुग्रीवशैब्यप्रमुखैर्वराश्वै-
र्मनोजवैः काञ्चनभूषिताङ्गैः ।
संयुक्तमावेदयदच्युताय
कृताञ्जलिर्दारुको राजसिंह ॥ ३५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

**वैशंपायनेन जनमेजयंप्रति भीष्मकृतकृष्णस्तवराजानुवादपूर्वकं भीष्मस्य शरीरत्यागप्रकारकथनम् ॥ १ ॥**

जनमेजय उवाच ।
शरतल्पे शयानस्तु भरतानां पितामहः ।
कथमुत्सृष्टवान्देहं कं च योगमधारयत् ॥ १
वैशंपायन उवाच ।
शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः ।
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ॥ २
प्रवृत्तमात्रे त्वयनमुत्तरेण दिवाकरे ।
'शुक्लपक्षस्य चाष्टम्यां माघमासस्य पार्थिव ॥ ३
प्राजापत्ये च नक्षत्रे मध्यं प्राप्ते दिवाकरे ।'
समावेशयदात्मानमात्मन्येव समाहितः ॥ ४
विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः ।
शुशुभे परया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ ५
व्यासेन देवश्रवसा नारदेन सुरर्षिणा ।
देवस्थानेन वात्स्येन तथाऽश्मकसुमन्तुना ॥ ६
तथा जैमिनिना चैव पैलेन च महात्मना ।
शाण्डिल्यदेवलाभ्यां च मैत्रेयेण च धीमता ॥ ७
असितेन वसिष्ठेन कौशिकेन महात्मना ।
हारीतलोमशाभ्यां च तथाऽऽत्रेयेण धीमता ॥ ८
[बृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः ।
सनत्कुमारः कपिलो वाल्मीकिस्तुम्बुरुः कुरुः ॥ ९
मौद्गल्यो भार्गवो रामस्तृणबिन्दुर्महामुनिः ।
पिप्पलादोऽथ वायुश्च संवर्तः पुलहः कचः ॥ १०
काश्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः ।
मरीचिरङ्गिराः काश्यो गौतमो गालवो मुनिः ॥ ११

अनभिध्येयं अविचारणीयम् ॥ २७ ॥ मसारगल्वर्कमयैर्विभङ्गैः मसारो मरकतमणिः गल्वश्चन्द्रकान्तः अर्कः सूर्यकान्तः तन्मयैः विभङ्गैः विस्तरैः ॥ ३३ ॥ पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

धौम्यो विभाण्डो माण्डव्यो धौम्रः कृष्णानुभौतिकः
उलूकः परमो विप्रो मार्कण्डेयो महामुनिः ।
भास्करिः पूरणः कृष्णः सूतः परमधार्मिकः ॥१२
एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ।
श्रद्धादमशमोपेतैर्वृतश्चन्द्र इव ग्रहैः ॥ १३
भीष्मस्तु पुरुषव्याघ्रः कर्मणा मनसा गिरा ।
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिः शुचिः॥१४
स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम् ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ।
'अनादिनिधनं विष्णुमात्मयोनिं सनातनम्॥'१५
कृताञ्जलिपुटो भूत्वा वाग्विदां प्रवरः प्रभुः ॥
भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ॥ १६
भीष्म उवाच ।
आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् ।
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः ॥१७
शुचिं शुचिपदं हंसं तत्परं परमेष्ठिनम् ।
युक्त्वा सर्वात्मनाऽऽत्मानं तं प्रपद्ये प्रजापतिम् १८
अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः ।
एकोऽयं वेद भगवान्धाता नारायणो हरिः॥ १९
नारायणादृषिगणास्तथा सिद्धमहोरगाः ।
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥ २०
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
यं न जानन्ति को ह्येष कुतो वा भगवानिति॥२१
'यमाहुर्जगतः कोशं यस्मिंश्च निहिताः प्रजाः ।
यस्मिँल्लोकाः स्फुरन्त्येते जाले शकुनयो यथा ॥'२२
यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ।
गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥ २३

'यं च विश्वस्य कर्तारं जगतस्तस्थुषां पतिम् ।
वदन्ति जगतोऽध्यक्षमध्यात्मपरिचिन्तकाः॥'२
यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति ।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि ॥ २
हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ।
सहस्रबाहुमकुटं सहस्रवदनोज्ज्वलम् ॥ २
प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ।
अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।
गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ॥ २
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥ २
चतुर्भिश्चतुरात्मानं सत्वस्थं सात्वतां पतिम् ।
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः ॥ २
[यस्मिन्नित्यं तपस्तप्तं यदङ्गेष्वनुतिष्ठति ।
सर्वात्मा सर्ववित्सर्वः सर्वज्ञः सर्वभावनः॥] ३
यं देवं देवकी देवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ॥ ३
यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम् ।
इष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मानमात्मनि॥३
'अप्रतर्क्यमविज्ञेयं हरिं नारायणं विभुम् ।'
अतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसम् ।
अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ॥ ३
पुराणे पुरुषं प्रोक्तं ब्रह्मप्रोक्तं युगादिषु ।
क्षये संकर्षणं प्रोक्तं तमुपास्यमुपास्महे ॥ ३
यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम् ।
नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम्॥३
ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।

जिगदिषामि वक्तुमिच्छामि । व्याससमासिन्या विस्तरसंक्षेपवत्या ॥ १७ ॥ सदसत्कार्यं कारणं च विश्वं कर्म यस्मात् ॥ २५ ॥ वाकेषु मन्त्रेषु सामान्यतः कर्मप्रकाशकेषु । अनुवाकेषु मन्त्रार्थविवरणभूतेषु ब्राह्मणवाक्येषु । निषत्सु कर्माङ्गाद्यवबद्धदेवतादिज्ञानवाक्येषु । उपनिषत्सु केवलात्मज्ञापकवाक्येषु गृणन्ति ध्यायन्ति । सत्यमबाधितम् । सत्येष्वबाधितार्थेषु । सामसु ज्येष्ठसामादिषु ॥ २८ ॥ चतुर्भिर्नामभिर्वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपैः ॥ २९ ॥ नित्यं तपः स्वधर्मस्तद्यस्मिन् । यत्प्रीत्यर्थं तप्तं सद्यद्यस्मादङ्गेषु चित्तेष्वनुतिष्ठति उपतिष्ठति यश्च सर्वात्मा तं प्रपद्ये इति सर्वेषां यच्छब्दसंबद्ध प्रथमेनान्वयः । ईश्वरार्थमनुष्ठितो धर्मः स्वचित्तशुद्धिद्व स्वार्थएव भवतीति भावः ॥ ३० ॥ भौमं ब्रह्म वेदा ब्राह्म यज्ञाश्च ॥ ३१ ॥ आत्मानं सर्वेश्वरमात्मनि हार्दाकाशे योगेन पश्यति । आनन्त्याय मोक्षाय ॥ ३२ ॥ पुराणे अ तकल्पादिविषये । पुरुषं पूर्णं सर्वमस्मिन्नतीतमस्त्येवेति यो त्पुरुष इति नाम । युगादिषु युगारम्भेषु । बृंहकत्वात्स्रष्टे ब्रह्मेत्याहुः । क्षये सर्वस्य सम्यक्कर्षणादयं संकर्षण इत्यु ॥ ३४ ॥ नान्यभक्ता अनन्यभक्ताः ॥ ३५ ॥

अनादिमध्यपर्यन्तं न देवा नर्षयो विदुः ॥ ३६
यं सुरासुरगन्धर्वाः सिद्धा ऋषिमहोरगाः ।
प्रयता नित्यमर्चन्ति परमं सुखभेषजम् ॥ ३७
अनादिनिधनं देवमात्मयोनिं सनातनम् ।
अप्रेक्ष्यमनभिज्ञेयं हरिं नारायणं प्रभुम् ॥ ३८ ॥

अथ भीष्मस्तवराजः ॥

हिरण्यवर्णं यं गर्भमदितिर्दैत्यनाशनम् ।
एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः ॥ ३९
शुक्ले देवान्पितॄन्कृष्णे तर्पयत्यमृतेन यः ।
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ॥४०
'हुताशनमुखैर्देवैर्धार्यते सकलं जगत् ।
हविः प्रथमभोक्ता यस्तस्मै होत्रात्मने नमः ॥' ४१
महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ ४२
यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे ।
यं विप्रसङ्घा गायन्ति तस्मै वेदात्मने नमः ॥ ४३
पादाङ्गं संधिपर्वाणं स्वरव्यञ्जनभूषितम् ।
यमाहुरक्षरं विप्रास्तस्मै वागात्मने नमः ॥ ४४
[यज्ञाङ्गो यो वराहो वै भूत्वा गामुज्जहारह ।
लोकत्रयहितार्थाय तस्मै वीर्यात्मने नमः ॥] ४५
ऋग्यजुःसामधामानं दशार्धहविराकृतिम् ।
यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः ॥ ४६
[चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः ॥]४७
यः सुपर्णो यजुर्नाम च्छन्दोगात्रस्त्रिवृच्छिराः ।
रथन्तरबृहत्पक्षस्तस्मै स्तोत्रात्मने नमः ॥ ४८
यः सहस्रसवे सत्रे जज्ञे विश्वसृजामृषिः ।
हिरण्यपक्षः शकुनिस्तस्मै तार्क्ष्यात्मने नमः ॥४९
यश्चिनोति सतां सेतुमृतेनामृतयोनिना ।
धर्मार्थव्यवहाराङ्गैस्तस्मै सत्यात्मने नमः ॥ ५०
यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः ।
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥ ५१
[यतः सर्वे प्रसूयन्ते ह्यनङ्गात्माङ्गदेहिनः ।
उन्मादः सर्वभूतानां तस्मै कामात्मने नमः॥]५२
यं तं व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः ।
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ ५३
यं दृगात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।
प्राहुः सप्तदशं साङ्ख्यास्तस्मै साङ्ख्यात्मने नमः ॥ ५४
यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ५५
अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।
शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥
यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥ ५७
युगेष्वावर्तते योऽंशैर्मासर्त्वयनहायनैः ।
सर्गप्रलययोः कर्ता तस्मै कालात्मने नमः ॥ ५८
योऽसौ युगसहस्रान्ते प्रदीप्तार्चिर्विभावसुः ।
संभक्षयति भूतानि तस्मै घोरात्मने नमः ॥ ५९
संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ।
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥ ६०
सहस्रशिरसे तस्मै पुरुषायामितात्मने ।
चतुःसमुद्रपयसि योगनिद्रात्मने नमः ॥ ६१
अजस्य नाभावध्येकं यस्मिन्विश्वं प्रतिष्ठितम् ।
पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥ ६२
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसंधिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ ६३
यस्मात्सर्गाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः ॥ ६४
[यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः ।
इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः ॥] ६५
अकार्यः सर्वकार्येषु धर्मकार्यार्थमुद्यतः ।
वैकुण्ठस्य हि तद्रूपं तस्मै कार्यात्मने नमः ॥ ६६

---

हिरण्यगर्भमिति ङ. थ. पाठः । जज्ञे जनयामास ॥ ३९ ॥ उक्थे बह्वृचाः । अग्नौ चयनेऽध्वर्यवः ॥ ४३ ॥ चतुर्भिरिति । आश्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति सप्तदशभिरक्षरैर्यो हूयते तस्मै होमात्मने नमः ॥ ४७ ॥ यः सहस्रसमे सत्र इति झ. पाठः । तत्र सहस्रसमे सहस्रसंवत्सरे सत्रे इत्यर्थः ॥ ४९ ॥ यं त्रिधात्मानमिति झ. पाठः ॥ ५४ ॥ षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः ।
पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः ॥६७
अन्नपानेन्धनमयो रसप्राणविवर्धनः ।
यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥ ६८
[प्राणानां धारणार्थाय योऽन्नं भुङ्क्ते चतुर्विधम् ।
अन्तर्भूतः पचत्यग्निस्तस्मै पाकात्मने नमः ॥] ६९
विषये वर्तमानानां यं तं वैषयिकैर्गुणैः ।
प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ॥ ७०
अप्रमेयशरीराय सर्वतो बुद्धिचक्षुषे ।
अपारपरिमाणाय तस्मै दिव्यात्मने नमः ॥ ७१
परः कालात्परो यज्ञात्परः सदसतश्च यः ।
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥ ७२
वैद्युतो जाठरश्चैव पावकः शुचिरेव च ।
दहनः सर्वभक्षाणां तस्मै वह्न्यात्मने नमः ॥ ७३
रसातलगतः श्रीमाननन्तो भगवान्प्रभुः ।
जगद्धारयते योऽसौ तस्मै शेषात्मने नमः ॥ ७४
ज्वलनार्केन्दुताराणां ज्योतिषां दिव्यमूर्तिनाम् ।
यस्तेजयति तेजांसि तस्मै तेजात्मने नमः ॥ ७५
आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितम् ।
यं ज्ञानेनाधिगच्छन्ति तस्मै ज्ञानात्मने नमः ॥ ७६
साङ्ख्यैर्योगैर्विनिश्चित्य साध्यैश्च परमर्षिभिः ।
यस्य तु ज्ञायते तत्वं तस्मै गुह्यात्मने नमः ॥ ७७
जटिने दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ ७८
[शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने ।
भस्मदिग्धोर्ध्वलिङ्गाय तस्मा रुद्रात्मने नमः ॥ ७९
चन्द्रार्धकृतशीर्षाय व्यालयज्ञोपवीतिने ।
पिनाकशूलहस्ताय तस्मै उग्रात्मने नमः ॥] ८०
यो जातो वसुदेवेन देवक्यां यदुनन्दनः ।
शङ्खचक्रगदापाणिर्वासुदेवात्मने नमः ॥ ८१
शिरःकपालमालाय व्याघ्रचर्मनिवासिने ।
भस्मदिग्धशरीराय तस्मै रुद्रात्मने नमः ॥ ८२
यो मोहयति भूतानि सर्वपाशानुबन्धनैः ।
सर्वस्य रक्षणार्थाय तस्मै मोहात्मने नमः ॥ ८३
चैतन्यं सर्वतो नित्यं सर्वप्राणिहृदि स्थितम् ।
सर्वातीततरं सूक्ष्मं तस्मै सूक्ष्मात्मने नमः ॥ ८४
पञ्चभूतात्मभूताय भूतादिनिधनाय च ।
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ ८५
यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः ॥ ८६
यः शेते क्षीरपर्यङ्के दिव्यनागविभूषिते ।
फणासहस्ररचिते तस्मै निद्रात्मने नमः ॥ ८७
विश्वे च मरुतश्चैव रुद्रादित्याश्विनावपि ।
वसवः सिद्धसाध्याश्च तस्मै देवात्मने नमः ॥ ८८
अव्यक्तं बुद्ध्यहंकारौ मनोबुद्धीन्द्रियाणि च ।
तन्मात्राणि विशेषाश्च तस्मै तत्वात्मने नमः ॥ ८९
भूतं भव्यं भविष्यच्च भूतादिप्रभवाव्ययः ।
योऽग्रजः सर्वभूतानां तस्मै भूतात्मने नमः ॥ ९०
यं हि सूक्ष्मं विचिन्वन्ति परं सूक्ष्मविदो जनाः ।
सूक्ष्मात्सूक्ष्मं च यद्ब्रह्म तस्मै सूक्ष्मात्मने नमः ॥
मत्स्यो भूत्वा विरिञ्चाय येन वेदाः समाहृताः ।
रसातलगतः शीघ्रं तस्मै मत्स्यात्मने नमः ॥ ९२
मन्दराद्रिर्धृतो येन प्राप्ते ह्यमृतमन्थने ।
अतिकर्कशदेहाय तस्मै कूर्मात्मने नमः ॥ ९३
वाराहं रूपमास्थाय महीं सवनपर्वताम् ।
उद्धरत्येकदंष्ट्रेण तस्मै क्रोडात्मने नमः ॥ ९४
नारसिंहवपुः कृत्वा सर्वलोकभयंकरम् ।
हिरण्यकशिपुं जघ्ने तस्मै सिंहात्मने नमः ॥ ९५
पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रानखैर्युतम् ।
दानवेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः ॥ ९६
यं न देवा न गन्धर्वा न दैत्या न च दानवाः ।
तत्वतो हि विजानन्ति तस्मै सूक्ष्मात्मने नमः ॥]
वामनं रूपमास्थाय बलिं संयम्य मायया ।
त्रैलोक्यं क्रान्तवान्यस्तु तस्मै क्रान्तात्मने नमः ॥
जमदग्निसुतो भूत्वा रामः शस्त्रभृतां वरः ।
महीं निःक्षत्रियां चक्रे तस्मै रामात्मने नमः ॥ ९८
त्रिःसप्तकृत्वो यश्चैको धर्मे व्युत्क्रान्तिगौरवात् ।
जघान क्षत्रियान्सङ्ख्ये तस्मै क्रोधात्मने नमः ॥ ९९
[विभज्य पञ्चधाऽऽत्मानं वायुर्भूत्वा शरीरगः ।
यश्चेष्टयति भूतानि तस्मै वाय्वात्मने नमः ॥] १००

रामो दाशरथिर्भूत्वा पुलस्त्यकुलनन्दनम् ।
जघान रावणं सङ्ख्ये तस्मै क्षत्रात्मने नमः ॥ १०१
यो हली मुसली श्रीमान्नीलाम्बरधरः स्थितः ।
रामाय रौहिणेयाय तस्मै भोगात्मने नमः ॥१०२
शङ्खिने चक्रिणे नित्यं शार्ङ्गिणे पीतवाससे ।
वनमालाधरायैव तस्मै कृष्णात्मने नमः ॥ १०३
वसुदेवसुतः श्रीमान्क्रीडितो नन्दगोकुले ।
कंसस्य निधनार्थाय तस्मै क्रीडात्मने नमः॥ १०४
वासुदेवत्वमागम्य यदोर्वंशसमुद्भवः ।
भूभारहरणं चक्रे तस्मै कृष्णात्मने नमः ॥ १०५
सारथ्यमर्जुनस्याजौ कुर्वन्गीतामृतं ददौ ।
लोकत्रयोपकाराय तस्मै ब्रह्मात्मने नमः ॥ १०६
दानवांस्तु वशे कृत्वा पुनर्बुद्धत्वमागतः ।
सर्गस्य रक्षणार्थाय तस्मै बुद्धात्मने नमः ॥१०७
हनिष्यति कलौ प्राप्ते म्लेच्छांस्तुरगवाहनः ।
धर्मसंस्थापको यस्तु तस्मै कल्क्यात्मने नमः ॥१०८
तारान्वये कालनेमिं हत्वा दानवपुङ्गवम् ।
ददौ राज्यं महेन्द्राय तस्मै साङ्ख्यात्मने नमः॥१०९
यः सर्वप्राणिनां देहे साक्षिभूतो ह्यवस्थितः ।
अक्षरः क्षरमाणानां तस्मै साक्ष्यात्मने नमः ॥११०
नमोस्तु ते महादेव नमस्ते भक्तवत्सल ।
सुब्रह्मण्य नमस्तेऽस्तु प्रसीद परमेश्वर ॥ १११
अव्यक्तव्यक्तरूपेण व्याप्तं सर्वं त्वया विभो ।
नारायणं सहस्राक्षं सर्वलोकमहेश्वरम् ॥ ११२
हिरण्यनाभं यज्ञाङ्गममृतं विश्वतोमुखम् ।
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ॥ ११३
येषां हृदिस्थो देवेशो मङ्गलायतनं हरिः ।
मङ्गलं भगवान्विष्णुर्मङ्गलं मधुसूदनः ॥ ११४
मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ।
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ॥ ११५
अपवर्गस्थभूतानां पञ्चानां परमास्थित ।
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ॥ ११६
नमस्ते दिक्षु सर्वासु त्वं हि सर्वपरायणम् ।
नमस्ते भगवन्विष्णो लोकानां प्रभवाव्यय ॥ ११७
त्वं हि कर्ता हृषीकेशः संहर्ता चापराजितः ।
तेन पश्यामि ते दिव्यान्भावान्हि त्रिषु वर्त्मसु ११८
तच्च पश्यामि तत्वेन यत्ते रूपं सनातनम् ।
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा ।
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः॥११९
[दिशो भुजा रविश्चक्षुर्वीर्ये शुक्रः प्रतिष्ठितः ।
सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः ॥] १२०
व्यक्ताव्यक्तस्वरूपेण व्याप्तं सर्वं त्वया विभो ।
अव्यक्तं ब्राह्मणं रूपं व्यक्तमेतच्चराचरम् ॥ १२१
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥१२२
[एकोऽपि कृष्णस्य कृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥ १२३
कृष्णव्रताः कृष्णमनुस्मरन्तो
रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते कृष्णदेहाः प्रविशन्ति कृष्ण-
माज्यं यथा मन्त्रहुतं हुताशे ॥ १२४
नमो नरकसंत्रासरक्षामण्डलकारिणे ।
संसारनिम्नगावर्ततरिकाष्ठाय विष्णवे ॥ १२५
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥१२६
प्राणकान्तारपाथेयं संसारोच्छेदभेषजम् ।
दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥] १२७
नारायणपरं ब्रह्म नारायणपरं तपः ।
नारायणपरं सत्यं नारायणपरं परम् ॥ १२८
यथा विष्णुमयं सत्यं यथा विष्णुमयं हविः ।
तथा विष्णुमयं सर्वं पाप्मा मे नश्यतां तथा ॥ १२९
तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।
प्रणामं येऽपि कुर्वन्ति तेषामपि नमोनमः ॥१३०
त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ १३१
इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।

वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥ १३२
वैशंपायन उवाच ।
एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः ।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥ १३३
तस्मिन्नुपरते वाक्ये ततस्ते ब्रह्मवादिनः ।
भीष्मं वाग्भिर्बाष्पगलास्तमानर्चुर्महाद्युतिम् १३४
तेऽस्तुवन्तश्च विप्रेन्द्राः केशवं पुरुषोत्तमम् ।
भीष्मं च शनकैः सर्वे प्रशशंसुः पुनः पुनः ॥ १३५
अधिगम्य तु योगेन भक्तिं भीष्मस्य माधवः ।
त्रैलोक्यदर्शनं ज्ञानं दिव्यं दत्त्वा ययौ हरिः ॥१३६
विदित्वा भक्तियोगं तं भीष्मस्य पुरुषोत्तमः ।
सहसोत्थाय तं हृष्टो यानमेवान्वपद्यत ॥ १३७
केशवः सात्यकिश्चैव रथेनैकेन जग्मतुः ।
अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ॥ १३८
भीमसेनो यमौ चोभौ रथमेकं समास्थिताः ।
कृपो युयुत्सुः सूतश्च सञ्जयश्चापरं रथम् ॥ १३९
ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः ।
नेमिघोषेण महता कम्पयन्ते वसुंधराम् ॥ १४०

ततो गिरः पुरुषवरस्तवेरिता
द्विजेरिताः पथिषु मनाक् स शुश्रुवे
कृताञ्जलिं प्रणतमथापरं जनं
स केशिहा मुदितमनाभ्यनन्दत ॥
इति स्मरन्पठति च शार्ङ्गधन्वनः
शृणोतु वा यदुकुलनन्दनस्तवम् ।
स चक्रभृत्प्रतिहतसर्वकिल्बिषो
जनार्दनं प्रविशति देहसंक्षये ॥
यं योगिनः प्राणवियोगकाले
यत्नेन चित्ते विनिवेशयन्ति ।
स तं पुरस्ताद्धरिमीक्षमाणः
प्राणाञ्जहौ प्राप्तफलो हि भीष्मः ॥ १
स्तवराजः समाप्तोऽयं विष्णोरद्भुतकर्मणः ।
गाङ्गेयेन पुरा गीतो महापातकनाशनः ॥ १
इमं नरः स्तवराजं मुमुक्षुः
पठञ्शुचिः कलुषितकल्मषापहम् ।
अतीत्य लोकान्मलिनः समागता-
न्पदं स गच्छत्यमृतं महात्मनः ॥ १

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

कृष्णयुधिष्ठिरादीनां कुरुक्षेत्रंप्रति गमनम् ॥ १ ॥ युधिष्ठिरेण कृष्णंप्रति परशुरामचरित्रकथनप्रार्थना ॥ २ ॥

वैशंपायन उवाच ।
ततः स च हृषीकेशः स च राजा युधिष्ठिरः ।
कृपादयश्च ते सर्वे चत्वारः पाण्डवाश्च ते ॥ १
रथैस्तैर्नगरप्रख्यैः पताकाध्वजशोभितैः ।
ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः ॥ २
तेऽवतीर्य कुरुक्षेत्रे केशमज्जास्थिसंकुले ।
देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महारथैः ॥ ३
गजाश्वदेहास्थिचयैः पर्वतैरिव संचितम् ।
नरशीर्षकपालैश्च हंसैरिव च सर्वशः ॥ ४
चितासहस्रैर्निचितं वर्मशस्त्रसमाकुलम् ।
आपानभूमिं कालस्य तदा भुक्तोज्झितामिव ॥५
भूतसङ्घानुचरितं रक्षोगणनिषेवितम् ।

पश्यन्तस्ते कुरुक्षेत्रं ययुराशु महारथाः ॥
गच्छन्नेव महाबाहुः सर्वं यादवनन्दनः ।
युधिष्ठिराय प्रोवाच जामदग्न्यस्य विक्रमम् ॥
अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः ।
येषु संतर्पयामास पितॄन्क्षत्रियशोणितैः ॥
त्रिःसप्तकृत्वो वसुधां कृत्वा निःक्षत्रियां प्रभुः
इहेदानीं ततो रामः कर्मणो विरराम ह ॥
युधिष्ठिर उवाच ।
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ।
रामेणेति यदात्थ त्वमत्र मे संशयो महान् ॥ १
क्षत्रबीजं यथा दग्धं रामेण यदुपुङ्गव ।
कथं भूयः समुत्पत्तिः क्षत्रस्यामितविक्रम ॥ १

विपर्ययेण ते भद्रे नैतदेवं भविष्यति ।
मातुस्ते ब्राह्मणो भूयात्तव च क्षत्रियः सुतः ॥ २०
मेवमुक्ता महाभागा भर्त्रा सत्यवती तदा ।
पपात शिरसा तस्मै वेपन्ती चाब्रवीदिदम् ॥ २१
नार्होऽसि भगवन्नद्य वक्तुमेवंविधं वचः ।
ब्राह्मणापशदं पुत्रं प्राप्स्यसीति हि मां प्रभो ॥ २२
ऋचीक उवाच ।
नैष संकल्पितः कामो मया भद्रे तथा त्वयि ।
उग्रकर्मा भवेत्पुत्रश्चरुव्यत्यासहेतुना ॥ २३
सत्यवत्युवाच ।
इच्छँल्लोकानपि मुने सृजेथाः किं पुनः सुतम् ।
शमात्मकमृजुं पुत्रं दातुमर्हसि मे प्रभो ॥ २४
ऋचीक उवाच ।
नोक्तपूर्वं मया भद्रे स्वैरेष्वप्यनृतं वचः ।
किमुताग्निं समाधाय मन्त्रवच्चरुसाधने ॥ २५
[दृष्टमेतत्पुरा भद्रे ज्ञातं च तपसा मया ।
ब्रह्मभूतं हि सकलं पितुस्तव कुलं भवेत् ॥] २६
सत्यवत्युवाच ।
काममेवं भवेत्पौत्रो ममैवं तनयः प्रभो ।
शमात्मकमृजुं पुत्रं लभेयं जपतां वर ॥ २७
ऋचीक उवाच ।
पुत्रे नास्ति विशेषो मे पौत्रे च वरवर्णिनि ।
यथा त्वयोक्तं वचनं तथा भद्रे भविष्यति ॥ २८
वासुदेव उवाच ।
ततः सत्यवती पुत्रं जनयामास भार्गवम् ।
तपस्यभिरतं शान्तं जमदग्निं यतव्रतम् ॥ २९
विश्वामित्रं च दायादं गाधिः कुशिकनन्दनः ।
प्राप ब्रह्मर्षिसमितं विश्वेन ब्रह्मणा युतम् ॥ ३०
ऋचीको जनयामास जमदग्निं तपोनिधिम् ।
सोऽपि पुत्रं ह्यजनयज्जमदग्निः सुदारुणम् ॥ ३१
सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् ।
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥ ३२
[तोषयित्वा महादेवं पर्वते गन्धमादने ।
अस्त्राणि वरयामास परशुं चातितेजसम् ॥
स तेनाकुण्ठधारेण ज्वलितानलवर्चसा ।
कुठारेणाप्रमेयेण लोकेष्वप्रतिमोऽभवत् ॥]
एतस्मिन्नेव काले तु कृतवीर्यात्मजो बली ।
अर्जुनो नाम तेजस्वी क्षत्रियो हैहयाधिपः ॥
दत्तात्रेयप्रसादेन राजा बाहुसहस्रवान् ।
चक्रवर्ती महातेजा विप्राणामाश्वमेधिके ॥
ददौ स पृथिवीं सर्वां सप्तद्वीपां सपर्वताम् ।
सबाह्वस्त्रबलेनाजौ जित्वा परमधर्मवित् ॥
तृषितेन च कौन्तेय भिक्षितश्चित्रभानुना ।
सहस्रबाहुर्विक्रान्तः प्रादाद्भिक्षामथाग्नये ॥
ग्रामान्पुराणि राष्ट्राणि घोषांश्चैव तु वीर्यवान् ।
जज्वाल तस्य बाणेद्धश्चित्रभानुर्दिधक्षया ॥
स तस्य पुरुषेन्द्रस्य प्रभावेण महौजसः ।
ददाह कार्तवीर्यस्य शैलानपि धरामपि ॥
स शून्यमाश्रमारण्यमापवस्य महात्मनः ।
ददाह पवनेनेद्धश्चित्रभानुः सहैहयः ॥
आपवस्तं ततो रोषाच्छशापार्जुनमच्युत ।
दग्धे श्रमे महाबाहो कार्तवीर्येण वीर्यवान् ॥
त्वया न वर्जितं यस्मान्ममेदं हि महद्वनम् ।
दग्धं तस्माद्रणे रामो बाहूंस्ते च्छेत्स्यतेऽर्जुन ॥
अर्जुनस्तु महातेजा बली नित्यं शमात्मकः ।
ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ।
नाचिन्तयत्तदा शापं तेन दत्तं महात्मना ॥ १
तस्य पुत्राः सुबलिनः शापेनासन्पितुर्वधे ।
निमित्तमवलिप्ता वै नृशंसाश्चैव नित्यदा ॥ ४
जमदग्नेस्तु धेन्वास्ते वत्समानिन्युरच्युत ।
अज्ञातं कार्तवीर्यस्य हैहयेन्द्रस्य धीमतः ॥ ४
तन्निमित्तमभूद्युद्धं जामदग्नेर्महात्मनः ।
ततोऽर्जुनस्य बाहून्स चिच्छेद रुषितोऽनघ ॥ ४
तं भ्रमन्तं ततो वत्सं जामदग्न्यः स्वमाश्रमम् ।
प्रत्यानयत राजेन्द्र तेषामन्तःपुरात्प्रभुः ॥ ४
अर्जुनस्य सुतास्तें तु संभूयाबुद्धयस्तदा ।

चित्रभानुना अग्निना ॥ ३८ ॥ आपवस्य वसिष्ठस्य ॥ ४१ ॥
श्रमे आश्रमे ॥ ४२ ॥ पितुर्वधे वधनिमित्तमासन् ॥ ४५ ॥

निमित्तादिति पाठे शापादेव हेतोः ॥ ४६ ॥

महात्मना भगवता रामेण यदुपुङ्गव ।
कथमुत्सादितं क्षत्रं कथमृद्धिगतं पुनः ॥ १२
महता रथयुद्धेन कोटिशः क्षत्रिया हताः ।
तथाऽभूच्च मही कीर्णा क्षत्रियैर्वदतां वर ॥ १३
किमर्थं भार्गवेणेदं क्षत्रमुत्सादितं पुरा ।
रामेण यदुशार्दूल कुरुक्षेत्रे महात्मना ॥ १४
एतन्मे छिन्धि वार्ष्णेय संशयं तार्क्ष्यकेतन ।
आगमो हि परः कृष्ण त्वत्तो नो वासवानुज ॥ १५
वैशंपायन उवाच ।
ततो व्रजन्नेव गदाग्रजः प्रभुः
शशंस तस्मै निखिलेन तत्त्वतः ।
युधिष्ठिरायाप्रतिमौजसे तदा
यथाऽभवत्क्षत्रियसंकुला मही ॥ १६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

कृष्णेन युधिष्ठिरंप्रति परशुरामचरितकथनम् ॥ १ ॥

वासुदेव उवाच ।
शृणु कौन्तेय रामस्य प्रभावो यो मया श्रुतः ।
महर्षीणां कथयतां कारणं तस्य जन्म च ॥ १
यथा च जामदग्न्येन कोटिशः क्षत्रिया हताः ।
उद्भूता राजवंशेषु ये भूयो भारते हताः ॥ २
जह्नोरजस्तु तनयो वलाकाश्वस्तु तत्सुतः ।
कुशिको नाम धर्मज्ञस्तस्य पुत्रो महीपते ॥ ३
अग्र्यं तपः समातिष्ठत्सहस्राक्षसमो भुवि ।
पुत्रं लभेयमजितं त्रिलोकेश्वरमित्युत ॥ ४
तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरंदरः ।
समर्थं पुत्रजनने स्वयमेवैत्य भारत ॥ ५
पुत्रत्वमगमद्राजंस्तस्य लोकेश्वरेश्वरः ।
गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः ॥ ६
तस्य कन्याऽभवद्राजन्नाम्ना सत्यवती प्रभो ।
तां गाधिर्भृगुपुत्राय ऋचीकाय ददौ प्रभुः ॥ ७
ततस्तया हि कौन्तेय भार्गवः कुरुनदनः ।
पुत्रार्थं श्रपयामास चरुं गाधेस्तथैव च ॥ ८
आहूय चाह तां भार्यामृचीको भार्गवस्तदा ।
उपयोज्यश्चरुरयं त्वया मात्राऽप्ययं तव ॥ ९
तस्या जनिष्यते पुत्रो दीप्तिमान्क्षत्रियर्षभः ।
अजय्यः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः ॥ १०
तवापि पुत्रं कल्याणि धृतिमन्तं शमात्मकम् ।
तपोन्वितं द्विजश्रेष्ठं चरुरेष विधास्यति ॥ ११
इत्येवमुक्त्वा तां भार्यां सर्चीको भृगुनन्दनः ।
तपस्यभिरतः श्रीमाञ्जगामारण्यमेव हि ॥ १२
एतस्मिन्नेव काले तु तीर्थयात्रापरो नृपः ।
गाधिः सदारः संप्राप्त ऋचीकस्याश्रमं प्रति ॥ १३
चरुद्वयं गृहीत्वा तु राजन्सत्यवती तदा ।
भर्त्रा दत्तं प्रसन्नेन मात्रे हृष्टा न्यवेदयत् ॥ १४
माता तु तस्याः कौन्तेय दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञातमात्मसंस्थं चकार ह ॥ १५
अथ सत्यवती गर्भं क्षत्रियान्तकरं तदा ।
धारयामास दीप्तेन वपुषा घोरदर्शनम् ॥ १६
तामृचीकस्तदा दृष्ट्वा ध्यानयोगेन भारत ।
अब्रवीद्भृगुशार्दूलः स्वां भार्यां देवरूपिणीम् ॥ १७
मात्राऽसि व्यंसिता भद्रे चरुव्यत्यासहेतुना ।
तस्माज्जनिष्यते पुत्रः क्रूरकर्माऽत्यमर्षणः ।
'जनयिष्यति माता ते ब्रह्मभूतं तपोधनम् ॥' १८
विश्वं हि ब्रह्म सुमहच्चरौ तव समाहितम् ।
क्षत्रवीर्यं च सकलं तव मात्रे समर्पितम् ॥ १९

आगमो वेदः । त्वत्तः त्वद्वचनात्नो परः नाधिकः ॥ १५ ॥
सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥
भारते भारतसंग्रामे ॥ २ ॥ स्वयमेवान्वपद्यतेति झ. पाठः ॥ ५ ॥ गाधेः पुत्रार्थं तस्याश्च पुत्रार्थं चरु चरुद्वयम् ॥ ८ ॥ उपयोज्यः भोज्यः भोक्तव्यः ॥ ९ ॥ व्यंसिता वञ्चिता ॥ १८ ॥

गत्वाऽऽश्रममसंबुद्धा जमदग्नेर्महात्मनः ।
अपातयन्त भल्लाग्रैः शिरः कायान्नराधिप ॥ ४९
समित्कुशार्थं रामस्य निर्यातस्य यशस्विनः ।
'प्रत्यक्षं राममातुश्च तथैवाश्रमवासिनाम् ॥ ५०
श्रुत्वा रामस्तमर्थं च क्रुद्धः कालानलोपमः ।
धनुर्वेदेऽद्वितीयो हि दिव्यास्त्रैः समलंकृतः ॥ ५१
चन्द्रबिम्बार्धसंकाशं परशुं गृह्य भार्गवः ।'
ततः पितृवधामर्षाद्रामः परममन्युमान् ।
निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत ॥ ५२
ततः स भृगुशार्दूलः कार्तवीर्यस्य वीर्यवान् ।
विक्रम्य निजघानाशु पुत्रान्पौत्रांश्च सर्वशः ॥ ५३
स हैहयसहस्राणि हत्वा परममन्युमान् ।
महीं सागरपर्यन्तां चकार रुधिरोक्षिताम् ॥ ५४
स तथा सुमहातेजाः कृत्वा निःक्षत्रियां महीम् ।
कृपया परयाऽऽविष्टो वनमेव जगाम ह ॥ ५५
ततो वर्षसहस्रेषु समतीतेषु केषुचित् ।
कोपं संप्राप्तवांस्तत्र प्रकृत्या कोपनः प्रभुः ॥ ५६
विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः ।
परावसुर्महाराज क्षिप्त्वाऽऽह जनसंसदि ॥ ५७
ये ते ययातिपतने यज्ञे सन्तः समागताः ।
प्रतर्दनप्रभृतयो राम किं क्षत्रिया न ते ॥ ५८
मिथ्याप्रतिज्ञो राम त्वं कत्थसे जनसंसदि ।
भयात्क्षत्रियवीराणां पर्वतं समुपाश्रितः ॥ ५९
सा पुनः क्षत्रियशतैः पृथिवी सर्वतः स्तृता ।
परावसोर्वचः श्रुत्वा शस्त्रं जग्राह भार्गवः ॥ ६०
ततो ये क्षत्रिया राजञ्शतशस्तेन वर्जिताः ।
ते विवृद्धा महावीर्याः पृथिवीपतयोऽभवन् ॥ ६१
स पुनस्ताञ्जघानाशु बालानपि नराधिप ।
गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा ॥ ६२
जातंजातं स गर्भं तु पुनरेव जघान ह ।
अरक्षंश्च सुतान्कांश्चित्तदा क्षत्रिययोषितः ॥ ६३
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः ॥ ६४
स क्षत्रियाणां शेषार्थं करेणोद्दिश्य कश्यपः ।
स्रुक्प्रग्रहवता राजंस्ततो वाक्यमथाब्रवीत् ॥ ६५
गच्छ पारं समुद्रस्य दक्षिणस्य महामुने ।
न ते मद्विषये राम वस्तव्यमिह कर्हिचित् ॥ ६६
'पृथिवी दक्षिणा दत्ता वाजिमेधे मम त्वया ।
पुनरस्याः पृथिव्या हि दत्त्वा दातुमनीश्वरः ॥' ६७
ततः शूर्पाकरं देशं सागरस्तस्य निर्ममे ।
संत्रासाज्जामदग्न्यस्य सोऽपरान्तमहीतलम् ॥ ६८
कश्यपस्तां महाराज प्रतिगृह्य वसुंधराम् ।
कृत्वा ब्राह्मणसंस्थां वै प्रविष्टः सुमहद्वनम् ॥ ६९
ततः शूद्राश्च वैश्याश्च यथा स्वैरप्रचारिणः ।
अवर्तन्त द्विजाग्र्याणां दारेषु भरतर्षभ ॥ ७०
अराजके जीवलोके दुर्बला बलवत्तरैः ।
वध्यन्ते न हि वित्तेषु प्रभुत्वं कस्यचित्तदा ॥ ७१
'ब्राह्मणा मद्यपाः केचिन्मूर्खाः पण्डितमानिनः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चोत्पथगामिनः ।
परस्परं समाश्रित्य घातयन्त्यपथस्थिताः ॥ ७२
स्वधर्मं ब्राह्मणास्त्यक्त्वा पाषण्डत्वं समाश्रिताः ।
चौरिकानृतमायाश्च सर्वे चैव प्रकुर्वते ॥ ७३
स्वधर्मस्थान्द्विजान्हत्वा तथाऽऽश्रमनिवासिनः ।
वैश्याः सत्पथसंस्थाश्च शूद्रा ये चैव धार्मिकाः ॥ ७४
तान्सर्वान्घातयन्ति स्म दुराचाराः सुनिर्भयाः ।
यज्ञाध्ययनशीलांश्च आश्रमस्थांस्तपस्विनः ॥ ७५
गोबालवृद्धनारीणां नाशं कुर्वन्ति चापरे ।
आन्वीक्षकी त्रयी वार्ता न च नीतिः प्रवर्तते ॥ ७६
व्रात्यतां समनुप्राप्ता बहवो हि द्विजातयः ।
अधरोत्तरापचारेण म्लेच्छभूताश्च सर्वशः ॥' ७७
ततः कालेन पृथिवी पीड्यमाना दुरात्मभिः ।
विपर्ययेण तेनाशु प्रविवेश रसातलम् ।
अरक्ष्यमाणा विधिवत्क्षत्रियैर्धर्मरक्षिभिः ॥ ७८
तां दृष्ट्वा द्रवतीं तत्र संत्रासात्स महामनाः ।
ऊरुणा धारयामास कश्यपः पृथिवीं ततः ।
निमज्जन्तीं ततो राजंस्तेनोर्वीति मही स्मृता ॥ ७९

स्तृता व्याप्ता । शस्त्रं जग्राह तत्कार्यं क्षत्रियाणामन्तं कृतवान् ॥ ६० ॥ वर्जिताः अहताः ॥ ६१ ॥ शूर्पारकमिति झ. पाठः ॥ ६८ ॥ धृता तेनोरुणा येन तेनोर्वीति झ. पाठः ॥ ७९ ॥

रक्षणार्थं समुद्दिश्य ययाचे पृथिवी तदा ।
प्रसाद्य कश्यपं देवी क्षत्रियान्बाहुशालिनः ॥ ८०
पृथिव्युवाच ।
सन्ति ब्रह्मन्मया गुप्ताः स्त्रीषु क्षत्रियपुङ्गवाः ।
हैहयानां कुले जातास्ते संरक्षन्तु मां मुने ॥ ८१
अस्ति पौरवदायादो विदूरथसुतः प्रभो ।
ऋक्षैः संवर्धितो विप्र ऋक्षवत्यथ पर्वते ॥ ८२
तथाऽनुकम्पमानेन यज्वनाथामितौजसा ।
पराशरेण दायादः सौदासस्याभिरक्षितः ॥ ८३
सर्वकर्माणि कुरुते शूद्रवत्तस्य स द्विजः ।
सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिवः ॥ ८४
शिविपुत्रो महातेजा गोपतिर्नाम नामतः ।
वने संवर्धितो गोभिः सोऽभिरक्षतु मां मुने ॥ ८५
प्रतर्दनस्य पुत्रस्तु वत्सो नाम महाबलः ।
वत्सैः संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः ॥ ८६
दधिवाहनपुत्रस्तु पौत्रो दिविरथस्य च ।
अङ्गः स गौतमेनासीद्गङ्गाकूलेऽभिरक्षितः ॥ ८७
बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः ।
गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ॥ ८८
मरुत्तस्यान्ववाये च रक्षिताः क्षत्रियात्मजाः ।
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः ॥
एते क्षत्रियदायादास्तत्रतत्र परिश्रुताः ।
व्योकारहेमकारादिजातिं नित्यं समाश्रिताः ॥
यदि मामभिरक्षन्ति ततः स्थास्यामि निश्चला
एतेषां पितरश्चैव तथैव च पितामहाः ॥
मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा ।
तेषामपचितिश्चैव मया कार्या महामुने ॥
न ह्यहं कामये नित्यमतिक्रान्तेन रक्षणम् ।
वर्तमानेन वर्तेयं तत्क्षिप्रं संविधीयताम् ॥
वासुदेव उवाच ।
ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः ।
अभ्यषिञ्चन्महीपालान्क्षत्रियान्वीर्यसंमतान् ॥
तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः ।
एवमेतत्पुरावृत्तं यन्मां पृच्छसि पाण्डव ॥
वैशंपायन उवाच ।

एवं ब्रुवंस्तं च यदुप्रवीरो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
रथेन तेनाशु ययौ यथाऽर्को
विशन्प्रभाभिर्भगवांस्त्रिलोकीम् ॥ ९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

कृष्णेन भीष्मप्रशंसनपूर्वकं तंप्रति युधिष्ठिराय धर्मोपदेशचोदना ॥ १ ॥

वैशंपायन उवाच ।
ततो रामस्य तत्कर्म श्रुत्वा राजा युधिष्ठिरः ।
विस्मयं परमं गत्वा प्रत्युवाच जनार्दनम् ॥ १
अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः ।
विक्रमो वसुधा येन क्रोधान्निःक्षत्रिया कृता ॥ २
गोभिः समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः ।
गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः ॥ ३
अहो धन्यो नृलोकोऽयं सभाग्याश्च नरा भुवि ।
यत्र कर्मेदृशं धर्म्यं द्विजाग्र्यैः कृतमच्युत ॥
कथयन्तौ कथां तात तावच्युतयुधिष्ठिरौ ।
जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः ॥
ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम् ।
स्वरश्मिमालासंवीतं सायंसूर्यसमप्रभम् ॥ ६
उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम् ।
देशे परमधर्मिष्ठे नदीमोघवतीमनु ॥
दूरादेव तमालोक्य कृष्णो राजा च धर्मजः ।

---

द्विजः क्षत्रियोऽपि ॥ ८४ ॥ अपचितिः आनृण्यार्थं पूजा ॥ ९२ ॥ नित्यमतिक्रान्तेन धर्मातिक्रमिणा ॥ ९३ ॥

अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

रक्षणार्थं समुद्दिश्य ययाचे पृथिवी तदा ।
प्रसाद्य कश्यपं देवी क्षत्रियान्बाहुशालिनः ॥८०
पृथिव्युवाच ।
सन्ति ब्रह्मन्मया गुप्ताः स्त्रीषु क्षत्रियपुङ्गवाः ।
हैहयानां कुले जातास्ते संरक्षन्तु मां मुने ॥ ८१
अस्ति पौरवदायादो विदूरथसुतः प्रभो ।
ऋक्षैः संवर्धितो विप्र ऋक्षवत्यथ पर्वते ॥ ८२
तथाऽनुकम्पमानेन यज्वनाथामितौजसा ।
पराशरेण दायादः सौदासस्याभिरक्षितः ॥ ८३
सर्वकर्माणि कुरुते शूद्रवत्तस्य स द्विजः ।
सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिवः ॥८४
शिबिपुत्रो महातेजा गोपतिर्नाम नामतः ।
वने संवर्धितो गोभिः सोऽभिरक्षतु मां मुने ॥८५
प्रतर्दनस्य पुत्रस्तु वत्सो नाम महाबलः ।
वत्सैः संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः ॥८६
दधिवाहनपुत्रस्तु पौत्रो दिविरथस्य च ।
अङ्गः स गौतमेनासीद्गङ्गाकूलेऽभिरक्षितः ॥ ८७
बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः ।
गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ॥ ८८
मरुत्तस्यान्ववाये च रक्षिताः क्षत्रियात्मजाः ।
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः ॥
एते क्षत्रियदायादास्तत्रतत्र परिश्रुताः ।
व्योकारहेमकारादिजातिं नित्यं समाश्रिताः ।
यदि मामभिरक्षन्ति ततः स्थास्यामि निश्चल
एतेषां पितरश्चैव तथैव च पितामहाः ॥
मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा ।
तेषामपचितिश्चैव मया कार्या महामुने ॥
न ह्यहं कामये नित्यमतिक्रान्तेन रक्षणम् ।
वर्तमानेन वर्तेयं तत्क्षिप्रं संविधीयताम् ॥
वासुदेव उवाच ।
ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः
अभ्यषिञ्चन्महीपालान्क्षत्रियान्वीर्यसंमतान् ॥
तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः ।
एवमेतत्पुरावृत्तं यन्मां पृच्छसि पाण्डव ॥
वैशंपायन उवाच ।

एवं ब्रुवंस्तं च यदुप्रवीरो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
रथेन तेनाशु ययौ यथाऽर्को
विशन्प्रभाभिर्भगवांस्त्रिलोकीम् ॥ ९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

कृष्णेन भीष्मप्रशंसनपूर्वकं तंप्रति युधिष्ठिराय धर्मोपदेशचोदना ॥ १ ॥

वैशंपायन उवाच ।
ततो रामस्य तत्कर्म श्रुत्वा राजा युधिष्ठिरः ।
विस्मयं परमं गत्वा प्रत्युवाच जनार्दनम् ॥ १
अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः ।
विक्रमो वसुधा येन क्रोधान्निःक्षत्रिया कृता ॥ २
गोभिः समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः ।
गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः ॥ ३
अहो धन्यो नृलोकोऽयं सभाग्याश्च नरा भुवि ।
यत्र कर्मेदृशं धर्म्यं द्विजाग्र्यैः कृतमच्युत ॥
कथयन्तौ कथां तात तावच्युतयुधिष्ठिरौ ।
जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः ॥
ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम् ।
स्वरश्मिमालासंवीतं सायंसूर्यसमप्रभम् ॥ ६
उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम् ।
देशे परमधर्मिष्ठे नदीमोघवतीमनु ॥ ७
दूरादेव तमालोक्य कृष्णो राजा च धर्मजः ।

---

द्विजः क्षत्रियोऽपि ॥ ८४ ॥ अपचितिः आनृण्यार्थं पूजा ॥ ९२ ॥ नित्यमतिक्रान्तेन धर्मातिक्रमिणा ॥ ९३ ॥

अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

स पाण्डवेयस्य मनःसमुत्थितं
नरेन्द्र शोकं व्यपकर्ष मेधया ।
भवद्विधा ह्युत्तमबुद्धिविस्तरा
विमुह्यमानस्य जनस्य शान्तये ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## पञ्चाशोऽध्यायः ॥ ५० ॥

भीष्मेण कृष्णंप्रति स्तुतिपूर्वकं श्रेयःप्रार्थना ॥ १ ॥ कृष्णेन भीष्माय श्रेयःप्रदानपूर्वकं तंप्रति धर्मकथनचोदना ॥

वैशंपायन उवाच ।
श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः ।
किंचिदुन्नाम्य वदनं प्राञ्जलिर्वाक्यमब्रवीत् ॥ १
भीष्म उवाच ।
नमस्ते भगवन्कृष्ण लोकानां प्रभवाप्यय ।
त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ॥ २
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
अपवर्गस्थ भूतानां पञ्चानां परतः स्थित ॥ ३
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
योगेश्वर नमस्तेऽस्तु त्वं हि सर्वपरायणः ॥ ४
मत्संश्रितं यदात्थ त्वं वचः पुरुषसत्तम ।
तेन पश्यामि ते दिव्यान्भावांस्त्रिषु च वर्त्मसु ॥ ५
तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ।
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसः ॥ ६
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा ।
दिशो भुजा रविश्चक्षुर्वीर्ये शुक्रः प्रतिष्ठितः ॥ ७
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः ॥ ८
त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ ९
वासुदेव उवाच ।
यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ ।
ततो मया वपुर्दिव्यं तव राजन्प्रदर्शितम् ॥ १०
न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च ।
दर्शयाम्यहमात्मानं न चादान्ताय भारत ॥ ११
भवांस्तु मम भक्तश्च नित्यं चार्जवमास्थितः ।
दमे तपसि सत्ये च दाने च निरतः शुचिः ॥ १२
अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव ।
तव ह्युपस्थिता लोका येभ्यो नावर्तते पुनः ॥ १३
पञ्चाशतं षट् च कुरुप्रवीर
शेषं दिनानां तव जीवितस्य ।
ततः शुभैः कर्मफलोदयैस्त्वं
समेष्यसे भीष्म विमुच्य देहम् ॥ १४
एते हि देवा वसवो विमाना-
न्यास्थाय सर्वे ज्वलिताग्निकल्पाः ।
अन्तर्हितास्त्वां प्रतिपालयन्ति
काष्ठां प्रपद्यन्तमुदक्पतङ्गम् ॥ १५
व्यावृत्तमात्रे भगवत्युदीचीं
सूर्ये जगत्कालवशं प्रपन्ने ।
गन्तासि लोकान्पुरुषप्रवीर
नावर्तते यानुपलभ्य विद्वान् ॥ १६

योगीश्वरेति झ. पाठः ॥ ४ ॥ पञ्चाशतं षट्चेति । तव जीवितसंबन्धिनां दिनानां शेषं पञ्चषट् च पञ्चवारमावर्तिताः षडिति रीत्या त्रिंशदिति ज्ञेयम् । तावदेव आशतं शतावधि । यद्दिनानां शतेन शक्यं तत्त्रिंशतापि कर्तुं शक्यमित्यर्थः । अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गता इति भीष्मो वक्ष्यति । तत्र त्रिंशदतःपरं शिष्टा अष्टाविंशतिरितःपूर्वं व्यतीताः । तथाहि भीष्मस्य शरतल्पशयनानन्तरमष्टौ दिनानि युद्धम् । ततो दुर्योधनाशौचं युयुत्सोः षोडशदिनानि । तेन सह पुरं प्रविशतां पाण्डवानामपि तावन्ति दिनानि गतानि । पञ्चविंशे सर्वेषां श्राद्धदानम् । षड्विंशे पुरप्रवेशः । सप्तविंशे राज्याभिषेकः । अष्टाविंशे प्रकृतिसांत्वनमाभ्युदयिकं दानं च । ऊनत्रिंशे भीष्मंप्रत्यागमनं तद्दिनमारभ्य त्रिंशद्दिनानि शिष्टानीति ज्ञेयम् ॥ १४ ॥ पतंगः सूर्यः ॥ १५ ॥ कालवशं जगत् । प्रपन्ने प्राप्ते क्षेमुमिति शेषः ॥ १६ ॥ पञ्चाशोऽध्यायः ॥ ५० ॥

अमुं च लोकं त्वयि भीष्म याते
ज्ञानानि सर्वाणि पराभविष्यन् ।
अतस्तु सर्वे तव सन्निकर्षं
समागता धर्मविवेचनाय ॥ १७
तज्ज्ञातिशोकोपहतश्रुताय
सत्याभिसन्धाय युधिष्ठिराय ।
प्रब्रूपि धर्मार्थसमाधियुक्तं
सत्यं वचोऽस्यापनुदेच्छुचं यत् ॥ १८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

भीष्मेण कृष्णंप्रति स्वस्य शस्त्रसंछिन्नशरीरतया धर्मकथनापाटवप्रकटनम् ॥ १ ॥ कृष्णेन भीष्माय शरीरदार्ढ्यादिप्रदानम् ॥ २ ॥ ततः सायं सर्वेषां स्वस्वस्थानगमनम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम् ।
श्रुत्वा शान्तनवः कृष्णं प्रत्युवाच कृताञ्जलिः ॥१
लोकनाथ महाबाहो शिव नारायणाच्युत ।
तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः ॥ २
किंचाहमभिधास्यामि वाक्पते तव सन्निधौ ।
यदा वाचोगतं सर्वं तव वाचि समाहितम् ॥ ३
यच्च किंचित्कृतं लोके कर्तव्यं क्रियते च यत् ।
त्वत्तस्तन्निःसृतं देव लोके बुद्धिमतो हिते ॥ ४
कथयेद्देवलोकं यो देवराजसमीपतः ।
धर्मकामार्थमोक्षाणां सोऽर्थं ब्रूयात्तवाग्रतः ॥ ५
शराभितापाद्व्यथितं मनो मे मधुसूदन ।
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ॥ ६
न च मे प्रतिभा काचिदस्ति किंचित्प्रभाषितुम् ।
पीड्यमानस्य गोविन्द विषानलसमैः शरैः ॥ ७
बलं मे प्रजहातीव प्राणाः सत्वरयन्ति च ।
मर्माणि परितप्यन्ति भ्रान्तचित्तस्तथा ह्यहम् ॥ ८
दौर्बल्यात्सज्जते वाङ्मे स कथं वक्तुमुत्सहे ।
साधु मे त्वं प्रसीदस्व दाशार्हकुलवर्धन ॥ ९
तत्क्षमस्व महाबाहो न ब्रूयां किंचिदच्युत ॥
त्वत्सन्निधौ च सीदेद्धि वाचस्पतिरपि ब्रुवन् ॥ १०
न दिशः संप्रजानामि नाकाशं न च मेदिनीम् ।
केवलं तव वीर्येण तिष्ठामि मधुसूदन ॥ ११
स्वयमेव भवांस्तस्माद्धर्मराजस्य यद्धितम् ।
तद्ब्रवीत्वाशु सर्वेषामागमानां त्वमागमः ॥ १२
कथं त्वयि स्थिते कृष्णे शाश्वते लोककर्तरि ।
प्रब्रूयान्मद्विधः कश्चिद्गुरौ शिष्य इव स्थिते ॥ १३
वासुदेव उवाच ।
उपपन्नमिदं वाक्यं कौरवाणां धुरन्धरे ।
महावीर्ये महासत्वे स्थिरे सर्वार्थदर्शिनि ॥ १४
यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति ।
गृहाणात्र वरं भीष्म मत्प्रसादकृतं प्रभो ॥ १५
न ते ग्लानिर्न ते मूर्च्छा न तापो न च ते रुजा ।
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत ॥ १६
ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ ।
न च ते क्वचिदासत्तिर्बुद्धेः प्रादुर्भविष्यति ॥ १७
सत्वस्थं च मनो नित्यं तव भीष्म भविष्यति ।
रजस्तमोभ्यां निर्मुक्तं घनैर्मुक्त इवोडुराट् ॥ १८
यद्यच्च धर्मसंयुक्तमर्थयुक्तमथापि च ।
चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति ॥ १९
इमं च राजशार्दूल भूतग्रामं चतुर्विधम् ।
चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम ॥ २०
चतुर्विधं प्रजाजालं संयुक्तो ज्ञानचक्षुषा ।
भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले ॥ २१

वाचोगतं वाचां विषयः सर्वोऽपि तव वाचि वेदे ॥३॥ हिते प्रिये । लोके देवलोके इह परत्र च । तत्सर्वं त्रैकालिकम् । त्वत्तो निःसृतमिति उक्तेर्थे हेतुरुक्तः ॥ ४ ॥ आगमानां समागममिति ट. ड. पाठः ॥ १२ ॥ आमक्तिरवसन्नता ॥ १७ ॥ एकपञ्चाशोऽध्यायः ॥ ५१ ॥

वैशंपायन उवाच ।
ततस्ते व्याससहिताः सर्व एव महर्षयः ।
ऋग्यजुःसामसहितैर्वचोभिः कृष्णमार्चयन् ॥ २२
ततः सर्वार्तवं दिव्यं पुष्पवर्षं नभस्तलात् ।
पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः ॥ २३
वादित्राणि च सर्वाणि जगुश्चाप्सरसां गणाः ।
न चाहितमनिष्टं च किंचित्तत्र व्यदृश्यत ॥ २४
ववौ शिवः सुखो वायुः सर्वगन्धवहः शुचिः ।
शान्तायां दिशि शान्ताश्च प्रावदन्मृगपक्षिणः ॥२५
ततो मुहूर्ताद्भगवान्सहस्रांशुर्दिवाकरः ।
दहन्वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत ॥ २६
ततो महर्षयः सर्वे समुत्थाय जनार्दनम् ।
भीष्ममामन्त्रयांचक्रू राजानं च युधिष्ठिरम् ॥ २७
ततः प्रणाममकरोत्केशवः सहपाण्डवः ।
सात्यकिः सञ्जयश्चैव स च शारद्वतः कृपः ॥ २८
ततस्ते धर्मनिरताः सम्यक् तैरभिपूजिताः ।
श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः ॥२९
तथैवामन्त्र्य गाङ्गेयं केशवः पाण्डवास्तथा ।
प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ॥ ३०
ततो रथैः काञ्चनचित्रकूबरै-
महीधराभैः समदैश्च दन्तिभिः ।
हयैः सुपर्णैरिव चाशुगामिभिः
पदातिभिश्चात्तशरासनादिभिः ॥ ३१
ययौ रथानां पुरतो हि सा चमू-
स्तथैव पश्चादतिमात्रसारिणी ।
पुरश्च पश्चाच्च यथा महानदी
तमृक्षवन्तं गिरिमेत्य नर्मदा ॥ ३२
ततः पुरस्ताद्भगवान्निशाकरः
समुत्थितस्तामभिहर्षयंश्चमूम् ।
दिवाकरापीतरसा महौषधीः
पुनः स्वकेनैव गुणेन योजयन् ॥ ३३
ततः पुरं सुरपुरसंमितद्युति
प्रविश्य ते यदुवृषपाण्डवास्तदा ।
यथोचितान्भवनवरान्समाविशन्
श्रमान्विता मृगपतयो गुहा इव ॥३४॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

परेद्युः प्रभाते कृष्णयुधिष्ठिरादिभिर्धर्मश्रवणाय भीष्मसमीपगमनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः प्रविश्य भवनं प्रसुष्वाप मधुसूदनः ।
यामात्रावशेषायां यामिन्यां प्रत्यबुध्यत ॥ १
स ध्यानपथमाविश्य सर्वज्ञानानि माधवः ।
अवलोक्य ततः पश्चाद्दध्यौ ब्रह्म सनातनम् ॥ २
ततः स्तुतिपुराणज्ञा रक्तकण्ठाः सुशिक्षिताः ।
अस्तुवन्विश्वकर्माणं वासुदेवं प्रजापतिम् ॥ ३
पठन्ति पाणिस्वनिकास्तथा गायन्ति गायनाः ।
शङ्खानथ मृदङ्गांश्च प्रवाद्यन्ति सहस्रशः ॥ ४
वीणापणववेणूनां स्वनश्चातिमनोरमः ।
प्रहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मनि ॥ ५
तथा युधिष्ठिरस्यापि राज्ञो मङ्गलसंहिताः ।
उच्चेरुर्मधुरा वाचो गीतवादित्रबृंहिताः ॥ ६
तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः ।
जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ॥ ७
ततः सहस्रं विप्राणां चतुर्वेदविदां तथा ।
गवां सहस्रेणैकैकं वाचयामास माधवः ॥ ८
मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च ।
आदर्शे विमले कृष्णस्ततः सात्यकिमब्रवीत् ॥ ९
गच्छ शैनेय जानीहि गत्वा राजनिवेशनम् ।
अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः ॥ १०
ततः कृष्णस्य वचनात्सात्यकिस्त्वरितो ययौ ।
उपगम्य च राजानं युधिष्ठिरमभाषत ॥ ११

मङ्गलानां गवादीनामालम्भनं स्पर्शम् ॥ ९ ॥

युक्तो रथवरो राजन्वासुदेवस्य धीमतः ।
समीपमापगेयस्य प्रयास्यति जनार्दनः ॥ १२
भवत्प्रतीक्षः कृष्णोऽसौ धर्मराज महाद्युते ।
यदत्रानन्तरं कृत्यं तद्भवान्कर्तुमर्हति ॥ १३
एवमुक्तः प्रत्युवाच धर्मपुत्रो युधिष्ठिरः ।
युज्यतां मे रथवरः फल्गुनाप्रतिमद्युते ॥ १४
न सैनिकैश्च यातव्यं यास्यामो वयमेव हि ।
न च पीडयितव्यो मे भीष्मो धर्मभृतां वरः ॥ १५
अतः पुरःसराश्चापि निवर्तन्तु धनञ्जय ।
अद्यप्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति ।
अतो नेच्छामि कौन्तेय पृथग्जनसमागमम् ॥ १६
वैशंपायन उवाच ।
स तद्वाक्यमथाज्ञाय कुन्तीपुत्रो धनञ्जयः ।
युक्तं रथवरं तस्मा आचचक्षे नरर्षभः ॥ १७
ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि ।
भूतानीव समस्तानि ययुः कृष्णनिवेशनम् ॥ १८
आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु ।
शैनेयसहितो धीमान्रथमेवान्वपद्यत ॥ १९
रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम् ।
मेघघोषै रथवरैः प्रययुस्ते नरर्षभाः ॥ २०
बलाहकं मेघपुष्पं शैब्यं सुग्रीवमेव च ।
दारुकश्चोदयामास वासुदेवस्य वाजिनः ॥ २१
ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
गां खुराग्रैस्तथा राजँल्लिखन्तः प्रययुस्तदा ॥ २२
ते ग्रसन्त इवाकाशं वेगवन्तो महाबलाः ।
क्षेत्रं धर्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् ॥ २३
ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभुः ।
आस्ते महर्षिभिः सार्धं ब्रह्मा देवगणैर्यथा ॥ २४
ततोऽवतीर्य गोविन्दो रथात्स च युधिष्ठिरः ।
भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च ।
ऋषीनभ्यर्चयामासुः करानुद्यम्य दक्षिणान् ॥ २५
स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः ॥ २६
शरतल्पे शयानं तमादित्यं पतितं यथा ।
स ददर्श महाबाहुं भयाच्चागतसाध्वसः ॥ २७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

कृष्णेन भीष्मंप्रति धर्मकथनचोदना ॥ १ ॥

जनमेजय उवाच ।
धर्मात्मनि महावीर्ये सत्यसन्धे जितात्मनि ।
देवव्रते महाभागे शरतल्पगतेऽच्युते ॥ १
शयाने वीरशयने भीष्मे शन्तनुनन्दने ।
गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्युपासिते ॥ २
काः कथाः समवर्तन्त तस्मिन्वीरसमागमे ।
हतेषु सर्वसैन्येषु तन्मे शंस महामुने ॥ ३
वैशंपायन उवाच ।
शरतल्पगते भीष्मे कौरवाणां पितामहे ।
आजग्मुर्ऋषयः सिद्धा नारदप्रमुखा नृप ॥ ४
हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः ।
धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ॥ ५
तेऽभिगम्य महात्मानो भरतानां पितामहम् ।
अन्वशोचन्त गाङ्गेयमादित्यं पतितं यथा ॥ ६
मुहूर्तमिव च ध्यात्वा नारदो देवदर्शनः ।
उवाच पाण्डवान्सर्वान्हतशिष्टांश्च पार्थिवान् ॥ ७
प्राप्तकालं समाचक्षे भीष्मोऽयमनुयुज्यताम् ।
अस्तमेति हि गाङ्गेयो भानुमानिव भारत ॥ ८
अयं प्राणानुत्सिसृक्षुस्तं सर्वेऽभ्यनुपृच्छत ।
कृत्स्नान्हि विविधान्धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ॥ ९

आगतसाध्वसः भयजन्यकम्पादिमान् ॥ २७ ॥ द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

अनुयुज्यतां पृच्छ्यताम् ॥ ८ ॥

एष वृद्धः पराँल्लोकान्संप्राप्नोति तनुं त्यजन् ।
तं शीघ्रमनुयुञ्जीध्वं संशयान्मनसि स्थितान् ॥ १०
वैशंपायन उवाच ।
एवमुक्ते नारदेन भीष्ममीयुर्नराधिपाः ।
प्रष्टुं चाशक्नुवन्तस्ते वीक्षांचक्रुः परस्परम् ॥ ११
अथोवाच हृषीकेशं पाण्डुपुत्रो युधिष्ठिरः ।
नान्यस्त्वद्देवकीपुत्र शक्तः प्रष्टुं पितामहम् ॥ १२
प्रव्याहर यदुश्रेष्ठ त्वमग्रे मधुसूदन ।
त्वं हि नस्तात सर्वेषां सर्वधर्मविदुत्तमः ॥ १३
एवमुक्तः पाण्डवेन भगवान्केशवस्तदा ।
अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः ॥ १४
कच्चित्सुखेन रजनी व्युष्टा ते राजसत्तम ।
विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव ॥ १५
कच्चिज्ज्ञानानि सर्वाणि प्रतिभान्ति च तेऽनघ ।
न ग्लायते च हृदयं न च ते व्याकुलं मनः ॥ १६
भीष्म उवाच ।
दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजा ।
तव प्रसादाद्वार्ष्णेय सद्यो व्यपगतानि मे ॥ १७
यच्च भूतं भविष्यच्च भवच्च परमद्युते ।
तत्सर्वमनुपश्यामि पाणौ फलमिवाहितम् ॥ १८
वेदोक्ताश्चैव ये धर्मा वेदान्ताधिगताश्च ये ।
तान्सर्वान्संप्रपश्यामि वरदानात्तवाच्युत ॥ १९
शिष्टैश्च धर्मो यः प्रोक्तः स च मे हृदि वर्तते ।
देशजातिकुलानां च धर्मज्ञोऽस्मि जनार्दन ॥ २०
चतुर्ष्वाश्रमधर्मेषु योऽर्थः स च हृदि स्थितः ।
राजधर्मांश्च सकलानवगच्छामि केशव ॥ २१
यच्च यत्र च वक्तव्यं तद्वक्ष्यामि जनार्दन ।
तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत् ॥ २२
युवेवास्मि समावृत्तस्त्वदनुध्यानबृंहितः ।
वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन ॥ २३
स्वयं किमर्थं तु भवाञ्श्रेयो न प्राह पाण्डवम् ।
किं ते विवक्षितं चात्र तदाशु वद माधव ॥ २४
वासुदेव उवाच ।
यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव ।
मत्तः सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः २५
शीतांशुश्चन्द्र इत्युक्ते लोके को विस्मयिष्यति ।
तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥ २६
आधेयं तु मया भूयो यशस्तव महाद्युते ।
ततो मे विपुला बुद्धिस्त्वयि भीष्म समाहिता ॥ २७
यावद्धि पृथिवीपाल पृथ्वीयं स्थास्यति ध्रुवा ।
तावत्तवाक्षया कीर्तिर्लोकाननुचरिष्यति ॥ २८
यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते ।
वेदप्रवाद इव ते स्थास्यते वसुधातले ॥ २९
यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना ।
स फलं सर्वपुण्यानां प्रेत्य चानुभविष्यति ॥ ३०
एतस्मात्कारणाद्भीष्म मतिर्दिव्या मया हि ते ।
दत्ता यशो विप्रथयेत्कथं भूयस्तवेति ह ॥ ३१
यावद्धि प्रथते लोके पुरुषस्य यशो भुवि ।
तावत्तस्याक्षया कीर्तिर्भवतीति विनिश्चिता ॥ ३२
राजानो हतशिष्टास्त्वां राजन्नभित आसते ।
धर्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत ॥ ३३
भवान्हि वयसा वृद्धः श्रुताचारसमन्वितः ।
कुशलो राजधर्माणां सर्वेषामपराश्च ये ॥ ३४
जन्मप्रभृति ते किंचिद्वृजिनं न ददर्श ह ।
ज्ञातारं सर्वधर्माणां त्वां विदुः सर्वपार्थिवाः ॥ ३५
तेभ्यः पितेव पुत्रेभ्यो राजन्ब्रूहि परं नयम् ।
ऋषयश्चैव देवाश्च त्वया नित्यमुपासिताः ॥ ३६
तस्माद्वक्तव्यमेवेदं त्वयाऽवश्यमशेषतः ।
धर्मं शुश्रूषमाणेभ्यः पृष्टेन च सता पुनः ॥ ३७
वक्तव्यं विदुषा चेति धर्ममाहुर्मनीषिणः ।
अप्रतिब्रुवतः कष्टो दोषो हि भविता प्रभो ॥ ३८
तस्मात्पुत्रैश्च पौत्रैश्च धर्मान्पृष्टान्सनातनान् ।
विद्वञ्जिज्ञासमानेभ्यः प्रब्रूहि भरतर्षभ ॥ ३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

यशः परचित्तचमत्कृतिजनको गुणौघः । कीर्तिः साधुतयाऽन्यैः कथनम् ॥ ३२ ॥ अनुयुयुक्षन्तः प्रष्टुमिच्छन्तः ॥ ३३ ॥

त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

कृष्णेन भीष्मंप्रति युधिष्ठिरस्य तदनुपसर्पणकारणाभिधानम् ॥ १ ॥ भीष्मेण स्वाज्ञयोपसृत्याभिवादयन्तं युधिष्ठिरंप्रति धर्मप्रश्नानुज्ञानम् ॥ २ ॥

वैशंपायन उवाच ।
अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः ।
हन्त धर्मान्प्रवक्ष्यामि दृढे वाङ्मनसी मम ॥ १
तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः ।
युधिष्ठिरस्तु धर्मात्मा मां धर्माननुपृच्छतु ।
एवं प्रीतो भविष्यामि धर्मान्वक्ष्यामि चाखिलान् २
यस्मिन्राजर्षभे जाते धर्मात्मनि महात्मनि ।
अहृष्यन्नृषयः सर्वे स मां पृच्छतु पाण्डवः ॥ ३
सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम् ।
यस्य नास्ति समः कश्चित्स मां पृच्छतु पाण्डवः ॥४
धृतिर्दमो ब्रह्मचर्यं क्षमा धर्मश्च नित्यदा ।
यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डवः ॥ ५
संबन्धिनोऽतिथीन्भृत्यान्संश्रितांश्चैव यो भृशम् ।
संमानयति सत्कृत्य स मां पृच्छतु पाण्डवः ॥ ६
सत्यं दानं तपः शौर्यं शान्तिर्दाक्ष्यमसंभ्रमः ।
यस्मिन्नेतानि सर्वाणि स मां पृच्छतु पाण्डवः ॥ ७
यो न कामान्न संरम्भान्न भयान्नार्थकारणात् ।
कुर्यादधर्मं धर्मात्मा स मां पृच्छतु पाण्डवः ॥ ८
सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः ।
यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः ॥ ९
इज्याध्ययननित्यश्च धर्मे च निरतः सदा ।
क्षान्तः श्रुतरहस्यश्च स मां पृच्छतु पाण्डवः ॥ १०
वासुदेव उवाच ।
लज्जया परयोपेतो धर्मराजो युधिष्ठिरः ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ ११
लोकस्य कदनं कृत्वा लोकनाथो विशांपते ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ १२
पूज्यान्मान्यांश्च भक्तांश्च गुरून्संबन्धिबान्धवान् ।
अर्घार्हानिषुभिर्भित्त्वा भवन्तं नोपसर्पति ॥ १३
भीष्म उवाच ।
ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः ।
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥ १४
पितॄन्पितामहान्भ्रातॄन्गुरून्संबन्धिबान्धवान् ।
मिथ्याप्रवृत्तान्यः सङ्ख्ये निहन्याद्धर्म एव सः ॥ १५
समयत्यागिनो लुब्धान्गुरूनपि च केशव ।
निहन्ति समरे पापान्क्षत्रियो यः स धर्मवित् ॥ १६
यो लोभान्न समीक्षेत धर्मसेतुं सनातनम् ।
निहन्ति यस्तं समरे क्षत्रियो वै स धर्मवित् ॥ १७
लोहितोदां केशतृणां गजशैलां ध्वजद्रुमाम् ।
महीं करोति युद्धेषु क्षत्रियो यः स धर्मवित् ॥ १८
आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना ।
धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् ॥ १९
वैशंपायन उवाच ।
एवमुक्तस्तु भीष्मेण धर्मपुत्रो युधिष्ठिरः ।
विनीतवदुपागम्य तस्थौ संदर्शनेऽग्रतः ॥ २०
अथास्य पादौ जग्राह भीष्मश्चापि ननन्द तम् ।
मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा ॥ २१
तमुवाचाथ गाङ्गेयो वृषभः सर्वधन्विनाम् ।
मां पृच्छ तात विस्रब्धं मा भैस्त्वं कुरुसत्तम ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

भूतात्मा प्राणिनामन्तरात्मासि । तेन ममाभिप्रायं वेत्सीति भावः ॥ २ ॥ अभिशापो लोकगर्हता ॥ ११ ॥

चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

भीष्मेण युधिष्ठिराय राजधर्मकथनम् ॥ १ ॥

वैशंपायन उवाच ।
प्रणिपत्य हृषीकेशमभिवाद्य पितामहम् ।
अनुमान्य गुरूनसर्वान्पर्यपृच्छद्युधिष्ठिरः ॥ १
राज्ञां वै परमो धर्म इति धर्मविदो विदुः ।
महान्तमेतं भारं च मन्ये तद्ब्रूहि पार्थिव ॥ २
राजधर्मान्विशेषेण कथयस्व पितामह ।
सर्वस्य जीवलोकस्य राजधर्मः परायणम् ॥ ३
त्रिवर्गो हि समासक्तो राजधर्मेषु कौरव ।
मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ॥ ४
यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा ।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ ५
अत्र वै संप्रमूढे तु धर्मे राजर्षिसेविते ।
लोकस्य संस्था न भवेत्सर्वं च व्याकुलीभवेत् ॥ ६
उदयन्हि यथा सूर्यो नाशयत्यशुभं तमः ।
राजधर्मस्तथा लोक्यामाक्षिपत्यशुभां गतिम् ॥ ७
तदग्रे राजधर्मान्हि मदर्थे त्वं पितामह ।
प्रब्रूहि भरतश्रेष्ठ त्वं हि धर्मभृतां वरः ॥ ८
आगमश्च परस्त्वत्तः सर्वेषां नः परन्तप ।
भवन्तं हि परं बुद्धौ वासुदेवोऽभिमन्यते ॥ ९
भीष्म उवाच ।
नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥
शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्मान्युधिष्ठिर ।
निरुच्यमानान्नियतो यच्चान्यदपि वाञ्छसि ॥ ११
आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनमिच्छता ।
देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥ १२
दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह ।
आनृण्यं याति धर्मस्य लोकेन च समर्च्यते ॥ १३
उत्थानेन सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसाधयेत् ॥ १४
साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्य मुह्यते ॥ १५
विपन्ने च समारम्भे सन्तापं मा स्म वै कृथाः ।
घटेतैवं सदाऽऽत्मानं राज्ञामेष परो नयः ॥ १६
न हि सत्यादृते किंचिद्राज्ञां वै सिद्धिकारकम् ।
सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति ॥ १७
ऋषीणामपि राजेन्द्र सत्यमेव परं धनम् ।
तथा राज्ञां परं सत्यान्नान्यद्विश्वासकारणम् ॥ १८
गुणवाञ्शीलवान्दान्तो मृदुदण्डो जितेन्द्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥ १९
आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन ।
पुनर्नयविचारेण त्रयीसंवरणेन च ।
'आर्जवेन समायुक्ता मोदन्ते ऋषयो दिवि ॥' २०
मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचरेत् ॥ २१
अदण्ड्याश्चैव ते पुत्र विप्राः स्युर्ददतां वर ।
भूतमेतत्परं लोके ब्राह्मणा नाम पाण्डव ॥ २२
मनुना चात्र राजेन्द्र गीतौ श्लोकौ महात्मना ।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि ॥ २३
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ २४
अयो हन्ति यदाऽश्मानमग्निरापो निहन्ति च ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥ २५
एवं कृत्वा महाराज नमस्या एव ते द्विजाः ।
भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः ॥ २६
एवं चैव नरव्याघ्र लोकयात्राविघातकाः ।
निग्राह्या एव बाहुभ्यां ब्राह्मणास्ते नरेश्वर ॥ २७
श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा ।

---

धर्मः प्रजापालनात्मकः परमः सर्वधर्मश्रेष्ठः । एतं धर्मं भारं दुर्वहं मन्ये ॥ २ ॥ प्रग्रहणं नियन्त्रणम् ॥ ५ ॥ संस्था मर्यादाव्यवस्था ॥ ६ ॥ अग्रे इतरेभ्यो धर्मेभ्यः पूर्वम् ॥ ८ ॥ परः आगमः परं रहस्यम् । नः अस्माकं त्वत्तएव विहितमस्तु ॥ ९ ॥ सत्यान्नान्यदाश्वासकारकमिति ङ. थ. पाठः ॥ १८ ॥ स्थूललक्ष्यः बहुप्रदः ॥ १९ ॥ भौमं ब्रह्म वेदान् यज्ञांश्च ॥ २६ ॥

तौ निबोध महाराज त्वमेकाग्रमना नृप ॥ २८
उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नराधिपः ॥ २९
विनश्यमानं धर्मं हि योऽभिरक्षेत्स धर्मवित् ।
न तेन धर्महा स स्यान्मन्युस्तन्मन्युमृच्छति ॥ ३०
एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।
सापराधानपि हि तान्विषयान्ते समुत्सृजेत् ॥ ३१
अभिशस्तमपि ह्येषां पीडयेन्न विशांपते ।
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥ ३२
राजद्विष्टे च विप्रस्य विषयान्ते विवासनम् ।
विधीयते न शारीरं भयमेषां कदाचन ॥ ३३
दयिताश्च नरास्ते स्युर्भक्तिमन्तो द्विजेषु ये ।
न शोकः परमा तुष्टी राज्ञां भवति संचयात् ॥ ३४
दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वदुर्गेषु मन्यन्ते नरदुर्गं सुदुर्गमम् ॥ ३५
तस्मान्नित्यं दया कार्या चातुर्वर्ण्ये विपश्चिता ।
धर्मात्मा सत्यवाक्चैव राजा रञ्जयति प्रजाः ॥ ३६
न च क्षान्तेन ते नित्यं भाव्यं पुरुषसत्तम ।
अधर्मो हि मृदू राजा क्षमावानिव कुञ्जरः ॥ ३७
बार्हस्पत्ये च शास्त्रे च श्लोकोऽयं नियतः प्रभो ।
अस्मिन्नर्थे निगदितस्तन्मे निगदतः शृणु ॥ ३८
क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः ।
हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥ ३९
तस्मान्नैव मृदुर्नित्यं तीक्ष्णो वाऽपि भवेन्नृपः ।
वसन्तेऽर्क इव श्रीमान्न शीतो न च घर्मदः ॥ ४०
प्रत्यक्षेणानुमानेन तथौपम्यागमैरपि ।
परीक्ष्यास्ते महाराज स्वे परे चैव नित्यशः ॥ ४१
व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
नचैतानि प्रयुञ्जीथाः सङ्गं तु परिवर्जय ॥ ४२
व्यसनी यस्तु लोकेऽस्मिन्परिभूतो भवत्युत ।
उद्वेजयति लोकं च योऽतिद्वेषी महीपतिः ॥ ४३
भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा ।
कारणं च महाराज शृणु येनेदमुच्यते ॥ ४४
यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाऽप्यसंशयम् ॥ ४५
वर्तितव्यं कुरुश्रेष्ठ सदा धर्मानुवर्तिना ।
स्वं प्रियं तु परित्यज्य यद्यल्लोकहितं भवेत् ॥ ४६
न सन्त्याज्यं च ते धैर्यं कदाचिदपि पाण्डव ।
धीरस्य स्पष्टदण्डस्य न ह्याज्ञा प्रतिहन्यते ॥ ४७
परिहासश्च भृत्यैस्ते नात्यर्थं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥ ४८
अवमन्यन्ति भर्तारं सहर्षमुपजीविनः ।
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति च तद्वचः ॥ ४९
प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्ते भोज्यान्याहारयन्ति च ५०
क्रुध्यन्ति परिदीप्यन्ति भूमिपायाधितिष्ठते ।
उत्कोचैर्वञ्चनाभिश्च कार्याणि घ्नन्ति चास्य ते ॥ ५१
जर्झरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।
स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ॥ ५२
वान्तं निष्ठीवनं चैव कुर्वते चास्य सन्निधौ ।
निर्लज्जा राजशार्दूल व्याहरन्ति च तद्वचः ॥ ५३
हयं वा दन्तिनं वाऽपि रथं वा नृपसंमतम् ।
अधिरोहन्त्यवज्ञाय सहर्षाः पार्थिवे मृदौ ॥ ५४
इदं ते दुष्करं राजन्निदं ते दुर्विचेष्टितम् ।
इत्येवं सुहृदो नाम ब्रुवते परिषद्गताः ॥ ५५
क्रुद्धे चास्मिन्हसन्त्येव न च हृष्यन्ति पूजिताः ।
सङ्घर्षशीलाश्च तदा भवन्त्यन्योन्यकारणात् ॥ ५६
विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम् ।

---

स्वधर्मेण शस्त्रोद्यमनेन निगृह्णीयादेव नतु हन्यात् ॥ २९ ॥ विनश्यमानमाततायिदोषात् । तेन आततायिनिग्रहेण ॥ ३० ॥ अभिशस्तं सताऽसता वा दोषेण युक्तं तथाख्यापितम् ॥ ३२ ॥ शारीरं कशाघातादिजम् ॥ ३३ ॥ षट्सु मरुजलपृथ्वीवनपर्वतनरमयेषु ॥ ३५ ॥ अधर्मो धर्मविरोधी ॥ ३७ ॥ गजस्य क्षममाणस्य ॥ ३९ ॥ व्यसनानि मृगयादीनि ॥ ४२ ॥ प्रियमिष्टम् ॥ ४६ ॥ न भयं विद्यते क्वचित् । इति झ. पाठः । ते त्वया ॥ ४७ ॥ प्रतिरूपकैः कृत्रिमैः शासनपत्रैः । विषयं देशम् । जर्झरं निःसारम् । स्त्रीरक्षिभिः सज्जन्ते प्रीतिं कुर्वन्ति अन्तःपुरे प्रवेशमिच्छन्तः ,२ ॥ नादत्य हर्षुले इति झ. पाठः । तत्र हर्[illegible] [illegible]ले इत्यर्थः ॥ ५४ ॥ विस्रंसयन्ति भेदयन्ति ॥[illegible]७ ॥

लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम् ॥ ५७
अलङ्काराणि भोज्यं च तथा स्नानानुलेपने ।
हेलयाना नरव्याघ्र स्वस्थास्तस्योपभुञ्जते ॥ ५८
निन्दन्ते स्वानधीकारान्सन्त्यजन्ते च भारत ।
न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च ॥ ५९
क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा ।
असत्प्रणेयो राजेति लोकांश्चैव वदन्त्युत ॥ ६०
एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत ।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ॥ ६१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

भीष्मेण युधिष्ठिराय राजधर्मकथनम् ॥ १ ॥

भीष्म उवाच ।
नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर ।
प्रशस्यते न राजा हि नारीवोद्यमवर्जितः ॥ १
भगवानुशना चाह श्लोकमत्र विशांपते ।
तदिहैकमना राजन्गदतस्तं निबोध मे ॥ २
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ३
तदेतन्नरशार्दूल हृदि त्वं कर्तुमर्हसि ।
सन्धेयानभिसन्धत्स्व विरोध्यांश्च विरोधय ॥ ४
सप्ताङ्गस्य च राज्यस्य विपरीतं य आचरेत् ।
गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः ॥ ५
मरुत्तेन हि राज्ञा वै गीतः श्लोकः पुरातनः ।
राज्याधिकारे राजेन्द्र बृहस्पतिमतः पुरा ॥ ६
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ ७
बाहोः पुत्रेण राज्ञा च सगरेण च धीमता ।
असमञ्जः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा ॥ ८
असमञ्जः सरय्वां स पौराणां बालकान्नृप ।
न्यमज्जयदतः पित्रा निर्भर्त्स्य स विवासितः ॥९
ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः ।
मिथ्या विप्रानुपचरन्सन्त्यक्तो दयितः सुतः॥१०
लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः ।
सत्यस्य रक्षणं चैव व्यवहारस्य चार्जवम् ॥ ११
न हिंस्यात्परवित्तानि देयं काले च दापयेत् ।
विक्रान्तः सत्यवाक्क्षान्तो नृपो न चलते पथः १२
गुप्तमन्त्रो जितक्रोधः शास्त्रार्थकृतनिश्चयः ।
धर्मे चार्थे च कामे च मोक्षे च सततं रतः॥१३
त्रय्या संवृतमन्त्रश्च राजा भवितुमर्हति ।
वृजिनं च नरेन्द्राणां नान्यच्चारक्षणात्परम् ॥ १४
चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता ।
धर्मसंकररक्षा च राज्ञां धर्मः सनातनः ॥ १५
न विश्वसेच्च नृपतिर्न चात्यर्थं च विश्वसेत् ।
षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्याऽवलोकयेत् ॥ १६
अच्छिद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते ।
त्रिवर्गे विदितार्थश्च युक्ताचारपथश्च यः ॥ १७
कोशस्योपार्जनरतिर्यमवैश्रवणोपमः ।
वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मनः ॥ १८
अभृतानां भवेद्भर्ता भृतानामन्ववेक्षकः ।
नृपतिः सुमुखश्च स्यात्स्मितपूर्वाभिभाषिता ॥ १९
उपासिता च वृद्धानां जिततन्द्रिरलोलुपः ।

स्वस्थाः निर्भयाः ॥ ५८ ॥ राजदेय राजभागम् ॥ ५९ ॥ पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

अप्रवासिनं वेदाध्ययनार्थम् ॥ ३ ॥ सप्त स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि अङ्गानि यस्य [illegible]ङ्गस्य ॥ ५ ॥ न हिंस्यात् करार्थं क्षेत्रेषु धान्यानि रुद्ध्वा वृष्ट्यां [illegible] नाशयेत् । देयं भृत्यानां वेतनम् ॥ १२ ॥ वृजिन संकटं अरक्षणात् मन्त्रस्यागोपनादन्यन्नास्ति ॥ १४ ॥ धर्माणां संकरो व्यत्ययस्तस्मात्प्रजानां रक्षा धर्मसंकररक्षा ॥ १५ ॥ न विश्वसेत् । चात् विश्वसेदप्याप्तेषु । तेष्वपि अत्यर्थं न विश्वसेत् ॥ १६ ॥

सतां वृत्ते स्थितमतिः सतां ह्याचारदर्शनः ॥ २०
न चाददीत वित्तानि सतां हस्तात्कदाचन ।
असद्भ्यश्च समादाय सद्भ्यस्तु प्रतिपादयेत् ॥ २१
स्वयं प्रहर्ता दाता च वश्यात्मा वश्यसाधनः ।
काले दाता च भोक्ता च शुद्धाचारस्तथैव च ॥ २२
शूरान्भक्तानसंहार्यान्कुले जातानरोगिणः ।
शिष्टाञ्शिष्टाभिसंबन्धान्मानिनोऽनवमानिनः ॥ २३
विद्याविदो लोकविदः परलोकान्ववेक्षकान् ।
धर्मे च निरतान्साधूनचलानचलानिव ॥ २४
सहायान्सततं कुर्याद्राजा भूतिपरिष्कृतान् ।
तैश्च तुल्यो भवेद्भोगैश्छत्रमात्राज्ञयाऽधिकः ॥ २५
प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य भवेत्समा ।
एवं कुर्वन्नरेन्द्रो हि न खेदमिह विन्दति ॥ २६
सर्वाभिशङ्की नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बाध्यते ॥ २७
शुचिस्तु पृथिवीपालो लोकस्यानुग्रहे रतः ।
न पतत्यरिभिर्ग्रस्तः पतितश्चाधितिष्ठति ॥ २८
अक्रोधनो ह्यव्यसनी मृदुदण्डो जितेन्द्रियः ।
राजा भवति भूतानां विश्वास्यो हिमवानिव ॥ २९
प्राज्ञो न्यायगुणोपेतः पररन्ध्रेषु लालसः ।
सुदर्शः सर्ववर्णानां नयापनयवित्तथा ॥ ३०
क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः ।
अरोगप्रकृतिर्युक्तः क्रियावानविकत्थनः ॥ ३१
आरब्धान्येव कार्याणि न पर्यवसितान्यपि ।
यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः ॥ ३२
पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥ ३३
अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः ।
नयापनयवेत्तारः स राजा राजसत्तमः ॥ ३४
स्वधर्मनिरता यस्य जना विषयवासिनः ।
असङ्घातरता दान्ताः पाल्यमाना यथाविधि ॥ ३५
वश्या यत्ता विनीताश्च न च सङ्घर्षशीलिनः ।
विषये दानरुचयो नरा यस्य स पार्थिवः ॥ ३६
न यस्य कूटं कपटं न माया न च मत्सरः ।
विषये भूमिपालस्य तस्य धर्मः सनातनः ॥ ३७
यः सत्करोति ज्ञानानि श्रेयान्परहिते रतः ।
सतां वर्त्मानुगस्त्यागी स राजा स्वर्गमर्हति ॥ ३८
यस्य चाराश्च मन्त्राश्च नित्यं चैव कृताकृताः ।
न ज्ञायन्ते हि रिपुभिः स राजा राज्यमर्हति ॥ ३९
श्लोकद्वयं पुरा गीतं भार्गवेण महात्मना ।
आख्याते राजचरिते नृपतिं प्रति भारत ॥ ४०
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनं ॥ ४१
तद्राज्ये राज्यकामानां नान्यो धर्मः सनातनः ।
ऋते रक्षां तु विस्पष्टां रक्षा लोकस्य धारिणी ॥ ४२
प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ ।
राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ॥ ४३
षडेतान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ४४
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ४५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

शूरान्सहायान् कुर्यादिति तृतीयेनान्वयः । असंहार्यान्परैरप्रतार्यान् । शिष्टाभिसंबन्धान् शिष्टपरिवारान् । अनवमानिनः अवमानं परस्याकुर्वतः ॥ २३ ॥ अचलान् स्थिरान् अचलानिव पर्वतानिव ॥ २४ ॥ छत्रमात्रेण सहिता या आज्ञा इदमित्थं कुरु इद नेति तयाधिकः । अन्यत्सर्वं शूरैः समानं भुञ्जीत ॥ २५ ॥ सुपर्यवसितानि च इति झ. पाठः ॥ ३२ ॥ असंघातरताः संघाते शरीरे प्रीतिमन्तो न भवन्ति किंतु तत्साध्ये धर्मे एवेत्यर्थः ॥ ३५ ॥ संघर्षः पराभिभवस्तच्छीलिनो न ॥ ३६ ॥ कूटं दम्भः । [illegible]मनृतम् । मत्सरः परोत्कर्षासहिष्णुत्वम् ॥ ३७ ॥ ज्ञेये परहिते [illegible] पाठः । ज्ञेयः पौरहिते इति थ. द. पाठः । राज्यमर्हती [illegible]ठः । ज्ञानानि ज्ञानयुक्तान्पण्डितान् ॥ ३८ ॥ कृता अप्य[illegible]ति कृताकृताः ॥ ३९ ॥ प्रथमं श्रेष्ठं असत्यशुभे ॥ [illegible] षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

भीष्मेण युधिष्ठिराय प्रथमदिने राजधर्मकथनम् ॥ १ ॥ ततः सायं कृष्णादीनां स्वस्वावासगमनम् ॥ २ ॥

भीष्म उवाच ।
एतत्ते राजधर्माणां नवनीतं युधिष्ठिर ।
बृहस्पतिर्हि भगवान्नान्यं धर्मं प्रशंसति ॥ १
विशालाक्षश्च भगवान्काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥ २
भरद्वाजश्च भगवांस्तथा गौरशिरा मुनिः ।
राजशास्त्रप्रणेतारो ब्राह्मणा ब्रह्मवादिनः ॥ ३
रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर ।
राज्ञां राजीवताम्राक्ष साधनं चात्र मे शृणु ॥ ४
चारश्च प्रणिधिश्चैव काले दानममत्सरः ।
युक्त्या दानं न चादानमयोगेन युधिष्ठिर ॥ ५
सतां संग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ।
अनार्जवैरार्जवैश्च शत्रुपक्षाविवर्धनम् ॥ ६
केतनानां च जीर्णानामवेक्षा चैव सीदताम् ।
द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः ॥ ७
साधूनामपरित्यागः कुलीनानां च धारणम् ।
निचयश्च निचेयानां सेवा बुद्धिमतामपि ॥ ८
बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् ।
कार्येष्वखेदः कोशस्य तथैव च विवर्धनम् ॥ ९
पुरगुप्तिरविश्वासः पौरसंघातभेदनम् ।
अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम् ॥ १०
उपजापश्च भृत्यानामात्मनः पुरदर्शनम् ।
अविश्वासः स्वयं चैव परस्याश्वासनं तथा ॥ ११
नीतिवर्त्मानुसारेण नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं नित्यं चानार्यवर्जनम् ॥ १२
उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
राजधर्मस्य यन्मूलं श्लोकांश्चात्र निबोध मे ॥ १३
उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः ।
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥ १४
उत्थानधीरः पुरुषो वाग्धीरानधितिष्ठति ।
उत्थानवीरान्वाग्वीरा रमयन्त उपासते ॥ १५
उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
प्रधर्षणीयः शत्रूणां भुजङ्ग इव निर्विषः ॥ १६
न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ।
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥ १७
एकाङ्गेनापि संभूतः शत्रुर्दुर्गमुपाश्रितः ।
सर्वं तापयते देशमपि राज्ञः समृद्धिनः ॥ १८
राज्ञो रहस्यं यद्वाक्यं जयार्थं लोकसंग्रहः ।
हृदि यच्चास्य जिह्मं स्यात्कारणार्थं च यद्भवेत् ॥ १९
यच्चास्य कार्यं वृजिनं मार्दवेनैव धार्यते ।
रञ्जनार्थं च लोकस्य धर्मिष्ठामाचरेत्क्रियाम् ॥ २०
राज्यं हि सुमहत्तत्र दुर्धार्यमकृतात्मभिः ।
न शक्यं मृदुना वोढुमाघातस्थानमुल्बणम् ॥ २१
राज्यं सर्वामिषं नित्यमार्जवेनैव धार्यते ।
तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर ॥ २२
यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य वै प्रजाः ।
सोप्यस्य विपुलो धर्म एवंवृत्ता हि भूमिपाः ॥ २३
एष ते राजधर्माणां लेशः समनुवर्णितः ।
भूयस्ते यत्र संदेहस्तद्ब्रूहि कुरुसत्तम ॥ २४
वैशंपायन उवाच ।
ततो व्यासश्च भगवान्देवस्थानोऽश्म एव च ।
वासुदेवः कृपश्चैव सात्यकिः सञ्जयस्तथा ॥ २५
साधुसाध्विति संहृष्टा पुष्यमाणैरिवाननैः ।
अस्तुवंश्च नरव्याघ्रं भीष्मं धर्मभृतां वरम् ॥ २६

---

एतद्रक्षणं नवनीतं नवनीतवत्सर्वधर्मसारम् । न्याय्यं धर्मं प्रशंसतीति झ. पाठः ॥ १ ॥ चारो गुप्तस्पशः । प्रणिधिः प्रकटस्पशः । दानं भक्तवेतनयोः युक्तेरादानम् । अयोगेनानुपायेन आदानं करग्रहणं नच ॥ ५ ॥ केतनानां गृहादीनाम् । द्विविधस्य शारीरदण्डोऽर्थदण्डश्चेति भेदात् ॥ ७ ॥ निचेयानां संग्राह्याणां धान्यादीनां निचयः संग्रहः ॥ ८ ॥ अविश्वासो यामिकादीनामपि ॥ १० ॥ अविश्वासो भृत्यानामेव ॥ ११ ॥ उत्थानमुद्योगः । अनार्यं हीनकर्म कदर्यत्वादि तद्वर्जनम् ॥ १२ ॥ वाग्वीरान् पण्डितान् । उत्थानमेव महत्पाण्डित्यमित्यर्थः ॥ १५ ॥ एकाङ्गेन हस्त्यश्वरथपादातानामन्यतमेनापि संभूतः संपन्नः । समृद्धिनः समृद्धिमतः ॥ १८ ॥ अकृतात्मभिः क्रूरैः ॥ २१ ॥ मिश्रेण क्रौर्यमार्दवाभ्याम् ॥ २२ ॥

ततो दीनमना भीष्ममुवाच कुरुनन्दनः ।
नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन् २७
श्व इदानीं स्वसंदेहं प्रवक्ष्यामि पितामह ।
उपैति सविता ह्यस्तं रसमापीय पार्थिवम् ॥ २८
ततो द्विजातीनभिवाद्य केशवः
कृपश्च ते चैव युधिष्ठिरादयः ।
प्रदक्षिणीकृत्य महानदीसुतं
ततो रथानारुरुहुर्मुदान्विताः ॥ २९
दृषद्वतीं चाप्यवगाह्य सुव्रताः
कृतोदकार्थाः कृतजप्यमङ्गलाः ।
उपास्य संध्यां विधिवत्परंतपा-
स्ततः पुरं ते विविशुर्गजाह्वयम् ॥ ३०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

भीष्मेण युधिष्ठिरंप्रति राजोत्पत्तेर्ब्रह्मकृतदण्डनीतिग्रन्थप्रतिपाद्यार्थानां पृथुराजचरितादीनां च कथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः कल्यं समुत्थाय कृतपूर्वाह्णिकक्रियाः ।
ययुस्ते नगराकारै रथैः पाण्डवयादवाः ॥ १
प्रतिपद्य कुरुक्षेत्रं भीष्ममासाद्य चानघम् ।
सुखां च रजनीं पृष्ट्वा गाङ्गेयं रथिनां वरम् ॥ २
व्यासादीनभिवाद्यर्षीन्सर्वैस्तैश्चाभिनन्दिताः ।
निषेदुरभितो भीष्मं परिवार्य समन्ततः ॥ ३
ततो राजा महातेजा धर्मपुत्रो युधिष्ठिरः ।
अब्रवीत्प्राञ्जलिर्भीष्मं प्रतिपूज्य यथाविधि ॥ ४
युधिष्ठिर उवाच ।
य एष राजन्राजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस्तन्मे ब्रूहि पितामह ॥ ५
तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः ॥ ६
तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च ।
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ॥ ७
समानजन्ममरणः समः सर्वैर्गुणैर्नृणाम् ।
विशिष्टबुद्धीञ्शूरांश्च कथमेकोऽधितिष्ठति ॥ ८
कथमेको महीं कृत्स्नां शूरवीरार्यसंकुलाम् ।
रक्षत्यपि च लोकस्य प्रसादमभिवाञ्छति ॥ ९
एकस्य तु प्रसादेन कृत्स्नो लोकः प्रसीदति ।
व्याकुले चाकुलः सर्वो भवतीति विनिश्चयः ॥ १०
एतदिच्छाम्यहं श्रोतुं त्वत्तो हि भरतर्षभ ।
कृत्स्नं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ॥ ११
नैतत्कारणमत्यल्पं भविष्यति विशांपते ।
यदेकस्मिञ्जगत्सर्वं देववद्याति सन्नतिम् ॥ १२
भीष्म उवाच ।
नियतस्त्वं नरव्याघ्र शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ॥ १३
नैव राज्यं न राजाऽऽसीन्न च दण्डो न दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥ १४
पाल्यमानास्तथाऽन्योन्यं नरा धर्मेण भारत ।
दैन्यं परमुपाजग्मुस्ततस्तान्मोह आविशत् ॥ १५
ते मोहवशमापन्ना मनुजा मनुजर्षभ ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥ १६
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा ।
लोभस्य वशमापन्नाः सर्वे भरतसत्तम ॥ १७
अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः ।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो ॥ १८
तांस्तु कामवशं प्राप्तान्रागो नामाभिसंस्पृशत् ।
रक्ताश्च नाभ्यजानन्त कार्याकार्यं युधिष्ठिर ॥ १९
अगम्यागमनं चैव वाच्यावाच्यं तथैव च ।

प्रक्ष्यामि त्वां पितामह इति झ. पाठः ॥ २८ ॥ सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
कल्यं प्रातः ॥ १ ॥ मानुषत्वे समानेऽपि किंनिमित्तेयं एकस्मिन्निग्रहानुग्रहशक्तिरिति पृच्छति य इत्यादिना ॥ ५ ॥ दण्डः दमनम् । दाण्डिको दण्डप्रणेता ॥ १४ ॥ मोहो वैचित्यम् ॥ १५ ॥ प्रतिपत्तिविमोहात् ज्ञानलोपात् ॥ १६ ॥

भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन् २०
विप्लुते नरलोकेऽस्मिंस्ततो ब्रह्म ननाश ह ।
नाशाच्च ब्रह्मणो राजन्धर्मो नाशमथागमत् ॥२१
नष्टे ब्रह्मणि धर्मे च देवास्त्रासमथागमन् ।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः ॥ २२
प्रपद्य भगवन्तं ते देवं लोकपितामहम् ।
ऊचुः प्राञ्जलयः सर्वे दुःखवेगसमाहताः ॥ २३
भगवन्नरलोकस्थं ग्रस्तं ब्रह्म सनातनम् ।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥२४
ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वर ।
ततस्तु समतां याता मर्त्यैस्त्रिभुवनेश्वराः ॥ २५
अधोभिवर्षास्तु वयं भौमास्तूर्ध्वप्रवर्षिणः ।
क्रियाव्युपरमात्तेषां ततोऽगच्छाम संशयम् ॥ २६
अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह ।
त्वत्प्रसादात्समुत्थोसौ प्रभावो नो भवत्वयम् ॥२७
तानुवाच सुरान्सर्वान्स्वयंभूर्भगवांस्ततः ।
श्रेयोऽहं चिन्तयिष्यामिव्येतु वो भीः सुरोत्तमाः ॥
ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।
यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः ॥ २९
त्रिवर्ग इति विख्यातो गण एष स्वयंभुवा ।
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः ॥ ३०
मोक्षस्यास्ति त्रिवर्गोऽन्यः प्रोक्तः सत्वं रजस्तमः ।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥ ३१

आत्मादेशश्च कालश्चाप्युपायाः कृत्यमेव च ।
सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः ॥३२
त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥३३
अमात्यलिप्सा प्रणिधी राजपुत्रस्य लक्षणम् ।
चारश्च विविधोपायः प्रणिधिश्च पृथग्विधः ॥३४
सामभेदः प्रदानं च ततो दण्डश्च पार्थिव ।
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ॥३५
मन्त्रश्च वर्णितः कृत्स्नो मन्त्रभेदार्थ एव च ।
विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत्फलम् ॥३६
संधिश्च त्रिविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयसत्कारवित्ताख्यं कार्त्स्न्येन परिवर्णितम् ॥३७
यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः ।
विजयो धर्मयुक्तश्च तथार्थविजयश्च ह ॥ ३८
आसुरश्चैव विजयः कार्त्स्न्येन परिवर्णितः ।
लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम् ॥ ३९
प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यश्च बहुविस्तरः ॥ ४०
रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।
विष्टिर्नावश्चराश्चैव देशिका इति चाष्टमः ।
अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु ॥४१
जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ।
स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधः स्मृतः ॥४२

---

नात्यजन्दुष्टमदुष्टं च सर्वं स्वीचक्रुरित्यर्थः ॥ २० ॥ ब्रह्म वेदः। धर्मो यज्ञः ॥ २१ ॥ मर्त्यैः समतां याताः स्म । स्वाहाद्यभावेन क्षीणाः स्म इत्यर्थः ॥ २५ ॥ हविर्धाराभिरूर्ध्वप्रवर्षिणः । ततश्चान्नाभावान्नश्याम इत्यर्थः ॥ २६ ॥ पृथगर्थः त्रिवर्गफलापेक्षया विपरीतफलः । पृथग्गुणः त्रिवर्गसाधनापेक्षया विपरीतसाधनः ॥ ३० ॥ मोक्षस्य त्रिवर्गो धर्मादिरन्यो निष्कामः । धर्मादेर्भेदश्च सत्वादिगुणप्राधान्यनिमित्त इत्यर्थः । दण्डात्स्थानं साम्यं वणिजां वृद्धिस्तपस्विनां क्षयश्चोराणां च भवतीत्याहार्थेन स्थानमिति ॥ ३१ ॥ नीतिजान्षड्गुणानाह आत्मेति । आत्मा चित्तम् । नीतिबलात्प्रजानां चित्तं दुःस्थितमपि सुस्थितं भवति । कुदेशोऽपि सुदेशो भवति । कलिरपि कृतं भवति । उपायाः साधनानि । कृत्यं कृतिनिर्वर्त्यं प्रयोजनम् । सहायाः सुहृदादयः ॥ ३२ ॥ त्रयी कर्मकाण्डः । आन्वीक्षिकी ज्ञानकाण्डः । वार्ता कृषिवाणिज्यादिजीविकाकाण्डः । दण्डनीतिः पालनविद्या । एते धर्मादयस्तत्र ब्रह्मकृतशतसहस्राध्याये दर्शिताः ॥ ३३ ॥ प्रणिधिर्गुप्तश्चारः । सच्च चारो विविधोपायः । ब्रह्मचार्यादिवेषधारी । एकैकस्मिन्स्थाने पृथक्पृथग्वेषः ॥ ३४ ॥ सामादिचतुष्टयमुपेक्षा च पञ्चमीत्युपायाः ॥ ३५ ॥ विभ्रमो भेदार्थे ॥ ३६ ॥ भयेन संधिर्हीनः । सत्कारेण मध्यमः । वित्तग्रहणेनोत्तमः । तत्रयं संधिकारणं वर्णितम् ॥ ३७ ॥ चत्वारो मित्रवृद्धिः कोशसंचयश्च स्वस्य मित्रनाशः कोशहानिश्च परस्येति ॥ ३८ ॥ आसुरो विजयः सौप्तिके गतः । पञ्चवर्गोऽमात्यराष्ट्रदुर्गाणि बलं कोशश्च पञ्चमः । त्रिविधमुत्तममध्यमाधमभेदेन ॥ ३९ ॥ दण्डः सेना ॥ ४० ॥ विष्टिर्विष्टिगृहीता भारवाहाः । चराश्चाराः । देशिका उपदेष्टारो गुरवः ॥ ४१ ॥ जंगमा महावृश्चिकादिजाः । अजंगमाः रक्तशाङ्गिकादयः । स्पर्शे वस्त्रादौ । अभ्यवहार्येऽन्नादौ । उपांशुरभिचारादिरिति विविधो विषयोगरूपो दण्डः ॥ ४२ ॥

'क्रीडापूर्वं रणे द्यूते विस्रम्भणसमन्वितम् ।
उक्तं कैतव्यमित्येतदुपायो नवमो बुधैः ॥ ४३
उपेक्षा सर्वकार्येषु कर्मणां करणेषु च ।
अनिष्टानां समुत्थाने त्रिवर्गो नश्यते यया ॥ ४४
इन्द्रजालादिका माया वाजीवनकुशीलवैः ।
सुनिमित्तैर्दुर्निमित्तैरुत्पातैश्च समन्वितम् ॥ ४५
डम्भो लिङ्गं समाश्रित्य शत्रुवर्गे प्रयुज्यते ।
शाठ्यं निश्चेष्टता प्रोक्ता चित्तदोषप्रदूषिका ॥' ४६
अरिर्मित्र उदासीन इत्येतेऽप्यनुवर्णिताः ।
कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह ।
आत्मरक्षणमाश्वासः स्पशानां चान्ववेक्षणम् ॥ ४७
कल्पना विविधाश्चापि नृनागरथवाजिनाम् ।
व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ४८
उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितम् ।
शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ ॥ ४९
बलव्यसनयुक्तं च तथैव बलहर्षणम् ।
पीडा चापद्कालश्च भयकालश्च पाण्डव ॥ ५०
तथाख्यातविधानं च योगः संचार एव च ।
चोरैराटविकैश्चोग्रैः परराष्ट्रस्य पीडनम् ॥ ५१
अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः ।
श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ॥ ५२
दूषणेन च नागानामातङ्कजननेन च ।
आराधनेन भक्तस्य पत्युश्चोपग्रहेण च ॥ ५३
सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धिसमीक्षणम् ।
दूतसामर्थ्ययोगश्च राष्ट्रस्य च विवर्धनम् ॥ ५४
अरिमध्यस्थमित्राणां सम्यक्प्रोक्तं प्रपञ्चनम् ।
अवमर्दः प्रतीघातस्तथैव च बलीयसाम् ॥ ५५
व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनम् ।
श्रमो व्यायामयोगश्च योगद्रव्यस्य सञ्चयः ॥ ५६
अभृतानां च भरणं भृतानां चान्ववेक्षणम् ।
अन्तकाले प्रदानं च व्यसने चाप्रसङ्गिता ॥ ५७
तथा राजगुणाश्चैव सेनापतिगुणाश्च ह ।
करणस्य च कर्तुश्च गुणदोषास्तथैव च ॥ ५८
दुष्टेङ्गितं च विविधं वृत्तिश्चैवानुवर्तिनाम् ।
शङ्कितत्वं च सर्वस्य प्रमादस्य च वर्जनम् ॥ ५९
अलब्धलिप्सा लब्धस्य तथैव च विवर्धनम् ।
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत्तथा ॥ ६०
विसर्गोऽर्थस्य धर्मार्थमर्थार्थं कामहेतुकम् ।
चतुर्थं व्यसनाघाते तथैवात्रानुवर्णितम् ॥ ६१
क्रोधजानि तथोग्राणि कामजानि तथैव च ।
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह ॥ ६२
मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ ।
कामजान्याहुराचार्याः प्रोक्तानीह स्वयंभुवा ॥ ६३
वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च ।
आत्मनो निग्रहस्त्यागो ह्यर्थदूषणमेव च ॥ ६४
यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः ।
अवमर्दः प्रतीघातः केतनानां च भञ्जनम् ॥ ६५
चैत्यद्रुमावमर्दश्च रोधः कर्मान्तनाशनम् ।
अपस्करोऽथ वमनं तथोपास्या च वर्णिता ॥ ६६
पणवानकशङ्खानां भेरीणां च युधिष्ठिर ।

मार्गगुणाः ग्रहनक्षत्रादिमार्गगुणाः । भूमिगुणाश्चतुरशीतिभूवलानि यामलोक्तानि । आत्मरक्षणं मन्त्रयन्त्रादिना । सर्गाणां चान्ववेक्षणम् इति झ. पाठः ॥ ४७ ॥ कल्पनाः बलपुष्टिकरा योगाः । विविधाभिख्याश्चक्रव्यूहक्रौञ्चव्यूहादिनानानामानः ॥ ४८ ॥ उत्पाताः ग्रहयुद्धादयो धूमकेत्वादयश्च । निपाताः उल्कापातभूमिकम्पादयः । शस्त्राणां पालनं तीक्ष्णीकरणम् । शास्त्राणां पालनं इति ट. ड. पाठः ॥ ४९ ॥ आपदां समूह आपदं तस्य काल आपद्कालः ॥ ५० ॥ आख्यातमभिमन्त्रितदुन्दुभिध्वनिना प्रयाणादिकथनम् । योगः पताकादिमन्त्रणादि । तयोः संचारः श्रवणदर्शनाभ्यां परमोहनम् । एतत्सर्वं तत्र उक्तमिति सर्वत्र योज्यम् ॥ ५१ ॥ गरदैः विषदैः । प्रतिरूपकं प्रतिमा तत्कारकैस्तद्द्वारा कार्मणकारिभिः कौलिकैः । श्रेणिमुख्याः बलाध्यक्षादयस्तेषामुपजापो भेदनं तेन । वीरुधश्छेदनेन धान्याद्युच्छेदेन ॥ ५२ ॥ नागानां दूषणं मन्त्रतन्त्रौषधादिना तेन परराष्ट्रस्य पीडनमुक्तमिति प्रपूर्वेण संबन्धः ॥ ५३ ॥ कण्टकशोधनं खलानामुन्मूलनम् । श्रमो मल्लक्रीडा । व्यायामयोगः आयुधप्रयोगाभ्यासः ॥ ५६ ॥ अर्थस्य काले दानं च इति झ. पाठः । अप्रसङ्गिता असंबन्धः ॥ ५७ ॥ राजगुणाः उत्थानादयः ॥ ५८ ॥ पात्रेभ्यः प्रदानं प्रथमम् ॥ ६० ॥ विसर्गो दानं धर्मार्थं यज्ञार्थं द्वितीयम् । काम्यं तृतीयम् । व्यसनाघाते चतुर्थम् ॥ ६१ ॥ अवमर्दः परचक्रेण देशादेः पीडनम् ॥ ६५ ॥

उपार्जनं च द्रव्याणां परमर्म च तानि षट् ॥६७
लब्धस्य च प्रशमनं सतां चैवाभिपूजनम् ।
विद्वद्भिरेकीभावश्च जपहोमविधिज्ञता ॥ ६८
मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया ।
आहारयोजनं चैव नित्यमास्तिक्यमेव च ॥ ६९
एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः ।
उत्तमानां समाजानां क्रियाः केतनजास्तथा ॥ ७०
प्रत्यक्षाश्च परोक्षाश्च सर्वाधिकरणेष्वथ ।
वृत्तेर्भरतशार्दूल नित्यं चैवान्ववेक्षणम् ॥ ७१
अदण्ड्यत्वं च विप्राणां युक्त्या दण्डनिपातनम् ।
अनुजीवी स्वजातिभ्यो गुणेभ्यश्च समुद्भवः ॥ ७२
रक्षणं चैव पौराणां राष्ट्रस्य च विवर्धनम् ।
मण्डलस्था च या चिन्ता राजन्द्वादशराजिका ॥७३
द्विसप्ततिमतिश्चैव प्रोक्ता या च स्वयंभुवा ।
देशजातिकुलानां च धर्माः समनुवर्णिताः ॥ ७४
धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णिताः ।
उपायाश्चार्थलिप्सा च विविधा भूरिदक्षिण ॥ ७५
मूलकर्मक्रिया चात्र मायायोगश्च वर्णितः ।
दूषणं स्रोतसां चैव वर्णितं च स्थिराम्भसाम् ॥७६
यैर्यैरुपायैर्लोकस्तु न चलेदार्यवर्त्मनः ।
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽभिवर्णितम् ॥ ७७
एतत्कृत्वा शुभं शास्त्रं ततः स भगवान्प्रभुः ।
देवानुवाच संहृष्टः सर्वाञ्छक्रपुरोगमान् ॥ ७८
उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाषिता ॥ ७९
दण्डेन सहिता ह्येषा लोकरक्षणकारिका ।
निग्रहानुग्रहरता लोकाननुचरिष्यति ॥ ८०
दण्डेन नीयते चेदं दण्डं नयति वा पुनः ।
दण्डनीतिरितिख्याता त्रीँल्लोकानवपत्स्यते ॥८१
षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु ।
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ॥ ८२
भीष्म उवाच ।
ततस्तां भगवान्नीतिं पूर्वं जग्राह शंकरः ।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥ ८३
अनादिनिधनो देवश्चैतन्यादिसमन्वितः ।
ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥ ८४
अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् ।
तुष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः ॥८५
अरुदत्सस्वनं घोरं जगतः प्रभुरव्ययः ।
जायमानः पिता पुत्रे पुत्रः पितरि चैव हि ॥ ८६
बुद्धिं विश्वसृजे दत्त्वा ब्रह्माण्डं येन निर्मितम् ।
यस्मिन्हिरण्मयो हंसः शकुनिः समपद्यत ॥ ८७
कर्ता सर्वस्य लोकस्य ब्रह्मा लोकपितामहः ।
स देवः सर्वभूतानां महादेवः सनातनः ।
असंख्यातसहस्राणां रुद्राणां स्थानमव्ययम् ॥ ८८
युगानामायुषो ह्रासं विज्ञाय भगवाञ्शिवः ।
संचिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥ ८९
वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥ ९०
मघवानपि तच्छास्त्रं देवात्प्राप्य महेश्वरात् ।
प्रजानां हितमन्विच्छन्संचिक्षेप पुरंदरः ॥ ९१
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ।
अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः ।
संचिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं यदुच्यते ॥ ९२
अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत् ।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महायशाः ॥ ९३
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः ।
संक्षिप्तमायुर्विज्ञाय लोकानां ह्रासि पाण्डव ॥ ९४

तानि द्रव्याणि षट् मणयः पशवः पृथ्वी वासो दास्यादि काञ्चनमिति ॥ ६७ ॥ मङ्गलं स्वर्णादिकं तस्यालम्भनं स्पर्शः । प्रतिक्रिया अलंकरणम् ॥ ६९ ॥ एकस्याप्युत्थानप्रकारः । केतनजाः गृहजाः । क्रियाः ध्वजारोहणाद्याः ॥ ७० ॥ अधिकरणेषु जनोपवेशनस्थानेषु चत्वरादिषु ॥ ७१ ॥ जातितो गुणतश्च समुद्भवो मान्यत्वम् ॥ ७२ ॥ द्वादशानां राज्ञां समूहो द्वादशराजिका । मध्यस्थस्य विजिगीषोश्चतुर्दिक्षु चत्वारोऽरयस्तेभ्योऽपरे चत्वारो मित्राणि तेभ्यः परे चत्वार उदासीना इति ॥ ७३ ॥ हे भूरिदक्षिण ॥ ७५ ॥ मूलकर्माणि कोशवृद्धिकराणि कृष्यादीनि तेषां क्रिया करणप्रकारः ॥ ७६ ॥ नीयते पुरुषार्थफलाय इदं जगत् दण्डं नयति प्रणयति अनया या चेति वा ॥ ८१ ॥ प्रजानामायुषः इति झ॰ पाठः । संचिक्षेप संक्षिप्तं कृतवान् ॥ ८९ ॥ वैशालाक्षं बाहुदन्तकं बार्हस्पत्यमित्युत्तरोत्तरसंक्षिप्तदण्डनीतिग्रन्थनामानि ॥ ९० ॥

अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम् ।
एको योऽर्हति मर्त्येभ्यः श्रैष्ठ्यं वै तं समादिश ॥९५
ततः संचिन्त्य भगवान्देवो नारायणः प्रभुः ।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम् ॥ ९६
विरजास्तु महाभागः प्रभुत्वं भुवि नैच्छत ।
न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव ॥९७
कीर्तिमांस्तस्य पुत्रोऽभूत्सोऽपि मर्त्याधिकोऽभवत्।
कर्दमस्तस्य तु सुतः सोऽप्यतप्यन्महत्तपः ॥ ९८
प्रजापतेः कर्दमस्य त्वनङ्गो नाम वीर्यवान् ।
प्रजा रक्षयिता साधुर्दण्डनीतिविशारदः ॥ ९९
अनङ्गपुत्रोऽतिबलो नीतिमानभिगम्य वै ।
प्रतिपेदे महाराज्यमथेन्द्रियवशोऽभवत् ॥ १००
'प्राप्य नारीं महाभागां रूपिणीं काममोहितः ।
सौभाग्येन च संपन्नां गुणैश्चानुत्तमां सतीम्' १०१
मृत्योस्तु दुहिता राजन्सुनीथा नाम नामतः ।
प्रख्याता त्रिषु लोकेषु या सा वेनमजीजनत् १०२
तं प्रजासु विधर्माणं रागद्वेषवशानुगम् ।
मन्त्रपूतैः कुशैर्जघ्नुर्ऋषयो ब्रह्मवादिनः ॥ १०३
ममन्थुर्दक्षिणं चोरुमृषयस्तस्य भारत ।
ततोऽस्य विकृतो जज्ञे ह्रस्वकः पुरुषोऽशुचिः १०४
दग्धस्थूणाप्रतीकाशो रक्ताक्षः कृष्णमूर्धजः ।
निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः ॥ १०५
तस्मान्निषादाः संभूताः क्रूराः शैलवनाश्रयाः ।
ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः ॥
भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः ।
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ॥ १०७
कवची बद्धनिस्त्रिंशः सशरः सशरासनः ।
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः ॥ १०८
तं दण्डनीतिः सकला श्रिता राजन्नरोत्तमम् ।
ततस्तु प्राञ्जलिर्वैन्यो महर्षीस्तानुवाच ह ॥ १०९
सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्मार्थदर्शिनी ।
अनया किं मया कार्यं तन्मे तत्त्वेन शंसत ॥११०

यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम् ।
तदहं वः करिष्यामि नात्र कार्या विचारणा ॥१११
तमूचुस्तत्र देवास्ते ते चैव परमर्षयः ।
नियतो यत्र धर्मो वै तमशङ्कः समाचर ॥ ११२
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु ।
कामं क्रोधं च लोभं च मानं चोत्सृज्य दूरतः ११३
यश्च धर्मात्प्रविचलेल्लोके कश्चन मानवः ।
निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्ममवेक्षता ॥ ११४
प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ॥११५
यश्चात्र धर्म इत्युक्तो दण्डनीतिव्यपाश्रयः ।
तमशङ्कः करिष्यामि स्ववशो न कदाचन ॥११६
अदण्ड्या मे द्विजाश्चेति प्रतिजानीष्व चाभिभो ।
लोकं च संकरात्कृत्स्नं त्राताऽस्मीति परंतप ॥११७
वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान् ।
ब्राह्मणा मे सहायाश्चेदेवमस्तु सुरर्षभाः ॥ ११८
एवमस्त्विति वैन्यस्तु तैरुक्तो ब्रह्मवादिभिः ।
पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः ॥ ११९
मन्त्रिणो वालखिल्याश्च सारस्वत्यो गणस्तथा ।
महर्षिर्भगवान्गर्गस्तस्य सांवत्सरोऽभवत् ॥ १२०
आत्मनाऽष्टम इत्येव श्रुतिरेषा परा नृषु ।
उत्पन्नौ बन्दिनौ चास्य तत्पूर्वौ सूतमागधौ ॥१२१
तयोः प्रीतो ददौ राजा पृथुर्वैन्यः प्रतापवान् ।
अनूपदेशं सूताय मगधं मागधाय च ॥ १२२
समतां वसुधायाश्च स सम्यगुदपादयत् ।
वैषम्यं हि परं भूमेरिति नः परमा श्रुतिः ॥ १२३
मन्वन्तरेषु सर्वेषु विषमा जायते मही ।
उज्जहार ततो वैन्यः शिलाजालान्समन्ततः ॥१२४
धनुष्कोट्या महाराज तेन शैला विमर्दिताः ।
स विष्णुना च देवेन शक्रेण विबुधैः सह ।
ऋषिभिश्च प्रजापाल्ये ब्रह्मणा चाभिषेचितः ॥१२५
तं साक्षात्पृथिवी भेजे रत्नान्यादाय पाण्डव ।

पञ्चातिगोऽभवदिति झ. पाठः । तत्र पञ्चातिगः विषयातिगः मुक्त इत्यर्थः ॥ ९८ ॥ अनङ्गइत्यङ्गस्यैव नामान्तरम् ॥ ९९ ॥ सांवत्सरो ज्यौतिषिकः ॥ १२० ॥ आत्मना स्वशरीरेण सहाष्टमः पृथुर्विष्णोः सकाशादित्यर्थः । तथाहि—विष्णुः प्रथमः । विरजा द्वितीयः । कीर्तिमांस्तृतीयः । कर्दमश्चतुर्थः । अनङ्गः पञ्चमः । अतिबलः षष्ठः । वेनः सप्तमः । पृथुरष्टम इति ॥ १२१ ॥

सागरः सरितां भर्ता हिमवांश्चाचलोत्तमः ॥ १२६
शक्रश्च धनमक्षय्यं प्रादात्तस्मै युधिष्ठिर ।
रुक्मं चापि महामेरुः स्वयं कनकपर्वतः ॥ १२७
यक्षराक्षसभर्ता च भगवान्नरवाहनः ।
धर्मे चार्थे च कामे च समर्थं प्रददौ धनम् ॥ १२८
हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा ।
प्रादुर्बभूवुर्वैन्यस्य चिन्तयानस्य पाण्डव ॥ १२९
न जरा न च दुर्भिक्षं नाधयो व्याधयः कुतः ।
सरीसृपेभ्यः स्तेनेभ्यो न चान्येभ्यः कदाचन ।
भयमासीत्ततस्तस्य पृथिवी सस्यमालिनी ॥ १३०
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥ १३१
तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च ।
यक्षराक्षसनागानामीप्सितं यस्य यस्य यत् ॥ १३२
तेन धर्मोत्तरश्चायं कृतो लोको महात्मना ।
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ॥ १३३
ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते ।
प्रथिता धर्मतश्चेयं पृथिवी साधुभिः स्मृता ॥ १३४
स्थापनं चाकरोद्विष्णुः स्वयमेव सनातनः ।
नातिवर्तिष्यते कश्चिद्राजंस्त्वामिति भारत ॥ १३५
ततः स भगवान्विष्णुराविवेश च पार्थिवम् ।
देववन्नरदेवानां नमतीदं जगत्ततः ॥ १३६
दण्डनीत्या च सततं रक्षितारं नरेश्वरम् ।
नाधर्षयेत्तथा कश्चिचारनिष्पन्ददर्शनात् ॥ १३७
शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते ।
आत्मना करणैश्चैव समस्येह महीक्षितः ॥ १३८
को हेतुर्यद्वशे तिष्ठेल्लोको दैवादृते गुणात् ॥ १३९
विष्णोर्ललाटात्कमलं सौवर्णमभवत्तदा ।
श्रीः संभूता ततस्तस्मिन्देवी धर्मस्य पाण्डव ॥ १४०
श्रियः सकाशादर्थश्च जातो धर्मस्य पाण्डव ।
अथ धर्मस्तथैवार्थः श्रीश्च राज्ये प्रतिष्ठिता ॥ १४१
सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम् ।
पार्थिवो जायते तात दण्डनीतिविशारदः ॥ १४२
माहात्म्येन च संयुक्तो वैष्णवेन नरो भुवि ।
बुद्ध्या भवति संयुक्तो माहात्म्यं चाधिगच्छति ॥
स्थापितं च ततो देवैर्न कश्चिदतिवर्तते ।
तिष्ठत्येकस्य च वशे तं चैवानुविधीयते ॥ १४४
शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते ।
तुल्यस्यैकस्य येनायं लोको वचसि तिष्ठति ॥ १४५
योऽस्य वै मुखमद्राक्षीत्सोऽस्य सर्वो वशानुगः ।
सुभगं चार्थवन्तं च रूपवन्तं च पश्यति ॥ १४६
महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा ।
नयश्चारश्च विपुलो येन सर्वमिदं ततम् ॥ १४७
आगमश्च पुराणानां महर्षीणां च संभवः ।
तीर्थवंशश्च वंशश्च क्षत्रियाणां युधिष्ठिर ॥ १४८
सकलं चातुराश्रम्यं चातुर्होत्रं तथैव च ।
चातुर्वर्ण्यं तथैवात्र चातुर्विद्यं च कीर्तितम् ॥ १४९
इतिहासोपवेदाश्च न्यायः कृत्स्नश्च वर्णितः ।
तपो ज्ञानमहिंसा च सत्यं दानममत्सरः ॥ १५०
वृद्धोपसेवा दानं च शौचमुत्थानमेव च ।
सर्वभूतानुकम्पा च सर्वमत्रोपवर्णितम् ॥ १५१
भुवि वाचोगतं यच्च तच्च सर्वं समर्पितम् ।
तस्मिन्पैतामहे शास्त्रे पाण्डवेय न संशयः ॥ १५२
ततो जगति राजेन्द्र सततं शब्दितं बुधैः ।
देवाश्च नरदेवाश्च तुल्या इति विशांपते ॥ १५३
एतत्ते सर्वमाख्यातं महत्त्वं प्रति राजसु ।
कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्तते ॥ १५४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

प्रथितावनता चेति विग्रहे वर्णलोपविकाराभ्यां पृथिवी ॥१३४॥ स्थापनं मर्यादाम् ॥ १३५ ॥ तपसा भगवान्विष्णुराविवेश च भूमिपम् । इति झ. पाठः ॥ १३६ ॥ चाराणां निष्पन्दः संचारस्तद्द्वारा यद्दर्शनं लोकवृत्तान्तस्य महीक्षितः कर्मेति संबन्धः ॥ १३८ ॥ विष्णुर्भूमिपमाविवेशेत्युक्तं तत्रोपपत्तिः क इत्यर्थेन ॥ १३९ ॥ स्थापनामथ चेद्देवीं न कश्चिदतिवर्तत इति ट. ड. थ. पाठः ॥ १४४ ॥ तुल्यस्य हस्ताद्यवयवैः समस्य ॥ १४५ ॥ दण्डसामर्थ्यादेव लोके नीत्यादिकं दृश्यत इत्यर्थः ॥ १४७ ॥ आगमादिकं चात्र ग्रन्थे कीर्तितम् ॥ १४८ ॥ अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

भीष्मेण युधिष्ठिरंप्रति चातुर्वर्ण्यधर्मकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः पुनः स गाङ्गेयमभिवाद्य पितामहम् ।
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः ॥ १
के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक् ।
चातुर्वर्ण्याश्रमाणां च राजधर्माश्च के मताः ॥ २
केन वै वर्धते राष्ट्रं राजा केन विवर्धते ।
केन पौराश्च भृत्याश्च वर्धन्ते भरतर्षभ ॥ ३
कोशं दण्डं च दुर्गं च सहायान्मन्त्रिणस्तथा ।
ऋत्विक्पुरोहिताचार्यान्कीदृशान्वर्जयेन्नृपः ॥ ४
केषु विश्वसितव्यं स्याद्राज्ञा कस्यांचिदापदि ।
कुतो वाऽऽत्मा दृढं रक्ष्यस्तन्मे ब्रूहि पितामह ॥ ५
'द्वैधीभावे च भृत्यानां शपथः कीदृशो भवेत् ।
अधर्मस्य फलं यच्च शपथस्य विलङ्घने ॥ ६
सर्वमेतद्यथातत्वं व्यवहारं च तादृशम् ।
समासव्यासयोगेन कथयस्व पितामह ॥' ७
भीष्म उवाच ।
नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥
अक्रोधः सत्यवचनं संविभागश्च सर्वशः ।
प्रजनं स्वेषु दारेषु शौचमद्रोह एव च ॥ ९
आर्जवं भृत्यभरणं त एते सार्ववर्णिकाः ।
ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ॥ १०
दममेव महाराज धर्ममाहुः पुरातनम् ।
स्वाध्यायोऽध्यापनं चैव तत्र कर्म समाप्यते ॥ ११
तं चेद्विजमुपागच्छेद्वर्तमानं स्वकर्मणि ।
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ॥ १२
कुर्वीतापत्यसंतानमथो दद्याद्यजेत च ।
संविभज्य च भोक्तव्यं धनं सद्भिरितीष्यते ॥ १३
परिनिष्ठितकार्यस्तु स्वाध्यायेनैव वै द्विजः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ १४
क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत ।
दद्याद्राजा न याचेत यजेत न च याजयेत् ॥ १५
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमम् ॥ १६
ये तु क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः ।
य एवाहवजेतारस्त एषां लोकजित्तमाः ॥ १७
अविक्षतेन देहेन समराद्यो निवर्तते ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥ १८
एवं हि क्षत्रबन्धूनां धर्ममाहुः प्रधानतः ।
नास्य कृत्यतमं किंचिदन्यद्दस्युनिबर्हणात् ॥ १९
दानमध्ययनं यज्ञो राज्ञां क्षेमो विधीयते ।
तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता ॥ २०
स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्वा महीपतिः ।
धर्मेण सर्वकृत्यानि शमनिष्ठानि कारयेत् ॥ २१
परिनिष्ठितकार्यस्तु नृपतिः परिपालनात् ।
कुर्यादन्यन्न वा कुर्यादैन्द्रो राजन्य उच्यते ॥ २२
वैश्यस्यापि हि यो धर्मस्तं ते वक्ष्यामि शाश्वतम् ।
दानमध्ययनं यज्ञः शौचेन धनसंचयः ॥ २३
पितृवत्पालयेद्वैश्यो युक्तः सर्वान्पशूनिह ।
विकर्म तद्भवेदन्यत्कर्म यत्स समाचरेत् ॥ २४
रक्षया स हि तेषां वै महत्सुखमवाप्नुयात् ।
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून् ॥ २५
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ।
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ॥ २६
षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ।
लये च सप्तमो भागस्तथा शृङ्गे कला खुरे ॥ २७

सर्ववर्णानां अनुलोमविलोमजादीनाम् । चातुर्वर्ण्यस्य ये आश्रमाः ब्राह्मणस्य चत्वार आश्रमाः क्षत्रियस्य त्रयो वैश्यस्य द्वौ शूद्रस्यैक इति तेषाम् ॥ २ ॥ तत्राध्ययने । तावतैव नैष्ठिकः कृतार्थो भवतीत्यर्थः ॥ ११ ॥ स्वयमुपागते वित्ते दारक्रियापूर्वकं अपत्यसंतानमिच्छेत्स इत्याह द्वाभ्यां तं चेदिति ॥ १२ ॥ षण्णां धेनूनां रक्षको वैश्य एकस्याः क्षीरं स्ववेतनं हरेत् । शतस्य रक्षको वर्षे एकं गोवृषभमिथुनं वेतनं हरेत् । लब्धाच्च सप्तमं भागमिति झ. पाठः । तत्र वाणिज्ये तु लब्धात्सप्तमं

मस्यानां सर्वबीजानामेषा सांवत्सरी भृतिः ॥ २८
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन ॥ २९
शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भारत ।
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् ॥ ३०
तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते ।
तेषां शुश्रूषणाच्चैव महत्सुखमवाप्नुयात् ॥ ३१
शूद्र एतान्परिचरेत्त्रीन्वर्णाननसूयकः ।
संचयांश्च न कुर्वीत जातु शूद्रः कथंचन ॥ ३२
पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः ।
राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः ॥ ३३
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते ॥ ३४
छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे ॥ ३५
अधार्याणि विशीर्णानि वसनानि द्विजातिभिः ।
शूद्रायैव प्रदेयानि तस्य धर्मधनं हि तत् ॥ ३६
यंच कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्प्यां तेन तु तस्याहुर्वृत्तिं धर्मविदो जनाः ॥ ३७
देयः पिण्डोऽनपत्याय भर्तव्यौ वृद्धदुर्बलौ ।
शूद्रेण तु न हातव्यो भर्ता कस्यांचिदापदि ॥ ३८
अतिरेकेण भर्तव्यो भर्ता द्रव्यपरिक्षये ।
न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो हि सः ॥ ३९
उक्तस्त्रयाणां वर्णानां यज्ञस्त्रय्येव भारत ।
स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते ॥ ४०
तस्माच्छूद्रः पाकयज्ञैर्यजेताव्रतवान्स्वयम् ।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥ ४१
शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ।
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ॥ ४२
यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत ॥ ४३
अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते ।
दैवतं हि महच्छ्रद्धा पवित्रं यजतां च यत् ।
दैवतं हि परं विप्राः स्वेनस्वेन परस्परम् ॥ ४४
अयजन्निह सत्रैस्ते तैस्तैः कामैः समाहिताः ।
संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ॥ ४५
देवानामपि ये देवा यद्ब्रूयुस्ते परं हितम् ।
तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया ॥ ४६
ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः ।
अनृग्यजुरसामा च प्राजापत्य उपद्रवः ।
यज्ञो मनीषया तात सर्ववर्णेषु भारत ॥ ४७
नास्य यज्ञकृतो देवा ईहन्ते नेतरे जनाः ।
ततः सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥ ४८
स्वं दैवतं ब्राह्मणः स्वेन नित्यं
परान्वर्णानयजन्नैवमासीत् ।
अधरो वितानस्त्वथ तत्र सृष्टो
न ब्राह्मणस्त्रिषु वर्णेषु राजन् ॥ ४९
तस्माद्वर्णा ऋजवो ज्ञातिवर्णाः
संसृज्यन्ते तस्य विकार एव ।

भाग धनिकाद्धरेत्। गवयादिगृह्यवाणिज्ये लाभात्सप्तममेव। खुरे पशुविशेषखुरे महामूल्ये कला षोडशो भाग इत्यर्थः ॥ २७ ॥ एव सस्यानामपि सप्तममेवांशं हरेत् ॥ २८ ॥ कुर्वीत संचयानित्यपकृष्यते ॥ ३३ ॥ यातयामानि भुक्तभोगानि जीर्णानीतियावत् ॥ ३५ ॥ द्विजातीनां मध्ये य कंचित्प्रति। तेन द्विजातिना ॥ ३७ ॥ अतिरेकेण स्वकुटुम्बपोषणादाधिक्येन। भर्ता पोष्टा ॥ ३९ ॥ पाकयज्ञैः क्षुद्रयज्ञैः। अव्रतवान् श्रौतव्रतोपायहीनः ॥ ४१ ॥ सहस्राणां शत लक्षं पूर्णपात्राणि। शूद्रः पैलवनो नामेति ड. द. पाठः ॥ ४२ ॥ सर्ववर्णानां त्रैवर्णिकानां यो यज्ञः स तस्यैव शूद्रस्यैव भवति तस्य तत्सेवकत्वात् ॥ ४३ ॥ सृष्टयः संतानानि तेन सर्वेषां वर्णानां ब्राह्मणजत्वादस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः ॥ ४५ ॥ यद्ब्रूयुस्ते तत्ते तव परं हितम्। वर्णैः सशूद्रैः। सर्वयज्ञाः श्रौताः स्मार्ताश्च न काम्यया स्वभावात्संसृज्यन्त इति पूर्वस्योपसंहारः ॥ ४६ ॥ द्विजस्त्रैवर्णिकः पूज्यः। शूद्रेण उपद्रवतीति तत्समीपगामित्वादुपद्रवो दासः शूद्रः स वेदहीनोऽपि प्राजापत्यः प्रजापतिदेवताकः। यथाग्नेयो ब्राह्मण ऐन्द्रः क्षत्रियस्तद्वत्। तथाच मानसे देवतोद्देशेन द्रव्यत्यागात्मके यज्ञे सर्वे वर्णा अधिक्रियन्त इत्यर्थः ॥ ४७ ॥ अस्य मानसयज्ञकर्तुर्देवा इतरे जनाश्च न ईहन्ते इति न अपितु श्रद्धापूतत्वात्सर्वेप्यस्य यज्ञे भागं कामयन्त इत्यर्थः ॥ ४८ ॥ ब्राह्मणस्त्रयाणामपि वर्णानां स्वमसाधारणं दैवतमतः कारणात्ते स्वे आत्मीया ब्राह्मणाः परान्वर्णानुद्दिश्य नायजन्निति नैवाऽऽसीदपित्वयजन्नेव यागं कृतवन्तएव ॥ ४९ ॥ सर्वेऽपि वर्णा ऋजवः साधवएव यज्ञसंयोगात्। एवं धर्मसाम्येऽपि ज्ञातिसाम्यं नास्तीत्याशंक्याह। ज्ञातिवर्णा अपि क्षत्रियवैश्यशूद्रास्तस्य ब्राह्मणस्यैव विकारे क्षत्रियादिकन्यासूत्पन्ने मूर्धाभिषिक्तादौ

एकं साम यजुरेकमृगेका
विप्रश्चैको निश्चये तेषु सृष्टः ॥ ५०
अत्र गाथा यज्ञगीताः कीर्तयन्ति पुराविदः ।
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥५१
उदितेऽनुदिते वाऽपि श्रद्दधानो जितेन्द्रियः ।
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥५२
यत्स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम् ।
बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥ ५३
तानि यः संप्रजानाति ज्ञाननिश्चयनिश्चितः ।
द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति ॥ ५४
स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः ।
यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ॥ ५५
ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम् ।
सर्वथा सर्वदा वर्णैर्यष्टव्यमिति निर्णयः ॥ ५६
न हि यज्ञसमं किंचित्त्रिषु लोकेषु विद्यते ।
तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता ।
श्रद्धापवित्रमाश्रित्य यथाशक्ति यथेच्छया ॥ ५७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः ॥ ६० ॥

भीष्मेण युधिष्ठिरंप्रति आश्रमचतुष्टयधर्मकथनम् ॥ १ ॥

भीष्म उवाच ।
आश्रमाणां महाबाहो शृणु सत्यपराक्रम ।
चतुर्णामपि नामानि कर्माणि च युधिष्ठिर ॥ १
वानप्रस्थं भैक्षचर्यं गार्हस्थ्यं च महाश्रमम् ।
ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैरितम् ॥ २
चूडाकरणसंस्कारं द्विजातित्वमवाप्य च ।
आधानादीनि कर्माणि प्राप्य वेदानधीत्य च ॥ ३
सदारो वाऽप्यदारो वा विनीतः संयतेन्द्रियः ।
वानप्रस्थाश्रमं गच्छेत्कृतकृत्यो गृहाश्रमात् ॥ ४
तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित् ।
ऊर्ध्वरेताः प्रजा हित्वा गच्छत्यक्षरसात्मताम् ॥ ५
एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम् ।
कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ॥ ६
चरितब्रह्मचर्यस्य ब्राह्मणस्य विशांपते ।
भैक्षचर्यास्वधीकारः प्रशस्तो देहमोक्षणे ॥ ७
यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥ ८
निराशीर्निर्नमस्कारो निर्भोगो निर्विकारवान् ।
विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मताम् ॥ ९
अधीत्य वेदान्कृतसर्वकृत्यः
संतानमुत्पाद्य सुखानि भुक्त्वा ।
समाहितः प्रचरेद्दुश्चरं तं
गार्हस्थ्यधर्मं मुनिधर्मजुष्टम् ॥ १०

---

संसृज्यन्तएव । तेन धर्मतो जन्मतश्च सर्वे वर्णा ब्राह्मणसंसृष्टा इति स्थितम् । तत्र हेतुमाह एक इति । तेषु तत्त्वनिश्चये क्रियमाणे एको विप्रो ब्रह्मैव प्रथमो ब्राह्मणः सृष्टो जातः । ब्राह्मणसंततित्वात्सर्वेऽप्येते ब्राह्मणा एवेत्यर्थः । तत्र दृष्टान्तः । एकं सामेति । अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति श्रुतेरेकमकाररूपमेवाक्षरं यथा सामादिरूपं तथा ब्रह्मैव ब्राह्मणादिरूपमित्यर्थः। तस्माद्वर्णाद्बहवो राजधर्माः संसृज्यन्ते तस्य विपाक एषः । एकं साम यजुरेकमृगेका विप्रश्चैको निश्चयस्तेषु दृष्टः इति थ. पाठः ॥ ५० ॥ यज्ञगीता विष्णुगीताः ॥ ५१ ॥ बह्वृचब्राह्मणे षोडशकमग्निहोत्रमुक्तम् । तत्र मारुतं विष्यन्दमानमिति स्कन्नमपि मरुद्दैवत्यं भवतीति तत्पूर्वमाद्यमग्निहोत्रं यदस्कन्नं यथाविधिहुतमुत्तरं सर्वोत्कृष्टम् । बहूनीति रौद्रादीनि ॥ ५३ ॥ तानि षोडशाऽग्निहोत्ररूपाणि ॥ ५४ ॥ यज्ञं विष्णुम् । यष्टुं यज्ञदानादिना आराधितुम् ॥ ५५ ॥ श्रद्धापवित्रं यथा स्यात्तथा यष्टव्यमिति संबन्धः । आश्रित्य शास्त्रमिति शेषः ॥ ५७ ॥ एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

क्रमो न विवक्षितः । चतुर्थं ब्राह्मणैर्वृतमिति झ. पाठः ॥२॥ अक्षरसाम्यतामिति ट. द. पाठः ॥ ५ ॥ एतानि द्विजत्वावाप्त्यादीनि ॥ ६ ॥ मध्यममाश्रमद्वयमनित्यमित्याह चरितेति

स्वदारतुष्टस्त्वृतुकालगामी
नियोगसेवी न शठो न जिह्मः ।
मिताशनो देवरतः कृतज्ञः
सत्यो मृदुश्चानृशंसः क्षमावान् ॥ ११
दान्तो विधेयो हव्यकव्याप्रमत्तो
ह्यन्नस्य दाता सततं द्विजेभ्यः ।
अमत्सरी सर्वलिङ्गप्रदाता
वैताननित्यश्च गृहाश्रमी स्यात् ॥ १२
अथात्र नारायणगीतमाहु-
र्महर्षयस्तात महानुभावाः ।
महार्थमत्यन्ततपःप्रयुक्तं
तदुच्यमानं हि मया निबोध ॥ १३
सत्यार्जवं चातिथिपूजनं च
धर्मस्तथार्थश्च रतिः स्वदारैः ।
निषेवितव्यानि सुखानि लोके
ह्यस्मिन्परे चैव मतं ममैतत् ॥ १४
भरणं पुत्रदाराणां वेदानां चानुपालनम् ।
सेवतामाश्रमं श्रेष्ठं वदन्ति परमर्षयः ॥ १५
एवं हि यो ब्राह्मणो यज्ञशीलो
गार्हस्थ्यमध्यावसते यथावत् ।
गृहस्थवृत्तिं प्रविशोध्य सम्य-
क्स्वर्गे विशुद्धं फलमश्नुते सः ॥ १६
तस्य देहं परित्यज्य इष्टकामाक्षया मताः ।
आनन्त्यायोपकल्पन्ते सर्वतोक्षिशिरोमुखाः ॥१७
वसन्नेको जपन्नेकः सर्वान्वेदान्युधिष्ठिर ।
एकस्मिन्नेव चाचार्ये शुश्रूषुर्मलपङ्कवान् ॥ १८
ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी ।
'गुरुच्छायानुगो नित्यमधीयानः सुयन्त्रितः ।'
अविचाल्यव्रतोपेतं कृत्यं कुर्वन्वसेत्सदा ॥ १९
शुश्रूषां सततं कुर्वन्गुरोः संप्रणमेत च ।
षट्कर्मस्वनिवृत्तश्च न प्रवृत्तश्च सर्वशः ॥ २०
नाचरत्यधिकारेण सेवेत द्विषतो न च ।
एषोऽऽश्रमपदस्तात ब्रह्मचारिण इष्यते ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

युधिष्ठिरंप्रति भीष्मेण ब्राह्मणधर्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
पुनः शिवान्महोदर्कानहिंस्राँल्लोकसंमतान् ।
ब्रूहि धर्मान्सुखोपायान्मद्विधानां सुखावहान् ॥ १
भीष्म उवाच ।
ब्राह्मणस्य तु चत्वारस्त्वाश्रमा विहिताः प्रभो ।
वर्णास्तान्नानुवर्तन्ते त्रयो भारतसत्तम ॥ २
उक्तानि कर्माणि बहूनि राज-
न्स्वर्ग्याणि राजन्यपरायणानि ।
शास्त्रस्य सर्वस्य विधौ स्मृतानि
क्षात्रे हि सर्वं विहितं यथावत् ॥ ३
क्षात्राणि वैश्यानि च सेवमानः
शौद्राणि कर्माणि च ब्राह्मणः सन् ।
अस्मिँल्लोके निन्दितो मन्दचेताः
परे च लोके निरयं प्रयाति ॥ ४
या संज्ञा विहिता लोके दासे शुनि वृके पशौ ।
विकर्मणि स्थिते विप्रे तां संज्ञां कुरु पाण्डव ॥५
षट्कर्मसंप्रवृत्तस्य आश्रमेषु चतुर्ष्वपि ।

॥ ७ ॥ शठो धूर्तः । जिह्मः कुटिलः ॥११॥ विधेयः गुरुशास्त्राज्ञापालकः । अप्रमत्तः अवहितः । सर्वेभ्यो लिङ्गयुक्तेभ्य आश्रमेभ्यः प्रदाताऽन्नादेः । लिङ्गप्रदातेति मध्यमपदलोपी समासः । वैतानं श्रौतकर्म तत्र नित्यः ॥ १२ ॥ कामाः अक्षया इति च्छेदः । संधिरार्षः । सर्वतोक्षिशिरोमुखा इत्यनेन यत्रयत्र देशे काले वा योग्यं संकल्पयति तत्सर्वं सद्य उपतिष्ठतीत्यर्थः ॥ १७ ॥ षष्टितमोऽध्यायः ॥ ६० ॥
षट्कर्माणि प्राणायामः प्रत्याहारो ध्यानं धारणा तर्कः

सर्वधर्मोपपन्नस्य तद्भूतस्य कृतात्मनः ॥ ६
ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च ।
निराशिषो वदान्यस्य लोका ह्यक्षरसंज्ञिताः ॥ ७
यो यस्मिन्कुरुते कर्म यादृशं येन यत्र च ।
तादृशं तादृशेनैव सगुणं प्रतिपद्यते ॥ ८
वृद्ध्या कृषिवणिक्त्वेन जीवसंजीवनेन च ।
वेत्तुमर्हसि राजेन्द्र स्वाध्यात्मगुणितेन च ॥
कालसंचोदितः काले कालपर्यायनिश्चितः ।
उत्तमाधममध्यानि कर्माणि कुरुतेऽवशः ॥
अन्तवन्ति प्रदानानि परं श्रेयस्कराणि च ।
स्वकर्मविहितो लोको ह्यक्षरः सर्वतोमुखः ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणैस्त्याज्यधर्मकथनम् ॥ १ ॥ तथा क्षत्रियादिधर्मकथनपूर्वकं राजधर्मप्रशंसनम् ॥ २

भीष्म उवाच ।
ज्याकर्षणं शत्रुनिबर्हणं च
कृषिर्वणिज्या पशुपालनं च ।
शुश्रूषणं चापि तथाऽर्थहेतो-
रकार्यमेतत्परमं द्विजस्य ॥ १
सेव्यं तु ब्रह्म षट्कर्म गृहस्थेन मनीषिणा ।
कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ॥ २
राजप्रेष्यं कृषिधनं जीवनं च वणिज्यया ।
कौटिल्यं कौलटेयं च ब्राह्मणस्य विगर्हितम् ॥ ३
शूद्रो राजन्भवति ब्रह्मबन्धु-
र्दुश्चारित्रो यश्च धर्मादपेतः ।
वृषलीपतिः पिशुनो नर्तनश्च
ग्रामप्रेष्यो यश्च भवेद्विकर्मा ॥ ४
'एवंविधो ब्राह्मणः कौरवेन्द्र
वृत्तापेतो यो भवेन्मन्दचेताः ।'
जपन्वेदानजपंश्चापि राजन्
समः शूद्रैर्दासवच्चापि भोज्यः ।
एते सर्वे शूद्रसमा भवन्ति
राजन्नेतान्वर्जयेद्देवकृत्ये ॥
निर्मर्यादे वाक्छठे क्रूरवृत्तौ
हिंसाकामे त्यक्तवृत्तस्वधर्मे ।
हव्यं कव्यं यानि चान्यानि राजन्
देयान्यदेयानि भवन्ति तस्मिन् ॥
तस्माद्धर्मो विहितो ब्राह्मणस्य
दमः शौचं चार्जवं चापि राजन् ।
तथा विप्रस्याश्रमाः सर्व एव
पुरा राजन्ब्रह्मणा संनिसृष्टाः ॥
यः स्याद्दान्तः सोमपाश्चार्यशीलः
सानुक्रोशः सर्वसहो निराशीः ।
ऋजुर्मृदुरनृशंसः क्षमावान्
स वै विप्रो नेतरः पापकर्मा ॥
विप्रं वैश्यं राजपुत्रं च राजन्
लोकाः सर्वे संश्रिता धर्मकामाः ।
तस्माद्वर्णाञ्जातिधर्मेषु सक्ता-
ञ्जेतुं विष्णुर्नेच्छति पाण्डुपुत्र ॥

---

समाधिरिति । इज्यादीनामाश्रमान्तरेष्वयोगात् । सर्वधर्मोऽहिंसा ॥ ६ ॥ तपसि विचारे । अक्षरसंज्ञिताः अक्षयाः ॥ ७ ॥ यः पुमान्यस्मिन्नवस्थाविशेषे यत्र देशे काले वा येन फलेन निमित्तेन यत्कर्म करोति साध्वसाधु वा तत्सकलं लोभाच्चिराभ्यासाच्च सगुणमेवेति प्रतिपद्यते नत्विदं निन्द्यमिति ततो विरज्यत इत्यर्थः ॥ ८ ॥ जीवैः संजीवनं मृगयाजीवित्वं तेन । वृद्ध्यादिभिः समानमिति वेत्तुमर्हसि उक्तहेतोरित्यर्थः ॥ ९ ॥

कालेन पर्येत्याविर्भवतीति कालपर्यायः प्राग्भवीयो वासना हस्तेन निश्चितः ॥ १० ॥ एकषष्टितमोऽध्यायः ॥ ६१ ॥

कौटिल्यमनार्जवम् । कौलटेयं कुलटाप्रधानं जारकर्म । कु च विवर्जयेत् इति झ. पाठः । तत्र कुसीदं वृद्धिजीविकामि ॥ ३ ॥ राजप्रेष्यादिर्वेदान् जपन्नजपन्वा शूद्रइव पङ्क्तेर्बहि जनीय एवेति भावः ॥ ५ ॥

लोकश्चायं सर्वलोकस्य न स्या-
चातुर्वर्ण्यं वेदवादाश्च न स्युः ।
सर्वाश्चेज्याः सर्वलोकक्रियाश्च
सद्यः सर्वे चाश्रमाश्चैव न स्युः ॥ १०
यश्च त्रयाणां वर्णानामिच्छेदाश्रमसेवनम् ।
कर्तुमाश्रमदृष्टांश्च धर्मांस्ताञ्शृणु पाण्डव ॥ ११
शुश्रूषोः कृतकार्यस्य कृतसंतानकर्मणः ।
अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते ॥ १२
अल्पान्तरगतस्यापि देशधर्मगतस्य वा ।
आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम् ॥ १३
भैक्षचर्यां नचैवाहुस्तस्य तद्धर्मवादिनः ।
तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि ॥ १४
कृतकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः ।
वैश्यो गच्छेदनुज्ञातो नृपेणाश्रमसंश्रयम् ॥ १५
वेदानधीत्य धर्मेण राजशास्त्राणि चानघ ।
संतानादीनि कर्माणि कृत्वा सोमं निषेव्य च ॥ १६
पालयित्वा प्रजाः सर्वा धर्मेण वदतांवर ।
राजसूयाश्वमेधादीन्मखानन्यांस्तथैव च ॥ १७
आनयित्वा यथान्यायं विप्रेभ्यो दत्तदक्षिणः ।
संग्रामे विजयं प्राप्य तथाऽल्पं यदि वा बहु ॥ १८
स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव ।
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ ॥ १९
अर्चयित्वा पितॄञ्श्राद्धैः पितृयज्ञैर्यथाविधि ।
देवान्यज्ञैर्ऋषीन्वेदैरर्चयित्वा तु यत्नतः ॥ २०
अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम् ।
सोनुपूर्व्याश्रमान्राजन्गत्वा सिद्धिमवाप्नुयात् ॥ २१
राजर्षित्वेन राजेन्द्र भैक्ष्यचर्याद्यसेवया ।
अपेतगृहधर्मापि चरेज्जीवितकाम्यया ॥ २२
न चैतन्नैष्ठिकं कर्म त्रयाणां भूरिदक्षिण ।
चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम् ॥ २३
बाह्वायत्तं क्षत्रियैर्मानवानां
लोकश्रेष्ठं धर्ममासेवमानैः ।
सर्वे धर्माः सोपधर्मास्त्रयाणां
राज्ञो धर्मं नीतिशास्त्रे शृणोमि ॥ २४
यथा राजन्हस्तिपदे पदानि
संलीयन्ते सर्वसत्वोद्भवानि ।
एवं धर्मान्राजधर्मेषु सर्वान्
सर्वावस्थान्संप्रलीनान्निबोध ॥ २५
अल्पाश्रयानल्पफलान्वदन्ति
धर्मानन्यान्धर्मविदो मनुष्याः ।
महाश्रयं बहुकल्याणरूपं
क्षात्रं धर्मं नेतरं प्राहुरार्याः ॥ २६
सर्वे धर्मा राजधर्मप्रधानाः
सर्वे वर्णाः पाल्यमाना भवन्ति ।
सर्वस्त्यागो राजधर्मेषु राजं-
स्त्यागं धर्मं चाहुरग्र्यं पुराणम् ॥ २७
मज्जेत्त्रयी दण्डनीतौ हतायां
सर्वे धर्माः प्रक्षयेयुर्विरुद्धाः ।
सर्वे धर्माश्चाश्रमाणां हताः स्युः
क्षात्रे नष्टे राजधर्मे पुराणे ॥ २८
सर्वे भोगा राजधर्मेषु दृष्टाः
सर्वा दीक्षा राजधर्मेषु चोक्ताः ।
सर्वा विद्या राजधर्मेषु युक्ताः
सर्वे लोका राजधर्मे प्रविष्टाः ॥ २९
'सर्वे धर्मा राजधर्मेषु दृष्टाः
सर्वे भोगा राजधर्मेषु राजन् ।'
सर्वे योगा राजधर्मेषु चोक्ताः
सर्वे धर्मा राजधर्मे प्रविष्टाः ।
तस्माद्धर्मो राजधर्माद्विशिष्टो
नान्यो लोके विद्यतेऽजातशत्रो ॥ ३०
सर्वाण्येतानि कर्माणि क्षात्रे भरतसत्तम ।

---

यो राजा त्रयाणां ब्राह्मणवैश्यशूद्राणां स्वराज्ये आश्रमधर्मसेवनं यथोक्तं इच्छेत् तेनावश्यज्ञातव्यान्धर्माञ्शृणु ॥ ११ ॥ शुश्रूषोर्वेदान्तेष्वनधिकारात्पुराणद्वारा आत्मानं श्रोतुमिच्छोः । कृतकार्यस्य यावच्छरीरसामर्थ्यं सेवितत्रैवर्ण्यस्य ॥ १२ ॥ अल्पान्तरगतस्य आचारनिष्ठया त्रैवर्णिकसमस्य आश्रमाः सर्वे विहिताः । शूद्रोऽपि नैष्ठिकं ब्रह्मचर्यं वानप्रस्थं वा सकलविक्षेपककर्मत्यागरूपं संन्यासं वाऽनुतिष्ठेदेव । निराशिषं शान्तिदान्त्यादिकल्याणगुणरहितम् ॥ १३ ॥ अपेतगृहधर्मोऽपीति ख. पाठः ॥ २२ ॥ द्विषष्टितमोऽध्यायः ॥ ६२ ॥

भवन्ति जीवलोकाश्च क्षत्रधर्मे प्रतिष्ठिताः ॥'३१
यथा जीवाः प्राकृतैर्वध्यमाना
धर्मश्रुतीनामुपपीडनाय ।
एवं धर्मा राजधर्मैर्वियुक्ताः
संचिन्वन्तो नाद्रियन्ते स्वधर्मम् ॥ ३२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

भीष्मेण युधिष्ठिरंप्रति राजधर्मप्रशंसकेन्द्रमांधातृसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
चातुराश्रम्यधर्माश्च यतिधर्माश्च पाण्डव ।
लोकवेदोत्तराश्चैव क्षात्रधर्मे समाहिताः ॥ १
सर्वाण्येतानि कर्माणि क्षात्रे भरतसत्तम ।
निराशिषो जीवलोकाः क्षत्रधर्मे व्यवस्थिते ॥ २
अप्रत्यक्षं बहुफलं धर्ममाश्रमवासिनाम् ।
प्ररूपयन्ति तद्भावमागमैरेव शाश्वतम् ॥ ३
अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चये ।
अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः ॥ ४
प्रत्यक्षं फलभूयिष्ठमात्मसाक्षिकमच्छलम् ।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ॥ ५
धर्माश्रमेऽध्यवसिनां ब्राह्मणानां युधिष्ठिर ।
यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा ।
राजधर्मेष्वनुमता लोकाः सुचरितैः सह ॥ ६
उदाहृतं ते राजेन्द्र यथा विष्णुं महौजसम् ।
सर्वभूतेश्वरं देवं ब्राह्मं नारायणं पुरा ।
जग्मुः सुबहुशः शूरा राजानो दण्डनीतये ॥ ७
एकैकमात्मनः कर्म तुलयित्वाश्रमं पुरा ।
राजानः पर्युपासन्त दृष्टान्तवचने स्थिताः ॥ ८
साध्या देवा वसवश्चाश्विनौ च
रुद्राश्च विश्वे मरुतां गणाश्च ।
सृष्टाः पुरा ह्यादिदेवेन देवाः
क्षात्रे धर्मे वर्तयन्ते च सिद्धाः ॥ ९
अत्र ते वर्तयिष्यामि धर्ममर्थविनिश्चये ।
निर्मर्यादे वर्तमाने दानवैकार्णवे पुरा ॥ १०
बभूव राजा राजेन्द्र मान्धाता नाम वीर्यवान् ।
पुरा वसुमतीपालो यज्ञं चक्रे दिदृक्षया ॥ ११
अनादिमध्यनिधनं देवं नारायणं प्रभुम् ।
स राजा राजशार्दूल मान्धाता परमेश्वरम् ॥ १२
जगाम शिरसा पादौ यज्ञे विष्णोर्महात्मनः ।
दर्शयामास तं विष्णू रूपमास्थाय वासवम् ॥ १३
स पार्थिवैर्वृतः सद्भिरर्चयामास तं प्रभुम् ।
तस्य पार्थिवसङ्घस्य तस्य चैव महात्मनः ।
संवादोऽयं महानासीद्विष्णुं प्रति महाद्युतिम् ॥ १४
इन्द्र उवाच ।
किमिष्यसे धर्मभृतां वरिष्ठ
यं द्रष्टुकामोऽसि तमप्रमेयम् ।
अनन्तमायामितमन्त्रवीर्यं
नारायणं ह्यादिदेवं पुराणम् ॥ १५
नासौ देवो विश्वरूपो मयाऽपि
शक्यो द्रष्टुं ब्रह्मणा वाऽपि साक्षात् ।
येऽन्ये कामास्तव राजन्हृदिस्था
दास्ये चैतांस्त्वं हि मर्त्येषु राजा ॥ १६

---

राजधर्माश्च पाण्डव । लोकालोकोत्तराश्चैव धर्माः क्षात्रे समर्पिता इति ट. ड. द. पाठः ॥ १ ॥ बहुद्वारमिति झ. पाठः ॥ ३ ॥ अदृष्टान्ते न दृष्टोऽन्तो यस्य तस्मिन् ॥ ४ ॥ सुखभूयिष्ठमिति झ. पाठः ॥ ५ ॥ धर्माश्रमे गार्हस्थ्ये वर्णानां धर्माणां उपश्रुतिरन्तर्भावः संख्याता प्रकटा । तथा राजधर्मेषु धर्मैः सह लोका अन्तर्भूताः। अनुलोमा राजधर्मो लोके सुचरितैरिहेति थ. द. पाठः ॥ ६ ॥ आश्रमं आश्रमविहितं तुलयित्वा किं दण्डनीतिजो धर्मो महान् उत आश्रमधर्म इति संदिह्य दृष्टान्तवचने सिद्धान्तं श्रोतुम् ॥ ८ ॥ वासवं ऐन्द्रं रूपम् ॥ १३ ॥

सत्ये स्थितो धर्मपरो जितेन्द्रियः
शूरो दृढप्रीतिरतः सुराणाम् ।
बुद्ध्या भक्त्या चोत्तमः श्रद्धया च
ततस्तेऽहं दद्मि वरान्यथेष्टम् ॥ १७

मान्धातोवाच ।

असंशयं भगवन्नादिदेवं
वक्ष्यामि त्वाऽहं शिरसा संप्रसाद्य ।
त्यक्त्वा कामान्धर्मकामो ह्यरण्य-
मिच्छे गन्तुं सत्पथं साधुजुष्टम् ॥ १८
क्षात्राद्धर्माद्विपुलादप्रमेया-
ल्लोकाः प्राप्ताः स्थापितं स्वं यशश्च ।
धर्मो योऽसावादिदेवात्प्रवृत्तो
लोकश्रेष्ठं तं न जानामि कर्तुम् ॥ १९

इन्द्र उवाच ।

असैनिका धर्मपराश्च धर्मे
परां गतिं न नयन्ते ह्ययुक्तम् ।
क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः
पश्चादन्ये शेषभूताश्च धर्माः ॥ २०
शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः
सुप्रस्थानाः क्षात्रधर्मा विशिष्टाः ।
अस्मिन्धर्मे सर्वधर्माः प्रविष्टाः
क्षात्रं धर्मं श्रेष्ठतमं वदन्ति ॥ २१
कर्मणा वै पुरा देवा ऋषयश्चामितौजसः ।
त्राताः सर्वे प्रसह्यारीन्क्षत्रधर्मेण विष्णुना ॥ २२
यदि ह्यसौ भगवन्नाहनिष्य-
द्रिपून्सर्वानसुरानप्रमेयः ।
न च ब्रह्मा नैव लोकादिकर्ता
सन्तो धर्माश्चादिधर्माश्च न स्युः ॥ २३
इमामुर्वीं नाजयद्विक्रमेण
देवश्रेष्ठः सासुरामादिदेवः ।
चातुर्वर्ण्यं चातुराश्रम्यधर्माः
सर्वे न स्युर्ब्राह्मणानां विनाशात् ॥ २४
नष्टा धर्माः शतधा शाश्वतास्ते
क्षात्रेण धर्मेण पुनः प्रवृद्धाः ।
युगेयुगे ह्यादिधर्माः प्रवृत्ता
लोकज्येष्ठं क्षात्रधर्मं वदन्ति ॥ २५
आत्मत्यागः सर्वभूतानुकम्पा
लोकज्ञानं पालनं मोक्षणं च ।
विषण्णानां मोक्षणं पीडितानां
क्षात्रे धर्मे विद्यते पार्थिवानाम् ॥ २६
निर्मर्यादाः काममन्युप्रवृत्ता
भीता राज्ञो नाधिगच्छन्ति पापम् ।
शिष्टाश्चान्ये सर्वधर्मोपपन्नाः
साध्वाचाराः साधुधर्मं वदन्ति ॥ २७
पुत्रवत्पाल्यमानानि धर्मलिङ्गानि पार्थिवैः ।
लोके भूतानि सर्वाणि चरन्ते नात्र संशयः ॥ २८
सर्वधर्मपरं क्षात्रं लोकश्रेष्ठं सनातनम् ।
शश्वदक्षरपर्यन्तमक्षरं सर्वतोमुखम् ॥ २९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

—भीष्मेण युधिष्ठिरंप्रति इन्द्ररूपिहरिणा मांधातारं प्रत्युक्तराजधर्मादिकथनम् ॥ १ ॥

इन्द्र उवाच ।

एवंवीर्यः सर्वधर्मोपपन्नः
क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः ।
पाल्यो युष्माभिर्लोकपालैरुदारै-
र्विपर्यये स्यादभवः प्रजानाम् ॥ १

---

न सन्ति सैनिका येषां ते असैनिकाः अराजानः युक्तं अभिनिवेशशून्यं यथा स्यात्तथा हेलयैव न नयन्ते इत्यर्थः । शेषभूताः अङ्गभूताः ॥ २० ॥ आत्मत्यागो युद्धे मरणम् ॥ २६ ॥ अक्षरपर्यन्तं मोक्षावसानम् ॥ २९ ॥ त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

भूसंस्कारं धर्मसंस्कारयोग्यं
दीक्षाचर्या पालनं च प्रजानाम् ।
विद्याद्राज्ञः सर्वभूतानुकम्पा
देहत्यागं चाहवे धर्ममग्र्यम् ॥ २
त्यागं श्रेष्ठं मुनयो वै वदन्ति
सर्वश्रेष्ठं यच्छरीरं त्यजन्ति ।
नित्यं व्यक्तं राजधर्मेषु सर्वे
प्रत्यक्षं ते भूमिपाला यथैते ॥ ३
बहुश्रुत्या गुरुशुश्रूषया वा
परस्पराः संहननाद्वदन्ति ।
नित्यं धर्मं क्षत्रियो ब्रह्मचारी
चरेदेको ह्याश्रमं धर्मकामः ॥ ४
सामान्यार्थे व्यवहारे प्रवृत्ते
प्रियाप्रिये वर्जयन्नेव यत्नात् ।
चातुर्वर्ण्यं स्थापनात्पालनाच्च
तैस्तैर्योगैर्नियमैरौषधैश्च ॥ ५
सर्वोद्योगैराश्रमं धर्ममाहुः
क्षात्रं श्रेष्ठं सर्वधर्मोपपन्नम् ।
स्वंस्वं धर्मं येन चरन्ति वर्णा-
स्तांस्तान्धर्मानन्यथार्थान्वदन्ति ॥ ६
निर्मर्यादान्नित्यमर्थे निविष्टा-
नाहुस्तान्वै पशुभूतान्मनुष्यान् ।
यथा नीतिं गमयत्यर्थयोगा-
च्छ्रेयस्तस्मादाश्रमात्क्षत्रधर्मः ॥ ७
त्रैविद्यानां या गतिर्ब्राह्मणानां
ये चैवोक्ताः स्वाश्रमा ब्राह्मणानाम् ।
एतत्कर्म क्षत्रियस्याहुरग्र्य-
मन्यत्कुर्वञ्छूद्रवच्छस्त्रवध्यः ॥ ८
चातुराश्रम्यधर्माश्च वेदवादाश्च पार्थिव ।
ब्राह्मणेनानुगन्तव्या नान्यो विद्यात्कदाचन ॥ ९
अन्यथा वर्तमानस्य न सा वृत्तिः प्रकल्प्यते ।
कर्मणा वर्धते धर्मो यथा धर्मस्तथैव सः ॥ १०
यो विकर्मस्थितो विप्रो न स सन्मानमर्हति ।
कर्म स्वमप्रयुञ्जानमविश्वास्यं हि तं विदुः ॥ ११
एते वर्णाः सर्वधर्मैश्च हीना
उत्क्रष्टव्याः क्षत्रियैरेव धर्माः ।
तस्माच्छ्रेष्ठा राजधर्मा न चान्ये
वीर्यश्रेष्ठा राजधर्मा मता मे ॥ १२
मान्धातोवाच ।
यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः ।
शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः ॥ १३
उष्ट्राः पुलिन्दा आरट्टाः काचा म्लेच्छाश्च सर्वशः ।
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ॥ १४
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः ।
मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः ॥ १५
एतदिच्छाम्यहं श्रोतुं भगवंस्तद्ब्रवीहि मे ।
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ॥ १६
इन्द्र उवाच ।
मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ १७
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥ १८
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
दानानि च यथाकालं दातव्यानि द्विजातिषु ॥ १९
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ॥ २०
दक्षिणा सर्वयज्ञानां दातव्या धर्ममिच्छता ।
पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिः ॥ २१
एतान्येवंप्रकाराणि विहितानि पुराऽनघ ।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव ॥ २२

भूसंस्कारं भुवः संपन्नसस्यत्वम् । राजसंस्कारयोगमिति झ. पाठः । तत्र राजसंस्कारो राजसूयादिरर्थः ॥ २ ॥ नियमैरौरसैश्चेति झ. पाठः । तत्र औरसैः पौरुषैः इत्यर्थः ॥ ५ ॥ येन क्षात्रधर्मेण । अन्यथार्थान्निष्प्रयोजनान् वदन्ति ॥ ६ ॥ निर्मर्यादे नित्यमर्थे विनष्टे न धर्मचिन्ता पशुभूते मनुष्ये । इति ट. ड. थ. पाठः ॥ ७ ॥ या गतिर्यज्ञादिः आश्रमधर्मश्च एतद्द्वयम् ॥ ८ ॥ कर्मणा त्यज्यते धर्मो यथैव स्यात्तथैव सः इति ट. ड. थ. पाठः ॥ १० ॥ उत्क्रष्टव्या उत्कर्षं प्रापणीयाः ॥ १२ ॥ दस्युजीविनो दस्युवृत्तिजीविनः ॥ १५ ॥

मान्धातोवाच ।
दृश्यन्ते मानुषे लोके सर्ववर्णेषु दस्यवः ।
लिङ्गान्तरे वर्तमाना आश्रमेषु तथैव च ॥ २३
इन्द्र उवाच ।
विनष्टायां दण्डनीत्यां राजधर्मे विनाकृते ।
संप्रमुह्यन्ति भूतानि राजदौरात्म्यतोऽनघ ॥ २४
असङ्ख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा ।
आश्रमाणां विकल्पाश्च वृत्तेऽस्मिन्वै कृते युगे ॥ २५
अशृण्वानाः पुराणानां धर्माणां शतशो नराः ।
उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः ॥ २६
यदा निवर्त्यते पापो दण्डनीत्या महात्मभिः ।
तदा धर्मो न चलते सद्भूतः शाश्वतः पुरा ॥२७
सर्वलोकगुरुं चैव राजानं योऽवमन्यते ।
न तस्य दत्तं न कृतं न श्रुतं फलति क्वचित् ॥२८
मानुषाणामधिपतिं देवभूतं महाद्युतिम् ।
देवाश्च बहुमन्यन्ते धर्मकामं नरेश्वरम् ॥
प्रजापतिर्हि भगवान्यः सर्वमसृजज्जगत् ।
स प्रवृत्तिनिवृत्त्यर्थं धर्माणां क्षत्रमिच्छति ॥
प्रवृत्तस्य हि धर्मस्य बुद्ध्या यः स्मरते गतिम्
स मे मान्यश्च पूज्यश्च स च क्षत्रे प्रतिष्ठितः ।
भीष्म उवाच ।
एवमुक्त्वा स भगवान्मरुद्गणवृतः प्रभुः ।
जगाम भवनं विष्णुरक्षरं शाश्वतं परम् ॥
एवं प्रवर्तिते धर्मे पुरा सुचरितेऽनघ ।
कः क्षत्रमतिवर्तेत चेतनावान्बहुश्रुतः ॥
अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च ।
अन्तरा विलयं यान्ति यथा पथि विचक्षुषः ।
आदौ प्रवर्तिते चक्रे तथैवादिपरायणे ।
वर्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

भीष्मेण युधिष्ठिरंप्रति वर्णाश्रमधर्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
श्रुता मे कथिताः पूर्वं चत्वारो मानवाश्रमाः ।
व्याख्यानमेषामाचक्ष्व पृच्छतो मे पितामह ॥ १
भीष्म उवाच ।
विदिताः सर्व एवेह धर्मास्तव युधिष्ठिर ।
यथा मम महाबाहो विदिताः साधुसंमताः ॥ २
यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर ।
धर्मं धर्मभृतां श्रेष्ठ तन्निबोध नराधिप ॥ ३
सर्वाण्येतानि कौन्तेय विद्यन्ते भरतर्षभ ।
साध्वाचारप्रवृत्तानां चातुराश्रम्यकर्मणाम् ॥ ४
अकामद्वेषसंयुक्तो दण्डनीत्या युधिष्ठिर ।
समदर्शी च भूतेषु भैक्ष्याश्रमपदं भवेत् ॥
वेत्ति दानं विसर्गं च निग्रहानुग्रहौ तथा ।
यथोक्तवृत्तो धीरश्च क्षमाश्रमपदं भवेत् ॥
अर्हान्पूजयतो नित्यं संविभागेन पाण्डव ।
सर्वतस्तस्य कौन्तेय भैक्ष्याश्रमपदं भवेत् ॥
ज्ञातिसंबन्धिमित्राणि व्यापन्नानि युधिष्ठिर ।
समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ॥
लोकमुख्येषु सत्कारं लिङ्गिमुख्येषु चासकृत्
कुर्वतस्तस्य कौन्तेय वन्याश्रमपदं भवेत् ॥
आह्निकं पितृयज्ञांश्च भूतयज्ञान्समानुषान् ।
कुर्वतः पार्थ विपुलान्वन्याश्रमपदं भवेत् ॥

परमा गतीः इति झ. पाठः ॥ २६ ॥ गति फलम् ॥ ३१ ॥ आदिपरायणे पूर्वेषां शरणभूते वर्तस्व । ते त्वाम् ॥ ३५ ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

एतानि चातुराश्रम्यकारिणां लिङ्गानि सतां राज्ञां राजधर्मे-ष्वेव वर्तन्ते इत्यर्थः ॥ ४ ॥ भैक्ष्याश्रमः ब्रह्मचर्यम् ॥ क्षमाश्रमो गार्हस्थ्यम् ॥ ६ ॥ भैक्ष्याश्रमः संन्यासः ॥ ७ दीक्षाश्रमो वैखानसः ॥ ८ ॥

संविभागेन भूतानामतिथीनां तथाऽर्चनात् ।
दैवयज्ञैश्च राजेन्द्र वन्याश्रमपदं भवेत् ॥ ११
मर्दनं परराष्ट्राणां शिष्टार्थं सत्यविक्रम ।
कुर्वतः पुरुषव्याघ्र वन्याश्रमपदं भवेत् ॥ १२
पालनात्सर्वभूतानां स्वराष्ट्रपरिपालनात् ।
दीक्षा बहुविधा राजन्सत्याश्रमपदं भवेत् ॥ १३
वेदाध्ययननित्यत्वं क्षमाऽथाचार्यपूजनम् ।
तथोपाध्यायशुश्रूषा ब्रह्माश्रमपदं भवेत् ॥ १४
आह्निकाञ्जपमानस्य देवान्पूजयतः सदा ।
धर्मेण पुरुषव्याघ्र धर्माश्रमपदं भवेत् ॥ १५
मृत्युर्वा रक्षणं वेति यस्य राज्ञो विनिश्चयः ।
प्राणद्यूते व्यवस्थाप्य ब्रह्माश्रमपदं भवेत् ॥ १६
अजिह्ममशठं मार्गं वर्तमानस्य भारत ।
सर्वदा सर्वभूतेषु ब्रह्माश्रमपदं भवेत् ॥ १७
वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत ।
प्रयच्छतोऽर्थान्विपुलान्वन्याश्रमपदं भवेत् ॥ १८
सर्वभूतेष्वनुक्रोशं कुर्वतस्तव भारत ।
आनृशंस्ये प्रवृत्तस्य नियतः पुण्यसंचयः ॥ १९
बालवृद्धेषु कौन्तेय सर्वावस्थं युधिष्ठिर ।
अनुक्रोशक्रिया पार्थ धर्म एष सनातनः ॥ २०
बलात्कृतेषु भूतेषु परित्राणं कुरूद्वह ।
शरणागतेषु कौरव्य परं कारुण्यमाचर ॥ २१
चराचराणां भूतानां रक्षणं चापि सर्वशः ।
यथार्हपूजां च तथा कुर्वन्गार्हस्थ्यमावसेत् ॥ २२
ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्रनप्तॄणाम् ।
निग्रहानुग्रहौ पार्थ गार्हस्थ्यममितं तपः ॥ २३
साधूनामर्चनीयानां पूजासु विदितात्मनाम् ।
पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत् ॥ २४
आश्रमस्थानि भूतानि यस्य वेश्मनि भारत ।
भुञ्जते विपुलं भोज्यं तद्गार्हस्थ्यं युधिष्ठिर ॥ २५
यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत् ।
आश्रमाणां हि सर्वेषां फलं प्राप्नोत्यनामयम् ॥ २६
यस्मिन्न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा ।
आश्रमस्थं तमप्याहुर्नरश्रेष्ठं युधिष्ठिर ॥ २७
स्थानमानं कुलेमानं वयोमानं तथैव च ।
कुर्वन्वसति सर्वेषु ह्याश्रमेषु युधिष्ठिर ॥ २८
देशधर्माश्च कौन्तेय कुलधर्मास्तथैव च ।
पालयन्पुरुषव्याघ्र राजा सर्वाश्रमी भवेत् ॥ २९
काले विभूतिं भूतानामुपहारांस्तथैव च ।
अर्हयन्पुरुषव्याघ्र साधूनामाश्रमे वसेत् ॥ ३०
देशधर्मगतश्चापि यो धर्मं प्रत्यवेक्षते ।
सर्वलोकस्य कौन्तेय राजा भवति सोश्रमी ॥ ३१
ये धर्मकुशला लोके धर्मं कुर्वन्ति भारत ।
पालिता यस्य विषये पादांशस्तस्य भूपतेः ॥ ३२
धर्मारामान्धर्मपरान्ये न रक्षन्ति मानवान् ।
पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥ ३३
ये च रक्षासहायाः स्युः पार्थिवानां युधिष्ठिर ।
ते चैवांशहराः सर्वे धर्मे परकृतेऽनघ ॥ ३४
सर्वाश्रमपदेऽप्याहुर्गार्हस्थ्यं दीप्तनिर्णयम् ।
पावनं पुरुषव्याघ्र यद्वयं पर्युपास्महे ॥ ३५
आत्मोपमस्तु भूतेषु यो वै भवति मानवः ।
न्यस्तदण्डो जितक्रोधः प्रेत्येह लभते सुखम् ॥ ३६
धर्मोच्छ्रिता सत्यजला शीलयष्टिर्दमध्वजा ।
त्यागवाताध्वगा शीघ्रा नौस्तया सन्तरिष्यति ३७
यदा सर्वत्र निर्मुक्तः कामो नास्य हृदि स्थितः ।
यदा सत्यान्वितो वृत्तैस्तदा ब्रह्म समश्नुते ॥ ३८
सुप्रसन्नस्तु भावेन योगेन च नराधिप ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥ ३९
वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम् ।
पालने यत्नमातिष्ठ सर्वलोकस्य चानघ ॥ ४०
वने चरन्ति ये धर्ममाश्रमेषु च भारत ।
रक्षणात्तच्छतगुणं धर्मं प्राप्नोति पार्थिवः ॥ ४१

शिष्टार्थं शिष्टसंरक्षणार्थम् ॥१२॥ सत्याश्रमः क्षात्राश्रमः ॥१३॥ धर्माश्रमः यत्याश्रमः ॥१५॥ सर्वावस्थं पदं भवेत् इति झ. पाठः ॥१९॥ सोश्रमी सः आश्रमी सर्वाश्रमफलभागित्यर्थः ॥ ३१ ॥ धर्मे स्थिता सत्त्ववीर्या धर्मसेतुवटारका । त्यागवाताध्वगा शीघ्रा नौस्तं सन्तारयिष्यति । इति झ. पाठः । तत्र धर्मसेतुः शास्त्रं सैव वटारका बन्धनरज्जुर्यत्रेत्यर्थः ॥ ३७ ॥ पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

एष ते विविधो धर्मः पाण्डवश्रेष्ठ कीर्तितः ।
युधिष्ठिर त्वमेनं वै पूर्वं दृष्टं सनातनम् ॥ ४२

चातुराश्रम्यमैकाग्र्यं चातुर्वर्ण्यं च पाण्डव ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

भीष्मेण युधिष्ठिरंप्रति लोकस्य सराजकत्वाराजकत्वाभ्यां गुणदोषनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
चातुराश्रम्यमुक्तं ते चातुर्वर्ण्यं तथैव च ।
राष्ट्रस्य यत्कृत्यतमं तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
राष्ट्रस्य यत्कृत्यतमं राज्ञ एवाभिषेचनम् ।
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ॥ २
अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते ।
परस्परं च खादन्ति सर्वथा धिगराजकम् ॥ ३
इन्द्रमेव प्रणमते यद्राजानमिति श्रुतिः ।
यथैवेन्द्रस्तथा राजा संपूज्यो भूतिमिच्छता ॥ ४
नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम् ।
नाराजकेषु राष्ट्रेषु हव्यं वहति पावकः ॥ ५
अथ चेदधिवर्तेत राज्यार्थी बलवत्तरः ।
अराजकाणि राष्ट्राणि हतवीराणि वा पुनः ॥ ६
प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम् ।
न हि राज्यात्पापतरमस्ति किंचिदराजकात् ॥ ७
स चेत्समनुपश्येत समग्रं कुशलं भवेत् ।
बलवान्हि प्रकुपितः कुर्यान्निःशेषतामपि ॥ ८
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥ ९
यदतप्तं प्रणमते न तत्संतापयन्त्युत ।
यत्स्वयं नमते दारु न तत्संनामयन्त्यपि ॥ १०
एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ११
तस्माद्राजैव कर्तव्यः सततं भूतिमिच्छता ।
न धनार्थो न दारार्थस्तेषां येषामराजकम् ॥ १२
प्रीयते हि हरन्पापः परवित्तमराजके ।
यदाऽस्य तद्धरन्त्यन्ये तदा राजानमिच्छति ॥
पापा ह्यपि तदा क्षेमं न लभन्ते कदाचन ।
एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे ॥
अदासः क्रियते दासो ह्रियन्ते च बलात्स्त्रि
एतस्मात्कारणाद्देवाः प्रजापालान्प्रचक्रिरे ॥
राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः
जले मत्स्यानिवाभक्ष्यन्दुर्बलं बलवत्तराः ॥
अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम्
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥
समेत्य तास्ततश्चक्रुः समयानिति नः श्रुतम्
वाक्शूरो दण्डपरुषो यश्च स्यात्पारदारिकः ॥
यश्च नः समयं भिन्द्यात्त्याज्या नस्तादृशा इ
विश्वासार्थं च सर्वेषां वर्णानामविशेषतः ।
तास्तथा समयं कृत्वा समयेनावतस्थिरे ॥
सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम्
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥
यं पूजयेम संभूय यश्च नः प्रतिपालयेत् ।
ताभ्यो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ।
मनुरुवाच ।
बिभेमि कर्मणः पापाद्राज्यं हि भृशदुष्करम्
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥
भीष्म उवाच ।
तमब्रुवन्प्रजा मा भैर्विधास्यामो धनं तव ।
पशूनामथ पञ्चाशं धरण्यस्य तथैव च ॥
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम्

---

इन्द्रमेव प्रवृणुते इति झ. पाठः ॥ ४ ॥ धनादेरर्थे उपभोगः ॥ १२ ॥ वाक्शूरो निष्ठुरभाषी । दण्डपरुष उग्रदण्डः ॥ १८ ॥ कर्तृनेनो गमिष्यति इति झ. पाठः ॥ २ विवाहेषूद्यतासु कन्यासु शुल्के मौल्यप्रसंगे सति इ

कन्यां शुल्के चारुरूपां विवाहेषूद्यतासु च ॥ २४
मुख्येन शस्त्रपत्रेण ये मनुष्याः प्रधानतः ।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः ॥ २५
स त्वं जातबलो राजन्दुष्प्रधर्षः प्रतापवान् ।
सुखे धास्यसि नः सर्वान्कुबेर इव नैर्ऋतान् ॥ २६
यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं नो भविष्यति ॥ २७
तेन धर्मेण महता सुखं लब्धेन भावितः ।
पाह्यस्मान्सर्वतो राजन्देवानिव शतक्रतुः ॥ २८
विजयाय हि निर्याहि प्रतपन्रश्मिवानिव ।
मानं विधम शत्रूणां धर्मं जनय नः सदा ॥ २९
स निर्ययौ महातेजा बलेन महता वृतः ।
महाभिजनसंपन्नस्तेजसा प्रज्वलन्निव ॥ ३०
तस्य दृष्ट्वा महत्त्वं ते महेन्द्रस्येव देवताः ।
अपतत्रसिरे सर्वे स्वधर्मे च दधुर्मनः ।
'वर्णिनश्चाश्रमाश्चैव म्लेच्छाः सर्वे च दस्यवः ॥' ३१
ततो महीं परिययौ पर्जन्य इव वृष्टिमान् ।
शमयन्सर्वतः पापान्स्वकर्मसु च योजयन् ॥ ३२
एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥ ३३
नमस्येरंश्च तं भक्त्या शिष्या इव गुरुं सदा ।
देवा इव च देवेन्द्रं नरा राजानमन्तिकात् ॥ ३४
सत्कृतं स्वजनेनेह परोऽपि बहुमन्यते ।
स्वजनेन त्ववज्ञातं परे परिभवन्त्युत ॥ ३५
राज्ञः परैः परिभवः सर्वेषामसुखावहः ।
तस्माच्छत्रं च पत्रं च वासांस्याभरणानि च ॥ ३६
भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च ।
आसनानि च शय्याश्च सर्वोपकरणानि च ॥ ३७
गोप्ता चास्य दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रत्याभाषेत मानवान् ॥ ३८
कृतज्ञो दृढभक्तिः स्यात्संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु वल्गु च चर्जु च ॥ ३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

भीष्मेण युधिष्ठिरंप्रति वसुमनसे बृहस्पत्युक्तराजगुणानुवर्णनम् ॥ १ ॥

युधिष्ठिर उवाच ।
किमाहुर्दैवतं विप्रा राजानं भरतर्षभ ।
मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतिं वसुमना यथा पप्रच्छ भारत ॥ २
राजा वसुमना नाम कौसल्यो धीमतां वरः ।
महर्षिं किल पप्रच्छ कृतप्रज्ञं बृहस्पतिम् ॥ ३
सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतिम् ।
दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ॥ ४
विधिं पप्रच्छ राज्यस्य सर्वलोकहिते रतः ।
प्रजानां सुखमन्विच्छन्धर्मशीलं बृहस्पतिम् ॥ ५
केन भूतानि वर्धन्ते क्षयं गच्छन्ति केन वा ।
कमर्चन्तो महाप्राज्ञ सुखमव्ययमाप्नुयुः ॥
'एतन्मे शंस देवर्षे धर्मकामार्थसंशयम्' ॥ ६
एवं पृष्टो महाप्राज्ञः कौसल्येनामितौजसा ।
राजसत्कारमव्यग्रो राज्यस्य च विवर्धनम् ।
दण्डनीतिं समाश्रित्य शशंसास्मै बृहस्पतिः ॥ ७
राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते ।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥ ८
राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम् ।
प्रसादयति धर्मेण प्रसाद्य च विराजते ॥ ९

---

कन्यां तुभ्यं दास्याम इत्यर्थः ॥ २४ ॥ शस्त्रपत्रेण शस्त्रेण वाहनेन च । प्रधानतः श्रेष्ठाः । प्रथमार्थे तसिः ॥ २५ ॥ मानं दर्पम् । विधम नाशय ॥ २९ ॥ अपतत्रसिरे त्रासं प्राप्ताः ॥ ३१ ॥ षट्षष्टितमोऽध्यायः ॥ ६६ ॥

वैनयिकं अभ्युत्थानाभिवादनादिकम् । दक्षिणा दक्षिणातोऽनन्तरः । समीपे भूत्वा प्रदक्षिणीकृत्येत्यर्थः ॥ ४ ॥

यथा ह्यनुदये राजन्भूतानि शशिसूर्ययोः ।
अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम् ॥ १०
यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः ।
विहरेयुर्यथाकामं विहिंसन्तः पुनः पुनः ॥ ११
विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम् ।
अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥ १२
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः ।
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा ॥ १३
हरेयुर्बलवन्तोऽपि दुर्बलानां परिग्रहान् ।
हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् ॥१४
ममेदमिति लोकेऽस्मिन्न भवेत्स्वपरिग्रहः ।
न दारा न च पुत्रः स्यान्न धनं न परिग्रहः ।
विष्वग्लोपः प्रवर्तेत यदि राजा न पालयेत् ॥१५
यानं वस्त्रमलङ्कारान्रत्नानि विविधानि च ।
हरेयुः सहसा पापा यदि राजा न पालयेत् ॥१६
पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु ।
अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् ॥१७
मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् ॥ १८
'अन्यांश्च क्रोशतो हिंस्युर्लोकोऽयं दस्युवद्भवेत् ।'
वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
ममत्वं च न विन्देयुर्यदि राजा न पालयेत् ॥१९
अन्ताश्चाकाल एव स्युर्लोकोऽयं दस्युसाद्भवेत् ।
पतेद्बहुविधं राज्यं यदि राजा न पालयेत् ॥२०
न योनिदोषो वर्तेत न कृषिर्न वणिक्पथः ।
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ॥२१
न यज्ञाः संप्रवर्तेयुर्विधिवत्स्वाप्तदक्षिणाः ।
न विवाहाः समाजो वा यदि राजा न पालयेत् २२
न वृषाः संप्रवर्तेरन्न मथ्येरंश्च गर्गराः ।
घोषाः प्रणाशं गच्छेयुर्यदि राजा न पालयेत् ॥२३
त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन विनशेत्सर्वं यदि राजा न पालयेत् ॥ २४
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् ॥२५
ब्राह्मणाश्चतुरो वेदान्नाधीयीरंस्तपस्विनः ।
विद्यास्नाता व्रतस्नाता यदि राजा न पालयेत् ॥ २६
न भवेद्धर्मसंसेवी मोहविप्रहतो जनः ।
हर्ता स्वच्छेन्द्रियो गच्छेद्यदि राजा न पालयेत् ॥ २७
हस्ताद्धस्तं परिमुषेद्भिद्येरन्सर्वसेतवः ।
भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् ॥ २८
अनयाः संप्रवर्तेरन्भवेद्वै वर्णसङ्करः ।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् ॥२९
विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ॥ ३०
नाक्रुष्टं सहते कश्चित्कुतो वा हस्तलाघवम् ।
यदि राजा न सम्यग्गां रक्षयत्यपि धार्मिकः ॥ ३१
स्त्रियश्चापुरुषा मार्गं सर्वालङ्कारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदि रक्षति भूमिपः ॥ ३२
धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः ॥ ३३
यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः ।
युक्ताश्चाधीयते विद्यां यदा रक्षति भूमिपः ॥३४
वार्तामूलो ह्ययं लोकस्त्रया वै धार्यते सदा ।
तत्सर्वं वर्तते सम्यग्यदा रक्षति भूमिपः ॥ ३५
यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः ।
महता बलयोगेन तदा लोकः प्रसीदति ॥ ३६
यस्याभावेन भूतानामभावः स्यात्समन्ततः ।
भावे च भावो नित्यं स्यात्कस्तं न प्रतिपूजयेत् ॥३७

---

अनुदके अल्पोदके । निराक्रन्दे हिंस्रभयरहिते ॥ ११ ॥ व्यायच्छमानान्स्वंस्वमर्थं अदातॄन् ॥ १४ ॥ विष्वक्सर्वतः लोपः अर्थानां लुम्पनम् ॥ १५ ॥ अन्धाश्च क्रोशत इति द. पाठः ॥ १८ ॥ योनिदोषः व्यभिचारे विगानम् ॥ २१ ॥ न संप्रवर्तेरन् न रेतः सिञ्चेरन् । गर्गराः दधिमन्थनपात्राणि ॥ २३ ॥ हस्ताद्धस्तं हस्तस्थमपि चोरा हरेयुः ॥ २८ ॥ विवृत्य उद्घाट्य ॥ ३० ॥ हस्तलाघवं तत्साध्यं ताडनम् । अक्रुष्टं गालनं वा कुतो न सहते । अपितु अनायकत्वात्सहत एव । गां पृथ्वीम् ॥ ३१ ॥ अपुरुषाः अरक्षिता अपि ॥ ३२ ॥ त्रय्या वै इति झ. पाठः । तत्र वार्ता जीविका तन्मूलः । त्रय्या च वृष्ट्यादिहेतुतया त्रायते रक्षते सर्वं त्रयी वार्तादिरित्यर्थः ॥ ३५ ॥

तस्य यो वहते भारं सर्वलोकसुखावहम् ।
तिष्ठन्प्रियहिते राज्ञ उभौ लोकाविमौ जयेत् ॥३८
यस्तस्य पुरुषः पापं मनसाऽप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेत्यापि नरकं व्रजेत् ॥ ३९
न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ४०
कुरुते पञ्चरूपाणि कालयुक्तानि यः सदा ।
भवत्यग्निस्तथाऽऽदित्यो मृत्युर्वैश्रवणो यमः॥ ४१
यदा ह्यासीदतः पापान्दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः॥४२
यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥४३
अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान्।
सपुत्रपौत्रान्सामात्यांस्तदा भवति सोन्तकः॥ ४४
यदा त्वधार्मिकान्सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति ।
धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥ ४५
यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।
आच्छिनत्ति च रत्नानि विविधान्यपकारिणां ४६
श्रियं ददाति कस्मैचित्कस्माच्चिदपकर्षति ।
तदा वैश्रवणो राजा लोके भवति भूमिपः ॥ ४७
नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा ।
धर्ममाकाङ्क्षता लोके ईश्वरस्यानसूयता ॥ ४८
न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात् ।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ४९
कुर्यात्कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः ।
न तु राज्ञाऽभिपन्नस्य शेषं क्वचन विद्यते ॥ ५०
तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत् ।
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ॥ ५१
वध्येदभिमृशन्सद्यो मृगः कूटमिव स्पृशन् ।
आत्मस्वमिव संरक्षेद्राजस्वमिह बुद्धिमान् ॥ ५२
महान्तं नरकं घोरमप्रतिष्ठमचेतसः ।
पतन्ति चिररात्राय राजवित्तापहारिणः ॥ ५३
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ५४
तस्माद्बुभूषुर्नियतो जितात्मा संयतेन्द्रियः ।
मेधावी धृतिमान्दक्षः संश्रयेत महीपतिम् ॥ ५५
कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
धर्मनित्यं स्थितं स्थाने मन्त्रिणं पूजयेन्नृपः ॥ ५६
दृढभक्तिं कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियम् ।
शूरमक्षुद्रकर्माणं प्रसिद्धं जनमाश्रयेत् ॥ ५७

राजा प्रगल्भं पुरुषं करोति
राजा भृशं बृंहयते मनुष्यम् ।
राजाभिपन्नस्य कुतः सुखानि
राजाऽभ्युपेतं सुखिनं करोति ॥ ५८
'राजा प्रजानां प्रथमं शरीरं
प्रजाश्च राज्ञोऽप्रतिमं शरीरम् ।
राज्ञा विहीना न भवन्ति देशा
देशैर्विहीना न नृपा भवन्ति ॥' ५९
राजा प्रजानां हृदयं गरीयो
गतिः प्रतिष्ठा सुखमुत्तमं च ।
समाश्रिता लोकमिमं परं च
जयन्ति सम्यक्पुरुषा नरेन्द्र ॥ ६०
नराधिपश्चाप्यनुशिष्य मेदिनीं
दमेन सत्येन च सौहृदेन ।
महद्भिरिष्ट्वा क्रतुभिर्महायशा-
स्त्रिविष्टपे स्थानमुपैति शाश्वतम् ॥ ६१

भीष्म उवाच ।
स एवमुक्तोऽङ्गिरसा कौसल्यो राजसत्तमः ।
प्रयत्नात्कृतवान्वीरः प्रजापालनमुत्तमम् ॥ ६२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

आसीदतः समीपस्थान् । मिथ्योपचरितो वञ्चितः ॥ ४२ ॥ तस्योपदेशे स्थातव्यमिति ट. ड. थ. पाठः ॥ ४८ ॥ अभिपन्नस्य तिरस्कृतस्य ॥ ५० ॥ कूटं मारणयन्त्रम् ॥ ५२ ॥ भोजः सुखानां भोजयिता ॥ ५४ ॥ बुभूषुर्भवितुमिच्छुः ॥ ५५ ॥ निषिद्धजनमाश्रयेदिति झ. पाठः। तत्र निषिद्धा जना येन तम्। अहमेक एवेदं कार्यं करिष्यामि किमेतैरिति वादिनमित्यर्थः ॥ ५८ ॥ समाश्रिता राजानमिति शेषः ॥ ६० ॥ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

युधिष्ठिरंप्रति भीष्मेण राजनीतिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
पार्थिवेन विशेषेण किं कार्यमवशिष्यते ।
कथं रक्ष्यो जनपदः कथं वध्याश्च शत्रवः ॥ १
कथं चारान्प्रयुञ्जीत वर्णान्विश्वासयेत्कथम् ।
कथं भृत्यान्कथं दारान्कथं पुत्रांश्च भारत ॥ २
भीष्म उवाच ।
राजवृत्तं महाराज शृणुष्वावहितोऽखिलम् ।
यत्कार्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा ॥ ३
आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः ।
अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥ ४
एतावानात्मविजयः पञ्चवर्गविनिग्रहः ।
जितेन्द्रियो नरपतिर्बाधितुं शक्नुयाद्रिपून् ॥ ५
न्यसेत गुल्मान्दुर्गेषु सन्धौ च कुरुनन्दन ।
नगरोपवने चैव पुरोद्याने तथैव च ॥ ६
संस्थानेषु च सर्वेषु पुटेषु नगरस्य च ।
मध्ये च नरशार्दूल तथा राजनिवेशने ॥ ७
प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन् ।
पुंसः परीक्षितान्प्राज्ञान्क्षुत्पिपासाश्रमक्षमान् ॥ ८
अमात्येषु च सर्वेषु मित्रेषु त्रिविधेषु च ।
पुत्रेषु च महाराज प्रणिदध्यात्समाहितः ॥ ९
पुरे जनपदे चैव तथा सामन्तराजसु ।
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते ॥ १०
चारांश्च विद्यात्प्रहितान्परेण भरतर्षभ ।
आपणेषु विहारेषु समवायेषु वीथिषु ॥ ११
आरामेषु तथोद्याने पण्डितानां समागमे ।
वेशेषु चत्वरे चैव सभास्वावसथेषु च ॥ १२
एवं विहन्याच्चारेण परचारं विचक्षणः ।
चारे च विहते सर्वं हतं भवति भारत ॥ १३
यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना ।
अमात्यैः सह संमन्त्र्य कुर्यात्सन्धिं बलीयसा ॥ १४
'विद्वांसः क्षत्रिया वैश्या ब्राह्मणाश्च बहुश्रुताः ।
दण्डनीतौ तु निष्पन्ना मन्त्रिणः पृथिवीपते ॥ १५
प्रष्टव्यो ब्राह्मणः पूर्वं नीतिशास्त्रस्य तत्ववित् ।
पश्चात्पृच्छेत भूपालः क्षत्रियं नीतिकोविदम् ।
वैश्यशूद्रौ तथा भूयः शास्त्रज्ञौ हितकारिणौ ॥' १६
अज्ञायमाने हीनत्वे सन्धिं कुर्यात्परेण वै ।
लिप्सुर्वा कंचिदेवार्थं त्वरमाणो विचक्षणः ॥ १७
गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये ।
सन्दधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥ १८
उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः ।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः ॥ १९
यो नोपकर्तुं शक्नोति नापकर्तुं महीपतिः ।
न शक्यरूपश्चोद्धर्तुमुपेक्ष्यस्तादृशो भवेत् ॥ २०
यात्रां यायादविज्ञातमनाक्रन्दमनन्तरम् ।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥ २१
यात्रामाज्ञापयेद्वीरः कल्यः पुष्टबलः सुखी ।
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा ॥ २२

---

पार्थिवेन पृथुवश्येन राज्ञा । पार्थिवप्रकृतेन वा विजातीयेनापि तत्कार्यकारिणा ॥ ३ ॥ आत्मा चित्तम् ॥ ४ ॥ पञ्चवर्गः श्रोत्रादिः ॥ ५ ॥ गुल्मान् रक्षिणः पत्तीन् । संधौ सीमान्ते ॥ ६ ॥ संस्थानेषु कोष्ठपालाद्युपवेशनस्थानेषु । मध्येऽन्तःपुरे ॥ ७ ॥ प्रणिधीन् चारान् ॥ ८ ॥ विहारेषु यूनां मल्लक्रीडास्थानेषु ॥ ११ ॥ सभासु राजसंसत्सु । आवसथेषु तत्रतत्र महतां गृहेषु ॥ १२ ॥ एवं विचिनुयाद्राजा परचारं विचक्षणः । चारे हि विदिते पूर्वं हितं भवति पाण्डव । इति झ. पाठः । तत्र विचिनुयात् अन्विष्यात् इत्यर्थः ॥ १३ ॥ तैर्द्वारभूतैः तान्द्वारीकृत्य बलवद्भिर्नृपैः सह संधिं कुर्यात् ॥ १८ ॥ पूर्वापकारिणः पूर्वं दुष्टा इति अपकृताः पश्चाद्दययानुगृहीताः ॥ १९ ॥ अविज्ञातं क्रियाविशेषणमिदम् । अनाक्रन्दं मित्रहीनम् । अनन्तरं बन्धुजनहीनम् । व्यासक्तं अन्येन युद्धं कुर्वाणम् । प्रमत्तं अनवहितम् । यात्रायां यदि विज्ञातमिति झ. पाठः । तत्र यात्रायां यदि इच्छा स्यात्तर्हि दुर्बलत्वादिना विज्ञातं शत्रुं प्रति यात्रामाज्ञापयेदित्युत्तरेण संबन्धः ॥ २१ ॥ विधानं रक्षणादिसामग्रीसंपादनम् ॥ २२ ॥

न च वश्यो भवेदस्य नृपो यश्चातिवीर्यवान् ।
हीनश्च बलवीर्याभ्यां कर्षयंस्तत्परो वसेत् ॥ २३
राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषमूर्च्छनैः ।
अमात्यवल्लभानां च विवादांस्तस्य कारयेत् ॥ २४
वर्जनीयं सदा युद्धं राज्यकामेन धीमता ।
उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः ॥ २५
सान्त्वेन तु प्रदानेन भेदेन च नराधिप ।
यमर्थं शक्नुयात्प्राप्तुं तेन तुष्येत पण्डितः ॥ २६
आददीत बलिं चापि प्रजाभ्यः कुरुनन्दन ।
षड्भागममितप्रज्ञस्तासामेवाभिगुप्तये ॥ २७
दशाधर्मगतेभ्यो यद्वसु बह्वल्पमेव वा ।
तन्नाददीत सहसा पौराणां रक्षणाय वै ॥ २८
यथा पुत्रास्तथा पौरा द्रष्टव्यास्ते न संशयः ।
भक्तिश्चैषु न कर्तव्या व्यवहारप्रदर्शने ॥ २९
श्रोतुं चैव न्यसेद्राजा प्राज्ञान्सर्वार्थदर्शिनः ।
व्यवहारेषु सततं तत्र राज्यं प्रतिष्ठितम् ॥ ३०
आकरे लवणे शुल्के तरे नागबले तथा ।
न्यसेदमात्यान्नृपतिः स्वाप्तान्वा पुरुषान्हितान् ३१
सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात् ।
नृपस्य सततं दण्डः सम्यग्धर्मः प्रशस्यते ॥ ३२
वेदवेदाङ्गवित्प्राज्ञः सुतपस्वी नृपो भवेत् ।
दानशीलश्च सततं यज्ञशीलश्च भारत ॥ ३३
एते गुणाः समस्ताः स्युर्नृपस्य सततं स्थिराः ।
व्यवहारस्य लोपेन कुतः स्वर्गः कुतो यशः ॥ ३४
यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
[तदाभिसंश्रयेद्दुर्गं बुद्धिमान्पृथिवीपतिः ॥ ३५
विधावाक्रम्य मित्राणि विधानमुपकल्पयेत् ।
सामभेदान्विरोधार्थं विधानमुपकल्पयेत् ॥] ३६
'त्रिधा तु कृत्वा मित्राणि विधानमुपकल्पयेत् ।'
घोषान्न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।
प्रवेशयेच्च तान्सर्वाञ्शाखानगरकेष्वपि ॥ ३७
ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत् ।
धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनःपुनः ॥३८
सस्याभिहारं कुर्वीत स्वयमेव नराधिपः ।
असंभवे प्रवेशस्य दाहयेदग्निना भृशम् ॥ ३९
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् ।
विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वै ॥ ४०
नदीमार्गेषु च तथा संक्रमानवसादयेत् ।
जलं विस्रावयेत्सर्वमविस्राव्यं च दूषयेत् ॥ ४१
तदात्वेनायतीभिश्च निवसेद्भूम्यनन्तरम् ।
प्रतिघातं परस्याजौ युद्धकालेऽप्युपस्थिते ॥ ४२
दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत् ।
सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान्विवर्जयेत् ॥ ४३
प्रवृद्धानां च वृक्षाणां शाखां प्रच्छेदयेत्तथा ।
चैत्यानां सर्वथा त्याज्यमपि पत्रस्य पातनम् ॥४४
'देवानामाश्रयाश्चैत्या यक्षराक्षसभोगिनाम् ।
पिशाचपन्नगानां च गन्धर्वाप्सरसामपि ।
रौद्राणां चैव भूतानां तस्मात्तान्परिवर्जयेत् ॥ ४५
श्रूयते हि निकुम्भेन सौदासस्य बलं हतम् ।
महेश्वरगणेशेन वाराणस्यां नराधिप ॥' ४६
प्रगण्डीः कारयेत्सम्यगाकाशजननीस्तदा ।
आपूरयेच्च परिखां स्थाणुनक्रझषाकुलाम् ॥ ४७
सङ्कटद्वारकाणि स्युरुच्छ्वासार्थं पुरस्य च ।
तेषां च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत् ॥४८

कर्षयन् वीर्यवन्तं । तत्परः कर्षणपरः ॥ २३ ॥ दशधर्मगतेभ्य इति । तदाददीत सहसेति च झ. पाठः । तत्र दशधर्मगताः मत्तोन्मत्तादय इत्यर्थः ॥ २८ ॥ भक्तिः स्वीयत्वेन स्नेहः ॥ २९ ॥ सूतं च विन्यसेद्राजा प्राज्ञं सर्वार्थदर्शिनम् । इति ट. ड. थ. द. पाठः ॥ ३० ॥ आकरे स्वर्णाद्युत्पत्तिस्थाने । लवणे तदुत्पत्तिस्थाने । शुल्के धान्यादिविक्रयस्थाने । तरे नदीसंतरणे । नागबले हस्तियूथे ॥ ३१ ॥ घोषान् वनस्थान्मार्गेषु राजपथेषु न्यसेत् ॥ ३७ ॥ उपजपेत् भेदयित्वा तद्द्वारा दाहयेत् ॥ ४० ॥ संक्रमान् अवतरणार्थान्सेतून् । जल तटाकादिस्थं विस्रावयेत् । तदयोग्यं वापीकूपादिस्थं दूषयेत् विषादिना नाशयेत् ॥ ४१ ॥ तदात्वेन वर्तमानकाले आयतीभिः उत्तरकालेषु च । अपवर्गे तृतीया । सर्वदा आजौ परस्य शत्रोः प्रतिघातं हन्तारं भूम्यनन्तरं निकटदेशवासिनं तच्छत्रुमाश्रित्य निवसेत् ॥ ४२ ॥ प्रगण्डीर्दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थानानि । आकाशजननीस्तत्रैवैकपक्षायां भित्तौ तत्रत्यानां रक्षणभूतायां बाह्यार्थदर्शनार्थानि क्षुद्रच्छिद्राणि यद्द्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते । स्थाणवः सशूलाः । प्रकुण्ठीः कारयेत् इति ड. थ. पाठः ॥ ४७ ॥ संकटद्वारकाणि सूक्ष्मद्वाराणि ।

द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत्सदा ।
आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् ॥४९
काष्ठानि चाभिहार्याणि तथा कूपांश्च खानयेत् ।
संशोधयेत्तथा कूपान्कृतान्पूर्वंपयोर्थिभिः ॥ ५०
तृणच्छन्नानि वेश्मानि पङ्केनाथ प्रलेपयेत् ।
निर्हरेच्च तृणं मासि चैत्रे वह्निभयात्पुरा ॥ ५१
नक्तमेव च भक्तानि पाचयेत नराधिपः ।
न दिवा ज्वालयेदग्निं वर्जयित्वाऽऽग्निहोत्रिकम् ५२
'यथासंभवशैलानि चैष्टकानि च कारयेत् ।
मृण्मयानि च कुर्वीत ज्ञात्वा देशं बलाबलम् ॥' ५३
कर्मारारिष्टशालासु ज्वलेदग्निः सुरक्षितः ।
गृहाणि च प्रवेश्यान्तर्विधेयः स्याद्धुताशनः ॥५४
महादण्डश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत् ।
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य च ॥ ५५
भिक्षुकांश्चाक्रिकांश्चैव क्लीबोन्मत्तान्कुशीलवान् ।
बाह्यान्कुर्यान्नरश्रेष्ठ दोषाय स्युर्हि ते शठाः ॥ ५६
चत्वरेष्वथ तीर्थेषु सभास्वावसथेषु च ।
यथार्थवर्णं प्रणिधिं कुर्यात्सर्वत्र पार्थिवः ॥ ५७
विशालान्राजमार्गांश्च कारयेत नराधिपः ।
प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत् ॥ ५८
भाण्डागारायुधागारान्धान्यागारांश्च सर्वशः ।
अश्वागारान्गजागारान्बलाधिकरणानि च ॥ ५९
परिखाश्चैव कौरव्य प्रतोलीसङ्कटानि च ।
न जातु कश्चित्पश्येत गुह्यमेतद्युधिष्ठिर ॥ ६०
अर्थसंनिचयं कुर्याद्राजा परबलार्दितः ।
तैलं मधु घृतं सस्यमौषधानि च सर्वशः ॥ ६१
अङ्गारकुशमुञ्जानां पलाशशरवर्णिनाम् ।
यवसेन्धनदिग्धानां कारयेत च संचयान् ॥ ६२
आयुधानां च सर्वेषां शक्त्यृष्टिप्रासचर्मणाम् ।
संचयानेवमादीनां कारयेत नराधिपः ॥ ६३

औषधानि च सर्वाणि मूलानि च फलानि
चतुर्विधांश्च वैद्यान्वै संगृह्णीयाद्विशेषतः ॥
नटांश्च नर्तकांश्चैव मल्लान्मायाविनस्तथा ।
शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ॥
यतः शङ्का भवेच्चापि भृत्यतोऽथापि मन्त्रितः
पौरेभ्यो नृपतेर्वापि स्वाधीनान्कारयेत तान् ।
कृते कर्माणि राजा तान्पूजयेद्धनसंचयैः ।
मानेनेन यथार्हेण सान्त्वेन विविधेन च ॥
निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन ।
गतानृण्यो भवेद्राजा यथा शास्त्रे निदर्शितम् ।
राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे
आत्माऽमात्याश्च कोशाश्च दण्डो मित्राणि चैव
तथा जनपदाश्चैव पुरं च कुरुनन्दन ।
एतत्सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥
षाड्गुण्यं च त्रिवर्गं च त्रिवर्गपरमं तथा ।
यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमाम् ॥
षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर ।
सन्धायासनमित्येव यात्रासन्धानमेव च ॥
विगृह्यासनमित्येव यात्रां संपरिगृह्य च ।
द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च ॥
त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु ।
क्षयः स्थानं च वृद्धिश्च त्रिवर्गः परमस्तथा ॥
'धर्मश्चार्थश्च कामश्च त्रिवर्गो वै सनातनः ।
मन्त्रश्चैव प्रभावश्च उत्साहश्चैव तान्त्रिकः ।
शक्तित्रयं समाख्यातं त्रिवर्गस्य च तत्परम् ॥
कार्यं च कारणं चैव कर्ता च परिकीर्तितः ।
एतत्परतरं विद्यात्त्रिवर्गादपि भारत ।
सर्वेषां च क्षये राजन्यस्त्रिवर्गः सनातनः ॥
सत्वं रजस्तमश्चैव त्रिवर्गकरणं स्मृतम् ।
तेनात्यन्तविमुक्तश्च मुक्तः पुरुष उच्यते ॥

तेषां च द्वारवत् गुप्तिः कार्या । कुलिकद्वारकाणि स्युः इति ट. ड. थ. पाठः ॥ ४८ ॥ कर्मारो लोहकारादिः । अन्तर्विधेयः आच्छादितः कर्तव्यः ॥ ५४ ॥ महादण्डो वधः ॥ ५५ ॥ चाक्रिकान् शाकटिकान् । कुशीलवान् फाललेखान् ॥ ५६ ॥ वर्णिनां लेखकानाम् । यवसं घासः । दिग्धानां विषाक्तबाणानाम्

॥ ६२ ॥ चतुर्विधान् विषशल्यरोगकृत्याहरान् ॥ ६
सन्धायासनं सन्धि कृत्वाऽवस्थितिः । यात्रासन्धानं र
॥ ७२ ॥ यात्रां संपरिगृह्याऽऽसनं शत्रोर्भयप्रदर्शनार्थं प्रदर्श्य स्वस्थानेऽवस्थानम् । द्वैधीभाव उभयत्र संधिक
॥ ७३ ॥ अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

कार्यस्य सर्वथा नाशो मोक्ष इत्यभिधीयते ।
तेन मोक्षपरश्चैव देवदेवः पितामहः ।
तुष्ट्यर्थस्य त्रिवर्गस्य रक्षामाह पितामहः ॥ ७८
जगतो लौकिकी यात्रा यत्र नित्यं प्रतिष्ठिता ।'
धर्मोऽर्थश्चैव कामश्च सेवितव्याः स्वकालतः ॥७९
'सेवा धर्मस्य कर्तव्या सततं भूरिवत्सरैः ।
पुरुषैर्नरशार्दूल तन्मूलाः सर्वथा क्रियाः ॥' ८०
धर्मेण च महीपालश्चिरं रक्षति मेदिनीम् ।
'यः कश्चिद्धार्मिको राजा स विपन्नोऽपि भूपतिः ।
अर्थकामविहीनोऽपि चिरं पालयते महीम् ॥'८१
अस्मिन्नर्थे हि द्वौ श्लोकौ गीतावङ्गिरसा स्वयम् ।
यादवीपुत्र भद्रं ते श्रोतुमर्हसि तावपि ॥ ८२
कृत्वा कार्याणि धर्मेण सम्यक्संपाल्य मेदिनीम् ।
पालयित्वा तथा पौरान्परत्र सुखमेधते ॥ ८३
किं तस्य तपसा राज्ञः किंच तस्याध्वरैः कृतैः ।
सुपालिताः प्रजा यस्य सर्वधर्मकृदेव सः ॥ ८४
श्लोकाश्चोशनसा गीतास्तान्निबोध युधिष्ठिर ।
दण्डनीतेश्च यन्मूलं त्रिवर्गस्य च भूपते ॥ ८५
भार्गवाङ्गिरसं कर्म षोडशाङ्गं च यद्बलम् ।
विषं माया च दैवं च पौरुषं चात्मसिद्धये ॥ ८६
प्रागुदक्प्रवणं दुर्गं समासाद्य महीपतिः ।
त्रिवर्गत्रयसंपूर्णमुपादाय तमुद्वहेत् ॥ ८७
षट्पञ्च च विनिर्जित्य दश चाष्टौ च भूपतिः ।
त्रिवर्गैर्दशभिर्युक्तः सुरैरपि न जीयते ॥ ८८
न बुद्धिं परिगृह्णीत स्त्रीणां मूर्खजनस्य च ।
दैवोपहतबुद्धीनां ये च वेदैर्विवर्जिताः ।
न तेषां शृणुयाद्राजा बुद्धिस्तेषां पराङ्मुखी ॥८९
स्त्रीप्रधानानि राज्यानि विद्वद्भिर्वर्जितानि च ।
मूर्खामात्याश्रितप्तानि शुष्यन्ते जलबिन्दुवत् ॥९०
विद्वांसः प्रथिता ये च ये चाप्ताः सर्वकर्मसु ।
बुद्धेषु दृष्टकर्माणि तेषां च शृणुयान्नृपः ॥ ९१
दैवं पुरुषकारं च त्रिवर्गं च समाश्रितः ।
दैवतानि च विप्रांश्च प्रणम्य विजयी भवेत् ॥' ९२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

भीष्मेण युधिष्ठिरंप्रति कृतादियुगचतुष्टयगुणनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
दण्डनीतिश्च राजा च समस्तौ तावुभावपि ।
तत्र किं कुर्वतः सिद्धिस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
माहात्म्यं दण्डनीत्यास्तु साध्यं शब्दैः सहेतुकैः ।
शृणु मे शंसतो राजन्यथावदिह भारत ॥ २
दण्डनीतिः स्वधर्मेषु चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति ॥ ३
चातुर्वर्ण्ये स्वधर्मस्थे मर्यादानामसंकरे ।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥ ४
सोमे प्रयत्नं कुर्वन्ति त्रयो वर्णा यथाविधि ।
तस्मादेव मनुष्याणां सुखं विद्धि समाहितम् ॥ ५
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो माभूद्राजा कालस्य कारणम् ॥ ६
दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥ ७
भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् ।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥ ८
योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ।
वैदिकानि च कर्माणि भवन्त्यपि गुणान्युत ॥ ९
ऋतवश्च सुखाः सर्वे भवन्त्युत निरामयाः ।
प्रसीदन्ति नराणां च स्वरवर्णमनांसि च ॥ १०
व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः ।

अधर्मेभ्य इति पञ्चमी ॥ ३ ॥

विधवा न भवन्त्यत्र नृशंसो नात्र जायते ॥ ११
अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा ।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च ॥ १२
नाधर्मो विद्यते तत्र धर्म एव तु केवलम् ।
इति कार्तयुगानेतान्गुणान्विद्धि युधिष्ठिर ॥ १३
दण्डनीत्या यदा राजा त्रीनंशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥ १४
अधर्मस्य चतुर्थांशस्त्रीनंशाननुवर्तते ।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥ १५
अर्धं त्यक्त्वा यदा राजा नीत्यर्धमनुवर्तते ।
ततस्तु द्वापरं नाम स कालः संप्रवर्तते ॥ १६
अशुभस्य यदा त्वर्धं द्वावंशावनुवर्तते ।
कृष्टपच्यैव पृथिवी भवत्यर्धफला तथा ॥ १७
दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः ।
प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥ १८
कलावधर्मो भूयिष्ठो धर्मो भवति न क्वचित् ।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥ १९
शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया ।
योगक्षेमस्य नाशश्च वर्तते वर्णसंकरः ॥ २०
वैदिकानि च कर्माणि भवन्ति विगुणान्युत ।
ऋतवो न सुखाः सर्वे भवन्त्यामयिनस्तथा ॥ २१
ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत ।
व्याधयश्च भवन्त्यत्र म्रियन्ते चाशतायुषः ॥ २
विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा ।
क्वचिद्वर्षति पर्जन्यः क्वचित्सस्यं प्ररोहति ॥ २
रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः
प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः ॥ २
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ २
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ २
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ २
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विन्दति २
दण्डनीतिं पुरस्कृत्य क्षत्रियेण विजानता ।
लिप्सितव्यमलभ्यं च लब्धं रक्ष्यं च भारत ।
'योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ॥' २
लोकस्य सीमन्तकरी मर्यादा लोकपावनी ।
सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता ॥ ३
यस्यां भवन्ति भूतानि तद्विद्धि भरतर्षभ ।
एष एव परो धर्मो यद्राजा दण्डनीतिमान् ॥ ३
तस्मात्कौरव्य धर्मेण प्रजाः पालय नीतिमान् ।
एवं वृत्तः प्रजा रक्षन्स्वर्गं जेतासि दुर्जयम् ॥ ३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

## सप्ततितमोऽध्यायः ॥ ७० ॥

भीष्मेण युधिष्ठिरंप्रति राजनयानुवर्णनम् ॥ १ ॥

युधिष्ठिर उवाच ।
केन वृत्तेन वृत्तज्ञ वर्तमानो महीपतिः ।
सुखेनार्थान्सुखोदर्कानिह च प्रेत्य चाश्नुते ॥ १
भीष्म उवाच ।
इयं गुणानां षट्त्रिंशी षट्त्रिंशद्गुणसंयुता ।
यान्गुणांस्तु गुणोपेतः कुर्वन्गुणमवाप्नुयात् ॥
चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न चास्तिकः ।
अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥

कृपणो न क्षिति झ. पाठः ॥ ११ ॥ अयोगेन अनुपायेन ॥ १८ ॥ योगक्षेमस्य नाशाश्चेति ट. ड. थ. पाठः २० ॥ सीमन्तकरी व्यवस्थापिका ॥ ३० ॥ एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

षट्त्रिंशी षट्त्रिंशत्संख्याका ॥ २ ॥

संदधीत न चानार्यैर्विगृह्णीयाच्च शत्रुभिः ।
नानासैश्चारयेच्चारं कुर्यात्कार्यमपीडया ॥ ५
अर्थं ब्रूयान्न चासत्सु गुणान्ब्रूयान्न चात्मनः ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ ६
नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ ७
अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः ।
स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥ ८
अस्तब्धः पूजयन्मान्यान्गुरून्सेवेदमायया ।
अर्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सिताम् ॥ ९
सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् ।
सान्त्वयेन्न च मोक्षाय अनुगृह्णन्न चाक्षिपेत् ॥ १०
प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत् ।
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥ ११
एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् ॥ १२
इति सर्वान्गुणानेतान्यथोक्तान्योऽनुवर्तते ।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते ॥ १३
वैशंपायन उवाच ।
इदं वचः शान्तनवस्य शुश्रुवा-
न्युधिष्ठिरः पार्थिवमुख्यसंवृतः ।
तदा ववन्दे च पितामहं नृपो
यथोक्तमेतच्च चकार बुद्धिमान् ॥ १४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

---

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

भीष्मेण युधिष्ठिरंप्रति राजधर्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कथं राजा प्रजा रक्षन्नाधिबन्धेन युज्यते ।
धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
समासेनैव ते राजन्धर्मान्वक्ष्यामि शाश्वतान् ।
विस्तरेणैव धर्माणां न जात्वन्तमवाप्नुयात् ॥ २
धर्मनिष्ठाञ्श्रुतवतो देवव्रतसमाहितान् ।
अर्चितान्वासयेथास्त्वं गृहे गुणवतो द्विजान् ॥ ३
प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च ।
अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ॥ ४
धर्मकार्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च ।
ब्राह्मणान्वाचयेथास्त्वमर्थसिद्धिजयाशिषः ॥ ५
आर्जवेन च संपन्नो धृत्या बुद्ध्या च भारत ।
धर्मार्थौ प्रतिगृह्णीयात्कामक्रोधौ च वर्जयेत् ॥ ६
कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति ।
न स धर्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः ॥ ७
मा स्म लुब्धांश्च मूर्खांश्च कामार्थे च प्रयूयुजः ।
अलुब्धान्बुद्धिसंपन्नान्सर्वकर्मसु योजयेत् ॥ ८
मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः ।
प्रजाः क्लिश्नात्ययोगेन कामक्रोधसमन्वितः ॥ ९
बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् ।
शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम् ॥ १०
दापयित्वा करं धर्म्यं राष्ट्रं नीत्या यथाविधि ।
तथैतं कल्पयेद्राजा योगक्षेममतन्द्रितः ॥ ११

---

विगृह्णीयान्न बन्धुभिः । नाभक्तं चारयेच्चारं इति झ. पाठः । तत्र अभक्तं अल्पान्नं इत्यर्थः ॥ ५ ॥ चोक्षः शुद्धः ॥ ८ ॥ न शोचयेत् शत्रुबन्धूनां शोकं अपनुदेत् ॥ ११ ॥ अनुत्तमं महत्तरम् ॥ १२ ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

बह्वीनां प्रजानां परिपालनं कथं स्यादिति चिन्ता आधिः स एव बन्धस्तेन न युज्यते ॥ १ ॥ अयोगेन योग इष्टप्राप्तिस्तदभावेन ॥ ९ ॥ बली राजदेयं तदेव सस्यादेः षष्ठांशस्तेन बलिषष्ठेन । वेतनेन पथिरक्षितैर्वणिग्भिर्यद्दत्तं तद्राज्ञो वेतनं सेवाधनम् ॥ १० ॥ धान्यादेः षष्ठांशे हृते शेषेण प्रजानां यदि वार्षिको ग्रासो न भवेत्तदा राजैव तासां योगक्षेमं कल्पयेदित्याह दापयित्वेति ॥ ११ ॥

गोपायितारं दातारं धर्मनित्यमतन्द्रितम् ।
अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः ॥ १२
तस्माद्धर्मेण लाभेन लिप्सेथास्त्वं धनागमम् ।
धर्मार्थावध्रुवौ तस्य यो न शास्त्रपरो भवेत् ॥ १३
अपशास्त्रधनो राजा संचयं नाधिगच्छति ।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति ॥ १४
अर्थमूलोऽपि हिंसां च कुरुते स्वयमात्मनः ।
करैरशास्त्रदृष्टैर्हि मोहात्संपीडयन्प्रजाः ॥ १५
ऊधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी न लभेत्पयः ।
एवं राष्ट्रमयोगेन पीडितं न विवर्धते ॥ १६
'यवसोदकमादाय सान्त्वेन विनयेन च ।'
यो हि दोग्ध्रीमुपास्ते च स नित्यं विन्दते पयः ।
एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् ॥ १७
अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम् ।
जनयत्यतुलां नित्यं कोशवृद्धिं युधिष्ठिर ॥ १८
दोग्ध्री धान्यं हिरण्यं च मही राज्ञा सुरक्षिता ।
नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः ॥ १९
मालाकारोपमो राजन्भव माऽऽङ्गारिकोपमः ।
तथायुक्तश्चिरं राज्यं भोक्तुं शक्ष्यसि पालयन् ॥२०
परचक्राभियानेन यदि ते स्याद्धनक्षयः ।
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् ॥ २१
मा स्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः ।
अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत ॥२२
धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः ।
सान्त्वयन्परिरक्षंश्च स्वर्गमाप्स्यसि दुर्जयम् ॥ २३
एवं धर्म्येण वृत्तेन प्रजास्त्वं परिपालय ।
स्वर्ग्यं पुण्यं यशो नित्यं प्राप्स्यसे कुरुनन्दन ॥ २४
धर्मेण व्यवहारेण प्रजाः पालय पाण्डव ।
युधिष्ठिर यथायुक्तो नाधिबन्धेन योक्ष्यसे ॥ २५
एष एव परो धर्मो यद्राजा रक्षति प्रजाः ।
भूतानां हि यदा धर्मो रक्षणं परमा दया ॥ २६
तस्मादेवं परं धर्मं मन्यन्ते धर्मकोविदाः ।
यो राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् ॥२७
यदह्ना कुरुते पापमरक्षन्भयतः प्रजाः ।
राजा वर्षसहस्रेण तस्यान्तमधिगच्छति ॥ २८
यदह्ना कुरुते धर्मं प्रजा धर्मेण पालयन् ।
दशवर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ॥ २९
स्विष्टिः स्वधीतिः सुतपा लोकाञ्जयति यावतः ।
क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ॥ ३०
एवं धर्मं प्रयत्नेन कौन्तेय परिपालय ।
ततः पुण्यफलं लब्ध्वा नानुबन्धेन योक्ष्यसे ॥३१
स्वर्गलोके सुमहतीं श्रियं प्राप्स्यसि पाण्डव ।
असंभवश्च धर्माणामीदृशानामराजसु ॥ ३२
तस्माद्राजैव नान्योऽस्ति यो धर्मफलमाप्नुयात् ।
स राज्यं धृतिमान्प्राप्य धर्मेण परिपालय ।
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ॥ ३३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

युधिष्ठिरंप्रति भीष्मेण ब्राह्मणस्य श्रैष्ठ्योपपादनपूर्वकं चातुर्वर्ण्यधर्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
'कीदृशो ब्राह्मणो राजा कार्याकार्यविचारणे ।
क्षमः कर्तुं समर्थो वा तन्मे ब्रूहि पितामह ॥' १
भीष्म उवाच ।
य एव तु सतो रक्षेदसतश्च निवर्तयेत् ।
स एव राज्ञा कर्तव्यो राजन्राजपुरोहितः ॥ २

दोग्ध्री पूरयित्री ॥ १९ ॥ आङ्गारिक इङ्गालकर्ता ॥ २० ॥ यथायुक्त उक्तेन प्रकारेणाऽवहितः ॥ २५ ॥ यो दयां कुरुते तं धर्मं मन्यन्ते इति योजना ॥ २७ ॥ अन्तं यातनाभोगनिष्कृतिम् ॥ २८ ॥ स्विष्टिः स्वधीतिः सुतपा इति क्रमेण गृहस्थब्रह्मचारिवानप्रस्थधर्मान्सम्यगनुतिष्ठन् ॥ ३० ॥ एकसप्ततितमोऽध्यायः ॥ ७१ ॥

निवर्तयेद्राज्याद्दूरीकारयेत् ॥ २ ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पुरूरवस ऐलस्य संवादं मातरिश्वना ॥ ३
पुरूरवा उवाच ।
कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः ।
कस्माच्च भवति श्रेयांस्तन्मे व्याख्यातुमर्हसि ॥ ४
मातरिश्वोवाच ।
ब्राह्मणो मुखतः सृष्टो ब्रह्मणो राजसत्तम ।
बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य एव च ॥ ५
वर्णानां परिचर्यार्थं त्रयाणां भरतर्षभ ।
वर्णश्चतुर्थः पश्चात्तु पद्भ्यां शूद्रो विनिर्मितः ॥ ६
ब्राह्मणो जायमानो हि पृथिव्यामनुजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥ ७
'सर्वस्वं ब्राह्मणस्येदं यत्किंचिदिह दृश्यते ।
धर्मयुक्तं प्रशस्तं च जगत्यस्मिन्नृपात्मज ॥' ८
ततः पृथिव्या यन्तारं क्षत्रियं दण्डधारणे ।
द्वितीयं वर्णमकरोत्प्रजानामनुगुप्तये ॥ ९
वैश्यस्तु धनधान्येन त्रीन्वर्णान्विभृयादिमान् ।
शूद्रो ह्येतान्परिचरेदिति ब्रह्मानुशासनम् ॥ १०
ऐल उवाच ।
द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत् ।
धर्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे ॥ ११
वायुरुवाच ।
विप्रस्य सर्वमेवैतद्यत्किंचिज्जगतीगतम् ।
'धनं धान्यं हिरण्यं च स्त्रियो रत्नानि वाहनम् ॥१२
मङ्गलं च प्रशस्तं च यच्चान्यदपि विद्यते ।'
ज्येष्ठेनाभिजनेनेह तद्धर्मकुशला विदुः ॥ १३
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः ॥ १४
पत्यभावे यथैव स्त्री देवरं कुरुते पतिम् ।
'आनन्तर्यात्तथा क्षत्रं पृथिवी कुरुते पतिम् ।'
एष ते प्रथमः कल्प आपद्यन्यो भवेदतः ॥ १५
यदि स्वर्गे परं स्थानं धर्मतः परिमार्गसि ।
यत्किंचिज्जयसे भूमिं ब्राह्मणाय निवेदय ॥ १६
श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने ।
स्वधर्मपरितृप्ताय यो न वित्तपरो भवेत् ॥ १७
यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया ।
ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवान् ॥१८
श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम् ।
राजा चरति यं धर्मं ब्राह्मणेन निदर्शितम् ॥ १९
शुश्रूषुरनहंवादी क्षत्रधर्मव्रते स्थितः ।
तावता सत्कृतः प्राज्ञश्चिरं यशसि तिष्ठति ॥ २०
तस्य धर्मस्य सर्वस्य भागी राजपुरोहितः ।
एवमेव प्रजाः सर्वा राजानमभिसंश्रिताः ॥ २१
'ब्राह्मणं च सविद्वांसं राजशास्त्रविपश्चितम् ।'
सम्यग्वृत्ताः स्वधर्मस्था न कुतश्चिद्भयान्विताः ॥२२
राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भागं तु विन्दति ॥२३
देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
यज्ञमेवोपजीवन्ति नास्ति यष्टा ह्यराजके ॥ २४
इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
राजन्येवास्य धर्मस्य योगक्षेमः प्रतिष्ठितः ॥ २५
छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति ।
अग्नौ वाससि सूर्ये च सुखं शीतेऽधिगच्छति ।
शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः ॥ २६
तेषु भोगेषु सर्वेषु न भीतो लभते सुखम् ।
अभयस्य हि यो दाता तस्यैव सुमहत्फलम् ॥२७
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते ।
इन्द्रो राजा यमो राजा धर्मो राजा तथैव च ।
राजा बिभर्ति भूतानि राज्ञा सर्वमिदं धृतम् ॥ २८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

भीष्मेण युधिष्ठिरंप्रति पुरोहितलक्षणादिवर्णनम् । ऐलकश्यपसंवादानुवादश्च ॥ १ ॥

'युधिष्ठिर उवाच ।
राज्ञा पुरोहितः कार्यः कीदृशो वर्णतो भवेत् ।
पुरोधा यादृशः कार्यः कथयस्व पितामह ॥ १
भीष्म उवाच ।
गौरो वा लोहितो वाऽपि श्यामो वा नीरुजः सुखी ।
अक्रोधनो ह्यचपलः सर्वतश्च जितेन्द्रियः ॥' २
राज्ञा पुरोहितः कार्यो भवेद्विद्वान्बहुश्रुतः ।
उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम् ॥ ३
धर्मात्मा मन्त्रविद्येषां राज्ञां राजन्पुरोहितः ।
'तेषामर्थश्च कामश्च धर्मश्चेति विनिश्चयः ॥ ४
श्लोकाश्चोशनसा गीतास्तान्निबोध युधिष्ठिर ।
उच्छिष्टः स भवेद्राजा यस्य नास्ति पुरोहितः ॥ ५
रक्षसामसुराणां च पिशाचोरगपक्षिणाम् ।
शत्रूणां च भवेद्वध्यो यस्य नास्ति पुरोहितः ॥ ६
ब्रह्मत्वं सर्वयज्ञेषु कुर्वीताथर्वणो द्विजः ।
राज्ञश्चाथर्ववेदेन सर्वकर्माणि कारयेत् ॥ ७
ब्रूयाद्रक्षाणि सततं महोत्पातान्यघानि च ।
इष्टमङ्गलयुक्तानि तथाऽन्तःपुरिकाणि च ॥ ८
गीतनृत्ताधिकारेषु संमतेषु महीपतेः ।
कर्तव्यं कर्णायं वै वैश्वदेवबलिस्तथा ॥ ९
पक्षसंधिषु कुर्वीत महाशान्तिं पुरोहितः ।
रौद्रहोमसहस्रं च स्वस्य राज्ञः प्रियं हितम् ॥ १०
राज्ञः पापमलाः सप्त यान्नृच्छति पुरोहितः ।
अमात्याश्च कुकर्माणो मन्त्रिणश्चाप्युपेक्षकाः ॥ ११
चौर्यसव्यवहारश्च व्यवहारोपसेविनाम् ।
अदण्ड्यदण्डनं चैव दण्ड्यानां चाप्यदण्डनम् ॥ १२
हिंसा चान्यत्र संग्रामाद्राज्ञश्च मल उच्यते ।
कुभृत्यैस्तु प्रजानाशः सप्तमस्तु महामलः ॥ १३
रौद्रहोमैर्महाशान्त्या घृतकम्बलकर्मणा ।
भृग्वङ्गिरोविधिज्ञो वै पुरोधा निर्णुदे मलात् ॥ १४
एतान्हित्वा दिवं याति राजा सप्त महामलान् ।

निर्णुदे मोचयेत् । राजानमिति शेषः ॥ १४ ॥

सामात्यः सपुरोधाश्च प्रजानां पालने रतः ॥
एतस्मिन्नेव कौरव्य पौरोहित्ये महामते ।
श्लोकानाह महेन्द्रस्य गुरुर्देवो बृहस्पतिः ॥
तान्निबोध महीपाल महाभाग हिताञ्शुभान् ।
ऋग्वेदे सामवेदे च यजुर्वेदे च वाजिनाम् ॥
न निर्दिष्टानि कर्माणि त्रिषु स्थानेषु भूभृताम् ।
शान्तिकं पौष्टिकं चैव अरिष्टानां च शातनम् ॥
शस्तास्ते याज्ञवल्क्येन यज्ञानां हितमीहता ।
ब्रह्मिष्ठानां वरिष्ठेन ब्रह्मणः संमते विभोः ॥
बह्वृचं सामगं चैव वाजिनं च विवर्जयेत् ।
बह्वृचो राष्ट्रनाशाय राजनाशाय सामगः ।
अध्वर्युर्बलनाशाय प्रोक्तो वाजसनेयकः ॥
अब्राह्मणेषु वर्णेषु मन्त्रान्वाजसनेयकान् ।
शान्तिके पौष्टिके चैव नित्यं कर्मणि वर्जयेत् ॥
ब्राह्मणस्य महीपस्य सर्वथा न विरोधिनः ।
वेदाश्चत्वार इत्येते ब्राह्मणा ये च तद्विदुः ॥
पौरोहित्ये प्रमाणं तु ब्राह्मणश्च महीपतेः ।
जात्या न क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः ॥
चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृतः ।
भार्गवाङ्गिरसैर्मन्त्रैस्तेषां कर्म विधीयते ॥
वैतानं कर्म यच्चैव गृह्यकर्म च यत्स्मृतम् ।
द्विजातीनां त्रयाणां तु सर्वकर्म विधीयते ॥
राजधर्मप्रवृत्तानां हितार्थं त्रीणि कारयेत् ।
शान्तिकं पौष्टिकं चैव तथाऽभिचरणं च यत् ॥
अग्निष्टोममुखैर्यज्ञैर्दूषिता भूपकर्मभिः ।
न सम्यक्फलमृच्छन्ति ये यजन्ति द्विजातयः ॥ २
पौरोहित्यं तु कुर्वाणा नाशं यास्यन्ति भूभृताम् ।
यज्ञकर्माणि कुर्वाणा ऋत्विजस्तु विरोधिनः ॥ २
ब्रह्मक्षत्रविशः सर्वे पौरोहित्ये विवर्जिताः ।
तदभावे च पारक्यं निर्दिष्टं राजकर्मसु ॥ २
ऋषिणा याज्ञवल्क्येन तत्तथा न तदन्यथा ।
भार्गवाङ्गिरसां वेदे कृतविद्यः षडङ्गवित् ॥ ३

यज्ञकर्मविधिज्ञस्तु विधिज्ञः पौष्टिकेषु च ।
अष्टादशविकल्पानां विधिज्ञःशान्तिकर्मणाम्॥३१
सर्वरोगविहीनश्च संयतः संयतेन्द्रियः ।
श्वित्रकुष्ठक्षयक्षीणैर्ग्रहापस्मारदूषितैः ॥ ३२
अशस्तैर्वातदुष्टैश्च दूरस्थैः संवदेन्नृपः ।
रोगिणं ऋत्विजं चैव वर्जयेच्च पुरोहितम् ॥ ३३
नचान्यस्य कृतं येन पौरोहित्यं कदाचन ।
यस्य याज्यो मृतश्चैव भ्रष्टः मत्रजितो यथा ॥ ३४
युद्धे पराजितश्चैव सर्वांस्तान्वर्जयेन्नृपः ।
नक्षत्रस्यानुकूल्येन यः संजातो नरेश्वरः ॥ ३५
राजशास्त्रविनीतश्च श्रेयान्राज्ञः पुरोहितः ।
अधन्यानां निमित्तानामुत्पातानामथार्थवित् ३६
शत्रुपक्षक्षयज्ञश्च श्रेयान्राज्ञः पुरोहितः ।
वाजिनं तदभावे च चरकाध्वर्यवानपि ॥ ३७
बह्वृचं सामगं चैव नीतिशास्त्रकृतश्रमान् ।
कृतिनोऽथर्वणो वेदे स्थापयेत्तु पुरोहितान् ॥ ३८
हिंसालिङ्गा हि निर्दिष्टा मन्त्रा वैतानिकैर्द्विजैः ।
न तानुच्चारयेत्प्राज्ञः क्षात्रधर्मविरोधिनः ॥ ३९
प्रजागुणाः पुरोधाश्च पुरोहितगुणाः प्रजाः ।'
राजा वै सगुणो येषां कुशलं तेषु सर्वशः ॥ ४०
उभौ प्रजा वर्धयतो देवान्पूर्वापरान्पितॄन् ।
यौ भवेतां स्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ ॥४१
परस्परस्य सुहृदौ विहितौ समचेतसौ ।
ब्रह्मक्षत्रस्य संमानात्प्रजा सुखमवाप्नुयात् ॥ ४२
विमाननात्तयोरेव प्रजा नश्येयुरेव हि ।
ब्रह्मक्षत्रं हि सर्वासां प्रजानां मूलमुच्यते ॥ ४३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऐलकश्यपसंवादं तं निबोध युधिष्ठिर ॥ ४४
ऐल उवाच ।
यदा हि ब्रह्म प्रजहाति क्षत्रं
क्षत्रं यदा वा प्रजहाति ब्रह्म ।
अन्वग्बलं कतमेऽस्मिन्भजन्ते
तथा बलं कतमेऽस्मिन्म्रियन्ते ॥ ४५
कश्यप उवाच ।
द्विधा हि राष्ट्रं भवति क्षत्रियस्य
ब्रह्म क्षत्रं यत्र विरुध्यतीह ।
अन्वग्बलं दस्यवस्तद्भजन्ते
तथा वर्णं तत्र विदन्ति सन्तः ॥ ४६
नैषां ब्रह्म च वर्धते नोत पुत्रा
न गर्गरो मथ्यते नो जयन्ते ।
नैषां पुत्रा वेदमधीयते च
यदा ब्रह्म क्षत्रियाः संत्यजन्ति ॥ ४७
नैषामर्थो वर्धते जातु गेहे
नाधीयते तत्प्रजा नो यजन्ते ।
अपध्वस्ता दस्युभूता भवन्ति
ये ब्राह्मणान्क्षत्रियाः संत्यजन्ति ॥ ४८
एतौ हि नित्यं संयुक्तावितरेतरधारणे ।
क्षत्रं वै ब्रह्मणो योनिर्योनिः क्षत्रस्य वै द्विजः ॥ ४९
उभावेतौ नित्यमभिप्रपन्नौ
संप्रापतुर्महतीं संप्रतिष्ठाम् ।
तयोः सन्धिर्भिद्यते चेत्पुराण-
स्ततः सर्वं भवति हि संप्रमूढम् ॥ ५०
नात्र पारं लभते पारगामी
महोदधौ नौरिव संप्रभिन्ना ।
चातुर्वर्ण्यं भवति हि संप्रमूढं
प्रजास्ततः क्षयसंस्था भवन्ति ॥ ५१
ब्रह्मवृक्षो रक्ष्यमाणो मधु हेम च वर्षति ।
अरक्ष्यमाणः सततमश्रु पापं च वर्षति ॥ ५२
अब्रह्मचारी चरणादपेतो
यदा ब्रह्म ब्रह्मणि त्राणमिच्छेत् ।
आश्चर्यतो वर्षति तत्र देव-
स्तत्राभीक्ष्णं दुष्प्रभाश्चाविशन्ति ॥ ५३

क्षत्रं कर्तृ । तत्र क्षत्रे सन्तः वर्णं विन्दन्ति । ब्राह्मणानामवमन्ता म्लेच्छजातीयोऽयं राजेत्यनुमानाज्जानन्ति । यथोक्तंभोगेन ज्ञायते कर्म कर्मणा ज्ञायते जनिरिति । तथा बलं तन्म्रियन्ते च सन्त इति ट. ड. थ. पाठः ॥ ४६ ॥ अभिप्रपन्नौ अन्योन्यशरणौ । क्षत्रशरणं ब्रह्म तपस्यति ब्रह्मशरणं क्षत्रं जयतीति भावः ॥ ५० ॥ मधु सुखम् । अश्रु दुःखम् । पापं नरकम् ॥ ५२ ॥ ब्रह्म ब्राह्मणजातिः । ब्रह्मचरणादपेतत्वादब्रह्मचारी वेदाध्ययनशून्यःसन् त्राणं रक्षणं इच्छेत्तदा देवस्तत्र

स्त्रियं हत्वा ब्राह्मणं वाऽपि पापः
सभायां यत्र लभते साधुवादम् ।
राज्ञः सकाशे न बिभेति चापि
ततो भयं विद्यते क्षत्रियस्य ॥ ५४
पापैः पापे क्रियमाणेऽतिवेलं
ततो रुद्रो जायते देव एषः ।
पापैः पापाः संजनयन्ति रुद्रं
ततः सर्वान्साध्वसाधून्हिनस्ति ॥ ५५
ऐल उवाच ।
कुतो रुद्रः कीदृशो वाऽपि रुद्रः
सत्त्वैः सत्त्वं दृश्यते वध्यमानम् ।
एतत्सर्वं कश्यप मे प्रचक्ष्व
यतो रुद्रो जायते देव एषः ॥ ५६
कश्यप उवाच ।
आत्मा रुद्रो हृदये मानवानां
स्वं स्वं देहं परदेहं च हन्ति ।
वातोत्पातैः सदृशं रुद्रमाहु-
र्देवं जीमूतैः सदृशं रूपमस्य ॥ ५७
ऐल उवाच ।
न वै वातः परिवृणोति कश्चि-
न्न जीमूतो वर्षति तत्र देवः ।
तथा युक्तो दृश्यते मानुषेषु
कामद्वेषाद्बध्यते मुह्यते च ॥ ५८
कश्यप उवाच ।
यथैकगेहाज्जातवेदाः प्रदीप्तः
कृत्स्नं ग्रामं दहते च त्वरावान् ।
विमोहनं कुरुते देव एष
ततः सर्वं स्पृश्यते पुण्यपापैः ॥ ५९
ऐल उवाच ।
यदि दण्डः स्पृशतेऽपुण्यपापं
पापं पापे क्रियमाणे विशेषात् ।
कस्य हेतोः सुकृतं नाम कुर्या-
द्दुष्कृतं वा कस्य हेतोर्न कुर्यात् ॥ ६०
कश्यप उवाच ।
असंत्यागात्पापकृतामपापां-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा-
न्न मिश्रः स्यात्पापकृद्भिः कथंचित् ॥ ६१
ऐल उवाच ।
साध्वसाधून्धारयतीह भूमिः
साध्वसाधूंस्तापयतीह सूर्यः ।
साध्वसाधूंश्चापि वातीह वायु-
रापस्तथा साध्वसाधून्वहन्ति ॥ ६२
कश्यप उवाच ।
एवमस्मिन्वर्तते लोक एष
नामुत्रैवं वर्तते राजपुत्र ।
प्रेत्यैतयोरन्तरवान्विशेषो
यो वै पुण्यं चरते यश्च पापम् ॥ ६३
पुण्यस्य लोको मधुमान्घृतार्चि-
र्हिरण्यज्योतिरमृतस्य नाभिः ।
तत्र प्रेत्य मोदते ब्रह्मचारी
न तत्र मृत्युर्न जरा नोत दुःखम् ॥ ६४

---

आश्रयतो वर्षतेति । तत्र वर्षे अत्यन्तं दुर्लभमित्यर्थः ॥ ५३ ॥ रुद्रो हिंस्रः । देवो राजा । रुद्रं कलिम् ॥ ५५ ॥ मानवानां हृदये य आत्मा जीवोऽस्ति स एव रुद्रः संहर्ता भवति । ननु कुतः शान्तस्यात्मनो रुद्रत्वमत आह वातेति । यथा उत्पातवात आकाशोत्थ आकाशोत्थां मेघदेवतामितस्ततो नयति गर्जयति विद्युदशनिवारीणि च तत आविर्भावयत्येवमात्मोत्थिताः कामक्रोधादयः सर्वं हिंस्रं कारयन्तीत्यर्थः ॥ ५७ ॥ यथा आकाशेन युक्तास्ततः पृथग्भूताः वातो मेघाश्च मेघप्रवर्तकदेवता च प्रत्यक्षेण शास्त्रज्ञानेन च दृश्यन्ते नैवं जीवो वा तदभिमानकः कामादिर्वा पृथक् दृश्यते किंत्वात्मन्येव वह्न्यौष्ण्यवत्कामद्वेषौ वर्तेते तौ चैतस्य संबन्धकौ मोहकौ च भवत इत्यर्थः ॥ ५८ ॥ यथाऽल्पोऽपि वह्निरधिकमधिक काष्ठभारमुपारुह्य कृत्स्नं ग्रामं दहति तत्र न केवलं काष्ठानां दाहकत्वं नापि काष्ठान्यनुपारूढस्याग्नेः किंतु तदुभयसंघातस्यैव । तत्रापि विवेके क्रियमाणे वह्नेरेवोपाध्यावेशाद्दाहकत्वम् । एवमात्मानमारुह्याहंकारवह्निः कामक्रोधादिवातैरुद्दीपितो रुद्रत्वं प्रतिपद्यते ॥ ५९ ॥ अपुण्यपापमप्यात्मानं यदि विशेषात् क्रियमाणे पापे निमित्तभूते सति दण्डः पापं दण्डात्मकं पापं गालनताडनादिदुःखं कर्तृ स्पृशते मोहादिति ब्रवीषि तर्हि पुण्यकरणं पापवर्जनं च शास्त्रचोदितं वृथैव स्यात् ॥ ६० ॥

पस्य लोको निरयोऽप्रकाशो
 नित्यं दुःखं शोकभूयिष्ठमेव ।
आत्मानं शोचति पापकर्मा
 बह्वीः समाः प्रतपन्नप्रतिष्ठः ॥ ६५
थोभेदाद्ब्राह्मणक्षत्रियाणां
 प्रजा दुःखं दुःसहं चाविशन्ति ।
वं ज्ञात्वा कार्य एवेह विद्वान्
 पुरोहितो नैकविद्यो नृपेण ॥ ६६
व लब्ध्वाभिषिञ्चेत्तथा धर्मो विधीयते ।
अग्रं हि ब्राह्मणः प्रोक्तं सर्वस्यैवेह धर्मतः ॥ ६७
पूर्वं हि ब्रह्मणः सृष्टिरिति ब्रह्मविदो विदुः ।
ज्येष्ठेनाभिजनेनास्य प्राप्तं पूर्वं यदुत्तमम् ॥ ६८
तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् ।
सर्वं श्रेष्ठं विशिष्टं च निवेद्यं तस्य धीमतः ॥ ६९
अवश्यमेतत्कर्तव्यं राज्ञा बलवताऽपि हि ।
ब्रह्म वर्धयति क्षत्रं क्षत्रतो ब्रह्म वर्धते ।
राज्ञः सर्वस्य चान्यस्य स्वामी राज्ञः पुरोहितः ॥७०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

ष्मेण युधिष्ठिरंप्रति मुचुकुन्दचरितदृष्टान्तीकरणेन क्षत्रस्य ब्रह्माधीनत्वसमर्थनम् ॥ १ ॥

ष्ठिर उवाच ।
त्रस्य सामर्थ्यं कथितं ते पितामह ।
हेतप्रभावश्च लक्षणं च पुरोधसः ॥ १
रीं श्रोतुमिच्छामि ब्रह्मक्षत्रविनिर्णयम् ।
त्रं हि सर्वस्य कारणं जगतः परम् ।
क्षेमो हि राष्ट्रस्य ताभ्यामायत्त एव च ॥ २
न उवाच ।
क्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते ।
क्षेमो हि राज्ञो हि समायत्तः पुरोहिते ॥ ३
दृष्टं भयं ब्रह्म प्रजानां शमयत्युत ।
च राजा बाहुभ्यां तद्राज्यं सुखमेधते ॥ ४
प्युदाहरन्तीममितिहासं पुरातनम् ।
कुन्दस्य संवादं राज्ञो वैश्रवणस्य च ॥ ५
कुन्दो विजित्येमां पृथिवीं पृथिवीपतिः ।
ासमानः स बलमभ्ययादलकाधिपम् ॥ ६
वैश्रवणो राजा राक्षसानसृजत्तदा ।
लान्यवमृद्नन्त मुचुकुन्दस्य नैर्ऋताः ॥ ७
न्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः ।
गर्हयामास विद्वांसं पुरोहितमरिन्दमः ॥ ८
तत उग्रं तपस्तप्त्वा वसिष्ठो धर्मवित्तमः ।
रक्षांस्युपावधीत्तत्र पन्थानं चाप्यविन्दत ॥ ९
ततो वैश्रवणो राजा मुचुकुन्दमगर्हयत् ।
वध्यमानेषु सैन्येषु वचनं चेदमब्रवीत् ॥ १०
धनद उवाच ।
बलवन्तस्त्वया पूर्वं राजानः सपुरोहिताः ।
न चैवं समवर्तन्त यथा त्वमिव वर्तसे ॥ ११
ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः ।
आगम्य पर्युपासन्ते मामीशं सुखदुःखयोः ॥१२
यद्यस्ति बाहुवीर्यं ते तद्दर्शयितुमर्हसि ।
किं ब्राह्मणबलेन त्वमतिमात्रं प्रवर्तसे ॥ १३
मुचुकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरम् ।
न्यायपूर्वमसंलब्धमसंभ्रान्तमिदं वचः ॥ १४
ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा ।
पृथग्बलविधानं च तल्लोकं परिपालयेत् ॥ १५
तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् ।
अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् ॥ १६

---

ोहित लब्ध्वा आत्मानं राज्येऽभिषिञ्चेत् ॥ ६७ ॥ एवं विशेषेण पूज्या वै ब्राह्मणाः सदा इति झ. पाठः ॥ ७० ॥ प्ततितमोऽध्यायः ॥ ७३ ॥

असृजदतिसृष्टवान् । आज्ञापितवानिति यावत् ॥ ७ ॥ त्वया लत्तः ॥ ११ ॥

तस्मात्संश्रुत्य कर्तव्यं प्रजानां परिपालनम् ।
तथा च मां प्रवर्तन्तं किं गर्हस्यलकाधिप ॥ १७
ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम् ।
नाहं राज्यमनिर्दिष्टं कस्मैचिद्विदधाम्युत ॥ १८
नाच्छिन्दे राज्यनिर्दिष्टमिति जानीहि पार्थिव ।
प्रशाधि पृथिवीं कृत्स्नां मद्दत्तामखिलामिमाम् ।
[एवमुक्तः प्रत्युवाच मुचुकुन्दो महीपतिः ॥] १९
नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव ।
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ॥ २०
भीष्म उवाच ।
ततो वैश्रवणो राजा विस्मयं परमं ययौ ।
क्षत्रधर्मे स्थितं दृष्ट्वा मुचुकुन्दमरिन्दमम् ॥ २१
ततो राजा मुचुकुन्दः सोऽन्वशासद्वसुंधराम् ।
बाहुवीर्यार्जितां सम्यक्क्षत्रधर्ममनुव्रतः ॥ २२
एवं यो ब्रह्मविद्राजा ब्रह्मपूर्वं प्रवर्तते ।
स भुङ्क्ते विजितामुर्वीं यशश्च महदश्नुते ॥ २३
नित्योदकी ब्राह्मणः स्यान्नित्यशस्त्रश्च क्षत्रियः ।
तयोर्हि सर्वमायत्तं यत्किंचिज्जगतीगतम् ॥ २४
'यशश्च तेजश्च महीं च कृत्स्नां
प्राप्नोति राजन्विपुलां च कीर्तिम् ।
प्रधानधर्मं नृपते नियच्छ
तथा च धर्मस्य चतुर्थमंशम् ॥' २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

राज्यस्वीकारे अधर्माशङ्किनं युधिष्ठिरं प्रति भीष्मेण तस्य धार्मिकत्वसमर्थनेन तद्विधानम् ॥ १ ॥

युधिष्ठिर उवाच ।
यया वृत्त्या महीपालो विवर्धयति मानवान् ।
पुण्यांश्च लोकाञ्जयति तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
दानशीलो भवेद्राजा यज्ञशीलश्च भारत ।
उपवासतपःशीलः प्रजानां पालने रतः ॥ २
सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयन् ।
उत्थानेन प्रदानेन पूजयेच्चापि धार्मिकान् ॥ ३
राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते ।
यद्यदाचरते राजा तत्प्रजानां स रोचते ॥ ४
नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु ।
निहन्यात्सर्वतो दस्यून्न राज्ञो दस्युषु क्षमा ॥ ५
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भागं च विन्दति ॥ ६
यदधीते यद्ददाति यज्जुहोति यदर्चति ।
राजा चतुर्थभाक्तस्य प्रजा धर्मेण पालयन् ॥ ७
यद्राष्ट्रेऽकुशलं किंचिद्राज्ञो रक्षयतः प्रजाः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ ८
अप्याहुः सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
कर्मणा पृथिवीपाल नृशंसोऽनृतवागपि ॥ ९
तादृशात्किल्बिषाद्राजा शृणु येन प्रमुच्यते ।
प्रत्याहर्तुमशक्यं स्याद्धनं चोरैर्हृतं यदि ।
तत्स्वकोशात्प्रदेयं स्यादशक्तेनोपजीवतः ॥ १०
सर्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणा यथा ।
न स्थेयं विषये तेन योऽपकुर्याद्द्विजातिषु ॥ ११
ब्रह्मस्वे रक्ष्यमाणे तु सर्वं भवति रक्षितम् ।
तेषां प्रसादे निर्वृत्ते कृतकृत्यो भवेन्नृपः ॥ १२
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ।
नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् ॥ १३
न हि कामात्मना राज्ञा सततं शठबुद्धिना ।
नृशंसेनातिलुब्धेन शक्यं पालयितुं प्रजाः ॥ १४
युधिष्ठिर उवाच ।
नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम् ।
धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते ॥ १५

निष्कसुवर्णत्वर्थः ॥ २५ ॥ चतुःसप्ततितमोऽध्यायः ॥७४॥
न कस्यचित्क्षमेदिति ञ. पाठः ॥ ५ ॥ यदधीते ब्राह्मणादिः ॥ ७ ॥ अशक्तेन राज्ञा उपजीवतः धनोपजीविनो वणिजादेः ॥ १० ॥

तदलं मम राज्येन यत्र धर्मो न विद्यते ।
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया ॥ १६
तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः ।
धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः ॥ १७
भीष्म उवाच ।
वेदाहं तव या बुद्धिरानृशंस्येऽगुणैव सा ।
न च नित्यानृशंसेन शक्यं राज्यमुपासितुम् ॥ १८
सदैव त्वां मृदुप्रज्ञमत्यार्यमतिधार्मिकम् ।
क्लीबं धर्मघृणायुक्तं न लोको बहुमन्यते ॥ १९
राजधर्ममवेक्षस्व पितृपैतामहोचितम् ।
नैतद्राज्ञामथो वृत्तं यथा त्वं स्थातुमिच्छसि ॥ २०
न हि वैक्लव्यसंसृष्टमानृशंस्यमिहास्थितः ।
प्रजापालनसंभूतं प्राप्तो धर्मफलं ह्यसि ॥ २१
न ह्येतामाशिषं पाण्डुर्न च कुन्त्यभ्यभाषत ।
'विचित्रवीर्यो धर्मात्मा चित्रवीर्यो नराधिपः। २२
शन्तनुश्च महीपालः सर्वक्षत्रस्य पूजितः ।'
तवैतां प्राज्ञतां तात यथा चरसि मेधया ॥ २३
शौर्यं बलं च सत्यं च पिता तव सदाऽब्रवीत् ।
महत्त्वं बलमौदार्यं भवतः कुन्त्ययाचत ॥ २४
नित्यं स्वाहा स्वधा नित्यं चोभे मानुषदैवते ।
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ॥ २५
दानमध्ययनं यज्ञं प्रजानां परिपालनम् ।
धर्म्यमेतदधर्म्यं वा जन्मनैवाभ्यजायथाः ॥ २६
कुले धुरि च युक्तानां वहतां भारमीदृशम् ।
सीदतामपि कौन्तेय कीर्तिर्न परिहीयते ॥ २७

समन्ततो विनीतो यो वहत्यस्खलितो हि सः ।
निर्दोषकर्मवचनात्सिद्धिः कर्मण एव सा ॥ २८
नैकान्ते विनिपातेऽपि विहरेदिह कश्चन ।
धर्मी गृही वा राजा वा ब्रह्मचार्यथवा द्विजः ॥ २९
अल्पं हि सारभूयिष्ठं यत्कर्मोदारमेव तत् ।
कृतमेवाकृताच्छ्रेयो न पापीयोऽस्य कर्मणः ॥ ३०
यदा कुलीनो धर्मज्ञः प्राप्नोत्यैश्वर्यमुत्तमम् ।
योगक्षेमस्तदा राज्ञः कुशलायैव कल्पते ॥ ३१
दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा ।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥ ३२
यं हि वैद्याः कुले जाता ह्यवृत्तिभयपीडिताः ।
प्राप्य तृप्ताः प्रतिष्ठन्ति धर्मः कोऽभ्यधिकस्ततः ३३
युधिष्ठिर उवाच ।
किं न्वतः परमं स्वर्ग्यं का ततः प्रीतिरुत्तमा ।
किं ततः परमैश्वर्यं ब्रूहि मे यदि पश्यसि ॥ ३४
भीष्म उवाच ।
यस्मिन्भयार्दिताः सन्तः क्षेमं विन्दन्त्यपि क्षणम् ।
स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ॥ ३५
त्वमेव प्रीतिमांस्तस्मात्कुरूणां कुरुसत्तम ।
भव राजा जय स्वर्गं सतो रक्षाऽसतो जहि ॥ ३६
अनु त्वां तात जीवन्तु सुहृदः साधुभिः सह ।
पर्जन्यमिव भूतानि स्वादुद्रुममिव द्विजाः ॥ ३७
धृष्टं शूरं प्रहर्तारमनृशंसं जितेन्द्रियम् ।
वत्सलं संविभक्तारमुपजीवन्तु बान्धवाः ॥ ३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणानां निषिद्धकर्मकथनम् राजधर्मकथनं च ॥ १ ॥

युधिष्ठिर उवाच ।
स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ॥ १

भीष्म उवाच ।
विद्यालक्षणसंपन्नाः सर्वत्राम्नायदर्शिनः ।
एते ब्रह्मसमा राजन्ब्राह्मणाः परिकीर्तिताः ॥ २

---

प्रतिगृह्णीयाद्वशीकुर्यात् ॥ ३२ ॥

पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

ऋत्विगाचार्यसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन्ब्राह्मणानां भवन्त्युत ॥ ३
[illegible]विप्राणां च वडवानां च पोषकाः ।
वृत्त्यर्थं प्रतिपद्यन्ते तान्वैश्यान्संप्रचक्षते ॥ ४
ऐश्वर्यकामा ये चापि मामिपा वाऽपि भारत ।
निग्रहानुग्रहरतांस्तान्द्विजान्क्षत्रियान्विदुः ॥ ५
अश्वारोहा गजारोहा रथिनोऽथ पदातयः ।
एते वैश्यसमा राजन्ब्राह्मणानां भवन्त्युत ॥ ६
जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
एते शूद्रसमा राजन्ब्राह्मणानां भवन्त्युत ॥ ७
अश्रोत्रियाः सर्व एते सर्वे चानाहिताग्नयः ।
तान्सर्वान्धार्मिको राजा बलिं विष्टिं च कारयेत् ८
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः ।
एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः ॥ ९
[ऋत्विक्पुरोहितो मन्त्री दूतो वार्तानुकर्षकः ।
एते क्षत्रसमा राजन्ब्राह्मणानां भवन्त्युत ॥] १०
'म्लेच्छदेशाश्च ये केचित्पापैरध्युषिता नरैः ।
गत्वा तु ब्राह्मणस्तांश्च चण्डालः प्रेत्य चेह च ॥११
व्रात्यान्म्लेच्छांश्च शूद्रांश्च याजयित्वा द्विजाधमः ।
अकीर्तिमिह संप्राप्य नरकं प्रतिपद्यते ॥ १२
महावृन्दसमुद्राभ्यां पर्यायेणैकविंशतिम् ।
ब्राह्मणो ऋग्यजुःसाम्नां मूढः कृत्वा तु विप्लवम् १३
कल्पमेकं कृमिस्थोऽथ नानाविष्ठासु जायते ।
व्रात्ये म्लेच्छे तथा शूद्रे तस्करे पतितेऽशुचौ ॥१४
कुदेशे च कुरूपे च ब्रह्मघ्ने वृषलीपतौ ।
अनर्थानेषु सर्वत्र भुञ्जान यत्र तत्र वा ॥ १५
बालस्त्रीवृद्धहन्तुश्च मातापित्रोर्गुरोस्तथा ।
मित्रद्रुहि कृतघ्ने च गोघ्ने चैव कथंचन ॥ १६
पुत्रघातिनि शत्रौ च न मन्त्राद्याजयेद्द्विजः ।
स तेषां विप्लवः प्रोक्तो मन्त्रविद्भिः सनातनैः ॥१७
यदि विप्रो विदेशस्थस्तीर्थयात्रां गतोऽपि वा ।
यदि भीतः प्रपन्नो वा कुदेशं शौचवर्जितम् ॥ १८
सुसंयतः शुचिर्भूत्वा मन्त्रानुच्चारयेद्द्विजः ।
आर्तश्चोच्चारयेन्मन्त्रमार्तत्राणपरोऽथवा ।
हीनेष्वपि प्रयुञ्जानो नासौ विप्लावकः स्मृतः ॥१९
क्रूरकर्मा विकर्मा वा कर्मभिर्वञ्चितोऽथवा ।
तत्त्ववित्तरते पापं शीलवान्संयतेन्द्रियः ॥' २०
एतेभ्यो बलिमादद्याद्धीनकोशो महीपतिः ।
ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ॥ २१
अब्राह्मणानां वित्तस्य स्वामी राजेति नः श्रुतिः ।
ब्राह्मणानां च येकेचिद्विकर्मस्था इति श्रुतिः ।
'प्रागुक्तांश्चाप्यनुक्तांश्च सर्वांस्तान्दापयेत्करान्'२२
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथंचन ।
नियम्याः संविभज्याश्च धर्मानुग्रहकाम्यया ॥२३
यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः ॥ २४
अवृत्त्या यो भवेत्स्तेनो वेदवित्स्नातकस्तथा ।
राजन्स राज्ञा भर्तव्य इति वेदविदो विदुः ॥२५
स चेन्नापि निवर्तेत कृतवृत्तिः परन्तप ।
ततो निर्वासनीयः स्यात्तस्माद्देशात्सबान्धवः ॥२६
'यज्ञः श्रुतमपैशुन्यमहिंसाऽतिथिपूजनम् ।
दमः सत्यं तपो दानमेतद्ब्राह्मणलक्षणम् ॥' २७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

भीष्मेण युधिष्ठिरंप्रति केकयराजोपाख्यानकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
केषां प्रभवते राजा वित्तस्य भरतर्षभ ।
कया च वृत्त्या वर्तेत तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।

---

ऋग्यजुःसामसंपन्नाः इति झ. पाठः ॥ ३ ॥ जन्मकर्म जन्मोचितकर्म तेन विहीनाः ॥ ७ ॥ बलिं करदानम् । विष्टि [illegible] ॥ ८ ॥ आह्वायका धर्माधिकारिणः । देवलका वेतनेन देवपूजाकर्तारः । महापथिकः समुद्रे नौयानेन गच्छन् । यद्वा महापथि शुल्कग्राहकः ॥ ९ ॥ षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥ २
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथंचन ।
इति राज्ञां पुरावृत्तमभिजल्पन्ति साधवः ॥ ३
यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते किल्बिषं नृप ॥ ४
अभिशस्तमिवात्मानं मन्यन्ते तेन कर्मणा ।
तस्माद्राजर्षयः सर्वे ब्राह्मणानन्वपालयन् ॥ ५
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं केकयराजेन ह्रियमाणेन रक्षसा ॥ ६
केकयानामधिपतिं रक्षो जग्राह दारुणम् ।
स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम् ॥ ७
राजोवाच ।
न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्नायज्वा मा ममान्तरमाविशः ॥ ८
न च मे ब्राह्मणोऽविद्वान्नाव्रती नाप्यसोमपः ।
द्विजातिर्विषये मह्यं मा ममान्तरमाविशः ॥ ९
नानाप्तदक्षिणैर्यज्ञैर्यजन्ते विषये मम ।
नाधीते चाव्रती कश्चिन्मा ममान्तरमाविशः ॥ १०
अध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति च ।
ददति प्रतिगृह्णन्ति षट्सु कर्मस्ववस्थिताः ॥ ११
पूजिताः संविभक्ताश्च मृदवः सत्यवादिनः ।
ब्राह्मणा मे स्वकर्मस्था मा ममान्तरमाविशः ॥ १२
न याचन्ते प्रयच्छन्ति सत्यधर्मविशारदाः ।
नाध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति न ॥ १३
ब्राह्मणान्परिरक्षन्ति सङ्ग्रामेष्वपलायिनः ।
क्षत्रिया मे स्वकर्मस्था मा ममान्तरमाविशः ॥ १४
कृषिगोरक्षवाणिज्यमुपजीवन्त्यमायया ।
अप्रमत्ताः क्रियावन्तः सुव्रताः सत्यवादिनः ॥ १५
संविभागं दमं शौचं सौहृदं च व्यपाश्रिताः ।
मम वैश्याः स्वकर्मस्था मा ममान्तरमाविशः ॥ १६
त्रीन्वर्णाननुपतिष्ठन्ते यथावदनसूयकाः ।
मम शूद्राः स्वकर्मस्था मा ममान्तरमाविशः ॥ १७

मामकान्तरमाविभः इति ट. ड. थ. पाठः । मामकान्तरमाविशः इति ञ. पाठः ॥ ८ ॥

कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
संविभक्ताऽस्मि सर्वेषां मा ममान्तरमाविशः ॥ १८
कुलानुरूपधर्माणां प्रस्थितानां यथाविधि ।
अव्युच्छेत्ताऽस्मि सर्वेषां मा ममान्तरमाविशः ॥ १९
तपस्विनो मे विषये पूजिताः परिपालिताः ।
संविभक्ताश्च सत्कृत्य मा ममान्तरमाविशः ॥ २०
नासंविभज्य भोक्ताऽस्मि न विशामि परस्त्रियम् ।
स्वतन्त्रो जातु न क्रीडे मा ममान्तरमाविशः ॥ २१
नाब्रह्मचारी भिक्षावान्भिक्षुर्वा ब्रह्मचर्यवान् ।
अनृत्विजा हुतं नास्ति मा ममान्तरमाविशः ॥ २२
'कृतं राज्यं मया सर्वं राज्यस्थेनापि कार्यवत् ।
नाहं व्युत्क्रामितः सत्यान्मा ममान्तरमाविशः ॥'
नावजानाम्यहं वैद्यान्न वृद्धान्न तपस्विनः ।
राष्ट्रे स्वपति जागर्मि मा ममान्तरमाविशः ॥ २४
'शुक्लकर्मास्मि सर्वत्र न दुर्गतिभयं मम ।
धर्मचारी गृहस्थश्च मा ममान्तरमाविशः ॥' २५
वेदाध्ययनसंपन्नस्तपस्वी सत्यधर्मवित् ।
स्वामी सर्वस्य राष्ट्रस्य धीमान्मम पुरोहितः ॥ २६
दानेन दिव्यानभिवाञ्छामि लोकान्
सत्येनाथ ब्राह्मणानां च गुप्त्या ।
शुश्रूषया चापि गुरूनुपैमि
न मे भयं विद्यते राक्षसेभ्यः ॥ २७
न मे राष्ट्रे विधवा ब्रह्मबन्धु-
र्न ब्राह्मणः कितवो नोत चोरः ।
नायाज्ययाजी न च पापकर्मा
न मे भयं विद्यते राक्षसेभ्यः ॥ २८
न मे शस्त्रैरनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम् ।
धर्मार्थं युध्यमानस्य मा ममान्तरमाविशः ॥ २९
गोब्राह्मणेभ्यो यज्ञेभ्यो नित्यं स्वस्त्ययनं मम ।
आशासते जना राष्ट्रे मा ममान्तरमाविशः ॥ ३०
राक्षस उवाच ।
'नारीणां व्यभिचाराच्च अन्यायाच्च महीक्षिताम् ।
विप्राणां कर्मदोषाच्च प्रजानां जायते भयम् ॥ ३१

न पापकारी न च पापवक्ता इति ट. ड. थ. द. पाठः ॥ २७ ॥
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

अवृष्टिमार्गको दोषः सततं क्षुद्भयानि च ।
विग्रहश्च सदा तस्मिन्देशे भवति दारुणः ॥ ३२
यक्षरक्षःपिशाचेभ्यो नासुरेभ्यः कथंचन ।
भयमुत्पद्यते तत्र यत्र विप्राः सुसंयताः ॥ ३३
गन्धर्वाप्सरसः सिद्धाः पन्नगाश्च सरीसृपाः ।
मानवान्न जिघांसन्ति यत्र नार्यः पतिव्रताः ॥३४
ब्राह्मणाः क्षत्रिया वैश्या यत्र शूद्राश्च धार्मिकाः ।
नाऽनावृष्टिभयं तत्र न दुर्भिक्षं न विभ्रमः ॥ ३५
धार्मिको यत्र भूपालो न तत्रास्ति पराभवः ।
उत्पाता न च दृश्यन्ते न दिव्या न च मानुषाः ३६
यस्मात्सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे ।
तस्मात्प्राप्नुहि कैकेय गृहं स्वस्ति व्रजाम्यहम् ॥ ३७
येषां गोब्राह्मणा रक्ष्याः प्रजा रक्ष्याश्च केकय ।
न रक्षोभ्यो भयं तेषां कुत एव तु पातकम् ॥ ३८
येषां पुरोगमा विप्रा येषां ब्रह्म परं बलम् ।
सुरक्षितास्तथा विप्रास्ते वै स्वर्गजितो नृपाः ॥ ३९
भीष्म उवाच ।
तस्माद्द्विजातीन्रक्षेत ते हि रक्षन्ति रक्षिताः ।
आशीरेषां भवेद्राजन्राज्ञां सम्यक्प्रवर्तताम् ॥ ४०
तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः ।
नियम्याः संविभज्याश्च प्रजानुग्रहकारणात् ॥४१
एवं यो वर्तते राजा पौरजानपदेष्विह ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणादीनामापद्धर्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
व्याख्याता राजधर्मेण वृत्तिरापत्सु भारत ।
कथंचिद्वैश्यधर्मेण जीवेद्वा ब्राह्मणो न वा ॥ १
भीष्म उवाच ।
अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्तयेत् ।
कृषिं गोरक्ष्यमास्थाय व्यसने वृत्तिसंक्षये ॥ २
युधिष्ठिर उवाच ।
कानि पण्यानि विक्रीणन्स्वर्गलोकान्न हीयते ।
ब्राह्मणो वैश्यधर्मेण वर्तयन्भरतर्षभ ॥ ३
भीष्म उवाच ।
सुरालवणमित्येनत्तिलान्केसरिणः पशून् ।
वृषभान्मधु मांसं च कृतान्नं च युधिष्ठिर ॥ ४
सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत् ।
एतेषां विक्रयात्तात ब्राह्मणो नरके पतेत् ॥ ५
अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथंचन ॥ ६
पक्वेनामस्य निमयं न प्रशंसन्ति साधवः ।
निमयेत्पक्वमामेन भोजनार्थाय भारत ॥ ७
वयं सिद्धमशिष्यामो भवान्साधयतामिदम् ।
एवं संवीक्ष्य समयं नाधर्मोऽस्ति कथंचन ॥ ८
अत्र ते वर्तयिष्यामि यथा धर्मः सनातनः ।
व्यवहारप्रवृत्तानां तन्निबोध युधिष्ठिर ॥ ९
भवतेऽहं ददानीदं भवानेतत्प्रयच्छतु ।
उचितो वर्तते धर्मो न बलात्संप्रवर्तते ॥ १०
इत्येवं संप्रवर्तन्ते व्यवहाराः पुरातनः ।
ऋषीणामितरेषां च साधु चैतदसंशयम् ॥ ११
युधिष्ठिर उवाच ।
अथ तात यदा सर्वाः शस्त्रमाददते प्रजाः ।
व्युत्क्रमन्ते स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम् ॥१२
तदा त्राता तु को नु स्यात्को धर्मः किं परायणम् ।

केसरिणः अश्वान् । पशून्गोजाविमहिषादीन् । कृतान्नं पक्वान्नम् ॥ ४ ॥ विराट् अन्नम् ॥ ६ ॥ पक्वेनामस्य विनिमये पक्वदो दुष्यति नत्वामद इत्यर्थः ॥ ७ ॥ इदमप्यपवदति वयमिति । निमयम् इति झ. पाठः ॥ ८ ॥

तमेव पूजयेयुस्ते प्रीत्या स्वमिव बान्धवम् ।
महद्ध्यधर्मादृष्टं कौरव्य कर्ता सन्मानमर्हति ॥ ४०
किमनडुहा यो न वहेत्किं धेन्वा वाऽप्यदुग्धया ।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाऽप्यरक्षता॥
यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
यथा ह्यदक्षः पुरुषः पथि क्षेत्रं यथोषरम् ॥ ४२
यथा विप्रोऽनधीयानो राजा यश्च न रक्षिता ।
मेघो न वर्षते यश्च सर्व एव निरर्थकाः ॥ ४३
नित्यं यस्तु सतो रक्षेदसतश्च निवर्तयेत् ।
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ॥ ४४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

## एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

भीष्मेण युधिष्ठिरंप्रति ऋत्विग्लक्षणादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
क समर्थाः कथंशीला ऋत्विजः स्युः पितामह ।
कथंविधाश्च राजेन्द्र तद्ब्रूहि वदतां वर ॥ १
भीष्म उवाच ।
प्रतिकर्मपरा राजन्वृत्तिरस्य विधीयते ।
छन्दः सामादि विज्ञाय द्विजानां श्रुतमेव च ॥२
ये त्वेकरतयो नित्यं धीराश्च प्रियवादिनः ।
परस्परस्य सुहृदः समन्तात्समदर्शिनः ॥ ३
आनृशंस्यं सत्यवाक्यमहिंसा दम आर्जवम् ।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ४
'यस्मिन्नेतानि दृश्यन्ते स पुरोहित उच्यते ।'
धीमान्सत्यधृतिर्दान्तो भूतानामविहिंसकः ।
अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः ॥ ५
अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति ।
एते महर्त्विजस्तात सर्वे मान्या यथार्हतः ॥ ६
युधिष्ठिर उवाच ।
यदिदं वेदवचनं दक्षिणासु विधीयते ।
इदं देयमिदं देयं न क्वचिद्व्यवतिष्ठते ॥ ७
देयं प्रतिधनं शास्त्रमापद्धर्मो न शास्त्रतः ।
आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते ॥ ८
श्रद्धामालम्ब्य यष्टव्यमित्येषा वैदिकी श्रुतिः ।
मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ॥ ९
भीष्म उवाच ।
न वेदानां परिभवान्न शाठ्येन न मायया ।
कश्चिन्महदवाप्नोति मा ते भूद्बुद्धिरीदृशी ॥ १०
यज्ञाङ्गं दक्षिणा तात मन्त्राणां परिबृंहणम् ।
न मन्त्रा दक्षिणाहीनास्तारयन्ति कथंचन ॥ ११
शक्तिस्तु पूर्णपात्रेण संमिता नावमा भवेत् ।
अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाबलम् ॥ १२
सोमो राजा ब्राह्मणानामित्येषा वैदिकी श्रुतिः ।
तं च विक्रेतुमिच्छन्ति न तथा वृत्तिरिष्यते ॥ १३
तेन क्रीतेन धर्मेण ततो यज्ञः प्रतायते ।
इत्येवं धर्ममाख्यातमृषिभिर्धर्मकोविदैः ॥ १४
पुमान्यज्ञश्च सोमश्च न्यायवृत्तो यदा भवेत् ।
अन्यायवृत्तः पुरुषो न परस्य न चात्मनः ॥ १५
शरीरं यज्ञपात्राणि इत्येषा श्रूयते श्रुतिः ।
तानि सम्यक्प्रणीतानि ब्राह्मणानां महात्मनाम् १६
तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः ।
तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु ॥ १७
अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।

---

किं तैर्येऽनडुहो नोह्याः इति झ. पाठः ॥ ४१ ॥ यदा ह्यनर्थः षण्ढो वा पार्थ क्षेत्रं इति झ. पाठः ॥ ४२ ॥ अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

राज्ञां शान्तिकपौष्टिकादिकर्मप्रयोगशुद्ध्याख्य प्रतिकर्म ऋत्विग्भिः कर्तव्यमित्यर्थः ॥ २ ॥ त्रिभिः श्रुतवृत्तवंशैः । शुक्लैर्निर्दोषैः ॥ ५ ॥ इदं देयमिदं देयमिति यदिदं वेदवचनमिति इतिशब्दाध्याहारेण योज्यम् । व्यवतिष्ठते व्यवस्थां प्राप्नोति । अल्पेऽप्यपच्छेदनिमित्ते सर्वस्वदक्षिणाविधानादुत्तरक्रतुकलापलोपप्राप्तेः ॥ ७ ॥ गोःस्थाने चरुमात्रदानरूपोऽनुकल्पो मिथ्याचारस्तदुपेतो यज्ञः श्रद्धयापि न संपूर्यत इत्यर्थः ॥ ९ ॥

एतं मे संशयं ब्रूहि विस्तरेण पितामह ॥ १३
भीष्म उवाच ।
दानेन तपसा यज्ञैरद्रोहेण दमेन च ।
ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः ॥ १४
तेषां ये वेदबलिनस्त उत्थाय समन्ततः ।
राज्ञो बलं वर्धयेयुर्महेन्द्रस्येव देवताः ॥ १५
राज्ञो हि क्षीयमाणस्य ब्रह्मैवाहुः परायणम् ।
तस्माद्ब्रह्मबलेनैव समुत्थेयं विजानता ॥ १६
यदा तु विजयी राजा क्षेमं राष्ट्रेऽभिसन्दधेत् ।
तदा वर्णा यथाधर्मं निविशेयुः स्वकर्मसु ॥ १७
उन्मर्यादे प्रवृत्ते तु दस्युभिः संकरे कृते ।
सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर ॥ १८
युधिष्ठिर उवाच ।
अथ चेत्सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणं प्रति ।
कस्तत्र ब्राह्मणांस्त्राता को धर्मः किं परायणम् ॥ १९
भीष्म उवाच ।
तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च ।
अमायया मायया च नियन्तव्यं तदा भवेत् ॥२०
क्षत्रियस्यातिवृत्तस्य ब्राह्मणेषु विशेषतः ।
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ २१
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ २२
यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिहन्ति च ।
क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः ॥ २३
तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर ।
समुदीर्णान्यजेयानि तेजांसि च बलानि च ॥ २४
युधिष्ठिर उवाच ।
ब्रह्मवीर्ये मृदूभूते क्षत्रवीर्ये च दुर्बले ।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान्प्रति भारत ॥ २५
ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः ।
'ब्राह्मणान्परिरक्षन्ति तेषां लोका भवन्ति के ॥ २६
भीष्म उवाच ।
ब्राह्मणान्परिरक्षन्तो धर्ममात्मानमेव च ।
मनस्विनो मन्युमन्तः पुण्यँल्लोकान्व्रजन्त्यमी ।
ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते ॥ २७
अतिस्विष्टमधीतानां लोकानतितपस्विनाम् ।
अनाशकाग्न्याहितानां शूरा यान्ति परां गतिम् २८
ब्राह्मणस्त्रिषु वर्णेषु शस्त्रं गृह्णन्न दुष्यति ।
एष एवात्मनस्त्यागो नान्यं धर्मं विदुर्जनाः ॥ २९
तेभ्यो नमश्च भद्रं च ये शरीराणि जुह्वति ।
ब्रह्मद्विषो जिघांसन्तस्तेषां नोऽस्तु सलोकता ॥३०
ब्रह्मलोकजितः स्वर्ग्यान्वीरांस्तान्मनुरब्रवीत् ।
यथाऽश्वमेधावभृथे स्नाताः पूता भवन्त्युत ।
दुष्कृतः सुकृतश्चैव तथा शस्त्रहता रणे ॥ ३१
भवत्यधर्मो धर्मो हि धर्मोऽधर्मो भवत्युत ।
कारणाद्देशकालस्य देशः कालः स तादृशः ॥ ३२
मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् ।
धर्म्याः पापानि कुर्वाणा गच्छन्ति परमां गतिम् ३३
ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति ।
आत्मत्राणे दस्युदोषे सर्वस्वहरणे तथा ॥ ३४
युधिष्ठिर उवाच ।
अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसङ्करे ।
संप्रमूढेषु वर्णेषु यदन्योऽभिभवेद्बली ॥ ३५
ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
दस्युभ्यो यः प्रजा रक्षेद्दण्डं धर्मेण धारयेत् ॥ ३६
कार्यं कुर्यान्न वा कुर्यात्स वार्यो वा भवेन्न वा ।
भीष्म उवाच ।
न स शस्त्रं गृहीतव्यमन्यत्र क्षत्रबन्धुतः ॥ ३७
अपारे यो भवेत्पारमप्लवे यः प्लवो भवेत् ।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति ॥ ३८
यमाश्रित्य नरा राजन्वर्तयेयुर्यथासुखम् ।
अनाथास्तप्यमानाश्च दस्युभिः परिपीडिताः ॥३९

कस्तस्य ब्राह्मणस्त्रातेति झ. पाठः ॥ १९ ॥ एवमेवात्मनस्त्यागान्नान्यं इति झ. पाठः ॥ २९ ॥ नोऽस्माकम् ॥ ३० ॥ मैत्रा उत्तङ्कपराशरादयः । क्रूराणि सर्पराक्षससत्रादीनि । धर्म्या धर्मादनपेताः क्षत्रियाः । पापानि परराष्ट्रावमर्दादीनि । अधर्मस्य धर्मत्वे उदाहरणद्वयमुक्तम् । इदमेवाऽहिंसाख्यधर्माश्रयेऽधर्मरूपमपि भवतीति ज्ञेयम् ॥ ३३ ॥

एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १८
अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम् ।
अव्यवस्था च सर्वत्र तद्वै नाशनमात्मनः ॥ १९
निबोध दशहोतॄणां विधानं पार्थ यादृशम् ।
चित्तिः स्रुक् चित्तमाज्यं च पवित्रं ज्ञानमुत्तमम् ।
'न शाठ्यं न च जिह्मत्वं कालो देशश्च ते दश ॥'२०
सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् ।
एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति ॥२१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ॥ ८० ॥

युधिष्ठिरंप्रति भीष्मेण मित्रामित्रलक्षणकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यद्प्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं पितामह ॥ १
किंशीलः किंसमाचारो राज्ञो यः सचिवो भवेत् ।
कीदृशे विश्वसेद्राजा कीदृशे न च विश्वसेत् ॥ २
भीष्म उवाच ।
चतुर्विधानि मित्राणि राज्ञां राजन्भवन्त्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥ ३
धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ४
यो यस्यार्थो न रोचेत न तं तस्य प्रकाशयेत् ।
'मित्राणां प्रकृतिर्नास्ति त्वमित्राणां च भारत ।
उपकाराद्भवेन्मित्रमपकाराद्भवेदरिः ॥ ५
यस्यैव हि मनुष्यस्य नरो मरणमृच्छति ।
तस्य पर्यागते काले पुनर्जीवितुमिच्छति ॥ ६
धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ।
चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथाऽपरौ ।
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ॥७
न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ।
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥ ८
असाधुः साधुतामेति साधुर्भवति दारुणः ।
अरिश्च मित्रं भवति मित्रं चापि प्रदुष्यति ॥ ९
अनित्यचित्तः पुरुषस्तस्मिन्को जातु विश्वसेत् ।
तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ॥१०
एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः ।
अविश्वासश्च सर्वत्र मृत्युनापि विशिष्यते ॥ ११
अकालमृत्युर्विश्वासो विश्वसन्हि विपद्यते ।
यस्मिन्करोति विश्वासमिच्छतस्तस्य जीवति ॥१२
तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित् ।
एषा नीतिगतिस्तात लक्ष्मीश्चैषा सनातनी ॥ १३
यं मन्येत ममाभावादिममर्थागमः स्पृशेत् ।
नित्यं तस्माच्छङ्कितव्यममित्रं तं विदुर्बुधाः ॥ १४
यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति ।
न तत्रानिच्छतस्तस्य भिद्येरन्सर्वसेतवः ॥ १५
तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति ।
यमेवंलक्षणं विद्यात्तममित्रं विदुर्बुधाः ॥ १६
यस्तु वृद्ध्या न तप्येत क्षये दीनतरो भवेत् ।
एतदुत्तममित्रस्य निमित्तमभिचक्षते ॥ १७
यन्मन्येत ममाभावादस्याभावो भवेदिति ।
तस्मिन्कुर्वीत विश्वासं यथा पितरि वै तथा ॥१८
तं शक्त्या वर्तमानं च सर्वतः परिबृंहयेत् ।
नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु ॥ १९

---

जिह्मं शाठ्यम् । आर्जवं अवक्रत्वम् ॥ २१ ॥ एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

सहार्थः अयं शत्रुरुभाभ्यामुन्मूलनीयः अस्य राज्यं उभाभ्यां विभज्य ग्राह्यमिति पणपूर्वं कृतः । भजमानः पितृपैतामहक्रमागतः सहजः मातृष्वस्रीयादिः कृत्रिमो धनादिना आवर्जितः ॥ ३ ॥ सर्वे पञ्चापि प्रत्यक्षं कार्यमुद्दिश्य मन्त्रितमपि दुष्टामात्यनिग्रहादिकं कार्यं पञ्चानामपि समक्षं न कुर्यादित्यर्थः ॥ ७ ॥ ममाभावात् मयि मृते अर्थागमः इमं स्पृशेत् इति यं मन्येत तस्माच्छङ्कितव्यमिति संबन्धः ॥ १४ ॥ यत् मित्रं कर्तुं ॥ १८ ॥

क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम् ।
ये यस्य क्षयमिच्छन्ति ते तस्य रिपवः स्मृताः॥२०
व्यसनान्नित्यभीतो यः समृद्ध्या यो न दुष्यति ।
यत्स्यादेवंविधं मित्रं तदात्मसममुच्यते ॥ २१
रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ।
कुलीनः शीलसंपन्नः स ते स्यात्प्रत्यनन्तरः ॥ २२
मेधावी स्मृतिमान्दक्षः प्रकृत्या चानृशंस्यवान् ।
यो मानितोऽमानितो वा न सन्तुष्येत्कथंचन॥२३
ऋत्विग्वा यदि वाऽऽचार्यःसखा वाऽत्यंतसत्कृतः ।
गृहे वसेदमात्यस्ते स स्यात्परमपूजितः ॥ २४
संविद्याः परमं मित्रं प्रकृतिं चार्थधर्मयोः ।
विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ॥ २५
नैव द्वौ न त्रयः कार्या न मृष्येरन्परस्परम् ।
एकार्थे हेतुभूतानां भेदो भवति सर्वदा ॥ २६
कीर्तिप्रधानो यस्तु स्याद्यश्च स्यात्समये स्थितः ।
समर्थान्यश्च न द्वेष्टि नानर्थान्कुरुते च यः ॥२७
यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत् ।
दक्षः पर्याप्तवचनः स ते स्यात्प्रत्यनन्तरः ॥ २८
कुलीनः शीलसंपन्नस्तितिक्षुरविकत्थनः ।
शूरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः ॥ २९
एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः ।
पूजिताः संविभक्ताश्च सुसहायाः स्वनुष्ठिताः॥३०
कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु ।
युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्त्युत ॥ ३१
एते कर्माणि कुर्वन्ति स्पर्धमाना मिथः सदा ।
अनुतिष्ठन्ति चैवार्थमाचक्षाणाः परस्परम् ॥ ३२
ज्ञातिभ्यो विभियाश्चैव मृत्योरिव यतस्तदा ।
उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥ ३३
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ॥ ३४
अज्ञातयोऽप्यसुखदा ज्ञातयोऽपि सुखावहाः ।
अज्ञातिमन्तं पुरुषं परे चाभिभवन्त्युत ॥ ३५
निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम् ।
नान्यो निकारं सहते ज्ञातिर्ज्ञातेः कदाचन ॥३६
आत्मानमेव जानाति निकृतं बान्धवैरपि ।
तेषु सन्ति गुणाश्चैव नैर्गुण्यं चैव लक्ष्यते ॥ ३७
नाज्ञातिरनुगृह्णाति नाज्ञातिर्वृद्धिमश्नुते ।
उभयं ज्ञातिवर्गेषु दृश्यते साध्वसाधु च ॥ ३८
संमानयेत्पूजयेच्च वाचा नित्यं च कर्मणा ।
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिदाचरेत् ॥ ३९
विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा ।
न हि दोषो गुणो वेति निरूप्यस्तेषु दृश्यते ॥ ४०
अस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः ।
अमित्राः संप्रसीदन्ति ततो मित्रं भवन्त्यपि ॥४१
य एवं वर्तते नित्यं ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रे मध्यस्थे चिरं यशसि तिष्ठति ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

भीष्मेण युधिष्ठिरंप्रति कृष्णनारदसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
एवमग्राह्यके तस्मिञ्ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ १

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं वासुदेवस्य महर्षेर्नारदस्य च ॥ २

प्रत्यनन्तरः प्रतिनिधिः प्रधान इतियावत् ॥ २८ ॥ स्वनुष्ठिताः सुष्ठ्वनुष्ठितं कर्तव्यं येषां ते ॥ ३० ॥ कृत्स्नमप्रतिकञ्चुकं यथा स्यात्तथा विनिक्षिप्ता अधिकृताः । प्रतिरूपेष्वनुरूपेषु कर्मस्वायव्ययसंकलनादिषु । कार्येषु पराभिभवादिषु ॥ ३१ ॥ उपराजा समीपवर्ती सामन्तः ॥ ३३ ॥ निकृतस्य लङ्घितस्य ॥ ३६ ॥ बान्धवैः संबन्धिभिर्निकृते कस्मिंश्चित्पुरुषे तज्ज्ञातिः आत्मानमेव निकृतं जानाति । तेषु ज्ञातिषु ॥ ३७ ॥ तथा मित्रीभवन्त्यपीति झ. पाठः ॥ ४१ ॥ अशीतितमोऽध्यायः ॥ ८० ॥

अग्राह्यके वशीकर्तुमशक्ये ॥ १ ॥

वासुदेव उवाच ।
नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम् ।
अपण्डितो वाऽपि सुहृत्पण्डितो वाप्यनात्मवान् ३
स ते सौहृदमास्थाय किंचिद्वक्ष्यामि नारद ।
कृत्स्नां बुद्धिं च ते प्रेक्ष्य संपृच्छे त्रिदिवङ्गम ॥ ४
दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम् ।
अर्धभोक्ताऽस्मि भोगानां वाग्दुरुक्तानि च क्षमे ॥५
अरणीमग्निकामो वा मथ्नाति हृदयं मम ।
वाचा दुरुक्तं देवर्षे तन्मां दहति नित्यदा ॥ ६
बलं सङ्कर्षणे नित्यं सौकुमार्यं पुनर्गदे ।
रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ॥७
अन्ये हि सुमहाभागा बलवन्तो दुरासदाः ।
नित्योत्थानेन संपन्ना नारदान्धकवृष्णयः ॥ ८
यस्य न स्युर्न वै स स्याद्यस्य स्युः कृत्स्नमेव तत् ।
द्वयोरेनं प्रचरतोर्वृणोम्येकतरं न च ॥ ९
स्यातां यस्याहुकाक्रूरौ किं नु दुःखतरं ततः ।
यस्य चापि न तौ स्यातां किं नु दुःखतरं ततः ॥१०
सोऽहं कितवमातेव द्वयोरपि महामुने ।
नैकस्य जयमाशंसे द्वितीयस्य पराजयम् ॥ ११
ममैवं क्लिश्यमानस्य नारदोभयदर्शनात् ।
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा ॥ १२
नारद उवाच ।
आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह ।
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वाऽन्यतः ॥१३
सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा ।
अक्रूरभोजप्रभवा सर्वे ह्येते तदन्वयाः ॥ १४
अर्थहेतोर्हि कामाद्वा वीरबीभत्सयाऽपि वा ।
आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥ १५
कृतमूलमिदानीं तद्राजशब्दसहायवत् ।
न शक्यं पुनरादातुं वान्तमन्नमिव स्वयम् ॥ १६
बभ्रूग्रसेनतो राज्यं नाप्तुं शक्यं कथंचन ।
ज्ञातिभेदभयात्कृष्ण त्वया चापि विशेषतः ॥ १७
तच्च सिध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महाक्षयं व्ययो वा स्याद्विनाशो वा पुनर्भवेत् ॥१८
अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥ १९
वासुदेव उवाच ।
अनायसं मुने शस्त्रं मृदु विद्यामहं कथम् ।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ॥ २०
नारद उवाच ।
शक्त्याऽन्नदानं सततं तितिक्षाऽऽर्जवमार्दवम् ।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥ २१
ज्ञातीनां वक्तुकामानां कटुकानि लघूनि च ।
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च ॥ २२
नामहापुरुषः कश्चिन्नानात्मा नासहायवान् ।
महतीं धुरमादाय समुद्यम्योरसा वहेत् ॥ २३
सर्व एव गुरुं भारमनड्वान्वहते समे ।
दुर्गे प्रतीतः सुगवो भारं वहति दुर्वहम् ॥ २४
भेदाद्विनाशः सङ्घानां सङ्घमुख्योऽसि केशव ।
यथा त्वां प्राप्य नोत्सीदेदयं सङ्घस्तथा कुरु ॥२५
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र धनसन्त्यागाद्गुणः प्राज्ञेऽवतिष्ठते ॥ २६
धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं सदा ।
ज्ञातीनामविनाशः स्याद्यथा कृष्ण तथा कुरु २७
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ।
षाड्गुण्यस्य विधानेन यात्रा यानविधौ तथा ॥२८
यादवाः कुकुरा भोजाः सर्वे चान्धकवृष्णयः ।
त्वय्यायत्ता महाबाहो लोका लोकेश्वराश्च ये ॥ २९
उपासन्ते हि त्वद्बुद्धिमृषयश्चापि माधव ।

---

वाशब्द इवार्थः ॥ ६ ॥ ते यस्य पक्षे न स्युः स नस्यान्नश्येदेव । यस्य पक्षे ते स्युस्तत् तस्मात् कृत्स्नं फलं प्राप्नोतीति शेषः ॥९॥ कितवमातेव कितवयोर्द्यूतकारिणोरेका मातेव ॥ ११ ॥ अन्यतः बाह्याः आपदः स्वकृताः ज्ञातिकृताः अन्तरा आपदः ॥ १३ ॥ एते संकर्षणादयः । तदन्वया अक्रूरान्वयाः ॥ १४ ॥ तत्र हेतुरर्थेति । तत्स्नेहप्रभवा इयं तव आपदिति सार्धः । स्वकर्मजेत्युक्तं तद्विवृणोति आत्मनेति सार्धेन । अन्यत्र आहुके ॥ १५ ॥ ज्ञातिशब्दं सहायवन् इति झ. पाठः । तत्र तत् ऐश्वर्यं कृतमूलं यतो ज्ञातिशब्दं ज्ञातित्वादनुच्छेदनीयमित्यर्थः ॥ १६ ॥ तच्च राज्यस्य पुनरादानं च ॥ १८ ॥ एकाशीतितमोऽध्यायः ॥८१॥

त्वं गुरुः सर्वभूतानां जानीषे त्वं परां गतिम् ॥ ३० ॥ त्वामासाद्य यदुश्रेष्ठमेधन्ते यादवाः सुखम् ॥ ३१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

भीष्मेण युधिष्ठिरंप्रत्यमात्यपरीक्षार्थं कालकवृक्षीयोपाख्यानकथनम् ॥ १ ॥

भीष्म उवाच ।
एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत ।
यः कश्चिद्वेदयेदर्थं राज्ञा रक्ष्यः स मानवः ॥ १
ह्रियमाणममात्येन भृत्यो वा यदि वा भृतः ।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥ २
श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत् ।
अमात्या ह्यपहर्तारो भूयिष्ठं घ्नन्ति भारत ॥ ३
राजकोशस्य गोप्तारं राजकोशविलोपकाः ।
समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ॥ ४
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मुनिः कालकवृक्षीयः कौसल्यं यदुवाच ह ॥ ५
कोसलानामाधिपत्यं संप्राप्तं क्षेमदर्शिनम् ।
मुनिः कालकवृक्षीय आजगामेति नः श्रुतम् ॥ ६
स काकं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनः ।
सर्वं पर्यचरद्युक्तः प्रवृत्त्यर्थी पुनःपुनः ॥ ७
अधीये वायसीं विद्यां शंसन्ति मम वायसाः ।
अनागतमतीतं च यच्च संप्रति वर्तते ॥ ८
इति राष्ट्रे परिपतन्बहुभिः पुरुषैः सह ।
सर्वेषां राजयुक्तानां दुष्कृतं परिदृष्टवान् ॥ ९
स बुद्ध्वा तस्य राष्ट्रस्य व्यवसायं हि सर्वशः ।
राजयुक्तापचारांश्च सर्वान्बुद्ध्वा ततस्ततः ॥ १०
ततः स काकमादाय राजानं द्रष्टुमागमत् ।
सर्वज्ञोऽस्मीति वचनं ब्रुवाणः संशितव्रतः ॥ ११
स स्म कौसल्यमागम्य राजामात्यमलंकृतम् ।
प्राह काकस्य वचनादमुत्रेदं त्वया कृतम् ॥ १२
असौ चासौ च जानीते राजकोशस्त्वया हृतः ।
एवमाख्याति काकोऽयं तच्छीघ्रमनुगम्यताम् १३
तथाऽन्यानपि स प्राह राजकोशहरांस्तदा ।
न चास्य वचनं किंचिदनृतं श्रूयते क्वचित् ॥ १४
तेन विप्रकृताः सर्वे राजयुक्ताः कुरूद्वह ।
तमतिक्रम्य सुप्तं तु निशि काकमपोथयन् ॥ १५
वायसं तु विनिर्भिन्नं दृष्ट्वा बाणेन पञ्जरे ।
पूर्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत् ॥ १६
राजंस्त्वामभयं याचे प्रभुं प्राणधनेश्वरम् ।
अनुज्ञातस्त्वया ब्रूयां वचनं भवतो हितम् ॥ १७
मित्रार्थमभिसंतप्तो भक्त्या सर्वात्मनाऽऽगतः ।
ह्रियन्ते हि महार्थाश्च पुरुषे विक्रमत्यपि ॥ १८
संबुबोधयिषुर्मित्रं सदश्वमिव सारथिः ।
अतिमन्युप्रसक्तो हि प्रसह्य हितकारणात् ॥ १९
तथाविधस्य सुहृदा क्षन्तव्यं संविजानता ।
ऐश्वर्यमिच्छता नित्यं पुरुषेण बुभूषता ॥ २०
तं राजा प्रत्युवाचेदं यत्किंचिन्मां भवान्वदेत् ।
कस्मादहं न क्षमेयमाकाङ्क्षन्नात्मनो हितम् ॥ २१
ब्राह्मण प्रतिजाने ते प्रब्रूहि यदिहेच्छसि ।
करिष्यामि हि ते वाक्यं यन्मां विप्र प्रवक्ष्यसि ॥ २२
मुनिरुवाच ।
विद्वान्नयानपायांश्च भयाख्यातृन्भयानि च ।
भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागतः २३
प्रागेवोक्तं तु दोषोऽयमाचार्यैर्नृपसेवनम् ।
अगतेः कुगतिर्ह्येषा या राज्ञा सहजीविका ॥ २४

---

प्रवृत्त्यर्थी अमात्यदोषदर्शने राजान प्रवर्तयितुकामः ॥ ७ ॥ परिपतन्परितो भ्रमन् । राजयुक्तानां राज्ञा तेषु तेषु कार्येषु नियुक्तानाम् । दुष्कृतं स्वामिद्रव्यापहाररूपं पापम् ॥९॥ राजानमागम्य तत्समक्षमेवामात्यं प्राह । अमुत्रस्थाने त्वया इदं धनचौर्यं कृतमिति ॥ १२ ॥ अनुगम्यतां आलोच्यताम् ॥ १३ ॥ ह्रियन्त इति मित्रं त्वां संबुबोधयिषुरागत इति श्लोकद्वयमेकान्वयम् ॥ १८ ॥ १९ ॥ ज्ञात्वा पापानपापांश्च भृत्यतस्ते भयानि चेति झ. पाठः ॥ २३ ॥

आशीविषैश्च तस्याहुः संगमं यस्य राजभिः ।
बहुमित्राश्च राजानो बह्वमित्रास्तथैव च ॥ २५
तेभ्यः सर्वेभ्य एवाहुर्भयं राजोपजीविनाम् ।
तथाऽस्य राजतो राजन्मुहूर्तादागतं भयम् ॥ २६
नैकान्तेनाप्रमादो हि शक्यः कर्तुं महीपतौ ।
न तु प्रमादः कर्तव्यः कथंचिद्भूतिमिच्छता ॥२७
प्रमादात्स्खलते बुद्धिः स्खलतो नास्ति जीवितम् ।
अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः ॥ २८
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ।
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ २९
दुर्व्याहृताच्छङ्कमानो दुःस्थितादुरनुष्ठितात् ।
दुरासदाद्दुर्वृजिनादिङ्गिताद्ध्यायितादपि ॥ ३०
देवतेव हि सर्वार्थान्कुर्याद्राजा प्रसादितः ।
वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् ॥ ३१
इति राजन्यमः प्राह वर्तते च तथैव तत् ।
अथ भूयांसमेवार्थं करिष्यामि पुनःपुनः ॥ ३२
ददात्यस्मद्विधोऽमात्यो बुद्धिसाहाय्यमापदि ।
वायसस्त्वेष मे राजन्नन्तकायाभिसंहितः ॥ ३३
न च मेऽत्र भवान्गर्ह्यो न च येषां भवान्प्रियः ।
हिताहितांस्तु बुद्ध्येथा मापरोक्षमतिर्भव ॥ ३४
ये त्वादानपरा एव वसन्ति भवतो गृहे ।
अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितम् ॥३५
यो वा भवद्विनाशेन राज्यमिच्छत्यनन्तरम् ।
आन्तरैरभिसंधाय राजन्सिध्यति नान्यथा ॥३६
तेषामहं भयाद्राजन्गमिष्याम्यन्यमाश्रमम् ।
तैर्हि मे संधितो बाणः काके निपतितः प्रभो॥३७
छद्मना मम काकश्च गमितो यमसादनम् ।
दृष्टं ह्येतन्मया राजंस्तपोदीर्घेन चक्षुषा ॥ ३८
बहुनक्रझषग्राहां तिमिंगिलगणैर्युताम् ।
काकेन बालिशेनेमामतार्पमहमापगाम् ॥ ३९
स्थाण्वश्मकण्टकवतीं सिंहव्याघ्रसमाकुलाम् ।
दुरासदां दुष्प्रसहां गुहां हैमवतीमिव ॥ ४०
अग्निना तामसं दुर्गं नौभिराप्यं च गम्यते ।
राजदुर्गावतरणे नोपायं पण्डिता विदुः ॥ ४१
गहनं भवतो राज्यमन्धकारं तमोन्वितम् ।
नेह विश्वसितुं शक्यं भवताऽपि कुतो मया ॥ ४२
अतो नायं शुभो वासस्तुल्ये सदसती इह ।
वधो ह्येवात्र सुकृते दुष्कृते न च संशयः ॥ ४३
न्यायतो दुष्कृते घातः सुकृते न कथंचन ।
नेह युक्तं स्थिरं स्थातुं जवेनैवात्रजेद्बुधः ॥ ४४
सीता नाम नदी राजन्प्लवो यस्यां निमज्जति ।
तथोपमामिमां मन्ये वागुरां सर्वघातिनीम् ॥ ४५
मधुप्रपातो हि भवान्भोजनं विषसंयुतम् ।
असतामिव ते भावो वर्तते न सतामिव ॥ ४६
आशीविषैः परिवृतः कूपस्त्वमसि पार्थिव ॥ ४७
दुर्गतीर्था बृहत्कूला कावेरी चोरसंयुता ।
नदी मधुरपानीया यथा राजंस्तथा भवान् ।
श्वगृध्रगोमायुयुतो राजहंससमो ह्यसि ॥ ४८
यथाऽऽश्रित्य महावृक्षं कक्षः संवर्धते महान् ।
ततस्तं संवृणोत्येव तमतीत्य च वर्धते ॥ ४९
तेनैवोग्रेन्धनेनैनं दावो दहति दारुणः ।
तथोपमा ह्यमात्यास्ते राजंस्तान्परिशोधय ॥ ५०
त्वया चैव कृता राजन्भवता परिपालिताः ।
भवन्तं पर्यवज्ञाय जिघांसन्ति भवत्प्रियम् ॥ ५१
उषितं शङ्कमानेन प्रमादं परिरक्षता ।
अन्तःसर्प इवागारे वीरपत्न्या इवालये ।
शीलं जिज्ञासमानेन राज्ञः साहसजीविनः ॥ ५२
कच्चिज्जितेन्द्रियो राजा कच्चिदस्यान्तरा जिताः ।

नाहमस्मीति मत्वा जीवनाशां त्यक्त्वेत्यर्थः ॥ २९ ॥ आदानपराः कोशलोप्तारः । मे मयि । तादृशैरभिसंहितमभिसंधिवैरं कृतम् । मदीयकाकहननादिति भावः ॥ ३५ ॥ आन्तरैः सूदादिभिः अभिसंधायाऽन्नादौ विषं प्रक्षेप्तव्यमिति स्नेहं कृत्वा । तेषामभीप्सितो भवद्विनाशः सिध्यति चाऽन्यथा न सिध्यति च । आयुःशेषे सतीति भावः ॥ ३६ ॥ तेषां त्वद्वैरिणाम् ॥ ३७ ॥ इमां राजनीतिनदीम् । नक्रादितुल्यैरधिकारिपुरुषैर्व्याप्ताम् । बालिशेन स्वमृत्युं संपादयता विरुद्धलक्षणया तन्मरणान्मृतोऽस्मीति भावः ॥ ३९ ॥ अग्निना दीपेन आप्य जलरूपम् ॥ ४१ ॥ गहनं कपटम् । अन्धकारमिव तमोन्वितं धर्माधर्मदर्शनशून्यम् ॥ ४२ ॥ उषितं मयेति शेषः ॥ ५२ ॥ जिज्ञासामेवाह कच्चिदिति ॥ ५३ ॥

कच्चिदेषां प्रियो राजा कच्चिद्राज्ञः प्रिया: प्रजाः ५३
विजिज्ञासुरिह प्राप्तस्तवाहं राजसत्तम ।
तस्य मे रोचते राजन्क्षुधितस्येव भोजनम् ॥ ५४
अमात्या मे न रोचन्ते वितृष्णस्य यथोदकम् ।
भवतोऽर्थकृदित्येवं मयि ते दोषमादधन् ।
विद्यते कारणं नान्यदिति मे नात्र संशयः ॥ ५५
न हि तेषामहं द्रोग्धा तत्तेषां द्रोहवद्गतम् ।
अरेर्हि दुर्हृदाद्भेयं भग्नपृष्ठादिवोरगात् ॥ ५६
राजोवाच ।
भूयसा परिहारेण सत्कारेण च भूयसा ।
पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम ॥ ५७
ये त्वां ब्राह्मण नेच्छन्ति ते न वत्स्यन्ति मे गृहे ।
भवतैव हि तज्ज्ञेयं यत्तदेषामनन्तरम् ॥ ५८
यथा स्यात्सुधृतो दण्डो यथा च सुकृतं कृतम् ।
तथा समीक्ष्य भगवञ्श्रेयसे विनियुङ्क्ष्व माम् ॥ ५९
मुनिरुवाच ।
अदर्शयन्निमं दोषमेकैकं दुर्बलं कुरु ।
ततः कारणमाज्ञाय पुरुषंपुरुषं जहि ।
एकदोषा हि बहवो मृद्नीयुरपि कण्टकान् ॥ ६०
'अर्थे सर्वं जगद्बद्धमर्थेनैव निबध्यते ।
अर्थे दर्पो मनुष्याणां तस्मादर्थं विरोचय ॥ ६१
एकेनैकस्य दोषेण तद्विरुद्धं प्रचोदय ।
स तस्य दोषानुद्भाव्य तस्यार्थं ग्राहयिष्यति ॥ ६२
सामपूर्वं च केषांचिद्भेदेन च परस्परम् ।
वैरं कारय भूपाल पश्चाद्दण्डं प्रचोदय ॥ ६३
बिल्वेन च यथा बिल्वमाकारं छाद्य बुद्धिमान् ।
अशुद्धं सचिवं राजन्नशुद्धेनैव नाशय ॥' ६४
मन्त्रभेदभयाद्राजंस्तस्मादेतद्ब्रवीमि ते ॥ ६५
वयं तु ब्राह्मणा नाम मृदुदण्डाः कृपालवः ।
स्वस्ति चेच्छाम भवतः परेषां च यथाऽऽत्मनः ॥ ६६
राजन्नात्मानमाचक्षे संबन्धी भवतो ह्यहम् ।
मुनिः कालकवृक्षीय इत्येवमभिसंज्ञितः ।
पितुः सखा च भवतः संमतः सत्यसंगरः ॥ ६७
व्यापन्ने भवतो राज्ये राजन्पितरि संस्थिते ।
सर्वकामान्परित्यज्य तपस्तप्तं तदा मया ॥ ६८
स्नेहात्त्वां तु ब्रवीम्येतन्मा भूयो विभ्रमेदिति ॥ ६९
उभे दृष्ट्वा दुःखसुखे राज्यं प्राप्य यदृच्छया ।
राज्येनामात्यसंस्थेन कथं राजन्प्रमाद्यसि ॥ ७०
भीष्म उवाच ।
ततो राजकुले नान्दी संजज्ञे भूयसा पुनः ।
पुरोहितकुले चैव संप्राप्ते ब्राह्मणर्षभे ॥ ७१
एकच्छत्रां महीं कृत्वा कौसल्याय यशस्विने ।
मुनिः कालकवृक्षीय ईजे क्रतुभिरुत्तमैः ॥ ७२
हितं तद्वचनं श्रुत्वा कौसल्योऽप्यजयन्महीम् ।
तथा च कृतवान्राजा यथोक्तं तेन भारत ॥ ७३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

भीष्मेण युधिष्ठिरंप्रति मन्त्र्यादिलक्षणकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
सभासदः सहायाश्च सुहृदश्च विशांपते ।
परिच्छदास्तथाऽमात्याः कीदृशाः स्युः पितामह १
भीष्म उवाच ।
ह्रीनिषेवास्तथा दान्ताः सत्यार्जवसमन्विताः ।
शक्ताः कथयितुं सम्यक्ते तव स्युः सभासदः ॥ २

रोचते भवानिति शेषः ॥ ५४ ॥ भेय भेतव्यम् । भग्नपृष्ठात् पृष्ठभङ्गेन कोपितात् ॥ ५६ ॥ तेषामकस्मात् युगपच्च वधे दोषमाह एकेति । संहताः कण्टकानपि मृद्नीयुः किमुत मादृशान्मृदूनित्यर्थः ॥ ६० ॥ पितरि त्वदीये संस्थिते मृते ॥ ६८ ॥ विभ्रमेत् अनाप्तेष्वाप्तबुद्धिं भवान्माकार्षीत् ॥ ६९ ॥ नान्दी मङ्गलपाठः । ततस्तस्मिन्मन्त्रिणि वृते सति ॥ ७१ ॥ कौसल्याय कौसल्यार्थे ॥ ७२ ॥ द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

सभासदः व्यवहारनिर्णायकाः । सहायाः युद्धादावुपयोगिनः । सुहृदो हितकर्तारः । परिच्छदाः सेनान्यादयः ॥ १ ॥ क्रमेणैषां लक्षणान्याह ह्रीति । कथयितु न्यायान्यायौ वक्तुम्

अमात्याश्चातिशूराश्च ब्रह्मण्याश्च बहुश्रुताः ।
सुसंतुष्टाश्च कौन्तेय महोत्साहाश्च कर्मसु ॥ ३
एतान्सहायाँल्लिप्सेथाः सर्वास्वापत्सु भारत ॥ ४
कुलीनः पूजितो नित्यं न हि शक्तिं निगूहति ।
प्रसन्नमप्रसन्नं वा पीडितं हतमेव वा ।
आवर्तयति भूयिष्ठं तदेव ह्यनुपालितम् ॥ ५
कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः ।
प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः ॥ ६
दौष्कुलेयाश्च लुब्धाश्च नृशंसा निरपत्रपाः ।
ते त्वां तात निषेवेयुर्यावदार्द्रकपाणयः ॥ ७
कुलीनाञ्शीलसंपन्नानिङ्गितज्ञाननिष्ठुरान् ।
देशकालविधानज्ञान्भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजा कुर्वीत मन्त्रिणः ॥ ८
अर्थमानार्घसत्कारैर्भोगैरुच्चावचैः प्रियैः ।
यानर्थभाजो मन्येथास्तेते स्युः सुखभागिनः ॥ ९
अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्चरितव्रताः ।
न त्वां नित्यार्थिनो जह्युरक्षुद्राः सत्यवादिनः ॥ १०
अनार्या ये न जानन्ति समयं मन्दचेतसः ।
तेभ्यः परिजुगुप्सेथा ये चापि समयच्युताः ॥ ११
नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः ।
यस्त्वेको बहुभिः श्रेयान्कामं तेन गणं त्यजेत् ॥ १२
श्रेयसो लक्षणं चैतद्विक्रमो यस्य दृश्यते ।
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ॥ १३
समर्थान्पूजयेद्यश्च नास्पर्ध्यैः स्पर्धते च यः ।
न च कामाद्भयात्क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् ॥ १४
अमानी सत्यवाक्शक्तो जितात्मा मानसंयुतः ।
स ते मन्त्रसहायः स्यात्सर्वावस्थापरीक्षितः ॥ १५
कुलीनः कुलसंपन्नस्तितिक्षुर्दक्ष आत्मवान् ।
शूरः कृतज्ञः सत्यश्च श्रेयसः पार्थ लक्षणम् ॥ १६
तस्यैवं वर्तमानस्य पुरुषस्य विजानतः ।
अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ १७
अत ऊर्ध्वममात्यानां परीक्षेत गुणागुणम् ।
संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः ॥ १८
संबन्धिपुरुषैराप्तैरभिजातैः स्वदेशजैः ।
अहार्यैरव्यभीचारैः सर्वशः सुपरीक्षितैः ॥ १९
यौनाः श्रौतास्तथा मौलास्तथैवाप्यनहंकृताः ।
कर्तव्या भूतिकामेन पुरुषेण बुभूषता ॥ २०
एषां वैनयिकी बुद्धिः प्रकृतिश्चैव शोभना ।
तेजो धैर्यं क्षमा शौचमनुरागः स्थितिर्धृतिः ॥ २१
परीक्ष्य च गुणान्नित्यं प्रौढभावान्धुरंधरान् ।
पञ्चोपधाव्यतीतांश्च कुर्याद्राजाऽर्थकारिणः ॥ २२
पर्याप्तवचनान्वीरान्प्रतिपत्तिविशारदान् ।
कुलीनान्सत्वसंपन्नानिङ्गितज्ञाननिष्ठुरान् ॥ २३
देशकालविधानज्ञान्भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजन्कुर्वीत मन्त्रिणः ॥ २४
हीनतेजोभिसंसृष्टो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्वकर्मसु संशयम् ॥ २५
एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत ।
धर्मार्थकामसंयुक्तो नालं मन्त्रं परीक्षितुम् ॥ २६
तथैवानभिजातोऽपि काममस्तु बहुश्रुतः ।
अनायक इवाचक्षुर्मुह्यत्यूह्येषु कर्मसु ॥ २७
यो वाऽप्यस्थिरसंकल्पो बुद्धिमानागतागमः ।

---

ह्रीनिषेधास्तथा दान्ताः सत्यलज्जासमन्विताः इति थ. पाठः ॥ २ ॥ सुहृदमाह सार्धेन कुलीन इति ॥ ५ ॥ यावदार्द्रकपाणयः । शुष्कहस्तास्तु सद्यो विक्रियन्ते इत्यर्थः । ते त्वां जातु न सेवेयुर्यावत्ते खड्गपाणयः । इति ड. थ. पाठः ॥ ७ ॥ अर्थो धनम् । मानः सन्मानः । अर्घो वस्त्रादिदानम् । सत्कार आदरः । यान्प्रियान्मन्येथास्तेऽर्थभाजः सुखभागिनश्च स्युः ॥ ९ ॥ समयं धर्माधर्ममर्यादाम् । जुगुप्सेथाः रक्षस्व ॥ ११ ॥ अन्यतरग्रहः गणैकयोरेकतरस्य ग्रहणप्रसङ्गः । एकश्चेद्गुणी तदा गणं त्यक्त्वा स एव ग्राह्यः ॥ १२ ॥ श्रेयसः साधोः ॥ १३ ॥ सत्यः सत्यवान् ॥ १६ ॥ भूमिपः परीक्षेतेति योजना ॥ १८ ॥

अभिजातैः कुलीनैः । अहार्यैः धनादिना वशीकर्तुमशक्यैः । संबन्धिपुरुषैर्येषां संबन्धोऽस्ति तादृशैः ॥ १९ ॥ यौना उत्तमयोनयः । मौलाः परंपरागताः कर्तव्याः । मन्त्रिण इति शेषः ॥ २० ॥ प्रकृतिः पूर्वकर्मजः संस्कारः । तेजः पराभिभवसामर्थ्यम् । स्थितिरव्यभिचारिता । धृतिर्धारणसामर्थ्यम् ॥ २१ ॥ पञ्च मन्त्रिण इति तृतीयेनान्वयः । उपधा च्छलं तद्यतीतान् ॥ २२ ॥ पर्याप्तं कृत्स्नस्य विवित्सितस्यार्थस्य निर्वाहकं वचनं येषां तान् ॥ २३ ॥ हीनतेजसा मित्रेणाभिसंसृष्टः संबद्धः । न व्यवस्यति न कर्तव्याकर्तव्ये निश्चिनोति ॥ २५ ॥

उपायज्ञोऽपि नालं स कर्म प्रापयितुं चिरम् ॥ २८
केवलात्पुनरादानात्कर्मणो नोपपद्यते ।
परामर्शो विशेषाणामश्रुतस्येह दुर्मतेः ॥ २९
मन्त्रिण्यननुरक्ते तु विश्वासो नोपपद्यते ।
तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् ॥ ३०
व्यथयेद्धि स राजानं मन्त्रिभिः सहितोऽनृजुः ।
मारुतोपहितच्छिद्रैः प्रविश्याग्निरिव द्रुमम् ॥ ३१
संक्रुद्धश्चैकदा स्वामी स्थानाच्चैवापकर्षति ।
वाचा क्षिपति संरब्धः पुनः पश्चात्प्रसीदति ॥ ३२
तानि तान्यनुरक्तेन शक्यानि हि तितिक्षितुम् ।
मन्त्रिणां च भवेत्क्रोधो विस्फूर्जितमिवाशनेः ॥ ३३
यस्तु संहरते तानि भर्तुः प्रियचिकीर्षया ।
समानसुखदुःखं तं पृच्छेदर्थेषु मानवम् ॥ ३४
अनृजुस्त्वनुरक्तोऽपि संपन्नश्चेतरैर्गुणैः ।
राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥ ३५
योऽमित्रैः सह संबद्धो न परान्बहुमन्यते ।
असुहृत्तादृशो ज्ञेयो न मन्त्रं श्रोतुमर्हति ॥ ३६
अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः ।
असुहृत्क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति ॥ ३७
आगन्तुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः ।
सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति ॥ ३८
विधर्मतो विप्रकृतः पिता यस्याभवत्पुरा ।
सत्कृतः स्थापितः सोऽपि न मन्त्रं श्रोतुमर्हति ॥ ३९
यः स्वल्पेनापि कार्येण सुहृदाक्षारितो भवेत् ।
पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति ॥ ४०
कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः ।
सर्वकर्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति ॥ ४१
ज्ञानविज्ञानसंपन्नः प्रकृतिज्ञः परात्मनोः ।
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति ॥ ४२
सत्यवाक्शीलसंपन्नो गम्भीरः सत्रपो मृदुः ।
पितृपैतामहो यः स्यात्स मन्त्रं श्रोतुमर्हति ॥ ४३
संतुष्टः संमतः सद्भिः शौटीरो द्वेष्यपापकः ।
मन्त्रवित्कालविच्छूरः स मन्त्रं श्रोतुमर्हति ॥ ४४
सर्वलोकमिमं शक्तः सान्त्वेन कुरुते वशम् ।
तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता नृप ॥ ४५
पौरजानपदा यस्मिन्विश्वासं धर्मतो गताः ।
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥ ४६
तस्मात्सर्वैर्गुणैरेतैरुपपन्नाः सुपूजिताः ।
मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः ॥ ४७
स्वासु प्रकृतिषु च्छिद्रं लक्षयेरन्परस्य च ।
मन्त्रिणां मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्धते ॥ ४८
नास्य च्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ४९
मन्त्रग्राहा हि राज्यस्य मन्त्रिणो ये मनीषिणः ।
मन्त्रसंहननो राजा मन्त्राङ्गानीतरे जनाः ॥ ५०
राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते ।
स्वामिनं त्वनुवर्तन्ते वृत्त्यर्थमिह मन्त्रिणः ॥ ५१
संविनीयमदक्रोधौ मानमीर्ष्यां च निर्वृताः ।
नित्यं पञ्चोपधातीतैर्मन्त्रयेत्सह मन्त्रिभिः ॥ ५२

तेषां त्रयाणां त्रिविधं विमर्शं
विबुध्य चित्तं विनिवेश्य तत्र ।
स्वनिश्चयं तं परनिश्चयं च
निदर्शयेदुत्तरमन्त्रकाले ॥ ५३
धर्मार्थकामज्ञमुपेत्य पृच्छे-
द्युक्तो गुरुं ब्राह्मणमुत्तरार्थम् ।
निष्ठा कृता तेन यदा सहः स्या-
त्तं मन्त्रमार्गं प्रणयेदसक्तः ॥ ५४

प्रापयितुं समापयितुम् ॥ २८ ॥ आरम्भशूरोऽपि मूर्खः कर्मणः फलविशेषान् ज्ञातुं न शक्नोतीत्यर्थः ॥ २९ ॥ अनुरक्तलक्षणमाह त्रिभिः संक्रुद्ध इत्यादिभिः ॥ ३२ ॥ आगन्तुर्नूतनः । सोऽप्यविश्वास्य इत्यर्थः ॥ ३८ ॥ विधर्मतोऽन्यायेन ॥ ३९ ॥ आक्षारितो धनग्रहणेन रिक्तः कृतः ॥ ४० ॥ जानपदः स्वदेशजः ॥ ४१ ॥ परस्य शत्रोः आत्मनश्च प्रकृतीः स्वाम्यमात्यादिका जानातीति प्रकृतिज्ञः ॥ ४२ ॥ गम्भीरो मन्त्रगोपनसमर्थः ॥ ४३ ॥ शौटीरः प्रगल्भः । द्वेष्यवद्धेयं पापं यस्य स द्वेष्यपापकः ॥ ४४ ॥ आधित्सता आधातुमिच्छता ॥ ४५ ॥ पञ्चानामभावे त्रयो वा कार्या इत्यर्थः ॥ ४७ ॥ विवरं छिद्रम् ॥ ४९ ॥ मन्त्रसंहननो मन्त्रकवचः ॥ ५० ॥ उपधाश्छलानि । तानि पञ्च ॥ ५२ ॥

एवं सदा मन्त्रयितव्यमाहु-
र्ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः ।
तस्मात्तमेवं प्रणयेत्सदैव
मन्त्रं प्रजासंग्रहणे समर्थम् ॥ ५५
न वामनाः कुब्जकृशा न खञ्जा
नान्धा जडाः स्त्री च नपुंसकाश्च ।
न चात्र तिर्यङ्क पुरो न पश्चा-
न्नोर्ध्वं न चाधः प्रचरेत्कथंचित् ॥ ५६
आरुह्य वा वेश्म तथैव शून्यं
स्थलं प्रकाशं कुशकाशहीनम् ।
वागङ्गदोषान्परिहृत्य सर्वा-
न्संमन्त्रयेत्कार्यमहीनकालम् ॥ ५७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

भीष्मेण युधिष्ठिरंप्रति इन्द्रबृहस्पतिसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादं शक्रस्य च युधिष्ठिर ॥ १
शक्र उवाच ।
किंस्विदेकपदं ब्रह्मन्पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ २
बृहस्पतिरुवाच ।
सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ ३
एतदेकपदं शक्र सर्वलोकसुखावहम् ।
आचरन्सर्वभूतेषु प्रियो भवति सर्वदा ॥ ४
यो हि नाभाषते किंचित्सर्वदा भ्रुकुटीमुखः ।
द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन् ॥ ५
यस्तु सर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते ।
स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ॥ ६
दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम् ।
न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ॥ ७
आददन्नपि भूतानां मधुरामीरयन्गिरम् ।
सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे ॥ ८
तस्मात्सान्त्वं प्रयोक्तव्यं दण्डमाधित्सताऽपि हि ।
प्रीतिं च जनयत्येवं न चास्योद्विजते जनः ॥ ९
सुकृतस्य हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च ।
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ॥ १०
भीष्म उवाच ।
इत्युक्तः कृतवान्सर्वं यथा शक्रः पुरोधसा ।
तथा त्वमपि कौन्तेय सम्यगेतत्समाचर ॥ ११

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

भीष्मेण युधिष्ठिरंप्रति अमात्यलक्षणादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कथंस्विदिह राजेन्द्र पालयन्पार्थिवः प्रजाः ।
प्रैति धर्मे विशेषेण कीर्तिमाप्नोति शाश्वतीम् ॥ १
भीष्म उवाच ।

अत्र मन्त्रस्थाने ॥ ५६ ॥ त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

अत्र मन्त्रमूलभूते प्रजासंग्रहणे विषये ॥ १ ॥ एकपदं यत्र सर्वे गुणाः अन्तर्भवन्ति तदेव कर्तव्यं वस्तु । प्रमाणं संमतम् ॥ २ ॥ सान्त्वं निष्कपटं प्रियवचनम् ॥ ३ ॥ नाभाषते तूष्णीमास्ते । नाचरन् अनाचरन् ॥ ५ ॥ चतुरशीतितमोऽध्यायः ॥ ८४ ॥

व्यवहारेण शुद्धेन प्रजापालनतत्परः ।
प्राप्य धर्मं च कीर्तिं च लोकानाप्नोत्यसौ शुचिः२
युधिष्ठिर उवाच ।
कीदृशव्यवहारं तु कैश्च व्यवहरेन्नृपः ।
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥ ३
ये चैव पूर्वकथिता गुणास्ते पुरुषं प्रति ।
नैकस्मिन्पुरुषे ह्येते विद्यन्त इति मे मतिः ॥ ४
भीष्म उवाच ।
एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमन् ।
दुर्लभः पुरुषः कश्चिदेभिर्युक्तो गुणैः शुभैः ॥ ५
किंतु संक्षेपतः शीलं प्रयत्नेनेह दुर्लभम् ।
वक्ष्यामि तु यथाऽमात्यान्यादृशांश्च करिष्यसि ॥६
चतुरो ब्राह्मणान्वैद्यान्प्रगल्भान्स्नातकाञ्शुचीन् ।
क्षत्रियान्दश चाष्टौ च बलिनः शस्त्रपाणिनः ॥ ७
वैश्यान्वित्तेन संपन्नानेकविंशतिसङ्ख्यया ।
त्रींश्च शूद्रान्विनीतांश्च शुचीन्कर्मणि पूर्वके ॥ ८
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा ।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥ ९
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम् ।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥ १०
वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥ ११
ततः संप्रेषयेद्राष्ट्रे राष्ट्रीयाय च दर्शयेत् ।
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ॥ १२
न चापि गूढं द्रव्यं ते ग्राह्यं कार्योपघातकम् ।
कार्ये खलु विपन्ने त्वां यो धर्मस्तं च पीडयेत् ॥ १३
विद्रवेच्चैव राष्ट्रं ते श्येनात्पक्षिगणा इव ।
परिस्रवेच्च सततं नौर्विशीर्णेव सागरे ॥ १४
प्रजाः पालयतोऽसम्यगधर्मेणेह भूपतेः ।
हार्दं भयं संभवति स्वर्गश्चास्य विरुध्यते ॥ १५
अथ यो धर्मतः पाति राजाऽमात्योऽथवाऽऽत्मजः ।
धर्मासने सन्नियुक्तो धर्ममूले नरर्षभ ॥ १६
'स्वर्गं याति महीपालो नियुक्तैः सचिवैः सह ।'
कार्येष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः ।
आत्मानं पुरतः कृत्वा यान्त्यधः सह पार्थिवाः॥१७
बलात्कृतानां बलिभिः कृपणं बहुजल्पताम् ।
नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत् ॥१८
ततः साक्षिबलं साधु द्वैधवादकृतं भवेत् ।
असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः ॥ १९
अपराधानुरूपं च दण्डं पापेषु धारयेत् ।
वियोजयेद्धनैरृद्धानधनानथ बन्धनैः ॥ २०
विनयेच्चापि दुर्वृत्तान्प्रहारैरपि पार्थिवः ।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥ २१
राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत् ।
आदीपकस्य स्तेनस्य वर्णसंकरिकस्य च ॥ २२
सम्यक्प्रणयतो दण्डं भूमिपस्य विशांपते ।
युक्तस्य वा नास्त्यधर्मो धर्म एव हि शाश्वतः॥ २३
कामकारेण दण्डं तु यः कुर्यादविचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमृच्छति ॥ २४
न परस्य प्रवादेन परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयीत वा ॥ २५
न तु हन्यान्नृपो जातु दूतं कस्यांचिदापदि ।
दूतस्य हन्ता निरयमाविशेत्सचिवैः सह ॥ २६
यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः ।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ २७
कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान्दूतः स्यात्सप्तभिर्गुणैः॥२८

---

शुद्धेन पक्षपातहीनेन ॥ २ ॥ व्यवहरेत् निर्णयं कुर्यात् ॥ ३ ॥ पूर्वके नित्ये ॥ ८ ॥ अष्टाभिर्गुणैः शुश्रूषा श्रवणं ग्रहणं धारणमूहनमपोहनं विज्ञानं तत्त्वज्ञानं चेति तैः ॥ ९ ॥ मृगयाक्षाः स्त्रियः पानमिति चतुर्भिः कामजैः । दण्डपातनं वाक्पारुष्यं अर्थदूषणमिति त्रिभिः क्रोधजैरिति सप्तभिः । अष्टानां ब्राह्मणचतुष्टयं शूद्रत्रयं सूतश्चेति तेषाम् ॥ ११ ॥ ते त्वया द्रष्टव्याः ॥ १२ ॥ गूढं न्यासापहारादिकं ते त्वया न ग्राह्यम् ॥ १३ ॥ परिस्रवेत् मन्दं मन्दमन्यत्र गच्छेत् ॥ १४ ॥ धर्ममूले राज्ये ॥ १६ ॥ विशेषतस्तप्तपरशुग्रहणादिना तत्परीक्ष्यमिति ॥ १९ ॥ वियोजयेद्धनैर्लुब्धान्दरिद्रान्वधबन्धनैरिति ङ. थ. पाठः ॥ २० ॥ चित्रोऽनेकधा । आदीपकस्य गृहादिदाहकस्य ॥ २२ ॥ युक्तस्य यथाशास्त्रमवहितस्य ॥ २३ ॥

एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता ।
शिरोरक्षश्च भवति गुणैरेतैः समन्वितः ॥ २९
धर्मशास्त्रार्थतत्त्वज्ञः सांधिविग्रहिको भवेत् ।
मतिमान्धृतिमान्हीमान्रहस्यविनिगूहिता ॥ ३०
कुलीनः सत्वसंपन्नः शुक्लोऽमात्यः प्रशस्यते ।
एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् ॥ ३१
व्यूहयन्त्रायुधानां च तत्त्वज्ञो विक्रमान्वितः ।
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥ ३२
विश्वासयेत्परांश्चैव विश्वसेच्च न कस्यचित् ।
पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥ ३३
एतच्छास्त्रार्थतत्त्वं तु मयाऽऽख्यातं तवानघ ।
अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

## षडशीतितमोऽध्यायः ॥ ८६ ॥

भीष्मेण युधिष्ठिरंप्रति पुरलक्षणादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कथंविधं पुरं राजा स्वयमावस्तुमर्हति ।
कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
वस्तव्यं यत्र कौन्तेय सपुत्रज्ञातिबन्धुना ।
न्याय्यं तत्र परिप्रष्टुं वृत्तिं गुप्तिं च भारत ॥ २
तस्मात्ते वर्तयिष्यामि दुर्गकर्म विशेषतः ।
श्रुत्वा तथा विधातव्यमनुष्ठेयं च यत्नतः ॥ ३
षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत् ।
सर्वसंपत्प्रधानं च बाहुल्यं चापि संभवेत् ॥ ४
धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गं मृद्दुर्गं वनदुर्गं च तानि षट् ॥ ५
यत्पुरं दुर्गसंपन्नं धान्यायुधसमन्वितम् ।
दृढप्राकारपरिखं हस्त्यश्वरथसंकुलम् ॥ ६
विद्वांसः शिल्पिनो यत्र निचयाश्च सुसंचिताः ।
धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ॥ ७
ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम् ।
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ॥ ८
सुप्रभं सानुनादं च सुप्रशस्तनिवेशनम् ।
शूराढ्यं प्राज्ञसंपूर्णं ब्रह्मघोषानुनादितम् ॥ ९
समाजोत्सवसंपन्नं सदापूजितदैवतम् ।
वश्यामात्यबलो राजा तत्पुरं स्वयमाविशेत् ॥ १०
तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत् ।
पुरे जनपदे चैव सर्वदोषान्निवर्तयेत् ॥ ११
भाण्डागारायुधागारं प्रयत्नेनाभिवर्धयेत् ।
निचयान्वर्धयेत्सर्वांस्तथा यन्त्रकटंकटान् ॥ १२
काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान् ।
मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च ॥ १३
शणं सर्जरसं धान्यमायुधानि शरांस्तथा ।
चर्म स्नायुं तथा वेत्रं मुञ्जबल्वजदंध्वनान् ॥ १४
आशयाश्चोदपानाश्च प्रभूतसलिलाकराः ।
निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः ॥ १५
सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः ।
महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः ॥ १६
प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः ।
कुलीनाः सत्वसंपन्ना युक्ताः सर्वेषु कर्मसु ॥ १७

---

प्रतीहारो द्वारपालः । शिरोरक्षः शिरांसीव शिरांसि दुर्गनगरादीनि प्रधानस्थानानि तद्रक्षणकर्ता ॥ २९ ॥ एतैर्धर्मेत्यादिभिरमात्यगुणैः ॥ ३१ ॥ व्यूहः सेनाया निवेशनप्रकारविशेषः । यन्त्राणि धनुरादीनि ॥ ३२ ॥ पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

धन्वा निर्जलदेशस्तदेव परितश्च दुर्गं धन्वदुर्गम् । महीदुर्गं कोटः ॥ ५ ॥ सानुनादं गीतवादित्रध्वनिमत् ॥ ९ ॥ निचयान् धान्यादिसंग्रहान् । तथा यन्त्रालयायुधान् । इति झ. पाठः ॥ १२ ॥ दध्वनान् ध्वनिमतो निःसाणादीन् । बन्धनानिति पाठान्तरे स्पष्टोऽर्थः ॥ १४ ॥ आशयाः निपानानि । उदपानाः कूपाः । निरोद्धव्या रक्षणीयाः ॥ १५ ॥ प्रज्ञा ग्रन्थार्थग्रहणसामर्थ्यम् । मेधा ऊहापोहकौशलम् ॥ १७ ॥

पूजयेद्धार्मिकान्राजा निगृह्णीयादधार्मिकान् ।
नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान्स्वकर्मसु ॥ १८
बाह्यमाभ्यन्तरं चैव पौरजानपदं तथा ।
चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥ १९
चरान्मन्त्रं च कोशं च दण्डं चैव विशेषतः ।
अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥ २०
उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् ।
पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥ २१
ततस्तेषां विधातव्यं सर्वमेवाप्रमादतः ।
भक्तान्पूजयता नित्यं द्विषतश्च निगृह्णता ॥ २२
यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया ।
प्रजानां रक्षणं कार्यं न कार्यं धर्मबाधकम् ॥ २३
कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् ॥ २४
आश्रमेषु यथाकालं चैलभाजनभोजनम् ।
सदैवोपहरेद्राजा सत्कृत्याभ्यर्च्य मान्य च ॥ २५
आत्मानं सर्वकार्याणि तापसे राष्ट्रमेव च ।
निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च सर्वदा ॥ २६
'ते कस्यांचिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसाः शंसितव्रताः ॥' २७
सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम् ।
पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः ॥ २८
तस्मिन्कुर्वीत विश्वासं राजा कस्यांचिदापदि ।
तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः ॥ २९
तस्मिन्निधीनादधीत पुनः प्रत्याददीत च ।
न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ॥ ३०
अन्यः कार्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः ।
अटवीषु परः कार्यः सामन्तनगरेष्वपि ॥ ३१
तेषु सत्कारमानाभ्यां संविभागांश्च कारयेत् ।
परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ॥ ३२
ते कस्यांचिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः ॥ ३३
एष ते लक्षणोद्देशः संक्षेपेण प्रकीर्तितः ।
यादृशे नगरे राजा स्वयमावस्तुमर्हति ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

भीष्मेण युधिष्ठिरंप्रति राष्ट्रगुप्तिप्रकारादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
राष्ट्रगुप्तिं च मे राजन्राष्ट्रस्यैव तु संग्रहम् ।
सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १
भीष्म उवाच ।
राष्ट्रगुप्तिं च ते सम्यग्राष्ट्रस्यैव तु संग्रहम् ।
हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ॥ २
ग्रामस्याधिपतिः कार्यो दशग्रामपतिस्तथा ।
विंशतित्रिंशतीशं च सहस्रस्य च कारयेत् ॥ ३
ग्रामेयान्ग्रामदोषांश्च ग्रामिकः प्रतिभावयेत् ।
तानाचक्षीत दशिने दशिको विंशिने पुनः ॥ ४
विंशाधिपस्तु तत्सर्वं वृत्तं जानपदे जने ।
ग्रामाणां शतपालाय सर्वमेव निवेदयेत् ॥ ५
यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नियात् ।
दशपस्तेन भर्तव्यस्तेनापि द्विगुणाधिपः ॥ ६
ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः ।
महान्तं भरतश्रेष्ठ सुस्फीतं जनसंकुलम् ।
तत्र ह्यनेकपायत्तं राज्ञो भवति भारत ॥ ७
शाखानगरमर्हस्तु सहस्रपतिरुत्तमः ।

---

अनुतिष्ठेदालोचयेत् ॥ २० ॥ विधातव्य प्रतिकर्तव्यम् ॥ २२ ॥ तापसे तपस्विजने ॥ २६ ॥ विश्वासं नाधिकुर्वन्ति दस्यव इति ङ. थ. पाठः ॥ २९ ॥ निधीन् धनभाण्डानि । अभीक्ष्णं न सेवेत । दस्यूनां तत्सूचने तपस्विनाशापत्तेः न प्रतिपूजयेच्च ॥ ३० ॥ अन्यस्तापसः कार्यः सखित्वेन संपादनीयः ॥ ३१ ॥ तेषु तत्तत्स्थानस्थेषु तापसेषु ॥ ३२ ॥ षडशीतितमोऽध्यायः ॥ ८६ ॥

दशग्राम्यास्तथा परः । द्विगुणायाः शतस्यैवमिति झ. पाठः ॥ ३ ॥

धान्यहैरण्यभोगेन भोक्तुं राष्ट्रीयसंगतः ॥ ८
तेषां संग्रामकृत्यं स्याद्ग्रामकृत्यं च तेषु यत् ।
धर्मज्ञः सचिवः कश्चित्तत्तत्पश्येदतन्द्रितः ॥ ९
नगरेनगरे वा स्यादेकः सर्वार्थचिन्तकः ।
उच्चैः स्थाने घोररूपो नक्षत्राणामिव ग्रहः ॥ १०
भवेत्स तान्परिक्रामेत्सर्वानेव सभासदः ।
तेषां वृत्तिं परिणयेत्कश्चिद्राष्ट्रेषु तच्चरः ॥ ११
जिघांसवः पापकामाः परस्वादायिनः शठाः ।
रक्षाभ्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः॥ १२
विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च संप्रेक्ष्य वणिजां कारयेत्करान् ॥१३
उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् ।
शिल्पं प्रति करानेवं शिल्पिनः प्रति कारयेत् ॥१४
उच्चावचकरन्यायाः पूर्वराज्ञां युधिष्ठिर ।
यथायथा न सीदेरंस्तथा कुर्यान्महीपतिः ॥ १५
फलं कर्म च संप्रेक्ष्य ततः सर्वं प्रकल्पयेत् ।
फलं कर्म च निर्हेतु न कश्चित्संप्रवर्तते ॥ १६
यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ ।
संवेक्ष्य तु तथा राज्ञा प्रणेयाः सततं कराः ॥ १७
नोच्छिद्यादात्मनो मूलं परेषां चापि तृष्णया ।
ईहाद्वाराणि संरुध्य राजा संवृतदर्शनः ॥ १८
प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् ।
प्रद्विष्टस्य कुतः श्रेयो संवृतो लभते श्रियम् ॥ १९
वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना ।
भृतो वत्सो जातबलः पीडां सहति भारत ॥ २०
न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ।
राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत् ॥ २१
यो राष्ट्रमनुगृह्णाति परिरक्षन्स्वयं नृपः ।
संजातमुपजीवन्स लभते सुमहत्फलम् ॥ २२
आपदर्थं च निचयान्राजानो हि विचिन्वते ।
राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा ॥ २३
पौरजानपदान्सर्वान्संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यनुकम्पेत सर्वान्स्वल्पधनानपि ॥ २४
बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् ।
एवं नास्य प्रकुप्यन्ति जनाः सुखितदुःखिताः॥ २५
प्रागेव तु धनादानमनुभाष्य ततः पुनः ।
सन्निपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् ॥ २६
इयमापत्समुत्पन्ना परचक्रभयं महत् ।
अपि चान्ताय कल्पन्ते वेणोरिव फलागमाः ॥२७
अरयो मे समुत्थाय बहुभिर्दस्युभिः सह ।
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् ॥ २८
अस्यामापदि घोरायां संप्राप्ते दारुणे भये ।
परित्राणाय भवतः प्रार्थयिष्ये धनानि वः ॥ २९
प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये ।
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥ ३०
कलत्रमादितः कृत्वा सर्वं वो विनशेदिति ।
शरीरपुत्रदारार्थमर्थसंचय इष्यते ॥ ३१
नन्दामि वः प्रभावेण पुत्राणामिव चोदये ।
यथाशक्त्युपगृह्णामि राष्ट्रस्यापीडया च वः ॥ ३२
आपत्स्वेव निवोढव्यं भवद्भिः संगतैरिह ।
न वः प्रियतरं कार्यं धनं कस्यांचिदापदि ॥ ३३
इति वाचा मधुरया श्लक्ष्णया सोपचारया ।
स्वरश्मीनभ्यवसृजेद्योगमाधाय कालवित् ॥ ३४
प्रचारं भृत्यभरणं व्ययं संग्रामतो भयम् ।
योगक्षेमं च संप्रेक्ष्य गोमिनः कारयेत्करम् ॥३५
उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः ।
तस्मात्तेषु विशेषेण मृदुपूर्वं समाचरेत् ॥ ३६
सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः ।

कारयेत् दापयेत् ॥ १३ ॥ फलं धान्यधनवृद्ध्यादि । वृद्ध्यनुरूपः करः कल्प्य इत्यर्थः ॥ १६ ॥ आत्मनो मूलं राष्ट्रम् । परेषां मूलं कृष्यादि । ईहा लोभः ॥ १८ ॥ अतिखादिनं बहुभक्षम् ॥ १९ ॥ संश्रिताः साक्षादाश्रिताः । उपाश्रिताः व्यवहिताः ॥ २४ ॥ आटवीको दस्युसङ्घो बाह्यजनस्तं यूयमुपतिष्ठध्वमिति भेदयित्वा मध्यमो ग्रामीणजनो भोक्तव्यस्ततो बहुलं धनमादद्यादित्यर्थः ॥ २५ ॥ तत्र प्रकारमाह प्रागिति । चोरनिग्रहार्थं कटकबन्धः कर्तव्यस्तदर्थं धनमपेक्षितमिति पूर्वमेव आभाष्य सूचनां कृत्वा ततः सन्निपत्य तेषु तेषु ग्रामेषु गत्वा भयं दर्शयेत् ॥ २६ ॥ आपत्स्वेव च वोढव्यं भवद्भिः पुङ्गवैरिवेति झ. पाठः ॥ ३३ ॥ स्वरश्मीन्स्वस्य रश्मिभूतान् अधिकारिणः प्रजासु धनमुद्ग्रहीतुं अभ्यवसृजेत्प्रेरयेत् । योगं धनग्रहणोपायम् ॥ ३४ ॥ गोमिनः वैश्यान् । संप्रेक्ष्य संदर्शयित्वा ॥ ३५ ॥ सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

गोमिनां पार्थ कर्तव्यः संविभागः प्रियाणि च ३७
अजस्रमुपयोक्तव्यं फलं गोमिषु भारत ।
प्रभावयन्ति राष्ट्रं च व्यवहारं कृषिं तथा ॥ ३८
तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान्संप्रणयन्मृदून् ॥ ३९
सर्वत्र क्षेमचरणं सुलभं नाम गोमिषु ।
न ह्यतः सदृशं किंचिद्धनमस्ति युधिष्ठिर ॥ ४०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

भीष्मेण युधिष्ठिरंप्रति प्रजाभ्यः करग्रहणादिप्रकारकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यदा राजा समर्थोऽपि कोशार्थी स्यान्महामते ।
कथं प्रवर्तेत करस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
यथादेशं यथाकालं यथाबुद्धि यथाबलम् ।
अनुशिष्यात्प्रजा राजा धर्मार्थी तद्धिते रतः ॥ २
यथा तासां च मन्येत श्रेय आत्मन एव च ।
तथा धर्माणि सर्वाणि राजा राष्ट्रेषु वर्तयेत् ॥ ३
मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न प्रपातयेत् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥ ४
जलौकावत्पिबेद्राष्ट्रं मृदुनैव नराधिपः ।
व्याघ्रीव च हरेत्पुत्रान्संदशेन्न च पीडयेत् ॥ ५
यथा शल्यकवानाखुः पदं धूनयते सदा ।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥ ६
अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।
ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत् ॥ ७
दमयन्निव दम्यानि शश्वद्भारं विवर्धयेत् ।
मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ॥ ८
सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः ।
उचितेनैव भोक्तव्यास्ते भविष्यन्त्ययत्नतः ॥ ९
तस्मात्सर्वसमारम्भो दुर्लभः पुरुषं प्रति ।
यथा मुख्यान्सान्त्वयित्वा भोक्तव्या इतरे जनाः ॥
ततस्तान्भेदयित्वा तु परस्परविवक्षितान् ।
भुञ्जीत सान्त्वयंश्चैव यथासुखमयत्नतः ॥ ११
न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत् ।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥१२
उपायान्प्रब्रवीम्येतान्न मे माया विवक्षिता ।
अनुपायेन दमयन्प्रकोपयति वाजिनः ॥ १३
पानागारनिवेशाश्च वेश्याः प्रापणिकास्तथा ।
कुशीलवाः सकितवा ये चान्ये केचिदीदृशाः ॥१४
नियम्याः सर्व एवैते ये राष्ट्रस्योपघातकाः ।
एते राष्ट्रेऽभितिष्ठन्तो बाधन्ते भद्रिकाः प्रजाः॥१५
न केनचिद्याचितव्यः कश्चित्किंचिदनापदि ।
इति व्यवस्था भूतानां पुरस्तान्मनुना कृता ॥१६
सर्वे तथाऽनुजीवेयुर्न कुर्युः कर्म चेदिह ।
सर्व एव इमे लोका न भवेयुरसंशयम् ॥ १७
प्रभुर्नियमने राजा य एतान्न नियच्छति ।
भुङ्क्ते स तस्य पापस्य चतुर्भागमिति श्रुतिः ॥ १८

---

भ्रमरा इव पादपमिति झ. पाठः ॥ ४ ॥ शल्यकवांस्तीक्ष्णतुण्ड आखुविशेषः । सहि निद्रितस्य मनुष्यस्य पादतलस्थं मांसमतीक्ष्णेनैवोपायेन भक्षयति । यथा विलेखकः कर्णमाखुः पादत्वचं यथेति ङ. थ. पाठः ॥ ६ ॥ दम्यानि वत्सतरकुलानि यथा क्रमेण दमयेत्तद्वत्प्रजा अपीत्याह दमयन्निवेति । अभ्यवहारयेद्ग्राहयेत् ॥ ८ ॥ सकृत्सद्यः पाशावकीर्णाः सन्तो नभविष्यन्ति मरिष्यन्ति । यतो दुर्दमा अत उचितेन क्रमेण ते भोक्तव्या दम्याः प्रजाश्च । असत्पाशावकीर्णास्ते भविष्यन्तीह दुर्मदाः । इति ङ. थ. पाठः ॥ ९ ॥ पुरुषं प्रतीत्यस्य प्रतिपुरुषमित्यर्थः ॥ १० ॥ ततो मुख्यद्वारा तानितरान् विवक्षितान्वोढुमिष्टान् । ततस्तान्भोजयित्वाथ परस्परविवर्जितान् । इति थ. द. पाठः ॥ ११ ॥ मद्यशालाः संदेशहराः कुट्टन्यः । कुत्सितेन शीलेन वान्ति गच्छन्ति धर्मं हिंसन्ति वा कुशीलवा विटाः । कितवा द्यूतकाराश्च निग्राह्या इत्याह पानेति ॥ १४ ॥ भद्रिकाः कल्याण्यः ॥ १५ ॥ याचितव्यः दत्तमृणं करं चेति शेषः॥१६॥अनुजीवेयुरनुसरेयुः । अन्यथा दोषमाह नेति॥१७॥

भोक्ता तस्य तु पापस्य सुकृतस्य यथातथा ।
नियन्तव्याः सदा राज्ञा पापा ये स्युर्नराधिप ॥ १९
कृतपापस्त्वसौ राजा य एतान्न नियच्छति ।
तथा कृतस्य धर्मस्य चतुर्भागमुपाश्नुते ॥ २०
स्थानान्येतानि संयम्य प्रसङ्गो भूतिनाशनः ।
कामे प्रसक्तः पुरुषः किमकार्यं विवर्जयेत् ॥ २१
मद्यमांसपरस्वानि तथा दारधनानि च ।
आहरेद्रागवशगस्तथा शास्त्रं प्रदर्शयेत् ॥ २२
आपद्येव तु याचन्ते येषां नास्ति परिग्रहः ।
दातव्यं धर्मतस्तेभ्यस्त्वनुक्रोशाद्भयान्न तु ॥ २३
मा ते राष्ट्रे याचनका भवेयुर्मा च दस्यवः ।
उपादातार एवैते नैते भूतस्य भावकाः ॥ २४
ये भूतान्यनुगृह्णन्ति वर्धयन्ति च ये प्रजाः ।
तेते राष्ट्रेषु वर्तन्तां मा भूतानां प्रबाधकाः ॥ २५
दण्ड्यास्ते च महाराज धनादानप्रयोजकाः ।
प्रयोगं कारयेथास्ते यथा दद्युः करांस्तथा ॥ २६
कृषिगोरक्ष्यवाणिज्यं यच्चान्यत्किंचिदीदृशम् ।
पुरुषैः कारयेत्कर्म बहुभिः कर्मभेदतः ॥ २७
नरश्चेत्कृषिगोरक्ष्यं वाणिज्यं चाप्यनुष्ठितः ।
संशयं लभते किंचित्तेन राजा विगर्ह्यते ॥ २८
धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः ।
वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै ॥ २९
अङ्गमेतन्महद्राज्ये धनिनो नाम भारत ।
ककुदं सर्वभूतानां धनस्थो नात्र संशयः ॥ ३०
प्राज्ञः शूरो धनस्थश्च स्वामी धार्मिक एव च ।
तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति ॥ ३१
तस्मात्सर्वेषु भूतेषु प्रीतिमान्भव पार्थिव ।
सत्यमार्जवमक्रोधमानृशंस्यं च पालय ॥ ३२
एवं दण्डं च कोशं च मित्रं भूमिं च लप्स्यसि ।
सत्यार्जवपरो राजन्मित्रकोशबलान्वितः ॥ ३३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

भीष्मेण युधिष्ठिरंप्रति राजनीतिकथनम् ॥ १ ॥

भीष्म उवाच ।
वनस्पतीन्भक्ष्यफलान्न च्छिन्द्युर्विषये तव ।
ब्राह्मणानां मूलफलं धर्ममाहुर्मनीषिणः ॥ १
ब्राह्मणेभ्योऽतिरिक्तं च भुञ्जीरन्नितरे जनाः ।
न ब्राह्मणोपरोधेन हरेदन्यः कथंचन ॥ २
विप्रश्चेत्त्यागमातिष्ठेदाख्याया वृत्तिकर्शितः ।
परिकल्प्यास्य वृत्तिः स्यात्सदारस्य नराधिप ॥ ३
स चेन्नोपनिवर्तेत वाच्यो ब्राह्मणसंसदि ।
कस्मिन्निदानीं मर्यादामयं लोकः करिष्यति ॥ ४
असंशयं निवर्तेत न चेत्त्यक्ष्यत्यतः परम् ।
पूर्वं परोक्षं वक्तव्यमेतत्कौन्तेय शाश्वतम् ॥ ५
आहुरेतज्जना ब्रह्मन्न चैतच्छ्रद्दधाम्यहम् ।
निमन्त्र्यश्च भवेद्भोगैरवृत्त्या च तदा चरेत् ॥ ६
कृषिगोरक्ष्यवाणिज्यं लोकानामिह जीवनम् ।
ऊर्ध्वं चैव त्रयी विद्या सा भूतान्भावयत्युत ॥ ७
तस्यां प्रपतमानायां ये स्युस्तत्परिपन्थिनः ।
दस्यवस्तद्वधायेह ब्रह्मा क्षत्रमथासृजत् ॥ ८
शत्रूञ्जय प्रजा रक्ष यजस्व क्रतुभिर्नृप ।
युध्यस्व समरे वीरो भूत्वा कौरवनन्दन ॥ ९
संरक्ष्यान्रक्षते राजा स राजा राजसत्तमः ।
ये केचित्तान्न रक्षन्ति तैरर्थो नास्ति कश्चन ॥ १०
सदैव राज्ञा योद्धव्यं सर्वलोकाद्युधिष्ठिर ।

---

तथा तथाभूतः नियच्छन्नित्यर्थः ॥ २० ॥ स्थानानि मद्यादीनाम् ॥ २१ ॥ शास्त्रमाज्ञां प्रदर्शयेत्प्रवर्तयेत् ॥ २२ ॥ संशयं चोरेभ्यो राजकीयेभ्यो वा भयात् ॥ २८ ॥ अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

मूलफलं ब्राह्मणानां स्वमिति धर्ममाहुरतो न च्छिन्द्युः ॥१॥ त्यागं राष्ट्रस्य ॥ ३ ॥ भोगार्थी चेद्राष्ट्रं त्यजति तदा भोगैरपि निमन्त्र्यः । अवृत्त्या चेत्तदावृत्त्यापि निमन्त्र्य इत्याह आहुरिति ॥ ६ ॥ ऊर्ध्वं स्वर्गम् ॥ ७ ॥ लोकात् लोकहितार्थं योद्धव्यम्

तस्माद्धेतोर्हि भुञ्जीत मनुष्यानेव मानवः ॥ ११
आन्तरेभ्यः परान्रक्षन्परेभ्यः पुनरान्तरान् ।
परान्परेभ्यः स्वान्स्वेभ्यः सर्वान्पालय नित्यदा १२
आत्मानं सर्वतो रक्षन्राजन्रक्षस्व मेदिनीम् ।
आत्ममूलमिदं सर्वमाहुर्वै विदुषो जनाः ॥ १३
किं छिद्रं कोनु सङ्गो मे किंवाऽस्त्यविनिपातितम् ।
कुतो मामाश्रयेद्दोष इति नित्यं विचिन्तयेत् ॥ १४
अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुनः ।
गुप्तैश्चारैरनुमतैः पृथिवीमनुसारयेत् ॥ १५
जानीत यदि मे वृत्तं प्रशंसन्ति न वा पुनः ।
कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः ॥ १६
धर्मज्ञानां धृतिमतां संग्रामेष्वपलायिनाम् ।
राष्ट्रे तु येऽनुजीवन्ति ये तु राज्ञोऽनुजीविनः ॥१७
अमात्यानां च सर्वेषां मध्यस्थानां च सर्वशः ।
ये च त्वाऽभिप्रशंसेयुर्निन्देयुरथवा पुनः ॥ १८
सर्वान्सुपरिणीतांस्तान्कारयेथा युधिष्ठिर ।
एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम् ।
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥ १९
युधिष्ठिर उवाच ।
तुल्यबाहुबलानां च तुल्यानां च गुणैरपि ।
कथं स्यादधिकः कश्चित्स च भुञ्जीत मानवान् २०
भीष्म उवाच ।
यचरा ह्यचरानद्युरदंष्ट्रान्दंष्ट्रिणस्तथा ।
आशीविषा इव क्रुद्धा भुजङ्गान्भुजगा इव ॥ २१
एतेभ्यश्चाप्रमत्तः स्यात्सदा शत्रोर्युधिष्ठिर ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमादतः ॥ २२
कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ति करार्दिताः ।
क्रीणन्तो बहुनाऽल्पेन कान्तारकृतविश्रमाः ॥२३
कच्चित्कृषिकरा राष्ट्रं न जहत्यतिपीडिताः ।
ये वहन्ति धुरं राज्ञां ते भरन्तीतरानपि ॥ २४
'आलस्येन हृतः पादः पादः पाषण्डमाश्रितः ।
राजानं सेवते पादः पादः कृपिमुपाश्रितः ॥ २५
एकपादं त्रयः पादा भक्षयन्ति दिनेदिने ।
तस्मात्सर्वप्रयत्नेन पादं रक्ष युधिष्ठिर ॥' २६
इतो दत्तेन जीवन्ति देवाः पितृगणास्तथा ।
मानुषोरगरक्षांसि वयांसि पशवस्तथा ॥ २७
एषा ते राष्ट्रवृत्तिश्च राज्ञां गुप्तिश्च भारत ।
प्रोक्तोद्दिश्यैतमेवार्थं भूयो वक्ष्यामि पाण्डव ॥२८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

## नवतितमोऽध्यायः ॥ ९० ॥

भीष्मेण युधिष्ठिरंप्रति उचथ्यमान्धातृसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
यानङ्गिराः क्षत्रधर्मानुचथ्यो ब्रह्मवित्तमः ।
मान्धात्रे यौवनाश्वाय प्रीतिमानभ्यभाषत ॥ १
स यथाऽनुशशासैनमुचथ्यो ब्रह्मवित्तमः ।
तत्तेऽहं संप्रवक्ष्यामि निखिलेन युधिष्ठिर ॥ २
उचथ्य उवाच ।
धर्माय राजा भवति न कामकरणाय तु ।
मान्धातरभिजानीहि राजा लोकस्य रक्षिता ॥ ३
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ ४
धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठति ।
तं राजा साधु यः शास्ति स राजा श्रियमश्नुते ॥ ५
राजापराधान्मान्धातर्लक्ष्मीवान्पाप उच्यते ।
देवाश्च गर्हां गच्छन्ति धर्मो नास्तीति चोच्यते ॥ ६
अधर्मे वर्तमानानामर्थसिद्धिः प्रदृश्यते ।
तदेव मङ्गलं लोकः सर्वः समनुवर्तते ॥

---

मनुष्यांश्चारानिति चार्थः ॥ ११ ॥ विदुषो विद्वांसः ॥ १३ ॥ सङ्गो व्यसनस्येति शेषः ॥ १४ ॥ सुपरिणीतान् सत्कृतान् ॥ १९ ॥ बलवानेव दुर्बलं भुञ्जीत तुल्यात्तु आत्मानं रक्षेच्छलेन च तं भुञ्जीतेत्युत्तरमाह यदित्यादिना ॥ २१ ॥ भारुण्ड गृध्रः ॥ २२ ॥ एकोननवतितमोऽध्यायः ॥ ८९ ॥

अङ्गिराः आङ्गिरसः ॥ १ ॥

उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान् ।
भयमाहुर्दिवारात्रं यदा पापो न वार्यते ॥ ८
इदं मम इदं नेति साधूनां तात धर्मतः ।
न वै व्यवस्था भवति यदा पापो न वार्यते ॥ ९
नैव भार्या न पशवो न क्षेत्रं न निवेशनम् ।
संदृश्येत मनुष्याणां यदा पापबलं भवेत् ॥ १०
देवाः पूजां न जानन्ति न स्वधां पितरस्तदा ।
न पूज्यन्ते ह्यतिथयो यदा पापो न वार्यते ॥ ११
न वेदानधिगच्छन्ति व्रतवन्तो द्विजातयः ।
न यज्ञांस्तन्वते विप्रा यदा पापो न वार्यते ॥ १२
वध्यानामिव सत्वानां मनो भवति विह्वलम् ।
मनुष्याणां महाराज यदा पापो न वार्यते ॥ १३
उभौ लोकावभिप्रेक्ष्य राजानमसृजंस्तथा ।
मुनयोऽथ महद्भूतमयं धर्मो भविष्यति ॥ १४
यस्मिन्धर्मो विराजेत तं राजानं प्रचक्षते ।
यस्मिन्विलीयते धर्मस्तं देवा वृषलं विदुः ॥ १५
वृषो हि भगवान्धर्मो यस्तस्य कुरुते लयम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥ १६
धर्मे वर्धति वर्धन्ति सर्वभूतानि सर्वदा ।
तस्मिन्ह्रसति हीयन्ते तस्माद्धर्मं विवर्धयेत् ॥ १७
धनानि स्रौति धर्मो हि धारणाद्वेति निश्चयः ।
मानवानां मनुष्येन्द्र स सीमान्तकरः स्मृतः ॥ १८
प्रभवार्थं हि भूतानां धर्मः सृष्टः स्वयंभुवा ।
तस्मात्प्रवर्धयेद्धर्मं प्रजानुग्रहकारणात् ॥ १९
तस्माद्धि राजशार्दूल धर्मः श्रेष्ठतरः स्मृतः ।
स राजा यः प्रजाः शास्ति साधुकृत्पुरुषर्षभ ॥ २०
कामक्रोधावनादृत्य धर्ममेवानुपालयेत् ।
धर्मः श्रेयस्करतमो राज्ञां भरतसत्तम ॥ २१
धर्मस्य ब्राह्मणो योनिस्तस्मात्तान्पूजयेत्सदा ।
ब्राह्मणानां च मान्धातः कुर्यात्कामानमत्सरी ॥ २२
तेषां ह्यकामकरणाद्राज्ञः संजायते भयम् ।
मित्राणि न च वर्धन्ते तथाऽमित्रीभवन्त्यपि ॥ २३
ब्राह्मणानां सदासूयन्बाल्याद्वैरोचनिर्बलिः ।
अथास्माच्छ्रीरपाक्रामद्याऽस्मिन्नासीत्प्रतापिनी ॥ २४
ततस्तस्मादपाक्रम्य साऽगच्छत्पाकशासनम् ।
अथ सोऽन्वतपत्पश्चाच्छ्रियं दृष्ट्वा पुरंदरे ॥ २५
एतत्फलमसूयाया अभिमानस्य चाभिभो ।
तस्माद्बुध्यस्व मान्धातर्मा त्वां जह्यात्प्रतापिनी ॥ २६
दर्पो नाम श्रियः पुत्रो जज्ञेऽधर्मादिति श्रुतिः ।
तेन देवासुरा राजन्नीताः सुबहवोऽव्ययम् ॥ २७
राजर्षयश्च बहवस्तथा बुध्यस्व पार्थिव ।
राजा भवति तं जित्वा दासस्तेन पराजितः ॥ २८
स यथा दर्पसहितमधर्मं नानुसेवते ।
तथा वर्तस्व मान्धातश्चिरं चेत्स्थातुमिच्छसि ॥ २९
मत्तात्प्रमत्तात्पौगण्डादुन्मत्ताच्च विशेषतः ।
निन्दिताच्चासदाचाराद्दुर्हृदां चापि सेवनात् ॥ ३०
निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः ।
पर्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् ॥ ३१
एतेभ्योऽनित्ययुक्तः स्यान्नक्तं चर्यां च वर्जयेत् ।
अत्याशां चाभिमानं च दम्भं क्रोधं च वर्जयेत् ॥ ३२
अविज्ञातासु च स्त्रीषु क्लीबासु स्वैरिणीषु च ।
परभार्यासु कन्यासु नाचरेन्मैथुनं नृप ॥ ३३
कुलेषु पापरक्षांसि जायन्ते वर्णसंकरात् ।
अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः ॥ ३४
एते चान्ये च जायन्ते यदा राजा प्रमाद्यति ।
तस्माद्राज्ञा विशेषेण वर्तितव्यं प्रजाहिते ॥ ३५
क्षत्रियस्य प्रमत्तस्य दोषः संजायते महान् ।
अधर्माः संप्रवर्धन्ते प्रजासंकरकारकाः ॥ ३६
अशीते विद्यते शीतं शीते शीतं न विद्यते ।
अवृष्टिरतिवृष्टिश्च व्याधिश्चाप्याविशेत्प्रजाः ॥ ३७

---

न भार्यामधिगच्छन्तीति झ. पाठः ॥ १२ ॥ धर्मो धर्मपालः ॥१५॥ कुरुते ह्यलमिति झ. पाठः । तत्र अलं वारणमित्यर्थः । तेन वृषं लुनाति च्छिनत्तीति वृषल इति योगो दर्शितः ॥ १६ ॥ धर्मपदस्य द्वेधा व्युत्पत्तिमाह धनानीति । धारणाद्वा धर्मः । सीमान्तकरः यावत्पापं तावद्यातनाकर इत्यर्थः ॥ १८ ॥ तं दर्पम् ॥ २८ ॥ पौगण्डाद्बालकादज्ञादित्यर्थः । कदभ्याशाद्दुदावर्ताद्दुर्हृदां चापीति ट. पाठः ॥ ३० ॥ अनित्ययुक्तः स्यात् नित्यमयुक्तः स्यादित्यर्थः । एकचर्यां च वर्जयेदिति द. पाठः ॥ ३२ ॥ अपुमांसः क्लीबाः । स्थूलजिह्वा मूकाः ॥ ३४ ॥

नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथागते ।
उत्पानाश्चात्र दृश्यन्ते बहवो राजनाशनाः ॥ ३८
अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति ।
प्रजाश्च तस्य क्षीयन्ते ततः सोऽनु विनश्यति ३९
द्वावाददाते ह्येकस्य द्वयोः सुबहवोऽपरे ।
कुमार्यः संप्रलुप्यन्ते तदाहुर्नृपदूषणम् ॥ ४०
ममैतदिति नैतच्च मनुष्येष्ववतिष्ठति ।
त्यक्त्वा धर्मं यदा राजा प्रमादमनुतिष्ठति ॥ ४१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

---

## एकनवतितमोऽध्यायः ॥ ९१ ॥

भीष्मेण युधिष्ठिरंप्रति उचथ्यमान्धातृसंवादानुवादः ॥ १ ॥

उचथ्य उवाच ।
कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः ।
संपद्यदैषा भवति सा बिभर्ति सुखं प्रजाः ॥ १
यो न जानाति निर्हर्तुं वस्त्राणां रजको मलम् ।
रक्तानि वा शोधयितुं यथा नास्ति तथैव सः ॥२
एवमेतद्द्विजेन्द्राणां क्षत्रियाणां विशां तथा ।
शूद्रश्चतुर्थो वर्णानां नानाकर्मस्ववस्थितः ॥ ३
कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि ।
ब्रह्मचर्यं तपो मन्त्राः सत्यं चापि द्विजातिषु ॥ ४
तेषां यः क्षत्रियो वेद पात्राणामिव शोधनम् ।
शीलदोषान्विनिर्हर्तुं स पिता स प्रजापतिः ॥ ५
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजवृत्तानि सर्वाणि राजैव युगमुच्यते ॥ ६
चातुर्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेव च ।
सर्वमेतत्प्रमुह्येत यदा राजा प्रमाद्यति ॥ ७
अग्निस्त्रेता त्रयी विद्या यज्ञाश्च सहदक्षिणाः ।
सर्व एव प्रमुह्यन्ते यदा राजा प्रमाद्यति ॥ ८
राजैव कर्ता भूतानां राजैव च विनाशकः ।
धर्मात्मा यः स कर्ता स्यादधर्मात्मा विनाशकः ॥९
राज्ञो भार्याश्च पुत्राश्च बान्धवाः सुहृदस्तथा ।
समेत्य सर्वे शोचन्ति यदा राजा प्रमाद्यति ॥१०
हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्दभाः ।
अधर्मवृत्ते नृपतौ सर्वे सीदन्ति जन्तवः ॥ ११
[दुर्बलार्थं बलं सृष्टं धात्रा मान्धातरुच्यते ।
अबलं तु महद्भूतं यस्मिन्सर्वं प्रतिष्ठितम् ॥ १२
यश्च भूतं संभजते ये च भूतास्तदन्वयाः ।
अधर्मस्थे हि नृपतौ सर्वे शोचन्ति पार्थिव ॥] १३
दुर्बलस्य च यच्चक्षुर्मुनेराशीविषस्य च ।
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ॥ १४
दुर्बलांस्तात मन्येथा नित्यमेवाविमानितान् ।
मा त्वां दुर्बलचक्षूंषि प्रदहेयुः सबान्धवम् ॥ १५
न हि दुर्बलदग्धस्य कुले किंचित्प्ररोहति ।
आमूलं निर्दहन्त्येव मा स्म दुर्बलमासदः ॥ १६
अबलं वै बलाच्छ्रेयो यच्चातिबलवद्बलम् ।
बलस्याबलदग्धस्य न किंचिदवशिष्यते ॥ १७
विमानितो हतः क्रुष्टस्त्रातारं चेन्न विन्दति ।
अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् ॥ १८
मा स्म तात बलस्थस्त्वं भुञ्जीथा दुर्बलं जनम् ।
मा त्वां दुर्बलचक्षूंषि दहन्त्वग्निरिवाश्रयम् ॥ १९
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदताम् ।
तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याभिशंसिनां २०
यदि नात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु ।
न हि पापं कृतं कर्म सद्यः फलति गौरिव ॥२१
यत्राबलो वध्यमानस्त्रातारं नाधिगच्छति ।

---

नक्षत्राणि धूमकेत्वादयः ॥ ३८ ॥ एकस्य धनं द्वावाददाते आच्छिद्य गृह्णीतः ॥ ४० ॥ नवतितमोऽध्यायः ॥ ९० ॥

द्विजादीनां मध्ये यः कश्चिच्छूद्रो वा नानाकर्मस्ववस्थितः स्वकर्मच्युतो मूढः एवं रजकतुल्य इत्यर्थः ॥ ३ ॥ अग्निस्त्रेता वह्नित्रयम् ॥ ८ ॥ अबलस्य पालनान्महत्पुण्यमपालनाच्च महत्पापमित्यर्थः ॥ १२ ॥ भूतं दुर्बलं संभजतेऽन्नादिना सेवते । तदन्वयाः दातृसंबन्धिनः ॥ १३ ॥ यदि आत्मनि फलं पापं न फलति तर्हि पुत्रादिषु फलति नतु सद्यः फलतीत्यर्थः ॥२१॥

महान्दैवकृतस्तत्र दण्डः पतति दारुणः ॥ २२
युक्ता यदा जानपदा भिक्षन्ते ब्राह्मणा इव ।
अभीक्ष्णं भिक्षुरूपेण राजानं घ्नन्ति तादृशाः ॥ २३
राज्ञो यदा जनपदे बहवो राजपूरुषाः ।
अनयेनोपवर्तन्ते तद्राज्ञः किल्बिषं महत् ॥ २४
यदा युक्त्या नयेदर्थान्कामादर्थवशेन वा ।
कृपणं याचमानानां तद्राज्ञो वैशसं महत् ॥ २५
महान्वृक्षो जायते वर्धते च
तं चैव भूतानि समाश्रयन्ति ।
यदा वृक्षश्छिद्यते दह्यते च
तदाश्रया अनिकेता भवन्ति ॥ २६
यदा राष्ट्रे धर्ममग्र्यं चरन्ति
संस्कारं वा राजगुणं ब्रुवाणाः ।
तैश्चाधर्मश्चरितो धर्ममोहा-
त्तूर्णं जह्यात्सुकृतं दुष्कृतं च ॥ २७
यत्र पापा ज्ञायमानाश्चरन्ति
सभां कलिर्विन्दते तत्र राज्ञः ।
यत्र राजा शास्ति नरान्न शक्त्या
न तद्राज्यं वर्धते भूमिपस्य ॥ २८
यश्चामात्यान्मानयित्वा यथा हि
मन्त्रे च युद्धे च नृपोऽनुयुञ्ज्यात् ।
विवर्धते तस्य राष्ट्रं नृपस्य
भुङ्क्ते महीं चाप्यखिलां चिराय ॥ २९
अत्रापि सुकृतं कर्म वाचं चैव सुभाषिताम् ।
समीक्ष्य पूजयन्राजा धर्मं प्राप्नोत्यनुत्तमम् ॥ ३०
संविभज्य यदा भुङ्क्ते नचान्यानवमन्यते ।
निहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥ ३१
त्रायते हि यदा सर्वं वाचा कायेन कर्मणा ।
पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म उच्यते ॥ ३२
संविभज्य यदा भुङ्क्ते नृपतिर्दुर्बलान्नरान् ।
तदा भवन्ति बलिनः स राज्ञो धर्म उच्यते ॥ ३३
यदा रक्षति राष्ट्राणि यदा दस्यूनपोहति ।
यदा जयति संग्रामे स राज्ञो धर्म उच्यते ॥ ३४
पापमाचरतो यत्र कर्मणा व्याहृतेन वा ।
प्रियस्यापि न मृष्येत स राज्ञो धर्म उच्यते ॥ ३५
यदा सारणिकान्राजा पुत्रवत्परिरक्षति ।
भिनत्ति न च मर्यादां स राज्ञो धर्म उच्यते ॥ ३६
यदाप्तदक्षिणैर्यज्ञैर्यजते श्रद्धयाऽन्वितः ।
कामद्वेषावनादृत्य स राज्ञो धर्म उच्यते ॥ ३७
कृपणानाथवृद्धानां यदाऽश्रु परिमार्जति ।
हर्षं संजनयन्नॄणां स राज्ञो धर्म उच्यते ॥ ३८
विवर्धयति मित्राणि तथाऽरींश्चापि कर्षति ।
संपूजयति साधूंश्च स राज्ञो धर्म उच्यते ॥ ३९
सत्यं पालयति प्रीत्या नित्यं भूमिं प्रयच्छति ।
पूजयेदतिथीन्भृत्यान्स राज्ञो धर्म उच्यते ॥ ४०
निग्रहानुग्रहौ चोभौ यत्र स्यातां प्रतिष्ठितौ ।
अस्मिँल्लोके परे चैव राजा स प्राप्नुते फलम् ॥ ४१
यमो राजा धार्मिकाणां मान्धातः परमेश्वरः ।
संयच्छन्भवत्प्राणानसंयच्छंस्तु पावकः ॥ ४२
ऋत्विक्पुरोहिताचार्यान्सत्कृत्यानवमत्य च ।
यदा सम्यक्प्रगृह्णाति स राज्ञो धर्म उच्यते ॥ ४३
यमो यच्छति भूतानि सर्वाण्येवाविशेषतः ।
तथा राज्ञाऽनुकर्तव्यं यन्तव्या विधिवत्प्रजाः ॥ ४४
सहस्राक्षेण राजा हि सर्वथैवोपमीयते ।
स पश्यति च यं धर्मं स धर्मः पुरुषर्षभ ॥ ४५
अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिम् ।
भूतानां तत्त्वजिज्ञासा साध्वसाधु च सर्वदा ॥ ४६
संग्रहः सर्वभूतानां दानं च मधुरा च वाक् ।

---

मोहाद्दैवकृत इति ङ. थ. पाठः ॥ २२ ॥ नयेत् अपहरेत् ॥ २५ ॥ महानिति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह यदेति । यदा धर्मं चरति तदा राजा वर्धत इति भावः । दुष्कृतं चापयातीत्यर्थः । राजपुत्रं ब्रुवाणा इति ट. ङ. थ. पाठः ॥ २७ ॥ यदा राजा शास्ति नरानशिष्टांस्तदा राज्यं वर्धते भूमिपस्येति झ. पाठः ॥ २८ ॥ नामात्यानवमन्यत इति झ. पाठः ॥ ३१ ॥

संविभज्य यदा भुङ्क्ते नृपतिर्यदि पार्थिव । दुर्बलानां बलं चैवेति ट. ङ. थ. पाठः ॥ ३३ ॥ सारणिकान् प्रसारिणीप्रधानान्वणिजः ॥ ३६ ॥ धार्मिकाणां परमेश्वरोऽनुग्राहकः । प्राणान् इन्द्रियाणि संयच्छन्भवेत् । अनियच्छंस्तु पावकः स्वाश्रयदाही भवतीत्यर्थः ॥ ४२ ॥

पौरजानपदाश्चैव गोप्तव्याः स्वप्रजा यथा ॥ ४७
न ज्ञात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुम् ।
भारो हि सुमहांस्तात राज्यं नाम सुदुर्वहम् ॥ ४८
तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुम् ।
न हि शक्यमदण्डेन क्लीबेनाबुद्धिनाऽपि वा ॥४९
अभिरूपैः कुले जातैर्दक्षैर्भक्तैर्बहुश्रुतैः ।
सर्वं बुद्ध्या परीक्षेथास्तापसाश्रमिणामपि ॥ ५०
अतस्त्वं सर्वभूतानां धर्मं वेत्स्यसि वै परम् ।
स्वदेशे परदेशे वा न ते धर्मो विनङ्क्ष्यति ॥ ५१
धर्मेचार्थे च कामे च धर्म एवोत्तरो भवेत् ।
अस्मिँल्लोके परे चैव धर्मात्मा सुखमेधते ॥ ५२
त्यजन्ति दारान्पुत्रांश्च मनुष्याः परिपूजिताः ।
संग्रहश्चैव भूतानां दानं च मधुरा च वाक् ॥ ५३
अप्रमादश्च शौचं च राज्ञो भूतिकरं महत् ।
एतेभ्यश्चैव मान्धातः सततं मा प्रमादिथाः ॥ ५४
अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः ।
नास्य च्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ॥ ५५
एतद्वृत्तं वासवस्य यमस्य वरुणस्य च ।
राजर्षीणां च सर्वेषां तत्त्वमप्यनुपालय ॥ ५६
तत्कुरुष्व महाराज वृत्तं राजर्षिसेवितम् ।
आतिष्ठ दिव्यं पन्थानमह्नाय पुरुषर्षभ ॥ ५७
धर्मवृत्तं हि राजानं प्रेत्य चेह च भारत ।
देवर्षिपितृगन्धर्वाः कीर्तयन्ति महौजसः ॥ ५८
भीष्म उवाच ।
स एवमुक्तो मान्धाता तेनोचथ्येन भारत ।
कृतवानविशङ्कश्च एकः प्राप च मेदिनीम् ॥ ५९
भवानपि तथा सम्यङ्मान्धातेव महीपते ।
धर्मं कृत्वा महीं रक्ष स्वर्गे स्थानमवाप्स्यसि ॥ ६०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

भीष्मेण युधिष्ठिरंप्रति वामदेवसुमनस्संवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
कथं धर्मे स्थातुमिच्छन्राजा वर्तेत भारत ।
पृच्छामि त्वां कुरुश्रेष्ठ तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं दृष्टार्थतत्त्वेन वामदेवेन धीमता ॥ २
राजा वसुमना नाम कौसल्यो बलवाञ्शुचिः ।
महर्षिं परिपप्रच्छ वामदेवं तपस्विनम् ॥ ३
धर्मार्थसहितैर्वाक्यैर्भगवन्ननुशाधि माम् ।
येन वृत्तेन वै तिष्ठन्न च्यवेयं स्वधर्मतः ॥ ४
तमब्रवीद्वामदेवस्तेजस्वी तपतां वरः ।
हेमवर्णं सुखासीनं ययातिमिव नाहुषम् ॥ ५
वामदेव उवाच ।
धर्ममेवानुवर्तस्व न धर्माद्विद्यते परम् ।
धर्मे स्थिता हि राजानो जयन्ति पृथिवीमिमाम् ॥६
अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः ।
वृद्ध्यां च कुरुते बुद्धिं स धर्मेण विराजते ॥ ७
अधर्मदर्शी यो राजा बलादेव प्रवर्तते ।
क्षिप्रमेवापयातोऽस्मादुभौ प्रथममध्यमौ ॥ ८
असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा ।
सहैव परिवारेण क्षिप्रमेवावसीदति ॥ ९
अर्थानामननुष्ठाता कामचारी विकत्थनः ।
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥ १०
अथाददानः कल्याणमनसूयुर्जितेन्द्रियः ।
वर्धते मतिमान्राजा स्रोतोभिरिव सागरः ॥ ११
न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः ।
बुद्धितो मन्त्रतश्चापि सततं वसुधाधिप ॥ १२
एतेष्वेव हि सर्वेषु लोकयात्रा प्रतिष्ठिता ।

---

अभिरूपैरमात्यैः सहेति शेषः ॥ ५० ॥ प्रमादिथाः प्रमाद्येथाः ॥ ५४ ॥ एकनवतितमोऽध्यायः ॥ ९१ ॥

उभौ धर्मार्थौ ॥ ८ ॥ असन्तो दुष्टाः ॥ ९ ॥ एतेषु धर्मादिषु ॥ १३ ॥ द्विनवतितमोऽध्यायः ॥ ९२ ॥

रक्षितात्मा च यो राजा रक्ष्यान्यश्चानुरक्षति ।
प्रजाश्च तस्य वर्धन्ते सुखं च महदश्नुते ॥ २०
ये केचिद्भूमिपतयः सर्वांस्तानन्ववेक्षयेत् ।
सुहृद्भिरनभिख्यातैस्तेन राजा न रिष्यते ॥ २१
अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाश्वसेत् ।
श्येनाभिपतनैरेते निपतन्ति प्रमाद्यतः ॥ २२
दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः ।
अबलानभियुञ्जीत न तु ये बलवत्तराः ॥ २३
विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयेत् ।
आहवे निधनं कुर्याद्राजा धर्मपरायणः ॥ २४
मरणान्तमिदं सर्वं नेह किंचिदनामयम् ।
तस्माद्धर्मे स्थितो राजा प्रजा धर्मेण पालयेत् ॥ २५
रक्षाधिकरणं युद्धं तथा धर्मानुशासनम् ।
मन्त्रचिन्ता सुखं काले पञ्चभिर्वर्धते मही ॥ २६
एतानि यस्य गुप्तानि स राजा राजसत्तम ।
सततं वर्तमानोऽत्र राजा भुङ्क्ते महीमिमाम् ॥ २७
नैतान्येकेन शक्यानि सातत्येनानुवीक्षितुम् ।
एतेष्वाप्तान्प्रतिष्ठाप्य राजा भुङ्क्ते चिरं महीम् ॥ २८
दातारं संविभक्तारं मार्दवोपगतं शुचिम् ।
असंत्यक्तमनुष्यं च तं जनाः कुर्वते नृपम् ॥ २९
यस्तु नैःश्रेयसं श्रुत्वा ज्ञानं तत्प्रतिपद्यते ।
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते ॥ ३०
योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि सर्वदा विमना इव ॥ ३१
अग्राम्यचरितां वृत्तिं यो न सेवेत नित्यदा ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥ ३२
[निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः ।
पर्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् ।
एतेभ्यो नित्ययुक्तः सन्रक्षेदात्मानमेव तु ॥] ३३
मुख्यानमात्यान्यो हित्वा निहीनान्कुरुते प्रियान् ।
स वै व्यसनमासाद्य साधुमार्गं न विन्दति ॥ ३४
यः कल्याणगुणाञ्ज्ञातीन्प्रद्वेषान्नो बुभूषति ।
अदृढात्मा दृढक्रोधः नास्यार्थो वसतेऽन्तिके ॥ ३५
अथ यो गुणसंपन्नान्हृदयस्य प्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ३६
नाकाले प्रणयेदर्थान्नाप्रिये जातु संज्वरेत् ।
प्रिये नातिभृशं तुष्येद्युञ्जीतारोग्यकर्मणि ॥ ३७
के वाऽनुरक्ता राजानः के भयात्समुपाश्रिताः ।
मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत् ३८
न जातु बलवान्भूत्वा दुर्बले विश्वसेत्कचित् ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ ३९
अपि सर्वगुणैर्युक्तं भर्तारं प्रियवादिनम् ।
अभिद्रुह्यति पापात्मा न तस्माद्विश्वसेज्जनान् ॥ ४०
एतद्राजोपनिषदं ययातिः स्माह नाहुषः ।
मनुष्यविषये युक्तो हन्ति शत्रून्सवासवान् ॥ ४१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

---

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

भीष्मेण युधिष्ठिरंप्रति वसुमनसे वामदेवोक्तराजधर्मकथनम् ॥ १ ॥

वामदेव उवाच ।
अयुद्धेनैव विजयं वर्धयेद्वसुधाधिपः ।
जघन्यमाहुर्विजयं युद्धेन च नराधिप ॥ १
न चाप्यलब्धं लिप्सेत मूले नातिदृढे सति ।
न हि दुर्बलमूलस्य राज्ञो लाभो विवर्धते ॥ २
यस्य स्फीतो जनपदः संपन्नप्रियराजकः ।
संतुष्टः पुष्टसचिवो दृढमूलः स पार्थिवः ॥ ३
यस्य योधाः सुसंतुष्टाः स्वनुरक्ताः सुपूजिताः ।

---

सुहृद्भिश्चारैः । अनभिख्यातैः स्वेषां परेषां चाविदितैः ॥ २१ ॥ रक्षाधिकरणं दुर्गादि । सुखं सुखप्रदानम् ॥ २६ ॥ गुप्तानि सुरक्षितानि ॥ २७ ॥ अग्राम्यैर्बुद्धिमद्भिः । वृत्तिं लाभोपायम् ॥ ३२ ॥ राजोपनिषदं राज्ञां रहस्यविद्याम् ॥ ४१ ॥ त्रिनवतितमोऽध्यायः ॥ ९३ ॥

नातिदृढे अनतिदृढे ॥ २ ॥

एतानि शृण्वँल्लभते यशः कीर्तिं श्रियं प्रजाः ॥ १३
एवं यो धर्मसंरम्भी धर्मार्थपरिचिन्तकः ।
अर्थान्परीक्ष्यारभते स ध्रुवं महदश्नुते ॥ १४
अदाता ह्यनभिस्नेहो दण्डेनावर्तयन्प्रजाः ।
साहसप्रकृती राजा क्षिप्रमेव विनश्यति ॥ १५
अथ पापं कृतं बुद्ध्या न च पश्यत्यबुद्धिमान् ।
अकीर्त्याऽभिसमायुक्तो भूयो नरकमश्नुते ॥ १६
ततो न याचितुर्दातुः शुक्लस्य रसवेदिनः ।
व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः ॥१७
यस्य नास्ति गुरुर्धर्मे न चान्यानपि पृच्छति ।
सुखतन्त्रोऽर्थलाभेषु न चिरं सुखमश्नुते ॥ १८
गुरुप्रधानो धर्मेषु स्वयमर्थानवेक्षिता ।
धर्मप्रधानो लाभेषु स चिरं सुखमश्नुते ॥ १९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

भीष्मेण युधिष्ठिरंप्रति वामदेवसुमनस्संवादानुवादः ॥ १ ॥

वामदेव उवाच ।
यत्राधर्मं प्रणयते दुर्बले बलवत्तरः ।
तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वयाः ॥ १
राजानमनुवर्तन्ते तं पापाभिप्रवर्तकम् ।
अविनीतमनुष्यं तत्क्षिप्रं राष्ट्रं विनश्यति ॥ २
यद्वृत्तमुपजीवन्ति प्रकृतिस्थस्य मानवाः ।
तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ॥ ३
साहसप्रकृतिर्यत्र किंचिदुल्बणमाचरेत् ।
अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ॥ ४
सद्वृत्ताचरितां वृत्तिं क्षत्रियो नानुवर्तते ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥ ५
द्विषन्तं कृतकल्याणं गृहीत्वा नृपतिं रणे ।
यो न मानयते द्वेषात्क्षत्रधर्मादपैति सः ॥ ६
शक्तः स्यात्सुसुखो राजा कुर्यात्तारणमापदि ।
प्रियो भवति भूतानां न च विभ्रश्यते श्रियः ॥ ७
अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं चरेत् ।
अचिरेण प्रियः स स्याद्योऽप्रिये प्रियमाचरेत् ॥८
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ।
न कामान्न च संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥ ९
'अमाययैव वर्तेत न च सत्यं त्यजेद्बुधः ।
दमं धर्मं च शीलं च क्षत्रधर्मं प्रजाहितम् ॥' १०
नापत्रपेत प्रश्नेषु नाभिभाविगिरं सृजेत् ।
न त्वरेत न चासूयेत्तथा संगृह्यते परः ॥ ११
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ।
न तप्येदर्थकृच्छ्रेषु प्रजाहितमनुस्मरन् ॥ १२
यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः ।
तस्य कर्माणि सिद्ध्यन्ति न च संत्यज्यते श्रिया १३
निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये ।
भक्तं भजेत नृपतिस्तद्वै वृत्तं सतामिह ॥ १४
अप्रकीर्णेन्द्रियग्राममत्यन्तानुगतं शुचिम् ।
शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि ॥ १५
'श्रेयसो लक्षणं चैतद्विक्रमो यत्र दृश्यते ।
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ।
समर्थान्पूजयेद्यश्च न च स्पर्धेत यश्च तैः ॥ १६
एवमेतैर्गुणैर्युक्तो योऽनुरज्यति भूमिपम् ।
भर्तुरर्थेष्वप्रमत्तं नियुञ्ज्यादर्थकर्मणि ॥ १७
मूढमैन्द्रियकं लुब्धमनार्यचरितं शठम् ।
अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम् ॥ १८
त्यक्तोपात्तं मद्यरतं द्यूतस्त्रीमृगयापरम् ।
कार्ये महति युञ्जानो हीयते नृपतिः श्रिया ॥ १९

यत्र राष्ट्रे । प्रणयते आरोपयति ॥ १ ॥ अनुवर्तन्तेऽन्ये ॥ २ ॥ प्रकृतिः स्वधर्मः । विषमः कुमार्गः ॥ ३ ॥ जितानामापन्नानाम् । अजितानां स्वस्थानाम् ॥ ५ ॥ कृतकल्याणं प्रागुपकारं कृतवन्तम् ॥ ६ ॥ प्रियं भृत्यादीनाम् ॥ १२ ॥ अनुरज्यत्यनुरञ्जयति । एवमेव गुणैर्युक्तो यो न रक्षति भूमिपम् । भर्तुरर्थेष्वसूयन्तं न तं युञ्जीत कर्मणि इति ङ. थ. पाठः ॥१७॥

अल्पेनापि स दण्डेन महीं जयति पार्थिवः ॥ ४
'दण्डो हि बलवान्यत्र तत्र साम प्रयुज्यते ।
प्रदानं सामपूर्वं च भेदमूलं प्रशस्यते ॥ ५
त्रयाणां विफलं कर्म यदा पश्येत भूमिपः ।
रन्ध्रं ज्ञात्वा ततो दण्डं प्रयुञ्जीताविचारयन् ॥ ६
अभिभूतो यदा शत्रुः शत्रुभिर्बलवत्तरैः ।
उपेक्षा तत्र कर्तव्या वध्यता बलिनां बलम् ॥ ७
दुर्बलो हि महीपालो यदा भवति भारत ।
उपेक्षा तत्र कर्तव्या चतुर्णामविरोधिनी ।
उपायः पञ्चमः सोऽपि सर्वेषां बलवत्तरः ॥ ८
भार्गवेण च गीतानां श्लोकानां कोसलाधिप ।
विज्ञाय तत्वं तत्वज्ञ तत्वतस्तत्करिष्यति ॥ ९
यदि रक्षःपिशाचेन हन्यते यत्रकुत्रचित् ।
उपेक्षा तत्र कर्तव्या वाच्यतां बलिनां बलम् ॥ १०
दुर्बलोऽपि महीपाल शत्रूणां शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ ११
शठानां सचिवानां च म्लेच्छानां च महीपते ।
एष उक्त उपायानामुपेक्षा बलवत्तम ॥ १२
अश्मना नाशयेल्लोहं लोहेनाश्मानमेव तु ।
बिल्वानि वा परैर्बिल्वैर्म्लेच्छैर्म्लेच्छान्प्रसादयेत् १३
दासानां च प्रद्दप्तानामेतदेव हि कारयेत् ।
चण्डालम्लेच्छजातीनां दण्डेनैव निवारणम् ।
शठानां दुर्विनीतैश्च पूर्वमुक्तं समाचरेत् ॥ १४
अन्त्याः शठाश्च सचिवास्तथा कुब्राह्मणादयः ।
उपायैः पञ्चभिः साध्याश्चतुर्वर्गविरोधिनः ॥ १५
पौरजानपदा यस्य स्वनुरक्ता अपीडिताः ।
राष्ट्रकर्मकरा ह्येते राष्ट्रस्य च विरोधिनः ॥ १६
दुर्विनीता विनीताश्च सर्वे साध्याः प्रयत्नतः ।
चण्डालम्लेच्छजात्याश्च पापण्डाश्च विकर्मिणः ।
बलिनश्चाश्रमाश्चैव तथा गायकनर्तकाः ॥' १७
पौरजानपदा यस्य भूतेषु च दयालवः ।
सधना धान्यवन्तश्च दृढमूलः स पार्थिवः ॥ १८
प्रतापकालमधिकं यदा मन्येत चात्मनः ।
तदा लिप्सेत मेधावी परभूमिधनान्युत ॥ १९
भोगेष्वदयमानस्य भूतेषु च दयावतः ।
वर्धते त्वरमाणस्य विषयो रक्षितात्मनः ॥ २०
तक्षेदात्मानमेवं स वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु स्वेषु मिथ्या प्रवर्तते ॥ २१
नैव द्विषन्तो हीयन्ते राज्ञो नित्यमनिघ्नतः ।
क्रोधं निहन्तुं यो वेद तस्य द्वेष्टा न विद्यते ॥ २२
यदार्यजनविद्दिष्टं कर्म तन्नाचरेद्बुधः ।
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ॥ २३
नैवमन्येऽवजानन्ति नात्मना परितप्यते ।
कृत्यशेषेण यो राजा सुखान्यनुबुभूषति ॥ २४
इदं वृत्तं मनुष्येषु वर्तते यो महीपतिः ।
उभौ लोकौ विनिर्जित्य विजये संप्रतिष्ठते ॥ २५
भीष्म उवाच ।
इत्युक्तो वामदेवेन सर्वं तत्कृतवान्नृपः ।
तथा कुर्वंस्त्वमप्येतौ लोकौ जेता न संशयः ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

भीष्मेण युधिष्ठिरंप्रति युद्धधर्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि ।
कस्तस्य विजये धर्मो ह्येतं पृष्टो ब्रवीहि मे ॥ १
भीष्म उवाच ।
ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः ।
ब्रूयादहं वो राजेति रक्षिष्यामि च वः सदा ॥ २

दण्डेन सैन्येन ॥ ४ ॥ कृत्यशेषेण परकृत्यं कार्त्स्न्येन न समापयेत् । समापिते तु परोऽवमन्यते स्वस्य च तापो भवतीत्यर्थः ॥ २४ ॥ नृपो वसुमनाः ॥२६॥ चतुर्नवतितमोऽध्यायः ॥९४॥ राष्ट्रं परकीयम् ॥ २ ॥

मम धर्मबलिं दत्त किंवा मां प्रतिपत्स्यथ ।
ते चोक्तमागतं तत्र वृणीयुः कुशलं भवेत् ॥ ३
न चेदक्षत्रियाः सन्तो विरुध्येरन्कथंचन ।
सर्वोपायैर्नियन्तव्या विकर्मस्था नराधिप ॥ ४
अशस्त्रं क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः ।
त्राणायाप्यसमर्थं तं मन्यमानमतीव च ॥ ५
युधिष्ठिर उवाच ।
अथ यः क्षत्रियो राजा क्षत्रियं प्रत्युपाव्रजेत् ।
कथं संप्रतियोद्धव्यस्तन्मे ब्रूहि पितामह ॥ ६
भीष्म उवाच ।
नासंनद्धो नाकवचो योद्धव्यः क्षत्रियो रणे ।
एक एकेन वाच्यश्च विसृजेति क्षिपामि च ॥ ७
स चेत्संनद्ध आगच्छेत्संनद्धव्यं ततो भवेत् ।
स चेत्ससैन्य आगच्छेत्ससैन्यस्तमथाह्वयेत् ॥ ८
स चेन्निकृत्या युध्येत निकृत्या प्रतियोधयेत् ।
अथ चेद्धर्मतो युध्येद्धर्मेणैव निवारयेत् ॥ ९
नाश्वेन रथिनं यायादुदियाद्रथिनं रथी ।
व्यसने न प्रहर्तव्यं न भीताय जिताय च ॥१०
नेषुर्लिप्तो न कर्णी स्यादसतामेतदायुधम् ।
यथार्थमेव योद्धव्यं न क्रुध्येत जिघांसतः ॥ ११
'नास्त्येकस्य गजो युद्धे गजश्चैकस्य विद्यते ।
न पदातिर्गजं युध्येन्न गजेन पदातिनम् ॥ १२
हस्तिना योधयेन्नागं कदाचिच्छिक्षितो हयः ।
दिव्यास्त्रबलसंपन्नः कामं युध्येत सर्वदा ।
नागे भूमौ समे चैव रथेनाश्वेन वा पुनः ॥ १३
रामरावणयोर्युद्धे हरयो वै पदातयः ।
लक्ष्मणश्च महाभागस्तथा राजन्विभीषणः ॥ १४
रावणस्यान्तकाले च रथेनैन्द्रेण राघवः ।
निजघान दुराचारं रावणं पापकारिणम् ॥ १५
दिव्यास्त्रबलसंपन्ने सर्वमेतद्विधीयते ।
देवासुरेषु सर्वेषु दृष्टमेतत्पुरातनैः ॥' १६
[साधूनां तु यदा भेदात्साधुश्चेद्व्यसनी भवेत् ।]
निष्प्राणो नाभिहन्तव्यो नानपत्यः कथंचन ।
भग्नशस्त्रो विपन्नश्च कृत्तज्यो हतवाहनः ॥ १७
चिकित्स्यः स्यात्स्वविषये प्राप्यो वा स्वगृहे भवेत्
निर्व्रणश्च स मोक्तव्य एष धर्मः सनातनः ॥ १८
तस्माद्धर्मेण योद्धव्यमिति स्वायंभुवोऽब्रवीत् ।
सत्सु नित्यः सतां धर्मस्तमास्थाय न नाशयेत् ॥१९
यो वै जयत्यधर्मेण क्षत्रियो धर्मसंगरः ।
आत्मानमात्मना हन्ति पापो निकृतिजीवनः ॥२०
कर्म चैतदसाधूनां साधून्योऽसाधुना जयेत् ।
धर्मेण निधनं श्रेयो न जयः पापकर्मणा ॥ २१
नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
मूलानि च प्रशाखाश्च दहन्समधिगच्छति ॥ २२
पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति ।
स वर्धमानस्तेनैव पापः पापे प्रसज्जति ॥ २३
न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव ।
अश्रद्दधानश्च भवेद्विनाशमुपगच्छति ।
स बद्धो वारुणैः पाशैरमर्त्यैरवमन्यते ॥ २४
महादृतिरिवाध्मातः स्वकृतेनैव वर्धते ।
ततः समूलो ह्रियते नदीकूलादिव द्रुमः ॥ २५
अथैनमभिनिन्दन्ति भिन्नं कुम्भमिवाश्मनि ।
तस्माद्धर्मेण विजयं कोशं लिप्सेत भूमिपः ॥२६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

## षण्णवतितमोऽध्यायः ॥ ९६ ॥

भीष्मेण युधिष्ठिरंप्रति राजधर्मकथनम् ॥ १ ॥

भीष्म उवाच ।
नाधर्मेण महीं जेतुं लिप्सेत जगतीपतिः ।
अधर्मविजयं लब्ध्वा को नु मन्येत भूमिपः ॥ १
अधर्मयुक्तो विजयो ह्यध्रुवोऽस्वर्ग्य एव च ।

त्राणायाप्यसमर्थं परं चातीव मन्यमानं क्षत्रियमशस्त्रं ज्ञात्वाऽपरो हीनोऽपि शस्त्रं गृह्णाति ॥ ५ ॥ लिप्तो विषदिग्धः । कर्णी ऋजुः प्रतीपकण्टकः ॥ ११ ॥ महादृतिर्महांश्चर्मकोशः । आध्मातो वायुना पूरितः ॥ २५ ॥ पञ्चनवतितमोऽध्यायः ॥९५॥

पातयत्येव राजानं महीं च भरतर्षभ ॥ २
विशीर्णकवचं चैव तवास्मीति च वादिनम् ।
कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ॥ ३
बलेन विजितो यश्च न तं युध्येत भूमिपः ।
संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत् ॥ ४
नार्वाक्संवत्सरात्कन्या प्रष्टव्या विक्रमाहृता ।
एवमेव धनं सर्वं यच्चान्यत्सहसा हृतम् ॥ ५
न तु वध्ये धनं तिष्ठेत्पिबेयुर्ब्राह्मणाः पयः ।
युञ्जीरन्नप्यनडुहः क्षन्तव्यं वा पुनर्भवेत् ॥ ६
राज्ञा राजैव योद्धव्यस्तथा धर्मो विधीयते ।
नान्यो राजानमभ्यस्येदराजन्यः कथंचन ॥ ७
अनीकयोः संहतयोर्यदीयाद्ब्राह्मणोऽन्तरा ।
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत् ॥ ८
मर्यादां शाश्वतीं भिन्द्याद्ब्राह्मणं योऽभिलङ्घयेत् ।
अथ चेल्लङ्घयेदेव मर्यादां क्षत्रियब्रुवः ।
असङ्ख्येयस्तदूर्ध्वं स्यादनादेयश्च संसदि ॥ ९
यस्तु धर्मविलोपेन मर्यादाभेदनेन च ।
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः ॥ १०
धर्मलब्धाद्धि विजयाल्लाभः कोऽभ्यधिको भवेत् ॥
सहसा न्याय्यभूतानि क्षिप्रमेव प्रसादयेत् ।
सान्त्वेन भोगदानेन स राज्ञां परमो नयः ॥ १२
भुज्यमाना ह्यभोगेन स्वराष्ट्रादभितापिताः ।
अमित्रान्पर्युपासीरन्व्यसनौघप्रतीक्षिणः ॥ १३
अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि ।
संतुष्टाः सर्वतो राजन्राजव्यसनकाङ्क्षिणः ॥ १४
नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथंचन ।
जीवितं ह्यप्यतिच्छिन्नः संत्यजेदेकदा नरः ॥ १५
अल्पेनापि च संयुक्तस्तुष्यते नापराधितः ।
शुद्धं जीवितमेवापि तादृशो बहुमन्यते ॥ १६
यस्य स्फीतो जनपदः संपन्नः प्रियराजकः ।
संतुष्टभृत्यसचिवो दृढमूलः स पार्थिवः ॥ १७
ऋत्विक्पुरोहिताचार्या ये चान्ये श्रुतसत्तमाः ।
पूजार्हाः पूजिता यस्य स वै लोकविदुच्यते ॥ १८
एतेनैव च वृत्तेन महीं प्राप सुरोत्तमः ।
अन्येऽपि चैव विजयं विजिगीषन्ति पार्थिवाः ॥ १९
भूमिवर्जं धनं राजा जित्वा राजन्महाहवे ।
अपि चान्नौषधीः शश्वदाजहार प्रतर्दनः ॥ २०
अग्निहोत्राग्निशेषं च हविर्भोजनमेव च ।
आजहार दिवोदासस्ततो विप्रकृतोऽभवत् ॥ २१
सराजकानि राष्ट्राणि नाभागो दक्षिणां ददौ ।
अन्यत्र श्रोत्रियस्वाच्च तापसार्थाच्च भारत ॥ २२
उच्चावचानि वित्तानि धर्मज्ञानां युधिष्ठिर ।
आसन्राज्ञां पुराणानां सर्वं तन्मम रोचते ॥ २३
सर्वविद्यातिरेकेण जयमिच्छेन्महीपतिः ।
न मायया न दम्भेन य इच्छेद्भूतिमात्मनः ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

भीष्मेण युधिष्ठिरंप्रति सयुक्तिकं युद्धस्य धर्म्यत्वसमर्थनम् ॥ १ ॥

युधिष्ठिर उवाच ।
क्षत्रधर्माद्धि पापीयान्न धर्मोऽस्ति नराधिप ।
अपयाने च युद्धे च राजा हन्ति महाजनम् ॥ १
अथ स कर्मणा केन लोकाञ्जयति पार्थिवः ।

विप्रणयेद्दासोऽस्मीति वदेति तं शिक्षयेत् । ततः संवत्सरादूर्ध्वं स एवाऽब्रुवन्नपि ततो जातो जेतुः पुत्रएव भवेत् । ततश्च मोक्तव्य इत्यर्थः ॥ ४ ॥ नच संवत्सरं कन्याः स्प्रष्टव्याः सहसाहृताः इति ङ. पाठः ॥ ५ ॥ अभ्यस्येदभिमुखं शस्त्रं क्षिपेत् ॥ ७ ॥ क्षत्रियब्रुवः क्षत्रियाधमः ॥ ९ ॥ असंख्येयः क्षत्रियेषु न गणनीयः ॥ १० ॥ अमित्रोपग्रहं तद्वैरिणामानुकूल्यम् । ते बलाद्भुज्यमानाः ॥ १४ ॥ विनिकर्तव्यो निकृत्या वञ्चयितव्यः ॥ १५ ॥ अग्निशेषं यज्ञाङ्गभूतं हविः । भोजनं सिद्धान्नम् । एतन्न हर्तव्यमित्यर्थः । विप्रकृतो वञ्चितः ॥ २१ ॥ राज्ञा सर्वं हर्तव्यमित्यर्थः ॥ २३ ॥ षण्णवतितमोऽध्यायः ॥ ९६ ॥

महाजनं कटकाश्रितं वैश्यादिजनम् ॥ १ ॥ केन तद्वधप्रा-

सर्वोपायै रणमुखमातिष्ठंस्त्यक्तजीवितः ।
प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् ॥ ३१
यत्रयत्र हतः शूरः शत्रुभिः परिवारितः ।
अक्षयांल्लभते लोकान्यदि दैन्यं न सेवते ॥ ३२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

भीष्मेण युधिष्ठिरंप्रति सुदेवस्य युद्धेन देवलोकप्राप्तिप्रतिपादकेन्द्राम्बरीषसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
के लोका युध्यमानानां शूराणामनिवर्तिनाम् ।
भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अम्बरीषस्य संवादमिन्द्रस्य च युधिष्ठिर ॥ २
अम्बरीषो हि नाभागः स्वर्गं गत्वा सुदुर्लभम् ।
ददर्श सुरलोकस्थं शक्रेण सचिवैः सह ॥ ३
सर्वतेजोमयं दिव्यं विमानवरमास्थितम् ।
उपर्युपरिगच्छन्तं स्थानं सेनापतिं शुभम् ॥ ४
स दृष्ट्वोपरि गच्छन्तं सेनापतिमुदारधीः ।
'शूरस्थानमनुप्राप्तं सुदेवं नाम नामतः ।'
ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम् ॥५
अम्बरीष उवाच ।
सागरान्तां महीं कृत्स्नामनुशास्य यथाविधि ।
चातुर्वर्ण्ये यथाशास्त्रं प्रवृत्तो धर्मकाम्यया ॥ ६
ब्रह्मचर्येण घोरेण गुर्वाचारेण सेवया ।
वेदानधीत्य धर्मेण राजशास्त्रं च केवलम् ॥ ७
अतिथीनन्नपानेन पितॄंश्च स्वधया तथा ।
ऋषीन्स्वाध्यायदीक्षाभिर्देवान्यज्ञैरनुत्तमैः ॥ ८
क्षत्रधर्मे स्थितो भूत्वा यथाशास्त्रं यथाविधि ।
उदीक्षमाणः पृतनां जयामि युधि वासव ॥ ९
देवराज सुदेवोऽयं मम सेनापतिः पुरा ।
आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम्।
विमानं सूर्यसङ्काशमास्थितो मोदते दिवि ॥ १०
अनेन क्रतुभिर्मुख्यैर्नेष्टं नापि द्विजातयः ।
तर्पिता विधिवच्छक्र सोऽयं कस्मादतीत्य माम्११
ऐश्वर्यमीदृशं प्राप्तः सर्वदेवैः सुदुर्लभम् ।
इन्द्र उवाच ।
'यदनेन कृतं कर्म प्रत्यक्षं ते महीपते ।
पुरा पालयतः सम्यक्पृथिवीं धर्मतो नृप ॥ १२
शत्रवो निर्जिताः सर्वे ये तवाहितकारिणः ।
संयमो वियमश्चैव सुयमश्च महाबलः ॥ १३
राक्षसा दुर्जया लोके त्रयस्ते युद्धदुर्मदाः ।
पुत्रास्ते शतश‍ृङ्गस्य राक्षसस्य महीपतेः ॥ १४
तथा तस्मिञ्शुभे काले तव यज्ञं वितन्वतः ।
अश्वमेधं महायागं देवानां हितकाम्यया ॥ १५
तस्य ते खलु विघ्नार्थमागता राक्षसास्त्रयः ।
कोटीशतपरीवारां राक्षसानां महाचमूम् ।
परिगृह्य ततः सर्वाः प्रजा बन्दीकृतास्तव ॥ १६
विह्वलाश्च प्रजाः सर्वाः सर्वे च तव सैनिकाः ।
निराकृतस्तु यश्चासीत्सुदेवः सैन्यनायकः ॥ १७
तत्रामात्यवचः श्रुत्वा निरस्तः सर्वकर्मसु ।
श्रुत्वा तेषां वचो भूयः सोपधं वसुधाधिपः॥१८
सर्वसैन्यसमायुक्तः सुदेवः प्रेरितस्त्वया ।
राक्षसानां वधार्थाय दुर्जयानां नराधिप ॥ १९
नाजित्वा राक्षसीं सेनां पुनरागमनं तव ।
बन्दीमोक्षमकृत्वा च न चागमनमिष्यते ॥ २०
सुदेवस्तद्वचः श्रुत्वा प्रस्थानमकरोन्नृप ।
संप्राप्तश्च स तं देशं यत्र बन्दीकृताः प्रजाः॥२१
पश्यति स्म महाघोरां राक्षसानां महाचमूम् ।
दृष्ट्वा सुचिन्तयामास सुदेवो वाहिनीपतिः ॥२२
नेयं शक्या चमूर्जेतुमपि सेन्द्रैः सुरासुरैः ।

---

नाभागिः नाभागपुत्रः ॥ ३ ॥

विद्धि त्वज्ज्ञानमानाय प्रब्रूहि भरतर्षभ ॥ २
भीष्म उवाच ।
निग्रहेण च पापानां साधूनां संग्रहेण च ।
यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ॥ ३
उपरुन्धन्ति राजानो भूतानि विजयार्थिनः ।
त एव विजयं प्राप्य वर्धयन्ति पुनः प्रजाः ॥ ४
अपविध्यन्ति पापानि दानयज्ञतपोबलैः ।
अनुग्रहेण भूतानां पुण्यमेषां विवर्धते ॥ ५
यथैव क्षेत्रनिर्याता निर्यातं क्षेत्रमेव च ।
हिनस्ति धान्यकक्षं च न च धान्यं विनश्यति ॥ ६
एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्याननेकधा ।
तस्यैषा निष्कृतिर्दिष्टा भूतानां भावनं पुनः ॥ ७
यो भूतानि सदाऽनर्थाद्वधात्क्लेशाच्च रक्षति ।
दस्युभ्यः प्राणदानात्स धनदः सुखदो विराट् ॥ ८
स सर्वयज्ञै राजानो राजाऽथाभयदक्षिणैः ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ९
ब्राह्मणार्थे समुत्पन्ने योऽभिनिष्पत्य युध्यति ।
आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः ॥ १०
अभीतो विकिरञ्शत्रून्प्रतिगृह्य शरांस्तथा ।
न तस्मात्रिदशाः श्रेयो भुवि पश्यन्ति किंचन ॥ ११
तस्य शस्त्राणि यावन्ति त्वचं भिन्दन्ति संयुगे ।
तावतः सोऽश्नुते लोकान्सर्वकामदुहोऽक्षयान् १२
यदस्य रुधिरं गात्रादाहवे संप्रवर्तते ।
सह तेनैव स्रावेण सर्वपापैः प्रमुच्यते ॥ १३
यानि दुःखानि सहते प्राणानामतिपातने ।
न तपोऽस्ति ततो भूय इति धर्मविदो विदुः ॥ १४
पृष्ठतो भीरवः सङ्ख्ये वर्तन्ते धर्मपूरुषाः ।
शूराच्छरणमिच्छन्तः पर्जन्यादिव जीवनम् ॥ १५
यदि शूरं तथा क्षेमे प्रतीक्षेरन्यथा भये ।
प्रतिरूपं जनाः कुर्युर्न च तद्वर्तते तथा ॥ १६
यदि ते कृतमाज्ञाय नमस्कुर्युः सदैव तम् ।
युक्तं न्याय्यं च कुर्युस्ते न च तद्वर्तते तथा ॥ १७
पुरुषाणां समानानां दृश्यते महदन्तरम् ।
संग्रामेऽनीकवेलायामुत्क्रुष्टेषु पतत्सु च ॥ १८
पतत्यभिमुखं शूरः परान्भीरुः पलायते ।
आस्थाय स्वर्ग्यमध्वानं सहायान्विषमे त्यजन् ॥ १९
मा स्म तांस्तादृशांस्तात जनिष्ठाऽधर्मपूरुषान् ॥ २०
ये सहायान्रणे हित्वा स्वस्तिमन्तो गृहान्ययुः ।
अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः ॥ २१
त्यागेन यः सहायानां स्वान्प्राणांस्त्रातुमिच्छति ।
तं हन्युः काष्ठलोष्टैर्वा दहेयुर्वा कटाग्निना ।
पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः ॥ २२
अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ।
विसृजञ्श्लेष्मपित्तानि कृपणं परिदेवयन् ॥ २३
अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥ २४
न गृहे मरणं तात क्षत्रियाणां प्रशस्यते ।
शौण्डीराणामशौण्डीर्यमधर्म्यं कृपणं च तत् ॥ २५
इदं कृच्छ्रमहो दुःखं पापीय इति निष्टनन् ।
प्रतिध्वस्तमुखः पूतिरमात्याननुशोचयन् ॥ २६
अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति ।
वीरो दृप्तो मनस्वी च नेदृशं मृत्युमर्हति ॥ २७
रणेषु कदनं कृत्वा सुहृद्भिः प्रतिपूजितः ।
तीक्ष्णैः शस्त्रैरभिक्लिष्टः क्षत्रियो मृत्युमर्हति ॥ २८
शूरो हि सत्वमन्युभ्यामाविष्टो युध्यते भृशम् ।
कृत्यमानानि गात्राणि परैर्नैवावबुध्यते ॥ २९
स सङ्ख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम् ।
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ॥ ३०

---

यज्ञविघ्नं कृत्वा पुण्यफलमाप्नोतीत्यर्थः ॥ २ ॥ उपरुन्धन्ति पीडयन्ति ॥ ४ ॥ अपविध्यन्ति दूरीकुर्वन्ति ॥ ५ ॥ निर्याता तृणाद्यपनयनेन शोधकः । कक्षं तृणं । क्षेत्रनिर्वाहो निर्दहेत्क्षेत्रमेकदा इति द. पाठः ॥ ६ ॥ भावनं वर्धनम् । पावनं महदिति द. पाठः ॥ ७ ॥ आत्मानं देहयूपं यज्ञस्तम्भं उत्सृज्य उच्छ्रित्य । यज्ञो युद्धयज्ञः ॥ १० ॥ अनीकवेलायां अनीकानां संघट्टकाले ॥ १८ ॥ विषमे प्राणसंकटे त्यजन् भीरुरिति संबन्धः ॥ १९ ॥ ते तृणमये कटे बद्ध्वा दहनं कटाग्निना दाहः ॥ २२ ॥ शौण्डीराणां शूरत्वाभिमानवताम् ॥ २५ ॥ निष्टनञ्छब्दं कुर्वन् । पूतिः दुर्गन्धिः । अमात्याननुशोचयन् ॥ २६ ॥ सप्तनवतितमोऽध्यायः ॥ ९७ ॥

नाम्बरीषः कलामेकामेषां क्षपयितुं क्षमः ।
दिव्यास्त्रबलभूयिष्ठः किमहं पुनरीदृशः ॥ २३
ततः सेनां पुनः सर्वां प्रेषयामास पार्थिव ।
यत्र त्वं सचिवैः सर्वैर्मन्त्रिभिः सोपधैर्नृप ॥ २४
ततो रुद्रं महादेवं प्रपन्नो जगतः पतिम् ।
श्मशाननिलयं देवं तुष्टाव वृषभध्वजम् ॥ २५
स्तुत्वा शस्त्रं समादाय स्वशिरश्छेत्तुमुद्यतः ॥ २६
कारुण्याद्देवदेवेन गृहीतस्तस्य दक्षिणः ।
स पाणिः सह शस्त्रेण दृष्ट्वा चेदमुवाच ह ॥ २७
किमिदं साहसं पुत्र कर्तुकामो वदस्व मे ।
स उवाच महादेवं शिरसा त्ववनीं गतः ॥ २८
भगवन्वाहिनीमेनां रक्षमाणां सुरेश्वर ।
अशक्तोऽहं रणे जेतुं तस्मात्त्यक्ष्यामि जीवितम् ।
गतिर्भव महादेव ममातस्य जगत्पते ॥ २९
नागन्तव्यमजित्वा च मामाह जगतीपतिः ।
अम्बरीषो महादेव क्षारितः सचिवैः सह ॥ ३०
तमुवाच महादेवः सुदेवं पतितं क्षितौ ।
अधोमुखं महात्मानं सत्वानां हितकाम्यया ॥ ३१
धनुर्वेदं समाहूय सगणं सहविग्रहम् ।
रथनागाश्वकलिलं दिव्यास्त्रसमलंकृतम् ॥ ३२
रथं च सुमहाभागं येन तत्त्रिपुरं हतम् ।
धनुः पिनाकं खड्गं च रौद्रमस्त्रं च शंकरः ।
निजघानासुरान्सर्वान्येन देवस्त्रियम्बकः ॥ ३३
उवाच च महादेवः सुदेवं वाहिनीपतिम् ।
रथादस्मात्सुदेव त्वं दुर्जयः स सुरासुरैः ॥ ३४
मायया मोहितो भूमौ न पदं कर्तुमर्हसि ।
रथस्थस्त्रिदशान्सर्वाञ्जेष्यसि त्वं सदानवान् ॥३५
राक्षसाश्च पिशाचाश्च न शक्ता द्रष्टुमीदृशम् ।
रथं सूर्यसहस्राभं किमु योद्धुं त्वया सह ॥ ३६
स जित्वा राक्षसान्सर्वान्कृत्वा बन्दीविमोक्षणम् ।
घातयित्वा च तान्सर्वान्बाहुयुद्धे त्वयं हतः ।
विषमं प्राप्य भूपाल विषमश्च निपातितः ॥' ३७
तस्य विक्रमतस्तात सुदेवस्य बभूव ह ।
संग्रामयज्ञः सुमहान्यश्चान्यो युध्यते नरः ॥ ३८
सन्नद्धो दीक्षितः सर्वो योधः प्राप्य चमूमुखम् ।
युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः ॥ ३९
अम्बरीष उवाच ।
कानि यज्ञे हवींष्यस्मिन्किमाज्यं का च दक्षिणा ।
ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो ॥ ४०
इन्द्र उवाच ।
ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्यवस्तथा ।
हवींषि परमांसानि रुधिरं त्वाज्यमुच्यते ॥ ४१
शृगालगृध्रकाकोलाः सदस्यास्तत्र पत्रिणः ।
आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे ॥४२
प्रासतोमरसंघाताः खड्गशक्तिपरश्वधाः ।
ज्वलन्तो निशिताः पीताः स्रुचस्तस्याथ सत्रिणः
चापवेगायतस्तीक्ष्णः परकायावभेदनः ।
ऋजुः सुनिशितः पीतः सायकश्च स्रुवो महान् ४४
द्वीपिचर्मावनद्धश्च नागदन्तकृतत्सरुः ।
हस्तिहस्तहरः खड्गः स्फ्यो भवेत्तस्य संयुगे ॥ ४५
ज्वलितैर्निशितैः प्रासशक्त्यृष्टिसपरश्वधैः ।
शैक्यायसमयैस्तीक्ष्णैरभिघातो भवेद्वसु ॥ ४६
[सङ्ख्यासमयविस्तीर्णमभिजातोद्भवं बहु ।]
आवेधाद्यच्च रुधिरं संग्रामे स्रवते भुवि ।
साऽस्य पूर्णाहुतिर्होत्रैः समृद्धा सर्वकामधुक् ॥४७
छिन्धि भिन्धीति यः शब्दः श्रूयते वाहिनीमुखे ।
सामानि सामगास्तस्य गायन्ति यमसादने ॥४८
हविर्धानं तु तस्याहुः परेषां वाहिनीमुखम् ॥४९
कुञ्जराणां हयानां च वर्मिणां च समुच्चयः ।
अग्निः श्येनचितो नाम यज्ञे तस्य विधीयते ॥५०
उत्तिष्ठते कबन्धोऽत्र सहस्रे पतिते तु यः ।
स यूपस्तस्य शूरस्य खादिरोऽष्टाश्रिरुच्यते ॥ ५१
इडोपहूताः क्रोशन्ति कुञ्जरास्त्वङ्कुशेरिताः ।
ज्याघुष्टतलतालेन वषट्कारेण पार्थिव ॥ ५२

यश्चान्योऽक्षत्रियोऽपि युध्यते नरस्तस्याप्ययं च यज्ञोऽस्ति ॥ ३८ ॥ पीताः क्षारपानीयेन संभाविताः ॥ ४३ ॥ स्फ्यः यार्मचोपकरणविशेषः ॥ ४५ ॥ शैक्यायसमयैः सर्वलोहमयैः । वसु यत्किंचिद्यज्ञियं द्रव्यम् ॥ ४६ ॥ हविर्धानं हविषः स्थापनस्थलम् ॥ ४९ ॥

उद्गाता तत्र संग्रामे त्रिसामा दुन्दुभिर्नृप ।
ब्रह्मस्वे ह्रियमाणे तु त्यक्त्वा युद्धे प्रियां तनुम् ।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः ॥५३
भर्तुरर्थे च यः शूरो निष्क्रामेद्वाहिनीमुखात् ।
न भयाद्विनिवर्तेत तस्य लोका यथा मम ॥ ५४
द्वीपिचर्मावृतैः खड्गैर्बाहुभिः परिघोपमैः ।
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम ॥ ५५
यस्तु नापेक्षते कंचित्सहायं विषमे स्थितः ।
विगाह्य वाहिनीमध्यं तस्य लोका यथा मम ॥५६
यस्य शोणितसंघट्टा भेरीमण्डूककच्छपा ।
वीरास्थिशर्करा दुर्गा मांसशोणितकर्दमा ॥ ५७
असिचर्मप्लवा घोरा केशशैवलशाद्वला ।
अश्वनागरथैश्चैव संछिन्नैः कृतसंक्रमा ॥ ५८
पताकाध्वजवानीरा हतवाहनवारणा ।
शोणितोदकसंपूर्णा दुस्तरा पारगैर्नरैः ॥ ५९
हतनागमहानक्रा परलोकवहाऽशिवा ।
ऋष्टिखड्गमहामीना गृध्रकङ्कबलप्लवा ॥ ६०
पुरुषादानुचरिता भीरूणां कश्मलावहा ।
नदी योधस्य संग्रामे तदस्यावभृथं नृप ॥ ६१
वेदिर्यस्य त्वमित्राणां शिरोभिर्व्यवकीर्यते ।
अश्वस्कन्धैर्गजस्कन्धैस्तस्य लोका यथा मम ॥ ६२
पत्नी शालाकृता यस्य परेषां वाहिनीमुखम् ।
हविर्धानं स्ववाहिन्यास्तदस्याहुर्मनीषिणः ॥ ६३
सदस्या दक्षिणा योधा आग्नीध्रश्चोत्तरां दिशम् ।
शत्रुसेना कलत्रस्य सर्वलोकानदूरतः ॥ ६४
यस्य तूभयतो व्यूहे भवत्याकाशमग्रतः ।
सास्य वेदिस्तदा यज्ञैर्नित्यं व्यूहास्त्रयोऽग्नयः ॥ ६५
यस्तु योधः परावृत्तः संत्रस्तो हन्यते परैः ।
अप्रतिष्ठः स नरकं याति नास्त्यत्र संशयः ॥६६
यस्य शोणितवेगेन वेदिः स्यात्संपरिप्लुता ।
केशमांसास्थिसंपूर्णा स गच्छेत्परमां गतिम् ॥६७
यस्तु सेनापतिं हत्वा तद्यानमधिरोहति ।
स विष्णुविक्रमक्रामी बृहस्पतिसमः प्रभुः ॥ ६८
नायकं तत्कुमारं वा यो वा स्यात्तत्र पूजितः ।
जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम ॥ ६९
आहवे तु हतं शूरं न शोचेत कथंचन ।
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते ॥ ७०
न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम् ।
हतस्य कर्तुमिच्छन्ति तस्य लोकाञ्शृणुष्व मे ॥७१
वराप्सरःसहस्राणि शूरमायोधने हतम् ।
त्वरमाणानि धावन्ति मम भर्ता भवेदिति ॥ ७२
एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः ।
चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥ ७३
वृद्धबालौ न हन्तव्यौ न च स्त्री नैव पृष्ठतः ।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत् ॥ ७४
अहं वृत्रं बलं पाकं महाकायं विरोचनम् ।
दुरावारं च नमुचिं शतमायं च शम्बरम् ॥ ७५
विप्रचित्तिं च दैतेयं दनोः पुत्रांश्च सर्वशः ।
प्रह्लादं च निहत्याजौ ततो देवाधिपोऽभवम् ॥७६
इत्येतच्छक्रवचनं निशम्य प्रतिपूज्य च ।
योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान् ॥ ७७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

## एकोनशततमोऽध्यायः ॥ ९९ ॥

भीष्मेण युधिष्ठिरंप्रति जनकराजेन स्वयोधानां स्वर्गनरकप्रदर्शनेन युद्धे प्रोत्साहकथनम् ॥ १ ॥

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रतर्दनो मैथिलश्च संग्रामं यत्र चक्रतुः ॥ १
यज्ञोपवीती संग्रामे जनको मिथिलाधिपः ।

सदस्योत्तरयोधाग्निराग्नीध्रस्योत्तराथ दिक् । इति द. पाठः ॥ ६४ ॥ बृहस्पतिसवः क्रतुः इति ङ. द. पाठः ॥ ६८ ॥ नायकं वा प्रमाणं वेति ङ. द. पाठः ॥ ६९ ॥

अष्टनवतितमोऽध्यायः ॥ ९८ ॥
अत्र शूरप्रोत्साहने विषये ॥ १ ॥

योधानुद्धर्षयामास तन्निबोध युधिष्ठिर ॥ २
जनको मैथिलो राजा महात्मा सर्वतत्त्ववित् ।
योधानां दर्शयामास स्वर्गं नरकमेव च ॥ ३
अभीरूणामिमे लोका भास्वन्तो हन्त पश्यत ।
पूर्णा गन्धर्वकन्याभिः सर्वकामदुहोऽक्षयाः ॥ ४
इमे पलायमानानां नरकाः प्रत्युपस्थिताः ।
अकीर्तिः शाश्वती चैव पतितव्यमनन्तरम् ॥ ५
तान्दृष्ट्वाऽरीन्विजयत भूत्वा संत्यागबुद्धयः ।
नरकस्याप्रतिष्ठस्य मा भूत वशवर्तिनः ॥ ६
त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम् ।
इत्युक्तास्ते नृपतिना योधाः परपुरंजय ॥ ७
अजयन्त रणे शत्रून्हर्षयन्तो नरेश्वरम् ।
तस्मात्त्यक्तात्मना नित्यं स्थातव्यं रणमूर्धनि ॥ ८
गजानां रथिनो मध्ये रथानामनुसादिनः ।
सादिनामन्तरे स्थाप्यं पादातमपि दंशितम् ॥ ९
य एवं व्यूहते राजा स नित्यं जयते रिपून् ।
तस्मादेतद्विधातव्यं नित्यमेव युधिष्ठिर ॥ १०
स्वर्गं सुकृतमिच्छन्तः सुयुद्धेनातिमन्यवः ।
क्षोभयेयुरनीकानि सागरं मकरा यथा ॥ ११
हर्षयेयुर्विषण्णांश्च व्यवस्थाप्य परस्परम् ।
तेषां च भूमिं रक्षेयुर्भग्नान्नात्यनुसारयेत् ॥ १२
पुनरावर्तमानानां निराशानां च जीविते ।
वेगः सुदुःसहो राजंस्तस्मान्नात्यनुसारयेत् ॥ १३
न हि प्रहर्तुमिच्छन्ति शूराः प्रद्रवतो भयात् ।
तस्मात्पलायमानानां कुर्यान्नात्यनुसारणम् ॥ १४
चराणामचरा ह्यन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥ १५
समानपृष्ठोदरपाणिपादाः
पश्चाच्छूरं भीरवोऽनुव्रजन्ति ।
अतो भयार्ताः प्रणिपत्य भूयः
कृत्वाञ्जलीनुपतिष्ठन्ति शूरान् ॥ १६
शूरबाहुषु लोकोऽयं लम्बते पुत्रवत्सदा ।
तस्मात्सर्वेषु लोकेषु शूरः संमानमर्हति ॥ १७
न हि शौर्यात्परं किंचित्त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितम् ॥ १८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

## शततमोऽध्यायः ॥ १०० ॥

भीष्मेण युधिष्ठिरंप्रति युद्धकरणप्रकारादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यथा जयार्थिनः सेनां नयन्ति भरतर्षभ ।
ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
सत्येन हि स्थिता धर्म उपपत्त्या तथा परे ।
साध्वाचारतया केचित्तथैवौपयिकादपि ॥ २
उपायधर्मान्वक्ष्यामि संसिद्धानर्थसिद्धये ।
निर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः ॥ ३
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ।
कार्याणां संप्रसिद्ध्यर्थं तानुपायान्निबोध मे ॥ ४
उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत ।
जानन्वक्रां न सेवेत प्रतिबाधेत चागताम् ॥ ५
अमित्रा एव राजानं भेदेनोपचरन्त्युत ।
तां राजा निकृतिं जानन्यथाऽमित्रान्प्रबाधते ॥ ६
गजानां पार्थ वर्माणि गोवृषाजगराणि च ।
शल्यकण्टकलोहानि तनुत्राणि मतानि च ॥ ७

दर्शयामास योगबलेन ॥ ३ ॥ पतितव्यमनन्तरमिति ङ. द. पाठः ॥ ५ ॥ गजानां मध्ये रथिनः स्थाप्याः ॥ ९ ॥ नात्यनुसारयेन्नातिद्रावयेत् परावृत्तिभयात् ॥ १२ ॥ तदेवाह पुनरिति ॥ १३ ॥ एकोनशततमोऽध्यायः ॥ ९९ ॥

नैगमं वेदोक्तमुपायम् ॥ ४ ॥ वक्रां वक्रयैव नाशयेत् ॥ ५ ॥ अमित्रानिव तां निकृतिं प्रबाधते बाधेत ॥ ६ ॥ गजानां वर्माणि बाणघातत्राणानि । गवादीनां शल्यादीनि ॥ ७ ॥

शातपीतानि शस्त्राणि सन्नाहाः पीतलोहकाः ।
नानारञ्जनरक्ताः स्युः पताकाः केतवश्च ह ॥ ८
ऋष्टयस्तोमराः खड्गा निशिताश्च परश्वधाः ।
फलकान्यथ चर्माणि प्रतिकल्प्यान्यनेकशः ॥ ९
अभिनीतानि शस्त्राणि योधाश्च कृतनिश्चयाः ।
चैत्रे वा मार्गशीर्षे वा सेनायोगः प्रशस्यते ॥१०
पक्कसस्या हि पृथिवी भवत्यम्बुमती तदा ।
नैवातिशीतो नात्युष्णः कालो भवति भारत ॥११
तस्मात्तदा योजयेत परेषां व्यसनेऽथवा ।
एते हि योगाः सेनायाः प्रशस्ताः परबाधने ॥ १२
जलवांस्तृणवान्मार्गः समो गम्यः प्रशस्यते ।
चारैः सुविदिताभ्यासः कुशलैर्वनगोचरैः ॥ १३
न ह्यरण्यानि शक्यन्ते गन्तुं मृगगणैरिव ।
तस्मात्सेनासु तानेव योजयन्ति जयार्थिनः ॥ १४
[अग्रतः पुरुषानीकं शक्तं चापि कुलोद्भवम् ।]
आवासस्तोयवान्मार्गः पर्याकाशः प्रशस्यते ॥ १५
परेषामपसर्पाणां प्रतिघातस्तथा भवेत् ।
आकाशं हि वनाभ्याशे मन्यन्ते गुणवत्तरम् ॥१६
बहुभिर्गुणजातैश्च ये युद्धकुशला जनाः ।
[उपन्यासो भवेत्तत्र बलानां नातिदूरतः ॥] १७
उपन्यासोऽपसर्पाणां पदातीनां च गूहनम् ।
हतशत्रुप्रतीघातमापदर्थं परायणम् ॥ १८
सप्तर्षीन्पृष्ठतः कृत्वा युध्येयुरचला इव ।
अनेन विधिना शत्रूञ्जिगीषेतापि दुर्जयान् ॥ १९
यतो वायुर्यतः सूर्यो यतः सोमस्ततो जयः ।
पूर्वंपूर्वं ज्याय एषां सन्निपाते युधिष्ठिर ॥ २०
अकर्दमामनुदकाममर्यादामलोष्टकाम् ।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः ॥ २१
समा निरुदकाकाशा रथभूमिः प्रशस्यते ।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम् ॥२२
बहुदुर्गा महाकक्षा वेणुवेत्रतिरस्कृता ।
पदातीनां क्षमा भूमिः पर्वतोपवनानि च ॥ २३
पदातिबहुला सेना दृढा भवति भारत ।
रथाश्वबहुला सेना सुदिनेषु प्रशस्यते ॥ २४
पदातिनागबहुला प्रावृट्काले प्रशस्यते ।
गुणानेतान्प्रसंख्याय देशकालौ प्रयोजयेत् ॥ २५
एवं संचिन्त्य यो याति तिथिनक्षत्रपूजितः ।
विजयं लभते नित्यं सेनां सम्यक्प्रयोजयन् ॥ २६
प्रसुप्तांस्तृषिताञ्श्रान्तान्प्रकीर्णान्नाभिघातयेत् ।
मोक्षे प्रयाणे चलने पानभोजनकालयोः ।
अतिक्षिप्तान्व्यतिक्षिप्तान्निहतान्प्रतनूकृतान् ॥ २७
अविस्रब्धान्कृतारम्भानुपन्यासात्प्रतापितान् ।
बहिश्चरानुपन्यासान्कृतवेश्मानुसारिणः ॥ २८
पारम्पर्यागते द्वारे ये केचिदनुवर्तिनः ।
परिचर्यापरोद्धारो ये च केचन वल्गिनः ॥ २९
अनीकं ये विभिदन्ति भिन्नं संस्थापयन्ति च ।
समानाशनपानास्ते कार्या द्विगुणवेतनाः ॥ ३०
'जातिगोत्रं च विज्ञाय कर्म चानुत्तमं शुभम् ।
समानदेहरक्षार्थे कार्या द्विगुणवेतनाः ।
त्रिगुणं चतुर्गुणं चैव वेतनं तेषु कारयेत् ॥' ३१
दशाधिपतयः कार्याः शताधिपतयस्तथा ।
ततः सहस्राधिपतिं कुर्याच्छूरमतन्द्रितम् ॥ ३२
यथा मुख्यान्सन्निपात्य वक्तव्याः संशयामहे ।
यथा जयार्थं संग्रामे न जह्याम परस्परम् ॥ ३३
इहैव ते निवर्तन्तां ये च केचन भीरवः ।
न घातयेयुः प्रदरं कुर्वाणास्तुमुले सति ॥ ३४
[न सन्निपाते प्रदरं वधं वा कुर्युरीदृशाः ॥]
आत्मानं च स्वपक्षं च पालयन्हन्ति संयुगे ॥ ३५
अर्थनाशो वधोऽकीर्तिरयशश्च पलायने ।
अमनोज्ञाऽसुखा वाचः पुरुषस्य पलायतः ॥ ३६
प्रतिध्वस्तोष्ठदन्तस्य न्यस्तसर्वायुधस्य च ।
'हित्वा पलायमानस्य सहायान्प्राणसंशये ।'

अमर्यादां सेतुप्राकारादिहीनाम् ॥ २१ ॥ सुदिनेषु वृष्टिवर्जितदिनेषु ॥ २४ ॥ प्रसंख्याय सम्यग्विचार्य ॥ २५ ॥ तिथौ नक्षत्रे च पूजित आशीर्भिर्योजितः ॥ २६ ॥ उपन्यासात्सुरुङ्गादिगुप्तोपायात् । बहिस्तृणाद्यर्थं चरतो बहिश्चरानल्पान् । उपन्यासान् तृणाद्याहर्तॄन् ॥ २८ ॥ तान्नाभिघातयेदिति प्रपूर्वेण संबन्धः ॥ २९ ॥ अनीकं परकीयम् ॥ ३० ॥ सन्निपात्यैकीकृत्य ॥ ३३ ॥ प्रदरं भङ्गम् । वधं वा स्त्रीयानाम् ॥ ३५ ॥

अमित्रैर्ग्यन्द्रस्य द्विषतामस्तु नः सदा ॥ ३७
मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः ।
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह ॥ ३८
अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम् ।
जयिनस्तु नरास्तात मङ्गलैर्वन्दनेन च ॥ ३९
यस्य स्म व्यसने राजन्ननुमोदन्ति शत्रवः ।
तदसह्यतरं दुःखं मन्यन्ते मरणादपि ॥ ४०
श्रियं जानीत धर्मस्य मूलं सर्वसुखस्य च ।
या भीरूणां परा ख्यातिः शूरस्तामधिगच्छति ॥ ४१
ते वयं स्वर्गमिच्छन्तः संग्रामे त्यक्तजीविताः ।
जयन्तो वध्यमाना वा प्राप्नुयाम च सद्गतिम् ॥ ४२
एवं संशप्तशपथाः समभित्यक्तजीविताः ।
अमित्रवाहिनीं वीराः प्रतिगाहन्त्यभीरवः ॥ ४३
अग्रतः पुरुषानीकमसिचर्मवतां भवेत् ।
पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा ॥ ४४
परेषां प्रतिघातार्थं पदातीनां च गूहनम् ।
अपि तस्मिन्पुरे वृद्धा भवेयुर्ये पुरोगमाः ॥ ४५
ये पुरस्तादभिमताः सत्ववन्तो मनस्विनः ।
ते पूर्वमभिवर्तेरंस्तानेवेतरे जनाः ॥ ४६
अपि चोद्धर्षणं कार्यं भीरूणामपि यत्नतः ।
स्कन्धदर्शनमात्रात्तु तिष्ठेयुर्वा समीपतः ॥ ४७
संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ।
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥ ४८
संप्रयुक्ते निकृष्टे वा सत्यं वा यदि वाऽनृतम् ।
प्रगृह्य बाहून्क्रोशेत हन्त भग्नाः परे इति ॥ ४९
आगतं मे मित्रबलं प्रहरध्वमभीतवत् ।
सत्ववन्तो निधावेयुः कुर्वन्तो भैरवान्रवान् ॥ ५०
क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः ।
भेरीमृदङ्गपणवान्नादयेयुश्च जर्झरान् ॥ ५१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः ॥ १०१ ॥

भीष्मेण युधिष्ठिरंप्रति योधलक्षणादिकथनम् ॥

युधिष्ठिर उवाच ।
किंशीलाः किंसमुत्थानाः कथंरूपाश्च भारत ।
किंसन्नाहाः कथंशस्त्रा जनाः स्युः संयुगे नृपाः ॥ १
भीष्म उवाच ।
यथाचरितमेवात्र शस्त्रं पत्रं विधीयते ।
आचाराद्धीह पुरुषस्तथा कर्मसु वर्तते ॥ २
गान्धाराः सिन्धुसौवीरा नखरप्रासयोधिनः ।
अभीरवः सुबलिनस्तद्बलं सर्वपारगम् ॥ ३
सर्वशस्त्रेषु कुशलाः सत्ववन्तो ह्युशीनराः ।
प्राच्या मातङ्गयुद्धेषु कुशलाः कूटयोधिनः ॥ ४
तथा यवनकाम्भोजा मथुरामभितश्च ये ।
एतेऽश्वयुद्धकुशला दाक्षिणात्याऽसिचर्मिणः ।
सर्वत्र शूरा जायन्ते महासत्वा महाबलाः ॥ ५
आवन्तिका महाशूराश्चतुरङ्गे च मालवाः ।
एकोऽपि हि सहस्रस्य तिष्ठत्यभिमुखो रणे ॥ ६
प्रायो देशाः समुद्दिष्टा लक्षणानि तु मे शृणु ॥ ७
सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूलगामिनः ।
पारावतकुलिङ्गाक्षाः सर्वे शूराः प्रमाथिनः ॥ ८
मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तथा परे ।
प्रमाथिनश्च मन्द्राश्च क्रोधनाः किङ्किणीस्वनाः ॥ ९
मेघस्वनाः क्रूरमुखाः केचिच्च कलनिस्वनाः ।
जिह्मनासाग्रजिह्वाश्च दूरगा दूरपातिनः ॥ १०

---

नोऽस्मत्संबन्धिनां द्विषतां पुरुषस्य द्रव्यनाशादिकमस्त्विति पूर्वेण सह द्वयोः संबन्धः ॥ ३७ ॥ राशिर्योधसंख्याशरीरं वा तस्य वर्धनाः । वृथाजन्मान इत्यर्थः ॥ ३८ ॥ पलायिनं जयिनः प्रत्युद्यान्ति यत्तदसह्यतरमित्यपकृष्यते ॥ ३९ ॥ पुरुषा पुरुषाणाम् । विभक्तिलोप आर्षः ॥ ४४ ॥ स्कन्धः समूहः । समूहमात्रार्थं वा तिष्ठेयुः ॥ ४७ ॥ संहतानन्योन्य श्लिष्टान् स्वान्परैः सह योधयेत्सेनापतिः ॥ ४८ ॥ शततमोऽध्यायः ॥ १०० ॥

आचरितं कुलदेशाचारागतम् । पत्रं वाहनम् ॥ २ ॥ दाक्षिणात्या असिचर्मिण इति च्छेदः ॥ ५ ॥ कुलिङ्गाक्षाः कुलिङ्गः सर्पः ॥ ८ ॥ जिह्मनाः सानुजङ्घाश्चेति थ॰ पाठः ॥ १० ॥

बिडालकुब्जाः स्तब्धाक्षास्तनुकेशास्तनुत्वचः ।
शीघ्राश्चपलचित्ताश्च ते भवन्ति दुरासदाः ॥ ११
गौरा निमीलिताः केचिन्मृदुप्रकृतयस्तथा ।
तुरङ्गगतिनिर्घोषास्ते नराः पारयिष्णवः ॥ १२
सुसंहताः प्रतनवो व्यूढोरस्काः सुसंस्थिताः ।
प्रवादितेषु कुप्यन्ति हृष्यन्ति कलहेषु च ॥ १३
गम्भीराक्षा निसृष्टाक्षाः पिङ्गाक्षा भ्रुकुटीमुखाः ।
नकुलाक्षास्तथा चैव सर्वे शूरास्तनुत्यजः ॥ १४
जिह्माक्षाः प्रललाटाश्च निर्मांसहनवोऽप्यथाः ।
वक्रबाह्वङ्गुलीसक्थाः कृशा धमनिसंतताः ॥ १५
प्रविशन्ति च वेगेन सांपराये ह्युपस्थिते ।
वारणा इव संमत्तास्ते भवन्ति दुरासदाः ॥ १६
दीप्तस्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः ।
उन्नतांसाः पृथुग्रीवा विकटाः स्थूलपिण्डिकाः १७
उद्वन्धा इव सुग्रीवा विनताविहगा इव ।
पिण्डशीर्षातिवक्राश्च पृषदंशमुखास्तथा ॥ १८
उग्रस्वरा मन्युमन्तो युद्धेष्वारावसारिणः ।
अधर्मज्ञाऽवलिप्ताश्च घोरा रौद्रप्रदर्शनाः ॥ १९
त्यक्तात्मानः सर्व एते उदग्रा ह्यनिवर्तिनः ।
पुरस्कार्याः सदा सैन्ये हन्यन्ते घ्नन्ति चापि ते॥२०
अधार्मिका भिन्नवृत्ताः सान्त्वेनैषां पराभवः ।
एवमेव प्रदूष्यन्ते राज्ञोऽप्येते ह्यभीक्ष्णशः ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

## द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

भीष्मेण युधिष्ठिरंप्रति सेनाया जयचिह्नानां राजनीतेश्च कथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
जयिन्याः कानि रूपाणि भवन्ति भरतर्षभ ।
पृतनायाः प्रशस्तानि तानि चेच्छामि वेदितुम् ॥१
भीष्म उवाच ।
जयिन्या यानि रूपाणि भवन्ति भरतर्षभ ।
पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥२
दैवे पूर्वं प्रकुपिते मानुषे कालचोदिते ।
तद्विद्वांसोऽनुपश्यन्ति ज्ञानदीर्घेण चक्षुषा ॥ ३
प्रायश्चित्तविधिं चात्र जपहोमांश्च तद्विदः ।
मङ्गलानि च कुर्वन्ति शमयन्त्यहितानि च ॥ ४
उदीर्णमनसो योधा वाहनानि च भारत ।
यस्यां भवन्ति सेनायां ध्रुवं तस्या जयो भवेत् ॥ ५
अन्वेव वायवो यान्ति तथैवेन्द्रधनूंषि च ।
अनुप्लवन्ते मेघाश्च तथाऽऽदित्यस्य रश्मयः ॥ ६
गोमायवश्चानुलोमबला गृध्राश्च सर्वशः ।
अर्हयेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ॥ ७
प्रसन्नभाः पावकश्चोर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाहुतीनां भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ८
गम्भीरशब्दाश्च महास्वनाश्च
शङ्खाश्च भेर्यश्च नदन्ति यत्र ।
युयुत्सवश्चाप्रतीपा भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ९
इष्टा मृगाः पृष्ठतो वामतश्च
संप्रस्थितानां च गमिष्यतां च ।
जिघांसतां दक्षिणाः सिद्धिमाहु-
र्ये त्वग्रतस्ते प्रतिषेधयन्ति ॥ १०
माङ्गल्यशब्दाञ्शकुना वदन्ति
हंसाः क्रौञ्चाः शतपत्राश्च चाषाः ।
हृष्टा योधाः सत्ववन्तो भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ११

प्रललाटाः उन्नतकपालाः ॥ १५ ॥ दीप्तः पिङ्गलः । पिण्डिकाः जानुनोरधःपश्चाद्भागाः ॥ १७ ॥ सुग्रीवा वासुदेवाश्वाः । विनताविहगाः गरुडाः । पिण्डशीर्षाः वृत्तशिरसः । अतिवक्राः विस्तीर्णमुखाः । संधिरार्षः समासो वा ॥ १८ ॥ एवमेव प्रकुप्यन्ति इति झ. पाठः ॥ २१ ॥ एकाधिकशततमोऽध्यायः ॥ १०१ ॥

शस्त्रैर्यन्त्रैः कवचैः केतुभिश्च
सुभानुभिर्मुखवर्णैश्च यूनाम् ।
भ्राजिष्मती दुष्प्रतिवीक्षणीया
येषां चमूस्तेऽभिभवन्ति शत्रून् ॥ १२
शुश्रूषवश्चानभिमानिनश्च
परस्परं सौहृदमास्थिताश्च ।
येषां योधाः शौचमनुष्ठिताश्च
जयस्यैतद्भाविनो रूपमाहुः ॥ १३
शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः ।
धैर्यं चाविशते योधान्विजयस्य मुखं च तत् ॥१४
शब्दो वामः प्रस्थितस्य दक्षिणः प्रविविक्षतः ।
पश्चात्संसाधयत्यर्थं पुरस्ताच्च निषेधति ॥ १५
संहृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ।
साम्नैव वर्तयेः पूर्वं प्रयतेथास्ततो युधि ॥ १६
जघन्य एष विजयो यद्युद्धं सामभाषणम् ।
यादृच्छिको युधि जयो दैवेनेति विचारणम् ॥ १७
आपगेव महावेगा त्रस्ता इव महामृगाः ।
दुर्निवार्यतमा चैव प्रभग्ना महती चमूः ॥ १८
भग्ना इत्येव भज्यन्ते विद्वांसोऽपि न कारणम् ।
उदारसारा महती रुरुसंघोपमा चमूः ॥ १९
परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः ।
अपि पञ्चशतं शूरा निघ्नन्ति परवाहिनीम् ॥२०
अपि वा पञ्चषट्सप्तसंहिताः कृतनिश्चयाः ।
कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् २१
सन्निपातो न मन्तव्यः शक्ये सति कथंचन ।
सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥ २२
संसर्पणं हि सेनाया भयं भीरून्प्रबाधते ।
वज्रादिव प्रज्वलितादियं स्वित्क्षपयिष्यति ॥ २३
अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ ।
तेषां स्पन्दन्ति गात्राणि योधानां विषयस्य च ॥२४
विषयो व्यथते राजन्सर्वः सस्थाणुजङ्गमः ।
अस्त्रप्रतापतप्तानां मज्जाः सीदन्ति देहिनाम् ॥२५
तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनःपुनः ।
संपीड्यमाना हि परैर्योगमायान्ति सर्वतः ॥२६
आन्तराणां च भेदार्थं चरानभ्यवचारयेत् ।
यश्च तस्मात्परो राजा तेन संधिः प्रशस्यते ॥ २७
न हि तस्यान्यथा पीडा शक्या कर्तुं तथाविधा ।
यथा सार्धममित्रेण सर्वतः प्रतिबाधनम् ॥ २८
क्षमा वै साधुमायाति न ह्यसाधून्क्षमा सदा ।
क्षमायाश्चाक्षमायाश्च पार्थ विद्धि प्रयोजनम् ॥२९
विजित्य क्षममाणस्य यशो राज्ञो विवर्धते ।
महापराधे ह्यप्यस्मिन्विश्वसन्त्यपि शत्रवः ॥ ३०
मन्यन्ते कर्षयित्वा तु क्षमा साध्वीति शाम्बराः ।
असंतप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः ॥ ३१
नैतत्प्रशंसन्त्याचार्या न चैतत्साधु दर्शनम् ।
अक्रोधेनाविनाशेन नियन्तव्याः स्वपुत्रवत् ॥ ३२
द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर ।
मृदुमप्यवमन्यन्ते तस्मादुभयभाग्भवेत् ॥ ३३
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च प्रियं ब्रूयाच्छोचन्निव रुदन्निव ॥ ३४
न मे प्रिया ये स्म हताः संप्रहृष्टाः परेऽपि च ।
न च कत्थनमेवाग्र्यमुच्यमानं पुनःपुनः ॥ ३५
अहो जीवितमाकाङ्क्षन्नेदृशो वधमर्हति ।
सुदुर्लभाः सुपुरुषाः संग्रामेष्वपलायिनः ॥ ३६
कृतं ममाप्रियं तेन येनायं निहतो मृधे ।
इति वाचा वदन्हन्तॄन्पूजयेत रहोगतः ॥ ३७
हन्तॄणां च हतानां च पूजां कुर्याद्यथार्थतः ।
क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षञ्जनसंग्रहम् ॥ ३८
एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरेत् ।
प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ॥ ३९

शब्दः काकस्येति शेषः ॥ १५ ॥ सन्निपातो युद्धम् ॥ २२ ॥ समितिं युद्धम् । स्पन्दन्ति खिद्यन्ति ॥ २४ ॥ विषयो देशः ॥ २५ ॥ योगं सन्धिम् ॥ २६ ॥ आन्तराणां ... भेदस्तेन सन्धिं च ... न्दा क्षमा-
इति ङ. थ. पाठः ॥ २९ ॥ अस्मिन्क्षमावति ॥ ३० ॥ असंताप्य ऋजूकृतं वंशादि पुनर्वक्रीभवत्यतः शत्रुं संताप्य क्षमां कुर्यादिति शम्बरस्य दैत्यस्य मतम् ॥ ३१ ॥ स्वमतमाह नैतदिति ॥ ३२ ॥

विश्वासं चात्र गच्छन्ति सर्वभूतानि भारत ।
विश्वस्तः शक्यते भोक्तुं यथाकालं समुत्थितः ॥४०
तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया ।
सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ॥ ४१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

भीष्मेण युधिष्ठिरंप्रति शत्रुजयोपायादिप्रतिपादकेन्द्रबृहस्पतिसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
कथं मृदौ कथं तीक्ष्णे महापक्षे च भारत ।
अरौ वर्तेत नृपतिस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ २
बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलिः ।
उपसंगम्य पप्रच्छ वासवः परवीरहा ॥ ३
अहितेषु कथं ब्रह्मन्प्रवर्तेयमतन्द्रितः ।
असमुच्छिद्य चैवैतान्नियच्छेयमुपायतः ॥ ४
सेनयोर्व्यतिषङ्गे च जयः साधारणो भवेत् ।
किं कुर्वाणं न मां जह्याज्ज्वलिता श्रीः प्रतापिनी ॥५
ततो धर्मार्थकामानां कुशलः प्रतिभानवान् ।
राजधर्मविधानज्ञः प्रत्युवाच पुरंदरम् ॥ ६
न जातु कलहेनेच्छेन्नियन्तुमपकारिणः ।
बालैरासेवितं ह्येतद्यदमर्षो यदक्षमा ॥ ७
न शत्रुर्विवृतः कार्यो वधमस्याभिकाङ्क्षता ॥ ८
क्रोधं भयं च हर्षं च नियम्य स्वयमात्मनि ।
अमित्रमुपसेवेत विश्वस्तवदविश्वसन् ॥ ९
प्रियमेव वदेन्नित्यं नाप्रियं किंचिदाचरेत् ।
विरमेच्छुष्कवैरेभ्यः कर्णजापं च वर्जयेत् ॥ १०
यथा वैतंसिको युक्तो द्विजानां सदृशस्वरः ।
तान्द्विजान्कुरुते वश्यांस्तथायुक्तो महीपतिः ।
वशं चोपनयेच्छत्रून्निहन्याच्च पुरंदर ॥ ११
न नित्यं परिभूयारीन्सुखं स्वपिति वासव ।
जागर्त्येव हि दुष्टात्मा संकरेऽग्निरिवोत्थितः ॥१२
न सन्निपातः कर्तव्यः सामान्ये विजये सति ।
विश्वास्यैवोपसंनम्यो वशे कृत्वा रिपुः प्रभो ॥१३
संप्रधार्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः ।
उपेक्ष्यमाणो विज्ञातो हृदयेनापराजितः ।
अथास्य प्रहरेत्काले विधेर्विचलितो यदा ॥ १४
दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः ॥ १५
आदिमध्यावसानज्ञान्प्रच्छन्नं च विचारयेत् ।
बलानि दूषयेदस्य जानन्नेव प्रमाणतः ॥ १६
भेदेनोपप्रदानेन संसृजेदौषधैस्तथा ।
न त्वेव खलु संसर्गं रोचयेदरिभिः सह ॥ १७
दीर्घकालमपीक्षेत निग्राह्या एव शत्रवः ।
कालकाङ्क्षी च युक्तः सन्नुपासीत शचीपते ॥ १८
तथा प्रियं च वक्तव्यं यथा विस्रम्भमाप्नुयात् ।
न सद्योऽरीन्विहन्याच्च द्रष्टव्यो विजयो ध्रुवः ।
भूयः शल्यं घटयति नवं च कुरुते व्रणम् ॥ १९
प्राप्ते च प्रहरेत्काले न च संवर्तते पुनः ।
हन्तुकामस्य देवेन्द्र पुरुषस्य रिपून्प्रति ॥ २०
यं हि कालो व्यतिक्रामेत्पुरुषं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालः कर्म चिकीर्षता ॥ २१
औजस्यं जनयेदेव संगृह्णन्साधुसंमतम् ।
कालेन साधयेत्कृत्यमप्राप्तो न हि पीडयेत् ॥२२
विहाय कामं क्रोधं च तथाऽहंकारमेव च ।

विश्वस्तो जनः ॥ ४० ॥ द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

व्यतिषङ्गे मिश्रणे युद्धे इत्यर्थः । साधारणोऽनियतः ॥ ५ ॥ प्रत्युवाच गुरुः ॥ ६ ॥ विवृतः सावधानः ॥ ८ ॥ वितंसः पक्षिबन्धनोपायस्तदुपजीवी वैतंसिकः ॥ ११ ॥ स्वपिति महीपतिरित्यनुकर्षः ॥ १२ ॥ सामान्ये अनिश्चिते ॥ १३ ॥ प्रहरेत्काले किंचिद्विचलिते पदे इति झ. पाठः ॥ १४ ॥ किंचास्य दण्डं सेनां च भेदेन दूषयेत्सः ॥ १५ ॥ औषधैर्विषादिभिः ॥ १७ ॥ रिपून्प्रति हन्तुकामस्य ॥ २० ॥

युक्तो विवरमन्विच्छेदहितानां सदा नृपः ॥ २३
मार्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम ।
मायाः सुविहिताः शक्र शातयन्त्यविचक्षणम् २४
निहत्यैतानि चत्वारि मायां प्रतिविधाय च ।
ततः शक्नोति शत्रूणां प्रहर्तुमविचारयन् ॥ २५
यदैवैकेन शक्येत गुह्यं कर्तुं तदाऽऽचरेत् ।
यच्छन्ति सचिवा गुह्यं मिथो विश्रावयन्त्यपि ॥२६
अशक्यमिति कृत्वा वा ततोऽन्यैः संविदं चरेत् ।
ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् ॥ २७
भेदं च प्रथमं विद्यात्तूर्ष्णीं दण्डं तथैव च ।
काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदातदा ॥ २८
प्रणिपातं च गच्छेत काले शत्रोर्बलीयसः ।
युक्तोऽस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः ॥ २९
प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् ।
अमित्रमुपसेवेत न च जातु विशङ्कयेत् ॥ ३०
स्थानानि शङ्कितानां च नित्यमेव विवर्जयेत् ।
न च तेष्वाश्वसेद्राजा जाग्रतीह निराकृताः ॥ ३१
न ह्यतो दुष्करं कर्म किंचिदस्ति सुरोत्तम ।
यथा विविधवृत्तानामैश्वर्यममराधिप ॥ ३२
तथा विविधशीलानामपि संभव उच्यते ।
प्रयतेद्योगमास्थाय मित्रामित्रानधारयन् ॥ ३३
मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः ।
मा तीक्ष्णो मा मृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ॥३४
यथा वप्रे वेगवति सर्वतः संप्लुतोदके ।
नित्यं विचरणाद्बाधस्तथा राज्यं प्रमाद्यतः ॥ ३५
न बहूनुपरुध्येत यौगपद्येन शात्रवान् ।
साम्ना दानेन भेदेन दण्डेन च पुरंदर ॥ ३६
एकैकमेषां निष्पिष्य शिष्टेषु निपुणं चरेत् ।
न तु शक्तोऽपि मेधावी सर्वानेवाचरेद्बुधः ॥ ३७
यदा स्यान्महती सेना हयनागरथाकुला ।
पदातियन्त्रबहुला अनुरक्ता षडङ्गिनी ॥ ३८
यदा बहुविधां वृद्धिं मन्येत प्रतियोगतः ।
तदा विवृत्य प्रहरेद्दस्यूनामविचारयन् ॥ ३९

न साम दण्डोपनिषत्प्रशस्यते
न मार्दवं शत्रुषु यात्रिकं सदा ।
न सस्यघातो न च संकरक्रिया
न चापि भूयः प्रकृतेर्विचारणा ॥ ४०
मायाविभेदानुपसर्जनानि
वाचं तथैव प्रथमं प्रयोगात् ।
आप्तैर्मनुष्यैरुपचारयेत
पुरेषु राष्ट्रेषु च संप्रयुक्तान् ॥ ४१
पुराऽपि चैतानुनुसृत्य भूमिपाः
पुरेषु भोगानखिलाञ्जयन्ति ।
पुरेषु नीतिं विहितां यथाविधि
प्रयोजयन्तो बलवृत्रसूदन ॥ ४२
प्रदाय गूढानि वसूनि नाम
प्रच्छिद्य भोगानपहाय च स्वान् ।
दुष्टाः स्वदोषैरिति कीर्तयित्वा
पुरेषु राष्ट्रेषु च योजयन्ति ॥ ४३
तथैव चान्यैरपि शास्त्रवेदिभिः
स्वलंकृतैः शास्त्रविधानलिङ्गितैः ।
सुशिक्षितैर्भाष्यकथाविशारदैः
परेषु कृत्यामुपधारयेच्च ॥ ४४

---

चत्वारि मार्दवादीनि ॥ २५ ॥ यच्छन्ति निगृह्णन्ति ॥ २६ ॥ अदृष्टेषु दूरस्थेषु ब्रह्मदण्डं पुरोहितद्वारमभिचारं प्रयुञ्ज्यात् । दृष्टे प्रत्यक्षशत्रौ चतुरङ्गिणीमपि प्रयुञ्ज्यात् ॥ २७ ॥ विविधवृत्तानां अस्थिराणाम् ॥ ३२ ॥ वेगवति पूरे सति वप्रे तटे विचरणाद्विदारणाद्बाध इति योजना ॥ ३५ ॥ षडङ्गिनी रथतुरगमातङ्गपदातिकोशवणिक्पथवती ॥ ३८ ॥ विवृत्य प्रकटीभूय । दस्यूनां दस्यून् ॥ ३९ ॥ बलवति शत्रौ साम न प्रशस्यते किं तर्हि दण्डोपनिषत् रहस्यदण्डः । अतएव शत्रुषु मार्दवं पार्यन्तिकं न कार्यम् । नापि यात्रिक सदा कार्यम् । जयस्यानियतत्वात् । यात्रायां हि सस्यानां घातः । संकरक्रिया विषादिना जलादीनां नाशनम् । भूयः पुनःपुनः प्रकृतेः सप्तविधायाः विचारणा तस्मात्कपटपूर्वको दण्डएव श्रेयानित्यर्थः ॥ ४० ॥ मायाविभेदान्नानाविधा मायाः प्रयुञ्जीत । तत उपसर्जनानि परस्परमितरेषां शत्रूणामुत्थापनादीनि ॥ ४१ ॥ एतान् शत्रून्पुरेषु तत्तत्स्थानेषु अनुसृत्य भोगांस्तदीयान् जयन्ति । नीतिं पुरेषु स्वीयेषु ॥ ४२ ॥ अनुसरणमेवाह प्रदायेति । एते न ममामात्याः दुष्टाः मां त्यक्त्वा राजान्तरं प्रति गता इति लोकमुखात्कीर्तयित्वा परेषां पुरेषु राष्ट्रेषु च तान्योजयन्ति ॥ ४३ ॥ कृत्यामिव कृत्यां मृत्युकारिणीं देवताम् ॥ ४४ ॥

इन्द्र उवाच ।
कानि लिङ्गानि दुष्टस्य भवन्ति द्विजसत्तम ।
कथं दुष्टं विजानीयादेतत्पृष्टो ब्रवीहि मे ॥ ४५
बृहस्पतिरुवाच ।
परोक्षमगुणानाह सद्गुणानभ्यसूयति ।
परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ॥ ४६
तूष्णींभावेऽपि विज्ञेयं न चेद्भवति कारणम् ।
विश्वासं चोष्ठसंदंशं शिरसश्च प्रकम्पनम् ॥ ४७
करोत्यभीक्ष्णं संसृष्टमसंसृष्टश्च भाषते ।
अदृष्टवद्विकुरुते दृष्ट्वा वा नाभिभाषते ॥ ४८
पृथगेत्य समश्नाति नेदमद्य यथाविधि ।
आसने शयने याने भावा लक्ष्या विशेषतः ॥ ४९
आर्तिरार्ते प्रिये प्रीतिरेतावन्मित्रलक्षणम् ।
विपरीतं तु बोद्धव्यमरिलक्षणमेव तत् ॥ ५०
एतान्येव यथोक्तानि बुध्येथास्त्रिदशाधिप ।
पुरुषाणां प्रदुष्टानां स्वभावो बलवत्तरः ॥ ५१
इति दुष्टस्य विज्ञानमुक्तं ते सुरसत्तम ।
निशाम्य शास्त्रतत्त्वार्थं यथावदमरेश्वरः ॥ ५२
भीष्म उवाच ।
स तद्वचः शत्रुनिबर्हणे रत-
स्तथा चकारावितथं बृहस्पतेः ।
चचार काले विजयाय चारिहा
वशं च शत्रूननयत्पुरंदरः ॥ ५३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

भीष्मेण युधिष्ठिरंप्रति कौसल्यकालकवृक्षीयसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
धार्मिकोऽर्थानसंप्राप्य राजामात्यैः प्रबाधितः ।
च्युतः कोशाच्च दण्डाच्च सुखमिच्छन्कथं चरेत् ॥ १
भीष्म उवाच ।
अत्रायं क्षेमदर्शीय इतिहासोऽनुगीयते ।
तत्तेऽहं संप्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥ २
क्षेमदर्शी नृपसुतो यत्र क्षीणबलः पुरा ।
मुनिं कालकवृक्षीयमाजगामेति नः श्रुतम् ।
तं पप्रच्छानुसंगृह्य कृच्छ्रामापदमास्थितः ॥ ३
अर्थेषु भागी पुरुष ईहमानः पुनःपुनः ।
अलब्ध्वा मद्विधो राज्यं ब्रह्मन्किं कर्तुमर्हति ॥ ४
अन्यत्र मरणाद्दैन्यादन्यत्र परसंश्रयात् ।
क्षुद्रादन्यत्र चाचारात्तन्ममाचक्ष्व सत्तम ॥ ५
व्याधिना चाभिपन्नस्य मानसेनेतरेण वा ।
बहुश्रुतः कृतप्रज्ञस्त्वद्विधः शरणं भवेत् ॥ ६
निर्विद्य हि नरः कामान्नियम्य सुखमेधते ।
त्यक्त्वा प्रीतिं च शोकं च लब्ध्वा बुद्धिमयं वसु ॥ ७
सुखमर्थाश्रयं येषामनुशोचामि तानहम् ।
मम ह्यर्थाः सुबहवो नष्टाः स्वप्नगता इव ॥ ८
दुष्करं बत कुर्वन्ति महतोऽर्थांस्त्यजन्ति ये ।
वयं त्वेतान्परित्यक्तुमसतोऽपि न शक्नुमः ॥ ९
इमामवस्थां संप्राप्तं दीनमार्तं श्रिया च्युतम् ।
यदन्यत्सुखमस्तीह तद्ब्रह्मन्ननुशाधि माम् ॥ १०
कौसल्येनैवमुक्तस्तु राजपुत्रेण धीमता ।
मुनिः कालकवृक्षीयः प्रत्युवाच महाद्युतिः ॥ ११
पुरस्तादेव ते बुद्धिरियं कार्या विजानतः ।
अनित्यं सर्वमेवैतदहं च मम चास्ति यत् ॥ १२
यत्किंचिन्मन्यसेऽस्तीति सर्वं नास्तीति विद्धि तत् ।

तच्चेद्भवति कारणमिति थ. द. पाठः ॥ ४७ ॥ संसृष्टं संसर्गम् । असंसृष्टश्च परइव भाषते ॥ ४८ ॥ त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

भागी भागार्हः । ईहमानो यतमानः ॥ ४ ॥ इतरेण शारीरेण ॥ ६ ॥ निर्विद्य विरज्य । कामाद्विषयभोगात् । बुद्धिमयं वसु ज्ञानरूपं धनम् ॥ ७ ॥ इयं निर्विद्यतीति श्लोकेन त्वया प्रोक्ता । अहं च यच्च ममाऽस्त्येतत्सर्वमनित्यमिति जानतस्ते त्वया ॥ १२ ॥ नास्ति तुच्छत्वात् ॥ १३ ॥

एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः ॥ १३
यद्धि भूतं भविष्यच्च ध्रुवं तन्न भविष्यति ।
एवं विदितवेद्यस्त्वमनर्थेभ्यः प्रमोक्ष्यसे ॥ १४
ये च पूर्वसमारम्भा ये च पूर्वतरे परे ।
सर्वं नास्तीति ते चैव तज्ज्ञात्वा को नु संज्वरेत् ॥१५
भूत्वा च न भवत्येतदभूत्वा च भविष्यति ।
शोके न ह्यस्ति सामर्थ्यं शोचेत स कथं नरः ॥१६
क्व नु तेऽद्य पिता राजन्क्व नु तेऽद्य पितामहः ।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽपि वा १७
आत्मनोऽध्रुवतां पश्यंस्तांस्त्वं किमनुशोचसि ।
बुद्ध्या चैवानुबुद्ध्यस्व ध्रुवं हि न च विद्यते ॥ १८
अहं च त्वं च नृपते सुहृदः शत्रवश्च ते ।
अवश्यं नभविष्यामः सर्वं च नभविष्यति ॥ १९
ये तु विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः ।
अर्वागेव हि ते सर्वे मरिष्यन्ति शरच्छतात् ॥२०
अपि चेन्महतो वित्तान्न प्रमुच्येत पूरुषः ।
नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः ॥ २१

अनागतं यन्न ममेति विद्या-
दतिक्रान्तं यन्न ममेति विद्यात् ।
दिष्टं बलीय इति मन्यमाना-
स्ते पण्डितास्तत्सतां वृत्तिमाहुः ॥ २२

अनाढ्याश्चापि जीवन्ति राज्यं चाप्यनुशासते ।
बुद्धिपौरुषसंपन्नास्त्वया तुल्याधिका जनाः ॥२३
न च त्वमिव शोचन्ति तस्मात्त्वमपि मा शुचः ।
किं न त्वं तैर्नरैः श्रेयांस्तुल्यो वा बुद्धिपौरुषैः ॥ २४
राजोवाच ।
यादृच्छिकं सर्वमासीत्तद्राज्यमिति चिन्तये ।
ह्रियते सर्वमेवेदं कालेन महता द्विज ॥ २५
तस्यैव ह्रियमाणस्य स्रोतसेव तपोधन ।
फलमेतत्प्रपश्यामि यथालब्धेन वर्तयन् ॥ २६
मुनिरुवाच ।
अनागतमतीतं च याथातथ्यविनिश्चयात् ।
नानुशोचेत कौसल्य सर्वार्थेषु तथा भव ॥ २७
अवाप्यान्कामयन्नर्थान्नानवाप्यान्कदाचन ।
प्रत्युत्पन्नाननुभवन्मा शुचस्त्वमनागतान् ॥ २८
यथालब्धोपपन्नार्थैस्तथा कौसल्य रंस्यसे ।
कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि ॥२९
पुरस्ताद्भूतपूर्वत्वाद्धीनभोग्यो हि दुर्मतिः ।
धातारं गर्हते नित्यं लब्धार्थश्च न मृष्यते ॥ ३०
अनर्हानपि चैवान्यान्मन्यते श्रीमतो जनान् ।
एतस्मात्कारणादेतद्दुःखं भूयोऽनुवर्तते ॥ ३१
ईर्ष्याभिमानसंपन्ना राजन्पुरुषमानिनः ।
कच्चित्त्वं न तथा प्राज्ञ मत्सरी कोसलाधिप ॥ ३२
सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा ।
अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते नराः ।
अभिनिष्यन्दते देही श्रीभूतश्च द्विषज्जनात् ॥ ३३
श्रियं च पुत्रपौत्रं च मनुष्या धर्मचारिणः ।
त्यागधर्मविदो धीराः स्वयमेव त्यजन्त्युत ॥ ३४
'त्यक्तं स्वायंभुवे वंशे शुभेन भरतेन च ।
नानारत्नसमाकीर्णं राज्यं स्फीतमिति श्रुतम् ॥ ३५
तथाऽन्यैर्भूमिपालैश्च त्यक्तं राज्यं महोदयम् ।
त्यक्त्वा राज्यानि ते सर्वे वने वन्यफलाशिनः ।
गताश्च तपसः पारं दुःखस्यान्तं च भूमिपाः ॥'३६
बहुसंकुसुकं दृष्ट्वा विधित्सासाधनेन च ।
तथान्ये संत्यजन्त्येव मत्वा परमदुर्लभम् ॥ ३७
त्वं पुनः प्राज्ञरूपः सन्कृपणं परितप्यसे ।
अकाम्यान्कामयानोऽर्थान्पराधीनानुपद्रवान् ३८
तां बुद्धिमनुविज्ञाय त्वमेवैनान्परित्यज ।
अनर्थाश्चार्थरूपेण ह्यर्थाश्चानर्थरूपिणः ॥ ३९
अर्थायैव हि केषांचिद्धननाशा भवन्त्युत ।
अनित्यं तत्सुखं मत्वा श्रियमन्ये न लिप्सते ॥ ४०
रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते ।

तन्निर्ममत्वम् ॥ २२ ॥ यादृच्छिकमयत्नादागतम् ॥ २५ ॥ एतच्छोकाख्यं फलं यथालब्धेन वर्तयन् जीवन्नपि पश्यामि । यादृच्छिकस्य नाशेन जीवनालोपेऽपि शोको न नश्यतीत्यर्थः ॥ २६ ॥ न मृष्यते तैर्न संतुष्यति ॥ ३० ॥ अन्यत्र शत्रौ । कुशला निर्मत्सराः । अभिनिष्यन्दते प्रस्रवति ॥ ३३ ॥ विधित्सा क्रियाणामनुपरमस्तेन साधनेन च संकुसुकमस्थिरम् ॥ ३७ ॥ उपद्रवानस्थिरान् ॥ ३८ ॥ अर्थरूपेण भासमानाः ॥ ३९ ॥ आद्यस्योदाहरणं अर्थायेति ॥ ४० ॥ द्वितीयस्योदाहरणं रममाण

तथा तस्येहमानस्य संरम्भोऽपि विनश्यति ।। ४१
कृच्छ्राल्लब्धमभिप्रेतं यथा कौसल्य नश्यति ।
तदा निर्विद्यते सोऽर्थात्परिभग्नक्रमो नरः ।। ४२
'अनित्यां तां श्रियं मत्वा श्रियं वा कः परीप्सति ।।'
धर्ममेकेऽभिपद्यन्ते कल्याणाभिजना नराः ।
परत्र सुखमिच्छन्तो निर्विद्येयुश्च लौकिकात् ।।४४
जीवितं संत्यजन्त्येके धनलोभपरा नराः
न जीवितार्थं मन्यन्ते पुरुषा हि धनादृते ।। ४५
पश्य चैषां कृपणतां पश्य चैषामबुद्धिताम् ।
अध्रुवे जीविते मोहादर्थतृष्णामुपाश्रिताः ।। ४६
संचये च विनाशान्ते मरणान्ते च जीविते ।
संयोगे च वियोगान्ते कोनु विप्रणयेन्मनः ।। ४७
धनं वा पुरुषो राजन्पुरुषं वा पुनर्धनम् ।
अवश्यं प्रजहात्येव तद्विद्वान्कोनु संज्वरेत् ।। ४८
'अन्यत्रोपनता ह्यापत्पुरुषं तोषयत्युत ।
तेन शान्तिं न लभते नाहमेवेति कारणात् ।।'४९
अन्येषामपि नश्यन्ति सुहृदश्च धनानि च ।
पश्य बुद्ध्या मनुष्याणां तुल्यामापदमात्मनः ।
नियच्छ यच्छ संयच्छ इन्द्रियाणि मनस्तथा ।। ५०
प्रतिषेद्धा न चाप्येषु दुर्बलेष्वहितेषु च ।। ५१
प्रातिसृष्टेषु भावेषु व्यपकृष्टेष्वसंभवे ।
प्रज्ञानतृप्तो विक्रान्तस्त्वद्विधो नानुशोचति ।।५२
अल्पमिच्छन्नचपलो मृदुर्दान्तः सुसंस्थितः ।
ब्रह्मचर्योपपन्नश्च त्वद्विधो नैव मुह्यति ।। ५३
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंसवृत्तिं पापिष्ठां दुःखां कापुरुषोचिताम् ।। ५४
अपि मूलफलाहारो रमस्वैको महावने ।
वाग्यतः संगृहीतात्मा सर्वभूतदयान्वितः ।। ५५
सदृशं पण्डितस्यैतदीषादन्तेन हस्तिना ।
यदेको रमतेऽरण्ये यच्चाप्यल्पेन तुष्यति ।। ५६
महाह्रदः संक्षुभित आत्मनैव प्रसीदति ।
'एवं नरः स्वात्मनैव कृतप्रज्ञः प्रसीदति ।।' ५७
एतदेवं गतस्याहं सुखं पश्यामि केवलम् ।
असंभवे श्रियो राजन्हीनस्य सचिवादिभिः ।
दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् ।। ५८

।। इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुरधिकशततमोऽध्यायः ।। १०४ ।।

---

## पञ्चाधिकशततमोऽध्यायः ।। १०५ ।।

भीष्मेण युधिष्ठिरंप्रति राज्ञा शत्रुजयोपायप्रतिपादककौसल्यकालकवृक्षीयसंवादानुवादः ।। १ ।।

मुनिरुवाच ।
अथ चेत्पौरुषं किंचित्क्षत्रियात्मनि पश्यसि ।
ब्रवीम्यहं तु ते नीतिं राज्यस्य प्रतिपत्तये ।। १
तां चेच्छक्ष्यस्यनुष्ठातुं कर्म चैव करिष्यसि ।
शृणु सर्वमशेषेण यत्ते वक्ष्यामि तत्त्वतः ।। २
आचरिष्यसि चेत्कर्म महतोऽर्थानवाप्स्यसि ।
राज्यं वा राज्यमन्त्रं वा महतीं वा पुनः श्रियम् ।
यद्येतद्रोचते राजन्पुनर्ब्रूहि ब्रवीमि ते ।। ३
राजोवाच ।
ब्रवीतु भगवान्नीतिमभिपन्नोऽस्म्यधीहि भो ।
अमोघ एव मेऽद्यास्तु त्वया सह समागमः ।। ४
मुनिरुवाच ।
हित्वा मानं च दम्भं च क्रोधं हर्षं भयं तथा ।
प्रत्यमित्राणि सेवस्व प्रणिपत्य कृताञ्जलिः ।
तमुत्तमेन शौचेन कर्मणा चावधारय ।। ५
दातुमर्हति ते वित्तं वैदेहः सत्यविक्रमः ।
प्रमाणं सर्वभूतेषु प्रग्रहं च गमिष्यसि ।। ६
ततः सहायान्सोत्साहाँल्लप्स्यसेऽव्यसनाञ्शुचीन् ।

इति ।। ४१ ।। परिभग्नक्रमो नष्टारम्भः ।। ४२ ।। विप्रणयेद्दद्यात् ।।४७।। नियम्य सर्वं सङ्गं च इति ट. ड. पाठः ।।५०।। प्रतिकृष्टेषु भाग्येषु व्यपकृष्टेषु संभवे इति ट. थ. पाठः ।।५२।।

चतुरधिकशततमोऽध्यायः ।। १०४ ।।
अभिपन्नोऽस्मि पौरुषेणेति शेषः ।। ४ ।। प्रमाणं विश्वासम् ।। ६ ।।

वर्तमानः स्वशास्त्रे वै संयतात्मा जितेन्द्रियः ।
अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः ॥ ७
तेनैव त्वं धृतिमता श्रीमता चापि सत्कृतः ।
प्रमाणं सर्वभूतेषु गत्वा च ग्रहणं महत् ॥ ८
ततः सुहृद्बलं लब्ध्वा मन्त्रयित्वा सुमन्त्रितम् ।
सान्त्वेन भेदयित्वाऽरीन्बिल्वं बिल्वेन शातय ।
परैर्वा संविदं कृत्वा बलमप्यस्य घातय ॥ ९
अलभ्या ये शुभा भावाः स्त्रियश्चाच्छादनानि च ।
शय्यासनानि यानानि महार्हाणि गृहाणि च ॥ १०
पक्षिणो मृगजातानि रसगन्धाः फलानि च ।
तेष्वेव सज्जयेथास्त्वं यथा नश्येत्स्वयं परः ॥ ११
यद्येवं प्रतिषेद्धव्यो यद्युपेक्षणमर्हति ।
'सदैव राजशार्दूल विदुषा हितमिच्छता ।'
न जातु विवृतः कार्यः शत्रुः सुनयमिच्छता ॥ १२
वसस्व पुरमामित्रं विषये मित्रसंमतः ।
भजस्व श्वेतकाकीयैर्मित्रधर्ममनर्थकैः ॥ १३
आरम्भांश्चास्य महतो दुष्करान्संप्रयोजय ।
नदीबन्धविभेदांश्च बलवद्भिर्विरुध्यताम् ॥ १४
उद्यानानि महार्हाणि शयनान्यासनानि च ।
प्रीतिभोगमुखेनैव कोशमस्य विरेचय ॥ १५
यज्ञदाने प्रशंसास्मै ब्राह्मणाननुवर्तय ।
ते त्वा प्रियं करिष्यन्ति तच्छेत्स्यन्ति वृका इव ॥ १६
असंशयं पुण्यशीलः प्राप्नोति परमां गतिम् ।
त्रिविष्टपे पुण्यतमं स्थानं प्राप्नोति शाश्वतम् ॥ १७
कोशक्षये त्वमित्राणां वशं कौसल्य गच्छति ।
उभयत्र प्रयुक्तस्य धर्मे चाधर्म एव च ॥ १८
फलार्थमूलमुच्छिद्यात्तेन नन्दन्ति शत्रवः ।
न चास्मै मानुषं कर्म दैवमस्योपवर्णय ॥ १९
असंशयं दैवपरः क्षिप्रमेव विनश्यति ।
याजयैनं विश्वजिता सर्वस्वेन वियुज्यताम् ॥ २०
ततो गच्छत्यसिद्धार्थः पीडयानो महाजनम् ।
त्यागधर्मविदं पुण्यं कंचिदस्योपवर्णय ॥ २१
अपि त्यागं बुभूषेत कच्चिद्गच्छेदनामयम् ।
सिद्धेनौषधियोगेन सर्वशत्रुविनाशिना ।
गजानश्वान्मनुष्यांश्च कृतकैरुपघातय ॥ २२
एते चान्ये च बहवो दम्भयोगाः सुचिन्तिताः ।
शक्या विषहता कर्तुं न क्लीबेन नृपात्मज ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

## षडधिकशततमोऽध्यायः ॥ १०६ ॥

**भीष्मेण युधिष्ठिरंप्रति कालकवृक्षीयनिदेशेन कौसल्यस्य पुना राज्यप्राप्त्यादिकथनम् ॥ १ ॥**

राजोवाच ।
न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुम् ।
नाधर्मयुक्तानिच्छेयमर्थान्सुमहतोऽप्यहम् ॥ १
पुरस्तादेव भगवन्मयैतदपवर्जितम् ।
येन पापं न शङ्केत यद्वा कृत्स्नं हितं भवेत् ॥ २
आनृशंस्येन धर्मेण लोके ह्यस्मिञ्जिजीविषुः ।
नाहमेतदलं कर्तुं नैतन्मय्युपपद्यते ॥ ३
मुनिरुवाच ।
उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे ।
प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या चाद्भुतदर्शनः ॥ ४
उभयोरेव साह्यार्थे यतिष्ये तव तस्य च ।
संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ॥ ५

---

स्वशास्त्रे नीतिशास्त्रे ॥ ७ ॥ ग्रहण आदरम् ॥ ८ ॥ श्वेतकाकीयैः श्वा च एतश्च काकश्च तेषामिमे धर्माः । क्रमेण नित्यं जागरूकत्वभयचकितत्वपरेङ्गितज्ञत्वानि तैः उपायैः मित्रधर्मं भजस्व । श्वेत इत्यत्रोमाङोश्चेति पररूपम् । एतो मृगः ॥ १३ ॥ नदीवच्च विरोधांश्चेति झ. पाठः । तत्र आरम्भान्वि- रोधांश्च महानदीवद्दुस्तरानित्यर्थः ॥ १४ ॥ धर्माधर्माभ्यां कोशक्षये सति ॥ १८ ॥ फलस्य स्वर्गादेः अर्थस्य जयादेः मूलकारणं कोशः ॥ १९ ॥ पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

तस्य विदेहस्य ॥ ५ ॥

त्वादृशं हि कुले जातमनृशंसं बहुश्रुतम् ।
अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ॥ ६
यस्त्वं प्रव्राजितो राज्याद्व्यसनं चोत्तमं गतः ।
आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितुम् ॥ ७
आगन्ता मद्गृहं तात वैदेहः सत्यसंगरः ।
अथाहं तं नियोक्ष्यामि तत्करिष्यत्यसंशयम् ॥८
भीष्म उवाच ।
तत आहूय वैदेहं मुनिर्वचनमब्रवीत् ।
अयं राजकुले जातो विदिताभ्यन्तरो मम ॥ ९
आदर्श इव शुद्धात्मा शारदश्चन्द्रमा यथा ।
नास्मिन्पश्यामि वृजिनं सर्वतो मे परीक्षितः ॥१०
तेन ते संधिरेवास्तु विश्वसास्मिन्यथा मयि ।
न राज्यमनमात्येन शक्यं शास्तुममित्रहन् ॥ ११
अमात्यः शूर एव स्याद्बुद्धिसंपन्न एव वा ।
तस्माच्चैव भयं राज्ञः पश्य राज्यस्य योजनम् ॥ १२
धर्मात्मनां क्वचिल्लोके नान्यास्ति गतिरीदृशी ।
तदा स राजपुत्रोऽयं सतां मार्गमनुष्ठितः ।
असंगृहीतस्त्वेवैष त्वया धर्मपुरोगमः ॥ १३
संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् ॥ १४
यद्ययं प्रतियुद्ध्येत स्वकर्म क्षत्रियस्य तत् ।
जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे ॥ १५
त्वं चापि प्रतियुद्ध्येथा विजिगीषुर्व्रते स्थितः ।
अयुद्ध्वैव नियोगान्मे वशे कुरु हिते स्थितः ॥ १६
स त्वं धर्ममवेक्षस्व हित्वा लोभमसांप्रतम् ।
न च कामान्न च द्रोहात्स्वधर्मं हातुमर्हसि ॥ १७
नैव नित्यं जयस्तात नैव नित्यं पराजयः ।
तस्माज्जयश्च भोक्तव्यो भोक्तव्यश्च पराजयः ॥ १८
आत्मन्यपि च संदृश्यावुभौ जयपराजयौ ।
निःशेषकारिणां तात निःशेषकरणाद्भयम् ॥ १९
इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम् ।
प्रतिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ॥ २०
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महाश्रुतः ।
श्रेयस्कामो यथा ब्रूयादुभयोरेव तत्क्षमम् ॥ २१
यद्यद्वचनमुक्तोऽस्मि करिष्यामि च तत्तथा ।
एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा ॥ २२
ततः कौसल्यमाहूय मैथिलो वाक्यमब्रवीत् ।
धर्मतो बुद्धितश्चैव बलेन च जितं मया ॥ २३
अहं त्वया चात्मगुणैर्जितः पार्थिवसत्तम ।
आत्मानमनवज्ञाय जितवद्वर्ततां भवान् ॥ २४
नावमन्यामि ते बुद्धिं नावमन्ये च पौरुषम् ।
नावमन्ये जयामीति जितवद्वर्ततां भवान् ॥ २५
यथावत्पूजितो राजन्गृहं गन्तासि मे गृहात् ।
ततः संपूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् ॥ २६
वैदेहस्त्वथ कौसल्यं प्रवेश्य गृहमञ्जसा ।
पाद्यार्घ्यमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत् ॥ २७
ददौ दुहितरं चास्मै रत्नानि विविधानि च ।
एष राज्ञां परो धर्मः समौ जयपराजयौ ॥ २८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

भीष्मेण युधिष्ठिरंप्रति गणवृद्धिप्रकारादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
धर्मवृत्तं च वित्तं च वृत्त्युपायाः फलानि च ॥१
राज्ञां वृत्तं च कोशं च कोशसंचयनं जयः ।
अमात्यगुणवृत्तिश्च प्रकृतीनां च वर्धनम् ॥ २
षाड्गुण्यगुणकल्पश्च सेनानीतिस्तथैव च ।
दुष्टस्य च परिज्ञानमदुष्टस्य च लक्षणम् ॥ ३
समहीनाधिकानां च यथावल्लक्षणं च यत् ।

त्वादृशं राजानं लब्ध्वा अमात्यकर्म को न कुर्वीताऽपितु सर्वोऽपि मादृशः कुर्वीतैवेत्यर्थः ॥ ६ ॥ उत्तमं महत् ॥ ७ ॥ गणाञ्शत्रुसङ्घान् ॥ १४ ॥ असांप्रतमनुचितम् ॥ १७ ॥ जितवत्प्राप्तजयइव ॥ २४ ॥ षडधिकशततमोऽध्यायः ॥१०६॥

मध्यमस्य च तुष्ट्यर्थं यथा स्थैर्यं विवर्धता ॥ ४
भोगग्रहणवृत्तिश्च यथा धर्मं प्रकीर्तितम् ।
लघुनादेशरूपेण ग्रन्थयोगेन भारत ॥ ५
विजिगीषोस्तथा वृत्तमुक्तं चैव तथैव ते ।
गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर ॥ ६
यथा गणाः प्रवर्धन्ते न भिद्यन्ते च भारत ।
अरींश्च विजिगीषन्ते सुहृदः प्राप्नुवन्ति च ॥ ७
भेदमूलो विनाशो हि गणानामुपलक्षये ।
मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः ॥ ८
एतदिच्छाम्यहं श्रोतुं निखिलेन परंतप ।
यथा च ते न भिद्येरंस्तच्च मे वद भारत ॥ ९
भीष्म उवाच ।
गणानां च कुलानां च राज्ञां भरतसत्तम ।
वैरसंदीपनावेतौ लोभामर्षौ नराधिप ॥ १०
लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् ।
ततो ह्यमर्षसंयुक्तावन्योन्यजनिताशयौ ॥ ११
चारमन्त्रबलादानैः सामदानविभेदनैः ।
क्षयव्ययभयोपायैः प्रकर्षन्तीतरेतरम् ॥ १२
तत्रादानेन भिद्यन्ते गणाः संघातवृत्तयः ।
भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात् ॥ १३
भेदे गणा विनश्युर्हि भिन्नास्तु सुजयाः परैः ।
तस्मात्संघातयोगेन प्रयतेरन्गणाः सदा ॥ १४
अर्थाश्चैवाधिगम्यन्ते संघातबलपौरुषैः ।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु ॥ १५
ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परम् ।
विनिवृत्ताभिसंधानाः सुखमेधन्ति सर्वशः ॥ १६
धर्मिष्ठान्व्यवहारांश्च स्थापयन्तश्च शास्त्रतः ।
यथावत्प्रतिपश्यन्तो विवर्धन्ते गणोत्तमाः ॥ १७
पुत्रान्भ्रातॄन्निगृह्णन्तो विनयन्तश्च तान्सदा ।
विनीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः ॥ १८
चारमन्त्रविधानेषु कोशसंनिचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥ १९
प्राज्ञांश्शूरान्महोत्साहान्कर्मसु स्थिरपौरुषान् ।
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप ॥ २०
द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान्गणाः संतारयन्ति ते ॥ २१
क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो वधः ।
नयत्यरिवशं सद्यो गणान्भरतसत्तम ॥ २२
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः ।
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥ २३
मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्शण ।
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥ २४
गणमुख्यैस्तु संभूय कार्यं गणहितं मिथः ॥ २५
पृथग्गणस्य भिन्नस्य विततस्य ततोऽन्यथा ।
अर्थाः प्रत्यवसीदन्ति तथाऽनर्था भवन्ति च ॥ २६
तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ।
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः ॥ २७
कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः ।
गोत्रस्य नाशं कुर्वन्ति गणभेदस्य कारकम् ॥ २८
आभ्यन्तरं भयं रक्ष्यमसारं बाह्यतो भयम् ।
आभ्यन्तरं भयं राजन्सद्यो मूलानि कृन्तति ॥ २९
अकस्मात्क्रोधमोहाभ्यां लोभाद्वाऽपि स्वभावजात् ।
अन्योन्यं नाभिभाषन्ते तत्पराभवलक्षणम् ॥ ३०
जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा ।
न चोद्योगेन बुद्ध्या वा रूपद्रव्येण वा पुनः ॥ ३१
भेदाच्चैव प्रदानाच्च नाम्यन्ते रिपुभिर्गणाः ।
तस्मात्संघातमेवाहुर्गणानां शरणं महत् ॥ ३२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

भोगस्य ग्रहणं वृत्तिर्जीविका च । लघुना सुगमेन । आदेशरूपेणोपदेशात्मकेन ॥ ५ ॥ गणानां शूरजनस्तोमानाम् ॥ ६ ॥ एको राजा लोभं वृणुते । गणस्तदाऽसभ्यं न ददातीत्यमर्षं वृणुते ॥ ११ ॥ इतरेतरं गणा राजानश्च प्रकर्षन्ति ॥ १२ ॥ संघातयोगेनैकमत्यप्रयोगेण ॥ १४ ॥ सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

## अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

भीष्मेण युधिष्ठिरंप्रति मातृपितृगुरुमहिमानुवर्णनम् ॥ १ ॥

युधिष्ठिर उवाच ।
महानयं धर्मपथो बहुशाखश्च भारत ।
किंस्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥ १
किं कार्यं सर्वभूतानां गरीयो भवतो मतम् ।
यथाऽहं परमं धर्ममिह च प्रेत्य चाप्नुयाम् ॥ २
भीष्म उवाच ।
मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
अत्र वर्तन्नरो लोकान्यशश्च महदश्नुते ॥ ३
यदेते ह्यनुजानीयुः कर्म तात सुपूजिताः ।
धर्मं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥ ४
न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ।
यं मे तेऽभ्यनुजानीयुः स धर्म इति निश्चयः ॥ ५
एत एव त्रयो लोका एत एवाश्रमास्त्रयः ।
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः ॥ ६
पिता वै गार्हपत्योऽग्निर्माताऽग्निर्दक्षणः स्मृतः ।
गुरुराहवनीयस्तु साऽग्नित्रेता गरीयसी ॥ ७
त्रिष्वप्रमाद्यन्नेतेषु त्रीँल्लोकानपि जेष्यसि ।
पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथा परम् ॥ ८
ब्रह्मलोकं गुरोर्वृत्त्या नियमेन तरिष्यसि ।
सम्यगेतेषु वर्तस्व त्रिषु लोकेषु भारत ॥ ९
यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहाफलम् ।
नैतानतिशयीथास्त्वं नात्यश्नीथा न दूषयेः ॥ १०
नित्यं परिचरेश्चैव तद्वै सुकृतमुत्तमम् ।
कीर्तिं पुण्यं यशो लोकान्प्राप्स्यसे त्वं जनाधिप ११
सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ १२
न चायं न परो लोको न यशस्तस्य भारत ।
अमानिता नित्यमेव यस्यैते गुरवस्त्रयः ॥ १३
न चास्मिन्न परे लोके यशस्तस्य प्रकाशते ।
यच्चान्यदपि कल्याणं पारत्रं समुदाहृतम् ॥ १४
तेभ्य एव हि यत्सर्वं कृत्यं यन्निसृजाम्यहम् ।
तदासीन्मे शतगुणं सहस्रगुणमेव च ।
तस्मान्मे संप्रकाशन्ते त्रयो लोका युधिष्ठिर ॥ १५
दशैव तु सदाऽऽचार्यः श्रोत्रियानधितिष्ठति ।
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ॥ १६
पितॄन्दश तु मातैका सर्वां वा पृथिवीमपि ।
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ॥ १७
गुरुर्गरीयान्पितृतो मातृतश्चेति मे मतिः ।
उभौ हि मातापितरौ जन्मन्येवोपयुज्यतः ॥ १८
शरीरमेतौ सृजतः पिता माता च भारत ।
आचार्यशिष्टा या जातिः सा सम्यगजरामरा ॥ १९
अवध्या हि सदा माता पिता चाप्युपचारिणौ ॥ २०
न स दुष्यति तत्कृत्वा न च ते दूषयन्ति तम् ।
धर्माय यतमानानां विदुर्देवाः सहर्षिभिः ॥ २१

य आवृणोत्यवितथेन कर्मणा
ऋतं ब्रुवन्नमृतं संप्रयच्छन् ।
तं मन्येथाः पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ २२
विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते
प्रत्युत्पन्ना मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
नान्यस्तेभ्यः पापकृदस्ति लोके ।
यथैव ते गुरुभिर्भावनीया-
स्तथैव तेषां गुरवोऽभ्यर्चनीयाः ॥ २३

तस्मात्पूजयितव्याश्च संविभज्याश्च यत्नतः ।
गुरवोऽर्चयितव्याश्च पुराणं धर्ममिच्छता ॥ २४
येन प्रीणन्ति पितरस्तेन प्रीतः प्रजापतिः ।
प्रीणाति जननी येन पृथिवी तेन पूजिता ॥ २५

---

वृत्त्या पूजया ॥ ८ ॥ तत् वध्यानामपि तेषां अवधं कृत्वा । ते अपराधिनोऽपि पितृमातृगुरवः अवधेन नैनं दूषयन्ति । राजा हि वध्यानामवधे दुष्यति तद्वन्नात्रेत्यर्थः । धर्माय दुष्टानामपि पित्रादीनां पालनाय यतमानानां यतमानान्देवा अप्यनुग्राह्यत्वेन विदुः ॥ २१ ॥ आवृणोति अनुगृह्णाति । कर्मणा प्रवचनेन । ऋतं वेदम् ॥ २२ ॥

येन प्रीणात्युपाध्यायस्तेन स्याद्ब्रह्म पूजितम् ।
मातृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः ॥ २६
ऋषयश्च हि देवाश्च प्रीयन्ते पितृभिः सह ।
पूज्यमानेषु गुरुषु तस्मात्पूज्यतमो गुरुः ॥ २७
केनचिन्न च वृत्तेन ह्यवज्ञेयो गुरुर्भवेत् ।
न च माता न च पिता तादृशो यादृशो गुरुः ॥ २८
न तेऽवमानमर्हन्ति न तेषां दूषयेत्कृतम् ।
गुरूणामेव सत्कारं विदुर्देवाः सहर्षिभिः ॥ २९
उपाध्यायं पितरं मातरं च
ये विद्रुह्यन्ते मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ ३०
भृतो भर्तारं यो न बिभर्ति पुत्रः
स्वयोनिजः पितरं मातरं च ।
तस्य पापं भ्रूणहत्याविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ ३१
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णामपि चैतेषां निष्कृतिं नानुशुश्रुम ॥ ३२
एतत्सर्वं मनुनिर्देशदृष्टं
यत्कर्तव्यं पुरुषेणेह किंचित् ।
एतच्छ्रेयो नान्यदस्माद्विशिष्टं
सर्वान्धर्माननुसृत्यैतदुक्तम् ॥ ३३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## नवाधिकशततमोऽध्यायः ॥ १०९ ॥

भीष्मेण युधिष्ठिरंप्रति सत्यानृतविवेचनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत ।
तत्त्वं जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १
सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः ।
तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः ॥ २
किंस्वित्सत्यं किमनृतं किंस्विद्धर्म्यं सनातनम् ।
कस्मिन्काले वदेत्सत्यं कस्मिन्वाऽप्यनृतं वदेत् ॥ ३
भीष्म उवाच ।
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
यत्तु लोके सुदुर्ज्ञेयं तत्ते वक्ष्यामि भारत ॥ ४
भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं वाऽप्यनृतं भवेत् ॥ ५
तादृशो वध्यते पापो यत्र सत्यमनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ६
अप्यनार्योऽकृतप्रज्ञः पुरुषोऽप्यतिदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ ७
किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित् ।
सुमहत्प्राप्नुयात्पुण्यं गङ्गायामिव कौशिकः ॥ ८
तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्विदः ।
दुष्करं चापि संख्यातुं तर्केणात्र व्यवस्यति ॥ ९
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः ॥ १०
'अहिंसा सत्यमक्रोधस्तपो दानं दमो मतिः ।
अनसूयाऽप्यसामर्थ्यमनीर्ष्या शीलमेव च ॥ ११

स्त्रीघ्नस्य गुरुघातिनः इति झ. पाठः ॥ ३२ ॥ अनुसृत्यैकीकृत्य । एतत्सारभूतम् ॥ ३३ ॥ अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

तादृशः सत्यानृतयोस्तत्त्वमजानन् । तादृशो बध्यते बाल इति झ. पाठः ॥ ६ ॥ अन्धस्य घ्राणचक्षुषः सर्वप्राणिवधायोद्यतस्य वधाद्बलाको व्याधो हिंस्रस्वभावोऽपि स्वर्गं जगामेति कर्णपर्वकथानुसंधेया ॥ ७ ॥ मूढः कर्णपर्वोक्तः सत्यवादी चोरेभ्यः सत्यवचनाभिमानित्वान्मार्गमुपदिश्य कार्पटिकान्घातितवान् । असौ धर्मविन्नेत्यर्थः । कौशिक उलूको गङ्गातीरे सहस्रशः सर्पिण्या स्थापितान्यण्डानि भित्त्वा महत्पुण्यं प्राप । तदभेदने तु तीक्ष्णविषाणां सर्पाणां वृद्ध्या सद्यो लोकनाशः संभवेत् । सुमहत्प्राप्नुयात्पापं इति ङ. थ. द. पाठः ॥ ८ ॥ अत्र धर्मलक्षणे । व्यवस्यति निश्चिनोति ॥ ९ ॥ प्रभवोऽभ्युदयः ॥ १० ॥

एष धर्मः कुरुश्रेष्ठ कथितं परमेष्ठिना ।
ब्रह्मणा देवदेवेन अयं चैव सनातनः ॥ १२
अस्मिन्धर्मे स्थितो राजन्नरो भद्राणि पश्यति ।
श्रौतो वधात्मको धर्म अहिंसापरमार्थिकः ॥' १३
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः ॥ १४
अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः ॥ १५
श्रुतिं धर्म वदन्त्यन्ये मानान्याहुः परे जनाः ।
न च तं स्वभ्यसूयामो न हि सर्वं विधीयते ॥ १६
येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कर्हिचित् ।
तेभ्यस्तु न तदाख्येयं स धर्म इति निश्चयः ॥ १७
अकूजनेन चेन्मोक्षो नावकूजेत्कथंचन ।
अवश्यं कूजितव्यं वा शङ्केरन्वाऽप्यकूजनात् ॥ १८
'येऽन्ये वाऽप्यनृतं कुर्युः कुर्यादेव विचारणम् ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम् ॥ १९
अक्षयाद्यो वधं राजन्कुर्यादेवाविचारयन् ।
अबुध्वाऽनुशये दोषं श्रेयस्तत्रानृतं भवेत् ॥ २०
न स्तेनैः सह संबन्धान्मुच्यते शपथादपि ।'
श्रेयस्तत्रानृतं वक्तुं सत्यादिति हि धारणा ॥ २१
यः पापैः सह संबन्धान्मुच्यते शपथादपि ।
न च तेभ्यो धनं दद्याच्छक्ये सति कथंचन ।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ २२
स्वशरीरोपरोधेन धनमादातुमिच्छतः ।
सत्यसंप्रतिपत्त्यर्थं यद्ब्रूयुः साक्षिणः क्वचित् ।
अनुक्त्वा तत्र तद्वाच्यं सर्वे तेऽनृतवादिनः ॥ २३
प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अर्थस्य रक्षणार्थाय परेषां धर्मकारणात् ॥ २४
परेषां सिद्धिमाकाङ्क्षन्न च स्याद्धर्मभिक्षुकः ।
प्रतिश्रुत्य न दातव्यं श्वः कार्यस्तु बलात्कृतः ॥ २५
यः कश्चिद्धर्मसमयात्प्रच्युतो धर्मजीवनः ।
दण्डेनैव स हन्तव्यस्तं पन्थानं समाश्रितः ॥ २६
च्युतः सदैव धर्मेभ्यो धनवान्धर्ममाश्रितः ।
कथं स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम् ॥ २७
सर्वोपायैर्नियन्तव्यः पापो निकृतिजीवनः ।
धनमित्येव पापानां सर्वेषामिह निश्चयः ॥ २८
अविवाह्या ह्यसंभोज्या निकृत्या निरयं गताः ।
च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते ।
[निर्यज्ञास्तपसा हीना मा स्म तैः सह संगमः ॥] २९
धनादानाद्दुःखतरं जीविता धिक्प्रयोजनम् ।
इदं ते रोचतां धर्म इति वाच्यं प्रयत्नतः ॥ ३०
न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः ।
तथाविधं च यो हन्यान्न स पापेन लिप्यते ॥ ३१
स्वकर्मणा हतं हन्ति हत एव स हन्यते ।
तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु ॥ ३२
यथा काकास्तथैव श्वा तथैवोपधिजीवनः ।
ऊर्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु ॥ ३३
यस्मिन्यथा वर्तति यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया बाधितव्यः
साध्वाचारः साधुनैवाभ्युपेयः ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

## दशाधिकशततमोऽध्यायः ॥ ११० ॥

भीष्मेण युधिष्ठिरंप्रति दुर्गातितरणोपायकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
क्लिश्यमानेषु भूतेषु तैस्तैर्भावैः पृथक्पृथक् ।

श्रुत्युक्तोऽर्थः सर्वो धर्म इत्यपि न । श्येनादेर्धर्मत्वाभावात् सर्वं श्येनाद्यपि नहि विधीयते धर्मत्वेन न चोद्यते॥१६॥धनमिच्छन्ति कस्यचिदिति झ. पाठः ॥ १७ ॥ चोरेषु धनिकं पृच्छत्सु न वदेत् । अवदतो मोक्षाभावे न वेद्मीति शपथपूर्वकमपि वदेत् । तादृशस्थलेऽनृते दोषो नास्तीत्यर्थः ॥ २१ ॥ तेभ्यः स्तेनेभ्यः ॥२२॥ मा संगमः सङ्गं मा कार्षीः ॥२९ ॥ समयं एतान्न हनिष्यामीति व्रतं यश्चिकीर्षेत् स कुर्वीत । तादृशानां वधे पुण्यमस्तीति भावः ॥ ३२ ॥ नवाधिकशततमोऽध्यायः ॥ १०९ ॥

दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः ।
वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ २
ये दम्भान्नाचरन्ति स्म येषां वृत्तिश्च संयता ।
विषयांश्च निगृह्णन्ति दुर्गाण्यतितरन्ति ते ॥ ३
प्रत्याहुर्नोच्यमाना ये न हिंसन्ति च हिंसिताः ।
प्रयच्छन्ति न याचन्ते दुर्गाण्यतितरन्ति ते ॥ ४
वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः ।
नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ॥ ५
मातापित्रोश्च ये वृत्तिं वर्तन्ते धर्मकोविदाः ।
वर्जयन्ति दिवास्वप्नं दुर्गाण्यतितरन्ति ते ॥ ६
ये वा पापं न कुर्वन्ति कर्मणा मनसा गिरा ।
निक्षिप्तदण्डा भूतेषु दुर्गाण्यतितरन्ति ते ॥ ७
ये न लोभान्नयन्त्यर्थान्राजानो रजसाऽन्विताः ।
विषयान्परिरक्षन्ति दुर्गाण्यतितरन्ति ते ॥ ८
स्वेषु दारेषु वर्तन्ते न्यायलब्धेष्वृतावृतौ ।
अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते ॥ ९
आहवेषु च ये शूरास्त्यक्त्वा मृत्युकृतं भयम् ।
धर्मेण जयमिच्छन्ति दुर्गाण्यतितरन्ति ते ॥ १०
ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते ।
प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते ॥ ११
कर्माण्यकुत्सनार्थानि येषां वाचश्च सूनृताः ।
येषामर्थाश्च साध्वर्था दुर्गाण्यतितरन्ति ते ॥ १२
अनध्यायेषु ये विप्राः स्वाध्यायं नैव कुर्वते ।
तपोनिष्ठाः सुतपसो दुर्गाण्यतितरन्ति ते ॥ १३
ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः ।
विद्या वेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ १४
ये च संशान्तरजसः संशान्ततमसश्च ये ।
सत्त्वे स्थिता महाभागा दुर्गाण्यतितरन्ति ते ॥ १५
येषां न कश्चित्त्रसति न त्रसन्ति हि कस्यचित् ।
येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते ॥ १६

भूतेषु प्राणिषु । दुर्गाणि दुस्तराणि ॥ १ ॥ विषयान्विषयार्थानि इन्द्रियाणि ॥ ३ ॥ उच्यमानाः निन्द्यमानाः ॥ ४ ॥

परश्रिया न तप्यन्ति ये सन्तः पुरुषर्षभाः ।
ग्राम्यादन्नान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते ॥ १७
सर्वान्देवान्नमस्यन्ति सर्वधर्मांश्च शृण्वते ।
ये श्रद्दधानाः शान्ताश्च दुर्गाण्यतितरन्ति ते ॥ १८
ये न मानित्वमिच्छन्ति मानयन्ति च ये परान् ।
मान्यमानान्नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥ १९
ये च श्राद्धानि कुर्वन्ति तिथ्यांतिथ्यां प्रजार्थिनः ।
सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते ॥ २०
ये क्रोधं संनियच्छन्ति क्रुद्धान्संशमयन्ति च ।
न च रुष्यन्ति भृत्यानां दुर्गाण्यतितरन्ति ते ॥ २१
मधु मांसं स्त्रियो नित्यं वर्जयन्तीह मानवाः ।
जन्मप्रभृति मद्यं च दुर्गाण्यतितरन्ति ते ॥ २२
यात्रार्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक् सत्यवचनार्थं च दुर्गाण्यतितरन्ति ते ॥ २३
ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं देवं दुर्गाण्यतितरन्ति ते ॥ २४
य एष पद्मरक्ताक्षः पीतवासा महाभुजः ।
सुहृद्भ्राता च मित्रं च संबन्धी च तवाच्युतः ॥ २५
य इमान्सकलाँल्लोकांश्चर्मवत्परिवेष्टयेत् ।
इच्छन्प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥ २६
स्थितः प्रियहिते नित्यं स एष पुरुषोत्तमः ।
राजंस्तव यदुश्रेष्ठो वैकुण्ठः पुरुषर्षभः ॥ २७
य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् ।
ते तरन्तीह दुर्गाणि न चात्रास्ति विचारणा ॥ २८
'अस्मिन्नर्पितकर्माणः सर्वभावेन भारत ।
कृष्णे कमलपत्राक्षे दुर्गाण्यतितरन्ति ते ॥ २९
लोकरक्षार्थमुत्पन्नमदित्यां कश्यपात्मजम् ।
देवमिन्द्रं नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥ ३०
ब्रह्माणं लोककर्तारं ये नमस्यन्ति सत्पतिम् ।
यष्टव्यं क्रतुभिर्देवं दुर्गाण्यतितरन्ति ते ॥ ३१
यं विष्णुरिन्द्रः शंभुश्च ब्रह्मा लोकपितामहः ।
स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् ।
समर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते ॥' ३२

रजसान्विताः सन्तोऽर्थान्न नयन्ति न हरन्ति ॥ ८ ॥ यात्रार्थं जीवनार्थम् ॥ २३ ॥

दुर्गातितरणं ये च पठन्ति श्रावयन्ति च ।
कथयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते ॥ ३३
इति कृत्यसमुद्देशः कीर्तितस्ते मयाऽनघ ।
तरते येन दुर्गाणि परत्रेह च मानवः ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

## एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

भीष्मेण युधिष्ठिरंप्रति परीक्षायाः सौम्यासौम्यत्वनिर्धारणसाधनताप्रतिपादकव्याघ्रगोमायुचरितकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
असौम्याः सौम्यरूपेण सौम्याश्चासौम्यरूपिणः ।
तादृशान्पुरुषांस्तात कथं विद्यामहे वयम् ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
व्याघ्रगोमायुसंवादं तं निबोध युधिष्ठिर ॥ २
पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः ।
परहिंसापरः क्रूरो बभूव पुरुषाधमः ॥ ३
स त्वायुषि परिक्षीणे जगामानीप्सितां गतिम् ।
गोमायुत्वं च संप्राप्तो दूषितः पूर्वकर्मणा ॥ ४
संस्मृत्य पूर्वजातिं स्वां निर्वेदं परमं गतः ।
न भक्षयति मांसानि परैरुपहृतान्यपि ॥ ५
अहिंस्रः सर्वभूतेषु सत्यवाक् सुदृढव्रतः ।
चकार च यथाकालमाहारं पतितैः फलैः ॥ ६
'पर्णाहारः कदाचिच्च नियमव्रतवानपि ।
कदाचिदुदकेनापि वर्तयन्न तु यन्त्रितः ॥' ७
श्मशाने तस्य चावासो गोमायोः संमतोऽभवत् ।
जन्मभूम्यनुरोधाच्च नान्यं वा समरोचयत् ॥ ८
तस्य शौचममृष्यन्तस्ते सर्वे सहजातयः ।
चालयन्ति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः ॥ ९
वसन्पितृवने रौद्रे शौचं लम्भितुमिच्छसि ।
इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः ॥ १०
तत्समानो भवास्माभिर्भक्ष्यं दास्यामहे वयम् ।
भुङ्क्ष्व शौचं परित्यज्य यद्धि भुक्तं तदस्ति ते ॥ ११
इति तेषां वचः श्रुत्वा प्रत्युवाच समाहितः ।
मधुरैः प्रश्रितैर्वाक्यैर्हेतुमद्भिरनिष्ठुरैः ॥ १२
अप्रमाणा प्रसूतिर्मे शीलतः क्रियते कुलम् ।
प्रार्थयामि च तत्कर्म येन विस्तीर्यते यशः ॥ १३
श्मशाने यदि मे वासः समाधिर्मे निशाम्यताम् ।
आत्मा फलति कर्माणि नाश्रमो धर्मलक्षणम् ॥ १४
आश्रमे यो द्विजं हन्याद्दानं दद्यादनाश्रमे ।
किंतु तत्पातकं न स्यात्तद्वा दानं वृथा भवेत् ॥ १५
भवन्तः स्वार्थलोभेन केवलं भक्षणे रताः ।
अनुबन्धेषु ये दोषास्तान्न पश्यन्ति मोहिताः ॥ १६
अप्रत्ययकृतां गर्ह्यामर्थापनयदूषिताम् ।
इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये ॥ १७
तं शुचिं पण्डितं मत्वा शार्दूलः ख्यातविक्रमः ।
कृत्वाऽऽत्मसदृशीं पूजां साचिव्येऽवरयत्स्वयम् १८
शार्दूल उवाच ।
सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह ।
व्रियन्तामीप्सिता भोगाः परिहार्याश्च पुष्कलाः १९
तीक्ष्णा इति वयं ख्याता भवन्तं ज्ञापयामहे ।
मृदुपूर्वं प्रशाधि त्वं श्रेयश्चाधिगमिष्यसि ॥ २०
भीष्म उवाच ।
अथ संपूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः ।
गोमायुः प्रश्रितं वाक्यं बभाषे किंचिदानतः ॥ २१
सदृशं मृगराजैतत्तव वाक्यं मदन्तरे ।
यत्सहायान्मृगयसे धर्मार्थकुशलाञ्शुचीन् ॥ २२
न शक्यं ह्यनमात्येन महत्त्वमनुशासितुम् ।
दुष्टामात्येन वा वीर शरीरपरिपन्थिना ॥ २३

---

कृत्यसमुद्देशः कर्तव्यलेशः॥ ३४॥ दशाधिकशततमोऽध्यायः ११० विप्रतिपत्तिर्विपरीता बुद्धिः ॥ १० ॥ अनुबन्धेषु परिणामेषु ॥ १६ ॥ अप्रत्ययोऽसंतोषस्तेन कृताम् । अर्थापनयो धर्महानिः ॥ १७ ॥ यात्रां राजकार्यं गच्छ प्राप्नुहि । परिहार्याश्चानीप्सिताः ॥ १९ ॥ ज्ञापयामहे सूचयामहे ॥ २० ॥ मदन्तरे मन्निमित्तम् ॥ २२ ॥ न शक्यम् । राज्ञेति शेषः ॥२३॥

सहायाननुरक्तांश्च नयज्ञानुपसंहितान् ।
परस्परमसंतुष्टान्विजिगीषूनलोलुपान् ॥ २४
अनतीतोपदान्प्राज्ञान्हिते युक्तान्मनस्विनः ।
पूजयेथा महाभाग यथा भ्रातॄन्यथा पितॄन् ॥ २५
न त्वेव मम संतोषाद्रोचतेऽन्यन्मृगाधिप ।
न कामये सुखान्भोगानैश्वर्यं वा त्वदाश्रयम् ॥२६
न योक्ष्यति हि मे शीलं तव भृत्यैः पुरातनैः ।
ते त्वां विभेदयिष्यन्ति दुःखशीला मदन्तरे ॥ २७
संश्रयः श्लाघनीयस्त्वमन्येषामपि भास्वताम् ।
कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः ॥ २८
दीर्घदर्शी महोत्साहः स्थूललक्षो महाबलः ।
कृते चामोघकर्तोऽसि भाग्यैश्च समलंकृतः ॥२९
किंतु स्वेनास्मि संतुष्टो दुःखा वृत्तिरनुष्ठिता ।
सेवायां चापि नाभिज्ञः स्वच्छन्देन वनेचरः ॥ ३०
राजोपक्रोशदोषाश्च सर्वे संश्रयवासिनाम् ।
वनचर्या तु निःसङ्गा निर्भया निरवग्रहा ॥ ३१
नृपेण ह्रियमाणस्य यत्तिष्ठति भयं हृदि ।
न तत्तिष्ठति तुष्टानां वने मूलफलाशिनाम् ॥ ३२
पानीयं वा निरायासं स्वाद्वन्नं वा गुणोत्तरम् ।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥३३
अपराधैर्न तावन्तो भृत्याः शिष्टा नराधिपैः ।
उपघातैर्यथा भृत्या दूषिता निधनं गताः ॥ ३४
यदि वा तन्मया कार्यं मृगेन्द्र यदि मन्यसे ।
समयं कृतमिच्छामि वर्तितव्यं यथाविधि ॥ ३५
मदीया माननीयास्ते श्रोतव्यं च हितं वचः ।
कल्पिता या च मे वृत्तिः सा भवेत्त्वयि सुस्थिरा ३६
न मन्त्रणीयमन्यैस्ते सचिवैः सह कर्हिचित् ।
नीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि ॥ ३७
एक एकेन संगम्य रहो ब्रूयां हितं वचः ।
न च ते ज्ञातिकार्येषु प्रष्टव्योऽस्मि हिताहिते ॥३८
मया संमन्त्र्य पश्चाच्च न हिंस्याः सचिवास्त्वया ।
मदीयानां च कुपितो मा त्वं दण्डं निपातयेः ॥३
भीष्म उवाच ।
एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः ।
प्राप्तवान्मतिसाचिव्यं गोमायुर्व्याघ्रचोदितः ॥४
तं तथा सत्कृतं दृष्ट्वा युज्यमानं च कर्मसु ।
प्राद्विषन्कृतसंघाताः पूर्वभृत्या मुहुर्मुहुः ॥ ४
मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रवेश्य च
दोषेषु समयानेतुमिच्छन्त्यशुभबुद्धयः ॥ ४
अन्यथा ह्युषिताः पूर्वं परद्रव्यापहारिणः ।
अशक्ताः किंचिदाहर्तुं द्रव्यं गोमायुयन्त्रिताः ॥४
व्युत्थानं चात्र काङ्क्षद्भिः कथाभिः प्रतिलोभ्यते ।
धनेन महता चैव बुद्धिरस्य विलोभ्यते ॥ ४
न चापि स महाप्राज्ञस्तस्माद्धैर्याच्चचाल ह ।
अथास्य समयं कृत्वा विनाशाय स्थिताः परे ॥४
ईप्सितं तु मृगेन्द्रस्य मांसं यत्तत्र संस्कृतम् ।
अपनीय स्वयं तद्धि तैर्न्यस्तं तस्य वेश्मनि ॥ ४६
यदर्थं चाप्यपहृतं येन तच्चैव मन्त्रितम् ।
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम् ॥ ४७
समयोऽयं कृतस्तेन साचिव्यमुपगच्छता ।
नोपघातस्त्वया कार्यो राजन्मैत्रीमिहेच्छता ।
'इति तस्य च मन्त्रस्य स्थित्यर्थं तदुपेक्षितम् ॥' ४८
[क्षुधितस्य मृगेन्द्रस्य भोक्तुमभ्युत्थितस्य च ।]
भोजने चोपहर्तव्ये तन्मांसं नव्यदृश्यत ।
मृगराजेन चाज्ञप्तं मृग्यतां चोर इत्युत ॥ ४९
कृतकैश्चापि तन्मांसं मृगेन्द्राय निवेदितम् ।
सचिवेनापनीतं ते विदुषा प्राज्ञमानिना ॥ ५०
सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम् ।
बभूवामर्षितो राजा वधं चास्य व्यरोचयत् ॥५१
छिद्रं तु तस्य तद्दृष्ट्वा प्रोचुस्ते पूर्वमन्त्रिणः ।
सर्वेषामेव सोऽस्माकं वृत्तिभङ्गे प्रवर्तते ।
निश्चित्यैवं पुनस्तस्य ते तत्कर्मण्यवर्तयन् ॥ ५२

---

न त्वेष मम सन्तोषादिति ट. ड. थ. द. पाठः ॥ २६ ॥ योक्ष्यति योगं प्राप्स्यति । दुःखशीला भविष्यन्ति ॥ २७ ॥ स्थूललक्षो बहुप्रदः ॥ २९ ॥ उपक्रोशो निन्दा तज्जा दोषा उपक्रोशदोषाः सन्ति ॥३१॥ यत्र निर्वृतिः सुखं तत्खलु सुखं स्वर्गं पश्यामि । निर्वृतिः सुस्थितिरिति वा ॥३३॥ शिष्टाः कृतदण्डाः ॥३४॥ तस्य गोमायोर्वेश्मनि ॥४६॥ तस्य गोमायोः । कारणार्थं स्वस्य बन्धविच्छेदो भवत्विति हेतोरित्यर्थः ॥ ४७ ॥ परोक्षस्त्वथ इति ट. द. पाठः ॥ ५१ ॥

एवं चावमतस्येह विश्रामं मे न यास्यसि ।
त्वयि चापेतविश्रामे ममोद्वेगो भविष्यति ॥ ८३
शङ्कितस्त्वमहं भीतः परे च्छिद्रानुसारिणः ।
अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ॥ ८४
दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।
भिन्नश्लिष्टे तु या प्रीतिर्न सा स्नेहेन वर्धते ॥ ८५
कश्चित्तत्र हितं भर्तुर्दृश्यते न परात्मनः ।
कार्यापेक्षा हि वर्तन्ते भावस्निग्धाः सुदुर्लभाः ॥ ८६
सुदुःखं पुरुषज्ञानं चित्तं ह्येषां चलाचलम् ।
समर्थो वाप्यशक्तो वा शतेष्वेकोऽधिगम्यते ॥ ८
अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम् ।
शुभाशुभे महत्त्वं च प्रकर्तुं बुद्धिलाघवम् ॥ ८
भीष्म उवाच ।
एवंविधं सान्त्वमुक्त्वा धर्मकामार्थहेतुमत् ।
प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ॥ ८
अगृह्यानुनयं तस्य मृगेन्द्रस्य च बुद्धिमान् ।
गोमायुः प्रायमासीनस्त्यक्त्वा देहं दिवं ययौ ॥ ९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

## द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

भीष्मेण युधिष्ठिरंप्रति अलसताया अनर्थहेतुताख्यापकोष्ट्रचरिताभिधानम् ॥ १ ॥

युधिष्ठिर उवाच ।
किं पार्थिवेन कर्तव्यं किं च कृत्वा सुखी भवेत् ।
तन्ममाचक्ष्व तत्त्वेन सर्वधर्मभृतां वर ॥ १
भीष्म उवाच ।
हन्त तेऽहं प्रवक्ष्यामि शृणु कार्यैकनिश्चयम् ।
यथा राज्ञेह कर्तव्यं यच्च कृत्वा सुखी भवेत् ॥ २
नचैवं वर्तितव्यं स्म यथेदमनुशुश्रुम ।
उष्ट्रस्य तु महद्वृत्तं तन्निबोध युधिष्ठिर ॥ ३
जातिस्मरो महानुष्ट्रः प्रजापतिकुलोद्भवः ।
तपः सुमहदातिष्ठदरण्ये संशितव्रतः ॥ ४
तपसस्तस्य चान्तेऽथ प्रीतिमानभवद्विभुः ।
वरेण च्छन्दयामास ततश्चैनं पितामहः ॥ ५
उष्ट्र उवाच ।
भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम् ।
योजनानां शतं साग्रमिच्छेयं चरितुं विभो ॥ ६
एवमस्त्विति चोक्तः स वरदेन महात्मना ।
प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनम् ॥ ७
स चकार तदाऽऽलस्यं वरदानात्सुदुर्मतिः ।
न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः ॥
स कदाचित्प्रसार्यैव तां ग्रीवां शतयोजनाम् ।
चचार श्रान्तहृदयो वातश्चागात्ततो महान् ॥
स गुहायां शिरोग्रीवं निधाय पशुरात्मनः ।
आस्ते वर्षमथाभ्यागात्सुमहत्प्लावयज्जगत् ॥ १
अथ शीतपरीताङ्गो जम्बुकः क्षुच्छ्रमान्वितः ।
सदारस्तां गुहामाशु प्रविवेश जलार्दितः ॥ १
स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः ।
अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ ॥ १
यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः ।
तदा संकोचने यत्नमकरोद्भृशदुःखितः ॥ १
यावदूर्ध्वमधश्चैव ग्रीवां संक्षिपते पशुः ।
तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥ १
स हत्वा भक्षयित्वा च तमुष्ट्रं जम्बुकस्तदा ।
विगते वातवर्षे तु निश्चक्राम गुहोदरात् ॥ १
एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा ।
आलस्यस्य क्रमात्पश्य महान्तं दोषमागतम् ॥ १

छिद्रानुदर्शिनः इति झ. पाठः ॥ ८४ ॥ पुरुषज्ञानं सुदुःखं दुर्लभं यत एषां नृपाणां चित्तं चलाचलमस्थिरं गम्यते ज्ञायते सुपुरुषज्ञानं दुर्घटमित्यर्थः ॥ ८७ ॥ प्रक्रिया महीकरणं बुद्धेर्लाघवं तुच्छलमेव हेतुः ॥८८॥ प्रसादयित्वा प्रसाद्य ॥ ८९ ॥ अगृह अगृहीत्वा ॥ ९० ॥ एकादशाधिकशततमोऽध्यायः ॥ १११

चरितुं भक्षितुम् ॥ ८ ॥

इदं तस्येदृशं कर्म किं तेन न कृतं भवेत् ।
श्रुतश्च स्वामिना पूर्वं यादृशो नैव तादृशः ॥५३
वाङ्मात्रेणैव धर्मिष्ठः स्वभावेन तु दारुणः ।
धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः ॥ ५४
कार्यार्थं भोजनाद्येषु व्रतेषु कृतवाञ्श्रमम् ।
यदि विप्रत्ययो ह्येष तदिदं दर्शयाम ते ॥ ५५
तन्मांसं तैश्च गोमायोस्तत्क्षणादाशु ढौकितम् ॥५६
मांसापनयनं श्रुत्वा व्याघ्रस्तेषां च तद्वचः ।
आज्ञापयामास तदा गोमायुर्वध्यतामिति ॥ ५७
गोमायोर्व्यसनं श्रुत्वा शार्दूलजननी ततः ।
मृगराजं हितैर्वाक्यैः संबोधयितुमागमत् ॥ ५८
पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंयुतम् ।
कर्म संघर्षजैर्दोषैर्दुष्येताशुचिभिः शुचिः ॥ ५९
नोच्छ्रितं सहते कश्चित्प्रक्रिया वैरकारिका ।
शुचेरपि हि युक्तस्य दोष एव निपात्यते ॥ ६०
[मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पाद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥] ६१
लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः ।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः ।
अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपिणः ॥६२
बहवो पण्डिता मूर्खा लुब्धा मायोपजीविनः ।
आहुर्दोषमदोषस्य बृहस्पतिमतेरपि ॥ ६३
शून्यस्तं ते गृहे मांसं यदद्यापहृतं तव ।
नेच्छते दीयमानं च साधु तावद्विधीयताम् ॥६४
असत्याः सत्यसंकाशाः सत्याश्चासत्यदर्शनाः ।
दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ॥६५
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः ॥ ६६
तस्मात्प्रत्यक्षदृष्टोऽपि युक्तो ह्यर्थः परीक्षितुम् ।
परीक्ष्य ज्ञापयन्नर्थान्न पश्चात्परितप्यते ॥ ६७

न दुष्करमिदं पुत्र यत्प्रभुर्घातयेत्परम् ।
श्लाघनीया यशस्या च लोके प्रभवतां क्षमा ॥६८
स्थापितोऽयं त्वया पुत्र सामन्तेष्वपि विश्रुतः ।
दुःखेनासाद्यते पात्रं धार्यतामेष ते सुहृत् ॥ ६९
दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिम् ।
स्वयं संदूषितामात्यः क्षिप्रमेव विनश्यति ॥ ७०
एतस्मादरिसंघाताद्गोमायोः कश्चिदागतः ।
धर्मात्मा तेन चाख्यातं यथैतत्कपटं कृतम् ॥७१
ततो विज्ञातचारित्रः सत्कृत्य स विमोक्षितः ।
परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनःपुनः ॥ ७२
अनुज्ञाप्य मृगेन्द्रं तु गोमायुर्नीतिशास्त्रवित् ।
तेनामर्षेण संतप्तः प्रायमासितुमैच्छत ॥ ७३
गोमायुं तु स शार्दूलः स्नेहात्प्रस्रुतलोचनः ।
न्यवारयत्स धर्मिष्ठं पूजया प्रतिपूजयन् ॥ ७४
तं स गोमायुरालोक्य स्नेहादागतसंभ्रमः ।
बभाषे प्रणतो वाक्यं बाष्पगद्गदया गिरा ॥ ७५
पूजितोऽहं त्वया पूर्वं पश्चाच्चैव विमानितः ।
परेषामास्पदं नीतो वस्तुं नार्हाम्यहं त्वयि ॥७६
असंतुष्टाश्च्युताः स्थानान्मानात्प्रत्यवरोपिताः ।
स्वयं चोपद्रुता भृत्या ये चाप्युपहिताः परैः ॥७७
परिक्षीणाश्च लुब्धाश्च क्रुद्धा भीताः प्रतारिताः ।
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः ॥ ७८
संतापिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः ।
अन्तर्हिताः सोपहितास्ते सर्वेऽपरसाधनाः ॥ ७९
अवमानेन युक्तस्य स्थापितस्य च मे पुनः ।
कथं यास्यसि विश्वासमहमेष्यामि वा कथम् ॥ ८०
समर्थ इति संगृह्य स्थापयित्वा परीक्षितः ।
कृतं च समयं भित्त्वा त्वयाऽहमवमानितः ॥ ८१
प्रथमं यः समाख्यातः शीलवानिति संसदि ।
न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ॥ ८२

विप्रत्ययोऽविश्वासः ॥ ५५ ॥ गोमायोर्गृहे ढौकीतं प्रवेशितं मांसं प्रदर्शयामासुरित्यर्थः । तत्क्षणादेव दर्शितं इति द. पाठः ॥ ५६ ॥ शार्दूलस्य वचः श्रुत्वा इति झ. पाठः ॥ ५८ ॥ संघर्षजैः स्पर्धोत्थैः ॥ ५९ ॥ प्रक्रिया प्रकृष्ट कर्म ॥ ६० ॥ तलवत् अवाङ्मुखकटाहगर्भवत् ॥ ६६ ॥ प्रभवतां प्रभूणाम् ॥ ६८ ॥ गोमायोश्चारः ॥ ७१ ॥ प्रायं मरणार्थमुपवेशनं आसितुं आचरितुम् ॥ ७३ ॥ वस्तुं नार्होऽस्म्यहं त्वया इति ट. ड. द. पाठः ॥ ७६ ॥ अपरसाश्च अधनाश्चेति अपरसाधनाः । प्रीतिशून्या निर्धनाश्चेत्यर्थः ॥ ७९ ॥

त्वमप्येवंविधं हित्वा योगेन नियतेन्द्रियः ।
वर्तस्व बुद्धिमूलं तु विजयं मनुरब्रवीत् ॥ १७
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ १८
राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च ।
[आर्तस्य बुद्धिमूलं हि विजयं मनुरब्रवीत्] ।
गुप्तं मन्त्रं श्रुतवतः सुसहायस्य चानघ ॥ १९
'असहायवतो ह्यर्थो न तिष्ठन्ति कदाचन ।'
परीक्षितसहायस्य तिष्ठन्तीह युधिष्ठिर ।
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम् ॥२०
इदं हि सद्भिः कथितं विधिज्ञैः
पुरा महेन्द्रप्रतिमप्रभावः ।
मयाऽपि चोक्तं तव शास्त्रदृष्ट्या
त्वमप्रमत्तः प्रचरस्व राजन् ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

## त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

भीष्मेण युधिष्ठिरंप्रति बलवच्छत्रुवशीकरणे विनयस्योपायतायां दृष्टान्ततया सरित्सागरसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
राजा राज्यमनुप्राप्य दुर्बलो भरतर्षभ ।
अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सरितां चैव संवादं सागरस्य च भारत ॥ २
सुरारिनिलयः शश्वत्सागरः सरितां पतिः ।
पप्रच्छ सरितः सर्वाः संशयं जातमात्मनः ॥ ३
सागर उवाच ।
समूलशाखान्पश्यामि निहतान्कापि नो द्रुमान् ।
युष्माभिरिह पूर्णाभिरन्यांस्तत्र न वेतसान् ॥ ४
अल्पकायश्चाल्पसारो वेतसः कूलजश्च यः ।
अवज्ञया वा नानीतः किं च वा तेन वः कृतम् ॥ ५
तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम् ।
यथा चेमानि कूलानि हित्वा नायाति वेतसः ॥६
तत्र प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत् ।
हेतुमद्ग्राहकं चैव सागरं सरितां पतिम् ॥ ७
गङ्गोवाच ।
तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः ।
ततस्त्यजन्ति तत्स्थानं प्रातिलोम्यान्न वेतसः ॥८
वेतसो वेगमायान्तं दृष्ट्वा नमति नापरः ।
स च वेगे ह्यतिक्रान्ते स्थानमायद्यते पुनः ॥ ९
कालज्ञः समयज्ञश्च सदावश्यश्च नो द्रुमः ।
अनुलोमवृत्तिरस्तब्धस्तेन त्वां नैति वेतसः ॥ १०
मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च ।
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ११
भीष्म उवाच ।
यो हि शत्रोर्विवृद्धस्य प्रभोर्वन्धविनाशने ।
पूर्वं न सहते वेगं क्षिप्रमेव विनश्यति ॥ १२
सारासारं बलं वीर्यमात्मनो द्विषतश्च यः ।
जानन्विचरति प्राज्ञो न स याति पराभवम् ॥ १३
एवमेव यदा विद्वान्मन्यते विपुलं बलम् ।
संश्रयेद्वैतसीं वृत्तिमेतत्प्रज्ञानलक्षणम् ॥ १४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

योगेनोपायेन । एवंविधमालस्यम् ॥ १७ ॥ बाहूपलक्षितं शौर्यम् । जङ्घोपलक्षित पादविहरणम् । भारो भारवहनम् ॥ १८ ॥ द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

निहतानुन्मूलितान् । कायिन इति पाठे महाशरीरान् । अन्यानल्पशरीरान्वेतसान् न हतान्पश्यामि ॥ ४ ॥ अवज्ञाय न शक्यो वा इति द. पाठः ॥ ५ ॥ एकनिकेतनाः स्तब्धा इत्यर्थः । प्रातिलोम्यादस्माक प्रातिकूल्यात् ॥ ८ ॥ वैतसीं वृत्तिमस्तब्धलम् ॥ १४ ॥ त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

## चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

भीष्मेण युधिष्ठिरंप्रति सभायां दुष्टदुर्भाषणे तत्तितिक्षाया गुणत्वप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
विद्वान्मूढप्रगल्भेन मृदुस्तीक्ष्णेन भारत ।
आक्रुश्यमानः सदसि कथं कुर्यादरिंदम ॥ १
भीष्म उवाच ।
श्रूयतां पृथिवीपाल यथैषोऽर्थोऽवगम्यते ।
सदा सुचेताः सहते नरस्येहाल्पचेतसः ॥ २
आक्रुश्य रुष्यमाणश्च सुकृतं तस्य विन्दति ।
दुष्कृतं चात्मनो मर्षी तस्मिन्नेव प्रमार्जति ॥ ३
टिट्टिभं तमुपेक्षेत वाश्यमानमिवातुरम् ।
लोकविद्वेषमापन्नो निष्फलं प्रतिपद्यते ॥ ४
इति संश्लाघते नित्यं तेन पापेन कर्मणा ।
इदमुक्तो मया कश्चित्संमतो जनसंसदि ।
स तत्र व्रीडितः शुष्को मृतकल्पोऽवतिष्ठते ॥ ५
श्लाघन्नश्लाघनीयेन कर्मणा निरपत्रपः ।
उपेक्षितव्यो दान्तेन तादृशः पुरुषाधमः ॥ ६
यद्यद्ब्रूयादल्पमतिस्तत्तदस्य सहेत्तदा ॥ ७
प्राकृतो हि प्रशंसन्वा निन्दन्वा किं करिष्यति ।
वने काक इवाबुद्धिर्वाश्यमानो निरर्थकम् ॥ ८
यदि वाग्भिः प्रयोगः स्यात्प्रयोज्यः पापकर्मणा ।
वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ॥ ९
निषेकं वै परस्यासावाचष्टे वृत्तचेष्टया ।
मयूर इव कौपीनं नृत्यं संदर्शयन्निव ॥ १०
यस्यावाच्यं न लोकेऽस्मिन्नाकार्यं चापि किंचन ।
वाचं तेन न संदध्याच्छुचिः संश्लिष्टकर्मणा ॥ ११
प्रत्यक्षं गुणवादी यः परोक्षे तु विनिन्दकः ।
स मानवः श्ववल्लोके नष्टलोकपरायणः ॥ १२
तादृग्जनशतं चापि यद्ददाति जुहोति च ।
परोक्षेणापवादेन तं नाशयति तत्क्षणात् ॥ १३
तस्मात्प्राज्ञो नरः सद्यस्तादृशं पापचेतसम् ।
वर्जयेन्मतिमान्वर्ज्यं सारमेयामिषं यथा ॥ १४
परिवादं ब्रुवाणो हि दुरात्मा वै महाजने ।
प्रकाशयति दोषान्स्वान्सर्पः फणमिवोन्नतम् ॥ १५
तं स्वकर्माणि कुर्वाणं प्रतिकर्तुं य इच्छति ।
भस्मकूट इवाबुद्धिः खरो रजसि मज्जति ॥ १६

मनुष्यसालावृकमप्रशान्तं
जनापवादे सततं निविष्टम् ।
मातङ्गमुन्मत्तमिवोन्नदन्तं
त्यजेत तं श्वानमिवातिरौद्रम् ॥ १७
अनार्यजुष्टे पथि वर्तमानं
दमादपेतं विनयाच्च पापम् ।
अरिव्रतं नित्यमभूतिकामं
धिगस्तु तं पापमतिं मनुष्यम् ॥ १८
प्रत्युच्यमानस्त्वथ भूय एव
निशाम्य माभूस्त्वमथार्तरूपः ।
उच्चस्य नीचेन हि संप्रयोगं
विगर्हयन्ति स्थिरबुद्धयो ये ॥ १९
क्रुद्धो दशेद्वाऽपि च ताडयेद्वा
स पांसुभिर्वा विकिरेत्तुषैर्वा ।
विवृत्य दन्तांश्च विभीषयेद्वा
सिद्धं हि मूढे कुपिते नृशंसे ॥ २०

मृदुः क्षमी प्रगल्भश्च तेन ॥ १ ॥ सहते दुरुक्तम् ॥ २ ॥ मर्षी तितिक्षुः ॥ ३ ॥ वाश्यमानं रुदन्तम् ॥ ४ ॥ यथा वाचा हतो न हन्यते एवं वाचा दूषितो न दुष्यतीत्यर्थः ॥ ९ ॥ स एवं वदन्नेतेन क्रियया चेष्टया कामादिव्यापारेण च लिङ्गेन निषेकं स्वमातरि रेतःसेकं परस्य परेण पितुरन्येन कृतमित्याचष्टे व्यक्तं कथयति । कौपीनं गुह्यप्रदेशं संदर्शयन्निव नृत्यं कुर्वन्मयूरो यथा श्लाघते सम्यङ्नृत्यामीति मन्यते न तु मम गुह्यं लोकाः पश्यन्तीति त्रपते एवं खलोपि मया स महान्दुरुक्तभाषी दुरुक्तमुक्त इति श्लाघते न त्वनेन मम मातुर्दोषः स्पष्टीक्रियते मयैवेति न त्रपते इत्यर्थः ॥ १० ॥ मयूर इव कालीनं इति थ. द. पाठः । संश्लिष्टजन्मना इति ट. थ. द. पाठः ॥ ११ ॥ तादृक्पुमान् ॥ १३ ॥ सारमेयामिषं शुनोमांसम् ॥ १४ ॥ दोषान् जारजत्वादीन् ॥ १५ ॥ भस्मकूटे भस्मराशौ खर इवाबुद्धिः रजसि दुःखे निमज्जति ॥ १६ ॥ सालावृकं श्वानमेव मनुष्यत्वेन लोके गृहीतमित्यर्थः ॥ १७ ॥ क्रुद्धो दशार्धेन हि ताडयेद्वा इति झ. पाठः । तत्र दशार्धेन संवृताङ्गुलिपञ्चकेन पाणिनेत्यर्थः । इदं सर्वं कुपितमूढे सिद्धमेव ॥ २० ॥ चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

विगर्हणां नाऽपि दुरात्मना कृतां
सहेत यः संसदि दुर्जनानाम् ।
पठेदिदं चापि निदर्शनं सदा
न वाङ्मयं स लभति किंचिदप्रियम् ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

## पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

भीष्मेण युधिष्ठिरंप्रति राज्ञां सहायसंपादनस्यावश्यकतादिप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ संशयो मे महानयम् ।
संछेत्तव्यस्त्वया राजन्भवान्कुलकरो हि नः ॥ १
पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनाम् ।
कथितो वाक्यसंचारस्ततो विज्ञापयामि ते ॥ २
यद्धितं राज्यतन्त्रस्य कुलस्य च सुखोदयम् ।
आयत्यां च तदात्वे च क्षेमवृद्धिकरं च तत् ॥ ३
पुत्रपौत्राभिरामं च राष्ट्रवृद्धिकरं च यत् ।
अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे ॥ ४
अभिषिक्तो हि यो राजा राज्यस्थो मित्रसंवृतः ।
असुहृत्समुपेतो वा स कथं रञ्जयेत्प्रजाः ॥ ५
यो ह्यसत्प्रग्रहरतिः स्नेहरागबलात्कृतः ।
इन्द्रियाणामनीशत्वादसज्जनबुभूषकः ॥ ६
तस्य भृत्या विमुखतां यान्ति सर्वे कुलोद्गताः ।
न च भृत्यबलैरर्थैः स राजा संप्रयुज्यते ॥ ७
एतन्मे चिन्तयानस्य राजधर्मान्दिवानिशम् ।
बृहस्पतिसमो बुद्ध्या भवाञ्शंसितुमर्हति ॥ ८
शासिता पुरुषव्याघ्र त्वं नः कुलहिते रतः ।
क्षत्ता चैको महाप्राज्ञो यो नः शंसति सर्वदा ॥ ९
त्वत्तः कुलहितं वाक्यं श्रुत्वा राज्यहितोदयम् ।
अमृतस्याव्ययस्येव तृप्तः स्वप्स्याम्यहं सुखम् ॥ १०
कीदृशाः सन्निकर्षस्था भृत्याः सर्वगुणान्विताः ।
कीदृशैः किं कुलीनैर्वा सह यात्रा विधीयते ॥ ११
न ह्येको भृत्यरहितो राजा भवति रक्षिता ।
राज्यं चेदं जनः सर्वस्तत्कुलीनः प्रशासति ॥ १२
भीष्म उवाच ।
न च प्रशास्तुं राज्यं हि शक्यमेकेन भारत ॥ १३
असहायवता तात नैवार्थाः केचिदप्युत ।
लब्धुं लब्धा ह्यपि सदा रक्षितुं भरतर्षभ ॥ १४
यस्य भृत्यजनः सर्वो ज्ञानविज्ञानकोविदः ।
हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते ॥ १५
मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः ।
नृपतेर्मतिमाप्स्यन्ते सत्पथज्ञानकोविदाः ॥ १६
अनागतविधातारः कालज्ञानविशारदाः ।
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते ॥ १७
समदुःखसुखा यस्य सहायाः प्रियकारिणः ।
अर्थचिन्तापराः सभ्याः स राज्यफलमश्नुते ॥ १८
यस्य नार्तो जनपदः सन्निकर्षगतः सदा ।
अक्षुद्रः सत्पथालम्बी स राजा राज्यभाग्भवेत् ॥ १९
कोशोऽक्षपटलं यस्य कोशवृद्धिकरैर्नरैः ।
आप्तैस्तुष्टैश्च पुष्टैश्च धार्यते स नृपोत्तमः ॥ २०
कोष्ठागारमसंहार्यैराप्तैः संचयतत्परैः ।
पात्रभूतैरलुब्धैश्च पाल्यमानं गुणी भवेत् ॥ २१
व्यवहारश्च नगरे यस्य धर्मफलोदयः ।
दृश्यते शङ्खलिखितः स धर्मफलभाङ् नृपः ॥ २२

---

अयं निन्दारूपः ॥ २ ॥ हिन अनिन्द्यम् । आयत्यां उत्तरकाले । तदात्वे वर्तमानाकले ॥ ३ ॥ मित्रसुहृदौ प्रत्युपकारमपेक्ष्यानपेक्ष्य चोपकर्तारौ तद्वान् । समुपेतः शौर्यादिनेति शेषः ॥ ५ ॥ भृत्यबलप्रायैरर्थैर्धनादिभिः ॥ ७ ॥ लब्धुं लब्धाश्च रक्षितुं शक्या इति शेषः ॥ १४ ॥ असंहार्याः उत्कोचादिना अभेद्याः ॥ १६ ॥ कोष्ठागारं धान्यादिसामग्रीगृहम् । गुणीभवेत् बहुगुणिभावं गच्छेत् ॥ २१ ॥ व्यवहारः अर्थिप्रत्यर्थिनोर्विवादे निर्णयः । शङ्खलिखित इति । यथा फलमात्रस्तेने शङ्खेन लिखितस्य हस्तच्छेदो राजानं प्रतिषेधयित्वा कारितस्तद्वदित्यर्थः ॥ २२ ॥ पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

संगृहीतमनुष्यश्च यो राजा राजधर्मवित् । षड्भागं परिगृह्णाति स धर्मफलमश्नुते ॥ २३

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

---

## षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

केनचिन्मुनिवरेण द्वीपिभये सति द्वीपित्वं प्रापितस्य स्वीयशुनःपुनर्व्याघ्राद्भये सति व्याघ्रीकरणम् ॥ १ ॥

'युधिष्ठिर उवाच ।
न सन्ति कुलजा यत्र सहायाः पार्थिवस्य तु ।
अकुलीनाश्च कर्तव्या न वा भरतसत्तम ॥' १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निदर्शनं परं लोके सज्जनाचरितं सदा ॥ २
अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने ।
जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः ॥ ३
वने महति कस्मिंश्चिदमनुष्यनिषेविते ।
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ॥ ४
दीक्षादमपरिश्रान्तः स्वाध्यायपरमः शुचिः ।
उपवासविशुद्धात्मा सततं सत्पथे स्थितः ॥ ५
तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः ।
सर्वे सत्त्वाः समीपस्था भवन्ति वनचारिणः ॥ ६
सिंहा व्याघ्राः सशरभा मत्ताश्चैव महागजाः ।
द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ॥ ७
ते सुखप्रश्नदाः सर्वे भवन्ति क्षतजाशनाः ।
तस्यर्षेः शिष्यवच्चैव चित्तज्ञाः प्रियकारिणः ॥ ८
उक्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथासुखम् ।
ग्राम्यस्त्वेकः पशुस्तत्र नाजहात्स महामुनिम् ॥ ९
भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः ।
फलमूलोत्तराहारः शान्तः शिष्टाकृतिर्यथा ॥ १०
तस्यर्षेरुपविष्टस्य पादमूले महामतेः ।
मनुष्यवद्गतो भावं स्नेहबद्धोऽभवद्भृशम् ॥ ११
ततोऽभ्ययान्महारौद्रो द्वीपी क्षतजभोजनः ।
श्वार्थमत्यर्थमुद्दुष्टः क्रूरः कालइवान्तकः ॥ १२
लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः ।
व्यादितास्यः क्षुधा भुग्नः प्रार्थयानस्तदामिषम् १३
दृष्ट्वा तं क्रूरमायान्तं जीवितार्थी नराधिप ।
प्रोवाच श्वा मुनिं तत्र तच्छृणुष्व विशांपते ॥ १४
श्वशत्रुर्भगवन्नेष द्वीपी मां हन्तुमिच्छति ।
त्वत्प्रसादाद्भयं न स्यादस्मान्मम महामुने ।
[तथा कुरु महाबाहो सर्वज्ञस्त्वं न संशयः ॥ १५
स मुनिस्तस्य विज्ञाय भावज्ञो भयकारणम् ।
रुतज्ञः सर्वसत्वानां तमैश्वर्यसमन्वितः ॥] १६
मुनिरुवाच ।
न भयं द्वीपिनः कार्यं मृत्युतस्ते कथंचन ।
एष श्वरूपरहितो द्वीपी भवसि पुत्रक ॥ १७
ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः ।
चित्राङ्गो विस्फुरद्दंष्ट्रो वने वसति निर्भयः ॥ १८
तं दृष्ट्वा संमुखे द्वीपी आत्मनः सदृशं पशुम् ।
अविरुद्धस्ततस्तस्य क्षणेन समपद्यत ॥ १९
ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्वितः ।
द्वीपिनं लेलिहन्वक्त्रं व्याघ्रो रुधिरलालसः ॥ २०
व्याघ्रं दृष्ट्वा क्षुधा भुग्नं दंष्ट्रिणं वनचारिणम् ।
द्वीपी जीवितरक्षार्थमृषिं शरणमेयिवान् ॥ २१
ततः संवासजं स्नेहमृषिणा कुर्वता तदा ।
स द्वीपी व्याघ्रतां नीतो रिपुभ्यो बलवत्तरः ॥ २२
ततोऽदृष्ट्वा स शार्दूलो नाभ्यघ्नत्तं विशांपते ।

---

अत्र उत्तमाधममध्यमस्थानेषु क्रमात् तएव योज्या नतु उच्चस्थाने नीचो नियोज्य इत्यस्मिन्नर्थे ॥ २ ॥ अस्यैव वक्ष्यमाणस्य ॥ ३ ॥ सत्त्वाः प्राणिनः ॥ ६ ॥ सुखप्रश्नदाः सुखिनः स्थ इति प्रश्नस्योत्तरं सुखिनः स्मः इति तत्प्रदा इत्यर्थः ॥ ८ ॥

भावं चित्तम् ॥ ११ ॥ सुधामत्तः इति ङ. थ. पाठः ॥ १३ ॥ द्वीपिनो द्वीपिरूपान्मृत्युतः ॥ १७ ॥ क्षुधाभुग्नं पीडितम् ॥ २१ ॥ षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

स तु श्वा व्याघ्रतां प्राप्य बलवान्पिशिताशनः ॥२३
न मूलफलभोगेषु स्पृहामप्यकरोत्तदा ।
यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः ।
तथैव स महाराज व्याघ्रः समभवत्तदा ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

मुनिवरेण व्याघ्रीकृतस्य स्वीयशुनो गजाद्भये सति गजत्वप्रापणम् ॥ १ ॥ पुनः सिंहाद्भये सिंहीकृतस्य तस्यैव शरभाद्भये शरभीकरणम् ॥ २ ॥ दुष्टभावेनात्मजिघांसोस्तस्य पुनः श्वभावप्रापणम् ॥ ३ ॥

भीष्म उवाच ।
व्याघ्रश्चोटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः ।
नागश्चागात्तमुद्देशं मत्तो मेघ इवोत्थितः ॥ १
प्रभिन्नकरटः प्रांशुः पद्मी विततकुम्भकः ।
सुविषाणो महाकायो मेघगम्भीरनिःस्वनः ॥ २
तं दृष्ट्वा कुञ्जरं मत्तमायान्तं बलगर्वितम् ।
व्याघ्रो हस्तिभयात्त्रस्तस्तमृषिं शरणं ययौ ॥ ३
ततोऽनयत्कुञ्जरत्वं व्याघ्रं तमृषिसत्तमः ।
महामेघोपमं दृष्ट्वा स भीतो ह्यभवद्गजः ॥ ४
ततः कमलषण्डानि सल्लकीगहनानि च ।
व्यचरत्स मुदायुक्तः पद्मरेणुविभूषितः ॥ ५
कदाचिद्रममाणस्य हस्तिनः संमुखं तदा ।
ऋषेस्तस्योटजस्थस्य कालोऽगच्छद्दिवानिशम् ॥ ६
अथाजगाम तं देशं केसरी केसरारुणः ।
गिरिकन्दरजो भीमः सिंहो नागकुलान्तकः ॥ ७
तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयार्दितः ।
ऋषिं शरणमापेदे वेपमानो भयातुरः ॥ ८
स ततः सिंहतां नीतो गजेन्द्रो मुनिना तदा ।
तं च नागणयत्सिंहं तुल्यजातिसमन्वयात् ॥ ९
दृष्ट्वा च सोऽभवत्सिंहो वन्यो हिंसन्नवाग्बलः ।
स चाश्रमेऽवसत्सिंहस्तस्मिन्नेव सुखी वने ॥ १०
न चान्ये क्षुद्रपशवस्तपोवनसमीपतः ।
व्यदृश्यन्त तदा त्रस्ता जीविताकाङ्क्षिणस्तथा ॥ ११
कदाचित्कालयोगेन सर्वप्राणिविहिंसकः ।
बलवान्क्षतजाहारो नानासत्वभयंकरः ॥ १२
अष्टपादूर्ध्वनयनः शरभो वनगोचरः ।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशने ॥ १३
'तं दृष्ट्वा शरभं यान्तं सिंहः परभयान्वितः ।
ऋषिं शरणमापेदे वेपमानः कृताञ्जलिः ॥' १४
तं मुनिः शरभं चक्रे बलोत्कटमरिंदम ।
ततः स शरभो वन्यो मुनेः शरभमग्रतः ।
दृष्ट्वा बलिनमत्युग्रं द्रुतं संप्राद्रवद्वनम् ॥ १५
स एवं शरभस्थाने न्यस्तो वै मुनिना तदा ।
मुनेः पार्श्वगतो नित्यं शरभः सुखमाप्तवान् ॥ १६
ततः शरभसंत्रस्ताः सर्वे मृगगणा वनात् ।
दिशः संप्राद्रवन्राजन्भयाज्जीवितकाङ्क्षिणः ॥ १७
शरभोऽप्यतिसंहृष्टो नित्यं प्राणिवधे रतः ।
फलमूलाशनं कर्तुं नैच्छत्स पिशिताशनः ॥ १८
ततः क्षुद्रसमाचारो बलेन च समन्वितः ।
इयेष तं मुनिं हन्तुमकृतज्ञः कृतान्वयः ॥ १९
'चिन्तयामास च तदा शरभः श्वानपूर्वकः ॥२०
अस्य प्रभावात्संप्राप्तो वाङ्मात्रेणैव केवलम् ।
शरभत्वं सुदुष्प्रापं सर्वभूतभयंकरम् ॥ २१
अन्येऽप्यत्र भयत्रस्ताः सन्ति सत्वा भयार्दिताः ।
मुनिमाश्रित्य जीवन्तो मृगाः पक्षिगणास्तथा ॥२२
तेषामपि कदाचिच्च शरभत्वं प्रयच्छति ।
सर्वसत्वोत्तमं लोके बलं यत्र प्रतिष्ठितम् ॥ २३
पक्षिणामप्ययं दद्यात्कदाचिद्गारुडं बलम् ॥ २४
यावदन्यस्य संप्रीतः कारुण्यं तु समाश्रितः ।
न ददाति बलं तुष्टः सत्वस्यान्यस्य कस्यचित् ॥ २५
तावदेनमहं विप्रं वधिष्यामि च शीघ्रतः ।
स्थातुं मया शक्यमिह मुनिघातान्न संशयः ॥'२६

मृगैस्तृप्तः ॥ १ ॥ समन्वयात्संबन्धात् ॥ ९ ॥ ततो रुधिर- तर्षेण बलिना शरभोऽन्वितः इति झ. पाठः ॥ १९ ॥

ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा ।
विज्ञाय च मुनिः प्राज्ञस्ततः शापं प्रयुक्तवान् ॥ २७
'अहमग्निप्रभो नाम मुनिर्भृगुकुलान्वयः ।
मनसा निर्दहेयं च जगत्संधारयामि च ॥ २८
मम वश्यं जगत्सर्वं देवा यच्च चराचरम् ।
सन्ति देवाश्च ये भीताः स्वधर्मं न त्यजन्ति ये ।
स्वधर्माच्चलितान्सर्वान्वाङ्मात्रेणापि निर्दहे ॥ २९
किमङ्ग त्वं मया नीतः शरभत्वमनामयम् ।
क्रूरः स सर्वभूतेषु हीनश्चाशुचिरेव च ॥' ३०
श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।
व्याघ्रान्नागो मदपटुर्नागः सिंहत्वमागतः ॥ ३१
सिंहस्त्वं बलमापन्नो भूयः शरभतां गतः ।
मया स्नेहपरीतेन विसृष्टो न कुलान्वयः ॥ ३२
यस्मादेवमपापं मां पाप हिंसितुमिच्छसि ।
तस्मात्स्वयोनिमापन्नः पुनः श्वानो भविष्यसि॥३३
ततो मुनिजनद्वेष्टा दुष्टात्मा प्राकृतोऽबुधः ।
ऋषिणा शरभः शप्तस्तद्रूपं पुनराप्तवान् ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

भीष्मेण युधिष्ठिरंप्रति सचिवादिगुणवर्णनम् ॥ १ ॥

भीष्म उवाच ।
स श्वा प्रकृतिमापन्नः परं दैन्यमुपागमत् ।
ऋषिणा हुंकृतः पापस्तपोवनबहिष्कृतः ॥ १
एवं राज्ञा मतिमता विदित्वा शीलशौचताम् ।
आर्जवं प्रकृतिं सत्त्वं श्रुतं वृत्तं कुलं दमम् ॥ २
अनुक्रोशं बलं वीर्यं प्रभावं प्रशमं क्षमाम् ।
भृत्या ये मन्त्रिणो योग्यास्तत्र स्थाप्याः सुरक्षिताः ३
नापरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति ।
अकुलीननराकीर्णो न राजा सुखमेधते ॥ ४
कुलजः प्राकृतो राजंस्तत्कुलीनतया सदा ।
न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसि ॥५
अकुलीनस्तु पुरुषः प्राकृतः साधुसंक्षयात् ।
दुर्लभैश्वर्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ॥ ६
'काकः श्वानोऽकुलीनश्च विडालः सर्प एव च ।
अकुलीना च या नारी तुल्यास्ते परिकीर्तिताः ॥ ७
लोकपालाः सदोद्विग्नाः पश्यन्त्यकुलजान्यथा ।
नारीं वा पुरुषं वाऽथ शीलं तत्रापि कारणम् ॥ ८
दुष्कुलीना च या स्त्री स्याद्दुष्कुलीनश्च यः पुमान् ।
अहिंसाशीलसंयोगाद्धर्मश्चाऽऽकुलतां व्रजेत् ॥ ९
धर्मं प्रति महाराज श्लोकानाह बृहस्पतिः ।
शृणु सर्वान्महीपाल हृदि तांश्च करिष्यसि ॥ १०
असितं सितकर्माणं यथा दान्तं तपस्विनम् ।
वृत्तस्थमपि चण्डालं तं देवा ब्राह्मणं विदुः ॥११
यदि घातयते कश्चित्पापसत्वं प्रजाहितः ।
सर्वसत्वहितार्थाय न तेनासौ विहिंसकः ॥ १२
द्वीपिनं शरभं सिंहं व्याघ्रं कुञ्जरमेव च ।
महिषं च वराहं च सूकरं श्वानपन्नगान् ॥ १३
गोब्राह्मणहितार्थाय बालस्त्रीरक्षणाय च ।
वृद्धातुरपरित्राणे यो हिनस्ति स धर्मवित् ॥ १४
ब्राह्मणः पापकर्मा च म्लेच्छो वा धार्मिकः शुचिः ।
श्रेयांस्तत्र भवेन्म्लेच्छो ब्राह्मणः पापकृत्तमः ॥१५
दुष्कुलीनः कुलीनो वा यः कश्चिच्छीलवान्नरः ।
प्रकृतिं तस्य विज्ञाय स्थिरां वा यदि वाऽस्थिराम् १६
शीलं वाऽनुत्तमं कर्म कुर्याद्राजा समाहितः ।

मदपटुः प्रवहन्मदः ॥ ३१ ॥ विसृष्टो विविधेन रूपेण त्वं सृष्टः । न तु स्व कुलान्वयः । तेन तेन कुलेनान्वयः संबन्धो यस्य स कुलान्वयस्तादृशस्त्वं न भवसि ॥ ३२ ॥ श्वैव त्व हि भविष्यसीति झ. पाठः ॥ ३३ ॥ सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

अकुलीनस्तु निन्दामात्रेण शत्रुतां व्रजेत् । साधुसंश्रयादिति झ. पाठः ॥ ६ ॥

नियुञ्जीत महीपालो दुर्वृत्तं पापकर्मसु ॥' १७
कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानकोविदम् ।
सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ॥ १८
कृतज्ञं बलवन्तं च क्षान्तं दान्तं जितेन्द्रियम् ।
अलुब्धं लब्धसंतुष्टं स्वामिमित्रबुभूषकम् ॥ १९
सचिवं देशकालज्ञं सर्वसंग्रहणे रतम् ।
संस्कृतं युक्तवचनं हितैषिणमतन्द्रितम् ॥ २०
युक्ताचारं स्वविषये संधिविग्रहकोविदम् ।
शस्तं त्रिवर्गवेत्तारं पौरजानपदप्रियम् ॥ २१
सेनाव्यूहनतत्त्वज्ञं बलहर्षणकोविदम् ।
इङ्गिताकारतत्त्वज्ञं यात्रासेनाविशारदम् ॥ २२
हस्तिशिक्षाश्वतत्त्वज्ञमहंकारविवर्जितम् ।
प्रगल्भं दक्षिणं दान्तं बलिनं युक्तमन्त्रिणम् ॥ २३
चौक्षं चौक्षजनाकीर्णं सुवेषं सुखदर्शनम् ।
नायकं नीतिकुशलं गुणैः षड्भिः समन्वितम् ॥२४
अस्तब्धं प्रश्रितं श्लक्ष्णं मृदुवादिनमेव च ।
धीरं शूरं महर्द्धिं च देशकालोपपादकम् ॥ २५
सचिवं यः प्रकुरुते न चैनमवमन्यते ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ २६
एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः ।
एष्टव्यो धर्मपरमः प्रजापालनतत्परः ॥ २७
धीरो मर्षी शुचिः शीघ्रः काले पुरुषकारवित् ।
शुश्रूषुः श्रुतवाञ्श्रोता ऊहापोहविशारदः ॥ २८
मेधावी धारणायुक्तो यथान्यायोपपादकः ।
दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्यये ॥२९
नातिच्छेत्ता स्वयंकारी श्रद्धालुः सुखदर्शनः ।
आर्तहस्तप्रदो नित्यमाप्तामात्यो नये रतः ॥ ३०
नाहंवादी ननिर्द्वन्द्वो नयत्किंचनकारकः ।
कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः ॥ ३१
संगृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा ।
त्राता भृत्यजनापेक्षी न क्रोधी सुमहामनाः ॥३२
युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासनः ।
चारनेत्रः प्रजावेक्षी धर्मार्थकुशलः सदा ॥ ३३
राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् ।
योधाश्चैव मनुष्येन्द्र सर्वैर्गुणगणैर्वृताः ॥ ३४
अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणे ।
न विमानयितव्यास्ते राज्ञा वृद्धिमभीप्सता ॥३५
योधाः समरशौण्डीराः कृतज्ञाः शास्त्रकोविदाः ।
धर्मशास्त्रसमायुक्ताः पदातिजनसंवृताः ॥ ३६
अर्थमानविवृद्धाश्च रथचर्याविशारदाः ।
इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही ॥ ३७
'ज्ञातीनामनवज्ञानं भृत्येष्वशठता तथा ।
नैपुणं चार्थचर्यासु यस्यैते तस्य सा मही ॥ ३८
आलस्यं चैव निद्रा च व्यसनान्यतिहास्यता ।
यस्यैतानि न विद्यन्ते तस्यैव सुचिरं मही ॥ ३९
वृद्धसेवी महोत्साहो वर्णानां चैव रक्षिता ।
धर्मचर्याः सदा यस्य तस्येयं सुचिरं मही ॥ ४०
नीतिवर्त्मानुसरणं नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं तस्येयं सुचिरं मही ॥ ४१
उत्थानं चैव दैवं च तयोर्नानात्वमेव च ॥
मनुना वर्णितं पूर्वं वक्ष्ये शृणु तदेव हि ॥ ४२
उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
नयानयविधानज्ञः सदा भव कुरूद्वह ॥ ४३
दुर्हृदां छिद्रदर्शी यः सुहृदामुपकारवान् ।
विशेषविच्च भृत्यानां स राज्यफलमश्नुते ॥' ४४
सर्वसंग्रहणे युक्तो नृपो भवति यः सदा ।
उत्थानशीलो मन्त्राढ्यः स राजा राजसत्तमः ॥४५
शक्या चाश्वसहस्रेण वीरारोहेण भारत ।
संगृहीतमनुष्येण कृत्स्ना जेतुं वसुंधरा ॥ ४६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

स्वामिनो मित्राणां बुभूषकं ऐश्वर्यलिप्सुम् ॥ १९ ॥ सर्वसंग्रहणे प्राणिमात्ररञ्जने ॥ २० ॥ चौक्षं शुद्धम् ॥ २४ ॥ मर्षी क्षमी ॥ २८ ॥ विपर्ययेऽक्षमावति अपकारिणि क्षमावान् ॥ २९ ॥ ननिर्द्वन्द्वो ननिष्परिग्रहः ॥ ३१ ॥ चारनेत्रः परापेक्षी इति ट. ड. थ. पाठः ॥ ३३ ॥ अभया गजपृष्ठस्थाः इति झ. पाठः ॥ ३७ ॥ अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

भीष्मेण युधिष्ठिरंप्रति भृत्यानां स्वस्वयोग्यतानुसारेणाधिकारे स्थापनादेर्भृत्यलक्षणादीनां च कथनम् ॥ १ ॥

भीष्म उवाच ।
एवं गुणयुतान्भृत्यान्स्वेस्वे स्थाने नराधिपः ।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ १
न वा स्वस्थानमुत्क्रम्य प्रमाणमपि सत्कृतम् ।
आरोप्य चापि स्वस्थानमुत्क्रम्यान्यत्प्रपद्यते ॥ २
स्वजातिगुणसंपन्नाः स्वेषु धर्मेष्ववस्थिताः ।
प्रकर्तव्या ह्यमात्यास्तु नास्थाने प्रक्रिया क्षमा ॥ ३
अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति ।
स भृत्यगुणसंपन्नं राजा फलमुपाश्नुते ॥ ४
शरभः शरभस्थाने सिंहः सिंह इवोत्थितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ५
कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।
प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ ६
यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः ।
भृत्यान्स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥ ७
न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः ।
नाकुलीना जनाः पार्श्वे स्थाप्या राज्ञा गुणैषिणा ॥ ८
साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ॥ ९
उद्भूतास्तत्पराः शान्ताश्चौक्षाः प्रकृतिजाः शुभाः ।
स्वेस्वे स्थानेऽनुपाकृष्टास्ते स्यू राज्ञो बहिश्चराः ॥ १०
सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत् ।
असिंहः सिंहसहितः सिंहवल्लभते फलम् ॥ ११
यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ॥ १२
एवं मैतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनैः सह शक्येत कृत्स्ना जेतुं वसुंधरा ॥ १३
नावैद्यो नानृजुः पार्श्वे नाप्राज्ञो ना महायशाः ।
संग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर ॥ १४
बाणवद्विसृता यान्ति स्वामिकार्यपरा नराः ।
ये भृत्याः पार्थिवहितास्तेषु सान्त्वं सदा चरेत् ॥ १५
कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः ।
कोशमूला हि राजानः कोशवृद्धिकरो भवेत् ॥ १६
कोष्ठागारं च ते नित्यं स्फीतं धान्यैः सुसंचितैः ।
सदा त्वं सत्सु संन्यस्तधनधान्यपरो भव ॥ १७
नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः ।
वाजिनां च प्रयोगेषु वैशारद्यमिहेष्यते ॥ १८
ज्ञातिबन्धुजनावेक्षी मित्रसंबन्धिसत्कृतः ।
पौरकार्यहितान्वेक्षी भव कौरवनन्दन ॥ १९
एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मया ।
श्वाते निदर्शनं तात किं भूयः श्रोतुमिच्छसि ॥ २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

भीष्मेण युधिष्ठिरंप्रति प्रजापालनप्रकारादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत ।
पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः ॥ १
तदेव विस्तरेणोक्तं पूर्ववृत्तं सतां मतम् ।
प्रणेयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥ २
भीष्म उवाच ।

एवं नीचाननीचे नैव योजयेत् ॥ १ ॥ अबुद्धिरिति च्छेदः ॥ ७ ॥ बहिश्चराः प्राणा इवेति शेषः ॥ १० ॥ विसृताः अपरावर्तिनः ॥ १५ ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

राजधर्माणां राजधर्मविदां मतं यद्विस्तरेणोक्तं तदेव प्रणेयं प्रकर्षेण नेतुं बोद्धुं शक्यं संक्षिप्तमित्यर्थः । प्रणयं राजधर्माणा-

रक्षणं सर्वभूतानामिति क्षात्रं परं मतम् ।
तद्यथा रक्षणं कुर्यात्तथा शृणु महीपते ॥ ३
यथा बर्हाणि चित्राणि बिभर्ति भुजगाशनः ।
तथा बहुविधं राजा रूपं कुर्वीत धर्मवित् ॥ ४
तैक्ष्ण्यं जिह्मत्वमादानं सत्यमार्जवमेव च ।
मध्यस्थः सत्वमातिष्ठंस्तथा वै सुखमृच्छति ॥ ५
यस्मिन्नर्थे यथैव स्यात्तद्वर्णं रूपमादिशेत् ।
बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ॥६
नित्यं रक्षितमन्त्रः स्याद्यथा मूकः शरच्छिखी ।
श्लक्ष्णाक्षरगतः श्रीमान्भवेच्छास्त्रविशारदः ॥ ७
आयव्ययेषु युक्तः स्याज्जलप्रस्रवणेष्विव ।
शैलाद्वर्षोदकानीव द्विजान्सिद्धान्समाश्रयेत् ।
आत्मार्थं हि सदा राजा कुर्याद्धर्मध्वजोत्तमम् ॥८
नित्यमुद्यतदण्डः स्यादाचारे चाप्रमादवान् ।
लोके चायव्ययौ दृष्ट्वा वृक्षाद्वृक्षमिवाव्रजेत् ॥ ९
आज्ञावान्स्यात्स्वयूथ्येषु भौमानि चरणैः किरन् ।
जातपक्षः परिस्पन्देत्प्रेक्षेद्वैकल्यमात्मनः ॥ १०
दोषान्विवृणुयाच्छत्रोः परपक्षांश्च सूदयेत् ।
काननेष्विव पुष्पाणि बहिरर्थान्समाचरेत् ॥ ११
उच्छ्रितानाश्रयेत्स्फीतान्नरेन्द्रानचलोपमान् ।
श्रयेच्छायामिव ज्ञातिं गुप्तं शरणमाश्रयेत् ॥ १२
प्रावृषीवासितग्रीवो माद्येत निशि निर्जने ।
मायूरेण गुणेनैव स्त्रीभिरारक्षितश्चरेत् ॥ १३
न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ।
चारभूमिष्विव ततान्पाशांश्च परिवर्जयेत् ॥ १४
प्रणयेद्वाऽपि तां भूमिं प्रणश्येद्गहणे पुनः ।
'एवं मयूरधर्मेण वर्तयन्सततं नरः ।'
हन्यात्क्रुद्धानतिविषांस्ताञ्जिह्मगतयोऽहिताः ॥१५
नामूयेच्चावगर्ह्याणि सन्निवासान्निवासयेत् ।
सदा बर्हिसमं कामं प्रशस्तं कृतमाचरेत् ।
सर्वतश्चाददेत्प्रज्ञां पतङ्गं गहनेष्विव ॥ १६
एवं मयूरवद्राजा स्वराज्यं परिपालयेत् ।
आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः ॥ १७
आत्मसंयमनं बुद्ध्या परबुद्ध्या विचारणम् ।
बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् ॥ १८
परं विश्वासयेत्साम्ना स्वशक्तिं चोपलक्षयेत् ।
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत् ॥१९
सान्त्वयोगमतिः प्राज्ञः कार्याकार्यप्रयोजकः ।
निगूढबुद्धेर्धीरस्य वक्तव्ये वक्ष्यते तथा ॥ २०
संनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या बृहस्पतिः ।
स्वभावमेष्यते तप्तं कृष्णायसमिवोदके ॥ २१
अनुयुञ्जीत सत्यानि सर्वाण्येव महीपतिः ।

---

मिति थ. द. पाठः ॥ २ ॥ बर्हाणि पक्षान् । भुजगाशनो मयूरः ॥ ४ ॥ तैक्ष्ण्यं क्रूरत्वम् । जिह्मत्वं कौटिल्यम् ॥ ५ ॥ यस्मिन्नर्थे दण्डेऽनुग्रहे वा । रूपमादिशेद्दर्शयेत् ॥६॥ शरच्छिखी शरत्कालमयूरः ॥ ७ ॥ युक्तोऽवहितः स्यात् । वर्षोदकानि वृष्ट्या जनितानि महानदीजलानि । अर्थकामः शिखां राजा कुर्याद्धर्मध्वजोपमाम् इति झ. पाठः । तत्र शिखां योग्यलिङ्गं क्रूरत्वादिकं कुर्यात् प्रकाशयेदित्यर्थः ॥ ८ ॥ लोके चायव्ययौ दृष्ट्वा बृहद्वृक्षमिवास्रवदिति झ. पाठः । तत्र वृहन्तो वृक्षा यत्र तद्बृहद्वृक्षं तालवनम् । आस्रवत् रसं प्रस्रवत् । यथा रसग्राही प्रदेशविशेषे एव प्रहृत्य रसं गृह्णाति नतु कृत्स्नवृक्षच्छेदेनेक्षुकाण्डादिवत्ततो रसं जिघृक्षति । एवं प्रजानामायव्ययौ ज्ञात्वा ता जीवयंस्ताभ्यो धनरसमादद्यादित्यर्थः ॥ ९ ॥ भौमानि परेषां सस्यानि चरणैरश्वादिगमनैः किरन् नाशयन्नित्यर्थः ॥ १० ॥ असितग्रीवो मयूरः ॥ १३ ॥ चारैर्दर्शितासु भूमिषु धात्रीसौविदल्लसूपकारादिषु परैर्भेदितेषु ततान्विषादीन्पाशान् ॥ १४ ॥ पाशज्ञाने सति तां कपटभूमिं प्रतिपद्यात्मानं प्रणयेत्प्रापयेत्तदा नश्येदेव । वाशब्द एवार्थे ॥ १५ ॥ सन्निवासान्दृढमूलान्पक्षान्नमात्यादीन् शूरांश्च वासयेत्स्थापयेत् । बर्हिसमं मयूरतुल्यं कामं यथेष्टं प्रशस्तं कृत प्रशस्तां क्रियां पक्षाणां विस्फारणमाचरेत् । पतङ्गं शलभसमूहो यथा गहनेषु पतति गहनं च निष्पत्रं करोति एवं संभूय शत्रुराष्ट्रे पतितव्यमित्यर्थः ॥ १६ ॥ बुद्ध्या आत्मनः संयमनं इत्थमेव कर्तुं युक्तं नियमं कुर्यात् । परबुद्ध्या च तत्रैवार्थे संवादितया तस्यार्थस्य विचारणं दृढतरो निश्चयः कार्यः । बुद्ध्या शास्त्रोत्थधिया आत्मगुणस्य पूर्वोक्तनिश्चयहेतोः प्राप्तिर्भवति । एतदेव शास्त्रस्य निदर्शनं प्रयोजनं यत्कार्यक्षोदक्षमता बुद्धेरित्यर्थः ॥ १८ ॥ आत्मनः स्वस्य परिमर्शेन सर्वतोऽतीतानागतविचारेण बुद्धिं कार्यनिश्चयं बुद्ध्या ऊहापोहकौशलरूपया मेधया विचारयेत्साधकबाधकभूमौ संचारयेत् ॥ १९ ॥ प्राज्ञो बुद्ध्या बृहस्पतिसमोऽपि सन् यदि निकृष्टां कथां निर्बुद्धित्ववादं प्राप्नुयात्तर्हि सद्यएव युक्त्या स्वभावं स्वास्थ्यं एष्यते । उदके प्रक्षिप्त तप्तायसं शैत्यमिव ॥ २१ ॥

आगमैरुपदिष्टानि स्वस्य चैव परस्य च ॥ २२
मृदुं क्रूरं तथा प्राज्ञं शूरं चार्थविधानवित् ।
स्वकर्मणि नियुञ्जीत ये चान्ये वचनाधिकाः ॥ २३
अप्यदृष्टानि युक्तानि स्वानुरूपेषु कर्मसु ।
सर्वांस्तानुवर्तेत स्वरांस्तन्त्रीरिवायताः ॥ २४
धर्माणामविरोधेन सर्वेषां प्रियमाचरेत् ।
ममायमिति राजा यः स पर्वत इवाचलः ॥ २५
व्यवहारं समाधाय सूर्यो रश्मीनिवायतान् ।
धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये ॥ २६
कुलप्रकृतिदेशानां धर्मज्ञान्मृदुभाषिणः ।
मध्ये वयसि निर्दोषान्हिते युक्ताञ्जितक्लमान् २७
अलुब्धाञ्शिक्षितान्दान्तान्धर्मेषु परिनिष्ठितान् ।
स्थापयेत्सर्वकार्येषु राजा सर्वार्थरक्षिणः ॥ २८
एतेन च प्रकारेण कृत्यानामागतिं गतिम् ।
युक्त्या समनुतिष्ठेत तुष्टश्चारैः पुरस्कृतः ॥ २९
अमोघक्रोधहर्षस्य स्वयं कृत्याऽनुदर्शिनः ।
आत्मप्रत्ययकोशस्य वसुदैव वसुंधरा ॥ ३०
व्यक्तश्चानुग्रहो यस्य यथोक्तश्चापि निग्रहः ।
गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्मवित् ॥ ३१
नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य इवातपन् ।
चारांश्चानुचरान्विद्यात्तथा बुद्ध्या स्वयं चरेत् ॥ ३२
कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् ।
अहन्यहनि संदुह्यान्महीं गामिव बुद्धिमान् ॥ ३३
यथाक्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत संचयम् ॥ ३४
यद्धि गुप्तावशिष्टं स्यात्तद्वित्तं धर्मकामयोः ।
संचयान्न विसर्गी स्याद्राजा शास्त्रविदात्मवान् ३५
नार्थमल्पं परिभवेन्नावमन्येत शात्रवान् ।
बुद्ध्याऽनुबुद्ध्या चात्मानं न चाबुद्धेषु विश्वसेत् ३६
धृतिर्दाक्ष्यं संयमो बुद्धिरात्मा
धैर्यं शौर्यं देशकालाप्रमादः ।
अल्पस्य वा महतो वा विवृद्धौ
धनस्यैतान्यष्ट समिंधनानि ॥ ३७
अग्निस्तोको वर्धतेऽप्याज्यसिक्तो
बीजं चैकं बहुसहस्रमेति ।
क्षयोदयौ विपुलौ सन्नियम्यौ
तस्मादल्पं नावमन्येत वित्तम् ॥ ३८
बालोऽप्यबालः स्थविरो रिपुर्यः
सदा प्रमत्तं पुरुषं निहन्यात् ।
कालेनान्यस्तस्य मूलं हरेत
कालज्ञानं पार्थिवानां वरिष्ठम् ॥ ३९
हरेत्कीर्तिं धर्ममस्योपरुन्ध्या-
दर्थे विघ्नं वीर्यमस्योपहन्यात् ।
रिपुर्द्वेष्टा दुर्बलो वा बली वा
तस्माच्छत्रोर्नैव बिभ्येद्यथात्मा ॥ ४०
क्षयं शत्रोः संचयं पालनं वा
उभावर्थौ सहितौ धर्मकामौ ।
ततश्चान्यन्मतिमान्संदधीत
तस्माद्राजा बुद्धिमन्तं श्रयेत ॥ ४१
बुद्धिर्दीप्ता बलवन्तं हिनस्ति
बलं बुद्ध्या पाल्यते वर्धमानम् ।
शत्रुर्बुद्ध्या सीदते पीड्यमानो
बुद्धिपूर्वं कर्म यत्तत्प्रशस्तम् ॥ ४२
सर्वान्कामान्कामयानो हि धीरः
सत्वेनाल्पेनाप्नुते हीनदोषः ।
यश्चात्मानं प्रार्थयतेऽर्थ्यमानैः
श्रेयःपात्रं पूरयते च नाल्पम् ॥ ४३
तस्माद्राजा प्रगृहीतः प्रजासु
मूलं लक्ष्म्याः सर्वशो ह्याददीत ।
दीर्घं कालं ह्यपि संपीड्यमानो
व्युष्यात्संपन्नव्यवसायेन शक्त्या ॥ ४४

---

न अर्थं प्रसूचयेत् अर्थवृत्तां न ज्ञापयेत् ॥ ३३ ॥ संचयान्न विसर्गी स्यात् । कोशाद्धनं न दद्यादपितूपर्याहृतमेवेत्यर्थः ॥ ३५ ॥ आत्मा देहः । देशे काले चाऽप्रमाद इत्येकम् ॥ ३७॥ अबालः अहीनः । अन्यः संपन्नः ॥ ३९ ॥ धर्मकामौ बुद्ध्वा संदधीत संधिं वा कुर्यात् । अन्यत् विग्रहादिकं कुर्यात् ॥ ४१ ॥ वर्धमानं क्षीयमाणम् ॥ ४२ ॥ अल्पेनापि सत्वेन बलेन । अर्थ्यमानैर्युक्तम् । आत्मानं प्रार्थयते । लुब्धो दृप्तश्च भवतीत्यर्थः । श्रेयःपात्रं न पूरयते ततः श्रेयोऽपसर्पतीत्यर्थः ॥ ४३ ॥ प्रगृहीतः स्निग्धः । लक्ष्म्याः मूलं अर्थं सर्वशः सर्वाभ्यः संपीड्यमानः संपीडयन् ॥ ४४ ॥

विद्या तपो वा विपुलं धनं वा
सर्वं ह्येतद्व्यवसायेन शक्यम् ।
ब्रह्मायत्तं निवसति देहवत्सु
तस्माद्विद्याद्व्यवसायं प्रभूतम् ॥ ४५
यत्रासते मतिमन्तो मनस्विनः
शक्रो विष्णुर्यत्र सरस्वती च ।
वसन्ति भूतानि च यत्र नित्यं
तस्माद्विद्वान्नावमन्येत देहम् ॥ ४६
लुब्धं हन्यात्संप्रदानाद्धि नित्यं
लुब्धस्तृप्तिं परवित्तस्य नैति ।
सर्वो लुब्धः सर्वगुणोपभोगो
योऽर्थैर्हीनो धर्मकामौ जहाति ॥ ४७
धनं भोगं पुत्रदारं समृद्धिं
सर्वं लुब्धः प्रार्थयते परेषाम् ।
लुब्धे दोषाः संभवन्तीह सर्वे
तस्माद्राजा न प्रगृह्णीत लुब्धम् ॥ ४८
संदर्शनेन पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान्द्विषतां प्राज्ञः सर्वार्थांश्च प्रसूदयेत् ॥ ४९
धर्मान्वितेषु विज्ञाता मन्त्रगुप्तिश्च पाण्डव ।
आप्तो राजन्कुलीनश्च पर्याप्तो राष्ट्रसंग्रहे ॥ ५०
विधिप्रयुक्तान्नरदेवधर्मा-
नुक्तान्समासेन निबोध बुद्ध्या ।
इमान्विदध्यादनुसृत्य यो वै
राजा महीं पालयितुं स शक्तः ॥ ५१
सुनीतिजं यस्य विधानजं सुखं
धर्मप्रणीतं विधिवत्प्रसिद्ध्यति ।
न निन्द्यते तस्य गतिर्महीपते
स विन्दते राज्यसुखं ह्यनुत्तमम् ॥ ५२
धनैर्विशिष्टान्मतिशीलपूजिता-
न्गुणोपपन्नान्युधि दृष्टविक्रमान् ।
गुणेषु युक्तानचिरादिवात्मवां-
स्ततोऽभिसंधाय निहन्ति शात्रवान् ॥ ५३
पश्येदुपायान्विविधेषु कर्मसु
न चानुपायेन मतिं निवेशयेत् ।
श्रियं विशिष्टां विपुलं यशो धनं
न दोषदर्शी पुरुषः समश्नुते ॥ ५४
प्रीतिप्रवृत्तिं विनिवर्तनं च
सुहृत्सु विज्ञाय विचार्य चोभयोः ।
यदेव मित्रं गुरुभारमावहे-
त्तदेव सुस्निग्धमुदाहरेद्बुधः ॥ ५५
एतान्मयोक्तांश्चर राजधर्मा-
न्नृणां च गुप्तौ मतिमादधत्स्व ।
अवाप्स्यसे पुण्यफलं सुखेन
सर्वो हि लोको नृप धर्ममूलः ॥ ५६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

## एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

भीष्मेण युधिष्ठिरंप्रति दण्डस्वरूपादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अयं पितामहेनोक्तो राजधर्मः सनातनः ।
कीदृशश्च महादण्डो दण्डे सर्वं प्रतिष्ठितम् ॥ १
देवतानामृषीणां च पितॄणां च महात्मनाम् ।
यक्षरक्षःपिशाचानां मर्त्यानां च विशेषतः ॥ २
सर्वेषां प्राणिनां लोके तिर्यक्ष्वपि निवासिनाम् ।
सर्वस्यापि महातेजा दण्डः श्रेयानिति प्रभो ॥ ३
इत्येतदुक्तं भवता दण्डे वै सचराचरम् ।

व्यवसायेन उद्योगेन विद्यात् लभेत् ॥ ४५ ॥ अनुद्योगेन जन्म न नाशयेदित्याह यत्रेति ॥४६॥ समृद्धिं च प्राप्यापीति शेषः । धनं उत्कोचरूपम् ॥४८॥ विधानजं दैवप्राप्तम् ॥ ५२ ॥ गुणोपपन्नाञ्शौर्यादियुक्तान् । गुणेषु संधिविग्रहादिषु आत्मवानप्रमत्तः ॥ ५३ ॥ दोषदर्शी निर्दोषेष्वपीति शेषः ॥ ५४ ॥ उदाहरेत्प्रशंसेत् ॥ ५५ ॥ चरानुतिष्ठ । आदधत्स्व आधत्स्व । दध धारणे इत्यस्य रूपम् ॥ ५६ ॥ विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

पश्यतां लोक आयत्तं ससुरासुरमानुषम् ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥ ४
को दण्डः कीदृशो दण्डः किंरूपः किंपरायणः ।
किमात्मकः कथंभूतः कतिमूर्तिः कथं प्रभुः ॥ ५
जागर्ति च कथं दण्डः प्रजासु विहितात्मकः ।
कश्च पूर्वापरमिदं जागर्ति प्रतिपालयन् ॥ ६
कश्च विज्ञायते पूर्वः को वरो दण्डसंज्ञितः ।
किंसंस्थश्चाभवद्दण्डः का चास्य गतिरिष्यते ॥ ७
भीष्म उवाच ।
शृणु कौरव्य यो दण्डो व्यवहारो यथा च सः ।
यस्मिन्हि सर्वमायत्तं स धर्म इति केवलः ॥ ८
धर्मस्यार्थे महाराज व्यवहार इतीष्यते ।
तस्य लोपः कथं न स्याल्लोकेष्विह महात्मनः ॥ ९
इत्यर्थं व्यवहारस्य व्यवहारत्वमिष्यते ।
अपि चैतत्पुरा राजन्मनुना प्रोक्तमादितः ॥ १०
सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना ।
प्रजा रक्षति यः सम्यग्धर्म एव स केवलः ॥ ११
यथोक्तमेतद्वचनं प्रागेव मनुना पुरा ।
यन्मयोक्तं वसिष्ठेन ब्रह्मणो वचनं महत् ॥ १२
प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः ।
व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते ॥ १३
दण्डात्त्रिवर्गः सततं सुप्रणीतात्प्रवर्तते ।
दैवं हि परमो दण्डो रूपतोऽग्निरिवोत्थितः ॥ १४
नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ।
अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् ॥ १५
जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः ।
एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुरासदः ॥ १६
असिर्धनुर्गदा शक्तिस्त्रिशूलं मुद्गरः शरः ।
मुसलं परशुश्चक्रं प्रासदण्डर्ष्टितोमराः ॥ १७
सर्वप्रहरणीयानि यानि यानीह कानिचित् ।
दण्ड एव स सर्वात्मा लोके चरति मूर्तिमान् ॥ १८
भिन्दंश्छिन्दन्रुजन्कृन्तन्दारयन्पाटयंस्तथा ।
घातयन्नभिधावंश्च दण्ड एव चरत्युत ॥ १९
असिर्विशसनो धर्मस्तीक्ष्णवर्मा दुरासदः ।
श्रीगर्भो विजयः शास्ता व्यवहारः प्रजागरः ॥ २०
शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्रवचनं परम् ।
धर्मपालोऽक्षरो गोपः सत्यगो नित्यगो गृहः ॥ २१
असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवंकरः ।
नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर ॥ २२
दण्डो हि भगवान्विष्णुर्यज्ञो नारायणः प्रभुः ।
शश्वद्रूपं महद्बिभ्रन्महान्पुरुष उच्यते ॥ २३
तथोक्ता ब्रह्मकन्येति लक्ष्मीर्नीतिः सरस्वती ।
दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः ॥ २४
अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले ।
दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ ॥ २५
कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः ।
अप्रमादः प्रमादश्च हर्षशोकौ शमो दमः ॥ २६
दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये ।
हिंसाहिंसे तपो यज्ञः संयमोऽथ विषामृते ॥ २७
अन्तश्चादिश्च मध्यं च कृतानां च प्रपञ्चनम् ।
मदः प्रमोदो दर्पश्च दम्भो धैर्यं नयानयौ ॥ २८
अशक्तिः शक्तिरित्येवं मानस्तम्भौ व्ययाव्ययौ ।
विनयश्च विसर्गश्च कालाकालौ च कौरव ॥ २९
अनृतं चाज्ञता सत्यं श्रद्धाश्रद्धे तथैव च ।
क्लीबता व्यवसायश्च लाभालाभौ जयाजयौ ॥ ३०
तीक्ष्णता मृदुतात्युग्रमागमानागमौ तथा ।
विरोधश्चाविरोधश्च कार्याकार्ये बलाबले ॥ ३१
असूया चानसूया च धर्माधर्मौ तथैव च ।

---

प्रजारक्षकत्वाद्व्यवहार एव धर्मपदवाच्योऽपीत्याह सुप्रणीतेनेति ॥ ११ ॥ ब्रह्मणएव वचनं मनुमुखाच्छ्रुतमित्यर्थः ॥ १२ ॥ दण्डएव उक्तवचनाद्धर्मशब्देन व्यवहारशब्देन चोच्यत इत्यर्थः । प्राग्वचनं धर्मवचनम् ॥ १३ ॥ एवं व्यवहाररूपिणो दण्डस्य रूपमुक्त्वा धर्माख्यदण्डरूपमाह । ताम्रास्यो मृगराजतनुच्छद इति । ताम्रो वह्निरेवाहवनीयादिरास्यं यस्य स तथा । मृगराजः कृष्णमृगस्तत्संबन्धिचर्म तनुच्छदः शरीराच्छादकं प्रावरणमस्य । एतेन दीक्षाप्रधानो यज्ञ उक्तः । एतच्च सर्वेषां दानोपवासहोमादीनामुपलक्षणम् ॥ १६ ॥ मुख्य दण्डस्य रूपमाह दण्डो हीति ॥ २३ ॥ तत्पत्न्या रूपमाह तथेति । दण्डेन सहिता नीतिर्दण्डनीतिः ॥ २४ ॥ किंपरायणमित्यस्योत्तरं अर्थानर्थावित्यादि ॥ २५ ॥

अपत्रपानपत्रपे ह्रीश्च संपद्विपच्च ह ॥ ३२
तेजः कर्माणि पाण्डित्यं वाक्शक्तिर्बुद्धितत्वता ।
एवं दण्डस्य लोकेऽस्मिञ्जागर्ति बहुरूपता ॥ ३३
न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परम् ।
भयाद्दण्डस्य नान्योन्यं घ्नन्ति चैव युधिष्ठिर ॥ ३४
दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः ।
राजानं वर्धयन्तीह तस्माद्दण्डः परायणम् ॥ ३५
व्यवस्थापयते नित्यमिमं लोकं नरेश्वर ।
सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ॥ ३६
धर्मयुक्ता द्विजश्रेष्ठा देवयुक्ता भवन्ति च ।
बभूव यज्ञो देवेभ्यो यज्ञः प्रीणाति देवताः ॥ ३७
प्रीताश्च देवता लोकमिन्द्रे प्रतिददत्युत ।
अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ॥ ३८
प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः ।
तस्मात्प्रजाः प्रतिष्ठन्ते दण्डो जागर्ति तासु च ॥ ३९
एवंप्रयोजनश्चैव दण्डः क्षत्रियतां गतः ।
रक्षन्प्रजाः स जागर्ति नित्यं स्ववहितोक्षरः ॥ ४०
ईश्वरः पुरुषः प्राणः सत्वं वृत्तं प्रजापतिः ।
भूतात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः ४१
अददद्दण्डमेवास्मै धृतमैश्वर्यमेव च ।
बले नयश्च संयुक्तः सदा पञ्चविधात्मकः ॥ ४२
कुलं बहुधनामात्याः प्रज्ञा प्रोक्ता बलानि तु ।

किमात्मकः कथंभूतः कथंमूर्तिरितिप्रश्नत्रयस्योत्तरमाह व्यवस्थापयतइति । लोकपालनात्मकः सत्यपक्षपाती ब्राह्मणमूर्तिस्वरूप इत्यर्थः ॥ ३६ ॥ दण्डस्य ब्राह्मणमूर्तित्वं विवृण्वन् कथं जागर्ति इत्यस्योत्तरमाह धर्मयुक्ता इत्यादिना । ब्राह्मणमूर्तिर्दण्डो यज्ञादिद्वारान्नसृष्टिहेतुतया भूतानि पालयन् जागर्तीति श्लोकत्रयार्थः ॥ ३७ ॥ अदददीश्वर इति शेषः । अस्मै राज्ञे । दण्डं दण्डनीतिम् । अतएवायं बलेन संयुक्तः पञ्चविध आत्मा यस्य स तथा । धर्मव्यवहारदण्डेश्वरजीवरूपेण पञ्चप्रकारात्मको राजा । बलं नयैश्च संयुक्तं सदा पञ्चविधात्मकमिति थ. द. पाठः ॥ ४२ ॥ बहुधनसहिता अमात्या बहुधनामात्याः । बलानि तु तेजओजःसहआख्यानि देहेन्द्रियबुद्धिसामर्थ्यानि । अष्टकैरष्टसंख्याकैरनन्तरश्लोके वक्ष्यमाणैर्हस्त्यादिभिराहार्यमार्जनीयम् । अन्यद्बलं कोशवृद्धिरूपम् ॥ ४३ ॥ अङ्गस्य सैन्यस्य युक्तस्य सन्नद्धस्य रथादिकं शरीरं विदुरिति तृतीयेनान्वयः । रसदाः वैद्याः ॥ ४५ ॥ प्राड्विवाकाः विवदमानयोर्द्वयोः प्रवृत्ति-

आहार्यमष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ॥
हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च
देशिकाश्चाविकाश्चैव तदष्टाङ्गं बलं स्मृतम् ॥ ४
अथ चाङ्गस्य युक्तस्य रथिनो हस्तियायिनः ।
अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ॥ ४
भिक्षुकाः प्राड्विवाकाश्च मौहूर्ता दैवचिन्तकाः
कोशो मित्राणि धान्यं च सर्वोपकरणानि च ॥ ४
सप्तप्रकृति चाष्टाङ्गं शरीरमिह तं विदुः ।
राज्यस्य दण्डमेवाङ्गं दण्डः प्रभव एव च ॥ ४
ईश्वरेण प्रसन्नेन कारणात्क्षत्रियस्य च ।
दण्डो दत्तः सदा गोप्ता दण्डो हीदं सनातनम् ॥ ४
राजा पूज्यतमो नान्यो यथा धर्मः प्रदर्शितः
ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च ॥ ४
भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथाविधः ।
तस्माद्य सहितो दृष्टो भर्तृप्रत्ययलक्षणः ॥ ५
व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते ।
मौलश्च नरशार्दूल शास्त्रोक्तश्च तथाऽपरः ॥ ५
उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः ।
ज्ञेयो नः स नरेन्द्रस्थो दण्डः प्रत्यय एव च ॥ ५
दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः ।
व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥ ५

निमित्तवेत्तारः ॥ ४६ ॥ दण्डं सैन्यम् । दण्डः प्रसिद्धः ॥ ४७ दण्डो दण्डाधीनम् ॥ ४८ ॥ भर्तृप्रत्ययः भर्तारौ द्वौ विव- मानौ प्रत्ययः कारणं यस्य स तथा वादिप्रतिवादिभ्यां प्र- र्तितो व्यवहारः । तयोरन्यतरस्य प्रत्ययोऽभ्युपगमो लक्ष- यस्य स भर्तृप्रत्ययलक्षणः । अन्यतरपराजयादित्यर्थः । सहि- हितमिष्टं तेन युक्तः सहितः । अन्यतरजयावह इत्यर्थः ॥ ५० वेदात्मा वेदोक्तो दोषः पारदार्यादिस्तन्निवृत्त्यर्थं परिषदं प्रा- गतश्चेत्तत्र प्रायश्चित्तात्मको वेदहेतुक एव दण्डः । मौलः कुल- चारप्रयुक्तो यो व्यवहारस्तत्रापि शास्त्रोक्तो दण्डः । तथा- शास्त्रविदामनुक्रमणं धर्मज्ञानां समयः प्रमाणं वेदाश्चे- ॥ ५१ ॥ तेषां त्रयाणां दण्डानां मध्ये आद्यः क्षत्रियाधी- इत्याह । उक्त इति । नः अस्माभिः क्षत्रियैर्दण्डोऽपि ज्ञेयः त- प्रत्ययोऽपि ज्ञेयः ॥ ५२ ॥ अस्यापि वेदमूलत्वमाह दण्ड इति विविधोऽवहारः अन्योन्यं परपक्षक्षेपेण स्वपक्षसाधनं व्यवहा- स्तदात्मको न्यायः स यद्यपि दण्डः प्रत्ययदृष्टस्तथापि स व्य-

यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शनः ।
धर्मप्रत्यय उद्दिष्टो यश्च धर्मः कृतात्मभिः ॥ ५४
व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर ।
त्रीन्धारयति लोकान्वै सत्यात्मा भूतिवर्धनः ॥५५
यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः ।
व्यवहारश्च दृष्टो यः स वेद इति नः श्रुतिः ॥ ५६
यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः ।
ब्रह्मा पितामहः पूर्वं भगवांश्च प्रजापतिः ॥ ५७
लोकानां स हि सर्वेषां ससुरासुररक्षसाम् ।
स मनुष्योरगवतां कर्ता चैव स भूतकृत् ॥ ५८
ततो नो व्यवहारोऽयं भर्तृप्रत्ययलक्षणः ।
तस्मादिदमवोचाम व्यवहारनिदर्शनम् ॥ ५९
माता पिता च भ्राता च भार्या चैव पुरोहितः ।
नादण्ड्यो विद्यते राज्ञो यः स्वधर्मेण तिष्ठति ॥६०

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

## द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

भीष्मेण युधिष्ठिरं प्रति वसुहोममान्धातृसंवादानुवादपूर्वकं दण्डोत्पत्त्यादिकथनम् ॥ १ ॥

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अङ्गेषु राजा द्युतिमान्वसुहोम इति श्रुतः ॥ १
स राजा धर्मविन्नित्यं सह पत्न्या महातपाः ।
मुञ्जपृष्ठं जगामाथ देवर्षिगणसेवितम् ॥ २
तत्र शृङ्गे हिमवतो वसतिं समुपागमत् ।
यत्र मुञ्जवटे रामो जटाहरणमादिशत् ॥ ३
तदादि च महाप्राज्ञ ऋषिभिः संशितव्रतैः ।
मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ॥ ४
स तत्र बहुभिर्युक्तस्तदा श्रुतिमयैर्गुणैः ।
ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ॥ ५
तं कदाचिददीनात्मा सखा शक्रस्य मानितः ।
अभ्यगच्छन्महीपालो मान्धाता शत्रुकर्शनः ॥ ६
सोपसृत्य तु मान्धाता वसुहोमं नराधिपम् ।
दृष्ट्वा प्रकृष्टतपसं विनयेनोपतिष्ठते ॥ ७
वसुहोमोऽपि राज्ञो वै गामर्घ्यं च न्यवेदयत् ।
सप्ताङ्गस्य तु राज्यस्य पप्रच्छ कुशलाव्ययौ ॥ ८
सद्भिराचरितं पूर्वं यथावदनुयायिनम् ।
अब्रवीद्वसुहोमस्तं राजन्किं करवाणि ते ॥ ९
सोऽब्रवीत्परमप्रीतो मान्धाता राजसत्तमः ।
वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन ॥ १०
बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया ।
तथैवौशनसं शास्त्रं विज्ञातं ते नरोत्तम ॥ ११
तदहं श्रोतुमिच्छामि दण्ड उत्पद्यते कथम् ।
किं वाऽस्य पूर्वं जागर्ति किं वा परममुच्यते ॥ १२
कथं क्षत्रियसंस्थश्च दण्डः संप्रत्यवस्थितः ।
ब्रूहि मे तद्यथातत्वं ददाम्याचार्यवेतनम् ॥ १३
वसुहोम उवाच ।
शृणु राजन्यथा दण्डः संभूतो लोकसंग्रहः ।
प्रजाविनयरक्षार्थं धर्मस्यात्मा सनातनः ॥ १४
ब्रह्मा यियक्षुर्भगवान्सर्वलोकपितामहः ।
ऋत्विजं नात्मनस्तुल्यं ददर्शेति हि नः श्रुतम् ॥ १५
स गर्भं भगवान्देवो बहुवर्षाण्यधारयत् ।
अथ पूर्णे सहस्रे तु स गर्भः क्षुवतोऽपतत् ॥ १६
स क्षुपो नाम संभूतः प्रजापतिररिंदमः ।
ऋत्विगासीन्महाराज यज्ञे तस्य महात्मनः ॥ १७

---

व्यवहाराख्यो मन्वादिभिः स्मृतोऽस्ति । अतः सोऽपि वैदिक-प्रमाणान्तर्भूतविषयात्मको वेदार्थगोचरोऽस्तीत्यर्थः ॥ ५३ ॥ उद्दिष्टो मम पारदार्यजनाधर्मेण धर्मलोपो माभूदिति पश्चात्तापमनुष्ठितः प्रायश्चित्तरूपो दण्डो धर्म एवेत्यर्थः ॥ ५४ ॥ यो राजा स्वधर्मेण तिष्ठति तस्य राज्ञ इति संबन्धः ॥ ६० ॥

एकविंशाधिकशततमोऽध्यायः ॥ १२१ ॥

अत्र दण्डोत्पत्तौ विषये ॥ १ ॥ आचार्यवेतनं गुरुदक्षिणाम् ॥ १३ ॥ यियक्षुर्यष्टुमिच्छुः ॥ १५ ॥ सगर्भं शिरसा देवः इति झ. पाठः । क्षुवतः क्षुतवतः ॥ १६ ॥

तस्मिन्प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ ।
इष्टरूपप्रचारत्वाद्दण्डः सोऽन्तर्हितोऽभवत् ॥ १८
तस्मिन्नन्तर्हिते चापि प्रजानां संकरोऽभवत् ।
नैव कार्यं न वा कार्यं भोज्याभोज्यं न विद्यते ॥ १९
पेयापेये कुतः सिद्धिर्हिंसन्ति च परस्परम् ।
गम्यागम्यं तदा नासीत्स्वं परस्वं च वै समम् ॥ २०
परस्परं विलुम्पन्ति सारमेया यथाऽऽमिषम् ।
अबलान्बलिनो जघ्नुर्निर्मर्यादं प्रवर्तते ॥ २१
ततः पितामहो विष्णुं भगवन्तं सनातनम् ।
संपूज्य वरदं देवं महादेवमथाब्रवीत् ॥ २२
अत्र त्वमनुकम्पां वै कर्तुमर्हसि शङ्कर ।
'अयं विष्णुः सखा तुभ्यं धर्मस्य परिरक्षणे ॥ २३
त्वं हि सर्वविधानज्ञः सत्वानां त्वं गतिः परा ।'
संकरो न भवेदत्र यथा तद्वै विधीयताम् ॥ २४
ततः स भगवान्ध्यात्वा तदा शूलवरायुधः ।
'देवदेवो महादेवः कारणं जगतः परम् ॥ २५
ब्रह्मविष्ण्विन्द्रसहितः सर्वैश्च ससुरासुरैः ।
लोकसन्धारणार्थं च लोकसंकरनाशनम् ।'
आत्मानमात्मना दण्डं ससृजे देवसत्तमः ॥ २६
तस्माच्च धर्मचरणान्नीतिं देवीं सरस्वतीम् ।
असृजद्दण्डनीतिं वै त्रिषु लोकेषु विश्रुताम् ॥ २७
'यथाऽसौ नीयते दण्डः सततं पापकारिषु ।
दण्डस्य नयनात्सा हि दण्डनीतिरिहोच्यते ॥' २८
भूयः स भगवान्ध्यात्वा चिरं शूलधरः प्रभुः ।
'असृजत्सर्वशास्त्राणि महादेवो महेश्वरः ॥ २९
दण्डनीतेः प्रयोगार्थं प्रमाणानि च सर्वशः ।
विद्याश्चतस्रः कूटस्थास्तासां भेदविकल्पनाः ॥ ३०
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ ३१
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ॥ ३२
दश चाष्टौ च विख्याता एता धर्मस्य संहिताः ।
एतासामेव विद्यानां व्यासमाह महेश्वरः ॥ ३३
शतानि त्रीणि शास्त्राणां महातन्त्राणि सप्ततिम् ।
व्यास एव तु विद्यानां महादेवेन कीर्तितः ॥ ३४
तन्त्रं पाशुपतं नाम पञ्चरात्रं च विश्रुतम् ।
योगशास्त्रं च साङ्ख्यं च तन्त्रं लोकायतं तथा ॥ ३५
तन्त्रं ब्रह्मतुला नाम तर्कविद्या दिवौकसाम् ।
सुखदुःखार्थजिज्ञासा कारणं चेति विश्रुतम् ॥ ३६
तर्कविद्यास्तथा चाष्टौ स चोक्तो न्यायविस्तरः ।
दश चाष्टौ च विज्ञेयाः पौराणा यज्ञसंहिताः ॥ ३७
पुराणाश्च प्रणीताश्च तावदेवेह संहिताः ।
धर्मशास्त्राणि तद्वच्च एकार्थानि च नान्यथा ॥ ३८
एकार्थानि पुराणानि वेदाश्चैकार्थसंहिताः ।
नानार्थानि च सर्वाणि ततः शास्त्राणि शंकरः ॥ ३९
प्रोवाच भगवान्देवः कालज्ञानानि यानि च ।
चतुःषष्टिप्रमाणानि आयुर्वेदं च सोत्तरम् ॥ ४०
अष्टादशविकल्पां तां दण्डनीतिं च शाश्वतीम् ।
गान्धर्वमितिहासं च नानाविस्तरमुक्तवान् ॥ ४१
इत्येताः शंकरप्रोक्ता विद्याः शब्दार्थसंहिताः ।
पुनर्भेदसहस्रं तु तासामेव तु विस्तरः ॥ ४२
ऋषिभिर्देवगन्धर्वैः सविकल्पः सविस्तरः ।
शश्वदभ्यस्यते लोके वेद एव तु सर्वशः ॥ ४३
वेदाश्चतस्रः संक्षिप्ता वेदवादाश्च ते स्मृताः ।
एतासां पारगो यश्च स चोक्तो वेदपारगः ॥ ४४
वेदानां पारगो रुद्रो विष्णुरिन्द्रो बृहस्पतिः ।
शक्रः स्वायंभुवश्चैव मनुः परमधर्मवित् ॥ ४५
ब्रह्मा च परमो देवः सदा सर्वैः सुरासुरैः ।
सर्वस्यानुग्रहाच्चैव व्यासो वै वेदपारगः ॥ ४६
भीष्म उवाच ।
अहं शान्तनवो भीष्मः प्रसादान्माधवस्य च ।
शंकरस्य प्रसादाच्च ब्रह्मणश्च कुरूद्वह ।
वेदपारग इत्युक्तो याज्ञवल्क्यश्च सर्वशः ॥ ४७
कल्पेकल्पे महाभागैर्ऋषिभिस्तत्त्वदर्शिभिः ।
ऋषिपुत्रैर्ऋषिगणैर्भिद्यन्ते मिश्रकैरपि ॥ ४८
शिवेन ब्रह्मणा चैव विष्णुना च विकल्पिताः ।

इष्टं रूपं दीक्षापरिग्रहः प्रजानियन्ता दीक्षां प्रविष्ट इति नियमनरूपो दण्डोऽन्तर्हितोऽभवदित्यर्थः ॥ १८ ॥

आदिकल्पे पुनश्चैव भिद्यन्ते साधुभिः पुनः ॥ ४९
इदानीमपि विद्वद्भिर्भिद्यन्ते च विकल्पकैः ।
पुत्रजन्मानुमार्गेण बहुधेयं सरस्वती ॥ ५०
भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः ।'
तस्य तस्य निकायस्य चकारैकैकमीश्वरम् ॥ ५१
देवानामीश्वरं चक्रे देवं दशशतेक्षणम् ।
यमं वैवस्वतं चापि पितॄणामकरोत्पतिम् ॥ ५२
अपां राज्ये सुराणां च विदधे वरुणं प्रभुम् ।
धनानां रक्षसानां च कुबेरमपि चेश्वरम् ॥ ५३
पर्वतानां पतिं मेरुं सरितां च महोदधिम् ।
मृत्युं प्राणेश्वरमथो तेजसां च हुताशनम् ॥ ५४
रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः ।
महात्मानं महादेवं विशालाक्षं सनातनम् ॥ ५५
'इह चैकश्च ये रुद्रास्तस्यैते मूर्तिसंभवाः ।
नानारूपधरो देवः स एव भगवाञ्शिवः ॥' ५६
वसिष्ठमीशं विप्राणां वसूनां जातवेदसम् ।
तेजसां भास्करं चक्रे नक्षत्राणां निशाकरम् ॥ ५७
वीरुधां वसुमन्तं च भूतानां च प्रभुं वरम् ।
कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ॥ ५८
कालं सर्वेशमकरोत्संहारविनयात्मकम् ।
मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ॥ ५९
ईश्वरो देवदेवस्तु राजराजो नराधिपः ।
सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ॥ ६०
'ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः ।
विष्णुर्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः ॥ ६१
सृजते ग्रसते चैतत्तमोभूतमिदं यथा ।
अप्रज्ञातं जगत्सर्वं यदा ह्येको महेश्वरः ॥' ६२
तमेनं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ ।
प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ॥ ६३
महादेवस्ततस्तस्मिन्वृत्ते यज्ञे समाहितः ।
दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ॥ ६४
विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः ।
प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ॥ ६५
भृगुर्ददावृषिभ्यस्तु दण्डं धर्मसमाहितम् ।
ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ॥ ६६
क्षुपस्तु मनवे प्रादादादित्यतनयाय च ।
पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ॥ ६७
विभज्य दण्डः कर्तव्यो दण्डे तु नयमिच्छता ।
दुर्वाचा निग्रहो दण्डो हिरण्यं बाह्यतः क्रिया ॥ ६८
व्यङ्गत्वं च शरीरस्य वधो वाऽनल्पकारणात् ।
शरीरपीडा कार्या तु स्वदेशाच्च विवासनम् ॥ ६९
तं ददौ सूर्यपुत्राय मनवे रक्षणात्मकम् ।
आनुपूर्व्याच्च दण्डोऽयं प्रजा जागर्ति पालयन् ॥ ७०
इन्द्रो जागर्ति भगवानिन्द्रादग्निर्विभावसुः ।
अग्नेर्जागर्ति वरुणो वरुणाच्च प्रजापतिः ॥ ७१
प्रजापतेस्ततो धर्मो जागर्ति विनयात्मकः ।
धर्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः ॥ ७२
व्यवसायात्ततस्तेजो जागर्ति परिपालयत् ।
ओषध्यस्तेजसस्तस्मादोषधीभ्यश्च पर्वताः ॥ ७३
पर्वतेभ्यश्च जागर्ति रसो रसगुणात्तथा ।
जागर्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतीमनु ॥ ७४
वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः ।
ब्रह्मा पितामहस्तस्माज्जागर्ति प्रभुरव्ययः ॥ ७५
पितामहान्महादेवो जागर्ति भगवाञ्शिवः ।
विश्वेदेवाः शिवाच्चापि विश्वेभ्य ऋषयस्तथा ॥ ७६
ऋषिभ्यो भगवान्सोमः सोमाद्देवाः सनातनाः ।
देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय ॥ ७७
ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षन्ति धर्मतः ।
स्थावरं जङ्गमं चैव क्षत्रियेभ्यः सनातनम् ॥ ७८
प्रजा जाग्रति लोकेऽस्मिन्दण्डो जागर्ति तासु च ।
सर्वसंक्षेपको दण्डः पितामहसुतः प्रभुः ॥ ७९
जागर्ति कालः पूर्वं च मध्ये चान्ते च भारत ।

[illegible] केशव इति झ. पाठः । विनयो विवृद्धिः । चत्वारो [illegible] तस्य तस्य शत्र शत्रुर्यमः कर्म च । रोगोऽपथ्याशन- [illegible] मार्गो यमः कर्म चेति वा ॥ ५९ ॥ विभज्य न्यायं [illegible] च विविच्य । दुष्टनिग्रह एव दण्डस्य मुख्यं प्रयो-जनम् । हिरण्यादिग्रहणं तु लोकानां बिभीषिकार्थं नतु कोश-वृद्ध्यर्थमित्यर्थः ॥ ६८ ॥ विवासनं स्वदेशाद्दूरीकरणम् ॥ ६९ ॥ ओषधीभ्यश्च पादपाः इति ट. पाठः ॥ ७३ ॥ पादपेभ्यश्च जागर्ति इति ट. पाठः ॥ ७४ ॥ द्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥

ईशः सर्वस्य कालो हि महादेवः प्रजापतिः ॥ ८०
देवदेवः शिवः सर्वो जागर्ति सततं प्रभुः ।
कपर्दी शंकरो रुद्रो भवः स्थाणुरुमापतिः ॥ ८१
इत्येष दण्डो व्याख्यातस्तथौषध्यस्तथापरे ।
भूमिपालो यथान्यायं वर्तेतानेन धर्मवित् ॥ ८२
भीष्म उवाच ।
इतीदं वसुहोमस्य योऽऽत्मवान्शृणुयान्मतम् ।
श्रुत्वा सम्यक्प्रवर्तेत स लोकानाप्नुयान्नृपः ॥ ८३
इति ते सर्वमाख्यातं यो दण्डो मनुजर्षभ ।
नियन्ता सर्वलोकस्य धर्माक्रान्तस्य भारत ॥ ८४
'वसुहोमाच्छ्रुतं राज्ञा मान्धात्रा भूभृता पुरा ।
मयापि कथितं राजन्नाख्यानं प्रथितं मया ॥' ८५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

---

## त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

भीष्मेण युधिष्ठिरंप्रति धर्मादिनिरूपणपूर्वकं कामन्दारिष्टसंवादानुवादेन धर्मत्यागिनः प्रायश्चित्तप्रकारादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥ १
धर्मार्थकामाः किंमूलाः प्रभवः प्रलयश्च कः ।
अन्योन्यं चानुषज्जन्ते वर्तन्ते च पृथक्पृथक् ॥ २
भीष्म उवाच ।
य एते स्युः सुमनसो लोकसंस्थार्थनिश्चये ।
कामप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥ ३
धर्ममूलोऽर्थ इत्युक्तः कामोऽर्थफलमुच्यते ।
संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ॥ ४
विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये ।
मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ ५
धर्मः शरीरसंगुप्तिर्धर्मार्थश्चार्थ इष्यते ।
कामो रतिफलश्चात्र सर्वे रतिफलाः स्मृताः ॥ ६
सन्निकृष्टांश्चरेदेतान्न चैतान्मनसा त्यजेत् ।
विमुक्तस्तपसा सर्वान्धर्मादीन्कामनैष्ठिकान् ॥ ७
श्रेष्ठबुद्धिस्त्रिवर्गस्य उदयं प्राप्नुयात्क्षणात् ।
[ कर्मणा बुद्धिपूर्वेण भवत्यर्थो न वा पुनः ॥ ८
अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमवाप्यार्थमन्यत्राद्योपकारकम् । ]
बुद्ध्या बुद्ध इहार्थेन तद्बुद्धा तु निकृष्टया ॥ ९
अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् ।
संप्रमोहमलः कामो भूयस्तद्गुणवर्धितः ॥ १०
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अरिष्टस्य च संवादं कामन्दस्य च भारत ॥ ११
कामन्दमृषिमासीनमभिवाद्य नराधिपः ।

---

किंमूलाः किमुद्दिश्य क्रियन्त इत्यर्थः । प्रभवत्यस्मादिति प्रभवः । किमेषामुत्पत्तिस्थानम् । तेषां साहित्यं कथं पृथक्पृथक्त्वं च कथमिति चत्वारः प्रश्नाः ॥ २ ॥ सूचीकटाहन्यायेन धर्मार्थकामानां साहित्यमाह य इति । ते धर्मार्थकामास्त्रयोऽपि सज्जन्ते युगपदुत्पद्यन्ते ॥ ३ ॥ स्वर्गादिकं बाह्यं फलं विप्रकृष्टं तदर्था एते विप्रकृष्टाः । आत्मज्ञानरूपं फलं तु सन्निकृष्टं तदर्था एते सन्निकृष्टास्तांश्चरेत् सेवेत । धर्मश्चित्तशुद्ध्यर्थोऽर्थो निष्कामकर्मार्थः कामो देहधारणमात्रार्थः इत्येवमेते सेव्या इत्यर्थः । धर्मादीन्कामनैष्ठिकान्कामान्तान्धर्मार्थकामान्सर्वानपि मनसापि न त्यजेत्किमुत स्वरूपेण न त्यजेदित्यर्थः । कथं तर्ह्येतांस्त्यजेदित्याह तपसा विमुक्त इति । विचारेणैव तेभ्यो विमुक्तो भवेत् । सङ्गफलत्यागपूर्वकं धर्मादीननुतिष्ठेदिति भावः ॥ ७ ॥

अस्मात्कर्मण इदं फलं प्राप्स्ये इति बुद्धिपूर्वं कृतेनापि कर्मणार्थः कदाचिद्भवति कदाचिन्नेति व्यभिचारः ॥ ८ ॥ अर्थार्थं धर्मादपि अन्यत् सेवाकृष्यादिकं भवतीति न धर्मैकलभ्योऽर्थ इत्यर्थार्थं धर्मो न कार्यः । प्रत्युत विपरीतमपि अपरं मतमस्ति । केचिद्धठेनैवार्थो भवति स्वभावेन वा दैवेन वेति मन्यत इति तदर्थमलं धर्मेणेत्यर्थः । एवं धर्मस्यार्थहेतुत्वं दूरीकृत्यार्थस्यापि धर्महेतुत्वं दूषयति । अर्थमवाप्याऽपि जगदनर्थार्थमपायार्थं भवति । तथाहि धनमत्तः सर्वं पापं करोतीति नार्थेन धर्मोत्पत्तिर्नित्यास्ति । अर्थं विनापि धर्मोत्पत्तिरस्तीत्याहान्यत्राद्योपकारकम् । स्वार्थे त्रल् । अन्यत्रान्यदेवोपवासव्रतादिकं आद्यस्य धर्मस्योपकारकं वर्धकं भवति ॥ ९ ॥ अपध्यानं फलाभिसन्धिः । निगूहनं दानभोगयोरप्रतिपादनम् ॥ १० ॥

ग्रोऽथ पप्रच्छ कृत्वा समयमव्ययम् ॥ १२
ं कृत्ने राजा काममोहबलात्कृतः ।
नस्य तस्यैव किं स्यात्पापप्रणाशनम् ॥ १३
धर्म इति च यो मोहादाचरेन्नरः ।
प्रथितं लोके कथं राजा निवर्तयेत् ॥ १४
उवाच ।
र्थौ परित्यज्य काममेवानुवर्तते ।
धपरित्यागात्प्रज्ञानाशमिहार्च्छति ॥ १५
शात्मको मोहस्तथा धर्मार्थनाशकः ।
स्तिकता चैव दुराचारश्च जायते ॥ १६
ान्यदा राजा प्रदुष्टान्न नियच्छति ।
द्विजन्ते लोकः सर्पाद्वेश्मगतादिव ॥ १७
नानुरज्यन्ते न विप्रा न च साधवः ।
क्षयमाप्नोति तथा वध्यत्वमेव च ॥ १८

अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ।
जीवते यदपध्वस्तः शुद्धं मरणमेव तत् ॥ १९
अत्रैतदाहुराचार्याः पापस्य परिवर्तनम् ।
सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥ २०
महामना भवेद्धर्मे विवहेच्च महाकुले ।
ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः ॥ २१
जपेदुदकशीलः स्यात्सुमुखो न च नास्तिकः ।
धर्मान्वितान्संप्रविशेद्बहिः कृत्वैव दुष्कृतम् ॥ २२
प्रसादयेन्मधुरया वाचा वाऽप्यथ कर्मणा ।
इत्यस्तीति वदेन्नित्यं परेषां कीर्तयन्गुणान् ॥ २३
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
पापान्यपि हि कृच्छ्राणि शमयेन्नात्र संशयः ॥ २४
गुरवो हि परं धर्मं यं ब्रूयुस्तं तथा कुरु ।
गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥ २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

## चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

न युधिष्ठिरंप्रति दुर्योधनाय धृतराष्ट्रप्रोक्तेन्द्रप्रह्लादकथानुवादपूर्वकं शीलस्य धर्मादिकारणत्वप्रतिपादनम् ॥ १ ॥

उवाच ।
ा मनुष्येन्द्र प्रशंसन्ति सदा भुवि ।
शीलमेवादौ ततो मे संशयो महान् ॥ १
छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर ।
च्छामि तत्सर्वं यथैतदुपलभ्यते ॥ २
प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
ं च तत्प्रोक्तं ब्रूहि मे वदतां वर ॥ ३
वाच ।
धिनेनेह धृतराष्ट्राय मानद ।
ं तप्यमानेन श्रियं दृष्ट्वा तवागताम् ॥ ४
महाराज तव सभ्रातृकस्य ह ।
चापहसनं तत्सर्वं शृणु भारत ॥ ५
सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम् ।

दुर्योधनस्तदा दीनः सर्वं पित्रे न्यवेदयत् ॥ ६
श्रुत्वा हि धृतराष्ट्रश्च दुर्योधनवचस्तदा ।
अब्रवीत्कर्णसहितं दुर्योधनमिदं वचः ॥ ७
धृतराष्ट्र उवाच ।
किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यति ॥ ८
यदा त्वां महदैश्वर्यं प्राप्तं परपुरंजय ।
किंकरा भ्रातरः सर्वे मित्रसंबन्धिबान्धवाः ॥ ९
आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक ॥ १०
दुर्योधन उवाच ।
दश तात सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ ११

---

पश्चानमस्य ॥ १३ ॥ एवं निन्दितस्य कर्तव्यमाह
२० ॥ तवास्मीति वदेन्नित्यं इति झ. पाठः ॥ २३ ॥
धिकशततमोऽध्यायः ॥ १२३ ॥

धर्मस्य कारणमिति शेषः ॥ १ ॥ यदि सम्यग्भविष्यसीति
द. पाठः ॥ ८ ॥

दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ।
अश्वांस्तित्तिरकल्माषान्रत्नानि विविधानि च॥१२
दृष्ट्वा तां पाण्डवेयानामृद्धिमिन्द्रोपमां शुभाम् ।
अमित्राणां सुमहतीमनुशोचामि मानद ॥ १३
धृतराष्ट्र उवाच ।
यदीच्छसि श्रियं तात यादृशी सा युधिष्ठिरे।
विशिष्टां वा नरश्रेष्ठ शीलवान्भव पुत्रक ॥ १४
शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः।
न हि किंचिदसाध्यं वै लोके शीलवतां सताम्॥१५
एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् ॥ १६
एते हि पार्थिवाः सर्वे शीलवन्तो यशोन्विताः।
ततस्तेषां गुणक्रीता वसुधा स्वयमागता ॥ १७
दुर्योधन उवाच ।
कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
येन शीलेन संप्राप्ताः क्षिप्रमेव वसुंधराम् ॥ १८
धृतराष्ट्र उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा वृत्तं शीलमाश्रित्य भारत ॥ १९
प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः ।
शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशे कृतम्॥२०
ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।
तमुवाच महाप्राज्ञः श्रेय इच्छामि वेदितुम् ॥ २१
ततो बृहस्पतिस्तस्मै ज्ञानं नैश्रेयसं परम् ।
कथयामास भगवान्देवेन्द्राय कुरूद्वह ॥ २२
एतावच्छ्रेय इत्येव बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ को विशेषो भवेदिति ॥२३
बृहस्पतिरुवाच ।
विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः ।
तत्रागमय भद्रं ते भूय एव सुरोत्तम ॥ २४
आत्मनस्तु ततः श्रेयो भार्गवः सुमहायशाः ।
ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः ॥ २५
तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति परं भूयः शुक्रमाह शतक्रतुः ॥२६
भार्गवस्त्वाह सर्वज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेणेत्युक्तो हृष्टश्च सोऽभवत् ॥२७
स तत्र ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
स्तुत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् २८
प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजोत्तम ।
त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ॥२९
ब्राह्मणस्त्वब्रवीद्राजन्यस्मिन्काले क्षणो भवेत् ।
तदोपादेष्टुमिच्छामि यदि कार्यान्तरं भवेत् ॥ ३०
ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः ।
तथेत्युक्त्वा ददौ काले ज्ञानतत्त्वं द्विजे तदा ॥३१
ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्यच्च मनसेच्छति ॥ ३२
पृष्टश्च तेन बहुशः प्राप्तं कथमरिंदम ।
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे ।
[प्रह्लादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत्।।]३३
प्रह्लाद उवाच ।
नासूयामि द्विजान्विप्र राजास्मीति कथंचन ।
काम्यानि वदतां तेषां संयच्छामि वहामि च ॥३४
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
तेषां कार्यपथे युक्तं शुश्रूषुमनहंकृतम् ॥ ३५
धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् ।
समासिञ्चन्ति शास्त्रज्ञाः क्षौद्रं मध्विव मक्षिकाः३६
सोऽहं वागग्रविद्यानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ३७
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे हव्यमेतच्छ्रुत्वा प्रवर्तते ॥ ३८
एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ ३९
यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदाताऽस्मि न संशयः ॥ ४०

---

ऋद्धिं वैश्रवणीमिति झ. पाठः ॥ १३ ॥ नैश्रेयसं मोक्षोपयोगि ॥ २२ ॥ को विशेषः । नैश्रेयसादपि किंश्रेय इत्यर्थः ॥ २३ ॥ क्षुद्राभिर्मधुमक्षिकाभिर्निर्मित क्षौद्रं मधु । तत्र मक्षिकामध्विव मां ते शास्त्रेण सिञ्चन्ति । वागग्रविद्यानां वागग्रे एव नतु पुस्तके विद्या येषां तेषाम् । सोऽहं वागन्त्यपुष्टानां मधूनां परिलेहितेति ङ. पाठः ॥ ३७ ॥

कृतमित्येव दैत्येन्द्रमुवाच द्विजसत्तमः ।
प्रह्लादस्त्वब्रवीत्प्रीतो गृह्यतां वर इत्युत ॥ ४१
ब्राह्मण उवाच ।
यदि राजन्प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ४२
ततः प्रीतस्तु दैत्येन्द्रो भयमस्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पचेतायमित्युत ॥ ४३
एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥४४
दत्ते वरे गते विप्रे चिन्ताऽसीन्महती तदा ।
प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ॥४५
तस्य चिन्तयतस्तावच्छायाभूतं महाद्युतेः ।
तेजोविग्रहवत्तात शरीरमजहात्तदा ॥ ४६
तमपृच्छन्महाराजः प्रह्लादः को भवानिति ।
प्रत्याह तं तु शीलोस्मि त्यक्तो गच्छाम्यहं त्वया ४७
तस्मिन्द्विजोत्तमे राजन्वत्स्याम्यहमरिंदम ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ।
इत्युक्त्वाऽन्तर्हितं तद्वै शक्रं चान्वाविशत्प्रभो॥४८
तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोपरः ।
शरीरान्निःसृतस्तस्य को भवानिति सोब्रवीत् ॥ ४९
धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः ।
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ॥५०
ततोऽपरो महाराज प्रज्वलन्निव तेजसा ।
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ॥ ५१
को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यं विद्ध्यसुरेन्द्राग्र्य प्रयास्ये धर्ममन्वहम् ॥ ५२
तस्मिन्ननुगते धर्मे पुरुषे पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात्पृष्टश्चाह महातपाः ॥ ५३
वृत्तं प्रह्लाद मां विद्धि यतः सत्यं ततो ह्यहम् ।
तस्मिन्गते महाश्वेता शरीरात्तस्य निर्ययौ ॥ ५४
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ।
इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप ॥ ५५
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ।
तामपृच्छत्स दैत्येन्द्रः सा श्रीरित्येनमब्रवीत् ॥५६
उषिताऽस्मि सुखं नित्यं त्वयि सत्यपराक्रम ।
त्वया त्यक्ता गमिष्यामि बलं ह्यनुगता ह्यहम् ॥५७
ततो भयं प्रादुरासीत्प्रह्लादस्य महात्मनः ।
अपृच्छत च तां भूयः क्व यासि कमलालये ॥५८
त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥ ५९
श्रीरुवाच ।
स शक्रो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः ।
त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ॥ ६०
शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्जिताः ।
तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ॥ ६१
धर्मः सत्यं तथा वृत्तं बलं चैव तथाऽप्यहम् ।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥ ६२
भीष्म उवाच ।
एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिर ।
दुर्योधनस्तु पितरं भूय एवाब्रवीत्तदा ॥ ६३
शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन ।
प्राप्यते च यथा शीलं तं चोपायं ब्रवीहि मे ॥६४
धृतराष्ट्र उवाच ।
सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना ।
संक्षेपतस्तु शीलस्य शृणु प्राप्तिं नरेश्वर ॥ ६५
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥ ६६
यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत्कुर्यात्कथंचन ॥ ६७
तत्तु कर्म तथा कुर्याद्येन श्लाघ्येत संसदि ।
शीलं समासेनैतत्ते कथितं कुरुसत्तम ॥ ६८
यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित् ।
न भुञ्जते चिरं तात समूलाश्च पतन्ति ते ॥ ६९

---

विप्रेण विप्राय । चेतायमिति संधिरार्षः ॥ ४३ ॥ तेजोविग्रहवत् तेजोमयशरीरं शीलम् ॥ ४६ ॥ शीलं समधिगच्छामीति थ. पाठः ॥ ६४ ॥ चतुर्विंशाधिकशततमोऽध्यायः ॥ १२४ ॥

धृतराष्ट्र उवाच ।
एतद्विदित्वा तत्त्वेन शीलवान्भव पुत्रक ।
यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ।
'अधिकां चापि राजेन्द्र ततस्त्वं शीलवान्भव।।'७०

भीष्म उवाच ।
एतत्कथितवान्पुत्रे धृतराष्ट्रो महीपतिः ।
एतत्कुरुष्व कौन्तेय ततः प्राप्स्यसि तत्फलम् ।। ७१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

## पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

आशानिरूपणं प्रार्थितेन भीष्मेण तदुपोद्घाततया ऋषभसुमित्रचरित्रकीर्तनारम्भः ॥ १ ॥ मृगयासक्तेन सुमित्रेण निजशरानुवेधे शरेण सह वनं प्रविष्टं मृगं प्रत्यनुधावनम् ॥ २ ॥

युधिष्ठिर उवाच ।
शीलं प्रधानं पुरुषे कथितं ते पितामह ।
कथमाशा समुत्पन्ना का च सा तद्वदस्व मे ।। १
संशयो मे महानेष समुत्पन्नः पितामह ।
छेत्ता च तस्य नान्योऽस्ति त्वत्तः परपुरंजय ।। २
पितामहाशा महती ममासीद्धि सुयोधने ।
प्राप्ते युद्धे तु तद्युक्तं तत्कर्ताऽयमिति प्रभो ।। ३
सर्वस्याशा सुमहती पुरुषस्योपजायते ।
तस्यां विहन्यमानायां दुःखो मृत्युर्न संशयः ।। ४
सोऽहं हताशो दुर्बुद्धिः कृतस्तेन दुरात्मना ।
धार्तराष्ट्रेण राजेन्द्र पश्य मन्दात्मतां मम ।। ५
आशां बृहत्तरीं मन्ये पर्वतादपि सद्रुमात् ।
आकाशादपि वा राजन्नप्रमेयाऽथवा पुनः ।। ६
एषा चैव कुरुश्रेष्ठ दुर्विचिन्त्या सुदुर्लभा ।
दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ।। ७
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि युधिष्ठिर निबोध मे ।
इतिहासं सुमित्रस्य निर्वृत्तमृषभस्य च ।। ८
सुमित्रो नाम राजर्षिर्हैहयो मृगयां गतः ।
ससार च मृगं विद्ध्वा बाणेनानतपर्वणा ।। ९
स मृगो बाणमादाय ययावतिपराक्रमः ।
स च राजा बली तूर्णं ससार मृगमन्तिकात् ।।१०
ततो निम्नं स्थलं चैव समृगोऽद्रवदाशुगः ।
मुहूर्तमिव राजेन्द्र समेन स पथाऽगमत् ।। ११
ततः स राजा तारुण्यादौरसेन बलेन च ।
चचार बाणासनभृत्सखड्गो हंसवत्तदा ।। १२
ततो नदान्नदीश्चैव पल्वलानि वनानि च ।
अतिक्रम्याभ्यतिक्रम्य ससारैको वनेचरः ।। १३
स तु तावन्मृगो राजन्नासाद्यासाद्य पार्थिवम् ।
पुनरभ्येति जवनो जवेन महता ततः ।। १४
स तस्य बाणैर्बहुभिः समभ्यस्तो वनेचरः ।
प्रक्रीडन्निव राजेन्द्र पुनरभ्येति चान्तिकम् ।।१५
पुनश्च जवमास्थाय जवनो मृगयूथपः ।
[अतीत्यातीत्य राजेन्द्र पुनरभ्येति चान्तिकम्]१६
तस्य मर्मच्छिदं घोरं सुमित्रोऽमित्रकर्शनः ।
समादाय शरं श्रेष्ठं कार्मुकान्निरवासयत् ।। १७
[ततो गव्यूतिमात्रेण मृगयूथपयूथपः ।]
तस्य बाणपथं मुक्त्वा तस्थिवान्प्रहसन्निव ।। १८
तस्मिन्निपतिते बाणे भूमौ ज्वलिततेजसि ।
प्रविवेश मृगोऽरण्यं मृगं राजाऽप्यभिद्रवत् ।।१९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

युक्तं युद्धं विनैव राज्यार्धदानम् । कर्ता करिष्यति ॥ ३ ॥ दुर्लभा दुर्जया ॥ ७ ॥ बाणासनभृद्धनुर्धरः ॥ १२ ॥ समभ्यस्तो विद्धः ॥ १५ ॥ पञ्चविंशाधिकशततमोऽध्यायः ॥ १२५ ॥

## षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

तापसैः स्वाश्रममुपागतस्य सुमित्रस्य पूजनम् ॥ १ ॥ ततः सुमित्रेण तापसान्प्रति आशान्तरिक्षयोर्ज्यायस्तरं किमिति प्रश्नः ॥ २ ॥

भीष्म उवाच ।
प्रविश्य च महारण्यं तापसानामथाश्रमम् ।
आससाद ततो राजा श्रान्तश्चोपाविशत्तदा ॥ १
तं कार्मुकधरं दृष्ट्वा श्रमार्तं क्षुधितं तदा ।
समेत्य ऋषयस्तस्मै पूजां चक्रुर्यथाविधि ॥ २
स पूजामृषिभिर्दत्तां प्रतिगृह्य नराधिपः ।
अपृच्छत्तापसान्सर्वांस्तपोवृद्धिमनुत्तमाम् ॥ ३
ते तस्य राज्ञो वचनं प्रतिगृह्य तपोधनाः ।
ऋषयो राजशार्दूलमपृच्छंस्तत्प्रयोजनम् ॥ ४
केन भद्रमुखार्थेन तपोवनमुपागतः ।
पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी नरेश्वर ॥ ५
एतदिच्छामहे श्रोतुं कुतः प्राप्तोऽसि मानद ।
कस्मिन्कुले तु जातस्त्वं किंनामा चासि ब्रूहि नः ॥ ६
ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभ ।
आचख्यौ तद्यथावृत्तं परिचर्यां च भारत ॥ ७
हैहयानां कुले जातः सुमित्रोऽमित्रकर्शनः ।
चरामि मृगयूथानि निघ्नन्बाणैः सहस्रशः ॥ ८
बलेन महता ब्रह्मन्सामात्यः सावरोधकः ।
मृगस्तु विद्धो बाणेन मया सरति शल्यवान् ॥ ९
तं द्रवन्तमनुप्राप्तो वनमेतद्यदृच्छया ।
भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्शितः ॥ १०
किंनु दुःखमतोऽन्यद्वै यदहं श्रमकर्शितः ।
भवतामाश्रमं प्राप्तो हताशो भ्रष्टलक्षणः ॥ ११
न राजलक्षणत्यागः पुनरस्य तपोधनाः ।
दुःखं करोति मे तीव्रं यथाऽऽशा विहता मम ॥ १२
हिमवान्वा महाशैलः समुद्रो वा महोदधिः ।
महत्त्वान्नान्वपद्येतां रोदस्योरन्तरं यथा ॥ १३
आशायास्तपसि श्रेष्ठास्तथा नान्तमहं गतः ।
भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः ॥ १४
भवन्तः सुमहाभागास्तस्मात्पृच्छामि संशयम् ।
आशावान्पुरुषो यः स्यादन्तरिक्षमथापि वा ॥ १५
किंनु ज्यायस्तरं लोके महत्त्वे प्रतिभाति वः ।
एतदिच्छामि तत्त्वेन श्रोतुं किमिह दुर्लभम् ॥ १६
यदि गुह्यं न वो नित्यं तदा प्रब्रूत मा चिरम् ।
न हि गुह्यतमं श्रोतुमिच्छामि द्विजपुङ्गवाः ॥ १७
भवत्तपोविघातो वा येन स्याद्विरमे ततः ।
यदि वाऽस्ति कथायोगो योऽयं प्रश्नो मयेरितः ॥ १८
एतत्कारणसामर्थ्यं श्रोतुमिच्छामि तत्त्वतः ।
भवन्तोऽपि तपोनित्या ब्रूयुरेतत्समाहिताः ॥ १९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

---

## सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

बदरिकाश्रमं गतस्य ऋषभस्य तनुनामकेन महर्षिणा सह संवादः ॥ १ ॥ वने नष्टपुत्रान्वेषणवशात्तत्रोपागतेन वीरद्युम्नेन राज्ञा तनुंप्रति आशाया ज्यायः किमिति प्रश्नः ॥ २ ॥

भीष्म उवाच ।
ततस्तेषां समेतानामृषीणामृषिसत्तमः ।
ऋषभो नाम विप्रर्षिर्विस्मयन्निदमब्रवीत् ॥ १
पुराऽहं राजशार्दूल तीर्थान्यनुचरन्प्रभो ।

---

हे भद्रमुख ॥ ५ ॥ आशा मृगाशा ॥ १२ ॥ हिमवानुच्चत्वेन महोदधिर्विततत्वेन च गगनान्तं नान्वपद्येताम् । तस्य ततोऽप्युच्चत्वाद्विततत्वाच्च ॥ १३ ॥ आशावान् आशाया महत्त्वेन तद्वतोऽपि महत्त्वमन्तरिक्षवत् ॥ १५ ॥ यद्यगुह्यं तपो नित्यं मम ब्रूतेह माचिरमिति थ. द. पाठः ॥ १७ ॥ षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

समासादितवान्दिव्यं नरनारायणाश्रमम् ॥ २
यत्र सा बदरी रम्या सरो वैहायसं तथा ।
यत्र चाश्वशिरा राजन्वेदान्पठति शाश्वतान् ॥ ३
तस्मिन्सरसि कृत्वाऽहं विधिवत्तर्पणं पुरा ।
पितॄणां देवतानां च ततोश्रममियां तदा ॥ ४
रेमाते यत्र तौ नित्यं नरनारायणावृषी ।
अदूरादाश्रमात्किंचिद्वासार्थमगमं तदा ॥ ५
तत्र चीराजिनधरं कृशमुच्चमतीव च ।
अद्राक्षमृषिमायान्तं तनुं नाम तपोनिधिम् ॥ ६
अन्यैर्नरैर्महाबाहो वपुषाऽप्रतिमं तदा ।
कृशता चापि राजर्षे न दृष्टा तादृशी मया ॥ ७
शरीरमपि राजेन्द्र तनु कानिष्ठिकासमम् ।
ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ॥ ८
शिरः कायानुरूपं च कर्णौ नेत्रे तथैव च ।
तस्य वाक्चैव चेष्टा च सामान्ये राजसत्तम ॥ ९
दृष्ट्वाऽहं तं कृशं विप्रं भीतः परमदुर्मनाः ।
पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ॥ १०
निवेद्य नामगोत्रे च तथा कार्यं नरर्षभ ।
प्रदिष्टे चासने तेन शनैरहमुपाविशम् ॥ ११
ततः स कथयामास धर्मार्थसहिताः कथाः ।
ऋषिमध्ये महाराज तत्र धर्मभृतां वरः ॥ १२
तस्मिंस्तु कथयत्येव राजा राजीवलोचनः ।
उपायाज्जवनैरश्वैः सबलः सावरोधनः ॥ १३
स्मरन्पुत्रमरण्ये वै नष्टं परमदुर्मनाः ।
भूरिद्युम्नपिता श्रीमान्वीरद्युम्नो महायशाः ॥ १४
इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीहेति भारत ।
एवमाशाकृशो राजा चरन्वनमिदं पुरा ॥ १५
दुर्लभः स मया द्रष्टुं भूय एव च धार्मिकः ।
एकः पुत्रो महारण्ये नष्ट इत्यसकृत्तदा ॥ १६
न स शक्यो मया द्रष्टुमाशा च महती मम ।
तया परीतगात्रोऽहं मुमूर्षुर्नात्र संशयः ॥ १७
एतच्छ्रुत्वा तु भगवांस्तनुर्मुनिवरोत्तमः ।
अवाक्शिरा ध्यानपरो मुहूर्तमिव तस्थिवान् ॥ १८
तमनुध्यान्तमालक्ष्य राजा परमदुर्मनाः ।
उवाच वाक्यं दीनात्मा मन्दमन्दमिवासकृत् ॥ १९
दुर्लभं किंनु देवर्षे आशायाश्चैव किं महत् ।
ब्रवीतु भगवानेतद्यदि गुह्यं न चेत्तदा ॥ २०
तनुरुवाच ।
महर्षिर्भगवांस्तेन पूर्वमासीद्विमानितः ।
बालिशां बुद्धिमास्थाय मन्दभाग्यतयाऽऽत्मनः ।
अर्थयन्कुशलं राजन्काञ्चनं वल्कलानि च ॥ २१
[अवज्ञापूर्वकेनापि न संपादितवांस्ततः ।]
निर्विण्णः स तु विप्रर्षिर्निराशः समपद्यत ॥ २२
एवमुक्तोऽभिवाद्याथ तमृषिं लोकपूजितम् ।
श्रान्तोऽवसीदद्धर्मात्मा यथा त्वं नरसत्तम ॥ २३
अर्घ्यं ततः समानीय पाद्यं चैव महायशाः ।
आरण्यकेनैव विधिना राज्ञे सर्वं न्यवेदयत् ॥ २४
ततस्तमृषयः सर्वे परिवार्य नरर्षभम् ।
उपाविशन्पुरस्कृत्य सप्तर्षय इव ध्रुवम् ॥ २५
अपृच्छंश्चैव तत्रैनं राजानमपराजितम् ।
प्रयोजनमिदं सर्वमाश्रमस्य प्रवेशने ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

## अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

कृशेन मुनिना वीरद्युम्ननृपंप्रति दुर्लभवस्तुनः कृशतराशायाश्च प्रतिपादनम् ॥ १ ॥

राजोवाच ।
वीरद्युम्न इति ख्यातो राजाऽहं दिक्षु विश्रुतः ।
भूरिद्युम्नं सुतं नष्टमन्वेष्टुं वनमागतः ॥ १
एकः पुत्रः स विप्राग्र्य बाल एव च सोऽनघः ।

वैहायसं विहायसा गच्छन्त्या मन्दाकिन्या वैहायस्या इदं वैहायसम् ॥ ३ ॥ ततोश्रमं तत आश्रमं मण्डपं इयां गतवानहम् ॥ ४ ॥ रेमाते रजसा यत्रेति थ. द. पाठः ॥ ५ ॥ वपुषाऽष्टगुणान्वितमिति झ. पाठः ॥ ७ ॥ तेन तव पुत्रेण भूरिद्युम्नेन ॥ २१ ॥ एवं मुनिना उक्तः वीरद्युम्नः अवसीदत् नष्टप्रायोऽभूदित्यर्थः ॥ २३ ॥ एवं मुनिना राजपूजानन्तरं आगताः किमर्थं आश्रमे त्वं प्रविष्टोऽसीत्यपृच्छन् ॥ २६ ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहम् ॥ २
ऋषभ उवाच ।
इत्युक्ते तेन वचने राज्ञा मुनिरधोमुखः ।
तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपम् ॥ ३
स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः ।
आशाकृतश्च राजेन्द्र तपो दीर्घं समाश्रितः ॥ ४
प्रतिग्रहमहं राज्ञां न करिष्ये कथंचन ।
अन्येषां चैव वर्णानामिति कृत्वा धियं तदा ॥५
आशा हि पुरुषं बालमालापयति तस्थुषी ।
तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः ।
[वीरद्युम्नस्तु तं भूयः पप्रच्छ मुनिसत्तमम् ॥] ६
राजोवाच ।
आशायाः किंच वृत्तं वै किंचेह भुवि दुर्लभम् ।
ब्रवीतु भगवानेतत्त्वं हि धर्मार्थदर्शिवान् ॥ ७
ऋषभ उवाच ।
ततः संस्मृत्य तत्सर्वं स्मारयिष्यन्निवाब्रवीत् ।
राजानं भगवान्विप्रस्ततः कृशतनुस्तदा ॥ ८
ऋषिरुवाच ।
कृशत्वेन समं राजन्नाशाया विद्यते नृप ।
तस्या वै दुर्लभत्वाच्च प्रार्थितः पार्थिवो मया ॥ ९
राजोवाच ।
कृशाकृशे मया ब्रह्मन्गृहीते वचनात्तव ।
दुर्लभत्वं च तस्यैव वेदवाक्यमिवाद्विजे ॥ १०
संशयस्तु महाप्राज्ञ संजातो हृदये मम ।
तन्मुने मम तत्त्वेन वक्तुमर्हसि पृच्छतः ॥ ११
त्वत्तः कृशतरं किंनु ब्रवीतु भगवानिदम् ।
यदि गुह्यं न ते विप्र लोके किंचेह दुर्लभम् ॥ १२
कृश उवाच ।
दुर्लभोऽप्यथवा नास्ति योऽर्थी धृतिमवाप्नुयात् ।
स दुर्लभतरस्तात योऽर्थिनं नावमन्यते ॥ १३
सत्कृत्य नोपक्रियते परं शक्त्या यथार्थतः ।
या सक्ता सर्वभूतेषु साऽऽशा कृशतरी मया ॥ १४
कृतघ्नेषु च या सक्ता नृशंसेष्वलसेषु च ।
अपकारिषु चासक्ता साऽऽशा कृशतरी मया ॥ १५
एकपुत्रः पिता पुत्रे नष्टे वा प्रोषितेऽपि वा ।
प्रवृत्तिं यो न जानाति साऽऽशा कृशतरी मता ॥ १६
प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता ।
तथा नरेन्द्र धनिनां साऽऽशा कृशतरी मता ॥ १७
प्रदानकाङ्क्षिणीनां च कन्यानां वयसि स्थिते ।
श्रुत्वा कथास्तथायुक्ताः साऽऽशा कृशतरी मता १८
एतच्छ्रुत्वा ततो राजन्स राजा सावरोधनः ।
संस्पृश्य पादौ शिरसा निपपात द्विजर्षभे ॥ १९
राजोवाच ।
प्रसादये त्वां भगवन्पुत्रेणेच्छामि संगमम् ।
यदेतदुक्तं भवता संप्रति द्विजसत्तम ।
वृणीष्व च वरान्विप्र यानिच्छसि यथाविधि ।
अब्रवीच्चैव तद्वाक्यं राजा राजीवलोचनः ॥ २०
सत्यमेतत्त्वया विप्र यथोक्तं नान्यथा मृषा ॥ २१
ततः प्रहस्य भगवांस्तनुर्धर्मभृतां वरः ।
पुत्रमस्यानयत्क्षिप्रं तपसा च श्रुतेन च ॥ २२
स समानीय तत्पुत्रं तमुपालभ्य पार्थिवम् ।
आत्मानं दर्शयामास धर्मं धर्मभृतांवरः ॥ २३
स दर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनम् ।
विपाप्मा विगतक्रोधश्चचार वनमन्तिकात् ॥ २४
एतद्दृष्टं मया राजंस्त्वत्तश्च वचनं श्रुतम् ।
आशामपनय त्वाशु ततः कृषतरीमिमाम् ॥ २५
भीष्म उवाच ।
स तथोक्तस्तदा राजन्नृषभेण महात्मना ।
सुमित्रोऽपानयत्क्षिप्रमाशां कृशतरीं ततः ॥ २६
एवं त्वमपि कौन्तेय श्रुत्वा वाणीमिमां मम ।
स्थिरो भव महाराज हिमवानिव निश्चलः ॥ २७

---

आशया कृतः हतः । कृ हिंसायामित्यस्य रूपम् ॥ ४ ॥ आशायाः आशावतः समं अन्यत् कृशत्वेन समं किमपि नास्ति तस्याः तद्गृहीतार्थस्य ॥ ९ ॥ कृशाकृशे य आशाजितः स कृशः । येनाशा जिता स पुष्ट इत्यर्थः । तस्यैव आशाविषयस्यैव ॥ १० ॥ आदरेणाशां प्रदर्श्य योऽर्थिनं नोपकुरुते तत्र या आशा सा अतिकृशा । मया मत्तः । दीनत्वसंपादकत्वात् ॥ १४ ॥ तथायुक्ताः प्रदानं स्थितमिति शब्दयुक्ताः ॥ १८ ॥ उपालभ्य तत्रापराधं स्थापयित्वा ॥ २३ ॥

त्वं हि श्रुत्वा च पृष्ट्वा च कृच्छ्रेष्वर्थेषु तेष्विह । श्रुत्वा मम महाराज न संतप्तुमिहार्हसि ॥ २८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

## एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

यमेन गौतमंप्रति मातापित्रोः परिचर्यायास्तदृणापनोदनोपायत्वकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
नामृतस्येव पर्याप्तिर्ममास्ति ब्रुवति त्वयि ।
[यथाहि स्वात्मवृत्तिस्थस्तथा तृप्तोऽस्मि भारत ॥] १
तस्मात्कथय भूयोऽपि त्वं ममेह पितामह ।
[न हि तृप्तिमहं यामि पिबन्धर्मामृतं हि ते ॥] २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गौतमस्य च संवादं यमस्य च महात्मनः ॥ ३
पारियात्रं गिरिं प्राप्य गौतमस्याश्रमो महान् ।
वसते गौतमो यत्र तपसा दग्धकिल्बिषः ॥ ४
षष्टिं वर्षसहस्राणि सोऽतप्यद्गौतमस्तपः ।
तमुग्रतपसा युक्तं भावितं सुमहामुनिम् ॥ ५
उपयातो नरव्याघ्र लोकपालो यमस्तदा ।
तमपश्यत्सुतपसमृषिं वै गौतमं तदा ॥ ६
स तं विदित्वा ब्रह्मर्षियममागतमोजसा ।
प्राञ्जलिः प्रणतो भूत्वा उपसृप्तस्तपोधनः ॥ ७
तं धर्मराजो दृष्ट्वैव नमस्कृत्य द्विजोत्तमम् ।
न्यमन्त्रयत धर्मेण क्रियतां किमिति ब्रुवन् ॥ ८
गौतम उवाच ।
मातापितृभ्यामानृण्यं किं कृत्वा समवाप्नुयात् ।
कथं च लोकानाप्नोति पुरुषो दुर्लभाञ्शुभान् ॥ ९
यम उवाच ।
तपःशौचवता नित्यं सत्यधर्मरतेन च ।
मातापित्रोरहरहः पूजनं कार्यमञ्जसा ॥ १०
अश्वमेधैश्च यष्टव्यं बहुभिः स्वाप्तदक्षिणैः ।
तेन लोकानवाप्नोति पुरुषोऽद्भुतदर्शनान् ॥ ११

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

भीष्मेण युधिष्ठिरंप्रति राज्ञा ब्रह्मस्ववर्जं आपदि प्रजापीडनेनापि कोशवृद्धेरवश्यं कर्तव्यत्वोक्तिः ॥ १ ॥

युधिष्ठिर उवाच ।
मित्रैः प्रहीयमाणस्य बह्वमित्रस्य का गतिः ।
राज्ञः संक्षीणकोशस्य बलहीनस्य भारत ॥ १
दुष्टामात्यसहायस्य श्रुतमन्त्रस्य सर्वतः ।
राज्यात्प्रच्यवमानस्य गतिमन्यामपश्यतः ॥ २
परचक्राभियातस्य परराष्ट्राणि मृद्नतः ।
विग्रहे वर्तमानस्य दुर्बलस्य बलीयसा ॥ ३
असंविहितराष्ट्रस्य देशकालावजानतः ।
अप्राप्यं च भवेत्सान्त्वं भेदो वाऽप्यतिपीडनात् ।
जीवितं त्वर्थहेतोर्वा तत्र किं सुकृतं भवेत् ॥ ४
भीष्म उवाच ।
गुह्यं मा धर्ममप्राक्षीरतीव भरतर्षभ ।
प्रवक्तुं नोत्सहे पृष्टो धर्ममेतं युधिष्ठिर ॥ ५

मम मत्तः ॥ २८ ॥ अष्टाविंशत्यधिकशततमोऽध्यायः ॥१२८॥ पर्याप्तिरलंभावस्तृप्तिरिति यावत् ॥ १ ॥ न्यमन्त्रयत त संमुखीकृतवान् ॥ ८ ॥ अश्वमेधैरिति स्वधर्ममात्रस्योपलक्षणम् ॥ ११ ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

सर्वतः सर्वैः ॥ २ ॥ परस्य चक्र राष्ट्रं प्रत्यभियानस्य । बलीयसा सार्धम् ॥ ३ ॥ असंविहितमसम्यग्रक्षितं राष्ट्रं येन तस्य । अतिपीडनात् परकीयामात्यादीनां भेदोऽप्यप्राप्यः ॥ ४ ॥ मा मामप्राक्षीः पृष्टवानसि । गुह्यं धर्मज्ञ मा प्राक्षीरतीव

धर्मो ह्यणीयान्वचनाद्बुद्धेश्च भरतर्षभ ।
श्रुत्वौपम्यं सदाचारैः साधुर्भवति स क्वचित् ॥ ६
कर्मणा बुद्धिपूर्वेण भवत्याढ्यो न वा पुनः ।
तादृशोऽयमनुप्रश्नस्तद्व्यायस्व स्वया धिया ॥ ७
उपायं धर्मबहुलं यात्रार्थं शृणु भारत ।
नाहमेतादृशे धर्मे बुभूषे धर्मकारणात् ॥ ८
दुःखादान इह ह्येष स्यात्तु पश्चात्क्षमो मम ।
अभिगम्य मतीनां हि सर्वासामेव निश्चयम् ॥ ९
यथायथा हि पुरुषो नित्यं शास्त्रमवेक्षते ।
तथातथा विजानाति विज्ञानं चास्य रोचते ॥१०
अविज्ञानादयोगो हि पुरुषस्योपजायते ।
विज्ञानादपि योगश्च योगो भूतिकरः परः ॥ ११
अशङ्कमानो वचनमनसूयुरिदं शृणु ।
राज्ञः कोशक्षयादेव जायते बलसंक्षयः ॥ १२
कोशं संजनयेद्राजा नित्यमेभ्यो यथाबलम् ।
कालं प्राप्यानुगृह्णीयादेष धर्मोऽत्र सांप्रतम् ॥ १३
उपायधर्मं प्राप्यैनं पूर्वैराचरितं जनैः ।
अन्यो धर्मः समर्थानामापत्स्वन्यश्च भारत ॥ १४
प्रकार्यं प्रोच्यते धर्मो वृत्तिर्धर्मे गरीयसी ।
धर्मं प्राप्य यथान्यायं न बलीयान्निषीदति ॥ १५
यस्माद्धर्मस्योपचितिरेकान्तेन न विद्यते ।
तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः ॥ १६
अधर्मो जायते तस्मिन्निति वै कवयो विदुः ।
अनन्तरं क्षत्रियस्य तत्र किं विचिकित्स्यते ॥ १७
यथास्य धर्मो न ग्लायेन्नेयाच्छत्रुवशं यथा ।
तत्कर्तव्यमिहेत्याहुर्नात्मानमवसादयेत् ॥ १८
सर्वात्मनैव धर्मस्य न परस्य न चात्मनः ।
सर्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः ॥ १९
तत्र धर्मविदस्तात निश्चयो धर्मनैपुणैः ।
उद्यमं जीवनं क्षात्रे बाहुवीर्यादिति श्रुतिः ॥२
क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति ।
अन्यत्र तापसस्वाच्च श्रोत्रियस्वाच्च भारत ॥ २
यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत् ।
अभोज्यमपि चाश्नीयात्तत्रेदं नात्र संशयः ॥२
पीडितस्य किमद्वारमुत्पथेनार्दितस्य च ।
अद्वारतः प्रद्रवति यथा भवति पीडितः ॥ २
तस्य कोशबलग्लान्यां सर्वलोकपराभवः ।
भैक्षचर्या न विहिता न च विट्शूद्रजीविका ॥२
स्वधर्मानन्तरा वृत्तिर्याऽन्यामनुपजीवतः ।
जहतः प्रथमं कल्पमनुकल्पेन जीवनम् ॥ २
आपद्गतेन धर्माणामन्यायेनोपजीवनम् ।
अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये ॥ २
क्षत्रिये संशयः कस्मादित्येतन्निश्चितं सदा ।
आददीत विशिष्टेभ्यो नावसीदेत्कथंचन ॥ २
आर्तानां रक्षितारं च प्रजानां क्षत्रियं विदुः ।
तस्मात्संरक्षता कार्यमादानं क्षत्रबन्धुना ॥ २८
अन्यत्रापि विहिंसाया वृत्तिर्नेहास्ति कस्यचित् ।
अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः ॥ २९
न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम् ।
विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता ॥ ३०
परस्पराभिहरणं राज्ञा राष्ट्रेण चापदि ।
नित्यमेव हि कर्तव्यमेष धर्मः सनातनः ॥ ३१
राजा राष्ट्रं यथापत्सु द्रव्यौघैः परिरक्षति ।
राष्ट्रेण राजा व्यसने परिरक्ष्यस्तथा भवेत् ॥ ३२
कोशं दण्डं बलं मित्रं यदन्यदपि संचितम् ।
न कुर्वीतान्तरं राष्ट्रे राजा परिगतः क्षुधा ॥ ३३
बीजं भक्तेन संपाद्यमिति धर्मविदो विदुः ।
अत्रैतच्छम्बरस्याहुर्महामायस्य दर्शनम् ॥ ३४

---

भरतर्षभ । अपृष्टो नोत्सहे वक्तुं धर्ममेतं युधिष्ठिरेति झ. पाठः ॥ ५ ॥ वचनाच्छास्त्रात् ॥ ६ ॥ यात्रार्थं राज्ञां व्यवहारनिर्वाहार्थम् । बुभूषे प्राप्तुमिच्छामि ॥ ८ ॥ एष उपायो दुःखादानः प्रजानां दुःखेनाऽऽदीयतेऽङ्गीक्रियते ॥ ९ ॥ अयोग उपायाभावः ॥ ११ ॥ अनुगृह्णीयात् प्राकर्षिताः प्रजा इति शेषः ॥ १३ ॥ उपायधर्ममुपधर्मम् । अमुख्यधर्ममितियावत् ॥ १४ ॥ अनन्तरं आपन्निवृत्त्युत्तरं तत्र पूर्वोक्ताधर्मे किं विचिकित्स्यते प्रायश्चित्तादिकं कराग्रहणादिकं च विधीयते दोषपरिहारार्थमित्यर्थः ॥ १७ ॥ धर्मस्येति कर्मणिषष्ठी । परस्य धर्मं नोज्जिहीर्षेन्नाप्यात्मनो धर्ममुज्जिहीर्षेदपि तु आत्मानमेव उज्जिहीर्षेत् । स्वपरधर्मलोपेऽप्यात्मानमेवोद्धर्तुमिच्छेदित्यर्थः ॥ १९ ॥ शङ्खे ललाटास्थ्नि लिखितां वृत्तिम् । दिष्टमात्रालम्बिना राज्ञा जीवितुं न शक्यम् ॥ ३० ॥ अन्तरं दूरतः ॥ ३३ ॥ बीजं भक्तेन संपादितं चेदग्रे भक्तदौर्बल्यं यथाभवति एवमल्पधनो

धिक्तस्य जीवितं राज्ञो राष्ट्रं यस्यावसीदति ।
अवृत्त्यान्यमनुष्योऽपि यो वैदेशिक इत्यपि ॥ ३५
राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम् ।
तन्मूलं सर्वधर्माणां धर्ममूलाः पुनः प्रजाः ॥ ३६
नान्यानपीडयित्वेह कोशः शक्यः कुतो बलम् ।
तदर्थं पीडयित्वा च न दोषं प्राप्तुमर्हति ॥ ३७
अकार्यमपि कार्यार्थं क्रियते यज्ञकर्मसु ।
एतस्मिन्कारणे राजा न दोषं प्राप्तुमर्हति ॥ ३८
अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमथाप्यन्यत्तत्सर्वं ह्यर्थकारणम् ।
एवं बुद्ध्या संप्रपश्येन्मेधावी कार्यनिश्चयम् ॥ ३९
यज्ञार्थमन्यद्भवति यज्ञोऽन्यार्थस्तथा परः ।
यज्ञस्यार्थार्थमेवान्यत्तत्सर्वं यज्ञसाधकम् ॥ ४०
उपमामत्र वक्ष्यामि धर्मतत्त्वप्रकाशिनीम् ॥ ४१
यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ।
द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि ॥ ४२
ते चापि निपतन्तोऽन्यान्निघ्नन्त्यपि वनस्पतीन् ।
एवं कोशस्य महतो ये नराः परिपन्थिनः ।
तानहत्वा न पश्यामि सिद्धिमत्र परंतप ॥ ४३
धनेन जयते लोकाविमं चामुं च भारत ।
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा ॥ ४४
सर्वोपायैराददीत धनं यज्ञप्रयोजनम् ।
न तुल्यदोषः स्यादेवं कार्याकार्येषु भारत ॥ ४५
नोभौ संभवतो राजन्कथंचिदपि भारत ।
न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ॥ ४६
यदिदं दृश्यते वित्तं पृथिव्यामिह किंचन ।
ममेदं स्यान्ममेदं स्यादित्येवं मन्यते जनः ॥ ४७
न च राज्ञः समो धर्मः कश्चिदस्ति कथंचन ।
धर्मः संशब्दितो राज्ञामापद्धर्मस्ततोऽन्यथा ॥ ४८
ज्ञानेन कर्मणा चान्ये तपन्त्यन्ये तपस्विनः ।
बुद्ध्या दाक्ष्येण चैवान्ये चिन्वन्ति धनसंचयान् ॥ ४९
अधनं दुर्बलं प्राहुर्धनेन बलवान्भवेत् ।
सर्वं बलवतः प्राप्यं सर्वं तरति कोशवान् ॥ ५०
कोशो धर्मश्च कामश्च परो लोकस्तथा ह्ययम् ।
तं धर्मेण विलिप्सेत नाधर्मेण कदाचन ॥ ५१

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि राजधर्मपर्वणि त्रिंशदधिक-शततमोऽध्यायः ॥ १३० ॥

## समाप्तं च राजधर्मपर्व ॥ १ ॥

---

राजा प्रजाभिर्न रक्षितो नश्यति । नष्टे च तस्मिन्सर्वाः प्रजा अपि नश्यन्तीत्यर्थः । एतत्पूर्वार्धोक्तं दर्शनं शास्त्रम् ॥ ३४ ॥ अवृत्त्या जीविकाया अभावेन यस्य राष्ट्रं अवसीदति यो वा अन्यमनुष्यः यो वा वैदेशिको देशान्तरोपजीवी तस्य राज्ञो जीवितं धिक् ॥ ३५ ॥ राज्ञो मूलं कोशो बलं च । कोशो बलस्य मूलं तद्बलं धर्माणां मूलम् । अतः सर्वस्य मूलभूतं कोशं वर्ध-येत् ॥ ३६ ॥ अन्यत् आपदि प्रजापीडनमप्यर्थार्थं भवति । अपरं अपीडनं विपरीतं अनर्थार्थं भवति । यदप्यन्यत् अन-र्थार्थं अर्थाभावार्थं कुञ्जरपालनादि भवति तदेवेहार्थस्य कारणं उत्पादकं भवति ॥ ३९ ॥ यथा पश्वादिकं यज्ञार्थं यज्ञश्च चित्तसंस्कारार्थः । पश्वादिकं यज्ञः संस्कारश्चेति त्रयं अर्थार्थं मोक्षार्थं भवति । एवं दण्डः कोशार्थं कोशो बलार्थं बलं शत्रु-पराभवार्थम् । कोशो बलं जयश्चेति त्रयं राष्ट्रपुष्ट्यर्थमिति भावः ॥ ४० ॥ सामन्ताः प्रतिपक्षभूताः ॥ ४२ ॥ यथा नास्त्यधन-स्तथेति जीवन्मृतत्वमधनस्योक्तम् ॥ ४४ ॥ कार्याकार्येषु विहितनिषिद्धेषु आपदि प्रजापीडनं विहितं नादेवमापदि निषिद्धं । तथाभूतेष्वर्थेषु तुल्यदोषो न स्यादेककालानुसारेण कार्यमप्यकार्यं भवत्यकार्यमपि कार्यं भवति तत्र विपरीतं न प्रतिपद्येतेति भावः ॥ ४५ ॥ उभौ धनसंग्रहत्यागावेककालेन्दु-रुषे न संभवतः ॥ ४६ ॥ अन्येषु त्यागार्थंसंभवमाह यदिदमिति ॥ ४७ ॥ न च राज्यसमो धर्म इति झ. पाठः । अतएव राज्ञो बहुकरादानं पापमूलमापदि तु न तथा भवतीत्यर्थः ॥ ४८ ॥ त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

# ( अथापद्धर्मपर्व ॥ २ ॥ )

## एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

भीष्मेण युधिष्ठिरंप्रति आपदि राज्ञा सर्वस्वत्यागेनाप्यात्मनो रक्षणीयत्वकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु ।
परिशङ्कितमुख्यस्य दुष्टमन्त्रस्य भारत ॥ १
विरक्तराज्यपौरस्य निर्द्रव्यनिचयस्य च ।
असंभावितमित्रस्य भिन्नामात्यस्य सर्वतः ॥ २
परचक्राभियातस्य दुर्बलस्य बलीयसा ।
आपन्नचेतसो ब्रूहि किं कार्यमवशिष्यते ॥ ३
भीष्म उवाच ।
बाह्यश्चेद्विजिगीषुः स्याद्धर्मार्थकुशलः शुचिः ।
जवेन सन्धिं कुर्वीत पूर्वं पूर्वं विमोक्षयेत् ॥ ४
[योऽधर्मविजिगीषुः स्याद्बलवान्पापनिश्चयः ।]
आत्मनः सन्निरोधेन सन्धिं तेनापि रोचयेत् ॥ ५
अपास्य राजधानीं वा तरेदन्येन वाऽऽपदम् ।
तद्भावभावो द्रव्याणि जीवन्पुनरुपार्जयेत् ॥ ६
यास्तु कोशबलत्यागाच्छक्यास्तरितुमापदः ।
कस्तत्राधिकमात्मानं संत्यजेदर्थधर्मवित् ॥ ७

अपराधाज्जुगुप्सेत का सपत्नधने दया ।
न त्वेवात्मा प्रदातव्यः शक्ये सति कथंचन ॥
युधिष्ठिर उवाच ।
आभ्यन्तरे च कुपिते बाह्ये चोपनिपीडिते ।
क्षीणे कोशे श्रुते मन्त्रे किं कार्यमवशिष्यते ॥
भीष्म उवाच ।
क्षिप्रं वा सन्धिकामः स्यात्क्षिप्रं वा तीक्ष्णविक्रम
यदाऽपनयनं क्षिप्रमेतद्वै सांपरायिकम् ॥ १
अनुरक्तेन पुष्टेन हृष्टेन जगतीपतिः ।
अल्पेनापि स्वसैन्येन भूमिं जयति भूमिपः ॥ १
हतो वा दिवमारोहेद्धत्वा वा सुखमावहेत् ।
युद्धे हि संत्यजन्प्राणाञ्शक्रस्यैति सलोकताम् ॥१
सर्वलोकागमं कृत्वा मृदुत्वं गन्तुमेव च ।
विश्वासाद्विनयं कुर्यात्संजह्याद्वाऽप्युपानहौ ॥ १
अपचिक्रमिषुः क्षिप्रं सेनां स्वां परिसान्त्वयन् ।
विलङ्घयित्वा सत्रेण ततः स्वयमुपक्रमेत् ॥ १

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

---

## द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणानामापदि राज्ञा असाधुजनधनापहारेणापि तद्रक्षणस्य करणीयत्वोक्तिः ॥ १ ॥

युधिष्ठिर उवाच ।
हीने परमके धर्मे सर्वलोकातिलङ्घने ।
सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने ॥ १
केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ।

---

सानुक्रोशस्य बन्धुक्षयभयात् योद्धुमनिच्छतः । परिशङ्कितमुख्यस्य अमात्येषु शङ्कावतः ॥ १ ॥ द्रव्याभावादेव न संभावितानि आवर्जितानि मित्राणि येन तस्य भिन्नाः शत्रुभिर्वशीकृता अमात्या यस्य ॥ २ ॥ बलीयसा शत्रुणा आपन्नं व्याकुलीकृतं चेतो यस्य ॥ ३ ॥ मोक्षयेत् साम्नैवेत्यर्थः ॥ ४ ॥ अधर्मप्रधानो विजिगीषुरधर्मविजिगीषुः ॥ ५ ॥ दुष्टतमे तु राज्यधनं त्यक्त्वा आत्मानं रक्षेदित्याह यास्त्विति । यास्तु स्युः केवलत्यागादिति ङ. थ. पाठः ॥ ७ ॥ आभ्यन्तरेऽमात्यादौ बाह्ये दुर्गराष्ट्रादौ ॥ ९ ॥ धर्मिष्ठे बाह्ये क्षिप्रं संधिः । अधर्मिष्ठे तु तीक्ष्णः पराक्रमः कर्तव्यः । यदा त्वेवं तदा अपनयनं शत्रोर्दूरीकरणं भवति । अथवा सांपरायिकं धर्मयुद्धेन मरणे परलोकहितं भवति ॥ १० ॥ विश्वासात् विश्वासं प्रापय्य विनयं कुर्यात् मृदुर्भवेत् । नतु युद्धमेव हठेन श्रयेत् ॥ १३ ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

हीने धर्मे राज्ञामिति शेषः । परमके सर्वोपायेन ब्राह्मण रक्ष्या इत्यस्मिन् ॥ १ ॥ जघन्ये आपद्बहुले ब्राह्मणः केन

असंत्यजन्पुत्रपौत्राननुक्रोशात्पितामह ॥ २
भीष्म उवाच ।
विज्ञानबलमास्थाय जीवितव्यं तथा गते ।
सर्वं साध्वर्थमेवेदमसाध्वर्थं न किंचन ॥ ३
असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा कृच्छ्रधर्मविदेव सः ॥ ४
अरोषेणात्मनो राजन्राज्ये स्थितिमकोपयन् ।
अदत्तमप्याददीत भ्रातुर्वित्तं ममेति वा ॥ ५
विज्ञानबलपूतो यो वर्तते निन्दितेष्वपि ।
वृत्तिविज्ञानवान्धीरः कस्तं वक्तुमिहार्हति ॥ ६
येषां बहुकृता बुद्धिस्तेषामन्या न रोचते ।
तेजसा ते प्रवर्तन्ते बलवन्तो युधिष्ठिर ॥ ७
यदेव प्रकृतं शास्त्रं जनस्तदनुवर्तते ।
तदेवमध्यासेवन्ते मेधावी वाऽप्यथोत्तरम् ॥ ८
ऋत्विक्पुरोहिताचार्यान्सत्कृतानभिसत्कृतान् ।
न ब्राह्मणान्घातयीत दोषान्प्राप्नोति घातयन् ॥ ९
एतत्प्रमाणं लोकस्य चक्षुरेतत्सनातनम् ।
तत्प्रमाणोऽवगाहेत तेन तत्साध्वसाधु वा ॥ १०
बहवो ग्रामवास्तव्या दोषान्ब्रूयुः परस्परम् ।
न तेषां वचनाद्राजा सत्कुर्याद्घातयीत वा ॥ ११
न वाच्यः परिवादो वै न श्रोतव्यः कथंचन ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ १२
न सतां शीलमेतद्वै परिवादो न पैशुनम् ।
गुणानामेव वक्तारः सन्तो नित्यं युधिष्ठिर ॥ १३
यथा समधुरौ दम्यौ सुदान्तौ साधुवाहिनौ ।
धुरमुद्यम्य वहतस्तथा वर्तेत वै नृपः ॥ १४
यथायथाऽस्य बहवः सहायाः स्युस्तथा चरेत् ।
आचारमेव मन्यन्ते गरीयो धर्मलक्षणम् ॥ १५
अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः ।
अर्थे क्षीणेऽथवा लुब्धास्ते ब्रूयुर्वाक्यमीदृशम् ॥ १६
आर्षमप्यत्र पश्यन्ति विकर्मस्थस्य पातनम् ।
न चार्षात्सदृशं किंचित्प्रमाणं दृश्यते क्वचित् ॥ १७
देवा ह्यपि विकर्मस्थं घातयन्ति नराधमम् ।
व्याजेन विन्दन्वित्तं हि धर्मतः परिहीयते ॥ १८
सर्वतः सत्कृतः सद्भिर्भूतिप्रवरकारणैः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति ॥ १९
यश्चतुर्गुणसंपन्नं धर्मं वेद स धर्मवित् ।
अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥ २०
यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत् ।
लक्षेद्रुधिरपातेन तथा धर्मपदं नयेत् ॥ २१
यथा सम्यग्वितेन पथा गन्तव्यमच्युत ।
राजर्षीणां वृत्तमेतदेवं गच्छ युधिष्ठिर ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

भीष्मेण युधिष्ठिरंप्रति राज्ञा यथाकथंचित्कोशवृद्धेः कर्तव्यत्वोक्तिः ॥ १ ॥ तथा दस्युभिरापद्यपि सावशेषं परस्वापहारणस्य धर्म्यत्वोक्तिः ॥ २ ॥

भीष्म उवाच ।
स्वराष्ट्रात्परराष्ट्राच्च कोशं संजनयेन्नृपः ।

जीवेदित्यस्य ब्राह्मणं कथं रक्षेदित्यर्थः ॥ २ ॥ साध्वर्थं सतामर्थे ॥ ३ ॥ संक्रमं आगमनमार्गम् ॥ ४ ॥ स्थितिं पालनधर्मम्। स्थानभ्रष्टस्य राज्ञो ब्राह्मणपालनार्थं सर्वस्वहरणेऽपि दोषो नास्तीत्यर्थः ॥ ५ ॥ वक्तुं निन्दितुम् ॥ ६ ॥ अत्यन्तापद्यपि ऋत्विगादीन् धनवतोऽपि न घातयीत धनहरणेन न हिंस्यादित्यर्थः। ऋत्विक्पुरोहिताचार्यैः सत्कृतैरपि सत्कृतः । नाऽब्राह्मणान्याजयीत दोषान्प्राप्नोति याजयन्निति ट. थ. द. पाठः ॥ ९ ॥ ग्रामवास्तव्या ग्रामवासिनः ॥ ११ ॥ एवं ऋत्विगादीनामदण्डनं शङ्खेन लिखितस्य भ्रातुरपि हस्तच्छेदः कृतस्तादृशा धर्मपराः ॥ १६ ॥ सद्भिर्मन्वादिभिः सत्कृतः । भूतिप्रवरकारणैः भूतिप्रवरा ईश्वराः कारणानि पारम्पर्यागतानि कुलदेशग्रामादिपरिगृहीतानि तैरपि निमित्तैः सत्कृतः । मन्वादिभिरनुक्तोऽपि शिष्टैरादृत इत्यर्थः । हृदयेनाभ्यनुज्ञातः हेतुद्वयाभावेऽपि स्वयं च यो धर्मत्वेन निश्चितः ॥ १९ ॥ चत्वारो गुणाः आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति । य एषामविरुद्धश्चतुर्गुणसंपन्नः ॥ २० ॥ पदं स्थानं लक्षेल्लक्षयेत् । नयेत् अन्यान्प्रापयेत् । युक्त्येति शेषः ॥ २१ ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

कोशाद्धि धर्मः कौन्तेय राज्यमूलं प्रवर्तते ॥ १
तस्मात्संजनयेत्कोशं सत्कृत्य परिपालयेत् ।
परिपाल्यानुगृह्णीयादेष धर्मः सनातनः ॥ २
स कोशः शुद्धभावेन न नृशंसेन जायते ।
मध्यमं पदमास्थाय कोशसंग्रहणं चरेत् ॥ ३
अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम् ।
अबलस्य कुतो राज्यमराज्ये श्रीर्भवेत्कुतः ॥ ४
उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणं तथा ।
तस्मात्कोशं बलं मित्रमथ राजा विवर्धयेत् ॥ ५
हीनकोशं हि राजानमवमन्यन्ति शत्रवः ।
न चास्याल्पेन तुष्यन्ति कर्मणाऽप्युत्सहन्ति च ॥ ६
श्रियो हि कारणाद्राजा सत्क्रियां लभते पराम् ।
साऽस्य गूहति पापानि वासो गुह्यमिव स्त्रियाः ॥ ७
ऋद्धिमस्यानुतप्यन्ते पुरा विप्रकृता नराः ।
सालावृका इवाजस्रं जिघांसूनेव विन्दति ।
ईदृशस्य कुतो राज्यं सुखं भरतसत्तम ॥ ८
उद्यच्छेदेव न ग्लायेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥ ९
अप्यरण्यं समाश्रित्य चरेन्मृगगणैः सह ।
न त्वेवोद्रिक्तमर्यादैर्दस्युभिः सहितश्चरेत् ॥ १०

दस्यूनां सुलभा सेना रौद्रकर्मसु भारत ।
एकान्ततो ह्यमर्यादात्सर्वोऽप्युद्विजते जनः ॥ १
दस्यवोऽप्यभिशङ्कन्ते निरनुक्रोशकारिणः ॥ १
स्थापयेदेव मर्यादां जनचित्तप्रसादिनीम् ।
अल्पाप्यर्थेषु मर्यादा लोके भवति पूजिता ॥ १
नायं लोकोऽस्ति न पर इति व्यवसितो जनः
नालं गन्तुमिहाश्वासं नास्तिक्यभयशङ्कितैः ॥ १
यथा सद्भिः परादानमहिंसा दस्युभिस्तथा ।
अनुरज्यन्ति भूतानि समर्यादेषु दस्युषु ॥ १
अयुध्यमानस्यादानं दारामर्शः कृतघ्नता ।
ब्रह्मवित्तस्य चादानं निःशेषकरणं तथा ॥ १
स्त्रिया मोषः पथिस्थानं साधुष्वेव विगर्हितम् ।
सदोष एव भवति दस्युरेतानि वर्जयेत् ॥ १
अभिसंदधते ये च विनाशायास्य भारत ।
सशेषमेवोपलभ्य कुर्वन्तीति विनिश्चयः ॥ १
तस्मात्सशेषं कर्तव्यं स्वाधीनमपि दस्युभिः ।
न बलस्थोऽहमस्मीति नृशंसानि समाचरेत् ॥ १
सशेषकारिणस्तत्र शेषं पश्यन्ति सर्वशः ।
निःशेषकारिणो नित्यं निःशेषकरणाद्भयम् ॥ २

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

---

## चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

भीष्मेण युधिष्ठिरंप्रति बलप्रशंसनम् ॥ १ ॥ तथा पापकारिणां तत्परिहारोपायकथनम् ॥ २ ॥

भीष्म उवाच ।
'अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।'
अत्र कामन्दवचनं कीर्तयन्ति पुराविदः ।
प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः ॥
तौ तु न व्यवधातव्यौ परोक्षा धर्मयातना ।
अधर्मो धर्म इत्येतद्यथा वृक्षफलं तथा ॥

---

उच्चैर्वृत्तेः महतः ॥ ५ ॥ वासः पापमिव स्त्रिय इति ट. ड. थ. पाठः ॥ ७ ॥ विप्रकृताः सालावृकवत् जिघांसूनेव विन्दन्ति आश्रयन्ति कपटेन हन्तुम् । आर्षो वचनव्यत्ययः ॥ ८ ॥ दस्युभिः दस्युप्रायैरमात्यैः ॥ १० ॥ अत्यन्तापन्नस्य वनस्था दस्यवोऽपि कार्यकरा इत्याह दस्यूनामिति । दस्यूनां सुलभां सेनां रौद्रकर्मसु कारयेदिति ध. पाठः । तेष्वपि सत्येन मार्दवेन च स्थैर्यमित्याह एकान्तत इति ॥ ११ ॥ जनः प्राकृतः । अलं पर्याप्तं युक्तमित्यर्थः ॥ १४ ॥ सद्भिर्दस्युभिः परादानं परस्वहरणमपि कृतं अहिंसा भवति तथा वक्ष्ये इ शेषः ॥ १५ ॥ निःशेषकरणं सर्वहरणम् ॥ १६ ॥ स्त्रिया कन्यायाः मोषश्चौर्यम् ॥ १७ ॥ यस्मादेवं तस्मात् सशेषमे परलुम्पनं कर्तव्यम् ॥ १९ ॥ यो यथा करोति तथैव प्रजा कुर्वन्तीत्याह सशेषेति ॥ २० ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

यथा वृकपदं तथेति झ. द. पाठः ॥ २ ॥

धर्माधर्मफले जातु ददर्शेह न कश्चन ।
बुभूषेद्बलमेवैतत्सर्वं बलवतो वशे ॥ ३
श्रियं बलममात्यांश्च बलवानिह विन्दति ।
यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम् ॥ ४
बह्वपथ्ये बलवति न किंचित्क्रियते भयात् ।
उभौ सत्याधिकारौ तौ त्रायेते महतो भयात् ॥ ५
अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते ।
बले प्रतिष्ठितो धर्मो धरण्यामिव जंगमः ॥ ६
धूमो वायोरिव वशे बलं धर्मोऽनुवर्तते ।
अनीश्वरो बलं धर्मो द्रुमं वल्लीव संश्रिता ॥ ७
वशे बलवतां धर्मः सुखं भोगवतामिव ।
नास्त्यसाध्यं बलवतां सर्वं बलवता जितम् ॥ ८
दुराचारः क्षीणबलः परिमाणं न गच्छति ।
अथ तस्मादुद्विजते सर्वो लोको वृकादिव ॥ ९
अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितम् ।
जीवितं यदधिक्षिप्तं यथैव मरणं तथा ॥ १०
यदेवमाहुः पापेन चारित्रेण विवक्षितम् ।
सुभृशं तप्यते तेन वाक्शल्येन परिक्षतः ॥ ११
अत्रैतदाहुराचार्याः पापस्य परिमोक्षणे ।
त्रयीं विद्यामुपासीत तथोपासीत वै द्विजान् ॥ १२
प्रसादयेन्मधुरया वाचा चाप्यथ कर्मणा ।
महामनाश्चैव भवेद्विवहेच्च महाकुले ॥ १३
इत्यस्मीति वदेदेव परेषां कीर्तयेद्गुणान् ।
जपेदुदकशीलः स्यात्पेशलो नातिजल्पकः ॥ १४
ब्रह्म क्षत्रं संप्रविशेद्बहु कृत्वा सुदुष्करम् ।
उच्यमानो हि लोकेन बहु तत्तदचिन्तयन् ॥ १५
उपप्राप्यैवमाचारं क्षिप्रं बहुमतो भवेत् ।
सुखं च वित्तं भुञ्जीत वृत्तेनैकेन गोपयेत् ॥ १६
'अपि तेभ्यो मृगान्हत्वा नयेच्च सततं वने ।
यस्मिन्न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।'
लोके च लभते पूजां परत्रेह महत्फलम् ॥ १७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

---

## पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

भीष्मेण युधिष्ठिरंप्रति दस्युभावेऽपि शास्त्रमर्यादानुसारिणः परलोकप्राप्तौ दृष्टान्ततया कापच्यचरितोपन्यासः ॥ १ ॥

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा दस्युः समर्यादो दस्युत्वात्सिद्धिमाप्तवान् ॥ १
प्रहर्ता मतिमाञ्शूरः श्रुतवान्सुनृशंसवान् ।
रक्षन्नाश्रमिणां धर्मं ब्रह्मण्यो गुरुपूजकः ॥ २
निषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः ।
कापच्यो नाम नैषादिर्दस्युत्वात्सिद्धिमाप्तवान् ॥ ३
अरण्ये सायं पूर्वाह्णे मृगयूथप्रकोपिता ।
विधिज्ञो मृगजातीनां नैषादानां च कोविदः ॥ ४
सर्वकाननदेशज्ञः पारियात्रचरः सदा ।
धर्मज्ञः सर्ववर्णानाममोघेषुर्दृढायुधः ॥ ५
अप्यनेकशतां सेनामेक एव जिगाय सः ।
स वृद्धावन्धपितरौ महारण्येऽभ्यपूजयत् ॥ ६
मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि ।
सत्कृत्य भोजयामास सम्यक्परिचचार ह ॥ ७
आरण्यकान्प्रव्रजितान्ब्राह्मणान्परिपालयन् ।
अपि तेभ्यो मृगान्हत्वा निनाय सततं वने ॥ ८
येऽस्मान्न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
तेषामासज्य गेहेषु कल्य एव स गच्छति ॥ ९
तं बहूनि सहस्राणि ग्रामणीत्वेऽभिवव्रिरे ।

---

अति अतिशयितम् ॥ ६ ॥ अपध्वस्तः ऐश्वर्याच्च्युतः ॥ १० ॥ अत्राधर्मेण धनार्जने कृते सति ॥ १२ ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

कायव्यो नामेति झ. पाठः । कापव्यो नामेति ट. पाठः । काश्यपो नामेति ध. पाठः ॥ ३ ॥ निपातानां च कोविद इति ड. थ. ध. पाठः ॥ ४ ॥ पारियात्रः पर्वतविशेषः ॥ ५ ॥ आसज्य क्वचिन्निधाय । कल्ये प्रातः ॥ ९ ॥

निर्मर्यादानि दस्यूनां निरनुक्रोशवर्तिनाम् ।। १०
दस्यव ऊचुः ।
मुहूर्तदेशकालज्ञः प्राज्ञः शूरो दृढव्रतः ।
ग्रामणीर्भव नो मुख्यः सर्वेषामेव संमतः ।। ११
यथायथा वक्ष्यसि नः करिष्यामस्तथातथा ।
पालयास्मान्यथान्यायं यथा माता यथा पिता ।।१२
कापच्य उवाच ।
मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम् ।
नायुध्यमानो हन्तव्यो न च ग्राह्या बलात्स्त्रियः १३
सर्वथा स्त्री न हन्तव्या सर्वसत्वेषु बुध्यत ।
नित्यं गोब्राह्मणे स्वस्ति योद्धव्यं च तदर्थतः ।।१४
सस्यं च नापि हर्तव्यं सारविघ्नं च मा कृथाः ।
पूज्यन्ते यत्र देवाश्च पितरोऽतिथयश्च ह ।। १५
सर्वभूतेष्वपि वरो ब्राह्मणो मोक्षमर्हति ।
कार्या चापचितिस्तेषां सर्वस्वेनापि भावयेत् ।।१६
यस्य त्वेते संप्रदुष्टास्तस्य विद्यात्पराभवम् ।
न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ।।१७
यो ब्राह्मणान्परिभवेद्विनाशं चापि रोचयेत् ।
सूर्योदय इव ध्वान्ते ध्रुवं तस्य पराभवः ।। १८
इहैव फलमासीनः प्रत्याकाङ्क्षेत सर्वशः ।
येये नो न प्रदास्यन्ति तांस्तांस्तेनाभियास्यसि ।।१९
शिष्ट्यर्थं विहितो दण्डो न वधार्थं विधीयते ।
ये च शिष्टान्प्रबाधन्ते धर्मस्तेषां वधः स्मृतः ।। २०
ये च राष्ट्रोपरोधेन वृद्धिं कुर्वन्ति केचन ।
तानेवानुम्रियेरंस्ते कुणपं कृमयो यथा ।। २१
ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः ।
अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ।।२२
भीष्म उवाच ।
ते सर्वमेवानुचक्रुः कापच्यस्यानुशासनम् ।
वृद्धिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् ।। २३
कापच्यः कर्मणा तेन महतीं सिद्धिमाप्तवान् ।
साधूनामाचरन्क्षेमं दस्यून्पापान्निवर्तयन् ।। २४
इदं कापच्यचरितं यो नित्यमनुचिन्तयेत् ।
नारण्येभ्योऽपि भूतेभ्यो भयमृच्छेत्कथंचन ।। २५
न भयं तस्य मर्त्येभ्यो नामर्त्येभ्यः कथंचन ।
न सतो नासतो राजन्स ह्यरण्येषु गोपतिः ।। २६

।। इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ।। १३५ ।।

---

## षट्त्रिंशदधिकशततमोऽध्यायः ।। १३६ ।।

भीष्मेण युधिष्ठिरंप्रति कोशवृद्ध्यर्थमपहार्यानपहार्यधनविवेचनम् ।। १ ।।

भीष्म उवाच ।
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
येन मार्गेण राजानः कोशं संजनयन्त्युत ।। १
न धनं यज्ञशीलानां हार्यं देवस्वमेव च ।
दस्यूनां निष्क्रियाणां च क्षत्रियो हर्तुमर्हति ।। २
इमाः प्रजाः क्षत्रियाणां रक्ष्या हन्याश्च भारत ।
धनं हि क्षत्रियस्येह द्वितीयस्य न विद्यते ।। ३
तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा ।
अभोज्याश्चौषधीश्छित्त्वा भोज्या एव पचन्त्युत ।।४
यो वै न देवान्न पितॄन्न मर्त्यान्हविषाऽर्चति ।
अनर्थकं धनं तत्र प्राहुर्धर्मविदो जनाः ।।
हरेत्तद्द्रविणं राजन्धार्मिकः पृथिवीतिः ।
न हि न प्रीणयेल्लोकान्न लोको गर्हते नृपम् ।।
असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति ।

---

मावधीस्त्वमित्येकवचनं गणाभिप्रायेण ।। १३ ।। स्वस्ति कल्याणं चिन्तनीयम् ।। १४ ।। सारो विवाहादिकार्यं तत्र विघ्नं मा कृथाः । सस्यं च नोपहन्तव्यं सीरविघ्नं च मा कृथाः इति ट. ड. थ. पाठः ।। १५ ।। अपचितिः पूजा ।। १६ ।। ध्वान्ते ध्वान्तस्य ।। १८ ।। ये ये वणिजः । नः अस्मभ्यम् ।। १९ ।। शिष्ट्यर्थं दुष्टानां शासनार्थम् ।। २० ।। पञ्चत्रिंशदधिकशततमेऽध्यायः ।। १३५ ।।

औषधीश्छित्त्वा ताभिरिन्धनीकृताभिर्भोज्या व्रीह्याद्याः दुष्टान् हिंसित्वा साधून्पालयेदिति भावः ।। ४ ।। षट्त्रिंशदधिकशततमोऽध्यायः ।। १३६ ।।

आत्मानं संक्रमं कृत्वा मन्ये धर्मविदेव सः ॥ ७
[तथातथा जयेल्लोकाञ्शक्त्या चैव यथायथा ] ।
औद्भिदा जन्तवो यद्वच्छुत्वा वाजो यथातथा ॥८
अनिमित्तात्संभवन्ति तथा यज्ञः प्रजायते ।
यथैव दंशमशकं यथा कीटपिपीलिकम् ॥ ९
सैव वृत्तिर्हि यज्ञेषु यथा धर्मो विधीयते ॥ १०
यथा ह्यकस्माद्भवति भूमौ पांसुस्तृणोलपम् ।
तथैवेह भवेद्धर्मः सूक्ष्मः सूक्ष्मनरः स्मृतः ॥ ११

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

---

## सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

भीष्मेण युधिष्ठिरंप्रति अनागतापत्प्रतिविधाने दृष्टान्ततया मत्स्योपाख्यानकथनम् ॥ १ ॥

भीष्म उवाच ।
अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेतौ सुखमेधेते दीर्घसूत्री विनश्यति ॥ १
अत्रैव चेदमव्यग्रं शृण्वाख्यानमनुत्तमम् ।
दीर्घसूत्रमुपाश्रित्य कार्याकार्यविनिश्चये ॥ २
नातिगाधे जलस्थाने सुहृदः कुशलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः ॥ ३
तत्रैकः प्राप्तकालज्ञो दीर्घदर्शी तथाऽपरः ।
दीर्घसूत्रश्च तत्रैकस्त्रयाणां जलचारिणाम् ॥ ४
कदाचित्तज्जलस्थानं मत्स्यबन्धाः समन्ततः ।
निस्रावयामासुरथो निम्नेषु विविधैर्मुखैः ॥ ५
प्रक्षीयमाणं तद्बुद्ध्वा जलस्थानं भयागमे ।
अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ॥ ६
इयमापत्समुत्पन्ना सर्वेषां सलिलौकसाम् ।
शीघ्रमन्यत्र गच्छामः पन्था यावन्न शुष्यति ॥ ७
अनागतमनर्थं हि सुनयैर्यः प्रबाधते ।
स न संशयमाप्नोति तथाऽन्यत्र व्रजामहे ॥ ८
दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत्सम्यगुच्यताम् ।
न तु कार्या त्वरा तावदिति मे निश्चिता मतिः ॥९
अथ संप्रतिपत्तिज्ञस्त्वब्रवीद्दीर्घदर्शिनम् ।
प्राप्ते काले न मे किंचिन्न्यायतः परिहास्यते ॥ १०
एवमुक्तो निराक्रामद्दीर्घदर्शी महामतिः ।
जगाम स्रोतसैकेन गम्भीरं सलिलाशयम् ॥ ११
ततः प्रसृततोयं तं प्रसमीक्ष्य जलाशयम् ।
बबन्धुर्विविधैर्योगैर्मत्स्यान्मत्स्योपजीविनः ॥ १२
विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये ।
अगच्छद्ग्रहणं तत्र दीर्घसूत्रः सहापरैः ॥ १३
उद्दानं क्रियमाणं तु मत्स्यानां वीक्ष्य रज्जुभिः ।
प्रविश्यान्तरमन्येषामग्रसत्प्रतिपत्तिमान् ॥ १४
ग्रस्तमेव तदुद्दानं गृहीत्वा तत्तथैव सः ।
सर्वानेव च तांस्तत्र ते विदुर्ग्रथिता इति ॥ १५
ततः प्रक्षाल्यमानेषु मत्स्येषु विपुले जले ।
त्यक्त्वा रज्जुं प्रमुक्तोसौ शीघ्रं संप्रतिपत्तिमान् ॥१६
दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः ।
मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः ॥ १७
एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते ।
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ॥ १८
आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् ।
स हि संशयमाप्नोति यथा संप्रतिपत्तिमान् ॥ १९
अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेतौ सुखमेधेते दीर्घसूत्री विनश्यति ॥ २०
काष्ठा कला मुहूर्ताश्च दिनरात्र्यः क्षणा लवाः ।
मासाः पक्षाः षड्ऋतवः कालः संवत्सराणि च ॥२१
पृथिवी देश इत्युक्तः स च कालो न दृश्यते ।
अभिप्रेतार्थसिद्ध्यर्थं दूरतो न्यायतस्तथा ॥ २२

---

तत्रैको दीर्घकालज्ञ उत्पन्नप्रतिभोऽपरः इति झ. पाठः ॥४॥ विविधैर्मुखैर्जलनिर्गमनमार्गैः ॥ ५ ॥ सलिलाशयं जलाशयान्तरम् ॥११॥ उद्दानं ग्रथनं अग्रसत् ग्रथनसूत्रं मुखेन जग्राहेत्यर्थः ॥ १४ ॥ सच मत्स्यः तथैव गृहीतवदेव तत्रास्ते इति शेषः ॥ १५ ॥ कालस्य देशस्य च सूक्ष्मतां अवहितो जानीयादिति श्लोकद्वयार्थः ॥ २१ ॥

एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः ।
प्रधानाविति निर्दिष्टौ कामे चाभिमतौ नृणाम् २३
परीक्ष्यकारी युक्तश्च स सम्यगुपपादयेत् ।
देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात् ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

## अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

भीष्मेण युधिष्ठिरंप्रति आपदि शत्रुणापि संधिकरणविषये दृष्टान्ततया मार्जारमूषिकचरितकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ ।
अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी ॥ १
तदिच्छामि परां बुद्धिं श्रोतुं ते भरतर्षभ ।
यथा राजा न मुह्येत शत्रुभिः परिपीडितः ॥ २
धर्मार्थकुशलं प्राज्ञं सर्वशास्त्रविशारदम् ।
पृच्छामि त्वां कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि ॥ ३
शत्रुभिर्बहुभिर्ग्रस्तो यथा मुच्येत पार्थिवः ।
एतदिच्छाम्यहं श्रोतुं सर्वमेव यथाविधि ॥ ४
विषमस्थं हि राजानं शत्रवः परिपन्थिनः ।
बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः ॥ ५
सर्वतः प्रार्थ्यमानेन दुर्बलेन महाबलैः ।
एकेनैवासहायेन शक्यं स्थातुं भवेत्कथम् ॥ ६
कथं मित्रमरिं चापि विन्देत भरतर्षभ ।
चेष्टितव्यं कथं चात्र शत्रोर्मित्रस्य चान्तरे ॥ ७
अजातलक्षणे राजन्नमित्रे मित्रतां गते ।
कथं नु पुरुषः कुर्यात्कृत्वा किं वा सुखी भवेत् ॥ ८
विग्रहं केन वा कुर्यात्संधिं वा केन योजयेत् ।
कथं वा शत्रुमध्यस्थो वर्तेत बलवानपि ॥ ९
एतद्वै सर्वकृत्यानां परं कृत्यं नराधिप ।
नैतस्य कश्चिद्वक्ताऽस्ति श्रोता वाऽपि सुदुर्लभः ॥ १०
ऋते पितामहाद्भीष्मात्सत्यसंधाज्जितेन्द्रियात् ।
तदन्वीक्ष्य महाभाग सर्वमेतद्ब्रवीहि मे ॥ ११
भीष्म उवाच ।
त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर गुणोदयः ।
शृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत ॥
अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति ।
सामर्थ्ययोगात्कार्याणामनित्या हि सदा गतिः ॥
तस्माद्विश्वसितव्यं च विग्रहं स समाचरेत् ।
देशं कालं च विज्ञाय कार्याकार्यविनिश्चये ॥
संधातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः ।
अमित्रैरपि संधेयं प्राणा रक्ष्या हि भारत ॥
यो ह्यमित्रैर्नरैर्नित्यं न संदध्यादपण्डितः ।
न सोऽर्थं प्राप्नुयात्किंचित्फलान्यपि च भारत ॥
यस्त्वमित्रेण संधत्ते मित्रेण च विरुध्यते ।
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम् ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मार्जारस्य च संवादं न्यग्रोधे मूषिकस्य च ॥
वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत् ।
लताजालपरिच्छन्नो नानाद्विजगणायुतः ॥
स्कन्धवान्मेघसंकाशः शीतच्छायो मनोरमः ।
अरण्यमभितो जातस्तरुर्व्यालमृगायुतः ॥
तस्य मूलमुपाश्रित्य कृत्वा शतमुखं बिलम् ।
वसति स्म महाप्राज्ञः पलितो नाम मूषिकः ॥
शाखां तस्य समाश्रित्य वसति स्म सुखं तदा ।
लोमशो नाम मार्जारः सर्वसत्त्वावसादकः ॥
तत्र त्वागत्य चण्डालो ह्यरण्यकृतकेतनः ।
युयोज यन्त्रमुन्माथं नित्यमस्तंगते रवौ ॥

एतौ देशकालौ ॥ २३ ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥
उद्धर्तुमुन्मूलयितुम् ॥ ५ ॥ सर्वतः सर्वदिक्स्थैः प्रार्थ्यमानेन ग्रसितुमिति शेषः ॥ ६ ॥ प्राकृतकृत्रिममित्रयोर्मध्ये केन सन्धिः कर्तव्यः केन वा वैरम् ॥ ९ ॥ व्यवस्य नि अत्र पूर्वश्लोकोक्तेऽर्थे ॥ १८ ॥ वैराज्यमभितो जात इति ट. थ. द. पाठः ॥ २० ॥ उन्माथं कूटयन्त्रं पशुमृगपक्षिबन्ध ॥ २३ ॥

तत्र स्नायुमयान्पाशान्यथावत्संविधाय सः ।
गृहं गत्वा सुखं शेते प्रभातामेति शर्वरीम् ॥ २४
तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः ।
कदाचिदत्र मार्जारः संप्रवृत्तो व्यबध्यत ॥ २५
तस्मिन्बद्धे महाप्राणे शत्रौ नित्याततायिनि ।
तं कालं पलितो ज्ञात्वा प्रचचार सुनिर्भयः ॥ २६
तेनानुचरता तस्मिन्वने विश्वस्तचारिणा ।
भक्ष्यं मृगयमाणेन नचिराद्दृष्टमामिषम् ॥ २७
स तमुन्माथमारुह्य तदामिषमभक्षयत् ।
तस्योपरि सपत्नस्य बद्धस्य मनसा हसन् ॥ २८
आमिषे तु प्रसक्तः स कदाचिदवलोकयन् ।
अपश्यदपरं घोरमात्मनो रिपुमागतम् ॥ २९
शरप्रसूनसंकाशं महीविवरशायिनम् ।
नकुलं हरिकं नाम चपलं ताम्रलोचनम् ॥ ३०
तेन मूषिकगन्धेन त्वरमाण उपागमत् ।
भक्ष्यार्थं लेलिहन्वक्त्रं भूमावूर्ध्वमुखः स्थितः ॥ ३१
शाखागतमरिं चान्यमपश्यत्कोटरालयम् ।
उलूकं चन्द्रकं नाम वक्रतुण्डं दुरासदम् ॥ ३२
गतस्य विषयं तस्य नकुलोलूकयोस्तथा ।
अथास्यासीदियं चिन्ता तत्प्राप्तस्य महद्भयम् ॥ ३३
आपद्यस्यां सुकष्टायां मरणे समुपस्थिते ।
समन्ताद्भय उत्पन्ने कथं कार्यं मनीषिणा ॥ ३४
स तथा सर्वतो रुद्धः सर्वत्र भयकर्शितः ।
अभवद्भयसंतप्तश्चक्रे च परमां मतिम् ॥ ३५
आपद्विनाशभूयिष्ठं शङ्कनीयं हि जीवितम् ।
समन्तात्संशयः सोऽयं तस्मादापदुपस्थिता ॥ ३६
गतं हि सहसा भूमिं नकुलो मामवाप्नुयात् ।
उलूकश्चेह तिष्ठन्तं मार्जारः पाशसंक्षयात् ॥ ३७
न त्वेवास्मद्विधः प्राज्ञः संमोहं गन्तुमर्हति ।
करिष्ये जीविते यत्नं यावदुच्छ्वासनिग्रहात् ॥ ३८
न हि बुद्ध्याऽन्वितः प्राज्ञो नीतिशास्त्रविशारदः ।
निमज्जत्यापदं प्राप्य महतोऽर्थानवाप्य ह ॥ ३९
न त्वन्यामिह मार्जाराद्गतिं पश्यामि सांप्रतम् ।
विषमस्थो ह्ययं शत्रुः कृत्यं चास्य महन्मया ॥ ४०
जीवितार्थी कथं त्वद्य शत्रुभिः प्रार्थितस्त्रिभिः ।
प्राणहेतोरिमं मित्रं मार्जारं संश्रयामि वै ॥ ४१
नीतिशास्त्रं समाश्रित्य हितमस्योपवर्णये ।
येनेमं शत्रुसंघातं मतिपूर्वेण वञ्चये ॥ ४२
अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः ।
मूढो ग्राहयितुं स्वार्थं संगत्या यदि शक्यते ॥ ४३
कदाचिद्व्यसनं प्राप्य संधिं कुर्यान्मया सह ॥ ४४
बलिना सन्निकृष्टस्य शत्रोरपि परिग्रहः ।
कार्य इत्याहुराचार्या विषमे जीवितार्थिना ॥ ४५
श्रेष्ठो हि पण्डितः शत्रुर्न च मित्रमपण्डितः ।
अमित्रे खलु मार्जारे जीवितं संप्रतिष्ठितम् ॥ ४६
ततोऽस्मै संप्रवक्ष्यामि हेतुमात्माभिरक्षणे ।
अपीदानीमयं शत्रुः संगत्या पण्डितो भवेत् ॥ ४७
एवं विचिन्तयामास मूषिकः शत्रुचेष्टितम् ॥ ४८
ततोऽर्थगतितत्त्वज्ञः संधिविग्रहकालवित् ।
सान्त्वपूर्वमिदं वाक्यं मार्जारं मूषिकोऽब्रवीत् ॥ ४९
सौहृदेनाभिभाषे त्वां कच्चिन्मार्जार जीवसे ।
जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ॥ ५०
न ते सौम्य भयं कार्यं जीविष्यसि यथा पुरा ।
अहं त्वामुद्धरिष्यामि प्राणाञ्जह्यां हि ते कृते ॥ ५१
अस्ति कश्चिदुपायोऽत्र पुष्कल प्रतिभाति मे ।
येन शक्यस्त्वया मोक्षः प्राप्तुं श्रेयस्तथा मया ॥ ५२
मयाऽप्युपायो दृष्टोऽयं विचार्य मतिमात्मनः ।
आत्मार्थं च त्वदर्थं च श्रेयः साधारणं हि नौ ॥ ५३
इदं हि नकुलोलूकं पापबुद्ध्या हि संस्थितम् ।
न धर्षयति मार्जार तेन ते स्वस्ति सांप्रतम् ॥ ५४
कूजंश्चपलनेत्रोऽयं कौशिको मां निरीक्षते ।
नगशाखाग्रगः पापस्तस्याहं भृशमुद्विजे ॥ ५५
सतां साप्तपदं मैत्रं स सखा मेऽसि पण्डितः ।
साहाय्यकं करिष्यामि नास्ति ते प्राणतो भयम् ५६
न हि शक्तोऽसि मार्जार पाशं छेत्तुं मया विना
अहं छेत्स्यामि पाशांस्ते यदि मां त्वं न हिंससि ५७

पलितो मूषिकः ॥ २६ ॥ तदामिषं तस्य उन्माथे धृतमामिषम् । सपत्नस्य सपत्नं बद्धं अनादृत्य ॥ २८ ॥ शरस्तृणविशेषस्तत्प्रसूनं पुष्पम् ॥ ३० ॥ यदि मां न जिघांससि इति झ. द पाठः ॥ ५१ ॥

संचोदयितुमारेभे मार्जारो मूषिकं ततः ॥ ९१
किं सौम्य नातित्वरसे किं कृतार्थोऽवमन्यसे ।
छिन्धि पाशानमित्रघ्न पुरा श्वपच एति सः ॥९२
इत्युक्तस्त्वरताऽनेन मतिमान्पलितोऽब्रवीत् ।
मार्जारमकृतप्रज्ञं तथ्यमात्महितं वचः ॥ ९३
तूष्णीं भव न ते सौम्य त्वरा कार्या न संभ्रमः ।
वयमेवात्र कालज्ञा न कालः परिहास्यते ॥ ९४
अकाले कृत्यमारब्धं कर्तुर्नार्थाय कल्पते ।
तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥ ९५
अकाले विप्रमुक्तान्मे त्वत्त एव भयं भवेत् ।
तस्मात्कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥ ९६
यावत्पश्यामि चण्डालमायान्तं शस्त्रपाणिनम् ।
ततश्छेत्स्यामि ते पाशान्प्राप्ते साधारणे भये ॥ ९७
तस्मिन्काले प्रमुक्तस्त्वं तरुमेवाधिरोक्ष्यसे ।
न हि ते जीवितादन्यत्किंचित्कृत्यं भविष्यति ॥९८
'तस्मिन्कालेऽपि च तथा दिवाकीर्तिभयार्दितः ।
मम न ग्रहणे शक्तः पलायनपरायणः ॥' ९९
ततो भवत्यपक्रान्ते त्रस्ते भीते च लुब्धकात् ।
अहं बिलं प्रवेक्ष्यामि भवाञ्शाखां गमिष्यति १००
एवमुक्तस्तु मार्जारो मूषिकेणात्मनो हितम् ।
वचनं वाक्यतत्त्वज्ञो जीवितार्थी महामतिः ॥१०१
अथात्मकृत्ये त्वरितः सम्यक्प्रार्थितमाचरन् ।
उवाच लोमशो वाक्यं मूषिकं चिरकारिणम् ॥१०२
नह्येवं मित्रकार्याणि प्रीत्या कुर्वन्ति साधवः ॥१०३
यथा त्वं मोक्षितः कृच्छ्रात्त्वरमाणेन वै मया ।
तथा हि त्वरमाणेन त्वया कार्यमिदं मम ।
यत्नं कुरु महाप्राज्ञ यथा स्वस्त्यावयोर्भवेत् ॥ १०४
अथवा पूर्ववैरं त्वं स्मरन्कालं जिहीर्षसि ।
पश्य दुष्कृतकर्मंस्त्वं व्यक्तमायुःक्षयो मम ॥१०५
यदि किंचिन्मयाऽज्ञानात्पुरस्ताद्दुष्कृतं कृतम् ।
न तन्मनसि कर्तव्यं क्षामये त्वां प्रसीद मे ॥ १०६
तमेवंवादिनं प्राज्ञं शास्त्रविद्बुद्धिसत्तमः ।
उवाचेदं वचः श्रेष्ठं मार्जारं मूषिकस्तदा ॥ १०७
श्रुतं मे तव मार्जार स्वमर्थं परिगृह्णतः ।
ममापि त्वं विजानासि स्वमर्थं परिगृह्णतः ॥१०८
यन्मित्रं भीतवत्साध्यं यस्मिन्मित्रे भयं हितम् ।
आरक्षितं ततः कार्यं पाणिः सर्पमुखादिव ॥ १०९
कृत्वा बलवता संधिमात्मानं यो न रक्षति ।
अपथ्यमिव तद्भुक्तं तस्यानर्थाय कल्पते ॥ ११०
न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा ॥१११
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ।
न च कश्चित्कृते कार्ये कर्तारं समवेक्षते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ११२
तस्मिन्कालेऽपि च भवान्दिवाकीर्तिभयार्दितः ।
मम न ग्रहणे शक्तः पलायनपरायणः ॥ ११३
छिन्नं तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः ।
छेत्स्याम्यहं तमप्याशु निर्वृतो भव लोमश ॥११४
तयोः संवदतोरेवं तथैवापन्नयोर्द्वयोः ।
क्षयं जगाम सा रात्रिर्लोमशं त्वागमद्भयम् ॥११५
ततः प्रभातसमये विकटः कृष्णपिङ्गलः ।
स्थूलस्फिग्विकृतो रूक्षः श्वयूथपरिवारितः ॥११६
शङ्कुकर्णो महावक्त्रः खनित्री घोरदर्शनः ।
परिघो नाम चण्डालः शस्त्रपाणिरदृश्यत ॥११७
तं दृष्ट्वा यमदूताभं मार्जारस्त्रस्तचेतनः ।
उवाच पलितं भीतः किमिदानीं करिष्यसि ॥११८
तथैव च सुसंत्रस्तौ तं दृष्ट्वा घोरसंकुलम् ।
क्षणेन नकुलोलूकौ नैराश्यमुपजग्मतुः ॥ ११९
बलिनौ मतिमन्तौ च संघातं चाप्युपागतौ ।
अशक्तौ सुनयात्तस्मात्संप्रधर्षयितुं बलात् ॥ १२०
कार्यार्थे कृतसंधी तौ दृष्ट्वा मार्जारमूषिकौ ।
उलूकनकुलौ तूर्णं जग्मतुः स्वंस्वमालयम् ॥ १२१
ततश्चिच्छेद तं तन्तुं मार्जारस्य स मूषिकः ।
विप्रमुक्तोऽथ मार्जारस्तमेवाभ्यपतद्द्रुमम् ॥ १२२
स तस्मात्संभ्रमान्मुक्तो मुक्तो घोरेण शत्रुणा ।
बिलं विवेश पलितः शाखां लेभे स लोमशः ॥१२३
उन्माथमप्युपादाय चण्डालो वीक्ष्य सर्वशः ।

स्मरन्कालं चिकीर्षसीति थ. द. पाठः ॥ १०५ ॥

त्वमाश्रितो द्रुमस्याग्रं मूलं त्वहमुपाश्रितः ।
चिरोषितावुभावावां वृक्षेऽस्मिन्विदितं च ते ।।५८
यस्मिन्नाश्वसते कश्चिद्यश्च नाश्वसिति क्वचित् ।
न तौ धीराः प्रशंसन्ति नित्यमुद्विग्नमानसौ ।।५९
तस्माद्विवर्धतां प्रीतिर्नित्यं संगतमस्तु नौ ।
कालातीतमिहार्थं हि न प्रशंसन्ति पण्डिताः ।।६०
अर्थयुक्तिमिमां तत्र यथाभूतां निशामय ।
तव जीवितमिच्छामि त्वं ममेच्छसि जीवितम् ।।६१
कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम् ।
स तारयति तत्काष्ठं स च काष्ठेन तार्यते ।। ६२
ईदृशो नौ क्रियायोगो भविष्यति सुविस्तरः ।
अहं त्वां तारयिष्यामि मां च त्वं तारयिष्यसि ।।६३
एवमुक्त्वा तु पलितस्तमर्थमुभयोर्हितम् ।
हेतुमद्ग्रहणीयं च कालापेक्षी व्यतिष्ठत ।। ६४
अथ सुव्याहृतं श्रुत्वा तस्य शत्रोर्विचक्षणः ।
हेतुमद्ग्रहणीयार्थं मार्जारो वाक्यमब्रवीत् ।। ६५
बुद्धिमान्वाक्यसंपन्नस्तद्वाक्यमनुवर्तयन् ।
स्वामवस्थां प्रतीक्ष्यैनं साम्नैव प्रत्यपूजयत् ।। ६६
ततस्तीक्ष्णाग्रदशनो मणिवैदूर्यलोचनः ।
मूषिकं मन्दमुद्वीक्ष्य मार्जारो लोमशोऽब्रवीत् ।।६७
नन्दामि सौम्य भद्रं ते यो मां जीवितुमिच्छसि ।
श्रेयश्च यदि जानीषे क्रियतां मा विचारय ।।६८
अहं हि भृशमापन्नस्त्वमापन्नतरो मया ।
द्वयोरापन्नयोः सन्धिः क्रियतां मा चिराय च ।।६९
विधत्स्व प्राप्तकालं यत्कार्यं सिध्यतु चावयोः ।
मयि कृच्छ्राद्विनिर्मुक्ते न विनङ्क्ष्यति ते कृतम् ।।७०
न्यस्तमानोस्मि भक्तोस्मि शिष्यस्त्वद्धितकृत्तथा ।
तथा निदेशवर्ती च भवन्तं शरणं गतः ।। ७१
इत्येवमुक्तः पलितो मार्जारं वशमागतम् ।
वाक्यं हितमुवाचेदमभिजातार्थमर्थवित् ।। ७२
उदारं यद्भवानाह नैतच्चित्रं भवद्विधे ।
विहितो यस्तु मार्गो मे हितार्थं शृणु तं मम ।।७३
अहं त्वाऽनुप्रवेक्ष्यामि नकुलान्मे महद्भयम् ।
त्रायस्व मां मा वधीश्च शक्तोऽस्मि तव रक्षणे ।। ७४
उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि माम् ।
अहं छेत्स्यामि ते पाशान्सखे सत्येन ते शपे ।।७
तद्वचः संगतं श्रुत्वा लोमशो युक्तमर्थवत् ।
हर्षादुद्वीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ।। ७
तं संपूज्याथ पलितं मार्जारः सौहृदे स्थितम् ।
स विचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव च ।। ७
क्षिप्रमागच्छ भद्रं ते त्वं मे प्राणसमः सखा ।
तव प्राज्ञप्रसादाद्धि प्रियं प्राप्स्यामि जीवितम् ।।७
यद्यदेवंगतेनाद्य शक्यं कर्तुं मया तव ।
तदाज्ञापय कर्तास्मि सिद्धिरेवास्तु नौ सखे ।। ७
अस्मात्ते संशयान्मुक्तः समित्रगणबान्धवः ।
सर्वकार्याणि कर्ताऽहं प्रियाणि च हितानि च ।।८
मुक्तश्च व्यसनादस्मात्सौम्याहमपि नाम ते ।
प्रीतिमुत्पादयेयं च प्रतिकर्तुं च शक्नुयाम् ।। ८
प्रत्युपकुर्वन्बह्वपि न भाति पूर्वोपकारिणा तुल्यः
एकः करोति हि कृते निष्कारणमेव कुरुतेऽन्यः ८
भीष्म उवाच ।
एवमाश्वासितो विद्वान्मार्जारेण स मूषिकः ।
प्रविवेश सुविस्रब्धः सम्यगङ्गीचकार ह ।। ८
ग्राहयित्वा तु तं स्वार्थं मार्जारं मूषिकस्तथा ।
मार्जारोरसि विस्रब्धः सुष्वाप पितृमातृवत् ।।८
निलीनं तस्य गात्रेषु मार्जारस्याथ मूषिकम् ।
दृष्ट्वा तौ नकुलोलूकौ निराशौ प्रत्यपद्यताम् ।।८
तथैव तौ सुसंत्रस्तौ दृढमागततन्द्रितौ ।
दृष्ट्वा तयोः परां प्रीतिं विस्मयं परमं गतौ ।। ८
बलिनौ मतिमन्तौ च सुवृत्तौ चाप्युपासितौ ।
अशक्तौ तु नयात्तस्मात्संप्रधर्षयितुं बलात् ।। ८
कार्यार्थं कृतसंधी तौ दृष्ट्वा मार्जारमूषिकौ ।
उलूकनकुलौ तूर्णं जग्मतुस्तौ स्वमालयम् ।। ८
लीनः स तस्य गात्रेषु पलितो देशकालवित् ।
चिच्छेद पाशान्नृपते कालाकाङ्क्षी शनैःशनैः ।।८
अथ बन्धपरिक्लिष्टो मार्जारो वीक्ष्य मूषिकम् ।
छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः ।। ९
तमत्वरन्तं पलितं पाशानां छेदने तदा ।

विहताशः क्षणेनैव तस्माद्देशादपाक्रमत् ।
जगाम स स्वभवनं चण्डालो भरतर्षभ ॥ १२४
ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम् ।
बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत् ॥१२५
अकृत्वा संविदं कांचित्सहसा त्वमपस्रुतः ।
कृतज्ञः कृतकल्याणः कच्चिन्मां नाभिशङ्कसे ॥१२६
गत्वा च मम विश्वासं दत्त्वा च मम जीवितम् ।
मित्रोपभोगसमये किं हि मां नोपसर्पसि ॥१२७
कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति ।
न स मित्राणि लभते कृच्छ्रात्स्वापत्सु दुर्मतिः१२८
सत्कृतोऽहं त्वया मित्र सामर्थ्यादात्मनः सखे ।
स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि ॥ १२९
यानि मे सन्ति मित्राणि ये च मे सन्ति बान्धवाः ।
सर्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियम् १३०
अहं च पूजयिष्ये त्वां समित्रगणबान्धवम् ।
जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् ॥१३१
ईश्वरो मे भवानस्तु शरीरस्य गृहस्य च ।
अर्थानां चैव सर्वेषामनुशास्ता च मे भव ॥ १३२
अमात्यो मे भव प्राज्ञ पितेवेह प्रशाधि माम् ।
न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे ॥ १३३
बुद्ध्या त्वमुशना साक्षाद्बलेनाधिकृता वयम् ।
त्वं मन्त्रबलयुक्तो हि दद्या विजयमेव मे ॥ १३४
एवमुक्तः परं सान्त्वं मार्जारेण स मूषिकः ।
उवाच परमार्थज्ञः श्लक्ष्णमात्महितं वचः ॥ १३५
यद्भवानाह तत्सर्वं मया ते लोमश श्रुतम् ।
ममापि तावद्ब्रुवतः शृणु यत्प्रतिभाति मे ॥ १३६
वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः ।
एतत्सुसूक्ष्मं लोकेऽस्मिन्दृश्यते प्राज्ञसंमतैः ॥१३७
शत्रुरूपा हि सुहृदो मित्ररूपाश्च शत्रवः ।
सान्त्वितास्ते न बुध्यन्ते रागलोभवशं गताः १३८
येषां सौम्यानि मित्राणि क्रोधनाश्चैव शत्रवः ।
सान्त्वितास्ते न बुध्यन्ते रागलोभवशंगताः ॥१३९
नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥१४०

यो यस्मिञ्जीवति स्वार्थे पश्येत्पीडां न जीवति
स तस्य मित्रं तावत्स्याद्यावन्न स्याद्विपर्ययः ॥१
नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदम्
अर्थयुक्त्याऽनुजायन्ते मित्राणि रिपवस्तथा ॥१
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये ।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥१
यो विश्वसिति मित्रेषु न विश्वसिति शत्रुषु ।
अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम् ॥१
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ।
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति ॥१
अर्थयुक्त्या हि जायन्ते पिता माता सुतस्तथा ।
मातुला भागिनेयाश्च तथा संबन्धिबान्धवाः १
पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम् ।
लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् १
सामान्या निष्कृतिः प्राज्ञ यो मोक्षात्समनन्तरम्
कृत्यं मृगयते कर्तुं सुखोपायमसंशयम् ॥ १
अस्मिन्निलय एवं त्वं न्यग्रोधादवतारितः ।
पूर्वं निविष्टमुन्माथं चपलत्वान्न बुद्धवान् ॥१
आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति ।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् १५
ब्रवीषि मधुरं यच्च प्रियो मेऽद्य भवानिति ।
तन्मिथ्याकारणं सर्वं विस्तरेणापि मे शृणु ॥१५
कारणात्प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः
सख्यं सोदर्ययोर्भ्रात्रोर्दंपत्योर्वा परस्परम् ।
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह १५
यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे ।
स्वभावतस्ते प्रीयन्ते नेतरः प्राकृतो जनः ॥१५
प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रहोमजपैरन्यः कार्यार्थे प्रीयते जनः ॥ १५
उत्पन्ना कारणात्प्रीतिरासीन्नौ कारणान्तरे ।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्नाभिवर्तते ॥१५
किंतु तत्कारणं मन्ये येनाहं भवतः प्रियः ।

अन्यत्राभ्यवहारार्थात्तत्रापि च बुधा वयम् ॥१५७
कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते ।
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते ।
न त्वीदृशं त्वया वाच्यं विद्यते स्वार्थपण्डितः १५८
न कालो हि समर्थस्य स्नेहहेतुरयं तव ।
तस्मान्नाहं चले स्वार्थात्सुस्थितः संधिविग्रहे ॥१५९
अभ्राणामिव रूपाणि विकुर्वन्ति पदेपदे ।
अद्यैव हि रिपुर्भूत्वा पुनरद्यैव मे सुहृत् ।
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम् ॥ १६०
आसीन्मैत्री तु तावन्नौ यावद्धेतुरभूत्पुरा ।
सागता सह तेनैव कालयुक्तेन हेतुना ॥ १६१
त्वं हि मेऽत्यन्ततः शत्रुः सामर्थ्यान्मित्रतां गतः ।
तत्कृत्यमभिनिर्वर्त्य प्रकृतिः शत्रुतां गता ॥ १६२
सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः ।
प्रविशेयं कथं पाशं त्वत्कृते तद्ब्रवीहि मे ॥ १६३
त्वद्वीर्येण विमुक्तोऽहं मद्वीर्येण तथा भवान् ।
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः ॥१६४
त्वं हि सौम्य कृतार्थोऽद्य निवृत्तार्थास्तथा वयम् ।
न तेऽस्त्यद्य मया कृत्यं किंचिदन्यत्र भक्षणात्१६५
अहमन्नं भवान्भोक्ता दुर्बलोऽहं भवान्बली ।
नावयोर्विद्यते संधिर्वियुक्ते विषमे बले ॥ १६६
स मन्येऽहं तव प्रज्ञां यन्मोक्षात्प्रत्यनन्तरम् ।
भक्ष्यं मृगयसे नूनं सुखोपायमसंशयम् ॥ १६७
भक्षार्थी ह्येव सुव्यक्तो विमुक्तः प्रसृतः क्षुधा ।
शास्त्रजां मतिमास्थाय प्रातराशमिहेच्छसि ॥ १६८
जानामि क्षुधितं च त्वामाहारसमयश्च ते ।
स त्वं मामभिसंधाय भक्ष्यं मृगयसे पुनः ॥ १६९
किंचात्र पुत्रदारार्थं यद्वाणीं सृजसे मयि ।
शुश्रूषां यतसे कर्तुं सखे मम न तत्क्षमम् ॥१७०
त्वया मां सहितं दृष्ट्वा प्रिया भार्या सुताश्च ये ।
कस्मात्ते मां न खादेयुः स्पृष्ट्वा प्रणयिनि त्वयि १७१
नाहं त्वया समेष्यामि वृत्ते हेतुसमागमे ।
शिवं ध्यायस्व मेऽत्रस्थः सुकृतं स्मरसे यदि ॥१७२
शत्रोरन्नायभूतः सन्क्लिष्टस्य क्षुधितस्य च ।
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् ॥१७३
स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे ।
[विश्वस्तं वा प्रमत्तं वा एतदेव कृतं भवेत् ॥] १७४
नाहं त्वया समेष्यामि निवृत्तो भव लोमश ।
बलवत्सन्निकर्षो हि न कदाचित्प्रशस्यते ॥ १७५
यदि त्वं सुकृतं वेत्सि तत्सख्यमनुसारय ।
प्रशान्तादपि हि प्राज्ञाद्भेतव्यं बलिनः सदा ॥१७६
यदि त्वर्थेन ते कार्यं ब्रूहि किं करवाणि ते ।
कामं सर्वं प्रदास्यामि न त्वात्मानं कथंचन ॥१७७
आत्मार्थे संततिस्त्याज्या राज्यं रत्नं धनानि च ।
अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मवान् ॥१७८
ऐश्वर्यधनरत्नानां प्रत्यमित्रेऽपि वर्तताम् ।
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतम् ॥ १७९
न त्वात्मनः संप्रदानं धनरत्नवदिष्यते ।
आत्मा हि सर्वदा रक्ष्यो दारैरपि धनैरपि ॥ १८०
आत्मरक्षणतन्त्राणां सुपरीक्षितकारिणाम् ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥१८१
शत्रुं सम्यग्विजानाति दुर्बलो यो बलीयसा ।
'शङ्कनीयः स सर्वत्र प्रियमप्याचरन्सदा ॥ १८२
कुलजानां सुमित्राणां धार्मिकाणां महात्मनाम् ।'
न तेषां चाल्यते बुद्धिः शास्त्रार्थकृतनिश्चया ॥ १८३
इत्यभिव्यक्तमेवासौ पलितेनापहासितः ।
मार्जारो व्रीडितो भूत्वा मूषिकं वाक्यमब्रवीत्१८४
सत्यं शपे त्वयाऽहं वै मित्रद्रोहो विगर्हितः ।
संमन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ॥ १८५
उक्तवानर्थतत्त्वेन मया संभिन्नदर्शनः ।
न तु मामन्यथा साधो त्वं ग्रहीतुमिहार्हसि ॥ १८६
प्राणप्रदानजं त्वत्तो मयि सौहृदमागतम् ।
धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोस्मि विशेषतः१८७
मित्रेषु वत्सलश्चास्मि त्वद्भक्तश्च विशेषतः ।
त्वं मामेवंगते साधो न वाचयितुमर्हसि ॥ १८८
त्वया हि वाच्यमानोऽहं जह्यां प्राणान्सबान्धवः ।

पुनरद्यैव सौहृदमिति थ. द. ध. पाठः ॥ १६० ॥

अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

धिक्शब्दो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु ।
पतनं धर्मतत्त्वज्ञ न मे शङ्कितुमर्हसि ॥ १८९
इति संस्तूयमानोऽपि मार्जारेण स मूषिकः ।
मनसा भावगम्भीरं मार्जारमिदमब्रवीत् ॥ १९०
साधुर्भवान्कृतार्थोऽस्मि प्रिये च न च विश्वसे।
संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया ॥ १९१
न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे ।
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ॥१९२
शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समाहितश्चरेद्बुद्ध्या कृतार्थश्च न विश्वसेत् ॥१९३
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
नित्यं विश्वासयेदन्यान्परेषां तु न विश्वसेत् ॥ १९४
तस्मात्सर्वास्ववस्थासु रक्षेज्जीवितमात्मनः ।
द्रव्याणि संततिश्चैव सर्वं भवति जीवताम् ॥१९५
संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।
नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः ॥१९६
वध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि ।
विश्वस्तास्तेषु वध्यन्ते बलवन्तोऽपि शत्रुभिः १९७
त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा ।
रक्ष त्वमपि चात्मानं चण्डालाज्जातिकिल्बिषात् ॥
स तस्य ब्रुवतस्त्वेवं संत्रासाज्जातसाध्वसः ।
कथां हित्वा जवेनाशु मार्जारः प्रययौ ततः ॥१९९
ततः शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह २००
एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबलाः ।
एकेन बहवोऽमित्राः पलितेनाभिसंधिताः ॥२०१
अरिणापि समर्थेन सन्धिं कुर्वीत पण्डितः ।
मूषिकश्च बिडालश्च मुक्तावन्योन्यसंश्रयात् ॥२०२
इत्येवं क्षत्रधर्मस्य मया मार्गो निदर्शितः ।
विस्तरेण महाराज संक्षेपमपि मे शृणु ॥ २०३
अन्योन्यं कृतवैरौ तु चक्रतुः प्रीतिमुत्तमाम् ।
अन्योन्यमभिसंधातुं संबभूव तयोर्मतिः ॥ २०४
तत्र प्राज्ञोऽभिसंधत्ते सम्यग्बुद्धिबलाश्रयात् ।

अभिसंधीयते प्राज्ञः प्रमादादपि वा बु
तस्मादभीतवद्भीतो विश्वस्तवदविश्वसे
न ह्यप्रमत्तश्चलति चलितोऽवा न नश्य
काले हि रिपुणा संधिः काले मित्रेण
कार्य इत्येव तत्वज्ञाः प्राहुर्नित्यं नरा
एतज्ज्ञात्वा महाराज शास्त्रार्थमभिगम
अभियुक्तोऽप्रमत्तश्च प्राग्भयाद्भीतवच्च
भीतवत्संहितः कार्यः प्रतिसंधिस्तथैव
भयादुत्पद्यते बुद्धिरप्रमत्ताभियोगजा
न भयं जायते राजन्भीतस्यानागते भ
अभीतस्य च विस्रम्भात्सुमहज्जायते भ
न भीरुरिति चात्यन्तं मन्त्रो देयः क
अविज्ञानाद्धि विज्ञाने गच्छेदास्पददर्श
तस्मादभीतवद्भीतो विश्वस्तवदविश्वस
कार्याणां गुरुतां ज्ञात्वा नादृतं किंचिद्
एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर
श्रुत्वा त्वं सुहृदां मध्ये यथावत्समुदा
उपलभ्य मतिं चाग्र्यामरिमित्रान्तरं त
संधिविग्रहकालौ च मोक्षोपायं तथाऽऽ
शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बल
समागतश्चरेद्बुद्ध्या कृतार्थो न च विश्व
अविरुद्धां त्रिवर्गेण नीतिमेतां महीपते
अभ्युत्तिष्ठ श्रुतात्तस्माद्भूयः संरञ्जयन्प्रज
ब्राह्मणैश्चापि ते सार्धं यात्रा भवतु पा
ब्राह्मणाद्धि परं श्रेयो दिवि चेह च भा
एते धर्मस्य वेत्तारः कृतज्ञाः सततं प्र
पूजिताः शुभकर्तारः पूजयेनाञ्जनाधि
राज्यं श्रेयः परं राजन्यशश्च महदाप्स्य
कुलस्य संततिं चैव यथान्यायं यथाक्र
श्रुतं च ते भारत संधिविग्रहं
विभावितं बुद्धिविशेषकारितम्
तथा त्ववेक्ष्य क्षितिपेन सर्वदा
निषेवितव्यं नृप शत्रुमण्डलम्

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

## एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

भीष्मेण युधिष्ठिरंप्रति पूजनीब्रह्मदत्तसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
उक्तो मन्त्रो महाबाहो विश्वासो नास्ति शत्रुषु ।
कथं हि राजा वर्तेत यदि सर्वत्र नाश्वसेत् ॥ १
विश्वासाद्धि परं राजन्राज्ञामुत्पद्यते भयम् ।
कथं हि नाश्वसन्राजा शत्रूञ्जयति पार्थिवः ॥ २
एतन्मे संशयं छिन्धि मनो मे संप्रमुह्यति ।
अविश्वासे कथामेतामुपाश्रित्य पितामह ॥ ३
भीष्म उवाच ।
शृणुष्व राजन्यो वृत्तो ब्रह्मदत्तनिवेशने ।
पूजन्या सह संवादो ब्रह्मदत्तस्य भूपतेः ॥ ४
काम्पिल्ये ब्रह्मदत्तस्य त्वन्तःपुरनिवासिनी ।
पूजनी नाम शकुनिर्दीर्घकालं सहोषिता ॥ ५
रुतज्ञा सर्वभूतानां यथा वै जीवजीवकः ।
सर्वज्ञा सर्वतत्त्वज्ञा तिर्यग्योनिं गताऽपि सा ॥ ६
अभिप्रजाता सा तत्र पुत्रमेकं सुवर्चसम् ।
समकालं च राज्ञोऽपि देव्यां पुत्रो व्यजायत ॥ ७
तयोरर्थे कृतज्ञा तु खेचरी पूजनी सदा ।
समुद्रतीरं सा गत्वा आजहार फलद्वयम् ॥ ८
पुष्ट्यर्थं च स्वपुत्रस्य राजपुत्रस्य चैव ह ।
फलमेकं सुतायादाद्राजपुत्राय चापरम् ॥ ९
अमृतास्वादसदृशं बलतेजोभिवर्धनम् ।
[आदायादाय सैवाशु तयोः प्रादात्पुनःपुनः॥]१०
ततोऽगच्छत्परां वृद्धिं राजपुत्रः फलाशनात् ।
ततः स धात्र्या कक्षेण उह्यमानो नृपात्मजः ॥ ११
ददर्श तं पक्षिसुतं बाल्यादागत्य बालकः ।
ततो बाल्याच्च यत्नेन तेनाक्रीडत पक्षिणा ॥ १२
शून्ये च तमुपादाय पक्षिणं समजातकम् ।
हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागतः ॥ १३
अथ सा पूजनी राजन्नागमत्फलहारिणी ।
अपश्यन्निहतं पुत्रं तेन बालेन भूतले ॥ १४
बाष्पपूर्णमुखी दीना दृष्ट्वा तं पतितं सुतम् ।
पूजनी दुःखसंतप्ता रुदन्ती वाक्यमब्रवीत् ॥ १५
क्षत्रिये संगतं नास्ति न प्रीतिर्न च सौहृदम् ।
कारणे सान्त्वयन्त्येते कृतार्थाः संत्यजन्ति च ॥ १६
क्षत्रियेषु न विश्वासः कार्यः सर्वापकारिषु ।
अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् ॥ १७
इयमस्य करोम्यद्य सदृशीं वैरयातनाम् ।
कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः ॥ १८
सहसंजातवृद्धस्य तथैव सहभोजिनः ।
शरण्यस्य वधश्चैव त्रिविधं तस्य किल्बिषम् ॥ १९
इत्युक्त्वा चरणाभ्यां तु नेत्रे नृपसुतस्य सा ।
हत्वा खस्था तत इदं पूजनी वाक्यमब्रवीत् ॥ २०
इच्छयेह कृतं पापं सद्य एवोपसर्पति ।
कृतं प्रतिकृतं येषां न नश्यति शुभाशुभम् ॥ २१
पापं कर्म कृतं किंचिद्यदि तस्मिन्न दृश्यते ।
निपात्यतेऽस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥ २२
ब्रह्मदत्तः सुतं दृष्ट्वा पूजन्या हृतलोचनम् ।
कृतप्रतिकृतं मत्वा पूजनीमिदमब्रवीत् ॥ २३
अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया ।
उभयं तत्समीभूतं वस पूजनि मा गमः ॥ २४
पूजन्युवाच ।
सकृत्कृतापराधस्य तत्रैव परिलम्बतः ।
न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम् ॥ २५
सान्त्वे प्रयुक्ते विवृते वैरे चैव न विश्वसेत् ।
क्षिप्रं स हन्यते मूढो न हि वैरं प्रशाम्यति ॥ २६
अन्योन्यकृतवैराणां पुत्रपौत्रं नियच्छति ।
पुत्रपौत्रविनाशे च परलोकं नियच्छति ॥ २७

जीवजीवकः शाकुनिकः। जीवजीवक इति पक्षिविशेष इत्यन्ये ॥ ६ ॥ अभिप्रजाता प्रसूतवती। देव्यां राजभार्यायाम् ॥ ७ ॥ समजातकं समानवयसम् ॥ १३ ॥ इच्छया बुद्धिपूर्वकम्। उपसर्पति फलरूपेण कर्तारम् ॥ २१ ॥ पापमपराधकृतमेनः ॥ २२ ॥ मागमः मास्मगमः ॥ २४ ॥ परिलम्बतः विश्वासं कुर्वतः ॥ २५ ॥ नियच्छति मृत्युर्नाशयति। ततो नष्टसंततित्वात्परलोकं च नियच्छति ॥ २७ ॥

सर्वेषां कृतवैराणामविश्वासः सुखावहः ।
एकान्ततो न विश्वासः कार्यो विश्वासघातके ॥२८
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नमपि मूलं निकृन्तति ।
कामं विश्वासयेदन्यान्परेषां च न विश्वसेत् ॥२९
माता पिता बान्धवानां वरिष्ठौ
भार्या क्षेत्रं बीजमात्रं तु पुत्रः ।
भ्राता शत्रुः क्लिन्नपाणिर्वयस्य
आत्मा ह्येकः सुखदुःखस्य भोक्ता ॥ ३०
अन्योन्यकृतवैराणां न संधिरुपपद्यते ।
स च हेतुरतिक्रान्तो यदर्थमहमावसम् ॥ ३१
पूजितस्यार्थमानाभ्यां सान्त्वं पूर्वापकारिणः ।
हृदयं भवत्यविश्वस्तं कर्म त्रासयते बलात् ॥ ३२
पूर्वं संमानना यत्र पश्चाच्चैव विमानना ।
जह्यात्स सत्ववान्वासं संमानितविमानितः ॥ ३३
उषिताऽस्मि तवागारे दीर्घकालमहिंसिता ।
तदिदं वैरमुत्पन्नं सुखमास्स्व व्रजाम्यहम् ॥ ३४
ब्रह्मदत्त उवाच ।
यः कृते प्रतिकुर्याद्वै न स तत्रापराध्नुयात् ।
अनृणस्तेन भवति वस पूजनि मागमः ॥ ३५
पूजन्युवाच ।
न कृतस्य तु कर्तुश्च सख्यं संधीयते पुनः ।
हृदयं तत्र जानाति कर्तुश्चैव कृतस्य च ॥ ३६
ब्रह्मदत्त उवाच ।
कृतस्य चैव कर्तुश्च सख्यं संधीयते पुनः ।
वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ॥ ३७
पूजन्युवाच ।
नास्ति वैरमतिक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत् ।
विश्वासाद्बध्यते लोकस्तस्माच्छ्रेयोप्यदर्शनम् ॥ ३८

तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि ।
साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥ ३९
ब्रह्मदत्त उवाच ।
संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि ।
अन्योन्यस्य हि विश्वासः श्वानश्वपचयोरिव ॥ ४०
अन्योन्यकृतवैराणां संवासान्मृदुतां गतम् ।
नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥ ४१
पूजन्युवाच ।
वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजम् ॥ ४२
तत्र दाता न हन्तव्यः क्षत्रियेण विशेषतः ।
प्रकाशं वाऽप्रकाशं वा बुद्ध्वा दोषबलाबलम् ॥ ४३
कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
प्रच्छन्नं तिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ ४४
न वित्तेन न पारुष्यैर्न च सान्त्वेन च श्रुतैः ।
वैराग्निः शाम्यते राजन्निमग्नोऽग्निरिवार्णवे ॥ ४५
न हि वैराग्निरुद्भूतः कर्म चाप्यपराधजम् ।
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ॥४६
सत्कृतस्यार्थमानाभ्यां तत्र पूर्वापकारिणः ।
नैव शान्तिर्न विश्वासः कर्मणा जायते बलात् ॥४७
नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान् ।
उषितावाऽपि चकितं नेदानीं विश्वसाम्यहम् ॥४८
ब्रह्मदत्त उवाच ।
कालेन क्रियते कार्यं तथैव विविधाः क्रियाः ।
कालेनैव प्रवर्तन्ते कः कस्येत्यपराध्यति ॥ ४९
तुल्यं चोभे प्रवर्तेते मरणं जन्म चैव हि ।
कार्यते चैव कालेन तन्निमित्तं न जीवति ॥ ५०
बध्यन्ते युगपत्केचिदेकैकं चापरे तथा ।
कालो दहति भूतानि संप्राप्तोऽग्निरिवेन्धनम् ॥ ५१

---

भार्या जरेति झ. पाठः । जरा वीर्यहरत्वात् । बीजमात्रं प्रसवरूपत्वात् । शत्रुः रिक्थहरत्वात् । क्लिन्नपाणिः उपक्रियमाणः । धनादिना पूज्यमानमेव मित्रं नान्यदित्यर्थः ॥ ३० ॥ हेतुः पुत्ररक्षा स्नेहो वा ॥ ३१ ॥ कर्म स्वकृतम् ॥ ३२ ॥ अन्योन्यस्यापकारमुभावपि नित्यं स्मरत इत्यर्थः ॥ ३६ ॥ न शक्यन्ते जेतुमिति शेषः ॥ ३९ ॥ श्वपचश्चण्डालः । श्वमांसाहारोऽपि शुना सह सख्यमेति ॥ ४० ॥ वैरं स्त्रीकृतं कृष्णशिशुपालयोः । वास्तु गृहादिकं स्थानं तज्जं कौरवपाण्डवानाम् । वाग्जं द्रोणद्रुपदयोः । सापत्नं जातिवैरं मूषकमार्जारयोः । अपराधजं आवयोः ॥४२॥ कृतवैरोऽपि दाताऽर्थादिना मानयिता अर्थाशावता राज्ञा न हन्तव्यः ॥ ४३ ॥ वैराग्निः अदग्ध्वा न शाम्यत्यपराधजं कर्म एकतरक्षयाद्विना न शाम्यतीति योजना ॥ ४६ ॥ कार्यते जायते । तन्निमित्तं कालनिमित्तम् । न जीवति म्रियते ॥ ५० ॥

नाहं प्रमाणं नैव त्वमन्योन्यं कारणं शुभे ।
कालो नित्यमुपादत्ते सुखं दुःखं च देहिनाम् ॥ ५२
एवं वसेह सस्नेहा यथाकाममहिंसिता ।
यत्कृतं तत्तु मे क्षान्तं त्वं च वै क्षम पूजनि ॥ ५३
पूजन्युवाच ।
यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् ।
कस्मादपचितिं यान्ति बान्धवा बान्धवे हते ॥ ५४
कस्माद्देवासुराः सर्वे अन्योन्यमभिजघ्निरे ।
यदि कालेन निर्याणं सुखदुःखे भवाभवौ ॥ ५५
भिषजो भैषजं कर्तुं कस्मादिच्छन्ति रोगिणः ।
यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥ ५६
प्रलापः सुमहान्कस्मात्क्रियते शोकमूर्च्छितैः ।
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु ॥ ५७
तव पुत्रो ममापत्यं हतवान्हिंसितो मया ।
अनन्तरं त्वयाहं च बाधितव्या महीपते ॥ ५८
अहं हि पुत्रशोकेन कृतपापा तवात्मजे ।
तथा त्वया प्रहर्तव्यं मयि तत्त्वं च मे शृणु ॥ ५९
भक्षार्थं क्रीडनार्थं च नरा वाञ्छन्ति पक्षिणः ।
तृतीयो नास्ति संयोगो वधबन्धादृते क्षमः ॥ ६०
वधबन्धभयादेके मोक्षतन्त्रमुपाश्रिताः ।
जनीमरणजं दुःखं प्राहुर्वेदविदो जनाः ॥ ६१
सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः ।
दुःखादुद्विजते सर्वं सर्वस्य सुखमीप्सितम् ॥ ६२
दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः ।
दुःखं चानिष्टसंवासो दुःखमिष्टवियोजनम् ॥ ६३
वैरबन्धकृतं दुःखं स्त्रीकृतं सहजं तथा ।
दुःखं दुःखेन सततं विवर्धति नराधिप ॥ ६४
न दुःखं परदुःखे वै केचिदाहुरबुद्धयः ।
यो दुःखं नाभिजानाति स जल्पति महाजने ॥ ६५
यस्तु शोचति दुःखार्तः स कथं वक्तुमुत्सहेत् ।
रसज्ञः सर्वदुःखस्य यथाऽऽत्मनि तथा परे ॥ ६६
'भिन्ना श्लिष्टा न सज्यन्ते शस्त्रैः सुनिशितैरपि ।
साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥' ६७
यत्कृतं ते मया राजंस्त्वया च मम यत्कृतम् ।
न तद्वर्षशतैः शक्यं व्यपोहितुमरिंदम ॥ ६८
आवयोः कृतमन्योन्यं तत्र संधिर्न विद्यते ।
स्मृत्वास्मृत्वा हि ते पुत्रं नवं वैरं भविष्यति ॥ ६९
वैरमन्तिकमासाद्य यः प्रीतिं कर्तुमिच्छति ।
मृण्मयस्येव भग्नस्य तस्य संधिर्न विद्यते ॥ ७०
निश्चयः स्वार्थशास्त्रेषु न विश्वासः सुखोदयः ।
उशना चैव गाथे द्वे प्रह्लादायाब्रवीत्पुरा ॥ ७१
ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा ।
वध्यन्ते श्रद्दधाना हि मधु शुष्कतृणैरिव ॥ ७२
न हि वैराणि शाम्यन्ति कुलेष्वादशमाद्युगात् ।
आख्यातारश्च विद्यन्ते कुले चेज्जायते पुमान् ॥ ७३
उपगृह्य तु वैराणि सान्त्वयन्ति नराधिपाः ।
अथैनं प्रतिहिंसन्ति पूर्णं घटमिवाश्मनि ॥ ७४
सदा न विश्वसेद्राजन्पापं कृत्वेह कस्यचित् ।
अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते ॥ ७५
ब्रह्मदत्त उवाच ।
नाविश्वासाच्चिनोत्यर्थमीहते चापि किंचन ।
भयात्त्वेकतरं मित्रं कृतकृत्या भवत्विह ॥ ७६
पूजन्युवाच ।
यस्येह व्रणिनौ पादौ पद्भ्यां च परिधावतः ।
क्षिण्येते तस्य तौ पादौ सुगुप्तमपि धावतः ॥ ७७
नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते ।
तस्य वायुरुजाऽत्यर्थं नेत्रयोर्भवति ध्रुवम् ॥ ७८
दुष्टं पन्थानमासाद्य यो मोहादभिपद्यते ।
आत्मनो बलमज्ञात्वा तदन्तं तस्य जीवितम् ॥ ७९
यस्तु वर्षमविज्ञाय क्षेत्रं कर्षति कर्षकः ।
हीनः पुरुषकारेण तस्य वै नाप्नुते फलम् ॥ ८०
यस्तु तिक्तं कषायं वा स्वादु वा मधुरं हितम् ।
आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ॥ ८१
पथ्यं मुक्त्वा तु यो मोहाद्दुष्टमश्नाति भोजनम् ।

क्षम क्षमस्व ॥ ५३ ॥ कस्माद्धर्मोऽस्ति कर्तृषु । तदा विधिनिषेधकथा व्यर्था स्यादिति भावः ॥ ५७ ॥ भिन्नक्रमा-न सज्यन्त इति ध. पाठः ॥ ६७ ॥ वैरिणो वाक्ये इति शेषः । शत्रुणा दर्शितं पुरःस्थितं मधु श्रद्दधानाः शुष्क-तृणैश्छन्ने प्रपाते यथा पतन्ति तद्वदेते इत्यर्थः ॥ ७२ ॥ सर्वथाऽनाश्वासे नृणां जीवनमेव न स्यादित्याह नेति ॥ ७६ ॥

परिणाममविज्ञाय तदन्तं तस्य जीवितम् ॥ ८२
दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदात्तं कर्म वै तत्र दैवं क्लीबा उपासते ॥ ८३
कर्म चात्महितं कार्यं तीक्ष्णं वा यदि वा मृदु ।
ग्रस्यतेऽकर्मशीलस्तु सदाऽनर्थैरकिंचनः ॥ ८४
तस्मात्संशयितव्येऽर्थे कार्य एव पराक्रमः ।
सर्वस्वमपि संत्यज्य कार्यमात्महितं नरैः ॥ ८५
विद्या शौर्यं च दाक्ष्यं च बलं शौर्यं च पञ्चमम् ।
मित्राणि सहजान्याहुर्वर्तयन्तीह यैर्बुधाः ॥ ८६
निवेशनं च कुप्यं च क्षेत्रं भार्या सुहृज्जनम् ।
एतान्युपचितान्याहुः सर्वत्र लभते पुमान् ॥ ८७
सर्वत्र रमते प्राज्ञः सर्वत्र च विरोचते ।
न विभीषयते किंचिद्भीषितो न बिभेति च ॥ ८८
नित्यं बुद्धिमतोऽप्यर्थः स्वल्पकोऽपि विवर्धते ।
दाक्ष्येण कुर्वतां कर्म संयमात्प्रतितिष्ठति ॥ ८९
गृहस्नेहावबद्धानां नराणामल्पमेधसाम् ।
कुस्त्री खादति मांसानि माघमां सेगवा इव ॥ ९०
गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे ।
इत्येवमवसीदन्ति नरा बुद्धिविपर्यये ॥ ९१
उत्पथाच्च विमानाच्च देशाद्दुर्भिक्षपीडितात् ।
अन्यत्र वसतिं गच्छेद्वसेद्वा नित्यमानितः ॥ ९२
तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे ।
कृतमेतदनाहार्यं तव पुत्रे च पार्थिव ॥ ९३
कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् ।
कुसंबन्धं कुदेशं च दूरतः परिवर्जयेत् ॥ ९४
कुमित्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः ।
कुराज्ये निर्वृतिर्नास्ति कुदेशे नास्ति जीविका ॥ ९५
कुपुत्रे सौहृदं नास्ति नित्यमस्थिरसौहृदम् ।
अवमानः कुसंबन्धे भवत्यर्थविपर्यये ॥ ९
सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः
तन्मित्रं यत्र विश्वासः स देशो यत्र जीवति ॥ ९
यत्र नास्ति बलात्कारः स राजा तीव्रशासनः ।
स च यौनाभिसंबन्धो यः सतोऽपि बुभूषति ॥ ९
भार्या देशोऽथ मित्राणि पुत्रसंबन्धिबान्धवाः ।
एते सर्वे गुणवति धर्मनेत्रे महीपतौ ॥ ९
अधर्मज्ञस्य विषये प्रजा नश्यन्ति निग्रहात् ।
राजा मूलं त्रिवर्गस्य अप्रमत्तोऽनुपालयन् ॥ १०
बलिषड्भागमुद्धृत्य फलं समुपयोजयेत् ।
न रक्षति प्रजाः सम्यग्यः स पार्थिवतस्करः ॥ १०

दत्वाऽभयं यः स्वयमेव राजा
न तत्प्रमाणं कुरुतेऽर्थलोभात् ।
स सर्वलोकादुपलभ्य पाप-
मधर्मबुद्धिर्निरयं प्रयाति ॥ १०

दत्त्वाऽभयं स्वयं राजा प्रमाणं कुरुते यदि ।
स सर्वं सुखमाप्नोति प्रजा धर्मेण पालयन् ॥ १०
पिता भ्राता गुरुः शास्ता वह्निर्वैश्रवणो यमः ।
सप्त राज्ञो गुणानेतान्मनुराह प्रजापतिः ॥ १०
पिता हि राजा लोकस्य प्रजानां योऽनुकम्पिता
तस्मिन्मिथ्यापनीते हि तिर्यग्भवति मानवः ॥ १०
संभावयति मातेव दीनमप्युपपद्यते ।
दहत्यग्निरिवानिष्टान्यमयत्यहितांस्तदा ॥ १०
इष्टेषु विसृजन्नर्थान्कुबेर इव कामदः ।
गुरुर्धर्मोपदेशेन गोप्ता च परिपालनात् ॥ १०
यस्तु रञ्जयते राजा पौरजानपदान्गुणैः ।
न तस्य भ्रश्यते राज्यं गुणधर्मानुपालनात् ॥ १०
यः सम्यक्प्रतिगृह्णाति पौरजानपदार्चनम् ।

परिमाणमविज्ञाय इति ङ. थ. पाठः ॥ ८२ ॥ तस्मात्सर्वं व्यपोह्यार्थमिति झ. पाठः ॥ ८५ ॥ कुप्यं ताम्रादि । चादकुप्यं स्वर्णरत्नादि । उपहितान्याहुरिति झ. पाठः । तत्र उपहितानि उपाधिमित्राणीत्यर्थः ॥ ८७ ॥ किंचित्तमिति शेषः ॥ ८८ ॥ खादति । स्वापराधैस्तं संतापयति शुष्कं करोति। माघमां कर्कटीम् । सेगवास्तदपत्यानि । कर्कट्या नाशहेतुर्गर्भ एवेति प्रसिद्धम् ॥ ९० ॥ उत्पतेत्सहजाद्देशाद्व्याधिदुर्भिक्षपीडितादिति झ. पाठः ॥ ९२ ॥ मे मया। अनाहार्यं अपरिहार्यमित्यर्थः ॥ ९३ ॥

भीरेव नास्ति संबन्धो दरिद्रं यो बुभूषति इति झ. पाठः तत्र यत्र देशे बलात्कारो नास्ति तत्र भीरेवनास्ति । यं राजा दरिद्रं जनं बुभूषति पालयितुमिच्छति सएव तेन स पाल्यपालकभावलक्षणः संबन्ध इति योज्यम्। यं जनोऽपि बुभू षति इति ङ. थ. पाठः ॥ ९८ ॥ धर्मनेत्रो धर्मनेता ॥ ९९ । समुपयोजयेत् भक्षयेत् ॥ १०१ ॥ अभयमिति च्छेद ॥ १०२ ॥ संभावयति इष्टं चिन्तयति । उपपद्यते पालयति ॥ १०६ ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ।

स सुखं प्रेक्षते राजा इह लोके परत्र च ॥ १०९
नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः ।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥ ११०
प्रजा यस्य विवर्धन्ते सरसीव महोत्पलम् ।
स राजा सर्वसुखदः स्वर्गलोके महीयते ॥ १११
बलिना विग्रहो राजन्न कदाचित्प्रशस्यते ।
बलिना विग्रही तस्य कुतो राज्यं कुतः सुखम् ॥
भीष्म उवाच ।
सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपम् ।
राजानं समनुज्ञाप्य जगामाभीप्सितां दिशम् ॥
एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितम् ।
मयोक्तं भरतश्रेष्ठ किमन्यच्छ्रोतुमिच्छसि ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

## चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

भीष्मेण युधिष्ठिरंप्रति शत्रुंतपाय भारद्वाजोक्तापद्धर्मानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
युगक्षयात्परिक्षीणे धर्मे लोके च भारत ।
दस्युभिः पीड्यमाने च कथं स्थेयं पितामह ॥ १
भीष्म उवाच ।
हन्त ते वर्तयिष्यामि नीतिमापत्सु भारत ।
उत्सृज्यापि घृणां काले यथा वर्तेत भूमिपः ॥ २
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भारद्वाजस्य संवादं राज्ञः शत्रुंतपस्य च ॥ ३
राजा शत्रुंतपो नाम सौवीरेषु महारथः ।
भारद्वाजमुपागम्य पप्रच्छार्थविनिश्चयम् ॥ ४
अलब्धस्य कथं लिप्सा लब्धं केन विवर्धते ।
वर्धितं पाल्यते केन पालितं प्रणयेत्कथम् ॥ ५
तस्मै विनिश्चितार्थाय परिपृष्टोऽर्थनिश्चयम् ।
उवाच मतिमान्वाक्यमिदं हेतुमदुत्तमम् ॥ ६
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ॥ ७
नित्यमुद्यतदण्डस्य भृशमुद्विजते नरः ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ ८
एवमेव प्रशंसन्ति बुधा ये तत्त्वदर्शिनः ।
तस्माच्चतुष्टये तस्मिन्प्रधानो दण्ड उच्यते ॥ ९
छिन्नमूले त्वधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ॥ १०
मूलमेवादितश्छिन्द्यादरिपक्षस्य पण्डितः ।
ततः सहायान्पक्षं च सर्वमेवानुशातयेत् ॥
सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
आपदागमकाले तु कुर्वीत न विचारयेत् ॥
वाङ्मात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः
श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ विवर्जयेत्
सपत्नसहितो राज्ये कृत्वा सन्धिं न विश्वसे
अपक्रामेत्ततः शीघ्रं कृतकार्यो विचक्षणः ।
शत्रुं च मित्रं पूर्वेण सान्त्वेनैवानुसान्त्वयेत्
नित्यशश्चोद्विजेत्तस्मात्सर्पाद्वेश्मगतादिव ॥
यस्य बुद्धिं परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥
अञ्जलिं शपथं सान्त्वं शिरसा पादवन्दनम्
अश्रुप्रपातनं चैव कर्तव्यं भूतिमिच्छता ॥
वहेदमित्रं स्कन्धेन यावदर्थस्य लम्भनम् ।
अथैनमागते काले भिन्द्याद्घटमिवाश्मनि ॥
मुहूर्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत् ।
मा तुषाग्निरिवानर्चिर्धूमायेत चिरं नरः ॥
नानार्थिकोऽर्थसंबन्धं कृतघ्ने न समाचरेत् ।
अर्थी तु शक्यते भोक्तुं कृतकार्योऽवमन्यते
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत्
कोकिलस्य वराहस्य मेरोः शून्यस्य वेश्मनः

घृणां दयाम् । तथा वर्तेत भूमिपः इति ट. ड. थ. द. पाठः ॥ २ ॥ शत्रुंजयस्य च इति झ. पाठः ॥ ३ ॥ नानार्थिकः बहुप्रयोजनवान् । कृतघ्ने पुरुषे अर्थसंबन्धं न चरेत् ॥ २० ॥ वराहस्य श्रेयोमूलोत्खननम् । तच्च

व्यालस्य भक्तचित्तस्य यच्छ्रेयस्तत्समाचरेत् ॥ २१
उत्थायोत्थाय गच्छेच्च नित्ययुक्तो रिपोर्गृहम् ।
कुशलं चास्य पृच्छेत यद्यप्यकुशलं भवेत् ॥ २२
नालसाः प्राप्नुवन्त्यर्थान्न क्लीबा नातिमानिनः ।
न च लोकरवाद्भीता न वै शश्वत्प्रतीक्षिणः ॥ २३
नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ २४
बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत् ॥ २५
पानमक्षास्तथा नार्यो मृगया गीतवादितम् ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥२६
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।
अन्धः स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् ॥२७
देशकालं समासाद्य विक्रमेत विचक्षणः ।
देशकालव्यतीतो हि विक्रमो निष्फलो भवेत् ॥२८
कालाकालौ संप्रधार्य बलाबलमथात्मनः ।
परस्य च बलं ज्ञात्वा तथाऽऽत्मानं नियोजयेत् ॥२९
दण्डेनोपनतं शत्रुं यो राजा न नियच्छति ।
स मृत्युमुपगूहेत गर्भमश्वतरी यथा ॥ ३०
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसंकाशो न च शीर्येत कस्यचित् ३१
आशां कालवतीं कुर्यात्तां च विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुमत् ॥३२
भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ३३
न साहसमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ३४
अनागतं विजानीयात्त्यजेद्भयमुपस्थितम् ।
पुनर्बुद्धिक्षयात्किंचिदनिवृत्तिं निशामयेत् ॥ ३५
प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम् ।
अनागतसुखाशा च नैव बुद्धिमतां नयः ॥ ३६
योऽरिणा सह संधाय विश्वस्तः स्वपते सुखम् ।
स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुध्यते ॥ ३७
कर्मणा येन केनेह मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ३८
ये सपत्नाः सपत्नानां सर्वांस्ताननुवर्तयेत् ।
आत्मनश्चापि बोद्धव्याश्चाराः सुमहिताः परैः ॥३९
चारः सुविहितः कार्य आत्मनोऽथ परस्य च ।
पाषण्डांस्तापसादींश्च परराष्ट्रे प्रवेशयेत् ॥ ४०
उद्यानेषु विहारेषु प्रपास्वावसथेषु च ।
पानागारे प्रवेशेषु तीर्थेषु च सभासु च ॥ ४१
धर्माभिचारिणः पापाश्चौरा लोकस्य कण्टकाः ।
समागच्छन्ति तान्बुद्ध्वा नियच्छेच्छमयीत च ॥ ४२
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमभ्येति नापरीक्ष्य च विश्वसेत् ॥ ४३
विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना ।
अथास्य प्रहरेत्काले किंचिद्विचलिते पदे ॥ ४४
अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान् ।
भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति ॥ ४५
अवधानेन मौनेन काषायेण जटाजिनैः ।
विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृकः ॥ ४६
पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत् ।
अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिमिच्छता ॥ ४७
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ ४८
प्रत्युत्थानाभिवादाभ्यां संप्रदानेन केनचित् ।
प्रपूजयन्निघाती स्यात्तीक्ष्णतुण्ड इव द्विजः ॥ ४९
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।

---

शत्रूणां कुर्यात् । मेरोरचञ्चलत्वमनुल्लङ्घनीयत्वं च शून्यस्य वेश्मनः संपदागम इष्टस्तमिच्छेत् । व्यालस्य सर्पवदन्ध्यकोपत्वमिष्टं तमङ्गीकुर्यात् । नटस्य भक्तिमित्रस्य इति झ. पाठः । तत्र नटस्य नानारूपत्वमिष्टम् । एवं राजा स्निग्धप्रसन्नादीन् गुणान् बिभृयात् । भक्तिमित्रस्य स्वाराध्योदय इष्ट एवं स्वप्रतिपाल्यानां प्रजानामुदयो राज्ञा नित्यमेष्टव्य इत्यर्थः ॥ २१ ॥ बकादीनामेकाग्रत्वं निर्भयत्वं शीघ्रकारित्वमपरावृत्तित्वं च गुणास्तान् परार्थादाने राजाश्रयेदित्यर्थः ॥ २५ ॥ अश्वतरी गर्दभजाऽश्व उदरभेदेनैव प्रसूत इति प्रसिद्धम् ॥ ३० ॥ न संशयमनारुह्य इति झ. पाठः ॥ ३४ ॥ पाषण्डाद्यैरविज्ञातैर्विदित्वारिं वशं नयेत् । इति ट. ड. थ. पाठः ॥४०॥ कर्तव्या भूतिमिच्छता इति ट. पाठः । त्यक्तव्या भूतिमिच्छता इति ध. पाठः ॥ ४७ ॥

नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ॥ ५०
नास्ति जात्या रिपुर्नाम मित्रं वाऽपि न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ ५१
न प्रमुञ्चेत दायादं वदन्तं करुणं बहु ।
दुःखं तत्र न कर्तव्यं हन्यात्पूर्वापकारिणम् ॥ ५२
संग्रहानुग्रहे यत्नः सदा कार्योऽनसूयता ।
निग्रहश्चापि यत्नेन कर्तव्यो हितमिच्छता ॥ ५३
प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम् ।
असिनाऽपि शिरश्छित्त्वा शोचेत च रुदेत च ॥ ५४
निमन्त्रयीत सान्त्वेन संमानेन तितिक्षया ।
आशाकरणमित्येतत्कर्तव्यं भूतिमिच्छता ॥ ५५
न शुष्कवैरं कुर्वीत बाहुभ्यां न नदीं तरेत् ।
अनर्थकमनायुष्यं गोविषाणस्य भक्षणम् ।
दन्ताश्च परिमृद्यन्ते रसश्चापि न लभ्यते ॥ ५६
त्रिवर्गे त्रिविधा पीडा अनुबन्धस्तथैव च ।
अनुबन्धं तथा ज्ञात्वा पीडां च परिवर्जयेत् ॥ ५७
ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च ।
पुनःपुनः प्रवर्धन्ते तस्माच्छेषं न कारयेत् ॥ ५८
ऋणशेषा विवर्धन्ते परिभूताश्च शत्रवः ।
आवहन्त्यनयं तीव्रं व्याधयश्चाप्युपेक्षिताः ॥ ५९
नासम्यक्कृत्यकारी स्यादप्रमत्तः सदा भवेत् ।
कण्टकोपि हि दुश्छिन्नो विकारं कुरुते चिरम् ॥ ६०
वधेन च मनुष्याणां मार्गाणां दूषणेन च ।
आकाराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ ६१
गृध्रदृष्टिर्बकालीनः श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥ ६२
शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत् ।
लुब्धमर्थप्रदानेन समं तुल्येन विग्रहः ॥ ६३
श्रेणीमुख्योपजापेषु वल्लभानुनयेषु च ।
अमात्यान्परिरक्षेत भेदसंघातयोरपि ॥ ६४
मृदुरित्यवजानन्ति तीक्ष्ण इत्युद्विजन्ति च ।
तीक्ष्णकाले भवेत्तीक्ष्णो मृदुकाले मृदुर्भवेत् ॥ ६५
मृदुनैव मृदुं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरो मृदुः ॥ ६६
काले मृदुर्यो भवति काले भवति दारुणः ।
स साधयति कृत्यानि शत्रुं चाप्यधितिष्ठति ॥ ६७
पण्डितेन विरुद्धस्तु दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ६८
न तत्तरेद्यस्य न पारमुत्तरे-
न्न तद्धरेद्यत्पुनराहरेत्परः ।
न तत्खनेद्यस्य न मूलमुद्धरे-
न्न तं हन्याद्यस्य शिरो न पातयेत् ॥ ६९
इतीदमुक्तं वृजिनाभिसंहितं
न चैतदेवं पुरुषः समाचरेत् ।
परप्रयुक्तस्तु कथं विभावये-
दतो मयोक्तं भवतो हितार्थिना ॥ ७०
भीष्म उवाच ।
यथावदुक्तं वचनं हितार्थिना
निशम्य विप्रेण सुवीरराष्ट्रपः ।
तथाऽकरोद्वाक्यमदीनचेतनः
श्रियं च दीप्तां बुभुजे सबान्धवः ॥ ७१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

शुष्कं लाभशून्यम् ॥ ५६ ॥ त्रिवर्गः धर्मार्थकामाः तत्र त्रिविधा पीडा । धर्मेणार्थस्य पीडा अर्थेन धर्मस्य कामेन, तयोरिति । अनुबन्धाः फलानि । धर्मस्यार्थः अर्थस्य कामः कामस्येन्द्रियप्रीतिरिति क्षुद्राः । धर्मस्य चित्तशुद्धिरर्थस्य यज्ञः कामस्य जीवनमात्रमिति प्राज्ञाः । तत्र बलाबलं ज्ञात्वाऽनुबन्धाँल्लिप्सेत पीडां तु परिवर्जयेदेवेत्यर्थः । पीडां विद्वान्वशं नयेदिति ङ. थ. पाठः ॥ ५७ ॥ गृध्रदृष्टिर्गृध्रवत् दूरदर्शी । बकवदालीनो निश्चलः । श्वचेष्टः शुनकवज्जागरूकश्चोरसूचकश्च । काकवत् शङ्की परेङ्गितज्ञः । भुजङ्गचरितं अकस्मात्परकृते दुर्गादौ प्रवेशनम् ॥ ६२ ॥ श्रेणीमुख्यः नानाजातियाः सन्त एककार्ये निविष्टाः श्रेणयस्तासां मुख्यस्य उपजापो भेदः वल्लभानां मित्राणामनुनयेषु अन्यैः क्रियमाणेषु अमात्यान्परिरक्षेत । भेदात्संघातात्संभूयकार्यकारित्वाच्च । संहता ह्यमात्याः सद्यो राजानमराजानं कुर्युर्विपरीतं वा कुर्युरित्यर्थः ॥ ६४ ॥ वृजिनाभिसंहितं आपत्कालाभिप्रायेणैवैतदुक्त नत्वेतदेवं पुरुषः समाचरेत् । परेणाभियोगे कृते सति । इदं मदुक्तं कथं न भावयेत् अपितु भावयेदेव । आपदि एतदनुष्ठानादधर्मो नास्तीति भावः ॥ ७० ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

## एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

भीष्मेण युधिष्ठिरंप्रति आपदि अभक्ष्यभक्षणेनाप्यात्मरक्षणकरणे दृष्टान्ततया विश्वामित्रश्वपचसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
हीने परमके धर्मे सर्वलोकविलङ्घिते ।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते ॥ १
मर्यादासु प्रभिन्नासु क्षुभिते लोकनिश्चये ।
राजभिः पीडिते लोके चोरैर्वाऽपि विशांपते ॥ २
सर्वाश्रमेषु मूढेषु कर्मसूपहतेषु च ।
कामाल्लोभाच्च मोहाच्च भयं पश्यत्सु भारत ॥ ३
अविश्वस्तेषु सर्वेषु नित्यं भीतेषु भारत ।
नित्यं च हन्यमानेषु वञ्चयत्सु परस्परम् ॥ ४
प्रदीप्तेषु च देशेषु ब्राह्मण्ये चातिपीडिते ।
अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ॥ ५
सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने ।
केनस्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ॥ ६
अतितिक्षुः पुत्रपौत्राननुक्रोशान्नराधिप ।
कथमापदि वर्तेत तन्मे ब्रूहि पितामह ॥ ७
कथं च राजा वर्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न हीयेत परंतप ॥ ८
भीष्म उवाच ।
राजमूला महाबाहो योगक्षेमसुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥ ९
कृतं त्रेता द्वापरं च कलिश्च भरतर्षभ ।
राजमूला इति मतिर्मम नास्त्यत्र संशयः ॥ १०
तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञानबलमास्थाय जीवितव्यं भवेत्तदा ॥ ११
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे ॥ १२
त्रेताद्वापरयोः संधौ पुरा दैवव्यतिक्रमात् ।
अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ॥ १३
प्रजानामतिवृद्धानां युगान्ते समुपस्थिते ।
त्रेतायां मोक्षसमये द्वापरप्रतिपादने ॥ १४
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तमण्डलः॥१५
नावश्यायोऽपि रात्र्यन्ते कुत एवाभ्रराजयः ।
नद्यः संक्षिप्ततोयौघाः किंचिदन्तर्गताऽभवन्॥१६
सरांसि सरितश्चैव कूपाः प्रस्रवणानि च ।
हतत्विषो न लक्ष्यन्ते निसर्गात्पूर्वकारितात्॥१७
भूमिः शुष्कजलस्थाना विनिवृत्तसभाप्रपा ।
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥ १८
उत्सन्नकृषिगोरक्षा निवृत्तविपणापणा ।
निवृत्तपूर्वसमया संप्रनष्टमहोत्सवा ॥ १९
अस्थिकङ्कालसंकीर्णा हाहाभूतनराकुला ।
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥ २०
क्वचिच्चोरैः क्वचिच्छस्त्रैः क्वचिद्राजभिरातुरैः ।
परस्परभयाच्चैव शून्यभूयिष्ठनिर्जना ॥ २१
गतदैवतसंस्थाना वृद्धबालविनाकृता ।
गोजाविमहिषीहीना परस्परपराहता ॥ २२
हतविप्रा हतारक्षा प्रनष्टौषधिसंचया ।
शवभूतनरप्राया बभूव वसुधा तदा ॥ २३
तस्मिन्प्रतिभये काले क्षीणधर्मे युधिष्ठिर ।
बभूवुः क्षुधिता मर्त्याः खादमानाः परस्परम्॥२४
ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदेवताः ।
आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः ॥ २५
विश्वामित्रोऽथ भगवान्महर्षिरनिकेतनः ।
क्षुधा परिगतो धीमान्समन्तात्पर्यधावत ॥ २६
त्यक्त्वा दारांश्च पुत्रांश्च कस्मिंश्च जनसंसदि ।
भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः ॥ २७
स कदाचित्परिपतञ्श्वपचानां निकेतनम् ।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित्॥२८

---

अतितिक्षुः त्यक्तुमनिच्छुः । अनुक्रोशात् दयातः ॥ ७ ॥ अप्राप्तप्रापणं योगः । प्राप्तसंरक्षणं क्षेमः ॥ ९ ॥ पक्कणे चण्डालागारे ॥ १२ ॥ प्रतिलोमो वक्रः । व्यावृत्तं अन्यथाभूत मण्डलं यस्य ॥ १५ ॥ अवश्यायो धूमिका ॥ १६ ॥ विपणो विक्रयादिः । आपणो हट्टः ॥ १९ ॥ हता आरक्षा रक्षाकर्तारो यस्यां सा ॥ २३ ॥

विभिन्नकलशाकीर्णं श्वमांसेन च भूषितम् ।
वराहखरभग्नास्थिकपालघटसंकुलम् ॥ २९
मृतचेलपरिस्तीर्णं निर्माल्यकृतभूषणम् ।
सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमुखम् ॥ ३०
कुक्कुटारावबहुलं गर्दभध्वनिनादितम् ।
उद्घोषद्भिः खरैर्वाक्यैः कलहद्भिः परस्परम् ॥ ३१
उलूकपक्षिध्वनिभिर्देवतायतनैर्वृतम् ।
लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ॥ ३२
तत्प्रविश्य क्षुधाविष्टो गाधिपुत्रो महानृषिः ।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥ ३३
न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः ।
मांसमन्नं फलं मूलमन्यद्वा तत्र किंचन ॥ ३४
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः ।
पपात भूमौ दौर्बल्यात्तस्मिंश्चण्डालपक्कणे ॥ ३५
स चिन्तयामास मुनिः किंनु मे सुकृतं भवेत् ।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ॥ ३६
स ददर्श श्वमांसस्य कुतन्त्रीं पतितां मुनिः ।
चण्डालस्य गृहे राजन्सद्यः शस्त्रहतस्य वै ॥ ३७
स चिन्तयामास तदा स्तेयं कार्यमितो मया ।
न हीदानीमुपायो मे विद्यते प्राणधारणे ॥ ३८
आपत्सु विहितं स्तेयं विशिष्टसमहीनतः ।
परस्परं भवेत्पूर्वमास्थेयमिति निश्चयः ॥ ३९
हीनादादेयमादौ स्यात्समानात्तदनन्तरम् ।
असंभवे त्वाददीत विशिष्टादपि धार्मिकात् ॥ ४०
सोऽहमन्तावसायीनां हराम्येनां प्रतिग्रहात् ।
न स्तेयदोषं पश्यामि हरिष्याम्येतदामिषम् ॥ ४१
एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः ।
तस्मिन्देशे सुसुप्वाप पतितो यत्र भारत ॥ ४२
स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे ।
शनैरुत्थाय भगवान्प्रविवेश कुटीमुखम् ॥ ४३
स सुप्त एव चण्डालः श्लेष्मापिहितलोचनः ।
परिभिन्नस्वरो रूक्षः प्रोवाचाप्रियदर्शनः ॥ ४४
कः कुतन्त्रीं घट्टयति सुप्ते चण्डालपक्कणे ।
जागर्मि नैव सुप्तोऽस्मि हतोऽसीति च दारुणः ॥ ४५
विश्वामित्रोऽहमित्येव सहसा तमुवाच ह ।
सहसाऽभ्यागतं भूयः सोद्वेगस्तेन कर्मणा ॥ ४६
विश्वामित्रोऽहमायुष्मन्नागतोऽहं बुभुक्षितः ।
मा वधीर्मम सद्बुद्धे यदि सम्यक्प्रपश्यसि ॥ ४७
चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः ।
शयनादुपसंभ्रान्त उद्ययौ प्रति तं ततः ॥ ४८
स विसृज्याश्रु नेत्राभ्यां बहुमानात्कृताञ्जलिः ।
उवाच कौशिकं रात्रौ ब्रह्मन्किं ते चिकीर्षितम् ॥ ४९
विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन् ।
क्षुधितोऽन्तर्गतप्राणो हरिष्यामि श्वजाघनीम् ॥ ५०
क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः ।
क्षुच्च मां दूषयत्यत्र हरिष्यामि श्वजाघनीम् ॥ ५१
अवसीदन्ति मे प्राणाः स्मृतिर्मे नश्यति क्षुधा ।
दुर्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्जितः ।
सोधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥ ५२
यदा भैक्षं न विन्दामि युष्माकमहमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥ ५३
अग्निर्मुखं पुरोधाश्च देवानां शुचिषाड्विभुः ।
यथा च सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः ॥ ५४
तमुवाच स चण्डालो महर्षे शृणु मे वचः ।
श्रुत्वा तथा तमातिष्ठ यथा धर्मो न हीयते ॥ ५५
धर्मं तवापि विप्रर्षे शृणु यत्ते ब्रवीम्यहम् ॥ ५६
मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशः शरीरस्य तु जाघनी ॥ ५७
नेदं सम्यग्व्यवसितं महर्षे कर्म गर्हितम् ।
चण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ॥ ५८
साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे ।
श्वमांसलोभात्तपसो नाशस्ते स्यान्महामुने ॥ ५९

वृथा अन्नं विना ॥ ३६ ॥ कुतन्त्रीं दण्डिकाम् ॥ ३७ ॥ विप्रेण प्राणरक्षार्थं कर्तव्यमिति निश्चयः इति झ. पाठः ॥ ३९ ॥ प्रतिग्रहात्तज्जदोषात् स्तैन्यदोषमधिकं न पश्यामीत्यर्थः ॥ ४१ ॥ घट्टयति चालयति ॥ ४५ ॥ मम माम् ॥ ४७ ॥ कलुषं यातः पापं कर्मानुसृतः ॥ ५१ ॥ अग्निर्देवानां मुखं च पुरोधाश्च सः । शुचिषाट् शुचि मेध्यमेव सहते नामेध्यम् तथाहं ब्रह्मा ब्राह्मणोऽपि तत्तुल्यत्वात्सर्वभुग्भविष्यामीत्यर्थः ॥ ५४ ॥

जानता विहितो मार्गो न कार्यो धर्मसंकरः ।
मा स्म धर्मं परित्याक्षीस्त्वं हि धर्मविदुत्तमः ॥६०
विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ ।
क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ॥ ६१
निराहारस्य सुमहान्मम कालोऽभिधावतः ।
न विद्यतेऽप्युपायश्च कश्चिन्मे प्राणधारणे ॥ ६२
येनकेन विशेषेण कर्मणा येनकेनचित् ।
उज्जिहीर्षे सीदमानः समर्थो धर्ममाचरेत् ॥ ६३
ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।
ब्रह्मवह्निर्मम बलं भोक्ष्यामि शमयन्क्षुधाम् ॥ ६४
यथायथैव जीवेद्धि तत्कर्तव्यमहेलया ।
जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ॥ ६५
सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥ ६६
जीवन्धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि तु ।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥ ६७

श्वपच उवाच ।

नैतत्खादन्प्राप्स्यसे प्राणमद्य
नायुर्दीर्घं नामृतस्येव तृप्तिम् ।
भिक्षामन्यां भिक्ष मा ते मनोस्तु
श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ॥ ६८

विश्वामित्र उवाच ।

न दुर्भिक्षे सुलभं मांसमन्य-
च्छ्वपाकमन्ये न च मेऽस्ति वित्तम् ।
क्षुधार्तश्चाहमगतिर्निराशः
श्वजाघनीं षड्रसात्साधु मन्ये ॥ ६९

श्वपच उवाच ।

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै विशः ।
'शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ।'
यदि शास्त्रं प्रमाणं ते माऽभक्ष्ये वै मनः कृथाः ॥७०

विश्वामित्र उवाच ।

अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै ।
अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ॥७१

श्वपच उवाच ।

भिक्षामन्यामाहरेति न च कर्तुमिहार्हसि ।
न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम् ॥ ७२

विश्वामित्र उवाच ।

शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये ।
परां मेध्याशनादेनां भक्ष्यां मन्ये श्वजाघनीम् ॥७३

श्वपच उवाच ।

असद्भिर्यः समाचीर्णो न स धर्मः सनातनः ।
अकार्यमिह कार्यं वा मा छलेनाशुभं कृथाः ॥ ७४

विश्वामित्र उवाच ।

न पातकं नावमतमृषिः सन्कर्तुमर्हति ।
समौ च श्वमृगौ मन्ये तस्माद्भोक्ष्ये श्वजाघनीम् ७५

श्वपच उवाच ।

यद्ब्राह्मणार्थे कृतमर्थितेन
तेनर्षिणा तदभक्ष्यं न कामात् ।
स वै धर्मो यत्र न पापमस्ति
सर्वैरुपायैर्गुरवो हि रक्ष्याः ॥ ७६

विश्वामित्र उवाच ।

मित्रं च मे ब्राह्मणस्यायमात्मा
प्रियश्च मे पूज्यतमश्च लोके ।
तद्भर्तुकामोऽहमिमां जिहीर्षे
नृशंसानामीदृशानां न बिभ्ये ॥ ७७

श्वपच उवाच ।

कामं नरा जीवितं संत्यजन्ति
न चाभक्ष्ये क्वचित्कुर्वन्ति बुद्धिम् ।
सर्वांश्च कामान्प्राप्नुवन्तीति विद्धि
स्वर्गे निवासात्सहते क्षुधां वै ॥ ७८

ऐन्द्रः पालनात्मकः । आग्निकः सर्वभुक्स्वरूपः । ब्रह्म वेदः स एव वह्निः ॥ ६४ ॥ इति कर्तुं नार्हसीति योजना ॥ ७२ ॥ शिष्टाः अगस्त्यादयः ॥ ७३ ॥ समौ पशुत्वादिति भावः ॥ ७५ ॥ नृशंसमपि भक्षिता तेन वातापिना भक्ष्यमाणा ब्राह्मणा रक्षिता इति धर्म एवेत्यर्थः ॥ ७५ ॥ तर्हि अयमात्मा देहो मम मित्रं एतस्य रक्षणार्थं मयाप्येतद्भुक्तं चेन्न कश्चिद्दोषोऽस्तीत्याह मित्रं चेति ॥ ७७ ॥

विश्वामित्र उवाच ।

स्थाने भवेत्स यशः प्रेत्यभावे
निःसंशयः कर्मणां वै विनाशः ।
अहं पुनर्व्रतनित्यः शमात्मा
मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यम् ॥ ७९

बुद्ध्यात्मके व्यक्तमसीति सृष्टो
मोक्षात्मके त्वं यथा शिष्टचक्षुः ।
यद्यप्येतत्संशयाच्च त्रपामि
नाहं भविष्यामि यथा न माया ॥ ८०

श्वपच उवाच ।

गोपनीयमिदं दुःखमिति मे निश्चिता मतिः ।
दुष्कृतं ब्राह्मणं सन्तं यस्त्वामहमुपालभे ॥ ८१

विश्वामित्र उवाच ।

पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि ।
न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः ॥ ८२

श्वपच उवाच ।

सुहृद्भूत्वाऽनुशोचे त्वां कृपा हि त्वयि मे द्विज ।
तदिदं श्रेय आधत्स्व मा लोभे चेत आदधाः ॥ ८३

विश्वामित्र उवाच ।

सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर ।
जानेऽहं धर्मतोऽऽत्मानमुत्सृजेमां श्वजाघनीम् ८४

श्वपच उवाच ।

नैवोत्सहे भवतो दातुमेतां
नोपेक्षितुं ह्रियमाणं स्वमन्नम् ।
उभौ स्यावः श्वमलेनानुलिप्तौ
दाता चाहं ब्राह्मणस्त्वं प्रतीच्छन् ॥ ८५

विश्वामित्र उवाच ।

अद्याहमेतद्वृजिनं कर्म कृत्वा
जीवंश्चरिष्यामि महापवित्रम् ।
संपूतात्मा धर्ममेवाभिपत्स्ये
यदेतयोर्गुरु तद्वै ब्रवीहि ॥ ८

श्वपच उवाच ।

आत्मैव साक्षी किल धर्मकृत्ये
त्वमेव जानासि यदत्र दुष्कृतम् ।
यो ह्याद्रियाद्भक्ष्यमिति श्वमांसं
मन्ये न तस्यास्ति विवर्जनीयम् ॥ ८

विश्वामित्र उवाच ।

उपधानैः साधते नापि दोषः
कार्ये सिद्धे मित्र नात्रापवादः ।
अस्मिन्नहिंसा नानृते वाक्यलेशो
भक्ष्यक्रिया यत्र न तद्गरीयः ॥ ८

श्वपच उवाच ।

यद्येष हेतुस्तव खादने स्या-
न्न ते वेदः कारणं नार्यधर्मः ।
तस्माद्भक्ष्ये भक्षणे वा द्विजेन्द्र
दोषं न पश्यामि यथेदमत्र ॥ ८

विश्वामित्र उवाच ।

न पातकं भक्षमाणस्य दृष्टं
सुरां तु पीत्वा पततीति शब्दः ।
अन्योन्यकार्याणि यथा तथैव
न लेपमात्रेण कृतं हिनस्ति ॥ ९

श्वपच उवाच ।

'पादौ मूलं समभवद्वृन्ताकं शिर उच्यते ।

---

स कामः प्रेत्यभावे मरणे सति यशः यशस्करो भवेदिति स्थाने युक्तम् । अनशनेन मरणं श्रेय इति सत्यमित्यर्थः । जीवतस्त्वनश्नतो धर्मलोपः प्रत्यक्षः । मूल धर्मस्य शरीरं रक्ष्यं तस्य वैकल्येन धर्मविरोधो भवतीत्यर्थः ॥ ७९ ॥ बुध्यात्मके व्यक्तमस्तीति पुण्यं मोहात्मके यत्र यथा श्वभक्ष्ये । यद्यप्येतत्संशयात्मा चरामि नाहं भविष्यामि यथा त्वमेवेति झ. पाठः । तत्र बुध्यात्मके प्रमातरि विचारिते श्वजाघनीभक्षणेऽपि पुण्यमस्तीति जाने । ज्ञानोत्पत्तियोग्यं शरीरमपथ्येनापि रक्ष्यमेवेति भावः । तथापि श्वभक्षणमात्रेण त्वादृशः श्वपचोऽहं न भविष्यामि । तपसा दोषं दूरीकर्तुं शक्तोऽस्मीति भावः ॥ ८० ॥ श्वजाघनीभक्षणज दुःखं पापं गोपनीयं गूहनीयं त्वया क्रि-माणं निरसनीयमिति मे बुद्धिर्निश्चितास्ति ॥ ८१ ॥ धर्मानुशासने ॥ ८२ ॥ प्रतीच्छन् प्रतिगृह्णन् ॥ ८५ ॥ हे प्राणपोषणेच्छास्ति । कारणं प्रमाणम् । भक्ष्ये भक्षणे । अ-क्षणे इति च्छेदः ॥ ८९ ॥ पततीति शब्दः शब्दशास्त्रस्या-मात्रम् । परंतु पापहेतुर्मुख्यो हिंसाख्योऽत्र न दृश्यत इ भावः । अन्योन्यकार्याणि मैथुनानि । लेपमात्रेण कृतं पु हिनस्ति नाशयति । तेन ईषत्पापोत्पत्तिरस्तु नतु ब्राह्मण्या

शेफात्तु गृञ्जरं जातं पलाण्डुस्त्वण्डसंभवः ॥ ९१
श्वरोमजः शैव्यशाको लशुनं द्विजसंभवम् ।
चुक्रिनामा पर्णशाकः कर्णादजनि भूसुर ॥' ९२
अस्थानतो हीनतः कुत्सिताद्वा
तद्विद्वांसं बाधते साधु वृत्तम् ।
श्वानं पुनर्यो लभतेऽभिषङ्गा-
त्तेनापि दण्डः सहितव्य एव ॥ ९३
भीष्म उवाच ।
एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा ।
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ॥ ९४
ततो जग्राह स श्वाङ्गं जीवितार्थी महामुनिः ।
सदारस्तामुपाहृत्य वने भोक्तुमियेष सः ॥ ९५
अथास्य बुद्धिरभवद्विधिनाऽहं श्वजाघनीम् ।
भक्षयामि यथाकालं पूर्वं संतर्प्य देवताः ॥ ९६
ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः ।
ऐन्द्राग्नेयेन विधिना चरुं श्रपयत स्वयम् ॥ ९७
ततः समारभत्कर्म दैवं पित्र्यं च भारत ।
आहूय देवानिन्द्रादीन्भागंभागं विधिक्रमात् ॥ ९८
एतस्मिन्नेव काले तु प्रववर्ष स वासवः ।
संजीवयन्प्रजाः सर्वा जनयामास चौषधीः ॥ ९९
विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्बिषः ।
कालेन महता सिद्धिमवाप परमाद्भुताम् ॥ १००
स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः ।
तोषयामास देवांश्च पितॄंश्च द्विजसत्तमः ॥ १०१
एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥ १०२
एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन्पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥ १०३
तस्मात्कौन्तेय विदुषा धर्माधर्मविनिश्चये ।
बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं कृतात्मना ॥ १०४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

## द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

भीष्मेण युधिष्ठिरंप्रति राज्ञा ब्राह्मणवर्जं दण्डेन प्रजापालनकरणे शुक्रमतानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
यदिदं घोरमुद्दिष्टमश्रद्धेयमिवानृतम् ।
अस्तिस्विद्दस्युमर्यादा यामयं परिवर्जयेत् ॥ १
संमुह्यामि विषीदामि धर्मो मे शिथिलीकृतः ।
उद्यमं नाधिगच्छामि कुतश्चित्परिचिन्तयन् ॥ २
भीष्म उवाच ।
नैतच्छ्रुत्वागमादेव तव धर्मानुशासनम् ।
प्रज्ञासमभिहारोऽयं कविभिः संभृतं मधु ॥ ३
बाह्याः प्रतिविधातव्याः प्रज्ञा राज्ञा ततस्ततः ।
बहुशाखेन धर्मेण यत्रैषा संप्रसिध्यते ॥ ४
बुद्धिं संजनयेद्राज्ञां धर्ममाचरतां सदा ।
जयो भवति कौरव्य सदा तद्बुद्धिरेव च ॥ ५
बुद्धिश्रेष्ठा हि राजानो जयन्ति विजयैषिणः ।
धर्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः ॥ ६
नैकशाखेन धर्मेण राज्ञो धर्मो विधीयते ।
दुर्बलस्य कुतः प्रज्ञा पुरस्तादनुदाहृता ॥ ७

धर्महानिरस्तीति भावः ॥ ९० ॥ अस्थानतश्चाण्डालगृहात् । हीनतश्चौर्यतः । कुत्सितादादित्सतः कदर्यात् । अभिषङ्गादत्याग्रहात् । श्वानं लभते तेनापि तेनैव दण्डः सहितव्यः सोढव्य एव । नतु दातुर्मम दोषोऽस्तीति भावः । अस्थानतो हीनतः कुत्सिताद्वा यो वै द्विजं बाधते साधुवृत्तम् । स्थानं पुनर्यो लभतेतिभङ्गात्तेनापि दण्डः प्रहितः स एवेति ध. पाठः ॥९३॥ यथाकाममिति झ. पाठः ॥ ९६ ॥ सिद्धिमियेषेति ट. ड. द. पाठः ॥ १०० ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥१४१॥

अस्तिस्विदस्य मर्यादा इति ध. पाठः ॥ १ ॥ एतदागमादेव श्रुत्वा तव धर्मानुशासनं मया कृतमिति नास्ति किंतु प्रज्ञायाः समभिहारो निष्ठा कल्पितेयमित्यर्थः । एतदग्निहोत्रादिवद्विधेयं न अपितु कविभिरकरणे महान्त दोषं पश्यद्भिः कल्पितमिति भावः । नैतच्छ्रुत्वाऽऽगमादेवेति ध. पाठः ॥ ३ ॥ ततस्ततः कोकिलवराहवृकसिंहादिभ्यः शिक्षित्वा प्रज्ञाः प्रतिविधातव्याः ॥ ४ ॥ प्रतिविधातव्यश्चिकित्सनीयः ॥ ६ ॥

अद्वैधज्ञः पतिद्वैधे संशयं प्राप्तुमर्हति ।
बुद्धिद्वैधं विधातव्यं पुरस्तादेव भारत ॥ ८
पार्श्वतः कारणं राज्ञो विषूच्यस्त्वापगा इव ।
जनास्तूच्चरितं धर्मं विजानन्त्यन्यथाऽन्यथा ॥ ९
सम्यग्विज्ञानिनः केचिन्मिथ्याविज्ञानिनः परे ।
तद्वै यथायथं बुद्ध्वा ज्ञानमाददते सताम् ॥ १०
परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः ।
वैषम्यमर्थविद्यानां निरर्थाः ख्यापयन्ति ते ॥ ११
आजिजीविषवो विद्यां यशःकामौ समन्ततः ।
ते सर्वे नृप पापिष्ठा धर्मस्य परिपन्थिनः ॥ १२
अपक्कमतयो मन्दा न जानन्ति यथातथम् ।
तथा ह्यशास्त्रकुशलाः सर्वत्रायुक्तिनिष्ठिताः ॥ १३
परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः ।
विज्ञानमथ विद्यानां न सम्यगिति मे मतिः ॥ १४
निन्दया परविद्यानां स्वविद्यां ख्यापयन्ति च ।
वागास्तिक्यानुनीताश्च दुग्धविद्याफला इव ॥ १५
तान्विद्यावणिजो विद्धि राक्षसानिव भारत ।
व्याजेन कृत्स्नो विहितो धर्मस्ते परिहास्यते ॥ १६
न धर्मवचनं वाचा नैव बुद्ध्येति नः श्रुतम् ।
इति बार्हस्पत्यविज्ञानं प्रोवाच मघवा स्वयम् ॥ १७
न त्वेव वचनं किंचिदनिमित्तादिहोच्यते ।
स्वविनीतेन शास्त्रेण ह्यविद्यः स्यादथापरः ॥ १८
लोकयात्रामिहैके तु धर्मं प्राहुर्मनीषिणः ।
समुद्दिष्टं सतां धर्मं स्वयमूहेत पण्डितः ॥ १९
अमर्षाच्छास्त्रसंमोहादनिमित्तादिहोच्यते ।
शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनम् ॥ २०
आगमागतया बुद्ध्या वचनेन प्रशस्यते ।
अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते ॥ २१
अनुपागतमेवेदं शास्त्रमेवमपार्थकम् ।
दैतेयानुशना प्राह संशयच्छेदनं पुरा ॥ २२
ज्ञानमप्यपदिश्यं हि यथा नास्ति तथैव तत् ।
तेन संछिन्नमूलेन कस्तोपयितुमिच्छति ॥ २३
पुनर्व्यवसितं यो वा नेदं वाक्यमुपाश्नुते ।
उग्रायैव हि सृष्टोऽसि कर्मणे तत्त्वमीक्षसे ॥ २४
अग्रे मामन्ववेक्षस्व राजन्योऽयं बुभूषते ।
यथा प्रमुच्यते त्वन्यो यदर्थं न प्रमोदते ॥ २५
अजोऽश्वः क्षत्रमित्येतत्सदृशं ब्रह्मणा कृतम् ।
तस्मान्नैक्ष्ण्याद्भूतानां यात्रा काचित्प्रसिद्ध्यति २६
यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः ।
एषा ह्येव तु मर्यादा यामयं परिवर्जयेत् ॥ २७
तस्मात्तीक्ष्णः प्रजा राजा स्वधर्मे स्थापयत्युत ।
अन्योन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ॥ २८
यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्याञ्जलादिव ।
विहरन्ति परस्वानि स वै क्षत्रियपांसनः ॥ २९
कुलीनान्सचिवान्कृत्वा वेदविद्यासमन्वितान् ।
प्रशाधि पृथिवीं राजन्प्रजा धर्मेण पालयन् ॥ ३०

---

द्वैधमेकस्यैव कर्मणः क्वचित्काले धर्मत्वं क्वचिदधर्मत्वमिति द्विप्रकारत्वम् । तस्मिन्प्राप्ते तदनभिज्ञः संशयं संकटं प्राप्नोति । अहिंसाया धर्मत्वेऽपि चोररक्षया पापं भवति तद्वदिदं ज्ञेयम् ॥ ८ ॥ सतां मतमिति शेषः ॥ ७ ॥ मुष्णन्ति धर्मशास्त्रविरुद्धमर्थशास्त्रं नादर्तव्यमिति वदन्ति । वैषम्यमप्रामाण्यमधर्मत्वं वा ॥ ११ ॥ शास्त्रचोरनिन्दाप्रसङ्गात्तदुपजीविनोऽपि निन्दति । आजिजीविषव इति सार्धैश्चतुर्भिः ॥ १२ ॥ न सम्यगिति वर्तत इति ट. ड. द. पाठः ॥ १४ ॥ निवर्तनैरविद्यानामिति थ. पाठः । वागस्त्रा वाक्छरीभूता इति झ. ट. पाठः ॥ १५ ॥ वाचा केवलया बुद्ध्या तर्केण वा केवलेन धर्मवचनं धर्मनिश्चयो नास्त्यपितु समुच्चिताभ्यामुभाभ्यां धर्मनिर्णय इत्यर्थः ॥ १७ ॥ अध्यवस्यन्ति चापर इति ट. ड. द. पाठः ॥ १८ ॥ इहलोके तु एके आचार्याः लोकयात्रां तन्निर्वाहमेव धर्मं प्राहुः । साच चोरादीनां वधमन्तरेण न संभवतीत्यवश्यं हिंसापि कर्तव्येति तेषामाशयः । एवंसत्यपि मतभेदे युक्त्यैव धर्मं ऊहेतेत्याह समिति ॥ १९ ॥ तस्मादमर्षादींस्त्यक्त्वा समूहे सभायां शास्त्रं वदेदित्याशयेनाह अमर्षादिति । समूहे यत्प्रदर्शनमिति ध. पाठः ॥ २० ॥ आगमागतया बुद्ध्या श्रुत्युपगृहीतेन तर्केण सहितं यद्वचनं तेन प्रशस्यते शास्त्रं नान्यतरेण । अन्यस्तु ज्ञानहेतुत्वात् अज्ञातज्ञापकतया वचनं तर्केण हीनं शब्दमेव साधु मन्यते । कुतः अज्ञानात् ॥ २१ ॥ अन्यः पुनः युक्त्या इदं शास्त्रं दूषितं इति हेतोरपार्थकं व्यर्थमिति मन्यते तदप्यज्ञानादेव । तस्मात्तर्केण शास्त्रस्य शास्त्रेण तर्कस्य वा बाधमकृत्वा यदुभयसंमतं तदेवानुष्ठेयमित्युशनसो मतं पूर्वोक्तेन बार्हस्पत्येन ज्ञानेनैक्यं गतमिति दर्शितम् ॥ २२ ॥ अपदिश्यं दिशोर्मध्ये स्थितं कोटिद्वयस्पार्शि ज्ञानं संशयरूपं तद्यथा नास्ति तथैव व्यर्थमित्यर्थः ॥ २३ ॥ अज इति । यथाऽजो यज्ञार्थं नीयते तद्धिताय एवं अश्वक्षत्रियावपि संग्रामार्थं नीयेते तद्धितायैव ॥ २६ ॥

विहीनजन्मकर्माणि यः प्रगृह्णाति भूमिपः ।
उभयस्याविशेषज्ञस्तद्वै क्षत्रं नपुंसकम् ॥ ३१
नैवोग्रं नैव चानुग्रं धर्मेणेह प्रशस्यते ।
उभयं न व्यतिक्रामेदुग्रो भूत्वा मृदुर्भव ॥ ३२
कष्टः क्षत्रियधर्मोऽयं सौहृदं त्वयि मे स्थितम् ।
उग्रकर्मणि सृष्टोऽसि तस्माद्राज्यं प्रशाधि वै ॥३३
'अरुष्टः कस्यचिद्राजन्नेवमेव समाचर ।'
अशिष्टनिग्रहो नित्यं शिष्टस्य परिपालनम् ।
एवं शुक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ॥ ३४

युधिष्ठिर उवाच ।
अस्ति चेदिह मर्यादा यामन्यो नातिलङ्घयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥३५
भीष्म उवाच ।
ब्राह्मणानेव सेवेत विद्यावृद्धांस्तपस्विनः ।
श्रुतचारित्रवृत्ताढ्यान्पवित्रं ह्येतदुत्तमम् ॥ ३६
शुश्रूषा तु महाराज सान्त्वं विप्रेषु नित्यदा ।
क्रुद्धैर्हि विप्रैः कर्माणि कृतानि बहुधा नृप ॥३७
तेषां प्रीत्या यशो मुख्यमप्रीत्या परमं भयम् ।
प्रीत्या ह्यमृतवद्विप्राः क्रुद्धाश्चैव यथोरगाः ॥ ३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

## त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

भीष्मेण युधिष्ठिरंप्रति शरणागतरक्षणे मुचुकुन्दंप्रति भार्गवोक्तव्याधकपोतोपाख्यानानुवादारम्भः ॥ १ ॥ वनमध्ये महावृष्टिनिपीडितेन केनचिद्व्याधेन वर्षपीडयाऽधःपतितां काञ्चन कपोतीं पञ्जरे निरुध्य वृष्ट्युपरमे कस्यचिन्महावृक्षस्याधोदेशे शयनम् ॥ २ ॥

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शरणागतं पालयतो यो धर्मस्तं ब्रवीहि मे ॥ १
भीष्म उवाच ।
महान्धर्मो महाराज शरणागतपालने ।
अर्हः प्रष्टुं भवांश्चैनं प्रश्नं भरतसत्तम ॥ २
शिबिप्रभृतयो राजन्राजानः शरणं गतान् ।
परिपाल्य महात्मानः संसिद्धिं परमां गताः ॥ ३
श्रूयते च कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ ४
युधिष्ठिर उवाच ।
कथं कपोतेन पुरा शत्रुः शरणमागतः ।
स्वमांसं भोजितः कां च गतिं लेभे स भारत ॥५
भीष्म उवाच ।
शृणु राजन्कथां दिव्यां सर्वपापप्रणाशिनीम् ।

नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण वै ॥ ६
इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः ।
भार्गवं परिपप्रच्छ प्रणतः पुरुषर्षभ ॥ ७
तस्मै शुश्रूषमाणाय भार्गवोऽकथयत्कथाम् ।
इमां यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥ ८
उशनोवाच ।
धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम् ।
शृणुष्वावहितो राजन्गदतो मे महाभुज ॥ ९
कश्चित्क्षुद्रसमाचारः पृथिव्यां कालसंमितः ।
चचार पृथिवीपाल घोरः शकुनिलुब्धकः ॥ १०
काकोल इव कृष्णाङ्गो रूक्षः पापसमाहितः ।
यवमध्यः कृशग्रीवो ह्रस्वपादो महाहनुः ॥ ११
नैव तस्य सुहृत्कश्चिन्न संबन्धी न बान्धवाः ।
बान्धवैः संपरित्यक्तस्तेन रौद्रेण कर्मणा ॥ १२
नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः ।

वृत्तिश्चैषा महाबाहो इति ट. ड. थ. पाठः ॥ ३५ ॥ ब्राह्मणादर्वागेव दण्डस्य मर्यादा ब्राह्मणस्तु नैव दण्ड्योऽपि तु पूज्य एवेत्याह ब्राह्मणानेवेति ॥ ३६ ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

काकोलः काकविशेषः ॥ ११ ॥

आत्मानं यो न संधत्ते सोन्यस्य स्यात्कथं हितः १३
ये नृशंसा दुरात्मानः प्राणिप्राणहरा नराः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥१४
स वै क्षारकमादाय वने हत्वा च पक्षिणः ।
चकार विक्रयं तेषां पतङ्गानां जनाधिप: ॥ १५
एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः ।
अगमत्सुमहान्कालो न चाधर्ममबुध्यत ॥ १६
तस्य भार्यासहायस्य रममाणस्य शाश्वतम् ।
दैवयोगविमूढस्य नान्या वृत्तिररोचत ॥ १७
ततः कदाचित्तस्याथ वनस्थस्य समन्ततः ।
पातयन्निव वृक्षांस्तान्सुमहान्वातसंभ्रमः ॥ १८
मेघसंकुलमाकाशं विद्युन्मण्डलमण्डितम् ।
संछन्नस्तु मुहूर्तेन नौसार्थैरिव सागरः ॥ १९
वारिधारासमूहेन संप्रहृष्टः शतक्रतुः ।
क्षणेन पूरयामास सलिलेन वसुंधराम् ॥ २०
ततो धाराकुले लोके संभ्रमन्नष्टचेतनः ।
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना ॥ २१
नैव निम्नं स्थलं वाऽपि सोऽविन्दत विहंगहा ।
पूरितो हि जलौघेन तस्य मार्गो वनस्य तु ॥ २२
पक्षिणो वर्षवेगेन हता लीनास्तु पादपात् ।
मृगसिंहवराहाश्च ये चान्ये तत्र पक्षिणः ॥ २३
महता वातवर्षेण त्रासितास्ते वनौकसः ।
भयार्ताश्च क्षुधार्ताश्च बभ्रमुः सहिता वने ॥ २४
स तु शीतहतैर्गात्रैर्जगामैव न तस्थिवान् ।
ददर्श पतितां भूमौ कपोतीं शीतविह्वलाम् ॥ २५
दृष्ट्वाऽऽर्तोपि हि पापात्मा स तां पञ्जरकेऽक्षिपत् ।
स्वयं दुःखाभिभूतोऽपि दुःखमेवाकरोत्परे ॥ २६
पापात्मा पापकारित्वात्पापमेव चकार सः ।
सोऽपश्यत्तरुषण्डेषु मेघनीलं वनस्पतिम् ॥ २७
सेव्यमानं विहंगौघैश्छायावासफलार्थिभिः ।
धात्रा परोपकाराय स साधुरिव निर्मितः ॥ २८
अथाभवत्क्षणेनैव वियद्विमलतारकम् ।
महत्सर इवोत्फुल्लं कुमुदच्छुरितोदकम् ।
कुसुमाकारताराढ्यमाकाशं निर्मलं बहु ॥ २९
घनैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविह्वलः ।
दिशो विलोकयामास वेलां च सुदुरात्मवान् ॥ ३०
दूरे ग्रामनिवेशश्च तस्मात्स्थानादिति प्रभो ।
कृतबुद्धिर्द्रुमे तस्मिन्वस्तुं तां रजनीं ततः ॥ ३१
साञ्जलिः प्रणतिं कृत्वा वाक्यमाह वनस्पतिम् ।
शरणं यामि यान्यस्मिन्दैवतानीति भारत ॥ ३२
स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले ।
दुःखेन महताऽऽविष्टस्ततः सुष्वाप पक्षिहा ॥ ३३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

---

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

महावृक्षनिवासिना कपोतेनाहारार्थं गतायां निजपत्न्यां रात्रावनागतायां तद्गुणानुवर्णनपूर्वकं तांप्रति शोचनम् ॥ १ ॥
भर्तृविलापं श्रुतवत्या व्याधपञ्जरस्थया कपोत्या धर्मोपन्यासपूर्वकं पतिंप्रति व्याधसत्कारचोदना ॥ २ ॥

भीष्म उवाच ।
अथ वृक्षस्य शाखायां विहंगः ससुहृज्जनः ।
दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः ॥ १
तस्य कल्यगता भार्या चरितुं नाभ्यवर्तत ।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥ २
वातवर्षं महच्चासीन्न चागच्छति मे प्रिया ।
किंनु तत्कारणं येन साऽद्यापि न निवर्तते ॥ ३
अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने ॥ ४
तया विरहितं हीदं शून्यमद्य गृहं मम ।
पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥ ५
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥ ६
यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।

क्षारकं जालम् ॥ १५ ॥ येचान्ये तत्र वर्तिन इति ट. द. पाठः ॥ २३ ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥१४३॥

अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ॥ ७
न भुङ्क्ते मय्यभुक्ते या नास्नाते स्नाति सुव्रता ।
नातिष्ठत्युपतिष्ठेत शेते च शयिते मयि ॥ ८
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता ।
प्रोषिते दीनवदना क्रुद्धे च प्रियवादिनी ॥ ९
पतिधर्मव्रता साध्वी प्राणेभ्योऽपि गरीयसी ।
यस्य स्यात्तादृशी भार्या धन्यः स पुरुषो भुवि ॥ १०
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ।
अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ॥ ११
वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम् ।
प्रासादोपि तया हीनः कान्तार इति निश्चितम् १२
धर्मार्थकामकालेषु भार्या पुंसः सहायिनी ।
विदेशगमने चास्य सैव विश्वासकारिका ॥ १३
भार्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मिँल्लोकयात्रासहायिनी ॥ १४
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ १५
नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ॥ १६
यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥ १७
भीष्म उवाच ।
एवं विलपतस्तस्य द्विजस्यार्तस्य वै तदा ।
गृहीता शकुनिघ्नेन भार्या शुश्राव भारतीम् ॥ १८
कपोत्युवाच ।
अहोऽतीव सुभाग्याऽहं यस्या मे दयितः पतिः ।
असतो वा सतो वाऽपि गुणानेवं प्रभाषते ॥ १९
सा हि स्त्रीत्यवगन्तव्या यस्या भर्ता तु तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ।
अग्निसाक्षिकमप्येतद्भर्ता हि शरणं परम् ॥ २०
दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ।
भस्मीभवति सा नारी यस्या भर्ता न तुष्यति ॥ २१
इति संचिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ।
कपोती लुब्धकेनापि गृहीता वाक्यमब्रवीत् ॥ २२
हन्त वक्ष्यामि ते श्रेयः श्रुत्वा तु कुरु तत्तथा ।
शरणागतसंत्राता भव कान्त विशेषतः ॥ २३
एष शाकुनिकः शेते तव वासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥ २४
यो हि कश्चिद्द्विजं हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥ २५
अस्माकं विहिता वृत्तिः कापोती जातिधर्मतः ।
सा न्याय्याऽऽत्मवता नित्यं त्वद्विधेनानुवर्तितुं २६
यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम ॥ २७
स त्वं संतानवानद्य पुत्रवानपि च द्विज ।
त्वं स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य च ।
पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा ॥ २८
शरीरे मा च संतापं कुर्वीथास्त्वं विहंगम ।
शरीरयात्रावृत्त्यर्थमन्यान्दारानुपैष्यसि ॥ २९
इति सा शकुनी वाक्यं पञ्जरस्था तपस्विनी ।
अतिदुःखान्विता प्रोक्त्वा भर्तारं समुदैक्षत ॥३०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

पत्नीचोदितेन कपोतेन शुष्कपर्णैः पावकसंदीपनेन व्याधस्य शैत्यापनोदनपूर्वकं पुनः स्वेन तदभीष्टकरणप्रतिज्ञा ॥ १ ॥
तेन तस्य क्षुन्निवृत्तिप्रार्थने फलादिकं किमप्यलभमानेन कपोतेन स्वमांसेन तदीयक्षुत्परिजिहीर्षयाऽग्नौ प्रवेशनम् ॥ २ ॥

भीष्म उवाच ।
सपत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।

पतिव्रता पतिगतिः पतिप्रियहिते रता इति झ. पाठः ॥१०॥ भार्या हि परमो नाथ इति ङ. थ. पाठः ॥ १४ ॥ न सा स्त्रीत्यवगन्तव्या यस्यां भर्ता न तुष्यतीति झ. पाठः ॥ २१ ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

हर्षेण महता युक्तो वाक्यं व्याकुललोचनः ॥ १
तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ।
स पक्षी पूजयामास यत्नात्तं पक्षिजीविनम् ॥ २
उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते ।
संतापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥ ३
तद्ब्रवीतु भवान्क्षिप्रं किं करोमि किमिच्छसि ।
प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः ॥ ४
अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥ ५
शरणागतस्य कर्तव्यमातिथ्यं हि प्रयत्नतः ।
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥ ६
पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥ ७
तद्ब्रूहि मां सुविस्रब्धो यत्त्वं वाचा वदिष्यसि ।
तत्करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः ॥ ८
तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ।
बाधते खलु मां शीतं संत्राणं हि विधीयताम् ॥ ९
एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले ।
यथा शुष्काणि यत्नेन ज्वलनार्थं द्रुतं ययौ ॥ १०
स गत्वाऽङ्गारकर्मान्तं गृहीत्वाऽग्निमथागमत् ।
ततः शुष्केषु पर्णेषु पावकं सोऽप्यदीपयत् ॥ ११
स संदीप्तं महत्कृत्वा तमाह शरणागतम् ।
प्रतापय सुविस्रब्धः स्वगात्राण्यकुतोभयः ॥ १२
स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ।
अग्निप्रत्यागतप्राणस्ततः प्राह विहंगमम् ॥ १३
हर्षेण महताऽऽविष्टो वाक्यं व्याकुललोचनः ।
तथेमं शकुनिं दृष्ट्वा विधिदृष्टेन कर्मणा ॥ १४
दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम् ।
स तद्वचः प्रतिश्रुत्य वाक्यमाह विहंगमः ॥ १५
न मेऽस्ति विभवो येन नाशयेयं क्षुधां तव ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥ १६
संचयो नास्ति चास्माकं मुनीनामिव कानने ।
इत्युक्त्वा तं तदा तत्र विवर्णवदनोऽभवत् ॥ १७
कथं नु खलु कर्तव्यमिति चिन्तापरस्तदा ।
बभूव भरतश्रेष्ठ गर्हयन्वृत्तिमात्मनः ॥ १८
मुहूर्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनम् ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ १९
इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम् ।
हर्षेण महताऽऽविष्टः कपोतः पुनरब्रवीत् ॥ २०
ऋषीणां देवतानां च पितॄणां च महात्मनाम् ।
श्रुतः पूर्वं मया धर्मो महानतिथिपूजने ॥ २१
कुरुष्वानुग्रहं सौम्य सत्यमेतद्ब्रवीमि ते ।
निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने ॥ २२
ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव ।
तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः ॥ २३
अग्निमध्ये प्रविष्टं तु लुब्धो दृष्ट्वा च पक्षिणम् ।
चिन्तयामास मनसा किमिदं वै मया कृतम् ॥ २४
अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा ।
अधर्मः सुमहान्घोरो भविष्यति न संशयः ॥ २५
एवं बहुविधं भूरि विललाप स लुब्धकः ।
गर्हयन्स्वानि कर्माणि द्विजं दृष्ट्वा तथाऽऽगतम् ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

## षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

कपोतस्य वह्निप्रवेशदर्शिना व्याधेन आत्मोपालम्भपूर्वकं स्वप्राणविमोक्षणायानशनादिना शरीरशोषणाध्यवसायः ॥ १ ॥

भीष्म उवाच ।
ततः स लुब्धकः पश्यन्क्षुधयाऽपि परिप्लुतः ।
कपोतमग्निपतितं वाक्यं पुनरुवाच ह ॥ १
किमीदृशं नृशंसेन मया कृतमबुद्धिना ।

संकोचश्च न कर्तव्य इति ध. पाठः ॥ ३ ॥ अङ्गारकर्मान्तं कर्मारगृहसमीपम् ॥ ११ ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

भविष्यति हि मे नित्यं पातकं भुवि जीवतः ।
स विनिन्दंस्तथाऽऽत्मानं पुनःपुनरुवाच ह ॥ २
धिङ्मामस्तु सुदुर्बुद्धिं सदा निकृतिनिश्चयम् ।
शुभं कर्म परित्यज्य सोऽहं शकुनिलुब्धकः ॥ ३
नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः ।
दत्तः स्वमांसं दहता कपोतेन महात्मना ॥ ४
सोहं त्यक्ष्ये प्रियान्प्राणान्पुत्रान्दारान्विसृज्य च ।
उपदिष्टो हि मे धर्मः कपोतेनात्र धर्मिणा ॥ ५
अद्यप्रभृति देहं स्वं सर्वभोगैर्विवर्जितम् ।
यथा स्वल्पं सरो ग्रीष्मे शोषयिष्याम्यहं तथा ॥ ६
क्षुत्पिपासातपसहः कृशो धमनिसन्ततः ।
उपवासैर्बहुविधैश्चरिष्ये पारलौकिकम् ॥ ७
अहो देहप्रदानेन दर्शिताऽतिथिपूजना ।
तस्माद्धर्मं चरिष्यामि धर्मो हि परमा गतिः ॥ ८
दृष्टो धर्मो हि धर्मिष्ठे यादृशो विहगोत्तमे ।
एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ॥ ९
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ॥ १०
ततो यष्टिं शलाकां च धारकं पञ्जरं तथा ।
तां च बद्धां कपोतीं स प्रमुच्य विससर्ज ह ॥ ११

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

## सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

भर्तृशोकतप्तया कपोत्या सकरुणं विलप्याग्नौ प्रवेशः ॥ १ ॥ ततो विमानारोहणेन स्वर्गतयोः कपोतयोस्तत्र सुखेन चिरविहारः ॥ २ ॥

भीष्म उवाच ।
ततो गते शाकुनिके कपोती प्राह दुःखिता ।
संस्मृत्य सा च भर्तारं रुदती शोककर्शिता ॥ १
नाहं ते विप्रियं कान्त कदाचिदपि संस्मरे ।
सर्वाऽपि विधवा नारी बहुपुत्राऽपि शोचते ॥ २
शोच्या भवति बन्धूनां पतिहीना तपस्विनी ।
लालिताऽहं त्वया नित्यं बहुमानाच्च पूजिता ॥ ३
वचनैर्मधुरैः स्निग्धैरसंक्लिष्टमनोहरैः ।
कन्दरेषु च शैलानां नदीनां निर्झरेषु च ॥ ४
द्रुमाग्रेषु च रम्येषु रमिताऽहं त्वया सह ।
आकाशगमने चैव विहृताऽहं त्वया सुखम् ।
रमामि स्म पुरा कान्त तन्मे नास्त्यद्य मे प्रिय ॥ ५
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ ६
नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ ७
न कार्यमिह मे नाथ जीवितेन त्वया विना ।
पतिहीना तु का नारी सती जीवितुमुत्सहेत् ॥ ८
एवं विलप्य बहुधा करुणं सा सुदुःखिता ।
पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥ ९
ततश्चित्राङ्गदधरं भर्तारं साऽन्वपद्यत ।
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥ १०
चित्रमाल्याम्बरधरं सर्वाभरणभूषितम् ।
विमानशतकोटीभिरावृतं पुण्यकर्मभिः ॥ ११
ततः स्वर्गं गतः पक्षी विमानवरमास्थितः ।
कर्मणा पूजितस्तत्र रेमे स सह भार्यया ॥ १२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

## अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

व्याधेन विमानस्थयोर्दर्शनम् ॥ १ ॥ ततो व्याधेन दावाग्नौ शरीरत्यागेन स्वर्गगमनम् ॥ २ ॥

भीष्म उवाच ।
विमानस्थौ तु तौ राजँल्लुब्धकः खे ददर्श ह ।

प्रत्यादेशः धिक्कारपूर्वक उपदेशः ॥ ४ ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

दृष्ट्वा तौ दंपती राजन्व्यचिन्तयत तां गतिम् ॥ १
कीदृशेनेह तपसा गच्छेयं परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥ २
महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवकः ।
निश्चेष्टो मरुदाहारो निर्ममः स्वर्गकाङ्क्षया ॥ ३
ततोऽपश्यत्सुविस्तीर्णं हृद्यं पद्माभिभूषितम् ।
नानापक्षिगणाकीर्णं सरः शीतजलं शिवम् ॥ ४
पिपासार्तोऽपि तद्दृष्ट्वा तृप्तः स्यान्नात्र संशयः ॥५
उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः ।
उपसृत्य तु तद्दृष्टः श्वापदाध्युषितं वनम् ॥ ६
महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ।
प्रविशन्नेव स वनं निगृहीतः स कण्टकैः ॥ ७
स कण्टकैर्विभिन्नाङ्गो लोहितार्द्रीकृतच्छविः ।
बभ्राम तस्मिन्विजने नानामृगसमाकुले ॥ ८
ततो द्रुमाणां महतां पवनेन वने तदा ।
उदतिष्ठत संवर्षान्सुमहान्हव्यवाहनः ॥ ९
तद्वनं वृक्षसंकीर्णं लताविटपसंकुलम् ।
ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ॥ १०
स ज्वालैः पवनोद्धूतैर्विस्फुलिङ्गैः समन्ततः ।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥ ११
ततः स देहमोक्षार्थं संप्रहृष्टेन चेतसा ।
अभ्यधावत वर्धन्तं पावकं लुब्धकस्तदा ॥ १२
ततस्तेनाग्निना दग्धो लुब्धको नष्टकल्मषः ।
जगाम परमां सिद्धिं ततो भरतसत्तम ॥ १३
ततः स्वर्गस्थमात्मानमपश्यद्विगतज्वरः ।
यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥ १४
एवं खलु कपोतश्च कपोती च पतिव्रता ।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा ॥ १५
याऽन्या चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥ १६
एवमेतत्पुरावृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥ १७
यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मनसाऽपि प्रमादतः ॥ १८
युधिष्ठिर महानेष धर्मो धर्मभृतां वर ।
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः ॥ १९
न निष्कृतिर्भवेत्तस्य यो हन्याच्छरणागतम् ।
इतिहासमिमं श्रुत्वा पुण्यं पापप्रणाशनम् ।
न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ॥ २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

---

## एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

युधिष्ठिरेण भीष्मंप्रति अबुद्धिपूर्वकब्रह्महत्याप्रायश्चित्तप्रश्नः ॥ १ ॥ भीष्मेण जनमेजयस्याबुद्धिपूर्वकब्रह्महत्याप्राप्तिकथनपूर्वकं तत्कथाकथनारम्भः ॥ २ ॥ शौनकेन स्वपादयोः प्रणमतो जनमेजयस्य गर्हणम् ॥ ३ ॥

युधिष्ठिर उवाच ।
अबुद्धिपूर्वं यत्पापं कुर्याद्भरतसत्तम ।
मुच्यते स कथं तस्मादेनसस्तद्ब्रवीहि मे ॥ १
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि पुराणमृषिसंस्तुतम् ।
इन्द्रोतः शौनको विप्रो यदाह जनमेजयम् ॥ २
आसीद्राजा महावीर्यः पारिक्षिज्जनमेजयः ।
अबुद्धिजा ब्रह्महत्या तमागच्छन्महीपतिम् ॥ ३
ब्राह्मणाः सर्व एवैनं तत्यजुः सपुरोहिताः ।
स जगाम वनं राजा दह्यमानो दिवानिशम् ॥ ४
प्रजाभिः स परित्यक्तश्चकार कुशलं महत् ।
अतिवेलं तपस्तेपे दह्यमानः स मन्युना ॥ ५
ब्रह्महत्यापनोदार्थमपृच्छद्ब्राह्मणान्बहून् ।
पर्यटन्पृथिवीं कृत्स्नां देशेदेशे नराधिपः ॥ ६
तत्रेतिहासं वक्ष्यामि धर्मस्यास्योपबृंहणम् ।

पारिक्षित् पारिक्षितः ॥ ३ ॥

दह्यमानः पापकृत्या जगाम जनमेजयः ॥ ७
चरिष्यमाण इन्द्रोतं शौनकं संशितव्रतम् ।
समासाद्योपजग्राह पादयोः परिपीडयन् ॥ ८
ततो भीतो महाप्राज्ञो जगर्हे सुभृशं तदा ।
कर्ता पापस्य महतो भ्रूणहा किमिहागतः ॥ ९
किं तवास्मासु कर्तव्यं मा मां द्राक्षीः कथंचन ।
गच्छगच्छ न ते स्थानं प्रीणात्यस्मानिति ब्रुवन् ॥१०
रुधिरस्येव ते गन्धः शवस्येव च दर्शनम् ।
अशिवः शिवसंकाशो मृतो जीवन्निवाटसि ॥११
अन्तर्मृत्युरशुद्धात्मा पापमेवानुचिन्तयन् ।
प्रबुध्यसे प्रस्वपिषि वर्तसे परमे सुखे ॥ १२
मोघं ते जीवितं राजन्परिक्लिष्टं च जीवसि ।
पापायैव हि सृष्टोऽसि कर्मणेह यवीयसे ॥ १३
बहुकल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।
तपसा दैवतेज्याभिर्वन्दनेन तितिक्षया ॥ १
पितृवंशमिमं पश्य त्वत्कृते निधनं गतम् ।
निरर्थाः सर्व एवैषामाशाबन्धास्त्वदाश्रयाः ॥१
यान्पूजयन्तो विन्दन्ति स्वर्गमायुर्यशः प्रजाः ।
तेषु ते संततं द्वेषो ब्राह्मणेषु निरर्थकः ॥ १
इमं लोकं विमुच्य त्वमवाङ्मूर्धा पतिष्यसि ।
अशाश्वतीः शाश्वतीश्च समाः पापेन कर्मणा ॥ १
खाद्यमानो जन्तुशतैस्तीक्ष्णदंष्ट्रैरयोमुखैः ।
ततश्च पुनरावृत्तः पापयोनिं गमिष्यसि ॥ १
यदिदं मन्यसे राजन्नायमस्ति कुतः परः ।
प्रतिस्मारयितारस्त्वां यमदूता यमक्षये ॥ १

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

---

## पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

शौनकेन जनमेजयप्रार्थनया तदीयब्रह्महत्यापनोदनाङ्गीकरणम् ॥ १ ॥

भीष्म उवाच ।
एवमुक्तः प्रत्युवाच तं मुनिं जनमेजयः ।
गर्ह्यं भवान्गर्हयते निन्द्यं निन्दति मां पुनः ॥ १
धिक्कार्यं मां धिक्कुरुते तस्मात्त्वाऽहं प्रसादये ।
सर्वं हीदं स्वकृतं मे ज्वलाम्यग्नाविवाहितम् ॥ २
स्वकर्माण्यभिसंधाय नाभिनन्दति मे मनः ।
प्राप्तं घोरं भयं नूनं मया वैवस्वतादपि ॥ ३
तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुम् ।
सर्वं मन्युं विनीय त्वमभि मां वद शौनक ॥ ४
[महानासं ब्राह्मणानां भूयो वक्ष्यामि सांप्रतम् ।]
'गन्ता गतिं ब्राह्मणानां भविष्याम्यर्थवान्पुनः ।'
अस्तु शेषं कुलस्यास्य मा पराभूदिदं कुलम् ॥ ५
न हि नो ब्रह्मशप्तानां शेषं भवितुमर्हति ।
स्तुतीरलभमानानां संविदं वेद निश्चयात् ॥ ६
निन्दमानः स्वमात्मानं भूयो वक्ष्यामि सांप्रतम् ।
भूयश्चैवाभिमज्जन्ति निर्धर्मा निर्जला इव ॥ ७
न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथंचन ।
अवाक्च प्रपतिष्यन्ति पुलिन्दशबरा इव ॥ ८
अविज्ञायैव मे प्रज्ञां बालस्येव स पण्डितः ।
ब्रह्मन्पितेव पुत्रस्य प्रीतिमान्भव शौनक ॥ ९
शौनक उवाच ।
किमाश्चर्यं यतः प्राज्ञो बहुकुर्यादसांप्रतम् ।
इति वै पण्डितो भूत्वा भूतानां को नु तप्यते ॥ १
प्रज्ञाप्रासादमारुह्य अशोच्यः शोचते जनान् ।
जगतीस्थानिवाद्रिस्थः प्रज्ञया प्रतिपत्स्यति ॥ १

---

पापकृत्या पापक्रियया ॥ ७ ॥ मा मां स्प्राक्षीः कथंचनेति झ. पाठः ॥ १० ॥ ब्रह्ममृत्युरशुद्धात्मेति झ. पाठः ॥ १२ ॥ यवीयसे हीनाय ॥ १३ ॥ त्वत्कृते नरकं गतमिति झ. पाठः ॥ १५ ॥ अशाश्वतीः सर्वस्यापि कर्मणोऽन्तवत्त्वात् । शाश्वतीः बहुत्वात् ॥१७॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥१४९॥

त्वा त्वाम् ॥ २ ॥ ब्राह्मणानां भक्त इति शेषः ॥५॥ पुलिन्दाः शबराः म्लेच्छभेदाः ॥ ८ ॥ ब्रह्मन्ब्राह्मण ॥ ९ ॥

न चोपलभते कश्चिन्न चाश्चर्याणि पश्यति ।
निर्विण्णात्मा परोक्षो वा धिकृतः सर्वसाधुषु ॥ १२
विदित्वा भवतो वीर्यं माहात्म्यं चैव चागमे ।
कुरुष्वेह यथाशान्ति ब्रह्मा शरणमस्तु ते ॥ १३
तद्वै चारित्रकं तात ब्राह्मणानामकुप्यताम् ।
अथवा तप्यसे पापे धर्मं चेदनुपश्यसि ॥ १४
जनमेजय उवाच ।
अनुतप्ये च पापेन न चाधर्मं चराम्यहम् ।
बुभूषेद्भजमानं च प्रीतिमान्भव शौनक ॥ १५
शौनक उवाच ।
छित्त्वा दम्भं च मानं च प्रीतिमिच्छामि ते नृप ।
सर्वभूतहिते तिष्ठ धर्मं चैव प्रतिस्मरन् ॥ १६
न भयान्न च कार्पण्यान्न लोभात्त्वामुपाह्वये ।
तां मे दैवीं गिरं सत्यां शृणु त्वं ब्राह्मणैः सह १७
सोऽहं न केनचिच्चार्थी त्वां च धर्मादुपाह्वये ।
क्रोशतां सर्वभूतानां हाहाधिगिति जल्पताम् ॥ १८
वक्ष्यन्ति मामधर्मज्ञं त्यक्ष्यन्ति सुहृदो जनाः ।
ता वाचः सुहृदः श्रुत्वा संज्वरिष्यन्ति ते भृशम् ॥ १९
केचिदेव महाप्राज्ञाः प्रतिज्ञास्यन्ति कार्यताम् ।
जानीहि मत्कृतं तात ब्राह्मणान्प्रति भारत ॥ २०
यथा ते सत्कृताः क्षेमं लभेरंस्त्वं तथा कुरु ।
प्रतिजानीहि चाद्रोहं ब्राह्मणानां नराधिप ॥ २१
जनमेजय उवाच ।
नैव वाचा न मनसा पुनर्जातु न कर्मणा ।
द्रोग्धाऽस्मि ब्राह्मणान्विप्र चरणावेव ते स्पृशे ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

## एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

शौनकेन जनमेजयस्याश्वमेधयाजनेन तदीयब्रह्महत्यापनोदनपूर्वकं राज्ये प्रतिष्ठापनम् ॥ १ ॥

शौनक उवाच ।
तस्मात्तेऽहं प्रवक्ष्यामि धर्ममावृतचेतसे ।
श्रीमान्महाबलस्तुष्टः स्वयं धर्ममवेक्षसे ॥ १
पुरस्ताद्दारुणो भूत्वा सुचित्रतरमेव तत् ।
अनुगृह्णाति भूतानि स्वेन वृत्तेन पार्थिवः ॥ २
कृत्स्ने नूनं सदसती इति लोको व्यवस्यति ।
यत्र त्वं तादृशो भूत्वा धर्ममेवानुपश्यसि ॥ ३
दर्पं हित्वा पुनश्चापि भोगांश्च तप आस्थितः ।
इत्येतदभिभूतानामद्भुतं जनमेजय ॥ ४
योऽदुर्बलो भवेद्दाता कृपणो वा तपोधनः ।
अनाश्चर्यं तदित्याहुर्नातिदूरेण वर्तते ॥ ५
तप एव हि कार्पण्यं समग्रमसमीक्षितम् ।
तच्चेत्समीक्ष्यैव स्याद्भवेत्तस्मिंस्तपो गुणः ॥ ६
यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते ।
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ॥ ७
तदेव राज्ञां परमं पवित्रं जनमेजय ।
तेन सम्यग्गृहीतेन श्रेयांसं धर्ममाप्स्यसि ॥ ८
पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम् ।
अत्राप्युदाहरन्तीमां गाथां गीतां ययातिना ॥ ९
यो मर्त्यः प्रतिपद्येत आयुर्जीवेन वा पुनः ।
यज्ञमेकं ततः कृत्वा तत्संन्यस्य तपश्चरेत् ॥ १०
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वतीम् ।
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ॥ ११
यत्रावगाह्य स्थित्वा च नैनं श्वोमरणं तपेत् ।
महासरः पुष्कराणि प्रभासोत्तरमानसे ॥ १२
कालोदकं च गन्तासि लब्धायुर्जीविते पुनः ।

---

यः साधुषु निर्विण्णात्मा विरक्तः परोक्षस्तद्दृष्टिपथादपेतः तैश्च धिकृतः सः प्रज्ञानं चोपलभते । सत्सङ्गं विना प्रज्ञा दुर्लभैवेत्यर्थः ॥ १२ ॥ ब्रह्मा ब्राह्मणः शरणं रक्षिता । यथाशान्ति शान्तिमनतिक्रम्य ॥ १३ ॥ उपाह्वये शिष्यं करोमीत्यर्थः ॥ १७ ॥ शौनकं पापिष्ठसंग्रहीतारं धिगिति जल्पतांताननादृत्य उपाह्वये इत्यर्थः ॥ १८ ॥ पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

अभिभूतानामधर्मेणेति शेषः ॥ ४ ॥ अत्रावगाह्य पीत्वा चेति झ. थ. पाठः ॥ १२ ॥

मरुस्वतीदृषद्वत्योः सेवमानोऽनुसंज्वरेत् ।
स्वाध्यायशील एतेषु सर्वेष्वेवमुपस्पृशेत् ॥ १३
त्यागधर्मं पवित्राणां संन्यासं मनुरब्रवीत् ॥ १४
अत्राप्युदाहरन्तीमा गाथाः सत्यवता कृताः ।
यथा कुमारः सत्यो वै नैव पुण्यो न पापकृत् ।
न ह्यस्ति सर्वभूतेषु दुःखमस्मिन्कुतः सुखम् ॥१५
एवं प्रकृतिभूतानां सर्वसंसर्गयायिनाम् ।
त्यजतां जीवितं प्रायो निवृत्ते पुण्यपापके ॥ १६
यत्त्वेव राज्ञो ज्यायिष्ठं कार्याणां तद्ब्रवीमि ते ॥१७
बलेन संविभागैश्च जय स्वर्गं पुनीष्व च ।
यस्यैव बलमोजश्च स धर्मस्य प्रभुर्नरः ॥ १८
ब्राह्मणानां सुखार्थं त्वं पर्येहि पृथिवीमिमाम् ।
यथैवैतान्पुरा क्षेप्सीस्तथैवैतान्प्रसादय ॥ १९
अपि धिक्क्रियमाणोऽपि तर्ज्यमानोऽप्यनेकधा ।
आत्मनो दर्शनं विद्वान्नाहर्ताऽस्मीति मा क्रुधः ।
घटमानः स्वकार्येषु कुरु निःश्रेयसं परम् ॥ २०
हिमाग्निघोरसदृशो राजा भवति कश्चन ।
लाङ्गलाशनिकल्पो वा भवेदन्यः परंतप ॥ २१
न विशेषेण गन्तव्यमविच्छिन्नेन वा पुनः ।
न जातु नाहमस्मीति प्रसक्तव्यमसाधुषु ॥ २२
विकर्मणा तप्यमानः पापात्पापः प्रमुच्यते ।
नैतत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ॥ २३
चरिष्ये धर्ममेवेति तृतीयात्परिमुच्यते ।
शुचिस्तीर्थान्यनुचरन्बहुत्वात्परिमुच्यते ॥ २४
कल्याणमनुकर्तव्यं पुरुषेण बुभूषता ।
ये सुगन्धीनि सेवन्ते तथागन्धा भवन्ति ते ॥२५
ये दुर्गन्धीनि सेवन्ते तथागन्धा भवन्ति ते ।
तपश्चर्यापरः सत्यं पापाद्विपरिमुच्यते ॥ २६
संवत्सरमुपास्याग्निमभिशस्तः प्रमुच्यते ।
त्रीणि वर्षाण्युपास्याग्निं भ्रूणहा विप्रमुच्यते ॥२७
महासरः पुष्कराणि प्रभासोत्तरमानसे ।
अभ्येत्य योजनशतं भ्रूणहा विप्रमुच्यते ॥ २८
यावतः प्राणिनो हन्यात्तज्जातीयांस्तु तावतः ।
प्रमीयमाणानुन्मोच्य प्राणिहा विप्रमुच्यते ॥२९
अपि चाप्सु निमज्जेत जपंस्त्रिरघमर्षणम् ।
यथाऽश्वमेधावभृथस्तथा तन्मनुरब्रवीत् ॥ ३०
क्षिप्रं प्रणुदते पापं सत्कारं लभते तथा ।
अपि चैनं प्रसीदन्ति भूतानि जडमूकवत् ॥३१
बृहस्पतिं देवगुरुं सुरासुराः
समेत्य सर्वे नृपते त्वयुञ्जत ।
धर्मे फलं हेतुकृते महर्षे
तथेतरस्मिन्नरके पापलोक्ये ॥ ३२
उभे तु यस्य सुकृते भवेतां
किं तत्तयोस्तत्र जयोत्तरं स्यात् ।
आचक्ष्व तत्कर्मफलं महर्षे
कथं पापं नुदते धर्मशीलः ॥ ३३
बृहस्पतिरुवाच ।
कृत्वा पापं पूर्वमबुद्धिपूर्वं
पुण्यानि चेत्कुरुते बुद्धिपूर्वम् ।
स तत्पापं नुदते कर्मशीलो
वासो यथा मलिनं क्षारयुक्त्या ॥ ३४
पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः ।
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥ ३५
छिद्राणि वसनस्येव साधुना संवृणोति सः ।
यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥ ३६
आदित्यः पुनरुद्यन्वा तमः सर्वं व्यपोहति ।

---

पवित्राणां पावनानां मध्ये त्यागधर्मं दानात्मकं धर्मं पवित्रतरं संन्यासं तु परं धर्मं ततोऽप्यधिकं मनुरब्रवीत् ॥१४॥ कुमारो बालः सत्यो रागद्वेषशून्यत्वात् । तथा तिष्ठेदित्यर्थः॥१५॥ बलेन धैर्येण । संविभागैर्दानैः । ओज इन्द्रियपाटवम् ॥ १८ ॥ हिमवच्छीतलः । अग्निवत्क्रूरः । घोरो यमस्तद्वद्गुणदोषविचारकः । लाङ्गलवद्दुष्टमूलोन्मूलनपरः । अशनिवदाकस्मिकपातो दुष्टेषु हिमाग्निघोषसदृश इति द. पाठः ॥ २१ ॥ सकृत्कृतात्पापात्पश्चात्तापमात्रेण मुच्यते । द्विरावृत्तात्पुनर्न करिष्यामीति नियमग्रहणमात्रेण । त्रिरावृत्ताद्यत्किंचिद्धर्मस्वीकारमात्रेण । बहुकृत्वेति तदभ्यस्तात्तु तीर्थादिना मुच्यत इति श्लोकद्वयार्थः । पादात्पापस्य मुच्यत इति ट. पाठः ॥ २३ ॥ अघमर्षणमृतं च सत्यं चेति ऋक्त्रयम् ॥ ३० ॥ फलं दुःखम् ॥ ३२ ॥ यस्य योगिन उभे अपि सुखदुःखे ॥ ३३ ॥ कर्तृत्वाभिमानशून्यः पापं कुर्वन्नपि न करोत्येवेत्यर्धस्यार्थः ॥३५॥ संवृणोति पिधत्ते ॥ ३६ ॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

चरन्नेवं सर्वपापं व्यपोहति ॥ ३७
ाच ।
तु राजानमिन्द्रोतो जनमेजयम् ।
स विधिवद्वाजिमेधेन शौनकः ॥ ३८
ततः स राजा व्यपनीतकल्मषः
श्रिया युतः प्रज्वलितोऽनुरूपया ।
विवेश राज्यं स्वममित्रकर्शनो
यथा दिवं पूर्णवपुर्निशाकरः ॥ ३९

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

---

## द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

स्मि नगरे केषुचिद्ब्राह्मणेषु मृतबालं श्मशानमुपनीय गृध्रजम्बुकवचनैर्दोलायमानमानसतया चिन्तयत्सु तत्र
भागतपरमेश्वरेण पार्वतीचोदनया मृतबालकोज्जीवनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कच्चित्पितामहेनासीच्छ्रुतं वा दृष्टमेव च ।
कच्चिन्मर्त्यो मृतो राजन्पुनरुज्जीवितोऽभवत् ॥ १
भीष्म उवाच ।
शृणु पार्थ यथावृत्तमितिहासं पुरातनम् ।
गृध्रजम्बुकसंवादं यो वृत्तो वैदिशे पुरे ॥ २
कस्यचिद्ब्राह्मणस्यासीद्दुःखलब्धः सुतो मृतः ।
बाल एव विशालाक्षो बालग्रहनिपीडितः ॥ ३
दुःखिताः केचिदादाय बालमप्राप्तयौवनम् ।
कुलसर्वस्वभूतं वै रुदन्तः शोककर्शिताः ॥ ४
बालं मृतं गृहीत्वाऽथ श्मशानाभिमुखाः स्थिताः ।
अङ्केनाङ्कं समाक्रम्य रुरुदुर्भृशदुःखिताः ॥ ५
शोचन्तस्तस्य पूर्वोक्तान्भाषितांश्चासकृत्पुनः ।
तं बालं भूतले क्षिप्य प्रतिगन्तुं न शक्नुयुः ॥ ६
तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ।
प्रेतात्मकमिमं काले त्यक्त्वा गच्छत माचिरम् ॥ ७
इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव ह ।
समानीतानि कालेन हित्वा वै यान्ति बान्धवाः ॥ ८
संपश्यत जगत्सर्वं सुखदुःखैरधिष्ठितम् ।
संयोगो विप्रयोगश्च पर्यायेणोपलभ्यते ॥ ९
गृहीत्वा ये च गच्छन्ति येऽनुयान्ति च तान्मृतान् ।
तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ॥ १०
अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ॥ ११
न पुनर्जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ १२
सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूयता ।
कृतान्तविहिते मार्गे मृतं को जीवयिष्यति ॥ १३
दिशान्तोपचितो यावदस्तं गच्छति भास्करः ।
गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ॥ १४
ततो गृध्रवचः श्रुत्वा विक्रोशन्तस्तदा नृप ।
बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले ॥ १५
विनिश्चित्याथ च तदा विक्रोशन्तस्ततस्ततः ।
[मृत इत्येव गच्छन्तो निराशास्तस्य दर्शने ॥] १६
निश्चितार्थाश्च ते सर्वे संत्यजन्तः स्वमात्मजम् ।
निराशा जीविते तस्य मार्गमावृत्य धिष्ठिताः ॥ १७
ध्वाङ्क्षपक्षसवर्णस्तु बिलान्निःसृत्य जम्बुकः ।
गच्छमानान्स्म तानाह निर्घृणाः खलु मानुषाः ॥
आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत मा भयम् ।
बहुरूपो मुहूर्ताच्च जीवेदपि च बालकः ॥ १९
दर्भान्भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः ।
श्मशाने सुतमुत्सृज्य कस्माद्गच्छत निर्घृणाः ॥ २०
न वोऽस्त्यस्मिन्सुते स्नेहो बाले मधुरभाषिणि ।
यस्य भाषितमात्रेण प्रसादमधिगच्छत ॥ २१

---

यो वृत्तो नैमिषे पुरेति झ. पाठः ॥ २ ॥ अङ्केनाङ्कं समाक्रम्येति ङ. थ. पाठः ॥ ५ ॥ एकात्मकमिदं लोके इति थ. ध. पाठः ॥ ७ ॥ किं तैर्वैयातबान्धवा इति थ. ध. पाठः ॥ ८ ॥
न पुनर्जीवते कश्चिदिति ङ. थ. द. पाठः ॥ १२ ॥ जीवलोके प्रसूयतेति थ. द. पाठः ॥ १३ ॥ दिशान्तोपरते काले चास्तं गच्छति भास्कर इति ध. पाठः ॥ १४ ॥

न पश्यध्वं सुतस्नेहो यादृशः पशुपक्षिणाम् ।
न तेषां धारयित्वा तान्कश्चिदस्ति फलागमः ॥२२
चतुष्पात्पक्षिकीटानां प्राणिनां स्नेहसङ्गिनाम् ।
परलोकगतिस्थानां मुनियज्ञक्रियामिव ॥ २३
तेषां पुत्राभिरामाणामिह लोके परत्र च ।
न गुणो दृश्यते कश्चित्प्रजाः संधारयन्ति च ॥२४
अपश्यतां प्रियान्पुत्रान्येषां शोको न तिष्ठति ।
न ते पोषणसंप्रीता मातापितर एव हि ॥ २५
मानुषाणां कुतः स्नेहो येषां शोको न विद्यते ।
इमं कुलकरं पुत्रं त्यक्त्वा क नु गमिष्यथ ॥ २६
चिरं मुञ्चत बाष्पं च चिरं स्नेहेन पश्यत ।
एवंविधानि हीष्टानि दुस्त्यजानि विशेषतः ॥२७
क्षीणस्याथाभिशस्तस्य श्मशानाभिमुखस्य च ।
बान्धवा यत्र तिष्ठति तत्रान्यो नाधितिष्ठति ॥२८
सर्वस्य दयिताः प्राणाः सर्वः स्नेहं च विन्दति ।
तिर्यग्योनिष्वपि सतां स्नेहं पश्यत यादृशम् ॥२९
त्यक्त्वा कथं गच्छथेमं पद्मलोलायतेक्षणम् ।
यथा नवोद्वाहकृतं स्नानमाल्यविभूषितम् ॥ ३०
जम्बुकस्य वचः श्रुत्वा कृपणं परिदेवतः ।
न्यवर्तन्त तदा सर्वे बालार्थे ते स्म मानुषाः ॥३१

गृध्र उवाच ।

अहो बत नृशंसेन जम्बुकेनाल्पमेधसा ।
क्षुद्रेणोक्ता हीनसत्वा मानुषाः किं निवर्तथ ॥३२
पञ्चभूतपरित्यक्तं शुष्कं काष्ठत्वमागतम् ।
कस्माच्छोचथ निश्चेष्टमात्मानं किं न शोचथ ॥३३
तपः कुरुत वै तीव्रं मुच्यध्वं येन किल्बिषात् ।
तपसा लभ्यते सर्वं विलापः किं करिष्यति ॥ ३४
अनिष्टानि च भाग्यानि जानीत स्वंस्वमात्मना ।
येन गच्छति बालोऽयं दत्त्वा शोकमनन्तकम् ॥३५
धनं गावः सुवर्णं च मणिरत्नमथापि च ।
अपत्यं च तपोमूलं तपो योगाच्च लभ्यते ॥ ३६
यथा कृता च भूतेषु प्राप्यते सुखदुःखिता ।
गृहीत्वा जायते जन्तुर्दुःखानि च सुखानि च ॥ ३७
न कर्मणा पितुः पुत्रः पिता वा पुत्रकर्मणा ।
मार्गेणान्येन गच्छन्ति बद्धाः सुकृतदुष्कृतैः ॥३८
धर्मं चरत यत्नेन तथाऽधर्मान्निवर्तत ।
वर्तध्वं च यथाकालं दैवतेषु द्विजेषु च ॥ ३९
शोकं त्यजत दैन्यं च सुतस्नेहान्निवर्तत ।
त्यज्यतामयमाक्रोशस्ततः शीघ्रं निवर्तत ॥ ४०
यत्करोति शुभं कर्म तथा कर्म सुदारुणम् ।
तत्कर्तैव समश्नाति बान्धवानां किमत्र ह ॥ ४१
इह त्यक्त्वा न तिष्ठन्ति बान्धवा बान्धवं प्रियम् ।
स्नेहमुत्सृज्य गच्छन्ति बाष्पपूर्णाविलेक्षणाः ॥४२
प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोऽपि वा ।
सर्वः कालवशं याति शुभाशुभसमन्वितः ॥ ४३
किं करिष्यथ शोचित्वा मृतं किमनुशोचथ ।
सर्वस्य हि प्रभुः कालो धर्मतः समदर्शनः ॥ ४४
यौवनस्थांश्च बालांश्च वृद्धान्गर्भगतानपि ।
सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ॥ ४५

जम्बुक उवाच ।

अहो मन्दीकृतः स्नेहो गृध्रेणेहाल्पबुद्धिना ।
पुत्रस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ॥४६
समैः सम्यक्प्रयुक्तैश्च वचनैर्हेतुदर्शनैः ।
'सर्वमेतत्प्रपद्याशु कुरुध्वं वा विचारणां ।'
यद्गच्छथ जलस्थानं स्नेहमुत्सृज्य दुस्त्यजम् ॥४७
अहो पुत्रवियोगेन मृतशून्योपसेवनात् ।
क्रोशतां वा भृशं दुःखं विवत्सानां गवामिव ॥४८
अद्य शोकं विजानामि मानुषाणां महीतले ।
स्नेहं हि कारणं कृत्वा ममाप्यश्रूण्यथापतन् ॥ ४९
यत्नो हि सततं कार्यस्ततो दैवेन सिद्ध्यति ।
दैवं पुरुषकारश्च कृतान्तेनोपपद्यते ॥ ५०
अनिर्वेदः सदा कार्यो निर्वेदाद्धि कुतः सुखम् ।
प्रयत्नात्प्राप्यते ह्यर्थः कस्माद्गच्छथ निर्दयम् ॥५१
आत्ममांसोपवृत्तं च शरीरार्धमयीं तनुम् ।
पितॄणां वंशकर्तारं वने त्यक्त्वा क यास्यथ ॥५२
अथवाऽस्तं गते सूर्ये संध्याकाल उपस्थिते ।

न मे संधारयित्वा तु इति ध. पाठः ॥ २२ ॥

यद्गच्छति जनश्चायमिति झ. पाठः ॥ ४७ ॥

ततो नेष्यथ वा पुत्रमिहस्था वा भविष्यथ ॥५३
गृध्र उवाच ।
अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः ।
न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम् ॥५४
मृता गर्भेषु जायन्ते जातमात्रा म्रियन्ति च ।
चंक्रमन्तो म्रियन्ते च यौवनस्थास्तथा परे ॥ ५५
अनित्यानीह भाग्यानि चतुष्पात्पक्षिणामपि ।
जङ्गमाजङ्गमानां च ह्यायुरग्रेऽवतिष्ठते ॥ ५६
इष्टदारवियुक्ताश्च पुत्रशोकान्वितास्तथा ।
दह्यमानाः स्म शोकेन गृहं गच्छन्ति नित्यशः ॥५७
अनिष्टानां सहस्राणि तथेष्टानां शतानि च ।
उत्सृज्येह प्रयाता वै बान्धवा भृशदुःखिताः ॥ ५८
त्यज्यतामेष निस्तेजाः शून्यः काष्ठत्वमागतः ।
अन्यदेहविषक्तं हि शिशुं काष्ठमुपासथ ॥ ५९
त्यक्तजीवस्य वै बाष्पं कस्माद्धित्वा न गच्छत ।
निरर्थको ह्ययं स्नेहो निष्फलश्च परिश्रमः ॥ ६०
न चक्षुर्भ्यां न कर्णाभ्यां स शृणोति स पश्यति ।
कस्मादेनं समुत्सृज्य न गृहान्गच्छताशु वै ॥ ६१
मोक्षधर्माश्रितैर्वाक्यैर्हेतुमद्भिः सुनिष्ठुरैः ।
मयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनम् ॥६२
प्रज्ञाविज्ञानयुक्तेन बुद्धिसंज्ञाप्रदायिना ।
वचनं श्राविता नूनं मानुषाः संनिवर्तथ ॥ ६३
[शोको द्विगुणतां याति दृष्ट्वा स्मृत्वा च चेष्टितम् ।
इत्येतद्वचनं श्रुत्वा सन्निवृत्तास्तु मानुषाः ।
अपश्यत्तं तदा सुप्तं द्रुतमागत्य जम्बुकः ॥] ६४
जम्बुक उवाच ।
इमं कनकवर्णाभं भूषणैः समलंकृतम् ।
गृध्रवाक्यात्कथं पुत्रं त्यक्ष्यध्वं पितृपिण्डदम् ॥६५
न स्नेहस्य च विच्छेदो विलापरुदितस्य च ।
मृतस्यास्य परित्यागात्तापो वै भविता ध्रुवम् ॥ ६६
श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः ।
जीवितो धर्ममासाद्य रामात्सत्यपराक्रमात् ॥ ६७
तथा श्वैत्यस्य राजर्षेर्बालो दिष्टान्तमागतः ।
मुनिना धर्मनिष्ठेन मृतः संजीवितः पुनः ॥ ६८
तथा कश्चिद्भवेत्सिद्धो मुनिर्वा देवतापि वा ।
कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ॥ ६९
इत्युक्तास्ते न्यवर्तन्त शोकार्ताः पुत्रवत्सलाः ।
अङ्के शिरः समाधाय रुरुदुर्बहुविस्तरम् ।
तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ॥७०
अश्रुपातपरिक्लिन्नः पाणिस्पर्शप्रपीडितः ।
धर्मराजप्रयोगाच्च दीर्घनिद्रां प्रवेशितः ॥ ७१
'तपसाऽपि हि संयुक्तो जनः कालेन हन्यते ।
सर्वस्नेहावसक्तानामिदं हि स्नेहवर्तनम् ॥' ७२
बालवृद्धसहस्राणि सदा संत्यज्य बान्धवाः ।
दिनानि चैव रात्रीश्च दुःखं तिष्ठन्ति भूतले ॥ ७३
अलं निर्बन्धमागत्य शोकस्य परिवारणम् ।
अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितम् ॥ ७४
'नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम् ।'
मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ॥ ७५
नैव मूर्तिप्रदानेन जम्बुकस्य शतैरपि ।
न स जीवयितुं शक्यो बालो वर्षशतैरपि ॥ ७६
अथ रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव च ।
वरमस्मै प्रयच्छन्ति ततो जीवेदयं शिशुः ॥ ७७
नैव बाष्पविमोक्षेण न वा श्वासकृतेन च ।
न दीर्घरुदितेनायं पुनर्जीवं गमिष्यति ॥ ७८
अहं च क्रोष्टुकश्चैव यूयं ये चास्य बान्धवाः ।
धर्माधर्मौ गृहीत्वेह सर्वे वर्तामहेऽध्वनि ॥ ७९
अप्रियं परुषं चापि परद्रोहं परस्त्रियम् ।
अधर्ममनृतं चैव दूरात्प्राज्ञो विवर्जयेत् ॥ ८०
धर्मं सत्यं श्रुतं न्याय्यं महतीं प्राणिनां दयाम् ।
अजिह्मत्वमशाठ्यं च यत्नतः परिमार्गत ॥ ८१
मातरं पितरं वाऽपि बान्धवान्सुहृदस्तथा ।
जीवतो ये न पश्यन्ति तेषां धर्मविपर्ययः ॥ ८२
यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथंचन ।
तस्य निष्ठावसानान्ते रुदन्तः किं करिष्यथ ॥ ८३
इत्युक्तास्ते सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः ।

कश्चिद्भवेत्सिद्ध इति झ. पाठः ॥ ६९ ॥ तपसा पि हि संयुक्ता धनवन्तो महाधियः । सर्वे मृत्युवशं यान्ति तदिदं प्रेतपत्तनमिति झ. पाठः ॥ ७२ ॥ वरमस्मै प्रयच्छेयुस्तत इति झ. पाठः ॥ ७७ ॥

दह्यमानाः सुतस्नेहात्प्रययुर्बान्धवा गृहम् ॥ ८४
जम्बुक उवाच ।
दारुणो मर्त्यलोकोऽयं सर्वप्राणिविनाशनः ।
इष्टबन्धुवियोगश्च तथेहाल्पं च जीवितम् ॥ ८५
बह्वलीकमसत्यं चाप्यतिवादाप्रियंवदम् ।
इमं प्रेक्ष्य पुनर्भावं दुःखशोकविवर्धनम् ।
न मे मानुषलोकोऽयं मुहूर्तमपि रोचते ॥ ८६
अहो धिग्गृध्रवाक्येन यथैवाबुद्धयस्तथा ।
कथं गच्छथ निःस्नेहाः सुतस्नेहं विसृज्य च ॥८७
प्रदीप्ताः पुत्रशोकेन सन्निवर्तथ मानुषाः ।
श्रुत्वा गृध्रस्य वचनं पापस्नेहाकृतात्मनः ॥ ८८
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखावृते लोके नास्ति सौख्यमनन्तकम् ॥८९
इमं क्षितितले त्यक्त्वा बालं रूपसमन्वितम् ।
कुलशोभाकरं मूढाः पुत्रं त्यक्त्वा क यास्यथ ॥ ९०
रूपयौवनसंपन्नं द्योतमानमिव श्रिया ।
जीवन्तमेव पश्यामि मनसा नात्र संशयः ॥ ९१
विनाशेनास्य न हि वै सुखं प्राप्स्यथ मानुषाः ।
पुत्रशोकाभितप्तानां मृतमप्यद्य वः क्षमम् ॥ ९२
दुःखसंभावनं कृत्वा धारयित्वा सुखं स्वयम् ।
त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धिवत् ९३
भीष्म उवाच ।
तथा धर्मविरोधेन प्रियमिथ्याभिधायिनाम् ।
श्मशानवासिना नित्यं रात्रिं मृगयता नृप ॥९४
ततो मध्यस्थतां नीता वचनैरमृतोपमैः ।
जम्बुकेन स्वकार्यार्थं बान्धवास्तत्र वारिताः ॥९५
गृध्र उवाच ।
अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः ।
दारुणः काननोद्देशः कौशिकैरभिनादितः ॥ ९६
भीमः सुघोरश्च तथा नीलमेघसमप्रभः ।
अस्मिञ्शवं परित्यज्य प्रेतकार्याण्युपासत ॥ ९७
भानुर्यावन्न यात्यस्तं यावच्च विमला दिशः ।
तावदेनं परित्यज्य प्रेतकार्याण्युपासत ॥ ९८
नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणम् ।
मृगेन्द्राः प्रतिनर्दन्ति रविरस्तं च गच्छति ॥ ९९
चिता धूमेन नीलेन संरज्यन्ते च पादपाः ।
श्मशाने च निराहाराः प्रतिनर्दन्ति देवताः ॥१००
सर्वे विकृतदेहाश्चाप्यस्मिन्देशे सुदारुणे ।
युष्मान्प्रधर्षयिष्यन्ति विकृता मांसभोजिनः १०१
क्रूरश्चायं वनोद्देशो भयमद्य भविष्यति ।
त्यज्यतां काष्ठभूतोऽयं मुच्यतां जाम्बुकं वचः १०२
यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च ।
श्रोष्यथ भ्रष्टविज्ञानास्ततः सर्वे विनङ्क्ष्यथ ॥१०३
जम्बुक उवाच ।
स्थीयतां वो न भेतव्यं यावत्तपति भास्करः ।
तावदस्मिन्सुते स्नेहादनिर्वेदेन वर्तत ॥ १०४
स्वैरं रुदन्तो विस्रब्धाश्चिरं स्नेहेन पश्यत ।
'दारुणेऽस्मिन्वनोद्देशे भयं वो न भविष्यति ॥१०५
अयं सौम्यो वनोद्देशः पितॄणां निधनाकरः ।'
स्थीयतां यावदादित्यः किंवः क्रव्यादभाषितैः ॥
यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च ।
गृह्णीत मोहितात्मानः सुतो वो न भविष्यति॥१०७
भीष्म उवाच ।
गृध्रो नास्तमितेऽभ्येति तिष्ठेन्नक्तं च जम्बुकः ।
मृतस्य तं परिजनमूचतुस्तौ क्षुधान्वितौ ॥ १०८
स्वकार्यबद्धकक्षौ तौ राजन्गृध्रोऽथ जम्बुकः ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः१०९
तयोर्विज्ञानविदुषोर्द्वयोर्मृगपतत्रिणोः ।
वाक्यैरमृतकल्पैस्तैः प्रतिष्ठन्ते व्रजन्ति च ॥११०
शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा ।
स्वकार्यकुशलाभ्यां ते संभ्राम्यन्ते ह नैपुणात् १११
तथा तयोर्विवदतोर्विज्ञानविदुषोर्द्वयोः ।
बान्धवानां स्थितानां चाप्युपातिष्ठत शंकरः॥११२
देव्या प्रणोदितो देवः कारुण्यार्द्रीकृतेक्षणः ।
ततस्तानाह मनुजान्वरदोऽस्मीति शंकरः॥ ११३
ते प्रत्यूचुरिदं वाक्यं दुःखिताः प्रणताः स्थिताः ।

बान्धवास्तस्य धारिता इति थ. पाठः ॥ ९५ ॥ वः युष्माभिः ॥ १०४ ॥ गृध्रोऽस्तमित्याह गतो गतो नेति च जम्बुकः इति झ. पाठः ॥ १०८ ॥

एकपुत्रविहीनानां सर्वेषां जीविताथिनाम् ।
पुत्रस्य नो जीवदानाज्जीवितं दातुमर्हसि ॥ ११४
एवमुक्तः स भगवान्वारिपूर्णेन पाणिना ।
जीवं तस्मै कुमाराय प्रादाद्वर्षशतानि वै ॥ ११५
तथा गोमायुगृध्राभ्यां प्रादद्त्क्षुद्विनाशनम् ।
वरं पिनाकी भगवान्सर्वभूतहिते रतः ॥ ११६
ततः प्रणम्य ते देवं श्रेयोहर्षसमन्विताः ।
कृतकृत्याः सुसंहृष्टाः प्रातिष्ठन्त तदा विभो ॥ ११७
अनिर्वेदेन दीर्घेण निश्चयेन ध्रुवेण च ।
देवदेवप्रसादाच्च क्षिप्रं फलमवाप्यते ॥ ११८
पश्य दैवस्य संयोगं बान्धवानां च निश्चयम् ।
कृपणानां तु रुदतां कृतमश्रुप्रमार्जनम् ॥ ११९
पश्य चाल्पेन कालेन निश्चयान्वेषणेन च ।
प्रसादं शंकरात्प्राप्य दुःखिताः सुखमाप्नुवन् ॥ १२०
ते विस्मिताः प्रहृष्टाश्च पुत्रसंजीवनात्पुनः ।
बभूवुर्भरतश्रेष्ठ प्रसादाच्छंकरस्य वै ॥ १२१
ततस्ते त्वरिता राजंस्त्यक्त्वा शोकं शिशूद्भवम् ।
विविशुः पुत्रमादाय नगरं हृष्टमानसाः ॥ १२२
एषा बुद्धिः समस्तानां चातुर्वर्ण्येन दर्शिता ॥ १२३
धर्मार्थमोक्षसंयुक्तमितिहासं पुरातनम् ।
श्रुत्वा मनुष्यः सततमिहामुत्र प्रमोदते ॥ १२४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

## त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

भीष्मेण युधिष्ठिरंप्रति बलवति रिपौ मोहाद्वैरमुत्पादितवता कर्तव्यविषये निदर्शनतया शाल्मलिचरितकथनोपक्रमः ॥ १ ॥ हिमवति पर्वते महाशाल्मलिं दृष्टवता नारदेन तद्वर्णनम् ॥ २ ॥

युधिष्ठिर उवाच ।
बलिनः प्रत्यमित्रस्य नित्यमासन्नवर्तिनः ।
उपकारापकाराभ्यां समर्थस्योद्यतस्य च ॥ १
मोहाद्विकत्थनामात्रैरसारोऽल्पबलो लघुः ।
वाग्भिरप्रतिरूपाभिरभिद्रुह्य पितामह ॥ २
आत्मनो बलमास्थाय कथं वर्तेत मानवः ।
आगच्छतोऽतिक्रुद्धस्य तस्योद्धरणकाम्यया ॥ ३
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं भरतश्रेष्ठ शाल्मलेः पवनस्य च ॥ ४
हिमवन्तं समासाद्य महानासीद्वनस्पतिः ।
वर्षपूगाभिसंवृद्धः शाखामूलपलाशवान् ॥ ५
तत्र स्म मत्तमातङ्गा घर्मार्ताः श्रमकर्शिताः ।
विश्राम्यन्ति महाबाहो तथाऽन्या मृगजातयः ॥ ६
नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः ।
शुकशारिकसंघुष्टः पुष्पवान्फलवानपि ॥ ७
सार्थका वणिजश्चापि तापसाश्च वनौकसः ।
वसन्ति तत्र मार्गस्थाः सुरम्ये नगसत्तमे ॥ ८
तस्य ता विपुलाः शाखा दृष्ट्वा स्कन्धं च सर्वशः ।
अभिगम्याब्रवीदेनं नारदो भरतर्षभ ॥ ९
अहो नु रमणीयस्त्वमहो चासि मनोहरः ।
प्रीयामहे त्वया नित्यं तरुप्रवर शाल्मले ॥ १०
सदैव शकुनास्तात मृगाश्चाथ तथा गजाः ।
वसन्ति तव संहृष्टा मनोहरतरास्तथा ॥ ११
तव शाखा महाशाख स्कन्धांश्च विपुलांस्तथा ।
न वै प्रभग्नान्पश्यामि मारुतेन कथंचन ॥ १२
किंनु ते पवनस्तात प्रीतिमानथवा सुहृत् ।
त्वां रक्षति सदा येन वनेऽत्र पवनो ध्रुवम् ॥ १३
भगवान्पवनः स्थानाद्वृक्षानुच्चावचानपि ।
पर्वतानां च शिखराण्याचालयति वेगवान् ॥ १४

---

बान्धवानां च सत्यतामिति द. पाठः ॥ ११९ ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

शुककोकिलसंघुष्ट इति ध. पाठः । नल्वः हस्तानां शतचतुष्टयम् । परीणाहः स्थूलत्वं वैपुल्यमितियावत् ॥ ७ ॥ प्रवाति च वनस्थानां वृक्षाणां च वनान्यपि । पर्वतानां च शिखराण्याकालयति वेगवान् । इति ट. ड. पाठः ॥ १४ ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

शोषयत्येव पातालं वहन्गन्धवहः शुचिः ।
सरांसि सरितश्चैव सागरांश्च तथैव च ॥ १५
संरक्षति त्वां पवनः सखित्वेन न संशयः ।
तस्मात्त्वं बहुशाखोऽपि पर्णवान्पुष्पवानपि ॥ १६
इदं च रमणीयं ते प्रतिभाति वनस्पते ।
य इमे विहगास्तात रमन्ते मुदितास्त्वयि ॥ १७
एषां पृथक्समस्तानां श्रूयते मधुरस्वरः ।
पुष्पसंमोदने काले वाशन्ते हरियूथपाः ॥
तथेमे गर्जिता नागाः स्वयूथगणशोभिताः ।
घर्मार्तास्त्वां समासाद्य सुखं विन्दन्ति शाल्मले
तथैव मृगजातीभिरन्याभिरभिशोभसे ।
तथा सार्थाधिवासैश्च शोभसे मेरुवद्द्रुम ॥ २
ब्राह्मणैश्च तपःसिद्धैस्तापसैः श्रमणैस्तथा ।
त्रिविष्टपसमं मन्ये तवायतनमेव हि ॥ ९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

## चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

नारदेन शाल्मलिंप्रति पर्वतादिभञ्जकेनापि वायुना तदीयशाखाया अप्यभञ्जने कारणप्रश्ने तेन साधिक्षेपमात्मशाखाभञ्जने वायोरशक्तिकथनम् ॥ १ ॥

नारद उवाच ।
बन्धुत्वादथवा सख्याच्छाल्मले नात्र संशयः ।
कस्मात्त्वां रक्षते नित्यं भीमः सर्वत्रगोऽनिलः ॥ १
तद्भावं परमं वायोः शाल्मले त्वमुपागतः ।
तवाहमस्मीति सदा येन रक्षति मारुतः ॥ २
न तं पश्याम्यहं वृक्षं पर्वतं वेश्म चेदृशम् ।
यं न वायुबलाद्भग्नं पृथिव्यामिति मे मतिः ॥ ३
त्वं पुनः कारणैर्नूनं रक्ष्यसे शाल्मले यथा ।
वायुना सपरीवारस्तेन तिष्ठस्यसंशयम् ॥ ४
शाल्मलिरुवाच ।
न मे वायुः सखा ब्रह्मन्न बन्धुर्मम नारद ।
चिरं मे मीयते नैव येन मां रक्षतेऽनिलः ॥ ५
मम तेजोबलं भीमं वायोरपि हि नारद ।
कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः ॥ ६
आगच्छन्परुषो वायुर्मया विष्टम्भितो बलात् ।
भञ्जन्द्रुमान्पर्वतांश्च यच्चान्यत्स्थाणुजङ्गमम् ॥ ७
स मया बहुशो भग्नः प्रभञ्जन्वै प्रभञ्जनः ।
तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् ॥ ८
नारद उवाच ।
शाल्मले विपरीतं ते दर्शनं नात्र संशयः ।
न हि वायोर्बले नास्ति भूतं तुल्यबलं क्वचित् ॥ ९
इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः ।
नैतेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते ॥ १०
यश्च कश्चिदपि प्राणी चेष्टते शाल्मले भुवि ।
सर्वत्र भगवान्वायुश्चेष्टाप्राणकरः प्रभुः ॥ ११
एष चेष्टयते सम्यक्प्राणिनः सम्यगायतः ।
असम्यगायतो भूयश्चेष्टते विकृतं नृषु ॥ १२
स त्वमेवंविधं वायुं सर्वसत्वभृतां वरम् ।
न पूजयसि पूज्यन्तं किमन्यद्बुद्धिलाघवात् ॥ १३
असारश्चापि दुर्मेधाः केवलं बहु भाषसे ।
क्रोधादिभिरवच्छन्नो मिथ्या वदसि शाल्मले ॥ १४
मम रोषः समुत्पन्नस्त्वय्येवं संप्रभाषति ।
ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु ॥ १५
चन्दनैः स्यन्दनैः शालैः सरलैर्देवदारुभिः ।
वेतसैर्धन्वनैश्चापि ये चान्ये बलवत्तराः ।
तैश्चापि नैवं दुर्बुद्धे क्षिप्तो वायुः कृतात्मभिः ॥ १६
तेऽपि जानन्ति वायोश्च बलमात्मन एव च ।
तस्मात्ते नावमन्यन्ते श्वसनं तरुसत्तमाः ॥ १७

न्यग्भावं परमं वायोरिति झ. पाठः ॥ २ ॥ परमेष्ठी तथा नैव येन रक्षति वानिल इति झ. पाठः ॥५॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

त्वं तु मोहान्न जानीषे वायोर्बलमनन्तकम् । एवं तस्माद्ब्रवीमि मिथ्याऽस्मि सकाशं मातरिश्वनः ॥ १८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

## पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

नारदसूचितेन वायुना शाल्मलिमेत्य परेद्युस्तद्भञ्जनप्रतिज्ञानम् ॥ १ ॥ वायुबलज्ञेन शाल्मलिना तदागमनात्प्रागेव स्वेनैव स्वीयशाखावशातनपूर्वकमवस्थानम् ॥ २ ॥ परेद्युरागतेन वायुना तंप्रति तत्कृतशाखावशातनस्यापि स्वबलप्रयोज्यत्वोक्तिः ॥ ३ ॥

भीष्म उवाच ।
एवमुक्त्वा तु राजेन्द्र शाल्मलिं ब्रह्मवित्तमः ।
नारदः पवने सर्वं शाल्मलेर्वाक्यमब्रवीत् ॥ १
नारद उवाच ।
हिमवत्पृष्ठजः कश्चिच्छाल्मलिः परिवारवान् ।
बृहन्मूलो बृहच्छायः स त्वां वायोऽवमन्यते ॥ २
बहुव्याक्षेपयुक्तानि त्वामाह वचनानि सः ।
न युक्तानि मया वायो तानि वक्तुं तवाग्रतः ॥ ३
जानामि त्वामहं वायो सर्वप्राणभृतां वरम् ।
वरिष्ठं च गरिष्ठं च सर्वलोकेश्वरं प्रभुम् ॥ ४
भीष्म उवाच ।
एतत्तु वचनं श्रुत्वा नारदस्य समीरणः ।
शाल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत् ॥ ५
वायुरुवाच ।
शाल्मले नारदो गच्छंस्त्वयोक्तो मद्विगर्हणम् ।
अहं वायुः प्रभावं ते दर्शयाम्यात्मनो बलम् ॥ ६
नाहं त्वां नाभिजानामि विदितश्चासि मे द्रुम ।
पितामहः प्रजासर्गे त्वयि विश्रान्तवान्प्रभुः ॥ ७
तस्य विश्रमणादेष प्रसादो मत्कृतस्तव ।
अभूत्तस्य प्रसादात्त्वां न भज्यामि द्रुमाधम ॥ ८
यन्मां त्वमवजानीषे यथाऽन्यं प्राकृतं तथा ।
दर्शयाम्येष चात्मानं यथा मां नावमन्यसे ॥ ९
भीष्म उवाच ।
एवमुक्तस्ततः प्राह शाल्मलिः प्रहसन्निव ।
पवन त्वं वने क्रुद्धो दर्शयात्मानमात्मना ॥ १०
मयि वै मुच्यतां क्रोधः किं मे क्रुद्धः करिष्यसि ।
न ते बिभेमि पवन यद्यपि त्वं स्वयं प्रभुः ।
बलाधिकोऽहं त्वत्तश्च न भीः कार्या मया तव ॥ ११
ये तु बुद्ध्या हि बलिनस्ते भवन्ति बलीयसः ।
प्राणमात्रबला ये वै नैव ते बलिनो मताः ॥ १२
इत्येवमुक्तः पवनः श्व इत्येवाब्रवीद्वचः ।
दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत् ॥ १३
अथ निश्चित्य मनसा शाल्मलिर्वैरधारणम् ।
पश्यमानस्तदात्मानमसमं मातरिश्वना ॥ १४
नारदे यन्मया प्रोक्तं वचनं प्रति तन्मृषा ।
असमर्थो ह्यहं वायोर्बलेन बलवान्हि सः ॥ १५
मारुतो बलवान्नित्यं यथा वै नारदोऽब्रवीत् ।
अहं तु दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥ १६
किं तु बुद्ध्या समो नास्ति मम कश्चिद्वनस्पतिः ।
तदहं बुद्धिमास्थाय भयं त्यक्ष्ये समीरणात् ॥ १७
यदि तां बुद्धिमास्थाय तिष्ठेयुः पर्णिनो वने ।
अरिष्टाः स्युः सदा क्रुद्धात्पवनान्नात्र संशयः ॥ १८
ते तु बाला न जानन्ति यथा नैतान्समीरणः ।
समीरयेत संक्रुद्धो यथा जानाम्यहं तथा ॥ १९
भीष्म उवाच ।
ततो निश्चित्य मनसा शाल्मलिः क्षुभितस्तदा ।
शाखाः स्कन्धान्प्रशाखाश्च स्वयमेव व्यशातयत् ॥ २०
स परित्यज्य शाखाश्च पत्राणि कुसुमानि च ।
प्रभाते वायुमायान्तं प्रेक्षते स्म वनस्पतिः ॥ २१
ततः क्रुद्धः श्वसन्वायुः पातयन्वै महाद्रुमान् ।
आजगामाथ तं देशमास्ते यत्र स शाल्मलिः ॥ २२
तं हीनपर्णं पतिताग्रशाखं
निशीर्णपुष्पं प्रसमीक्ष्य वायुः ।

रक्ष्यसे तेन दुर्बुद्धे नात्मवीर्याद्द्रुमाधमेति झ. पाठः ॥ ८ ॥

उवाच वाक्यं स्मयमान एवं
मुदायुतः शाल्मलिं रुग्णशाखम् ॥ २३
वायुरुवाच ।
अहमप्येवमेव त्वां कुर्यां वै शाल्मले रुषा ।
आत्मना यत्कृतं कृच्छ्रं शाखानामपकर्षणम् ॥ २४
हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशकः ।
आत्मदुर्मन्त्रितेनेह मद्वीर्यवशगः कृतः ॥ २५
भीष्म उवाच ।
एतच्छ्रुत्वा वचो वायोः शाल्मलिर्व्रीडितस्तदा ।
अतप्यत वचः स्मृत्वा नारदो यत्तदाऽब्रवीत् ॥ २६
एवं हि राजशार्दूल दुर्बलः सन्बलीयसा ।
वैरमासञ्जते बालस्तप्यते शाल्मलिर्यथा ॥ २७
तस्माद्वैरं न कुर्वीत दुर्बलो बलवत्तरैः ।
शोचेद्धि वैरं कुर्वाणो यथा वै शाल्मलिस्तथा ॥ २८
न हि वैरं महात्मानो विवृण्वन्त्यपका
शनैः शनैर्महाराज दर्शयन्ति स्म ते ब
वैरं न कुर्वीत नरो दुर्बुद्धिर्बुद्धिजीविना
बुद्धिर्बुद्धिमतो याति तूलेष्विव हुताश
न हि बुद्ध्या समं किंचिद्विद्यते पुरुषे
तथा बलेन राजेन्द्र न समोऽस्तीह कश्
तस्मात्क्षमेत बालाय जडान्धबधिराय
बलाधिकाय राजेन्द्र तद्दृष्टं त्वयि शत्रुह
अक्षौहिण्यो दशैका च सप्त चैव महाद्यु
बलेन न समा राजन्नर्जुनस्य महात्मनः
निहताश्चैव भग्नाश्च पाण्डवेन यशस्विना
चरता बलमास्थाय पाकशासनिना मृधे
उक्ताश्च ते राजधर्मा आपद्धर्माश्च भारत
विस्तरेण महाराज किं भूयः प्रब्रवीमि

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

---

## षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

भीष्मेण युधिष्ठिरंप्रति लोभादीनामनर्थहेतुत्वकथनपूर्वकं तद्वतां गर्हणम् ॥ १ ॥ तथा सत्सङ्गस्य लोभादि
सूचनाय सतां प्रशंसनपूर्वकं तत्पूजाविधानम् ॥ २ ॥

युधिष्ठिर उवाच ।
पापस्य यदधिष्ठानं यतः पापं प्रवर्तते ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥ १
भीष्म उवाच ।
पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप ।
एको लोभो महाग्राहो लोभात्पापं प्रवर्तते ॥ २
अतः पापमधर्मश्च तथा दुःखमनुत्तमम् ।
निकृत्या मूलमेतद्धि येन पापकृतो जनाः ॥ ३
लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते ।
लोभान्मोहश्च माया च मानस्तम्भः परासुता ॥ ४
अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः ।
अभिध्याऽप्रख्यता चैव सर्वं लोभात्प्रव
अत्यागश्च कुतर्कश्च विकर्मसु च याः क्रि
कुलविद्यामदश्चैव रूपैश्वर्यमदस्तथा ॥
सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वसत्कृतिः
सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम्
हरणं परवित्तानां परदाराभिमर्शनम् ।
वाग्वेगो मनसो वेगो निन्दावेगस्तथैव
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः ।
ईर्ष्यावेगश्च बलवान्मिथ्यावेगश्च दुर्जयः
रसवेगश्च दुर्वार्यः श्रोत्रवेगश्च दुःसहः ।
कुत्सा विकत्था मात्सर्यं पापं दुष्कर्मका

---

वैरमारभते इति झ. पाठः ॥ २७ ॥ तृणेष्विव हुताशनः
ते झ. पाठः ॥ ३० ॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः
१५५ ॥
ग्राह इव ग्राहो ग्रासकर्ता ॥ २ ॥ येन लोभेन जनाः पाप-

कृतो भवन्ति ॥ ३ ॥ परासुता पराधीनप्राणत्व
अभिध्या चिन्ता । अप्रख्यता अप्रकीर्तिः । अभि
चैवेति ड. थ. पाठः ॥ ५ ॥ अत्यागादयोऽका
सर्वे दोषाः लोभात् प्रवर्तन्त इति पूर्वेणान्वयः ॥

साहसानां च सर्वेषामकार्याणां क्रियास्तथा ॥ १०
जातौ बाल्ये च कौमारे यौवने चापि मानवाः ।
न त्यजन्त्यात्मकर्मैकं यन्न जीर्यति जीर्यतः ॥ ११
यो न पूरयितुं शक्यो लोभः प्रीत्या कथंचन ।
नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः ॥ १२
न प्रहृष्यति यो लोभैः कामैर्यश्च न तृप्यति ।
यो न देवैर्न गन्धर्वैर्नासुरैर्न महोरगैः ॥ १३
ज्ञायते नृप तत्त्वेन सर्वैर्भूतगणैस्तथा ।
स लोभः सह मोहेन विजेतव्यो जितात्मना ॥ १४
दम्भो द्रोहश्च निन्दा च पैशून्यं मत्सरस्तथा ।
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम् ॥ १५
सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यन्तीहाल्पबुद्धयः ॥ १६
द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ।
अन्तःक्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ॥ १७
धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ।
कुर्वते च बहून्मार्गांस्तान्हेतुबलमाश्रिताः ।
सर्वमार्गान्विलुम्पन्ति लोभज्ञानेष्ववस्थिताः ॥ १८
धर्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः ।
या या विक्रियते संस्था ततः साऽपि प्रपद्यते ॥ १९
दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽभिमानिता ।
एत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु ॥ २०
एतानरिष्टान्बुध्यस्व नित्यं लोभसमन्वितान् ।
शिष्टांस्तु परिपृच्छेथा यान्वक्ष्यामि शुचिव्रतान् २१
येष्वावृत्तिभयं नास्ति परलोकभयं न च ।
नामिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च ॥ २२
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ।
सुखं दुःखं समं येषां सत्यं येषां परायण
दातारो न ग्रहीतारो दयावन्तस्तथैव च ।
पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च ।
सर्वोपकारिणो धीराः सर्वधर्मानुपालकाः
सर्वभूतहिताश्चैव सर्वदेयाश्च भारत ॥
न ते चालयितुं शक्या धर्मव्याहारकारिण
न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम्
न त्रासिनो न चपला न रौद्राः सत्पथे स्थि
ते सेव्याः साधुभिर्नित्यमसाधूंश्च विवर्जयेत्
कामक्रोधव्यपेता ये निर्ममा निरहंकृताः ।
सुव्रताः स्थिरमर्यादास्तानुपास्व च पृच्छ च
न वागर्थं यशोर्थं वा धर्मस्तेषां युधिष्ठिर ।
अवश्यं कार्य इत्येव शरीरस्य क्रियास्तथा ।
न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते ।
न धर्मध्वजिनश्चैव न गुह्यं किंचिदास्थिताः
येष्वलोभस्तथाऽमोहो ये च सत्यार्जवे स्थित
तेषु कौन्तेय रज्येथा येषां न भ्रश्यते पुनः ।
ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति
निर्ममा निरहंकाराः सत्वस्थाः समदर्शिनः ।
लाभालाभौ सुखदुःखे च तात
प्रियाप्रिये मरणं जीवितं च ।
समानि येषां स्थिरविक्रमाणां
बुभुत्सतां सत्यपथे स्थितानाम् ॥
धर्मप्रियांस्तान्सुमहानुभावान्
दान्तोऽप्रमत्तश्च समर्चयेथाः ।
दैवात्सर्वे गुणवन्तो भवन्ति
शुभाशुभे वाक्प्रलापास्तथाऽन्ये ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

---

जातौ जन्मनि ॥ ११ ॥ यो न पूरयितुं शक्य इत्यादीनां स लोभो जेतव्य इति तृतीयेनान्वयः ॥ १२ ॥ अल्पेऽपि धनादौ बुद्धिर्येषां तेऽल्पबुद्धयो लुब्धा इत्यर्थः ॥ १६ ॥ धर्मवैतंसिकाः धर्मव्याजेनेतरान् हिंसन्तः । ध्वजिनो धर्मख्यापकाः । हेतुबलमिति अन्योन्यसंतोषहेतुतया पारदार्यादेरपि धर्मत्वं वर्णयन्तीति भावः ॥ १८ ॥ संस्था स्थितिः । विक्रियतेऽन्यथा भवति ॥ १९ ॥ सर्वं प्राणपर्यन्तमपि देयं परार्थे दातुं योग्यं येषां ते ॥ २५ ॥ पृच्छ च धर्ममिति शेषः ॥ २८ क्रिया आहारादयः । न धनार्थमिति झ. पाठः ॥ २९ ॥ गोपनीयम् ॥ ३० ॥ अमोह इति च्छेदः । येषां वृत्तमि शेषः ॥ ३१ ॥ हे शुभ हे भद्र, सर्वे वाक्प्रलापा गुणव भवन्ति । अन्ये तु मूढानां वाक्प्रलापा अशुभेऽशुभार्थे भवन्तीति शेषः ॥ ३४ ॥ षट्पञ्चाशदधिकशततमोऽध्या ॥ १५६ ॥

## सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

भीष्मेण युधिष्ठिरंप्रत्यज्ञानलक्षणादिप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अनर्थानामधिष्ठानमुक्तो लोभः पितामह ।
अज्ञानमपि कौरव्य श्रोतुमिच्छामि तत्त्वतः ॥ १
भीष्म उवाच ।
करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षमम् ।
द्विषते साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ॥ २
अज्ञानान्निरयं याति तथा ज्ञानेन दुर्गतिम् ।
अज्ञानात्क्लेशमाप्नोति तथाऽऽपत्सु निमज्जति ॥ ३
युधिष्ठिर उवाच ।
प्रजानामप्रवृत्तिं च ज्ञानवृद्धिक्षयोदयान् ।
मूलं स्थानं गतिं कालं कारणं हेतुमेव च ॥ ४
श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव ।
अज्ञानप्रसवं हीदं यद्दुःखमुपलभ्यते ॥ ५
भीष्म उवाच ।
रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता ।
कामः क्रोधश्च दर्पश्च तन्द्री चालस्यमेव च ॥ ६
इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता ।
अज्ञानमेतन्निर्दिष्टं पापानां चैव याः क्रियाः ॥ ७
एतस्य वा प्रवृत्तेश्च वृद्ध्यादीन्यांश्च पृच्छसि ।
विस्तरेण महाराज शृणु तच्च विशेषतः ॥ ८
उभावेतौ समफलौ समदोषौ च भारत ।
अज्ञानं चातिलोभश्चाप्येवं जानीहि पार्थिव ॥ ९
लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्धते ।
स्थाने स्थानं क्षयेत्क्षीणमुपैति विविधां गतिम् ॥ १०
मूलं लोभस्य मोहो वै कालात्मगतिरेव च ।
[छिन्ने भिन्ने तथा लोभे कारणं काल एव च ॥] ११
तस्माज्ज्ञानाद्धि लोभो हि कामात्मा गतिरेव च ।
सर्वे दोषास्तथा लोभात्तस्माल्लोभं विवर्जयेत् ॥ १२
जनको युवनाश्वश्च पृषदश्वः प्रसेनजित् ।
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये नराधिपाः ।
'छिन्ने छिन्ने तथा लोभे दिवं प्राप्ता जनाधिपाः ॥'
प्रत्यक्षं तु कुरुश्रेष्ठ त्यज लोभमिहात्मना ।
त्यक्त्वा लोभं सुखी लोके प्रेत्य चेह च मोदते ॥ १४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

## अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

भीष्मेण दमप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
स्वाध्यायकृतयत्नस्य ब्राह्मणस्य विशेषतः ।
धर्मकामस्य धर्मात्मन्किंनु श्रेय इहोच्यते ॥ १
बहुधा दर्शने लोके श्रेयो यदिह मन्यसे ।
अस्मिँल्लोके परे चैव तन्मे ब्रूहि पितामह ॥ २
महानयं धर्मपथो बहुशाखश्च भारत ।
किंस्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥ ३
धर्मस्य महतो राजन्बहुशाखस्य तत्त्वतः ।
यन्मूलं परमं तात तत्सर्वं ब्रूह्यतन्द्रितः ॥ ४
भीष्म उवाच ।
हन्त ते कथयिष्यामि येन श्रेयो ह्यवाप्स्यसि ।
पीत्वाऽमृतमिव प्राज्ञो येन तृप्तो भविष्यसि ॥ ५

---

वाच्यतां निन्द्यताम् ॥ २ ॥ अज्ञानस्य प्रवृत्तिं चेति झ. पाठः ॥ ४ ॥ कार्ये कारणोपचाराद्रागादय एवाज्ञानम् । पापानां क्रियाः हिंसादयः ॥ ७ ॥ लोभप्रभवं लोभात्तस्य प्रवृत्तिः । लोभवृद्धौ वृद्धिर्लोभस्य स्थाने साम्ये स्थानं समता । लोभक्षये क्षीणं भवति । उपैति उदेति । लोभस्योदये उदेतीत्यर्थः । विविधां गतिं दुःखसंतापमोहादिरूपां प्रापयितुमिति शेषः ॥ १० ॥ मूलं लोभस्य महतः कारणं लोभ एव च इति द. पाठः ॥ ११ ॥ त्यक्त्वा लोभं सुखं लोके प्रेत्य चानुचरिष्यसि इति झ. पाठः ॥ १४ ॥ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

धर्मस्य विधयो नैके ते ते प्रोक्ता महर्षिभिः ।
स्वंस्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥ ६
दमं निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ ७
नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते ।
दमो दानं तथा यज्ञानधीतं चातिवर्तते ॥ ८
दमस्तेजो वर्धयति पवित्रं च दमः परम् ।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥ ९
दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम ।
दमो हि परमो लोके प्रशस्तः सर्वधर्मिणाम् ॥ १०
प्रेत्य चात्र मनुष्येन्द्र परमं विन्दते सुखम् ।
दमेन हि सदा युक्तो महान्तं धर्ममश्नुते ॥ ११
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं पर्येति लोकांश्च मनश्चास्य प्रसीदति ॥ १२
अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान्प्रसृजत्यात्मदोषजान् ॥ १३
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
दमलिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥ १४
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाभिजयो दाक्ष्यं मार्दवं ह्रीरचापलम् ॥ १५
अकार्पण्यमसंरम्भः संतोषः प्रियवादिता ।
अविहिंसाऽनसूया चाप्येषां समुदयो दमः ॥ १६
गुरुपूजा च कौरव्य दया भूतेष्वपैशुनम् ।
जनवादमृषावादस्तुतिनिन्दाविसर्जनम् ॥ १७
कामं क्रोधं च लोभं च दर्पं स्तम्भं विकत्थनम् ।
रोषमीर्ष्यावमानं च नैव दान्तो निषेवते ॥ १८
अनिन्दितो ह्यकामात्मा नाल्पेष्वर्थ्यनसूयकः ।
समुद्रकल्पः स नरो न कथंचन पूर्यते ॥ १९
अहं त्वयि मम त्वं च मयि ते तेषु चाप्यहम् ।
पूर्वसंबन्धिसंयोगं नैतद्दान्तो निषेवते ॥ २०

सर्वा ग्राम्यास्तथाऽऽरण्या याश्च लोके प्रवृत्तयः ।
निन्दां चैव प्रशंसां च यो नाश्रयति मुच्यते ॥ २
मैत्रोऽथ शीलसंपन्नः प्रसन्नात्माऽऽत्मविच्च यः ।
मुक्तस्य विविधैः सङ्गैस्तस्य प्रेत्य फलं महत् ॥ २
सुवृत्तः शीलसंपन्नः प्रसन्नात्माऽऽत्मविद्बुधः ।
प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते ॥ २
कर्म यच्छुभमेवेह सद्भिराचरितं च यत् ।
तदेव ज्ञानयुक्तस्य मुनेर्वर्त्म न हीयते ॥ २
निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरन्नेवं ब्रह्मभूयाय कल्पते ॥ २
अभयं यस्य भूतेभ्यो भूतानामभयं यतः ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ २
अवाचिनोति कर्माणि न च संप्रचिनोति ह ।
समः सर्वेषु भूतेषु मैत्रायणगतिं चरेत् ॥ २
शकुनीनामिवाकाशे मत्स्यानामिव चोदके ।
यथा गतिर्न दृश्येत तथा तस्य स संशयः ॥ २
गृहानुत्सृज्य यो राजन्मोक्षमेवाभिपद्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः २
संन्यस्य सर्वकर्माणि संन्यस्य विधिवत्तपः ।
संन्यस्य विविधा विद्याः सर्वं संन्यस्य चैव ह ॥ ३
कामे शुचिरनावृत्तः प्रसन्नात्माऽऽत्मविच्छुचिः
प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते ॥ ३
यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम् ।
गुहायां निहितं नित्यं तद्दमेनाभिगम्यते ॥ ३
ज्ञानारामस्य बुद्धस्य सर्वभूतानुरोधिनः ।
नावृत्तिभयमस्तीह परलोकभयं कुतः ॥ ३
एक एव दमे दोषो द्वितीयो नोपपद्यते ।
यदेनं दमसंयुक्तमशक्तं मन्यते जनः ॥ ३
एकोऽस्य सुमहाप्राज्ञ दोषः स्यात्सुमहान्गुणः ।
क्षमया विपुला लोका दुर्लभा हि सहिष्णुता ॥ ३

---

परायण पराकाष्ठा । अत्रैव सर्वे धर्मा अन्तर्भूता इत्यर्थः ॥६॥ दर्पं गर्वं । स्तम्भं अविनम् ॥१८॥ अल्पेषु अनित्यसुखेषु । कथंचन ब्रह्मलोकलाभेऽपि न पूर्यते न तृप्तो भवति ॥१९॥ निष्क्रम्य गृहादिति शेषः ॥२५॥ अवाचिनोति भोगेन व्ययीकरोति । नच संचिनोति संगृह्णाति तत्त्वज्ञस्य कर्माश्लेषस्मरणात् । मैत्रायण सर्वभूतेभ्योऽभयदानम् ॥ २७ ॥ कामे शुचिः सत्यक इत्यर्थः । अनावृत्तः सर्वत्र कामचारभाक् । तस्य सर्वेषु लोके कामचारो भवतीति श्रुतेः ॥ ३१ ॥ गुहायां हृत्पुण्डरीके । पै मह ब्रह्मलोकाख्यम् ॥ ३२ ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

दान्तस्य किमरण्येन तथाऽदान्तस्य भारत ।
यत्रैव निवसेद्दान्तस्तदरण्यं स चाश्रमः ॥ ३६
वैशंपायन उवाच ।
एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः ।
अमृतेनेव संतृप्तः प्रहृष्टः समपद्यत ॥ ३७
पुनश्च परिपप्रच्छ भीष्मं धर्मभृतां वरम् ।
ततः प्रीतः स चोवाच तस्मै सर्वं कुरूद्वहः ॥ ३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

## एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

भीष्मेण तपोनिरूपणम् ॥ १ ॥

भीष्म उवाच ।
सर्वमेतत्तपोमूलं कवयः परिचक्षते ।
न ह्यतप्ततपा मूढः क्रियाफलमवाप्नुते ॥ १
प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः ।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २
तपसैव ससर्जान्नं फलमूलानि यानि च ।
त्रीँल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ॥ ३
औषधान्यगदादीनि तिस्रो विद्याश्च संस्कृताः ।
तपसैव हि सिद्ध्यन्ति तपोमूलं हि साधनम् ॥ ४
यद्दुरापं दुराराध्यं दुराधर्षं दुरुत्सहम् ।
तत्सर्वं तपसा शक्यं तपो हि दुरतिक्रमम् ।
ऐश्वर्यमृषयः प्राप्तास्तपसैव न संशयः ॥ ५
सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन नरः पापात्प्रमुच्यते ॥ ६
तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्ततः ।
निवृत्त्या वर्तमानस्य तपो नानशनात्परम् ॥ ७
अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः ।
एतेभ्यो हि महाराज तपो नानशनात्परम् ॥ ८
न दुष्करतरं दानान्नाति मातरमाश्रमः ।
त्रैविद्येभ्यः परं नास्ति संन्यासान्नापरं तपः ॥ ९
इन्द्रियाणीह रक्षन्ति विप्रर्षिपितृदेवताः ।
तस्मादर्थे च धर्मे च तपो नानशनात्परम् ॥ १०
ऋषयः पितरो देवा मनुष्या मृगपक्षिणः ।
यानि चान्यानि भूतानि स्थावराणि चराणि च ११
तपःपरायणाः सर्वे सिध्यन्ति तपसा च ते ।
इत्येवं तपसा देवा महत्त्वं प्रतिपेदिरे ॥ १२
इमानीष्टविभागानि फलानि तपसः सदा ।
तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयः ॥ १३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

भीष्मेण सत्यप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
सत्यं धर्मं प्रशंसन्ति विप्रर्षिपितृदेवताः ।
सत्यमिच्छाम्यहं ज्ञातुं तन्मे ब्रूहि पितामह ॥ १
सत्यं किंलक्षणं राजन्कथं वा तदवाप्यते ।
सत्यं प्राप्य भवेत्किंच कथं चैव तदुच्यताम् ॥ २
भीष्म उवाच ।
चातुर्वर्ण्यस्य धर्माणां संकरो न प्रशस्यते ।
धर्मः साधारणः सत्यं सर्ववर्णेषु भारत ॥ ३

तपसो ह्यानुपूर्व्येण फलमूलानिलाशिनः । इति द. ध. पाठः । ३ ॥ मातरमतिक्रम्याश्रमो न । सर्वेष्वप्याश्रमेषु माता पाल्यैव । तत्त्यागस्य संन्यासिनोऽप्ययोगात् ॥ ९ ॥ इमानि नक्षत्रादीनि । सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीति श्रुतेः ॥ १३ ॥ एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ ४
सत्यं धर्मस्तपोयोगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम् ॥ ५
रूपं यदिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह पराक्रमम् ॥ ६
प्राप्यते च यथा सत्यं तच्च वेत्तुमिहार्हसि ।
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ॥ ७
सत्यं च समता चैव दमश्चैव न संशयः ।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥ ८
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ ९
सत्यं नामाव्ययं नित्यमविकारि तथैव च ।
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते ॥ १०
आत्मनीष्टे तथाऽनिष्टे रिपौ च समता तथा ।
इच्छाद्वेषं क्षयं प्राप्य कामक्रोधक्षयं तथा ॥ ११
दमो नान्यस्पृहा नित्यं गाम्भीर्यं धैर्यमेव च ।
अशाठ्यं क्रोधदमनं ज्ञानेनैतदवाप्यते ॥ १२
अमात्सर्यं बुधाः प्राहुर्दाने धर्मे च संयमः ।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् ॥ १३
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते सर्वतः साधुस्ततः प्राप्नोति सत्यताम् ॥ १४
कल्याणं कुरुते बाढं धीमान्न ग्लायते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते ॥ १५
धर्मार्थहेतोः क्षमते तितिक्षा धर्म उत्तमः ।
लोकसंग्रहणार्थं वै सा तु धैर्येण लभ्यते ॥ १६
'अनसूया तु गाम्भीर्यं दानेनैतदवाप्यते ।'
त्यक्तस्नेहस्य यस्त्यागो विषयाणां तथैव च ।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा ॥ १७
'ध्यानं च शाठ्यमित्युक्तं मौनेनैतदवाप्यते ।'
आर्यता नाम भूतानां यः करोति प्रयत्नतः ।
शुभं कर्म निराकारो वीतरागस्तथैव च ॥ १८
धृतिर्नाम सुखे दुःखे यया नाप्नोति विक्रियाम् ।
तां भजेत सदा प्राज्ञो य इच्छेद्भूतिमात्मनः ॥ १९
सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च ।
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥ २०
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ २१
एते त्रयोदशाकाराः पृथक्सत्यैकलक्षणाः ।
भजन्ते सत्यमेवेह बृंहयन्ते च भारत ॥ २२
नान्तः शक्यो गुणानां च वक्तुं सत्यस्य पार्थिव ।
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः ॥ २३
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
स्थितिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥ २४
उपैति सत्याद्दानं हि तथा यज्ञाः सदक्षिणाः ।
त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः ॥ २५
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

## एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

भीष्मेण युधिष्ठिरंप्रति लोभादिनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
यतः प्रभवति क्रोधः कामो वा भरतर्षभ ।
शोकमोहौ विधित्सा च परासुत्वं तथा मदः ॥ १
लोभो मात्सर्यमीर्ष्या च कुत्साऽसूया कृपा भयम् ।
एतत्सर्वं महाप्राज्ञ याथातथ्येन मे वद ॥ २
भीष्म उवाच ।
त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः ।
उपासते महाराज समन्तात्पुरुषानिह ॥ ३

अक्षमाया विषये तथा क्षमाया इति दृष्टान्तार्थम् ॥ १४ ॥

षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

एते प्रमत्तं पुरुषमप्रमत्तास्तुदन्ति च ।
वृका इव विलुम्पन्ति दृष्ट्वेव पुरुषेतरान् ॥ ४
एभ्यः प्रवर्तते दुःखमेभ्यः पापं प्रवर्तते ।
इति मर्त्यो विजानीयात्सततं पुरुषर्षभ ॥ ५
एतेषामुदयं स्थानं क्षयं च पृथिवीपते ।
हन्त ते कथयिष्यामि क्रोधस्योत्पत्तिमादितः ।
यथातत्त्वं क्षितिपते तन्मे निगदतः शृणु ॥ ६
लोभात्क्रोधः प्रभवति परदोषैरुदीर्यते ।
क्षमया तिष्ठते राजन्क्षमया विनिवर्तते ॥ ७
संकल्पाज्जायते कामः सेव्यमानो विवर्धते ।
यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति ॥ ८
[परासूया क्रोधलोभावन्तरा प्रतिमुच्यते ।
दयया सर्वभूतानां निर्वेदाद्विनिवर्तते ।]
अवद्यदर्शनादेति तत्त्वज्ञानाच्च नश्यति ॥ ९
अज्ञानप्रभवो मोहः पापाभ्यासात्प्रवर्तते ।
यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति ॥ १०
विरुद्धानीह शास्त्राणि ये पश्यन्ति कुरूद्वह ।
विधित्सा जायते तेषां तत्त्वज्ञानान्निवर्तते ॥ ११
प्रीतेः शोकः प्रभवति वियोगात्तस्य देहिनः ।
यदा निरर्थकं वेत्ति तदा सद्यः प्रणश्यति ॥ १२
परासुता क्रोधलोभादभ्यासाच्च प्रवर्तते ।
दयया सर्वभूतानां निर्वेदात्सा निवर्तते ॥ १३
सत्यत्यागात्तु मात्सर्यमहितानां च सेवया ।
एतत्तु क्षीयते तात साधूनामुपसेवनात् ॥ १४
कुलाज्ज्ञानात्तथैश्वर्यान्मदो भवति देहिनाम् ।
एभिरेव तु विज्ञातैर्मदः सद्यः प्रणश्यति ॥ १५
ईर्ष्या कामात्प्रभवति संहर्षाच्चैव जायते ।
इतरेषां तु सत्वानां प्रज्ञया सा प्रणश्यति ॥ १६
विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसंमतैः ।
कुत्सा संजायते राजँल्लोकान्प्रेक्ष्याभिशाम्यति १७
प्रतिकर्तुं न शक्ता ये बलस्थायापकारिणे ।
असूया जायते तीव्रा कारुण्याद्विनिवर्तते ॥ १८
कृपणान्सततं दृष्ट्वा ततः संजायते कृपा ।
धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ॥ १९
अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा ।
अस्थिरत्वं च भोगानां दृष्ट्वा ज्ञात्वा निवर्तते ॥ २०
एतान्येव जितान्याहुः प्रशान्तेन त्रयोदश ।
एते हि धार्तराष्ट्राणां सर्वे दोषास्त्रयोदश ।
त्वया सत्यार्थिना नित्यं विजिता जेष्यता च ते २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

## द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

भीष्मेण युधिष्ठिरंप्रति नृशंसलक्षणादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
आनृशंस्यं विजानामि दर्शनेन सतां सदा ।
नृशंसान्न विजानामि तेषां कर्म च भारत ॥ १
कण्टकान्कूपमग्निं च वर्जयन्ति यथा नराः ।
तथा नृशंसकर्माणं वर्जयन्ति नरा नरम् ॥ २
नृशंसो दह्यते व्यक्तं प्रेत्य चेह च भारत ।
तस्मात्त्वं ब्रूहि कौरव्य तस्य धर्मविनिश्चयम् ॥ ३
भीष्म उवाच ।
स्पृहाऽस्यान्तर्गता चैव विदितार्था च कर्मणाम् ।
आक्रोष्टा क्रुश्यते चैव बन्धिता बध्यते स च ॥ ४
दत्तानुकीर्तिर्विषमः क्षुद्रो नैकृतिकः शठः ।
असंभोगी च मानी च तथा सङ्गी विकत्थनः ॥ ५

दृष्ट्वेव पुरुषं बलादिति झ. पाठः ॥ ४ ॥ लोभात् केनचिन्निमित्तेनोपहतात् क्रोधो भवति । स च परदोषैर्दृष्टैरुदीर्यते भवति । स क्षमया तिष्ठते निरुध्यते विनिवर्तते चेति । द्रष्टव्यम् ॥७॥ एकषष्ट्यधिकशततमोऽध्यायः॥१६१॥

दत्तमनुकीर्तयतीति दत्तानुकीर्तिः स्वस्य वदान्यत्वप्रकाशकः । विषमः विद्वेषकर्ता । क्षुद्रो नीचकर्मकारी । नैकृतिकः स्नेहं प्रदर्श्य वञ्चकः । शठः सत्यपि सामर्थ्ये दारिद्र्यव्यञ्जकः ॥ ५ ॥

पर्वातिशङ्की पुरुषो बलीशः कृपणोऽथवा ।
र्गप्रशंसी सततमाश्रमद्वेषसंकरी ॥ ६
हिंसाविकारी सततमविशेषगुणागुणः ।
ग्बलीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत् ॥७
र्मशीलं गुणोपेतं पाप इत्यवगच्छति ।
आत्मशीलोपमानेन न विश्वसिति कस्यचित् ॥८
रेषां यत्र दोषः स्यात्तद्गुह्यं संप्रकाशयेत् ।
समानेष्वेव दोषेषु वृत्त्यर्थमुपघातयेत् ॥ ९
तथोपकारिणं चैव मन्यते वञ्चितं परम् ।
दत्त्वाऽपि च धनं काले संतपत्युपकारिणे ॥ १०
भक्ष्यं पेयमथालेह्यं यच्चान्यत्साधु भोजनम् ।
प्रेक्षमाणेषु योऽश्नीयान्नृशंसमिति तं वदेत् ॥ ११
ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते ।
स प्रेत्य लभते स्वर्गमिह चानन्त्यमश्नुते ॥ १२
एष ते भरतश्रेष्ठ नृशंसः परिकीर्तितः ।
सदा विवर्जनीयो हि पुरुषेण बुभूषता ॥ १३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि द्विषष्टयधिकशततमोऽध्यायः ॥ १६२ ॥

---

## त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

भीष्मेण युधिष्ठिरंप्रति यज्ञाद्यर्थं संपादनीयद्रव्यविवेचनम् ॥ १ ॥ तथा पापविशेषाणां प्रायश्चित्तविशेषकथनम् ॥ २ ॥

भीष्म उवाच ।
कृतार्थो यक्ष्यमाणश्च सर्ववेदान्तगश्च यः ।
आचार्यपितृकार्यार्थं स्वाध्यायार्थमथापि च ॥ १
एते वै साधवो दृष्टा ब्राह्मणा धर्मभिक्षवः ।
निःस्वेभ्यो देयमेतेभ्ये दानं विद्या च भारत ॥२
अन्यत्र दक्षिणादानं देयं भरतसत्तम ।
अन्येभ्योऽपि बहिर्वेदि न कृतान्नं विधीयते ॥ ३
सर्वरत्नानि राजा हि यथार्हं प्रतिपादयेत् ।
ब्राह्मणायैव यज्ञाश्च सहान्नाः सहदक्षिणाः ॥ ४
अन्येभ्यो विमलाचारा यजन्ते गुणतः सदा ।
यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं चापि विद्येत स सोमं पातुमर्हति ॥ ५
यज्ञश्चेत्प्रतिरुद्धः स्यादंशेनैकेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ ६
यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात्तस्य तद्वित्तं यज्ञार्थं पार्थिवो हरेत् ॥ ७
आहरेद्बहुतः किंचित्कामं शूद्रस्य वेश्मनि ।
न हि वेश्मनि शूद्रस्य किंचिदस्ति परिग्रहः ॥ ८
योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ ९
अदातृभ्यो हरेद्वित्तं विख्याप्य नृपतिः सदा ।
तथैवाचरतो धर्मो नृपतेः स्यादथाखिलः ॥ १०
तथैव सप्तमे भक्ते भक्तानि षडनश्नतः ।
अश्वस्तनविभागेन हर्तव्यं हीनकर्मणः ॥ ११
खलात्क्षेत्रात्तथागाराद्यतो वाऽप्युपपद्यते ।
आख्यातव्यं नृपस्यैतत्पृच्छतोऽपृच्छतोपि वा ।
न तस्मै धारयेद्दण्डं राजा धर्मेण धर्मवित् ॥ १२
क्षत्रियस्य तु बालिश्याद्ब्राह्मणः क्लिश्यते क्षुधा ।
श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत् ॥ १३
अथैनं परिरक्षेत पिता पुत्रमिवौरसम् ॥ १४
इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
अविकल्पः पुरा धर्मो धर्मवादैस्तु केवलः ॥ १५
विश्वैर्देवैश्च साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।
आपत्सु मरणाद्भीतैर्लिङ्गः प्रतिनिधीकृतः ॥ १६

---

बलीशः काकइव वञ्चकदृष्टिः । आश्रमद्वेषः संकरश्चास्यास्तीति आश्रमद्वेषसंकरी ॥ ६ ॥ आत्मशीलानुमानेनेति थ. पाठः ॥ ८ ॥ द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

निःस्वो निर्धनः ॥ २ ॥ अन्यत्र उक्तेभ्योऽन्यत्रापि ब्राह्मणेषु अन्येभ्योऽब्राह्मणेभ्यः कृतान्नं पक्वान्नं न विधीयते । तेभ्योऽप्यकृतान्नं देयमिति भावः ॥ ३ ॥ ब्राह्मणस्य यज्ञः एकेनांशेन रूयाद्यङ्गनाशेन प्रतिरुद्धः स्यात्तर्हि तस्य वैश्यस्य तद्धनं पार्थिवो यज्ञार्थं हरेदिति द्वितीयेन संबन्धः । दोषेणैकेन यज्वन इति ध. पाठः ॥ ६ ॥ भक्तानि षडनश्नतः त्र्यहमुपोषितस्य ॥११॥ बालिश्यादित्यनेन क्षत्रियस्यैव स दोष इत्युक्तम् ॥१३॥

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाप्नोति फलं तस्य प्रेत्य चेह च दुर्मतिः ॥ १७
न ब्राह्मणो वेदयीत किंचिद्राजनि धर्मवित् ।
अविद्यावेदनाद्विद्यात्स्ववीर्यं वीर्यवत्तरम् ।
तस्माद्राज्ञः सदा तेजो दुःसहं ब्रह्मवादिनाम् ॥ १८
मन्ता शास्ता विधाता च ब्राह्मणो देव उच्यते ।
तस्मिन्नाकुशलं ब्रूयान्न शुष्कामीरयेद्गिरम् ॥ १९
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनैर्वैश्यश्च शूद्रश्च मन्त्रैर्होमैश्च वै द्विजः ॥ २०
नैव कन्या न युवतिर्नामन्त्रज्ञो न बालिशः ।
परिवेष्टाऽग्निहोत्रस्य भवेन्नासंस्कृतस्तथा ॥ २१
नरके निपतन्त्येते जुह्वानाः सवनस्य तत् ।
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥ २२
प्राजापत्यमदत्त्वा च अग्न्याधेयस्य दक्षिणाम् ।
अनाहिताग्निरिति स प्रोच्यते धर्मदर्शिभिः ॥ २३
पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
अनाप्तदक्षिणैर्यज्ञैर्न यजेत कथंचन ॥ २४
प्रजाः पशूंश्च स्वर्गं च हन्ति यज्ञो ह्यदक्षिणः ।
इन्द्रियाणि यशः कीर्तिमायुश्चाप्यवकृन्तति ॥ २५
उदक्यामासते ये च द्विजाः केचिदनग्नयः ।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रकर्मिणः ॥ २६
उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
उषित्वा द्वादश समाः शूद्रक[redacted]
अ[redacted] बिभ्रच्छूद्रं वृद्धं च वै द्विजः ।
अब्राह्मणं मन्यमानस्तृणेष्वासीत पृष्ठतः ।
तथा संशुध्यते राजञ्शृणु चात्र वचो मम ॥ २८
यदेकरात्रेण करोति पापं
कृष्णं वर्णं ब्राह्मणः सेवमानः ।
स्थानासनाभ्यां विहरन्व्रती स
त्रिभिर्वर्षैः शमयेदात्मपापम् ॥ २९
न नर्मयुक्तमनृतं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ ३०
श्रद्दधानः शुभां विद्यां हीनादपि समाप्नुयात् ।
सुवर्णमपि चामेध्यादाददीताविचारयन् ॥ ३१
स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत् ।
अदूष्या हि स्त्रियो रत्नमाप इत्येव धर्मतः ॥ ३२
गोब्राह्मणहितार्थं च वर्णानां संकरेषु च ।
वैश्यो गृह्णीत शस्त्राणि परित्राणार्थमात्मनः ॥ ३३
सुरापो ब्रह्महा चैव गुरुतल्पगतस्तथा ।
अचिरेण महाराज पतितो वै भवत्युत ॥ ३४
सुवर्णहरणं स्तैन्यं विप्रस्वं चेति पातकम् ।
विहारो मद्यपानं च अगम्यागमनं तथा ॥ ३५
पतितैः संप्रयोगश्च ब्राह्मणीयोनितस्तथा ।
अनिर्देश्यानि मन्यन्ते प्राणान्तानीति धारणा ॥ ३६
संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनादानान्न तु यानासनाशनात् ॥ ३७
एतानि हित्वातोऽन्यानि निर्देश्यानीति धारणा ।
निर्देश्यकेन विधिना कालेनाव्यसनी भवेत् ॥ ३८
[redacted] न होतव्यं प्रेतकर्मण्युपाश्रिते ।
त्रिषु त्वेतेषु पूर्वेषु न कुर्वीत विचारणम् ॥ ३९
अमात्यान्वा गुरून्वापि जह्याद्धर्मेण धार्मिकः ।
प्रायश्चित्तान्यकुर्वाणा नैते कुर्वन्ति संविदम् ॥ ४०
अधर्मकारी धर्मेण तपसा हन्ति किल्बिषम् ।
ब्राह्मणायावगुर्येत स्पृष्टे गुरुतरं भवेत् ॥ ४१

परिवेष्टा आहुतिप्रक्षेप्ता । कन्यायुवत्योः स्मार्ताग्निहोमे स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वेत्याश्वलायनवचनादधिकृतयोरत्रापि प्रसक्तेर्निषेध उक्तः ॥ २१ ॥ आसते मिथुनीभवन्ति ॥ २६ ॥ उदपानः कूपस्तदेकोदके एककूपोपजीव्ये इत्यर्थः ॥ २७ ॥ अभार्यामपरिणीतां शयने बिभ्रद्ब्राह्मणस्तथा शूद्रं वृद्धं महानिति मन्यमानस्तथाऽब्राह्मणं क्षत्रियं वैश्यं वा वृद्धं मन्यमानस्तृणेषु यद्यासीतोपविष्टः स यथा संशुध्येत तथा तथा शृण्विति सार्धोर्थः ॥ २८ ॥ विहरन् करोतीति संबन्धः ॥ २९ ॥

अनिर्देश्यानि बुद्धिपूर्वकाणि चेदत्र प्रायश्चित्तं नास्तीत्यर्थः । किं तर्हि मरणान्तमेव प्रायश्चित्तमिति धारणानिश्चयः । ब्राह्मणीयोनितः । अब्राह्मणस्य ब्राह्मणीगमनादित्यर्थः ॥ ३६ ॥ याजनादित्रयेण सद्यः पतति न तु यानादिना । तेन तु वर्षेण पततीत्यर्थः ॥ ३७ ॥ एतानि पञ्चमहापापानि । अन्यानि तु निर्देश्यानि सप्रायश्चित्तानि । अव्यसनी पुनः पापरुचिर्न स्यात् ॥ ३८ ॥ पूर्वेषु त्रिषु सुरापब्रह्मघ्नगुरुतल्पगेषु तेषु मृतेषु सपिण्डानामाशौचाभावात्तेषां प्रेतकर्मनिषेधाच्चेति भावः ॥ ३९ ॥

अस्तेनं स्तेन इत्युक्त्वा द्विगुणं पापमाप्नुयात् ।
त्रिभागं ब्रह्महत्यायाः कन्यां प्राप्नोति दुष्यति ।
यस्तु दूषयिता तस्याः शेषं प्राप्नोति पाप्मनः ॥ ४२
ब्राह्मणानवगर्ह्येह स्पृष्ट्वा गुरुतरं भवेत् ।
वर्षाणां हि शतं पापः प्रतिष्ठां नाधिगच्छति ॥४३
सहस्रं चैव वर्षाणां निपत्य नरके वसेत् ।
तस्मान्नैवावगुर्याद्धि नैव जातु निपातयेत् ॥ ४४
शोणितं यावतः पांसून्संगृह्णीयाद्द्विजक्षतात् ।
तावतीः स समा राजन्नरके प्रतिपद्यते ॥ ४५
भ्रूणहाऽऽहवमध्ये तु शुध्यते शस्त्रपाततः ।
आत्मानं जुहुयादग्नौ समिद्धे तेन शुध्यते ॥ ४६
सुरापो वारुणीमुष्णां पीत्वा पापाद्विमुच्यते ॥४७
तया स काये निर्दग्धे मृत्युं वा प्राप्य शुध्यति ।
लोकांश्च लभते विप्रो नान्यथा लभते हि सः ॥ ४८
गुरुतल्पमधिष्ठाय दुरात्मा पापचेतनः ।
शिलां ज्वलन्तीमासाद्य मृत्युना सोभिशुध्यति ४९
अथवा शिश्नवृषणावादायाञ्जलिना स्वयम् ।
नैर्ऋतीं दिशमास्थाय निपतेत्सत्वजिह्मगः ॥ ५०
ब्राह्मणार्थेऽपि वा प्राणान्संत्यजंस्तेन शुध्यति॥ ५१
अश्वमेधेन वाऽपीष्ट्वा अथवा गोसवेन वा ।
मरुत्सोमेन वा सम्यगिह प्रेत्य च पूज्यते ॥५२
तथैव द्वादशसमाः कापोतं धर्ममाचरेत् ।
एककालं चरेद्भैक्षं स्वकर्मोदाहरञ्जने ॥ ५३
एवं वा तपसा युक्तो ब्रह्महा सवनी भवेत् ।
एवं गर्भमविज्ञातमात्रेयीं वा निपातयेत् ॥ ५४
द्विगुणा ब्रह्महत्या वै आत्रेयीहिंसने भवेत् ।
सुरापो नियताहारो ब्रह्मचारी क्षपाचरः ॥ ५५
ऊर्ध्वं त्रिभ्योऽपि वर्षेभ्यो यजेताग्निष्टुता परम् ।
ऋषभैकसहस्रं वा गा दत्त्वा शौचमाप्नुयात् ॥५६
वैश्यं दत्त्वा तु वर्षे द्वे ऋषभैकशतं च गाः ।
शूद्रं हत्वाऽब्दमेवैकमृषभं च शतं च गाः ॥५७
श्ववराहखरान्हत्वा शौद्रमेव व्रतं चरेत् ।
मार्जारचापमण्डूकान्काकं व्यालं च मूषिकम् ॥५८
उक्तः पशुवधे दोषो राजन्प्राणिनिपातनात् ।
'अनस्थिकेषु गोमूत्रं पानमेकं प्रचक्षते ।'
प्रायश्चित्तान्यथान्यानि प्रवक्ष्याम्यनुपूर्वशः ॥५९
तल्पे वाऽन्यस्य चौर्ये च पृथक् संवत्सरं चरेत् ।
त्रीणि श्रोत्रियभार्यायां परदारे च द्वे स्मृते ॥ ६०
काले चतुर्थे भुञ्जानो ब्रह्मचारी व्रती भवेत् ।
स्थानासनाभ्यां विहरेत्त्रिरह्नाऽभ्युपयन्नपः ॥ ६१
'एवमेव चरन्राजंस्तस्मात्पापात्प्रमुच्यते ।'
एवमेव निराकर्ता यश्चाग्नीनपविध्यति ॥ ६२
त्यजत्यकारणे यश्च पितरं मातरं गुरुम् ।
पतितः स्यात्स कौरव्य यथा धर्मेषु निश्चयः॥ ६३
ग्रासाच्छादनयानं च शयनं ह्यासनं तथा ।
'ब्रह्मचारी द्विजेभ्यश्च दत्त्वा पापात्प्रमुच्यते॥' ६४
भार्यायां व्यभिचारिण्यां निरुद्धायां विशेषतः ।
यत्पुंसः परदारेषु तदेनां चारयेद्व्रतम् ॥ ६५
श्रेयांसं शयने हित्वा पापीयांसं समृच्छति ।
श्वभिस्तमर्दयेद्राजा संस्थाने बहुविस्तरे ॥ ६६
पुमांसं बन्धयेत्पाशैः शयने तप्त आयसे ।
अप्यादधीत दारूणि तत्र दह्येत पापकृत् ॥ ६७
एष दण्डो महाराज स्त्रीणां भर्तृव्यतिक्रमे ।
संवत्सरोऽभिशस्तस्य दुष्टस्य द्विगुणो भवेत्॥६८
द्वे तस्य त्रीणि वर्षाणि चत्वारि सहसेविनः ।
कुमारः पञ्चवर्षाणि चरेद्भैक्षं मुनिव्रतः ॥ ६९
परिवित्तिः परिवेत्ता या चैव परिविद्यते ।
पाणिग्राहस्त्वधर्मेण सर्वे ते पतिताः स्मृताः ॥ ७०
चरेयुः सर्व एवैते वीरहा यद्व्रतं चरेत् ।
चान्द्रायणं चरेन्मासं कृच्छ्रं वा पापशुद्धये॥७१
परिवेत्ता प्रयच्छेत तां स्नुषां परिवित्तये ।
ज्येष्ठेन त्वभ्यनुज्ञातो यवीयानप्यनन्तरम् ।

अवगर्ह्य विनिन्द्य । स्पृष्ट्वाऽर्धचन्द्रादिनापनोद्य । गुरुतरं शेषादप्यधिकं पातकं तस्य फलम् ॥ ४३ ॥ आहवमध्ये गोब्राह्मणरक्षार्थं संग्रामे शस्त्रेण हतश्चेद्ब्रह्महा शुध्यते ॥ ४६ ॥ सवनी त्रिषवणस्नायी । आत्रेयीं प्राप्तगर्भां स्त्रियम् ॥ ५४ ॥ पृथक् एकैकस्योपपातकस्य प्रायश्चित्तं संवत्सरं चरेत् ॥ ६० ॥ अभिशस्तस्य प्रायश्चित्तं सद्योऽकुर्वतः ॥ ६८ ॥ तस्य पतितस्य सहसेविनः संसर्गिणिः ॥ ६९ ॥ परिवेत्ता कनिष्ठः परिवित्तये ज्येष्ठाय भार्यां स्नुषात्वेन प्रयच्छेत् । एतां स्वेनाभुक्तां तवै-

एनसो मोक्षमाप्नोति तां च सा चैव धर्मतः ॥ ७२
अमानुषीषु गोवर्जमनादिष्टं न दुष्यति ।
अधिष्ठातारमत्तारं पशूनां पुरुषं विदुः ॥ ७३
परिधायोर्ध्ववालं तु पात्रमादाय मृन्मयम् ।
चरेत्सप्तगृहान्भैक्षं स्वकर्म परिकीर्तयन् ॥ ७४
तथैव लब्धभोजी स्याद्द्वादशाहात्स शुध्यति ।
चरेत्संवत्सरं चापि तद्व्रतं येन कृन्तति ॥ ७५
भवेत्तु मानुषेष्वेवं प्रायश्चित्तमनुत्तमम् ।
दानं वा दानशक्तेषु सर्वमेतत्प्रकल्पयेत् ॥ ७६
अनास्तिकेषु गोमात्रं दानमेकं प्रचक्षते ।
श्ववराहमनुष्याणां कुक्कुटस्य खरस्य च ॥ ७७
मांसं मूत्रं पुरीषं च प्राश्य संस्कारमर्हति ।
ब्राह्मणस्तु सुरापस्य गन्धमादाय सोमपाः ॥ ७८
अपस्त्र्यहं पिबेदुष्णाः संयतात्मा जितेन्द्रियः ।
अपः पीत्वा तु स पुनर्वायुभक्षो भवेत्त्र्यहम् ॥ ७९
एवमेतत्समुद्दिष्टं प्रायश्चित्तनिषेवणम् ।
ब्राह्मणस्य विशेषेण यदज्ञानेन जायते ॥ ८०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

---

## चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

भीष्मेण नकुलप्रश्नात्खड्गोत्पत्तिकथनम् ॥ १ ॥

वैशंपायन उवाच ।
कथान्तरमथासाद्य खड्गयुद्धविशारदः ।
नकुलः शरतल्पस्थमिदमाह पितामहम् ॥ १
नकुल उवाच ।
धनुः प्रहरणं श्रेष्ठमितिवादः पितामह ।
मतस्तु मम धर्मज्ञ खड्ग एव सुसंशितः ॥ २
छिन्ने च कार्मुके राजन्प्रक्षीणेषु शरेषु च ।
खड्गेन शक्यते योद्धुमात्मानं परिरक्षितुम् ॥ ३
शरासनधरांश्चैव गदाशक्तिधरांस्तदा ।
एकः खड्गधरो वीरः समर्थः प्रतिबाधितुम् ॥ ४
अत्र मे संशयश्चैव कौतूहलमतीव च ।
किंस्वित्प्रहरणं श्रेष्ठं सर्वयुद्धेषु पार्थिव ॥ ५
कथं चोत्पादितः खड्गः कस्मै चार्थाय केन वा ।
पूर्वाचार्यं च खड्गस्य प्रब्रवीहि पितामह ॥ ६
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः ।
स्वरकौशलसंयुक्तं सूक्ष्मचित्रार्थवत्सुखम् ॥ ७
ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितम् ।
शिक्षया चोपपन्नाय द्रोणशिष्याय पृच्छते ॥ ८
उवाच सर्वधर्मज्ञो धनुर्वेदस्य पारगः ।
शरतल्पगतो भीष्मो नकुलाय महात्मने ॥ ९
भीष्म उवाच ।
तत्त्वं शृणुष्व माद्रेय यथैतत्परिपृच्छसि ।
प्रबोधितोऽस्मि भवता सानुमानिव पर्वतः ॥ १०
सलिलैकार्णवं तात पुरा सर्वमभूदिदम् ।
अप्रज्ञातमनाकाशमनिर्देश्यमहीतलम् ॥ ११
तमस्संवृतमस्पर्शमतिगम्भीरदर्शनम् ।
निःशब्दं चाप्रमेयं च तत्र जज्ञे पितामहः ॥ १२
सोऽसृजद्वायुमग्निं च भास्करं चापि वीर्यवान् ।

---

वेयं स्नुषेति मानपूर्वकं समर्पयेत् । तदा ज्येष्ठानुज्ञातो यवीयाननन्तरं तां स्वीकुर्यात् । पाणिग्राहेण स्वदोषे क्षमापिते त्रयोऽपि पापान्मुच्यन्त इति सार्धश्लोकार्थः ॥ ७२ ॥ अमानुषीषु पशुजातिषु ॥ ७३ ॥ ऊर्ध्ववालं चमरीपुच्छं परिधाय रङ्गे ऽव्रतरन् ब्राह्मण एवैतत्प्रायश्चित्तं कुर्यात् ॥ ७४ ॥ येन परिधानेन हेतुभूतेन ऊर्ध्ववालं यः कृन्तति छिनत्ति स उक्तं व्रतं संवत्सरं चरेत् ॥ ७५ ॥ अनास्तिकेषु आस्तिकेषु ॥ ७७ ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

कथान्तरं आपद्धर्माणां साङ्गानां समाप्तत्वात् कथाया अवसानं असाद्य प्राप्य ॥ १ ॥ धातुमानिव पर्वत इति झ. पाठः । तत्र धातुमान् गैरिकवान् रुधिरोक्षितत्वादित्यर्थः ॥ १० ॥

आकाशमसृजच्चोर्ध्वमधो भूमिं च नैर्ऋतिम् ॥ १३
ततः सचन्द्रतारं च नक्षत्राणि ग्रहांस्तथा ।
संवत्सरानहोरात्रानृतूनथ लवान्क्षणान् ॥ १४
ततः शरीरं लोकस्थं स्थापयित्वा पितामहः ।
जनयामास भगवान्पुत्रानुत्तमतेजसः ॥ १५
मरीचिं भृगुमत्रिं च पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठाङ्गिरसौ चोभौ भरद्वाजं तथैव च ॥ १६
प्रजापतिस्तथा दक्षः कन्याः षष्टिमजीजनत् ।
ताश्च ब्रह्मर्षीन्सर्वान्प्रजार्थं प्रतिपेदिरे ॥ १७
ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा ।
गन्धर्वाप्सरसश्चैव रक्षांसि विविधानि च ॥ १८
पतत्रिमृगमीनाश्च गावश्चैव महोरगाः ।
नानाकृतिबलाश्चान्ये जलक्षितिविचारिणः ॥ १९
उद्भिज्जाः स्वेदजाश्चैव साण्डजाश्च जरायुजाः ।
जज्ञे तात जगत्सर्वं तथा स्थावरजङ्गमम् ॥ २०
ततः सर्गमिमं कृत्वा सर्वलोकपितामहः ।
शाश्वतं वेदपठितं धर्मं च जुजुषे पुनः ॥ २१
तस्मिन्धर्मे स्थिता देवाः सहाचार्यपुरोहिताः ।
आदित्या वसवो रुद्राः ससाध्या मरुदश्विनः ॥२२
भृग्वत्र्यङ्गिरसः सिद्धाः कश्यपश्च तपोधनाः ।
वसिष्ठगौतमागस्त्यास्तथा नारदपर्वतौ ॥ २३
ऋषयो वालखिल्याश्च प्रभासाः सिकतास्तथा ।
घृताच्याः सोमवायव्या वैश्वानरमरीचिपाः ॥ २४
करूषाश्चैव हंसाश्च ऋषयो वाऽग्नियोनयः ।
माषप्रस्थाः पृश्नयश्च स्थिता ब्रह्मानुशासने ॥२५
दानवेन्द्रास्त्वतिक्रम्य तत्पितामहशासनम् ।
धर्मस्यापनयं चक्रुः क्रोधलोभसमन्विताः ॥ २६
हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः ।
शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ॥२७
एते चान्ये च बहवः सगणा दैत्यदानवाः ।
धर्मसेतुमतिक्रम्य रेमिरेऽधर्मनिश्चयाः ॥ २८
सर्वे तुल्याभिजातीया यथा देवास्तथा वयम् ।
इत्येवं हेतुमास्थाय स्पर्धमानाः सुरर्षिभिः ॥ २९
न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत ।
त्रीनुपायानतिक्रम्य दण्डेन रुरुधुः प्रजाः ॥ ३०
न जग्मुः संविदं तैश्च दर्पादसुरसत्तमाः ।
अथ वै भगवान्ब्रह्मा सर्वलोकनमस्कृतः ॥ ३१
तदा हिमवतः पृष्ठे सुरम्ये पद्मतारके ।
शतयोजनविस्तारे मणिमुक्ताचयाचिते ॥ ३२
तस्मिन्गिरिवरे पुत्र पुष्पितद्रुमकानने ।
तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ॥३३
ततो वर्षसहस्रान्ते वितानमकरोत्प्रभुः ।
विधिना कल्पदृष्टेन यथोक्तेनोपपादितम् ॥ ३४
ऋषिभिर्यज्ञपटुभिर्यथावत्कर्मकर्तृभिः ।
मरुद्भिः परिसंकीर्णं दीप्यमानैश्च पावकैः ॥ ३५
काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलंकृतम् ।
वृतं देवगणैश्चैव प्रबभौ यज्ञमण्डलम् ॥ ३६
तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितम् ।
तत्र घोरतमं वृत्तमृषीणां मे परिश्रुतम् ॥ ३७
चन्द्रमा विमलं व्योम यथाऽभ्युदिततारकम् ।
विदार्याग्निं तथा भूतमुत्थितं श्रूयते तदा ॥ ३८
लोनीत्पलसवर्णाभं तीक्ष्णदंष्ट्रं कृशोदरम् ।
प्रांशुमुद्धर्षणं चापि तथैव ह्यमितौजसम् ॥ ३९
अस्मिन्नुत्पद्यमाने च प्रचचाल वसुंधरा ।
महोर्मिकलिलावर्तश्चुक्षुभे स महोदधिः ॥ ४०
पेतुश्चोल्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः ।
अप्रसन्ना दिशः सर्वाः पवनश्चाशिवो ववौ ।
मुहुर्मुहुश्च भूतानि प्राव्यथन्त भयात्तथा ॥ ४१
ततः स तुमुलं दृष्ट्वा तद्भूतं समुपस्थितम् ।
महर्षिसुरगन्धर्वानुवाचेदं पितामहः ॥ ४२
मयैवं चिन्तितं भूतमसिर्नामैष वीर्यवान् ।
रक्षणार्थाय लोकस्य वधाय च सुरद्विषाम् ॥ ४३
ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः ।
विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः ॥ ४४

प्लवङ्गाश्च महोरगा इति झ. पाठः ॥ १९ ॥ धर्मं प्रयुयुजे तत इति झ. पाठः ॥ २१ ॥ वानप्रस्था इति झ. पाठः ॥ २५ ॥ पद्मानीव तारका यत्र लग्नास्तस्मिन् पद्मतारके । अत्यन्तमुच्छ्रित इत्यर्थः ॥ ३२ ॥ समिद्भिः परिकीर्णमिति झ. पाठः ॥ ३५ ॥ विकीर्याग्निमिति झ. पाठः ॥ ३८ ॥

ततस्तं नीलकण्ठाय रुद्रायर्षभकेतवे ।
ब्रह्मा ददावसिं तीक्ष्णमधर्मप्रतिवारणम् ॥ ४५
ततः स भगवान्रुद्रो ब्रह्मर्षिगणपूजितः ।
प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह ॥ ४६
चतुर्बाहुः स्पृशन्मूर्ध्ना भूमिष्ठोऽपि दिशो दश ।
ऊर्ध्वदृष्टिर्महाबाहुर्मुखाज्ज्वालाः समुत्सृजन् ॥ ४७
विकुर्वन्बहुधा वर्णान्नीलपाण्डुरलोहितान् ।
बिभ्रत्कृष्णाजिनं वासो हेमप्रवरतारकम् ॥ ४८
नेत्रं चैकं ललाटस्थं भास्करप्रतिमं महत् ।
शुशुभाते सुविमले द्वे नेत्रे कृष्णपिङ्गले ॥ ४९
ततो देवो महादेवः शूलपाणिर्भगाक्षिहा ।
संप्रगृह्य तु निस्त्रिंशं कालाग्निसमवर्चसम् ॥ ५०
त्रिकूटं चर्म चोद्यम्य सविद्युतमिवाम्बुदम् ।
चचार विविधान्मार्गान्दानवान्तचिकीर्षया ।
विधुन्वन्नसिमाकाशे तथा युद्धचिकीर्षया ॥ ५१
तस्य नादं विनदतो महाहासं च मुञ्चतः ।
बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ॥ ५२
तद्रूपधारिणं रुद्रं रौद्रकर्मचिकीर्षया ।
निशाम्य दानवाः सर्वे हृष्टाः समभिदुद्रुवुः ॥ ५३
अश्मभिश्चाभ्यवर्षन्त प्रदीप्तैश्च तथोल्मुकैः ।
घोरैः प्रहरणैश्चान्यैः क्षुरधारैरयस्मयैः ॥ ५४
ततस्तु दानवानीकं संप्रणेतृकमच्युत ।
खङ्गं दृष्ट्वा बलाधूतं प्रमुमोह चचाल च ॥ ५५
चित्रं शीघ्रपदत्वाच्च चरन्तमसिपाणिनम् ।
तमेकमसुराः सर्वे सहस्रमिति मेनिरे ॥ ५६
छिन्दन्भिन्दन्रुजन्कृन्तन्दारयन्प्रथमन्नपि ।
अचरद्वैरिसङ्घेषु दावाग्निरिव कक्षगः ॥ ५७
असिवेगप्रभग्नास्ते छिन्नबाहूरुवक्षसः ।
उत्तमाङ्गप्रकृत्ताश्च पेतुरुर्व्यां महाबलाः ॥ ५८
अपरे दानवा भग्नाः खङ्गधारावपीडिताः ।
अन्योन्यमभिनर्दन्तो दिशः संप्रतिपेदिरे ॥ ५९
भूमिं केचित्प्रविविशुः पर्वतानपरे तथा ।
अपरे जग्मुराकाशमपरेऽम्भः समाविशन् ॥ ६०
तस्मिन्महति संवृत्ते समरे भृशदारुणे ।
बभूव भूः प्रतिभया मांसशोणितकर्दमा ॥ ६१
दानवानां शरीरैश्च पतितैः शोणितोक्षितैः ।
समाकीर्णा महाबाहो शैलैरिव सकिंशुकैः ॥ ६२
'रुधिरेण परिक्लिन्ना प्रबभौ वसुधा तदा ।
रक्तार्द्रवसना श्यामा नारीव मदविह्वला ॥' ६३
स रुद्रो दानवान्हत्वा कृत्वा धर्मोत्तरं जगत् ।
रौद्रं रूपमथाक्षिप्य चक्रे रूपं शिवं शिवः ॥ ६४
ततो महर्षयः सर्वे सर्वे देवगणास्तथा ।
जयेनाद्भुतकल्पेन देवदेवमथास्तुवन् ॥ ६५
ततः स भगवान्रुद्रो दानवक्षतजोक्षितम् ।
असिं धर्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे ॥ ६६
विष्णुर्मरीचये प्रादान्मरीचिर्भार्गवाय तम् ।
महर्षिभ्यो ददौ खङ्गमृषयो वासवाय च ॥ ६७
महेन्द्रो लोकपालेभ्यो लोकपालास्तु पुत्रक ।
मनवे सूर्यपुत्राय ददुः खङ्गं सुविस्तरम् ॥ ६८
ऊचुश्चैनं तथा वाक्यं मानुषाणां त्वमीश्वरः ।
असिना धर्मगर्भेण पालयस्व प्रजा इति ॥ ६९
धर्मसेतुमतिक्रान्ताः स्थूलसूक्ष्मार्थकारणात् ।
विभज्य दण्डं रक्ष्याः स्युर्धर्मतो न यदृच्छया ॥ ७०
दुर्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा ।
व्यङ्गता च शरीरस्य वधो नाल्पस्य कारणात् ॥ ७१
असेरेतानि रूपाणि दुर्वारादीनि निर्दिशेत् ।
असेरेवं प्रमाणानि परमाण्यभ्यतिक्रमात् ॥ ७२
अभिषिच्याथ पुत्रं स्वं प्रजानामधिपं ततः ।
मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिम् ॥ ७३
क्षुपाज्जग्राह चेक्ष्वाकुरिक्ष्वाकोश्च पुरूरवाः ।
आयुश्च तस्माल्लेभे तं नहुषश्च ततो भुवि ॥ ७४
ययातिर्नहुषाच्चापि पूरुस्तस्माच्च लब्धवान् ।
आधूर्तश्च गयस्तस्मात्ततो भूमिशयो नृपः ॥ ७५
भरतश्चापि दौष्यन्तिर्लेभे भूमिशयादसिम् ।

त्रिकूटं त्रीणि कूटानि कपटानि पार्श्वयोरग्रे च तीक्ष्णधाररूपाणि परविदारकाणि यस्मिन् ॥ ५१ ॥ दुर्वारादीनि निर्दिशेदिति ट. ड. पाठः ॥ ७२ ॥ चतुष्षष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

तस्माल्लेभे च धर्मज्ञो राजन्नैलबिलस्तथा ॥ ७६
ततस्त्वैलबिलाल्लेभे धुन्धुमारो नरेश्वरः।
धुन्धुमाराच्च काम्भोजो मुचुकुन्दस्ततोऽभजत्॥७७
मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः।
रैवताद्युवनाश्वश्च युवनाश्वात्ततो रघुः ॥ ७८
इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वः प्रतापवान्।
हरिणाश्वादसिं लेभे शुनकः शुनकादपि ॥ ७९
उशीनरो वै धर्मात्मा तस्माद्भोजाः सयादवाः।
यदुभ्यश्च शिबिर्लेभे शिबेश्चापि प्रतर्दनः ॥ ८०
प्रतर्दनादष्टकश्च रुशदश्वोऽष्टकादपि।
रुशदश्वाद्भरद्वाजो द्रोणस्तस्मात्कृपस्ततः।
ततस्त्वं भ्रातृभिः सार्धं परमासिमवाप्तवान्॥८१
कृत्तिकास्तस्य नक्षत्रमसेरग्निश्च दैवतम्।
रोहिण्यो गोत्रमस्याथ रुद्रश्च गुरुसत्तमः ॥ ८२
असेरष्टौ हि नामानि रहस्यानि निबोध मे।
पाण्डवेय सदा यानि कीर्तयँल्लभते जयम् ॥ ८३
असिर्विशसनः खड्गस्तीक्ष्णचर्मा दुरासदः।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ॥ ८४
अग्र्यः प्रहरणानां च खड्गो भुवि परिश्रुतः।
महेश्वरप्रणीतश्च पुराणे निश्चयं गतः।
'एतानि चैव नामानि पुराणे निश्चितानि वै ॥' ८५
पृथुस्तूत्पादयामास धनुराद्यमरिंदमः।
तेनेयं पृथिवी दुग्धा सस्यानि सुबहून्यपि।
धर्मेण च यथापूर्वं वैन्येन परिरक्षिता ॥ ८६
तदेतदार्षं माद्रेय प्रमाणं कर्तुमर्हसि।
असेश्च पूजा कर्तव्या सदा युद्धविशारदैः ॥ ८७
इत्येष प्रथमः कल्पो मया ते कथितः पुनः।
एवमेवासिसर्गोऽयं यथावद्भरतर्षभ ॥ ८८
सर्वथा तमिह श्रुत्वा खड्गस्यागममुत्तमम्।
लभते पुरुषः कीर्तिं प्रेत्य चानन्त्यमश्नुते ॥ ८९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

## पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

स्वस्वाभिमतार्थकथनाय चोदितैर्विदुरार्जुनभीमसेनैः क्रमेण धर्मार्थकामेषु अभिष्टुतेषु युधिष्ठिरेण मोक्षप्रशंसनम् ॥ १ ॥

वैशंपायन उवाच।
इत्युक्तवति भीष्मे तु तूष्णींभूते युधिष्ठिरः।
पप्रच्छावसथं गत्वा भ्रातॄन्विदुरपञ्चमान् ॥ १
धर्मे चार्थे च कामे च लोकवृत्तिः समाहिता।
तेषां गरीयान्कतमो मध्यमः को लघुश्च कः ॥ २
कस्मिंश्चात्मा नियन्तव्यस्त्रिवर्गविजयाय वै।
संहृष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ ॥ ३
ततोऽर्थगतितत्त्वज्ञः प्रथमं प्रतिभानवान्।
जगाद विदुरो वाक्यं धर्मशास्त्रमनुस्मरन् ॥ ४
विदुर उवाच।
बहुश्रुतं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा।
भावशुद्धिर्दया सत्यं संयमश्चात्मसंपदः ॥ ५
एतदेवाभिपद्यस्व मा ते भूच्चलितं मनः।
एतन्मूलौ हि धर्मार्थावेतदेकपदं हितम् ॥ ६
धर्मेणैवर्षयस्तीर्णा धर्मे लोकाः प्रतिष्ठिताः।
धर्मेण देवा दिवि च धर्मे चार्थः समाहितः ॥७
धर्मो राजन्गुणः श्रेष्ठो मध्यमो ह्यर्थ उच्यते।
कामो यवीयानिति च प्रवदन्ति मनीषिणः ॥ ८
तस्माद्धर्मप्रधानेन भवितव्यं यतात्मना।
तथा च सर्वभूतेषु वर्तितव्यं यतात्मना ॥ ९
वैशंपायन उवाच।
समाप्तवचने तस्मिन्भीमकर्मा धनञ्जयः।
ततोऽर्थगतितत्त्वज्ञो जगौ वाक्यं प्रचोदितः ॥१०
कर्मभूमिरियं राजन्निह वार्ता प्रशस्यते।
कृषिर्वाणिज्यगोरक्षं शिल्पानि विविधानि च ॥११
अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः।
निवृत्तेऽर्थे न वर्तेते धर्मकामाविति श्रुतिः ॥ १२
विषहेतार्थवान्धर्ममाराधयितुमुत्तमम्।

त्रिवर्गविजयाय कामक्रोधलोभानां जयाय ॥ ३ ॥

अव्यतिक्रमः मर्यादा ॥ १२ ॥

कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ॥ १३
अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः ।
अर्थसिद्ध्या विनिर्वृत्तावुभावेतौ भविष्यतः ॥ १४
तद्गतार्थं हि पुरुषं विशिष्टतरयोनयः ।
ब्रह्माणमिव भूतानि सततं पर्युपासते ॥ १५
जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः ।
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥१६
काषायवसनाश्चान्ये श्मश्रुला ह्रि सुसंयताः ।
विद्वांसश्चैव शान्ताश्च मुक्ताः सर्वपरिग्रहैः ॥ १७
'अर्थार्थिनः सन्ति नित्यं परितप्यन्ति कर्मभिः ।'
अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः ।
कुलप्रत्यागमाश्चैके स्वंस्वं धर्ममनुष्ठिताः ॥ १८
आस्तिका नास्तिकाश्चैव नियताः संयमे परे ।
अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशिता ॥ १९
भृत्यान्भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान् ।
एतन्मतिमतांश्रेष्ठ मतं मम यथातथम् ।
अनयोस्तु विबोध त्वं वचनं शक्रकण्वयोः ॥ २०
वैशंपायन उवाच ।
तथा धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम् ।
नकुलः सहदेवश्च वाक्यमूचतुरुत्तमम् ॥ २१
आसीनश्च शयानश्च विचरन्नपि वा स्थितः ।
अर्थयोगं दृढं कुर्याद्योगैरुच्चावचैरपि ॥ २२
अस्मिंस्तु वै विनिर्वृत्ते दुर्लभे परमप्रिये ।
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ॥ २३
योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः ।
मध्विवामृतसंसृष्टं तस्मादेतौ मताविह ॥ २४
अनर्थस्य न कामोस्ति तथाऽर्थोऽधर्मिणः कुतः ।
तस्मादुद्विजते लोको धर्मार्थाभ्यां बहिष्कृतात् ॥२५
तस्माद्धर्मप्रधानेन साध्योऽर्थः संयतात्मना ।
विश्वस्तेषु हि भूतेषु कल्पते सर्वमेव हि ॥ २६
धर्मं समाचरेत्पूर्वं ततोऽर्थं धर्मसंयुतम् ।
ततः कामं चरेत्पश्चात्सिद्धार्थस्य हि तत्फलम् ॥२७
वैशंपायन उवाच ।
विरमतुस्तु तद्वाक्यमुक्त्वा तावश्विनोः सुतौ ।
भीमसेनस्ततो वाक्यमिदं वक्तुं प्रचक्रमे ॥ २८
नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥
कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।
पलाशाः शाकमूलाशा वायुभक्षाः सुसंयताः ॥३०
वेदोपवेदेष्वपरे युक्ताः स्वाध्यायपारगाः ।
श्राद्धे यज्ञक्रियायां च तथा दानप्रतिग्रहे ॥ ३१
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
देवधर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥ ३२
समुद्रं वा विशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन संततम् ॥३३
नास्ति नासीन्न भविता भूतं काममृते परम् ।
एतत्सारं महाराज धर्मार्थावत्र संश्रितौ ॥ ३४
नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं न पिण्याको घृतं श्रेय उदश्वितः ॥३५
श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः ।
पुष्पतो मध्विव परं कामात्संजायते सुखम् ।
कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः ॥३६
[नाकामतो ब्राह्मणाः स्वन्नमर्था-
न्नाकामतो ददति ब्राह्मणेभ्यः ।
नाकामतो विविधा लोकचेष्टा
तस्मात्कामः प्राक् त्रिवर्गस्य दृष्टः ॥] ३७
सुचारुवेषाभिरलंकृताभि-
र्मदोत्कटाभिः प्रियवादिनीभिः ।
रमस्व योषिद्भिरुपेत्य कामं
कामो हि राजन्परमाभिरामः ॥ ३८
बुद्धिर्ममैषा परिखास्थितस्य
माभूद्विचारस्तव धर्मपुत्र ।

निस्तन्तवः नैष्ठिकब्रह्मचारिणः ॥ १६ ॥ श्मश्रुला ह्रीनिषेविण इति झ. पाठः ॥ १७ ॥ वचन शुक्रकण्वयोरिति ङ. द. पाठः ॥ २० ॥ अनर्थस्य अर्थहीनस्य । अधर्मिणः धर्महीनस्य ॥ २५ ॥ अत्र धर्मार्थयोः समत्वेऽपि धर्मस्य पूर्वत्वाद्विदुरमतमेवैतदीषद्भेदेन दर्शितम् ॥ २७ ॥ उदश्वितः तक्रात् ॥ ३५। अकामतः कामं विना । केवलार्थात्स्वन्नं मृष्टान्नं नास्ति ॥३७। परिखास्थितस्य परितः खाता परिखा । सर्वतो मूलशोध इत्यर्थः । तत्र स्थितस्य अनृशंसमनिष्ठुरम् ॥ ३९ ॥

स्यात्संहितं सद्भिरफल्गुसारं
मसस्तवाक्यं परमानृशंसम् ॥ ३९
धर्मार्थकामाः सममेव सेव्या
यो ह्येकभक्तः स नरो जघन्यः ।
द्वयोस्तु सक्तं प्रवदन्ति मध्यमं
स उत्तमो योऽभिरतस्त्रिवर्गे ॥ ४०
प्राज्ञः सुहृच्चन्दनसारलिप्तो
विचित्रमाल्याभरणैरुपेतः ।
ततो वचः संग्रहविस्तरेण
प्रोक्त्वाऽथ वीरान्विरराम भीमः ॥ ४१
ततो मुहूर्तादथ धर्मराजो
वाक्यानि तेषामनुचिन्त्य सम्यक् ।
उवाच वाचाऽवितथं स्मयन्वै
बहुश्रुतो धर्मभृतां वरिष्ठः ॥ ४२
निःसंशयं निश्चितसर्वशास्त्राः
सर्वे भवन्तो विदितप्रमाणाः ।
विज्ञातुकामस्य ममेह वाक्य-
मुक्तं यद्वो नैष्ठिकं तच्छ्रुतं मे ।
इहानुवंशं गदतो ममापि
वाक्यं निबोधध्वमनन्यभावाः ॥ ४३
यो वै न पापे निरतो न पुण्ये
नार्थे न धर्मे मनुजो न कामे ।
विमुक्तदोषः समफल्गुसारो
विमुच्यते दुःखसुखात्स सिद्धः ॥ ४४
भूतानि जातीमरणान्वितानि
जराविकारैश्च समन्वितानि ।
भूयश्च तैस्तैरुपसेवितानि
मोक्षं प्रशंसन्ति न तं च विद्मः ॥ ४५
स्नेहेन बद्धस्य न सन्ति तानि
चैवं स्वयंभूर्भगवानुवाच ।
बोधाय निर्वाणपरा भवन्ति
तस्मान्न कुर्यात्प्रियमप्रियं च ॥ ४६
एतच्च मुख्यं न तु कामकारो
यथा नियुक्तोऽस्मि तथा करोमि ।
भूतानि सर्वाणि विधिर्नियुङ्क्ते
विधिर्बलीयानिति वित्त सर्वे ॥ ४७
न कर्मणाऽऽप्नोत्यनवाप्यमर्थं
यद्भावि तद्वै भवतीति विद्मः ।
त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं
तस्माददो लोकहिताय गुह्यम् ॥ ४८

वैशंपायन उवाच ।

तदग्र्यबुद्धेर्वचनं मनोनुगं
समस्तमाज्ञाय तथाहि हेतुमत् ।
तदा प्रणेदुश्च जहर्षिरे च ते
कुरुप्रवीराय च चक्रिरेऽञ्जलिम् ॥ ४९
सुचारुवर्णाक्षरशब्दभूषितां
मनोनुगां निर्गतवाक्यकण्टकाम् ।
निशम्य तां पार्थिवभाषितां गिरं
पार्थस्य सर्वे प्रणता बभूवुः ॥ ५०
तथैव राजा प्रशशंस वीर्यवान्
पुनश्च पप्रच्छ सरिद्वरासुतम् ।
धर्मार्थकामेषु विनिश्चयज्ञं
ततः परं धर्ममहीनचेतसम् ॥ ५१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

## षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

भीष्मेण युधिष्ठिरंप्रति संधेयासंधेयपुरुषलक्षणकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ कुरूणां प्रीतिवर्धन ।

तयोस्तु दाक्ष्यं प्रवदन्तीति झ. पाठः ॥ ४० ॥ नैष्ठिकं सिद्धान्तरूपम् । एतेन पूर्वे सर्वे पूर्वपक्षा एवेत्युक्तम् ॥ ४३ ॥ अर्थं मोक्षम् । लोकहिताय मोक्षाय । त्रिवर्गहीनोऽपि गुह्यमर्थं रहस्यं ज्ञानं विन्दते लभते पूर्वोक्तोऽधिकारी ॥ ४८ ॥ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

प्रश्नं कंचित्प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि ॥ १
कीदृशा मानवाः सेव्याः कैः प्रीतिः परमा भवेत्।
आयत्यां च तदात्वे च के क्षमास्तान्वदस्व मे ॥ २
न हि तत्र धनं स्फीतं न च संबन्धिबान्धवाः ।
तिष्ठन्ति यत्र सुहृदस्तिष्ठन्तीति मतिर्मम ॥ ३
दुर्लभो हि सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
एतद्धर्मभृतां श्रेष्ठ सर्वं व्याख्यातुमर्हसि ॥ ४
भीष्म उवाच ।
सन्धेयान्पुरुषान्राजन्नसन्धेयांश्च तत्त्वतः ।
वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥ ५
लुब्धः क्रूरस्त्यक्तधर्मा निकृतिः शठ एव च ।
क्षुद्रः पापसमाचारः सर्वशङ्की तथाऽलसः ॥ ६
दीर्घसूत्रोऽनृजुः क्रुष्टो गुरुदारप्रधर्षकः ।
व्यसने यः परित्यागी दुरात्मा निरपत्रपः ॥ ७
सर्वतः पापदर्शी च नास्तिको वेदनिन्दकः ।
संप्रकीर्णेन्द्रियो लोके यः कालनिरतश्चरेत् ॥ ८
असभ्यो लोकविद्विष्टः समये चानवस्थितः ।
पिशुनोऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ॥ ९
दुःशीलोऽथाकृतात्मा च नृशंसः कितवस्तथा ।
मित्रैरपकृतिर्नित्यमटतेऽर्थं धनेप्सया ॥ १०
ददतश्च यथाशक्ति यो न तुष्यति मन्दधीः ।
अधैर्यमपि यो युङ्क्ते सदा मित्रं नराधमः ॥ ११
अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते ।
सुहृदश्चैव कल्याणानाशु त्यजति किल्बिषी ॥१२
अल्पेऽप्यपकृते मूढ न संस्मरति यत्कृतम् ।
कार्यसेवी च मित्रेषु मित्रद्वेषी नराधिप ॥ १३
शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षी विलोचनः ।
न तुष्यति च कल्याणे यस्त्यजेत्तादृशं नरम्॥१४
पानपो द्वेषणः क्रोधी निर्घृणः परुषस्तथा ।
परोपतापी मित्रध्रुक् तथा प्राणिवधे रतः ॥ १५
कृतघ्नश्चाधमो लोके न सन्धेयः कथंचन ।
मित्रद्वेषी ह्यसंधेयः सन्धेयानपि मे शृणु ॥ १६
कुलीना वाक्यसंपन्ना ज्ञानविज्ञानकोविदाः ।
रूपवन्तो गुणोपेतास्तथाऽलुब्धा जितश्रमाः॥१७
सन्मित्राश्च कृतज्ञाश्च सर्वज्ञा लोभवर्जिताः ।
माधुर्यगुणसंपन्नाः सत्यसन्धा जितेन्द्रियाः ॥१८
व्यायामशीलाः सततं भृत्यपुत्राः कुलोद्वहाः ।
दोषैः प्रमुक्ताः प्रथितास्ते ग्राह्याः पार्थिवैर्नराः॥१९
यथाशक्ति समाचाराः संप्रतुष्यन्ति हि प्रभो ।
नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ॥२०
विरक्ताश्च न दुष्यन्ति मनसाऽप्यर्थकोविदाः ।
आत्मानं पीडयित्वाऽपि सुहृत्कार्यपरायणाः ।
विरज्यन्ति न मित्रेभ्यो वासो रक्तमिवाविकम् २१
दोषांश्च लोभमोहादीनर्थेषु युवतीषु च ।
न दर्शयन्ति सुहृदो विश्वस्ता बन्धुवत्सलाः ॥ २२
लोष्टकाञ्चनतुल्यार्थाः सुहृत्सु दृढबुद्धयः ।
ये चरन्त्यनभीमाना निसृष्टार्थविभूषणाः ।
संगृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा ॥ २३
ईदृशैः पुरुषश्रेष्ठैर्यः सन्धिं कुरुते नृपः ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥२४
सत्ववन्तो जितक्रोधा बलवन्तो रणे सदा ।
जन्मशीलगुणोपेताः सन्धेयाः पुरुषोत्तमाः ॥ २५
ये च दोषसमायुक्ता नराः प्रोक्ता मयाऽनघ ।
तेषामप्यधमा राजन्कृतघ्ना मित्रघातकाः ।
त्यक्तव्यास्तु दुराचाराः सर्वेषामिति निश्चयः ॥२६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

---

मित्रस्यार्थादिभ्योऽन्तरङ्गत्वमाह नहीति ॥ ३ ॥ सन्धेयान् मित्रीकर्तुं योग्यान् ॥ ५ ॥ क्रुष्टो लोकनिन्दितः ॥ ७ ॥ नित्यमिच्छतेऽर्थं परस्य य इति झ. पाठः ॥ १० ॥ कार्यार्थमेव सेवते नतु धर्मार्थमिति कार्यसेवी ॥ १३ ॥ विलोचनः विपरीतदृष्टिः ॥ १४ ॥ छिद्रान्वेषी ह्यसन्धेय इति झ. पाठः ॥१६ वासो रक्तमिवाविकं मेषकम्बलः ॥ २१ ॥ कृतं उपकारं घ्नन्ति वाचाऽपलापेन वा ते कृतघ्नाः त एव उपकर्तुर्नाशकरा मित्रद्रुहः ॥ २६ ॥ षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

## सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

भीष्मेण युधिष्ठिरंप्रति कृतघ्नमित्रद्रोहिलक्षणकथनाय दृष्टान्ततया गौतमकथाकथनारम्भः ॥ १ ॥ ब्राह्मणाधमेन केनचिद्गौतमकुलजेन धनार्जनाय दस्युग्रामप्रवेशः ॥ २ ॥ तत्र केनचिद्दस्युवरेण भर्तृविरहितनारीसमर्पणादिना सत्कृतेन गौतमेन दस्युवृत्त्योपजीवनम् ॥ ३ ॥

युधिष्ठिर उवाच ।
विस्तरेणार्थसंबन्धं श्रोतुमिच्छामि तत्त्वतः ।
मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तं च मे वद ॥ १
भीष्म उवाच ।
हन्त ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप ॥ २
ब्राह्मणो मध्यदेशीयः कृष्णाङ्गो ब्रह्मवर्जितः ।
ग्रामं दस्युगणाकीर्णं प्राविशद्धनतृष्णया ॥ ३
तत्र दस्युर्धनयुतः सर्ववर्णविशेषवित् ।
ब्रह्मण्यः सत्यसन्धश्च दाने च निरतोऽभवत् ॥ ४
तस्य क्षयमुपागम्य ततो भिक्षामयाचत ।
प्रतिश्रयं च वासार्थं भिक्षां चैवाथ वार्षिकीम् ॥ ५
प्रादात्तस्मै स विप्राय वस्त्रं च सदशं नवम् ।
नारीं चापि वयोपेतां भर्त्रा विरहितां तथा ॥ ६
एतत्संप्राप्य हृष्टात्मा गौतमोऽथ द्विजस्तथा ।
तस्मिन्गृहवरे राजंस्तया रेमे स गौतमः ॥ ७
कुटुम्बार्थं च दस्योश्च साहाय्यं चाप्यथाकरोत् ।
सोऽवसद्वर्षमेकं वै समृद्धे शबरालये ॥ ८
बाणवेधे परं यत्नमकरोच्चैव गौतमः ।
चक्राङ्गान्स च नित्यं वै सर्वतो वनगोचरान् ।
जघान गौतमो राजन्यथा दस्युगणास्तथा ॥ ९
हिंसापटुर्घृणाहीनः सदा प्राणिवधे रतः ।
गौतमः सन्निकर्षेण दस्युभिः समतामियात् ॥ १०
तथा तु वसतस्तस्य दस्युग्रामे सुखं तदा ।
अगमन्बहवो मासा निघ्नतः पक्षिणो बहून् ॥ ११
ततः कदाचिदपरो द्विजस्तं देशमागतः ।
जटाचीराजिनधरः स्वाध्यायनिरतः शुचिः ॥ १२
विनीतो वेदशास्त्रेषु वेदान्तानां च पारगः ।
अदृश्यत ततस्तत्र सखा तस्यैव तु द्विजः ।
तं दस्युग्राममगमद्यत्रासौ गौतमोऽभवत् ॥ १३
स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्जकः ।
ग्रामे दस्युसमाकीर्णे व्यचरत्सर्वतो द्विजः ॥ १४
ततः स गौतमगृहं प्रविवेश द्विजोत्तमः ।
गौतमश्चापि संप्राप्तस्तावन्योन्येन संगतौ ॥ १५
चक्राङ्गभारस्कन्धं तं धनुष्पाणिं धृतायुधम् ।
रुधिरेणावसिक्ताङ्गं गृहद्वारमुपागतम् ॥ १६
तं दृष्ट्वा पुरुषादाभमपध्वस्तं क्षयागतम् ।
अभिज्ञाय द्विजो व्रीडन्निदं वाक्यमथाब्रवीत् ॥ १७
किमिदं कुरुषे मोहाद्विप्रस्त्वं हि कुलोद्भवः ।
मध्यदेशपरिज्ञातो दस्युभावं गतः कथम् ॥ १८
पूर्वान्स्मर द्विज ज्ञातीन्प्रख्यातान्वेदपारगान् ।
येषां वंशेऽभिजातस्त्वमीदृशः कुलपांसनः ॥ १९
अवबुध्यात्मनाऽऽत्मानं सत्वं शीलं श्रुतं दमम् ।
अनुक्रोशं च संस्मृत्य त्यज वासमिमं द्विज ॥ २०
स एवमुक्तः सुहृदा तेन तत्र हितैषिणा ।
प्रत्युवाच ततो राजन्विनिश्चस्य तदाऽऽर्तवत् ॥ २१
निर्धनोऽस्मि द्विजश्रेष्ठ नापि वेदविदप्यहम् ।
वित्तार्थमिह संप्राप्तं विद्धि मां द्विजसत्तम ॥ २२
त्वद्दर्शनात्तु विप्रेन्द्र कृतार्थोऽस्म्यद्य वै द्विज ।
अध्वानं सह यास्यावः श्वो वसस्वाद्य शर्वरीम् ॥ २३
स तत्र न्यवसद्विप्रो घृणी किंचिदसंस्पृशन् ।
क्षुधितश्छन्द्यमानोऽपि भोजनं नाभ्यनन्दत ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

ब्रह्म वेदस्तदुक्तं कर्म च तद्विवर्जितः ग्रामं वृद्धियुतं वीक्ष्य प्राविशद्भैक्ष्यकाङ्क्षयेति झ. पाठः ॥ ३ ॥ क्षयं गृहम् ॥ ५ ॥ वयोपेतां युवतीम् । सन्धिरार्षः ॥ ६ ॥ चक्राङ्गान् हंसान् ॥ ९ सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

## अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

कदाचन धनार्जनाय प्रस्थितवता गौतमेन समुद्रंप्रति गच्छता वणिक्सार्थेन सह गमनम् ॥ १ ॥ वनगजोपद्रुत
वसार्थपरिभ्रष्टेन गौतमेन किंचिन्न्यग्रोधमूले विश्रान्त्यै प्रस्वापः ॥ २ ॥ तत्र सायमागतेन राजधर्मनाम्ना बकराजेन
सत्कारः ॥ ३ ॥

भीष्म उवाच ।
तस्यां निशायां व्युष्टायां गते तस्मिन्द्विजोत्तमे ।
निष्क्रम्य गौतमोऽगच्छद्धनार्थी विचचार ह ॥ १
सामुद्रिकान्सवणिजस्ततोऽपश्यत्स्थितान्पथि ।
स तेन सह सार्थेन प्रययौ सागरं प्रति ॥ २
स तु सार्थो महाराज कस्मिंश्चिद्गिरिगह्वरे ।
मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ॥ ३
स कथंचिद्भयात्तस्माद्विमुक्तो ब्राह्मणस्तदा ।
कांदिग्भूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम् ॥ ४
ततस्तु स परिभ्रष्टः सार्थाद्देशात्तथाऽर्थतः ।
एकाकी व्यचरत्तत्र वने कापुरुषो यथा ॥ ५
स पन्थानमथासाद्य समुद्राभिसरं तदा ।
आससाद वनं रम्यं महत्पुष्पितपादपम् ॥ ६
सर्वर्तुकैराम्रवणैः पुष्पितैरुपशोभितम् ।
नन्दनोद्देशसदृशं यक्षकिन्नरसेवितम् ॥ ७
सालतालधवाश्वत्थप्लक्षागुरुवनैस्तथा ।
चन्दनस्य च मुख्यस्य पादपैरुपशोभितम् ।
गिरिप्रस्थेषु रम्येषु सुखेषु सुखगन्धिषु ॥ ८
समन्ततो द्विजश्रेष्ठा वल्गु कूजन्ति तत्र वै ।
मनुष्यवदनाश्चान्ये भारुण्डा इति विश्रुताः ॥ ९
उद्गताः शकुनाश्चान्ये सामुद्राः सर्वतोऽभवन् ।
स तान्यतिमनोज्ञानि विहगानां रुतानि वै ।
शृण्वन्सुरमणीयानि विप्रोऽगच्छत गौतमः ॥ १०
ततोऽपश्यत्सुरम्येषु सुवर्णसिकताचिते ।
देशभागे समे चित्रे स्वर्गोद्देशसमप्रभे ।
श्रिया जुष्टं ददर्शाथ न्यग्रोधं च सुमण्डलम् ॥ ११
शाखाभिरनुरूपाभिः संवृतं छत्रसन्निभम् ।
तस्य मूलं च संसिक्तं वरचन्दनवारिणा ॥
दिव्यपुष्पान्वितं श्रीमत्पितामहसदोपमम् ।
तं दृष्ट्वा गौतमः प्रीतो मनःकान्तमनुत्तमम् ।
मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम् ।
तमासाद्य मुदा युक्तस्तस्याधस्तादुपाविशत्
तत्रासीनस्य कौन्तेय गौतमस्य नराधिप ।
पुष्पाणि समुपस्पृश्य प्रववावनिलः शुभः ।
ह्लादयंस्तस्य गात्राणि गौतमस्य तदा नृप ।
स तु विप्रः परिश्रान्तः स्पृष्टः पुण्येन वायु
सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्ययात्
ततोऽस्तं भास्करे याते सन्ध्याकाल उपस्थि
आजगाम स्वभवनं ब्रह्मलोकात्खगोत्तमः ।
नाडीजङ्घ इति ख्यातो दयितो ब्रह्मणः स
बकराजो महाप्राज्ञः काश्यपस्यात्मसंभवः ।
राजधर्मेति विख्यातो बभूवाप्रतिमो भुवि
देवकन्यासुतः श्रीमान्विद्वान्देवसमप्रभः ॥
मृष्टहाटकसंछन्नो भूषणैरर्कसन्निभैः ।
भूषितः सर्वगात्रेषु देवगर्भः श्रिया ज्वलन्
तमागतं खगं दृष्ट्वा गौतमो विस्मितोऽभव
क्षुत्पिपासापरीतात्मा हिंसार्थं चैनमैक्षत ।
राजधर्मोवाच ।
स्वागतं भवतो विप्र दिष्ट्या प्राप्तोऽसि मे गृ
अस्तं च सविता यातः संध्येयं समुपस्थित
मम त्वं निलयं प्राप्तः प्रियातिथिरनिन्दित
पूजितो यास्यसि प्रातर्विधिदृष्टेन कर्मणा ।

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

सामुद्रिकान् समुद्रोपान्ते गतान् ॥ २ ॥ कां दिशं प्रयामीत्याकुलः कांदिग्भूतः ॥ ४ ॥ रम्येषु प्रदेशेषु मध्ये एकत्र
॥ ११ ॥ सभोपममिति झ. पाठः ॥ १३ ॥ अष्टष
शततमोऽध्यायः ॥ १६८ ॥

## एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

बकसत्कृतेन गौतमेन तच्चोदनया तत्सुहृदो विरूपाक्षनाम्नो राक्षसस्य नगरं प्रति गमनम् ॥ १ ॥

भीष्म उवाच ।
गिरं तां मधुरां श्रुत्वा गौतमो विस्मितस्तदा ।
कौतूहलान्वितो राजन्राजधर्माणमैक्षत ॥ १
राजधर्मोवाच ।
भोः काश्यपस्य पुत्रोऽहं माता दाक्षायणी मम ।
सती त्वं च गुणोपेतः स्वागतं ते द्विजोत्तम ॥ २
भीष्म उवाच ।
तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा ।
शालपुष्पमयीं दिव्यां बृसीं समुपकल्पयत् ॥ ३
भगीरथरथाक्रान्तदेशान्गङ्गानिषेवितान् ।
ये चरन्ति महामीनास्तांश्च तस्यान्वकल्पयत् ॥ ४
वह्निं चापि सुसंदीप्तं मीनांश्चापि सुपीवरान् ।
स गौतमायातिथये न्यवेदयत काश्यपिः ॥ ५
भुक्तवन्तं च तं विप्रं प्रीतात्मानं महामनाः ।
श्रमापनयनार्थं स पक्षाभ्यामभ्यवीजयत् ॥ ६
ततो विश्रान्तमासीनं गोत्रवृत्तमपृच्छत ।
सोऽब्रवीद्गौतमोऽस्मीति ब्राह्मणोस्मीत्युदाहरत् ॥ ७
तस्मै पर्णमयं दिव्यं दिव्यपुष्पाधिवासितम् ।
गन्धाढ्यं शयनं प्रादात्स शिश्ये तत्र वै सुखम् ॥ ८
अथोपविष्टं शयने गौतमं वाक्यवित्तमः ।
पप्रच्छ काश्यपिर्वाग्मी किमागमनमित्युत ॥ ९
ततोऽब्रवीद्गौतमस्तं दरिद्रोऽहं महामते ।
समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत ॥ १०
तं काश्यपोऽब्रवीत्प्रीत्या नोत्कण्ठां कर्तुमर्हसि ।
कृतकार्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान् ॥ ११
चतुर्विधा ह्यर्थगतिर्बृहस्पतिमतं यथा ।
मित्रं विद्या हिरण्यं च बुद्धिश्चेति बुधेप्सिता ॥ १२
प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वं च महत्तरम् ।
सोऽहं तथा यतिष्यामि भविष्यसि यथार्थवान् ॥ १३
ततः प्रभातसमये सुखं पृष्ट्वाऽब्रवीदिदम् ।
गच्छ सौम्य पथाऽनेन कृतकृत्यो भविष्यसि ॥ १४
इतस्त्रियोजनं गत्वा राक्षसाधिपतिर्महान् ।
विरूपाक्ष इति ख्यातः सखा मम महाबलः ॥ १५
तं गच्छ द्विजमुख्य त्वं स मद्वाक्यप्रचोदितः ।
कामानभीप्सितांस्तुभ्यं दाता नास्त्यत्र संशयः ॥ १६
इत्युक्तः प्रययौ राजन्गौतमो विगतक्लमः ।
फलान्यमृतकल्पानि भक्षयाणो यथेष्टतः ॥ १७
चन्दनागुरुमुख्यानि पत्रत्वचवनानि च ।
तस्मिन्पथि महाराज सेवमानो द्रुतं ययौ ॥ १८
ततो मनुव्रजं नाम नगरं शैलतोरणम् ।
शैलप्राकारवप्रं च शैलयन्त्रार्गलं तथा ॥ १९
विदितश्चाभवत्तस्य राक्षसेन्द्रस्य धीमतः ।
प्रहितः सुहृदा राजन्प्रीयमाणः प्रियातिथिः ॥ २०
ततः स राक्षसेन्द्रः स्वान्प्रेष्यानाह युधिष्ठिर ।
गौतमो नगरद्वाराच्छीघ्रमानीयतामिति ॥ २१
तस्मात्पुरवरात्तूर्णं पुरुषाः श्वेतवेष्टनाः ।
गौतमेत्यभिभाषन्तः पुरद्वारमुपागमन् ॥ २२
ते तमूचुर्महाराज राजप्रेष्यास्तदा द्विजम् ।
त्वरस्व तूर्णमागच्छ राजा त्वां द्रष्टुमिच्छति ॥ २३
राक्षसाधिपतिर्वीरो विरूपाक्ष इति श्रुतः ।
स त्वां त्वरति वै द्रष्टुं तत्क्षिप्रं संविधीयताम् ॥ २४
ततः स प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः ।
गौतमः परमर्द्धिं तां पश्यन्परमविस्मितः ॥ २५
तैरेव सहितो राज्ञो वेश्म तूर्णमुपाद्रवत् ।
दर्शनं राक्षसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

---

अतिथिस्त्वं गुणोपेत इति झ. पाठः ॥ २ ॥ चतुर्विधा ह्यर्थसिद्धिर्बृहस्पतिमतं यथा । पारंपर्यं तथा दैवं काम्यं मैत्रमिति प्रभो । इति झ. पाठः ॥ १२ ॥ मरुव्रजं नामेति थ. पाठः । मरुद्व्रजं नामेति द. पाठः । मेरुव्रजं नामेति झ. पाठः ॥ १९ ॥ राक्षसाधिपतिः श्रीमान्राजधर्मेण प्रेषितः । यदर्थमिह मां द्रष्टुं इति ट. ड. थ. पाठः ॥ २४ ॥ एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

## सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

गौतमेन स्वस्यानर्हत्वं जानतापि विरूपाक्षेण बकराजगौरवात्प्रदत्तं धनभारमुदूह्य सायं पुनर्बकालयं प्रत्यागमनम् ॥ १ ॥ तत्र परेद्युः स्वभवनं जिगमिषुणा गौतमेन पाथेयार्थं रात्रौ बकवधनिर्धारणम् ॥ २ ॥

भीष्म उवाच ।
ततः स विदितो राज्ञः प्रविश्य गृहमुत्तमम् ।
पूजितो राक्षसेन्द्रेण निषसादासनोत्तमे ॥ १
पृष्टश्च गोत्रचरणं स्वाध्यायं ब्रह्मचारिकम् ।
पृष्टो राज्ञा स नाज्ञासीद्गोत्रमात्रमथाब्रवीत् ॥ २
ब्रह्मवर्चसहीनस्य स्वाध्यायाद्विरतस्य च ।
गोत्रमात्रविदो राजा निवासं समपृच्छत ॥ ३
राक्षस उवाच ।
क्व ते निवासः कल्याण किंगोत्रा ब्राह्मणी च ते ।
तत्त्वं ब्रूहि न भीः कार्या विश्रमस्व यथासुखम् ॥ ४
गौतम उवाच ।
मध्यदेशप्रसूतोऽहं वासो मे शबरालये ।
शूद्री पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ॥ ५
भीष्म उवाच ।
ततो राजा विममृशे कथं कार्यमिदं भवेत् ।
कथं वा सुकृतं मे स्यादिति बुद्ध्याऽन्वचिन्तयत् ॥ ६
अयं वै जन्मना विप्रः सुहृत्तस्य महात्मनः ।
संप्रेषितश्च तेनायं काश्यपेन महात्मना ॥ ७
तस्य प्रियं करिष्यामि स हि मामाश्रितः सदा ।
भ्राता मे बान्धवश्चासौ सखा चैव प्रियो मम ॥ ८
कार्तिक्यामद्य भोक्तारः सहस्रं मे द्विजोत्तमाः ।
तत्रायमपि भोक्ता तु देयमस्मै च मे धनम् ॥ ९
स चाद्य दिवसः पुण्यो ह्यतिथिश्चायमागतः ।
संकल्पितं चैव धनं किं विचार्यमतः परम् ॥ १०
ततः सहस्रं विप्राणां विदुषां समलंकृतम् ।
स्नातानामनुलिप्तानामहतक्षौमवाससाम् ॥ ११
तानागतान्द्विजश्रेष्ठान्विरूपाक्षो विशांपते ।
यथार्हं प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १२
बृस्यस्तेषां तु संन्यस्ता राक्षसेन्द्रस्य शासनात् ।
भूमौ वरकुशाः स्तीर्णाः प्रेष्यैर्भरतसत्तम ॥ १३
तासु ते पूजिता राज्ञा निषण्णा द्विजसत्तमाः ।
तिलदर्भोदकेनाथ अर्चिता विधिवद्द्विजाः ॥ १४
विश्वेदेवाः सपितरः साग्नयश्चोपकल्पिताः ।
विलिप्ताः पुष्पवन्तश्च सुप्रचाराः सुपूजिताः ।
व्यराजन्त महाराज नक्षत्रपतयो यथा ॥ १५
ततो जाम्बूनदीः पात्रीर्वज्राङ्का विमलाः शुभाः ।
वरान्नपूर्णा विप्रेभ्यः प्रादान्मधुघृतप्लुताः ॥ १६
तस्य नित्यं सदाषाढ्यां माघ्यां च बहवो द्विजाः ।
ईप्सितं भोजनवरं लभन्ते सत्कृतं तथा ॥ १७
विशेषतस्तु कार्तिक्यां द्विजेभ्यः संप्रयच्छति ।
शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः ॥ १८
सुवर्णं रजतं चैव मणीनथ च मौक्तिकान् ।
वज्रान्महाधनांश्चैव वैदूर्याजिनराङ्कवान् ॥ १९
रत्नवन्ति च पात्राणि दक्षिणार्थं स भारत ।
दत्त्वा प्राह द्विजश्रेष्ठान्विरूपाक्षो महायशाः ॥ २०
गृह्णीत रत्नान्येतानि यथोत्साहं यथेष्टतः ।
येषुयेषु च भाण्डेषु भुक्तवन्तो द्विजोत्तमाः ।
तान्येवादाय गच्छध्वं स्ववेश्मानीति भारत ॥ २१
इत्युक्तवचने तस्मिन्राक्षसेन्द्रे महात्मनि ।
यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणर्षभाः ॥ २२
ततो महार्हैस्तैस्तेन रत्नैरभ्यर्चिताः शुभैः ।
ब्राह्मणा मृष्टवसनाः सुप्रीताः समुदोऽभवन् ॥ २३
ततस्तान्राक्षसेन्द्रस्तु द्विजानाह पुनर्वचः ।
नाना देशागतान्राजा ब्राह्मणाननुमन्य वै ॥ २४
अद्यैकं दिवसं विप्रा न वोऽस्तीह भयं क्वचित् ।
राक्षसेभ्यः प्रमोदध्वमिष्टतो यात माचिरम् ॥ २५
ततः प्रदुद्रुवुः सर्वे विप्रसङ्घाः समन्ततः ।
गौतमोऽपि सुवर्णस्य भारमादाय सत्वरः ॥ २६
कृच्छ्रात्समुद्वहन्भारं न्यग्रोधं समुपागमत् ।
न्यषीदच्च परिश्रान्तः क्लान्तश्च क्षुधितश्च सः ॥ २७

ब्रह्मधारणमिति ध. पाठः ॥ २ ॥ विलिप्ताश्चन्दनेन ॥ १५ ॥ इष्टतः इष्टं देशम् ॥ २५ ॥

ततस्तमभ्यगाद्राजन्राजधर्मा खगोत्तमः ।
स्वागतेनाभ्यनन्दच्च गौतमं मित्रवत्सलः ॥ २८
तस्य पक्षाग्रविक्षेपैः क्लमं व्यपनयद्बकः ।
पूजां चाप्यकरोद्धीमान्भोजनं च यथाविधि ॥२९
ततस्तौ संविदं कृत्वा खगेन्द्रद्विजसत्तमौ ॥ ३०
गौतमश्चिन्तयामास रात्रौ तस्य समीपतः ।
हाटकस्याभिरूपस्य भारोऽयं सुमहान्मया ॥ ३१
गृहीतो लोभमोहाभ्यां दूरं च गमनं मम ।
न चास्ति पथि भोक्तव्यं प्राणसंधारणं मम ।
किं कृत्वा सुकृतं हि स्यादिति चिन्तापरोऽभवत् ३२
ततः स पथि भोक्तव्यं प्रेक्षमाणो न किंचन ।
कृतघ्नः पुरुषव्याघ्र मनसेदमचिन्तयत् ॥ ३३
अयं बकपतिः पार्श्वे मांसराशिचितो महान् ।
इमं हत्वा गृहीत्वाऽस्य मांसं यास्य इति प्रभो ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

---

## एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

गौतमेन रात्रौ सुप्तं बकं हत्वाऽग्नौ पक्वतन्मांसमुपगृह्य स्वग्रामंप्रति प्रस्थानम्॥१॥परेद्युर्बकस्यानागमनेन तस्य विपदाशङ्किना विरूपाक्षेण तद्वृत्तान्तजिज्ञासया स्वपुत्रस्य नियोजनम् ॥ २ ॥ पितृनियोगात्सपरिवारेण विरूपाक्षसुतेन गौतमहननम् ॥ २ ॥

भीष्म उवाच ।
अथ तत्र महार्चिष्माननलो वातसारथिः ।
तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत् ॥ १
स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट् तदा ।
कृतघ्नस्तु स दुष्टात्मा तं जिघांसुरजागरीत् ॥ २
ततोऽलातेन दीप्तेन स सुप्तं निजघान तम् ।
निहत्य च मुदा युक्तः सोऽनुबन्धं न दृष्टवान् ॥३
स तं विपक्षरोमाणं कृत्वाऽग्नावपचत्तदा ।
तं गृहीत्वा सुवर्णं च ययौ द्रुततरं द्विजः ॥ ४
'ततो दाक्षायणीपुत्रं नागतं तं तु भारत ।
विरूपाक्षश्चिन्तयन्वै हृदयेन विदूयता ॥' ५
ततोऽन्यस्मिन्गते चाह्नि विरूपाक्षोऽब्रवीत्सुतम् ।
न प्रेक्षे राजधर्माणमद्य पुत्र खगोत्तमम् ॥ ६
स पूर्वसन्ध्यां ब्रह्माणं वन्दितुं याति सर्वदा ।
मां चादृष्ट्वा कदाचित्स न गच्छति गृहं खगः ॥ ७
द्विरात्रमुभयोः सन्ध्योर्नाभ्यगच्छन्ममालयम् ।
तस्मान्न शुद्ध्यते भावो मम स ज्ञायतां सुहृत् ॥८
स्वाध्यायेन वियुक्तो हि ब्रह्मवर्चसवर्जितः ।
स गतस्तत्र मे शङ्का हन्यात्तं स द्विजाधमः ॥ ९
दुराचारः स दुर्बुद्धिरिङ्गितैर्लक्षितो मया ।
निष्कृपो दारुणाकारो दुष्टो दस्युरिवाधमः ।
गौतमः स गतस्तत्र तेनोद्विग्नं मनो मम ॥ १०
पुत्र शीघ्रमितो गत्वा राजधर्मनिवेशनम् ।
ज्ञायतां स विशुद्धात्मा यदि जीवति वा चिरम् ११
स एवमुक्तस्त्वरितो रक्षोभिः सहितो ययौ ।
*न्यग्रोधे राजधर्माणमपश्यन्निहतं ततः ॥ १२

ततस्तौ संविदमित्यर्धं झ. पाठे नास्ति । तत्र गौतमश्चिन्तयामासेत्यस्य स्थाने स भुक्तवान्सुविश्रान्तो गौतमोऽचिन्तयत्तदा इत्यर्धं वर्तते ॥ ३० ॥ सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

अनुबन्धं पापदोषम् ॥ ३ ॥ तद्व्रत इति पाठे हिंस्रधर्मा ॥ ८ ॥ एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

* इत आरभ्य आद्विसप्तत्यधिकशततमाध्यायसमाप्ति विद्यमानानां श्लोकानां स्थाने अधोलिखितश्लोका झ. पाठे वर्तन्ते। तेच—

न्यग्रोधं तत्र चापश्यत्कङ्कालं राजधर्मणः ।
स रुदन्नगमत्पुत्रो राक्षसेन्द्रस्य धीमतः ।
त्वरमाणः परं शक्त्या गौतमग्रहणाय वै ॥ १
ततो विदूरे जगृहुर्गौतमं राक्षसास्तदा ॥ २
राजधर्मशरीरं च पक्षास्थिचरणोज्झितम् ।
तमादायाथ रक्षांसि द्रुतं मेरुव्रजं ययुः ॥ ३
राज्ञश्च दर्शयामासुः शरीरं राजधर्मणः ।
कृतघ्नं पुरुषं तं च गौतमं पापकारिणम् ॥ ४
रुरोद राजा तं दृष्ट्वा सामात्यः सपुरोहितः ।

कङ्कालमस्थि ॥ १ ॥

रुदित्वा बहुशस्तस्मै विलप्य च स राक्षसः ।
गतो गेहसमाविष्टो गौतमग्रहणाय वै ॥ १३
गृहीतो गौतमः पापो रक्षोभिः क्रोधमूर्च्छितैः ।
राजधर्मशरीरस्य कङ्कालश्चाप्यथो धृतः ॥ १४

आर्तनादश्च सुमहानभूत्तस्य निवेशने ।
सस्त्रीकुमारं च पुरं बभूवास्वस्थमानसम् ॥ ५
अथाब्रवीन्नृपः पुत्रं पापोऽयं वध्यतामिति ।
अस्य मांसैरिमे सर्वे विहरन्तु यथेष्टतः ॥ ६
पापाचारः पापकर्मा पापात्मा पापसाधनः ।
हन्तव्योऽयं मम मतिर्भवद्भिरिति राक्षसाः ॥ ७
इत्युक्ता राक्षसेन्द्रेण राक्षसा घोरविक्रमाः ।
नैच्छन्त तं भक्षयितुं पापकर्माणमित्युत ॥ ८
दस्यूनां दीयतामेष साध्वद्य पुरुषाधमः ।
इत्यूचुस्ते महाराज राक्षसेन्द्रं निशाचराः ॥ ९
शिरोभिः प्रणताः सर्वे व्याहरन्राक्षसाधिपम् ।
न दातुमर्हसि त्वं नो भक्षणायास्य किल्बिषम् ॥ १०
एवमस्त्विति तानाह राक्षसेन्द्रो निशाचरान् ।
दस्यूनां दीयतामेष कृतघ्नोऽद्यैव राक्षसाः ॥ ११
इत्युक्ता राक्षसास्तेन शूलपट्टसपाणयः ।
कृत्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदा ॥ १२
दस्यवश्चापि नैच्छन्त तमत्तुं पापकारिणम् ।
क्रव्यादा अपि राजेन्द्र कृतघ्नं नोपभुञ्जते ॥ १३
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति निष्कृतिः ॥ १४
मित्रद्रोही कृतघ्नश्च नृशंसश्च नराधमः ।
क्रव्यादैः कृमिभिश्चैव न भुज्यन्ते हि तादृशाः ॥ १५
भीष्म उवाच ।
ततश्चितां बकपतेः कारयामास राक्षसः ।
रत्नैर्गन्धैश्च बहुभिर्वस्त्रैश्च समलंकृताम् ॥ १६
ततः प्रज्वाल्य नृपतिर्बकराजं प्रतापवान् ।
प्रेतकार्याणि विधिवद्राक्षसेन्द्रश्चकार ह ॥ १७
तस्मिन्काले च सुरभिर्देवी दाक्षायणी शुभा ।
उपरिष्टात्ततस्तस्य सा बभूव पयस्विनी ॥ १८
तस्या वक्त्राच्च्युतः फेनः क्षीरमिश्रस्तदाऽनघ ।
सोऽपतद्वै ततस्तस्यां चितायां राजधर्मणः ॥ १९
ततः संजीवितस्तेन बकराजस्तदाऽनघ ।
उत्पत्य च समीयाय विरूपाक्षं बकाधिपः ॥ २०
ततोऽभ्ययाद्देवराजो विरूपाक्षपुरं तदा ।
प्राह चेदं विरूपाक्षं दिष्ट्या संजीवितस्त्वया ॥ २१
श्रावयामास चेन्द्रस्तं विरूपाक्षं पुरातनम् ।
यथा शापः पुरा दत्तो ब्रह्मणा राजधर्मणः ॥ २२
यदा बकवती राजन्ब्रह्माणं नोपसर्पति ।
ततो रोषादिदं प्राह खगेन्द्राय पितामहः ॥ २३
यस्मान्मूढो मम सभां नागतोऽसौ बकाधमः ।
तस्माद्वधं स दुष्टात्मा न चिरात्समवाप्स्यति ॥ २४
तदयं तस्य वचनान्निहतो गौतमेन वै ।
तेनैवामृतसिक्तश्च पुनः संजीवितो बकः ॥ २५
राजधर्मा बकः प्राह प्रणिपत्य पुरंदरम् ।
यदि तेऽनुग्रहकृता मयि बुद्धिः सुरेश्वर ।
सखाऽयं मे सुदयितं गौतमं जीवयेत्युत ॥ २६
तस्य वाक्यं समादाय वासवः पुरुषर्षभ ।
सिक्त्वाऽमृतेन तं विप्रं गौतमं जीवयत्तदा ॥ २७
सभाण्डोपस्करं राजंस्तमासाद्य बकाधिपः ।
संपरिष्वज्य सुहृदं प्रीत्या परमया युतः ॥ २८
अथ तं पापकर्माणं राजधर्मा बकाधिपः ।
विसर्जयित्वा सधनं प्रविवेश स्वमालयम् ॥ २९
यथोचितं च स बको ययौ ब्रह्मसदस्तथा ।
ब्रह्मा चैनं महात्मानमातिथ्येनाभ्यपूजयत् ॥ ३०
गौतमश्चापि संप्राप्य पुनस्तं शबरालयम् ।
शूद्रायां जनयामास पुत्रान्दुष्कृतकारिणः ॥ ३१
शापश्च सुमहांस्तस्य दत्तः सुरगणैस्तदा ।
कुक्षौ पुनर्भ्वाः पापोऽयं जनयित्वा चिरात्सुतान् ।
निरयं प्राप्स्यति महत्कृतघ्नोऽयमिति प्रभो ॥ ३२
एतत्प्राह पुरा सर्वं नारदो मम भारत ।
संस्मृत्य चापि सुमहदाख्यानं भरतर्षभ ।
मयाऽपि भवते सर्वं यथावदनुवर्णितम् ॥ ३३
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ ३४
मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः ।
मित्रध्रुङ्नरकं घोरमनन्तं प्रतिपद्यते ॥ ३५
कृतज्ञेन सदा भाव्यं मित्रकामेन चैव ह ।
मित्राच्च लभते सर्वं मित्रात्पूजां लभेत च ॥ ३६
मित्राद्भोगांश्च भुञ्जीत मित्रेणापत्सु मुच्यते ।
सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः ॥ ३७
परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः ।
मित्रद्रोही कुलाङ्गारः पापकर्मा नराधमः ॥ ३८
एष धर्मभृतां श्रेष्ठ प्रोक्तः पापो मया तव ।
मित्रद्रोही कृतघ्नो वै किं भूयः श्रोतुमिच्छसि ॥ ३९
वैशंपायन उवाच ।
एतच्छ्रुत्वा तदा वाक्यं भीष्मेणोक्तं महात्मना ।
युधिष्ठिरः प्रीतमना बभूव जनमेजय ॥ ४०

मनुव्रजं तु नगरं यातुधानास्ततो गताः ।
क्रोधरक्तेक्षणा घोरा गौतमस्य वधे धृताः ॥ १५
पार्थिवस्याग्रतो न्यस्तः कङ्कालो राजधर्मणः ।
तं दृष्ट्वा विमना राजा सामात्यः सगणोऽभवत् ॥१६
आर्तरावो महानासीद्गृहे तस्य महात्मनः ।
समुत्थितः स्त्रीसङ्घस्य निहते काश्यपात्मजे ॥ १७
राजा चैवाब्रवीत्पुत्रं पापोऽयं वध्यतामिति ॥१८
राक्षसा ऊचुः ।
अस्य मांसं वयं सर्वे खादिष्यामः समागताः ।
पापकृत्पापकर्मा च पापात्मा पापमास्थितः ।
हन्तव्य एव पापात्मा कृतघ्नो नात्र संशयः ॥ १९
विरूपाक्ष उवाच ।
कृतघ्नं पापकर्माणं न भक्षयितुमुत्सहे ।
दासेभ्यो दीयतामेष मित्रध्रुक्पुरुषाधमः ॥ २०
भीष्म उवाच ।
दासाः सर्वे समाहूता यातुधानास्तथा परे ।
नेच्छन्ति स्म कृतघ्नं तं खादितुं पुरुषोत्तम ॥ २१
शिरोभिश्चागता भूमिं महाराज ततो बलात् ।
मानार्थं जातु निर्बन्धं किल्बिषं दातुमर्हसि ॥२२
यातुधाना नृपेणोक्ताः पापकर्मा विशस्यताम् ।
दह्यतां त्यज्यतां वाऽयं दर्शनादपनीयताम् ॥ २३
ततस्ते रुषिता दासाः शूलपट्टसपाणयः ।
खण्डशो विकृतं हत्वा क्रव्याद्भ्यो ह्यददुस्तदा ॥ २४
क्रव्यादास्त्वपि राजेन्द्र नेच्छन्ति पिशिताशनाः ।
मृतानपि हि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ २५
ब्रह्मस्वहरणे चोरे ब्रह्मघ्ने गुरुतल्पगे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥
मित्रद्रुहं कृतघ्नं च नृशंसं च नराधमम् ।
क्रव्यादाः क्रिमयश्चैव नोपभुञ्जन्ति वै सदा ॥२७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

## द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

विरूपाक्षभर्टैर्बकशरीरस्य चितारोपणम् ॥ १ ॥ ततो वाय्वानीतधेनुमुखच्युतफेनपातेन चितास्थबकोज्जीवनम् ॥ २ ॥ ततो बकप्रार्थनया इन्द्रेण पुनरुज्जीवितस्य गौतमस्य स्वग्रामगमनम् ॥ ३ ॥

भीष्म उवाच ।
विद्वान्संस्कारयामास पार्थिवो राजधर्मणः ।
गन्धैर्बहुभिरव्यग्रो दाहयामास पूजितम् ॥ १
तस्य देवस्य वचनादिन्द्रस्य बकराडिह ।
तेनैवामृतसिक्तश्च पुनः संजीवितो बकः ॥ २
राजधर्माऽपि तं प्राह सहस्राक्षमरिंदमम् ।
गौतमो ब्राह्मणः क्वाऽसौ मुच्यतां मत्प्रियः सखा ३
भीष्म उवाच ।
तस्य वाक्यं समाज्ञाय कौशिकः सुरसत्तमः ।
गौतमं ह्यभ्यनुज्ञाप्य प्रीतोऽथ गमनोत्सुकः ॥ ४
प्रतीतः स गतः सौम्यो राजधर्मा स्वमालयम् ।
नृशंसो गौतमो मुक्तो मित्रध्रुक्पुरुषाधमः ॥ ५
सभाण्डोपस्करो यातः स तदा शबरालयम् ।
तत्रासौ शबरी देहे प्रसूतो निरयोपमे ॥ ६
एष शापो महांस्तत्र मुक्तः सुरगणैस्तदा ॥ ७
दग्धे राक्षसराजेन खगराजे मतापिना ।
चितायाः पार्श्वतो दोग्ध्री सुरभिर्जीवयच्च तम् ॥ ८
तस्या वक्त्राच्च्युतः फेनो दुग्धमात्रस्तदाऽनघ ।
समीरणाहृतो यातश्चितां तां राजधर्मणः ॥ ९
देवराजस्ततः प्राप्तो विरूपाक्षपुरं तदा ।
विरूपाक्षोऽपि तं शक्रमयाचत पुनःपुनः ।
काश्यपस्य सुतो देव भ्राता मे जीवतामिति ॥१०
विरूपाक्षमुवाचेदमीश्वरः पाकशासनः ।
ब्रह्मणा व्याहृतो रोषाद्राजधर्मा कदाचन ॥ ११
यस्मात्त्वं नागतो द्रष्टुं मम नित्यमिमां सभाम् ।
तस्माद्बको भवान्भावी धर्मशीलः परात्मवित् १२
आगमिष्यति ते वासं कदाचित्पापकर्मकृत् ।
शबरावासगो विप्रः कृतघ्नो वृषलीपतिः ॥ १३

यदा निष्क्रान्तो मोक्षान्ते तदा भार्गव्युवाच तम् ।
तस्मादेष गतो लोकं ब्रह्मणः परमेष्ठिनः ॥ १४
भीष्म उवाच ।
स चापि निरयं प्राप्तो दुष्कृतिः कुलपांसनः ॥ १५
एतच्छ्रुत्वा सभामध्ये तद्वाक्यं नारदेरितम् ।
मयाऽपि तव राजेन्द्र यथावदनुवर्णितम् ॥ १६
ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति निष्कृतिः १७
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ १८
मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः ।
मित्रध्रुङ्निरयं घोरं नरकं प्रतिपद्यते ॥ १९
कृतज्ञमनसा भाव्यं मित्रभावेन चानघ ।
मित्रात्प्रभवते सर्वं मित्रं धन्यतरं स्मृतम् ॥ २०
अर्थाद्वा मित्रलाभाद्वा मित्रलाभो विशिष्यते ।
सुलभा मित्रतोऽर्थास्तु मित्रेण यतितुं क्षमम् ॥ २१
मित्रं चाभिमतं स्निग्धं फलं चापि सतां फलम् ।
सत्कारैः स्वजनोपेतः पूजयेत विचक्षणः ॥ २२
परित्याज्यो बुधैः पापः कदर्यः कुलपांसनः ।
मित्रद्रोही कुलाङ्गारः पापकर्मा कुलाधमः ॥ २३
एषा सज्जनसांनिध्ये प्रज्ञा प्रोक्ता मयाऽनघ ।
मित्रदुहि कृतघ्ने च किं भूयः श्रोतुमिच्छसि ॥ २४
वैशंपायन उवाच ।
एतच्छ्रुत्वा ततो वाक्यं भीष्मेणोक्तं महात्मना ।
युधिष्ठिरः प्रीतमना बभूव जनमेजय ॥ २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

समाप्तं चापद्धर्मपर्व ॥ २ ॥

---

# ( अथ मोक्षधर्मपर्व ॥ ३ ॥ )

## त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

भीष्मेण युधिष्ठिरंप्रति विप्रसेनजित्संवादानुवादः ॥ १ ॥ विप्रेण सेनजितंप्रति पिङ्गलोपाख्यानकथनम् ॥ २ ॥

युधिष्ठिर उवाच ।
धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि सत्तम ॥ १
भीष्म उवाच ।
सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ २
यस्मिन्यस्मिंस्तु विषये योयो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ३
यथायथा च पर्येति लोकतन्त्रमसारवत् ।
तथातथा विरागोऽत्र जायते नात्र संशयः ॥ ४
एवं व्यवसिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः ॥ ५
युधिष्ठिर उवाच ।
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।

---

राजनिर्वोभाद्धर्मैरुक्तैः राजधर्माश्रिताः । श्रेष्ठः प्रशस्यतमो मोक्षधर्मस्तम् । आश्रमिनामित्युक्तेर्गृहस्थादीनां सर्वेषामप्यत्राधिकारो दर्शितः ॥ १ ॥ मोक्षधर्मस्योत्तमत्वं वक्तुमितरधर्मस्य निकृष्टत्वमाह । सर्वत्रेति । सर्वत्राश्रमेषु धर्मो विहितो वेदेनाऽग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिना। स्वर्ग्यः स्वर्गफलसाधनम्। सत्यफलोदयः अवश्यंभाविफलोदयः । बहुद्वारस्य यज्ञदानाद्यनेकोपायस्य । क्रिया अनुष्ठानम् ॥ २ ॥ यस्मिन्विषये स्वर्गादिफले विनिश्चय याति इदं फलं मया प्राप्यमित्यभिसंधत्ते स तत्साधनमुपादत्ते न फलान्तरसाधनमित्यर्थः ॥ ३ ॥ पर्येति जानाति लोकतन्त्रं जनोपकरणं धनदारादिकम् । अत्र लोके असारं तृणादि तद्वत्तुच्छम् ॥ ४ ॥ व्यवसिते निश्चिते । लोके स्थावरादिसत्यलोकपर्यन्ते । बहुदोषे ऐश्वर्यतारतम्यक्षयिष्णुत्वादिदोषबहुले । दोषदर्शननिश्चयेन वैराग्ये सतीत्यर्थः ॥ ५ ॥

यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह ॥ ६
भीष्म उवाच ।
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहोदुःखमिति ध्यायञ्शोकस्यापचितिं चरेत् ॥७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा सेनजितं विप्रः कश्चिदेत्याब्रवीत्सुहृत् ॥ ८
पुत्रशोकाभिसंतप्तं राजानं शोकविह्वलम् ।
विषण्णमनसं दृष्ट्वा विप्रो वचनमब्रवीत् ॥ ९
किंनु मुह्यसि मूढस्त्वं शोच्यः किमनु शोचसि ।
यदा त्वामपि शोचंतः शोच्या यास्यन्ति तां गतिम्
त्वं चैवाहं च ये चान्ये त्वां राजन्पर्युपासते ।
सर्वे तत्र गमिष्यामो यत एवागता वयम् ॥ ११
सेनजिदुवाच ।
का बुद्धिः किं तपो विप्र कः समाधिस्तपोधन ।
किं ज्ञानं किं श्रुतं वा ते यत्प्राप्य न विषीदसि॥१२
ब्राह्मण उवाच ।
पश्यन्तमवसीदन्तं सुखदुःखविपर्यये ।
आत्मानमनुशोचामि यो ममैष हृदि स्थितः॥ १३
रस्य भूतानि दुःखेन व्यतिषिक्तानि सर्वशः ।
उत्तमाधममध्यानि तेषु तेष्विह कर्मसु ॥ १४
आत्माऽपि चायं न मम सर्वा वा पृथिवी मम ।
यथा मम तथाऽन्येषामिति मत्वा न मे व्यथा ।
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे ॥ १५
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ १६
एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा ।
तेषु स्नेहो न कर्तव्यो विप्रयोगो ध्रुवो हि तैः १७
अदर्शनादापतितः पुनश्चादर्शनं गतः ।
न त्वाऽसौ वेद न त्वं तं कस्मात्त्वमनुशोचसि ॥ १८
सुखान्तप्रभवं दुःखं दुःखान्तप्रभवं सुखम् ।
सुखात्संजायते दुःखं दुःखात्संजायते सुखम् ॥१९
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखे मनुष्याणां चक्रवत्परिवर्ततः ॥ २०
सुखात्त्वं दुःखमापन्नः पुनरापत्स्यसे सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥ २१
[ शरीरमेवायतनं सुखस्य
दुःखस्य चाप्यायतनं शरीरम् ।
यद्यच्छरीरेण करोति कर्म
तेनैव देही समुपाश्नुते तत् ॥ २२
जीवितं च शरीरेण तेनैव सह जायते ।
उभे सह विवर्तेते उभे सह विनश्यतः ॥ २३
स्नेहपाशैर्बहुविधैराविष्टविषया जनाः ।
अकृतार्थाश्च सीदन्ते जलैः सैकतसेतवः ॥ २४
स्नेहेन तैलवत्सर्वं सर्गचक्रे निपीड्यते ।
तिलपीडैरिवाक्रम्य क्लेशैरज्ञानसंभवैः ॥ २५
संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
एकः क्लेशानवाप्नोति परत्रेह च मानवः ॥ २६
पुत्रदारकुटुम्बेषु प्रसक्ताः सर्वमानवाः ।
शोकपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ २७
पुत्रनाशे वित्तनाशे ज्ञातिसंबन्धिनामपि ।
प्राप्यते सुमहद्दुःखं दावाग्निप्रतिमं विभो ।
दैवायत्तमिदं सर्वं सुखदुःखे भवाभवौ ॥ २८
असुहृत्ससुहृच्चापि सशत्रुर्मित्रवानपि ।
सप्रज्ञः प्रज्ञया हीनो दैवेन लभते सुखम् ॥] २९

न्मे तां मे ॥ ६ ॥ अपचिति प्रतीकारम् ॥ ७ ॥ संतापोऽन्तर्हिर्दाहः । विह्वलत्वं बाह्येन्द्रियचलनशून्यत्वम् । विषण्णं मूढ नो यस्य । विवर्णवदनं दृष्ट्वेति ट. पाठः ॥ ९ ॥ मूढाः सर्वेऽपि च्याः शोकाक्रान्ताश्चेत्यतो निःशोकं पदमन्वेष्टव्यमित्यर्थः १० ॥ बुद्धिरुपपत्तिः । तपस्तदालोचनम् । समाधिर्बुद्धेरेत्र पर्यवसानम् । ज्ञानं साक्षात्कारः । श्रुतमेतेष्वर्थेषु प्रमाण् ॥ १२ ॥ तत्र बुद्धिमाह सार्धद्वयेन पश्येति । व्यतिषिक्तानि ास्तान्युत्तमाधममध्यानि देवतिर्यङ्मनुष्यादीनि । कर्मसु निमिभूतेषु ॥ १४ ॥ एवं कर्मजं दुःखं देवादीनामप्यस्तीति दृश्यमानभूतदृष्टान्तेनोपपाद्य तन्निवृत्तावप्युपपत्तिमाह आत्मेति ॥१५॥ तप आह यथेत्यादिना । भूतैः समागमः आत्मनो देहयोग इत्यर्थः ॥ १६ ॥ तपःफलमाह एवमिति ॥ १७ ॥ कः सन् किमनुशोचसि इति झ. पाठः ॥ १८ ॥ स्नेहेन निमित्तेन तिलपीडैस्तैलिकैः ॥ २५ ॥ अशुभं चौर्यादि । कलत्रापेक्षया भार्यादिपोषणार्थं धनसुखभागिनः सर्वे पापफलभागी त्वेक एवायमित्यर्थः ॥ २६ ॥ भवाभवौ ऐश्वर्यानैश्वर्ये ॥ २८ ॥ सुहृत्प्रत्युपकारमनपेक्ष्योपकारकर्ता । मित्रं प्रत्युपकारमपेक्ष्योपकारकर्तृ ॥ २९ ॥

सर्वान्कामाञ्जुगुप्सेत कोपं कुर्वीत पृष्ठतः ॥ ५०
वृत्त एष हृदि प्रौढो मृत्युरेष मनोभवः ।
क्रोधो नाम शरीरस्थो देहिनां प्रोच्यते बुधैः ॥ ५१
यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदात्मज्योतिरात्मश्रीरात्मन्येव प्रसीदति ॥ ५२
किंचिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते तदा ॥ ५३
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ५४
उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये ।
प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यति ॥ ५५
यदा न कुरुते धीरः सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ५६
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं ५७
अत्र पिङ्गलया गीता गाथा शृणु नराधिप ।
यथा सा कृच्छ्रकालेऽपि लेभे शर्म सनातनम् ५८
संकेते पिङ्गला वेश्या कान्तेनासीद्विनाकृता ।
अथ कृच्छ्रगता शान्तां बुद्धिमास्थापयत्तदा ॥ ५९
पिङ्गलोवाच ।
उन्मत्ताऽहमनुन्मत्तं कान्तमन्ववसं चिरम् ।
अन्तिके रमणं सन्तं नैनमध्यगमं पुरा ॥ ६०
एकस्थूणं नवद्वारमपिधास्याम्यगारकम् ।
का ह्यकान्तमिहायान्तं कान्त इत्यभिमंस्यते ॥ ६१
अकामाः कामरूपेण धूर्ताश्च नररूपिणः ।
न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धाऽस्मि जागृमि ॥ ६२
अनर्थोऽपि भवत्यर्थो दैवात्पूर्वकृतेन वा ।
संबुद्धाऽहं निराकारा नाहमद्याजितेन्द्रिया ॥ ६३
सुखं निराशः स्वपिति नैराश्यं परमं सुखम् ।
आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ६४
भीष्म उवाच ।
एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः ।
पर्यवस्थापितो राजा सेनजिन्मुमुदे सुखम् ॥ ६५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

## चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

भीष्मेण युधिष्ठिरंप्रति कालस्य द्रुततरपातितया सद्यःसाधनस्य संपादनीयत्वे प्रमाणतया पितृपुत्रसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
अतिक्रामति कालेऽस्मिन्सर्वभूतक्षयावहे ।
किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रेण संवादं तं निबोध युधिष्ठिर ॥ २
द्विजातेः कस्यचित्पार्थ स्वाध्यायनिरतस्य वै ।
बभूव पुत्रो मेधावी मेधावीनाम नामतः ॥ ३
सोऽब्रवीत्पितरं पुत्रः स्वाध्यायकरणे रतम् ।
मोक्षधर्मार्थकुशलो लोकतन्त्रविचक्षणः ॥ ४
पुत्र उवाच ।
धीरः किंस्वित्तात कुर्यात्प्रजानन्
क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम् ।
पितस्तदाचक्ष्व यथार्थयोगं
ममानुपूर्व्या येन धर्मं चरेयम् ॥ ५
पितोवाच ।

---

पापकं हिंसनम् ॥ ५६ ॥ कृच्छ्रकाले दुःखकाले । लेभे धर्मं सनातनमिति घ. पाठः । ब्रह्म सनातनमिति ङ. पाठः ॥ ५८ ॥ आस्थापयत् व्यवस्थापितवती ॥ ५९ ॥ अन्तिके हृदयकोशे रमणमानन्दप्रदम् ॥ ६० ॥ एकस्थूणं एकात्माधारं अगारं शरीराख्यम् ॥ ६१ ॥ जागृमि जागर्मि ॥ ६२ ॥ पर्यवस्थापित आत्मतत्त्वे निष्ठां प्रापितः ॥ ६५ ॥ त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

मोक्षधर्माणामर्थेषु कुशलः ॥ ४ ॥ यथार्थयोग फलसंबन्धमनतिक्रम्य तात कुर्याच्छुभार्थी इति ङ. थ. पाठः । तात कुर्यात्प्रजासु इति ट. पाठः ॥ ५ ॥

नालं सुखाय सुहृदो नालं दुःखाय दुर्हृदः ।
न च प्रज्ञाऽलमर्थानां न सुखानामलं धनम् ॥ ३०
न बुद्धिर्धनलाभाय न मौर्ख्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३१
बुद्धिमन्तं च शूरं च मूढं भीरुं जडं कविम् ।
दुर्बलं बलवन्तं च भागिनं भजते सुखम् ॥ ३२
धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च ।
पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः ॥ ३३
ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
ते नराः सुखमेधन्ते क्लिश्यत्यन्तरितो जनः ॥ ३४
अन्त्येषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्त्यप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्त्ययोः ॥ ३५
सुखं स्वपिति दुर्मेधाः स्वानि कर्माण्यचिन्तयन् ।
अविज्ञानेन महता कम्बलेनेव संवृतः ॥ ३६
ये च बुद्धिं परां प्राप्ता द्वन्द्वातीता विमत्सराः ।
तान्नैवार्था न चानर्था व्यथयन्ति कदाचन ॥ ३७
अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढताम् ।
तेऽतिवेलं प्रहृष्यन्ति संतापमुपयान्ति च ॥ ३८
नित्यं प्रमुदिता मूढा दिवि देवगणा इव ।
अवलेपेन महता परितृप्ता विचेतसः ॥ ३९
सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम् ।
भूतिश्चैव श्रिया सार्धं दक्षे वसति नालसे ॥ ४०
सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ ४१
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ ४२
बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनहंकृतम् ।
शान्तं जितेन्द्रियं चापि शोको न स्पृशते नरम् ॥ ४३
एतां बुद्धिं समास्थाय गुप्तचित्तश्चरेद्बुधः ।
'शुक्लकृष्णगतिज्ञं तं देवासुरविनिर्गमम् ।'
उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति ॥ ४४
यन्निमित्तो भवेच्छोकस्त्रासो वा क्रोध एव वा ।
आयासो वा यतो मूलं तदेकाङ्गमपि त्यजेत् ॥ ४५
यद्यत्त्यजति कामनां तत्सुखस्याभिपूर्यते ।
कामानुसारी पुरुषः कामाननुविनश्यति ॥ ४६
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ४७
पूर्वदेहकृतं कर्म शुभं वा यदि वाऽशुभम् ।
प्राज्ञं मूढं तथा शूरं भजते तादृशं नरम् ॥ ४८
एवमेव किलैतानि प्रियाण्येवाप्रियाणि च ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥ ४९
एतां बुद्धिं समास्थाय नावसीदेद्गुणान्वितः ।

सुखाय सुखहेतु नालं न पर्याप्तः ॥ ३० ॥ असमृद्धये धनादिनाशाय । लोको भोग्यप्रपञ्चस्तस्य पर्यायो निर्माणं तत्र विषये वृत्तान्तं सिद्धान्तम् । प्राज्ञस्तत्त्ववित् ॥ ३१ ॥ मूढं निर्बुद्धिम् । जडमलसम् । कविं दीर्घदर्शिनम् । भागिनं सदैवम् । भजते स्वयमेवोपनमते । ननु तदर्थं यत्नोऽपेक्ष्य इत्यर्थः ॥ ३२ ॥ पयःपातुरेव धेनुरितरेषां तु तत्र ममता व्यर्था । तस्माद्वत्सकादधिके स्पृहा न कार्येत्यर्थः ॥ ३३ ॥ धीराः पण्डिताः अन्त्येषु अन्त्ययोः धर्ममोक्षयोः । व्यत्ययो बहुलमिति च व्यत्ययः । मध्येषु मध्ययोः अर्थकामयोः । अन्त्यप्राप्तिं धर्मेण प्राप्तिं मोक्षस्य सुखरूपत्वाद्धर्मस्य सुखहेतुत्वात् सुखं प्राहुः । अन्त्ययोर्धर्ममोक्षयोरन्तरं मध्यं अर्थकामं दुःखं प्राहुरित्यर्थः ॥ ३५ ॥ द्वन्द्वातीताः सुखदुःखाद्यतीताः । मत्सरः परोत्कर्षासहिष्णुत्वं तद्वर्जिताः । अर्थाः स्त्र्यादयः । अनर्थास्तद्वियोगाः ॥ ३७ ॥ अतिवेलमत्यन्तम् ॥ ३८ ॥ परिदृब्धा विचेतन इति ध. पाठः ॥ ३९ ॥ आलस्यं ज्ञानार्थमप्रवृत्तिः । दुःखं दुःखकरम् । भूतिरणिमाद्यैश्वर्यम् । श्रिया विद्यया । सुखं दुःखान्तमालस्येति झ. पाठः ॥ ४० ॥ सुखदुःखसाधने प्रियाप्रिये । हृदयेन हर्षशोकमयेनाऽपराजितोऽवशीकृतः ॥ ४१ ॥ शोकमूलानीष्टवियोगादीनि । भयमूलान्यनिष्टसंयोगादीनि । आविशन्ति स्वकार्योत्पादनेन व्याप्नुवन्ति ॥ ४२ ॥ बुद्धिर्ग्रन्थधारणसामर्थ्यं तद्वन्तम् । कृता स्वतःसिद्धा प्रज्ञा ऊहापोहकौशलं यस्य तम् । शुश्रूषुं शास्त्राभ्यासपरम् । शुश्रूषुमनसूयकमिति झ. पाठः । तत्र अनसूयकं शास्त्रीयेऽर्थे दोषदृष्टिरसूया तद्रहितमित्यर्थः ॥ ४३ ॥ शुक्लं सत्त्वं कृष्णं तमस्ताभ्यां प्राप्ये गती प्रकाशावरणकार्थे मुक्तिसंसाराख्ये तज्ज्ञम् । देवा दानदयादिरूपाः सात्त्विक्यश्चेतोवृत्तयः । असुरा राजस्यस्तामस्यो लोभमोहाद्यास्ता एव तासामुभयीनामपि विशेषेण निर्गमो बहिर्भावो यस्मात्तं उदयास्तमयज्ञं देहिनां जन्मविनाशज्ञम् ॥ ४४ ॥ यत आयासस्तन्मूलं कारणमायासादेरेकाङ्गं शरीरैकदेशभूतमपि त्यजेत् किमुत धनदारादि ॥ ४५ ॥ कामानां विषयाणां मध्ये ॥ ४६ ॥ लोके मानुषे । दिव्यं स्वर्गभवम् । तृष्णाक्षयो वैराग्यम् ॥ ४७ ॥ कर्तारमजितं कर्म शुभं वा यदि वाऽशुभमिति ङ. पुस्तकपाठः ॥ ४८ ॥

वेदानधीत्य ब्रह्मचर्येण पुत्र
पुत्रानिच्छेत्पावनार्थं पितॄणाम् ।
अग्नीनाधाय विधिवच्चेष्टयज्ञो
वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ ६

पुत्र उवाच ।

एवमभ्याहते लोके समन्तात्परिवारिते ।
अमोघासु पतन्तीषु किं धीर इव भाषसे ॥ ७

पितोवाच ।

कथमभ्याहतो लोकः केन वा परिवारितः ।
अमोघाः काः पतन्तीह किंनु भीषयसीव माम् ॥८

पुत्र उवाच ।

मृत्युनाभ्याहतो लोको जरया परिवारितः ।
अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे ।
अमोघा रात्रयश्चापि नित्यमायान्ति यान्ति च ॥ ९

पितोवाच ।

यथाऽहमेतज्जानामि न मृत्युस्तिष्ठतीति ह ।
सोऽहं कथं प्रतीक्षिष्ये जालेनेवावृतश्चरन् ॥ १०

पुत्र उवाच ।

रात्र्यांरात्र्यां व्यतीतायामायुरल्पतरं यदा ।
तदैव वन्ध्यं दिवसमिति विन्द्याद्विचक्षणः ॥ ११
गाधोदके मत्स्य इव सुखं विन्देत कस्तदा ।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥ १२
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ १३
अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयम् ।
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ॥ १४
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥१५
को हि जानाति कस्याद्य मृत्युकालो भविष्यति ।
युवैव धर्मशीलः स्यादनित्यं खलु जीवितम् ।
कृते धर्मे भवेत्कीर्तिरिह प्रेत्य च वै सुखम् ॥१६
मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः ।
कृत्वा कार्यमकार्यं वा पुष्टिमेषां प्रयच्छति ॥ १७
तं पुत्रपशुसंपन्नं व्यासक्तमनसं नरम् ।
सुप्तं व्याघ्रो मृगमिव मृत्युरादाय गच्छति ॥ १८
संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवादाय मृत्युरादाय गच्छति ॥ १९
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।
एवमीहासुखासक्तं कृतान्तः कुरुते वशे ॥ २०
कृतानां फलमप्राप्तं कर्मणां कर्मसंज्ञितम् ।
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ॥ २१
दुर्बलं बलवन्तं च शूरं भीरुं जडं कविम् ।
अप्राप्तं सर्वकामार्थान्मृत्युरादाय गच्छति ॥ २२
मृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम् ।
अनुषक्तं यदा देहे किं स्वस्थ इव तिष्ठसि ॥ २३
जातमेवान्तकोऽन्ताय जरा चान्वेति देहिनम् ।
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ॥ २४
मृत्योर्वा मुखमेतद्वै या ग्रामे वसतो रतिः ।
देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥ २५
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥२६
न हिंसयति यो जन्तून्मनोवाक्कायहेतुभिः ।
जीवितार्थापनयनैः प्राणिभिर्न स हिंस्यते ॥ २७
न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते ।
ऋते सत्यमसत्त्याज्यं सत्ये ह्यमृतमाश्रितम् ॥ २८
तस्मात्सत्यव्रताचारः सत्ययोगपरायणः ।

---

अमोघास्त्वायुर्हरणेन सफलासु रात्रिषु ॥ ७ ॥ वन्ध्यं निष्फलम् ॥ ११ ॥ यदा मृत्युरभ्येति तदा कः सुखं विन्देतेति संबन्धः ॥ १२ ॥ पुष्पाणि काम्यकर्मफलानि मेषीणामार्तवानि वा । आर्तवं विना पशूनां स्त्रीसङ्गे प्रवृत्त्यदर्शनात् । विचिन्वन्तं शास्त्रदृष्ट्या आघ्राणेन च । उरणं मेषम् ॥ १३ ॥ एषां पुत्रादीनाम् ॥ १७ ॥ संचिन्वानकं कुत्सितं संचिन्वानं संग्रहीतारम् ॥ १९ ॥ कार्यं कर्तुमिष्टम् । कृताकृतमर्धकृतम् । ईहा तृष्णा ॥ २० ॥ कर्मसंज्ञितं वणिगित्यादिकर्मानुरूपसंज्ञावन्तम् ॥ २१ ॥ द्वयेनान्तकजराख्येन ॥ २४ ॥ ग्रामे स्त्र्यादिसङ्गे रतिरासक्तिरेव मृत्योर्मुखं न तु वासमात्रम् । गोष्ठमिव गोष्ठं वासस्थानम् । अरण्यं विविक्तदेशः । गृहं त्यक्त्वैकान्ते ध्यानपरो भवेदित्यर्थः ॥ २५ ॥ यान्ति मुक्तिमिति शेषः ॥ २६ ॥ न हिंसयति हिंसां न कारयति न करोति चेत्यर्थः । हेतुः श्राद्धादिनिमित्तं तैः जीवितमर्थांश्चापनयन्ति तैर्हिंस्रस्तेनादिभिः ॥ २७ ॥ मृत्युसेनां जराव्याधिरूपां सत्ये ब्रह्मज्ञाने अमृतं कैवल्यम् ॥ २८ ॥ सत्यव्रताचारः सत्यं ब्रह्मज्ञाने

सत्यागमः सदा दान्तः सत्येनैवान्तकं जयेत् ॥ २९
अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।
मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतम् ॥ ३०
सोऽहं ह्यहिंस्रः सत्यार्थी कामक्रोधबहिष्कृतः ।
समदुःखसुखः क्षेमी मृत्युं हास्याम्यमर्त्यवत् ॥ ३१
शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः ।
वाङ्मनःकर्मयज्ञश्च भविष्याम्युदगायने ॥ ३२
पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ।
अन्तवद्भिरिव प्राज्ञः क्षेत्रयज्ञैः पिशाचवत् ॥ ३३
यस्य वाङ्मनसी स्यातां सम्यक्प्रणिहिते सदा ।
तपस्त्यागश्च सत्यं च स वै सर्वमवाप्नुयात् ॥ ३४
नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ३५
आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोऽपि वा ।
आत्मन्येव भविष्यामि न मां तारयति प्रजा ॥ ३६
नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥ ३७
किं ते धनैर्बान्धवैर्वापि किं ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ ३८
भीष्म उवाच ।
पुत्रस्यैतद्वचः श्रुत्वा यथाऽकार्षीत्पिता नृप ।
तथा त्वमपि वर्तस्व सत्यधर्मपरायणः ॥ ३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

भीष्मेण युधिष्ठिरंप्रति दारिद्र्यधनिकत्वयोः क्रमेणार्थानर्थसाधनत्वे प्रमाणतया शम्याकगीताया अनुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
धनिनश्चाधना ये च वर्तयन्ति स्वतन्त्रिणः ।
सुखदुःखागमस्तेषां कः कथं वा पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शम्याकेन विमुक्तेन गीतं शान्तिगतेन च ॥ २
अब्रवीन्मां पुरा कश्चिद्ब्राह्मणस्त्यागमाश्रितः ।
क्लिश्यमानः कुदारेण कुचेलेन बुभुक्षया ॥ ३
उत्पन्नमिह लोके वै जन्मप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥ ४
तयोरेकतरो मार्गो यदेनमुपसन्नयेत् ।
न सुखं प्राप्य संहृष्येन्नासुखं प्राप्य संज्वरेत् ॥ ५
न वै चरसि यच्छ्रेय आत्मनो वा न रंस्यसे ।
अकामात्माऽपि हि सदा धुरमुद्यम्य चैव ह ॥ ६
अकिञ्चनः परिपतन्सुखमास्वादयिष्यसि ।
अकिञ्चनः सुखं शेते समुत्तिष्ठति चैव ह । ७
आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् ।

---

तदर्थं व्रतं वेदान्तश्रवणादि तदाचारस्तदनुष्ठाता । सत्ययोगपरायणः ब्रह्मध्यानपरायणः । सत्यः प्रमाणभूत आगमो गुरुवेदवाक्यं यस्य स सत्यागमः श्रद्धावान् ॥ २९ ॥ शान्तियज्ञ इन्द्रियनिग्रहः । ब्रह्मयज्ञो नित्यमुपनिषदर्थचिन्तनम् । वाग्यज्ञः जपः । मनोयज्ञः ध्यानं । कर्मयज्ञः स्नानशौचगुरुशुश्रूषाद्यावश्यकधर्मानुष्ठानम् । उदगायने देवयानपथनिमित्तम् । दैर्घ्यमार्षम् ॥ ३२ ॥ अन्तवद्भिरनित्यफलैः । क्षेत्रयज्ञैः शरीरनाशनैः ॥ ३३ ॥ आत्मनि परमात्मनि प्रलये स्थित इति शेषः । आत्मना सृष्टिकाले जातः ॥ ३६ ॥ एकता एकप्रकारता शीलं श्लाघनीयं वृत्तम् । दण्डनिधानं वाङ्मनःकायैर्हिंसात्यागः ॥ ३७ ॥ चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

स्वतन्त्रिणः स्वशास्त्रानुसारिणः ॥ १ ॥ तेन शम्याकेन यद्गीतं तन्मां प्रति कश्चिदब्रवीदिति द्वयोः संबन्धः । शंपाकेनेह मुक्तेन इति झ. पाठः ॥ २ ॥ कुचेलेन कुवस्त्रेण । निर्धनत्वादन्नाच्छादनहीन इत्यर्थः ॥ ३ ॥ उपसंनयेत् संप्राप्नुयात् । तयोरेकतरे मार्गे यदेनमभिसंनयेदिति झ. पाठः । तत्र अभिसंनयेद्दैवं यदि प्रापयेत्तर्हि न संहृष्येदित्यादिना संबन्धः ॥ ५ ॥ अकिञ्चनः दरिद्रः । परितः पतन् गच्छन् । अनिकेतश्चरन्नित्यर्थः

अनमित्रपथो ह्येष दुर्लभः सुलभः सताम् ॥ ८
अकिंचनस्य शुद्धस्य उपपन्नस्य सर्वतः ।
अवेक्षमाणस्त्रील्लोँकान्न तुल्यमिह लक्षये ॥ ९
आकिंचन्यं च राज्यं च तुलया समतोलयम् ।
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम् ॥ १०
आकिंचन्ये च राज्ये च विशेषः सुमहानयम् ।
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ॥ ११
नैवास्याग्निर्न चादित्यो न मृत्युर्न च दस्यवः ।
प्रभवन्ति धनं हर्तुमितरे स्युः कुतः पुनः ॥ १२
तं वै सदा कामचरमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥ १३
धनवान्क्रोधलोभाभ्यामाविष्टो नष्टचेतनः ।
तिर्यग्दृष्टिः शुष्कमुखः पापको भ्रुकुटीमुखः ॥ १४
निर्दशन्नधरोष्ठं च क्रुद्धो दारुणभाषिता ।
कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥ १५
श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम् ।
सा तस्य चित्तं हरति शारदाभ्रमिवानिलः ॥ १६
अथैनं रूपमानश्च धनमानश्च विन्दति ।
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ।
इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रमाद्यति ॥ १७
संप्रसक्तमना भोगान्विसृज्य पितृसंचितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥ १८
तमतिक्रान्तमर्यादमाददानं ततस्ततः ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ १९
एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते गात्रसंस्पर्शजान्यपि ॥ २०
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
लोकधर्मं समाज्ञाय ध्रुवाणामध्रुवैः सह ॥ २१
नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भवेत् ॥
इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ।
शम्याकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

## षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

भीष्मेण युधिष्ठिरंप्रति विरक्तेः सुखसाधनतायां प्रमाणतया मङ्किगीताया बोध्यगीतायाश्चानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
ईहमानः समारम्भान्यदि नासादयेद्धनम् ।
धनतृष्णाभिभूतश्च किं कुर्वन्सुखमाप्नुयात् ॥ १
भीष्म उवाच ।
सर्वसाम्यमनायासः सत्यवाक्यं च भारत ।
निर्वेदश्चाविधित्सा च यस्य स्यात्स सुखी नरः ॥ २
एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये ।
एष स्वर्गश्च धर्मश्च सुखं चानुत्तमं सताम् ॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ॥ ४
ईहमानो धनं मङ्किर्भग्नेहश्च पुनःपुनः ।
केनचिद्धनलेशेन क्रीतवान्दम्यगोयुगम् ॥ ५
सुसंबद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ ।
आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ॥ ६

॥ ७ ॥ पथ्यं मोक्षमार्गादनपेतम् । अनमित्रपथः शत्रुवर्जितः पन्थाः । दुर्लभः कामिनाम् ॥ ८ ॥ उपपन्नस्य वैराग्यसंपन्नस्य ॥ ९ ॥ नैवास्याग्निर्न चारिष्ट इति—प्रभवन्ति धनत्यागाद्विमुक्तस्य निराशिषः इति च झ. पाठः ॥ १२ ॥ अनुपस्तीर्णे शय्याहीने भूतले शेते तम् । उपधान शीर्षोपधानम् ॥ १३ ॥ अभिजात उत्तमवंश्यः त्रिभिर्धनरूपकुलैः ॥ १७ ॥ भोगान् भोग्यधनादीन् विसृज्य व्ययीकृत्य ॥ १८ ॥ प्रतिषेधन्ति दण्डयन्ति । लुब्धा व्याधाः ॥ १९ ॥ संस्पर्शजानि दाहच्छेदादीनि ॥ २० ॥ भैषज्य प्रतीकारमाचरेत् ॥ २१ ॥ शम्याकेन पुरा गीतमित्यध्याहारेण योजना ॥ २३ ॥ पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

पदानि पदनीयान्याश्रयणीयानि । प्रशान्तये मोक्षाय । एष इति विधेयापेक्षे लिङ्गैकत्वे ॥ ३ ॥ दम्यगोयुगं द्वौ वत्सतरौ । द्वित्वे गोयुगाजिति गोयुगच्प्रत्ययः ॥ ५ ॥

तयोः संप्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः ।
उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ॥ ७
ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना ।
म्रियमाणौ च संप्रेक्ष्य मङ्किस्तत्राब्रवीदिदम् ॥ ८
न जात्वविहितं शक्यं दक्षेणापीहितुं धनम् ।
युक्तेन श्रद्धया सम्यगीहां समनुतिष्ठता ॥ ९
पूर्वमर्थैर्विहीनस्य युक्तस्याप्यनुतिष्ठतः ।
इमं पश्यत संगत्या मम दैवमुपप्लवम् ॥ १०
उद्यम्योद्यम्य मे दम्यौ विषमेणैव गच्छतः ।
उत्क्षिप्य काकतालीयमुन्माथेनेव जम्बुकः ॥ ११
मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
शुद्धं हि दैवमेवेदं हठे नैवास्ति पौरुषम् ॥ १२
यदि वाऽप्युपपद्येत पौरुषं नाम कर्हिचित् ।
अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ॥ १३
तस्मान्निर्वेद एवेह गन्तव्यः सुखमीप्सता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥ १४
अहो सम्यक्शुकेनोक्तं सर्वतः परिमुच्यता ।
प्रतिष्ठता महारण्यं जनकस्य निवेशनात् ॥ १५
यः कामानाप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ १६
नान्तं सर्वविधित्सानां गतपूर्वोऽस्ति कश्चन ।
शरीरे जीविते चैव तृष्णा मर्त्यस्य वर्धते ॥ १७
निवर्तस्व विधित्साभ्यः शाम्य निर्विद्य कामुक ।
असकृच्चासि निकृतो न च निर्विद्यसे मनः ॥ १८
यदि नाहं विनाश्यस्ते यद्येवं रमसे मया ।
मा मां योजय लोभेन वृथा त्वं वित्तकामुक ॥ १९
संचितं संचितं द्रव्यं नष्टं तव पुनः पुनः ।
कदा तां मोक्ष्यसे मूढ धनेहां धनकामुक ॥ २०
अहो नु मम बालिश्यं योऽहं क्रीडनकस्तव ।
'क्लेशैर्नानाविधैर्नित्यं संयोजयसि निर्घृणः ।'
किं नैवं जातु पुरुषः परेषां प्रेष्यतामियात् ॥ २१
न पूर्वे नापरे जातु कामानामन्तमाप्नुवन् ।
त्यक्त्वा सर्वसमारम्भान्प्रतिबुद्धोऽस्मि जागृमि २२
नूनं मे हृदयं कामं वज्रसारमयं दृढम् ।
यदनर्थशताविष्टं शतधा न विदीर्यते ॥ २३
त्यजामि काम त्वां चैव यच्च किंचित्प्रियं तव ।
तवाहं प्रियमन्विच्छन्नात्मन्युपलभे सुखम् ॥ २४
काम जानामि ते मूलं संकल्पात्किल जायसे ।
न त्वां संकल्पयिष्यामि समूलो नभविष्यसि ॥ २५
ईहा धनस्य न सुखा लब्ध्वा चिन्ता च भूयसी
लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ॥ २६
परित्यागे न लभते ततो दुःखतरं नु किम् ।
न च तुष्यति लब्धेन भूय एव च मार्गति ॥ २७
अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकम् ।
मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि संत्यज ॥ २८
य इमं मामकं देहं भूतग्रामः समाश्रितः ।
स यात्वितो यथाकामं वसतां वा यथासुखम् ॥ २९
न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु ।
तस्मादुत्सृज्य वः सर्वान्सत्वमेवाश्रयाम्यहम् ॥ ३०
सर्वभूतान्यहं देहे पश्यन्मनसि चात्मनः ।

उत्क्षिप्य तुलाभाजनद्वयवदुपरिभूमेर्नीत्वा ॥ ७ ॥ अविहितं दैवेनानुपस्थापितं ईहितुमेष्टुम् । श्रद्धया फलप्राप्तिनिश्चयेन । ईहां चेष्टां ॥ ९ ॥ युक्तस्यावहितचित्तस्य । अनुतिष्ठतोऽर्थप्राप्त्युपायान् । संगत्या दम्योष्ट्रसंबन्धेन । दैवं देवेनेश्वरेण निर्मितम् ॥ १० ॥ उद्यम्योद्यम्य मोक्षार्थमुद्यमं कृत्वा विषमेण कृच्छ्रेण दम्यौ गच्छतः । काकतालीयं दैवकृतं संगमम् । उन्माथः कूटयन्त्रम् । उत्पथेनैव धावतः इति झ. पाठः ॥ ११ ॥ वाशब्द इवार्थे ॥ १२ ॥ उपपद्येत यदि लोकदृष्टान्तेन पौरुषास्तित्वं युज्येत तर्हि फलव्यभिचारात्तदपि दैवायत्तमेवोपपद्यते न स्वातन्त्र्येणेत्यर्थः ॥ १३ ॥ विधित्सानां धनाद्यर्थं प्रवृत्तीनाम् । गतपूर्वः पूर्वं गतः प्राप्तो गतपूर्वः ॥ १७ ॥ कामुककामादिधर्मवत् हे मनः निर्विद्य वैराग्यं प्राप्य शाम्य शमं गच्छ । निकृतः वञ्चितः प्रवृत्तिनैष्फल्यात् ॥ १८ ॥

मोक्ष्यसे त्यक्ष्यसे ॥ २० ॥ क्रीडनकः क्रीडामृगः । जातु कदाचित् । प्रेष्यतां दास्यम् । कामाभावे कोऽपि कस्यचिदपि प्रेष्यः स्यादित्यर्थः ॥ २१ ॥ अन्तं नाप्नुवन् अतो हेतोस्त्यक्त्वा ॥ २२ ॥ नूनं ते हृदयं कामेति झ. पाठः ॥ २३ ॥ प्रियं जायादि ॥ २४ ॥ नभविष्यसि विनशिष्यसि ॥ २५ ॥ ईहा लिप्सा चेष्टा वा । तदा धनस्य धनायेत्यर्थः । लब्ध्वा चिन्ता नाशभयात् । यथा मृत्युस्तथा दुःखकृत् । श्रमेऽपि फलं संदिग्धम् ॥ २६ ॥ परित्यागे देहस्य परस्वत्वापादनेऽपि न लभते । मार्गति मृगयते ॥ २७ ॥ अनुतर्षुलस्तृष्णावृद्धिकृत् । मद्विलापनं मन्नाशः । एतत् तृष्णावृद्ध्याख्यम् । प्रतिबुद्धोऽस्मि अतो मां संत्यज । हे कामेति शेषः ॥ २८ भूतग्रामो यातु स्वकारणं प्रति । पञ्चत्वमस्त्वित्यर्थः ॥ २९

योगे बुद्धिं श्रुते सत्वं मनो ब्रह्मणि धारयन् ॥ ३१
विहरिष्याम्यनासक्तः सुखी लोकान्निरामयः ।
यथा मां त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ॥ ३२
त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते ।
तृष्णा शोकश्रमाणां हि त्वं काम प्रभवः सदा॥३३
धननाशेऽधिकं दुःखं मन्ये सर्वमहत्तरम् ।
ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनाच्च्युतम् ॥३४
अवज्ञानसहस्रैस्तु दोषाः कष्टतराऽधने ।
धने सुखकला या तु साऽपि दुःखैर्विधीयते ॥ ३५
धनमस्येति पुरुषं पुरो निघ्नन्ति दस्यवः ।
क्लिश्यन्ति विविधैर्दण्डैर्नित्यमुद्वेजयन्ति च ॥ ३६
धनलोलुपता दुःखमिति बुद्धं चिरान्मया ।
यद्यदालम्बसे कामं तत्तदेवानुरुध्यसे ॥ ३७
अतत्त्वज्ञोऽसि बालश्च दुस्तोषोऽपूरणोऽनलः ।
नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ॥ ३८
पाताल इव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि ।
नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ॥ ३९
निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया ।
निर्वृत्तिं परमां प्राप्य नाद्य कामान्विचिन्तये ॥ ४०
अतिक्लेशान्सहामीह नाहं बुध्याम्यबुद्धिमान् ।
निकृतो धननाशेन शये सर्वाङ्गविज्वरः ॥ ४१
परित्यजामि काम त्वां हित्वा सर्वं मनोगतम् ।
न त्वं मया पुनः काम नस्योतेनेव रंस्यसे ॥ ४२
क्षमिष्ये क्षिपमाणानां न हिंसिष्ये विहिंसितः ।
द्वेष्यमुक्तः प्रियं वक्ष्याम्यनादृत्य तदप्रियम् ॥४३
तृप्तः स्वस्थेन्द्रियो नित्यं यथालब्धेन वर्तयन् ।
न सकामं करिष्यामि त्वामहं शत्रुमात्मनः ॥ ४४
निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम् ।
सर्वभूतदयां चैव विद्धि मां शरणागतम् ॥ ४५
तस्मात्कामश्च लोभश्च तृष्णा कार्पण्यमेव च ।
त्यजन्तु मां प्रतिष्ठन्तं सत्वस्थो ह्यस्मि सांप्रतम् ॥४६
प्रहाय कामं लोभं च क्रोधं पारुष्यमेव च ।
नाद्य लोभवशं प्राप्तो दुःखं प्राप्स्याम्यनात्मवान् ४७
यद्यत्त्यजति कामानां तत्सुखस्याभिपूर्यते ।
कामस्य वशगो नित्यं दुःखमेव प्रपद्यते ॥ ४८
कामानुबन्धं नुदते यत्किंचित्पुरुषो रजः ।
कामक्रोधोद्भवं दुःखमहीररतिरेव च ॥ ४९
एष ब्रह्मप्रतिष्ठोऽहं ग्रीष्मे शीतमिव ह्रदम् ।
शाम्यामि परिनिर्वामि सुखमासे च केवलम् ॥ ५०
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ५१
आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्तमम् ।
प्राप्यावध्यं ब्रह्मपुरं राजेव च वसाम्यहम् ॥ ५२
एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः ।
सर्वान्कामान्परित्यज्य प्राप्य ब्रह्म महत्सुखम् ॥५३
द्म्यनाशकृते मङ्किरमृतत्वं किलागमत् ।
अच्छिनत्काममूलं स तेन प्राप परां गतिम् ॥ ५४
अत्राप्युदाहरन्तीमं श्लोकं मोक्षोपसंहितम् ।
गीतं विदेहराजेन जनकेन प्रशाम्यता ॥ ५५
अनन्तमिव मे वित्तं यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ॥ ५६
अत्रैवोदाहरन्तीमं बोध्यस्य पदसंचयम् ।
निर्वेदं प्रति विन्यस्तं तं निबोध युधिष्ठिर ॥ ५७
बोध्यं शान्तमृषिं राजा नाहुषः पर्यपृच्छत ।
निर्वेदाच्छान्तिमापन्नं शास्त्रप्रज्ञानतर्पितम् ॥ ५८
उपदेशं महाप्राज्ञ शमस्योपदिशस्व मे ।

---

योगे विषये बुद्धिं करष्यामीति निश्चयं कुर्वन् श्रुते श्रवणादौ सत्वमेकाग्रचित्तं धारयन् मनश्च ब्रह्मणि धारयन् विहरिष्यामीत्यग्रिमेण संबन्धः ॥३१॥ कष्टतराऽधने इति संधिरार्षः ॥३५॥ धनमस्यास्तीति क्लिश्यन्ति क्लेशयन्ति ॥ ३६ ॥ अनलोऽग्निरिवेत्यर्थः ॥ ३८ ॥ सहामि इतःपूर्वं सोढवानस्मि ॥ ४१ ॥ क्षिपमाणानां धिक्कुर्वताम् ॥ ४३ ॥ सकामं लब्धमनोरथम् । हेकामेति शेषः ॥ ४४ ॥ निर्वृतिं सुखम् । तृप्तिं पूर्णकामताम् ॥ ४५ ॥ प्रतिष्ठन्तं मोक्षाय गन्तुम् ॥ ४६ ॥ प्रहाय स्थितोस्मीति शेषः ॥ ४७ ॥ रजः प्रवर्तको गुणः । तच्च कामेनानुबध्नातीति कामानुबन्धम् । दुःखादिकं च कामाद्युद्भवम् । अत सर्वानर्थमूलं रजस्त्याज्यमित्यर्थः ॥ ४९ ॥ शाम्यामि कर्मभ्यः उपरतिं गच्छामि । परिनिर्वामि निर्दुःखो भवामि ॥ ५० कामूलमविद्याम् ॥ ५४ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं इति झ. पाठः ॥ ५५ ॥ पदसंचयं श्लोकम् । वैराग्य

कां बुद्धिं समनुप्राप्य शान्तश्चरसि निर्वृतः ॥ ५९
बोध्य उवाच ।
उपदेशेन वर्तामि नानुशास्मीह कंचन ।
लक्षणं तस्य वक्ष्येऽहं तत्स्वयं परिमृष्यताम् ॥ ६०
पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने ।
इषुकारः कुमारी च षडेते गुरवो मम ॥ ६१
[*भीष्म उवाच ।
आशा बलवती राजन्नैराश्यं परमं सुखम् ।
आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला ॥ ६२
सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः ।
आमिषस्य परित्यागात्कुररः सुखमेधते ॥ ६३
गृहारम्भो हि दुःखाय न सुखाय कदाचन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ ६४
सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः ।
अद्रोहेणैव भूतानां सारङ्ग इव पक्षिणः ॥ ६५
'अल्पेभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः ।
सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥' ६६
इषुकारो नरः कश्चिदिषावासक्तमानसः ।
समीपेनापि गच्छन्तं राजानं नावबुद्धवान् ॥ ६७
बहूनां कलहो नित्यं द्वयोः संकथनं ध्रुवम् ।
एकाकी विचरिष्यामि कुमारीशङ्खको यथा ॥]६८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

---

## सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

भीष्मेण युधिष्ठिरंप्रति प्रपञ्चस्यानित्यत्वादिज्ञानपूर्वकविरक्तेः सुखहेतुतायां प्रमाणतया प्रह्लादाजगरमुनिसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम् ।
किंच कुर्वन्नरो लोके प्राप्नोति गतिमुत्तमाम् ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ २
चरन्तं ब्राह्मणं कंचित्कल्यचित्तमनामयम् ।
पप्रच्छ राजा प्रह्लादो बुद्धिमान्प्राज्ञसत्तमः ॥ ३
प्रह्लाद उवाच ।
स्वस्थः शक्तो मृदुर्दान्तो निर्विधित्सोऽनसूयकः ।
सुवाग्बहुमतो लोके प्राज्ञश्चरसि बालवत् ॥ ४
नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि ।
नित्यतृप्त इव ब्रह्मन्न किंचिदिव मन्यसे ॥ ५
स्रोतसा ह्रियमाणासु प्रजासु विमना इव ।
धर्मकामार्थकार्येषु कूटस्थ इव लक्ष्यसे ॥ ६
नानुतिष्ठसि धर्मार्थौ न कामे चापि वर्तसे ।
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥ ७
का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा का नु ते मुने ।
क्षिप्रमाचक्ष्व मे ब्रह्मञ्श्रेयो यदिह मन्यसे ॥ ८
भीष्म उवाच ।
अनुयुक्तः स मेधावी लोकधर्मविधानवित् ।
उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ॥ ९
पश्य प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः ।
ह्रासं वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे ॥ १०

---

र्थमुपन्यस्तम् ॥ ५७ ॥ तत् ज्ञाप्यम् ॥ ६० ॥ सारङ्गो भ्रमरस्तस्याऽन्वेषणमनुगमनम् । इष गतौ दिवादिः ॥ ६१ ॥ काचित्कुमारी पित्रादिपरवशा गृहागतानतिथीन्प्रच्छन्नं भोजयितुमिच्छन्ती व्रीहीनवहन्तुं प्रचक्रमे । तस्याः प्रकोष्ठस्थाः शङ्खाश्चुक्रुशुः । सा परेषां सूचना माभूदिति शङ्खान्भङ्क्त्वा एकैकमवशेषितवतीति श्रीमद्भागवते दृष्टान्तोऽयं व्याख्यातः ॥ ६८ ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

आजगरस्याऽजगरवृत्त्या जीवतः ॥ २ ॥ निर्विधित्सो निरारम्भः ॥ ४ ॥ स्रोतसा कामादिवेगेन । कूटस्थो निर्व्यापारः ॥ ६ ॥ इन्द्रियार्थान् गन्धरसादीननादृत्य चरसि तन्निर्वाहमात्रार्थी अश्नासि ॥ ७ ॥ प्रज्ञा तत्त्वदर्शनम् । श्रुतं तन्मूलभूतं शास्त्रम् । वृत्तिस्तदर्थानुष्ठानम् । श्रेयो ममेति शेषः ॥ ८ ॥ अनुयुक्तः पृष्टः । लोकस्य धर्मो जन्मजरादिस्तस्य विधानं कारणं तदभिज्ञः लोकधर्मविधानवित् ॥ ९ ॥ अनिमित्ततः कारणहीनाद्ब्रह्मणः ।

---

* झ. पुस्तके विद्यमाना आशा बलवतीत्यादयः सप्तश्लोका दाक्षिणात्यकोशेषु न दृश्यन्ते परंतु रत्नगर्भव्याख्यायामुदाहृता दृश्यन्ते ।

स्वभावादेव संदृश्या वर्तमानाः प्रवृत्तयः ।
स्वभावनिरताः सर्वाः प्रतिपाद्या न केनचित् ॥ ११
पश्य प्रह्लाद संयोगान्विप्रयोगपरायणान् ।
संचयांश्च विनाशान्तान्न क्वचिद्विदधे मनः ॥ १२
अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः ।
उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते ॥ १३
जलजानामपि ह्यन्तं पर्यायेणोपलक्षये ।
महतामपि कायानां सूक्ष्माणां च महोदधौ ॥ १४
जङ्गमस्थावराणां च भूतानामसुराधिप ।
पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः ॥ १५
अन्तरिक्षचराणां च दानवोत्तमपक्षिणाम् ।
उत्तिष्ठते यथाकालं मृत्युर्बलवतामपि ॥ १६
दिवि संचरमाणानि ह्रस्वानि च महान्ति च ।
ज्योतींष्यपि यथाकालं पतमानानि लक्षये ॥ १७
इति भूतानि संपश्यन्ननुषक्तानि मृत्युना ।
सर्वं सामान्यतो विद्वान्कृतकृत्यः सुखं स्वपे ॥ १८
सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया ।
शये पुनरभुञ्जानो दिवसानि बहून्यपि ॥ १९
आशयन्त्यपि मामन्नं पुनर्बहुगुणं बहु ।
पुनरल्पं पुनस्तोकं पुनर्नैवोपपद्यते ॥ २०
कणं कदाचित्खादामि पिण्याकमपि च ग्रसे ।
भक्षये शालिमांसानि भक्षांश्चोच्चावचान्पुनः ॥ २१
शये कदाचित्पर्यङ्के भूमावपि पुनः शये ।
प्रासादे चापि मे शय्या कदाचिदुपपद्यते ॥ २२
धारयामि च चीराणि शाणक्षौमाजिनानि च ।
महार्हाणि च वासांसि धारयाम्यहमेकदा ॥ २३
न सन्निपतितं धर्म्यमुपभोगं यदृच्छया ।
प्रत्याचक्षे न चाप्येनमनुरुध्ये सुदुर्लभम् ॥ २४
अचलमनिधनं शिवं विशोकं
शुचिमतुलं विदुषां मते प्रविष्टम् ।
अनभिमतमसेवितं विमूढै-
र्व्रतमिदमाजगरं शुचिश्चरामि ॥ २५
अचलितमतिरच्युतः स्वधर्मा-
त्परिमितसंसरणः परावरज्ञः ।
विगतभयकषायलोभमोहो
व्रतमिदमाजगरं शुचिश्चरामि ॥ २६
अनियतफलभक्ष्यभोज्यपेयं
विधिपरिणामविभक्तदेशकालम् ।
हृदयसुखमसेवितं कदर्यै-
र्व्रतमिदमाजगरं शुचिश्चरामि ॥ २७
इदमिदमिति तृष्णयाऽभिभूतं
जनमनवाप्तधनं विषीदमानम् ।
निपुणमनुनिशाम्य तत्त्वबुद्ध्या
व्रतमिदमाजगरं शुचिश्चरामि ॥ २८
बहुविधमनुदृश्य चार्थहेतोः
कृपणमिहार्यमनार्यमाश्रयं तम् ।
उपशमरुचिरात्मवान्प्रशान्तो
व्रतमिदमाजगरं शुचिश्चरामि ॥ २९
सुखमसुखमलाभमर्थलाभं
रतिमरतिं मरणं च जीवितं च ।
विधिनियतमवेक्ष्य तत्त्वतोऽहं
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३०
अपगतभयरागमोहदर्पो
धृतिमतिबुद्धिसमन्वितः प्रशान्तः ।
उपगतफलभोगिनो निशाम्य
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३१
अनियतशयनासनः प्रकृत्या
दमनियमव्रतसत्यशौचयुक्तः ।
अपगतफलसंचयः प्रहृष्टो
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३२

---

पश्य आलोचय ॥१०॥ तस्मादहं मनो न क्वचिद्विषये विदधे धारयामि तद्विनाशे शोकोत्पत्तिं जानन् ॥ १२ ॥ पार्थिवानां पृथिवीस्थानाम् ॥ १५ ॥ आजगरीं वृत्तिं प्रपञ्चयति सुमहान्तमित्यादिना ॥ १९ ॥ आशयन्ति भोजयन्ति ॥ २० ॥ कषायः रागद्वेषादिः ॥ २६ ॥ धनप्राप्तौ कर्मैव कारणं न पौरुषमिति धिया निशाम्यालोच्य ॥ २८ ॥ अर्थहेतोरनार्यं नीचम् । अर्यं स्वामिनमाश्रयति यः कृपणो दीनजनस्तमनुदृश्योपशमरुचिः । आत्मवान् जितचित्तः ॥ २९ ॥ विधिनियतं दैवाधीनम् ॥ ३० ॥ मतिरालोचनम् । बुद्धिर्निश्चयः । उपगतं समीपागतं फलं प्रियं येषां तान् भोगिनः सर्पान् अजगरान्

अपगतमसुखार्थमीहनार्थै-
रुपगतबुद्धिरवेक्ष्य चात्मसंस्थम्।
तृषितमनियतं मनो नियन्तुं
व्रतमिदमाजगरं शुचिश्चरामि॥ ३३
न हृदयमनुरुध्यते मनो वा
प्रियसुखदुर्लभतामनित्यतां च।
तदुभयमुपलक्षयन्निवाहं
व्रतमिदमाजगरं शुचिश्चरामि॥ ३४
बहु कथितमिदं हि बुद्धिमद्भिः
कविभिरपि प्रथयद्भिरात्मकीर्तिम्।
इदमिदमिति तत्रतत्र हन्त
स्वपरमतैर्गहनं प्रतर्कयद्भिः॥ ३५
तदिदमनुनिशाम्य विप्रपातं
पृथगभिपन्नमिहाबुधैर्मनुष्यैः।
अनवसितमनन्तदोषपारं
नृषु विहरामि विनीतदोषतृष्णः॥ ३६
भीष्म उवाच।
अजगरचरितं व्रतं महात्मा
य इह नरोऽनुचरेद्विनीतरागः।
अपगतभयलोभमोहमन्युः
स खलु सुखी विचरेदिमं विहारम्॥ ३७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः॥ १७७॥

---

## अष्टसप्तत्यधिकशततमोऽध्यायः॥ १७८॥

**भीष्मेण युधिष्ठिरंप्रति इतरनिषेधपूर्वकं प्रज्ञायाः सुखसाधनतायां प्रमाणतया सृगालकाश्यपसंवादानुवादः॥ १॥**

युधिष्ठिर उवाच।
बान्धवाः कर्म वित्तं वा प्रज्ञा वेह पितामह।
नरस्य का प्रतिष्ठा स्यादेतत्पृष्टो वदस्व मे॥ १
भीष्म उवाच।
प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः।
प्रज्ञा निःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम्॥२
प्रज्ञया प्रापितार्थो हि बलिरैश्वर्यसंक्षये।
प्रह्लादो नमुचिर्मङ्किस्तस्याः किं विद्यते परम्॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर॥ ४
वैश्यः कश्चिदृषिसुतं काश्यपं संशितव्रतम्।
रथेन पातयामास श्रीमान्दृप्तस्तपस्विनम्॥ ५
आर्तः स पतितः क्रुद्धस्त्यक्त्वाऽऽत्मानमथाब्रवीत्
मरिष्याम्यधनस्येह जीवितार्थो न विद्यते॥ ६
तथा मुमूर्षुमासीनमकूजन्तमचेतसम्।
इन्द्रः सृगालरूपेण बभाषे क्षुब्धमानसम्॥ ७
मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः।
मनुष्यत्वे च विप्रत्वं सर्व एवाभिनन्दति॥ ८
मनुष्यो ब्राह्मणश्चासि श्रोत्रियश्चासि काश्यप।
सुदुर्लभमवाप्यैतन्न दोषान्मर्तुमर्हसि॥ ९
सर्वे लाभाः साभिमाना इति सत्यवती श्रुतिः।
संतोषणीयरूपोऽसि लोभाद्यदभिमन्यसे॥ १०
अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः।
[अतीव स्पृहये तेषां येषां सन्तीह पाणयः॥] ११
पाणिमद्भ्यः स्पृहाऽस्माकं यथा तव धनस्य वै।
न पाणिलाभादधिको लाभः कश्चन विद्यते॥१२

---

निशाम्य दृष्ट्वा। फलभोगिन इति मध्यमपदलोपः॥ ३१॥ प्रकृत्या दमादियुक्तः अपगतफलसंचयस्त्यक्तयोगफलसमूहः॥ ३२॥ एषणाविषयैः पुत्रवित्तादिभिर्हेतुभिः। असुखार्थं परिणामे दुःखार्थम्। अपगतमात्मनः पराङ्मुखं तृषितमनियतं च मनोऽवेक्ष्य। उपगतबुद्धिर्लब्धालोकः। आत्मसंस्थमात्मनि संस्था समाप्तिर्यस्य तत्तथा नियन्तुं व्रतं चरामि॥ ३३॥

सप्तसप्तत्यधिकशततमोऽध्यायः॥ १७७॥

रथेन रथघातेन। वैश्यः कश्चिदृषिं दान्तं इति ट. पाठः॥५॥ आत्मानं धैर्यं त्यक्त्वा॥ ६॥ अकूजन्तं मूर्च्छया निःशब्दम्॥ ७॥ श्रोत्रियोऽधीतवेदः। दोषात् मौढ्यात्॥ ९॥ यत्संतोषणीयं रूपं त्वं स्वस्याऽभिमन्यसेऽवमन्यसे॥ १०॥

अपाणित्वाद्वयं ब्रह्मन्कण्टकं नोद्धरामहे ।
जन्तूनुच्चावचानङ्गे दशतो न कषाम वा ॥ १३
अथ येषां पुनः पाणी देवदत्तौ दशाङ्गुली ।
उद्धरन्ति कृमीनङ्गाद्दशतो निकषन्ति च ॥ १४
वर्षाहिमातपानां च परित्राणानि कुर्वते ।
चेलमन्नं सुखं शय्यां निवातं चोपभुञ्जते ॥ १५
अधिष्ठाय च गां लोके भुञ्जते वाहयन्ति च ।
उपायैर्बहुभिश्चैव वश्यानात्मनि कुर्वते ॥ १६
ये खल्वजिह्वाः कृपणा अल्पप्राणा अपाणयः ।
सहन्ते तानि दुःखानि दिष्ट्या त्वं न तथा मुने॥१७
दिष्ट्या त्वं न शृगालो वै न कृमिर्न च मूषकः ।
न सर्पो न च मण्डूको न चान्यः पापयोनिजः॥१८
एतावताऽपि लाभेन तोष्टुमर्हसि काश्यप ।
किं पुनर्योऽसि सत्वानां सर्वेषां ब्राह्मणोत्तमः॥१९
इमे मां कृमयोऽदन्ति येषामुद्धरणाय वै ।
नास्ति शक्तिरपाणित्वात्पश्यावस्थामिमां मम २०
अकार्यमिति चैवेमं नात्मानं संत्यजाम्यहम् ।
नातः पापीयसीं योनिं पतेयमपरामिति ॥ २१
मध्ये वै पापयोनीनां सृगालीयामहं गतः ।
पापीयस्यो बहुतरा इतोऽन्याः पापयोनयः ॥२२
जात्यैवैके सुखितराः सन्त्यन्ये भृशदुःखिताः ।
नैकान्तं सुखमेवेह क्वचित्पश्यामि कस्यचित् ॥२३
मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यनन्तरम् ।
राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि ॥२४
भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च दैवतम् ।
देवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ॥२५
न तृप्तिः प्रियलाभेऽस्ति तृष्णा नाद्भिः प्रशाम्यति ।
संप्रज्वलति सा भूयः समिद्भिरिव पावकः ॥२६
अस्त्येव त्वयि शोकोऽपि हर्षश्चापि तथा त्वयि ।
सुखदुःखे तथा चोभे तत्र का परिदेवना ॥ २७
परिच्छिद्यैव कामानां सर्वेषां चैव कर्मणाम् ।
मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे ॥ २८
न द्वितीयस्य शिरसश्छेदनं विद्यते क्वचित् ।
न च पाणेस्तृतीयस्य यन्नास्ति न ततो भयम् ॥२९
न खल्वप्यरसज्ञस्य कामः क्वचन जायते ।
संस्पर्शाद्दर्शनाद्वापि श्रवणाद्वापि जायते ॥ ३०
न त्वं स्मरसि वारुण्या लट्वाकानां च पक्षिणाम् ।
ताभ्यां चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित्
यानि चान्यानि भूतेषु भक्ष्यभोज्यानि काश्यप ।
येषामभुक्तपूर्वाणि तेषामस्मृतिरेव ते ॥ ३२
अप्राशनमसंस्पर्शमसंदर्शनमेव च ।
पुरुषस्यैष नियमो मन्ये श्रेयो न संशयः ॥ ३३
पाणिमन्तो बलवन्तो धनवन्तो न संशयः ।
मनुष्या मानुषैरेव दासत्वमुपपादिताः ॥ ३४
वधबन्धपरिक्लेशैः क्लिश्यन्ते च पुनःपुनः ।
ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ॥३५
अपरे बाहुबलिनः कृतविद्या मनस्विनः ।
जुगुप्सितां च कृपणां पापवृत्तिमुपासते ॥ ३६
उत्सहन्ते च ते वृत्तिमन्यामप्युपसेवितुम् ।
स्वकर्मणा तु नियतं भवितव्यं तु तत्तथा ॥ ३७
न पुल्कसो न चण्डाल आत्मानं त्यक्तुमिच्छति ।
तया तुष्टः स्वया योन्या मायां पश्यस्व यादृशीम् ३८
दृष्ट्वा कुणीन्पक्षहतान्मनुष्यानामयाविनः ।
सुसंपूर्णः स्वया योन्या लब्धलाभोऽसि काश्यप ३९
यदि ब्राह्मणदेहस्ते निरातङ्को निरामयः ।
अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ॥४०
न केनचित्प्रवादेन सत्येनैवापहारिणा ।
धर्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि ॥ ४१

---

न कषाम न नाशयाम ॥ १३ ॥ निकषन्ति कण्डूयनेन ॥१४॥ अधिष्ठायाध्यास्य । गां पृथिवीम् । बलीवर्दादि वा । आत्मनि आत्मभोगनिमित्तम् ॥ १६ ॥ अल्पप्राणा अल्पबलाः ॥ १७ ॥ अदन्ति दशन्ति ॥ २० ॥ एके देवाद्याः । अन्ये पश्वाद्याः ॥ २३ ॥ यदि कदाचिद्भवेस्तथापि न तुष्येरिति योज्यम् ॥ २५ ॥ कामादीनां मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव शरीरपञ्जरे परिच्छिद्य निरुध्य स्थितस्य भयं नास्तीत्युत्तरेण संबन्धः ॥ २८ ॥ वारुण्या मद्यस्य लट्वाख्यपक्षिमांसस्य च । कर्मणि षष्ठ्यौ । त्वं न स्मरसि ब्राह्मणत्वेन तव तद्रसग्रहाभावात् ॥ ३१ ॥ येषां यान्यभुक्तपूर्वाणि ॥ ३२ ॥ असंतुष्टः स्वया वृत्त्या मायां प्रेक्षस्व यादृशीम् । इति ट. ड. थ. पाठः ॥ ३८ ॥ पक्षहतानर्धाङ्गवातादिना नष्टान् । आमयाविनो रोगाक्रान्तान् ॥ ३९ ॥ प्रवादेन कलङ्केन । अपहारिणा जातिभ्रंशकरेण ॥ ४१ ॥

सुशीघ्रमपि धावन्तं विधानमनुधावति ।
शेते सह शयानेन येनयेन यथाकृतम् ॥ ९
उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।
करोति कुर्वतः कर्म छायेवाऽनुविधीयते ॥ १०
येनयेन यथा यद्यत्पुरा कर्म समार्जितम् ।
तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना ॥ ११
स्वकर्मफलनिक्षेपं विधानपरिरक्षितम् ।
भूतग्राममिमं कालः समन्तात्परिकर्षति ॥ १२
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ १३
संमानश्चावमानश्च लाभालाभौ क्षयोदयौ ।
प्रवृत्तानि विवर्तन्ते विधानान्ते पुनःपुनः ॥ १४
आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भुज्यते पौर्वदेहिकम् ॥ १५
बालो युवा च वृद्धश्च यत्करोति शुभाशुभम् ।
तस्यांतस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ १६
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १७
संक्लिन्नमग्रतो वस्त्रं पश्चाच्छुध्यति वारिणा ।
'दुष्कर्मापि तथा पश्चात्पूयते पुण्यकर्मणा ॥ १८
तपसा तप्यते देहस्तपसा विन्दते महत् ।'
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तरम् ॥ १९
दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिद्ध्यन्ते मनोरथाः ॥ २०
शकुनीनामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा धर्मविदां गतिः ॥ २१
अलमन्यैरुपालम्भैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

---

## अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

युधिष्ठिरेण जगत्सृष्टिप्रकारं पृष्टेन भीष्मेण भरद्वाजाय भृगूदितसृष्टिप्रकारकथनारम्भः ॥ १ ॥ भृगुणा भरद्वाजं प्रति महत्तत्त्वादिपद्मपर्यन्तसृष्टिप्रकारकथनम् ॥ २ ॥ तथा पद्मकर्णिकाभूतमेरुस्थेन ब्रह्मणा लोकसृष्टिकथनम् ॥ ३ ॥

---

युधिष्ठिर उवाच ।
कुतः सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ।
प्रलये च किमभ्येति तन्मे ब्रूहि पितामह ॥ १
ससागरः सगगनः सशैलः सबलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥ २
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ॥ ३
कीदृशो जीवतां जीवः क वा गच्छन्ति ये मृताः ।
अस्माल्लोकादमुं लोकं सर्वं शंसतु नो भवान् ॥ ४

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भृगुणाऽभिहितं श्रेष्ठं भरद्वाजाय पृच्छते ॥ ५
कैलासशिखरे दृष्ट्वा दीप्यमानमिवौजसा ।
भृगुं महर्षिमासीनं भरद्वाजोऽन्वपृच्छत ॥ ६
ससागरः सगगनः शशैलः सबलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥ ७
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ॥ ८

---

भक्तसिक्थवन्नष्टबीजभावाः । पुत्तिका मशकाः । कारण सुखादिहेतुः ॥ ८ ॥ विधानं प्राक्कर्म धावन्तं यतमानमनुधावति फलप्रदानेनानुसरति । येन येन यथा कृतं तं तं प्रति तथा प्राक्कर्म फलदमफलदं च भवति ॥९॥ कर्म प्राचीनं छायेवानुविधीयते पुरुषेण स्वस्यानुकूलं क्रियते ॥ १० ॥ नित्यमपरिहार्यम् ॥ ११ ॥ स्वकर्मणः फलं स्वर्गपश्वादि तदेव निक्षेपरूपं विधानेन कर्मजन्यादृष्टेन रक्षितं भूतग्रामं प्रति कालः समनुकर्षति ॥ १२ ॥ संक्लिन्नं मलेनेति शेषः ॥ १८ ॥ उपालम्भैराक्षेपवाक्यैः । व्यतिक्रमैरपराधैः । अलमुक्तैः पर्याप्तम् । पेशलं कौशलयुक्तं यथास्यात्तथा ॥ २२ ॥ एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

कथमिति सृष्टिप्रकारप्रश्नः । विभक्तयो विभागाः ॥ ३ ॥ जीवतां प्राणिनाम् ॥ ४ ॥

यदि ब्रह्मञ्शृणोष्येतच्छ्रद्दधासि च मे वचः ।
वेदोक्तस्यैव धर्मस्य फलं मुख्यमवाप्स्यसि ॥ ४२
स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय ।
सत्यं दमं च दानं च स्पर्धिष्ठा मा च केनचित् ॥४३
ये केचन स्वध्ययनाः प्राप्ता यजनयाजनम् ।
कथं ते चानुशोचेयुर्ध्यायेयुर्वाऽप्यशोभनम् ॥४४
इच्छन्तस्ते विहाराय सुखं महदवाप्नुयुः ।
येऽनुजाताः सुनक्षत्रे सुतिथौ सुमुहूर्तके ।
यज्ञदानप्रजेहायां यतन्ते शक्तिपूर्वकम् ॥ ४५
नक्षत्रेष्वासुरेष्वन्ये दुस्तिथौ दुर्मुहूर्तजाः ।
सम्पतन्त्यासुरीं योनिं यज्ञप्रसववर्जिताः ॥ ४६
अहमासं पण्डितको हैतुको वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥४७
हेतुवादान्प्रवदिता वक्ता संसत्सु हेतुमत् ।
आक्रोष्टा चातिवक्ता च ब्रह्मवाक्येषु च द्विजान् ॥४८
नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः ।
तस्येयं फलनिर्वृत्तिः सृगालत्वं मम द्विज ॥ ४९
अपि जातु तथा तत्स्यादहोरात्रशतैरपि ।
यदहं मानुषीं योनिं सृगालः प्राप्नुयां पुनः ॥ ५०
संतुष्टश्चाप्रमत्तश्च यज्ञदानतपोरतः ।
ज्ञेयं ज्ञाता भवेयं वै वर्ज्यं वर्जयिता तथा ॥ ५१
भीष्म उवाच ।
ततः स मुनिरुत्थाय काश्यपस्तमुवाच ह ।
अहो बतासि कुशलो बुद्धिमांश्चेति विस्मितः ॥५२
समवैक्षत तं विप्रो ज्ञानदीर्घेण चक्षुषा ।
ददर्श चैनं देवानां देवमिन्द्रं शचीपतिम् ॥ ५३
ततः संपूजयामास काश्यपो हरिवाहनम् ।
अनुज्ञातस्तु तेनाथ प्रविवेश स्वमालयम् ॥ ५४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

## एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

भीष्मेण युधिष्ठिरंप्रति तपोदानादिसत्कर्मणामपि परम्परया सुखसाधनताकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च ।
गुरूणां वाऽपि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
'यथाऽसिंश्च तथा तत्र जानीयां नृपसत्तम ।
दुष्कर्तारो यथा लोके यत्कुर्वन्ति तथा शृणु ॥' २
आत्मनाऽनर्थयुक्तेन पापे निविशते मनः ।
स्वकर्म कलुषं कृत्वा दुःखे महति धीयते ॥ ३
दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकारिणः ॥ ४
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।
श्रद्दधानाश्च दान्ताश्च सत्वस्थाः शुभकारिणः ॥ ५
व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥६
प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणम् ॥ ७
पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ८

विहाराय यथोचितेन यज्ञादिना विहर्तुम् ॥ ४५ ॥ पण्डितकः कुत्सितः पण्डितः हेतुमदेव वक्ता न श्रुतिमत् । आक्रोष्टा परुषवाक् ॥ ४८ ॥ सर्वशङ्की स्वर्गादृष्टादिसद्भावेऽपि शङ्कावान् ॥ ४९ ॥ हरिवाहनमिन्द्रम् ॥ ५४ ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

यद्यस्ति सफलमित्यध्याहारः । दत्तेष्टे गृहस्थस्य धर्मः । तपो वानप्रस्थस्य । गुरुशुश्रूषा ब्रह्मचारिणः ॥ १ ॥ नास्तिक्यमनर्थः तेन युक्तेनात्मना कुशास्त्रजनिताध्यवसायेन । कलुषं पापम् ॥ ३ ॥ मृतेभ्यः प्रमृतं यान्तीति झ. पाठः । तत्र मृतेभ्यो मरणेभ्यः । प्रमृतं मरणान्तरम् । अविलम्बेन पुनःपुनर्म्रियन्त इत्यर्थः ॥ ४ ॥ धनाढ्याः शुभकारिण इति झ. पाठः ॥ ५ ॥ हस्तावववाप्येते प्रवेश्येते यस्मिन्निति हस्तावापो हस्तनिगडस्तेन निगडिताः सन्तो नास्तिका राष्ट्राद्दूरीकृता व्यालादिमत्सु वनेषु गच्छन्तीत्यर्थः ॥ ६ ॥ आतिथेयमतिथिहितं मृष्टान्नदानादि । आत्मवतां जितचित्तानाम् । हस्तदक्षिणं हस्तोपलक्षितेन तत्कर्तव्येन दानादिना कर्मणा दक्षिणमनुकूलम् ॥ ७ ॥ पुलाका गर्तोष्मणा

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
परलोकमिमं चापि सर्वं शंसितुमर्हसि ॥ ९
एवं स भगवान्पृष्टो भरद्वाजेन संशयम् ।
ब्रह्मर्षिर्ब्रह्मसंकाशः सर्वं तस्मै ततोऽब्रवीत् ॥ १०
भृगुरुवाच ।
'नारायणो जगन्मूर्तिरन्तरात्मा सनातनः ।
कूटस्थोऽक्षर अव्यक्तो निर्लेपो व्यापकः प्रभुः॥११
प्रकृतेः परतो नित्यमिन्द्रियैरप्यगोचरः ।
स सिसृक्षुः सहस्रांशादसृजत्पुरुषं प्रभुः ॥' १२
मानसो नाम यः पूर्वो विश्रुतो वै महर्षिभिः ।
अनादिनिधनो देवस्तथाऽभेद्योऽजरामरः ॥ १३
अव्यक्त इति विख्यातः शाश्वतोऽथाक्षयोऽव्ययः ।
यतः सृष्टानि भूतानि तिष्ठन्ति च म्रियन्ति च१४
सोऽसृजत्प्रथमं देवो महान्तं नाम नामतः ।
महान्ससर्जाहंकारं स चापि भगवानथ ।
आकाशमिति विख्यातं सर्वभूतधरः प्रभुः ॥ १५
आकाशादभवद्वारि सलिलादग्निमारुतौ ।
अग्निमारुतसंयोगात्ततः समभवन्मही ॥ १६
ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयंभुवा ।
तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो निधिः ॥ १७
अहंकार इति ख्यातः सर्वभूतात्मभूतकृत् ।
ब्रह्मा वै स महातेजा य एते पञ्चधातवः ॥ १८
शैलास्तस्यास्थिसंज्ञास्तु मेदो मांसं च मेदिनी ।
समुद्रास्तस्य रुधिरमाकाशमुदरं तथा ॥ १९
पवनश्चैव निःश्वासस्तेजोऽग्निर्निम्नगाः सिराः ।
दिवाकरश्च सोमश्च नयने तस्य विश्रुते ॥ २०
नभश्चोर्ध्वं शिरस्तस्य क्षितिः पादौ भुजौ दिशः ।
दुर्विज्ञेयो ह्यनन्तात्मा सिद्धैरपि न संशयः ॥ २१
स एष भगवान्विष्णुरनन्त इति विश्रुतः ।
सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्मभिः ॥ २
अहंकारस्य यः स्रष्टा सर्वभूतोद्भवाय वै ।
यतः समभवद्विश्वं पृष्टोऽहं यदिह त्वया ॥ २
भरद्वाज उवाच ।
गगनस्य दिशां चैव भूतलस्यानिलस्य च ।
कान्यत्र परिमाणानि संशयं छिन्धि मेऽर्थितः २
भृगुरुवाच ।
अनन्तमेतदाकाशं सिद्धचारणसेवितम् ।
रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते ॥२
ऊर्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः ।
तत्र देवाः स्वयं दीप्ताः सूर्यभासोऽग्निवर्चसः ॥२
ते चाप्यन्तं न पश्यन्ति नभसः प्रथितौजसः ।
दुर्गमत्वादनन्तत्वादिति वै विद्धि मानद ॥ २
उपर्युपरि तैर्देवैः प्रज्वलद्भिः स्वयंप्रभैः ।
निरुद्धमेतदाकाशमप्रमेयं सुरैरपि ॥ २
पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमः स्मृतम् ।
तमसोऽन्ते जलं प्राहुर्जलस्यान्तेऽग्निरेव च ॥ २
रसातलान्ते सलिलं जलान्ते पन्नगाधिपाः ।
तदन्ते पुनराकाशमाकाशान्ते पुनर्जलम् ॥ ३
एवमन्तं हि नभसः प्रमाणं सलिलस्य च ।
अग्निमारुतयोश्चैव दुर्ज्ञेयं दैवतैरपि ॥ ३
अग्निमारुततोयानां वर्णाः क्षितितलस्य च ।
आकाशसदृशा ह्येते भिद्यन्तेऽतत्वदर्शनात् ॥३
पठन्ति चैव मुनयः शास्त्रेषु विविधेषु च ।
त्रैलोक्यसागरे चैव प्रमाणं विहितं यथा ॥ ३
अदृश्यत्वादगम्यत्वात्कः प्रमाणमुदाहरेत् ।
सिद्धानां देवतानां च यदा परिमिता गतिः ।
तदा गौणमनन्तस्य नामानन्तेति विश्रुतम् ॥३
नामधेयानुरूपस्य मानसस्य महात्मनः ।

---

अग्नीषोमौ तु चन्द्रार्कौ नयने इति झ. पाठः । तत्र अग्नीषोमावेव चन्द्रार्काविल्यन्वयः ॥ २० ॥ भूतोद्भवाय भूतोत्पत्तये । स्रष्टाहंकारस्येति संबन्धः । यतो विश्वं समभवद्यच्च त्वयाहं पृष्टस्तत्तुभ्यमुक्तमिति शेषः ॥ २३ ॥ छिन्धि तत्वत इति झ. पाठः ॥ २४ ॥ आश्रयाश्चतुर्दशभुवनानि ॥ २५ ॥ गतेः सूर्यरश्मिगतेरपि ऊर्ध्वमधस्ताच्च चन्द्रादित्यौ न दृश्येते ॥ २६ ॥ तेऽपि सूर्यादिगतेरूर्ध्वाधस्था अपि ॥ २७ ॥ वर्णाः स्वरूप आकाशसदृशाः आकाशवदनन्ताः । अतत्वदर्शनात् पृथिव दीनां तत्वानवगमात् । भिद्यन्ते परिच्छिन्नवदाभान्ति ॥ ३ कथतर्हि पञ्चाशत्कोटियोजनविस्तारायामादिरूपं परिमाणं पठ त्यत आह पठन्तीति ॥ ३३ ॥ अदृश्याय त्वगम्याय इति पाठः ॥ ३४ ॥

यदा तु दिव्यं यद्रूपं ह्रसते वर्धते पुनः ।
कोऽन्यस्तद्वेदितुं शक्तो योपि स्यात्तद्विधोऽपरः ॥ ३५
ततः पुष्करतः सृष्टः सर्वज्ञो मूर्तिमान्प्रभुः ।
ब्रह्मा धर्ममयः पूर्वः प्रजापतिरनुत्तमः ॥ ३६
भरद्वाज उवाच ।
पुष्कराद्यदि संभूतो ज्येष्ठं भवति पुष्करम् ।
ब्रह्माणं पूर्वजं चाह भवान्संदेह एव मे ॥ ३७
भृगुरुवाच ।
मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता ।
तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ॥ ३८
कर्णिका तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः ।
तस्य मध्ये स्थितो लोकान्सृजते जगतः प्रभुः ।
मानसांश्च तथा देवान्भूतानि विविधानि च ॥ ३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

## एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

भरद्वाजंप्रति भृगुणा मेरुस्थब्रह्मणा जलादिभूम्यन्तसृष्टिप्रकारकथनम् ॥ १ ॥

भरद्वाज उवाच ।
मेरुमध्ये स्थितो ब्रह्मा कथं स ससृजे प्रजाः ।
एतन्मे सर्वमाचक्ष्व याथातथ्येन पृच्छतः ॥ १
भृगुरुवाच ।
प्रजाविसर्गं पूर्वं स मानसो मनसाऽसृजत् ।
संरक्षणार्थं भूतानां सृष्टं प्रथमतो जलम् ॥ २
यत्प्राणः सर्वभूतानां वर्धन्ते येन च प्रजाः ।
परित्यक्ताश्च नश्यन्ति तेनेदं सर्वमावृतम् ॥ ३
पृथिवी पर्वता मेघा मूर्तिमन्तश्च ये परे ।
सर्वं तद्वारुणं ज्ञेयमापस्तस्तम्भिरे हि ताः ॥ ४
भरद्वाज उवाच ।
कथं सलिलमुत्पन्नं कथं चैवाग्निमारुतौ ।
कथं वा मेदिनी सृष्टेत्यत्र मे संशयो महान् ॥ ५
भृगुरुवाच ।
ब्रह्मकल्पे पुरा ब्रह्मन्ब्रह्मर्षीणां समागमे ।
लोकसंभवसन्देहः समुत्पन्नो महात्मनाम् ॥ ६
तेऽतिष्ठन्ध्यानमालम्ब्य मौनमास्थाय निश्चलाः ।
त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः ॥ ७
तेषां ब्रह्ममयी वाणी सर्वेषां श्रोत्रमागमत् ।
दिव्या सरस्वती तत्र संबभूव नभस्तलात् ॥ ८
पुराऽस्तमितनिःशब्दमाकाशमचलोपमम् ।
नष्टचन्द्रार्कपवनं प्रसुप्तमिव संबभौ ॥ ९
ततः सलिलमुत्पन्नं तमसीवापरं तमः ।
तस्माच्च सलिलोत्पीडात्समजायत मारुतः ॥ १०
यथा भाजनमच्छिद्रं निःशब्दमिह लक्ष्यते ।
तच्चाम्भसा पूर्यमाणं सशब्दं कुरुतेऽनिलः ॥ ११
तथा सलिलसंरुद्धे नभसोन्ते निरन्तरे ।
भित्त्वाऽर्णवतलं वायुः समुत्पतति घोषवान् ॥ १२
स एष चरते वायुरर्णवोत्पीडसंभवः ।
आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति ॥ १३
तस्मिन्वाय्वम्बुसंघर्षे दीप्ततेजा महाबलः ।
प्रादुर्बभूवोर्ध्वशिखः कृत्वा निस्तिमिरं नभः ॥ १४
अग्निः पवनसंयुक्तः खात्समुत्क्षिपते जलम् ।
सोऽग्निमारुतसंयोगाद्घनत्वमुपपद्यते ॥ १५
तस्याकाशान्निपतितः स्नेहस्तिष्ठति योऽपरः ।
स संघातत्वमापन्नो भूमित्वमनुगच्छति ॥ १६
रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा ।
भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते ॥ १७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

ब्रह्मा चतुर्मुखः ॥३६॥ अशीत्यधिकशततमोऽध्यायः ॥१८०॥

यत् जलम् । तेन जलेन ॥३॥ वारुणं वरुणदेवतासंबन्धादाप्यमित्यर्थः । मूर्तिमत् मनुष्यपश्वादिविग्रहवत् । आप्यत्वे हेतुः । आपस्तस्तम्भिरे यत आपस्तम्भं घनीभावं पृथिव्यादिरूपं प्राप्ताः ॥४॥ ब्रह्मकल्पे ब्रह्मप्रथमदिने । लोकानां संभव उत्पत्तिस्तत्र विषये संदेहः ॥ ६ ॥ तेषां धर्ममयीति ट. ड. पाठः ॥ ८ ॥ सरस्वतीमेवाह पुरेति । स्तिमितमाकाशमनन्तमिति झ. पाठः ॥ ९ ॥ एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

यदा तु दिव्यं यद्रूपं ह्रसते वर्धते पुनः ।
कोऽन्यस्तद्वेदितुं शक्तो योपि स्यात्तद्विधोऽपरः॥३५
ततः पुष्करतः सृष्टः सर्वज्ञो मूर्तिमान्प्रभुः ।
ब्रह्मा धर्ममयः पूर्वः प्रजापतिरनुत्तमः ॥ ३६
भरद्वाज उवाच ।
पुष्कराद्यदि संभूतो ज्येष्ठं भवति पुष्करम् ।
ब्रह्माणं पूर्वजं चाह भवान्संदेह एव मे ॥ ३७
भृगुरुवाच ।
मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता ।
तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ॥ ३८
कर्णिका तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः ।
तस्य मध्ये स्थितो लोकान्सृजते जगतः प्रभुः ।
मानसांश्च तथा देवान्भूतानि विविधानि च ॥ ३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

## एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

भरद्वाजंप्रति भृगुणा मेरुस्थब्रह्मणा जलादिभूम्यन्तसृष्टिप्रकारकथनम् ॥ १ ॥

भरद्वाज उवाच ।
मेरुमध्ये स्थितो ब्रह्मा कथं स ससृजे प्रजाः ।
एतन्मे सर्वमाचक्ष्व याथातथ्येन पृच्छतः ॥ १
भृगुरुवाच ।
प्रजाविसर्गं पूर्वं स मानसो मनसाऽसृजत् ।
संरक्षणार्थं भूतानां सृष्टं प्रथमतो जलम् ॥ २
यत्प्राणः सर्वभूतानां वर्धन्ते येन च प्रजाः ।
परित्यक्ताश्च नश्यन्ति तेनेदं सर्वमावृतम् ॥ ३
पृथिवी पर्वता मेघा मूर्तिमन्तश्च ये परे ।
सर्वं तद्वारुणं ज्ञेयमापस्तस्तम्भिरे हि ताः ॥ ४
भरद्वाज उवाच ।
कथं सलिलमुत्पन्नं कथं चैवाग्निमारुतौ ।
कथं वा मेदिनी सृष्टेत्यत्र मे संशयो महान् ॥ ५
भृगुरुवाच ।
ब्रह्मकल्पे पुरा ब्रह्मन्ब्रह्मर्षीणां समागमे ।
लोकसंभवसन्देहः समुत्पन्नो महात्मनाम् ॥ ६
तेऽतिष्ठन्ध्यानमालम्ब्य मौनमास्थाय निश्चलाः ।
त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः ॥ ७
तेषां ब्रह्ममयी वाणी सर्वेषां श्रोत्रमागमत् ।
दिव्या सरस्वती तत्र संबभूव नभस्तलात् ॥ ८
पुराऽस्तमितनिःशब्दमाकाशमचलोपमम् ।
नष्टचन्द्रार्कपवनं प्रसुप्तमिव संबभौ ॥ ९
ततः सलिलमुत्पन्नं तमसीवापरं तमः ।
तस्माच्च सलिलोत्पीडात्समजायत मारुतः ॥ १०
यथा भाजनमच्छिद्रं निःशब्दमिह लक्ष्यते ।
तच्चाम्भसा पूर्यमाणं सशब्दं कुरुतेऽनिलः ॥ ११
तथा सलिलसंरुद्धे नभसोन्ते निरन्तरे ।
भित्त्वाऽर्णवतलं वायुः समुत्पतति घोषवान् ॥ १२
स एष चरते वायुरर्णवोत्पीडसंभवः ।
आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति ॥ १३
तस्मिन्वाय्वम्बुसंघर्षे दीप्ततेजा महाबलः ।
प्रादुर्बभूवोर्ध्वशिखः कृत्वा निस्तिमिरं नभः ॥ १४
अग्निः पवनसंयुक्तः खात्समुत्क्षिपते जलम् ।
सोऽग्निमारुतसंयोगाद्घनत्वमुपपद्यते ॥ १५
तस्याकाशान्निपतितः स्नेहस्तिष्ठति योऽपरः ।
स संघातत्वमापन्नो भूमित्वमनुगच्छति ॥ १६
रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा ।
भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते ॥ १७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

ब्रह्मा चतुर्मुखः ॥३६॥ अशीत्यधिकशततमोऽध्यायः ॥१८०॥

यत् जलम् । तेन जलेन ॥३॥ वारुणं वरुणदेवतासंबन्धादाप्यमित्यर्थः । मूर्तिमत् मनुष्यपश्वादिविग्रहवत् । आप्यत्वे हेतुः । आपस्तस्तम्भिरे यत आपस्तम्भं घनीभावं पृथिव्यादिरूपं प्राप्ताः ॥४॥ ब्रह्मकल्पे ब्रह्मप्रथमदिने । लोकानां संभव उत्पत्तिस्तत्र विषये संदेहः ॥ ६ ॥ तेषां धर्ममयीति ट. ड. पाठः ॥ ८ ॥ सरस्वतीमेवाह पुरेति । स्तिमितमाकाशमनन्तमिति झ. पाठः ॥ ९ ॥ एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

भूमेर्गन्धगुणान्वेत्ति रसं चाद्भ्यः शरीरवान् ।
ज्योतेः पश्यति रूपाणि स्पर्शं वेत्ति च वायुतः ।
'शब्दं शृणोति च तदैवाकाशात्तु शरीरवान् ॥ २६
गन्धः स्पर्शो रसो रूपं शब्दश्चात्र गुणाः स्मृताः ।
तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान्गुणान् २७
इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ।
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः ॥ २८
ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना ।
शब्दः स्पर्शश्च रूपं च रसश्चापि गुणाः स्मृताः ॥२९
रसज्ञानं तु वक्ष्यामि तन्मे निगदतः शृणु ।
रसो बहुविधः प्रोक्तः सूरिभिः प्रथितात्मभिः ॥३०
मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ॥ ३१
शब्दः स्पर्शश्च रूपं च त्रिगुणं ज्योतिरुच्यते ।
ज्योतिः पश्यति रूपाणि रूपं च बहुधा स्मृतम् ।
ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽणुवृत्तवान् ॥ ३२
शुक्लः कृष्णस्तथा रक्तः पीतो नीलारुणस्तथा ।
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदुदारुणः ।
एवं द्वादशविस्तारो ज्योतीरूपगुणः स्मृतः ॥३३
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरित्युत ।
वायव्यस्तु गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ॥३४
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ।
तथा खरो मृदू रूक्षो लघुर्गुरुतरोऽपि च ।
एवं द्वादशधा स्पर्शो वायव्यो गुण उच्यते ॥ ३५
तत्रैकगुणमाकाशं शब्द इत्येव तत्स्मृतम् ।
तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् ॥३६
षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा ।
पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान् ॥ ३७
एष सप्तविधः प्रोक्तः शब्द आकाशसंभवः ।
ऐश्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु ॥ ३८
[मृदङ्गभेरीशङ्खानां स्तनयित्नो रथस्य च ।
यः कश्चिच्छ्रूयते शब्दः प्राणिनो प्राणिनोऽपि वा ।
एतेषामेव सर्वेषां विषये संप्रकीर्तितः ॥ ३९
एवं बहुविधाकारः शब्द आकाशसंभवः ।
आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह ॥] ४०
अव्याहतैश्चेतयते न वेत्ति विषमस्थितैः ।
आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु धातुभिः ४१
आपोऽग्निर्मारुतश्चैव नित्यं जाग्रति देहिषु ।
मूलमेते शरीरस्य व्याप्य प्राणानिह स्थिताः ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

## त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

भरद्वाजंप्रति भृगुणा शरीरे प्राणापानादीनां कार्यविशेषनिरूपणम् ॥ १ ॥

भरद्वाज उवाच ।
पार्थिवं धातुमाश्रित्य शारीरोऽग्निः कथं भवेत् ।
अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ १
भृगुरुवाच ।
वायोर्गतिमहं ब्रह्मन्कीर्तयिष्यामि तेऽनघ ।
प्राणिनामनिलो देहान्यथा चेष्टयते बली ॥ २
श्रितो मूर्धानमग्निस्तु शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ॥ ३
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।
मनो बुद्धिरहंकारो भूतानि विषयाश्च सः ॥ ४
एवं त्विह स सर्वत्र प्राणेन परिपाल्यते ।
कोष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ ५
बस्तिमूलं गुदं चैव पावकं समुपाश्रितः ।
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ॥ ६

भूमेर्भूम्या घ्राणरूपया । अद्भ्य इति रसनेन ॥ २६ ॥ पार्थिवः पृथिव्याश्रितो मुख्यो गुणः ॥ २८ ॥ ज्योतिः पृथिव्यादिरूपम् । वायुना त्वगिन्द्रियेण । गुणा अप्रधानभूताः एवं जलादावप्येकैको मुख्य इतरेऽप्रधाना इति द्रष्टव्यम् ॥ २९ ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

पृष्ठतस्तु समानेनेति ट. थ. पाठः ॥ ५ ॥

प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुरध्यात्मकुशला जनाः ॥ ७
संधिष्वपि च सर्वेषु सन्निविष्टस्तथाऽनिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ ८
धातुष्वग्निस्तु विततः समानोऽग्निः समीरितः ।
रसान्धातूंश्च दोषांश्च वर्तयन्नवतिष्ठते ॥ ९
अपानप्राणयोर्मध्ये प्राणापानसमाहितः ।
समन्वितस्त्वधिष्ठानं सम्यक्पचति पावकः ॥ १०
आस्यं हि पायुसंयुक्तमन्ते स्याद्गुदसंज्ञितम् ।
स्रोतस्तस्मात्प्रजायन्ते सर्वस्रोतांसि देहिनाम् ॥ ११
प्राणानां सन्निपाताच्च सन्निपातः प्रजायते ।
ऊष्मा सोऽग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् १२
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ १३
पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयः स्मृतः ।
नाभिमध्ये शरीरस्य सर्वे प्राणाः समाश्रिताः ॥ १४
प्रसृता हृदयात्सर्वास्तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः ॥ १५
एष मार्गोऽथ योगानां येन गच्छन्ति तत्पदम् ।
जितक्लमासना धीरा मूर्धन्यात्मानमादधन् ॥ १६
एवं सर्वेषु विहितः प्राणापानेषु देहिनाम् ।
तस्मिन्योऽवस्थितो नित्यमग्निः स्थाल्यामिवाहितः ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

## चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

भरद्वाजेन भृगुंप्रति सयुक्तिकं संघातान्यजीवपक्षाक्षेपः ॥ १ ॥

भरद्वाज उवाच ।
यदि प्राणयते वायुर्वायुरेव विचेष्टते ।
श्वसित्याभाषते चैव तस्माज्जीवो निरर्थकः ॥ १
यदूष्मभाव आग्नेयो वह्निना पच्यते यदि ।
अग्निर्जरयते चैतत्तस्माज्जीवो निरर्थकः ॥ २
जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते ।
वायुरेव जहात्येनमूष्मभावश्च नश्यति ॥ ३
यदि वायुमयो जीवः संश्लेषो यदि वायुना ।
वायुमण्डलवद्दृश्येद्गच्छन्सह मरुद्गणैः ॥ ४
श्लेष्मं वा यदि वा जीवः सह तेन प्रणश्यति ।
महार्णववियुक्तत्वादन्यत्सलिलभाजनम् ॥ ५
यत्क्षिपेत्सलिलं कूपे प्रदीपं वा हुताशने ।
तन्नश्यत्युभयं तद्वज्जीवो वातानलात्मकः ॥ ६
पञ्च साधारणे ह्यस्मिञ्शरीरे जीवितं कुतः ।
तेषामन्यतरत्यागाच्चतुर्णां नास्ति संग्रहः ॥ ७
नश्यन्त्यापो ह्यनाधाराद्वायुरुच्छ्वासनिग्रहात् ।
नश्यते कोष्ठभेदात्खमग्निर्नश्यत्यभोजनात् ॥ ८
व्याधिव्रणपरिक्लेशैर्मेदिनी चैव शीर्यते ।
पीडितेऽन्यतमे ह्येषां संघातो याति पञ्चताम् ॥ ९
तस्मिन्पञ्चत्वमापन्ने जीवः किमनुधावति ।
किं वेदयति वा जीवः किं शृणोति ब्रवीति च ॥ १०
एषा गौः परलोकस्थं तारयिष्यति मामिति ।

---

समन्वितः समानेनेति ट. ड. थ. पाठः ॥ १० ॥ पायुपर्यन्तमिति झ. पाठः ॥ ११ ॥ हृदयात्सर्वे इति झ. ट. पाठः ॥ १५ ॥ एष मार्गोऽथ युक्तानामिति ट. पाठः ॥ १६ ॥ तस्मिन्समिध्यते नित्यमिति घ. झ. पाठः । यो व्यज्यत इति ट. पाठः ॥ १७ ॥ त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

जन्तोर्देहेन्द्रियबुद्धिसंघातस्य । प्रमीयमाणस्य नश्यमानस्य । नैवोपलभ्यते पलालपृथक्करणे बीजमिव । तस्माद्वायुवियोग एव मरणम् । जन्तोः प्रकीर्यमाणस्येति थ. पाठः ॥ ३ ॥ वायुमयो वायुप्रधानो वायोरन्यः । वायुमण्डलवद्वात्याचक्रवद्वायुना सह दृश्यः स्यादित्यर्थः । यदि वातोपमो जीव इति ट. पाठः ॥४॥ संश्लेषो यदि वातेन यदि तस्मात्प्रणश्यतीतिझ.पाठः । तत्र यदि वातेन जीवस्य संश्लेषोऽस्ति तस्माच्च जीवादन्यो वातः पञ्चत्वदशायां यदि प्रणश्यति तर्हि यथा महार्णवे क्षिप्तं जलभाजनं सलिलापगमे दृश्यते तद्वद्वायुसंश्लिष्टो जीवो वायोरपगमे दृश्येतेत्यर्थः ॥ ५ ॥ क्षिप्रं प्रविश्य नश्येत यथा नश्यत्यसौ तथेति घ. पाठः ॥ ६ ॥ पञ्चधारणके इति । तेषामन्यतराभावाच्चतुर्णां नास्ति संशयः । इति च. झ. पाठः ॥ ७ ॥

योदत्त्वा म्रियते जन्तुः सा गौः कं तारयिष्यति ११
गौश्च प्रतिग्रहीता च दाता चैव समं यदा ।
इहैव विलयं यान्ति कुतस्तेषां समागमः ॥ १२
विहगैरुपभुक्तस्य शैलाग्रात्पतितस्य च ।
अग्निना चोपयुक्तस्य कुतः संजीवनं पुनः ॥ १३
छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति ।
बीजान्यस्य प्ररोहन्ति मृतः क्व पुनरेष्यति ॥ १४
बीजमात्रं पुरा सृष्टं यदेतत्परिवर्तते ।
मृतामृताः प्रणश्यन्ति बीजाद्बीजं प्रवर्तते ॥ १५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

## पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

भृगुणा भरद्वाजंप्रति संघातातिरिक्तजीवसमर्थनपूर्वकं तन्निरूपणम् ॥ १ ॥

भृगुरुवाच ।
न प्रणाशोऽस्ति जीवानां दत्तस्य च कृतस्य च ।
याति देहान्तरं प्राणी शरीरं तु विशीर्यते ॥ १
न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति ।
यथा समित्सु दग्धासु न प्रणश्यति पावकः ॥ २
भरद्वाज उवाच ।
अग्नेर्यथा समिद्धस्य यदि नाशो न विद्यते ।
इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते ॥ ३
नश्यतीत्येव जानामि शान्तमग्निमनिन्धनम् ।
गतिर्यस्य प्रमाणं वा संस्थानं वा न दृश्यते ॥ ४
भृगुरुवाच ।
'जीवस्य चेन्धनाग्नेश्च सदा नाशो न विद्यते ।'
समिधामुपयोगान्ते सन्नेवाग्निर्न दृश्यते ।
आकाशानुगतत्वाद्धि दुर्ग्रहः स निराश्रयः ॥ ५
तथा शरीरसंत्यागे जीवो ह्याकाशमाश्रितः ।
न गृह्यते तु सूक्ष्मत्वाद्यथा ज्योतिरनिन्धनम् ॥ ६
प्राणान्धारयते योऽग्निः स जीव उपधार्यताम् ।
वायुसंधारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ॥ ७
तस्मिन्नष्टे शरीराग्नौ शरीरं तदचेतनम् ।
पतितं याति भूमित्वमयनं तस्य हि क्षितिः ॥ ८
जङ्गमानां हि सर्वेषां स्थावराणां तथैव च ।
आकाशं पवनोऽन्वेति ज्योतिस्तमनुगच्छति ।
तेषां त्रयाणामेकत्वं द्वयं भूमौ प्रतिष्ठितम् ॥ ९
यत्र खं तत्र पवनस्तत्राग्निर्यत्र मारुतः ।
अमूर्तयस्ते विज्ञेया आपो मूर्तास्तथा क्षितिः ॥ १०
भरद्वाज उवाच ।
यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु ।
जीवः किंलक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ ॥ ११
पञ्चात्मके पञ्चरतौ पञ्चविज्ञानसंयुते ।
शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशम् ॥ १२
मांसशोणितसंघाते मेदःस्नाय्वस्थिसंचये ।
भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते ॥ १३
यद्यजीवं शरीरं तु पञ्चभूतसमन्वितम् ।
शारीरे मानसे दुःखे कस्तां वेदयते रुजम् ॥ १४
शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत् ।
महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥ १५

मृतस्य पुनरागमनाभावेऽपि संसारप्रवाहस्याविच्छेदे दृष्टान्तमाह छिन्नस्येति ॥ १४ ॥ दार्ष्टान्तिकमाह बीजमात्रमिति । शरीरमूलं तु बीजमात्रं प्रत्यक्षदृष्टं रेतएव नत्वदृष्टमक्लृप्तत्वात् । प्रवर्तते देहरूपेण परिणमते । तथाच बीजरुहतरुवन्नष्टानां नाश एवेतरेषामुद्भव इति । तस्मान्नित्यं समिध्यते इत्यनुपपन्नम् ॥ १५ ॥ चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

एतद्दूषयति न प्रणाश इति ॥ १ ॥ अनुपलब्धेरग्नेरपि नाश एवेत्यर्थः ॥ ३ ॥ दग्धेन्धनाग्निवत्सन्नेवात्मा देहनाशे सति सौक्ष्म्यान्नोपलभ्यत इत्यर्थः ॥ ५ ॥ जीवो ह्याकाशवत्स्थित इति झ. ड. पाठः ॥ ६ ॥ अमूर्तयः अदृश्याः । अतस्तेषामप्यभावावधारणं दुःशकं किमुत सूक्ष्मस्य जीवस्येति भावः ॥१०॥ शरीरिषु शरीराकारपरिणामवत्सु संघातेषु ॥ ११ ॥ पञ्चभूतात्मके पञ्चविषयरतौ । पञ्चविज्ञानानि ज्ञानकारणानि ॥ १२ ॥ मास्तु देहेन्द्रियसंघातश्चेतनो यस्मिन्व्यग्रे सति संघातः सन्निकृष्टोऽपि शब्दादीन्न गृह्णाति तन्मन एव आत्मास्त्वित्याह चतुर्भिः शृणोतीत्यादिभिः ॥ १५ ॥

सर्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा ।
मनसि व्याकुले तस्मिन्पश्यन्नपि न पश्यति ॥ १६
न पश्यति न चाघ्राति न शृणोति न भाषते ।
न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः ॥ १७
हृष्यति क्रुध्यते कोऽत्र शोचत्युद्विजते च कः ।
इच्छति ध्यायति द्वेष्टि वाचमीरयते च कः ॥ १८
भृगुरुवाच ।
न पञ्चसाधारणमत्र किंचि-
च्छरीरमेको वहतेऽन्तरात्मा ।
स वेत्ति गन्धांश्च रसाञ्श्रुतीश्च
स्पर्शं च रूपं च गुणाश्च येऽन्ये ॥ १९
पञ्चात्मके पञ्चगुणप्रदर्शी
स सर्वगात्रानुगतोऽन्तरात्मा ।
स वेत्ति दुःखानि सुखानि चात्र
तद्विप्रयोगात्तु न वेत्ति देही ॥ २०
यदा न रूपं न स्पर्शो नोष्मभावश्च पञ्चके ।
तदा शान्ते शरीराग्नौ देहं त्यक्त्वा न नश्यति ॥ २१
अम्मयं सर्वमेवेदमापो मूर्तिः शरीरिणाम् ।
तत्रात्मा मानसो ब्रह्मा सर्वभूतेषु लोककृत् ॥ २२
[आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः ।
तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः ॥] २३
आत्मानं तं विजानीहि सर्वलोकविपाचकम् ।
स तस्मिन्संश्रितो देहे ह्यब्बिन्दुरिव पुष्करे ॥ २४
क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकम् ।
तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् ॥ २५
सचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्रावर्तयद्यो भुवनानि सप्त ॥ २६
न जीवनाशोऽस्ति हि देहभेदे
मिथ्यैतदाहुर्मृत इत्यबुद्धाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धतैवास्य शरीरभेदः ॥ २७
एवं सर्वेषु भूतेषु गूढश्चरति संवृतः ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः २८
तं पूर्वापररात्रेषु युञ्जानः सततं बुधः ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि २९
चित्तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥ ३०
मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते ।
सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चया ॥ ३१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

## षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

भृगुणा भरद्वाजंप्रति सर्वेषां ब्राह्मणत्वाविशेषेपि क्षत्रियादिवर्णविभागस्य तत्तत्स्वैराचारनिबन्धनत्वोक्तिः ॥ १ ॥

भृगुरुवाच ।
असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन् ।
आत्मतेजोभिनिर्वृत्तान्भास्कराग्निसमप्रभान् ॥ १
ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम् ।
आचारं चैव शौचं च सर्गादौ विदधे प्रभुः ॥ २
देवदानवगन्धर्वा दैत्यासुरमहोरगाः ।
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा ॥ ३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
ये चान्ये भूतसङ्घानां संघातास्तांश्च निर्ममे ॥ ४
ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः ।

पञ्चसाधारणं पञ्चेन्द्रियाधारं किंचिन्मनो न श्रूयते किंतु अन्तरात्मा जीव एव वहते धारयति ॥ १९ ॥ तद्विप्रयोगात् तेन मनसा वियोगे ॥ २० ॥ देहं त्यक्त्वा स गच्छति इति ट. पाठः ॥ २१ ॥ सर्वलोकविधायकमिति घ. ङ. थ. पाठः ॥ २४ ॥ क्षेत्रविदं वदन्तीति ट. पाठः ॥ २६ ॥ दशार्धता पञ्चत्वम् । शरीरनाश एव जीवस्य मरणमित्युच्यते ॥ २७ ॥ पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
स्वर्गाय विदधे इति घ. ञ. पाठः ॥ २ ॥ सितः स्वच्छः

वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा ॥ ५
भरद्वाज उवाच ।
चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ॥ ६
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ॥ ७
स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥ ८
जङ्गमानामसङ्ख्येयाः स्थावराणां च जातयः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥ ९
भृगुरुवाच ।
न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्राह्मणाः पूर्वसृष्टा हि कर्मभिर्वर्णतां गताः ॥ १०
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ ११
गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥ १२
हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः १३
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
धर्मो यज्ञक्रिया चैषां नित्यं न प्रतिषिध्यते ॥ १४
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः ॥ १५
ब्राह्मणा ब्रह्मतन्त्रस्थास्तपस्तेषां न नश्यति ।
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ॥ १६
ब्रह्म चैव परं सृष्टं ये तु जानन्ति ते द्विजाः ।
तेषां बहुविधास्त्वन्ये तत्रतत्र द्विजातयः ॥ १७
पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः ।
प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः ॥ १८
प्रजा ब्राह्मणसंस्काराः स्वकर्मकृतनिश्चयाः ।
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः ॥ १९
आदिदेवसमुद्भूता ब्रह्ममूलाक्षयाव्यया ।
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ॥ २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

## सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

भरद्वाजंप्रति भृगुणा ब्राह्मणादिवर्णलक्षणकथनम् । वैराग्यस्य मुक्तिसाधनताकथनं च ॥ १ ॥

भरद्वाज उवाच ।
ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ।
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ॥ १
भृगुरुवाच ।
जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसंपन्नः षट्सु कर्मस्ववस्थितः ॥ २
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥ ३
सत्यं दानमथाद्रोह आनृशंस्यं क्षमा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ ४
क्षत्रजं सेवते कर्म वेदाध्ययनसंगतः ।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥ ५

सत्वगुणः । लोहितो रजोगुणः । पीतकः रजस्तमोव्यामिश्रः । असितः कृष्णः ॥ ५ ॥ इदमाक्षिपति चातुर्वर्ण्यस्येति । वर्णेन जात्या वर्णः सात्विकत्वादिर्यदि विभज्यते तन्नेति शेषः । तत्र हेतुः सर्वेषामिति ॥ ६ ॥ नोऽस्माकं ब्राह्मणानामपि ॥ ७ ॥ जंगमानां पश्वादीनाम् ॥ ९ ॥ ब्राह्मं ब्राह्मणत्वजातिमत् । वर्णतां क्षत्रियादिभावम् ॥ १० ॥ रक्ताङ्गा रजोगुणमयाः ॥ ११ ॥ व्यस्ताः पृथक्कृताः ॥ १४ ॥ चतुरश्चत्वारः । ब्राह्मी वेदमयी ॥ १५ ॥ ब्रह्मतन्त्रं वेदोक्तानुष्ठानम् ॥ १६ ॥ ये न जानन्ति तेऽद्विजाः इति घ. झ. ट. पाठः ॥ १७ ॥ ब्रह्मणि वेदे विहितो ब्राह्मणः संस्कारो यासां ता वेदोक्तसंस्कारवत्यः । अपरेऽर्वाचीना ऋषयः परैः प्राचीनैः सृज्यन्ते ॥ १९ ॥ अक्षया नाशहीना । अव्यया अपचयहीना ॥ २० ॥ षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

विघसं ब्राह्मणादिभुक्तशेषम् ॥ ३ ॥ क्षत्रं हिंसा तदर्थं जातं क्षत्रजं युद्धात्मकं कर्म । आदानं प्रजाभ्यः ॥ ५ ॥

कृषिगोरक्षवाणिज्यं यो विशत्यनिशं शुचिः ।
वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः ॥ ६
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥ ७
शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ ८
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं ज्ञातव्यं तथा चैवात्मसंयमः ॥ ९
वार्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुच्छ्रितौ ॥ १०
नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ ११
यस्य सर्वे समारम्भा निराशाबन्धना द्विज ।
त्यागे यस्य हुतं सर्वं स त्यागी च स बुद्धिमान् ॥ १२
अहिंस्रः सर्वभूतानां मैत्रायणगतिश्चरेत् ।
परिग्रहान्परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः ।
अचलं स्थानमातिष्ठेदिह चामुत्र चोभयोः ॥ १३
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ १४
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ १५
अविस्रम्भे न गन्तव्यं विस्रम्भे धारयेन्मनः ।
मनः प्राणे निगृह्णीयात्प्राणं ब्रह्मणि धारयेत् ॥ १६
निर्वेदादेव निर्वायान्न च किंचिद्विचिन्तयेत् ।
सुखं वै ब्राह्मणो ब्रह्म स वै तेनाधिगच्छति ॥ १७
शौचेन सततं युक्तः सदाचारसमन्वितः ।
सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम् ॥ १८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

## अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

भृगुणा भरद्वाजंप्रति धर्माधर्मयोः सुखदुःखसाधनत्वे प्रतिपादिते कृष्यादीनां स्वर्गानपेक्षणाद्व्यभिचारशङ्किना भरद्वाजेन तदाक्षेपः ॥ १ ॥ भृगुणा मोक्षस्वरूपनिरूपणपूर्वकं निष्कामकर्मणस्तत्साधनत्वमक्षतमिति स्वाभिप्रायाविष्करणम् ॥ २ ॥

भृगुरुवाच ।
सत्यं ब्रह्म तपः सत्यं सत्यं सृजति च प्रजाः ।
सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति ॥ १
अनृतं तमसो रूपं तमसा नीयते ह्यधः ।
तमोग्रस्ता न पश्यन्ति प्रकाशं तमसाऽऽवृतम् ॥ २
स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च ।
सत्यानृतात्तदुभयं प्राप्यते जगतीचरैः ॥ ३
तत्र त्वेवंविधा लोके वृत्तिः सत्यानृते भवेत् ।
धर्माधर्मौ प्रकाशश्च तमो दुःखं सुखं तथा ॥ ४
तत्र यत्सत्यं स धर्मो यो धर्मः स प्रकाशो यः प्रकाशस्तत्सुखमिति । तत्र यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःखमिति ॥ ५
अत्रोच्यते ।
शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः ।
लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः ॥ ६
तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः ।
सुखं ह्यनित्यं भूतानामिह लोके परत्र च ॥ ७
राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते ।
तथा तमोभिभूतानां भूतानां भ्रश्यते सुखम् ॥ ८

---

वाणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः । इति झ. पाठः ॥ ६ ॥ एतत्सत्यादिसप्तकम् । द्विजे त्रैवर्णिके । धर्मएव वर्णविभागे कारणं न जातिरित्यर्थः ॥ ८ ॥ तौ क्रोधलोभौ ॥ १० ॥ आशैव बन्धनं तद्वर्जिता निराशाबन्धनाः समारम्भाः सम्यगारभ्यन्त इति यज्ञादयः । हुतमग्नौ ब्राह्मणे वा दत्तमग्निहोत्रनित्यश्राद्धादि । त्यागे फलत्यागनिमित्तम् । निराशीर्बन्धना द्विजेति घ. झ. ट. पाठः ॥ १२ ॥ मैत्रं मित्रभावस्तदेवायनं परं प्राप्यं स्थानं तत्र गतिर्यस्य सः । स्थानमात्मानमातिष्ठेत् आभिमुख्येन तिष्ठेत् । आत्मध्यानपरो भवेदित्यर्थः ॥ १३ ॥ सङ्गेषु ममेदमिति सङ्गहेतुषु पुत्रदारादिषु ॥ १४ ॥ निर्वेदादेव निर्वाणं न किंचिदपि इति घ. झ. पाठः । निर्वाणादेव निर्वाणम् इति ङ. पाठः ॥ १७ ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

छवृत्तिर्गृहस्थो यः स्वधर्माचरणे रतः । त्यक्तकामसुखारम्भः स्वर्गस्तस्य न दुर्लभः ॥१८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

---

## नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

भृगुणा भरद्वाजंप्रति वानप्रस्थयत्याश्रमयोर्लक्षणकथनम् ॥ १ ॥ तथा हिमवदुत्तरलोकस्य स्वर्गतुल्यत्वप्रतिपादनपूर्वकं सुकृतिप्राप्यत्वकथनं च ॥ २ ॥

---

भृगुरुवाच ।

वानप्रस्थाः खल्वृषिधर्ममनुवर्तन्ते पुण्यानि तीर्थानि नदीप्रस्रवणान्यनुचरन्ति सुविभक्तेष्वरण्येषु मृगमहिषवराहशार्दूलसृमरगजाकीर्णेषु तपस्यन्तोऽनुसंचरन्ति त्यक्तग्राम्यवस्त्राभ्यवहारोपभोगा वन्यौषधिफलमूलपर्णपरिमितविचित्रनियताहाराः स्थानासनिनो भूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः काशकुशचर्मवल्कलसंवृताङ्गाः केशश्मश्रुनखरोमधारिणो नियतकालोपस्पर्शना अस्कन्नकालवलिहोमानुष्ठायिनः समित्कुशकुसुमापहारार्चनसंमार्जनहोमान्तलब्धविश्रामाः शीतोष्ण[वर्ष]पवनविनिष्टप्तविभिन्नसर्वत्वचो विविधनियमयोगचर्यानुष्ठानहृत[परिशुष्क]मांसशोणितत्वगस्थिभूता धृतिपराः सत्त्वयोगाच्छरीराण्युद्वहन्ति ॥ १

भवति चात्र श्लोकः ।

यश्चैतां नियतश्चर्यां ब्रह्मर्षिविहितां चरेत् ।
स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान् ॥ २

परिव्राजकानां पुनराचारः । तद्यथा विमुच्य धनकलत्रपरिबर्हणं सङ्गेष्वात्मनः स्नेहपाशानवधूय परिव्रजन्ति समलोष्टाश्मकाञ्चनास्त्रिवर्गप्रवृत्तेष्वारम्भेष्वसक्तबुद्ध्योऽरिमित्रोदासीनानां तुल्यदर्शनाः स्थावरजङ्गमानां जरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां वाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः पर्वतपुलिनवृक्षमूलदेवतायतनान्यनुचरन्तो वासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्चरात्रिका ग्रामे चैकरात्रिकाः प्रविश्य च प्राणधारणार्थं द्विजातीनां भवनान्यसंकीर्णकर्मणामुपतिष्ठेयुः पात्रपतिताऽयाचितभैक्ष्याः कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति ॥ ३

भवन्ति चात्र श्लोकाः ।

अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ ४

कृत्वाऽग्निहोत्रं स्वशरीरसंस्थं
शारीरमग्निं स्वमुखे जुहोति ।
यो भैक्षचर्योपगतैर्हविर्भि-
श्चिताग्निना प्राप्य स याति लोकान् ॥ ५

मोक्षाश्रमं यः कुरुते यथोक्तं
शुचिः सुसंकल्पितबुद्धियुक्तः ।
अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयते द्विजातिः ॥ ६

भरद्वाज उवाच ।

अस्माल्लोकात्परो लोकः श्रूयते नोपलभ्यते ।
तमहं ज्ञातुमिच्छामि तद्भवान्वक्तुमर्हति ॥ ७

भृगुरुवाच ।

उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ।
पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते ॥ ८

---

उञ्छः कणश आदानं तेन वृत्तिर्जीवनमस्य । कामसुखमारम्भाश्चेतिद्वन्द्वः ॥१८॥ एकोननवत्यधिकशततमोऽध्यायः ॥१८९॥

सुविविक्तेष्वरण्येषु इति झ. ड. थ. पाठः ॥ १ ॥ परिबर्हणं शय्यादिभोगसामग्री । परिव्राजकानां पुनराचारं प्रवदामः इति ड. थ. पाठः । सङ्गेष्वात्मानमवधूय स्नेहपाशान्परित्यजन्ति । इति ट. पाठः । असङ्कीर्णस्थानान्युपतिष्ठेयुरिति ड. थ. पाठः ॥ ३ ॥ विप्रस्तु भैक्ष्योपगतैर्हविर्भिश्चिताग्निनां स व्रजते हि लोकमिति झ. पाठः ॥ ५ ॥ सुसङ्कल्पितमुक्तबुद्धिः इति झ. पाठः ॥ ६ ॥

तत्खलु द्विविधं सुखमुच्यते शारीरं मानसं च । इह खल्वमुष्मिंश्च लोके सर्वारम्भप्रवृत्तयः सुखार्थमभिधीयन्ते न ह्यतः परं त्रिवर्गफलं विशिष्टतरमस्ति स एष काम्यो गुणविशेषो धर्मार्थगुणारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजनार्थं आरम्भः ॥ ९

भरद्वाज उवाच ।

यदेतद्भवताऽभिहितं सुखानां परमार्थस्थितिरिति तन्न गृह्णीमो न ह्येषामृषीणां तपसि स्थितानामप्राप्य एष काम्यो गुणविशेषो न चैनमभिलषन्ति च तपसि श्रूयते त्रिलोककृद्ब्रह्मा प्रभुरेकाकी तिष्ठति । ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति । अपिच भगवान्विश्वेश्वर [ उमापतिः ] काममभिवर्तमानमनङ्गत्वेन नाशमनयत् । तस्माद्ब्रूमो न तु महात्मभिः प्रतिगृहीतोऽयमर्थो नत्वेष तावद्विशिष्टो गुणगण इति । नैतद्भगवान्प्रत्येति भगवतोक्तं सुखानां परमार्थस्थितिरिति लोकप्रवादो हि द्विविधः फलोदयः सुकृतात्सुखमवाप्यते दुष्कृताद्दुःखमिति ॥ १०

भृगुरुवाच ।

अत्रोच्यते । अनृतात्खलु तमः प्रादुर्भूतं ततस्तमोग्रस्ता अधर्ममेवानुवर्तन्ते न धर्मम् । क्रोधलोभमोहमदादिभिरवच्छन्ना न खल्वस्मिँल्लोके नामुत्र सुखमाप्नुवन्ति । विविधव्याधिव्रणरुजोपतापैरवकीर्यन्ते । वधबन्धनिरोधपरिक्लेशादिभिश्च क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते । चण्डवातात्युष्णातिशीतकृतैश्च प्रतिभयैः शारीरैर्दुःखैरुपतप्यन्ते । बन्धुधनविनाशविप्रयोगकृतैश्च मानसैः शोकैरभिभूयन्ते जरामृत्युकृतैश्चान्यैरिति ॥ ११

यदेतैः शारीरैर्मानसैर्दुःखैर्न स्पृश्यते तत्सुखं विद्यात्
न चैते दोषाः स्वर्गे प्रादुर्भवन्ति तत्र खलु भवन्ति ॥
सुसुखः पवनः स्वर्गे गन्धश्च सुरभिस्तथा ।
क्षुत्पिपासाश्रमो नास्ति न जरा न च पातकम् १२
नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम् ।
नरके दुःखमेवाहुः सुखं तु परमं पदम् ॥ १४
पृथिवी सर्वभूतानां जनित्री तद्विधाः स्त्रियः ।
पुमान्प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः ॥ १५
इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा ।
प्रजा विपरिवर्त्तन्ते स्वैः स्वैः कर्मभिरावृताः ॥ १६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

## एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

भृगुणा भरद्वाजंप्रति चतुराश्रमधर्मनिरूपणम् ॥ १ ॥

भरद्वाज उवाच ।
दानस्य किं फलं प्रोक्तं धर्मस्य चरितस्य च ।
तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य वा ॥ १
भृगुरुवाच ।
हुतेन शाम्यते पापं स्वाध्यायैः शान्तिरुत्तमा ।
दानेन भोग इत्याहुस्तपसा सर्वमाप्नुयात् ॥ २
दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च ।
सद्भ्यो यद्दीयते किंचित्तत्परत्रोपतिष्ठते ॥ ३
असद्भ्यो दीयते यत्तु तद्दानमिह भुज्यते ।
यादृशं दीयते दानं तादृशं फलमुच्यते ॥ ४
भरद्वाज उवाच ।
किं कस्य धर्माचरणं किं वा धर्मस्य लक्षणम् ।

लोके वस्तुप्रवृत्तयः इति झ. पाठः ॥ ९ ॥ अनङ्गत्वेन शममनयत् इति झ. पाठः ॥ १० ॥ क्रोधलोभहिंसानृतादिभिरिति चण्डवातात्युष्णेति च झ. पाठः ॥ ११ ॥ प्रजाः समनुवर्तन्ते इति झ. पाठः ॥ १६ ॥ अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

शान्तिरुपरतिः ॥ २ ॥

धर्मः कतिविधो वाऽपि तद्भवान्वक्तुमर्हति ॥ ५
भृगुरुवाच ।
स्वधर्माचरणे युक्ता ये भवन्ति मनीषिणः ।
तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यते ॥ ६
भरद्वाज उवाच ।
यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा ।
तस्य स्वंस्वं समाचारं यथावद्वक्तुमर्हसि ॥ ७
भृगुरुवाच ।
पूर्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः । तत्र गुरुकुलवासमेव प्रथममाश्रममुदाहरन्ति । सम्यग्यत्र शौचसंस्कारनियमव्रतविनियतात्मा उभे सन्ध्ये भास्कराग्निदैवतान्युपस्थाय विहाय निद्रालस्ये गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतान्तरात्मा [त्रिषवणमुपस्पृश्य ब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषानित्यभिक्षाभैक्ष्यादिसर्वनिवेदितान्तरात्मा] गुरुवचननिर्देशानुष्ठानामप्रतिकूलो गुरुप्रसादलब्धस्वाध्यायतत्परः स्यात् ॥ ८
भवति चात्र श्लोकः ।
गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात् ।
तस्य स्वर्गफलावाप्तिः शुध्यते चास्य मानसमिति ९
गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति । तस्य समुदाचारलक्षणं सर्वमनुव्याख्यास्यामः । समावृत्तानां सदाचाराणां सहधर्मचर्याफलार्थिनां गृहाश्रमो विधीयते । धर्मार्थकामावाप्त्यर्थं त्रिवर्गसाधनमपेक्ष्यागर्हितेन कर्मणा धनान्यादाय स्वाध्यायोपलब्धप्रकर्षेण वा ब्रह्मर्षिनिर्मितेन वा । हव्यकव्यनियमाभ्यां दैवतपूजासमाधिप्रसादविध्युपलब्धेन धनेन गृहस्थो गार्हस्थ्यं वर्तयेत् । तद्धि सर्वाश्रमाणां मूलमुदाहरन्ति । गुरुकुलनिवासिनः परिव्राजका ये चान्ये संकल्पितव्रतनियमधर्मानुष्ठायिनस्तेषामप्यत एव भिक्षाबलिसंविभागाः प्रवर्तन्ते ॥ १०
वानप्रस्थानां च द्रव्योपस्कार इति प्रायशः खल्वेते साधवः साधुपथ्याशिनः स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थं पृथिवीं पर्यटन्ति तेषां प्रत्युत्थानाभिगमनाभिवादनानसूयवाक्प्रदानसुखशक्त्यासनसुखशयनाभ्यवहारसत्क्रिया चेति ॥ ११
भवति चात्र श्लोकः ।
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥१२
अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन पितरो वेदविद्याभ्यासश्रवणधारणेन ऋषयः अपत्योत्पादनेन प्रजापतिरिति ॥ १३
श्लोकौ चात्र भवतः ।
वत्सलाः सर्वभूतानां वाच्याः श्रोत्रसुखा गिरः ।
परिवादापवादौ च पारुष्यं चात्र गर्हितम् ॥ १४
अवज्ञानमहंकारो दम्भश्चैव विगर्हितः ।
अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः ॥ १५
अपि चात्र माल्याभरणवस्त्राभ्यङ्गनित्योपभोगनृत्तगीतवादित्रश्रुतिसुखनयनाभिरामदर्शनानां प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचोष्याणामभ्यवहार्याणां विविधानामुपभोगः स्वविहारसंतोषः कामसुखावाप्तिरिति ॥ १६
श्लोकौ चात्र भवतः ।
त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे ।
स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात् ॥ १७

---

चतुर्णामाश्रमाणां धर्मश्चातुराश्रम्यम् ॥ ७ ॥ सिध्यते चास्य मानसं इति झ. पाठः ॥ ९ ॥ समावृत्तानां समापितगुरुकुलवासानां स्नातकानाम् । सहोभौ चरतां धर्ममिति दंपत्योः सहाधिकारिकं धर्मं तच्चर्याफलं पुत्रजन्म ॥ १० ॥ द्रव्योपस्कारो धनवर्जनम् । सुखशक्त्या सुखवत्या शक्त्या ननु देहपीडया । सत्क्रिया च कर्तव्येति शेषः ॥ ११ ॥ निवापेन पितृतर्पणेन ॥ १३ ॥ वात्सल्यात्सर्वभूतेभ्यः इति परितापोपतापश्चेति च. झ. पाठः ॥ १४ ॥

धर्मः कतिविधो वाऽपि तद्भवान्वक्तुमर्हति ॥ ५
भृगुरुवाच ।
स्वधर्माचरणे युक्ता ये भवन्ति मनीषिणः ।
तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यते ॥ ६
भरद्वाज उवाच ।
यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा ।
तस्य स्वंस्वं समाचारं यथावद्वक्तुमर्हसि ॥ ७
भृगुरुवाच ।
पूर्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता ध-
र्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः । तत्र
गुरुकुलवासमेव प्रथममाश्रममुदाहरन्ति । सम्य-
ग्यत्र शौचसंस्कारनियमव्रतविनियतात्मा उभे
सन्ध्ये भास्कराग्निदैवतान्युपस्थाय विहाय नि-
द्रालस्ये गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृ-
तान्तरात्मा [त्रिषवणमुपस्पृश्य ब्रह्मचर्याग्निपरिच-
रणगुरुशुश्रूषानित्यभिक्षाभैक्ष्यादिसर्वनिवेदिता-
न्तरात्मा] गुरुवचननिर्देशानुष्ठानाप्रतिकूलो गु-
रुप्रसादलब्धस्वाध्यायतत्परः स्यात् ॥ ८
भवति चात्र श्लोकः ।
गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात् ।
तस्य स्वर्गफलावाप्तिः शुध्यते चास्य मानसमिति ९
गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति । तस्य स-
मुदाचारलक्षणं सर्वमनुव्याख्यास्यामः । समा-
वृत्तानां सदाचाराणां सहधर्मचर्याफलार्थिनां गृ-
हाश्रमो विधीयते । धर्मार्थकामावाप्त्यर्थं त्रिवर्ग-
साधनमपेक्ष्यागर्हितेन कर्मणा धनान्यादाय स्वा-
ध्यायोपलब्धप्रकर्षेण वा ब्रह्मर्षिनिर्मितेन वा ।
हव्यकव्यनियमाभ्यां दैवतपूजासमाधिप्रसाद-
विध्युपलब्धेन धनेन गृहस्थो गार्हस्थ्यं वर्तयेत् ।
तद्धि सर्वाश्रमाणां मूलमुदाहरन्ति । गुरुकुलनिव
सिनः परिव्राजका ये चान्ये संकल्पितव्रतनिय-
मधर्मानुष्ठायिनस्तेषामप्यत एव भिक्षाबलिसं-
विभागाः प्रवर्तन्ते ॥ १०
वानप्रस्थानां च द्रव्योपस्कार इति प्रायशः खल्वे-
ते साधवः साधुपथ्याशिनः स्वाध्यायप्रसङ्गिन-
स्तीर्थाभिगमनदेशदर्शनार्थं पृथिवीं पर्यटन्ति ते-
षां प्रत्युत्थानाभिगमनाभिवादनानसूयवाक्प्रदा-
नसुखशक्त्यासनसुखशयनाभ्यवहारसत्क्रिया
चेति ॥ ११
भवति चात्र श्लोकः ।
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥१२
अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवा-
पेन पितरो वेदविद्याभ्यासश्रवणधारणेन ऋषयः
अपत्योत्पादनेन प्रजापतिरिति ॥ १३
श्लोकौ चात्र भवतः ।
वत्सलाः सर्वभूतानां वाच्याः श्रोत्रसुखा गिरः ।
परिवादापवादौ च पारुष्यं चात्र गर्हितम् ॥ १४
अवज्ञानमहंकारो दम्भश्चैव विगर्हितः ।
अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः ॥ १५
अपि चात्र माल्याभरणवस्त्राभ्यङ्गनित्योपभोगनृ-
त्तगीतवादित्रश्रुतिसुखनयनाभिरामदर्शनानां प्रा-
प्तिर्भक्ष्यभोज्यलेह्यपेयचोष्याणामभ्यवहार्याणां
विविधानामुपभोगः स्वविहारसंतोषः कामसुखा-
वाप्तिरिति ॥ १६
श्लोकौ चात्र भवतः ।
त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे ।
स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात् ॥ १७

चतुर्णामाश्रमाणां धर्मश्चातुराश्रम्यम् ॥ ७ ॥ सिध्यते चास्य मानसं इति झ. पाठः ॥ ९ ॥ समावृत्तानां समापितगुरुकुलवासानां स्नातकानाम् । सहोभौ चरतां धर्ममिति दंपत्योः सहाधिकारिकं धर्मं तच्चर्याफलं पुत्रजन्म ॥ १० ॥

द्रव्योपस्कारो धनवर्जनम् । सुखशक्त्या सुखवत्या शक्त्या नतु देहपीडया । सत्क्रिया च कर्तव्येति शेषः ॥ ११ ॥ निवापेन पितृतर्पणेन ॥ १३ ॥ वात्सल्यात्सर्वभूतेभ्यः इति परितापोपतापश्चेति च. झ. पाठः ॥ १४ ॥

तन्नग्न्यगारे तथा तीरे ये न कुर्वन्ति ते शुभाः ॥ ३
शौचमावश्यकं कृत्वा देवतानां च तर्पणम् ।
धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं तरेत् ॥ ४
सूर्यं सदोपतिष्ठेत न स्वपेद्भास्करोदये ।
सायंप्रातर्जपेत्सन्ध्यां तिष्ठन्पूर्वां तथेतराम् ॥ ५
पञ्चार्द्रो भोजनं भुञ्ज्यात्प्राङ्मुखो मौनमास्थितः ।
न निन्द्यादन्नभक्ष्यांश्च स्वादुस्वादु च भक्षयेत् ॥ ६
नार्द्रपाणिः समुत्तिष्ठेन्नार्द्रपादः स्वपेन्निशि ।
देवर्षिर्नारदः प्राह एतदाचारलक्षणम् ॥ ७
शोचिष्केशमनड्वाहं देवगोष्ठं चतुष्पथम् ।
ब्राह्मणं धार्मिकं चैव नित्यं कुर्यात्प्रदक्षिणम् ॥ ८
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते ॥ ९
सायंप्रातर्मनुष्याणामशनं वेदनिर्मितम् ।
नान्तरा भोजनं दृष्टमुपवासी तथा भवेत् ॥ १०
होमकाले तथा जुह्वन्नृतुकाले तथा व्रजन् ।
अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ॥ ११
अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतम् ।
तज्जनाः पर्युपासन्ते सत्यं सन्तः समासते ॥ १२
लोष्टमर्दी तृणच्छेदी नखखादी तु यो नरः ।
नित्योच्छिष्टः संकसुको नेहायुर्विन्दते महत् ॥ १३
यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात् ।
भक्षयेन्न वृथामांसं पृष्ठमांसं च वर्जयेत् ॥ १४
स्वदेशे परदेशे वा अतिथिं नोपवासयेत् ।
काम्यकर्मफलं लब्ध्वा गुरूणामुपपादयेत् ॥ १५
गुरूणामासनं देयं कर्तव्यं चाभिवादनम् ।
गुरूनभ्यर्च्य युज्येत आयुषा यशसा श्रिया ॥ १६
नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियम् ।
मैथुनं सततं धर्म्यं गुह्ये चैव समाचरेत् ॥ १७
तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः ।
सर्वमार्यकृतं धर्म्यं वालसंस्पर्शनानि च ॥ १८
दर्शनेदर्शने नित्यं सुखप्रश्नमुदाहरेत् ।
सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम् ॥ १९
देवगोष्ठे गवां मध्ये ब्राह्मणानां क्रियापथे ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥ २०
सायं प्रातश्च विप्राणां पूजनं च यथाविधि ।
पण्यानां शोभते पण्यं कृषीणामृद्ध्यतां कृषिः ।
बहुकारं च सस्यानां वाह्ये वाहो गवां तथा ॥ २१
संपन्नं भोजने नित्यं पानीये तर्पणं तथा ।
सुशृतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा ॥ २२
श्मश्रुकर्मणि संप्राप्ते क्षुते स्नानेऽथ भोजने ।
व्याधितानां च सर्वेषामायुष्यमभिनन्दनम् ॥ २३
प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
सुतैः स्त्रिया च शयनं सह भोज्यं च वर्जयेत् ॥ २४
त्वंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ।
अवराणां समानानामुभयं नैव दुष्यति ॥ २५
हृदयं पापवृत्तानां पापमाख्याति वैकृतम् ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥ २६

शौचं कृत्वा उपस्पृश्य आचम्य नदीं तरेदवगाहेत् । ततस्तर्पणमिति संबन्धः ॥ ४ ॥ जपेत्सावित्रीम् । सन्ध्यामुपलक्ष्य तिष्ठन्नुपतिष्ठेत ॥५॥ पादौ पाणी मुखं चेति पञ्च आर्द्राणि यस्य । भोजनमन्नम् ॥६॥ शुचिदेशमनड्वाहं इति धार्मिकं चैत्यं इति च झ. पाठः ॥८॥ सामान्यं साधारणम् । पाकभेदं न कुर्यादित्यर्थः ॥ ९ ॥ तथा कुर्वन् यथाकालभोजी उपवासफलं लभेतेत्यर्थः ॥ १० ॥ ब्राह्मणभुक्तावशिष्टं मातुर्हृदयमिव हितकरं कृतं धात्रा तद्ये उपासते ते सत्यं ब्रह्म समासते आसादयन्ति ॥१२॥ संकसुकः कामलोभादिवशः ॥ १३ ॥ वृथामांसमसंस्कृतमांसम् ॥ १४ ॥ धर्म्यं ऋतुकालिकम् । गुह्ये रहसि ॥ १७ ॥ हृदयं रहस्यम् । तीर्थं गुरुः । शुचिरग्निः । आर्यकृतं शिष्टाचरितम् । वालं गोपुच्छम् । सर्वमार्यकृतं चौक्ष्यमिति झ. पाठः ॥ १८ ॥ प्रदिष्टं कर्तव्यत्वेनोपदिष्टम् ॥ १९ ॥ दक्षिणं पाणिमुद्धरेत् यज्ञोपवीती भवेत् ॥ २० ॥ विप्राणां पूजनमेवोत्तमं पण्य त्तमा कृषिश्च तद्वत् दृष्टफलमित्यर्थः । सस्यानां धान्यानां ब कारं बहुलीकरणं च तदेव गवामिन्द्रियाणां वाह्ये प्राप्ये । वा प्रापणम् । दिव्यस्त्र्यन्नपानादीष्टप्राप्तिरपि विप्राणां पूजनमेव पण दिवदेष्टव्यमित्यर्थः ॥ २१ ॥ पूजनप्रकारमाह संपन्नमिति भोजने दीयमाने संपन्नमिति ब्रूयाद्दाता । सुसंपन्नमिति प्र ग्रहीता । एवमुत्तरत्र ॥ २२ ॥ संप्राप्ते कृते सति । विप्रा मभिनन्दनं वन्दनादिना संतोषणं कार्यमिति शेषः ॥ २३ प्रत्यादित्यमादित्याभिमुखो न मेहेत न मूत्रमुत्सृजेत् । श त्पुरीषम् । पुत्रैस्त्रिया च सुहृदा सह भुक्तं च वर्जयेत् इति पाठः ॥ २४ ॥ वैकृतं नेत्रादिविकारः । पापं हृदयमाख्याति गूहमानाः पापम् ॥ २६ ॥

इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः ।
निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥ ५१
सृजते हि गुणान्सत्वं क्षेत्रज्ञः परिपश्यति ।
संप्रयोगस्तयोरेष सत्वक्षेत्रज्ञयोर्ध्रुवः ॥ ५२
आश्रयो नास्ति सत्वस्य क्षेत्रज्ञस्य च कश्चन ।
सत्वं मनः संसृजते न गुणान्वै कदाचन ॥ ५३
रश्मींस्तेषां स मनसा यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ॥ ५४
त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ।
सर्वभूतात्मभूस्तस्मात्स गच्छेदुत्तमां गतिम् ॥ ५५
यथा वारिचरः पक्षी सलिलेन न लिप्यते ।
एवमेव कृतप्रज्ञो भूतेषु परिवर्तते ॥ ५६
एवं स्वभावमेवैतत्स्वबुद्ध्या विहरेन्नरः ।
अशोचन्नप्रहृष्यंश्च चरेद्विगतमत्सरः ॥ ५७
स्वभावसिद्ध्या युक्तस्तु स नित्यं सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः ॥ ५८
प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।
प्रत्यक्षेण परोक्षं तदनुमानेन सिध्यति ॥ ५९
एवमेकेऽध्यवस्यन्ति निवृत्तिरिति चापरे ।
उभयं संप्रधार्यैतद्व्यवस्येत यथामति ॥ ६०
इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढम् ।
विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥ ६१
मलिनाः प्राप्नुयुः शुद्धिं यथा पूर्णां नदीं नराः ।
अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ॥ ६२
महानद्या हि पारज्ञस्तप्यते न तदन्यथा ।
न तु तप्यति तत्त्वज्ञः फले ज्ञाते तरत्युत ॥ ६३
एवं ये विदुराध्यात्मं केवलं ज्ञानमुत्तमम् ॥ ६४
एतां बुद्ध्वा नरः सर्वां भूतानामागतिं गतिम् ।
अवेक्ष्य च शनैर्बुद्ध्या लभते शममुत्तमम् ॥ ६५
त्रिवर्गो यस्य विदितः प्रेक्ष्य तं स विमुच्यते ।
अन्वीक्ष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ ६६
न चात्मा शक्यते द्रष्टुमिन्द्रियेषु विभागशः ।
तत्रतत्र विसृष्टेषु दुर्वार्येष्वकृतात्मभिः ॥ ६७
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धिलक्षणम् ।
प्रतिगृह्य च निह्नोति ह्यन्यथा च प्रदृश्यते ॥ ६८
न सर्पति च यं प्राहुः सर्वत्र प्रतिहन्यते ।
धूमेन चाप्रसन्नोऽग्निर्यथाऽर्के न प्रवर्तयेत् ॥ ६९
धिष्ण्याधिपे प्रसन्ने तु स्थितिमेतां निरीक्षते ।
अतिक्षूराच्च सूक्ष्मत्वात्प्रस्थानं न प्रकाशते ॥ ७०
प्रपद्य तच्छ्रुताह्नानि चिन्मयं स्वीकृतं विना ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ ७१

न भवति विदुषां ततो भयं
यदविदुषां सुमहद्भयं भवेत् ।
न हि गतिरधिकास्ति कस्यचि-
त्सति हि गुणे प्रवदन्त्यतुल्यताम् ॥ ७२
यः करोत्यनभिसन्धिपूर्वकं
तच्च निर्णुदति यत्पुरा कृतम् ।
नाप्रियं तदुभयं कुतः प्रियं
तस्य तज्जनयतीह सर्वतः ॥ ७३
लोकमातुरमसूयते जन-
स्तस्य तज्जनयतीह सर्वतः ।
लोक आतुरजनान्विराविण-
स्तत्तदेव बहु पश्य शोचतः ।
तत्र पश्य कुशलानशोचतो
ये विदुस्तदुभयं पदं सताम् ॥ ७४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

## त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

भीष्मेण युधिष्ठिरंप्रति ध्यानयोगकथनम् ॥ १ ॥

भीष्म उवाच ।
हन्त वक्ष्यामि ते पार्थ ध्यानयोगं चतुर्विधम् ।

बुद्धिमोहमयं दृढमिति थ. ध. पाठः॥६१॥ पारज्ञस्तप्यते न चरन्यथेति ध. पाठः । पारज्ञास्तरन्ते न तदन्यथेति ट. थ. पाठः
॥ ६३ ॥ द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्तीह महर्षयः॥ १
यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः।
महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः॥ २
नावर्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः।
जन्मदोषपरिक्षीणाः स्वभावे पर्युपस्थिताः॥ ३
निर्द्वन्द्वा नित्यसत्त्वस्था विमुक्तिं नित्यमश्रिताः।
असङ्गीन्यविवादीनि मनःशान्तिकराणि च॥ ४
तत्र ध्यानेन संश्लिष्टमेकाग्रं धारयेन्मनः।
तत्र च ध्यानसंरोधादथ ज्ञानी भवत्युत॥ ५
चतुर्विधेषु भावेषु योऽर्थसक्तः सदैव हि।
तज्ज्ञात्वा वास्तवं तेषामर्थेषु परिवर्तते।
पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः॥ ६
शब्दं न विन्देच्छ्रोत्रेण त्वचा स्पर्शं न वेदयेत्।
रूपं न चक्षुषा विद्याज्जिह्वया न रसांस्तथा॥ ७
घ्रेयाण्यपि च सर्वाणि जह्याद्घ्राणेन योगवित्।
पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान्॥ ८
ततो मनसि संसृज्य पञ्चवर्गं विचक्षणः।
समादध्यान्मनो भ्रान्तमिन्द्रियैः सह पञ्चभिः॥९
विसंचारि निरालम्बं पञ्चद्वारं चलाचलम्।
पूर्वे ध्यानपदे धीरः समादध्यान्मनो नरः॥ १०
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम्।
एष ध्यानपथः पूर्वो मया समनुवर्णितः॥ ११
तस्य तत्पूर्वसंरुद्धमात्मषष्ठं मनोऽन्तरा।
स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरे यथा॥ १२
जलबिन्दुर्यथा लोलः पर्णस्थः सर्वतश्चलः।
एवमेवास्य तच्चित्तं भ्रमति ध्यानवर्त्मनि॥ १३
समाहितं क्षणं किंचिद्ध्यानवर्त्मनि तिष्ठति।
पुनर्वायुपथं प्राप्तं मनो भवति वायुवत्॥ १४
अनिर्वेदो गतक्लेशो गततन्द्रीरमत्सरः।
समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित्॥१५
विचारश्च विवेकश्च वितर्कश्चोपजायते।
मुनेः समादधानस्य प्रथमं ध्यानमादितः॥ १६
मनसा क्लिश्यमानस्तु समाधानं च कारयेत्।
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवात्मनो हितम्॥ १७
पांसुभस्मकरीषाणां यथा वै राशयश्चिताः।
सहसा वारिणा सिक्ता न यान्ति परिभावनम्॥१८
किंचित्स्निग्धं यथा च स्याच्छुष्कचूर्णमभावितम्।
क्रमशस्तु शनैर्गच्छेत्सर्वं तत्परिभावनम्॥ १९
एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत्।
संहरेत्क्रमशश्चैनं स सम्यक्प्रशमिष्यति॥ २०
स्वयमेव मनश्चैवं पञ्चवर्गं च भारत।
पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति॥२१
न तत्पुरुषकारेण न च दैवेन केनचित्।
सुखमेष्यति तत्तस्य न भवन्ति विपत्तयः॥ २२
सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि।
गच्छन्ति योगिनो ह्येवं निर्वाणं तन्निरामयम्॥२३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिनवत्यधिकशततमोऽध्यायः॥ १९३॥

---

## चतुर्नवत्यधिकशततमोऽध्यायः॥ १९४॥

भीष्मेण युधिष्ठिरंप्रति जपफलप्रकारादिकथनम्॥ १॥

युधिष्ठिर उवाच।
चातुराश्रम्यमुक्तं ते राजधर्मास्तथैव च।
नानाश्रयाश्च भगवन्नितिहासाः पृथग्विधाः॥ १
श्रुतास्त्वत्तः कथाश्चैव धर्मयुक्ता महामते।
संदेहोऽस्ति तु कश्चिन्मे तद्भवान्वक्तुमर्हति॥ २
जापकानां फलावाप्तिं श्रोतुमिच्छामि भारत।
किं फलं जपतामुक्तं क्व वा तिष्ठन्ति जापकाः॥३
जपस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ।

---

स्वभावे पर्यवस्थिता इति झ. थ. पाठः॥ ३॥ ध्यानपथे धीर इति ट. पाठः॥ १०॥ भ्रमति ज्ञानवर्त्मनीति ट. ड. पाठः॥ १४॥ त्रिनवत्यधिकशततमोऽध्यायः॥ १९३॥

ब्रह्मयुक्ता महामते इति ड. थ. पाठः॥ २॥

यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्तीह महर्षयः ॥ १
यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः ।
महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः ॥ २
नावर्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः ।
जन्मदोषपरिक्षीणाः स्वभावे पर्युपस्थिताः ॥ ३
निर्द्वन्द्वा नित्यसत्वस्था विमुक्तिं नित्यमश्रिताः ।
असङ्गीन्यविवादीनि मनःशान्तिकराणि च ॥ ४
तत्र ध्यानेन संश्लिष्टमेकाग्रे धारयेन्मनः ।
तत्र च ध्यानसंरोधादथ ज्ञानी भवत्युत ॥ ५
चतुर्विधेषु भावेषु योऽर्थसक्तः सदैव हि ।
तज्ज्ञात्वा वास्तवं तेषामर्थेषु परिवर्तते ।
पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ॥ ६
शब्दं न विन्देच्छ्रोत्रेण त्वचा स्पर्शं न वेदयेत् ।
रूपं न चक्षुषा विद्याज्जिह्वया न रसांस्तथा ॥ ७
घ्रेयाण्यपि च सर्वाणि जह्याद्घ्राणेन योगवित् ।
पञ्चवर्गप्रमाथीनि नेच्छेचैतानि वीर्यवान् ॥ ८
ततो मनसि संसृज्य पञ्चवर्गं विचक्षणः ।
समादध्यान्मनो भ्रान्तमिन्द्रियैः सह पञ्चभिः ॥ ९
विसंचारि निरालम्बं पञ्चद्वारं चलाचलम् ।
पूर्वे ध्यानपदे धीरः समादध्यान्मनो नरः ॥ १०
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम् ।
एष ध्यानपथः पूर्वो मया समनुवर्णितः ॥ ११
तस्य तत्पूर्वसंरुद्धमात्मषष्ठं मनोऽन्तरा ।
स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरे यथा ॥ १२
जलबिन्दुर्यथा लोलः पर्णस्थः सर्वतश्चलः ।
एवमेवास्य तच्चित्तं भ्रमति ध्यानवर्त्मनि ॥ १३
समाहितं क्षणं किंचिद्ध्यानवर्त्मनि तिष्ठति ।
पुनर्वायुपथं प्राप्तं मनो भवति वायुवत् ॥ १४
अनिर्वेदो गतक्लेशो गततन्द्रीरमत्सरः ।
समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥ १५
विचारश्च विवेकश्च वितर्कश्चोपजायते ।
मुनेः समादधानस्य प्रथमं ध्यानमादितः ॥ १६
मनसा क्लिश्यमानस्तु समाधानं च कारयेत् ।
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवात्मनो हितम् ॥ १७
पांसुभस्मकरीषाणां यथा वै राशयश्चिताः ।
सहसा वारिणा सिक्ता न यान्ति परिभावनम् ॥ १८
किंचित्स्निग्धं यथा च स्याच्छुष्कचूर्णमभावितम् ।
क्रमशस्तु शनैर्गच्छेत्सर्वं तत्परिभावनम् ॥ १९
एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत् ।
संहरेत्क्रमशश्चैनं स सम्यक्प्रशमिष्यति ॥ २०
स्वयमेव मनश्चैवं पञ्चवर्गं च भारत ।
पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति ॥ २१
न तत्पुरुषकारेण न च दैवेन केनचित् ।
सुखमेष्यति तत्तस्य न भवन्ति विपत्तयः ॥ २२
सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि ।
गच्छन्ति योगिनो ह्येवं निर्वाणं तन्निरामयम् ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

---

## चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

भीष्मेण युधिष्ठिरंप्रति जपफलप्रकारादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
चातुराश्रम्यमुक्तं ते राजधर्मास्तथैव च ।
नानाश्रयाश्च भगवन्नितिहासाः पृथग्विधाः ॥ १
श्रुतास्त्वत्तः कथाश्चैव धर्मयुक्ता महामते ।
संदेहोऽस्ति तु कश्चिन्मे तद्भवान्वक्तुमर्हति ॥ २
जापकानां फलावाप्तिं श्रोतुमिच्छामि भारत ।
किं फलं जपतामुक्तं क्व वा तिष्ठन्ति जापकाः ॥ ३
जपस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ ।

स्वभावे पर्यवस्थिता इति झ. थ. पाठः ॥ ३ ॥ ध्यानपथे धीर इति ट. पाठः ॥ १० ॥ भ्रमति ज्ञानवर्त्मनीति ट. ड. पाठः ॥ १४ ॥ त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥
ब्रह्मयुक्ता महामते इति ड. थ. पाठः ॥ २ ॥

एकैवैषा गतिस्तेषामुत यान्त्यपरामपि ॥ १
भीष्म उवाच ।
शृणुष्वावहितो राजञ्जापकानां गतिं विभो ।
यथा गच्छन्ति निरयमनेकं पुरुषर्षभ ॥ २
यथोक्तमेतत्पूर्वं यो नानुतिष्ठति जापकः ।
एकदेशक्रियश्चात्र निरयं स निगच्छति ॥ ३
अवमानेन कुरुते न तुष्यति न शोचति ॥
ईदृशो जापको याति निरयं नात्र संशयः ॥ ४
अहंकारकृतश्चैव सर्वे निरयगामिनः ।
परावमानी पुरुषो भविता निरयोपगः ॥ ५
अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः ।
यत्रास्य रागः पतति तत्रतत्रोपपद्यते ॥ ६
अथैश्वर्यप्रसक्तः सञ्जापको यत्र रज्यते ।
स एव निरयस्तस्य नासौ तस्मात्प्रमुच्यते ।
रागेण जापको जप्यं कुरुते यश्च मोहितः ।
यत्रास्य रागः पतति तत्र तत्रोपजायते ॥
दुर्बुद्धिरकृतप्रज्ञश्चले मनसि तिष्ठति ।
फलस्यापचितिं याति निरयं चाधिगच्छति
अकृतप्रज्ञको बालो मोहं गच्छति जापकः ।
स मोहान्निरयं याति यत्र गत्वाऽनुशोचति ।
दृढग्राही करोमीति जाप्यं जपति जापकः
न संपूर्णो न वा युक्तो निरयं सोऽधिगच्छति
अनिमित्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितम्
तद्भूतो जापकः कस्मात्सशरीरमिहाविशेत् ।
दुष्प्रज्ञानेन निरया बहवः समुदाहृताः ।
प्रशस्तं जापकत्वं च दोषाश्चैते तदात्मकाः ।

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

---

## षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

भीष्मेण युधिष्ठिरंप्रति जापकोपाख्यानम् ॥ १ ॥

युधिष्ठिर उवाच ।
कीदृशं निरयं याति जापको वर्णयस्व मे ।
कौतूहलं हि राजन्मे तद्भवान्वक्तुमर्हति ॥ १
भीष्म उवाच ।
धर्मस्यांशप्रसूतोऽसि धर्मज्ञोऽसि स्वभावतः ।
धर्ममूलाश्रयं वाक्यं शृणुष्वावहितोऽनघ ॥ २
अमूनि यानि स्थानानि देवानाममरात्मनाम् ।
नानासंस्थानवर्णानि नानारूपफलानि च ॥ ३
दिव्यानि कामचारीणि विमानानि सभास्तथा ।
आक्रीडा विविधा राजन्पद्मिन्यश्चामलोदकाः ॥ ४
चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥
रुद्रादित्यवसूनां च तथाऽन्येषां दिवौकसाम्
एते वै निरयास्तात स्थानस्य परमात्मनः ॥
अभयं चानिमित्तं च न च क्लेशभयावृतम्
द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च
चतुर्लक्षणवर्जं तु चतुष्कारणवर्जितम् ।
अप्रहर्षमनानन्दमशोकं विगतक्लमम् ॥
कालः संपच्यते तत्र कालस्तत्र न वै प्रभुः ।
स कालस्य प्रभू राजन्सर्वस्यापि तथेश्वरः ॥

---

एतत्सर्वं य इति ट. पाठः ॥ २ ॥ अपूर्णाङ्गजपपर इत्यर्थः ॥ ३ ॥ अवमानेनाश्रद्धया । जपे प्रीत्यादिरहितः ॥ ४ ॥ अहंकारकृतो दर्पवन्तः । पुरुषो जापकः ॥ ५ ॥ अभिध्या फलाभिसन्धिः । यत्र फले रागः प्रीतिस्तत्र तत्फलभोगनिमित्तमुपपद्यते योग्यं देह प्राप्नोति ॥ ६ ॥ सएवतत्र रागएव ॥ ७ ॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

धर्ममूलं वेदः परमात्मा च तावाश्रयौ यस्य ॥ २ ॥ अमूनि वक्ष्यमाणानि देवानां दिव्यदेहानाम् । संस्था कृतयः । वर्णाः श्वेतपीताद्याः । नानारूपाण्यनेकविधानि । आक्रीडाः उद्यानानि ॥ ४ ॥ अभयं नाशभयशून्यम् । मित्तं स्वभावसिद्धम् । त्रिभिर्गुणैः द्वाभ्यां युक्त त्रिभिर्युत्त ट. पाठः ॥ ७ ॥ अप्रतर्क्यमनाद्यनन्तमशोकमिति ट. पाठः ॥ ८ ॥ कालं संवहते तत्रेति ध. पाठः ॥ ९ ॥ त्यधिकशततमोऽध्यायः ॥ १९६ ॥

'एतद्वै ब्रह्मणः स्थानं जापकस्य महात्मनः ।
तत्रस्थं परमात्मानं ध्यायन्वै सुसमाहितः ।
हिरण्यगर्भः सायुज्यं प्राप्नुयाद्वा नृपोत्तम ॥' १०
आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति ।
ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥ ११
एते ते निरयाः प्रोक्ताः सर्व एव यथातथम् ।
तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः ॥ १२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

---

## सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

जापकोपाख्याने कालयमधर्मविप्रेक्ष्वाक्वादीनां संवादः ॥ १ ॥

युधिष्ठिर उवाच ।
कालमृत्युयमानां ते इक्ष्वाकोर्ब्राह्मणस्य च ।
विवादो व्याहृतः पूर्वं तद्भवान्वक्तुमर्हति ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इक्ष्वाकोः सूर्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च २
कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे ।
यथा स तेषां संवादो यस्मिन्स्थानेऽपि चाभवत् ।
'येनैव कारणेनात्र धर्मवादसमन्वितः ॥' ३
ब्राह्मणो जापकः कश्चिद्धर्मवृत्तो महायशाः ।
षडङ्गविन्महाप्राज्ञः पैप्पलादिः स कौशिकः ॥ ४
तस्यापरोक्षं विज्ञानं षडङ्गेषु बभूव ह ।
वेदेषु चैव निष्णातो हिमवत्पादसंश्रयः ॥ ५
सोयं ब्राह्मं तपस्तेपे संहितां संयतो जपन् ।
तस्य वर्षसहस्रं तु नियमेन तथा गतम् ॥ ६
स देव्या दर्शितः साक्षात्प्रीतास्मीति तदा किल ।
जप्यमावर्तयंस्तूष्णीं न स तां किंचिदब्रवीत् ॥ ७
तस्यानुकम्पया देवी प्रीता समभवत्तदा ।
वेदमाता ततस्तस्य तज्जप्यं समपूजयत् ॥ ८
'चतुर्भिरक्षरैर्युक्ता सोमपानेऽक्षराष्टका ।
जगद्बीजसमायुक्ता चतुर्विंशाक्षरात्मिका ॥' ९
समाप्य जप्यं तूत्थाय शिरसा पादयोस्तदा ।
पपात देव्या धर्मात्मा वचनं चेदमब्रवीत् ॥ १०
दिष्ट्या देवि प्रसन्ना त्वं दर्शनं चागता मम ।
यदि चापि प्रसन्नासि जप्ये मे रमतां मनः ॥ ११
सावित्र्युवाच ।
किं प्रार्थयसि विप्रर्षे किं चेष्टं करवाणि ते ।
प्रब्रूहि जपतां श्रेष्ठ सर्वं तत्ते भविष्यति ॥ १२
इत्युक्तः स तदा देव्या विप्रः प्रोवाच धर्मवित् ।
जप्यं प्रति ममेच्छेयं वर्धत्विति पुनः पुनः ॥ १३
मनसश्च समाधिर्मे वर्धेताहरहः शुभे ।
तत्तथेति ततो देवी मधुरं प्रत्यभाषत ॥ १४
इदं चैवापरं प्राह देवी तत्प्रियकाम्यया ।
निरयं नैव याता त्वं यत्र याता द्विजर्षभाः ॥ १५
यास्यसि ब्रह्मणः स्थानमनिमित्तमतन्द्रितः ।
साधु ते भविता चैतद्यत्त्वयाऽहमिहार्थिता ॥ १६
नियतो जप चैकाग्रो धर्मस्त्वां समुपैष्यति ।
कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्तिकम् ।
भविता च विवादोऽत्र तव तेषां च धर्मतः ॥ १७
भीष्म उवाच ।
एवमुक्त्वा भगवती जगाम भवनं स्वकम् ॥ १८
ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तथा ।
सदा दान्तो जितक्रोधः सत्यसन्धोऽनसूयकः १९
समाप्ते नियमे तस्मिन्नथ विप्रस्य धीमतः ।

---

आयुःपरिच्छेदिका देवता कालः । प्राणवियोजिका मृत्युः । पुण्यापुण्यफलदायिका यमः । तत् तम् ॥ १ ॥ सूर्यपुत्रस्य यमस्य ॥ २ ॥ जापको मन्त्राध्ययनपरः । पैप्पलाद इति ङ. पाठः ॥ ४ ॥ देव्या सावित्र्या दर्शितो दर्शनदानेनानुगृहीतः ॥ ७ ॥ समाधिर्नियमः ॥ १४ ॥ निरयं स्वर्गं क्षयिणम् । याता यास्यसि । याता गताः ॥ १५ ॥ अनिमित्तमजन्यम् । यज्जप्ये मे रमतां मन इति ॥ १६ ॥

साक्षात्प्रीतस्तदा धर्मो दर्शयामास तं द्विजम् ॥२०
धर्म उवाच ।
द्विजाते पश्य मां धर्ममहं त्वां द्रष्टुमागतः ।
जप्यस्यास्य फलं यत्तत्संप्राप्तं तच्च मे शृणु ॥ २१
जिता लोकास्त्वया सर्वे ये दिव्या ये च मानुषाः।
देवानां निलयान्साधो सर्वानुत्क्रम्य यास्यसि॥२२
प्राणत्यागं कुरु मुने गच्छ लोकान्यथेप्सितान् ।
त्यक्त्वाऽऽत्मनः शरीरं च ततो लोकानवाप्स्यसि॥
ब्राह्मण उवाच ।
कृतं लोकेन मे धर्म गच्छ त्वं च यथासुखम् ।
बहुदुःखमहं देहं नोत्सृजेयमहं विभो ॥ २४
धर्म उवाच ।
'अचलं ते मनः कृत्वा त्यज देहं महामते ।
अनेन किं ते संयोगः कथं मोहं गमिष्यसि ॥' २५
अवश्यं भोः शरीरं ते त्यक्तव्यं मुनिपुङ्गव ।
स्वर्गमारोह भो विप्र किं वा वै रोचतेऽनघ ॥ २६
ब्राह्मण उवाच ।
किमुक्तं धर्म किं नेति कस्मान्मां मोक्तवानसि ।
त्यज देहं द्विजेति त्वं ससंबुध्यात्र मे यदि ॥२७
न रोचये स्वर्गवासं विना देहमहं विभो ।
गच्छ धर्म न मे श्रद्धा स्वर्गं गन्तुं विनाऽऽत्मना २८
धर्म उवाच ।
अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव ।
गच्छ लोकानरजसो यत्र गत्वा न शोचसि ॥२९
ब्राह्मण उवाच ।
रमे जपन्महाभाग कृतं लोकैः सनातनैः ।
सशरीरेण गन्तव्यं मया स्वर्गं न चान्यथा ॥३०
धर्म उवाच ।
'एवं ते कायसंप्रीतिर्वर्तते मुनिसत्तम ।'
यदि त्वं नेच्छसि त्यक्तुं शरीरं पश्य वै द्विज ।
एष कालस्तथा मृत्युर्यमश्च त्वामुपागताः ॥ ३१
भीष्म उवाच ।
अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो ।
ब्राह्मणं तं महाभागमुपगम्येदमब्रुवन् ॥ ३२
यम उवाच ।
तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च ।
फलप्राप्तिस्तव श्रेष्ठा यमोऽहं त्वामुपब्रुवे ॥ ३३
काल उवाच ।
यथा वदस्य जप्यस्य फलं प्राप्तस्त्वमुत्तमम् ।
कालस्ते स्वर्गमारोढुं कालोऽहं त्वामुपागतः ॥३४
मृत्युरुवाच ।
मृत्युं मां विद्धि धर्मज्ञ रूपिणं स्वयमागतम् ।
कालेन चोदितो विप्र त्वामितो नेतुमद्य वै ॥ ३५
ब्राह्मण उवाच ।
स्वागतं सूर्यपुत्राय कालाय च महात्मने ।
मृत्यवे चाथ धर्माय किं कार्यं करवाणि वः ॥ ३६
भीष्म उवाच ।
अर्घ्यं पाद्यं च दत्त्वा स तेभ्यस्तत्र समागमे ।
अब्रवीत्परमप्रीतः स्वशक्त्या किं करोमि वः ॥ ३७
'स्वकार्यनिर्भरा यूयं परोपद्रवहेतवः ।
भवन्तो लोकसामान्याः किमर्थं ब्रूत सत्तमाः ॥३८
यम उवाच ।
वयमप्येवमत्युग्रा धातुराज्ञापुरःसराः ।
चोदिता धावमाना वै कर्मभावमनुव्रताः ॥ ३९
भीष्म उवाच ।'
तस्मिन्नेवाथ काले तु तीर्थयात्रामुपागतः ।
इक्ष्वाकुरगमत्तत्र समेता यत्र ते विभो ॥ ४०
सर्वानेव तु राजर्षिः संपूज्याथ प्रणम्य च ।
कुशलप्रश्नमकरोत्सर्वेषां राजसत्तमः ॥ ४१
तस्मै सोऽथासनं दत्त्वा पाद्यमर्घ्यं तथैव च ।
अब्रवीद्ब्राह्मणो वाक्यं कृत्वा कुशलसंविदम् ॥४२
स्वागतं ते महाराज ब्रूहि यद्यदिहेच्छसि ।
स्वशक्त्या किं करोमीह तद्भवान्प्रब्रवीतु माम् ॥४३
राजोवाच ।
राजाऽहं ब्राह्मणश्च त्वं यदा षट्कर्मसंस्थितः ।
ददानि वसु किंचित्ते प्रार्थितं तद्वदस्व मे ॥ ४४

दर्शयामास आत्मानं दर्शितवान् ॥ २० ॥

बहुदुःखसुखमिति झ. ध. पाठः ॥ २४ ॥

ब्राह्मण उवाच ।
द्विविधो ब्राह्मणो राजन्धर्मश्च द्विविधः स्मृतः ।
प्रवृत्तश्च निवृत्तश्च निवृत्तोऽहं प्रतिग्रहात् ॥ ४५
तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप ।
अहं न प्रतिगृह्णामि किमिष्टं किं ददामि ते ।
ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किम् ॥ ४६
राजोवाच ।
क्षत्रियोऽहं न जानामि देहीति वचनं क्वचित् ।
प्रयच्छ युद्धमित्येववादी चास्मि द्विजोत्तम ॥ ४७
ब्राह्मण उवाच ।
तुष्यसि त्वं स्वधर्मेण तथा तुष्टा वयं नृप ।
अन्योन्यस्योत्तरं नास्ति यदिष्टं तत्समाचर ॥ ४८
राजोवाच ।
स्वशक्त्याऽहं ददानीति त्वया पूर्वमुदाहृतम् ।
याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज ॥ ४९
ब्राह्मण उवाच ।
युद्धं मम सदा वाणी याचतीति विकत्थसे ।
न च युद्धं मया सार्धं किमर्थं याचसे पुनः ॥ ५०
राजोवाच ।
वाग्वज्रा ब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः ।
वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह ॥ ५१
ब्राह्मण उवाच ।
सेयमद्य प्रतिज्ञा मे स्वशक्त्या किं प्रदीयताम् ।
ब्रूहि दास्यामि राजेन्द्र विभवे सति माचिरम् ॥ ५२
राजोवाच ।
यत्तद्वर्षशतं पूर्णं जप्यं वै जपता त्वया ।
फलं प्राप्तं तत्प्रयच्छ मम दित्सुर्भवान्यदि ॥ ५३
ब्राह्मण उवाच ।
परमं गृह्यतां तस्य फलं यज्जपितं मया ।
अर्धं त्वमविचारेण फलं तस्य ह्यवाप्नुहि ॥ ५४
अथवा सर्वमेवेह मामकं जापकं फलम् ।
राजन्प्राप्नुहि कामं त्वं यदि सर्वमिहेच्छसि ॥५५
राजोवाच ।
कृतं सर्वेण भद्रं ते जप्यं यद्याचितं मया ।
स्वस्ति तेऽस्तु गमिष्यामि किंच तस्य फलं वद ॥५६
ब्राह्मण उवाच ।
फलप्राप्तिं न जानामि दत्तं यज्जपितं मया ।
अयं धर्मश्च कालश्च यमो मृत्युश्च साक्षिणः ॥ ५७
राजोवाच ।
अज्ञातमस्य धर्मस्य फलं किं मे करिष्यति ।
फलं ब्रवीषि धर्मस्य न चेज्जप्यकृतस्य माम् ।
प्राप्नोतु तत्फलं विप्रो नाहमिच्छे ससंशयम् ॥ ५८
ब्राह्मण उवाच ।
नाददेऽपरदत्तं वै दत्तं वा चाफलं मया ।
वाक्यं प्रमाणं राजर्षे ममाद्य तव चैव हि ॥ ५९
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदेव ददानीति त्रीण्येतानि सकृत्सकृत् ॥ ६०
नाभिसंधिर्मया जप्ये कृतपूर्वः कदाचन ।
जप्यस्य राजशार्दूल कथं वेत्स्याम्यहं फलम् ॥ ६१
ददस्वेति त्वया चोक्तं दत्तं वाचा फलं मया ।
न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ॥ ६२
अथैवं वदतो मेऽद्य वचनं न करिष्यसि ।
महानधर्मो भविता तव राजन्मृषा कृतः ॥ ६३
न युक्ता तु मृषावाणी त्वया वक्तुमरिंदम ।
तथा मयाऽप्यभिहितं मिथ्या कर्तुं न शक्यते ॥ ६४
संश्रुतं च मया पूर्वं ददानीत्यविचारितम् ।
तद्गृह्णीष्वाविचारेण यदि सत्ये स्थितो भवान् ॥६५
इहागम्य हि मां राजञ्जाप्यं फलमयाचथाः ।
तन्मे निसृष्टं गृह्णीष्व भव सत्ये स्थितोपि च ॥ ६६
नायं लोकोऽस्ति न परो न च पूर्वान्स तारयेत् ।
कुत एवापरान्राजन्मृषावादपरायणः ॥ ६७
न यज्ञाध्ययने दानं नियमास्तारयन्ति हि ।
यथा सत्यं परे लोके तथेह पुरुषर्षभ ॥ ६८
तपांसि यानि चीर्णानि चरिष्यन्ति च यत्तपः ।

कृतमलं सर्वेण जपफलेन ॥ ५६ ॥ यज्जपितं जप्यं तस्येति शेषः ॥ ५७ ॥ अभिसंधिः कामः । निष्कामस्य जपस्यानन्तं फलमिति भावः ॥ ६१ ॥ दूषयिष्यामि अन्यथाकरिष्यामि ॥ ६२ ॥ मे मया निसृष्टं दत्तम् ॥ ६६ ॥

समाशतैः सहस्रैश्च तत्सत्यान्न विशिष्यते । ६९
सत्यमेकं परं ब्रह्म सत्यमेकं परं तपः ।
सत्यमेकं परो यज्ञः सत्यमेकं परं श्रुतम् ॥ ७०
सत्यं वेदेषु जागर्ति फलं सत्ये परं स्मृतम् ।
तपो धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ ७१
सत्यं वेदास्तथाङ्गानि सत्यं यज्ञास्तथा विधिः ।
व्रतचर्या तथा सत्यमोंकारः सत्यमेव च ॥ ७२
प्राणिनां जननं सत्यं सत्यं सन्ततिरेव च ।
सत्येन वायुरभ्येति सत्येन तपते रविः ॥ ७३
सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः ।
सत्यं यज्ञस्तपो वेदाः स्तोभा मन्त्राः सरस्वती॥ ७४
तुलामारोपितो धर्मः सत्यं चैवेति नः श्रुतम् ।
समां कक्षां धारयतो यतः सत्यं ततोऽधिकम्॥७५
यतो धर्मस्ततः सत्यं सर्वं सत्येन वर्धते ।
किमर्थमनृतं कर्म कर्तुं राजंस्त्वमिच्छसि ॥ ७६
सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः ।
कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभम् ॥ ७७
यदि जप्यफलं दत्तं मया नेच्छसि वै नृप ।
स्वधर्मेभ्यः परिभ्रष्टो लोकाननुचरिष्यसि ॥ ७८
संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति ।
उभावानृतिकावेतो न मृषा कर्तुमर्हसि ॥ ७९
राजोवाच ।
योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज ।
दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम् ८०
ब्राह्मण उवाच ।
न च्छन्दयामि ते राजन्नापि ते गृहमाव्रजम् ।
इहागम्य तु याचित्वा न गृह्णीषे पुनः कथम् ॥ ८१
धर्म उवाच ।
अविवादोऽस्तु युवयोर्वित्तं मां धर्ममागतम् ।
द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ॥ ८२
स्वर्ग उवाच ।
स्वर्गं मां विद्धि राजेन्द्र रूपिणं स्वयमागतम् ।
अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवाम् ॥ ८
राजोवाच ।
कृतं स्वर्गेण मे कार्यं गच्छ स्वर्ग यथागतम् ।
विप्रो यदीच्छते दातुं चीर्णं गृह्णातु मे फलम् ॥ ८
ब्राह्मण उवाच ।
बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः ।
निवृत्तलक्षणं धर्ममुपासे संहितां जपन् ॥ ८
निवृत्तं मां चिराद्राजन्विप्रलोभयसे कथम् ।
स्वेन कार्यं करिष्यामि त्वत्तो नेच्छे फलं नृप
तपःस्वाध्यायशीलोऽहं निवृत्तश्च प्रतिग्रहात् ॥ ८
राजोवाच ।
यदि विप्र विसृष्टं ते जप्यस्य फलमुत्तमम् ।
आवयोर्यत्फलं किंचित्सहितं नौ तदस्त्विह ॥ ८
द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः ।
यदि धर्मः श्रुतो विप्र सहैव फलमस्तु नौ ॥ ८
मा वा भूत्सह भोज्यं नौ मदीयं फलमाप्नुहि ।
प्रतीच्छ मत्कृतं धर्मं यदि ते मय्यनुग्रहः ॥ ८
भीष्म उवाच ।
ततो विकृतवेषौ द्वौ पुरुषौ समुपस्थितौ ।
गृहीत्वाऽन्योन्यमावेष्ट्य कुचेलावूचतुर्वचः ॥ ९
न मे धारयसीत्येको धारयामीति चापरः ।
इहास्ति नौ विवादोऽयमयं राजाऽनुशासकः॥ ९
सत्यं ब्रवीम्यहमिदं न मे धारयते भवान् ।
अनृतं वदसीह त्वमृणं ते धारयाम्यहम् ॥ ९
तावुभौ सुभृशं तप्तौ राजानमिदमूचतुः ।
परीक्ष्यौ तु यथा स्याव नावामिह विगर्हितौ ॥ ९
विरूप उवाच ।
धारयामि नरव्याघ्र विकृतस्येह गोः फलम् ।
ददतश्च न गृह्णाति विकृतो मे महीपते ॥ ९

देहीति उक्त्वेति शेषः ॥ ७७ ॥ न च्छन्दयामि प्रतिगृह्णीष्वेति न प्रार्थितवानस्मि ॥ ८१ ॥ तत्प्रतीच्छतु मे फलमिति ध. पाठः । वहु गृह्णातु मे फलमिति ट. पाठः ॥ ८४ ॥ द्वौ पुरुषौ कामक्रोधौ ॥९०॥ परीक्ष्य त्वं यथा स्यावो नावामिति झ. पाठः ॥ ९३ ॥ प्रार्थना हि राज्ञोऽननुरूपेति तस्य कामो वि[illegible]तसंज्ञः । शान्तिस्वभावस्यापि जापकस्य याचित्वापि दीयमा[illegible] न गृह्णातीति राजानं प्रति यः क्रोधः स विरूपसंज्ञः । गां फलं वाचं धेनुमुपासीतेति श्रुतेर्धेनुसरूपाया वाचः । जपस्

विकृत उवाच ।
न मे धारयते किंचिद्विरूपोऽयं नराधिप ।
मिथ्या ब्रवीत्ययं हि त्वां सत्याभासं नराधिप॥९५
राजोवाच ।
विरूप किं धारयते भवानस्य ब्रवीतु मे ।
श्रुत्वा तथा करिष्येऽहमिति मे धीयते मनः॥ ९६
विरूप उवाच ।
शृणुष्वावहितो राजन्यथैतद्धारयाम्यहम् ।
विकृतस्यास्य राजर्षे निखिलेन नराधिप ॥ ९७
अनेन धर्मप्राप्त्यर्थं शुभा दत्ता पुराऽनघ ।
धेनुर्विप्राय राजर्षे तपःस्वाध्यायशीलिने ॥ ९८
तस्याश्चायं मया राजन्फलमभ्येत्य याचितः ।
विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना ॥ ९९
ततो मे सुकृतं कर्म कृतमात्मविशुद्धये ।
गावौ च कपिले क्रीत्वा वत्सले बहुदोहने॥१००
ते चोञ्छवृत्तये राजन्मया समुपवर्जिते ।
यथाविधि यथाश्रद्धं तदस्याहं पुनः प्रभो ॥ १०१
इहाद्यैव प्रयच्छामि गृहीत्वा द्विगुणं फलम् ।
एवं स्यात्पुरुषव्याघ्र कः शुद्धः कोऽत्र दोषवान्१०२
एवं विवदमानौ स्वस्त्वामिहाभ्यागतौ नृप ।
कुरु धर्ममधर्मं वा विनये नौ समादध ॥ १०३
यदि नेच्छति मे दानं यथा दत्तमनेन वै ।
भवानत्र स्थिरो भूत्वा मार्गे स्थापयिताऽद्य नौ१०४
राजोवाच ।
दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै ।
यथैव तेऽभ्यनुज्ञातं यथा गृह्णीष्व माचिरम्॥१०५
विकृत उवाच ।
दीयतामित्यनेनोक्तं ददानीति तथा मया ।
नायं मे धारयत्यत्र गच्छतां यत्र वाञ्छति॥ १०६
राजोवाच ।
ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे ।
दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः१०७

विकृत उवाच ।
मयाऽस्य दत्तं राजर्षे गृह्णीयां तत्कथं पुनः ।
को ममात्रापराधो मे दण्डमाज्ञापय प्रभो ॥ १०८
विरूप उवाच ।
दीयमानं यदि मया न गृह्णासि कथंचन ।
नियच्छति त्वां नृपतिरयं धर्मानुशासकः ॥ १०९
विकृत उवाच ।
स्वयं मया याचितेन दत्तं कथमिहाद्य तत् ।
गृह्णीयां गच्छतु भवानभ्यनुज्ञां ददानि ते ॥ ११०
ब्राह्मण उवाच ।
श्रुतमेतत्त्वया राजन्ननयोः कथितं द्वयोः ।
प्रतिज्ञातं मया यत्ते तद्गृहाणाविचारितम् ॥ १११
राजोवाच ।
प्रस्तुतं सुमहत्कार्यमनयोर्गह्वरं यथा ।
जापकस्य दृढीकारः कथमेतद्भविष्यति ॥ ११२
यदि तावन्न गृह्णामि जापकेनापवर्जितम् ।
कथं न लिप्येयमहं पापेन महताऽद्य वै ॥ ११३
तौ चोवाच स राजर्षिः कृतकार्यौ गमिष्यथः ।
नेदानीं मामिहासाद्य राजधर्मो भवेन्मृषा ॥ ११४
स्वधर्मः परिपाल्यस्तु राज्ञामिति विनिश्चयः ।
विप्रधर्मश्च गहनो मामनात्मानमाविशत् ॥ ११५
ब्राह्मण उवाच ।
गृहाण धारयेऽहं च याचितं संश्रुतं मया ।
न चेद्ग्रहीष्यसे राजञ्शपिष्ये त्वां न संशयः॥११६
राजोवाच ।
धिग्राजधर्मं यस्यायं कार्यस्येह विनिश्चयः ।
इत्यर्थं मे ग्रहीतव्यं कथं तुल्यं भवेदिति ॥ ११७
एष पाणिरपूर्वं मे निक्षेपार्थं प्रसारितः ।
यन्मे धारयसे विप्र तदिदानीं प्रदीयताम् ॥ ११८
ब्राह्मण उवाच ।
संहितां जपता यावान्गुणः कश्चित्कृतो मया ।
तत्सर्वं प्रतिगृह्णीष्व यदि किंचिदिहास्ति मे ॥ ११९

फलमित्यर्थः ॥ ९४ ॥ धेनुर्वाक् । विप्राय परमेश्वराय ॥ ९८ ॥ धारयामीति झ. ट. पाठः ॥ १०६ ॥ निक्षेपार्थं प्रतिगृह्य प्रदानार्थम् ॥ ११८ ॥

राजोवाच ।
जलमेतन्निपतितं मम पाणौ द्विजोत्तम ।
सममस्तु सहैवास्तु प्रतिगृह्णातु वै भवान् ॥ १२०
विरूप उवाच ।
कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान्।
'जिज्ञासमानौ युवयोर्मनोत्थं तु द्विजोत्तम॥'१२१
सहेति च यदुक्तं ते समा लोकास्तवास्य च ।
नायं धारयते किंचिज्जिज्ञासा त्वत्कृते कृता ॥१२२
कालो धर्मस्तथा मृत्युः कामक्रोधौ तथा युवाम् ।
सर्वमन्योन्यनिष्कर्षे निकृष्टं पश्यतस्तव ॥ १२३
'सर्वेषामुपरिस्थानं ब्रह्मणो व्यक्तजन्मनः ।
युवयोः स्थानमतुलं निर्द्वन्द्वममलात्मकम् ॥ १२४
सर्वे गच्छाम यत्र स्वान्स्वाँल्लोकांश्च तथा वयम् ।'
गच्छ लोकाञ्जितान्स्वेन कर्मणा यत्र वाञ्छसि १२५
'ततो धर्मयमाद्यास्ते वाक्यमूचुर्नृपद्विजौ ।
अस्माकं यः स्मृतो मूर्धा ब्रह्मलोकमिति स्मृतं १२६
तत्रस्थौ हि भवन्तौ हि युवाभ्यां निर्जिता वयम् ।
युवयोः काम आपन्नस्तत्काम्यमविशङ्कया ॥'१२७
भीष्म उवाच ।
जापकानां फलावाप्तिर्मया ते संप्रदर्शिता ।
गतिः स्थानं च लोकाश्च जापकेन यथा जिताः॥
प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनम् ।
अथवाऽग्निं समायाति सूर्यमाविशतेऽपि वा ॥१२९
स तैजसेन भावेन यदि तत्र रमत्युत ।
गुणांस्तेषां समाधत्ते रागेण प्रतिमोहितः ॥ १३०
एवं सोमे तथा वायौ भूम्याकाशशरीरगः ।
सरागस्तत्र वसति गुणांस्तेषां समाचरन्॥ १३१
अथ तत्र विरागी स परं गच्छत्यसंशयम् ।
परमव्ययमिच्छन्स तमेवाविशते पुनः ॥ १३२
अमृताच्चामृतं प्राप्तः शान्तीभूतो निरात्मवान् ।
ब्रह्मभूतः स निर्द्वन्द्वः सुखी शान्तो निरामयः १३३
ब्रह्मस्थानमनावर्तमेकमक्षरसंज्ञकम् ।
अदुःखमजरं शान्तं स्थानं तत्प्रतिपद्यते ॥ १३४
चतुर्भिर्लक्षणैर्हीनं तथा षड्भिः सषोडशैः ।
पुरुषं तमतिक्रम्य आकाशं प्रतिपद्यते ॥ १३५
अथ नेच्छति रागात्मा सर्वं तदधितिष्ठति ।
यच्च प्रार्थयते तच्च मनसा प्रतिपद्यते ॥ १३६
अथवा चेक्षते लोकान्सर्वान्निरयसंज्ञितान् ।
निस्पृहः सर्वतो मुक्तस्तत्र वै रमते सुखम्॥ १३७
एवमेषा महाराज जापकस्य गतिर्यथा ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमर्हसि ॥१३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

## अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

भीष्मेण युधिष्ठिरंप्रति जपस्य फलकथनपूर्वकं जापकोपाख्यानसमापनम् ॥ १ ॥

युधिष्ठिर उवाच ।
किमुत्तरं तदा तौ स चक्रतुस्तस्य भाषिते ।
ब्राह्मणो वाऽथवा राजा तन्मे ब्रूहि पितामह ॥ १
अथवा तौ गतौ तत्र यदेतत्कीर्तितं त्वया ।
संवादो वा तयोः कोऽभूत्किं वा तौ तत्र चक्रतुः २
भीष्म उवाच ।
तथेत्येवं प्रतिश्रुत्य धर्मं संपूज्य जापकः ।
यमं कालं च मृत्युं च स्वर्गं संपूज्य चार्हतः ॥ ३
पूर्वं ये चापरे तत्र समेता ब्राह्मणर्षभाः ।
सर्वान्संपूज्य शिरसा राजानं सोऽब्रवीद्द्विजः ॥४
फलेनानेन संयुक्तो राजर्षे गच्छ मुख्यताम् ।
भवता चाभ्यनुज्ञातो जपेयं भूय एव ह ॥ ५
वरश्च मम पूर्वं हि दत्तो देव्या महाबल ।
श्रद्धा ते जपतो नित्यं भवत्विति विशांपते ॥ ६

तेषां सूर्यादिलोकपालानां गुणान् प्रकाशकत्वादीन् ॥ १३१ ॥
सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

तौ इक्ष्वाकुपैप्पलादौ । तस्य विरूपस्य भाषिते वचने विषये ॥ १ ॥ अर्हतः पूज्यान् ॥ ३ ॥

राजोवाच ।
यद्येवं सफला सिद्धिः श्रद्धा च जपितुं तव ।
गच्छ विप्र मया सार्धं जापकं फलमाप्नुहि ॥ ७
ब्राह्मण उवाच ।
कृतः प्रयत्नः सुमहान्सर्वेषां सन्निधाविह ।
सह तुल्यफलावावां गच्छावो यत्र नौ गतिः ॥ ८
भीष्म उवाच ।
व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः ।
सह देवैरुपययौ लोकपालैस्तथैव च ॥ ९
साध्याश्च विश्वे मरुतो वाक्यानि सुमहान्ति च ।
नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च ॥ १०
तपांसि संयोगविधिर्वेदास्तोभाः सरस्वती ।
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ॥ ११
गन्धर्वश्चित्रसेनश्च परिवारगणैर्युतः ।
नागाः सिद्धाश्च मुनयो देवदेवः प्रजापतिः ॥ १२
'आजगाम च देवेशो ब्रह्मा वेदमयोऽव्ययः ।'
विष्णुः सहस्रशीर्षश्च देवोऽचिन्त्यः समागमत् ।
अवाद्यन्तान्तरिक्षे च भेर्यस्तूर्याणि वा विभो ॥ १३
पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनाम् ।
ननृतुश्चाप्सरःसङ्घास्तत्रतत्र समन्ततः ॥ १४
अथ स्वर्गस्तथा रूपी ब्राह्मणं वाक्यमब्रवीत् ।
संसिद्धस्त्वं महाभाग त्वं च सिद्धस्तथा नृप ॥ १५
भीष्म उवाच ।
अथ तौ सहितौ राजन्नन्योन्यस्य विधानतः ।
विषयप्रतिसंहारमुभावेव प्रचक्रतुः ॥ १६
प्राणापानौ तथोदानं समानं व्यानमेव च ।
एवं तौ मनसि स्थाप्य दधतुः प्राणयोर्मनः ॥ १७
उपस्थितकृतौ तौ च नासिकाग्रमधो भ्रुवोः ।
भ्रुकुट्याक्ष्णोश्च मनसा शनैर्धारयतस्तदा ॥ १८
निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ ।
जितासनौ समाधाय मूर्धन्यात्मानमेव च ॥ १९
तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः ।
ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा ॥ २०
हाहाकारस्तथा दिक्षु सर्वासु सुमहानभूत् ।
तज्ज्योतिः स्तूयमानं स्म ब्रह्माणं प्राविशत्तदा ॥ २१
ततः स्वागतमित्याह तत्तेजः प्रपितामहः ।
प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशांपते ॥ २२
भूयश्चैवापरं प्राह वचनं मधुरं स्मयन् ।
जापकैस्तुल्यफलता योगानां नात्र संशयः ॥ २३
योगस्य तावदेतेभ्यः प्रत्यक्षं फलदर्शनम् ।
जापकानां विशिष्टं तु प्रत्युत्थानं समाहितम् ॥ २४
उष्यतां मयि चेत्युक्त्वा व्याददे स ततो मुखम् ।
अथास्यं प्रविवेशास्य ब्राह्मणो विगतज्वरः ॥ २५
राजाऽप्येतेन विधिना भगवन्तं पितामहम् ।
यथैव द्विजशार्दूलस्तथैव प्राविशत्तदा ॥ २६
स्वयंभुवमथो देवा अभिवाद्य ततोऽब्रुवन् ॥ २७
जापकार्थमयं यत्नो यदर्थं वयमागताः ।
कृतपूजाविमौ तुल्यौ त्वया तुल्यफलान्वितौ ॥ २८
योगजापकयोस्तुल्यं फलं सुमहदद्य वै ।
सर्वाँल्लोकानतिक्रम्य गच्छेतां यत्र वाञ्छितम् ॥ २९
ब्रह्मोवाच ।
महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभाम् ।
तावप्येतेन विधिना गच्छेतां मत्सलोकताम् ॥ ३०
यश्च योगे भवेद्भक्तः सोऽपि नास्त्यत्र संशयः ।
विधिनानेन देहान्ते मम लोकानवाप्नुयात् ।
साधये गम्यतां चैव यथा स्थानानि सिद्धये ॥ ३१
भीष्म उवाच ।
इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत ।
आमन्त्र्य च ततो देवा ययुः स्वं स्वं निवेशनम् ॥ ३२
ते च सर्वे महात्मानो धर्मं सत्कृत्य तत्र वै ।
पृष्ठतोऽनुययू राजन्सर्वे सुप्रीतचेतसः ॥ ३३

---

व्यवसायं निश्चयम् ॥ ९ ॥ स्तोभाः सामगीतिपूरणार्थानि अक्षराणि हायि हावु इत्यादीनि ॥ ११ ॥ नेत्राग्रैश्चैव मनसेति ट. पाठः ॥ १८ ॥ तालुदेशं ब्रह्मरन्ध्रम् ॥ २० ॥ योगानां योगिनाम् ॥ २३ ॥ एतेभ्य एतेषां सभ्यानाम् । समाहितं विहितम् ॥ २४ ॥ संहिताध्यायिनां फलमुक्त्वा षडङ्गाध्यायिनां मन्वादिस्मृत्यध्यायिनां च फलमाह महास्मृतिमिति ॥ ३० ॥ अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

एतत्फलं जापकानां गतिश्चैषा प्रकीर्तिता । यथाश्रुतं महाराज किं भूयः श्रोतुमिच्छसि ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

## एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

ज्ञानयोगादेः फलं भगवद्वेदनप्रकारं च पृष्टेन भीष्मेण युधिष्ठिरंप्रति तत्कथनाय मनुबृहस्पतिसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
किं फलं ज्ञानयोगस्य वेदानां नियमस्य च ।
भूतात्मा च कथं ज्ञेयस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं महर्षेश्च बृहस्पतेः ॥ २
प्रजापतिं श्रेष्ठतमं प्रजानां
देवर्षिसङ्घप्रवरो महर्षिः ।
बृहस्पतिः प्रश्नमिमं पुराणं
प्रपच्छ शिष्योऽथ गुरुं प्रणम्य ॥ ३
यत्कारणं मन्त्रविधिः प्रवृत्तो
ज्ञाने फलं यत्प्रवदन्ति विप्राः ।
यन्मन्त्रशब्दैरकृतप्रकाशं
तदुच्यतां मे भगवन्यथावत् ॥ ४
यत्स्तोत्रशास्त्रागममन्त्रविद्भि-
र्यज्ञैरनेकैरथ गोप्रदानैः ।
फलं महद्भिर्यदुपास्यते च
किं तत्कथं वा भविता क्व वा तत् ॥ ५
मही महीजाः पवनोऽन्तरिक्षं
जलौकसश्चैव जलं तथा द्यौः ।
दिवौकसश्चापि यतः प्रसूता-
स्तदुच्यतां मे भगवन्पुराणम् ॥ ६
ज्ञानं यतः प्रार्थयते नरो वै
ततस्तदर्था भवति प्रवृत्तिः ।
न चाप्यहं वेद परं पुराणं
मिथ्याप्रवृत्तिं च कथं नु कुर्याम् ॥ ७
ऋक्सामसङ्घांश्च यजूंषि चाहं
छन्दांसि नक्षत्रगतिं निरुक्तम् ।
अधीत्य च व्याकरणं सकल्पं
शिक्षां च भूतप्रकृतिं न वेद्मि ॥ ८
स मे भवाञ्शंसतु सर्वमेत-
त्सामान्यशब्दैश्च विशेषणैश्च ।
स मे भवाञ्शंसतु तावदेत-
ज्ज्ञाने फलं कर्मणि वा यदस्ति ॥ ९
यथा च देहाच्च्यवते शरीरी
पुनः शरीरं च यथाऽभ्युपैति ।
मनुरुवाच ।
यद्यत्प्रियं यस्य सुखं तदाहु-
स्तदेव दुःखं प्रवदन्त्यनिष्टम् ॥ १०
इष्टं च मे स्यादितरच्च न स्या-
देतत्कृते कर्मविधिः प्रवृत्तः ।
इष्टं त्वनिष्टं च न मां भजेते-
त्येतत्कृते ज्ञानविधिः प्रवृत्तः ॥ ११
[कामात्मकाश्छन्दसि कर्मयोगा
एभिर्विमुक्तः परमश्नुवीत ।
नानाविधे कर्मपथे सुखार्थी
नरः प्रवृत्तो निरयं प्रयाति ।]
बृहस्पतिरुवाच ।
इष्टं त्वनिष्टं च सुखासुखे च
साशीस्तपश्छन्दति कर्मभिश्च ॥ १२
मनुरुवाच ।
एभिर्विमुक्तः परमाविवेश
एतत्कृते कर्मविधिः प्रवृत्तः ।
[कामात्मकांश्छन्दति कर्मयोग
एभिर्विमुक्तः परमाददीत ।।] १३
आत्मादिभिः कर्मभिरिध्यमानो
धर्मे प्रवृत्तो द्युतिमान्सुखार्थी ।

परं हि तत्कर्मफलादपेतं
निराशिषो यत्पदमाप्नुवन्ति ॥ १४
प्रजाः सृष्टा मनसा कर्मणा च
द्वावेवैतौ सत्पथौ लोकजुष्टौ ।
दृष्ट्वं कर्माशाश्वतं चान्तवच्च
मनस्त्यागे कारणं नान्यदस्ति ॥ १५
'कामात्मकौ छन्दसि कामभोगा-
वेभिर्वियुक्तः परमश्नुवीत ।
नानाविधे कर्मफले सुखार्थी
नरः प्रमत्तो न परं प्रयाति ।
फलं हि तत्कर्मफलादपेतं
निराशिषो ब्रह्म परं ह्युपेतम् ॥' १६
स्वेनात्मना चक्षुरिव प्रणेता
निशात्यये तमसा संवृतात्मा ।
ज्ञानं तु विज्ञानगुणेन युक्तं
कर्माशुभं पश्यति वर्जनीयम् ॥ १७
सर्पान्कुशाग्राणि तथोदपानं
ज्ञात्वा मनुष्याः परिवर्जयन्ति ।
अज्ञानतस्तत्र पतन्ति मूढा
ज्ञाने फलं पश्य यथा विशिष्टम् ॥ १८
कृत्स्नस्तु मन्त्रो विधिवत्प्रयुक्तो
यज्ञा यथोक्तास्त्विह दक्षिणाश्च ।
अन्नप्रदानं मनसः समाधिः
पञ्चात्मकं कर्मफलं वदन्ति ॥ १९
गुणात्मकं कर्म वदन्ति वेदा-
स्तस्मान्मन्त्रो मन्त्रपूर्वं हि कर्म ।
विधिर्विधेयं मनसोपपत्तिः
फलस्य भोक्ता तु तथा शरीरी ॥ २०
शब्दाश्च रूपाणि रसाश्च पुण्याः
स्पर्शाश्च गन्धाश्च शुभास्तथैव ।
नरोऽत्र हि स्थानगतः प्रभुः स्या-
देतत्फलं सिद्ध्यति कर्मणोऽस्य ॥ २१
यद्यच्छरीरेण करोति कर्म
शरीरयुक्तः समुपाश्नुते तत् ।
शरीरमेवायतनं सुखस्य
दुःखस्य चाप्यायतनं शरीरम् ॥ २२
वाचा तु यत्कर्म करोति किंचि-
द्वाचैव सर्वं समुपाश्नुते तत् ।
मनस्तु यत्कर्म करोति किंचि-
न्मनःस्थ एवायमुपाश्नुते तत् ॥ २३
यथायथा कर्मगुणं फलार्थी
करोत्ययं कर्मफले निविष्टः ।
तथातथाऽयं गुणसंप्रयुक्तः
शुभाशुभं कर्मफलं भुनक्ति ॥ २४
मत्स्यो यथा स्रोत इवाभिपाती
तथा कृतं पूर्वमुपैति कर्म ।
शुभे त्वसौ तुष्यति दुष्कृते तु
न तुष्यते वै परमः शरीरी ॥ २५
यतो जगत्सर्वमिदं प्रसूतं
ज्ञात्वाऽऽत्मवन्तो ह्युपयान्ति शान्तिम् ।
यन्मन्त्रशब्दैरकृतप्रकाशं
तदुच्यमानं शृणु मे परं यत् ॥ २६
रसैर्विमुक्तं विविधैश्च गन्धै-
रशब्दमस्पर्शमरूपवच्च ।
अग्राह्यमव्यक्तमवर्णमेकं
पञ्चप्रकारान्ससृजे प्रजानाम् ॥ २७
न स्त्री पुमान्नापि नपुंसकं च
न सन्न चासत्सदसच्च तन्न ।
पश्यन्ति यद्ब्रह्मविदो मनुष्या-
स्तदक्षरं न क्षरतीति विद्धि ॥ २८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

## द्विशततमोऽध्यायः ॥ २०० ॥

भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादः ॥ १ ॥

मनुरुवाच ।
अक्षरात्खं ततो वायुस्ततो ज्योतिस्ततो जलम् ।
जलात्प्रसूता जगती जगत्यां जायते जगत् ॥ १
इमे शरीरैर्जलमेव गत्वा
जलाच्च तेजः पवनान्तरिक्षम् ।
खाद्वै निवर्तन्ति न भाविनस्ते
ये भाविनस्ते परमाप्नुवन्ति ॥ २
नोष्णं न शीतं मृदु नापि तीक्ष्णं
नाम्लं कषायं मधुरं न तिक्तम् ।
न शब्दवन्नापि च गन्धवत्त-
न्न रूपवत्तत्परमस्वभावम् ॥ ३
स्पर्शं तनुर्वेद रसं च जिह्वा
घ्राणं च गन्धाञ्श्रवणे च शब्दान् ।
रूपाणि चक्षुर्न च तत्परं य-
द्गृह्णन्त्यनध्यात्मविदो मनुष्याः ॥ ४
निवर्तयित्वा रसनां रसेभ्यो
घ्राणं च गन्धाच्छ्रवणे च शब्दात् ।
स्पर्शात्तनुं रूपगुणात्तु चक्षु-
स्ततः परं पश्यति तत्स्वभावम् ॥ ५
यतो गृहीत्वा हि करोति यच्च
यस्मिंश्च यामारभते प्रवृत्तिम् ।
यस्मै च यद्येन च यश्च कर्ता
यत्कारणं तं स्वमुपेयमाहुः ॥ ६
यद्वाऽप्यभूद्व्यापकं साधकं च
यन्मन्त्रवत्स्थास्यति चापि लोके ।
यः सर्वहेतुः परमार्थकारी
तत्कारणं कार्यमतो यदन्यत् ॥ ७
यथा हि कश्चित्सुकृतैर्मनुष्यः
शुभाशुभं प्राप्नुते चाविरोधात् ।
एवं शरीरेषु शुभाशुभेषु
स्वकर्मभिर्ज्ञानमिदं निबद्धम् ॥ ८
यथा प्रदीप्तः पुरतः प्रदीपः
प्रकाशमन्यस्य करोति दीप्यन् ।
तथेह पञ्चेन्द्रियदीपवृक्षा
ज्ञानप्रदीप्ताः परवन्त एव ॥ ९
यथा च राज्ञो बहवो ह्यमात्याः
पृथक् प्रमाणं प्रवदन्ति युक्ताः ।
तद्वच्छरीरेषु भवन्ति पञ्च
ज्ञानैकदेशाः परमः स तेभ्यः ॥ १०
यथार्चिषोऽग्नेः पवनस्य वेगा
मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च संयताश्च
तद्वच्छरीराणि शरीरिणां तु ॥ ११
यथा च कश्चित्परशुं गृहीत्वा
धूमं न पश्येज्ज्वलनं च काष्ठे ।
तद्वच्छरीरोदरपाणिपादं
छित्त्वा न पश्यन्ति ततो यदन्यत् ॥ १२
तान्येव काष्ठानि यथा विमथ्य
धूमं च पश्येज्ज्वलनं च योगात् ।
तद्वत्सुबुद्धिः सममिन्द्रियार्थै-
र्बुद्धः परं पश्यति तत्स्वभावम् ॥ १३
यथात्मनोऽङ्गं पतितं पृथिव्यां
स्वप्नान्तरे पश्यति चात्मनोऽन्यत् ।
श्रोत्रादियुक्तः सुमनाः सुबुद्धि-
र्लिङ्गात्तथा गच्छति लिङ्गमन्यत् ॥ १४
उत्पत्तिवृद्धिक्षयसन्निपातै-
र्न युज्यतेऽसौ परमः शरीरी ।
अनेन लिङ्गेन तु लिङ्गमन्य-
द्गच्छत्यदृष्टः प्रतिसन्धियोगात् ॥ १५
न चक्षुषा पश्यति रूपमात्मनो
न चापि संस्पर्शमुपैति किंचित् ।

पृथक्परं पश्यति तत्स्वभावमिति ङ. पाठः ॥ १३ ॥

न चापि तैः साधयते स्वकार्यं
ते तं न पश्यन्ति स पश्यते तान् ॥ १६
यथा समीपे ज्वलतोऽनलस्य
संतापजं रूपमुपैति कश्चित् ।
न चान्तरा रूपगुणं बिभर्ति
तथैव तद्दृश्यते रूपमस्य ॥ १७
तथा मनुष्यः परिमुच्य काय-
मदृश्यमन्यद्विशते शरीरम् ।
विसृज्य भूतेषु महत्सु देहं
तदाश्रयं चैव बिभर्ति रूपम् ॥ १८
खं वायुमग्निं सलिलं तथोर्वीं
समन्ततोऽभ्याविशते शरीरी ।
नान्याश्रयाः कर्मसु वर्तमानाः
श्रोत्रादयः पञ्चगुणाञ्श्रयन्ते ॥ १९
श्रोत्रं नभो घ्राणमथो पृथिव्या-
स्तेजोमयं रूपमथो विपाकः ।
जलाश्रयं तेज उक्तं रसं च
वाय्वात्मकः स्पर्शकृतो गुणश्च ॥ २०
महत्सु भूतेषु च सन्ति पञ्च
पञ्चेन्द्रियार्थेषु तथेन्द्रियाणि ।
सर्वाणि चैतानि मनोनुगानि
बुद्धिं मनोऽन्वेति मतिः स्वभावम् ॥ २१
शुभाशुभं कर्म कृतं यदस्य
तदेव प्रेत्याददतेऽन्यदेहे ।
मनोऽनुवर्तन्ति परावराणि
जलौकसः स्रोत इवानुकूलम् ॥ २२
चलं यथा दृष्टिपथं परैति
सूक्ष्मं महद्रूपमिवावभाति ।
तातप्यमानो न पतेच्च धीरः
परं तथा बुद्धिपथं परैति ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥

---

## एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादः ॥ १ ॥

मनुरुवाच ।
यदिन्द्रियैस्तूपगतैः पुरस्ता-
त्प्राप्तान्गुणान्संसरते चिराय ।
तेष्विन्द्रियेषूपहतेषु पश्चा-
त्स बुद्धिरूपः परमः स्वभावः ॥ १
य इन्द्रियार्थान्युगपत्समन्ता-
न्नावेक्षते कृत्स्नशस्तुल्यकालम् ।
यथाक्रमं संचरते स विद्वां-
स्तस्मात्स एकः परमः शरीरी ॥ २
रजस्तमः सत्वमथो तृतीयं
गच्छत्यसौ ज्ञानगुणान्विरूपान् ।
'न तैर्निबद्धः स तु बध्नाति विश्वं
न चानुयातीह गुणान्परात्मा ।'
तथेन्द्रियाण्याविशते शरीरी
हुताशनं वायुरिवेन्धनस्थम् ॥ ३
न चक्षुषा पश्यति रूपमात्मनो
न पश्यति स्पर्शनमिन्द्रियेन्द्रियम् ।
न श्रोत्रलिङ्गं श्रवणेन दर्शनं
तथा कृतं पश्यति तद्विनश्यति ॥ ४
श्रोत्रादीनि न पश्यन्ति स्वंस्वमात्मानमात्मना ।
सर्वज्ञः सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ ५
यथा हिमवतः पार्श्वे पृष्ठं चन्द्रमसो यथा ।

---

श्रोत्रं खत इति झ. पाठः । जलाश्रयः स्वेद उक्तो रसश्चेति ध. पाठः । जलाश्रय ज्ञानमुक्तमिति ट. ड. थ. पाठः ॥ २० ॥ स्वरूपमालोचयते च रूपमिति झ. पाठः ॥ २३ ॥

द्विशततमोऽध्यायः ॥ २०० ॥
स्पर्शनमिन्द्रियाणामिति ध. पाठः ॥ ४ ॥

न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ॥ ६
तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ॥ ७
पश्यन्नपि यथा लक्ष्म जनः सोमेन विन्दति ।
एवमस्ति न चोत्पन्नं न च तन्न परायणम् ॥ ८
रूपवन्तमरूपत्वादुदयास्तमने बुधाः ।
धिया समनुपश्यन्ति तद्गताः सवितुर्गतिम् ॥ ९
तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः ।
प्रत्यासन्नं निनीषन्ति ज्ञेयं ज्ञानाभिसंहितम् ॥ १०
न हि खल्वनुपायेन कश्चिदर्थोऽभिसिद्ध्यति ।
सूत्रजालैर्यथा मत्स्यान्बध्नन्ति जलजीविनः ॥ ११
मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा ।
गजानां च गजैरेव ज्ञेयं ज्ञानेन गृह्यते ॥ १२
अहिरेव ह्यहेः पादान्पश्यतीति निदर्शनम् ।
तद्वन्मूर्तिषु मूर्तिस्थं ज्ञेयं ज्ञानेन पश्यति ॥ १३
नोत्सहन्ते यथा वेत्तुमिन्द्रियैरिन्द्रियाण्यपि ।
तथैवेह परा बुद्धिः परं बुद्ध्या न पश्यति ॥ १४
यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते ।
न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥ १
क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।
तद्वन्मूर्तिविमुक्तोऽसौ शरीरी नोपलभ्यते ॥ १
यथा कोशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः ।
तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः ॥ १
जन्म वृद्धिः क्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।
सा तु चन्द्रमसो व्यक्तिर्न तु तस्य शरीरिणः ॥ १
उत्पत्तिवृद्धिव्ययतो यथा स इति गृह्यते ।
चन्द्र एव त्वमावास्यां तथा भवति मूर्तिमान् ॥ १
नाभिसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः ।
विसृजंश्चोपसर्पंश्च तद्वत्पश्य शरीरिणम् ॥ २
यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते ।
तद्वच्छरीरसंयुक्तं ज्ञानं तदुपलभ्यते ॥ २
यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते ।
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ॥ २
यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः ।
तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः ॥ २

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

---

## द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादः ॥ १ ॥

मनुरुवाच ।
यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम् ।
ज्ञानमिन्द्रियसंयुक्तं तद्वत्प्रेत्य भवाभवौ ॥ १
यथाऽम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा ।
तद्वत्प्रसन्नेन्द्रियवाञ्ज्ञेयं ज्ञानेन पश्यति ॥ २
स एव लुलिते तस्मिन्यथा रूपं न पश्यति ।
तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञाने न पश्यति ॥ ३
अबुद्धिरज्ञानकृता अबुद्ध्या दूष्यते मनः ।
दुष्टस्य मनसः पञ्च संप्रदुष्यन्ति मानसाः ॥ ४
अज्ञानतृप्तो विषयेष्ववगाढो न पश्यति ।
स दृष्ट्वैव तु पूतात्मा विषयेभ्यो निवर्तते ॥ ५
तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।
निवर्तते तदा तर्षः पापमन्तर्गतं यदा ॥ ६
'अन्तर्गतेन पापेन दह्यमानेन चेतसा ।
शुभाशुभविकारेण न स भूयोऽभिजायते ॥' ७
विषयेषु तु संसर्गाच्छाश्वतस्य तु संश्रयात् ।
मनसा चान्यथा काङ्क्षन्परं न प्रतिपद्यते ॥ ८
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।

---

एवमस्ति नवेलन्यो न वेत्ति न परायणम् इति ध. पाठः ॥ ८ ॥ ज्ञानेन गृह्यते इति ट. ड. थ. पाठः ॥ १३ ॥

एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
अज्ञानदुष्टो विषयेष्ववगाढो न दृश्यते इति ध. पाठः ॥ ५ ॥

अथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ ९
प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैः सुखी ।
तस्मादिन्द्रियचौरेभ्यो यच्छेदात्मानमात्मना ॥ १०
इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः ।
बुद्धेः परतरं ज्ञानं ज्ञानात्परतरं परम् ॥ ११
अव्यक्तात्प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।
मनः श्रोत्रादिभिर्युक्तं शब्दादीन्साधु पश्यति १२
यस्तांस्त्यजति शब्दादीन्सर्वाश्च व्यक्तयस्तथा ।
'प्रसृतानीन्द्रियाण्येव प्रतिसंहरति कूर्मवत् ।'
विमुञ्चत्याकृतिग्रामांस्तान्मुक्त्वाऽमृतमश्नुते ॥ १३
उद्यन्हि सविता यद्वत्सृजते रश्मिमण्डलम् ।
'दृश्यते मण्डलं तस्य न च दृश्येत मण्डली ।
तद्वद्देहस्तु संदृश्य आत्माऽदृश्यः परः सदा ॥ १४
ग्रस्तं ह्युद्गिरते नित्यमुद्गीथं वेत्ति नित्यशः ।
बाल्ये रथाभ्यां योगेन तत्त्वज्ञानं तु संमतम् ॥' १५
स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ।
'आदत्ते सर्वभूतानां रसभूतं विकारवान् ॥' १६
अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः ।
प्राप्येन्द्रियगुणान्पञ्च सोऽस्तमावृत्य गच्छति ।
'रश्मिमण्डलहीनस्तु न चासौ नास्ति तावता ॥' १७
प्रणीतं कर्मणा मार्गं नीयमानः पुनःपुनः ।
प्राप्नोत्ययं कर्मफलं प्रवृद्धं धर्ममाप्तवान् ॥ १८
विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ १९
बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्तते ।
तदा संपद्यते ब्रह्म तत्रैव प्रलयं गतम् ॥ २०
अस्पर्शनमशृण्वानमनास्वादमदर्शनम् ।
अघ्राणमवितर्कं च सत्त्वं प्रविशते परम् ॥ २१
'अव्यक्तात्प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।
आत्मनः प्रसृता बुद्धिरव्यक्तं ज्ञानमुच्यते ॥ २२
तस्माद्बुद्धिः स्मृता तज्ज्ञैर्मनस्तस्मात्ततः स्मृतम् ।
तस्मादाकृतयः पञ्च मनः परममुच्यते ॥ २३
तस्मात्परतरा बुद्धिर्ज्ञानं तस्मात्परं स्मृतम् ।
ततः सूक्ष्मस्ततो ह्यात्मा तस्मात्परतरं न च ।
इन्द्रियाणि निरीक्षन्ते मनसैतानि सर्वशः ॥' २४
मनस्त्वाकृतयो सत्त्वा मनस्त्वभिगतं मतिम् ।
मतिस्त्वभिगता ज्ञानं ज्ञानं चाभिगतं महत् ॥ २५
नेन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः ।
न बुद्धिर्बुध्यतेऽव्यक्तं सूक्ष्मं त्वेतानि पश्यति ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

## त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादः ॥ १ ॥

मनुरुवाच ।
दुःखोपघाते शारीरे मानसे चाप्युपस्थिते ।
यस्मिन्न शक्यते कर्तुं यत्नस्तं नानुचिन्तयेत् ॥ १
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि चाभ्येति भूयश्चापि प्रवर्तते ॥ २
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ ३
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ ४
न जानपदिकं दुःखमेकः शोचितुमर्हति ।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ ५
सुखाद्बहुतरं दुःखं जीविते नास्ति संशयः ।
स्निग्धस्य चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ ६
परित्यजति यो दुःखं सुखं वाऽप्युभयं नरः ।
अभ्येति ब्रह्म सोऽत्यन्तं न ते शोचन्ति पण्डिताः ॥ ७
दुःखमर्था हि युज्यन्ते पालने न च ते सुखम् ।

अघ्राणमविमर्शं चेति थ. पाठः ॥ २१ ॥ द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

उपक्रमं प्रतीकारोपायम् ॥ ५ ॥ मरणं भवति ॥ ६ ॥ ते ब्रह्माभिगताः ॥ ७ ॥ त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥ ८
ज्ञानं ज्ञेयाभिनिर्वृत्तं विद्धि ज्ञानगुणं मनः ।
प्रज्ञाकरणसंयुक्तं ततो बुद्धिः प्रवर्तते ॥ ९
यदा कर्मगुणोपेता बुद्धिर्मनसि वर्तते ।
तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ १०
सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्तते ।
अपरादभिनिःस्रौति गिरेः शृङ्गादिवोदकम् ॥ ११
यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् ।
तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ १२
मनस्त्वसंहृतं बुद्ध्या ह्रीन्द्रियार्थनिदर्शकम् ।
न समर्थं गुणापेक्षि निर्गुणस्य निदर्शने ॥ १३
सर्वाण्येतानि संवार्य द्वाराणि मनसि स्थितः ।
मनस्येकाग्रतां कृत्वा तत्परं प्रतिपद्यते ॥ १४
यथा महान्ति भूतानि निवर्तन्ते गुणक्षये ।
तथेन्द्रियाण्युपादाय बुद्धिर्मनसि वर्तते ॥ १५
यदा मनसि सा बुद्धिर्वर्ततेऽन्तरचारिणी ।
व्यवसायगुणोपेता तदा संपद्यते मनः ॥ १६
गुणवद्भिर्गुणोपेतं यदा ध्यानगतं मनः ।
तदा सर्वान्गुणान्हित्वा निर्गुणं प्रतिपद्यते ॥ १७
अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम् ।
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥ १८
तपसा चानुमानेन गुणैर्जात्या श्रुतेन च ।
निनीषेत्परमं ब्रह्म विशुद्धेनान्तरात्मना ॥ १९
गुणहीनो हि तं मार्गं बहिः समनुवर्तते ।
गुणाभावात्प्रकृत्या वा निस्तर्क्यं ज्ञेयसंमितम् ॥ २०
नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्तते ।
गुणप्रसारिणी बुद्धिर्हुताशन इवेन्धने ॥ २१
यदा पञ्च वियुक्तानि इन्द्रियाणि स्वकर्मभिः ।
तदा तत्परमं ब्रह्म संमुक्तं प्रकृतेः परम् ॥ २२
एवं प्रकृतितः सर्वे संभवन्ति शरीरिणः ।
निवर्तन्ते निवृत्तौ च स्वर्गे नैवोपयान्ति च ॥ २३
पुरुषप्रकृतिर्बुद्धिर्विशेषाश्चेन्द्रियाणि च ।
अहंकारोऽभिमानश्च संभूतो भूतसंज्ञकः ॥ २४
एतस्याद्या प्रवृत्तिस्तु प्रधानात्संप्रवर्तते ।
द्वितीया मिथुनव्यक्तिमविशेषान्नियच्छति ॥ २५
धर्मादुत्कृष्यते श्रेयस्तथा धर्मोऽप्यधर्मतः ।
रागवान्प्रकृतिं ह्येति विरक्तो ज्ञानवान्भवेत् ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

---

## चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादसमापनम् ॥ १ ॥

मनुरुवाच ।
'तदेव सततं मन्ये न शक्यमनुवर्णितुम् ।
यथा निदर्शनं वस्तु न शक्यमनुबोधितुम् ॥ १
यथाहि सारं जानाति न कथंचन संस्थितम् ।
परकायच्छविस्तद्वद्देहेऽयं चेतनस्तथा ॥ २
विना कायं न सा च्छाया तां विना कायमस्त्युत ।
तद्वदेव विना नास्ति प्रकृतेरिह वर्तनम् ॥ ३
इदं वै ---नास्ति नेदमस्ति परं विना ।
जीवात्मना त्वसौ छिन्नस्त्वेष चैव परात्मना ॥ ४
तत्तथेति विदुः केचिदतथ्यमिति चापरे ।
उभयं मे मतं विद्वन्मुक्तिहेतौ समाहितम् ॥ ५
विमुक्तैश्च मृगः सोऽपि दृश्यते संयतेन्द्रियः ।
सर्वेषां न हि दृश्यो हि तडिद्वत्स्फुरति ह्यसौ ॥ ६
ब्राह्मणस्य समादृश्यो वर्तते सोऽपि किं पुनः ।
विद्यते परमः शुद्धः साक्षिभूतो विभावसुः ॥ ७
श्रुतिरेषा ततो नित्या तस्मादेकः परो मतः ।
न प्रयोजनमुद्दिश्य चेष्टा तस्य महात्मनः ॥ ८
तादृशोस्त्विति मन्तव्यस्तथा सत्यं महात्मना ।
नानासंस्थेन भेदेन सदा गतिविभेदवत् ।
तस्य भेदः समाख्यातो भेदो ह्यस्ति तथाविधः ॥९

एवं विद्वन्विजानीहि परमात्मानमव्ययम् ।
तत्तद्गुणविशेषेण संज्ञानामनुसंयुतम् ॥ १०
सर्वेश्वरः सर्वमयः स च सर्वप्रवर्तकः ।
सर्वात्मकः सर्वशक्तिः सर्वकारणकारणम् ॥ ११
सर्वसाधारणः सर्वैरुपास्यश्च महात्मभिः ।
वासुदेवेति विख्यातस्तं विदित्वाऽश्नुतेऽमृतम्' १२
यदा ते पञ्चभिः पञ्च युक्तानि मनसा सह ।
अथ तद्रक्ष्यते ब्रह्म मणौ सूत्रमिवार्पितम् ॥ १३
तदेव च यथा सूत्रं सुवर्णे वर्तते पुनः ।
मुक्तास्वथ प्रवालेषु मृन्मये राजते तथा ॥ १४
तद्वद्गोऽश्वमनुष्येषु तद्वद्धस्तिमृगादिषु ।
तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः ॥ १५
येनयेन शरीरेण यद्यत्कर्म करोत्ययम् ।
तेनतेन शरीरेण तत्तत्फलमुपाश्नुते ॥ १६
यथा ह्येकरसा भूमिरोषध्यर्थानुसारिणी ।
तथा कर्मानुगा बुद्धिरन्तरात्माऽनुदर्शिनी ॥ १७
ज्ञानपूर्वोद्भवा लिप्सा लिप्सापूर्वाभिसन्धिता ।
अभिसन्धिपूर्वकं कर्म कर्ममूलं ततः फलम् ॥ १८
फलं कर्मात्मकं विद्यात्कर्म ज्ञेयात्मकं तथा ।
ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सदसदात्मकम् ॥ १९
'तदेवमिष्यते ब्रह्म संख्यानाद्विनिभिद्यते ।'
ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा ।
क्षयान्ते यत्फलं विद्याज्ज्ञानं ज्ञेयप्रतिष्ठितम् ॥२०
महद्धि परमं भूतं युक्ताः पश्यन्ति योगिनः ।
अबुधास्तं न पश्यन्ति ह्यात्मस्थं गुणबुद्धयः ॥२१
पृथिवीरूपतो रूपमपामिह महत्तरम् ।
अद्भ्यो महत्तरं तेजस्तेजसः पवनो महान् ॥ २२
पवनाच्च महद्व्योम तस्मात्परतरं मनः ।
मनसो महती बुद्धिर्बुद्धेः कालो महान्स्मृतः ॥२३
कालात्स भगवान्विष्णुर्यस्य सर्वमिदं जगत् ।
नादिर्न मध्यं नैवान्तस्तस्य देवस्य विद्यते ॥ २४
अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः ।
अत्येति सर्वदुःखानि दुःखं ह्यन्तवदुच्यते ॥ २५
तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं पदम् ।
तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः ॥ २६
गुणेष्वेते प्रकाशन्ते निर्गुणत्वात्ततः परम् ।
निवृत्तिलक्षणो धर्मस्तथाऽऽनन्त्याय कल्पते ॥ २७
ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः ।
जिह्वाग्रेषु प्रवर्तन्ते यत्नसाध्याविनाशिनः ॥ २८
न चैवमिष्यते ब्रह्म शरीराश्रयसंभवम् ।
न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ॥२९
ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते ।
अन्तश्चादिमतां दृष्टो न त्वादिर्ब्रह्मणः स्मृतः ॥३०
अनादित्वादनन्तत्वात्तदनन्तमथाव्ययम् ।
अव्ययत्वाच्च निर्दुःखं द्वन्द्वाभावस्ततः परम् ॥ ३१
अदृष्टतोऽनुपायाच्च प्रतिसन्धेश्च कर्मणः ।
न तेन मर्त्याः पश्यन्ति येन गच्छन्ति तत्पदम् ३२
विषयेषु च संसर्गाच्छाश्वतस्य च संशयात् ।
मनसा चान्यदाकाङ्क्षन्परं न प्रतिपद्यते ॥ ३३
गुणान्यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः ।
परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः ॥ ३४
गुणैर्यस्त्ववरैर्युक्तः कथं विद्याद्गुणानिमान् ।
अनुमानाद्धि गन्तव्यं गुणैरवयवैः परम् ॥ ३५
सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः ।
मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनम् ॥ ३६
ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या मनस्तथा ।
मनसा चेन्द्रियग्राममक्षरं प्रतिपद्यते ॥ ३७
बुद्धिप्रहीणो मनसा समृद्ध-
स्तथाऽनिराशीर्गुणतामुपैति ।
परं त्यजन्तीह विलोभ्यमाना
हुताशनं वायुरिवेन्धनस्थम् ॥ ३८
गुणादाने विप्रयोगे च तेषां
मनः सदा विद्धि परावराभ्याम् ।
अनेनैव विधिना संप्रवृत्तो
गुणादाने ब्रह्म शरीरमेति ॥ ३९

नयेन पित्र्येण दैवेन गान्धर्वेण प्राजापत्येन वा प्राप्येण *न यस्य यस्य देहस्य प्राप्त्यर्थमित्यर्थः । यद्यत्कर्म यज्ञादिकम् ॥ १६ ॥ शाश्वतस्य दर्शनात् इति झ. पाठः ॥ ३३ ॥

अव्यक्तात्मा पुरुषोऽव्यक्तकर्मा
सोऽव्यक्तत्वं गच्छति ह्यन्तकाले ।
तैरेवायं चेन्द्रियैर्वर्धमानै-
र्ग्लायद्भिर्वा वर्ततेऽकामरूपः ॥ ४०
सर्वैरयं चेन्द्रियैः संप्रयुक्तो
देहं प्राप्तः पञ्चभूताश्रयः स्यात् ।
न सामर्थ्याद्गच्छति कर्मणेह
हीनस्तेन परमेणाव्ययेन ॥ ४१
पृथ्व्या नरः पश्यति नान्तमस्या
ह्यन्तश्चास्या भविता चेति विद्धि ।
परं न यातीह विलोभ्यमानो
यथा प्लवं वायुरिवार्णवस्थम् ॥ ४२
दिवाकरो गुणमुपलभ्य निर्गुणो
यथा भवेदपगतरश्मिमण्डलः ।
तथा ह्यसौ मुनिरिह निर्विशेषवान्
स निर्गुणं प्रविशति ब्रह्म चाव्ययम् ॥ ४३
अनागतं सुकृतवतां परां गतिं
स्वयंभुवं प्रभवनिधानमव्ययम् ।
सनातनं यदमृतमव्ययं ध्रुवं
निचाय्य तत्परममृतत्वमश्नुते ॥ ४४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

## पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

भीष्मेण युधिष्ठिरंप्रति निबन्धनेन स्वमातरंप्रति अरण्यत्वेन रूपितस्य संसारचक्रस्य विवरणम् ॥ १ ॥ तथा नारदसावित्रीसंवादः ॥ २ ॥ नारदेन तपसा श्रीभगवदपरोक्षीकरणम् ॥ ३ ॥

*युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ दुःखशोकसमाकुले ।
संसारचक्रे लोकानां निर्वेदो नास्ति किंन्विदम् ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निबन्धनस्य संवादं भोगवत्या नृपोत्तम ॥ २
मुनिं निबन्धनं शुष्कं धमनीयाकृतिं तथा ।
निरारम्भं निरालम्बमसज्जन्तं च कर्मणि ।
पुत्रं दृष्ट्वाऽप्युवाचार्ता माता भोगवती तदा ॥ ३
उत्तिष्ठ मूढ किं शेषे निरपेक्षः सुहृज्जनैः ।
निरालम्बो धनोपाये पैतृकं तव किं धनम् ॥ ४
निबन्धन उवाच ।
पैतृकं मे महन्मातः सर्वदुःखालयं त्विह ।
अस्त्येतत्तद्विघाताय यतिष्ये तत्र मा शुचः ॥ ५
इदं शरीरमत्युग्रं पित्रा दत्तमसंशयम् ।
तमेव पितरं गत्वा धनं तिष्ठति शाश्वतम् ॥ ६
कश्चिन्महति संसारे वर्तमानो धनेच्छया ।
वनदुर्गमभिप्राप्तो महत्क्रव्यादसंकुलम् ॥ ७
सिंहव्याघ्रगजाकारैरतिघोरैर्महाशनैः ।
समन्तात्सुपरिक्षिप्तं स दृष्ट्वा व्यथते पुमान् ॥ ८
स तद्वनं ह्यनुचरन्विप्रधावन्नितस्ततः ।
वीक्षमाणो दिशः सर्वाः शरणार्थं प्रधावति ॥ ९
अथापश्यद्वनं रूढं समन्ताद्वागुरावृतम् ।
वनमध्ये च तत्रासीदुदपानः समावृतः ॥ १०
वल्लिभिस्तृणसंछिन्नैर्गूढाभिरभिसंवृतः ।
स पपात द्विजस्तत्र विजने सलिलाशये । ११
विलग्नश्चाभवत्तस्मिँल्लतासन्तानसङ्कुले ।
बाहुभ्यां संपरिष्वक्तस्तया परमसत्वया ॥ १२
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधश्शिराः ।
अधस्तत्रैव जातश्च जम्बूवृक्षः सुदुस्तरः ॥ १

यो व्यक्तत्वं गच्छति ब्रह्मभूयः । सुपुष्पितैः कर्मभिरिध्यमानः सायंदिवो वर्तते कर्मरूपः इति ध. पाठः ॥ ४० ॥ चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

* अयमध्यायः ध. पुस्तक एव दृश्यते ।

कूपस्य तस्य वेलाया अपश्यत्सुमहाफलम् ।
वृक्षं बहुविधं व्योमं वल्लीपुष्पसमाकुलम् ॥ १४
नानारूपा मधुकरास्तस्मिन्वृक्षेऽभवन्किल ।
तेषां मधूनां बहुधा धारा प्रववृते तदा ॥ १५
विलम्बमानः स पुमान्धारां पिबति सर्वदा ।
न तस्य तृष्णा विरता पीयमानस्य संकटे ॥ १६
परीप्सति च तां नित्यमतृप्तः स पुनःपुनः ।
एवं स वसते तत्र दुःखिदुःखी पुनःपुनः ॥ १७
मया तु तद्धनं देयं तव दास्यामि चेच्छसि ।
तस्य च प्रार्थितः सोथ दत्वा मुक्तिमवाप सः॥१८
सा च त्यक्त्वाऽर्थसंकल्पं जगाम परमां गतिम्॥१९
एवं संसारचक्रस्य स्वरूपज्ञा नृपोत्तम ।
परं वैराग्यमागम्य गच्छन्ति परमं पदम् ॥ २०
युधिष्ठिर उवाच ।
एवं संसारचक्रस्य स्वरूपं विदितं न मे ।
पैतृकं तु धनं प्रोक्तं किं तद्विद्वन्महात्मना ॥ २१
कान्तारमिति किं प्रोक्तं को हस्ती स तु कूपकः ।
किंसंज्ञिको महावृक्षो मधु वाऽपि पितामह ॥२२
एतं मे संशयं विद्धि धनशब्दं किमुच्यते ।
कथं लब्धं धनं तेन तथा च किमिदं त्विह ॥ २३
भीष्म उवाच ।
उपाख्यानमिदं सर्वं मोक्षविद्भिरुदाहृतम् ।
सुमतिं विन्दते येन बन्धनाशश्च भारत ॥ २४
एतदुक्तं हि कान्तारं महान्संसार एव सः ।
ये ते प्रतिष्ठिता व्याला व्याधयस्ते प्रकीर्तिताः॥२५
या सा नारी महाघोरा वर्णरूपविनाशिनी ।
तामाहुश्च जरां प्राज्ञाः परिष्वक्तं यया जगत् ॥ २६
यस्तत्र कूपे वसते महाहिः काल एव सः ।
यो वृक्षः स च मृत्युर्हि स्वकृतं तस्य तत्फलम् ॥ २७
तु कृष्णाः सिता राजन्मूषिका रात्र्यहानि वै २८
षट्पदसंयुक्तो यो हस्ती षण्मुखाकृतिः ।
च संवत्सरः प्रोक्तः पाशमासर्तवो मुखाः ॥ २९
तसंसारचक्रस्य स्वरूपं व्याहृतं मया ।
लब्धधनं राजंस्तत्स्वरूपं विनाशय ॥ ३०
एतज्ज्ञात्वा तु सा राजन्परं वैराग्यमास्थिता ।
यथोक्तविधिना भूयः परं पदमवाप सः ॥ ३१
धत्ते धारयते चैव एतस्मात्कारणाद्धनम् ।
तद्गच्छ चामृतं शुद्धं हिरण्यममृतं तपः ॥ ३२
तत्स्वरूपो महादेवः कृष्णो देवकिनन्दनः ।
तस्य प्रसादाद्दुःखस्य नाशं प्राप्स्यसि मानद ॥ ३३
एकः कर्ता स कृष्णश्च ज्ञानिनां परमा गतिः ॥ ३४
इदमाश्रित्य देवेन्द्रो देवा रुद्रास्तथाऽश्विनौ ।
स्वेस्वे पदे विविशिरे भुक्तिमुक्तिविदो जनाः ॥३५
भूतानामन्तरात्माऽसौ स नित्यपदसंवृतः ।
श्रूयतामस्य सद्भावः सम्यग्ज्ञानं यथा तव ॥ ३६
भवेदेतन्निबोध त्वं नारदाय पुरा हरिः ।
दर्शयित्वाऽऽत्मनो रूपं यदवोचत्स्वयं विभुः ॥३७
पुरा देवऋषिः श्रीमान्नारदः परमार्थवान् ।
चचार पृथिवीं कृत्स्नां तीर्थान्यनुचरन्प्रभुः ॥३८
हिमवत्पादमाश्रित्य विचार्य च पुनःपुनः ।
स ददर्श ह्रदं तत्र पद्मोत्पलसमाकुलम् ॥ ३९
ददर्श कन्यां तत्तीरे सर्वाभरणभूषिताम् ।
शोभमानां श्रिया राजन्क्रीडन्तीमुत्पलैस्तथा ॥४०
सा महात्मानमालोक्य नारदेत्याह भामिनी ।
तस्याः समीपमासाद्य तस्थौ विस्मितमानसः ॥ ४१
वीक्षमाणं तमाज्ञाय सा कन्या चारुवासिनी ।
विजजृम्भे महाभागा स्मयमाना पुनः पुनः ॥ ४२
तस्मात्समभवद्वक्त्रात्पुरुषाकृतिसंयुतः ।
रत्नबिन्दुचिताङ्गस्तु सर्वाभरणभूषितः ॥ ४३
आदित्यसदृशाकारः शिरसा धारयन्मणिम् ।
पुनरेव तदाकारसदृशः समजायत ॥ ४४
तृतीयस्तु महाराज विविधाभरणैर्युतः ।
प्रदक्षिणं तु तां कृत्वा विविधध्वनयस्तु ताम् ॥४५
ततः सर्वेण विप्रर्षिः कन्यां पप्रच्छ तां शुभाम् ॥ ४६
का त्वं परमकल्याणि पद्मेन्दुसदृशानने ।
न जाने त्वां महादेवि ब्रूहि सत्यमनिन्दिते ॥ ४७
कन्योवाच ।
सावित्री नाम विप्रर्षे शृणु भद्रं तवास्तु वै ।

किं करिष्यामि तद्ब्रूहि तव यच्चेतसि स्थितम् ।। ४८
नारद उवाच ।
अभिवादये त्वां सावित्रि कृतार्थोऽहमनिन्दिते ।
एतं मे संशयं देवि वक्तुमर्हसि शोभने ।। ४९
यस्तु वै प्रथमोत्पन्नः कोऽसौ स पुरुषाकृतिः ।
बिन्दवस्तु महादेवि मूर्ध्नि ज्योतिर्मयाकृतिः ।। ५०
कन्योवाच ।
अग्रजः प्रथमोत्पन्नो यजुर्वेदस्तथाऽपरः ।
तृतीयः सामवेदस्तु संशयो व्येतु ते मुने ।। ५१
वेदाश्च बिन्दुसंयुक्ता यज्ञस्य फलसंश्रिताः ।
यत्तद्दृष्टं महज्ज्योतिर्ज्योतिरित्युच्यते बुधैः ।। ५२
ऋषे ज्ञेयं मया चाऽपीत्युक्त्वा चान्तरधीयत ।
ततः स विस्मयाविष्टो नारदः पुरुषर्षभ ।
ध्यानयुक्तः स तु चिरं न बुबोध महामतिः ।। ५३
ततः स्नात्वा महातेजा वाग्यतो नियतेन्द्रियः ।
तुष्टाव पुरुषव्याघ्रो जिज्ञासुश्च तदद्भुतम् ।। ५४
ततो वर्षशते पूर्णे भगवाँल्लोकभावनः ।
प्रादुश्चकार विश्वात्मा ऋषेः परमसौहृदात् ।। ५५
तमागतं जगन्नाथं सर्वकारणकारणम् ।
अखिलामरमौल्यङ्गरुक्मारुणपदद्वयम् ।। ५६
वैनतेयपदस्पर्शकिणशोभितजानुकम् ।
पीताम्बरलसत्काञ्चीदामबद्धकटीतटम् ।। ५७
श्रीवत्सवक्षसं चारुमणिकौस्तुभकन्धरम् ।
मन्दस्मितमुखाम्भोजं चलदायतलोचनम् ।। ५८
नम्रचापानुकरणनम्रभ्रूयुगशोभितम् ।
नानारत्नमणीवज्रस्फुरन्मकरकुण्डलम् ।। ५९
इन्द्रनीलनिभाभं तं केयूरमकुटोज्ज्वलम् ।
देवैरिन्द्रपुरोगैश्च ऋषिसङ्घैरभिष्टुतम् ।।
नारदो जयशब्देन ववन्दे शिरसा हरिम् ।।
ततः स भगवाञ्श्रीमान्मेघगम्भीरया गिरा ।
प्राहेशः सर्वभूतानां नारदं पतितं क्षितौ ।।
भद्रमस्तु ऋषे तुभ्यं वरं वरय सुव्रत ।
यत्ते मनसि सुव्यक्तमस्ति च प्रददामि तत् ।।
स चेमं जयशब्देन प्रसीदेत्यातुरो मुनिः ।
प्रोवाच हृदि संरूढं शङ्खचक्रगदाधरम् ।।
विवक्षितं जगन्नाथ मया ज्ञातं त्वयाऽच्युत ।
तत्प्रसीद हृषीकेश श्रोतुमिच्छामि तद्धरे ।।
ततः स्वयन्महाविष्णुरभ्यभाषत नारदम् ।
यद्दृष्टं मम रूपं तु वेदानां शिरसि त्वया ।।
निर्द्वन्द्वा निरहंकाराः शुचयः शुद्धलोचनाः ।
तं मां पश्यन्ति सततं तान्पृच्छ यदिहेच्छसि ।। ६
ये योगिनो महाप्राज्ञा मदंशा ये व्यवस्थिताः
तेषां प्रसादं देवर्षे मत्प्रसादमवैहि तत् ।। ६
भीष्म उवाच ।
इत्युक्त्वा स जगामाथ भगवान्भूतभावनः ।
तस्माद्व्रज हृषीकेशं कृष्णं देवकिनन्दनम् ।। ६
एतमाराध्य गोविन्दं गता मुक्तिं महर्षयः ।
एष कर्ता विकर्ता च सर्वकारणकारणम् ।। ७
मयाऽप्येतच्छ्रुतं राजन्नारदात्तु निबोध तत् ।
स्वयमेव समाचष्ट नारदो भगवान्मुनिः ।। ७

समस्तसंसारविघातकारणं
भजन्ति ये विष्णुमनन्यमानसाः ।
ते यान्ति सायुज्यमतीव दुर्लभ-
मितीव नित्यं हृदि वर्णयन्ति ।।' ७

।। इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चाधिकद्विशततमोऽध्यायः ।। २०५ ।।

## षडधिकद्विशततमोऽध्यायः ।। २०६ ।।

भीष्मेण युधिष्ठिरंप्रति भूतादिजगत्सृष्टिप्रकारनिरूपणम् ।। १ ।। तथा नारदोदितनृसिंहादिभगवत्प्रादुर्भावचरित्रनिरूपणपूर्वकं श्रीकृष्णस्य सर्वोत्तमत्वप्रतिपादनेन तद्ध्यानविधानम् ।। २ ।।

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम् ।

मया विवक्षितं त्वया ज्ञातमिति संबन्धः ।। ६५ ।। व्रज शरणमिति शेषः ।।६९।। पञ्चाधिकद्विशततमोऽध्यायः ।।२०५।।

कर्तारमकृतं विष्णुं भूतानां प्रभवाप्ययम् ॥ १
नारायणं हृषीकेशं गोविन्दमपराजितम् ।
तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवम् ॥ २
भीष्म उवाच ।
श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ ३
असितो देवलस्तात वाल्मीकिश्च महातपाः ।
मार्कण्डेयश्च गोविन्दे कथयन्त्यद्भुतं महत् ॥ ४
'केशवस्य मया राजन्न शक्या वर्णितुं गुणाः ।
ईदृशोऽसौ हृषीकेशो वासुदेवः परात्परः ॥'
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।
पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ॥ ६
किंतु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनि ।
महात्मनि महाबाहो शृणु तानि युधिष्ठिर ॥ ७
यानि चाहुर्मनुष्येन्द्र ये पुराणविदो जनाः ।
श्रुत्वा सर्वाणि गोविन्दे कीर्तयिष्यामि तान्यहम् ८
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
वायुर्ज्योतिस्तथा चापः खं च गां चान्वकल्पयत् ९
स सृष्ट्वा पृथिवीं चैव सर्वभूतेश्वरः प्रभुः ।
अप्स्वेव शयनं चक्रे महात्मा पुरुषोत्तमः ॥ १०
सर्वतेजोमयस्तस्मिञ्शयानः शयने शुभे ।
सोऽग्रजं सर्वभूतानां संकर्षणमचिन्तयत् ॥ ११
आश्रयं सर्वभूतानां मनसेतीह शुश्रुम ।
स धारयति भूतानि उभे भूतभविष्यती ॥ १२
'प्रद्युम्नमसृजत्तस्मात्सर्वतेजःप्रकाशकम् ।
अनिरुद्धस्ततो जज्ञे सर्वशक्तिर्महाद्युतिः ॥ १३
अप्सु व्योमगतः श्रीमान्योगनिद्रामुपेयिवान् ।
तस्मात्संजज्ञिरे देवा ब्रह्मविष्णुमहेश्वराः ।
लयस्थित्यन्तकर्माणस्त्रयस्ते सुमहौजसः ॥' १४
ततस्तस्मिन्महाबाहौ प्रादुर्भूते महात्मनि ।
भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत ॥ १५
तत्र भगवान्देवः पुष्करे भ्राजयन्दिशः ।
ा सम्भवत्तात सर्वभूतपितामहः ॥ १६
तस्मिन्नपि महाबाहौ प्रादुर्भूते महात्मनि ।
तमसः पूर्वजो जज्ञे मधुर्नाम महासुरः ॥ १७
तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम् ।
ब्रह्मणोपचितिं कुर्वञ्जघान पुरुषोत्तमः ॥ १८
तस्य तात वधात्सर्वे देवदानवमानवाः ।
मधुसूदनमित्याहुर्ऋषभं सर्वसात्वताम् ॥ १९
ब्रह्माऽनुससृजे पुत्रान्मानसान्दक्षसप्तमान् ।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ २०
मरीचिः कश्यपं तात पुत्रमग्रजमग्रजः ।
मानसं जनयामास तैजसं ब्रह्मवित्तमम् ॥ २१
अङ्गुष्ठात्ससृजे ब्रह्मा मरीचेरपि पूर्वजम् ।
सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः ॥ २२
तस्य पूर्वमजायन्त दश तिस्रश्च भारत ।
प्रजापतेर्दुहितरस्तासां ज्येष्ठाऽभवद्दितिः ॥ २३
सर्वधर्मविशेषज्ञः पुण्यकीर्तिर्महायशाः ।
मारीचः कश्यपस्तात सर्वासामभवत्पतिः ॥ २४
उत्पाद्य तु महाभागस्तासामवरजा दश ।
ददौ धर्माय धर्मज्ञो दक्ष एव प्रजापतिः ॥ २५
धर्मस्य वसवः पुत्रा रुद्राश्चामिततेजसः ।
विश्वेदेवाश्च साध्याश्च मरुत्वन्तश्च भारत ॥ २६
अपराश्च यवीयस्यस्ताभ्योऽन्याः सप्तविंशतिः ।
सोमस्तासां महाभागः सर्वासामभवत्पतिः ॥ २७
इतरास्तु व्यजायन्त गन्धर्वांस्तुरगान्द्विजान् ।
गाश्च किंपुरुषान्मत्स्यानुद्भिज्जांश्च वनस्पतीन् ॥ २८
आदित्यानदितिर्जज्ञे देवश्रेष्ठान्महाबलान् ।
तेषां विष्णुर्वामनोऽभूद्गोविन्दश्चाभवत्प्रभुः ॥ २९
तस्य विक्रमणाच्चापि देवानां श्रीर्व्यवर्धत ।
दानवाश्च पराभूता दैतेयाश्चासुरी प्रजा ॥ ३०
विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः ।
दितिस्तु सर्वानसुरान्महासत्वानजीजनत् ॥ ३१
'ततःससर्ज भगवान्मृत्युं लोकभयंकरम् ।
हर्तारं सर्वभूतानां ससर्ज च जनार्दनः ॥' ३२
अहोरात्रं च कालं च यथर्तु मधुसूदनः ।

कर्तारमसृत विष्णुमिति ङ. थ. पाठः ॥ १ ॥ ततस्त्वर- ढज्ञेति ङ. थ. पाठः ॥ २५ ॥ द्विरदांश्च वनस्पतीनिति ङ. पाठः । विशदांश्च वनस्पतीनिति ध. पाठः । इतराः कश्यपस्त्रियः । व्यजायन्त व्यजनयन्त ॥ २८ ॥

पूर्वाह्णं चापराह्णं च सर्वमेवान्वकल्पयत् ॥ ३३
लब्ध्वापः सोऽसृजन्मेघांस्तथा स्थावरजङ्गमान् ।
पृथिवीं सोऽसृजद्विश्वां सहीतां भूरितेजसा ॥३४
ततः कृष्णो महाभागः पुनरेव युधिष्ठिर ।
ब्राह्मणानां शतं श्रेष्ठं मुखादेवासृजत्प्रभुः ॥ ३५
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ।
पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ॥ ३६
स एवं चतुरो वर्णान्समुत्पाद्य महातपाः ।
अध्यक्षं सर्वभूतानां धातारमकरोत्स्वयम् ॥ ३७
वेदविद्याविधातारं ब्रह्माणममितद्युतिम् ।
भूतमातृगणाध्यक्षं विरूपाक्षं च सोऽसृजत् ॥३८
शासितारं च पापानां पितॄणां समवर्तिनम् ।
असृजत्सर्वभूतात्मा निधिपं च धनेश्वरम् ॥ ३९
यादसामसृजन्नाथं वरुणं च जलेश्वरम् ।
वासवं सर्वदेवानामध्यक्षमकरोत्प्रभुः ॥ ४०
यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम् ।
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम् ॥ ४१
न चैषां मैथुनो धर्मो बभूव भरतर्षभ ।
संकल्पादेव चैतेषां गर्भः समुपपद्यते ॥ ४२
ततस्त्रेतायुगे काले संस्पर्शाज्जायते प्रजा ।
न ह्यभून्मैथुनो धर्मस्तेषामपि जनाधिप ॥ ४३
द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप ।
तथा कलियुगे राजन्द्वन्द्वमापेदिरे जनाः ॥ ४४
एष भूतपतिस्तात स्वध्यक्षश्च तथोच्यते ।
निरपेक्षांश्च कौन्तेय कीर्तयिष्यामि तच्छृणु ॥ ४५
दक्षिणापथजन्मानः सर्वे करभृतस्तव ।
आन्ध्राः पुलिन्दाः शबराश्चूचुपा मद्रकैः सह ४६
उत्तरापथजन्मानः कीर्तयिष्यामि तानपि ।
ये तु काम्भोजगान्धाराः किराता बर्बरैः सह ॥४७
एते पापकृतस्तात चरन्ति पृथिवीमिमाम् ।
बकश्वपाकगृध्राणां सधर्माणो नराधिप ॥ ४८
नैते कृतयुगे तात चरन्ति पृथिवीमिमाम् ।
त्रेताप्रभृति वर्धन्ते ते जना भरतर्षभ ॥ ४९

ततस्तस्मिन्महाघोरे संध्याकाले युगान्तिके ।
राजानः समसज्जन्त समासाद्येतरेतरम् ॥ ५०
'ऐन्द्रं रूपं समास्थाय ह्यसुरेभ्यो चरन्महीम् ।
स एव भगवान्देवो वेदित्वं च गता मही ॥ ५१
एवंभूते सृष्टिर्नारसिंहादयः क्रमात् ।
प्रादुर्भावाः स्मृता विष्णोर्जगतीरक्षणाय वै ॥ ५२
एष कृष्णो महायोगी तत्तत्कार्यानुरूपणम् ।
हिरण्यकशिपुं दैत्यं हिरण्याक्षं तथैव च ॥ ५३
रावणं च महादैत्यं हत्वासौ पुरुषोत्तमः ।
भूमेर्दुःखोपनाशार्थं ब्रह्मशक्रादिभिः स्तुतः ॥५४
आत्मनोऽङ्गान्महातेजा उद्बबर्ह जनार्दनः ।
सितकृष्णौ महाराज केशौ हरिरुदारधीः ॥ ५५
वसुदेवस्य देवक्यामेष जात इहोत्तमः ।
देहवानिह विश्वात्मा संबन्धी ते जनार्दनः ॥ ५६
आविर्बभूव योगीन्द्रो मनोतीतो जगत्पतिः ।
अचिन्त्यः पुरुषव्याघ्र नैव केवलमानुषः ॥ ५७
अव्यक्तादिविशेषान्तं परिमाणार्थसंयुतम् ।
क्रीडा हरेरिदं सर्वं क्षरमित्येव धार्यताम् ॥ ५८
अक्षरं तत्परं नित्यं वैरूप्यं जगतो हरेः ।
तद्विद्धि रूपमतुलममृतत्वं भवज्जितम् ॥ ५९
तदेव कृष्णो दाशार्हः श्रीमाञ्श्रीवत्सलक्षणः ।
न भूतसृष्टिसंस्थानं देहोऽस्य परमात्मनः ॥ ६०
देहवानिह यो विष्णुरसौ मायामयो हरिः ।
आत्मनो लोकरक्षार्थं ध्याहि नित्यं सनातनम् ६१
अङ्गानि चतुरे वेदा मीमांसा न्यायविस्तरः ।
इतिहासपुराणानि धर्माः स्वायंभुवादयः ॥ ६२
य एनं प्रतिवर्तन्ते वेदान्तानि च सर्वशः ।
भक्तिहीना न तैर्यान्ति नित्यमेनं कथंचन ॥ ६३
सर्वभूतेषु भूतात्मा तत्तद्बुद्धिं समास्थितः ।
तस्माद्बुद्धस्त्वमेवैनं ध्याहि नित्यमतन्द्रितः ॥' ६४
एवमेष कुरुश्रेष्ठ प्रादुर्भावो महात्मनः ।
एवं देवर्षिराचष्ट नारदः सर्वलोकदृक् ॥ ६५
नारदोऽप्यथ कृष्णस्य परं मेने नराधिप ।

शतमनन्तम् ॥ ३५ ॥ समवर्तिनं यमम् ॥ ३९ ॥

षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

शाश्वतत्वं महाबाहो यथावद्भरतर्षभ ॥ ६६
एवमेष महाबाहुः केशवः सत्यविक्रमः ।
अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः ॥६७
'एवंविधोऽसौ पुरुषः को वैनं वेत्ति सर्वदा ।
एतत्ते कथितं राजन्भूयः श्रोतुं किमिच्छसि' ॥ ६८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

## सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

भीष्मेण युधिष्ठिरंप्रति मरीच्यादिब्रह्मपुत्रवंशकथनपूर्वकं प्राच्यादिदिग्गतमहर्षिनामनिर्देशः ॥ १ ॥

युधिष्ठिर उवाच ।
के पूर्वमासन्पतयः प्रजानां भरतर्षभ ।
के चर्षयो महाभागा दिक्षु प्रत्येकशः स्थिताः ॥ १
भीष्म उवाच ।
श्रूयतां भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ।
प्रजानां पतयो ये च दिक्षु ये चर्षयः स्मृताः ॥ २
एकः स्वयंभूर्भगवानाद्यो ब्रह्मा सनातनः ।
ब्रह्मणः सप्त वै पुत्रा महात्मानः स्वयंभुवः ॥ ३
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महाभागः सदृशो वै स्वयंभुवा ॥ ४
सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
अत ऊर्ध्वं प्रवक्ष्यामि सर्वानेव प्रजापतीन् ॥ ५
अत्रिवंशसमुत्पन्नो ब्रह्मयोनिः सनातनः ।
प्राचीनबर्हिर्भगवांस्तस्मात्प्राचेतसो दश ॥ ६
दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः ।
तस्य द्वे नामनी लोके दक्षः क इति चोच्यते ॥ ७
मरीचेः कश्यपः पुत्रस्तस्य द्वे नामनी स्मृते ।
अरिष्टनेमिरित्येके कश्यपेत्यपरे विदुः ॥ ८
अत्रेश्चैवौरसः श्रीमान्राजा सोमश्च वीर्यवान् ।
सहस्रं यश्च दिव्यानां युगानां पर्युपासिता ॥ ९
अर्यमा चैव भगवान्ये चास्य तनया विभो ।
एते प्रदेशाः कथिता भुवनानां प्रभावनाः ॥ १०
शशबिन्दोश्च भार्याणां सहस्राणि दशाच्युत ।
एकैकस्यां सहस्रं तु तनयानामभूत्तदा ॥ ११
एवं शतसहस्राणि दश तस्य महात्मनः ।
पुत्राणां च न ते कंचिदिच्छन्त्यन्यं प्रजापतिम् १२
प्रजामाचक्षते विप्राः पुराणाः शाशबिन्दवीम् ।
स वृष्णिवंशप्रभवो महावंशः प्रजापतेः ॥ १३
एते प्रजानां पतयः समुद्दिष्टा यशस्विनः ॥ १४
'शशबिन्दुस्तु राजर्षिर्महायोगी महामनाः ।
अध्यात्मवित्सहस्राणां भार्याणां दशमध्यगः १५
स योगी योगमापन्नस्ततः सायुज्यतां गतः ।'
अतः परं प्रवक्ष्यामि देवांस्त्रिभुवनेश्वरान् ॥ १६
भगोंऽशश्चार्यमा चैव मित्रोऽथ वरुणस्तथा ।
सविता चैव धाता च विवस्वांश्च महाबलः ॥१७
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
इत्येते द्वादशादित्याः कश्यपस्यात्मसंभवाः ॥१८
नासत्यश्चैव दस्रश्च स्मृतो द्वावश्विनावपि ।
मार्तण्डस्यात्मजावेतावष्टमस्य प्रजापतेः ॥ १९
त्वष्टुश्चैवात्मजः श्रीमान्विश्वरूपो महायशाः ॥२०
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥ २१
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
'एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ॥' २२
पूर्वमेव महाभागा वसवोऽष्टौ प्रकीर्तिताः ।
एत एवंविधा देवा मनोरेव प्रजापतेः ।
ते च पूर्वं सुराश्चेति द्विविधाः पितरः स्मृताः ॥२३
शीलयौवनयोस्त्वन्यस्तथाऽन्ये सिद्धसाध्ययोः ।
ऋभवो मरुतश्चैव देवानां चोदितो गणः ॥ २४
एवमेते समाम्नाता विश्वेदेवास्तथाऽश्विनौ ।

अङ्गश्च पौरवः श्रीमान्राजा भौमश्च वीर्तवान् इति ङ. थ. पाठः । अंशश्चैवौरसः श्रीमान्राजा भौमश्च वीर्यवानिति ध.

पाठः ॥ ९ ॥ प्रदेशाः प्रदिशन्ति आज्ञापयन्तीति प्रदेशा ईशनशीला इत्यर्थः । प्रभावनाः प्रकर्षेण स्रष्टारश्च ॥ १० ॥

आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा ॥ २५
अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ ।
स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः ।
इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम् ॥ २६
एतान्वै प्रातरुत्थाय देवान्यस्तु प्रकीर्तयेत् ।
स्वजादन्यकृताच्चैव सर्वपापात्प्रमुच्यते ॥ २७
यवक्रीतोऽथ रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान्बलश्चाङ्गिरसः स्मृतः ॥ २८
ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।
त्रैलोक्यभावनास्तात प्राच्यां सप्तर्षयस्तथा ॥ २९
उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
प्रमुचश्चेध्मवाहश्च भगवांश्च दृढव्रतः ॥ ३०
मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् ।
एते ब्रह्मर्षयो नित्यमाश्रिता दक्षिणां दिशम् ॥ ३१
उषङ्गुः कवषो धौम्यः परिव्याधश्च वीर्यवान् ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥ ३२
अत्रेः पुत्रश्च दुर्वासास्तथा सारस्वतः प्रभुः ।
एते चैव महात्मानः पश्चिमामाश्रिता दिशम् ॥ ३३
अत्रिश्चैव वसिष्ठश्च काश्यपश्च महानृषिः ।
गौतमोऽथ भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ ३४
तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
जमदग्निश्च सप्तैते उदीचीमाश्रिता दिशम् ॥ ३५
एते प्रतिदिशं सर्वे कीर्तितास्तिग्मतेजसः ।
साक्षिभूता महात्मानो भुवनानां प्रभावनाः ॥ ३६
एवमेते महात्मानः स्थिताः प्रत्येकशो दिशम् ।
एतेषां कीर्तनं कृत्वा सर्वपापात्प्रमुच्यते ॥ ३७
यस्यांयस्यां दिशि ह्येते तां दिशं शरणं गतः ।
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च तथा भवेत् ॥ ३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

---

## अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

**भीष्मेण युधिष्ठिरंप्रति हरेर्वराहावतारनिरूपणम् ॥ १ ॥**

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ युधि सत्यपराक्रम ।
श्रोतुमिच्छामि कार्त्स्न्येन कृष्णमव्ययमीश्वरम् ॥ १
यच्चास्य तेजः सुमहद्यच्च कर्म पुरा कृतम् ।
तन्मे सर्वं यथातत्त्वं ब्रूहि त्वं पुरुषर्षभ ॥ २
तिर्यग्योनिगतो रूपं कथं धारितवान्प्रभुः ।
केन कार्यनिसर्गेण तमाख्याहि महाबल ॥ ३
भीष्म उवाच ।
पुराऽहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः ।
तत्रापश्यं मुनिगणान्समासीनान्सहस्रशः ॥ ४
ततस्ते मधुपर्केण पूजां चक्रुरथो मयि ।
प्रतिगृह्य च तां पूजां प्रत्यनन्दमृषीनहम् ॥ ५
कथैषा कथिता तत्र कश्यपेन महर्षिणा ।
मनःप्रह्लादिनीं दिव्यां तामिहैकमनाः शृणु ॥ ६
पुरा दानवमुख्या हि क्रोधलोभसमन्विताः ।
बलेन मत्ताः शतशो नरकाद्या महासुराः ॥ ७
तथैव चान्ये बहवो दानवा युद्धदुर्मदाः ।
न सहन्ते स्म देवानां समृद्धिं तामनुत्तमाम् ॥ ८
'नरकाद्या महाघोरा हिरण्याक्षमुपाश्रिताः ।
उद्योगं परमं चक्रुर्देवानां निग्रहे तदा ॥ ९
नियुतं वत्सराणां तु वायुभक्षोऽभवत्तदा ।
हिरण्याक्षो महारौद्रो लेभे देवात्पितामहात् ।
वरानचिन्त्यानतुलाञ्शतशोऽथ सहस्रशः ॥' १०
दानवैरर्द्यमानास्तु देवा देवर्षयस्तथा ।
न शर्म लेभिरे राजन्क्लिश्यमानास्ततस्ततः ॥ ११
पृथिवीमार्तरूपां ते समपश्यन्दिवौकसः ।
दानवैरभिसंकीर्णां घोररूपैर्महाबलैः ।
भारार्तामपहृष्टां च दुःखितां संनिमज्जतीम् ॥ १२

स्वजात् स्वयं कामतोऽकामतश्च कृतात् । अन्यसंसर्गजात् ॥ २७ ॥ नीलश्चाङ्गिरसः स्मृत इति ङ. ध. पाठः ॥ २८ ॥

त्रैलोक्यगायना इति ङ. थ. पाठः ॥ २९ ॥ सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

'गृहीत्वा पृथिवी देवी पाताले न्यवसत्तदा ।
ततस्त्रैलोक्यमखिलं निरोषधिगणान्वितम् ।
निःस्वाध्यायवषट्कारमभूत्सर्वं समन्ततः ॥' १३
अथादितेयाः संत्रस्ता ब्रह्माणमिदमब्रुवन् ।
कथं शक्ष्यामहे ब्रह्मन्दानवैरभिमर्दनम् ॥ १४
'हिरण्याक्षेण भगवन्गृहीतेयं वसुन्धरा ।
न शक्ष्यामो वयं तत्र प्रवेष्टुं जलदुर्गमम् ॥ १५
तानाह भगवान्ब्रह्मा मुनिरेव प्रसाद्यताम् ।
अगस्त्योऽसौ महातेजाः पातु तज्जलमञ्जसा ॥१६
तथेति चोक्त्वा ते देवा मुनिमूचुर्मुदान्विताः ।
त्रायस्व लोकान्विप्रर्षे जलमेतत्क्षयं नय ॥ १७
तथेति चोक्त्वा भगवान्कालानलसमद्युतिः ।
ध्यायञ्जलादनिवहं स क्षणेन पपौ जलम् ॥ १८
शोषिते तु समुद्रे च देवाः सर्षिपुरोगमाः ।
ब्रह्माणं प्रणिपत्योचुर्मुनिना शोषितं जलम् ।
इति भूयः समाचक्ष्व किं करिष्यामहे विभो ॥ १९
स्वयंभूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया ॥ २०
ते वरेणाभिसंपन्ना बलेन च मदेन च ।
नावबुद्ध्यन्ति संमूढा विष्णुमव्यक्तदर्शनम् ।
वराहरूपिणं देवमधृष्यममरैरपि ॥ २१
एष वेगेन गत्वा हि यत्र ते दानवाधमाः ।
अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः ।
शमयिष्यति तच्छ्रुत्वा जहृषुः सुरसत्तमाः ॥ २२
ततो विष्णुर्महातेजा वाराहं रूपमास्थितः ।
अन्तर्भूमिं संप्रविश्य जगाम दितिजान्प्रति ॥ २३
दृष्ट्वा च सहिताः सर्वे दैत्याः सत्वममानुषम् ।
प्रसह्य तरसा सर्वे संतस्थुः कालमोहिताः ॥ २४
ततस्ते समभिद्रुत्य वराहं जगृहुः समम् ।
संक्रुद्धाश्च वराहं तं व्यकर्षन्त समन्ततः ॥ २५
दानवेन्द्रा महाकाया महावीर्यबलोच्छ्रिताः ।
नाशक्नुवंश्च किंचित्ते तस्य कर्तुं तदा विभो ॥ २६
ततोऽगच्छन्विस्मयं ते दानवेन्द्रा भयं तथा ।
संशयं गतमात्मानं मेनिरे च सहस्रशः ॥ २७
ततो देवाधिदेवः स योगात्मा योगसारथिः ।
योगमास्थाय भगवांस्तदा भरतसत्तम ॥ २८
विननाद महानादं क्षोभयन्दैत्यदानवान् ।
सन्नादिता येन लोकाः सर्वाश्चैव दिशो दश ॥ २९
तेन सन्नादशब्देन लोकानां क्षोभ आगमत् ।
संभ्रान्ताश्च दिशः सर्वा देवाः शक्रपुरोगमाः ॥३०
निर्विचेष्टं जगच्चापि बभूवातिभृशं तदा ।
स्थावरं जङ्गमं चैव तेन नादेन मोहितम् ॥ ३१
ततस्ते दानवाः सर्वे तेन नादेन भीषिताः ।
पेतुर्गतासवश्चैव विष्णुतेजःप्रमोहिताः ॥ ३२
'त्रस्तांश्च देवानालोक्य ब्रह्मा प्राह पितामहः ।
योगेश्वरोऽयं भगवान्वाराहं रूपमास्थितः ।
नर्दमानोऽत्र संयाति मा भैष्ट सुरसत्तमाः ॥३३
एवमुक्त्वा ततो ब्रह्मा नमश्चक्रे पितामहः ।
देवता मुनयश्चैव विष्णुं वै मुक्तिहेतवे ॥ ३४
ततो हरिर्महातेजा ब्रह्माणमभिनन्द्य च ।'
रसातलगतश्चापि वराहस्त्रिदशद्विषाम् ।
खुरैर्विदारयामास मांसमेदोस्थिसंचयान् ॥ ३५
नादेन तेन महता सनातन इति स्मृतः ।
पद्मनाभो महायोगी भूतात्मा भूतभावनः ॥३६
ततो देवगणाः सर्वे पितामहमुपाद्रवन् ।
तत्र गत्वा महात्मानमूचुश्चैव जगत्पतिम् ॥ ३७
नादोऽयं कीदृशो देव नैतं विद्म वयं प्रभो ।
कोसौ हि कस्य वा नादो येन विह्वलितं जगत् ।
देवाश्च दानवाश्चैव मोहितास्तस्य तेजसा ॥ ३८
एतस्मिन्नन्तरे विष्णुर्वाराहं रूपमास्थितः ।
उदतिष्ठन्महाबाहो स्तूयमानो महर्षिभिः ॥ ३९
पितामह उवाच ।
'दिव्यं ......... युद्धमासीन्महात्मनोः ।
हिरण्याक्षस्य विष्णोश्च सर्वसंक्षोभकारणम् ॥ ४०
जघान च हिरण्याक्षमन्तर्भूमिगतं हरिः ।
तदाकर्ण्य महातेजा ब्रह्मा मधुरमब्रवीत् ॥' ४१
पीतामह उवाच ।
निहत्य दानवपतीन्महावर्ष्मा महाबलः ।
महावर्ष्मा महाकायः ॥ ४२ ॥ अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

भूताचार्यः स भूतराट् इति झ. ड. थ. पाठः ॥ ३६ ॥

एष देवो महायोगी भूतात्मा भूतभावनः ॥ ४२
सर्वभूतेश्वरो योगी मुनिरात्मा तथाऽऽत्मनः ।
स्थिरीभवत कृष्णोऽयं सर्वविघ्नविनाशनः ॥ ४३
कृत्वा कर्मातिसाध्वेतदशक्यममितप्रभः ।
समायातः स्वमात्मानं महाभागो महाद्युतिः॥४४
पद्मनाभो महायोगी पुराणपुरुषोत्तमः ।
न संतापो न भीः कार्या शोको वा सुरसत्तमैः ॥४
विधिरेष प्रभावश्च कालः संक्षयकारकः ।
लोकान्धारयता तेन नादो मुक्तो महात्मना ॥ ४
स एष हि महाबाहुः सर्वलोकनमस्कृतः ।
अच्युतः पुण्डरीकाक्षः सर्वभूतादिरीश्वरः ॥ ४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

---

## नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

भीष्मेण युधिष्ठिरंप्रति वासुदेवतत्वकथनम् ॥ १ ॥

*युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ केशवस्य महात्मनः ।
वक्तुमर्हसि तत्वेन माहात्म्यं पुनरेव तु ॥ १
न तृप्याम्यहमप्येनं पश्यञ्शृण्वंश्च भारत ।
एवं कृष्णं महाबाहो तस्मादेतद्ब्रवीहि मे ॥ २
भीष्म उवाच ।
शृणु राजन्कथामेतां वैष्णवीं पापनाशनीम् ।
नारदो मां पुरा प्राह यामहं ते वदामि ताम् ॥ ३
देवर्षिर्नारदः पूर्वं तत्वं वेत्स्यामि वै हरेः ।
इति संचिन्त्य मनसा दध्यौ ब्रह्म सनातनम् ॥ ४
हिमालये शुभे दिव्ये दिव्यं वर्षशतं किल ।
अनुच्छ्वसन्निराहारः संयतात्मा जितेन्द्रियः ॥ ५
ततोऽन्तरिक्षे वागासीत्तं मुनिप्रवरं प्रति ।
मेघगम्भीरनिर्घोषा दिव्या बाह्याऽशरीरिणी ॥ ६
किमर्थं त्वं समापन्नो ध्यानं मुनिवरोत्तम ।
अहं ददामि ते ज्ञानं धर्माद्यं वा वृणीष्व माम् ॥ ७
तच्छ्रुत्वा मुनिरालोच्य संभ्रमाविष्टमानसः ।
किंनु स्यादिति संचिन्त्य वाक्यमाहापरं प्रति ॥ ८
कस्त्वं भवानण्डं विभेद मध्ये
समास्थितो वाक्यमुदीरयन्माम् ।
न रूपमन्यत्तव दृश्यते वै
ईदृग्विधस्त्वं समधिष्ठितोऽसि ॥ ९
पुनस्तमाह स मुनिमनन्तोऽहं बृहत्तरः ।
न मां मूढा विजानन्ति ज्ञानिनो मां विदन्त्युत १
तं प्रत्याह मुनिः श्रीमान्प्रणतो विनयान्वितः ।
भवन्तं ज्ञातुमिच्छामि तव तत्वं ब्रवीहि मे ॥ १
तस्य तद्वचनं श्रुत्वा नारदं प्राह लोकपः ।
ज्ञानेन मां विजानीहि नान्यथा शक्तिरस्ति ते ॥१
नारद उवाच ।
कीदृग्विधं तु तज्ज्ञानं येन जानामि ते तनुम् ।
अनन्त तन्मे ब्रूहि त्वं यद्यनुग्रहवानहम् ॥ १
लोकपाल उवाच ।
विकल्पहीनं विपुलं तस्य चूरं शिवं परम् ।
ज्ञानं तत्तेन जानासि साधनं प्रति ते मुने ॥ १
अत्रावृत्य स्थितं ह्येतत्तच्छुद्धमितरन्मृषा ।
एतत्ते सर्वमाख्यातं संक्षेपान्मुनिसत्तम ॥ १
नारद उवाच ।
त्वमेव तव यत्तत्वं ब्रूहि लोकगुरो मम ।
भवन्तं ज्ञातुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १
ततः प्रहस्य भगवान्मेघगम्भीरया गिरा ।
प्राहेशः सर्वभूतानां न मे चास्यं श्रुतिर्न च ॥ १
न घ्राणजिह्वे दृक्चैव त्वचा नास्ति तथा मुने ।
कथं वक्ष्यामि चात्मानमशरीरस्तथाप्यहम् ॥ १
तज्ज्ञात्वा विस्मयाविष्टो मुनिराह प्रणम्य तम् ।

* अयमध्यायो ध. पुस्तकएव दृश्यते ।

येन त्वं पूर्वमात्मानमनन्तोऽहं बृहत्तरः ।
शतोऽहमिति मां प्रीतः प्रोक्तवानसि तत्कथम् १९
पुनस्तमाह भगवांस्तवाप्यक्षाणि सन्ति वै ।
त्वमेनं ब्रूहि चात्मानं यदि शक्नोषि नारद ॥ २०
आत्मा यथा तव मुने विदितस्तु भविष्यति ।
मां च जानासि तेन त्वमेकं साधनमावयोः ।
इत्युक्त्वा भगवान्देवस्ततो नोवाच किंचन ॥२१
नारदोऽप्युत्स्मयन्खिन्नः क गतोऽसाविति प्रभुः ।
स्थित्वा स दीर्घकालं च मुनिर्व्यामूढमानसः ॥ २२
आह मां भगवान्देवस्त्वनन्तोऽहं बृहत्तरः ।
तेनाहमिति सर्वस्य को वानन्तो बृहत्तरः ॥ २३
केयमुर्वी ह्यनन्ताख्या बृहती नूनमेव सा ।
यस्यां जानन्ति भूतानि विलीनानि ततस्ततः ।
एनां पृच्छामि तरुणीं सैषा नूनमुवाच माम् ॥ २४
इत्येवं स मुनिः श्रीमान्कृत्वा निश्चयमात्मनः ।
स भूतलं समाविश्य प्रणिपत्येदमब्रवीत् ॥ २५
आश्चर्योसि च धन्यासि बृहती त्वं वसुन्धरे ।
त्वामत्र वेत्तुमिच्छामि याग्दृभूताऽसि शोभने ॥२६
तच्छ्रुत्वा धरणी देवी स्मयमानाऽब्रवीदिदम् ।
नाहं हि बृहती विप्र न चानन्ता च सत्तम ॥ २७
कारणं मम यो गन्धो गन्धात्मानं ब्रवीहि तम् ।
ततो मुनिस्तद्धि तत्वं प्रणिपत्येदमब्रवीत् ॥ २८
कारणं मे जलं मत्तो बृहत्तरतमं हि तत् ॥ २९
स समुद्रं मुनिर्गत्वा प्रणिपत्येदमब्रवीत् ।
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ॥३०
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
तच्छ्रुत्वा सरितांनाथः समुद्रो मुनिमब्रवीत् ॥ ३१
कारणं मेऽत्र संपृच्छ रसात्मानं बृहत्तरम् ।
ततो बृहत्तरं विद्वंस्त्वं पृच्छ मुनिसत्तम ॥ ३२
ततो मुनिर्यथायोगं जलं तत्वमवेक्ष्य तत् ।
जलात्मानं प्रणम्याह जलतत्वस्थितो मुनिः ॥ ३३
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं श्रोतुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥३४
ततो रसात्मकः सोऽनु मुनिमाह पुनःपुनः ।
ममापि कारणं पृच्छ तेजोरूपं विभावसुम् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ॥ ३५
ततोऽग्निं प्रणिपत्याह मुनिर्विस्मितमानसः ।
यज्ञात्मानं महावासं सर्वभूतनमस्कृतम् ॥ ३६
आश्चर्योसि च धन्योसि ह्यनन्तश्च बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ३७
ततः प्रहस्य भगवान्मुनिं स्विष्टकृदब्रवीत् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
कारणं मम रूपं यत्तं पृच्छ मुनिसत्तम ॥ ३८
ततो योगक्रमेणैव प्रतीतं तं प्रविश्य सः ।
रूपात्मानं प्रणम्याह नारदो वदतांवरः ॥ ३९
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ४०
उत्स्मयित्वा तु रूपात्मा तं मुनिं प्रत्युवाच ह ।
वायुर्मे कारणं ब्रह्मंस्तं पृच्छ मुनिसत्तम ।
मत्तो बहुतरः श्रीमाननन्तश्च महाबिलम् ॥ ४१
स मारुतं प्रणम्याह भगवान्मुनिसत्तमः ।
योगसिद्धो महायोगी ज्ञानविज्ञानपारगः ॥ ४२
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥४३
ततो वायुर्हि संप्राह नारदं मुनिसत्तमम् ।
कारणं पृच्छ भगवन्स्पर्शात्मानं ममाद्य वै ॥ ४४
मत्तो बृहत्तरः श्रीमाननन्तश्च तथैव सः ।
ततोस्य वचनं श्रुत्वा स्पर्शात्मानमुवाच सः ॥४५
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ४६
तस्य तद्वचनं श्रुत्वा स्पर्शात्मा मुनिमब्रवीत् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ॥ ४७
कारणं मम चैवेममाकाशं च बृहत्तरम् ।
तं पृच्छ मुनिशार्दूल सर्वव्यापिनमव्ययम् ॥ ४८
तच्छ्रुत्वा नारदः श्रीमान्वाक्यं वाक्यविशारदः ।
आकाशं समुपागम्य प्रणम्याह कृताञ्जलिः ॥ ४९
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ५०

आकाशस्तमुवाचेदं प्रहसन्मुनिसत्तमम् ।
नाहं बृहत्तरो ब्रह्मञ्शब्दो वै कारणं मम ।
तं पृच्छ मुनिशार्दूल स वै मत्तो बृहत्तरः ॥ ५१
ततो ह्याविश्य चाकाशं शब्दात्मानमुवाच ह ।
स्वरव्यञ्जनसंयुक्तं नानाहेतुविभूषितम् ।
वेदाख्यं परमं गुह्यं वेदकारणमच्युतम् ॥ ५२
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं श्रोतुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥५३
वेदात्मा प्रत्युवाचेदं नारदं मुनिपुङ्गवम् ।
मया कारणभूतेन सर्ववेत्ता पितामहः ॥ ५४
ब्रह्मणो बुद्धिसंस्थानमास्थितोऽहं महामुने ।
तस्माद्बृहत्तरो मत्तः पद्मयोनिर्महामतिः ।
तं पृच्छ मुनिशार्दूल सर्वकारणकारणम् ॥ ५५
ब्रह्मलोकं ततो गत्वा नारदो मुनिपुङ्गवैः ।
सेव्यमानं महात्मानं लोकपालैर्मरुद्गणैः ॥ ५६
समुद्रैश्च सरिद्भिश्च भूततत्वैः सभूधरैः ।
गन्धर्वैरप्सरोभिश्च ज्योतिषां च गणैस्तथा ॥ ५७
स्तुतिस्तोमग्रहस्तोभैस्तथा वेदैर्मुनीश्वरैः ।
उपास्यमानं ब्रह्माणं लोकनाथं परात्परम् ॥ ५८
हिरण्यगर्भं विश्वेशं चतुर्वक्त्रेण भूषितम् ।
प्रणम्य प्राञ्जलिः प्रह्वस्तमाह मुनिपुङ्गवः ॥ ५९
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ ६०
तच्छ्रुत्वा भगवान्ब्रह्मा सर्वलोकपितामहः ।
उत्स्मयन्मुनिमाहेदं कर्ममूलस्य लोपकम् ॥ ६१
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
लोकानां मम सर्वेषां नाथभूतो बृहत्तरः ॥ ६२
नन्दगोपकुले गोपकुमारैः परिवारितः ।
समस्तजगतां गोप्ता गोपवेषेण संस्थितः ॥ ६३
मद्रूपं च समास्थाय जगत्सृष्टिं करोति सः ।
ऐशानमास्थितः श्रीमान्हन्ति नित्यं हि पाति च ॥
विष्णुः स्वरूपरूपोऽसौ कारणं स हरिर्मम ।
तं पृच्छ मुनिशार्दूल स चानन्तो बृहत्तरः ॥ ६५
ततोऽवतीर्य भगवान्ब्रह्मलोकान्महामुनिः ।
नन्दगोपकुले विष्णुमेनं कृष्णं जगत्पतिम् ॥ ६६
बालक्रीडनकासक्तं वत्सजालविभूषितम् ।
पाययित्वाथ बध्नन्तं धूलिधूम्राननं परम् ॥ ६७
गाहमानैर्हसद्भिश्च नृत्यद्भिश्च समन्ततः ।
पाणिवादनकैश्चैव संवृतं वेणुवादकैः ॥ ६८
प्रणिपत्याब्रवीदेनं नारदो भगवान्मुनिः ।
आश्चर्योसि च धन्योसि ह्यनन्तश्च बृहत्तरः ।
वेत्ताऽसि चाव्ययश्चासि वेत्तुमिच्छामि यादृशम् ६९
ततः प्रहस्य भगवान्नारदं प्रत्युवाच ह ।
मत्तः परतरं नास्ति मत्तः सर्वं प्रतिष्ठितम् ॥ ७०
मत्तो बृहत्तरं नान्यदहमेव बृहत्तरः ।
आकाशे च स्थितः पूर्वमुक्तवानहमेव ते ॥ ७१
न मां वेत्ति जनः कश्चिन्माया मम दुरत्यया ।
भक्त्या त्वनन्यया युक्ता मां विजानन्ति योगिनः ॥
प्रियोसि मम भक्तोसि मम तत्वं विलोकय ।
ददामि तव तज्ज्ञानं येन तत्वं प्रपश्यसि ॥ ७३
अन्येषां चैव भक्तानां मम योगरतात्मनाम् ।
ददामि दिव्यं ज्ञानं च येन तत्वं प्रपश्यसि ॥ ७४
अन्येषां चैव भक्तानां मम योगरतात्मनाम् ।
ददामि दिव्यं ज्ञानं च तेन ते यान्ति मत्पदम् ॥ ७५
एवमुक्त्वा ययौ कृष्णो नन्दगोपगृहं हरिः ॥ ७६
भीष्म उवाच ।
एतत्ते कथितं राजन्विष्णुतत्वमनुत्तमम् ।
भजस्वैनं विशालाक्षं जपन्कृष्णेति सत्तम ॥ ७७
मोहयन्मां तथा त्वां च शृणोत्येष मयेरितान् ।
धर्मात्मा च महाबाहो भक्तान्रक्षति नान्यथा ॥ ७८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

## दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

भीष्मेण युधिष्ठिरंप्रति नारदाय श्रीनारायणोक्तस्य प्रयाणकाले श्रीभगवदनुस्मृतिप्रकारस्य कथनम् ॥ १ ॥

'युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
प्रयाणकाले किं जप्यं मोक्षिभिस्तत्त्वचिन्तकैः ॥१
किंनु स्मरन्कुरुश्रेष्ठ मरणे समुपस्थिते ।
प्राप्नुयात्परमां सिद्धिं श्रोतुमिच्छामि तत्वतः ॥२
भीष्म उवाच ।
त्वद्युक्तश्च हितः सूक्ष्म उक्तः प्रश्नस्त्वयाऽनघ ।
शृणुष्वावहितो राजन्नारदेन पुरा श्रुतम् ॥ ३
श्रीवत्साङ्कं जगद्बीजमनन्तं लोकसाक्षिणम् ।
पुरा नारायणं देवं नारदः पर्यपृच्छत ॥ ४
अक्षरं परमं ब्रह्म निर्गुणं तमसः परम् ।
आहुर्वेद्यं परं धाम ब्रह्मादिकमलोद्भवम् ॥ ५
भगवन्भूतभव्येश श्रद्दधानैर्जितेन्द्रियैः ।
कथं भक्तैर्विचिन्त्योसि योगिभिर्मोक्षकाङ्क्षिभिः ॥
किंनु जप्यं जपेन्नित्यं काल्यमुत्थाय मानवः ।
स्मरेच्च म्रियमाणो वै विशेषेण महाद्युते ॥ ७
कथं युञ्जन्समाध्यायेद्ब्रूहि तत्वं सनातनम् ॥ ८
श्रुत्वा च नारदोक्तं तु देवानामीश्वरः स्वयम् ।
प्रोवाच भगवान्विष्णुर्नारदं वरदः प्रभुः ॥ ९
हन्त ते कथयिष्यामि इमां दिव्यामनुस्मृतिम् ।
यामधीत्य प्रयाणे तु मद्भावायोपपद्यते ॥ १०
ओंकारमग्रतः कृत्वा मां नमस्कृत्य नारद ।
एकाग्रः प्रयतो भूत्वा इमं मन्त्रमुदीरयेत् ॥ ११
ओं नमो भगवते वासुदेवायेति ॥ १२
इत्युक्तो नारदः प्राह प्राञ्जलिः प्रणतः स्थितः ।
सर्वदेवेश्वरं विष्णुं सर्वात्मानं हरिं प्रभुम् ॥ १३
नारद उवाच ।
अव्ययं शाश्वतं देवं प्रभवं पुरुषोत्तमम् ।
प्रपद्ये प्राञ्जलिर्विष्णुमक्षरं परमं पदम् ॥ १४
पुराणं प्रभवं विष्णुमक्षयं लोकसाक्षिणम् ।
प्रपद्ये पुण्डरीकाक्षमीशं भक्तानुकम्पिनम् ॥ १५
लोकनाथं सहस्राक्षमद्भुतं परमं पदम् ।
भगवन्तं प्रपन्नोऽस्मि भूतभव्यभवत्प्रभुम् ॥ १६
स्रष्टारं सर्वलोकानामनन्तं सर्वतोमुखम् ।
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ॥ १७
हिरण्यगर्भममृतं भूगर्भं परतः परम् ।
प्रभोः प्रभुमनाद्यन्तं प्रपद्ये तं रविप्रभम् ॥ १८
सहस्रशीर्षं पुरुषं महर्षिं तत्वभावनम् ।
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ॥ १९
नारायणं पुराणर्षिं योगात्मानं सनातनम् ।
संस्थानं सर्वतत्वानां प्रपद्ये ध्रुवमीश्वरम् ॥ २०
यः प्रभुः सर्वभूतानां येन सर्वमिदं ततम् ।
परावरगुरुर्विष्णुः स मे देवः प्रसीदतु ॥ २१
यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः सनातनः ।
ब्रह्मयोनिर्हि विश्वात्मा स मे विष्णुः प्रसीदतु ॥२२
यः पुरा प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोकपरावरे ॥ २३
आभूतसंप्लवे चैव प्रलीनेऽप्राकृतो महान् ।
एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ॥२४
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ २५
पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये ।
गुणाकरः स मे बभ्रुर्वासुदेवः प्रसीदतु ॥ २६
अग्नीषोमार्कताराणां ब्रह्मरुद्रेन्द्रयोगिनाम् ।
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ॥ २७
योगावास नमस्तुभ्यं सर्वावास वरप्रद ।
यज्ञगर्भ हिरण्याङ्ग पञ्चयज्ञ नमोस्तु ते ॥ २८
चतुर्मूर्ते परं धाम लक्ष्म्यावास परार्चित ।
सर्वावास नमस्तेऽस्तु वासुदेव प्रधानकृत् ॥ २९
अजस्त्वनामयः पन्था ह्यमूर्तिर्विश्वमूर्तिधृत् ।

श्रुत्वा तस्य तु देवर्षेर्वाक्यं वाचस्पतिः स्वयमिति थ. पाठः ॥ ९ ॥ अव्यक्तं शाश्वतं देवमि ट. थ. पाठः ॥ १४ ॥ पुराणं प्रभवं नित्यमिति ट. थ. पाठः ॥ १५ ॥

विकर्तः पञ्चकालज्ञ नमस्ते ज्ञानसागर ॥ ३०
अव्यक्ताद्व्यक्तमुत्पन्नमव्यक्ताद्यः परोऽक्षरः ।
यस्मात्परतरं नास्ति तमस्मि शरणं गतः ॥ ३१
न प्रधानो न च महान्पुरुषश्चेतनो ह्यजः ।
अनयोर्यः परतरस्तमस्मि शरणं गतः ॥ ३२
चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयः प्रभुम् ।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ॥ ३३
जितेन्द्रिया महात्मानो ज्ञानध्यानपरायणाः ।
यं प्राप्य न निवर्तन्ते तमस्मि शरणं गतः ॥ ३४
एकांशेन जगत्सर्वमवष्टभ्य विभुः स्थितः ।
अग्राह्यं निर्गुणं नित्यं तमस्मि शरणं गतः ॥ ३५
सोमार्काग्निमयं तेजो या च तारमयी द्युतिः ।
दिवि संजायते योऽयं स महात्मा प्रसीदतु ॥ ३६
गुणादिर्निर्गुणश्चाद्यो लक्ष्मीवांश्चेतनो ह्यजः ।
सूक्ष्मः सर्वगतो योगी स महात्मा प्रसीदतु ॥ ३७
साङ्ख्ययोगाश्च ये चान्ये सिद्धाश्च परमर्षयः ।
यं विदित्वा विमुच्यन्ते स महात्मा प्रसीदतु ॥३८
अव्यक्तः समधिष्ठाता अचिन्त्यः सदसत्परः ।
अस्थितिः प्रकृतिश्रेष्ठः स महात्मा प्रसीदतु ॥ ३९
क्षेत्रज्ञः पञ्चधा भुङ्क्ते प्रकृतिं पञ्चभिर्मुखैः ।
महान्गुणांश्च यो भुङ्क्ते स महात्मा प्रसीदतु ॥ ४०
सूर्यमध्ये स्थितः सोमस्तस्य मध्ये च या स्थिता ।
भूतबाह्या च या दीप्तिः स महात्मा प्रसीदतु ॥ ४१
नमस्ते सर्वतः सर्व सर्वतोक्षिशिरोमुख ।
निर्विकार नमस्तेऽस्तु साक्षी क्षेत्रध्रुवस्थितिः ॥ ४२
अतीन्द्रिय नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे ।
ये च त्वां नाभिजानन्ति संसारे संसरन्ति ते॥४३
कामक्रोधविनिर्मुक्ता रागद्वेषविवर्जिताः ।
मान्यभक्ता विजानन्ति न पुनर्भवका द्विजाः॥४४
एकान्तिनो हि निर्द्वन्द्वा निराशीःकर्मकारिणः ।
ज्ञानाग्निदग्धकर्माणस्त्वां विशन्ति विचिन्तकाः ॥
अशरीरं शरीरस्थं समं सर्वेषु देहिषु ।
पुण्यपापविनिर्मुक्ता भक्तास्त्वां प्रविशन्त्युत ४६
अव्यक्तं बुद्ध्यहङ्कारमनोभूतेन्द्रियाणि च ।
त्वयि तानि च तेषु त्वं न तेषु त्वं न ते त्वयि ॥४७
एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् ।
समोसि सर्वभूतेषु न ते द्वेष्योस्ति न प्रियः ॥४८
समत्वमभिकाङ्क्षेऽहं भक्त्या वै नान्यचेतसा ।
चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ।
त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणा इव ॥ ४९
स्रष्टा भोक्तासि कूटस्थो ह्यतत्वं तत्वसंज्ञिकः ।
अकर्ता हेतुरचलः पृथगात्मन्यवस्थितः ॥ ५०
न ते भूतेषु संयोगो भूततत्वगुणाधिकः ।
अहङ्कारेण बुद्ध्या वा न ते योगस्त्रिभिर्गुणैः ॥५१
न मोक्षधर्मो वा न त्वं नारम्भो जन्म वा पुनः ।
जरामरणमोक्षार्थं त्वां प्रपन्नोसि सर्वग ॥ ५२
ईश्वरोसि जगन्नाथ ततः परम उच्यसे ।
भक्तानां यद्धितं देव तद्ध्याहि त्रिदशेश्वर ॥५३
विषयैरिन्द्रियैर्वाऽपि न मे भूयः समागमः ।
पृथिवीं यातु गन्धो वै रसं यातु जलं तथा ॥५४
तेजो हुताशनं यातु स्पर्शो यातु च मारुतम् ।
श्रोत्रमाकाशमप्येतु मनो वैकारिकं पुनः ॥ ५५
इन्द्रियाण्यपि संयान्तु स्वासुस्वासु च योनिषु ।
पृथिवी यातु सलिलमापोग्निमनलोऽनिलम् ॥ ५६
वायुराकाशमप्येतु मनश्चाकाश एव च ।
अहंकारं मनो यातु मोहनं सर्वदेहिनाम् ॥ ५७
अहंकारस्ततो बुद्धिं बुद्धिरव्यक्तमच्युत ॥ ५८
प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते ।
वियोगः सर्वकरणैर्गुणैर्भूतैश्च मे भवेत् ॥ ५९
निष्केवलं पदं तात काङ्क्षेऽहं परमं तव ।
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत्पुनः॥६०
त्वद्बुद्धिस्त्वद्गतप्राणस्त्वद्भक्तिस्त्वत्परायणः ।
त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते ॥ ६१
पूर्वदेहकृता ये तु व्याधयः प्रविशन्तु माम् ।

त्रिकर्तः पञ्चकालज्ञेति ट. थ. पाठः ॥ ३० ॥ न पुनर्मारका द्विजा इति ट. थ. पाठः ॥ ४४ ॥ त्वां विशन्ति विनिश्चिता इति ध. पाठः ॥ ४६ ॥ न मे धर्मो ह्यधर्मो वेति ट. थ. पाठः ॥ ५२ ॥ पृथिवीं यातु मे घ्राणं यातु मे रसनं जलम् । रूपं हुताशनं यातु इति ट. थ. पाठः ॥ ५४ ॥ निष्केवलं वरं देवेति ध. पाठः ॥ ६० ॥

## एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

भीष्मेण युधिष्ठिरंप्रति गरुडेनात्मानं प्रत्युक्तश्रीभगवन्महिमानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
देवासुरमनुष्येषु ऋषिमुख्येषु वा पुनः ।
विष्णोस्तत्त्वं यथाख्यातं को विद्वाननुवेत्ति तत् ॥ १
एतन्मे सर्वमाचक्ष्व न मे तृप्तिर्हि तत्वतः ।
वर्तते भरतश्रेष्ठ सर्वज्ञोऽसीति मे मतिः ॥ २
भीष्म उवाच ।
कारितोऽहं त्वया राजन्यद्वृत्तं च पुरा मम ।
गरुडेन पुरा मह्यं संवादोऽभूभृतोत्तम ॥ ३
पुराहं तप आस्थाय वासुदेवपरायणः ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेवच ।
गङ्गाद्वीपे समासीनो दशवर्षाणि भारत ॥ ४
माता च मम सा देवी जननी लोकपावनी ।
समासीना समीपे मे रक्षणार्थं ममाच्युत । ५
तस्मिन्कालेऽद्भुतः श्रीमान्सर्ववेदमयः प्रभुः ।
सुपर्णः पततांश्रेष्ठो मेरुमन्दरसन्निभः ।
आजगाम विशुद्धात्मा गङ्गां द्रष्टुं महायशाः ॥६
तमागतं महात्मानं प्रत्युद्गम्याहमर्थितः ।
प्रणिपत्य यथान्यायं कृताञ्जलिरवस्थितः ॥ ७
सोऽपि देवो महाभागामभिनन्द्य च जाह्नवीम् ।
तया च पूजितः श्रीमानुपोपाविशदासने ॥ ८
ततः कथान्तरे तं वै वचनं चेदमब्रवम् ।
वेदवेद महावीर्य वैनतेय महाबल ॥ ९
नारायणं हृषीकेशं सहमानोऽनिशं हरिम् ।
जानासि तं यथा वक्तुं यादृग्भूतो जनार्दनः ।
ममापि तस्य सद्भावं वक्तुमर्हसि सत्तम ॥ १०
गरुड उवाच ।
शृणु भीष्म यथान्यायं पुरा त्वमिह सत्तमाः ।
अनेके मुनयः सिद्धा मानसोत्तरवासिनः ।
पप्रच्छुर्मां महाप्राज्ञा वासुदेवपरायणाः ॥ ११
पक्षीन्द्र वासुदेवस्य तत्वं वेत्सि परं पदम् ।
त्वया समो न तस्यास्ति सन्निकृष्टप्रियोपि च ॥१२
तेषामहं वचः श्रुत्वा प्रणिपत्य महाहरिम् ।
अब्रवं च यथावृत्तं मम नारायणस्य च ॥ १३
शृणुध्वं मुनिशार्दूला हृत्वा सोममहं पुरा ।
आकाशे पतमानस्तु वाक्यं तत्र शृणोमि वै ॥ १४
साधुसाधु महाबाहो प्रीतोस्मि तव दर्शनात् ।
वृणीष्व वचनं मत्तः पक्षीन्द्र गरुडाधुना ॥ १५
त्वामहं भक्तितत्वज्ञो ब्रवै वचनमुत्तमम् ।
इत्याह स ध्रुवं तत्र मामाह भगवान्पुनः ॥ १६
ऋषिरस्मि महावीर्य न मां जानाति वा मयि ।
असूयति च मां मूढ तच्छ्रुत्वा गर्वमास्थितः ॥१७
अहं देवनिकायानां मध्ये वचनमब्रवम् ।
ऋषे पूर्वं वरं मत्तस्त्वं वृणीष्व ततो ह्यहम् ।
वृणे त्वत्तो वरं पश्चादित्येवं मुनिसत्तमाः ॥ १८
तस्मात्त्वां भगवान्देवः श्रीमाञ्श्रीवत्सलक्षणः ।
अद्य पश्यति पक्षीन्द्र वाहनं भव मे सदा ।
वृणेऽहं वरमेतद्धि त्वत्तोऽद्य पतगेश्वर ॥ १९
तथेति तं वीक्ष्य मातामनहंकारमास्थितम् ।
जेतुकामो ह्यहं विष्णुं मायया मायिनं हरिम् ॥२०
त्वत्तो ह्यहं वृणे त्वद्य वरं ऋषिवरोत्तम ।
तवोपरिष्टात्स्थास्यामि वरमेतत्प्रयच्छ मे ॥ २१
तथेति च हसन्प्राह हरिर्नारायणः प्रभुः ।
ध्वजं च मे भव सदा त्वमेव विहगेश्वर ।
उपरिष्टात्स्थितिस्तेऽस्तु मम पक्षीन्द्र सर्वदा ॥ २२
इत्युक्त्वा भगवान्देवः शङ्खचक्रगदाधरः ।
सहस्रचरणः श्रीमान्सहस्रादित्यसन्निभः ॥ २३
सहस्रशीर्षा पुरुषः सहस्रनयनो महान् ।
सहस्रमकुटोऽचिन्त्यः सहस्रवदनो विभुः ॥ २४
विद्युन्मालानिभैर्दिव्यैर्नानाभरणराजिभिः ।
क्वचित्संदृश्यमानस्तु चतुर्बाहुः क्वचिद्धरिः ॥२५
क्वचिज्ज्योतिर्मयोचिन्त्यः क्वचित्स्कन्धे समाहितः ।
एवं मम जयन्देवस्तत्रैवान्तरधीयत ॥ २६

* अयमध्यायो ध. पुस्तक एव दृश्यते ।

ततोऽहं विस्मयापन्नः कृत्वा कार्यमनुत्तमम् ।
अस्याविमुच्य जननीं मया सह मुनीश्वराः ॥२७
अचिन्त्योऽयमहं भूयः कोऽसौ मामब्रवीत्पुरा ।
कीदृग्विधः स भगवानिति मत्वा तमास्थितः ॥२८
अनन्तरं देवदेवं स्कन्धे मम समाश्रितम् ।
अद्राक्षं पुण्डरीकाक्षं वहमानोऽहमद्भुतम् ॥ २९
अवशस्तस्य भावेन यत्र यत्र स चेच्छति ।
विस्मयापन्नहृदयो ह्यहं किमिति चिन्तयन् ।
अन्तर्जलमहं सर्वं वहमानोऽगमं पुनः ॥ ३०
सेन्द्रैर्देवैर्महाभागैर्ब्रह्माद्यैः कल्पजीविभिः ।
स्तूयमानो ह्यहमपि तैस्तैरभ्यर्चितः पृथक् ॥ ३१
क्षीरोदस्योत्तरे कूले दिव्ये मणिमये शुभे ।
वैकर्णनाम सदनं हरेस्तस्य महात्मनः ॥ ३२
दिव्यं तेजोमयं श्रीमदचिन्त्यममरैरपि ।
तेजोनिलमयैः स्तम्भैर्नानासंस्थानसंस्थितैः ॥ ३३
विभूषितं हिरण्येन भास्वरेण समन्ततः ।
दिव्यं ज्योतिःसमायुक्तं गीतवादित्रशोभितम् ३४
शृणोमि शब्दं तत्राहं न पश्यामि शरीरिणम् ।
न च स्थलं न चान्यच्च पादयोस्तं समन्ततः ।
वेपमानो ह्यहं तत्र विष्ठितोऽहं कृताञ्जलिः ॥ ३५
ततो ब्रह्मादयो देवा लोकपालास्तथैव च ।
सनन्दनाद्या मुनयस्तथाऽन्ये परजीविनः ॥ ३६
प्राप्तास्तत्र सभाद्वारि देवगन्धर्वसत्तमाः ।
ब्रह्माणं परतः कृत्वा कृताञ्जलिपुटास्तदा ॥ ३७
ततस्तदन्तरे तस्मिन्क्षीरोदार्णवशीकरैः ।
बोध्यमानो महाविष्णुराविर्भूत इवाबभौ ॥ ३८
फणासहस्रमालाढ्यं शेषमव्यक्तसंस्थितम् ।
पश्याम्यहं मुदाऽऽकाशे यस्योपरि जनार्दनम् ३९
दीर्घवृत्तैः समैः पीनैः केयूरवलयोज्ज्वलैः ।
चर्तुभिर्बाहुभिर्युक्तं ···· ···· ···· ···· ॥ ४०
पिताम्बरेण संवीतं कौस्तुभेन विराजितम् ।
वक्षस्थलेन संयुक्तं पद्मयाऽधिष्ठितेन च ॥ ४१
ईषदुन्मीलिताक्षं तं सर्वकारणकारणम् ।
क्षीरोदस्योपरि बभौ नीलाभ्रं परमं यथा ॥ ४२

न कश्चिद्वदते कश्चिन्न व्याहरति कश्चन ।
ब्रह्मादिस्तम्बपर्यन्तं माशब्दमिति रोषितम् ।
भ्रुकुटीकुटिलाक्षास्ते नानाभूतगणाः स्थिताः ॥४३
ततोचिन्त्यो हरिः श्रीमानालोक्य च पितामहम् ।
कृत्वा च प्रस्थितं तत्र जगतां हितकाम्यया ।
गच्छध्वमिति मामुक्त्वा गरुडेत्याह मां ततः ४४
ततोऽहं प्रणिपत्याग्रे कृताञ्जलिरवस्थितः ।
आगच्छेति च मामुक्त्वा पूर्वोत्तरपथं गतः ॥ ४५
अतीव मृदुभावेन गच्छन्निव स दृश्यते ।
अयुतं नियुतं चाहं प्रयुतं चार्बुदं तथा ।
पतमानोऽहमनिशं योजनानि ततस्ततः ॥ ४६
ननु तत्वमहं भक्तो विष्ठितोस्मि प्रशास्तु नः ।
आगच्छ गरुडेत्येवं पुनराह स माधवः ॥ ४७
ततो भूयो ह्यहं पातं पतमानो विहायसम् ।
आजगाम ततो घोरं शतकोटिसमावृतम् ॥ ४८
तामसानीव भूतानि पर्वताभानि तत्र ह ।
समानानीव पद्मानि ततोऽहं भीत आस्थितः ॥४९
ततो मां किंकरो घोरः शतयोजनमायतम् ।
निगृह्य पाणिना तस्माच्चिक्षेप च स लोष्टवत् ॥ ५०
तत्तमोऽहमतिक्रम्य ह्यापं चैव विहायसम् ।
हुङ्कारघोषं तत्राहमशनीपातसन्निभान् ।
कर्णमूले ह्यशृण्वन्तस्ततो भूतैः समास्थितः ॥ ५१
ततोऽहं देवदेवेश त्राहि मां पुष्करेक्षण ।
इत्यब्रवमहं तत्र ततो विष्णुरुवाच माम् ॥ ५२
सुषिरस्य मुखे कश्चिन्मां चिक्षेप भयङ्करः ।
अतीतोऽहं क्षणादग्निमपश्यं वायुमण्डलम् ॥ ५३
आकाशमिव संप्रेक्ष्य क्षेतुकाममुपागतः ।
तत्राहं दुःखितो भूतः क्रोशमानो ह्यवस्थितः ॥५४
क्षणान्तरेण घोरेण क्रुद्धो हि परमात्मना ।
स्वपक्षराजिना दृष्ट्वा मां चिक्षेप भयङ्करः ॥ ५५
···गरुडकुलं सहस्रादित्यसन्निभम् ।
मां दृष्ट्वाऽप्यथ संस्थेऽथ ह्यल्पकालोऽतिदुर्बलः ॥५६
अहो विहङ्गमः प्राप्त इति विस्मयमानसाः ।
मां दृष्ट्वोचुरहं तत्र पश्यामि गरुडध्वजम् ॥ ५७

सहस्रयोजनायामं सहस्रादित्यवर्चसम् ।
सहस्रगरुडारूढं गरुडास्ते महाबलाः ॥ ५८
अत्याश्चर्यमिमं देव वपुषाऽस्मत्कुलोद्भवः ।
स्वल्पप्राणः स्वल्पकायः कोसौ पक्षी इहागतः ॥५९
तच्छ्रुत्वाऽहं नष्टगर्वो भीतो लज्जासमन्वितः ।
स्वयं बुद्धश्च संविग्नस्ततो ह्यशृणवं पुनः ॥ ६०
आगच्छ गरुडेत्येव ततोऽहं यानमास्थितः ।
परार्ध्ये च ततो गत्वा योजनानां शतं पुनः ।
तत्रापश्यमहं यो वै ब्रह्माणं परमेष्ठिनम् ॥ ६१
तत्रापि चापरं तत्र शतकोटिपितामहान् ।
पुनरेहीत्युवाचोच्चैर्भगवान्मधुसूदनः ॥ ६२
महाकुलं ततोऽपश्यं प्रमाणानि तमव्ययम् ।
कपित्थफलसंकाशमन्धकारैः समाश्रितम् ॥ ६३
तत्र स्थितो हरिः श्रीमानण्डमेकं बिभेद ह ।
महद्भूतं हि मां गृह्य दत्त्वा वै प्राक्षिपत्पुनः ॥ ६४
तन्मध्ये सागरान्सप्त ब्रह्माणं च तथा सुरान् ।
पश्याम्यहं यथायोगं मातरं स्वकुलं तथा ॥ ६५
एवं मयाऽनुभूतं हि तत्वान्वेषणकाङ्क्षिणा ।
शिविकासदृशं मां वै पश्यध्वं मुनिसत्तमाः ॥ ६६
इत्येवमब्रवं विप्रान्भीष्म यन्मे पुराऽभवत् ।
तत्ते सर्वं यथान्यायमुक्तवानस्मि सत्तम ॥ ६७
योगिनस्तं प्रपश्यन्ति ज्ञानं दृष्ट्वा परं हरिम् ।
नान्यथा शक्यरूपोसौ ज्ञानगम्यः परः पुमान् ॥६८
अनन्यया च भक्त्या च प्राप्तुं शक्यो महाहरिः ॥६९
भीष्म उवाच ।
इत्येवमुक्त्वा भगवान्सुपर्णः पक्षिराट् प्रभुः ।
आमन्त्र्य जननीं मे वै तत्रैवान्तरधीयत ॥ ७०
तस्माद्राजेन्द्र सर्वात्मा वासुदेवः प्रधानकृत् ।
ज्ञानेन भक्त्या सुलभो नान्यथेति मतिर्मम ॥' ७१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

## द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

भीष्मेण युधिष्ठिरंप्रति शिष्याय गुरूक्तवार्ष्णेयाध्यात्मत्वानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
योगं मे परमं तात मोक्षस्य वद भारत ।
तमहं तत्त्वतो ज्ञातुमिच्छामि वदतांवर ॥ १
'भूयोपि ज्ञानसद्भावे स्थित्यर्थं त्वां ब्रवीम्यहम् ।
अचिन्त्यं वासुदेवाख्यं तस्मात्प्रब्रूहि सत्तम ॥'२
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ ३
कश्चिद्ब्राह्मणमासीनमाचार्यमृषिसत्तमम् ।
तेजोराशिं महात्मानं सत्यसन्धं जितेन्द्रियम् ॥ ४
शिष्यः परममेधावी श्रेयोर्थी सुसमाहितः ।
चरणावुपसंगृह्य स्थितः प्राञ्जलिरब्रवीत् ॥ ५
उपासनात्प्रसन्नोऽसि यदि वै भगवन्मम ।
संशयो मे महान्कश्चित्तं मे व्याख्यातुमर्हसि ।
कुतश्चाहं कुतश्च त्वं तत्सम्यग्ब्रूहि यत्परम् ॥ ६
कथं च सर्वभूतेषु समेषु द्विजसत्तम ।
सम्यग्वृत्ता निवर्तन्ते विपरीताः क्षयोदयाः ॥ ७
वेदेषु चापि यद्वाक्यं लौकिकं व्यापकं च यत् ।
एतद्विद्वन्यथातत्त्वं सर्वं व्याख्यातुमर्हसि ॥ ८
गुरुरुवाच ।
शृणु शिष्य महाप्राज्ञ ब्रह्मगुह्यमिदं परम् ।
अध्यात्मं सर्वभूतानामागमानां च यद्वसु ॥ ९

भूतेषु पञ्चसूपादानकारणेषु समेषु सत्सु विपरीता विषमाः कथं क्षयोदया निवर्तन्ते नितरां वर्तन्ते । वेदेषु यद्वाक्यं वर्णधर्मव्यवस्थापरं, लौकिकं स्मृतिवाक्यं तादृशं व्यापकं सर्ववर्णाश्रमसाधारणं इदमपि कथम् । हेतुसाम्येऽपि कार्यवैषम्ये किं बीजं तद्ब्रूहीत्यर्थः । श्लोकद्वयमेकं वाक्यम् ॥ ७ ॥ ८ ॥ ब्रह्मगुह्यं वेदगोप्यम् । वसु धनं तद्वद्रक्षणीयमुपकारकं वा ॥ ९ ॥

वासुदेवः सर्वमिदं विश्वस्य ब्रह्मणो मुखम् ।
सत्यं दानं तपो यज्ञस्तितिक्षा दम आर्जवम् ॥१०
पुरुषं सनातनं विष्णुं यं तं वेदविदो विदुः ।
सर्गप्रलयकर्तारमव्यक्तं ब्रह्म शाश्वतम् ॥ ११
तदिदं ब्रह्म वार्ष्णेयमितिहासं शृणुष्व मे ।
ब्राह्मणो ब्राह्मणैः श्राव्यो राजन्यः क्षत्रियैस्तथा १२
[वैश्यो वैश्यैस्तथा श्राव्यः शूद्रः शूद्रैर्महामनाः ।]
माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ॥ १३
अर्हस्त्वमसि कल्याणं वार्ष्णेयाध्यात्ममुत्तमम् १४
'यमच्युतं परं नित्यं लिङ्गहीनं च निर्मलम् ।
निर्वाणममृतं श्रीमत्तद्विष्णोः परमं पदम् ॥ १५
भवे च भेदवद्भिन्नं प्रदानं गुणकारकम् ।
तस्मिन्न सज्यते नित्यं स एष पुरुषोऽपरः ॥ १६
पुरुषाधिष्ठितं नित्यं प्रधानं ब्रह्म कारणम् ।
कालस्वरूपं रूपेण विष्णुना प्रभविष्णुना ॥ १७
क्षोभ्यमाणं सृजत्येव नानाभूतानि भागशः ।
तद्दृष्ट्वा पुरुषोतत्वं साक्षीभूत्वा प्रवर्तते ।
तत्प्रविश्य यथायोगमभिन्नो भिन्नलक्षणः ॥' १८
कालचक्रमनाद्यन्तं भावाभावस्वलक्षणम् ।
त्रैलोक्ये सर्वभूतेषु चक्रवत्परिवर्तते ॥ १९
यत्तदक्षरमव्यक्तममृतं ब्रह्म शाश्वतम् ।
वदन्ति पुरुषव्याघ्र केशवं पुरुषर्षभम् ॥ २०
'तदक्षरमचिन्त्यं वै भिन्नरूपेण दृश्यते ।
पश्य कालाख्यमनिशं न चोष्णं नातिशीतलम् २१
न सन्त्येते गुणास्तस्मिंस्तथा तस्मात्प्रवर्तते ।
शीतलोऽयमनुप्राप्तः कालो ग्रीष्मस्तथैव च ॥२२
वक्ष्यन्ति सर्वभूतानि ह्येते सूर्योदयं प्रति ।
आगच्छन्ति निवर्तन्ति स कालो गुणराशयः २३
न चैव प्रकृतिस्थेन कालयुक्तेन नित्यशः ।
गुणैः संभोगमरतिस्तत्वविज्ञानकोविदम् ।
पुरुषाधिष्ठिता नित्यं प्रकृतिः सूयते परा ॥' २४
पितॄन्देवानृषींश्चैव तथा वै यक्षराक्षसान् ।
नागासुरमनुष्यांश्च सृजते मनसाऽव्ययः ॥ २५
तथैव वेदशास्त्राणि लोकधर्मांश्च शाश्वतान् ।
प्रलये प्रकृतिं यातान्युगादौ सृजते पुनः ॥ २६
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥२७
अथ यद्यद्यदा भावि कालयोगाद्युगादिषु ।
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् ॥ २८
'श्रुतिरेषा समाख्याता तदर्थं कारणात्मना ।
अनाम्नायविधानाद्वै वेदा ह्यन्तर्हिता यथा ॥' २९
युगान्ते ह्यस्तभूतानि शास्त्राणि विविधानि च ।
सर्वसत्वविना-द्वै जीवात्मनित्यया स्मृताः ।
अन्यस्मिन्नण्डसद्भावे वर्तमानानि नित्यशः ॥ ३०
युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥ ३१
'नियोगाद्ब्रह्मणो विप्रा लोकतन्त्रप्रवर्तकाः ।'
वेदविद्भगवान्ब्रह्मा वेदाङ्गानि बृहस्पतिः ।
भार्गवो नीतिशास्त्रं तु जगाद जगतो हितम् ॥३२
गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गर्गो कृष्णात्रेयश्चिकित्सितम् ॥ ३३
'न्यायतन्त्रं हि कार्त्स्न्येन गौतमो वेद तत्वतः ।
वेदान्तकर्मयोगं च वेदविद्ब्रह्मविद्विभुः ।
द्वैपायनो निजग्राह शिल्पशास्त्रं भृगुः पुनः ॥ ३४
न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।
हेत्वागमसदाचारैर्यदुक्तं तदुपास्यते ॥ ३५
अनाद्यं तत्परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद्वेद भगवान्धाता नारायणः प्रभुः ॥ ३६

---

ब्रह्मणो मुखं वेदादिः प्रणवः । उपायोपेययोरभेदात्प्रणवादीनां वासुदेवत्वम् ॥१०॥ उपेयस्वरूपमाह पुरुषमिति ॥११॥ एतदेवायं कृष्ण इत्याह तदिति । वार्ष्णेयं वृष्णिषु कृतावतारम् । इतिहासं तत्स्वरूपप्रकाशनपरं ग्रन्थम् । राजन्यः क्षत्रियस्तथेति ङ. पाठः ॥ १२ ॥ भावाभावौ सृष्टिप्रलयौ स्वलक्षणं स्वरूपज्ञापकौ यस्य । प्रत्यब्दं यथा वसन्तादिष्वाम्रादयो नियमेन पुष्पिता भवन्त्येवं ब्रह्महरविष्णुषु प्रतिकल्पं सृष्टिप्रलयस्थितिकर्तृत्वं तदातदा आविर्भवति । तथा ब्रह्महरादिषु इति ट. पाठः । ब्रह्मापरादिष्विति ङ. पाठः । ब्रह्माक्षरादिष्विति ध. पाठः ॥२७॥ अनुज्ञाता उपदिष्टाः । स्वयंभुवा ब्रह्मणा ॥३१॥ दत्तात्रेयश्चिकित्सितमिति ट. ङ. पाठः ॥३३॥ हेतुर्युक्तिः । आगमो वेदः । सदाचारः प्रत्यक्षम् । तैः प्रमाणैः ॥३५॥ अनाद्यं नास्ति आद्यं कारणं यस्य तत् ॥३६॥

नारायणाद्दृषिगणास्तथा मुख्याः सुरासुराः ।
राजर्षयः पुराणाश्च परमं दुःखभेषजम् ।
'वक्ष्येऽहं तत्र यत्प्राप्तमृषेर्द्वैपायनान्मया ॥' ३७
पुरुषाधिष्ठितान्भावान्प्रकृतिः सूयते यदा ।
हेतुयुक्तमतः पूर्वं जगत्संपरिवर्तते ॥ ३८
दीपादन्ये यथा दीपाः प्रवर्तन्ते सहस्रशः ।
प्रकृतिः सूयते तद्वदानन्त्यान्नापचीयते ॥ ३९
अव्यक्तकर्मजा बुद्धिरहंकारं प्रसूयते ।
आकाशं चाप्यहंकाराद्वायुराकाशसंभवः ॥ ४०
वायोस्तेजस्ततश्चाप अद्भ्योऽथ वसुधोद्गता ।
मूलप्रकृतयो ह्यष्टौ जगदेतास्ववस्थितम् ॥ ४१
ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्मेन्द्रियाण्यपि ।
विषयाः पञ्च चैकं च विकाराः षोडशं मनः ॥४२
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियाण्यथ ।
पादौ पायुरुपस्थश्च हस्तौ वाक्कर्मणी अपि ॥ ४३
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
विज्ञेयं व्यापकं चित्तं तेषु सर्वगतं मनः ॥ ४४
'बुद्धीन्द्रियार्था इत्युक्ता दशसंसर्गयोनयः ।
सदसद्भावयोगे च मन इत्यभिधीयते ॥ ४५
व्यवसायगुणा बुद्धिरहंकारोऽभिमानकः ।
न बीजं देहयोगे च कर्मबीजप्रवर्तनात् ॥' ४६
रसज्ञाने तु जिह्वेयं व्याहृते वाक्तथैव च ।
इन्द्रियैर्विविधैर्युक्तं सर्वैर्व्यस्तं मनस्तथा ॥ ४७
विद्यात्तु षोडशैतानि दैवतानि विभागशः ।
देहेषु ज्ञानकर्तारमुपासीनमुपासते ॥ ४८
तत्र सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः ।
श्रोत्रं शब्दगुणं चैव चक्षुरग्नेर्गुणस्तथा ।
स्पर्शं वायुगुणं विद्यात्सर्वभूतेषु सर्वदा ॥ ४९
मनः सत्वगुणं प्राहुः सत्वमव्यक्तजं तथा ।
सर्वभूतात्मभूतस्थं तस्माद्बुद्ध्येत बुद्धिमान् ॥ ५०
एते भावा जगत्सर्वं वहन्ति सचराचरम् ।
श्रिता विरजसं देवं यमाहुः परमं पदम् ॥ ५१
नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् ।
व्याप्य शेते महानात्मा तस्मात्पुरुष उच्यते ॥ ५२
अजरश्चामरश्चैव व्यक्ताव्यक्तोपदेशवान् ।
व्यापकः सगुणः सूक्ष्मः सर्वभूतगुणाश्रयः ॥ ५३
यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजन्तुषु ॥ ५४
श्रोत्रं वेदयते वेद्यं स शृणोति स पश्यति ।
कारणं तस्य देहोऽयं स कर्ता सर्वकर्मणाम् ॥ ५५
अग्निर्दारुगतो यद्वद्भिन्ने दारौ न दृश्यते ।
तथैवात्मा शरीरस्थ ऋते योगान्न दृश्यते ॥ ५६
अग्निर्यथा ह्युपायेन मथित्वा दारु दृश्यते ।
तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ॥ ५७
नदीष्वापो यथा युक्ता यथा सूर्ये मरीचयः ।
संतन्वाना यथा यान्ति तथा देहाः शरीरिणाम् ५८
स्वप्नयोगे यथैवात्मा पञ्चेन्द्रियसमायुतः ।
देहमुत्सृज्य वै याति तथैवात्मोपलभ्यते ॥ ५९
कर्मणा व्याप्यते सर्वं कर्मणैवोपपद्यते ।
कर्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा ॥ ६०
स तु देहाद्यथा देहं त्यक्त्वाऽन्यं प्रतिपद्यते ।
तथा तं संप्रवक्ष्यामि भूतग्रामं स्वकर्मजम् ॥ ६१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

---

शब्दादिविषयाः पञ्च विकाराः इति थ. पाठः ॥४२॥ वाक्कर्मणामपि इति थ. पाठः ॥ ४३ ॥ ज्ञानकर्तार उदासीनमुपासते इति घ. पाठः ॥४८॥ श्रोत्रं नभोगुणं चैव इति झ. पाठः ॥४९॥ ईश्वरस्तत्स्थमुपाधित्वेन तत्र स्थितं सर्वान्तरङ्गं सत्त्वं जानीयात् । सत्त्वविशिष्टस्य ज्ञेयत्वेऽपि चिद्विवेके परिशेषादचितः सत्वस्यैव ज्ञेयत्वमस्तीति सत्वमेव बुद्ध्येतेत्युक्तम् ॥५०॥ यमाहुः प्रकृतेः परमिति झ. पाठः ॥ ५१ ॥ व्यापकः स गुणैः सूक्ष्मः इति थ. पाठः ॥ ५२ ॥ भेदेनैवात्र दृश्यते इति ट. थ. पाठः । शरीरस्थो योगेनैवानुदृश्यते इति झ. पाठः ॥ ५५ ॥ संततत्वाद्यथा यान्ति इति झ. पाठः ॥ ५७ ॥ कर्मणा जायते पूर्वं इति ट. पाठः । कर्मणा बाध्यते रूपं इति झ. पाठः ॥ ५९ ॥ द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

## त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

भीष्मेण युधिष्ठिरंप्रति शिष्यंप्रत्युक्तजगत्सृष्ट्यादिप्रतिपादकगुरुवाक्यानुवादः ॥ १ ॥

गुरुरुवाच ।
चतुर्विधानि भूतानि स्थावराणि चराणि च ।
अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च ।
अव्यक्तलक्षणं विद्यादव्यक्तात्मात्मकं मनः ॥ १
यथाऽश्वत्थकणीकायामन्तर्भूतो महाद्रुमः ।
निष्पन्नो दृश्यते व्यक्तमव्यक्तात्संभवस्तथा ॥ २
'आत्मानमनुसंयाति बुद्धिरव्यक्तजा तथा ।
तामन्वेति मनो यद्वल्लोहवर्मणि सन्निधौ ॥' ३
अभिद्रवत्ययस्कान्तमयोनिश्चेतनं यथा ।
स्वभावहेतुजा भावा यद्वदन्यदपीदृशम् ॥ ४
तद्वदव्यक्तजा भावाः कर्तुः कारणलक्षणाः ।
अचेतनाश्चेतयितुः कारणादभिसंगताः ॥ ५
न भूर्न खं द्यौर्भूतानि नर्षयो न सुरासुराः ।
नान्यदासीदृते जीवमासेदुर्न तु संहतिम् ॥ ६
सर्वं नित्यं सर्वगतं मनोहेतुत्वलक्षणम् ।
अज्ञानकर्म निर्दिष्टमेतत्कारणलक्षणम् ॥ ७
तत्कारणेन संयुक्तं कार्यसंग्रहकारकम् ।
येनैतद्वर्तते चक्रमनादिनिधनं महत् ॥ ८
'येन स्वभावसद्भावं हेतुभूता सकारणा ।
एवं प्राकृतविस्तारो ह्याश्रित्य पुरुषं परम् ॥' ९
अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम् ।
क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्तते ध्रुवम् ॥१०
स्निग्धत्वात्तिलवत्सर्वं चक्रेऽस्मिन्पीड्यते जगत् ।
तिलपीडैरिवाक्रम्य भोगैरज्ञानसंभवैः ॥ ११
'प्राणेनायं हि शान्ते तु विरोधात्प्रतिपालनम् ।
देहस्थेषून्य आस्ते यः शुद्धोऽचिन्त्यः सनातनः१२
भ्रामयन्नेषतो याति कालचक्रसमन्वितः ।
भूतानि मोहयन्नित्यं चक्रस्य च रयं गतः ॥१३
स्नेहद्रव्यसमायोगे क्षेत्रपार्चं न वस्तुषु ।
तिलवत्पीडिते चक्रे ह्याधियन्त्रनिपीडिते ।
बहिश्चाधिष्ठिते यद्वज्ज्ञानिनां कर्मसंभवम्' ॥१४
कर्म तत्कुरुते तर्षादहंकारपरिग्रहम् ।
कार्यकारणसंयोगे स हेतुरुपपादितः ॥ १५
'यथाऽऽकर्ण्य च तच्छिष्यस्तत्वज्ञानमनुत्तमम् ।'
नात्येति कारणं कार्यं न कार्यं कारणं तथा ।
कार्याण्यमूनि करणे कालो भवति हेतुमान् ॥ १६
हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परम् ।
अन्योन्यमभिवर्तन्ते पुरुषाधिष्ठिताः सदा ॥ १७
सत्वरजस्तामसैर्भावैश्च्युतो हेतुबलान्वितः ।
क्षेत्रज्ञमेवानुयाति पांसुर्वातेरितो यथा ॥ १८
न च तैः स्पृश्यते भावैर्न ते तेन महात्मना ।
सरजस्कोऽरजस्कश्च स वै वायुर्भवेद्यथा ॥ १९
तथैतदन्तरं विद्यात्सत्वक्षेत्रज्ञयोर्बुधः ।
अभ्यासात्स तथा युक्तो न गच्छेत्प्रकृतिं पुनः॥२०
संदेहमेतमुत्पन्नमच्छिनद्भगवानृषिः ।
तथा वार्ता समीक्षेत कृतलक्षणसंविदम् ॥ २१
बीजान्यग्न्युपदग्धानि नरो हन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

---

## चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

भीष्मेण युधिष्ठिरंप्रति शिष्याय गुरूक्तवार्ष्णेयाध्यात्मानुवादः ॥ १ ॥

गुरुरुवाच ।
प्रवृत्तिलक्षणो धर्मो यथा समुपलभ्यते ।

विद्यादव्यक्तात्मकमेव च इति ध. पाठः ॥ १ ॥ कार्यव्यक्तेन करणे इति झ. पाठः ॥ १६ ॥ राजसैस्तामसैर्भावैः इति झ. पाठः ॥ १८ ॥ त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

तेषां विज्ञाननिष्ठानामन्यत्तत्वं न रोचते ॥ १
दुर्लभा वेदविद्वांसो वेदोक्तेषु व्यवस्थिताः ।
प्रयोजनं महत्त्वात्तु मार्गमिच्छन्ति संस्तुतम् ॥ २
'वेदस्य न विदुर्भावं ज्ञानमार्गप्रतिष्ठितम् ।'
सद्भिराचरितत्वात्तु वृत्तमेतदगर्हितम् ।
इयं सा बुद्धिरभ्येत्य यथा याति परां गतिम् ॥ ३
शरीरवानुपादत्ते मोहात्सर्वान्परिग्रहान् ।
कामक्रोधादिभिर्भावैर्युक्तो राजसतामसैः ॥ ४
नाशुद्धमाचरेत्तस्मादभीप्सन्देहयापनम् ।
कर्मणां विवरं कुर्वन्न लोकानाप्नुयाच्छुभान् ॥ ५
लोहयुक्तं यथा हेम विपक्वं न विराजते ।
तथाऽपक्वकषायाख्यं विज्ञानं न प्रकाशते ॥ ६
'केचिदात्मगुणं प्राप्तास्ते मुक्ताश्चक्रबन्धनात् ।
इतरे दुःखसन्द्वन्द्वास्तथा दुःखपरायणाः ॥ ७
शुक्राकर्मानुरूपं ते जायमानाः पुनःपुनः ।
क्रोधलोभमदाविष्टा मूढान्तःकरणाः सदा ॥ ८
यथा''''''''''संछाया नास्ति नित्यतया परा ।
गुणानेव तथा चिन्त्या सन्त्येति च विदुर्बुधाः॥'
यश्चाधर्मं चरेल्लोभात्कामक्रोधावनुप्लुवन् ।
धर्म्यं पन्थानमुत्क्रम्य सानुबन्धो विनश्यति १०
'अचलं ज्ञानमप्राप्य चलचित्तश्चलानियात् ।'
शब्दादीन्विषयांस्तस्मान्न संरागादुपप्लवेत् ।
क्रोधो हर्षो विषादश्च जायन्ते हि परस्परात् ॥११
'गुणाः कार्याः क्रोधहर्षौ सुखदुःखे प्रियाप्रिये ।
द्वन्द्वान्यथैवमादीनि विजयेच्चैव सर्ववित् ॥' १२
पञ्चभूतात्मके देहे सत्त्वराजसतामसे ।
कमभिष्टुवते चायं कं वा क्रोशति किं वदन् १३
स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः ।
नावगच्छन्ति विज्ञानादात्मानं पार्थिवं गुणम् १४
मृन्मयं शरणं यद्वन्मृदैव परिलिप्यते ।
पार्थिवोऽयं तथा देहो मृद्विकारान्न नश्यति॥१५
मधु तैलं पयः सर्पिर्मांसानि लवणं गुडः ।
धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा १६

यद्वत्कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत् ।
ग्राम्यमाहारमादद्यादस्वाद्वपि हि यापनम् ॥ १७
तद्वत्संसारकान्तारमातिष्ठञ्श्रमतत्परः ।
यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा ॥ १८
'भक्षणे श्वापदैर्मार्गादिति चारं करोति चेत् ।
एवं संसारमार्गेण यात्रार्थं विषयाणि च ॥ १९
न गच्छेद्भोगविज्ञानादुन्मार्गे पद्यते तदा ।
तस्माद्दुःखतो मार्गमास्थितस्तमनुस्मरेत् ॥ २०
नानापर्णफला वृक्षा बहवः सन्ति तत्र हि ।
भोक्तारो मुनयश्चैव तस्मात्परतरं वनम् ॥ २१
अनुमानैस्तथाशास्त्रैर्यशसा विक्रमेण च ।'
सत्यशौचार्जवत्यागैर्वर्चसा विक्रमेण च ।
क्षान्त्या धृत्या च बुद्ध्या च मनसा तपसैव च ॥२२
भावान्सर्वान्यथावृत्तान्संवसेत यथाक्रमम् ।
शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च२३
सत्त्वेन रजसा चैव तमसा चैव मोहिताः ।
चक्रवत्परिवर्तन्ते ह्यज्ञानाज्जन्तवो भृशम् ॥ २४
तस्मात्सम्यक्परीक्षेत दोषानज्ञानसंभवान् ।
अज्ञानप्रभवं नित्यमहंकारं परित्यजेत् ॥ २५
महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः ।
'देहमूलं विजानीहि नैतानि भगवानतः ॥ २६
उपायतः प्रवक्ष्यामि तं च मृत्युं दुरासदम् ।'
त्रैलोक्यं सेश्वरं सर्वमहंकारे प्रतिष्ठितम् ॥ २७
यथेह नियतः कालो दर्शयत्यार्तवान्गुणान् ।
तद्वद्भूतेष्वहंकारं विद्याद्भूतप्रवर्तकम् ॥ २८
संमोहकं तमो विद्यात्कृष्णमज्ञानसंभवम् ।
प्रकृतेर्गुणसंजातो महानहंक्रिया ततः ॥ २९
अहंकारात्पुनः पञ्चाद्भूतग्राममुदाहृतम् ।
अव्यक्तस्य गुणेभ्यस्तु तद्गुणांश्च निबोध तान् ॥३०
प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान् ।
सत्त्वस्य रजसश्चैव तमसश्च निबोध तान् ॥ ३१
प्रसादो हर्षजा प्रीतिरसंदेहो धृतिः स्मृतिः ।

---

प्रयोजनमत्तत्त्वात्तु इति ट. थ. पाठः ॥ २ ॥ मृद्विकारैर्विलिप्यते इति ध. पाठः ॥ १५ ॥ यथावृत्तान्समीक्ष्य विषयात्मकान् इति झ. पाठः ॥ २३ ॥

एतान्सत्त्वगुणान्विद्यादिमान्राजसतामसान्॥ ३२
‘असन्तोषोऽक्षमाऽधैर्यमतृप्तिर्विषयादिषु ।
राजसाश्च गुणा ह्येते तत्परं तामसाञ्शृणु ॥ ३३
मोहस्तन्द्री तथा दुःखं निद्राऽऽलस्यं प्रमादता ।
विषादी दीर्घसूत्रश्च तत्तामसमुदाहृतम् ॥’ ३४
कामक्रोधौ प्रमादश्च लोभमोहौ भयं क्लमः ।
विषादशोकावरतिर्मानदर्पावनार्यता ॥ ३५
दोषाणामेवमादीनां परीक्ष्य गुरुलाघवम् ।
विमृशेदात्मसंस्थानमेकैकमनुसंततम् ॥ ३६
‘यस्मिन्प्रतिष्ठितं चेदं यस्मिन्सज्ज्ञाननिर्गतिः ।
सर्वभूताधिकं नित्यमहंकारं विलोकयेत् ॥ ३७
विलोकमानः स तदा स्वबुद्ध्या सूक्ष्मया पुनः ।
तदेव भाति तद्रूपमात्मना यत्सुनिर्मलम् ॥’ ३८
शिष्य उवाच ।
के दोषा मनसा त्यक्ताः के बुद्ध्या शिथिलीकृताः
के पुनः पुनरायान्ति के मोहादचला इव ॥ ३९
केषां बलाबलं बुद्ध्या हेतुभिर्विमृशेद्बुधः ।
‘एतन्मे सर्वमाचक्ष्व यथा विद्यामहं विभो ।
मह्यं शुश्रूषवे विद्वन्वक्ष्येतद्बुद्धिनिश्चितम् ॥ ४०
शान्तत्वादपरान्ताच्च आरम्भादपि चैकतः ।
प्रोक्तो ह्यत्र यथा हेतुरेवमाहुर्मनीषिणः ॥ ४१
गुरुरुवाच ।’
दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते ।
विनाशयति संभूतमयस्मयमयो यथा ।
तथा कृतात्मा सहजैर्दोषैर्नश्यति राजसैः ॥ ४२
‘सहजैरविशुद्धात्मा दोषैर्नश्यति तामसैः ।’
राजसं तामसं चैव शुद्धात्मा कालसंभवम् ॥ ४३
‘शमयेत्सत्त्वमास्थाय बुद्ध्या केवलया द्विजः ।
त्यजेच्च मनसा चेतः शुद्धात्मा बुद्धिमास्थितः’ ४४
तत्सर्वं देहिनां बीजं सत्त्वमात्मवतः समम् ।
तस्मादात्मवता वर्ज्यं रजश्च तम एव च ॥ ४५
रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् ।
‘आहारान्वर्जयेन्नित्यं राजसांस्तामसानपि ॥ ४६
ते ब्रह्म पुनरायान्ति न मोहादचला इव ।’
अथवा मन्त्रवद्ब्रूयुर्मांसादीनां यजुष्कृतम् ॥ ४७
स वै हेतुरनादाने शुद्धधर्मानुपालने ।
रजसा कामयुक्तानि कार्याण्यपि समाप्नुते ॥ ४८
अर्थयुक्तानि चात्यर्थं कामान्सर्वांश्च सेवते ।
तमसा लोभयुक्तानि क्रोधजानि च सेवते ।
हिंसाविहाराभिरतस्तन्द्रीनिद्रासमन्वितः ॥ ४९
सत्वस्थः सात्विकान्भावाञ्शुद्धान्पश्यति संश्रितः ।
स देही विमलः श्रीमाञ्श्रद्धाविद्यासमन्वितः ॥ ५०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

---

## पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

भीष्मेण युधिष्ठिरंप्रति वार्ष्णेयाध्यात्मानुवादः ॥ १ ॥

गुरुरुवाच ।
रजसा साध्यते मोहस्तमश्च भरतर्षभ ।
क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः ॥ १
परमं परमात्मानं देवमक्षयमव्ययम् ।
विष्णुमव्यक्तसंस्थानं विदुस्तं देवसत्तमम् ॥ २
तस्य मायापिनद्धाङ्गा ज्ञानभ्रष्टा निराशिषः ।
मानवा ज्ञानसंमोहात्ततः कामं प्रयान्ति वै ॥ ३
कामात्क्रोधमवाप्याथ लोभमोहौ च मानवाः ।
मानदर्पावहंकारमहंकारात्ततः क्रियाः ॥ ४
क्रियाभिः स्नेहसंबन्धः स्नेहाच्छोकमनन्तरम् ।
अथ दुःखसमारम्भा जराजन्मकृतक्षणाः ॥ ५
जन्मतो गर्भवासं तु शुक्रशोणितसंभवम् ।
पुरीषमूत्रविक्लेदं शोणितप्रभवाविलम् ॥ ६
तृष्णाभिभूतस्तैर्बद्धस्तानेवाभिपरिप्लवन् ।

वक्षि ब्रूहि । वच परिभाषण इति धातोर्लेटि मध्यमपुरुषैकवचनम् ॥ ४० ॥ चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

'तथा नरकगर्तस्थस्तृष्णारज्जुभिराचितः ।
पुण्यपापप्रणुन्नाङ्गो जायते स यथा कृमिः ॥ ७
मशकैर्मत्कुणैर्दष्टस्तथा चित्रवधार्दितः ।
नानाव्याधिभिराकीर्णः कथंचिद्यौवनं गतः ॥ ८
कूर्मोत्सृजति भूयश्च रज्जुः स्वस्वमुखेप्सया ।
योषितं नरकं गृह्य जन्मकर्मवशानुगः ॥ ९
पुरक्षेत्रनिमित्तं यद्दुःखं वक्तुं न शक्यते ।
कस्तत्र निन्दकश्चैव नरके पच्यते भृशम् ॥ १०
वार्धक्यमनुलङ्घेत तत्र कर्मारभेत्पुनः ।
भगवान्संस्तुतः पश्चात्किं प्रवक्ष्यामि ते भृशम्' ११
संसारतत्रवाहिन्यस्तत्र बुद्ध्येत योषितः ।
प्रकृत्याः क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः ।
तस्मादेवाविशेषेण नरोऽतीयाद्विशेषतः ॥ १२
कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणान् ।
रजस्यन्तर्हिता मूर्तिरिन्द्रियाणां सनातनी ॥ १३
तस्मात्तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः ।
स्वदेहजानस्वसंज्ञान्यद्वदङ्गात्क्रमींस्त्यजेत् ।
स्वसंज्ञानस्वकांस्तद्वत्सुतसंज्ञान्क्रमींस्त्यजेत् ॥ १४
शुक्रतो रसतश्चैव देहाज्जायन्ति जन्तवः ।
स्वभावात्कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ॥ १५
रजस्तमसि पर्यस्तं सत्वं च रजसि स्थितम् ।
ज्ञानाधिष्ठानमज्ञानं बुद्ध्यहंकारलक्षणम् ॥ १६
तद्बीजं देहिनामाहुस्तद्बीजं जीवसंज्ञितम् ।
कर्मणा कालयुक्तेन संसारपरिवर्तनम् ॥ १७
रमत्ययं यथा स्वप्ने मनसा देहवानिव ।
कर्मगर्भैर्गुणैर्देही गर्भे तदुपलभ्यते ॥ १८
कर्मणा बीजभूतेन चोद्यते यद्यदिन्द्रियम् ।
जायते तदहंकाराद्रागयुक्तेन चेतसा ॥ १९
शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात्तथा चक्षुर्घ्राणं गन्धजिघृक्षया ॥ २०
संस्पर्शेभ्यस्तथा वायुः प्राणापानव्यपाश्रयः ।
व्यानोदानौ समानश्च पञ्चधा देहयापनम् ॥ २१
संजातैर्जायते गात्रैः कर्मजैर्ब्रह्मणा वृतः ।
दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः ॥ २२
दुःखं विद्यादुपादानादभिमानाच्च वर्धते ।
त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते २३
इन्द्रियाणां रजस्येव प्रलयप्रभवावुभौ ।
परीक्ष्य संचरेद्विद्वान्यथावच्छास्त्रचक्षुषा ॥ २४
ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्यतर्षुलम् ।
ज्ञानैश्च करणैर्देही न देहं पुनरर्हति ॥ २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

---

## षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

भीष्मेण युधिष्ठिरंप्रति ब्रह्मचर्योपायादिप्रतिपादकवार्ष्णेयाध्यात्मानुवादः ॥ १ ॥

गुरुरुवाच ।
अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा ।
तत्त्वज्ञानाच्चरन्राजन्प्राप्नुयात्परमां गतिम् ॥ १
सर्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते ।
पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रदर्शिनः ॥ २
सर्वभूतात्मभूतास्ते सर्वज्ञाः सर्वदर्शिनः ।
ब्राह्मणा वेदशास्त्रज्ञास्तत्त्वार्थगतनिश्चयाः ॥ ३
नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि ।
ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ॥ ४
तांस्तानुपासते धर्मान्धर्मकामा यथागमम् ।
न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ॥ ५
वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः ।

तस्मादेव विशेषेण विनश्येयुर्विपश्चितः इति ध. पाठः । तस्मादेता विशेषेण नरा नेयुर्विपश्चितः इति थ. पाठः ॥ १२ ॥ शत्रुमारणार्थं मन्त्रमयी शक्तिः कृत्या सैव एताः ॥ १३ ॥ स्वदेहाज्जायन्ति जन्तव इति थ. ध. पाठः ॥ १४ ॥ तद्बीजं बीजसंज्ञितमिति ध. पाठः । तत्संस्थं देहबन्धनमिति थ. पाठः । तज्ज्ञानं जीवसंस्थितमिति ट. पाठः ॥ १७ ॥ पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणाञ्छुभान् ॥ ६
यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम् ।
परं तत्सर्वधर्मेभ्यस्तेन यान्ति परां गतिम् ॥ ७
लिङ्गसंयोगहीनं यच्छब्दस्पर्शविवर्जितम् ।
श्रोत्रेण श्रवणं चैव चक्षुषा चैव दर्शनम् ॥ ८
वाक्संभाषाप्रवृत्तं यत्तन्मनः परिवर्जितम् ।
बुद्ध्या चाध्यवसीयीत ब्रह्मचर्यमकल्मषम् ॥ ९
सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान् ।
द्विजाग्र्यो जायते विद्वान्कन्यसीं वृत्तिमास्थितः १०
सुदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु ।
संप्रदीप्तमुदीर्णं च निगृह्णीयाद्द्विजो मनः ॥ ११
योषितां न कथा श्राव्या न निरीक्ष्या निरम्बराः ।
कथंचिद्दर्शनादासां दुर्बलानां विशेद्रजः ॥ १२
रागोत्पन्नश्चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः ।
मग्नस्त्वप्स्वेव मनसा त्रिर्जपेदघमर्षणम् ॥ १३
पाप्मानं निर्दहेदेवमन्तर्भूतरजोमयम् ।
ज्ञानयुक्तेन मनसा संततेन विचक्षणः ॥ १४
कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनम् ।
तद्वद्देहगतं विद्यादात्मानं देहबन्धनम् ॥ १५
'अमेध्यपूर्णं यद्भाण्डं श्लेष्मान्तकलिलावृतम् ।
नेच्छते वीक्षितुं भाण्डं कुतः स्प्रष्टुं प्रवर्तते ॥ १६
देहभाण्डं मलैः पूर्णं बहिः स्वेदजलावृतम् ।
बीभत्सं नरनारीणां ज्ञानिनां नरकं मतम् ॥ १७
छिद्रकुम्भो यथा स्रावं सृजते तद्वतं दृढम् ।
अन्तस्थं स्रंसते तद्वज्जलं देहेषु देहिनाम् ॥ १८
श्लेष्माश्रुमूत्रकलिलं पुरीषं शुक्रमेव च ।
कफजालविनिर्यासः सरसश्चित्त मुञ्चय ॥' १९
वातपित्तकफात्रक्तं त्वङ्मांसं स्नायुमस्थि च ।
मज्जां देहं सिराजालैस्तर्पयन्ति रसा नृणाम् ॥ २०

दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः ।
याभिः सूक्ष्माः प्रजायन्ते धमन्योऽन्याः सहस्रशः
एवमेताः सिरा नद्यो रसोदा देहसागरम् ।
तर्पयन्ति यथाकालमापगा इव सागरम् ॥ २२
मध्ये च हृदयस्यैका सिरा तत्र मनोवहा ।
शुक्रं संकल्पजं नृणां सर्वगात्रैर्विमुञ्चति ॥ २३
सर्वगात्रप्रतायिन्यस्तस्या ह्यनुगताः सिराः ।
नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम् ॥ २४
पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः ।
शुक्रं निर्मथ्यते तद्वद्देहसंकल्पजैः खजैः ॥ २५
स्वप्नेऽप्येवं यथाऽभ्येति मनःसंकल्पजं रजः ।
शुक्रमस्पर्शजं देहात्सृजन्त्यस्य मनोवहाः ॥ २६
महर्षिर्भगवानत्रिर्वेद तच्छुक्रसंभवम् ।
नृबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते ॥ २७
ये वै शुक्रगतिं विद्युर्भूतसंकरकारिकाम् ।
विरागा दग्धदोषास्ते नाप्नुयुर्देहसंभवम् ॥ २८
गुणानां साम्यमागम्य मनसैव मनोवहम् ।
देहकर्म नुदन्प्राणानन्तकाले विमुच्यते ॥ २९
भविता मनसो ज्ञानं मन एव प्रजायते ।
ज्योतिष्मद्विरजो नित्यं मन्त्रसिद्धं महात्मनाम् ३०
तस्मात्तदभिघाताय कर्म कुर्यादकल्मषम् ।
देहबीजं समुत्पन्नमस्मिन्कर्मणि विद्यते ॥ ३१
न स्मरेन्न प्रयुञ्जीत ज्ञानी तत्कर्म बुद्धिमान् ।
रजस्तमश्च हित्वेह न तिर्यग्गतिमाप्नुयात् ॥ ३२
तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम् ।
विपक्वबुद्धिः कालेन आदत्ते मानसं बलम् ॥ ३३
'एवं पुत्रकलत्रेषु ज्ञातिसंबन्धिबन्धुषु ।
आदत्ते हृदये कामं व्याध्यादिभिरभिप्लुतः ॥ ३४
यतस्ततः परिपतन्नविन्दन्सुखमण्वपि ।

कन्यसीं कनीयसीम् ॥ १० ॥ निगृह्णीयाच्चलं मन इति ध. पाठः ॥ ११ ॥ रजो रागः ॥ १२ ॥ सिरा नाड्यस्तासां जालैः ॥ २० ॥ धमन्यो नाड्यः । याभिः सूक्ष्माः प्रतायन्ते इति झ. पाठः ॥ २१ ॥ सर्वगात्रप्रवाहिन्यः इति ध. पाठः ॥ २४ ॥ खजैर्मन्थनदण्डैः । देहस्थात् संकल्पात् खेभ्य इन्द्रियेभ्यश्च जातैः संकल्पजैः खजैः स्त्रीदर्शनस्पर्शनादिभिः ॥ २५ ॥ शुक्रं संकल्पजं देहात्सृजन्त्यस्य मनोवहा इति झ. पाठः ॥२६॥ त्रिबीजमिन्द्रदैवत्यं इति झ. पाठः ॥२७॥ तदभिघाताय मनोनाशाय । अकल्मषं निवृत्तिरूपम् ॥ ३१ ॥ यथेष्टां गतिमाप्नुयात् इति झ. पाठः। तत्र यथा येन प्रकारेण । इष्टां गति मोक्षम् ॥ ३२ ॥ जरया दुर्बलता तां । तृतीया तत्कृतार्थेनेति समासः । मानसंबलं संकल्पमादत्ते संहरति । काले पूर्वभाग्येन नतु दृष्टयोग्यतया ॥ ३३ ॥

बहुदुःखसमापन्नः पश्चान्निर्वेदमास्थितः ।
ज्ञानवृक्षं समाश्रित्य पश्चान्निर्वृतिमश्नुते ॥' ३५
सुदुर्गमिव पन्थानमतीत्य गुणबन्धनम् ।
यथा पश्येत्तथा दोषानतीत्यामृतमश्नुते ॥ ३६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

---

## सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

भीष्मेण युधिष्ठिरंप्रति वैराग्यादिमोक्षसाधनप्रतिपादकगुरुवाक्यानुवादः ॥ १ ॥

गुरुरुवाच ।
दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः ।
ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम् १
जन्ममृत्युजरादुःखैर्व्याधिभिर्मानसक्लमैः ।
दृष्ट्वैव संततं लोकं घटेन्मोक्षाय बुद्धिमान् ॥ २
वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहंकृतः ।
प्रशान्तो ज्ञानवान्भिक्षुर्निरपेक्षश्चरेत्सुखम् ॥ ३
'बशा मोक्षवतां पाशास्तासां रूपं प्रदर्शकम् ।
दुर्ग्रहं पश्यमानोऽपि मन्यते मोहितस्तदा ॥ ४
एवं पश्यन्तमात्मानमनुध्यातं हि बन्धुषु ।
अयथात्वेन जानामि भेदरूपेण संस्थितम् ॥' ५
अथवा मनसः सङ्गं पश्येद्भूतानुकम्पया ।
तत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत् ॥ ६
यत्कृतं स्याच्छुभं कर्म पापं वा यदि वाऽश्नुते ।
तस्माच्छुभानि कर्माणि कुर्याद्वा बुद्धिकर्मभिः ॥७
अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम् ।
क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ॥ ८
'अनक्षसाध्यं तद्ब्रह्म निर्मलं जगतः परम् ।
स्वात्मप्रकाशमग्राह्यमहेतुकमचञ्चलम् ॥ ९
विवेकज्ञानवाचिस्थो ह्याशुरूपेण संस्थितः ।
वैकारिकात्प्रदृश्येते गैरिके मधुधारवत् ॥' १०
यश्चैनं परमं धर्मं सर्वभूतसुखावहम् ।
दुःखान्निःसरणं वेद तत्त्वज्ञः स सुखी भवेत् ॥ ११
तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत् ।
नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत् ॥ १२
अथामोघप्रयत्नेन मनो ज्ञाने निवेशयेत् ।
सुवाचोऽथ प्रयोगेण मनोज्ञं संप्रवर्तते ॥ १३
विवेकयित्वा तद्वाक्यं धर्मसूक्ष्ममवेक्ष्य च ।
सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ॥ १४
कल्कापेतामपरुषामनृशंसामपैशुनीम् ।
ईदृगल्पं च वक्तव्यमविक्षिप्तेन चेतसा ॥ १५
वाक्यबन्धेन संरागविहाराद्व्याहरेद्यदि ।
बुद्ध्याऽप्यनुगृहीतेन मनसा कर्म तामसम् ॥ १६
रजोभूतैर्हि करणैः कर्मणि प्रतिपद्यते ।
स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते ।
तस्मान्मनोवाक्शरीरैराचरेद्धैर्यमात्मनः ॥ १७
प्रकीर्ण एव भारो हि यद्वद्धार्येत दस्युभिः ।
प्रतिलोमां दिशं बुद्ध्वा संसारमबुधास्तथा ।
'संसारमार्गमापन्नः प्रतिलोमं विवर्जयेत् ॥' १८
तामेव च यथा दस्यून्हत्वा गच्छेच्छिवां दिशम् ।
तथा रजस्तमःकर्माण्युत्सृज्य प्राप्नुयाच्छुभम् ॥१९
निःसंदिग्धमनीहो वै मुक्तः सर्वपरिग्रहैः ।
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः २०
ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान् ।
निष्प्रचारेण मनसा परं तदधिगच्छति ॥ २१
धृतिमानात्मवान्बुद्धिं निगृह्णीयादसंशयम् ।

---

गुणा देहेन्द्रियादयस्तदेव बन्धनम् ॥ ३६ ॥ षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

क्लमैः क्लेशैः संतत व्याप्तं दृष्ट्वैव नतु ममेदानीं क्लेशो नास्तीत्युपेक्षेत ॥ २ ॥ घटनमेवाहाध्यायेन वागिति । चरेद्गुरुरिति ध. पाठः ॥ ३ ॥ पश्येद्भूतादिकं यथा इति ध. पाठः ॥ ६ ॥ नापध्यायेत् परानिष्टं न चिन्तयेत् । अबद्धं स्वस्यायोग्यं राज्यादिकं न स्पृहयेत् । असन्नष्टं भावि वा स्त्रीपुत्रादिकं न चिन्तयेत् ॥ १२ ॥ वाचामोघप्रयासेन मनोज्ञं तत्प्रवर्तते इति झ. पाठः ॥ १३ ॥ विवक्षता च तद्वाक्यं धर्मं सूक्ष्ममवेक्षता इति झ. पाठः ॥ १४ ॥ कल्कापेतां शाठ्येन हीनाम् ॥ १५ ॥ वाक्प्रबद्धो हि संसारो विरागात् इति झ. पाठः ॥१६॥ रजोभूतैः प्रवृत्तिपरैः ॥१७॥ अनीहश्चेष्टाशून्यः ॥२०॥ प्रयोगो योगाङ्गानाम-

बहुदुःखसमापन्नः पश्चान्निर्वेदमास्थितः ।
ज्ञानवृक्षं समाश्रित्य पश्चान्निर्वृतिमश्नुते ॥' ३५
सुदुर्गमिव पन्थानमतीत्य गुणबन्धनम् ।
यथा पश्येत्तथा दोषानतीत्यामृतमश्नुते ॥ ३६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

## सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

भीष्मेण युधिष्ठिरंप्रति वैराग्यादिमोक्षसाधनप्रतिपादकगुरुवाक्यानुवादः ॥ १ ॥

गुरुरुवाच ।
दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः ।
ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम् १
जन्ममृत्युजरादुःखैर्व्याधिभिर्मानसक्लमैः ।
दृष्ट्वैव संततं लोकं घटेन्मोक्षाय बुद्धिमान् ॥ २
वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहंकृतः ।
प्रशान्तो ज्ञानवान्भिक्षुर्निरपेक्षश्चरेत्सुखम् ॥ ३
'बद्धा मोक्षवतां पाशास्तासां रूपं प्रदर्शकम् ।
दुर्ग्रहं पश्यमानोऽपि मन्यते मोहितस्तदा ॥ ४
एवं पश्यन्तमात्मानमनुध्यातं हि बन्धुषु ।
अयथात्वेन जानामि भेदरूपेण संस्थितम् ॥' ५
अथवा मनसः सङ्गं पश्येद्भूतानुकम्पया ।
तत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत् ॥ ६
यत्कृतं स्याच्छुभं कर्म पापं वा यदि वाऽश्नुते ।
तस्माच्छुभानि कर्माणि कुर्याद्वा बुद्धिकर्मभिः ॥७
अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम् ।
क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ॥ ८
'अनक्षसाध्यं तद्ब्रह्म निर्मलं जगतः परम् ।
स्वात्मप्रकाशमग्राह्यमहेतुकमचञ्चलम् ॥ ९
विवेकज्ञानवाचिस्थो ह्याशुरूपेण संस्थितः ।
वैकारिकात्प्रदृश्येते गैरिके मधुधारवत् ॥' १०
यश्चैनं परमं धर्मं सर्वभूतसुखावहम् ।
दुःखान्निःसरणं वेद तत्त्वज्ञः स सुखी भवेत् ॥ ११
तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत् ।
नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत् ॥ १२
अथामोघप्रयत्नेन मनो ज्ञाने निवेशयेत् ।
सुवाचोऽथ प्रयोगेण मनोज्ञं संप्रवर्तते ॥ १३
विवेकयित्वा तद्वाक्यं धर्मसूक्ष्ममवेक्ष्य च ।
सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ॥ १४
कल्कापेतामपरुषामनृशंसामपैशुनीम् ।
ईदृगल्पं च वक्तव्यमविक्षिप्तेन चेतसा ॥ १५
वाक्यबन्धेन संरागविहाराद्व्याहरेद्यदि ।
बुद्ध्याऽप्यनुगृहीतेन मनसा कर्म तामसम् ॥ १६
रजोभूतैर्हि करणैः कर्मणि प्रतिपद्यते ।
स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते ।
तस्मान्मनोवाक्शरीरैराचरेद्धैर्यमात्मनः ॥ १७
प्रकीर्ण एव भारो हि यद्वद्धार्येत दस्युभिः ।
प्रतिलोमां दिशं बुद्ध्वा संसारमबुधास्तथा ।
'संसारमार्गमापन्नः प्रतिलोमं विवर्जयेत् ॥' १८
तामेव च यथा दस्यून्हत्वा गच्छेच्छिवां दिशम् ।
तथा रजस्तमःकर्माण्युत्सृज्य प्राप्नुयाच्छुभम् ॥ १९
निःसंदिग्धमनीहो वै मुक्तः सर्वपरिग्रहैः ।
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः २०
ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान् ।
निष्प्रचारेण मनसा परं तदधिगच्छति ॥ २१
धृतिमानात्मवान्बुद्धिं निगृह्णीयादसंशयम् ।

गुणा देहेन्द्रियादयस्तदेव बन्धनम् ॥ ३६ ॥ षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

क्लमैः क्लेशैः संतत व्याप्तं दृष्ट्वैव नतु ममेदानीं क्लेशो नास्तीत्युपेक्षेत ॥ २ ॥ घटनमेवाहाध्यायेन वागिति । चरेद्गुरुरिति ध. पाठः ॥ ३ ॥ पश्येद्भूतादिकं यथा इति ध. पाठः ॥ ६ ॥ नापध्यायेत् परानिष्टं न चिन्तयेत् । अबद्धं स्वस्यायोग्यं राज्यादिकं न स्पृहयेत् । असन्नष्टं भावि वा स्त्रीपुत्रादिकं न चिन्तयेत् ॥ १२ ॥ वाचामोघप्रयासेन मनोज्ञं तत्प्रवर्तते इति झ. पाठः ॥ १३ ॥ विवक्षता च तद्वाक्यं धर्मं सूक्ष्ममवेक्षता इति झ. पाठः ॥ १४ ॥ कल्कापेतां शाठ्येन हीनाम् ॥ १५ ॥ वाक्प्रबद्धो हि संसारो विरागात् इति झ. पाठः ॥१६॥ रजोभूतैः प्रवृत्तिपरैः ॥१७॥ अनीहश्चेष्टाशून्यः ॥२०॥ प्रयोगो योगाज्ञानाम-

ततः पश्यन्त्यसंबन्धान्वातपित्तकफोत्तरान् ।
रजस्तमोभवैर्भावैस्तदप्याहुर्दुरत्ययम् ॥ १४
प्रसन्नैरिन्द्रियैर्यद्यत्संकल्पयति मानसम् ।
तत्तत्स्वप्नेप्युपरते मनो बुद्धिर्निरीक्षते ॥ १५
व्यापकं सर्वभूतेषु वर्तते दीपवन्मनः ।
आत्मप्रभावात्तं विद्यात्सर्वा ह्यात्मनि देवताः १६
मनस्यन्तर्हितं द्वारं देहमास्थाय मानुषम् ।
यत्तत्सदसदव्यक्तं स्वपित्यस्मिन्निदर्शनम् ॥ १७
'व्यक्तभेदमतीतोऽसौ चिन्मात्रं परिदृश्यते ।'
सर्वभूतात्मभूतस्थं तमध्यात्मगुणं विदुः ॥ १८
लिप्सेत मनसा यश्च संकल्पादैश्वरं गुणम् ।
आत्मप्रसादात्तं विद्यात्सर्वा ह्यात्मनि देवताः १९
एवं हि तपसा युञ्ज्यादर्कवत्तमसः परम् ।
त्रैलोक्यप्रकृतिर्देही तमसोन्ते महेश्वरम् ॥ २०
तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः ।
एतद्देवासुरैर्गुप्तं तदाहुर्ज्ञानलक्षणम् ॥ २१
सत्त्वं रजस्तमश्चेति देवासुरगुणान्विदुः ।
सत्त्वं देवगुणं विद्यादितरावासुरौ गुणौ ॥ २२
'सत्त्वं मनस्तथा बुद्धिर्देवा इत्यभिशब्दिताः ।
तैरेव हि वृतस्तस्माज्ज्ञात्वैवं परमं···· ॥ २३
निद्राविकल्पेन सतां····विशति लोकवत् ।
स्वस्थो भवति गूढात्मा कलुषैः परिवर्जितः ॥२४
निशादिका ये कथिता लोकानां कलुषा मताः ।
तैर्हीनं यत्पुरं शुद्धं बाह्याभ्यन्तरवर्तिनम् ।
सदानन्दमयं नित्यं भूत्वा तत्परमन्वियात् ॥२५
एवमाख्यातमत्यर्थं ब्रह्मचर्यमकल्मषम् ।
सर्वसंयोगहीनं तद्विष्ण्वाख्यं परमं पदम् ।
अचिन्त्यमद्भुतं लोके ज्ञानेन परिवर्तते ॥' २६
ब्रह्म तत्परमं ज्ञानममृतं ज्योतिरक्षरम् ।
ये विदुर्भावितात्मानस्ते यान्ति परमां गतिम् २७
हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा ।
प्रत्याहारेण वा शक्यमव्यक्तं ब्रह्म वेदितुम् ॥२८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

## एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

**भीष्मेण युधिष्ठिरंप्रति शिष्याय गुरूक्तवार्ष्णेयाध्यात्मानुवादसमापनम् ॥ १ ॥**

गुरुरुवाच ।
न स वेद परं ब्रह्म यो न वेद चतुष्टयम् ।
व्यक्ताव्यक्तं च यत्तत्त्वं संप्रोक्तं परमर्षिणा ॥ १
व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदम् ।
निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत् ॥ २
तत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम् ।
निवृत्तिलक्षणं धर्ममव्यक्तं ब्रह्म शाश्वतम् ॥ ३
प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् ।
प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः ॥ ४
तां गतिं परमामेति निवृत्तिपरमो मुनिः ।
ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शकः ॥ ५
तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ ।
अव्यक्तपुरुषाभ्यां तु यत्स्यादन्यन्महत्तरम् ॥ ६
तं विशेषमवेक्षेत विशेषेण विचक्षणः ।
अनाद्यन्तावुभावेतावलिङ्गौ चाप्युभावपि ॥ ७
उभौ नित्यावनुचरौ महद्भ्यश्च महत्तरौ ।
सामान्यमेतदुभयोरेवं ह्यन्यद्विशेषणम् ॥ ८
प्रकृत्या सर्गधर्मिण्या तथा त्रिगुणसत्वया ।
विपरीतमतो विद्यात्क्षेत्रज्ञस्य स्वलक्षणम् ॥ ९
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
'क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् ॥ १०
अग्राह्यं येन जानन्ति तज्ज्ञानं दंशितश्च तत् ।

अप्रतिमं मनः इति ध. पाठः । अप्रतिघं मनः इति झ. पाठः ॥ १६ ॥ गुप्तं ज्ञानाज्ञानस्य लक्षणमिति थ. ध. पाठः ॥ २१ ॥ ब्रह्म तत्परमं वेद्यं इति ट. थ. पाठः । ज्ञै विदुः सात्त्विकात्मानः इति थ. पाठः ॥ २७ ॥ अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

न स वेद परं धर्मं इति ध. पाठः ॥ १ ॥

तेनैव दंशितो नित्यं न गुणः परिभूयते ॥ ११
अग्राह्यौ पुरुषावेतावलिङ्गत्वादसङ्गिनौ ।
संयोगलक्षणोत्पत्तिः कर्मजा गृह्यते यथा ॥ १२
करणैः कर्मनिर्वृत्तैः कर्ता यद्यद्विचेष्टते ।
कीर्त्यते शब्दसंज्ञाभिः कोऽहमेषोप्यसाविति ॥ १३
'ममापि कायमिति च तदज्ञो नित्यसंवृतः ।'
उष्णीषवान्यथा वस्त्रैस्त्रिभिर्भवति संवृतः ।
संवृतोऽयं तथा देही सत्त्वराजसतामसैः ॥ १४
'भेदवस्तु त्वभेदेन जानाति स यदा पुमान् ।
तदा परं परात्माऽसौ भवत्येव निरञ्जनः ॥ १५
क्रियायोगे च भेदाख्ये बहु संक्षिप्यते क्वचित् ।
वसुरुद्रगणाद्येषु स्वानुभोगेन भोगतः ॥ १६
एवमेष परः सत्त्वो नानारूपेण संस्थितः ।
संक्षिप्तो दृश्यते पश्चादेकरूपेण विष्ठितः ॥' १७
तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिरावृतम् ।
तथासंज्ञो ह्ययं सम्यगन्तकाले न मुह्यति ।
'वायुर्विधो यथा भानुर्विप्रकाशं गमिष्यति ॥' १८
श्रियं दिव्यामभिप्रेप्सुर्वर्ष्मवान्मनसा शुचिः ।
शारीरैर्नियमैरुग्रैश्चरेन्निष्कल्मषं तपः ॥ १९
त्रैलोक्यं तपसा व्याप्तमन्तर्भूतेन भास्वता ।
सूर्यश्च चन्द्रमाश्चैव भासतस्तपसा दिवि ॥ २०
'अन्यच्च धर्मसाम्यं यत्तपस्तत्कीर्त्यते पुनः ।'
प्रकाशस्तपसो ज्ञानं लोके संशब्दितं तपः ॥ २१
रजस्तमोघ्नं यत्कर्म तपसस्तत्स्वलक्षणम् ।
'त्रितयं ह्येतदाख्यातं यद्यस्माद्भासितुं पुनः ॥ २२
स्वभासा भासयंश्चापि चन्द्रमा ह्यत्र वर्तते ।
सूर्ययोगे तु यः सन्धिस्तपः सर्वं प्रदीप्यते ॥' २३
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।
वाङ्मनोनियमः सम्यङ्मानसं तप उच्यते ॥ २४
विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं विशिष्यते ।
आहारनियमेनास्य पाप्मा शाम्यति राजसः ॥ २५
वैमनस्यं च विषये यान्त्यस्य करणानि च ।
तस्मात्तन्मात्रमादद्याद्यावदत्र प्रयोजनम् ॥ २६
अन्तकाले बलोत्कर्षाच्छनैः कुर्यादनातुरः ।
एवं युक्तेन मनसा ज्ञानं यदुपपद्यते ॥ २७
रजोवर्ज्यो ह्ययं देही देहवाञ्छब्दवांश्चरेत् ।
कार्यैरव्याहतमतिर्वैराग्यात्प्रकृतौ स्थितः ॥ २८
आ देहादप्रमादाच्च देहान्ताद्विप्रमुच्यते ।
हेतुयुक्तः सदा सर्गो भूतानां प्रलयस्तथा ॥ २९
परप्रत्ययसर्गे तु नियमो नातिवर्तते ।
एवं तत्प्रभवां प्रज्ञामासते ये विपर्यये ॥ ३०
धृत्या देहान्धारयन्तो बुद्धिसंक्षिप्तचेतसः ।
स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तदुपासते ॥ ३१
यथागमं च तत्सर्वं बुद्ध्या तन्नैव बुद्ध्यते ।
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः ॥ ३२
युक्तो धारणया कश्चित्सतः केचिदुपासते ।
अभ्यस्यन्ति परं देवं विद्यासंशब्दिताक्षरम् ॥ ३३
अन्तकाले ह्युपासन्ते तपसा दग्धकिल्बिषाः ।
सर्व एते महात्मानो गच्छन्ति परमां गतिम् ॥ ३४
सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा ।
देहं तु परमं विद्याद्विमुक्तमपरिग्रहम् ॥ ३५
अन्तरिक्षादन्यतरं धारणासक्तमानसम् ।
मर्त्यलोकाद्विमुच्यन्ते विद्यासंसक्तचेतसः ॥ ३६
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम् ।
एवमेकायनं धर्ममाहुर्वेदविदो जनाः ॥ ३७
यथाज्ञानमुपासन्तः सर्वे यान्ति परां गतिम् ।
कषायवर्जितं ज्ञानं तेषामुत्पद्यतेऽमलम् ।
यान्ति तेऽपि पराँल्लोकान्विशुध्यन्ति यथाबलं ३८
भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितम् ।
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ॥ ३९
ज्ञात्वाऽऽत्मस्थं हरिं चैव न निवर्तन्ति तेऽव्ययाः ।
प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययम् ॥ ४०
एतावदेतद्विज्ञानमेतदस्ति च नास्ति च ।
तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ॥ ४१

तपसस्त्वच्च लक्षणमिति थ. पाठः । तत्त्वलक्षणमिति ध. पाठः ॥ २२ ॥ ग्राह्यमन्नं तपस्विभिरिति ट. थ. पाठः ॥ २५ ॥ देहान्ते विप्रमुच्यत इति ट. थ. पाठः । सदोत्सर्ग इति ध. पाठः ॥ २९ ॥ विमुच्यन्ते यथाबलमिति झ. पाठः । विशुध्यन्तो यथाबलमिति ट. थ. पाठः ॥ ३८ ॥

विसतन्तुर्यथैवायमन्तस्थः सर्वतो विसे ।
तृष्णातन्तुरनाद्यन्तस्तथा देहगतः सदा ॥ ४२
सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः ।
तद्वत्संसारसूत्रं हि तृष्णासूच्या निबद्ध्यते ॥ ४३
'इतस्ततः समाहृत्य रूपं निर्वर्तयिष्यति ।'
विकारं प्रकृतिं चैव पुरुषं च सनातनम् ॥ ४४
यो यथावद्विजानाति स वितृष्णो विमुच्यते ।
याति नित्यं स सद्भावमात्मनो वै महद्ध्रुवम् ॥ ४५
भीष्म उवाच ।
प्रकाशं भगवानेतदृषिर्नारायणोऽमृतम् ।
भूतानामनुकम्पार्थं जगाद जगतो हितम् ॥ ४६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

## विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

भीष्मेण युधिष्ठिरंप्रति जनकाय पञ्चशिखोक्तनास्तिकादिमतखण्डनानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
केन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः ।
जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य बुद्धिमान् १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
येन वृत्तेन धर्मज्ञः स जगाम महत्सुखम् ॥ २
जनको जनदेवस्तु मिथिलायां जनाधिप ।
और्ध्वदेहिकधर्माणामासीद्युक्तो विचिन्तने ॥ ३
तस्य स शतमाचार्या वसन्ति सततं गृहे ।
दर्शयन्तः पृथग्धर्मान्नानापाषण्डवादिनः ॥ ४
स तेषां प्रेत्यभावेन प्रेत्य जातौ विनिश्चये ।
आगमस्थः स भूयिष्ठमात्मतत्त्वेन तुष्यति ॥ ५
तत्र पञ्चशिखो नाम कापिलेयो महामुनिः ।
परिधावन्महीं कृत्स्नां जगाम मिथिलामथ ॥ ६
सर्वसंन्यासधर्माणां तत्त्वज्ञानविनिश्चये ।
सुपर्यवसितार्थश्च निर्द्वन्द्वो नष्टसंशयः ॥ ७
ऋषीणामाहुरेकं यं कामादवसितं नृषु ।
शाश्वतं सुखमत्यन्तमन्विच्छन्तं सुदुर्लभम् ॥ ८
यमाहुः कपिलं साङ्ख्याः परमर्षिं प्रजापतिम् ।
समेत्य तेन रूपेण विस्मापयति हि स्वयम् ॥ ९
आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् ।
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् ॥ १०
तमासीनं समागम्य कापिलं मण्डलं महत् ।
[पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः ॥ ११
पञ्चज्ञः पञ्चकृत्पञ्चगुणः पञ्चशिखः स्मृतः ।]
पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत् ॥ १२
इष्ट्वा सत्रेण संपृष्टो भूयश्च तपसाऽऽसुरिः ।
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनात् ॥ १३
यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते ।
'बोधायनपरान्विप्रानृषिभावमुपागतः ।'
आसुरिर्मण्डले तस्मिन्प्रतिपेदे तदव्ययम् ॥ १४
तस्य पञ्चशिखः शिष्यो मानुष्याः पयसा भृतः ।
ब्राह्मणी कपिला नाम काचिदासीत्कुटुम्बिनी १५
तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ ।
ततः स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् १६
एतन्मे भगवानाह कापिलेयस्य संभवम् ।
तस्य तत्कापिलेयत्वं सर्ववित्त्वमनुत्तमम् ॥ १७

प्रकाशं स्पष्टम् । अमृतं मोक्षसाधनम् ॥ ४६ ॥ एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

महत्सुखं मोक्षम् ॥ २ ॥ जनको जनकवंश्यः नाम्ना जनदेवः ॥ ३ ॥ पाषण्डा लोकायतादयस्तेषां वादिनः प्रतिभटत्वेन जेतारः ॥ ४ ॥ कापिलेयः कपिलायाः पुत्रः । परिधावन् एकत्र वासमकुर्वन् ॥ ६ ॥ सुपर्यवसितार्थः सम्यङ्निश्चितप्रयोजनः ॥ ७ ॥ कामादवसितं यदृच्छया स्थितम् । नृषु सुखं अन्विच्छन्तम् । स्थापयितुमिति शेषः ॥ ८ ॥ कपिलं तत्प्रशिष्यत्वात्तत्तुल्यम् ॥ ९ ॥ मनुष्यो वयसा वृत इति ध. पाठः । धृत इति ट. ध. पाठः ॥ १५ ॥ भगवान्मार्कण्डेयः सनत्कु-

सामान्यं जनकं ज्ञात्वा धर्मज्ञानामनुत्तमम् ।
उपेत्य शतमाचार्यान्मोहयामास हेतुभिः ॥ १८
'निराकरिष्णुस्तान्सर्वांस्तेषां हेतुगुणान्बहून् ।
श्रावयामास मतिमान्मुनिः पञ्चशिखो नृप ॥' १९
जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात् ।
उत्सृज्य शतमाचार्यान्पृष्ठतोऽनुजगाम तम् ॥ २०
तस्मै परमकल्याय प्रणताय च धर्मतः ।
अब्रवीत्परमं मोक्षं यतः साङ्ख्यं विधीयते ॥ २१
जातिनिर्वेदमुक्त्वा स कर्मनिर्वेदमब्रवीत् ।
कर्मनिर्वेदमुक्त्वा च सर्वनिर्वेदमब्रवीत् ॥ २२
यदर्थं धर्मसंसर्गः कर्मणां च फलोदयः ।
तमनाश्वासिकं मोहं विनाशि चलमध्रुवम् ॥ २३
दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ।
आगमात्परमस्तीति ब्रुवन्नपि पराजितः ॥ २४
आत्मना ह्यात्मनो नित्यं क्लेशमृत्युजरामयम् ।
आत्मानं मन्यते मोहात्तदसम्यक्परं मतम् ॥ २५
अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते ।
अजरोऽयममृत्युश्च राजाऽसौ मन्यते तथा ॥ २६
अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे ।
किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम् ॥ २७
प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि ।
प्रत्यक्षेणागमो भिन्नः कृतान्तो वा न कश्चन ॥ २८
यत्रतत्रानुमानेऽस्मिन्कृतं भावयतोऽपि च ।
नान्यो जीवः शरीरस्य नास्तिकानां मते स्मृतः २९
रेतो वटकणीकायां घृतपाकाधिवासनम् ।
जातिः स्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम्
प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् ।
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥ ३१
न त्वेते हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।
अमूर्तस्य हि मूर्तेन सामान्यं नोपपद्यते ॥ ३२
अविद्याकर्मचेष्टानां केचिदाहुः पुनर्भवे ।
कारणं लोभमोहौ तु दोषाणां च निषेवणम् ॥ ३३
अविद्यां क्षेत्रमाहुर्हि कर्मबीजं तथा कृतम् ।
तृष्णासंजननं स्नेह एष तेषां पुनर्भवः ॥ ३४
तस्मिन्मूढे च जग्धे च देहे मरणधर्मिणि ।
अन्योऽसौ जायते प्रेतस्तदाहुस्तत्वमक्षयम् ॥ ३५
यदा स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मिन्स इत्येवं संबोधः स्यादसंहितः ॥ ३६
एवं सति च का प्रीतिर्दानविद्यातपोबलैः ।
यद्यदाचरितं कर्म सर्वमन्यत्प्रपद्यते ॥ ३७
यदि ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत् ।
सुखितो दुःखितैर्वाऽपि दृश्यो ह्यस्य विनिर्णयः ॥ ३८
यदा हि मुसलैर्हन्युः शरीरं न पुनर्भवेत् ।
पृथग्ज्ञानं यदन्यच्च येनैतन्नोपपद्यते ॥ ३९
ऋतुसंवत्सरौ तिथ्यः शीतोष्णेऽथ प्रियाप्रिये ।
यथाऽतीता न दृश्यन्ते तादृशः सत्वसंक्षयः ४०
जरयाऽभिपरीतस्य मृत्युना च विनाशिना ।
दुर्बलं दुर्बलं पूर्वं गृहस्येव विनश्यति ॥ ४१
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च ।
आनुपूर्व्या विनश्यन्ति स्वं धातुमुपयान्ति च ॥ ४२
लोकयात्राविधानं च दानधर्मफलागमः ।
तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ ४३
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः ।
एतदासीन्ममास्तीति न कश्चित्प्रतिपद्यते ॥ ४४
तेषां विमृशतामेवं तत्तत्समभिधावताम् ।
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ॥ ४५
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ।
आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ॥ ४६

---

मारो वा ॥ १७ ॥ सामान्यं सर्वेष्वाचार्येषु समबुद्धिम् ॥ १८ ॥ कल्याय समर्थाय ॥ २१ ॥ जातिर्जन्म । कर्म यागादि । सर्वं ब्रह्मलोकान्तम् । तेषु निर्वेदः क्षयिष्णुत्वात् ॥ २२ ॥ तं मोहमब्रवीदिति पूर्वेणान्वयः ॥ २३ ॥ अनात्मा ह्यात्मनः क्लेशं जन्ममृत्युजरामयम् इति ट. थ. पाठः ॥ २५ ॥ यत्रकुत्राप्यनुमाने ईदृशानिष्टनित्यात्मान्यतमसाधके साध्यसिद्धिं भावयतः कृतं अलम् । भावनयालमित्यर्थः । उक्तविधयानुमानस्याप्रमाणत्वात् । शरीरस्य शरीरात् ॥ २९ ॥ रेतो धातुर्वटकणिका घृतधूमाधिवासनमिति ध. पाठः । सूर्यकान्ताग्निमोक्षणमिति थ. पाठः ॥ ३० ॥ व्यूढे च दग्धे चेति ध. पाठः । अन्योन्याज्जायते स्नेहस्तमाहुः सत्वसंक्षयमिति ध. पाठः ॥ ३५ ॥ सुखितैः सुखितो वापि दृष्टो ह्यस्य विनिर्णय इति ट. थ. पाठः ॥ ३८ ॥ विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' ४७
अर्थास्तथाऽत्यन्तसुखावहाश्च
लिप्सन्त एते बहवो विशुष्काः ।
महत्तरं दुःखमनुप्रपन्ना
हित्वा सुखं मृत्युवशं प्रयान्ति ॥ ४८
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥ ४९
भूव्योमतोयानलवायवोऽपि
सदा शरीरं प्रतिपालयन्ति ।
इतीदमालक्ष्य रतिः कुतो भवे-
द्विनाशिनो ह्यस्य न कर्म विद्यते ॥ ५०
इदमनुपधिवाक्यमच्छलं
परमनिरामयमात्मसाक्षिकम् ।
नरपतिरभिवीक्ष्य विस्मितः
पुनरनुयोक्तुमिदं प्रचक्रमे ॥ ५१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

## एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

भीष्मेण युधिष्ठिरंप्रति जनकं प्रत्युक्तपञ्चशिखवाक्यानुवादः ॥ १ ॥

'भीष्म उवाच ।
जनको नरदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ सांपराये भवाभवौ ॥ १
भगवन्यदिदं प्रेत्य संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ २
विवादादेव सिद्धोऽसौ कारणस्यैव वेदना ।
चेतनो विद्यते ह्यत्र हैतुकं च मनोगतम् ॥ ३
आगमादेव सिद्धोऽसौ स्वतःसिद्धा इति श्रुतिः ।
वर्तते पृथगन्योन्यं न ह्यपाश्रित्य कर्मसु ॥ ४
चेतनो ह्यंशवस्तत्र स्वमूर्तं धारयन्त्यतः ।
स्वभावं पौरुषं कर्म ह्यात्मानं तमुपाश्रितम् ।
तमाश्रित्य प्रवर्तन्ते देहिनो देहबन्धनाः ॥ ५
गुणज्ञानमभिज्ञानं तस्य लिङ्गानुशब्दवत् ।
पृथिव्यादिषु भूतेषु तत्तदाहुर्निदर्शनम् ॥ ६
आत्माऽसौ वर्तते भिन्नस्तत्रतत्र समन्वितः ।
परमात्मा तथैवैको देहेऽस्मिन्निति वै श्रुतिः ॥ ७
आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम् ।
यथा त्रिधा प्रवर्तन्ते तथाऽसौ पुरुषः स्मृतः ॥ ८
पयस्यन्तर्हितं यद्वत्तद्व्याप्तं महात्मकम् ।
पूर्वं नैश्वर्ययोगेन तस्मादेतन्न शेषवान् ॥ ९
शब्दः कालः क्रिया देहो ममैकस्यैव कल्पना ।
स्वभावं तन्मयं त्वेदं मायारूपं तु भेदवत् ॥ १०
नानाख्यं परमं शुद्धं निर्विकल्पं परात्मकम् ।
लिङ्गादि देवमध्यास्ते ज्ञानं देवस्य तत्तथा ॥ ११
चिन्मयोऽयं हि नादाख्यः शब्दश्चासौ मनो महान् ।
गतिमानुत संधत्ते वर्णमत्तत्पदान्वितम् ॥ १२
कायो नास्ति च तेषां वै अवकाशस्तथा परम् ।
एतेनोढा इति चाख्याताः सर्वे ते धर्मदूषकाः ॥ १३
अबन्धनमविज्ञानाज्ज्ञानं तद्ध्रुवमव्ययम् ।
नानाभेदविकल्पेन येषामात्मा स्मृतः सदा ॥ १४
प्रकृतेरपरस्तेषां बहवोऽप्यात्मवादिनः ।
विरोधो ह्यात्मसन्मायां न तेषां सिद्ध एव हि ।
अन्यदा च गृहीतै.....वेदबाह्यास्ततः स्मृताः ॥ १५
एकानेकात्मकं तेषां प्रतिषेधो हि भेदनुत् ।
तस्माद्वेदस्य हृदयमद्वैध्यमिति विद्धि तत् ॥ १६
वेदादृष्टेरयं लोकः सर्वार्थेषु प्रवर्तते ।
तस्माच्च स्मृतयो जाताः सेतिहासाः पृथग्विधाः ॥ १७
न यत्र साध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ।
इन्द्रियाणि च भूरीणि परा च प्रकृतिर्मनः ॥ १८
आत्मा च परमः शुद्धः प्रोक्तोऽसौ परमः पुमान् ॥ १९
उत्पत्तिलक्षणं चेदं विपरीतमथोभयोः ।
यो वेत्ति प्रकृतिं नित्यं तथा चैवात्मनस्तु ताम् ।

* अयमध्यायो ध. पुस्तकएव दृश्यते ।

प्रदहत्येष कर्माख्यं दावोद्भूत इवानलः ॥ २०
चिन्मात्रपरमः शुद्धः सर्वाकृतिषु वर्तते ॥ २१
आकाशकल्पं विमलं नानाशक्तिसमन्वितम् ।
तापनं सर्वभूतानां ज्योतिषां मध्यमस्थितिम् ।
दुःखमस्ति न निर्दुःखं तद्विद्वान्न च लिप्यति ॥२२
असावश्नाति यद्वत्तद्भमरोऽश्नाति यन्मधु ।
एवमेष महानात्मा नात्मानमवबुध्यते ॥ २३
एवंभूतस्त्वमित्यत्र स्वाधितो बुद्ध्यते परम् ।
बुधस्य बोधनं तत्र क्रियते सद्भिरित्युत ।
न बुधस्येति वै कश्चिन्न तथावच्छृणुष्व मे ॥२४
शोकमस्य न गत्वा ते शास्त्राणां शास्त्रदस्यवः ।
लोकं निघ्नन्ति संभिन्ना ज्ञातिनोत्र वदन्त्युत ॥ २५
एवं तस्य विभोः कृत्यं धातुरस्य महात्मनः ।
क्षमन्ति ते महात्मानः सर्वद्वन्द्वविवर्जिताः ॥२६
अतोऽन्यथा महात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ २७
तस्य संयोगयोगेन शुचिरप्यशुचिर्भवेत् ।
अशुचिश्च शुचिश्चापि ज्ञानादेहादयो यथा ॥२८
दृश्यं न चैव दृष्टं स्याद्दृष्टं दृश्यं तु नैव च ॥ २९
अतीतत्रितयाः सिद्धा ज्ञानरूपेण सर्वदा ।
एवं न प्रतिपद्यन्ते रागमोहमदान्विताः ॥ ३०
वेदबाह्या दुरात्मानः संसारे दुःखभागिनः ।
आगमानुगतज्ञाना बुद्धियुक्ता भवन्ति ते ॥ ३१
बुद्ध्या भवति बुद्ध्या त्वं यद्बुद्धं चात्मरूपवत् ।
तमस्यन्धे न संदेहात्परं यान्ति न संशयः ॥ ३२
नित्यनैमित्तिकान्कृत्वा पापहानिमवाप्य च ।
शुद्धसत्वा महात्मानो ज्ञाननिर्धूतकल्मषाः ॥ ३३
असक्ताः परिवर्तन्ते संसरन्त्यथ वायुवत् ।
न युज्यन्तेऽथवा क्लेशैरहंभावोद्भवैः सह ॥ ३४
इतस्ततः समाहृत्य ज्ञानं निर्वर्णयन्त्युत ।
ज्ञानान्वितस्तमो हन्यादर्कवत्स महामतिः ॥ ३५
एवमात्मानमन्वीक्ष्य नानादुःखसमन्वितम् ।
देहं पङ्कमले मग्नं निर्मलं परमार्थतः ॥ ३६
तमेवं सर्वदुःखात्तु मोचयेत्परमात्मवान् ।
ब्रह्मचर्यव्रतोपेतः सर्वसङ्गबहिष्कृतः ।
लघ्वाहारो विशुद्धात्मा परं निर्वाणमृच्छति ॥ ३७
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च ।
आनुपूर्व्याद्विनश्यन्ति स्वं धातुमुपयान्ति च ॥ ३८
कारणानुगतं कार्यं यदि तच्च विनश्यति ।
अलिङ्गस्य कथं लिङ्गं युज्यते तन्मृषा दृढम् ॥ ३९
न त्वेव हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।
अमर्त्यस्य च मर्त्येन सामान्यं नोपपद्यते ॥ ४०
लोकदृष्टो यथा जातः स्वेदजः पुरुषः स्त्रियाम् ।
कृतानुसरणात्सिद्धो वेदगम्यः परः पुमान् ॥ ४१
प्रत्यक्षानुगतो वेदो नामहेतुभिरिष्यते ॥ ४२
यथा शाखा हि वै शाखा तरोः संबध्यते तदा ।
श्रुत्या तथापरोप्यात्मा दृश्यते सोऽप्यलिङ्गवान् ।
अलिङ्गसाध्यं तद्ब्रह्म बहवः सन्ति हेतवः ॥ ४३
लोकयात्राविधानं च दानधर्मफलागमः ।
तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ ४४
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः ।
एतदस्तीदमस्तीति न किंचित्प्रतिदृश्यते ॥ ४५
तेषां विमृशतामेवं तत्तत्समभिधावताम् ।
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ॥ ४६
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ।
आगमैरपकृष्यन्ति हस्तिनो हस्तिपैर्यथा ॥ ४७
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ४८

अर्थांस्तथाऽत्यन्तदुःखावहांश्च
लिप्सन्त एके बहवो विशुष्काः ।
महत्तरं दुःखमभिप्रपन्ना
हित्वा सुखं मृत्युवशं प्रयान्ति ॥ ४९
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मन्त्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥ ५०
खं भूमितोयानलवायवो हि
सदा शरीरं प्रतिपालयन्ति ।
इतीदमालक्ष्य कुतो रतिर्भवे-
द्विनाशिनो ह्यस्य न कर्म विद्यते ॥ ५१

इदमनुपधिवाक्यमच्छलं
परमनिरामयमात्मसाक्षिकम् ।
नरपतिरनुवीक्ष्य विस्मितः
पुनरनुयोक्तुमिदं प्रचक्रमे ॥' ५२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

## द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

भीष्मेण युधिष्ठिरंप्रति जनकाय पञ्चशिखोक्तसांपरायिकभावादिप्रतिपादकवाक्यानुवादः ॥ १ ॥

भीष्म उवाच ।
जनको नरदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ सांपराये भवाभवौ ॥ १
जनक उवाच ।
भगवन्यदि न प्रेत्य संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥२
सर्वमुच्छेदनिष्ठं स्यात्पश्य चैतद्विजोत्तम ।
अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ॥ ३
असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु ।
कस्मै क्रियेत तत्वेन निश्चयः कोऽत्र तत्त्वतः ॥४
भीष्म उवाच ।
तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम् ।
पुनः प्रशमयन्वाक्यैः कविः पञ्चशिखोऽब्रवीत् ॥५
उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते ।
अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम् ।
वर्तते पृथगन्योन्यमप्यपाश्रित्य कर्मसु ॥ ६
धावतः पञ्च तेषां तु खं वायुर्ज्योतिरम्बु भूः ।
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः ॥ ७
आकाशो वायुरूष्मा च स्नेहो यश्चापि पार्थिवः ।
एष पञ्चसमाहारः शरीरमपि नैकधा ॥ ८
'अहं वाच्यं द्विजानां यद्विशिष्टं बुद्धिरूपवत् ।
वाचामगोचरं नित्यं ज्ञेयमेवं भविष्यति ॥ ९
ज्ञानं ज्ञेयं तथा ज्ञानं त्रिविधं ज्ञानमुच्यते ।'
ज्ञानमूष्मा च वायुश्च त्रिविधः कर्मसंग्रहः ॥१०
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ विकारश्च धातवश्चात्र निःसृताः ॥११
'प्राणादयस्तथा स्पर्शा न संबाधगतास्तथा ।
पुत्राधीनं भविष्येत चिन्मात्रः स परः पुमान् ॥१२
श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च ।
इन्द्रियाणीति पञ्चैते चित्तपूर्वगमा गुणाः ॥ १३
तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा ।
सुखदुःखेति यामाहुरदुःखेत्यसुखेति च ॥ १४
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च मूर्तयः ।
एते ह्यामरणात्पञ्च षड्गुणा ज्ञानसिद्धये ॥ १५
तेषु कर्मविसर्गश्च सर्वतत्वार्थनिश्चयः ।
तमाहुः परमं शुक्रं 'पारे च रजसः प्रभुम् ॥१६
विरागाद्वर्तते तस्मिन्मनो रजसि नित्यगम् ।
तस्मिन्प्रसन्ने संपश्ये' द्बुद्धिरित्यव्ययं महत् ॥ १७
इमं गुणसमाहारमात्मभावेन पश्यतः ।
असम्यग्दर्शिनो दुःखमनन्तं नोपशाम्यति ॥१८
'तस्मादेतेषु मेधावी न प्रसज्येत बुद्धिमान् ।'
अनात्मेति च यद्दृष्टं तन्नाहं न ममेत्यपि ।
वर्तते किमधिष्ठाना प्रसक्ता दुःखसंततिः ॥ १९
यत्र सम्यञ्चनो नाम त्यागमात्रमनुत्तमम् ।
शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ॥ २०
त्याग एव हि सर्वेषां युक्तानामपि कर्मणाम् ।
नित्यदुःखविनीतानां क्लेशो दुःखवहो हतः ॥ २१
द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि ।

भगवन्यदिदं प्रोक्तं इति ट. ड. थ. पाठः ॥ २ ॥ पञ्चत्वे तद्विजोत्तमेति ध. पाठः ॥ ३ ॥ उच्छेदनिष्ठा देहेऽस्ति इति ट. थ. पाठः ॥ ६ ॥ चित्तरूपं गमा गुणाः इति ध. पाठः ॥ १३ ॥ गन्धश्च पञ्चमः इति ड. पाठः । आमरणाद्युक्ता इति ट. ड. थ. पाठः ॥ १५ ॥ तत्तु सम्यञ्चत नाम त्यागशास्त्रमनुत्तममिति ट. ड. थ. पाठः । अत्र सम्यग्वधो नाम त्यागशास्त्रमनुत्तममिति झ. पाठः ॥ २० ॥ नित्यं मिथ्या विनीतानां क्लेशो दुःखवहो मतः इति झ. पाठः ॥२१॥ सर्वशास्त्रतात्पर्यं त्यागे

सुखत्यागे तपोयोगं सर्वत्यागे समापना ॥ २२
तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः ।
विप्रहाणाय दुःखस्य दुर्गतिस्त्वन्यथा भवेत् ॥ २३
'शेते जरामृत्युभयैर्विमुक्तः
क्षीणे पुण्ये विगते च पापे ।
तपोनिमित्ते विगते च निष्ठे
फले यथाऽऽकाशमलिङ्ग एव ॥' २४
पञ्चज्ञानेन्द्रियाण्युक्त्वा मनःषष्ठानि चेतसि ।
मनःषष्ठानि वक्ष्यामि पञ्चकर्मेन्द्रियाणि तु ॥ २५
हस्तौ कर्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियम् ।
प्रजनानन्दयोः शेफो निसर्गे पायुरिन्द्रियम् ॥ २६
वाक् शब्दविशेषार्थं गतिं पञ्चान्वितां विदुः ।
एवमेकादशैतानि बुद्ध्या तूपहतं मनः ॥ २७
कर्णौ शब्दश्च चित्तं च त्रयः श्रवणसंग्रहे ।
तथा स्पर्शे तथा रूपे तथैव रसगन्धयोः ॥ २८
एवं पञ्चत्रिका ह्येते गुणास्तदुपलब्धये ।
येनायं त्रिविधो भावः पर्यायात्समुपस्थितः ॥ २९
सात्त्विको राजसश्चापि तामसश्चापि ते त्रयः ।
त्रिविधा वेदना येषु प्रसूताः सर्वसाधनाः ॥ ३०
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ।
अकुतश्चित्कुतश्चिद्वा चिन्तितः सात्त्विको गुणः ३१
अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः ॥ ३२
अविवेकस्तथा मोहः प्रमादः स्वप्नतन्द्रिता ।
कथंचिदपि वर्तन्ते विविधास्तामसा गुणाः ॥ ३३
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्त्विको भाव इत्यपेक्षेत तत्तथा ॥ ३४
यत्तु सन्तापसंयुक्तमप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येवं ततस्तदपि चिन्तयेत् ॥ ३५
अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ ३६
श्रोत्रं व्योमाश्रितं भूतं शब्दः श्रोत्रं समाश्रितः ।
नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा ॥ ३७
एवं त्वक्चक्षुषी जिह्वा नासिका चेति पञ्चमी ।
स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत् ॥ ३८
स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति ।
चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत् ॥ ३९
तेषामयुगपद्भाव उच्छेदो नास्ति तामसः ।
आस्थितो युगपद्भावे व्यवहारः स लौकिकः ॥ ४०
इन्द्रियाण्युपसृत्यापि दृष्ट्वा पूर्वं श्रुतागमात् ।
चिन्तयन्ननुपर्येति त्रिभिरेवान्वितो गुणैः ॥ ४१
यत्तमोपहतं चित्तमाशुसंचारमध्रुवम् ।
करोत्युपरमं काये तदाहुस्तामसं सुखम् ॥ ४२
यद्यदागमसंयुक्तं न कृच्छ्रादुपशाम्यति ।
अथ तत्राप्युपादत्ते तमो व्यक्तमिवानृतम् ॥ ४३
एवमेष प्रसङ्ख्यातः स्वकर्मप्रत्ययो गुणः ।
कथंचिद्वर्तते सम्यक्केषांचिद्वा निवर्तते ॥ ४४
'अहमित्येष वै भावो नान्यत्र प्रतितिष्ठति ।
यस्य भावो दृढो नित्यं स वै विद्वांस्तथेतरः ॥४५
देहधर्मस्तथा नित्यं सर्वभूतेषु वै दृढः ।
एतेनैवानुमानेन त्याज्यो धर्मस्तथा ह्यसौ ॥ ४६
ज्ञानेन मुच्यते जन्तुर्धर्मात्मा ज्ञानवान्भवेत् ।
धर्मेण धार्यते लोकः सर्वं धर्मे प्रतिष्ठितम् ॥ ४७
सर्वार्थजनकश्चैव धर्मः सर्वस्य कारणम् ।
सर्वो हि दृश्यते लोके न सर्वार्थः कथंचन ॥ ४८
सर्वत्यागे कृते तस्मात्परमात्मा प्रसीदति ।
व्यक्ताद्व्यक्तमतुलं लोकेषु परिवर्तते ॥' ४९
एतदाहुः समाहारं क्षेत्रमध्यात्मचिन्तकाः ।
स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ॥ ५०
एवं सति क उच्छेदः शाश्वतो वा कथं भवेत् ।

---

एवेत्याह द्रव्येति । द्रव्यादित्यागनिमित्तं यज्ञकर्मादीन्युपदिशन्तीति शेषः । सर्वत्यागनिमित्तं योगमुपदिशन्ति । यतः सा त्यागस्य समापना समाप्तिः पराकाष्ठेत्यर्थः ॥ २२ ॥ बुद्ध्याशु विसृजेन्मनः इति झ. पाठः ॥ २७ ॥ इत्युपेक्षेत तं तथा इति ड. थ. पाठः ॥ ३४ ॥ यत्त्वसन्तोषसंयुक्तं इति झ. पाठः ॥ ३५ ॥ उच्छेदो नास्ति मानसः इति ड. थ. पाठः । तामसे इति झ. पाठः ॥ ४० ॥ इन्द्रियाण्यपि सूक्ष्माणि इति झ. पाठः ॥ ४१ ॥ तामसं गुणं इति ट. ड. पाठः । तामसं बुधाः इति झ. पाठः ॥ ४२ ॥ न कृच्छ्रमनुपश्यति इति झ. पाठः ॥ ४३ ॥

स्वभावाद्वर्तमानेषु सर्वभूतेषु हेतुषु ॥ ५१
यथार्णवगता नद्यो व्यक्तीर्जहति नाम च ।
नतु स्वतां नियच्छन्ति तादृशः सत्वसंक्षयः ॥५२
एवं सति कुतः संज्ञा प्रेत्यभावे पुनर्भवेत् ।
प्रतिसंमिश्रिते जीवे गृह्यमाणे च सर्वतः ॥ ५३
इमां च यो वेद विमोक्षबुद्धि-
मात्मानमन्विच्छति चाप्रमत्तः ।
न लिप्यते कर्मफलैरनिष्टैः
पत्रं बिसस्येव जलेन सिक्तम् ॥ ५४
दृढैर्हि पाशैर्बहुभिर्विमुक्तः
प्रजानिमित्तैरपि दैवतैश्च ।
यदा ह्यसौ सुखदुःखे जहाति
मुक्तस्तदाग्र्यां गतिमेत्यलिङ्गः ॥ ५५
श्रुतिप्रमाणागममङ्गलैश्च
शेते जरामृत्युभयादभीतः ।
क्षीणे च पुण्ये विगते च पापे
ततो निमित्ते च फले विनष्टे ।
अलेपमाकाशमलिङ्गमेव-
मास्थाय पश्यन्ति महत्यसक्ताः ॥ ५६
यथोर्णनाभिः परिवर्तमान-
स्तन्तुक्षये तिष्ठति पात्यमानः ।
तथा विमुक्तः प्रजहाति दुःखं
विध्वंसते लोष्ट इवाद्रिमृच्छन् ॥ ५७
यथा रुरुः शृङ्गमथो पुराणं
हित्वा त्वचं वाऽप्युरगो यथा च ।
विहाय गच्छत्यनवेक्षमाण-
स्तथा विमुक्तो विजहाति दुःखम् ॥ ५८
द्रुमं यथावाऽप्युदके पतन्त-
मुत्सृज्य पक्षी निपतत्यसक्तः ।
तथा ह्यसौ सुखदुःखे विहाय
मुक्तः परार्ध्यां गतिमेत्यलिङ्गः ॥ ५९
'इमान्स्वलोकाननुपश्य सर्वा-
न्व्रजन्यथाऽऽकाशमिवाप्तकामः ।
इमां हि गाथां प्रलपन्यथाऽस्ति
समस्तसङ्कल्पविशेषमुक्तः ।
अहं हि सर्वं किल सर्वभावे
ह्यहं तदन्तर्ह्यहमेव भोक्ता ॥' ६०
अपिच भवति मैथिलेन गीतं
नगरमुपाहितमग्निनाऽभिवीक्ष्य ।
न खलु मम तुषोऽपि दह्यतेऽत्र
स्वयमिदमाह किल स्म भूमिपालः ॥ ६१
भीष्म उवाच ।
इदममृतपदं विदेहराजा
स्वयमिह पञ्चशिखेन भाष्यमाणम् ।
निखिलमभिसमीक्ष्य निश्चितार्थः
परमसुखी विजहार वीतशोकः ॥ ६२
इमं हि यः पठति विमोक्षनिश्चयं
महीपते सततमवेक्षते तथा ।
उपद्रवान्नानुभवत्यदुःखितः
प्रमुच्यते कपिलमिवैत्य मैथिलः ॥ ६३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

---

## त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

भीष्मेण युधिष्ठिरंप्रति जनकोपाख्यानकथनम् ॥ १ ॥

'*युधिष्ठिर उवाच ।
किं कारणं महाप्राज्ञ दह्यमानश्च मैथिलः ।
मिथिलां नेह धर्मात्मा प्राह वीक्ष्य विदाहिताम् ॥ १
भीष्म उवाच ।

नदाश्च तानि यच्छन्ति इति झ. पाठः ॥ ५२ ॥ रुरुर्मृगभेदः ॥ ५८ ॥ परार्ध्यां श्रेष्ठाम् ॥ ५९ ॥ अवेक्षते अर्थतः पर्यालोच- यति । कपिलं कपिलप्रशिष्यं पञ्चशिखम् ॥ ६३ ॥ द्वाविंशत्य- धिकद्विशततमोऽध्यायः ॥ २२२ ॥

* २२३ २२४ एतदध्यायद्वयं ध. पुस्तकएव दृश्यते ।

श्रूयतां नृपशार्दूल यदर्थं दीपिता पुरा ।
वह्निना दीपिता सा तु तन्मे शृणु महामते ॥ २
जनको जनदेवस्तु कर्माण्याध्याय चात्मनि ।
सर्वभावमनुप्राप्य भावेन विचचार सः ॥ ३
यजन्ददंस्तथा जुह्वन्पालयन्पृथिवीमिमाम् ।
अध्यात्मविन्महाप्राज्ञस्तन्मयत्वेन निष्ठितः ॥ ४
स तस्य हृदि संकल्पं ज्ञातुमैच्छत्स्वयं प्रभुः ।
सर्वलोकाधिपस्तत्र द्विजरूपेण संयुतः ॥ ५
मिथिलायां महाबुद्धिर्व्यलीकं किंचिदाचरन् ।
स गृहीत्वा द्विजश्रेष्ठैर्नृपाय प्रतिवेदितः ॥ ६
अपराधं समुद्दिश्य तं राजा प्रत्यभाषत ।
न त्वां ब्राह्मण दण्डेन नियोक्ष्यामि कथंचन ॥ ७
मम राज्याद्विनिर्गच्छ यावत्सीमा भुवो मम ।
तच्छ्रुत्वा ब्राह्मणो गत्वा राजानं प्रत्युवाच ह ॥ ८
करिष्ये वचनं राजन्ब्रवीहि मम जानतः ।
का सीमा तव भूमेस्तु ब्रूहि धर्म ममाद्य वै ॥ ९
तच्छ्रुत्वा मैथिलो राजा लज्जयावनताननः ।
नोवाच वचनं विप्रं तत्वबुद्ध्या समीक्ष्य तत् ॥१०
पुनःपुनश्च तं विप्रश्चोदयामास सत्वरम् ।
ब्रूहि राजेन्द्र गच्छामि तव राज्याद्विवासितः ॥११
ततो नृपो विचार्यैवमाह ब्राह्मणपुङ्गवम् ।
आवासो वा न मेऽस्त्यत्र सर्वा वा पृथिवी मम ।
गच्छ वा तिष्ठ वा ब्रह्मन्निति मे निश्चिता मतिः॥१२
इत्युक्तः स तथा तेन मैथिलेन द्विजोत्तमः ।
अब्रवीत्तं महात्मानं राजानं मन्त्रिभिर्वृतम् ॥ १३
त्वमेवं पद्मनाभस्य नित्यं पक्षपदाहितः ।
अहो सिद्धार्थरूपोऽसि गमिष्ये स्वस्ति तेऽस्तु वै १४
इत्युक्त्वा प्रययौ विप्रस्तज्जिज्ञासुर्द्विजोत्तमान् ।
अदहच्चाग्निना तस्य मिथिलां भगवान्स्वयम् ॥१५
प्रदीप्यमानां मिथिलां दृष्ट्वा राजा न कम्पितः ।
जनैः स परिपृष्टस्तु वाक्यमेतदुवाच ह ॥ १६
अनन्तं बत मे वित्तं भाव्यं मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे किंचन दह्यते ॥ १७
तदस्य भाषमाणस्य श्रुत्वा श्रुत्वा हृदि स्थितम् ।
पुनः संजीवयामास मिथिलां तां द्विजोत्तमः॥१८
आत्मानं दर्शयामास वरं चास्मै ददौ पुनः ।
धर्मे तिष्ठतु सद्भावो बुद्धिस्तेऽर्थे नराधिप ॥ १९
सत्ये तिष्ठस्व निर्विण्णः स्वस्ति तेऽस्तु व्रजाम्यहम् ।
इत्युक्त्वा भगवांश्चैनं तत्रैवान्तरधीयत ।
एतत्ते कथितं राजन्किं भूयः श्रोतुमिच्छसि ॥'२०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

## चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

भीष्मेण युधिष्ठिरंप्रति गार्हस्थ्ये स्थितस्यापि भगवदुपासकस्य ज्ञानिनः पुरुषार्थसिद्धौ दृष्टान्ततया सुवर्चलाश्वेतकेतूपाख्यानकथनम् ॥ १ ॥

'युधिष्ठिर उवाच ।
अस्ति कश्चिद्यदि विभो सदारो नियतो गृहे ।
अतीतसर्वसंसारः सर्वद्वन्द्वविवर्जितः ।
तं मे ब्रूहि महाप्राज्ञ दुर्लभः पुरुषो महान् ॥ १
भीष्म उवाच ।
शृणु राजन्यथावृत्तं यन्मां त्वं पृष्टवानसि ।
इतिहासमिमं शुद्धं संसारभयभेषजम् ॥ २
देवलो नाम विप्रर्षिः सर्वशास्त्रार्थकोविदः ।
क्रियावान्धार्मिको नित्यं देवब्राह्मणपूजकः ॥ ३
सुता सुवर्चला नाम तस्य कल्याणलक्षणा ।
नातिह्रस्वा नातिकृशा नातिदीर्घा यशस्विनी ।
प्रदानसमयं प्राप्ता पिता तस्य ह्यचिन्तयत् ॥ ४
अस्याः पतिः कुतो वेति ब्राह्मणः श्रोत्रियः परः ।
विद्वान्विप्रो ह्यकुटुम्बः प्रियवादी महातपाः ॥५
इत्येवं चिन्तयानं तं रहस्याह सुवर्चला ॥ ६
अन्धाय मां महाप्राज्ञ देह्यनन्धाय वै पितः ।
एवं स्मर सदा विद्वन्ममेदं प्रार्थितं मुने ॥ ७

पितोवाच ।
न शक्यं प्रार्थितं वत्से त्वयाऽद्य प्रतिभाति मे ।
अन्धतानन्धता चेति विकारो मम जायते ॥ ८
उन्मत्तेवाशुभं वाक्यं भाषसे शुभलोचने ॥ ९
सुवर्चलोवाच ।
नाहमुन्मत्तभूताऽद्य बुद्धिपूर्वं ब्रवीमि ते ।
विद्यते चेत्पतिस्तादृक्स मां भरति वेदवित् ॥१०
येभ्यस्त्वं मन्यसे दातुं मामिहानय तान्द्विजान् ।
तादृशं तं पतिं तेषु वरयिष्ये यथातथम् ॥ ११
भीष्म उवाच ।
तथेति चोक्त्वा तां कन्यामृषिः शिष्यानुवाच ह ।
ब्राह्मणान्वेदसंपन्नान्योनिगोत्रविशोधितान् ॥ १२
मातृतः पितृतः शुद्धाञ्शुद्धानाचारतः शुभान् ।
अरोगान्बुद्धिसंपन्नाञ्शीलसत्वगुणान्वितान् ॥१३
असंकीर्णांश्च गोत्रेषु वेदव्रतसमन्वितान् ।
ब्राह्मणान्स्नातकाञ्शीघ्रं मातापितृसमन्वितान् ।
निवेष्टुकामान्कन्यां मे दृष्ट्वाऽऽनयत शिष्यकाः १४
तच्छ्रुत्वा त्वरिताः शिष्या ह्याश्रमेषु ततस्ततः ।
ग्रामेषु च ततो गत्वा ब्राह्मणेभ्यो न्यवेदयन् ॥ १५
ऋषेः प्रभावं मत्वा ते कन्यायाश्च द्विजोत्तमाः ।
अनेकमुनयो राजन्संप्राप्ता देवलाश्रमम् ॥ १६
अनुमान्य यथान्यायं मुनीन्मुनिकुमारकान् ।
अभ्यर्च्य विधिवत्तत्र कन्यामाह पिता महान् ॥१७
एतेऽपि मुनयो वत्से स्वपुत्रैकमता इह ।
वेदवेदाङ्गसंपन्नाः कुलीनाः शीलसंमताः ॥ १८
येऽमी तेषु वरं भद्रे त्वमिच्छसि महाव्रतम् ।
तं कुमारं वृणीष्वाद्य तस्मै दास्याम्यहं शुभे ॥ १९
तथेति चोक्त्वा कल्याणी तप्तहेमनिभा तदा ।
सर्वलक्षणसंपन्ना वाक्यमाह यशस्विनी ॥ २०
विप्राणां समितीर्दृष्ट्वा प्रणिपत्य तपोधनान् ।
यद्यस्ति समितौ विप्रो ह्यन्धोऽनन्धः स मे वरः॥२१
तच्छ्रुत्वा मुनयस्तत्र वीक्षमाणाः परस्परम् ।
नोचुर्विप्रा महाभागाः कन्यां मत्वा ह्यवेदिकां २२
कुत्सयित्वा मुनिं तत्र मनसा मुनिसत्तमाः ।
यथागतं ययुः क्रुद्धा नानादेशनिवासिनः ॥ २३
कन्या च संस्थिता तत्र पितृवेश्मनि भामिनी ॥२४
ततः कदाचिद्ब्रह्मण्यो विद्वान्न्यायविशारदः ।
ऊहापोहविधानज्ञो ब्रह्मचर्यसमन्वितः ॥ २५
वेदविद्वेदतत्वज्ञः क्रियाकल्पविशारदः ।
आत्मतत्वविभागज्ञः पितृमान्गुणसागरः ॥ २६
श्वेतकेतुरिति ख्यातः श्रुत्वा वृत्तान्तमादरात् ।
कन्यार्थं देवलं चापि शीघ्रं तत्रागतोऽभवत् ॥ २७
उद्दालकसुतं दृष्ट्वा श्वेतकेतुं महाव्रतम् ।
यथान्यायं च संपूज्य देवलः प्रत्यभाषत ॥ २८
कन्ये एष महाभागे प्राप्तो ऋषिकुमारकः ।
वरयैनं महाप्राज्ञं वेदवेदाङ्गपारगम् ॥ २९
तच्छ्रुत्वा कुपिता कन्या ऋषिपुत्रमुदैक्षत ।
तां कन्यामाह विप्रर्षिः सोऽहं भद्रे समागतः ॥ ३०
अन्धोऽहमत्र तत्वं हि तथा मन्ये च सर्वदा ।
विशालनयनं विद्धि तथा मां हीनसंशयम् ।
वृणीष्व मां वरारोहे भजे च त्वामनिन्दिते ॥ ३१
येनेदं वीक्षते नित्यं वृणोति स्पृशतेऽथवा ।
घ्रायते वक्ति सततं येनेदं सार्यते पुनः ॥ ३२
येनेदं मन्यते तत्वं येन बुध्यति वा पुनः ।
न चक्षुर्विद्यते ह्येतत्स वै भूतान्ध उच्यते ॥ ३३
यस्मिन्प्रवर्तते चेदं पश्यञ्छृण्वन्स्पृशन्नपि ।
जिघ्रंश्च रसयंस्तद्वद्वर्तते येन चक्षुषा ॥ ३४
तन्मे नास्ति ततो ह्यन्धो वृणु भद्रेऽद्य मामतः ।
लोकदृष्ट्या करोमीह नित्यनैमित्तिकादिकम् ॥ ३५
आत्मदृष्ट्या च तत्सर्वं विलिप्यामि च नित्यशः ।
स्थितोऽहं निर्भरः शान्तः कार्यकारणभावनः ॥३६
अविद्यया तरन्मृत्युं विद्यया तं तथाऽमृतम् ।
यथाप्राप्तं तु संदृश्य वसामीह विमत्सरः ।
क्रीते व्यवसितं भद्रे भर्ताऽहं ते वृणीष्व माम् ॥ ३७
भीष्म उवाच ।
ततः सुवर्चला दृष्ट्वा प्राह तं द्विजसत्तमम् ।
मनसाऽसि वृतो विद्वञ्शेषकर्ता पिता मम ।
वृणीष्व पितरं मह्यमेष वेदविधिक्रमः ॥ ३८
तद्विज्ञाय पिता तस्या देवलो मुनिसत्तमः ।
श्वेतकेतुं च संपूज्य तथैवोद्दालकेन तम् ॥ ३९

मुनीनामग्रतः कन्यां प्रददौ जलपूर्वकम् ।
उदाहरन्ति वै तत्र श्वेतकेतुं निरीक्ष्य तम् ॥ ४०
हृत्पुण्डरीकनिलयः सर्वभूतात्मको हरिः ।
श्वेतकेतुस्वरूपेण स्थितोऽसौ मधुसूदनः ॥ ४१
प्रीयतां माधवो देवः पत्नी चेयं सुता मम ।
प्रतिपादयामि ते कन्यां सहधर्मचरीं शुभाम् ।
इत्युक्त्वा प्रददौ तस्मै देवलो मुनिपुङ्गवः ॥ ४२
प्रतिगृह्य च तां कन्यां श्वेतकेतुर्महायशाः ।
उपयम्य यथान्यायमत्र कृत्वा यथाविधि ॥ ४३
समाप्य तत्रं मुनिभिर्वैवाहिकमनुत्तमम् ।
स गार्हस्थ्ये वसन्धीमान्भार्यां तामिदमब्रवीत् ४४
यानि चोक्तानि वेदेषु तत्सर्वं कुरु शोभने ।
मया सह यथान्यायं सहधर्मचरी मम ॥ ४५
अहमित्येव भावेन स्थितोऽहं त्वं तथैव च ।
तस्मात्कर्माणि कुर्वीथाः कुर्यां ते च ततः परम् ॥४६
न ममेति च भावेन ज्ञानाग्निनिलयेन च ।
अनन्तरं तथा कुर्यास्तानि कर्माणि भस्मसात् ॥४७
एवं त्वया च कर्तव्यं सर्वदा दुर्भगा मया ।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
तस्माल्लोकस्य सिद्ध्यर्थं कर्तव्यं चात्मसिद्धये ॥ ४८
उक्त्वैवं स महाप्राज्ञः सर्वज्ञानैकभाजनः ।
पुत्रानुत्पाद्य तस्यां च यज्ञैः संतर्प्य देवताः ॥ ४९
आत्मयोगपरो नित्यं निर्द्वन्द्वो निष्परिग्रहः ।
भार्यां तां सदृशीं प्राप्य बुद्धिं क्षेत्रज्ञयोरिव ॥ ५०
लोकमन्यमनुप्राप्तौ भार्या भर्ता तथैव च ।
साक्षिभूतौ जगत्यस्मिंश्चरमाणौ मुदाऽन्वितौ ॥ ५१
ततः कदाचिद्भर्तारं श्वेतकेतुं सुवर्चला ।
पप्रच्छ को भवानत्र ब्रूहि मे तद्द्विजोत्तम ॥ ५२
तामाह भगवान्वाग्मी तया ज्ञातो न संशयः ।
द्विजोत्तमेति मामुक्त्वा पुनः कमनुपृच्छसि ॥ ५३
सा तमाह महात्मानं पृच्छामि हृदि शायिनम् ।
तच्छ्रुत्वा प्रत्युवाचैनां स न वक्ष्यति भामिनि ५४
नामगोत्रसमायुक्तमात्मानं मन्यसे यदि ।
तन्मिथ्यागोत्रसद्भावे वर्तते देहबन्धनम् ॥ ५५

अहमित्येष भावोऽत्र त्वयि चापि समाहितः ।
त्वमप्यहमहं सर्वमहमित्येव वर्तते ।
नात्र तत्परमार्थं वै किमर्थमनुपृच्छसि ॥ ५६
ततः प्रहस्य सा हृष्टा भर्तारं धर्मचारिणी ।
उवाच वचनं काले स्मयमाना तदा नृप ॥ ५७
किमनेकप्रकारेण विरोधेन प्रयोजनम् ।
क्रियाकलापैर्ब्रह्मर्षे ज्ञाननष्टोऽसि सर्वदा ।
तन्मे ब्रूहि महाप्राज्ञ यथाऽहं त्वामनुव्रता ॥ ५८
श्वेतकेतुरुवाच ।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
वर्तते तेन लोकोऽयं संकीर्णश्च भविष्यति ॥ ५९
संकीर्णे च तथा धर्मे वर्णः संकरमेति च ।
संकरे च प्रवृत्ते तु मात्स्यो न्यायः प्रवर्तते ॥ ६०
तदनिष्टं हरेर्भद्रे धातुरस्य महात्मनः ।
परमेश्वरसंक्रीडा लोकसृष्टिरियं शुभे ॥ ६१
यावत्पांसव उद्दिष्टास्तावन्त्योऽस्य विभूतयः ।
तावत्यश्चैव मायास्तु तावत्योऽस्याश्च शक्तयः ६२
एवं सुगह्वरे युक्तो यत्र मे तद्भवाभवम् ।
छित्त्वा ज्ञानासिना गच्छेत्स विद्वान्स च मे प्रियः।
सोऽहमेव न सन्देहः प्रतिज्ञा इति तस्य वै ॥ ६३
ये मूढास्ते दुरात्मानो धर्मसंकरकारकाः ।
मर्यादाभेदका नीचा नरके यान्ति जन्तवः ॥ ६४
आसुरीं योनिमापन्ना इति देवानुशासनम् ॥ ६५
भगवत्या तथा लोके रक्षितव्यं न संशयः ।
मर्यादालोकरक्षार्थमेवमस्मि तथा स्थितः ॥ ६६
सुवर्चलोवाच ।
शब्दः कोत्र इति ख्यातस्तथाऽर्थं च महामुने ।
आकृत्या पतयो ब्रूहि लक्षणेन पृथक्पृथक् ॥ ६७
श्वेतकेतुरुवाच ।
व्यत्ययेन च वर्णानां परिवादकृतो हि यः ।
स शब्द इति विज्ञेयस्तन्निपातोऽर्थ उच्यते ॥६८
सुवर्चलोवाच ।
शब्दार्थयोर्हि संबन्धस्त्वनयोरस्ति वा न वा ।
तन्मे ब्रूहि यथातत्त्वं शब्दस्थानेऽर्थ एव चेत् ॥ ६९

श्वेतकेतुरुवाच ।
शब्दार्थयोर्न चैवास्ति संबन्धोऽत्यन्त एव हि ।
पुष्करे च यथा तोयं तथाऽस्मीति च वेत्थ तत् ॥७०
सुवर्चलोवाच ।
अर्थे स्थितिर्हि शब्दस्य नान्यथा च स्थितिर्भवेत् ।
विद्यते चेन्महाप्राज्ञ बिनाऽर्थं ब्रूहि सत्तम ॥ ७१
श्वेतकेतुरुवाच ।
ससंसर्गोऽतिमात्रस्तु वाचकत्वेन वर्तते ।
अस्ति चेद्वर्तते नित्यं विकारोच्चारणेन वै ॥ ७२
सुवर्चलोवाच ।
शब्दस्थानोत्र इत्युक्तस्तथाऽर्थ इति मे कृतः ।
अर्थः स्थितो न तिष्ठेच्च विरूढमिह भाषितम् ७३
श्वेतकेतुरुवाच ।
न विक्लोऽत्र कथितो नाकाशं हि विना जगत् ।
संबन्धस्तत्र नास्त्येव तद्वदित्येष मन्यताम् ॥ ७४
सुवर्चलोवाच ।
सदाऽहंकारशब्दोऽयं व्यक्तमात्मनि संश्रितः ।
न वाचस्तत्र वर्तन्ते इति मिथ्या भविष्यति ॥ ७५
श्वेतकेतुरुवाच ।
अहंशब्दो ह्यहंभावो नात्मभावे शुभव्रते ।
न वर्तन्ते परेऽचिन्त्ये वाचः सगुणलक्षणाः ॥ ७६
सुवर्चलोवाच ।
अहं गात्रैकतः श्यामा भवानपि तथैव च ।
तन्मे ब्रूहि यथान्यायमेवं चेन्मुनिसत्तम ॥ ७७
श्वेतकेतुरुवाच ।
मृण्मये हि घटे भावस्तादृग्भाव इहेष्यते ।
अयं भावः परेऽचिन्त्ये ह्यात्मभावो यथाच तत् ७८
अहं त्वमेतदित्येव परे संकल्पना मया ।
तस्माद्वाचो न वर्तन्त इति नैव विरुध्यते ॥ ७९
तस्माद्वामेन वर्तन्ते मनसा भीरु सर्वशः ।
यथाऽऽकाशगतं विश्वं संसक्तमिव लक्ष्यते ॥८०
संसर्गे सति संबन्धात्तद्विकारं भविष्यति ।
अनाकाशगतं सर्वं विकारे च सदा गतम् ॥ ८१
तद्ब्रह्म परमं शुद्धमनौपम्यं न शक्यते ।
न दृश्यते तथा तच्च दृश्यते च मतिर्मम ॥ ८२
सुवर्चलोवाच ।
निर्विकारं ह्यमूर्तिं च निरयं सर्वगं तथा ।
दृश्यते च वियन्नित्यं दृगात्मा तेन दृश्यते ॥८३
श्वेतकेतुरुवाच ।
त्वचा स्पृशति वै वायुमाकाशस्थं पुनः पुनः ।
तत्स्थं गन्धं तथाघ्राति ज्योतिः पश्यति चक्षुषा ८४
तमोरश्मिगणश्चैव मेघजालं तथैव च ।
वर्षं तारागणं चैव नाकाशं दृश्यते पुनः ॥ ८५
आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् ।
तदर्थे कल्पिता ह्येते तत्सत्यो विष्णुरेव च ।
यानि नामानि गौणानि ह्युपचारात्परात्मनि ॥८६
न चक्षुषा न मनसा न चान्येन परो विभुः ।
चिन्त्यते सूक्ष्मया बुद्ध्या वाचा वक्तुं न शक्यते ।
एतत्प्रपञ्चमखिलं तस्मिन्सर्वं प्रतिष्ठितम् ।
महाघटोऽल्पकश्चैव यथा मह्यां प्रतिष्ठितौ ॥ ८८
न च स्त्री न पुमांश्चैव यथैव न नपुंसकः ।
केवलज्ञानमात्रं तत्तस्मिन्सर्वं प्रतिष्ठितम् ॥ ८९
भूमिसंस्थानयोगेन वस्तुसंस्थानयोगतः ।
रसभेदा यथा तोये प्रकृत्यामात्मनस्तथा ॥ ९०
तद्वाक्यस्मरणान्नित्यं तृप्तिं वारि पिबन्निव ।
प्राप्नोति ज्ञानमखिलं तेन तत्सुखमेधते ॥ ९१
सुवर्चलोवाच ।
अनेन साध्यं किं स्याद्वै शब्देनेति मतिर्मम ।
वेदगम्यः परोऽचिन्त्य इति पौराणिका विदुः ॥९२
निरर्थको यथा लोके तद्वत्स्यादिति मे मतिः ।
निरीक्ष्यैवं यथान्यायं वक्तुमर्हसि मेऽनघ ॥ ९३
श्वेतकेतुरुवाच ।
वेदगम्यं परं शुद्धमिति सत्या परा श्रुतिः ।
व्याहृत्या नैतदित्याह व्युपलिङ्गे च वर्तते ॥ ९४
निरर्थको न चैवास्ति शब्दो लौकिक उत्तमे ।
अनन्वयास्तथा शब्दा निरर्था इति लौकिकैः ॥९५
गृह्यन्ते तद्वदित्येव न वर्तन्ते परात्मनि ।
अगोचरत्वं वचसां युक्तमेवं तथा शुभे ॥ ९६

साधनस्योपदेशाच्च ह्युपायस्य च सूचनात् ।
उपलक्षणयोगेन व्यावृत्त्या च प्रदर्शनात् ।
वेदगम्यः परः शुद्ध इति मे धीयते मतिः ॥ ९७
अध्यात्मध्यानसंभूतमभूतं ''''वत्स्फुटम् ।
ज्ञानं विद्धि शुभाचारे तेन यान्ति परां गतिम् ॥ ९८
यदि मे व्याहृतं गुह्यं श्रुतं न तु त्वया शुभे ।
तथ्यमित्येव वा शुद्धे ज्ञानं ज्ञानविलोचने ॥ ९९
नानारूपवदस्यैवमैश्वर्यं दृश्यते शुभे ।
न वायुस्तं न सूर्यस्तं नाग्निस्तत्तत्परं पदम् ॥ १००
अनेन पूर्णमेतद्धि हृदि भूतमिहेष्यते ।
एतावदात्मविज्ञानमेतावद्यदहं स्मृतम् ।
आवयोर्न च सत्वे वै तस्मादज्ञानबन्धनम् ॥ १०१
भीष्म उवाच ।
एवं सुवर्चला हृष्टा प्रोक्ता भर्त्रा यथार्थवत् ।
परिचर्यमाणा ह्यनिशं तत्वबुद्धिसमन्विता ॥ १०२
भर्ता च तामनुप्रेक्ष्य नित्यनैमित्तिकान्वितः ।
परमात्मनि गोविन्दे वासुदेवे महात्मनि ॥ १०३
समाधाय च कर्माणि तन्मयत्वेन भावितः ।
कालेन महता राजन्प्राप्नोति परमां गतिम् ॥ १०४
एतत्ते कथितं राजन्यस्मात्त्वं परिपृच्छसि ।
गार्हस्थ्यं च समास्थाय गतौ जायापती परम्' १०५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

---

## पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

भीष्मेण युधिष्ठिरंप्रति दान्तलक्षणकथनपूर्वकं दमप्रशंसनम् ॥ १ ॥

युधिष्ठिर उवाच ।
किं कुर्वन्सुखमाप्नोति किं कुर्वन्दुःखमाप्नुयात् ।
किं कुर्वन्निर्भयो लोके सिद्धश्चरति भारत ॥ १
भीष्म उवाच ।
दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः ।
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः ॥ २
नादान्तस्य क्रियासिद्धिर्यथावदुपपद्यते ।
क्रिया तपश्च वेदाश्च दमे सर्वं प्रतिष्ठितम् ॥ ३
दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥ ४
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ॥ ५
तेजो दमेन ध्रियते तत्र तीक्ष्णोऽधिगच्छति ।
अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति ॥ ६
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयंभुवा ॥ ७
आश्रमेषु च सर्वेषु दम एव विशिष्यते ।
'धर्मः संरक्ष्यते तैस्तु यतस्ते धर्मसेतवः ।'
यच्च तेषु फलं धर्म्यं भूयो दान्ते तदुच्यते ॥ ८
तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः ।
अकार्पण्यमसंरम्भः संतोषः श्रद्धानता ॥ ९
अक्रोध आर्जवं नित्यं नातिवादोऽभिमानिता ।
गुरुपूजाऽनसूया च दया भूतेष्वपैशुनम् ॥ १०
जनवादमृषावादस्तुतिनिन्दाविवर्जनम् ।
साधुकामांश्च स्पृहयेन्नायतिं प्रत्ययेषु च ॥ ११
अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः ।
सुवृत्तः शीलसंपन्नः प्रसन्नात्माऽऽत्मवाञ्शुचिः ॥ १२
प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति ।

---

श्रुतिसमाधयो वेदद्रष्टारः ॥ २ ॥ तपश्च सत्यं चेति झ. पाठः ॥ ३ ॥ तीक्ष्णो राजसः । अमित्रान् कामादीन् ॥ ६ ॥ क्रव्याद्भ्यो व्याघ्रादिभ्यो मांसभक्षकेभ्यः ॥ ७ ॥ भूयोऽधिकम् ॥ ८ ॥ समुदेत्यस्मादिति समुदयो हेतुः । अकार्पण्यमदीनत्वम् । असंरम्भोऽभिनिवेशाभावः ॥ ९ ॥ प्रत्ययेषु सुखदुःखाद्यनुभवेषु । आयतिमुत्तरकालम् । न स्पृहयेत् । प्राप्तं सुखादिकं भुञ्जीत नतु कालान्तरीयौ तज्जौ हर्षविषादौ चिन्तनीयावित्यर्थः ॥ ११ ॥ सूपचारः शाठ्यवर्जितादरः ॥ १२ ॥

दुर्गमं सर्वभूतानां प्रापयन्मोदते सुखी ॥ १३
सर्वभूतहिते युक्तो न स्म यो द्विषते जनम् ।
महाह्रद इवाक्षोभ्यः प्राज्ञस्तृप्तः प्रसीदति ॥ १४
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः ।
नमस्यः सर्वभूतानां दान्तो भवति बुद्धिमान् ॥ १५
न हृष्यति महत्यर्थे व्यसने च न शोचति ।
सदाऽपरिमितप्रज्ञः स दान्तो द्विज उच्यते ॥ १६
कर्मभिः श्रुतसंपन्नः सद्भिराचरितः शुचिः ।
सदैव दमसंयुक्तस्तस्य भुङ्क्ते महाफलम् ॥ १७
अनसूयाऽक्षमा शान्तिः संतोषः प्रियवादिता ।
सत्यं दानमनायासो नैष मार्गो दुरात्मनाम् ॥ १८
कामक्रोधौ च लोभश्च परस्येर्ष्या विकत्थना ।
'अतुष्टिरनृतं मोह एष मार्गो दुरात्मनाम् ॥' १९
कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ।
विक्रम्य घोरे तमसि ब्राह्मणः संशितव्रतः ।
कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् ॥ २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

---

## षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

भीष्मेण युधिष्ठिरंप्रति तपउपवासादिनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः ।
अन्नं ब्राह्मणकामाय कथमेतत्पितामह ॥ १
भीष्म उवाच ।
अवेदोक्तव्रतोपेता भुञ्जानाः कार्यकारिणः ।
वेदोक्तेषु च भुञ्जाना व्रतलुब्धा युधिष्ठिर ॥ २
युधिष्ठिर उवाच ।
यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
एतत्तपो महाराज उताहो किं तपो भवेत् ॥ ३
भीष्म उवाच ।
मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
आत्मतन्त्रोपघातस्तु न तपस्तत्सतां मतम् ॥ ४
त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमम् ।
सदोपवासी स भवेद्ब्रह्मचारी सदा भवेत् ॥ ५
मुनिश्च स्यात्सदा विप्रो दैवतं च सदा भवेत् ।
कुटुम्बिको धर्मपरः सदाऽस्वप्नश्च भारत ॥ ६
अमांसादी सदा च स्यात्पवित्री च सदा भवेत् ।
अमृताशी सदा च स्यान्न च स्याद्विषभोजनः ॥ ७
विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः ।
[श्रद्दधानः सदा च स्याद्देवताद्विजपूजकः] ॥ ८
युधिष्ठिर उवाच ।
कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत् ।
विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ॥ ९
भीष्म उवाच ।
अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी स भवेद्यो न भुङ्क्तेऽन्तरा पुनः ॥ १०
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ।
ऋतवादी भवेन्नित्यं ज्ञाननित्यश्च यो नरः ॥ ११
न भक्षयेद्वृथा मांसममांसाशी भवत्यपि ।
दाननित्यः पवित्री स्यादस्वप्नश्च दिवाऽस्वपन् ॥ १२
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा नरः ।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १३

---

दुर्गमं दुष्काले दुर्लभमन्नादि प्रापयन् दयावानित्यर्थः ॥ १३ ॥ दान्तो भवति धर्मवित् इति ध॰ पाठः ॥ १५ ॥ दम्भो दर्पश्च मानश्च नैष मार्गो महात्मनाम् इति ट. ड. पाठः ॥ १९ ॥ पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

द्विजातयस्त्रैवर्णिकाः । हविर्देवताशेषम् ॥ १ ॥ भुञ्जाना अभोज्यं मांसादीति शेषः । कार्यकारिणः कामाचारवन्तः । इहैव पतिता इत्यर्थः । व्रतलुब्धा दीक्षोक्तफलानुरागिणः स्वर्गं प्राप्य पतिष्यन्तीत्यर्थः ॥ २ ॥ आत्मतन्त्रमात्मविद्या तस्या उपघातो विघ्नः ॥ ४ ॥ भूतभयंकरकर्मसंन्यासस्त्यागः । सन्नतिर्भूताराधनम् ॥ ५ ॥ अमृताशी सदा च स्याद्देवतातिथिपूजकः इति झ. ड. पाठः ॥ ७ ॥ अतिथिवैश्वदेवान्ते ग्रासः ॥ ८ ॥ वृथा देवपितृशेषं विना ॥ १२ ॥

अभुक्तवस्तु भुञ्जानो विषमश्नाति वै द्विजः ।
अदत्त्वा योऽतिथिभ्योऽन्नं न भुङ्क्ते सोतिथिप्रियः ।
'अभुक्त्वा देवतेभ्यश्च यो न भुङ्क्ते सदैवतम्' १४
देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह ।
अवशिष्टं तु योऽश्नाति तमाहुर्विघसाशिनम्॥ १५
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणा सह ।
उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः॥ १६
देवताभिश्च ये सार्धं पितृभ्यश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ १७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

## सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

भीष्मेण युधिष्ठिरंप्रति भगवत्स्वरूपनिरूपकमुनिसनत्कुमारसंवादानुवादः ॥ १ ॥

'युधिष्ठिर उवाच[*] ।
केचिदाहुर्द्विधा लोके त्रिधा राजन्ननेकधा ।
प्रत्ययो न चान्यच्च दृश्यते ब्रह्म नैव तत् ॥ १
नाविधानि शास्त्राणि उक्ताश्चैव पृथग्विधाः ।
मधिष्ठाय तिष्ठामि तन्मे ब्रूहि पितामह ॥ २
भीष्म उवाच ।
स्वे युक्ता महात्मानः शास्त्रेषु प्रभविष्णवः ।
तन्ते पण्डिता लोके को विद्वान्कश्च पण्डितः ॥ ३
पर्वेषां मज्ञाय यथारुचि तथा भवेत् ।
असि पुराभूतमितिहासं पुरातनम् ॥ ४
महा संयुक्तमृषीणां भावितात्मनाम् ।
हिमवत् आसीना ऋषयः संशितव्रताः ॥ ५
षण्णां ताने सहस्राणि ऋषीणां गणमाहितम् ।
तत्र केचिद्भुवं विश्वं सेश्वरं तु निरीश्वरम् ॥ ६
प्राकृतं कारणं नास्ति सर्वं नैवमिदं जगत् ।
अनेन चापरे विप्राः स्वभावं कर्म चापरे ॥ ७
पौरुषं कर्म दैवं च यत्स्वभावादिरेव तम् ।
नानाहेतुशतैर्युक्ता नानाशास्त्रप्रवर्तकाः ॥ ८
स्वभावाद्ब्राह्मणा राजञ्जिगीषन्तः परस्परम् ।
ततस्तु मूलमुद्भूतं वादिप्रत्यर्थिसंयुतम् ॥ ९
पात्रदण्डविघातं च वल्कलाजिनवाससाम् ।
एके मन्युसमापन्नास्ततः शान्ता द्विजोत्तमाः ॥ १०
वसिष्ठमब्रुवन्सर्वे त्वं नो ब्रूहि सनातनम् ।
नाहं जानामि विप्रेन्द्राः प्रत्युवाच स तान्प्रभुः॥ ११
ते सर्वे सहिता विप्रा नारदं ऋषिमब्रुवन् ।
त्वं नो ब्रूहि महाभाग तत्वविच्च भवानसि ॥ १२
नाहं द्विजा विजानामि क्व हि गच्छाम संगताः ।
इति तानाह भगवांस्ततः प्राह च स द्विजान् ॥ १३
को विद्वानिह लोकेऽस्मिन्नमोहोऽमृतमद्भुतम् ।
तच्च ते शुश्रुवुर्वाक्यं ब्राह्मणा ह्यशरीरिणः ॥ १४
सनद्धाम द्विजा गत्वा पृच्छध्वं स च वक्ष्यति ॥ १५
तमाह कश्चिद्द्विजवर्यसत्तमो
विभाण्डको मण्डितवेदराशिः ।
कस्त्वं भवानर्थविभेदमध्ये
न दृश्यसे वाक्यमुदीरयंश्च ॥ १६
अथाहेदं तं भगवान्सनन्तं
महामुने विद्धि मां पण्डितोऽसि
ऋषिं पुराणं सततैकरूपं
यमक्षयं वेदविदो वदन्ति ॥ १७
पुनस्तमाहेदमसौ महात्मा
स्वरूपसंस्थं वद आह पार्थ ।

अभुक्तवस्तु नाश्नानः सततं यस्तु वैद्विजः । अभोजनेन तेनास्य जितः स्वर्गो भवत्युतेति झ. पाठः ॥ १४ ॥

षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

[*] २२७, २२८, एतदध्यायद्वयं ध. पुस्तक एव दृश्यते ।

त्वमेकोऽस्यद्दषिपुङ्गवाद्य
नसत्स्वरूपमथवा पुनः किम् ॥ १८
अथाह गम्भीरतरानुवादं
वाक्यं महात्मा ह्यशरीर आदिः ।
न ते मुने श्रोत्रमुखेऽपि चास्यं
न पादहस्तौ प्रपदात्मके न ॥ १९
ब्रुवन्मुनीन्सत्यमथो निरीक्ष्य
स्वमाह विद्वान्मनसा निगम्य ।
ऋषे कथं वाक्यमिदं ब्रवीषि
न चास्य मन्ता न च विद्यते चेत् ॥ २०
न शुश्रुवुस्ततस्तत्तु प्रतिवाक्यं द्विजोत्तमाः ।
निरीक्षमाणा आकाशं प्रहसन्तस्ततस्ततः ॥ २१
आश्चर्यमिति मत्वा ते ययुर्हैमं महागिरिम् ।
सनत्कुमारसङ्काशं सगणा मुनिसत्तमाः ॥ २२
तं पर्वतं समारुह्य ददृशुर्ध्यानमाश्रिताः ।
कुमारं देवमर्हन्तं वेदपाराविवर्जितम् ॥ २३
ततः संवत्सरे पूर्णे प्रकृतिस्थं महामुनिम् ।
सनत्कुमारं राजेन्द्र प्रणिपत्य द्विजाः स्थिताः ॥ २४
आगतान्भगवानाह ज्ञाननिर्धूतकल्मषः ।
ज्ञातं मया मुनिगणा वाक्यं तदशरीरिणः ।
कार्यमद्य यथाकामं पृच्छध्वं मुनिपुङ्गवाः ॥ २५
तमब्रुवन्प्राञ्जलयो महामुनिं
द्विजोत्तमं ज्ञाननिधिं सुनिर्मलम् ।
कथं वयं ज्ञाननिधिं वरेण्यं
यक्ष्यामहे विश्वरूपं कुमार ॥ २६
प्रसीद नो भगवञ्ज्ञानलेशं
मधुप्रयाताय सुखाय सन्तः ।
यत्तत्पदं विश्वरूपं महामुने
तत्र ब्रूहि किं तत्र महानुभाव ॥ २७
स तैर्वियुक्तो भगवान्महात्मा
यः सङ्गवान्सत्यवित्तच्छृणुष्व ।
अनेक साहस्रकलेषु चैव
प्रसन्नधातुं च शुभाज्ञया सत् ॥ २८
यथाह पूर्वं युष्मासु ह्यशरीरी द्विजोत्तमाः ।
तथैव वाक्यं तत्सत्यमजानन्तश्च कीर्तितम् ॥ २९
शृणुध्वं परमं कारणमस्ति कथमवगम्यते ।
अहन्यहनि पाकविशेषो दृश्यते तेन मिश्रं सर्वं
मिश्रयते । यथा मण्डली दृशि सर्वेषामस्ति नि-
दर्शनम् । अस्ति चक्षुष्मतामस्ति ज्ञाने स्वरूपं
पश्यति । यथा दर्पणान्तं निदर्शनम् ॥ ३०
स एव सर्वं विद्वान्न बिभेति न गच्छति कुत्राहं
कस्य नाहं केन केनेत्यवर्तमानो विजानाति ॥ ३१
स युगतो व्यापी । स पृथक्स्थितः । तदप-
रमार्थः ॥ ३२
यथा वायुरेकः सन्बहुधेरितः । आश्रयविशेषो
वा यस्याश्रयं यथावद्द्विजे मृगे व्याघ्रे च मनुजे
वेणुसंश्रयो भिद्यते वायुरथैकः । आत्मा तथा
ऽसौ परमात्माऽसावन्य इव भाति ॥ ३३
एवमात्मा स एव गच्छति सर्वमात्मा पश्यञ्शृ-
णोति न च घ्राति न भाषते ॥ ३४
चक्रेऽस्य तं महात्मानं परितो दश रश्मयः ।
विनिष्क्रम्य यथा सूर्यमनुगच्छन्ति तं प्रभुम् ॥ ३५
दिनेदिनेऽस्तमभ्येति पुनरुद्गच्छते दिशः ।
तावुभौ न रवौ चास्तां तथा वित्त शरीरिणम् ॥ ३६
पतिते वित्त विप्रेन्द्रं भक्षणे चरणे परः ।
ऊर्ध्वमेकस्तथाऽधस्तादेकस्तिष्ठति चापरः ॥ ३७
हिरण्यसदनं ज्ञेयं समेत्य परमं पदम् ।
आत्मना ह्यात्मदीपं तमात्मनि ह्यात्मपूरुषम् ॥ ३८
संचितं संचितं पूर्वं भ्रमरो वर्तते भ्रमम् ।
योऽभिमानीव जानाति न मुह्यति न हीयते ॥ ३९
न चक्षुषा पश्यति कश्चनैनं
हृदा मनीषा पश्यति रूपमस्य ।
न शुक्लं न कृष्णं परमार्थभावं
गुहाशयं ज्ञानदेवीकरस्थम् ॥ ४०
ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः ।
इज्यते यस्तु मन्त्रेण यजमानो द्विजोत्तमः ॥ ४१
नैव धर्मी न चाधर्मी द्वन्द्वातीतो विमत्सरः ।
ज्ञानतृप्तः सुखं शेते ह्यमृतात्मा न संशयः ॥ ४२

एवमेष जगत्सृष्टिं कुरुते मायया प्रभुः ।
न जानाति विमूढात्मा कारणं चात्मनो ह्यसौ॥४३
ध्याता द्रष्टा तथा मन्ता बोद्धा दृष्टान्स एव सः।
को विद्वान्परमात्मानमनन्तं लोकभावनम् ।
यत्तु शक्यं मया प्रोक्तं गच्छध्वं मुनिपुङ्गवाः॥४४
भीष्म उवाच ।
एवं प्रणम्य विप्रेन्द्रा ज्ञानसागरसंभवम् ।
सनत्कुमारं संदृष्ट्वा जग्मुस्ते रुचिरं पुनः ॥ ४५
तस्मात्त्वमपि कौन्तेय ज्ञानयोगपरो भव ।
ज्ञानमेवं महाराज सर्वदुःखविनाशनम् ॥ ४६
इदं महादुःखसमाकराणां
नृणां परित्राणविनिर्मितं पुरा ।
पुराणपुंसा ऋषिणा महात्मना
महामुनीनां प्रवरेण तद्भुवम् ॥' ४७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

## अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

– भीष्मेण युधिष्ठिरंप्रति तपश्शब्दस्य मतभेदेन नानार्थकत्वकथनपूर्वकं स्वमते तस्य ज्ञानार्थकत्वाभिधानम् ॥ १ ॥ ज्ञानस्य मोक्षसाधनत्वे दृष्टान्ततया सुवर्चलाचरित्रकथनम् ॥ २ ॥

युधिष्ठिर उवाच ।
...दं तप इत्याहुः किं तपः संप्रकीर्तितम् ।
...वासमथान्यत्तु वेदाचारमथो नु किम् ।
...त्वं तपो महाप्राज्ञ तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
...क्षमासोपवासादीन्मन्यन्ते वै तपोधनाः ।
...व्रतादीनि ...प अपरे वेदपारगाः ।
...दपारा... ...न्ये चाहुस्तत्त्वमथापरे ॥ २
यथा... ...आचारस्तपः सर्वं व्रतं गताः ।
...त्मावेद्याविधानं यत्तत्तपः परिकीर्तितम् ॥ ३
...गस्तपस्तथा शान्तिस्तप इन्द्रियनिग्रहः ।
...ब्रह्मचर्यं तपः प्रोक्तमाहुरेवं द्विजातयः ॥ ४
...दोपवासो यो विद्वान्ब्रह्मचारी सदा भवेत् ॥५
...मुनिश्च सदा धीमान्विघसाशी विमत्सरः ।
...तस्त्वनन्तमप्याहुर्यो नित्यमतिथिप्रियः ॥ ६
...न्तराशीस्ततो नित्यमुपवासी महाव्रतः ।
ऋतुगामी तथा प्रोक्तो विघसाशी स्मृतो बुधैः ॥७
भृत्यशेषं तु यो भुङ्क्ते यज्ञशेषं तथाऽमृतम् ।
एवं नानार्थसंयोगं तपः शश्वदुदाहृतम् ॥ ८
केषां लोका ह्यपर्यन्ताः सर्वे सत्यव्रते स्थिताः ।
येऽपि कर्ममयं प्राहुस्ते द्विजा ब्राह्मणाः स्मृताः ।
रमन्ते दिव्यभोगैश्च पूजिता ह्यप्सरोगणैः ॥ ९
ज्ञानात्मकं तपश्शब्दं ये वदन्ति विनिश्चिताः ।
ते ह्यन्तराऽऽत्मसद्भावं प्रपन्ना नृपसत्तम ॥ १०
एतत्ते नृपशार्दूल प्रोक्तं यत्पृष्टवानसि ।
यथा वस्तुनि संज्ञानि विविधानि भवन्त्युत ॥११
युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ राजाधीना नृपाः पुनः ।
अन्यानि च सहस्राणि नामानि विविधानि च १२
प्रतियोगीनि वै तेषां छन्नान्यस्तमितानि च ।
दृढं सर्वं प्राकृतकमिदं सर्वत्र पश्य वै ॥ १३
तस्माद्यथागतं राजन्यथारुचि नृणां भवेत् ।
अस्मिन्नर्थे पुरावृत्तं शृणु राजन्युधिष्ठिर ॥ १४
ब्राह्मणानां समूहे तु यदुवाच सुवर्चला ।
देवलस्य सुता विद्वन्सर्वलक्षणशोभिता ॥ १५
कन्या सुवर्चला नाम योगभावितचेतना ।
हेतुना केन जाता सा निर्द्वन्द्वा नष्टसंशया ॥ १६
साऽब्रवीत्पितरं विप्रं वरान्वेषणतत्परा ॥ १७
अन्धाय मां महाप्राज्ञ देहि वीक्ष्य सुलोचनम् ।
एवं स्म च पितः शश्वन्मयेदं.......मुने ॥ १८
पितोवाच ।
न शक्यं प्रार्थितुं वत्से त्वयाऽद्य प्रतिभाति मे ।
अन्धताऽनन्धता चेति विचारो मम जायते ।
उन्मत्तेव सुते वाक्यं भाषसे पृथुलोचने ॥ १९

कन्योवाच ।
नाहमुन्मत्तभूताऽद्य बुद्धिपूर्वं ब्रवीमि ते ।
विद्धि वैतादृशं लोके स मां भजति वेदवित् ॥ २०
यान्यांस्त्वं मन्यसे दातुं मां द्विजोत्तम तानिह ।
आनयान्यान्महाभाग ह्यहं द्रक्ष्यामि तेषु तम् ॥२१
तथेति चोक्त्वा तां विप्रः प्रेषयामास शिष्यकान् ।
ऋषेः प्रभावं दृष्ट्वा ते कन्यायाश्च द्विजोत्तमाः ।
अनेकमुनयो राजन्संप्राप्ता देवलाश्रमम् ॥ २२
तानागतानथाभ्यर्च्य कन्यामाह पिता महान् ।
यदीच्छसि वरं भद्रे तं विप्रं वरय स्वयम् ॥ २३
तथेचि चोक्त्वा कल्याणी तप्तहेमनिभानना ।
करसंमितमध्याङ्गी वाक्यमाह तपोधनाः ॥ २४
यद्यस्ति संमतो विप्रो ह्यन्धोऽनन्धः स मे वरः ।
नोचुर्विप्रा महाभागां प्रतिवाक्यं ययुश्च ते ॥ २५
कन्या च तिष्ठतामत्र पितुर्वेश्मनि भारत ॥ २६
श्वेतकेतुः कहालस्य श्यालः परमधर्मवित् ।
श्रुत्वा ब्रह्म तदागम्य कन्यामाह महीपते ॥ २७
सोहं भद्रे समावृत्तस्त्वयोक्तो यः पुरा द्विजः ।
विशालनयनं विद्धि मामन्धोऽहं वृणीष्व माम् २८
सुवर्चलोवाच ।
कथं विशालनेत्रोऽसि कथं वा त्वमलोचनः ।
ब्रूहि पश्चादहं विद्वन्परीक्षे त्वां द्विजोत्तम ॥ २९
द्विज उवाच ।
शब्दे स्पर्शे तथा रूपे रसे गन्धे सहेतुकम् ।
न मे प्रवर्तते चेतो न प्रत्यक्षं हि तेषु मे ।
अलोचनोऽहं तस्माद्धि न गतिर्विद्यते यतः ॥३
येन पश्यति सुश्रोणि भाषते स्पृशते पुनः ।
भुज्यते घ्रायते नित्यं शृणोति मनुते तथा ॥३१
तच्चक्षुर्विद्यते मह्यं येन पश्यति वै स्फुटम् ।
सुलोचनोऽहं भद्रे वै पृच्छ वा किं वदामि ते ।
सर्वमस्मिन्न मे विद्या विद्वान्हि परमार्थतः ॥
सा विशुद्धा ततो भूत्वा श्वेतकेतुं महामुनिम् ।
प्रणम्य पूजयामास तां भार्यां स च लब्धवान् ॥
वैराग्यसंयुता कन्या तादृशं पतिमुत्तमम् ।
प्राप्ता राजन्महाप्राज्ञ तस्मादर्थः पृथक्पृथक् ॥ ३
एतत्ते कथितं राजन्किं भूयः श्रोतुमिच्छसि ॥'३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

## एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

भीष्मेण युधिष्ठिरंप्रति ज्ञानस्य श्रेयःसाधनत्वज्ञानोपायादिप्रतिपादकेन्द्रप्रह्लादसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
यदिदं कर्म लोकेऽस्मिञ्शुभं वा यदि वाऽशुभम् ।
पुरुषं योजयत्येव फलयोगेन भारत ॥ १
कर्ता स्वित्तस्य पुरुष उताहो नेति संशयः ।
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ॥ ३
असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम् ।
अस्तब्धमनहंकारं सत्वस्थं संयतेन्द्रियम् ॥
तुल्यनिन्दास्तुतिं दान्तं शून्यागारसमाकृतिम् ।
चराचराणां भूतानां विदितप्रभवाप्ययम् ॥
अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च ।
काञ्चने वाऽथ लोष्ठे वा उभयोः समदर्शनम् ॥ ६
आत्मनि श्रेयसि ज्ञाने धीरं निश्चितनिश्चयम् ।
परावरज्ञं भूतानां सर्वज्ञं सर्वदर्शनम् ॥ ७
'अव्यक्तात्मनि गोविन्दे वासुदेवे महात्मनि ।
हृदयेन समाविष्टं सर्वभावप्रियंकरम् ॥ ८

श्रोतुं त्वत्तो वदस्व मे इति ट. थ. पाठः ॥ २ ॥ असक्तं फलेच्छारहितम् । संयमे रतं इति ट. थ. पाठः । समये रतं इति झ. पाठः ॥ ४ ॥ शून्यागारनिवासिनं इति झ. पाठः ॥ ५ ॥ आत्मनि प्रतीचि । श्रेयस्यानन्दरूपे । ज्ञाने चिन्मात्रे । धीरं कुतर्कानभिभूतम् । सर्वज्ञं समदर्शनमिति झ. पाठः ॥ ७ ॥

भक्तं भागवतं नित्यं नारायणपरायणम् ।
ध्यायन्तं परमात्मानं हिरण्यकशिपोः सुतम् ॥' ९
शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम् ।
बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ॥ १०
यैः कैश्चित्संमतो लोके गुणैः स्यात्पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ॥ ११
अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह ।
आत्मानं मन्यमानः सञ्श्रेयः किमिह मन्यसे ॥१२
द्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रेया विहीनः प्रह्लाद शोचितव्ये न शोचसि ॥१३
ज्ञालाभेन दैतेय उताहो धृतिमत्तया ।
ह्लाद स्वस्थरूपोऽसि पश्यन्व्यसनमात्मनः ॥१४
ष्म उवाच ।
इति संचोदितस्तेन धीरो निश्चितनिश्चयः ।
च श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् ॥१५
ह्लाद उवाच ।
वृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते ।
स्य स्तम्भो भवेद्बाल्यान्नास्ति स्तंभोऽनुपश्यतः ॥१६
हनं सर्वभूतानां ध्येयं नित्यं सनातनम् ।
निग्रहमनौपम्यं सर्वाकारं परात्परम् ॥ १७
आवरणसंभूतं तस्मादेतत्प्रवर्तते ।
मया अपि संपश्य नानालक्षणलक्षिताः ॥ १८
वै पाति जगत्स्रष्टा विष्णुरित्यभिशब्दितः ।
दर्शेति संप्राप्ते ………… सुरेश्वरः ॥' १९
भावात्संप्रवर्तन्ते निवर्तन्ते तथैव च ।
र्वे भावास्तथा भावाः पुरुषार्थो न विद्यते ॥ २०
रुषार्थस्य चाभावे नास्ति कश्चित्स्वकारकः ।
स्वयं च कुर्वतस्तस्य जातु मानो भवेदिह ॥ २१
स्तु कर्तारमात्मानं मन्यते साध्वसाधु वा ।
स्य दोषवती प्रज्ञा अतत्त्वज्ञेति मे मतिः ॥२२

यदि स्यात्पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम् ।
आरम्भास्तस्य सिद्ध्येयुर्न तु जातु पराभवेत् ॥२३
अनिष्टस्य हि निर्वृत्तिरनिवृत्तिः प्रियस्य च ।
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ॥ २४
अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च ।
अप्रयत्नेन पश्यामः केषांचित्तत्स्वभावतः ॥ २५
प्रतिरूपतराः केचिद्दृश्यन्ते बुद्धिमत्तराः ।
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमं २६
स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा ।
शुभाशुभास्तदा तत्र तस्य किं मानकारणम् ॥ २७
स्वभावादेव तत्सर्वमिति मे निश्चिता मतिः ।
आत्मप्रतिष्ठा प्रज्ञा वा मम नास्ति ततोन्यथा ॥ २८
कर्मजं त्विह मन्यन्ते फलयोगं शुभाशुभम् ।
कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु ॥ २९
यथा वेदयते कश्चिदोदनं पायसं ह्यदन् ।
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् ॥ ३०
विकारानेव यो वेद न वेद प्रकृतिं पराम् ।
तस्य स्तंभोऽभवेद्बाल्यान्नास्ति स्तंभोऽनुपश्यतः ३१
स्वभावभाविनो भावान्सर्वानेवेह निश्चये ।
बुध्यमानस्य दर्पो वा मानो वा किं करिष्यति ॥३२
वेद धर्मविधिं कृत्स्नं भूतानां चाप्यनित्यताम् ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ ३३
निर्ममो निरहंकारो निरीहो मुक्तबन्धनः ।
स्वस्थो व्यपेतः पश्यामि भूतानां प्रभवाप्ययौ ॥३४
कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः ।
नायासो विद्यते शक्र पश्यतो योगवित्तया ॥ ३५
प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे ।
द्वेष्टारं च न पश्यामि यो ममाद्य विरुध्यति ॥ ३६
नोर्ध्वं नावाङ्न तिर्यक्च न क्वचिच्छक्र कामये ।
न हि ज्ञेये न विज्ञाने नाज्ञाने विद्यतेऽन्तरम् ॥ ३७

वति त्वयि । अनपगान् स्थिरान् ॥ ११ ॥ बालजनैः समा रागद्वेषादिराहित्यात् । मन्यमानो जानन्नात्मज्ञानार्थं किं श्रेयः शस्ततरं साधनम् ॥ १२ ॥ तदुक्तमनुवर्णयन् इति ध. पाठः ॥ १५ ॥ नास्ति काचित्स्वका रतिः इति थ. पाठः ॥ २१ ॥ अनिष्टस्याप्यनिर्वृत्तिमिष्टनिर्वृत्तिमेव च इति ट. थ. पाठः ॥२५॥

कश्चिदोदनं वायसो ह्यदन्निति झ. पाठः ॥ ३० ॥ बुध्यमानस्य वै दर्पं मनो वा इति ध. पाठः ॥ ३२ ॥ पश्यतो लोकविद्यया इति ध. पाठः । लोकमव्ययं इति झ. पाठः ॥ ३५ ॥ यो मामद्य ममायते इति झ. पाठः ॥ ३६ ॥ न ज्ञाने कर्म विद्यते इति झ. पाठः ॥ ३७ ॥

शक्र उवाच ।
येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते ।
प्रब्रूहि तमुपायं मे सम्यक्प्रह्लाद पृच्छते ॥ ३८
प्रह्लाद उवाच ।
आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया ।
गुरुशुश्रूषया शक्र पुरुषो लभते महत् ॥ ३९
स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः ।
स्वभावादेव तत्सर्वं यत्किंचिदनुपश्यति ॥ ४०
'नैवान्तरं विजानाति श्रुत्वा गुरुमुखात्ततः ।
वाक्यं वाक्यार्थविज्ञानमालोक्य मनसा यतिः ४१
विवेकप्रत्ययापन्नमात्मानमनुपश्यति ।
विरज्यति ततो भीत्या परमेश्वरमृच्छति ॥ ४२
त्रातारं सर्वदुःखानां तत्सुखान्वेषणं ततः ।
करोति सद्भिः संसर्गमलं सन्तः सुखाय वै ॥ ४३
सतां सकाशादाज्ञाय मार्गं लक्षणवत्तया ।
सर्वसङ्गविनिर्मुक्तः परमात्मानमृच्छति ॥ ४४
विषयेच्छाकृतो धर्मं सरजस्को भयावहः ।
धर्महानिमवाप्नोति क्रमात्तेन नरः पुनः ॥ ४५
भक्तिहीनो भवत्येव परमात्मनि चाच्युत ।
वाचके वाऽपि च स्थानं न हन्त्येव विमोचितः ४६
साक्ष्यें चास्य रतिर्नित्यं संसारे च रतिर्भवेत् ।
तस्य नित्यमविज्ञानादात्मा चैव न सिद्ध्यति ॥४७
उन्मत्तवृत्तिर्भवति क्रमादेवं प्रवर्तते ।
आशौचं वर्धते नित्यं न शाम्यति कथंचन ॥४८
विषये चान्वितस्यास्य मोक्षवाञ्छा न जायते ।
हेत्वाभासेषु संलीनः स्तौति वैषयिकान्गुणान् ४९
न शास्त्राणि शृणोत्येव मानदर्पसमन्वितः ।
स्वतःसिद्धं न भोगस्तं स्वतःसिद्धं न वेत्ति च ।
चिद्रूपधारणं चैव परस्रष्टिमथाव्ययम् ॥ ५०
नानायोनिगतस्तेन भ्राम्यमाणः स्वकर्मभिः ।
तीर्णपारं न जानाति महामोहसमन्वितः ।
आचार्यसंश्रयाद्विद्याद्विनयं समुपागतः ॥ ५१
अनुकूलेषु धर्मेषु चिनोत्येनं ततस्ततः ।
आचार्य इति च ख्यातस्तेनासौ बलवृत्रहन् ॥ ५२
नियतेनैव सद्भावस्तेन जन्मान्तरादिषु ।
कर्मसञ्चयतूलौघः क्षिप्यते ज्ञानवायुना ॥ ५३
एवं युक्तसमाचारः संसारविनिवर्तकः ।
अनुकूलवृत्तिं सततं छिनत्त्येव भृगुर्यथा ॥ ५४
येन चायं समापन्नं वैतृष्ण्यं नाधिगच्छति ।
अभ्यन्तरः स्मृतः शक्र तत्साम्यं परिवर्जयेत् ॥ ५५
प्रथमं तत्कृतेनैव कर्मणा परिमृच्छति ।
द्वितीयं स्वप्नयोगं च कर्मणा परिगच्छति ॥ ५
एतैरक्षैः समापन्नः प्रत्यक्षोऽसौ समास्थितः ।
सुषुप्त्याख्यस्तुरीयोऽसौ न च ह्यावरणान्वितः ॥ ५
लोकवृत्त्या तमीशानं यजञ्जुह्वन्यमी भवेत् ।
आत्मन्यायासयोगेन निष्क्रियं स परात्परम् ॥
आयामे तां विजानाति मायैषा परमात्मनः
प्रातिभासिकसामान्याद्बुद्धेर्या संविदात्मिका ।
स्फुलिङ्गसत्त्वसद्दशादग्निभावो यथा भवेत् ।
शिशूनामेवमज्ञानामात्मभावोऽन्यथा स्मृतः ॥
साध्येऽप्यवस्तुभूताख्ये मित्रामित्रादयः कुतः
तदभावे तु शोकाद्या न वर्तन्ते सुरेश्वर ॥
एवं बुध्यस्व भगवन्समबुद्धिं समन्वियात् ।
उपायमेतदाख्यातं मा वक्रं गच्छ देवप ॥ ६
ज्ञानेन पश्यते कर्म ज्ञानिनां न प्रवर्तकम् ।
यावदारब्धमस्येह तावन्नैवोपशाम्यति ॥
तदन्ते तं प्रयात्येव न विद्वानिति मे मतिः ।
यदस्य वाचकं वक्ष्ये संसारे तद्भवेत्तदा ॥
तेनतेन च भावेन अपायं तत्र पश्यति ।
स्थानभेदेषु वागेषा तालुसंस्था यथा तथा ॥ ६
तद्वद्बुद्धिगता ह्यर्था बुद्धिमात्मगतः सदा ॥ ६

समस्तसंकल्पविशेषमुक्तं
　　परं पराणां परमं महात्मा ।
त्र्यन्तविद्भिः परिगीयतेऽसौ
　　विष्णुर्विभुर्वास्ति गुणो न नित्यम् ॥ ६९
वर्णेषु लोकेषु विशेषणेषु
　　स वासुदेवो वसनान्महात्मा ।

एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

प्रज्ञा ज्ञानम् । शान्तिस्तत्फलम् ॥ ३८ ॥ महत् मोक्षम् ॥३९॥

गुणानुरूपं स च कर्मरूपं
ददाति सर्वस्य समस्तरूपम् ।
न संदृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ॥ ६८
भक्त्या च धृत्या च समाहितात्मा
ज्ञानस्वरूपं परिपश्यतीह ॥ ६९
वदन्ति तन्मे भगवान्ददौ स
स एव शेषं मघवान्महात्मा ।
एवं ममोपायमवैहि शक्र
तस्माच्छोको नास्ति मह्यं सदैव ॥' ७०
भीष्म उवाच ।
इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत् ।
प्रीतिमांश्च तदा राजंस्तद्वाक्यं प्रत्यपूजयत् ॥ ७१
स तदाभ्यर्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः ।
असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम् ॥ ७२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

---

## त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

इन्द्रबलिसंवादः ॥ १ ॥ इन्द्रावमानितेन बलिना तंप्रति गर्वभञ्जकवचनोपन्यासः ॥ २ ॥

युधिष्ठिर उवाच ।
यया बुद्ध्या महीपालो भ्रष्टश्रीर्विचरेन्महीम् ।
कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवादं बलेर्वैरोचनस्य च ॥ २
पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः ।
सर्वानेवासुराञ्जित्वा बलिं पप्रच्छ वासवः ॥ ३
यस्य स्म ददतो वित्तं न कदाचन हीयते ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ४
स वायुर्वरुणश्चैव स रविः स च चन्द्रमाः ।
सोऽग्निस्तपति भूतानि जलं च स भवत्युत ॥ ५
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ।
स एव ह्यस्तमयते स स्म विद्योतते दिशः ॥ ६
स वर्षति स्म वर्षाणि यथाकालमतन्द्रितः ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ७
ब्रह्मोवाच ।
नैतत्ते साधु मघवन्यदेनमनुपृच्छसि ।
पृष्टस्तु नानृतं ब्रूयात्तस्माद्वक्ष्यामि ते बलिम् ॥ ८
उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः ।
वरिष्ठो भविता जन्तुः शून्यागारे शचीपते ॥ ९
शक्र उवाच ।
यदि स्म बलिना ब्रह्मञ्शून्यागारे समेयिवान् ।
हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि माम् १०
ब्रह्मोवाच ।
मा स्म शक्र बलिं हिंसीर्न बलिर्वधमर्हति ।
न्यायस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया ११
भीष्म उवाच ।
एवमुक्तो भगवता महेन्द्रः पृथिवीं तदा ।
चचारैरावतस्कन्धमधिरुह्य श्रिया वृतः ॥ १२
ततो ददर्श स बलिं खरवेषेण संवृतम् ।
यथाख्यातं भगवता शून्यागारकृतालयम् ॥ १३
शक्र उवाच ।
खरयोनिमनुप्राप्तस्तुषभक्षोऽसि दानव ।
इयं ते योनिरसमा शोचस्याहो न शोचसि ॥ १४
अदृष्टं बत पश्यामि द्विषतां वशमागतम् ।
श्रिया विहीनं मित्रैश्च भ्रष्टैश्वर्यपराक्रमम् ॥ १५
यत्तद्यानसहस्रैस्त्वं ज्ञातिभिः परिवारितः ।

---

भ्रष्टश्रीर्विन्दते महीम् इति ध. पाठः ॥ १ ॥ स्ववीर्यख्यापनाय बलिं स्तौति यस्येत्यादिना ॥ ४ ॥ गोषु वृषभेषु । शून्यागारप्रतिश्रयः इति ट. थ. ध. पाठः ॥ ९ ॥ भ्रष्टवीर्यपराक्रमम् इति झ. पाठः ॥ १५ ॥

लोकान्प्रतापयन्सर्वान्यास्यसानवितर्कयन् ॥ १६
त्वन्मुखाश्चैव दैतेया व्यतिष्ठंस्तव शासने ।
अकृष्टपच्या पृथिवी तवैश्वर्ये बभूव ह ॥ १७
इदं च तेऽद्य व्यसनं शोचस्याहो न शोचसि ।
यदाऽतिष्ठः समुद्रस्य पूर्वकूले विलेलिखन् ॥ १८
ज्ञातिभ्यो विभजन्वित्तं तदासीत्ते मनः कथम् ।
यत्ते सहस्रसमिता ननृतुर्देवयोपितः ॥ १९
बहूनि वर्षपूगानि विहारे दीप्यतः श्रिया ।
सर्वाः पुष्करमालिन्यः सर्वाः काञ्चनसप्रभाः २०
कथमद्य तदा चैव मनस्ते दानवेश्वर ।
छत्रं तवासीत्सुमहत्सौवर्णं रत्नभूषितम् ॥ २१
ननृतुस्तत्र गन्धर्वाः षट्सहस्राणि सप्तधा ॥
यूपस्तवासीत्सुमहान्यजतः सर्वकाञ्चनः ॥ २२
यत्राददः सहस्राणि अयुतानां गवां दश ।
अनन्तरं सहस्रेण तदाऽऽसीद्दैत्य का मतिः ॥२३
यदा च पृथिवीं सर्वां यजमानोऽनुपर्यगाः ।
शम्याक्षेपेण विधिना तदाऽऽसीत्किनु ते हृदि २४
न ते पश्यामि भृङ्गारं न च्छत्रं व्यजनं न च ।
ब्रह्मदत्तां च ते मालां न पश्याम्यसुराधिप ॥२५

'भीष्म उवाच ।
ततः प्रहस्य स बलिर्वासवेन समीरितम् ।
निशम्य मानगम्भीरं सुरराजमथाब्रवीत् ॥ २६
अहो हि तव बालिश्यमिह देवगणाधिप ।
अयुक्तं देवराजस्य तव कष्टमिदं वचः ॥' २७
न त्वं पश्यसि भृङ्गारं न च्छत्रं व्यजनं न च ।
ब्रह्मदत्तां च मे मालां न त्वं द्रक्ष्यसि वासव २८
गुहायां निहितानि त्वं मम रत्नानि पृच्छसि ।
यदा मे भविता कालस्तदा त्वं तानि द्रक्ष्यसि २९
'न जानीषे भवान्सिद्धिं शुभाङ्गस्वरूपरूपिणीम्
कालेन भविता सर्वो नात्र गच्छति वासव ॥' ३
न त्वेतदनुरूपं ते यशसो वा कुलस्य च ।
समृद्धार्थोऽसमृद्धार्थं यन्मां कत्थितुमिच्छसि ३१
न हि दुःखेषु शोचन्ते न प्रहृष्यन्ति चर्द्धिषु ।
कृतप्रज्ञा ज्ञानतृप्ताः क्षान्ताः सन्तो मनीषिणः ३२
त्वं तु प्राकृतया बुद्ध्या पुरंदर विकत्थसे ।
यदाऽहमिव भावी स्यास्तदा नैवं वदिष्यसि ॥३३
'ऐश्वर्यमदमत्तो मां स त्वं किंचिन्न बुद्ध्यसे ।
राज्याद्विनिपतानेन सोऽहं न त्वपराजितः ॥' ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

---

## एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

भीष्मेण युधिष्ठिरंप्रति सर्वस्यापि कालनियामकेश्वरनियम्यत्वप्रतिपादकशक्रबलिसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
पुनरेव तु तं शक्रः प्रहसन्निदमब्रवीत् ।
निःश्वसन्तं यथा नागं प्रत्याहाराय भारत ॥ १
यत्तद्यानसहस्रेण ज्ञातिभिः परिवारितः ।
लोकान्प्रतापयन्सर्वान्यास्यसानवितर्कयन् ॥ २
दृष्ट्वा सुकृपणां चेमामवस्थामात्मनो बले ।
ज्ञातिमित्रपरित्यक्तः शोचस्याहो न शोचसि ॥ ३
प्रीतिं प्राप्यातुलां पूर्वं लोकांश्चात्मवशे स्थितान् ।
विनिपातमिमं चाद्य शोचस्याहो न शोचसि ॥४
बलिरुवाच ।
'गर्वं हित्वा तथा मानं देवराज शृणुष्व मे ।
मया च त्वाऽनुसद्भावं पूर्वमाचरितं महत् ॥ ५

अकृष्टपच्या कर्षणंविना धान्यप्रसूः ॥ १७ ॥ विलेलिहन् इति ध. पाठः । तत्र तालुग्रस्तं जगत्कुर्वन्नित्यर्थः ॥ १८ ॥ सूक्ष्माग्रः स्थूलमूलः षट्त्रिंशदङ्गुलो दण्डः शम्या सा बलवता क्षिप्ता यावद्दूरे पतेत्तावदेकं देवयजनम् । एवं सर्वापि पृथिवी शम्याप्रक्षेपविमिता । तव देवयजनानामपर्याप्ताभूदित्यर्थः । पर्यगाः परिहृत्य गतवान् ॥ २४ ॥ भृङ्गारः सौवर्ण उदपात्रविशेषः ॥ २५ ॥ विनिपतानेन विनिपतनेन ॥ ३५ ॥ त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

यथा नागं प्रत्याहाराय इति ध. पाठः ॥ १ ॥

अवश्यकालपर्यायमात्मनः परिवर्तनम् ।
अविदँल्लोकमाहात्म्यं ………………… ॥' ६
अनित्यमुपलक्ष्येह कालपर्यायमात्मनः ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ ७
अन्तवन्त इमे देहा भूतानां च सुराधिप ।
तेन शक्र न शोचामि नापराधादिदं मम ॥ ८
जीवितं च शरीरं च जात्या वै सह जायते ।
उभे सह विवर्धेते उभे सह विनश्यतः ॥ ९
न हीदृशमहंभावमवशः प्राप्य केवलम् ।
यदेवमभिजानामि का व्यथा मे विजानतः ॥ १०
भूतानां निधनं निष्ठा स्रोतसामिव सागरः ।
नैतत्सम्यग्विजानन्तो नरा मुह्यन्ति वज्रधृत् ॥ ११
ये त्वेवं नाभिजानन्ति रजोमोहपरायणाः ।
ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां प्रणश्यति ॥१२
बुद्धिलाभात्तु पुरुषः सर्वं तुदति किल्बिषम् ।
विपाप्मा लभते सत्वं सत्वस्थः संप्रसीदति ॥१३
ततस्तु ये निवर्तन्ते जायन्ते वा पुनःपुनः ।
कृपणाः परितप्यन्ते तैरर्थैरभिचोदिताः ॥ १४
अर्थसिद्धिमनर्थं च जीवितं मरणं तथा ।
सुखं दुःखं फलं चैव न द्वेष्मि न च कामये ॥१५
हतं हन्ति हतो ह्येव यो नरो हन्ति कंचन ।
उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः ॥ १६
हत्वा जित्वा च मघवन्यः कश्चित्पुरुषायते ।
अकर्ता ह्येव भवति कर्ता ह्येव करोति तत् ॥ १७
को हि लोकस्य कुरुते विनाशप्रभवावुभौ ।
कृतं हि तत्कृतेनैव कर्ता तस्यापि चापरः ॥ १८
पृथिवी ज्योतिराकाशमापो वायुश्च पञ्चमः ।
एतद्योनीनि भूतानि तत्र का परिदेवना ॥ १९
महाविद्योऽल्पविद्यश्च बलवान्दुर्बलश्च यः ।
दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः ॥ २०
सर्वं कालः समादत्ते गम्भीरः स्वेन तेजसा ।
तस्मिन्कालवशं प्राप्ते का व्यथा मे विजानतः ॥ २१
दग्धमेवानुदहते हतमेवानुहन्यते ।
नश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः ॥ २२
नास्य द्वीपः कुतः पारो नावारः संप्रदृश्यते ।
नान्तमस्य प्रपश्यामि विधेर्दिव्यस्य चिन्तयन् ॥२३
यदि मे पश्यतः कालो भूतानि न विनाशयेत् ।
स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते ॥ २४
तुषभक्षं तु मां ज्ञात्वा प्रविविक्तजने गृहे ।
बिभ्रतं गार्दभं रूपमागत्य परिगर्हसे ॥ २५
इच्छन्नहं विकुर्यां हि रूपाणि बहुधाऽऽत्मनः ।
विभीषणानि यानीक्ष्य पलायेथास्त्वमेव मे ॥ २६
कालः सर्वं समादत्ते कालः सर्वं प्रयच्छति ।
कालेन विहितं सर्वं मा कृथाः शक्र पौरुषम् ॥ २७
पुरा सर्वं प्रव्यथितं मयि क्रुद्धे पुरंदर ।
'विद्रवन्ति त्वया सार्धं सर्व एव दिवौकसः ॥'२८
अवैमि त्वस्य लोकस्य धर्मं शक्र सनातनम् ।
त्वमप्येवमवेक्षस्व माऽऽत्मना विस्मयं गमः ॥ २९
प्रभवश्च प्रभावश्च नात्मसंस्थः कदाचन ।
कौमारमेव ते चित्तं तथैवाद्य यथा पुरा ।
समवेक्षस्व मघवन्बुद्धिं विन्दस्व नैष्ठिकीम् ॥ ३०
देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
आसन्सर्वे मम वशे तत्सर्वं वेत्थ वासव ॥ ३१
नमस्तस्यै दिशेऽप्यस्तु यस्यां वैरोचनो बलिः ।
इति मामभ्यपद्यन्त बुद्धिमात्सर्यमोहिताः ॥ ३२
नाहं तदनुशोचामि नात्मभ्रंशं शचीपते ।
एवं मे निश्चिता बुद्धिः शास्तुस्तिष्ठाम्यहं वशे ॥ ३३
दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् ।
दुःखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ ३४
दौष्कुलेयस्तथा मूढो दुर्जातः शक्र दृश्यते ।
सुखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ ३५
कल्याणी रूपसंपन्ना दुर्भगा शक्र दृश्यते ।
अलक्षणा विरूपा च सुभगा दृश्यते परा ॥ ३६
नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।

निष्ठा परागतिः ॥ ११ ॥ मनोऽपि पाञ्चभौतिकमित्यर्थः । भूतानि स्थूलसूक्ष्मशरीराणि ॥ १९ ॥ दग्धं कालात्मनेश्वरेणाऽनुदहते वह्न्यादिः । एवमग्रेऽपि ॥ २२ ॥ ईक्ष्य दृष्ट्वा ॥ २६ ॥ धर्मं वृद्धिह्रासवत्त्वम् ॥ २९ ॥ प्रभव ऐश्वर्यम् । प्रभावस्तदाविष्करणम् । नात्मसंस्थो नात्माधीनः । कौमारं बालस्येवाज्ञं तव चित्तम् ॥ ३० ॥ शास्तुरीश्वरस्य ॥ ३३ ॥ सुभगा भाग्यवती

यत्त्वमेवं गतो वज्रिन्यच्चाप्येवं गता वयम् ॥ ३७
न कर्म तव नान्येषां कुतो मम शतक्रतो ।
ऋद्धिर्वाऽप्यथवा नर्द्धिः पर्यायकृतमेव तत् ॥ ३८
पश्यामि त्वां विराजन्तं देवराजमवस्थितम् ।
श्रीमन्तं द्युतिमन्तं च गर्जमानं ममोपरि ॥ ३९
एवं नैव न चेत्कालो मामाक्रम्य स्थितो भवेत् ।
पातयेयमहं त्वाऽद्य सवज्रमपि मुष्टिना ॥ ४०
न तु विक्रमकालोऽयं शान्तिकालोऽयमागतः ।
कालः स्थापयते सर्वं कालः पचति वै तथा ॥४१
मां चेदभ्यागतः कालो दानवेश्वरमूर्जितम् ।
गर्जन्तं प्रतपन्तं च कमन्यं नागमिष्यति ॥ ४२
द्वादशानां तु भवतामादित्यानां महात्मनाम् ।
तेजांस्येकेन सर्वेषां देवराज धृतानि मे ॥ ४३
अहमेवोद्वहाम्यापो विसृजामि च वासव ।
तपामि चैव त्रैलोक्यं विद्योताम्यहमेव च ॥ ४४
संरक्षामि विलुम्पामि ददाम्यहमथाददे ।
संयच्छामि नियच्छामि लोकेषु प्रभुरीश्वरः ॥ ४५
तदद्य विनिवृत्तं मे प्रभुत्वममराधिप ।
कालसैन्यावगाढस्य सर्वं न प्रतिभाति मे ॥ ४६
नाहं कर्ता न चैव त्वं नान्यः कर्ता शचीपते ।
पर्यायेण हि भुज्यन्ते लोकाः शक्र यदृच्छया ॥४७
मासमासार्धवेश्मानमहोरात्राभिसंवृतम् ।
ऋतुद्वारं वायुमुखमायुर्वेदविदो जनाः ॥ ४८
आहुः सर्वमिदं चिन्त्यं जनाः केचिन्मनीषया ।
'अनित्यपञ्चवर्षाणि षष्ठो दृश्यति देहिनाम् ॥'४९
अस्याः पञ्चैव चिन्तायाः पर्येष्यामि च पञ्चधा ।
'ततस्तानि न पश्यामि काले तमपि वृत्रहन् ॥'५०
गम्भीरं गहनं ब्रह्म महत्तोयार्णवं यथा ।
अनादिनिधनं चाहुरक्षरं क्षरमेव च ॥ ५१
सत्त्वेषु लिङ्गमाविश्य निर्लिङ्गमपि तत्स्वयम् ।
मन्यन्ते ध्रुवमेवैनं ये जनास्तत्त्वदर्शिनः ॥ ५२
'यमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा ।
तं कालमिति जानीहि यस्य सर्वमिदं वशे ॥'५३
भूतानां तु विपर्यासं कुरुते भगवानिति ।
न ह्येतावद्भवेद्गम्यं न यस्मात्प्रभवेत्पुनः ॥ ५४
गतिं हि सर्वभूतानामगत्वा क्व गमिष्यति ।
यो धावता न हातव्यस्तिष्ठन्नपि न हीयते ॥ ५५
तमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा ।
आहुश्चैनं केचिदग्निं केचिदाहुः प्रजापतिम् ॥ ५६
ऋतून्मासार्धमासांश्च दिवसांश्च क्षणांस्तथा ।
पूर्वाह्णमपराह्णं च मध्याह्नमपि चापरे ॥ ५७
मुहूर्तमपि चैवाहुरेकं सन्तमनेकधा ।
तं कालमिति जानीहि यस्य सर्वमिदं वशे ॥ ५८
बहूनीन्द्रसहस्राणि समतीतानि वासव ।
बलवीर्योपपन्नानि यथैव त्वं शचीपते ॥ ५९
त्वामप्यतिबलं शक्र देवराजं बलोत्कटम् ।
प्राप्ते काले महावीर्यः कालः संशमयिष्यति ॥ ६०
य इदं सर्वमादत्ते तस्माच्छक्र स्थिरो भव ।
मया त्वया च पूर्वैश्च न स शक्योऽतिवर्तितुम् ॥ ६१
यामेतां प्राप्य जानीषे राज्यश्रियमनुत्तमाम् ।
स्थिता मयीति तन्मिथ्या नैषा ह्येकत्र तिष्ठति ॥६२
स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियम् ।
मां च लोला परित्यज्य त्वामगाद्विबुधाधिप ॥ ६३
मैवं शक्र पुनः कार्षीः शान्तो भवितुमर्हसि ।
त्वामप्येवंविधं ज्ञात्वा क्षिप्रमन्यं गमिष्यति ।
'कालेन चोदिता शक्र मा ते गर्वः शतक्रतो ॥ ६४
क्षमस्व कालयोगं तमागतं विद्धि देवप ।
निर्लज्जश्चैव कस्मात्त्वं देवराज विकत्थसे ॥ ६५
सर्वासुराणामधिपः सर्वदेवभयंकरः ।
जितवान्ब्रह्मणो लोकं को विद्यादागतं गतिम् ॥' ६६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

---

॥ ३६ ॥ नर्द्धिः ऋद्ध्यभावः । पर्यायः कालक्रमस्तेन कृतम् ॥ ३८ ॥ एवं मम गर्दभत्वादिकं नैव स्यादिति शेषः । नचेदित्यादि तत्रोपपत्तिः ॥ ४० ॥ उद्वहामि मेघो भूत्वा सूर्यो भूत्वा शोषयामीति वार्थः । आपः अपः ॥ ४४ ॥ कालसैन्यं मासार्धमासादि ॥ ४६ ॥ पर्यायेण कालक्रमेण भुज्यन्ते पाल्यन्ते संह्रियन्ते वा॥४७॥ एकत्रिंशदधिकद्विशततमोऽध्यायः॥२३१॥

## द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

बलिशरीरान्निर्गन्त्या श्रिया शक्रं प्रति स्वनिर्गमनकारणाभिधानपूर्वकं ततः स्वस्य स्थानचतुष्टयवरणम् ॥ १ ॥ इन्द्र-बलिसंवादश्च ॥ २ ॥

भीष्म उवाच ।
शतक्रतुरथापश्यद्बलेर्दीप्तां महात्मनः ।
स्वरूपिणीं शरीराद्धि निष्क्रामन्तीं तदा श्रियम् ॥१
तां दृष्ट्वा प्रभया दीप्तां भगवान्पाकशासनः ।
विस्मयोत्फुल्लनयनो बलिं पप्रच्छ वासवः ॥ २
बले केयमपक्रान्ता रोचमाना शिखण्डिनी ।
त्वत्तः स्थिता सकेयूरा दीप्यमाना स्वतेजसा ॥३
बलिरुवाच ।
न हीमामासुरीं वेद्मि न दैवीं च न मानुषीम् ।
त्वमेनां पृच्छ वा मा वा यथेष्टं कुरु वासव ॥ ४
शक्र उवाच ।
का त्वं बलेरपक्रान्ता रोचमाना शिखण्डिनी ।
अजानतो ममाचक्ष्व नामधेयं शुचिस्मिते ॥ ५
का त्वं तिष्ठसि मामेवं दीप्यमाना स्वतेजसा ।
हित्वा दैत्यवरं सुभ्रु तन्ममाचक्ष्व पृच्छतः ॥ ६
श्रीरुवाच ।
न मां विरोचनो वेद नायं वैरोचनो बलिः ।
आहुर्मां दुःसहेत्येवं विधित्सेति च मां विदुः ॥७
भूतिर्लक्ष्मीति मामाहुः श्रीरित्येव च वासव ।
त्वं मां शक्र न जानीषे सर्वे देवा न मां विदुः ॥८
शक्र उवाच ।
किमिदं त्वं मम कृते उताहो बलिनः कृते ।
दुःसहे विजहास्येनं चिरसंवासिनी सती ॥ ९
श्रीरुवाच ।
नो धाता न विधाता मां विदधाति कथंचन ।
कालस्तु शक्र पर्यागान्मैवं शक्रावमन्यथाः ॥१०
शक्र उवाच ।
कथं त्वया बलिस्त्यक्तः किमर्थं वा शिखण्डिनि ।
कथं च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ॥ ११
श्रीरुवाच ।
सत्ये स्थिताऽस्मि दाने च व्रते तपसि चैव हि ।
पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥ १२
ब्रह्मण्योऽयं पुरा भूत्वा सत्यवादी जितेन्द्रियः ।
अभ्यसूयन्ब्राह्मणान्वै उच्छिष्टश्चास्पृशद्घृतम् ॥१३
यज्ञशीलः सदा भूत्वा मामेव यजते स्वयम् ।
ततः प्रहाय मूढात्मा कालेनोपनिपीडितः ॥ १४
अपक्रान्ता ततः शक्र त्वयि वत्स्यामि वासव ।
अप्रमत्तेन धार्योऽसि तपसा विक्रमेण च ॥ १५
शक्र उवाच ।
कोऽस्ति देवमनुष्येषु सर्वभूतेषु वा पुमान् ।
यस्त्वामेको विषहितुं शक्नुयात्कमलालये ॥ १६
श्रीरुवाच ।
नैव देवो न गन्धर्वो नासुरो न च राक्षसः ।
यो मामेको विषहितुं शक्तः कश्चित्पुरंदर ॥ १७
शक्र उवाच ।
तिष्ठेथा मयि नित्यं त्वं यथा तद्ब्रूहि मे शुभे ।
तत्करिष्यामि ते वाक्यमृतं तद्वक्तुमर्हसि ॥ १८
श्रीरुवाच ।
स्थास्यामि नित्यं देवेन्द्र यथा त्वयि निबोध तत् ।
विधिना वेददृष्टेन चतुर्धा विभजस्व माम् ॥ १९
शक्र उवाच ।
अहं वै त्वां निधास्यामि यथाशक्ति यथाबलम् ।
न तु मेऽतिक्रमः स्याद्वै सदा लक्ष्मि तवान्तिके २०
भूमिरेव मनुष्येषु धारिणी भूतभाविनी ।
सा ते पादं तितिक्षेत समर्था हीति मे मतिः ॥२१
श्रीरुवाच ।
एष मे निहितः पादो योऽयं भूमौ प्रतिष्ठितः ।
द्वितीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ २२
शक्र उवाच ।
आप एव मनुष्येषु द्रवन्त्यः परिधारणे ।
तास्ते पादं तितिक्षन्तामलमापस्तितिक्षितुम् ॥२३

श्रीरुवाच ।
एष मे निहितः पादो योऽयमप्सु प्रतिष्ठितः ।
तृतीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ २४
शक्र उवाच ।
यस्मिन्वेदाश्च यज्ञाश्च यस्मिन्देवाः प्रतिष्ठिताः ।
तृतीयं पादमग्निस्ते सुधृतं धारयिष्यति ॥ २५
श्रीरुवाच ।
एष मे निहितः पादो योऽयमग्नौ प्रतिष्ठितः ।
चतुर्थं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ २६
शक्र उवाच ।
ये वै सन्तो मनुष्येषु ब्रह्मण्याः सत्यवादिनः ।
तेते पादं तितिक्षन्तामलं सन्तस्तितिक्षितुम् ॥ २७
श्रीरुवाच ।
एष मे निहितः पादो योऽयं सत्सु प्रतिष्ठितः ।
एवं हि निहितां शक्र भूतेषु परिधत्स्व माम् ॥२८
शक्र उवाच ।
'भूमिशुद्धिं ततः कृत्वा अद्भिः संतर्पयन्ति ये ।
भूतानि च यजन्त्यग्नौ तेषां त्वमनपायिनी ॥ २९
ये क्रियाभिः सुरक्ताभिर्हेतुयुक्ताः समाहिताः ।
ज्ञानवन्तो विवत्सायां लब्धा माद्यन्ति योगिनः ॥'
भूतानामिह यो वै त्वां मया विनिहितां सतीम् ।
उपहन्यात्स मे द्वेष्यस्तथा शृण्वन्तु मे वचः ॥३१
'भीष्म उवाच ।
तथेति चोक्त्वा सा श्रद्धा सर्वलोकनमस्कृता ।
वासवं पालयामास सा देवी कमलालया ॥' ३२
ततस्त्यक्तः श्रिया राजा दैत्यानां बलिरब्रवीत् ३३
यावत्पुरस्तात्प्रतपेत्तावद्वै दक्षिणां दिशम् ।
पश्चिमां तावदेवापि तथोदीचीं दिवाकरः ॥ ३४
तथा मध्यंदिने सूर्यो नास्तमेति यदा तदा ।
पुनर्देवासुरं युद्धं भावि जेताऽस्मि वस्तदा ॥ ३५
सर्वलोकान्यदाऽऽदित्यो मध्यस्थस्तापयिष्यति ।
तदा देवासुरे युद्धे जेताऽहं त्वां शतक्रतो ॥ ३६
शक्र उवाच ।
ब्रह्मणाऽस्मि समादिष्टो न हन्तव्यो भवानिति ।
तेन तेऽहं बले वज्रं न विमुञ्चामि मूर्धनि ॥ ३७
यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर ॥ ३८
आदित्यो नैव तपिता कदाचिन्मध्यतः स्थितः ।
स्थापितो ह्यस्य समयः पूर्वमेव स्वयंभुवा ॥ ३९
अजस्रं परियात्येष सत्येनावतपन्प्रजाः ।
अयनं तस्य षण्मासा उत्तरं दक्षिणं तथा ।
येन संयाति लोकेषु शीतोष्णे विसृजन्रविः ॥ ४०
भीष्म उवाच ।
एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत ।
जगाम दक्षिणामाशामुदीचीं तु पुरंदरः ॥ ४१
इत्येतद्बलिना गीतमनहंकारसंज्ञितम् ।
वाक्यं श्रुत्वा सहस्राक्षः खमेवारुरुहे तदा ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

---

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

भीष्मेण युधिष्ठिरंप्रति आपदि शोकत्यागपूर्वकं भगवदनुचिन्तनादेः श्रेयःसाधनताप्रतिपादकशक्रनमुचिसंवादानुवादः ॥ १

'युधिष्ठिर उवाच ।
व्यसनेषु निमग्नस्य किं श्रेयस्तद्ब्रवीहि मे ।
भूय एव महाबाहो स्थित्यर्थं तं ब्रवीहि मे ॥' १
भीष्म उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
शतक्रतोश्च संवादं नमुचेश्च युधिष्ठिर ॥

वित्तं तीर्थादिपुण्यं यज्ञादिधर्मो विद्या चेति श्रियश्चत्वारः पादा भूमौ जलेऽग्नौ विद्वत्सु च निहितास्तेषामुपघातः स्तेयकामाशौचाद्यैः ॥ ३१ ॥ वैवस्वतमन्वन्तरमेवाष्टधा विभज्य तदन्ते सर्वपुर्युच्छेदे सति मन्वन्तरान्तरे बलिरिन्द्रो भविष्यतीति ज्ञेयम् । तदिदमुक्तं यावत्पुरस्तात्प्रतपेदित्यादिना श्लोकत्रयेण ॥ ३४ ॥ यदादित्यो ह्येकस्थ इति झ. ध. पाठः ॥ ३५ ॥ द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

श्रिया विहीनमासीनमक्षोभ्यमिव सागरम् ।
भवाभवज्ञं भूतानामित्युवाच पुरंदरः ॥ ३
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रिया विहीनो नमुचे शोचस्याहो न शोचसि ॥४

नमुचिरुवाच ।

अनवाप्यं च शोकेन शरीरं चोपशुष्यति ।
अमित्राश्च प्रहृष्यन्ति शोके नास्ति सहायता ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ ५
संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते श्रियः ।
संतापाद्भ्रश्यते चायुर्धर्मश्चैव सुरेश्वर ॥ ६
विनीय खलु तद्दुःखमागतं वै मनस्सुखम् ।
ध्यातव्यं मनसा हृद्यं कल्याणं संविजानता ॥ ७
यथायथा हि पुरुषः कल्याणे कुरुते मनः ।
तथैवास्य प्रसिध्यन्ति सर्वार्था नात्र संशयः ॥८
एकः शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुयुक्तः प्रवणादिवोदकं
यथा नियुक्तोऽस्मि तथा भवामि ॥ ९
भावाभावावभिजानन्गरीयो
जानामि श्रेयो न तु तत्करोमि ।
आशासु हर्म्यासु हृदासु कुर्वन्
यथा नियुक्तोऽस्मि तथा वहामि ॥ १०
यथायथाऽस्य प्राप्तव्यं प्राप्नोत्येव तथातथा ।
भवितव्यं यथा यच्च भवत्येव तथातथा ॥ ११
यत्रयत्रैव संयुक्तो धात्रा गर्भे पुनः पुनः ।
तत्रतत्रैव वसति न यत्र स्वयमिच्छति ॥ १२
भावो योऽयमनुप्राप्तो भवितव्यमिदं मम ।
इति यस्य सदा भावो न स शोचेत्कदाचन ॥१३
पर्यायैर्हन्यमानानामभिषङ्गो न विद्यते ।
दुःखमेतत्तु यद्द्वेष्टा कर्ताऽहमिति मन्यते ॥ १४
ऋषींश्च देवांश्च महासुरांश्च
त्रैविद्यवृद्धांश्च वने मुनींश्च ।
का नापदो नोपनमन्ति लोके
परावरज्ञास्तु न संभ्रमन्ति ॥ १५
न पण्डितः क्रुद्ध्यति नाभिषज्यते
न चापि संसीदति न प्रहृष्यति ।
न चार्थकृच्छ्रव्यसनेषु शोचते
स्थितः प्रकृत्या हिमवानिवाचलः ॥ १६
यमर्थसिद्धिः परमा न हर्षये-
त्तथैव काले व्यसनं न मोहयेत् ।
सुखं च दुःखं च तथैव मध्यमं
निषेवते यः स धुरंधरो नरः ॥ १७
यांयामवस्थां पुरुषोऽधिगच्छे-
त्तस्यां रमेतापरितप्यमानः ।
एवं प्रवृद्धं प्रणुदन्मनोजं
संतापनीयं सकलं शरीरात् ॥ १८
न तत्सदः सत्परिपत्सभा च
सा प्राप्य यां न कुरुते सदा भयम् ।
धर्मतत्त्वमवगाह्य बुद्धिमा-
न्योऽभ्युपैति स धुरंधरः पुमान् ॥ १९
प्राज्ञस्य कर्माणि दुरन्वयानि
न वै प्राज्ञो मुह्यति मोहकाले ।
स्थानाच्च्युतश्चेन्न मुमोह गौतम-
स्तावत्कृच्छ्रामापदं प्राप्य वृद्धः ॥ २०
न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण च ।
[न शीलेन न वृत्तेन तथा नैवार्थसंपदा ।]
अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥ २१
यदेवमभिजातस्य धातारो विदधुः पुरा ।
तदेवानुभविष्यामि किं मे मृत्युः करिष्यति ॥२२
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।

भवाभवज्ञमुत्पत्तिप्रलयज्ञम् ॥ ३ ॥ सहायता शोकस्य दुःखापनोदे हेतुत्वं नास्तीत्यर्थः ॥ ५ ॥ श्रियः सकाशात् ॥ ६ ॥ विनीय निरस्य । हृद्यं हृत्स्थम् । कल्याणं मोक्षम् ॥७॥ प्रवणान्निम्नदेशात् ॥ ९ ॥ प्रणुदन् दूरीकुर्वन् । सन्तापमायासकरं शरीरात् इति झ. पाठः ॥ १८ ॥ श्रौतस्मार्तलौकिकन्यायान्यायविवेचका जनसमाजाः सदः पर्षत्सभाख्याः । संसत्सदः परिषदः सभासदः सम्प्राप्य यो न कुरुते सदा भयम् । इति ट. थ. ध. पाठः ॥१९॥ न मुमोह चोत्तमः इति ध. पाठः ॥२०॥

प्राप्तव्यान्येव चाप्नोति दुःखानि च सुखानि च २३
एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः।
कुशली सर्वदुःखेषु स वै सर्वधनी नरः ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

---

## चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

भीष्मेण युधिष्ठिरंप्रति विपदि धैर्यालम्बनस्य सुखसाधनताप्रतिपादकबलिशक्रसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य हि ।
बन्धुनाशे महीपाल राज्यनाशेऽथवा पुनः ॥ १
त्वं हि नः परमो वक्ता लोकेऽस्मिन्भरतर्षभ ।
एतद्भवन्तं पृच्छामि तन्मे त्वं वक्तुमर्हसि ॥ २
भीष्म उवाच ।
पुत्रदारैः सुखैश्चैव वियुक्तस्य धनेन च ।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ।
धैर्येण युक्तस्य सतः शरीरं न विशीर्यते ॥ ३
[विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमम् ।]
आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ४
यश्च प्राज्ञो नरस्तात सात्त्विकीं वृत्तिमास्थितः ।
तस्यैश्वर्यं च धैर्यं च व्यवसायश्च कर्मसु ॥ ५
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
बलिवासवसंवादं पुनरेव युधिष्ठिर ॥ ६
वृत्ते देवासुरे युद्धे दैत्यदानवसंक्षये ।
विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ ॥ ७
इज्यमानेषु देवेषु चातुर्वर्ण्ये व्यवस्थिते ।
समृध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयंभुवि ॥ ८
रुद्रैर्वसुभिरादित्यैरश्विभ्यामपि चर्षिभिः ।
गन्धर्वैर्भुजगेन्द्रैश्च सिद्धैश्चान्यैर्वृतः प्रभुः ॥ ९
चतुर्दन्तं सुदान्तं च वारणेन्द्रं श्रिया वृतम् ।
आरुह्यैरावणं शक्रस्त्रैलोक्यमनुसंययौ ॥ १०
स कदाचित्समुद्रान्ते कस्मिंश्चिद्गिरिगह्वरे ।
बलिं वैरोचनिं वज्री ददर्शोपससर्प च ॥ ११
तमैरावतमूर्धस्थं प्रेक्ष्य देवगणैर्वृतम् ।
सुरेन्द्रमिन्द्रं दैत्येन्द्रो न शुशोच न विव्यथे ॥ १२
दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिम् ।
अधिरूढो द्विपश्रेष्ठमित्युवाच शतक्रतुः ॥ १३
दैत्य न व्यथसे शौर्यादथवा वृद्धसेवया ।
तपसा भावितत्वाद्वा सर्वथैतत्सुदुष्करम् ॥ १४
शत्रुभिर्वशमानीतो हीनः स्थानादनुत्तमात् ।
वैरोचने किमाश्रित्य शोचितव्ये न शोचसि ॥ १५
श्रैष्ठ्यं प्राप्य स्वजातीनां भुक्त्वा भोगाननुत्तमान् ।
हृतस्वरत्नराज्यस्त्वं ब्रूहि कस्मान्न शोचसि ॥ १६
ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे ।
तत्त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि ॥ १७
बद्धश्च वारुणैः पाशैर्वज्रेण च समाहतः ।
हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि ॥ १८
नष्टश्रीर्विभवभ्रष्टो यन्न शोचसि दुष्करम् ।
त्रैलोक्यराज्यनाशे हि कोऽन्यो जीवितुमुत्सहेत् १९
एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तम् ।
श्रुत्वा दुःखमसंभ्रान्तो बलिर्वैरोचनोऽब्रवीत् ॥ २०
निगृहीते मयि भृशं शक्र किं कत्थितेन ते ।
वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरंदर ॥ २१
अशक्तः पूर्वमासीस्त्वं कथंचिच्छक्ततां गतः ।
कस्त्वदन्य इमां वाचं सुक्रूरां वक्तुमर्हति ॥ २२
यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयाम् ।
हस्तप्राप्तस्य वीरस्य तं चैव पुरुषं विदुः ॥ २३
अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः ।
एकः प्राप्नोति विजयमेकश्चैव पराजयम् ॥ २४
मा च ते भूत्स्वभावोऽयं मयि दानवपुङ्गवे ।

---

कुशलः सुखदुःखेषु इति ट. थ. पाठः ॥ २४ ॥ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

श्रुत्वासुखमसंभ्रान्त इति झ. ट. थ. पाठः ॥ २० ॥, चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

ईश्वरः सर्वभूतानां विक्रमेण जितो बलात् ॥ २५
नैतदसत्कृतं शक्र नैतच्छक्र कृतं त्वया ।
यत्त्वमेवं गतो वज्रिन्यद्वाऽप्येवं गता वयम् ॥ २६
अहमासं यथाऽद्य त्वं भविता त्वं यथा वयम् ।
मावमंस्था मया कर्म दुष्कृतं कृतमित्युत ॥ २७
सुखदुःखे हि पुरुषः पर्यायेणाधिगच्छति ।
पर्यायेणासि शक्रत्वं प्राप्तः शक्र न कर्मणा ॥ २८
कालः काले नयति मां त्वां च कालो नयत्ययम् ।
तेनाहं त्वं यथा नाद्य त्वं चापि न यथा वयम् ॥२९
न मातृपितृशुश्रूषा न च दैवतपूजनम् ।
नान्यो गुणसमाचारः पुरुषस्य सुखावहः ॥ ३०
न विद्या न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ३१
नागामिनमनर्थं हि प्रतिघातशतैरपि ।
शक्नुवन्ति प्रतिव्योढुमृते बुद्धिबलान्नराः ॥ ३२
पर्यायैर्हन्यमानानां परित्राता न विद्यते ।
इदं तु दुःखं यच्छक्र कर्ताऽहमिति मन्यसे ॥ ३३
यदि कर्ता भवेत्कर्ता न क्रियेत कदाचन ।
यस्मात्तु क्रियते कर्ता तस्मात्कर्ताऽप्यनीश्वरः ॥३४
कालेन त्वाऽहमजयं कालेनाहं जितस्त्वया ।
गन्ता गतिमतां कालः कालः कलयति प्रजाः ॥३५
इन्द्र प्राकृतया बुद्ध्या प्रलपन्नावबुध्यसे ।
केचित्त्वां बहुमन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्मणा ॥ ३६
कथमस्मद्विधो नाम जानँल्लोकप्रवृत्तयः ।
कालेनाभ्याहतः शोचेन्मुह्येद्वाऽप्यथविभ्रमेत् ॥३७
कथं कालपरीतस्य मम वा मद्विधस्य वा ।
बुद्धिर्व्यसनमासाद्य भिन्ना नौरिव सीदति ॥३८
अहं च त्वं च ये चान्ये भविष्यन्ति सुराधिपाः ।
ते सर्वे शक्र यास्यन्ति मार्गमिन्द्रशतैर्गतम् ॥ ३९
त्वामप्येवं सुदुर्धर्षं ज्वलन्तं परया श्रिया ।
काले परिणते कालः कलयिष्यति मामिव ॥ ४०
बहूनीन्द्रसहस्राणि दैवतानां युगे युगे ।
अभ्यतीतानि कालेन कालो हि दुरतिक्रमः ॥४१
इदं तु लब्ध्वा संस्थानमात्मानं बहु मन्यसे ।
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ ४२
न चेदमचलं स्थानमनन्तं वाऽपि कस्यचित् ।
त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ ४३
अविश्वस्ते विश्वसिषि मन्यसे वाऽध्रुवे ध्रुवम् ।
नित्यं कालपरीतात्मा भवत्येवं सुरेश्वर ॥ ४४
ममेयमिति मोहात्त्वं राजश्रियमभीप्ससि ।
नेयं तव न चास्माकं न चान्येषां स्थिरा मता ॥ ४५
अतिक्रम्य बहूनन्यांस्त्वयि तावदियं गता ।
कंचित्कालमियं स्थित्वा त्वयि वासव चञ्चला ४६
गौर्निवासमिवोत्सृज्य पुनरन्यं गमिष्यति ।
सुरेशा ये ह्यतिक्रान्तास्तान्न संख्यातुमुत्सहे ॥ ४७
त्वत्तो बहुतराश्चान्ये भविष्यन्ति पुरंदर ।
सवृक्षौषधिगुल्मेयं ससरित्पर्वताकरा ॥ ४८
तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ।
पृथुरैलो मयो भीमो नरकः शम्बरस्तथा ॥ ४९
अश्वग्रीवः पुलोमा च स्वर्भानुरमितप्रभः ।
प्रह्लादो नमुचिर्दक्षो विप्रचित्तिर्विरोचनः ॥ ५०
ह्रीनिषेवः सुहोत्रश्च भूरिहा पुष्पवान्वृषः ।
सत्येषुर्ऋषभो बाहुः कपिलाश्वो विरूपकः ॥ ५१
बाणः कार्तस्वरो वह्निर्विश्वदंष्ट्रोऽथ नैर्ऋतिः ।
संकोचोऽथ वरीताक्षो वराहाश्वो रुचिप्रभः ॥ ५२
विश्वजित्प्रतिरूपश्च वृषाण्डो विष्करो मधुः ।
हिरण्यकशिपुश्चैव कैटभश्चैव दानवः ॥ ५३
दैतेया दानवाश्चैव सर्वे ते नैर्ऋतैः सह ।
एते चान्ये च बहवः पूर्वे पूर्वतराश्च ये ॥ ५४
दैत्येन्द्रा दानवेन्द्राश्च यांश्चान्याननुशुश्रुम ।
बहवः पूर्वदैत्येन्द्राः संत्यज्य पृथिवीं गताः ॥ ५५
कालेनाभ्याहताः सर्वे कालो हि बलवत्तरः ।
सर्वैः क्रतुशतैरिष्टं न त्वमेकः शतक्रतुः ॥ ५६
सर्वे धर्मपराश्चासन्सर्वे सततसत्रिणः ।
अन्तरिक्षचराः सर्वे सर्वेऽभिमुखयोधिनः ॥ ५७
सर्वे संहननोपेताः सर्वे परिघबाहवः ।
सर्वे मायाशतधराः सर्वे ते कामरूपिणः ।
सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ ५८
सर्वे सत्यव्रतपराः सर्वे कामविहारिणः ।
सर्वे वेदव्रतपराः सर्वे चैव बहुश्रुताः ॥ ५९

पराभविष्यतश्चैव तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ २
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रिया शक्रस्य संवादं तन्निबोध युधिष्ठिर ॥ ३
महतस्तपसो व्युष्ट्या पश्यँल्लोकौ परावरौ ।
सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः ॥ ४
ब्रह्मेवामितदीप्तौजाः शान्तपाप्मा महातपाः ।
विचचार यथाकालं त्रिषु लोकेषु नारदः ॥ ५
कदाचित्प्रातरुत्थाय पिस्पृक्षुः सलिलं शुचि ।
ध्रुवद्वारभवां गङ्गां जगामावततार च ॥ ६
'मेरुपादोद्भवां गङ्गां नारायणपदच्युताम् ।
स वीक्षमाणो हृष्टात्मा तं देशमभिजग्मिवान् ॥ ७
यं···देवजवाकीर्णं सूक्ष्मकाञ्चनवालुकम् ।
गङ्गाद्वीपं समासाद्य नानावृक्षैरलङ्कृतम् ॥ ८
सालतालाश्वकर्णानां चन्दनानां च राजिभिः ।
मण्डितं विविधैः पुष्पैर्हंसकारण्डवायुतम् ॥ ९
नदीपुलिनमासाद्य स्नात्वा संतर्प्य देवताः ।
जजाप जप्यं धर्मात्मा तन्मयत्वेन भास्वता॥' १०
सहस्रनयनश्चापि वज्री शम्बरपाकहा ।
तस्या देवर्षिजुष्टायास्तीरमभ्याजगाम ह ॥ ११
तावाप्लुत्य यतात्मानौ कृतजप्यौ समासतः ।
नद्याः पुलिनमासाद्य सूक्ष्मकाञ्चनवालुकम् ॥ १२
पुण्यकर्मभिराख्याता देवर्षिकथिताः कथाः ।
चक्रतुस्तौ तथाऽऽसीनौ महर्षिकथितास्तथा ।
पूर्ववृत्तव्यतीतानि कथयन्तौ समाहितौ ॥ १३
अथ भास्करमुद्यन्तं रश्मिजालपुरस्कृतम् ।
पूर्णमण्डलमालोक्य तावुत्थायोपतस्थतुः ॥ १४
'विविक्ते पुण्यदेशे तु रममाणौ मुदा युतौ ।
ददृशातेऽन्तरिक्षे तौ सूर्यस्योदयनं प्रति ॥ १५
ज्योतिर्ज्वालसमाकीर्णं ज्योतिषां गणमण्डितम् ।
अभितस्तूदयन्तं तमर्कमर्कमिवापरम् ॥ १६
आकाशे ददृशे ज्योतिरुद्यतार्चिःसमप्रभम् ।
'अर्कस्य तेजसा तुल्यं तद्भास्करसमप्रभम् ।'
तयोः समीपं तं प्राप्तं प्रत्यदृश्यत भारत ॥ १७
तत्सुपर्णार्करचितमास्थितं वैष्णवं पदम् ।
भाभिरप्रतिमं भाति त्रैलोक्यमवभासयत् ॥ १८
'तं दृष्ट्वा तौ तु विक्रान्तौ प्राञ्जली समुपास्थितौ ।
क्रमात्संप्रेक्ष्यमाणौ तौ विमानं दिव्यमद्भुतम् ॥ १९
तस्मिंस्तदा सतीं कान्तां लोककान्तां परां शुभाम् ।
धात्रीं लोकस्य रमणीं लोकमातरमच्युताम् ॥' २०
दिव्याभिरुपशोभाभिरप्सरोभिः पुरस्कृताम् ।
बृहतीमंशुमत्प्रख्यां बृहद्भानोरिवार्चिषम् ॥ २१
नक्षत्रकल्पाभरणां तारापङ्क्तिसमस्रजम् ।
श्रियं ददृशतुः पद्मां साक्षात्पद्मदलस्थिताम् ॥ २२
साऽवरुह्य विमानाग्रादङ्गनानामनुत्तमा ।
अभ्यागच्छत्त्रिलोकेशं शक्रं चर्षिं च नारदम् ॥ २३
नारदानुगतः साक्षान्मघवांस्तामुपागमत् ।
कृताञ्जलिपुटो देवीं निवेद्यात्मानमात्मना ॥ २४
चक्रे चानुपमां पूजां तस्याश्चापि स सर्ववित् ।
देवराजः श्रियं राजन्वाक्यं चेदमुवाच ह ॥ २५
का त्वं केन च कार्येण संप्राप्ता चारुहासिनि ।
कुतश्चागम्यते सुभ्रु गन्तव्यं क्व च ते शुभे ॥ २६
श्रीरुवाच ।
पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः ।
ममात्मभावमिच्छन्तो यतन्ते परमात्मना ॥ २७
साऽहं वै पङ्कजे जाता सूर्यरश्मिप्रबोधिते ।
भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी ॥ २८
अहं लक्ष्मीरहं भूतिः श्रीश्चाहं बलसूदन ।
अहं श्रद्धा च मेधा च सन्नतिर्विजितिः स्थितिः ॥ २९
अहं धृतिरहं सिद्धिरहं संभूतिरेव च ।
अहं स्वाहा स्वधा चैव संस्तुतिर्नियतिः कृतिः ॥ ३०
राज्ञां विजयमानानां सेनाग्रेषु ध्वजेषु च ।
निवसे धर्मशीलानां विषयेषु पुरेषु च ॥ ३१
जितकाशिनि शूरे च संग्रामेष्वनिवर्तिनि ।

भवमौलिभवां गङ्गां इति ध. पाठः ॥ ६ ॥ विजितिः स्मृतिः इति ट. ड. ध. पाठः ॥ २९ ॥ धैर्याद्बुद्धारितारिषु इति ट. ड. पाठः ॥ २६ ॥

निवसामि मनुष्येन्द्रे सदैव बलसूदन ॥ ३२
धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।
प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥ ३३
असुरेष्ववसं पूर्वं सत्यधर्मनिबन्धनात् ।
विपरीतांस्तु तान्बुद्ध्वा त्वयि वासमरोचयम् ॥३४
शक्र उवाच ।
कथंवृत्तेषु दैत्येषु त्वमवात्सीर्वरानाने ।
दृष्ट्वा च किमिहागास्त्वं हित्वा दैतेयदानवान् ३५
श्रीरुवाच ।
स्वधर्ममनुतिष्ठत्सु धैर्यादचलितेषु च ।
स्वर्गमार्गाभिरामेषु सत्वेषु निरता ह्यहम् ॥ ३६
दानाध्ययनयज्ञेज्यापितृदैवतपूजनम् ।
गुरूणामतिथीनां च तेषां नित्यमवर्तत ॥ ३७
सुसंमृष्टगृहाश्चासञ्जितस्त्रीका हुताग्नयः ।
गुरुशुश्रूषका दान्ता ब्रह्मण्याः सत्यवादिनः॥३८
श्रद्दधाना जितक्रोधा दानशीलाऽनसूयवः ।
भृतपुत्रा भृतामात्या भृतदारा ह्यनीर्षवः ॥ ३९
अमर्षेण न चान्योन्यं स्पृहयन्ते कदाचन ।
न च जातूपतप्यन्ति धीराः परसमृद्धिभिः ॥४०
दातारः संग्रहीतार आर्याः करुणवेदिनः ।
महाप्रसादा ऋजवो दृढभक्ता जितेन्द्रियाः॥ ४१
संतुष्टभृत्यसचिवाः कृतज्ञाः प्रियवादिनः ।
यथार्हमानार्थकरा ह्रीनिषेवा यतव्रताः ॥ ४२
नित्यं पर्वसु सुस्नाताः स्वनुलिप्ताः स्वलङ्कृताः ।
उपवासतपःशीलाः प्रतीता ब्रह्मवादिनः ॥ ४३
नैनानभ्युदियात्सूर्यो नैवास्वप्स्यन्प्रगेशयाः ।
रात्रौ दधि च सक्तूंश्च नित्यमेव व्यवर्जयन् ॥४४
काल्यं घृतं तु चान्वीक्ष्य प्रयता ब्रह्मवादिनः ।
मङ्गल्यान्यपि चापश्यन्ब्राह्मणांश्चाप्यपूजयन् ॥ ४५
सदा हि ददतां धर्म्यं सदा चाप्रतिगृह्णताम् ।
अर्धं च रात्र्याः स्वपतां दिवा चास्वपतां तथा ४६
कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
दयां च संविभागं च नित्यमेवान्वमोदताम् ।
कालो यातः सुखेनैव धर्ममार्गे निवर्तताम् ॥ ४७
त्रस्तं विषण्णमुद्विग्नं भयार्तं व्याधिपीडितम् ।
हृतस्वं व्यसनार्तं च नित्यमाश्वासयन्ति ते ॥४८
धर्ममेवानुवर्तन्ते न हिंसन्ति परस्परम् ।
अनुकूलाश्च कार्येषु गुरुवृद्धोपसेविनः ॥ ४९
पितॄन्देवातिथींश्चैव गुरूंश्चैवाभ्यपूजयन् ।
अवशेषाणि चाश्नन्ति नित्यं सत्यतपोधृताः॥५०
नैकेऽश्नन्ति सुसंपन्नं न गच्छन्ति परस्त्रियम् ।
सर्वभूतेष्ववर्तन्त यथाऽऽत्मनि दयां प्रति ॥ ५१
नैवाकाशे न पशुषु नायोनौ च न पर्वसु ।
इन्द्रियस्य विसर्गं ते रोचयन्ति कदाचन ॥ ५२
नित्यं दानं तथा दाक्ष्यमार्जवं चैव नित्यदा ।
उत्साहोऽथानहंकारः परमं सौहृदं क्षमा ॥ ५३
सत्यं दानं तपः शौचं कारुण्यं वागनिष्ठुरा ।
मित्रेषु चानभिद्रोहः सर्वं तेष्वभवत्प्रभो ॥ ५४
निद्रा तन्द्रीरसंप्रीतिरसूयाऽथानवेक्षिता ।
अरतिश्च विषादश्च स्पृहा चाप्यविशन्न तान् ॥५५
साऽहमेवंगुणेष्वेव दानवेष्ववसं पुरा ।
प्रजासर्गमुपादाय यावद्गुणविपर्ययम् ॥ ५६
ततः कालविपर्यासे तेषां गुणविपर्ययात् ।
अपश्यं निर्गतं धर्मं कामक्रोधवशात्मनाम् ॥५७
सभासदां च वृद्धानां सतां कथयतां कथाः ।
प्राहसन्नभ्यसूयंश्च सर्ववृद्धान्गुरून्परान् ॥ ५८
युवानश्च समासीना वृद्धानपि गतान्सतः ।
नाभ्युत्थानाभिवादाभ्यां यथापूर्वमपूजयन् ॥५९
वर्तयत्येव पितरि पुत्रः प्रभवते तथा ।
अमित्रभृत्यतां प्राप्य ख्यापयन्त्यनपत्रपाः ॥ ६०
तथा धर्मादपेतेन कर्मणा गर्हितेन ये ।
महतः प्राप्नुवन्त्यर्थांस्तेषां तत्राभवत्स्पृहा ॥ ६१
उच्चैश्चाभ्यवदन्रात्रौ नीचैस्तत्राग्निरज्वलत् ।
पुत्राः पितॄनत्यचरन्नार्यश्चात्यचरन्पतीन् ॥ ६२
मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
गुरुत्वान्नाभ्यनन्दन्त कुमारान्नान्वपालयन् ॥६३

नचाप्यासन्प्रगेशयाः इति घ. पाठः ॥ ४४ ॥ कार्यं कृतं चान्ववेक्ष्य इति ट. पाठः ॥ ४५ ॥ भृत्या भर्त्रन्तरं प्राप्य इति ट. पाठः ॥ ६० ॥

भिक्षां बलिमदत्त्वा च स्वयमन्नानि भुञ्जते ।
अनिष्ट्वाऽसंविभज्याथ पितृदेवातिथीन्गुरून् ॥६४
न शौचमन्वरुद्ध्यन्त तेषां सूदजनास्तथा ।
मनसा कर्मणा वाचा भक्ष्यमासीदनावृतम् ॥६५
'बालानां प्रेक्षमाणानां भक्ताान्यश्नन्ति मोहिताः ।
एको दासो भवेत्तेषां तेषां दासीद्वयं तथा ॥ ६६
त्रिगवा दानवाः केचिच्चतुरोजास्तथा परे ।
षडश्वाः सप्तमातङ्गाः पञ्चमाहिषिकाः परे ॥ ६७
रात्रौ दधि च सक्तूंश्च नित्यमेवाविवर्जिताः ।
अन्तर्दशाहे चाश्नन्ति गवां क्षीरं विचेतनाः ॥ ६८
क्रमदोहं न कुर्वन्ति वत्सस्तन्यानि भुञ्जते ।
अनाथां कृपणां भार्यां घ्नन्ति नित्यं शपन्ति च ६९
शूद्रान्नपुष्टा विप्रास्तु निर्लज्जाश्च भवन्त्युत ।
संकीर्णानि च धान्यानि नात्यवेक्षत्कुटुंबिनी॥७०
मार्जारकुक्कुटश्वानैः क्रीडां कुर्वन्ति मानवाः ।
गृहे कण्टकिनो वृक्षास्तथा निष्पाववल्लरी ॥ ७१
यज्ञियाश्च तथा वृक्षास्तेषामासन्दुरात्मनाम् ।
कूपस्नानरता नित्यं पर्वमैथुनगामिनः ॥ ७२
तिलानश्नन्ति रात्रौ च तैलाभ्यक्ताश्च शेरते ।
विभीतककरञ्जानां छायामूलनिवासिनः ॥ ७३
करवीरं च ते पुष्पं धारयन्ति च मोहिताः ।
पद्मबिजानि खादन्ति पुष्पं जिघ्रन्ति मोहिताः ॥
न भोक्ष्यन्ति तथा नित्यं दैत्याः कालेन मोहिताः ।
निन्दन्ति स्तवनं विष्णोस्तस्य नित्यद्विषो जनाः ७५
होमधूमो न तत्रासीद्वेदघोषस्तथैव च ।
यज्ञाश्च न प्रवर्तन्ते यथापूर्वं गृहेगृहे ॥ ७६
शिष्याचार्यक्रमो नासीत्पुत्रैरात्मपितुः पिता ।
विष्णुं ब्रह्मण्यदेवेशं हित्वा पाषण्डमाश्रिताः॥७७
हव्यकव्यविहीनाश्च ज्ञानाध्ययनवर्जिताः ।
देवस्वादानरुचयो ब्रह्मस्वरुचयस्तथा ।
स्तुतिमङ्गलहीनानि देवस्थानानि सर्वशः ॥' ७८
विप्रकीर्णानि धान्यानि काकमूषिकभोजनम् ।
अपावृतं पयोतिष्ठदुच्छिष्टाश्चास्पृशन्घृतम् ॥ ७९
कुद्दालं दात्रपिटकं प्रकीर्णं कांस्यभोजनम् ।
द्रव्योपकरणं सर्वं नान्ववैक्षत्कुटुम्बिनी ॥ ८०
प्राकारागारविध्वंसान्न स्म ते प्रतिकुर्वते ।
'क्षुद्राः संस्कारहीनाश्च नार्यो क्षुदरपोषणाः ॥८१
शौचाचारपरिभ्रष्टा निर्लज्जा भोगवञ्चिताः ।
उभाभ्यामेव पाणिभ्यां शिरःकण्डूयनान्विताः ।
गृहजालाभिसंस्थाना ह्यासंस्तत्र स्त्रियः पुनः ॥८२
श्वश्रूश्वशुरयोर्मध्ये भर्तारं कृतकं यथा ।
प्रेक्षयन्ति च निर्लज्जा नार्यः कुलजलक्षणाः ॥' ८३
नाद्रियन्ते पशून्बद्धा यवसेनोदकेन च ।
बालानां प्रेक्षमाणानां स्वयं भक्ष्यमभक्षयन् ।
तथा भृत्यजनं सर्वमसंतर्प्य च दानवाः ॥ ८४
पायसं कृसरं मांसमपूपानथ शष्कुलीः ।
अपाचयन्नात्मनोऽर्थे वृथा मांसान्यभक्षयन् ॥ ८५
उत्सूर्यशायिनश्चासन्सर्वे चासन्प्रगेशयाः ।
आवृत्तकलहाश्चात्र दिवारात्रं गृहेगृहे ॥ ८६
अनार्याश्चार्यमासीनं पर्युपासन्न तत्र ह ।
आश्रमस्थान्विकर्मस्थाः प्राद्विषन्त परस्परम् ॥ ८७
संकराश्चाभ्यवर्तन्त न च शौचमवर्तत ।
ये च वेदविदो विप्रा विस्पष्टमनृचश्च ये ।
निरन्तरविशेषास्ते बहुमानावमानयोः ॥ ८८
भावमाभरणं वेषं गतं स्थितमवेक्षितम् ।
असेवन्त भुजिष्या वै दुर्जनाचरितं विधिम् ॥८९
स्त्रियः पुरुषवेषेण पुंसः स्त्रीवेषधारिणः ।
क्रीडारतिविहारेषु परां मुदमवाप्नुवन् ॥ ९०
प्रभवद्भिः पुरा दायानर्हेभ्यः प्रतिपादितान् ।
नाभ्यवर्न्तत नास्तिक्याद्वर्तन्तः संभवेष्वपि ॥९१
मित्रेणाभ्यर्थितं द्रव्यमर्थी संश्रयते क्वचित् ।
बालकोट्यग्रमात्रेण स्वार्थेनाघ्नत तद्वसु ॥ ९२
परस्वादानरुचयो विपणव्यवहारिणः ।
अदृश्यन्तार्यवर्णेषु शूद्राश्चापि तपोधनाः ॥ ९३
अधीयतेऽव्रताः केचिद्वृथा व्रतमथापरे ।
अशुश्रूषुर्गुरोः शिष्यः कश्चिच्छिष्यसखो गुरुः ॥९४

प्रकीर्णं कांस्यभाजनमिति झ. पाठः ॥ ८० ॥

पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

पिता चैव जनित्री च श्रान्तौ वृत्तोत्सवाविव ।
अप्रभुत्वे स्थितौ वृद्धावन्नं प्रार्थयतः सुतान् ॥ ९५
तत्र वेदविदः प्राज्ञा गाम्भीर्ये सागरोपमाः ।
कृष्यादिष्वभवन्सक्ता मूर्खाः श्राद्धान्यभुञ्जत ९६
प्रातः सायं च सुप्रश्नं कल्पनं प्रेषणक्रियाः ।
शिष्यानप्रहितास्तेषामकुर्वन्गुरवश्च ह ॥ ९७
श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यानशासत ।
अन्वशासच्च भर्तारं समाहूयाभिजल्पति ॥ ९८
प्रयत्नेनापि चारक्षच्चित्तं पुत्रस्य वै पिता ।
व्यभजच्चापि संरम्भाद्दुःखवासं तथाऽवसत् ॥९९
अग्निदाहेन चोरैर्वा राजभिर्वा हृतं धनम् ।
दृष्ट्वा द्वेषात्प्राहसन्त सुहृत्संभाविता ह्यपि ॥ १००
कृतघ्ना नास्तिकाः पापा गुरुदाराभिमर्शिनः ।
'श्वशुरानुगताः सर्वे ह्युत्सृज्य पितरौ सुताः ॥१०१
स्वकर्मणा च जातोऽहमित्येवंवादिनस्तथा ।'
अभक्ष्यभक्षणरता निर्मर्यादा हतत्विषः ॥ १०२
तेष्वेवमादीनाचारानाचरत्सु विपर्यये ।
नाहं देवेन्द्र वत्स्यामि दानवेष्विति मे मतिः १०३
तन्मां स्वयमनुप्राप्तामभिनन्द शचीपते ।
त्वयाऽर्चितां मां देवेश पुरो धास्यन्ति देवताः १०४
यत्राहं तत्र मत्कान्ता मद्विशिष्टा मदर्पणाः ।
सप्तदेव्यो जयाष्टम्यो वासमेष्यन्ति तेऽष्टधा॥१०५
आशा श्रद्धा धृतिः क्षान्तिर्विजितिः सन्नतिः क्षमा।
अष्टमी वृत्तिरेतासां पुरोगा पाकशासन ॥ १०६
ताश्चाहं चासुरांस्त्यक्त्वा युष्मद्विषयमागताः ।
त्रिदशेषु निवत्स्यामो धर्मनिष्ठान्तरात्मसु ॥ १०७
इत्युक्तवचनां देवीं प्रीत्यर्थं च ननन्दतुः ।
नारदश्चात्र देवर्षिर्वृत्रहन्ता च वासवः ॥ १०८
ततोऽनलसखो वायुः प्रववौ देववर्त्मसु ।
इष्टगन्धः सुखस्पर्शः सर्वेन्द्रियसुखावहः ॥ १०९
शुचौ चाभ्यर्थिते देशे त्रिदशाः प्रायशः स्थिताः ।
लक्ष्मीसहितमासीनं मघवन्तं दिदृक्षवः ॥ ११०

ततो दिवं प्राप्य सहस्रलोचनः
श्रियोपपन्नः सुहृदा महर्षिणा ।
रथेन हर्यश्वयुजा सुरर्षभः
सदः सुराणामभिसत्कृतो ययौ ॥ १११
अथेङ्गितं वज्रधरस्य नारदः
श्रियश्च देव्या मनसा विचारयन् ।
श्रियै शशंसामरदृष्टपौरुषः
शिवेन तत्रागमनं महर्षिभिः ॥ ११२
ततोऽमृतं द्यौः प्रववर्ष भास्वती
पितामहस्यायतने स्वयंभुवः ।
अनाहता दुन्दुभयोऽथ नेदिरे
तथा प्रसन्नाश्च दिशश्चकाशिरे ॥ ११३
यथर्तु सस्येषु ववर्ष वासवो
न धर्ममार्गाद्विचचाल कश्चन ।
अनेकरत्नाकरभूषणा च भूः
सुघोषघोषाश्च दिवौकसां जये ॥ ११४
क्रियाभिरामा मनुजा मनस्विनो
बभुः शुभे पुण्यकृतां पथि स्थिताः ।
नरामराः किन्नरयक्षराक्षसाः
समृद्धिमन्तः सुमनस्विनोऽभवन् ॥ ११५
न जात्वकाले कुसुमं कुतः फलं
पपात वृक्षात्पवनेरितादपि ।
रसप्रदाः कामदुघाश्च धेनवो
न दारुणा वाग्विचचार कस्यचित् ॥११६
इमां सपर्यां सह सर्वकामदैः
श्रियाश्च शक्रप्रमुखैश्च दैवतैः ।
पठन्ति ये विप्रसदः समागताः
समृद्धकामाः श्रियमाप्नुवन्ति ते ॥ ११७
त्वया कुरूणां वर यत्प्रचोदितं
भवाभवस्येह परं निदर्शनम् ।
तदद्य सर्वं परिकीर्तितं मया
परीक्ष्य तत्त्वं परिगन्तुमर्हसि ॥ ११८
'संस्मृत्य बुद्धीन्द्रियगोचरातिगं
स्वगोचरे सर्वकृतालयं तम् ।
हरिं महापापहरं जनास्ते
संस्मृत्य संपूज्य विधूतपापाः ॥ ११९

यमैश्च नित्यं नियमैश्च संयता-
स्त्वं च विष्णोः परिपश्यमानाः ।
देवानुसारेण विमुक्तियोगं
ते गाहमानाः परमाप्नुवन्ति ॥ १२०
एवं राजेन्द्र सततं जपहोमपरायणः ।
वासुदेवपरो नित्यं ज्ञानध्यानपरायणः ॥ १२१
दानधर्मरतिर्नित्यं प्रजास्त्वं परिपालय ।
वासुदेवपरो नित्यं ज्ञानध्यानपरायणान् ।
विशेषेणार्चयेथास्त्वं सततं पर्युपास्व च ॥' १२२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

## षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

भीष्मेण युधिष्ठिरंप्रति वैराग्यादिपूर्वकभगवज्ज्ञानस्य श्रेयःसाधनत्वपरासितजैगीषव्यसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
किंशीलः किंसमाचारः किंविद्यः किंपराक्रमः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ १
भीष्म उवाच ।
मोक्षधर्मेषु नियतो लघ्वाहारो जितेन्द्रियः ।
प्राप्नोति ब्रह्मणः स्थानं तत्परं प्रकृतेर्ध्रुवम् ॥ २
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
जैगीषव्यस्य संवादमसितस्य च भारत ॥ ३
'महादेवान्तरे वृत्तं देव्याश्चैवान्तरे तथा ।
यथावच्छृणु राजेन्द्र ज्ञानदं पापनाशनम् ॥' ४
जैगीषव्यं महाप्रज्ञं धर्माणामागतागमम् ।
अक्रुध्यन्तमहृष्यन्तमसितो देवलोऽब्रवीत् ॥ ५
न प्रीयसे वन्द्यमानो निन्द्यमानो न कुप्यसे ।
का ते प्रज्ञा कुतश्चैषा किं ते तस्याः परायणम् ॥६
भीष्म उवाच ।
इति तेनानुयुक्तः स तमुवाच महातपाः ।
महद्वाक्यमसंदिग्धं पुष्कलार्थपदं शुचि ॥ ७
जैगीषव्य उवाच ।
या गतिर्या परा निष्ठा या शान्तिः पुण्यकर्मणाम् ।
तां तेऽहं संप्रवक्ष्यामि यां मां पृच्छसि वै द्विज ॥८
निन्दत्सु च समा नित्यं प्रशंसत्सु च देवल ।
निह्नवन्ति च ये तेषां समयं सुकृतं च यत् ॥ ९
उक्ताश्च न विवक्ष्यन्ति वक्तारमहिते हितम् ।
प्रतिहन्तुं न चेच्छन्ति हन्तारं वै मनीषिणः ॥१०
नाप्राप्तमनुशोचन्ति प्राप्तकालानि कुर्वते ।
न चातीतानि शोचन्ति न चैतान्प्रतिजानते ॥ ११
संप्राप्तानां च पूज्यानां कामादर्थेषु देवल ।
यथोपपत्ति कुर्वन्ति शक्तिमन्तो धृतव्रताः ॥१२
पक्वविद्या महाप्राज्ञा जितक्रोधा जितेन्द्रियाः ।
मनसा कर्मणा वाचा नापराध्यन्ति कस्यचित् ॥१३
अनीर्षवो न चान्योन्यं विहिंसन्ति कदाचन ।
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥ १४
निन्दाप्रशंसे चात्यर्थं न वदन्ति परस्य च ।
न च निन्दाप्रशंसाभ्यां विक्रियन्ते कदाचन ॥ १५
सर्वतश्च प्रशान्ता ये सर्वभूतहिते रताः ।
न क्रुध्यन्ति न हृष्यन्ति नापराध्यन्ति कस्यचित् ॥
विमुच्य हृदयग्रन्थिं चङ्क्रम्यन्ते यथासुखम् ।
न चैषां बान्धवाः सन्ति ये चान्येषां च बान्धवाः ॥
अमित्राश्च न सन्त्येषां ये चामित्रा न कस्यचित् ।
य एवं कुर्वते मर्त्याः सुखं जीवन्ति सर्वदा ॥१८
ये धर्मं चानुरुध्यन्ते धर्मज्ञा द्विजसत्तमाः ।
ये ह्यतो विच्युता मार्गात्ते हृष्यन्त्युद्विजन्ति च १९
आस्थितस्तमहं मार्गमसूयिष्यामि कं कथम् ।
निन्द्यमानः प्रशस्तो वा हृष्येयं केन हेतुना ॥ २०
यद्यदिच्छन्ति तत्तस्मादधिगच्छन्ति मानवाः ।
न मे निन्दाप्रशंसाभ्यां ह्रासवृद्धी भविष्यतः ॥२१

षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

या शक्तिः पुण्यकर्मणां इति ट. पाठः ॥ ८ ॥ संप्रदानं च पूज्यानां इति ठ. थ. पाठः ॥ १२ ॥

अमृतस्येव संतृप्येदवमानस्य तत्त्ववित् ।
विषस्येवोद्विजेन्नित्यं संमानस्य विचक्षणः ॥ २२
अवज्ञातः सुखं शेते इह चामुत्र चोभयोः ।
विमुक्तः सर्वपापेभ्यो योऽवमन्ता स बुध्यते ॥२३
परां गतिं च ये केचित्प्रार्थयन्ति मनीषिणः ।
एतद्व्रतं समाश्रित्य सुखमेधन्ति ते जनाः ॥ २४
सर्वतश्च समाहृत्य क्रतून्सर्वाञ्जितेन्द्रियः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ २५
नास्य देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
पदमन्ववरोहन्ति प्राप्तस्य परमां गतिम् ॥ २६
'एतच्छ्रुत्वा मुनेस्तस्य वचनं देवलस्तथा ।
तदधीनो भवच्छिष्यः सर्वद्वन्द्वविनिष्ठितः ॥ २७
अथान्यत्तु पुरावृत्तं जैगीषव्यस्य धीमतः ।
शृणु राजन्नवहितः सर्वज्ञानसमन्वितः ॥ २८
यमाहुः सर्वलोकेशं सर्वलोकनमस्कृतम् ।
अष्टमूर्तिं जगन्मूर्तिमिष्टसंधिविभूषितम् ॥
यं प्राप्ता न विषीदन्ति न शोचन्त्युद्विजन्ति च २९
यस्य स्वाभाविकी शक्तिरिदं विश्वं चराचरम् ।
याति सज्जति सर्वात्मा स देवः परमेश्वरः ॥ ३०
मेरोरुत्तरपूर्वे तु सर्वरत्नविभूषिते ।
अचिन्त्ये विमले स्थाने सर्वर्तुकुसुमान्विते ॥ ३१
वृक्षैश्च शोभिते नित्यं दिव्यवायुसमीरिते ।
नानाभूतगणैर्युक्तः सर्वदेवनमस्कृतः ॥ ३२
तत्र विद्याधरगणा गन्धर्वाप्सरसां गणाः ।
लोकपालाः समुद्राश्च नद्यः शैलाः सरांसि च ॥३३
ऋषयो वालखिल्याश्च यज्ञाः स्तोभाह्वयास्तथा ।
उपासांचक्रिरे देवं प्रजानां पतयस्तथा ॥ ३४
तत्र रुद्रो महादेवो देव्या चैव सहोमया ।
आस्ते वृषध्वजः श्रीमान्सोमसूर्याग्निलोचनः॥ ३५
तत्रैवं देवमालोक्य देवी धात्री विभावरी ।
उमा देवी परेशानमपृच्छद्विनयान्विता ॥ ३६
अर्थः कोऽथार्थशक्तिः का भगवन्ब्रूहि मेऽर्थितः ।
तयैवं परिपृष्टोऽसौ प्राह देवो महेश्वरः ॥ ३७
अर्थोऽहमर्थशक्तिस्त्वं भोक्ताऽहं भोज्यमेव च ।
रूपं विद्धि महाभागे प्रकृतिस्त्वं परो ह्यहम् ॥३८
अहं विष्णुरहं ब्रह्मा ह्यहं यज्ञस्तथैव च ।
आवयोर्न च भेदोऽस्ति परमार्थस्ततोऽबले ।
तथापि विज्ञस्ते भेदं किं मां त्वं परिपृच्छसि ॥ ३९
एवमुक्ता ततः प्राह ह्यधिकं ह्येतयोर्वद ।
श्रेष्ठं वेद महादेव नम इत्येव भामिनी ॥ ४०
तदन्तरे स्थितो विद्वान्वसुरूपो महामुनिः ।
जैगीषव्यः स्मयन्प्राह ह्यर्थ इत्येव नादयन् ॥ ४१
श्रेष्ठोन्योऽस्मान्महीपिण्डा तल्लीना शक्तिरापरा ।
मुद्रिकादिविशेषेण विस्तृता संभृतेति च ॥ ४२
तच्छ्रुत्वा वचनं देवी कोसावित्यब्रवीद्रुषा ।
वाक्यमस्याद्य संभङ्क्त्वा प्रोक्तवानिति शंकरम्४३
तच्छ्रुत्वा निर्गतो धीमानाश्रमं स्वं महामुनिः ।
स्थानात्स्वर्गगणे विद्वान्योगैश्वर्यसमन्वितः ॥ ४४
ततः प्रहस्य भगवान्सर्वपापहरो हरः ।
प्राह देवीं प्रशान्तात्मा जैगीषव्यो महामुनिः॥४५
भक्तो मम सखा चैव शिष्यश्चात्र महामुनिः ।
जैगीषव्य इति ख्यातः प्रोक्त्वासौ निर्गतः शुभे४६
तच्छ्रुत्वा साऽथ संक्रुद्धा न न्याय्यं तेन वै कृतम् ।
विकृताऽहं त्वया देव मुनिना च तथाकृता ॥ ४७
अतंज्ञादयदेवेश मध्ये प्राप्तं न तच्छ्रुतम् ।
तच्छ्रुत्वा भगवानाह महादेवः पिनाकधृत् ॥ ४८
निरपेक्षो मुनिर्योगी मामुपाश्रित्य संस्थितः ।
निर्द्वन्द्वः सततं धीमान्समरूपस्वभावधृत् ॥ ४९
तस्मात्क्षमस्व तं देवि रक्षितव्यस्त्वया च सः ॥ ५०
इत्युक्ता प्राह सा देवी मुनेस्तस्य महात्मनः ।
निराशत्वमहं द्रष्टुमिच्छाम्यन्तकनाशन ॥ ५१
तथेति चोक्त्वा तां देवो वृषमारुह्य सत्वरम् ।
देवगन्धर्वसङ्घैश्च स्तूयमानो जगत्पतिः ॥ ५२
अजरामरशुद्धात्मा यत्रास्ते स महामुनिः ।
इतस्ततः समाहृत्य वीरसंघैर्महायशाः ॥ ५३
देहमावरणार्थं वै संसरन्स तदा मुनिः ।
प्रत्युद्गम्य महादेवं यथार्हं प्रतिपूज्य च ।
पुनः स पूर्ववत्कथां सूच्या सूत्रेण सूचयत् ॥ ५४

तमाह भगवाञ्शंभुः किं प्रदास्यामि ते मुने ।
वृणीष्व मत्तः सर्वं त्वं जैगीषव्य यदीच्छसि ॥५५
नावलोकयमानस्तु देवदेवं महामुनिः ।
अनवाप्तं न पश्यामि त्वत्तो गोवृषभध्वज ।
कृतार्थः परिपूर्णोऽहं यत्ते कार्यं तु गम्यताम् ॥५६
प्रहसंस्तु पुनः शर्वो वृणीष्वेति तमब्रवीत् ।
अवश्यं हि वरो मत्तः श्राव्यं वरमनुत्तमम् ॥ ५७
जैगीषव्यस्तमाहेदं श्रोतव्यं च त्वया मम ।
सूचीमनु महादेव सूत्रं समनुगच्छतः ॥ ५८
ततः प्रहस्य भगवान्गौरीमालोक्य शङ्करः ।
स्वस्थानं प्रययौ हृष्टः सर्वदेवनमस्कृतः ॥ ५९
एतत्ते कथितं राजन्यसात्त्वं परिपृच्छसि ।
निर्द्वन्द्वा योगिनो नित्याः सर्वशस्ते स्वयंभुवः ॥६०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

---

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

भीष्मेण युधिष्ठिरंप्रति सद्गुणानां जनवशीकरणकारणत्वे दृष्टान्ततया उग्रसेनाय कृष्णोदितनारदगुणानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
प्रियः सर्वस्य लोकस्य सर्वसत्वाभिनन्दितः ।
गुणैः सर्वैरुपेतश्च कोन्वस्ति भुवि मानवः ॥ १
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि पृच्छतो भरतर्षभ ।
उग्रसेनस्य संवादं नारदे केशवस्य च ॥ २
उग्रसेन उवाच ।
यस्य संकल्पते लोको नारदस्य प्रकीर्तने ।
मन्ये स गुणसंपन्नो ब्रूहि तन्मम पृच्छतः ॥ ३
वासुदेव उवाच ।
कुकुराधिप यान्मन्ये शृणु तान्मे विवक्षतः ।
नारदस्य गुणान्साधून्संक्षेपेण नराधिप ॥ ४
न चारित्रनिमित्तोऽस्याहंकारो देहपातनः ।
अभिन्नश्रुतचारित्रस्तस्मात्सर्वत्र पूजितः ॥ ५
अरतिः क्रोधचापल्ये भयं नैतानि नारदे ॥
अदीर्घसूत्रः शूरश्च तस्मात्सर्वत्र पूजितः ॥ ६
उपास्यो नारदो बाढं वाचि नास्य व्यतिक्रमः ।
कामतो यदि वा लोभात्तस्मात्सर्वत्र पूजितः ॥ ७
अध्यात्मविधितत्त्वज्ञः क्षान्तः शक्तो जितेन्द्रियः ।
ऋजुश्च सत्यवादी च तस्मात्सर्वत्र पूजितः ॥ ८
तेजसा यशसा बुद्ध्या ज्ञानेन विनयेन च ।
जन्मना तपसा वृद्धस्तस्मात्सर्वत्र पूजितः ॥ ९
सुशीलः सुखसंवेशः सुभोजः स्वादरः शुचिः ।
सुवाक्यश्चाप्यनीर्ष्यश्च तस्मात्सर्वत्र पूजितः ॥ १०
कल्याणं कुरुते बाढं पापमस्मिन्न विद्यते ।
न प्रीयते परानर्थैस्तस्मात्सर्वत्र पूजितः ॥ ११
वेदश्रुतिभिराख्यानैरर्थानभिजिगीषति ।
तितिक्षुरनवज्ञश्च तस्मात्सर्वत्र पूजितः ॥ १२
समत्वाच्च प्रियो नास्ति नाप्रियश्च कथंचन ।
मनोऽनुकूलवादी च तस्मात्सर्वत्र पूजितः ॥ १३
बहुश्रुतश्चित्रकथः पण्डितोऽनलसोऽशठः ।
अदीनोऽक्रोधनोऽलुब्धस्तस्मात्सर्वत्र पूजितः १४
नार्थे धने वा कामे वा भूतपूर्वोऽस्य विग्रहः ।
दोषाश्चास्य समुच्छिन्नास्तस्मात्सर्वत्र पूजितः ॥१५
दृढभक्तिरनिन्द्यात्मा श्रुतवाननृशंसवान् ।
वीतसंमोहदोषश्च तस्मात्सर्वत्र पूजितः ॥ १६
असक्तः सर्वसङ्गेषु सक्तात्मेव च लक्ष्यते ।
अदीर्घसंशयो वाग्मी तस्मात्सर्वत्र पूजितः ॥ १७
समाधिर्नास्य कामार्थे नात्मानं स्तौति कर्हिचित् ।
अनीर्षुर्मृदुसंवादस्तस्मात्सर्वत्र पूजितः ॥ १८
'नाहंकारे मुक्तिरस्य चारित्रे बुद्धिरास्थिता ।
वेदार्थविद्विभागेन यज्ञविद्योगवित्कविः ।
भक्तिमान्स सदा विद्वांस्तस्मात्सर्वत्र पूजितः ॥१९
त्रिगुणं गुणभोक्तारं पञ्चयज्ञात्मकं तथा ।
यथावत्स विजानाति तस्मात्सर्वत्र पूजितः ॥ २०

---

तितिक्षुरनवद्यश्चेति ट. पाठः ॥ १२ ॥

कल्याणं कुरुते बाढं पापमस्मिन्न विद्यते ।
न प्रीयते परानर्थैस्तस्मात्सर्वत्र पूज्यते ॥' २१
लोकस्य विविधं चित्तं प्रेक्षते चाप्यकुत्सयन् ।
संसर्गविद्याकुशलस्तस्मात्सर्वत्र पूजितः ॥ २२
नासूयत्यागमं कंचित्स्वनयेनोपजीवति ।
अवन्ध्यकालोऽवश्यात्मा तस्मात्सर्वत्र पूजितः २३
कृतश्रमः कृतप्रज्ञो न च तृप्तः समाधितः ।
नित्ययुक्तोऽप्रमत्तश्च तस्मात्सर्वत्र पूजितः ॥ २४
नापत्रपश्च युक्तश्च नियुक्तः श्रेयसे परैः ।
अभेत्ता परगुह्यानां तस्मात्सर्वत्र पूजितः ॥ २५
न हृष्यत्यर्थलाभेषु नालाभे तु व्यथत्यपि ।
स्थिरबुद्धिरसक्तात्मा तस्मात्सर्वत्र पूजितः ॥ २६
तं सर्वगुणसंपन्नं दक्षं शुचिमनामयम् ।
कालज्ञं च प्रियज्ञं च कः प्रियं न करिष्यति ॥२७
'इत्युक्तः संप्रशस्यैनमुग्रसेनो गतो गृहात् ।
आस्ते कृष्णस्तथैकान्ते पर्यङ्के रत्नभूषिते ॥ २८
कदाचित्तत्र भगवान्प्रविवेश महामुनिः ।
तमभ्यर्च्य यथान्यायं तूष्णीमास्ते जनार्दनः ॥२९
तं खिन्नमिव संलक्ष्य केशवं वाक्यमब्रवीत् ।
किमिदं केशव तव वैमनस्यं जनार्दन ।
अभूतपूर्वं गोविन्द तन्मे व्याख्यातुमर्हसि ॥ ३०
श्रीवासुदेव उवाच ।
नासुहृत्परमं मेऽद्य नापदोऽर्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वाऽप्यनात्मवान् ॥
स त्वं सुहृच्च विद्वांश्च जितात्मा श्रोतुमर्हसि ।
अप्येतद्धृदि यद्दुःखं तद्भवाञ्श्रोतुमर्हति ॥ ३२
दास्यमैश्वर्यवादेन ज्ञातीनां च करोम्यहम् ।
द्विषन्ति सततं क्रुद्धा ज्ञातिसंबन्धिबान्धवाः ॥ ३३
दिव्या अपि तथा भोगा दत्तास्तेषां मया पृथक् ।
तथाऽपि च द्विषन्तो मां वर्तन्ते च परस्परम् ३४
नारद उवाच ।
अनायसेन शस्त्रेण परिमृज्यानुमृज्य च ।
जिह्वामुद्धर चैतेषां न वक्ष्यन्ति ततः परम् ॥ ३५
भगवानुवाच ।
अनायसं कथं विन्द्यां शस्त्रं मुनिवरोत्तम ।
येनैषामुद्धरे जिह्वां ब्रूहि तन्मे यथातथम् ॥ ३६
नारद उवाच ।
गोहिरण्यं च वासांसि रत्नाद्यं यद्धनं बहु ।
आस्ये प्रक्षिप चैतेषां शस्त्रमेतदनायसम् ॥ ३७
सुहृत्संबन्धिमित्राणां गुरूणां स्वजनस्य च ।
आख्यातं शस्त्रमेतद्धि तेन च्छिन्धि पुनःपुनः ॥३८
तवैश्वर्यप्रदानानि श्लाघ्यमेषां वचांसि च ।
समर्थं त्वामभिज्ञाय प्रवदन्ति च ते नराः ॥ ३९
भीष्म उवाच ।
ततः प्रहस्य भगवान्संपूज्य च महामुनिम् ।
तथाऽकरोन्महातेजा मुनिवाक्येन चोदितः ॥ ४०
एवंप्रभावो ब्रह्मर्षिर्नारदो मुनिसत्तमः ।
पृष्टवानसि यन्मां त्वं तदुक्तं राजसत्तम ॥ ४१
सर्वधर्महिते युक्ताः सत्यधर्मपरायणाः ।
लोकप्रियत्वं गच्छन्ति ज्ञानविज्ञानकोविदाः ॥'४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

## अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

भीष्मेण युधिष्ठिरंप्रति सृष्ट्यादिप्रतिपादकव्यासशुकसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
आद्यन्तं सर्वभूतानां ज्ञातुमिच्छामि कौरव ।
ध्यानं कर्म च कालं च तथैवायुर्युगेयुगे ॥ १
लोकतत्त्वं च कार्त्स्न्येन भूतानामागतिं गतिम् ।
सर्गश्च निधनं चैव कुत एतत्प्रवर्तते ॥ २
'भेदकं भेदतत्त्वं च तथाऽन्येषां मतं तथा ।

अवस्थात्रितयं चैव यादृशं च पितामह ॥' ३
यदि तेऽनुग्रहे बुद्धिरस्मास्विह सतां वर ।
एतद्भवन्तं पृच्छामि तद्भवान्प्रब्रवीतु मे ॥ ४
पूर्वं हि कथितं श्रुत्वा भृगुभाषितमुत्तमम् ।
भरद्वाजस्य विप्रर्षेस्ततो मे बुद्धिरुत्तमा ॥ ५
जाता परमधर्मिष्ठा दिव्यसंस्थानसंस्थिता ।
ततो भूयस्तु पृच्छामि तद्भवान्वक्तुमर्हति ॥ ६
भीष्म उवाच ।
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
जगौ यद्भगवान्व्यासः पुत्राय परिपृच्छते ॥ ७
अधीत्य वेदानखिलान्साङ्गोपनिषदस्तथा ।
अन्विच्छन्नैष्ठिकं कर्म धर्मनैपुणदर्शनात् ॥ ८
कृष्णद्वैपायनं व्यासं पुत्रो वैयासकिः शुकः ।
पप्रच्छ संशयमिमं छिन्नधर्मार्थसंशयम् ॥ ९
श्रीशुक उवाच ।
भूतग्रामस्य कर्तारं कालज्ञाने च निश्चितम् ।
'ज्ञानं ब्रह्म च योगं च गवात्मकमिदं जगत् ॥ १०
त्रितये त्वेनमायाति तथा ह्येषोऽपि वा पुनः ।
केनैव च विभागः स्यात्तुरीयो लक्षणैर्विना ॥ ११
ज्ञानज्ञेयान्तरे कोसौ कोयं भावस्तु भेदवत् ।
यज्ज्ञानं लक्षणं चैव तेषां कर्तारमेव च ।'
ब्राह्मणस्य च यत्कृत्यं तद्भवान्वक्तुमर्हति ॥ १२
भीष्म उवाच ।
तस्मै प्रोवाच तत्सर्वं पिता पुत्राय पृच्छते ।
अतीतानागते विद्वान्सर्वज्ञः सर्वधर्मवित् ॥ १३
'पृच्छतस्तव सत्पुत्र यथावत्कीर्तयाम्यहम् ।
शृणुष्वावहितो भूत्वा यथाऽऽवृतमिदं जगत् ॥ १४
कार्यादि कारणान्तं यत्कार्यान्तं कारणादिकम् ।
ज्ञानं तदुभयं वित्त्वा सत्यं च परमं शुभम् ॥ १५
ब्रह्मेति चाभिविख्यातं तद्धि पश्यन्ति सूरयः ।
ब्रह्मतेजोमयं भूतं भूतकारणमद्भुतम् ॥ १६
आसीदादौ ततस्त्वाहुः प्राधान्यमिति तद्विदः ।
त्रिगुणां तां महामायां वैष्णवीं प्रकृतिं विदुः ॥ १७

संशयं संशयविषयम् । छिन्नधर्मार्थसंशयं व्यास म् ॥ ९ ॥

तदीदृशमनाद्यन्तमव्यक्तमजरं ध्रुवम् ।
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे वैकृतं च तत् ॥ १८
तद्धि प्रधानमुद्दिष्टं त्रिसूक्ष्मं त्रिगुणात्मकम् ।
सम्यग्योगगुणं स्वस्थं तदिच्छाक्षोभितं महत् ॥ १९
शक्तित्रयात्मिका तस्य प्रकृतिः कारणात्मिका ।
अस्वतन्त्रा च सततं विदधिष्ठानसंयुता ॥ २०
स्वभावाख्यं समापन्ना मोहविग्रहधारिणी ।
विविधस्यास्य जीवस्य भोगार्थं समुपागता ॥ २१
यथा संनिधिमात्रेण गन्धक्षोभाय जायते ।
मनस्तद्वदशेषस्य परात्पर इति स्मृतः ॥ २२
सृष्ट्वा प्रविश्य तत्तस्मिन्क्षोभयामास विष्ठितः ।
सात्विको राजसश्चैव तामसश्च त्रिधा महान् ॥ २३
प्रधानतत्वादुद्भूतो महत्वाच्च महान्स्मृतः ।
प्रधानतत्वमुद्भूतं महत्तत्वं समावृणोत् ॥ २४
कालात्मनाऽभिभूतं तत्कालोंऽशः परमात्मनः ।
पुरुषश्चाप्रमेयात्मा स एव इति गीयते ॥ २५
त्रिगुणोसौ महाज्ञातः प्रधान इति वै श्रुतिः ॥२६
सात्विको राजसश्चैव तामसश्च त्रिधात्मकः ।
त्रिविधोऽयमहङ्कारो महत्तत्वादजायत ॥ २७
तामसोऽसावहङ्कारो भूतादिरिति संज्ञितः ।
भूतानामादिभूतत्वाद्रक्ताहिस्तामसः स्मृतः ॥२८
भूतादिः स विकुर्वाणः शिष्टं तन्मात्रकं ततः ।
ससर्ज शब्दं तन्मात्रमाकाशं शब्दलक्षणम् ॥२९
शब्दलक्षणमाकाशं शब्दतन्मात्रमावृणोत् ।
तेन संपीड्यमानस्तु स्पर्शमात्रं ससर्ज ह ॥ ३०
शब्दमात्रं तदाकाशं स्पर्शमात्रं समावृणोत् ।
ससर्ज वायुस्तेनासौ पीड्यमान इति श्रुतिः ॥ ३१
स्पर्शमात्रं तदा वायू रूपमात्रं समावृणोत् ।
तेन संपीड्यमानस्तु ससर्जाग्निमिति श्रुतिः ॥ ३२
रूपमात्रं ततो वह्निं समुत्सृज्य समावृणोत् ।
तेन संपीड्यमानस्तु रसमात्रं ससर्ज ह ॥ ३३
रूपमात्रगतं तेजो रसमात्रं समावृणोत् ।
तेन संपीड्यमानस्तु ससर्जाम्भ इति श्रुतिः ॥ ३४
रसमात्रात्मकं भूयो रसं तन्मात्रमावृणोत् ।

तेन संपीड्यमानस्तु गन्धं तन्मात्रकं ततः ॥ ३५
ससर्ज गन्धं तन्मात्रमावृणोत्करकं ततः ।
तेन संपीड्यमानस्तु काठिन्यं च ससर्ज ह ॥ ३६
पृथिवी जायते तस्माद्गन्धतन्मात्रजात्तथा ॥ ३७
अम्मयं सर्वमेवेदमापस्तस्तम्भिरे पुनः ।
भूतानीमानि जातानि पृथिव्यादीनि वै श्रुतिः ३८
भूतानां मूर्तिरेवैषामन्नं चैषां मता बुधैः ।
तस्मिंस्तस्मिंस्तु तन्मात्रा तन्मात्रा इति ते स्मृताः ३९
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥४०
एषामुद्धर्तकः कालो नानाभेदवदास्थितः ।
परमात्मा च भूतात्मा गुणभेदेन संस्थितः ।
एक एव त्रिधा भिन्नः करोति विविधाः क्रियाः ४१
ब्रह्मा सृजति भूतानि पाति नारायणोऽव्ययः ।
रुद्रो हन्ति जगन्मूर्तिः काल एष क्रियाबुधः ॥ ४२
कालोपि तन्मयोचिन्त्यस्त्रिगुणात्मा सनातनः ।
अव्यक्तोसावचिन्त्योसौ वर्तते भिन्नलक्षणः ॥ ४३
कालात्मना त्विदं भिन्नमभिन्नं श्रूयते हि यत् ।
अनाद्यन्तमजं दिव्यमव्यक्तमजरं ध्रुवम् ।'
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे संप्रवर्तते ॥ ४४

काष्ठा निमेषा दश पञ्च चैव
त्रिंशत्तु काष्ठा गणयेत्कलां ताम् ।
त्रिंशत्कलश्चापि भवेन्मुहूर्तो
भागः कलाया दशमश्च यः स्यात् ॥ ४५
त्रिंशन्मुहूर्तं तु भवेदहश्च
रात्रिश्च सङ्ख्या मुनिभिः प्रणीता ।
मासः स्मृतो रात्र्यहनी च त्रिंश-
त्संवत्सरो द्वादशमास उक्तः ॥ ४६
संवत्सरं द्वे अयने वदन्ति
सङ्ख्याविदो दक्षिणमुत्तरं च ॥ ४७

अहोरात्रौ विभजते सूर्यो मानुषलौकिकौ ।
रात्रिः स्वप्नाय संयाति चेष्टायै कर्मणामहः ॥ ४८
पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ।
शुक्लोऽहः कर्मचेष्टायां कृष्णः स्वप्नाय शर्वरी ॥ ४९
दैवे रात्र्यहनी ह्यब्दः प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ५०
ये ते रात्र्यहनी पूर्वं कीर्तिते दैवलौकिके ।
तयोः सङ्ख्याय वर्षाग्रं ब्राह्मे वक्ष्याम्यहःक्षपे ॥५१
तेषां संवत्सराग्राणि प्रवक्ष्याम्यनुपूर्वशः ।
कृते त्रेतायुगे चैव द्वापरे च कलौ तथा ॥ ५२
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ ५३
इतरेषु ससंध्येषु संध्यांशेषु ततस्त्रिषु ।
एकापायेन संयान्ति सहस्राणि शतानि च ॥ ५४
एतानि शाश्वताँल्लोकान्धारयन्ति सनातनान् ।
एतद्ब्रह्मविदां तात विदितं ब्रह्म शाश्वतम् ॥ ५५
चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे ।
नाधर्मेणागमः कश्चिद्युगे तस्मिन्प्रवर्तते ॥ ५६
इतरेष्वागमाद्धर्मः पादशस्त्ववरोप्यते ।
'सत्यं शौचं तथायुश्च धर्मश्चापैति पादशः ।'
चौर्यकानृतमायाभिरधर्मश्चोपचीयते ॥ ५७
अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
कृते त्रेतायुगे त्वेषां पादशो ह्रसते वयः ॥ ५८
वेदवादाश्चानुयुगं ह्रसन्तीतीह नः श्रुतम् ।
आयूंषि चाशिषश्चैव वेदस्यैव च यत्फलम् ॥ ५९
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ ६०
तपः परं कृतयुगे त्रेतायां सत्यमुत्तमम् ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ ६१
एतां द्वादशसाहस्रीं युगाख्यां कवयो विदुः ।
सहस्रपरिवर्तं तद्ब्राह्मं दिवसमुच्यते ॥ ६२
रात्रिस्तु तावती ब्राह्मी तदादौ विश्वमीश्वरः ।
प्रलयेत्मानमाविश्य सुप्त्वासोऽन्ते विबुध्यते ॥ ६३
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।

दशपञ्च च स्यात् इति ट. थ. ध. पाठः ॥ ४५ ॥ एकपादेन हीयन्ते इति झ. पाठः ॥ ५४ ॥ अन्ये कलियुगे नृणां युगह्रा-सानुरूपतः इति झ. पाठः ॥ ६० ॥

रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः ॥ ६४
प्रतिबुद्धो विकुरुते ब्रह्माक्षय्यं क्षपाक्षये ।
सृजते च महद्भूतं तस्माद्व्यक्तात्मकं मनः ॥ ६५
मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशं जायते तस्मात्तस्य शब्दे गुणो मतः ॥ ६६
आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ।
बलवाञ्जायते वायुस्तस्य स्पर्शो गुणो मतः ॥ ६७
वायोरपि विकुर्वाणाज्ज्योतिर्भवति भास्वरम् ।
रोचनं जनयेच्छुद्धं तद्रूपगुणमुच्यते ॥ ६८
ज्योतिषोपि विकुर्वाणाद्भवन्त्यापो रसात्मिकाः ।
अद्भ्यो गन्धवहा भूमिः पूर्वेषां सृष्टिरुच्यते ॥ ६९
'ब्रह्मतेजोमयं शुक्रं यस्य सर्वमिदं जगत् ।
एकस्य ब्रह्मभूतस्य द्वयं स्थावरजङ्गमम् ॥ ७०
अहर्मुखे विबुद्धं तत्सृजते विद्यया जगत् ।
अग्र एव महद्भूतमाशु व्यक्तात्मकं मनः ॥ ७१
अभिभूयेह चातिष्ठद्व्यसृजत्सप्त मानसान् ।
दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ॥ ७२
मनः सृष्टिं न कुरुते चोद्यमानं सिसृक्षया ।
आकाशो जायते तस्मात्तस्य शब्दो गुणो मतः ॥ ७३
आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ।
बलवाञ्जायते वायुस्तस्य स्पर्शगुणं विदुः ॥ ७४
वायोरपि विकुर्वाणाज्ज्योतिर्भूतं तमोनुदम् ।
रोचिष्णुर्जायते तत्र तद्रूपगुणमुच्यते ॥ ७५
ज्योतिषोपि विकुर्वाणाद्भवन्त्यापो रसात्मिकाः ।
अद्भ्यो गन्धवहा भूमिः पूर्वेषां सृष्टिरुच्यते ॥' ७६
गुणाः पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तरम् ।
तेषां यावद्गुणं यद्यत्तत्तावद्गुणकं स्मृतम् ॥ ७७
उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणात् ।
पृथिव्यामेव तं विद्यादपां वायोश्च संश्रितम् ॥ ७८
एते सप्तविधात्मानो नानावीर्याः पृथक्पृथक् ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ ७९
ते समेत्य महात्मानो ह्यन्योन्यमभिसंश्रिताः ।
शरीराश्रयणं प्राप्तास्ततः पुरुष उच्यते ॥ ८०
श्रयणाच्छरीरी भवति मूर्तिमान्षोडशात्मकः ।
तमाविशन्ति भूतानि महान्ति सह कर्मणा ॥ ८१
सर्वभूतान्युपादाय तपसश्चरणाय हि ।
आदिकर्ता महाभूतं तमेवाहुः प्रजापतिम् ॥ ८२
स वै सृजति भूतानि स एव पुरुषः परः ।
अजो जनयते ब्रह्मा देवर्षिपितृमानवान् ॥ ८३
लोकान्नदीः समुद्रांश्च दिशः शैलान्वनस्पतीन् ।
नरकिन्नररक्षांसि वयःपशुमृगोरगान् ।
अव्ययं च व्ययं चैव द्वयं स्थावरजङ्गमम् ॥ ८४
तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव प्रतिपाद्यन्ते सृज्यमानाः पुनःपुनः ॥ ८५
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ८६
महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्तिषु ।
विनियोगं च भूतानां धातैव विदधात्युत ॥ ८७
केचित्पुरुषकारं तु प्राहुः कर्मविदो जनाः ।
दैवमित्यपरे विप्राः स्वभावं भूतचिन्तकाः ॥ ८८
पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रय एतेऽपृथग्भूता अविवेकः कथंचन ॥ ८९
एवमेतच्च दैवं च यद्भूतं सृजते जगत् ।
कर्मस्था विषयं ब्रूयुः सत्वस्थाः समदर्शिनः ॥ ९०
ततो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति यान्कामान्मनसेच्छति ॥ ९१
तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।
स तद्भूतश्च सर्वेषां भूतानां भवति प्रभुः ॥ ९२
ऋषयस्तपसा वेदानध्यैषन्त दिवानिशम् ।
अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ॥ ९३
ऋषीणां नामधेयानि याश्च वेदेषु सृष्टयः ।
नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ॥ ९४
वेदशब्देभ्य एवादौ निर्मिमीते स ईश्वरः ।
नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः ।

रोचिष्णु जायते शुक्रं इति झ. थ. पाठः ॥ ६८ ॥ अविवेकं तु केचन इति झ. पाठः ॥ ८९ ॥ याश्च लोकेषु सृष्टयः इति ट. थ. पाठः ॥ ९४ ॥ याश्च लोकेषु सृष्टयः इति ट. थ. पाठः ॥ ९५ ॥

शर्वर्यन्तेषु जातानामन्येभ्यो विदधात्यजः ॥ ९५
नामभेदतपःकर्मयज्ञाख्या लोकसिद्धये ।
आत्मसिद्धिस्तु वेदेषु प्रोच्यते दशभिः क्रमैः ॥९६
यदुक्तं वेदवादेषु गहनं वेददृष्टिभिः ।
तदन्तेषु यथायुक्तं क्रमयोगेन लक्ष्यते ॥ ९७
कर्मजोऽयं पृथग्भावो द्वन्द्वयुक्तो हि देहिनः ।
आत्मसिद्धिस्तु विज्ञानाज्जहाति प्रायशो बलम् ९८
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥९९
आलम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्रास्तु तपोयज्ञा द्विजातयः ॥१००
त्रेतायुगे विधिस्त्वेष यज्ञानां न कृते युगे ।
द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे तथा ॥१०१
अपृथग्धर्मिणो मर्त्या ऋक्सामानि यजूंषि च ।
काम्या इष्टीः पृथग्दृष्ट्वा तपोभिस्तप एव च ॥१०२
त्रेतायां तु समस्ता ये प्रादुरासन्महाबलाः ।
संयन्तारः स्थावराणां जङ्गमानां च सर्वशः ॥ १०३
त्रेतायां संहता वेदा यज्ञा वर्णास्तथैव च ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ १०४
दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः ।
उत्सीदन्ते सयज्ञाश्च केवला धर्मपीडिताः ॥ १०५
कृते युगे यस्तु धर्मो ब्राह्मणेषु प्रदृश्यते ।
आत्मवत्सु तपोवत्सु श्रुतवत्सु प्रतिष्ठितः ॥ १०६
स धर्मः प्रैति संयोगं यथाधर्मं युगेयुगे ।
विक्रियन्ते स्वधर्मस्था वेदवादा यथागमम् ॥ १०७
यथा विश्वानि भूतानि वृष्ट्या भूयांसि प्रावृषि ।
सृज्यन्ते जङ्गमस्थानि तथा धर्मा युगेयुगे ॥ १०८
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा ब्रह्महरादिषु ॥ १०९
विहितं कालनानात्वमनादिनिधनं तथा ।
कीर्तितं यत्पुरस्तात्ते तत्सूते चात्ति च प्रजाः ॥ ११०
ददाति भवनस्थानं भूतानां संयमो यमः ।
स्वभावेनैव वर्तन्ते द्वन्द्वयुक्तानि भूरिशः ॥ १११
सर्गकालक्रिया वेदाः कर्ता कार्यं क्रियाफलम् ।
प्रोक्तं ते पुत्र सर्वं वै यन्मां त्वं परिपृच्छसि ॥ ११२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

## एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

भीष्मेण युधिष्ठिरंप्रति शुकाय श्रीव्यासोदितप्रलयप्रकाराद्यनुवादः ॥ १ ॥

व्यास उवाच ।
प्रत्याहारं तु वक्ष्यामि शर्वर्यादौ गतेऽहनि ।
यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः ॥ १
दिवि सूर्यस्तथा सप्त दहन्ति शिखिनोऽर्चिषः ।
सर्वमेतत्तदाऽर्चिर्भिः पूर्णं जाज्वल्यते जगत् ॥ २
पृथिव्यां यानि भूतानि जङ्गमानि ध्रुवाणि च ।
तान्येवाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥ ३
ततः प्रलीने सर्वस्मिन्स्थावरे जङ्गमे तथा ।
अकाष्ठा निस्तृणा भूमिर्दृश्यते कूर्मपृष्ठवत् ॥ ४
भूमेरपि गुणं गन्धमाप आददते यदा ।

क्रमयोगेषु लक्ष्यते इति ध. पाठः ॥ ९७ ॥ आलम्भः पशुयागा । हविर्व्रीह्यादिकम् । परिचारस्त्रैवर्णिकसेवा । तपो ब्रह्मोपासनम् । आरम्भयज्ञा राजानः इति ट. पाठः । आरम्भयज्ञा वैश्यस्य हविर्यज्ञा नृपस्य तु । इति ध. पाठः ॥ १०० ॥ विधिरप्रवृत्तप्रवर्तनम् । तत्र त्रेतायामेव नतु कृते । स्वतएव तत्र सद्धेः ॥ १०१ ॥ तिष्ठन्तीति स्थानि स्थावराणि जङ्गमानि स्थानि च जङ्गमस्थानि । भूयांसि वृद्धिमत्तराणि ॥ १०८ ॥ वृद्धि प्रभवस्थानं इति झ. ट. पाठः । दधाति भवति स्थानं भूतानां समयो मतं । इति झ. पाठः ॥ १११ ॥ सर्गः सृष्टिः । कालो दर्शादिः । क्रिया यज्ञश्राद्धादिः । वेदास्तत्प्रकाशकाः । कर्ता तदनुष्ठाता । कार्यं देहादिपरिस्पन्दः । क्रियाफलं स्वर्गः ॥ ११२ ॥ अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

क्रमप्राप्तं प्रलयमाह प्रत्याहारमिति । प्रतीपमुत्पत्तिक्रमविपरीतमाहरणं प्रत्याहारः ॥ १ ॥ संकर्षणमुखोद्भूतस्य शिखिनोऽग्नेरर्चिषः सप्तेति संबन्धः । अर्चिर्भिः सौरीभिराग्नेयीभिश्च ज्वालाभिः ॥ २ ॥ ध्रुवाणि स्थावराणि ॥ ३ ॥ निर्वृक्षा निस्तृ-

आत्तगन्धा तदा भूमिः प्रलयत्वाय कल्पते ॥ ५
आपस्तत्र प्रतिष्ठन्ते ऊर्मिमत्यो महास्वनाः ।
सर्वमेवेदमापूर्य तिष्ठन्ति च चरन्ति च ॥ ६
अपामपि गुणांस्तात ज्योतिराददते यदा ।
आपस्तदा त्वात्तगुणा ज्योतिःषूपरमन्ति वै ॥ ७
यदाऽऽदित्यं स्थितं मध्ये गृहन्ति शिखिनोऽर्चिषः ।
सर्वमेवेदमर्चिर्भिः पूर्णं जाज्वल्यते नभः ॥ ८
ज्योतिषोऽपि गुणं रूपं वायुराददते यदा ।
प्रशाम्यति ततो ज्योतिर्वायुर्दोधूयते महान् ॥ ९
ततस्तु मूलमासाद्य वायुः संभवमात्मनः ।
अधश्चोर्ध्वं च तिर्यक्च दोधवीति दिशो दश ॥ १०
वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा ।
प्रशाम्यति तदा वायुः खं तु तिष्ठति नानदत् ॥ ११
अरूपमरसस्पर्शमगन्धं न च मूर्तिमत् ।
सर्वलोकप्रणुदितं खं तु तिष्ठति नानदत् ॥ १२
आकाशस्य गुणं शब्दमभिव्यक्तात्मकं मनः ।
'ग्रसते च यदा सोऽपि शाम्यति प्रतिसंचरे ।'
मनसो व्यक्तमव्यक्तं ब्राह्मः संप्रति[illegible] ॥ १३
तदाऽऽत्मगुणमाविश्य मनो ग्र[illegible]स्तमाः ।
मनस्युपरते चात्मा चन्द्रमस्युपतिष्ठते । १४
तं तु कालेन महता संकल्पं कुरुते वशे ।
चित्तं ग्रसति संकल्पस्तच्च ज्ञानमनुत्तमम् । १५
कालो गिरति विज्ञानं कालं बलमिति श्रुतिः ।
बलं कालो ग्रसति तु तं विद्वान्कुरुते वशे ॥ १६
[आकाशस्य तदा घोषं तं विद्वान्कुरुतेऽऽत्मनि ।]
तदव्यक्तं परं ब्रह्म तच्छाश्वतमनुत्तमम् ।
एवं सर्वाणि भूतानि ब्रह्मैव प्रतिसंहरेत् ॥ १७
यथावत्कीर्तितं सत्यमेवमेतदसंशयम् ।
बोध्यं विद्यामयं दृष्ट्वा योगिभिः परमात्मभिः ॥ १८
एवं विस्तारसंक्षेपौ ब्रह्माव्यक्ते पुनःपुनः ।
युगसाहस्रयोरादावहोरात्र्यास्तथैव च ॥ १९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २३९ ॥

## चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

भीष्मेण युधिष्ठिरंप्रति व्यासेन शुकायोक्तब्राह्मणधर्मानुवादः ॥ १ ॥ तथा ब्राह्मणेभ्यो दानमहिमानुवादः ॥ २ ॥

व्यास उवाच ।
भूतग्रामे नियुक्तं यत्तदेतत्कीर्तितं मया ।
ब्राह्मणस्य तु यत्कृत्यं तत्ते वक्ष्यामि सांप्रतम् ॥ १
जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम् ।
क्रिया स्यादासमावृत्तेराचार्ये वेदपारगे ॥ २
अधीत्य वेदानखिलान्गुरुशुश्रूषणे रतः ।
गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित् ॥ ३
आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽवतिष्ठेद्यथाविधि ॥ ४
प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः ।
वने गुरुसकाशे वा यतिधर्मेण वा पुनः ॥ ५
गृहस्थस्त्वेष धर्माणां सर्वेषां मूलमुच्यते ।
यत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति ॥ ६
प्रजावाञ्श्रोत्रियो यज्वा मुक्त एव ऋणैस्त्रिभिः ।
अथान्यानाश्रमान्पश्चात्पूतो गच्छेत कर्मभिः ॥ ७
यत्पृथिव्यां पुण्यतमं विद्यात्स्थानं तदावसेत् ।

[illegible]ेति झ. पाठः ॥ ४ ॥ गन्धं काठिन्यहेतुम् । घृतवद्भूमिः काठिन्यं त्यक्त्वा जलमात्रं भवतीत्यर्थः । प्रलयत्वाय कारणभावाय ॥ ५ ॥ आपोप्यात्तगुणा अग्निना शोषितरसा अग्निमात्रं भवन्ति ॥ ७ ॥ यथा रसगुणांस्तासां ग्रसन्ति शिखिनोऽर्चिष इति ट. थ. पाठः ॥ ८ ॥ रूपं वायुराददते । आङ्पूर्वस्य दद दाने इत्यस्य रूपम् ॥ ९ ॥ ततस्तु खनमासाद्येति झ. पाठः । तत्र खन शब्दतन्मात्रमित्यर्थः ॥ १० ॥ ब्राह्मोऽयं प्रतिसंचर इति ध. पाठः ॥ १३ ॥ कालो हरति विज्ञानमिति थ. पाठः ॥ १६ ॥ बोध्यं बोधयितुं योग्यमन्वर्थनामानं शिष्यम् । विद्यामयं अत्यौत्कण्ठ्येन विद्यार्थित्वात् ॥ १८ ॥ विस्तारसंक्षेपौ सृष्टिप्रलयावुक्ताविति शेषः ॥ १९ ॥ एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

यतेत तस्मिन्प्रामाण्यं गन्तुं यशसि चोत्तमे ॥ ८
तपसा वा सुमहता विद्यानां पारणेन वा ।
इज्यया वा प्रदानैर्वा विप्राणां वर्धते यशः ॥ ९
यावदस्य भवत्यस्मिन्कीर्तिर्लोके यशस्करी ।
तावत्पुण्यकृताँल्लोकाननन्तान्पुरुषोऽश्नुते ॥ १०
अध्यापयेदधीयीत याजयेत यजेत वा ।
न वृथा प्रतिगृह्णीयान्न च दद्यात्कथंचन ॥ ११
याज्यतः शिष्यतो वाऽपि कन्याया वा धनं महत् ।
यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात्कथंचन ॥ १२
गृहमावसतो ह्यस्य नान्यत्तीर्थमुदाहृतम् ।
देवर्षिपितृगुर्वर्थं वृद्धातुरबुभुक्षताम् ॥ १३
अन्तर्हिताभितप्तानां यथाशक्ति बुभूषताम् ।
द्रव्याणामतिशक्त्याऽपि देयमेषां कृतादपि ॥ १४
अर्हतामनुरूपाणां नादेयं ह्यस्ति किंचन ।
उच्चैःश्रवसमप्यश्वं काश्यपाय महात्मने ।
दत्त्वा जगाम प्रह्लादो लोकान्देवैरभिष्टुतान् ॥ १५
अनुनीय तथा काव्यः सत्यसन्धो महाव्रतः ।
स्वैः प्राणैर्ब्राह्मणप्राणान्परित्राय दिवं गतः ॥ १६
रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने ।
अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते ॥ १७
आत्रेयश्चेन्द्रदुमये ह्यर्हते विविधं धनम् ।
दत्त्वा लोकान्ययौ धीमानननन्तान्स महीपतिः १८
शिबिरौशीनरोऽङ्गानि सुतं च प्रियमौरसम् ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ १९
प्रतर्दनः काशिपतिः प्रदाय नयने स्वके ।
ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ॥ २०
दिव्यमष्टशलाकं तु सौवर्णं परमर्द्धिमत् ।
छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यगमद्दिवम् ॥ २१
सांकृतिश्च तथाऽऽत्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य महातेजा गतो लोकाननुत्तमान् ॥ २२
अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान् ।
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यगमद्दिवम् ॥ २३
सावित्री कुण्डले दिव्ये शरीरं जनमेजयः ।
ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् ॥ २४
सर्वरत्नं वृषादर्भिर्युवनाश्वः प्रियाः स्त्रियः ।
रम्यमावसथं चैव दत्त्वामुं लोकमास्थितः ॥ २५
निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुंधराम् ।
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपत्तनाम् ॥२६
अवर्षति च पर्जन्ये सर्वभूतानि भूतकृत् ।
वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः ॥ २७
करंधमस्य पुत्रस्तु मरुत्तो नृपतिस्तथा ।
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥ २८
ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमतां वरः ।
निधिं शङ्खं द्विजाग्र्येभ्यो दत्त्वा लोकानवाप्तवान् ॥
राजा मित्रसहश्चापि वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥ ३०
सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥ ३१
सर्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मुद्गलाय गतः स्वर्गं शतद्युम्नो महीपतिः ॥ ३२
नाम्ना च द्युतिमान्नाम साल्वराजः प्रतापवान् ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥३३
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋश्यशृङ्गाय विपुलैः सर्वकामैरयुज्यत ॥ ३४
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान्देवैरभिष्टुतान् ॥ ३५
दत्त्वा शतसहस्रं तु गवां राजा प्रसेनजित् ।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥ ३६
एते चान्ये च बहवो दानेन तपसैव च ।
महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः॥
तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।
दानयज्ञप्रजासर्गैरेते हि दिवमाप्नुवन् ॥ ३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

---

कृतात्पक्वान्नादपि ॥ १४ ॥ चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

## एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

भीष्मेण युधिष्ठिरंप्रति व्यासकृतब्राह्मणधर्मकथनपूर्वकज्ञानप्रशंसनानुवादः ॥ १ ॥

व्यास उवाच ।
त्रयीं विद्यामवेक्षेत वेदेषूक्तमतां गतः ।
ऋक्सामवर्णाक्षरतो यजुषोऽथर्वणस्तथा ॥ १
[तिष्ठत्येतेषु भगवान्षट्सु कर्मसु संस्थितः ।]
वेदवादेषु कुशला ह्यध्यात्मकुशलाश्च ये ॥ २
सत्ववन्तो महाभागाः पश्यन्ति प्रभवाप्ययौ ।
एवं धर्मेण वर्तेत क्रियाः शिष्टवदाचरेत् ॥ ३
असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः ।
सद्भ्य आगतविज्ञानः शिष्टः शास्त्रविचक्षणः ॥ ४
स्वधर्मेण क्रिया लोके कुर्वाणः सोऽप्यसङ्करः ।
तिष्ठते तेषु गृहवान्षट्सु कर्मसु स द्विजः ॥ ५
पञ्चभिः सततं यज्ञैः श्रद्दधानो यजेत च ।
धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ।
वीतहर्षमदक्रोधो ब्राह्मणो नावसीदति ॥ ६
दानमध्ययनं यज्ञस्तपो ह्रीरार्जवं दमः ।
एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ॥ ७
धूतपाप्मा च मेधावी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ ८
अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च ।
वर्जयेदुशतीं वाचं हिंसां चाधर्मसंहिताम् ॥ ९
एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानागमेन कर्माणि कुर्वन्कर्मसु सिद्ध्यति ॥ १०
पञ्चेन्द्रियजलां घोरां लोभकूलां सुदुस्तराम् ।
मन्युपङ्कामनाधृष्यां नदीं तरति बुद्धिमान् ॥ ११
कालमभ्युद्यतं पश्येन्नित्यमत्यन्तमोहनम् ॥ १२
महता विधिदृष्टेन बलिनाऽप्रतिघातिना ।
स्वभावस्रोतसा वृत्तमुह्यते सततं जगत् ॥ १३
कालोदकेन महता वर्षावर्तेन संततम् ।
मासोर्मिणर्तुवेगेन पक्षोलपतृणेन च ॥ १४
निमेषोन्मेषफेनेन अहोरात्रजवेन च ।
कामग्राहेण घोरेण वेदयज्ञप्लवेन च ॥ १५
धर्मद्वीपेन भूतानां चार्थकामरवेण च ।
ऋतवाङ्मोक्षतीरेण विहिंसातरुवाहिना ॥ १६
युगह्रदौघमध्येन ब्रह्मप्रायभवेन च ।
धात्रा सृष्टानि भूतानि कृष्यन्ते यमसादनम् ॥ १७
एतत्प्रज्ञामयैर्धीरा निस्तरन्ति मनीषिणः ।
प्लवैरप्लववन्तो हि किं करिष्यन्त्यचेतसः ॥ १८
उपपन्नं हि यत्प्राज्ञो निस्तरेन्नेतरो जनः ।
दूरतो गुणदोषौ हि प्राज्ञः सर्वत्र पश्यति ॥ १९
संशयात्तु स कामात्मा चलचित्तोऽल्पचेतनः ।
अप्राज्ञो न तरत्येनं यो ह्यास्ते न स गच्छति ॥ २०
अप्लवो हि महादोषं मुह्यमानो न गच्छति ।
कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः ॥ २१
तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः ।
एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत् ॥ २२
त्र्यवदाते कुले जातस्त्रिसंदेहस्त्रिकर्मकृत् ।
तस्मादुन्मज्जनं तिष्ठेत्प्रज्ञया निस्तरेद्यथा ॥ २३
संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च ॥ २४
वर्तेत तेषु गृहवानक्रुध्यन्ननसूयकः ।
पञ्चभिः सततं यज्ञैर्विघसाशी यजेत च ॥ २५
सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
असंरोधेन लोकस्य वृत्तिं लिप्सेदगर्हिताम् ॥ २६
श्रुतविज्ञानतत्त्वज्ञः शिष्टाचारविचक्षणः ।
स्वधर्मेण क्रियावांश्च कर्मणा सोऽप्यसंकरः ॥ २७
क्रियावाञ्श्रद्दधानो हि दान्तः प्राज्ञोऽनसूयकः ।

वेदेषूक्तामथाज्ञत इति झ. पाठः ॥ १ ॥ एतैर्वर्धयते इति झ. पाठः ॥ ७ ॥ काममन्यूद्धतं पश्यन्नित्यमत्यन्तमोहितमिति ट. थ. ध. पाठः ॥ १२ ॥ ब्रह्मप्रायभवेन ब्रह्मकार्यभूतेन । स्रोतसा युगभूतेन ब्रह्मप्रायभवेन चेति ट. थ. पाठः ॥ १७ ॥ अवदातेषु शुद्धेषु कुलेष्विति शेषः । त्रिष्वध्यापनयाजनप्रतिग्रहेषु संदेहवांस्तत्राप्रवृत्त इत्यर्थः । त्रिकर्मकृत् स्वाध्याययजनदानकृत् ॥ २३ ॥ शिष्टशास्त्रविचक्षण इति ट. थ. पाठः ॥ २७ ॥ एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

धर्माधर्मविशेषज्ञः सर्वं तरति दुस्तरम् ॥ २८
धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ।
वीतहर्षमदक्रोधो ब्राह्मणो नावसीदति ॥ २९
एषा पुरातनी वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानवृद्ध्यैव कर्माणि कुर्वन्सर्वत्र सिध्यति ॥ ३०
अधर्मं धर्मकामो हि करोति ह्यविचक्षणः ।
धर्मं वा धर्मसंकाशं शोचन्निव करोति सः ॥ ३१
धर्मं करोमीति करोत्यधर्म-
मधर्मकामश्च करोति धर्मम् ।
उभे बालः कर्मणी न प्रजानन्
संजायते म्रियते चापि देही ॥ ३२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

---

## द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

भीष्मेण युधिष्ठिरंप्रति ज्ञानस्य श्रेयःसाधनतापरशुकसंबोध्यकव्यासवाक्यानुवादः ॥ १ ॥

---

व्यास उवाच ।
अथ चेद्रोचयेदेतद्दुह्यते मनसा तथा ।
उन्मज्जंश्च निमज्जंश्च ज्ञानवान्प्लववान्भवेत् ॥ १
प्रज्ञया निर्मितैर्धीरास्तारयन्त्यबुधान्प्लवैः ।
नाबुधास्तारयन्त्यन्यानात्मानं वा कथंचन ॥ २
छिन्नदोषो मुनिर्योगयुक्तो युञ्जीत द्वादश ।
दशकर्मसुखानर्थानुपायापायनिष्क्रियः ॥ ३
चक्षुराचारसंग्राहैर्मनसा दर्शनेन च ।
यच्छेद्वाङ्मनसी बुद्ध्या य इच्छेज्ज्ञानमुत्तमम् ॥ ४
ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः ।
एतेषां चेदनुद्रष्टा पुरुषोऽपि सुदारुणः ॥ ५
यदि वा सर्ववेदज्ञो यदि वाऽप्यनृचो द्विजः ।
यदि वा धार्मिको यज्वा यदि वा पापकृत्तमः ॥ ६
यदि वा पुरुषव्याघ्रो यदि वैक्लब्यधारणः ।
तरत्येवं महादुर्गं जरामरणसागरम् ॥ ७
एवं ह्येतेन योगेन युञ्जानो ह्येवमन्ततः ।
अपि जिज्ञासमानोऽपि शब्दब्रह्माऽतिवर्तते ॥ ८
धर्मोपस्थो ह्रीवरूथ उपायापायकूबरः ।
अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः ॥ ९
चेतनाबन्धुरश्चारुश्चाचारग्रहनेमिमान् ।
दर्शनस्पर्शनवहो घ्राणश्रवणवाहनः ॥ १०
प्रज्ञानाभिः सर्वतन्त्रप्रतोदो ज्ञानसारथिः ।
क्षेत्रज्ञाधिष्ठितो धीरः श्रद्धादमपुरःसरः ॥ ११
त्यागरश्म्यनुगः क्षेम्यः शौचगो ध्यानगोचरः ।
जीवयुक्तो रथो दिव्यो ब्रह्मलोके विराजते ॥ १२
अथ संत्वरमाणस्य रथमेवं युयुक्षतः ।
अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् ॥ १३
सप्त यो धारणाः कृत्स्ना वाग्यतः प्रतिपद्यते ।
पृष्ठतः पार्श्वतश्चान्यास्तावत्यस्ताः प्रधारणाः ॥ १४
क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ।
ज्योतिषो यत्तदैश्वर्यमहंकारस्य बुद्धितः ।
अव्यक्तस्य तथैश्वर्यं क्रमशः प्रतिपद्यते ॥ १५
विक्रमाश्चापि यस्यैते तथा युङ्क्ते स योगतः ।
तथाऽस्य योगयुक्तस्य सिद्धिमात्मनि पश्यतः ॥ १६
निर्मुच्यमानः सूक्ष्मत्वाद्रूपाणीमानि पश्यतः ।
शैशिरस्तु यथा धूमः सूक्ष्मः संश्रयते नभः ॥ १७
तथा देहाद्विमुक्तस्य पूर्वरूपं भवत्युत ।
अथ धूमस्य विरमेद्द्वितीयं रूपदर्शनम् ॥ १८
जलरूपमिवाकाशे तत्रैवात्मनि पश्यति ।
अपां व्यतिक्रमे चास्य वह्निरूपं प्रकाशते ॥ १९

---

उह्येत स्रोतसा यथेति झ. पाठः ॥ १ ॥ देशकर्मानुरागार्थानुपायेति झ. पाठः ॥ ३ ॥ चक्षुराहारसंहारैरिति झ. पाठः । यच्छेद्वाचं मनो बुद्ध्येति थ. पाठः ॥ ४ ॥ त्यागसूक्ष्मानुग इति झ. ध. पाठः ॥ १२ ॥ निर्मथ्यमानः सूक्ष्मात्मा रूपाण्येतानि दर्शयेत् इति ढ. थ. पाठः ॥ १७ ॥

तस्मिन्नुपरते चास्य वायव्यं सूक्ष्ममव्ययम् ।
रूपं प्रकाशते तस्य पीतवस्त्रवदव्ययम् ॥ २०
तस्मिन्नुपरते रूपमाकाशस्य प्रकाशते ।
तस्मिन्नुपरते चास्य बुद्धिरूपं प्रकाशते ।
ऊर्णारूपमवर्णस्य तस्य रूपं प्रकाशते ॥ २१
अथ श्वेतां गतिं गत्वा सोहङ्कारे प्रकाशते ।
सुशुक्लं चेतसः सौक्ष्म्यमप्युक्तं ब्राह्मणस्य वै ॥२२
एतेष्वपि हि जातेषु फलजातानि मे शृणु ।
जातस्य पार्थिवैश्वर्यैः सृष्टिरिष्टा विधीयते ॥ २३
प्रजापतिरिवाक्षोभ्यः शरीरात्सृजते प्रजाः ।
अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा ॥ २४
पृथिवीं कम्पयत्येको गुणो वायोरिति श्रुतिः ।
आकाशभूतश्चाकाशे सवर्णत्वात्प्रकाशते ।
वर्णतो गृह्यते चाप्सु नापः पिबति चाशया ॥ २५
न चास्य तेजसां रूपं दृश्यते शाम्यते तथा ।
अहंकारेऽस्य विजिते पञ्चैते स्युर्वशानुगाः ॥ २६
षण्णामात्मनि बुद्धौ च जितायां प्रभवत्यथ ।
निर्दोषा प्रतिभा ह्येनं कृत्स्ना समभिवर्तते ॥ २७
तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते ।
यतो निःसरते लोको भवति व्यक्तसंज्ञकः ॥ २८
तत्राव्यक्तमयीं विद्यां शृणु त्वं विस्तरेण मे ।
तथा व्यक्तमयं चैव संख्यापूर्वं निबोध मे ॥ २९
पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम् ।
योगे साङ्ख्येऽपि च तथा विशेषं तत्र मे शृणु ॥३०
प्रोक्तं तद्व्यक्तमित्येव जायते वर्धते च यत् ।
जीर्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् ॥ ३१
विपरीतमतो यत्तु तदव्यक्तमुदाहृतम् ।
द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ ॥ ३२
चतुर्लक्षणजं त्वाद्यं चतुर्वर्गं प्रचक्षते ।
व्यक्तमव्यक्तजं चैव तथा बुद्धिरथेतरत् ॥
सत्वं क्षेत्रज्ञ इत्येतद्द्वयमव्यक्तदर्शनम् ॥ ३३
द्वावात्मानौ च वेदेषु विषयेष्वनुरज्यतः ।
विषयात्प्रतिसंहारः साङ्ख्यानां विद्धि लक्षणम् ३४
निर्ममश्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृता भाषते गिरः ॥ ३५
आक्रुष्टस्ताडितश्चैव मैत्रीयं ध्याति नाशुभम् ।
वाग्दण्डकर्ममनसां त्रयाणां च निवर्तकः ॥ ३६
समः सर्वेषु भूतेषु ब्रह्माणमभिवर्तते ।
नैवेच्छति न चानिच्छो यात्रामात्रव्यवस्थितः ॥३७
अलोलुपोऽव्यथो दान्तो नाकृतिर्न निराकृतिः ।
नास्येन्द्रियमनेकाग्रं नाविक्षिप्तमनोरथः ॥ ३८
सर्वभूतसदृङ्मैत्रः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥३९
अस्पृहः सर्वकामेभ्यो ब्रह्मचर्यदृढव्रतः ।
अहिंस्रः सर्वभूतानामीदृक्साङ्ख्यो विमुच्यते ॥ ४०
यथा योगाद्विमुच्यन्ते कारणैर्यैर्निबोध तत् ।
योगैश्वर्यमतिक्रान्तो योऽतिक्रामति मुच्यते ॥ ४१
इत्येषा भावजा बुद्धिः कथिता ते न संशयः ।
एवं भवति निर्द्वन्द्वो ब्रह्माणं चाधिगच्छति ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

## त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

भीष्मेण युधिष्ठिरंप्रति भूतेषु तारतम्यकथनपूर्वकज्ञानप्रशंसापरशुकसंबोध्यकव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमात्मनः ।
उन्मज्जंश्च निमज्जंश्च विद्यामेवाभिसंश्रयेत् ॥ १
शुक उवाच ।
किं तज्ज्ञानमथो विद्या यथा निस्तरते द्वयम् ।
प्रवृत्तिलक्षणो धर्मो निवृत्तिरिति चैव हि ॥ २

वर्णतो गृह्यते चापि कामात्पिबति चाशयानिति झ. पाठः
स्नातसा युगे· वाङ्मनःकायदण्डानामिति ट. थ. पाठः ॥ ३६ ॥

द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

व्यास उवाच ।

यस्तु पश्यन्स्वभावेन विनाभावमचेतनः ।
पुष्णाति स पुनः सर्वान्प्रज्ञया मुक्तहेतुकः ॥ ३
येषां चैकान्तभावेन स्वभावः कारणं मतम् ।
दूर्वातृणबृसीका ये ते लभन्ते न किंचन ॥ ४
येचैनं पक्षमाश्रित्य निवर्तन्त्यल्पमेधसः ।
स्वभावं कारणं ज्ञात्वा न श्रेयः प्राप्नुवन्ति ते ॥ ५
स्वभावो हि विनाशाय मोहकर्ममनोभवः ।
निरुक्तमेतयोरेतत्स्वभावपरिभावयोः ॥ ६
कृष्यादीनीह कर्माणि सस्यसंहरणानि च ।
प्रज्ञावद्भिः प्रक्लृप्तानि यानासनगृहाणि च ॥ ७
आक्रीडानां गृहाणां च गदानामगदस्य च ।
प्रज्ञावन्तः प्रवक्तारो ज्ञानवद्भिरनुष्ठिताः ॥ ८
प्रज्ञा संयोजयत्यर्थैः प्रज्ञा श्रेयोऽधिगच्छति ।
राजानो भुञ्जते राज्यं प्रज्ञया तुल्यलक्षणाः ॥ ९
परावरं तु भूतानां ज्ञानेनैवोपलभ्यते ।
विद्यया तात सृष्टानां विद्यैवेह परा गतिः ॥ १०
भूतानां जन्म सर्वेषां विविधानां चतुर्विधम् ।
जरायुजाण्डजोद्भिज्जस्वेदजं चोपलक्षयेत् ॥ ११
स्थावरेभ्यो विशिष्टानि जङ्गमान्युपधारयेत् ।
उपपन्नं हि यच्चेष्टा विशिष्येत विशेष्यया ॥ १२
आहुर्द्विबहुपादानि जङ्गमानि द्वयानि तु ।
बहुपाद्भ्यो विशिष्टानि द्विपादानि बहून्यपि ॥ १३
द्विपदानि द्वयान्याहुः पार्थिवानीतराणि च ।
पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते ॥ १४
पार्थिवानि द्वयान्याहुर्मध्यमान्युत्तमानि तु ।
मध्यमानि विशिष्टानि जातिधर्मोपधारणात् ॥ १५
मध्यमानि द्वयान्याहुर्धर्मज्ञानीतराणि च ।
धर्मज्ञानि विशिष्टानि कार्याकार्योपधारणात् ॥ १६
धर्मज्ञानि द्वयान्याहुर्वेदज्ञानीतराणि च ।
वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः ॥ १७
वेदज्ञानि द्वयान्याहुः प्रवक्तृणीतराणि च ।
प्रवक्तृणि विशिष्टानि सर्वधर्मोपधारणात् ॥ १८
विज्ञायन्ते हि यैर्वेदाः सधर्माः सक्रियाफलाः ।
सधर्मा निखिला वेदाः प्रवक्तृभ्यो विनिःसृताः ॥
प्रवक्तृणि द्वयान्याहुरात्मज्ञानीतराणि च ।
आत्मज्ञानि विशिष्टानि जन्माजन्मोपधारणात् २०
धर्मद्वयं हि यो वेद स सर्वज्ञः स सर्ववित् ।
सत्याशीः सत्यसंकल्पः सत्यः शुचिरथेश्वरः ॥ २१
धर्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः ।
शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयम् ॥ २२
अन्तस्थं च बहिष्ठं च येऽधियज्ञाधिदैवतम् ।
जानन्ति तान्नमस्यामस्ते देवास्तात ते द्विजाः ॥ २३
तेषु विश्वमिदं भूतं साग्रं च जगदाहितम् ।
तेषां माहात्म्यभावस्य सदृशं नास्ति किंचन ॥ २४
आद्यन्तनिधनं चैव कर्म चातीत्य सर्वशः ।
चतुर्विधस्य भूतस्य सर्वस्येशाः स्वयंभुवः ॥ २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

## चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

भीष्मेण युधिष्ठिरंप्रति मतभेदयुगधर्मभेदादिप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।

एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।

मुक्तहेतुकानिति झ. पाठः ॥ ३ ॥ पूत्वा तृणमिषीकां चेति झ. पाठः ॥ ४ ॥ सस्यसंग्रहणानि चेति थ. पाठः ॥ ७ ॥ गदानां रोगाणाम् । अगदस्यौषधस्य । अनुष्ठिताः प्रयोजिताः । गतानामागतस्य चेति ट. थ. पाठः ॥ ८ ॥ तुल्यलक्षणाः प्रज्ञाधिक्यादैश्वर्याधिक्यभाजः ॥ ९ ॥ यच्चेष्टे विशिष्येत विचेष्टक इति ट. थ. पाठः ॥ १२ ॥ पार्थिवानि पृथिवीचराणि मानुषाणि । इतराणि खेचराणि ॥ १४ ॥ सर्वयज्ञाः क्रिया वेदा इति ध. पाठः ॥ १९ ॥ धर्मद्वयं प्रवृत्तिनिवृत्तिरूपं । सत्यागीति झ. पाठः । सत्यक्षान्तिः स ईश्वर इति ट. थ. पाठः ॥ २१ ॥ शब्दब्रह्मणि वेदशास्त्रे ॥ २२ ॥ त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

ज्ञानवानेव कर्माणि कुर्वन्सर्वत्र सिद्ध्यति ॥ १
नत्र चेन्न भवेदेवं संशयः कर्मनिश्चये ।
किंतु कर्मस्वभावोऽयं ज्ञानं कर्मेति वा पुनः ॥ २
तत्र वेदविवित्सायां ज्ञानं चेत्पुरुषं प्रति ।
उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ॥ ३
पौरुषं कारणं केचिदाहुः कर्मसु मानवाः ।
दैवमेके प्रशंसन्ति स्वभावमपरे जनाः ॥ ४
पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रयमेतत्पृथग्भूतमविवेकं तु केचन ॥ ५
एतदेवं च नैवं च न चोभे नानुभे तथा ।
कर्मस्था विषयं ब्रूयुः सत्वस्थाः समदर्शिनः ॥ ६
त्रेतायां द्वापरे चैव कलिजाश्च ससंशयाः ।
तपस्विनः प्रशान्ताश्च सत्वस्थाश्च कृते युगे ॥ ७
अपृथग्दर्शनाः सर्वे ऋक्सामसु यजुःषु च ।
कामद्वेषौ पृथग्दृष्ट्वा तपः कृत उपासते ॥ ८
तपोधर्मेण संयुक्तस्तपोनित्यः सुसंशितः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥ ९
तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।
तद्भूतश्च ततः सर्वभूतानां भवति प्रभुः ॥ १०
तदुक्तं वेदवादेषु गहनं वेददर्शिभिः ।
वेदान्तेषु पुनर्व्यक्तं क्रमयोगेन लक्ष्यते ॥ ११
आरम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः ॥ १२
परिनिष्ठितकार्यो हि स्वाध्यायेन द्विजो भवेत् ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ १३
त्रेतादौ सकला वेदा यज्ञा वर्णाश्रमास्तथा ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ १४
द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा ।
दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुनः किल ॥ १५
उत्सीदन्ति स्वधर्माश्च तत्राधर्मेण पीडिताः ।
गवां भूमेश्च ये चापामोषधीनां च ये रसाः ॥ १६
अधर्मान्तर्हिता वेदा वेदधर्मास्तथाऽऽश्रमाः ।
विक्रियन्ते स्वधर्माश्च स्थावराणि चराणि च ॥ १७
यथा सर्वाणि भूतानि वृष्ट्या तृप्यन्ति प्रावृषि ।
सृजन्ते सर्वतोऽङ्गानि तथा वेदा युगेयुगे ॥ १८
विहितं कालनानात्वमनादिनिधनं च यत् ।
कीर्तितं यत्पुरस्तात्ते यतः संयान्ति च प्रजाः ॥ १९
यच्चेदं प्रभवः स्थानं भूतानां संयमो यमः ।
स्वभावेनैव वर्तन्ते द्वन्द्वसृष्टानि भूरिशः ॥ २०
सर्गः कालो धृतिर्वेदाः कर्ता कार्यं क्रियाफलम् ।
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

---

## पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

भीष्मेण युधिष्ठिरंप्रति वर्णाश्रमोचितधर्मानुष्ठानपूर्वकब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वादिप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

भीष्म उवाच ।
इत्युक्तोऽभिप्रशस्यैतत्परमर्षेस्तु शासनम् ।
मोक्षधर्मार्थसंयुक्तमिदं प्रष्टुं प्रचक्रमे ॥ १
शुक उवाच ।
प्रजावाञ्श्रोत्रियो यज्वा कृतप्रज्ञोऽनसूयकः ।
अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति ॥ २

इति क्रमेण मीमांसकस्य दैवज्ञस्य शून्यवादिलोकायतयोश्च मतान्युपन्यस्यैतेषां विकल्पसमुच्चयावाह पौरुषमिति । पौरुषं दैवं च कर्म दृष्टादृष्टयत्नः । स्वभावमनुसृत्य कर्मकालौ फलदावित्यर्थः । अविवेकं समुच्चयम् । पृथग्भूतमेकमेव प्रधानं नत्वितरावित्यर्थः ॥ ५ ॥ आर्हतमत आह एतदिति । एवमेवाप्येवमुभे एवं नचाप्युभे इति ध. पाठः ॥ ६ ॥ सत्यं तपश्च भूतानां सर्वेषां भवति प्रभुरिति थ. पाठः । स तद्रूपश्च सर्वेषां भूतानां भवति प्रभुरिति ध. पाठः ॥ १० ॥ धर्मः काल इति ध. पाठः ॥ २१ ॥ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

अनागतं प्रत्यक्षानुमानाभ्यामज्ञातम् । अनैतिह्यं इदमित्थमिति वेदेनापि न निर्देश्यम् ॥ २ ॥

तपसा ब्रह्मचर्येण सर्वत्यागेन मेधया ।
साङ्ख्ये वा यदि वा योग एतत्पृष्टो वदस्व मे ॥ ३
मनसश्चेन्द्रियाणां च यथैकाग्र्यमवाप्यते ।
येनोपायेन पुरुषैस्तत्त्वं व्याख्यातुमर्हसि ॥ ४
व्यास उवाच ।
नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागात्सिद्धिं विन्दति कश्चन ॥ ५
महाभूतानि सर्वाणि पूर्वसृष्टिः स्वयंभुवः ।
भूयिष्ठं प्राणभृत्काये निविष्टानि शरीरिषु ॥ ६
भूमेर्देहो जलात्स्नेहो ज्योतिषश्चक्षुषी स्मृते ।
प्राणापानाश्रयो वायुः खेष्वाकाशं शरीरिणाम् ॥७
क्रान्ते विष्णुर्बले शक्रः कोष्ठेऽग्निर्भोक्तुमिच्छति ।
कर्णयोः प्रदिशः श्रोत्रे जिह्वायां वाक् सरस्वती ॥ ८
कर्णौ त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
दश तानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये ॥ ९
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
इन्द्रियाणि पृथक्स्वार्थान्मनसा दर्शयन्त्युत ॥ १०
इन्द्रियाणि मनो युङ्क्ते वश्यान्यन्तेव वाजिनः ।
मनश्चापि सदा युङ्क्ते भूतात्मा हृदयाश्रितः ॥ ११
इन्द्रियाणां तथैवैषां सर्वेषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मानसस्तथा ॥ १२
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् ॥ १३
आश्रयो नास्ति सत्वस्य गुणः सत्त्वस्य चेतना ।
सत्वं हि तेजः सृजति न गुणान्वै कथंचन ॥ १४
एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः ।
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥ १५
न ह्ययं चक्षुषा दृश्यो न च सर्वैरपीन्द्रियैः ।
मनसा दीपभूतेन महानात्मा प्रकाशते ॥ १६
अशब्दस्पर्शरूपं तदरसागन्धमव्ययम् ।
अशरीरं शरीरेषु निरीक्षेत निरिन्द्रियम् ॥ १७
अव्यक्तं सर्वदेहेषु मर्त्येष्वमृतमाहितम् ।
योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे ॥ १८
विद्याभिजनसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १९
स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च ।
वसत्येको महानात्मा येन सर्वमिदं ततम् ॥ २०
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा ॥ २१
यावानात्मनि मे ह्यात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ २२
सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २३
शकुन्तानामिवाकाशे मत्स्यानामिव चोदके ।
यथा गतिर्न दृश्येत तथा ज्ञानविदां गतिः ॥ २४
कालः पचति भूतानि सर्वाण्येवात्मनाऽऽत्मनि ।
यस्मिंस्तु पच्यते कालस्तं वेदेह न कश्चन ॥ २५
न स ऊर्ध्वं न तिर्यक्च नाधश्चरति यः पुनः ।
न मध्ये प्रतिगृह्णीते नैव किंचित्कुतश्चन ॥ २६
सर्वेऽन्तस्था इमे लोका बाह्यमेषां न किंचन ।
यः सहस्रं समा गच्छेद्यथा बाणो गुणच्युतः ॥२७
नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः ।
तस्मात्सूक्ष्मात्सूक्ष्मतरं नास्ति स्थूलतरं ततः ॥ २८
सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २९
तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम् ।
तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ॥ ३०
अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।
क्षरः सर्वेषु भूतेषु दिवि ह्यमृतमक्षरम् ॥ ३१
नवद्वारं पुरं गत्वा हंसो हि नियतो वशी ।
ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ॥ ३२
हानिभङ्गविकल्पानां नवानां संचयेन च ।
शरीराणामजस्याहुर्हंसत्वं पारदर्शिनः ॥ ३३

विद्यादिपदैः क्रमेणाश्रमचतुष्टयधर्मा उक्ताः ॥ ५ ॥ खेषु नासादिरन्ध्रेषु ॥ ७ ॥ क्रान्ते पादे बले पाणौ च विष्णुशक्रौ तत्प्रयोक्तारौ तिष्ठतः । कर्णौ स्थानं श्रोत्रमिन्द्रियं दिशो देवताः । जिह्वा स्थानं वागिन्द्रियं सरस्वती देवता । एतच्चान्येषामपि स्थानादीनामुपलक्षणम् ॥ ८ ॥ आहारः शब्दादिग्रहः ॥ ९ ॥
पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

तपसा ब्रह्मचर्येण सर्वत्यागेन मेधया ।
साङ्ख्ये वा यदि वा योग एतत्पृष्टो वदस्व मे ॥ ३
मनसश्चेन्द्रियाणां च यथैकाग्र्यमवाप्यते ।
येनोपायेन पुरुषैस्तत्त्वं व्याख्यातुमर्हसि ॥ ४
व्यास उवाच ।
नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागात्सिद्धिं विन्दति कश्चन ॥ ५
महाभूतानि सर्वाणि पूर्वसृष्टिः स्वयंभुवः ।
भूयिष्ठं प्राणभृत्काये निविष्टानि शरीरिषु ॥ ६
भूमेर्देहो जलात्स्नेहो ज्योतिषश्चक्षुषी स्मृते ।
प्राणापानाश्रयो वायुः खेष्वाकाशं शरीरिणाम् ॥७
क्रान्ते विष्णुर्बले शक्रः कोष्ठेऽग्निर्भोक्तुमिच्छति ।
कर्णयोः प्रदिशः श्रोत्रे जिह्वायां वाक् सरस्वती ॥ ८
कर्णौ त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
दश तानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये ॥ ९
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
इन्द्रियाणि पृथक्स्वार्थान्मनसा दर्शयन्त्युत ॥ १०
इन्द्रियाणि मनो युङ्क्ते वश्यान्यन्तेव वाजिनः ।
मनश्चापि सदा युङ्क्ते भूतात्मा हृदयाश्रितः ॥ ११
इन्द्रियाणां तथैवैषां सर्वेषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मानसस्तथा ॥ १२
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् ॥ १३
आश्रयो नास्ति सत्वस्य गुणः सत्त्वस्य चेतना ।
सत्वं हि तेजः सृजति न गुणान्वै कथंचन ॥ १४
एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः ।
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥ १५
न ह्ययं चक्षुषा दृश्यो न च सर्वैरपीन्द्रियैः ।
मनसा दीपभूतेन महानात्मा प्रकाशते ॥ १६
अशब्दस्पर्शरूपं तदरसागन्धमव्ययम् ।
अशरीरं शरीरेषु निरीक्षेत निरिन्द्रियम् ॥ १७
अव्यक्तं सर्वदेहेषु मर्त्येष्वमृतमाहितम् ।
योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे ॥ १८
विद्याभिजनसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १९
स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च ।
वसत्येको महानात्मा येन सर्वमिदं ततम् ॥ २०
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा ॥ २१
यावानात्मनि मे ह्यात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ २२
सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २३
शकुन्तानामिवाकाशे मत्स्यानामिव चोदके ।
यथा गतिर्न दृश्येत तथा ज्ञानविदां गतिः ॥ २४
कालः पचति भूतानि सर्वाण्येवात्मनाऽऽत्मनि ।
यस्मिंस्तु पच्यते कालस्तं वेदेह न कश्चन ॥ २५
न स ऊर्ध्वं न तिर्यक्च नाधश्चरति यः पुनः ।
न मध्ये प्रतिगृह्णीते नैव किंचित्कुतश्चन ॥ २६
सर्वेऽन्तस्था इमे लोका बाह्यमेषां न किंचन ।
यः सहस्रं समा गच्छेद्यथा बाणो गुणच्युतः ॥२७
नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः ।
तस्मात्सूक्ष्मात्सूक्ष्मतरं नास्ति स्थूलतरं ततः ॥ २८
सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २९
तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम् ।
तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ॥ ३०
अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।
क्षरः सर्वेषु भूतेषु दिवि ह्यमृतमक्षरम् ॥ ३१
नवद्वारं पुरं गत्वा हंसो हि नियतो वशी ।
ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ॥ ३२
हानिभङ्गविकल्पानां नवानां संचयेन च ।
शरीराणामजस्याहुर्हंसत्वं पारदर्शिनः ॥ ३३

विद्यादिपदैः क्रमेणाश्रमचतुष्टयधर्मा उक्ताः ॥ ५ ॥ खेषु नासादिरन्ध्रेषु ॥ ७ ॥ क्रान्ते पादे बले पाणौ च विष्णुशक्रौ तत्प्रयोक्तारौ तिष्ठतः । कर्णौ स्थानं श्रोत्रमिन्द्रियं दिशो देवताः । जिह्वा स्थानं वागिन्द्रियं सरस्वती देवता । एतच्चान्येषामपि स्थानादीनामुपलक्षणम् ॥ ८ ॥ आहारः शब्दादिग्रहः ॥ ९ ॥ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजयेत् ॥ २५
संनियम्येन्द्रियग्रामं कोष्ठे भाण्डमना इव ।
एकाग्रं चिन्तयेन्नित्यं योगान्नोद्वेजयेन्मनः ॥ २६
येनोपायेन शक्येत संनियन्तुं चलं मनः ।
तत्तद्युक्तो निषेवेत न चैव विचलेत्ततः ॥ २७
शून्या गिरिगुहाश्चैव देवतायतनानि च ।
शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत् ॥ २८
नाभिष्वजेत्परं वाचा कर्मणा मनसाऽपि वा ।
उपेक्षको यताहारो लब्धालब्धे समो भवेत् ॥ २९
यश्चैनमभिनिन्देत यश्चैनमभिवादयेत् ।
समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभम् ॥ ३०
न प्रहृष्येत लाभेषु नालाभेषु च चिन्तयेत् ।
समः सर्वेषु भूतेषु सधर्मा मातरिश्वनः ॥ ३१
एवं सर्वात्मनः साधोः सर्वत्र समदर्शिनः ।
षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्तते ॥ ३२
वेदनार्ताः प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः ।
एतस्मिन्निरतो मार्गे विरमेन्न च मोहितः ॥ ३३
अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी ।
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥ ३४

अजं पुराणमजरं सनातनं
यदिन्द्रियैरुपलभेत निश्चलैः ।
अणोरणीयो महतो महत्तरं
तदात्मना पश्यति युक्तमात्मवान् ॥ ३५
इदं महर्षेर्वचनं महात्मनो
यथावदुक्तं मनसाऽनुदृश्य च ।
अवेक्ष्य चेमां परमेष्ठिसाम्यतां
प्रयान्ति यां भूतगतिं मनीषिणः ॥ ३६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

## सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

भीष्मेण युधिष्ठिरंप्रति विद्याकर्मस्वरूपादिनिरूपकव्यासवाक्यानुवादः ॥ १ ॥

शुक उवाच ।
यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥ १
एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे ।
एतच्चान्योन्यवैरूप्ये वर्तेते प्रतिकूलतः ॥ २
भीष्म उवाच ।
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ॥ ३
यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा ।
शृणुष्वैकमना वत्स गह्वरं ह्येतदन्तरम् ॥ ४
अस्ति धर्म इति ह्युक्त्वा नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशमिदं मम भवेदथ ॥ ५
द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च व्यवस्थितः ॥ ६
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ७
कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यक्षरात्मकः ॥ ८
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितया नराः ।
तेन ते देहजालानि रमयन्त उपासते ॥ ९
ये स्म बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः ।
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥ १०
कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ ११
यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते ॥ १२

कोष्ठं भाण्डं यथैव चेति ध. पाठः ॥ २६ ॥ यश्चैनमभिनन्देत यश्चैनमपवादयेत् इति झ. पाठः ॥ ३० ॥ सर्वात्मना साधो-रिति ङ. पाठः । स्वस्थात्मन इति झ. पाठः ॥ ३२ ॥ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

क्षराक्षरौ नश्वरानश्वरौ मार्गाविति शेषः । पराशरसुतः शुक-मिति ध. पाठः ॥ ३ ॥

यत्र तद्ब्रह्म परममव्यक्तमचलं ध्रुवम् ।
अव्याहतमनायाससममृतं चावियोगि च ॥ १३
द्वन्द्वैर्न यत्र बाध्यन्ते मानसेन च कर्मणा ।
समाः सर्वत्र मैत्राश्च सर्वभूतहिते रताः ॥ १४
विद्यामयोऽन्यः पुरुषस्तात कर्ममयोऽपरः ।
विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितम् ।
'विद्यामयं तं पुरुषं नित्यं ज्ञानगुणात्मकम् ॥' १५
तदेतदृषिणा प्रोक्तं विस्तरेणानुमीयते ।
नवं तु शशिनं दृष्ट्वा वक्रतन्तुमिवाम्बरे ॥ १६
एकादशविकारात्मा कलासंभारसंभृतः ।
मूर्तिमानिति तं विद्धि तात कर्म गुणात्मकम् ॥१७
'तस्मिन्यः संस्थितो ह्यग्निर्नित्यंस्थाल्यामिवाहितः
आत्मानं तं विजानीहि नित्यं त्यागजितात्मकं १८
देवो यः संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीयान्नित्यं योगजितात्मकम् ॥ १९
तमोरजश्च सत्त्वं च विद्धि जीवगुणात्मकम् ।
जीवमात्मगुणं विद्यादात्मानं परमात्मनः ॥ २०
अचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्राकल्पयद्यो भुवनानि सप्त ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

## अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

शुकंप्रति व्यासेन ब्रह्मचर्याश्रमधर्मनिरूपणम् ॥ १ ॥

शुक उवाच ।
क्षरात्प्रभृति यः सर्गः सगुणानीन्द्रियाणि च ।
बुद्ध्यैश्वर्यातिसर्गोऽयं प्रधानश्चात्मनः श्रुतम् ॥ १
भूय एव तु लोकेऽस्मिन्सद्वृत्तिं कालहैतुकीम् ।
यया सन्तः प्रवर्तन्ते तदिच्छाम्यनुवर्तितुम् ॥ २
वेदे वचनमुक्तं तु कुरु कर्म त्यजेति च ।
कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि ॥ ३
लोकवृत्तान्ततत्त्वज्ञः पूतोऽहं गुरुशासनात् ।
कृत्वा बुद्धिं विमुक्तात्मा द्रक्ष्याम्यात्मानमव्ययं ॥४
व्यास उवाच ।
एषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् ।
एषा पूर्वतरैः सद्भिराचीर्णा परमर्षिभिः ॥ ५
ब्रह्मचर्येण वै लोकाञ्जयन्ति परमर्षयः ।
आत्मनश्च हृदि श्रेयो ह्यन्विच्छन्मनसाऽऽत्मनि ॥६
वने मूलफलाशी च तप्यन्सुविपुलं तपः ।
पुण्यायतनचारी च भूतानामविहिंसकः ॥ ७
विधूमे सन्नमुसले वानप्रस्थप्रतिश्रये ।
काले प्राप्ते चरन्भैक्षं कल्पते ब्रह्मभूयसे ॥ ८
निस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे ।
अरण्ये विचरैकाकी येनकेनचिदाशितः ॥ ९
शुक उवाच ।
यदिदं वेदवचनं लोकवादे विरुध्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः ॥ १०
इत्येतच्छ्रोतुमिच्छामि प्रमाणं तूभयं कथम् ।
कर्मणामविरोधेन कथमेतत्प्रवर्तते ॥ ११
भीष्म उवाच ।
इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतम् ।
ऋषिस्तत्पूजयन्वाक्यं पुत्रस्यामिततेजसः ॥ १२

यत्राति परमं ब्रह्म पुराणमचलमिति ट. ड. पाठः ॥ १३ ॥ स चेष्टते जीवयते चेति झ. पाठः ॥ २१ ॥ सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

सद्वृत्तिं सतामाचारम् । कालहैतुकीं युगानुसारिणीम् । अनुवर्तितुं पुनः श्रोतुम् । हैतुकीं क्रियाम् इति ट. थ. पाठः ॥ २ ॥ कुरु कर्म त्यजेति श्रुत्योरेतदेतमविरोधं च कथं विजानीयां विषयविभागेन विविच्य कथं जानीयाम् ॥ ३ ॥ लोकवृत्तान्तो लोकरीतिः तस्य तत्त्वं धर्माधर्ममूलकत्वं तज्ज्ञः । पूतो धर्मानुष्ठानेन । बुद्धिं कृत्वा संस्कृत्य । विमुक्तात्मा त्यक्तदेहः ॥ ४ ॥ एषा कर्मभिर्बुद्धिं संस्कृत्य तयात्मदर्शनमित्येवंरूपा ॥ ५ ॥ गन्धवत्याः योजनगन्धायाः सुतो व्यासः ॥ १२ ॥

व्यास उवाच ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम् ॥ १३
एको वाऽप्याश्रमानेतान्योऽनुतिष्ठेद्यथाविधि ।
अकामद्वेषसंयुक्तः स परत्र महीयते ॥ १४
चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते ॥ १५
आयुषस्तु चतुर्भागं ब्रह्मचार्यनसूयकः ।
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः ॥ १६
जघन्यशायी पूर्वं स्यादुत्थाय गुरुवेश्मनि ।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ॥१७
कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत पार्श्वतः ।
किंकरः सर्वकारी स्यात्सर्वकर्मसु कोविदः ॥ १८
कर्मातिशेषेण गुरावध्येतव्यं बुभूषता ।
दक्षिणेनोपसादी स्यादाहूतो गुरुमाश्रयेत् ॥ १९
शुचिर्दक्षो गुणोपेतो ब्रूयादिष्टमिवान्तरा ।
चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः ॥ २०
नाभुक्तवति चाश्नीयादपीतवति नो पिबेत् ।
नातिष्ठति तथासीत नासुप्ते प्रस्वपेत च ॥ २१
उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत् ।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत् ॥ २२
अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति ।
इदं करिष्ये भगवन्निदं चापि कृतं मया ॥ २३
ब्रह्मंस्तदपि कर्ताऽस्मि यद्भवान्वक्ष्यते पुनः ।
इति सर्वमनुज्ञाप्य निवेद्य गुरवे धनम् ॥ २४
कुर्यात्कृत्वा च तत्सर्वमाख्येयं गुरवे पुनः ।
यांस्तु गन्धान्रसान्वाऽपि ब्रह्मचारी न सेवते ॥२५
सेवेत तान्समावृत्त इति धर्मेषु निश्चयः ।
ये केचिन्नियमेनोक्ता नियमा ब्रह्मचारिणः ॥ २६
तान्सर्वाननुगृह्णीयाद्भवेच्चानपगो गुरोः ।
स एवं गुरवे प्रीतिमुपहृत्य यथाबलम् ॥ २७
अग्राम्येणाश्रमेष्वेवं शिष्यो वर्तेत कर्मणा ।
वेदव्रतोपवासेन चतुर्थे चायुषो गते ॥ २८
गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि ॥ २९
धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य यत्नतः ।
द्वितीयमायुषो भागं गृहमेधी भवेद्व्रती ॥ ३०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

## एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

भीष्मेण युधिष्ठिरंप्रति गृहस्थधर्मप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
द्वितीयमायुषो भागं गृहमेधी गृहे वसेत् ।
धर्मलब्धैर्युतो दारैरग्नीनाहृत्य सुव्रतः ॥ १
गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः ।
कुसूलधान्यः प्रथमः कुम्भधान्यस्त्वनन्तरम् ॥ २
अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत् ।
तेषां परः परो ज्यायान्धर्मतो लोकजित्तमः ॥ ३
षट्कर्मा वर्तयत्येकस्त्रिभिरन्यः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः ॥ ४
गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते ।
नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ॥ ५
प्राणी वा यदि वाऽप्राणी संस्कारं यजुषाऽर्हति ।

चतुष्पदी चातुराश्रम्यरूपा ॥ १५ ॥ कर्मातिशेषेण निःशेषं कर्म कृत्वेत्यर्थः ॥ १९ ॥ अभुक्तवति गुराविति शेषः ॥ २१ ॥ अधीष्वाध्यापय ॥२३॥ समावृत्तः समापितब्रह्मचर्यकृत्यः । विस्तरेणोक्ता इति झ. पाठः ॥ २६ ॥ अनपगः समीपस्थः ॥ २७ ॥ आश्रमादाश्रमेष्वेवमिति झ. पाठः ॥ २८ ॥ अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

वृत्तयो जीविकाः ॥ २ ॥ कापोतीमुञ्छवृत्तिम् ॥ ३ ॥ षट् यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः कर्म यस्य । एको गृहस्थः त्रिभिर्यजनाध्ययनदानैः । अन्यो वानप्रस्थः द्वाभ्यां दानाध्ययनाभ्याम् । ब्रह्मसत्रे प्रणवोपास्तौ ॥ ४ ॥ अत्र गार्हस्थ्ये ॥ ५ ॥ प्राणी छागादिः । अप्राणी अश्वत्थादिः । यजुषा छेदनमन्त्रेणैव क्रत्वर्थमेव संस्कारमर्हति नतु

न दिवा प्रस्वपेज्जातु न पूर्वापरराात्रयोः ॥ ६
न भुञ्जीतान्तराकाले नानृतावाह्वयेत्स्त्रियम् ।
नास्यानश्नन्गृहे विप्रो वसेत्कश्चिदपूजितः ॥ ७
तथास्यातिथयः पूज्या हव्यकव्यवहाः सदा ।
वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ॥ ८
स्वकर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः ।
तेषां हव्यं च कव्यं चाप्यर्हणार्थं विधीयते ॥ ९
नखरैः संप्रयातस्य स्वकर्मख्यापकस्य च ।
अपविद्धाग्निहोत्रस्य गुरोर्वाऽलीकचारिणः ॥ १०
संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ११
विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।
अमृतं यज्ञशेषं स्याद्भोजनं हविषा समम् ॥ १२
भृत्यशेषं तु योऽश्नाति तमाहुर्विघसाशिनम् ।
विघसं भृत्यशेषं तु यज्ञशेषमथामृतम् ॥ १३
स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः ।
ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः ॥ १४
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ।
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया ॥१५
दुहित्रा दासवर्गेण विवादं न समाचरेत् ।
एतान्विमुच्य संवादान्सर्वपापैर्विमुच्यते ॥ १६
एतैर्जितस्तु जयति सर्वाँल्लोकान्न संशयः ।
आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ॥ १७
अतिथिस्त्विन्द्रलोकस्य देवलोकस्य चर्त्विजः ।
जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः ॥ १८
संबन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ ।
वृद्धबालातुरकृशास्त्वाकाशे प्रभविष्णवः ॥ १
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः
छाया स्वा दासवर्गश्च दुहिता कृपणं परम् ॥ २
तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः ।
गृहधर्मरतो विद्वान्धर्मनित्यो जितक्लमः ॥ २
न चार्थबद्धः कर्माणि धर्मं वा किंचिदाचरेत् ।
गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम् ॥ २
परंपरं तथैवाहुश्चातुराश्रम्यमेव तत् ।
ये चोक्ता नियमास्तेषां सर्वं कार्यं बुभूषता ॥ २
कुम्भधान्यैरुञ्छशिलैः कापोतीं चास्थितास्तथा
यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्धते ॥ २
दश पूर्वान्दश परान्पुनाति च पितामहान् ।
गृहस्थवृत्तीश्चाप्येता वर्तयेद्यो गतव्यथः ॥ २
स चक्रधरलोकानां सदृशीमाप्नुयाद्गतिम् ।
जितेन्द्रियाणामथवा गतिरेषा विधीयते ॥ २
स्वर्गलोको गृहस्थानामुदारमनसां हितः ।
स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः ॥ २
स्वर्गलोको गृहस्थानां प्रतिष्ठा नियतात्मनाम् ।
ब्रह्मणा विहिता श्रेणिरेषा यस्माद्विधीयते ।
द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते ॥ २
अतःपरं परममुदारमाश्रमं
तृतीयमाहुस्त्यजतां कलेवरम् ।
वनौकसां गृहपतिनामनुत्तमं
शृणुष्व संश्लिष्टशरीरकारिणाम् ॥ २९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

---

भक्षणमात्रार्थम् ॥ ६ ॥ अन्तरा भोजनद्वयमध्ये । स्त्रियं मैथुनायेति शेषः ॥ ७ ॥ नखरैर्नखैः । दम्भार्थं नखलोमधरस्य । अपविद्धमविधिना त्यक्तमग्निहोत्रं येन तस्य । एवंविधानां चाण्डालादीनां च भूतानामत्र गार्हस्थ्ये संविभागोऽस्ति ॥१०॥ अपचमानेभ्यो ब्रह्मचारिसंन्यासिभ्यः । तथैव याचमानेभ्य इति ध. पाठः ॥ ११ ॥ जामीभिः सगोत्रस्त्रीभिः ॥ १५ ॥ संवादान्नाशाद्यर्थं कलहान् ॥ १६ ॥ आचार्यादयः सम्यगाराधिता ब्रह्मलोकादीन् प्रति नयन्तीत्याहाचार्यइति सार्धाभ्याम् ॥ १७ ॥ कृपणं कृपास्थानमिति रत्नगर्भः ॥ २० ॥ नचेति । अर्थाशयाऽग्निहोत्रादीन्न कुर्यात् । तिस्रो वक्ष्यमाणाः कुम्भधान्यमुञ्छशिल कापोतीं च तासां परमुत्तरमुत्तरं श्रेयः ॥ २२ ॥ चातुराश्रम्यमध्येऽपि परं परं श्रेयः ॥ २३ ॥ चक्रधराश्चक्रवर्तिनो मान्धात्रादयस्तल्लोकानां सदृशीं गति तत्तुल्यताम् ॥ २६ ॥ सुपुष्पितो रमणीयः ॥ २७ ॥ गृहपतिनां ह्रस्वत्वमार्षम् । गृहस्थेभ्यः श्रेष्ठं संश्लिष्टमस्थिचर्ममात्रसंश्लेषवत् तच्च तच्छरी च तस्य कारिणां शरीरशोषकाणामित्यर्थः । शरीरकर्मणामिति ध. पाठः ॥ २९ ॥ एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

## पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

भीष्मेण युधिष्ठिरंप्रति वनस्थधर्मप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

भीष्म उवाच ।
प्रोक्ता गृहस्थवृत्तिस्ते विहिता या मनीषिभिः ।
तदनन्तरमुक्तं यत्तन्निबोध युधिष्ठिर ॥ १
'व्यासेन कथितं पूर्वं पुत्राय सुमहात्मने ।'
व्यास उवाच ।
क्रमशस्त्ववधूयैनां तृतीयां वृत्तिमुत्तमाम् ।
संयोगव्रतखिन्नानां वानप्रस्थाश्रमौकसाम् ॥ २
श्रूयतां पुत्र भद्रं ते सर्वलोकाश्रमात्मनाम् ।
प्रेक्षापूर्वं निवृत्तानां पुण्यदेशनिवासिनाम् ॥ ३
गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं वनमेव तदाऽऽश्रयेत् ॥ ४
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत् ।
तानेवाग्नीन्परिचरेद्यजमानो दिवौकसः ॥ ५
नियतो नियताहारः षष्ठभक्तोऽप्रमत्तवान् ।
तदग्निहोत्रं ता गावो यज्ञाङ्गानि च सर्वशः ॥ ६
अकृष्टं व्रीहियवं नीवारं विघसानि च ।
हवींषि संप्रयच्छेत मखेष्वत्रापि पञ्चसु ॥ ७
वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तयः स्मृताः ।
सद्यः प्रक्षालकाः केचित्केचिन्मासिकसंचयाः ॥८
वार्षिकं संचयं केचित्केचिद्द्वादशवार्षिकम् ।
कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव वा ॥ ९
अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः ।
ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः ॥१०
भूमौ विपरिवर्तन्ते तिष्ठन्ति प्रपदैरपि ।
स्थानासनैर्वर्तयन्ति स वनेष्वभिषिञ्चते ॥ ११
दन्तोलूखलिकाः केचिदश्मकुट्टास्तथा परे ।
शुक्लपक्षे पिबन्त्येके यवागूं क्वथितां सकृत् ॥ १२
कृष्णपक्षे पिबन्त्यन्ये भुञ्जते वा यथागतम् ।
मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ॥ १३
वर्तयन्ति यथान्यायं वैखानसमतं श्रिताः ।
एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम् १४
चतुर्थश्चौपनिषदो धर्मः साधारणः स्मृतः ।
वानप्रस्थाद्गृहस्थाच्च ततोऽन्यः संप्रवर्तते ।
अस्मिन्नेव युगे तात विप्रैस्तत्त्वार्थदर्शिभिः ॥ १५
अगस्त्यः सप्तऋषयो मधुच्छन्दोऽघमर्षणः ।
सांकृतिः सुदिवातण्डिर्यथावासो कृतश्रमः ॥ १६
अहोवीर्यस्तथा काव्यस्ताण्ड्यो मेधातिथिर्बुधः ।
बलवान्कर्णनिर्वाकः शून्यपालः कृतश्रमः ।
एते धर्मे सुविद्वांसस्ततः स्वर्गमुपागमन् ॥ १७
तात प्रत्यक्षधर्माणस्तथा यायावरा गणाः ।
ऋषीणामुग्रतपसां धर्मनैपुणदर्शिनाम् ॥ १८
अन्ये चापरिमेयाश्च ब्राह्मणा वनमाश्रिताः ।
वैखानसा वालखिल्याः सैकताश्च तथा परे ॥१९
कर्मभिस्ते निरानन्दा धर्मनित्या जितेन्द्रियाः ।
गताः प्रत्यक्षधर्माणस्ते सर्वे वनमाश्रिताः ॥ २०
अनक्षत्रास्त्वनाधृष्या दृश्यते ज्योतिषां गणाः ।
जरया च परिद्यूना व्याधिना च प्रपीडिताः ॥ २१
चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् ।
साद्यस्कां संनिरुप्येष्टिं सर्ववेदसदक्षिणाम् ॥ २२
आत्मयाजी सोऽत्मरतिरात्मक्रीडात्मसंश्रयः ।
आत्मन्यग्नीन्समारोप्य त्यक्त्वा सर्वपरिग्रहान् ॥२३

---

एनां गृहस्थवृत्तिमवधूय तिरस्कृत्य कां तृतीयां कापोतीं वृत्तिमपि । संयोगः सहधर्मचारिणीसंयोगस्तत्र यद्व्रतं तेन खिन्नानाम् । वानप्रस्थाश्रम ओक आश्रयो येषां तेषां वृत्तिः श्रूयतामिति द्वयोः संबन्धः ॥ २ ॥ सर्वे लोका आश्रमाश्चाऽऽत्मा येषाम् । संविभागशमादिमयत्वात् सर्वाश्रमफलमत्रैवान्तर्भूतमित्यर्थः ॥३॥ विग्रहं तु यदा पश्येदिति ध. पाठः ॥४॥ षष्ठभुक्त इति ध. पाठः ॥ ६ ॥ अत्रापि वनेपि ॥ ७ ॥ शाश्वतामृतभोजिन इति ध. पाठः ॥ १० ॥ चतुर्थश्चतुर्थाश्रमे विहित औपनिषदः शान्त्यादिर्धर्मः साधारणः सर्वेष्वाश्रमेषु । अन्योऽसाधारणः । सर्वार्थदर्शिभिरिति ध. पाठः ॥ १५ ॥ सांकृतिश्च सुदीप्तार्चिर्यवक्रीतः सुतश्रमः इति ध. पाठः ॥ १६ ॥ चलो वाकश्च निर्वाक इति ट. ध. पाठः ॥ १७ ॥ अनक्षत्राः नक्षत्रग्रहताराभ्योऽन्ये ॥ २१ ॥ सर्ववेदसदक्षिणां सर्वस्वदक्षिणाम् ॥२२॥ आत्मयाजी जीवच्छ्राद्धादिकृत्। आत्मक्रीडश्चाऽऽ-

साद्यस्कांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्वदा ।
यदैव याजिनां यज्ञादात्मनीज्या प्रवर्तते ॥ २४
त्रींश्चैवाग्नींस्त्यजेत्सम्यगात्मन्येवात्ममोक्षणात् ।
प्राणेभ्यो यजुषां पञ्च षट् प्राश्नीयादकुत्सयन् ॥२५
केशलोमनखान्वाप्य वानप्रस्थो मुनिस्ततः ।
आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्मभिः ॥२६
अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्द्विजः ।
लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते ॥ २७
सुशीलवृत्तो व्यपनीतकल्मषो
नचेह नामुत्र च कर्तुमीहते ।
अरोषमोहो गतसन्धिविग्रहो
भवेदुदासीनवदात्मविन्नरः ॥
यमेषु चैवानुगतेषु न व्यथे-
त्स्वशास्त्रसूत्राहुतिमन्त्रविक्रमः ।
भवेद्यथेष्टा गतिरात्मयाजिनो
न संशयो धर्मपरे जितेन्द्रिये ॥
ततःपरं श्रेष्ठमतीव सद्गुणै-
रधिष्ठितं त्रीनधिवृत्तिमुत्तमम् ।
चतुर्थमुक्तं परमाश्रमं शृणु
प्रकीर्त्यमानं परमं परायणम् ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

---

## एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

भीष्मेण युधिष्ठिरंप्रति तुरीयाश्रमधर्मप्रतिपादकव्यासवचनानुवादः ॥ १ ॥

श्रीशुक उवाच ।
वर्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा ।
योक्तव्योऽऽत्मा कथं शक्त्या परं वै काङ्क्षता पदम् १
व्यास उवाच ।
प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम् ।
यत्कार्यं परमार्थार्थे तदिहैकमनाः शृणु ॥ २
कषायं पाचयित्वाऽऽशु श्रेणिस्थानेषु च त्रिषु ।
प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ॥ ३
तद्भवानेवमभ्यस्य वर्ततां श्रूयतां तथा ।
एक एव चरेद्धर्मं सिद्ध्यर्थमसहायवान् ॥ ४
एकश्चरति यः पश्यन्न जहाति न हीयते ।
अनग्निरनिकेतश्च ग्राममन्नार्थमाश्रयेत् ॥ ५
अश्वस्तनविधाता स्यान्मुनिर्भावसमन्वितः ।
लघ्वाशी नियताहारः सकृदन्ननिषेविता ॥ ६
कपालं वृक्षमूलानि कुचेलमसहायता ।
उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम् ॥
यस्मिन्वाचः प्रविशन्ति कूपे प्रास्ताः शिलाइव
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ।
नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् ।
ब्राह्मणानां विशेषेण नैव ब्रूयात्कथंचन ॥
यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।
तूष्णीमासीत निन्दायां कुर्वन्भैषज्यमात्मनः ॥
येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥
येनकेनचिदाच्छन्नो येनकेनचिदाशितः ।
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥
अहेरिव गणाद्भीतः सन्मानान्मरणादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥

---

त्मसंश्रयश्च नतु स्त्र्यादिक्रीडो राजाद्याश्रयः ॥ २३ ॥ साद्यस्कान् सद्यएव क्रियन्ते तान् ब्रह्मयज्ञादीन् तावद्यजेत् । यदैव यस्मिन्नेव काले याजिनां यज्वनां यज्ञात् कर्ममयादन्या आत्मनीज्या आत्मयज्ञः प्रवर्तते तावदेव तान् कुर्यादित्यर्थः ॥ २४ ॥ यज्ञः सदैवात्मनि वर्तेत ट. ध. पाठः ॥२५॥ वाप्य वापयित्वा ॥२६॥ स्वस्य संन्यासविधेः शास्त्रं तत्रस्थं सूत्रं आहुतिमन्त्रश्च तत्रोभयत्रापि विक्रमः पराक्रमो यस्य स तथा ॥ २९ ॥ त्रीनाश्रमानपेक्ष्याधिष्ठितमधिकत्वेन स्थितम् । यतोऽधिवृत्तिमधिका शमाद्याति वृत्तिर्यस्मिंस्तम् ॥३०॥ पञ्चाशदधिकद्विशततमोऽध्यायः ॥२५

कषायं चित्तदोषं पाचयित्वा विश्लथं कृत्वा । स्थानेष्व मेष्वनुत्तमम् । इदं मतं श्रेष्ठमित्यर्थः ॥ ३ ॥ आक्रुश्यम नाक्रोशेदित्यर्थः । त्रस्ता द्विपा इवेति झ. पाठः ॥ ८ ॥ भै भवरोगचिकित्साम् ॥ १० ॥ अहेः सर्पात् गणाज्जनसमूहा सौहित्यान्नरकादिवेति झ. पाठः ॥ १३ ॥

न क्रुद्ध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥ १४
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥ १५
अनभ्याहतचित्तः स्यादनभ्याहतवाग्भवेत् ।
निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम् ॥ १६
अभयं सर्वभूतेभ्यो भूतानामभयं यतः ।
तस्य मोहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ १७
यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिलीयन्ते पदजातानि कौञ्जरे ॥ १८
एवं सर्वमहिंसायां धर्मार्थमभिधीयते ।
अमृतः स नित्यं भवति यो हिंसां न प्रपद्यते ॥ १९
अहिंसकः समः सत्यो धृतिमान्नियतेन्द्रियः ।
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥ २०
एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः ।
न मृत्युरतिगो भावः स मृत्युं नाधिगच्छति ॥ २१
विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत्स्थितम् ।
अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ॥ २२
जीवितं यस्य धर्मार्थं धर्मो हर्यर्थमेव च ।
अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ २३
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
निर्मुक्तं बन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः ॥ २४
सर्वाणि भूतानि सुखे रमन्ते
सर्वाणि दुःखस्य भृशं त्रसन्ते ।
तेषां भयोत्पादनजातखेदः
कुर्यान्न कर्माणि हि श्रद्दधानः ॥ २५
दानं हि भूताभयदक्षिणायाः
सर्वाणि दानान्यधितिष्ठतीह ।
तीक्ष्णां तनुं यः प्रथमं जहाति
सोऽनन्तमाप्नोत्यभयं प्रजाभ्यः ॥ २६
स दत्तमास्येन हविर्जुहोति
लोकस्य नाभिर्जगतः प्रतिष्ठा ।
तस्याङ्गमङ्गानि कृताकृतं च
वैश्वानरः सर्वमिदं प्रपेदे ॥ २७
प्रादेशमात्रे हृदि निःसृतं य-
त्तस्मिन्प्राणानात्मयाजी जुहोति ।
तस्याग्निहोत्रं हुतमात्मसंस्थं
सर्वेषु लोकेषु सदैवतेषु ॥ २८
देवं त्रिधातुं त्रिवृतं सुपर्णं
ये विद्युरग्र्यां परमात्मतां च ।
ते सर्वलोकेषु महीयमाना
देवाः समर्था अमृतं वहन्ति ॥ २९
वेदांश्च वेद्यं तु विधिं च कृत्स्न-
मथो निरुक्तं परमार्थतां च ।
सर्वं शरीरात्मनि यः प्रवेद
तस्य स्म देवाः स्पृहयन्ति नित्यम् ॥ ३०
भूमावसक्तं दिवि चाप्रमेयं
हिरण्मयं योऽण्डजमण्डमध्ये ।
पतत्रिणं पक्षिणमन्तरिक्षे
यो वेद भोग्यात्मनि दीप्तरश्मिः ॥ ३१
आवर्तमानमजरं विवर्तनं
षण्णाभिकं द्वादशारं सुपर्व ।
यस्येदमास्योपरि याति विश्वं
तत्कालचक्रं निहितं गुहायाम् ॥ ३२
यः संप्रजानञ्जगतः शरीरं
सर्वान्स लोकानधिगच्छतीह ।
तस्मिन्हुतं तर्पयतीह देवां-
स्ते वै तृप्तास्तर्पयन्त्यास्यमस्य ॥ ३३

निदेशमाज्ञाम् । निर्वेदं भृतको यथेति थ. पाठः ॥ १५ ॥ अ-भ्याहतं दोषाक्रान्तम् । निरमित्रस्याजातशत्रोः ॥ १६ ॥ सर्व-भूतेभ्यो यस्येति शेषः ॥ १७ ॥ नागपदे हस्तिपदे । पदगा-मिनां नृपश्वादीनां पदान्यपिलीयन्ते तिरोधीयन्ते । तथेन्द्रा-दीनां पदजातानि स्थानानि । कौञ्जरे कुं पृथिवीं शरीररूपां जरयतीति कुञ्जरः समाधिस्थो योगी तस्य स्थाने कौञ्जरे पदे ॥ १८ ॥ स मुक्तिमुपगच्छतीति थ. पाठः ॥ २१ ॥ धर्मो रत्यर्थमेव चेति ध. पाठः ॥२३॥ अक्षीणं क्षीणकर्माणं तमिति ध. पाठः ॥ २४ ॥ उत्तान आस्येनेति झ. पाठः ॥ २७ ॥ देवाः समर्त्याः सुकृतं वदन्तीति झ. पाठः ॥ २९ ॥ एकोनप-ञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

तेजोमयो नित्यमयः पुराणो
लोकाननन्तानभयानुपैति ।
भूतानि यस्मान्न त्रसन्ते कदाचि-
त्स भूतानां न त्रसते कदाचित् ॥ ३४
अगर्हणीयो न च गर्हतेऽन्या-
न्स वै विप्रः परमात्मानमीक्षेत् ।
विनीतमोहो व्यपनीतकल्मषो
न चेह नामुत्र च सोऽन्नमर्च्छति ॥ ३५
अरोषमोहः समलोष्टकाञ्चनः
प्रहीणशोको गतसन्धिविग्रहः ।
अपेतनिन्दास्तुतिरप्रियाप्रिय-
श्चरन्नुदासीनवदेष भिक्षुकः ॥ ३६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

## द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

भीष्मेण युधिष्ठिरंप्रति कठवल्ल्यर्थप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
प्रकृतेस्तु विकारा ये क्षेत्रज्ञस्तैरधिष्ठितः ।
न चैनं ते प्रजानन्ति स तु जानाति तानपि ॥ १
तैश्चैवं कुरुते कार्यं मनःषष्ठैरिहेन्द्रियैः ।
सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः ॥ २
इन्द्रियेभ्यः परे ह्यर्था अर्थेभ्यः परमं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ ३
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ ४
एवं सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥५
अन्तरात्मनि संलीय मनःषष्ठानि मेधया ।
इन्द्रियाणीन्द्रियार्थांश्च बहुचिन्त्यमचिन्तयन् ॥ ६
ध्यानोपरमणं कृत्वा विद्यासंपादितं मनः ।
अनिश्वरः प्रशान्तात्मा ततोर्च्छत्यमृतं पदम् ॥ ७
इन्द्रियाणां तु सर्वेषां वश्यात्मा चलितस्मृतिः ।
आत्मनः संप्रदानेन मर्त्यो मृत्युमुपाश्नुते ॥ ८
हित्वा तु सर्वसंकल्पान्सत्वे चित्तं निवेशयेत् ।
सत्वे चित्तं समावेश्य ततः कालंजरो भवेत् ॥ ९
चित्तप्रसादेन यतिर्जहातीह शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमत्यन्तमश्नुते ॥ १०
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ।
निवाते वा यथा दीपो दीप्यमानो न कम्पते ॥ ११
एवं पूर्वापरे रात्रौ युञ्जन्नात्मानमात्मनि ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि १२
रहस्यं सर्ववेदानामनैतिह्यमनागतम् ।
आत्मप्रत्ययिकं शास्त्रमिदं पुत्रानुशासनम् ॥ १३
धर्माख्यानेषु सर्वेषु चित्राख्यानेषु यद्वसु ।
दृश्यते ऋक्सहस्राणि निर्मथ्यामृतमुद्धृतम् ॥ १४
नवनीतं यथा दध्नः काष्ठादग्निर्यथैव च ।
तथैव विदुषां ज्ञानं पुत्रहेतोः समुद्धृतम् ॥ १५
स्नातकानामिदं शास्त्रं वाच्यं पुत्रानुशासनम् ।
तदिदं नाप्रशान्ताय नादान्तायातपस्विने ॥ १६
नावेदविदुषे वाच्यं तथा नानुगताय च ।
नासूयकायानृजवे न चानिर्दिष्टकारिणे ॥ १७
न तर्कशास्त्रदग्धाय तथैव पिशुनाय च ।
श्लाघिने श्लाघनीयाय प्रशान्ताय तपस्विने ॥१८
इदं प्रियाय पुत्राय शिष्यायानुगताय च ।
रहस्यधर्मं वक्तव्यं नान्यस्मै तु कथंचन ॥ १९
यद्यप्यस्य महीं दद्याद्रत्नपूर्णामिमां नरः ।
इदमेव ततः श्रेय इति मन्येत तत्त्ववित् ॥ २०
अतो गुह्यतरार्थं तदध्यात्ममतिमानुषम् ।
यत्तन्महर्षिभिर्जुष्टं वेदान्तेषु च गीयते ॥ २१
तत्तेऽहं संप्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥२२

द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

अव्यक्तात्परतोऽमृतम् । अमृतान्न परं इति झ. थ. पाठः ॥ ४ ॥ महात्मा तत्वदर्शिभिरिति थ. ध. पाठः ॥ ५ ॥

यच्च ते मनसि वर्तते परं
यत्र चास्ति तव संशयः क्वचित् ।
श्रूयतामयमहं तवाग्रतः
पुत्र किं हि कथयामि ते पुनः ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

## त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

भीष्मेण युधिष्ठिरंप्रति अध्यात्मविषयकव्यासवाक्यानुवादः ॥ १ ॥

शुक उवाच ।
अध्यात्मं विस्तरेणेह पुनरेव वदस्व मे ।
यदध्यात्मं यथा वेद भगवन्नृषिसत्तम ॥ १
व्यास उवाच ।
अध्यात्मं यदिदं तात पुरुषस्येह विद्यते ।
तत्तेऽहं वर्तयिष्यामि तस्य व्याख्यामिमां शृणु ॥ २
भूमिरापस्तथा ज्योतिर्वायुराकाश एव च ।
महाभूतानि भूतानां सागरस्योर्मयो यथा ॥ ३
प्रसार्येह यथाऽङ्गानि कूर्मः संहरते पुनः ।
तद्वन्महान्ति भूतानि यवीयःसु विकुर्वते ॥ ४
इति तन्मयमेवेदं सर्वं स्थावरजङ्गमम् ।
सर्गे च प्रलये चैव तस्मिन्निर्दिश्यते तथा ॥ ५
महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
अकरोत्तात वैषम्यं यस्मिन्यदनुपश्यति ॥ ६
शुक उवाच ।
अकरोद्यच्छरीरेषु कथं तदुपलक्षयेत् ।
इन्द्रियाणि गुणाः केचित्कथं तानुपलक्षयेत् ॥ ७
व्यास उवाच ।
एतत्ते वर्तयिष्यामि यथावदनुपूर्वशः ।
शृणु तत्त्वमिहैकाग्रो यथा तत्त्वं यथा च तत् ॥ ८
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसंभवम् ।
प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ॥ ९
रूपं चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते ।
रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसः ॥ १०
घ्रेयं घ्राणं शरीरं च भूमेरेते गुणास्त्रयः ।
'श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।'
एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ॥ ११
वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते ।
आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः ॥ १२
मनो बुद्धिः स्वभावश्च त्रय एते मनोमयाः ।
न गुणानतिवर्तन्ते गुणेभ्यः परमागताः ॥ १३
यथा कूर्म इहाङ्गानि प्रसार्य विनियच्छति ।
एवमेवेन्द्रियग्रामं बुद्धिः सृष्ट्वा नियच्छति ॥ १४
यदूर्ध्वं पादतलयोरवाङ्मूर्ध्नश्च पश्यति ।
एतस्मिन्नेव कृत्ये तु वर्तते बुद्धिरुत्तमा ॥ १५
गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ १६
इन्द्रियाणि नरे पञ्च षष्ठं तु मन उच्यते ।
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञं पुनरष्टमम् ॥ १७
चक्षुरालोचनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १८
रजस्तमश्च सत्त्वं च त्रय एते स्वयोनिजाः ।
समाः सर्वेषु भूतेषु तान्गुणानुपलक्षयेत् ॥ १९
तत्र यत्प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत् ।
प्रशान्तमिव संशुद्धं सत्त्वं तदुपधारयेत् ॥ २०
यत्तु संतापसंयुक्तं काये मनसि वा भवेत् ।

मिश्रभूतानि भूतानामिति ध. पाठः ॥ ३ ॥ सुरनरतिर्यगादिरूपेण वैषम्यमकरोत् । तत्र हेतुः । यस्मिन्कर्मणि निमित्ते सति यदनुपश्यति अन्तकाले । यंयं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तंतमेवैतीति स्मृतेः ॥ ६ ॥ स्पर्शः स्पर्शनेन्द्रियम् । वायुगुणा वायुविकाराः ॥ ९ ॥ विपाको जाठरः ॥ १० ॥ शरीरं कठिनांशबाहुल्यात्पार्थिवम् । इन्द्रियग्रामैः सह पाञ्चभौतिको विकारः ॥ ११ ॥ स्पर्शादयो वाय्वादीनां गुणास्तद्विकारैः स्पर्शनादीन्द्रियैर्गृह्यन्ते । वायोः प्राण इति ध. पाठः ॥ १२ ॥ एतेत्मयोनिजा इति थ. पाठः ॥ १३ ॥ त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

प्रवृत्तं रज इत्येवं तत्र चाप्युपलक्षयेत् ॥ २१
यत्तु संमोहसंयुक्तमव्यक्तविषयं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधार्यताम् ॥ २२
प्रहर्षः प्रीतिरानन्दः साम्यं स्वस्थात्मचित्तता ।
अकस्माद्यदि वा कस्माद्वर्तन्ते सात्विका गुणाः २३
अभिमानो मृषावादो लोभो मोहस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि वर्तन्ते हेत्वहेतुतः ॥ २४
तथा मोहः प्रमादश्च निद्रा तन्द्रा प्रबोधिता ।
कथंचिदभिवर्तन्ते विज्ञेयास्तामसा गुणाः ॥ २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

## चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

भीष्मेण युधिष्ठिरंप्रति ज्ञानादिसाधनप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
मनः प्रसृजते भावं बुद्धिरध्यवसायिनी ।
हृदयं प्रियाप्रिये वेद त्रिविधा कर्मवेदना ॥ १
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा परो मतः ॥ २
बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनो गतिः ।
यदा विकुरुते भावं तदा भवति सा मनः ॥ ३
इन्द्रियाणां पृथग्भावाद्बुद्धिर्विक्रियतेऽसकृत् ।
शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ॥ ४
पश्यती भवते दृष्टी रसती रसनं भवेत् ।
जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ॥ ५
इन्द्रियाणीति तान्याहुस्तेष्वदृश्योऽधितिष्ठति ।
तिष्ठती पुरुषे बुद्धिस्त्रिषु भावेषु वर्तते ॥ ६
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति ।
न सुखेन न दुःखेन कदाचिदिह युज्यते ॥ ७
सेयं भावात्मिका भावांस्त्रीनेताननुवर्तते ।
सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥ ८
यदा प्रार्थयते किंचित्तदा भवति सा मनः ।
अधिष्ठानानि वै बुद्ध्यां पृथगेतानि संस्मरेत् ।
इन्द्रियाण्येवमेतानि विजेतव्यानि कृत्स्नशः ॥ ९
सर्वाण्येवानुपूर्व्येण यद्यदाऽनुविधीयते ।
अविभागगता बुद्धिर्भावे मनसि वर्तते ।
'प्रवर्तमानं तु रजः सत्वमप्यनुवर्तते ॥' १०
ये चैव भावा वर्तन्ते सर्व एष्वेव ते त्रिषु ।
अन्वर्थाः संप्रवर्तन्ते रथनेमिमरा इव ॥ ११
प्रदीपार्थं मनः कुर्यादिन्द्रियैर्बुद्धिसत्तमैः ।
निश्चरद्भिर्यथायोगमुदासीनैर्यदृच्छया ॥ १२
एवं स्वभावमेवेदमिति विद्वान्न मुह्यति ।
अशोचन्नप्रहृष्यन्हि नित्यं विगतमत्सरः ॥ १३
न चात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः ।
प्रवर्तमानैरनर्यैर्दुर्धर्षैरकृतात्मभिः ॥ १४
तेषां तु मनसा रश्मीन्यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा दीपदीप्ता यथाऽऽकृतिः १५
सर्वेषामेव भूतानां मनस्युपरते यथा ।
प्रकाशं भवते सर्वं तथेदमुपधार्यताम् ॥ १६
यथा वारिचरः पक्षी न लिप्यति जले चरन् ।
विमुक्तात्मा तथा योगी गुणदोषैर्न लिप्यते ॥ १७
एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन् ।
असज्जमानः सर्वेषु कथंचन न लिप्यते ॥ १८
त्यक्त्वा पूर्वकृतं कर्म रतिर्यस्य सदाऽऽत्मनि ।
सर्वभूतात्मभूतस्य गुणवर्गेष्वसज्जतः ॥ १९
सत्वमात्मा प्रसरति गुणान्वाऽपि कदाचन ।
न गुणा विदुरात्मानं गुणान्वेद स सर्वदा ॥ २०
परिद्रष्टा गुणानां च परिस्रष्टा यथातथम् ।
क्षेत्रक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ॥ २१
सृजतेऽत्र गुणानेक एको न सृजते गुणान् ।
पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा ॥ २२
यथा मत्स्योऽद्भिरन्यः स्यात्संप्रयुक्तौ तथैव तौ ।
मशकोदुम्बरौ वाऽपि संप्रयुक्तौ यथा सह ॥ २३

इषीका वा यथा मुञ्जे पृथक्क सह चैव च । तथैव सहितावेतावन्योन्यस्मिन्प्रतिष्ठितौ ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

## पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

भीष्मेण युधिष्ठिरंप्रति ज्ञानादिप्रशंसापरव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
सृजते त्रिगुणान्सत्वं क्षेत्रज्ञस्त्वधितिष्ठति ।
गुणान्विक्रियते सर्वानुदासीनवदीश्वरः ॥ १
स्वभावयुक्तं तत्सत्वं यदिमान्सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं सृजते तन्तुवद्गुणान् ॥ २
प्रध्वस्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते ।
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ ३
उभयं संप्रधार्यैतदध्यवस्येद्यथामति ।
अनेनैव विधानेन भवेद्गर्भशयो महान् ॥ ४
अनादिनिधनं नित्यं तं बुद्ध्वा विचरेन्नरः ।
अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ५
इत्येवं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम् ।
अतीत्य सुखमासीत अशोचंश्छिन्नसंशयः ॥ ६
ताम्येयुः प्रच्युताः पृथ्व्यां यथा पूर्णां नदीं नराः ।
अवगाढा ह्यविद्वांसो विद्धि लोकमिमं तथा ॥ ७
न तु ताम्यति वै विद्वान्स्थले चरति तत्त्ववित् ।
एवं यो विन्दतेऽऽत्मानं केवलं ज्ञानमात्मनः ॥ ८
एवं बुद्ध्वा नरः सर्वं भूतानामागतिं गतिम् ।
समवेक्ष्य च वैषम्यं लभते शममुत्तमम् ॥ ९
एतद्वै जन्मसामर्थ्यं ब्राह्मणस्य विशेषतः ।
आत्मज्ञानं शमश्चैव पर्याप्तं तत्परायणम् ॥ १०
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ।
विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ॥ ११
न भवति विदुषां महद्भयं
यदविदुषां सुमहद्भयं परत्र ।
न हि गतिरधिकाऽस्ति कस्यचि-
द्भवति हि या विदुषः सनातनी ॥ १२
लोकमातुरमसूयते जन-
स्तत्तदेव च निरीक्ष्य शोचते ।
तत्र पश्य कुशलानशोचतो
ये विदुस्तदुभयं कृताकृतम् ॥ १३
यत्करोत्यनभिसन्धिपूर्वकं
तच्च निर्णुदति तत्पुराकृतम् ।
न प्रियं तदुभयं न चाप्रियं
तस्य तज्जनयतीह कुर्वतः ॥ १४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

## षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

भीष्मेण युधिष्ठिरंप्रति ज्ञानोपायादिप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

शुक उवाच ।
यस्माद्धर्मात्परो धर्मो विद्यते नेह कश्चन ।
यो विशिष्टश्च धर्मेभ्यस्तं भवान्प्रब्रवीतु मे ॥ १
व्यास उवाच ।
धर्मं ते संप्रवक्ष्यामि पुराणमृषिसंस्तुतम् ।
विशिष्टं सर्वधर्मेभ्यस्तमिहैकमनाः शृणु ॥ २
इन्द्रियाणि प्रमाथीनि बुद्ध्या संयम्य यत्नतः ।
सर्वतो निष्पतिष्णूनि पिता बालानिवात्मजान् ॥ ३
मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ ४

ऊर्णनाभिर्यथा सत्वमिति ट. ड. पाठः ॥ २ ॥ नाल्येयुः प्रच्युता इति ध. पाठः ॥ ७ ॥ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

निष्पतिष्णूनि निष्पतनशीलानि संनियम्यैकाग्र्यं कुर्यादिति संबन्धः ॥ ३ ॥

तानि सर्वाणि संधाय मनःषष्ठानि मेधया ।
आत्मतृप्त इवासीत बहुचिन्त्यमचिन्तयन् ॥ ५
गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मनि ।
तदा त्वमात्मनाऽऽत्मानं परं द्रक्ष्यसि शाश्वतम् ॥ ६
सर्वात्मानं महात्मानं विधूममिव पावकम् ।
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥ ७
यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः ।
आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलम् ॥ ८
एवमात्मा न जानीते क्व गमिष्ये कुतस्त्वहम् ।
अन्यो ह्यत्रान्तरात्माऽस्ति यः सर्वमनुपश्यति ॥ ९
ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना ।
दृष्ट्वा त्वमात्मनाऽऽत्मानं निरात्मा भव सर्ववित् ॥
विमुक्तः सर्वपापेभ्यो विमुक्तत्वगिवोरगः ।
परां बुद्धिमवाप्येह विपाप्मा विगतज्वरः ॥ ११
सर्वतःप्रवहां घोरां नदीं लोकप्रवाहिनीम् ।
पञ्चेन्द्रियग्राहवतीं मनःसंकल्परोधसम् ॥ १२
लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम् ।
सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम् ॥ १३
अव्यक्तप्रभवां शीघ्रां दुस्तरामकृतात्मभिः ।
प्रतरस्व नदीं बुद्ध्या कामग्राहसमाकुलाम् ॥ १४
संसारसागरगमां योनिपातालदुस्तराम् ।
आत्मकर्मोद्भवां तात जिह्वावर्तां दुरासदाम् ॥ १५
यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः ।
तां तीर्णः सर्वतो मुक्तो विधूतात्माऽऽत्मविच्छुचिः
उत्तमां बुद्धिमास्थाय ब्रह्मभूयं भविष्यसि ।
संतीर्णः सर्वसंक्लेशान्प्रसन्नात्मा विकल्मषः ॥ १७
भूमिष्ठानीव भूतानि पर्वतस्थो निशामय ।
अक्रुध्यन्नप्रहृष्यंश्च अनृशंसमतिस्तथा ॥ १८
ततो द्रक्ष्यसि सर्वेषां भूतानां प्रभवाप्ययौ ।
एवं वै सर्वभूतेभ्यो विशिष्टं मेनिरे बुधाः ।
धर्मं धर्मभृतां श्रेष्ठा मुनयस्तत्त्वदर्शिनः ॥ १९
आत्मनो व्यापिनो ज्ञानमिदं पुत्रानुशासनम् ।
प्रयताय प्रवक्तव्यं हितायानुगताय च ॥ २०
आत्मज्ञानमिदं गुह्यं सर्वगुह्यतमं महत् ।
अब्रुवं यदहं तात आत्मसाक्षिकमञ्जसा ॥ २१
नैव स्त्री न पुमानेतन्नैव वेद नपुंसकम् ।
अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम् ॥ २२
नैतज्ज्ञात्वा पुमान्स्त्री वा पुनर्भवमवाप्नुते ।
स्वभावप्रतिपत्त्यर्थमेतद्धर्मं विधीयते ॥ २३
यथा मतानि सर्वाणि तथैतानि यथातथा ।
कथितानि मया पुत्र भवन्ति न भवन्ति च ॥ २४

तत्प्रीतियुक्तेन गुणान्वितेन
पुत्रेण सत्पुत्र दमान्वितेन ।
पृष्टो हि संप्रीतिमना यथार्थं
ब्रूयात्सुतस्येह यदुक्तमेतत् ॥ २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

## सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

भीष्मेण युधिष्ठिरंप्रति साधनसामग्रीप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
गन्धान्रसान्नानुरुन्ध्यात्सुखं वा
नालंकारांश्चाप्नुयात्तस्यतस्य ।
मानं च कीर्तिं च यशश्च नेच्छे-
त्स वै प्रचारः पश्यतो ब्राह्मणस्य ॥ १
सर्वान्वेदानधीयीत शुश्रूषुर्ब्रह्मचर्यवान् ।
ऋचो यजूंषि सामानि वेदवेदाङ्गपारगः ॥ २
ज्ञानी यः सर्वभूतानां सर्ववित्सर्वभूतवित् ।
नाकामो म्रियते जातु न तेन न च वै द्विजः ॥ ३
इष्टीश्च विविधाः प्राप्य क्रतूंश्चैवाप्तदक्षिणान् ।
प्राप्नोति नैव ब्राह्मण्यमविज्ञानात्कथंचन ॥ ४
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।

आत्मजन्मोद्भवामिति ट. ध. पाठः ॥ १५ ॥

यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ५
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ६
कामबन्धनमेवेदं नान्यदस्तीह बन्धनम् ।
कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते ॥ ७
कामतो मुच्यमानस्तु धूमाभ्रादिव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण वर्तते ॥ ८
आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामः ॥ ९
स कामकान्तो न तु कामकामः
स वै कामात्स्वर्गमुपैति देही ॥ १०
वेदस्योपनिषद्दानं दानस्योपनिषद्दमः ।
दमस्योपनिषद्दानं दानस्योपनिषत्तपः ॥ ११
तपसोपनिषत्त्यागस्त्यागस्योपनिषत्सुखम् ।
सुखस्योपनिषत्स्वर्गः स्वर्गस्योपनिषच्छमः ॥ १२
क्लेदनं शोकमनसोः संतीर्णं तृष्णया सह ।
सत्वमृच्छति संतोषाच्छान्तिलक्षणमुत्तमम् ॥ १३
विशोको निर्ममः शांतः प्रशांतात्माऽऽत्मविच्छुचिः
पङ्क्तिलक्षणवानेतैः समग्रः पुनरेष्यति ॥ १४
पङ्क्तिः सत्वगुणोपेतैः प्राज्ञैरधिगतं त्रिभिः ।
ये विदुः प्रत्यगात्मानमिहस्थानमृतान्विदुः ॥ १५
अकृत्रिममसंहार्यं प्राकृतं निरुपस्कृतम् ।
अध्यात्मवित्कृतप्रज्ञः सुखमव्ययमश्नुते ॥ १६
निष्प्रचारं मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते तुष्टिं सा न शक्याऽऽत्मनोन्यथा १७
येन तृप्यत्यभुञ्जानो येन तृप्यत्यवित्तवान् ।
येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ॥ १८
असङ्गो ह्यात्मनो द्वाराण्यपिधाय विचिन्तयन् ।
यो ह्यास्ते ब्राह्मणः शिष्टः स आत्मरतिरुच्यते ॥ १९
समाहितं परे तत्त्वे क्षीणकाममवस्थितम् ।
सर्वतः सुखमन्वेति वपुश्चान्द्रमसं यथा ॥ २०
अविशेषाणि भूतानि गुणांश्च जहतो मुनेः ।
सुखेनापोह्यते दुःखं भास्करेण तमो यथा ॥ २१
तमतिक्रान्तकर्माणमतिक्रान्तगुणक्षयम् ।
ब्राह्मणं विषयाश्लिष्टं जरामृत्यू न विन्दतः ॥ २२
स यदा सर्वतो मुक्तः समः पर्यवतिष्ठते ।
इन्द्रियाणीन्द्रियार्थांश्च शरीरस्थोऽतिवर्तते ॥ २३
कारणं परमं प्राप्य अतिक्रान्तस्य कार्यताम् ।
पुनरावर्तनं नास्ति संप्राप्तस्य परात्परम् ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

## अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

भीष्मेण युधिष्ठिरंप्रति आकाशादिभूतगुणादिप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
द्वन्द्वानि मोक्षजिज्ञासुरर्थधर्मानुतिष्ठतः ।
वक्ता गुणवता शिष्यः श्राव्यः पूर्वमिदं महत् ॥ १
आकाशं मारुतो ज्योतिरापः पृथ्वी च पञ्चमी ।
भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु ॥ २
अन्तरात्मकमाकाशं तन्मयं श्रोत्रमिन्द्रियम् ।
तस्य शब्दं गुणं विद्यान्मुनिः शास्त्रविधानवित् ॥ ३
चरणं मारुतात्मेति प्राणापानौ च तन्मयौ ।
स्पर्शनं चेन्द्रियं विद्यात्तथा स्पर्शं च तन्मयम् ॥ ४
तापः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च तन्मयम् ।
तस्य रूपं गुणं विद्यात्तमोनाशकमात्मवान् ॥ ५
प्रक्लेदो द्रवता स्नेह इत्यपामुपदिश्यते ।
[असृज्मज्जा च यच्चान्यत्स्निग्धं विद्यात्तदात्मकम् ]।
रसनं चेन्द्रियं जिह्वा रसश्चापां गुणो मतः ॥ ६

सकामकामो नतु कामकामः स वै लोकं स्वर्गमुपैति देहीति ट. उ. पाठः ॥ ९ ॥ अध्यात्मसुकृतप्रज्ञमिति ट. उ. पाठः ॥ १६ ॥ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥
द्वन्द्वानिर्मोक्षजिज्ञासुरिति ध. पाठः ॥ १ ॥

संघातः पार्थिवो धातुरस्थिदन्तनखानि च ।
श्मश्रु रोम च केशाश्च सिरा स्नायु च चर्म च ॥ ७
इन्द्रियं घ्राणसंज्ञातं नासिकेत्यभिसंज्ञिता ।
गन्धश्चैवेन्द्रियार्थोऽयं विज्ञेयः पृथिवीमयः ॥ ८
उत्तरेषु गुणाः सर्वे सन्ति पूर्वेषु नोत्तराः ।
पञ्चानां भूतसङ्घानां संततिं मुनयो विदुः ॥ ९
मनो नवममेषां तु बुद्धिस्तु दशमी स्मृता ।
एकादशस्त्वन्तरात्मा स सर्वः पर उच्यते ॥ १०
व्यवसायात्मिका बुद्धिर्मनो व्याकरणात्मकम् ।
कर्मानुमानाद्विज्ञेयः स जीवः क्षेत्रसंज्ञकः ॥ ११
एभिः कालात्मकैर्भावैर्यः सर्वैः सर्वमन्वितम् ।
पश्यत्यकलुषं बुद्ध्या स मोहं नानुवर्तते ॥ १२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

## एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

भीष्मेण युधिष्ठिरंप्रति योगिप्रशंसादिपरव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
शरीराद्विप्रमुक्तं हि सूक्ष्मभूतं शरीरिणम् ।
कर्मभिः परिपश्यन्ति शास्त्रोक्तैः शास्त्रचेतसः ॥ १
यथा मरीच्यः सहिताश्चरन्ति
गच्छन्ति तिष्ठन्ति च दृश्यमानाः ।
देहैर्विमुक्तानि चरन्ति लोकां-
स्तथैव सत्वान्यतिमानुषाणि ॥ २
प्रतिरूपं यथैवाप्सु तावत्सूर्यस्य लक्ष्यते ।
सत्ववांस्तु तथा सत्वं प्रतिरूपं स पश्यति ॥ ३
तानि सूक्ष्माणि सत्वानि विमुक्तानि शरीरतः ।
तेन तत्वेन तत्वज्ञाः पश्यन्ति नियतेन्द्रियाः ॥ ४
स्वपतां जाग्रतां चैव सर्वेषामात्मचिन्तितम् ।
प्रधानाद्वैधयुक्तानां दह्यते कर्मजं रजः ॥ ५
यथाऽहनि तथा रात्रौ यथा रात्रौ तथाऽहनि ।
वशे तिष्ठति सत्वात्मा सततं योगयोगिनाम् ॥ ६
तेषां नित्यं सदा नित्यो भूतात्मा सततं गुणैः ।
सप्तभिस्त्वन्वितः सूक्ष्मैश्चरिष्णुरजरामरः ॥ ७
मनोबुद्धिपराभूतः स्वदेहपरदेहवित् ।
स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः ॥ ८
तत्रापि लभते दुःखं तत्रापि लभते सुखम् ।
कामं क्रोधं च तत्रापि कृत्वा व्यसनमृच्छति ॥ ९
प्रीणितश्चापि भवति महतोऽर्थानवाप्य हि ।
करोति पुण्यं तत्रापि जाग्रन्निव च पश्यति ॥ १०
सदोष्मान्तर्गतश्चापि गर्भत्वं समुपेयिवान् ।
दश मासान्वसन्कुक्षौ नैपोऽन्नमिव जीर्यते ॥ ११
तमेतमतितेजोंशं भूतात्मानं हृदि स्थितम् ।
तमोरजोभ्यामाविष्टा नानुपश्यन्ति मूर्तिषु ॥ १२
योगशास्त्रपरा भूत्वा स्वमात्मानं परीप्सवः ।
'तमोरजोभ्यां निर्मुक्तास्तं प्रपश्यन्ति मूर्तिषु ।'
अनुच्छ्वासान्यमूर्तानि यानि वज्रोपमान्यपि ॥ १३
पृथग्भूतेषु सृष्टेषु चतुर्ष्वाश्रमकर्मसु ।
समाधौ योगमेवैतच्छाण्डिल्यः शममब्रवीत् ॥ १४
विदित्वा सप्तसूक्ष्माणि षडङ्गं च महेश्वरम् ।
प्रधानविनियोगज्ञः परं ब्रह्मानुपश्यति ॥ १५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

उत्तरेषु भूतेषु पूर्वभूतगुणाः सन्ति ॥ ९ ॥ मनोव्याहरणात्मकमिति ट. थ. पाठः ॥ ११ ॥ अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

स्वप्नेष्वपि स्वदेहं परदेहं च स्थूलादन्यं वेत्तीति तथा ॥ ८ ॥ वज्रोपमानि ब्राह्मप्रलयेऽप्यविनाशीनि ॥ १३ ॥ एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

## षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

भीष्मेण युधिष्ठिरंप्रति कामादिशक्तिप्रतिपादनपूर्वकतज्जयोपायप्रतिपादनपरव्यासवाक्यानुवादः ॥ १ ॥

व्यास उवाच ।
हृदि कामद्रुमश्चित्रो मोहसंचयसंभवः ।
क्रोधमानमहास्कन्धो विवित्सापरिवेषणः ॥ १
तस्य चाज्ञानमाधारः प्रमादः परिषेचनम् ।
सोऽभ्यसूयापलाशो हि पुरा दुष्कृतसारवान् ॥ २
संमोहचिन्ताविटपः शोकशाखो भयाङ्कुरः ।
मोहनीभिः पिपासाभिर्लताभिरनुवेष्टितः ॥ ३
उपासते महावृक्षं सुलुब्धास्तत्फलेप्सवः ।
आयतैः संयुताः पाशैः फलदं परिवेष्ट्य तम् ॥ ४
यस्तान्पाशान्वशे कृत्वा तं वृक्षमपकर्षति ।
गतः स दुःखयोरन्तं जरामरणयोर्द्वयोः ॥ ५
संरोहत्यकृतप्रज्ञः ससत्वो हन्ति पादपम् ।
स तमेवाहतो हन्ति विषं ग्रस्तमिवातुरम् ॥ ६
तस्यानुगतमूलस्य मूलमुद्ध्रियते बलात् ।
योगप्रसादात्कृतिना साम्येन परमासिना ॥ ७
एवं यो वेद कामस्य केवलं परिसर्पणम् ।
एतच्च कामशास्त्रस्य सुदुःखान्यतिवर्तते ॥ ८
शरीरं पुरमित्याहुः स्वामिनी बुद्धिरिष्यते ।
तत्र बुद्धेः शरीरस्थं मनो नामार्थचिन्तकम् ॥ ९
इन्द्रियाणि जनाः पौरास्तदर्थं तु परा कृतिः ।
तत्र द्वौ दारुणौ दोषौ तमो नाम रजस्तथा ।
तदर्थमुपजीवन्ति पौराः सह पुरेश्वरैः ॥ १०
अद्वारेण तमेवार्थं द्वौ दोषावुपजीवतः ।
तत्र बुद्धिर्हि दुर्धर्षा मनः साधर्म्यमुच्यते ॥ ११
पौराश्चापि मनस्त्रस्तास्तेषामपि चला स्थितिः ।
यदर्थं बुद्धिरध्यास्ते सोऽनर्थः परिषीदति ॥ १२
'पौरमन्त्रवियुक्तायाः सोऽर्थः संसीदति क्रमात्' ।
यदर्थं पृथगध्यास्ते मनस्तत्परिषीदति ॥ १३
पृथग्भूतं मनो बुद्ध्या मनो भवति केवलम् ।
तत्रैनं विकृतं शून्यं रजः पर्यवतिष्ठते ॥ १४
तन्मनः कुरुते सख्यं रजसा सह संगतम् ।
तं चादाय जनं पौरं रजसे संप्रयच्छति ॥ १५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

## एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

भीष्मेण युधिष्ठिरंप्रति पृथिव्यादिभूतगुणप्रतिपादकव्यासवाक्यानुवादः ॥ १ ॥

भीष्म उवाच ।
भूतानां गुणसङ्ख्यानं भूयः पुत्र निशामय ।
द्वैपायनमुखाद्भ्रष्टं श्लाघया परयाऽनघ ॥ १
दीप्तानलनिभः प्राह भगवान्धूमवत्सलः ।
ततोऽहमपि वक्ष्यामि भूयः पुत्र निदर्शनम् ॥ २
भूमेः स्थैर्यं गुरुत्वं च काठिन्यं प्रसवात्मता ।
गन्धो भारश्च शक्तिश्च संघातः स्थापना धृतिः ॥ ३
अपां शैत्यं रसः क्लेदो द्रवत्वं स्नेहसौम्यता ।
जिह्वाविस्यन्दनं चापि भौमानां श्रपणं तथा ॥ ४
अग्नेर्दुर्धर्षता ज्योतिस्तापः पाकः प्रकाशनम् ।
शौचं रागो लघुस्तैक्ष्ण्यं सततं चोर्ध्वभागिता ॥ ५
वायोरनियमस्पर्शो वादस्थानं स्वतन्त्रता ।

---

विधित्सा परिषेचन इति झ. पाठः ॥ १ ॥ शोकशाखाभयंकर इति ङ. थ. पाठः ॥ ३ ॥ फलादायिभिरन्वित इति ध. पाठः । पाशैः फलानि परिभक्षयन्निति ङ. थ. पाठः ॥ ४ ॥ त्यागप्रमादाकृतिनेति ङ. थ. पाठः ॥ ५ ॥ षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

धर्मवत्सल इति ङ. पाठः ॥ २ ॥ जिह्वा रसनेन्द्रियम् । विस्यन्दनं प्रस्रवणम् । भौमानां तण्डुलादीनां श्रपणं पाचनम् । विष्यन्दनं चैव भूमावास्रवणं तथेति थ. पाठः । विष्यन्दनं भूमेर्देहेष्वाश्रयणं तथेति ध. पाठः ॥ ४ ॥ ज्योतिर्ज्वलनकर्म । लघुः शीघ्रगामित्वम् । दशमश्चोर्ध्वभागितेति थ. ध. पाठः ॥ ५ ॥ अनियमस्पर्शोऽनुष्णाशीतस्पर्शः । वादस्थानं वागिन्द्रियगोलकानि । स्वतन्त्रता गमनादौ । मोक्षो मूत्रादेः । कर्म

बलं शैध्र्यं च मोक्षं च कर्म चेष्टात्मता भवः ॥ ६
आकाशस्य गुणः शब्दो व्यापित्वं छिद्रताऽपि च ।
अनाश्रयमनालम्बमव्यक्तमविकारिता ॥ ७
अप्रतीघातिता चैव श्रोतृत्वं विवराणि च ।
गुणाः पञ्चाशतं प्रोक्ताः पञ्चभूतविभाविताः ॥८
फलोपपत्तिर्व्यक्तिश्च विसर्गः कल्पना क्षमा ।
सदसच्चाशुता चैव मनसो नव वै गुणाः ॥ ९
इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता ।
संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान्विदुः ॥१०
युधिष्ठिर उवाच ।
कथं पञ्चगुणा बुद्धिः कथं पञ्चेन्द्रिया गुणाः ।
एतन्मे सर्वमाचक्ष्व सूक्ष्मज्ञानं पितामह ॥ ११
भीष्म उवाच ।
आहुः षष्टिं भूतगुणान्वै
भूतविषक्तान्प्रकृतिविसृष्टान् ।
नित्यविषक्तांश्चाक्षरसृष्टा-
न्पुत्र न नित्यं तदिह वदन्ति ॥ १२
तत्पुत्रचिन्ताकलिलं तदुक्त-
मनागतं वै तव संप्रतीह ।
भूतार्थवत्त्वं तदवाप्य सर्वं
भूतप्रभावाद्भव शान्तबुद्धिः ॥ १३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

## द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

भीष्मेण युधिष्ठिरंप्रति नारदाकम्पनसंवादानुवादः ॥ १ ॥ नारदेनाकम्पनं प्रति स्थाणुप्रजापतिसंवादानुवादारम्भः ॥ २

युधिष्ठिर उवाच ।
य इमे पृथिवीपालाः शेरते पृथिवीतले ।
पृतनामध्य एते हि गतसत्त्वा महाबलाः ॥ १
एकैकशो भीमबला नागायुतबलास्तथा ।
एते हि निहताः सङ्ख्ये तुल्यतेजोबलैर्नरैः ॥ २
नैषां पश्यामि हन्तारं प्राणिनां संयुगे पुरा ।
विक्रमेणोपसंपन्नास्तेजोबलसमन्विताः ॥ ३
अथ चेमे महाप्राज्ञाः शेरते हि गतासवः ।
मृता इति च शब्दोऽयं वर्तत्येषु गतासुषु ॥ ४
इमे मृता नृपतयः प्रायशो भीमविक्रमाः ।
तत्र मे संशयो जातः कुतः संज्ञा मृता इति॥ ५
कस्य मृत्युः कुतो मृत्युः केन मृत्युरिह प्रजाः ।
हरत्यमरसंकाश तन्मे ब्रूहि पितामह ॥ ६
भीष्म उवाच ।
पुरा कृतयुगे तात राजा ह्यासीदकम्पनः ।
स शत्रुवशमापन्नः संग्रामे क्षीणवाहनः ॥ ७
तस्य पुत्रो हरिर्नाम नारायणसमो बले ।
स शत्रुभिर्हतः सङ्ख्ये सबलः सपदानुगः ॥ ८
स राजा शत्रुवशगः पुत्रशोकसमन्वितः ।
यदृच्छया शान्तिपरो ददर्श भुवि नारदम् ॥ ९
तस्मै स सर्वमाचष्ट यथावृत्तं जनेश्वरः ।
शत्रुभिर्ग्रहणं सङ्ख्ये पुत्रस्य मरणं तथा ॥ १०
तस्य तद्वचनं श्रुत्वा नारदोऽथ तपोधनः ।
आख्यानमिदमाचष्ट पुत्रशोकापहं तदा ॥ ११
नारद उवाच ।
राजञ्शृणु महाख्यानं ममेदं बहुविस्तरम् ।

उत्क्षेपणादि । चेष्टा श्वासप्रश्वासादिः । भवो जन्ममरणे। वायोस्तिर्यग्गतिः स्पर्शो इति ङ. थ. पाठः । चलं शैघ्र्यं च गमनं चेष्टा कर्मात्मता तथा इति ङ. थ. पाठः ॥ ६ ॥ अनाश्रयमाश्रयत्वाभावः । अनालम्बनमाश्रयान्तरशून्यत्वम् । अव्यक्तं रूपस्पर्शशून्यत्वात् । अविकारिता द्रव्यान्तरानारम्भकत्वम् ॥ ७ ॥ पञ्चभूतात्मभाविताः पञ्चानां भूतानामात्मा प्रातिस्विकं स्वरूपं तत्र लक्षिताः ॥ ८ ॥ व्यक्तिः स्मरणम् । विसर्गो विपरीतः सर्गो भ्रान्तिः । कल्पना मनोरथवृत्तिः । क्षमा प्रसिद्धा । स वैराग्यादि । असत् रागद्वेषादि । आशुता अस्थिरत्वम् ॥ ९ इष्टानिष्टानां वृत्तिविशेषाणां विपत्तिर्नाशो निद्रारूपा वृत्तिरित्यर्थः व्यवसाय उत्साहः । समाधिता चित्तस्थैर्यं निरोध इत्यर्थः प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः ॥ १० ॥ एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

गतसंज्ञा महाबला इति थ. पाठः ॥ १ ॥

यथावृत्तं श्रुतं चैव मयाऽपि वसुधाधिप ॥ १२
प्रजाः सृष्ट्वा महातेजाः प्रजासर्गे पितामहः ।
अतीव वृद्धा बहुला नामृष्यत पुनः प्रजाः ॥ १३
न ह्यन्तरमभूत्किंचित्क्वचिज्जन्तुभिरच्युत ।
निरुच्छ्वासमिवोन्नद्धं त्रैलोक्यमभवन्नृप ॥ १४
तस्य चिन्ता समुत्पन्ना संहारं प्रति भूपते ।
चिन्तयन्नाध्यगच्छच्च संहारे हेतुकारणम् ॥ १५
तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत ।
तेन सर्वा दिशो राजन्ददाह स पितामहः ॥ १६
ततो दिवं भुवं खं च जगच्च सचराचरम् ।
ददाह पावको राजन्भगवत्कोपसंभवः ॥ १७
तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च ।
महता क्रोधवेगेन कुपिते प्रपितामहे ॥ १८
ततो हरो जटी स्थाणुर्देवोऽध्वरपतिः शिवः ।
जगाम शरणं देवो ब्रह्माणं परमेष्ठिनम् ॥ १९
तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया ।
अब्रवीद्वरदो देवो ज्वलन्निव तदा शिवम् ॥ २०
करवाण्यद्य कं कामं वरार्होऽसि मतो मम ।
कर्ता ह्यसि प्रियं शंभो तव यद्धृदि वर्तते ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

---

## त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

स्थाणुवचनाद्ब्रह्मणा लोकदाहककोपाग्नेरन्तर्नियमनम् ॥ १ ॥ तथा स्वचक्षुरादीन्द्रियेभ्यो जातां मृत्युदेवींप्रति प्रजासंहारे नियोजनम् ॥ २ ॥

---

स्थाणुरुवाच ।
प्रजासर्गनिमित्तं मे कार्यवत्तामिमां प्रभो ।
विद्धि सृष्टास्त्वया हीमा मा कुप्यासां पितामह ॥ १
तव तेजोग्निना देव प्रजा दह्यन्ति सर्वशः ।
ता दृष्ट्वा मम कारुण्यं मा कुप्यासां जगत्प्रभो ॥ २
प्रजापतिरुवाच ।
न कुप्ये न च मे कामो नभवेयुः प्रजा इति ।
लाघवार्थं धरण्यास्तु ततः संहार इष्यते ॥ ३
इयं हि मां सदा देवी भारार्ता समचोदयत् ।
संहारार्थं महादेव भारेणाप्सु निमज्जती ॥ ४
यदाऽहं नाधिगच्छामि बुद्ध्या बहु विचारयन् ।
संहारमासां वृद्धानां ततो मां क्रोध आविशत् ॥ ५
स्थाणुरुवाच ।
संहारात्त्वं निवर्तस्व मा क्रुधो विबुधेश्वर ।
मा प्रजाः स्थावरं चैव जङ्गमं च व्यनीनशः ॥ ६
पल्वलानि च सर्वाणि सर्वं चैव तृणोलपम् ।
स्थावरं जङ्गमं चैव भूतग्रामं चतुर्विधम् ॥ ७
अकाले भस्मसाद्भूतं जगत्सर्वमुपप्लुतम् ।
प्रसीद भगवन्साधो वर एष वृतो मया ॥ ८
नष्टा न पुनरेष्यन्ति प्रजा ह्येताः कथंचन ।
तस्मान्निवर्ततामेतत्तेन स्वेनैव तेजसा ॥ ९
उपायमन्यं संपश्य भूतानां हितकाम्यया ।
यथामी जन्तवः सर्वे न दह्येरन्पितामह ॥ १०
अभावं हि न गच्छेयुरुत्सन्नप्रजनाः प्रजाः ।
'पुत्रत्वेनानुसंकल्प्ये तदाऽहं तप्य दानवैः ।'
अधिदैवे नियुक्तोसि त्वया लोकहितेप्सुना ॥ ११
त्वद्भवं हि जगन्नाथ एतत्स्थावरजङ्गमम् ।
प्रसाद्य त्वां महादेव याचाम्यावृत्तिजाः प्रजाः ॥ १२
नारद उवाच ।
श्रुत्वा तु वचनं देवः स्थाणोर्नियतवाङ्मनाः ।

---

खेभ्य इन्द्रियच्छिद्रेभ्यः ॥ १६ ॥ खं खस्थं ग्रहनक्षत्रादि ॥ १७ ॥ स्थाणुः श्मशाननिलयः शिव इति ङ. थ. पाठः ॥ १९ ॥ द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

कार्यवत्तामर्थित्वम् । मा कुप्य कोपं मा कुरु । आसां आसु ॥ १ ॥ नभवेयुर्नश्येयुः ॥ ३ ॥ उलप तृणविशेषः ॥ ७ ॥ निवर्तेरन्परंतपेति ध. पाठः थ. ध. पाठः ॥ १० ॥ अधिदैवे अहंकाराधिष्ठातृत्वे ॥ ११ ॥ आवृत्तिजाः प्रजा याचामि याचे । आवृत्त्या जाताः । मृत्वा मृत्वा पुनर्जायन्तामित्यर्थः ॥ १२ ॥

तेजस्तत्सन्निजग्राह पुनरेवान्तरात्मनि ॥ १३
ततोऽग्निमुपसंगृह्य भगवाँल्लोकपूजितः ।
प्रवृत्तिं च निवृत्तिं च कल्पयामास वै प्रभुः ॥ १४
उपसंहरतस्तस्य तमग्निं रोषजं तदा ।
प्रादुर्बभूव विश्वेभ्यः खेभ्यो नारी महात्मनः ॥ १५
कृष्णरक्ताम्बरधरा कृष्णनेत्रतलान्तरा ।
दिव्यकुण्डलसंपन्ना दिव्याभरणभूषिता ॥ १६
सा विनिःसृत्य वै खेभ्यो दक्षिणामाश्रिता दिशम् ।
ददृशाते च तां कन्यां देवौ विश्वेश्वरावुभौ ॥ १७
तामाहूय तदा देवो लोकानामादिरीश्वरः ।
मृत्यो इति महीपाल जहि चेमाः प्रजा इति ॥ १८
त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात्संहर सर्वास्त्वं प्रजाः सजडपण्डिताः ॥ १९
अविशेषेण चैव त्वं प्रजाः संहर कामिनि ।
मम त्वं हि नियोगेन श्रेयः परमवाप्स्यसि ॥ २०
एवमुक्ता तु या देवी मृत्युः कमलमालिनी ।
प्रदध्यौ दुःखिता बाला साश्रुपातमतीव च ॥ २१
पाणिभ्यां चैव जग्राह तान्यश्रूणि जनेश्वरः ।
मानवानां हितार्थाय ययाचे पुनरेव ह ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

---

## चतुष्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

नारदेन मृत्युब्रह्मसंवादानुवादपूर्वकमकम्पनस्य पुत्रशोकापनोदनम् ॥ १ ॥

नारद उवाच ।
विनीय दुःखमबला साऽऽत्मनैवायतेक्षणा ।
उवाच प्राञ्जलिर्भूत्वा तमेवावर्जिता तदा ॥ १
त्वया सृष्टा कथं नारी मादृशी वदतां वर ।
रौद्रकर्माभिजायेत सर्वप्राणिभयंकरी ॥ २
बिभेम्यहमधर्मस्य धर्म्यमादिश कर्म मे ।
त्वं मां भीतामवेक्षस्व शिवेनेश्वरचक्षुषा ॥ ३
बालान्वृद्धान्वयस्थांश्च न हरेयमनागसः ।
प्राणिनः प्राणिनामीश नमस्तेऽस्तु प्रसीद मे ॥ ४
प्रियान्पुत्रान्वयस्यांश्च भ्रातॄन्मातॄः पितॄनपि ।
अपध्यास्यन्ति यद्येवं मृतास्तेभ्यो बिभेम्यहम् ॥ ५
कृपणाश्रुपरिक्लेदो दहेन्मां शाश्वतीः समाः ।
तेभ्योऽहं बलवद्भीता शरणं त्वामुपागता ॥ ६
यमस्य भवने देव पात्यन्ते पापकर्मिणः ।
प्रसादये त्वां वरद प्रसादं कुरु मे प्रभो ॥ ७
एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह ।
इच्छेयं त्वत्प्रसादाच्च तपस्तप्तुं महेश्वर ॥ ८
पितामह उवाच ।
त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात्संहर सर्वास्त्वं प्रजा मा च विचारय ॥ ९
एतदेवमवश्यं हि भविता नैतदन्यथा ।
क्रियतामनवद्याङ्गि यथोक्तं मद्वचोऽनघे ॥ १०
एवमुक्ता महाबाहो मृत्युः परपुरंजय ।
न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ॥ ११
पुनःपुनरथोक्ता सा गतसत्त्वेव भामिनी ।
तूष्णीमासीत्ततो देवो लोकानामीश्वरेश्वरः ॥ १२
प्रससाद किल ब्रह्मा स्वयमेवात्मनाऽऽत्मनि ।
स्मयमानश्च लोकेशो लोकान्सर्वानवैक्षत ॥ १३

संनिजग्राह संहृतवान् ॥ १३ ॥ प्रवृत्ति जन्म । निवृत्ति मरणम् अनेन नात्यन्त प्रजानामुच्छेदो नाप्यत्यन्तं भूमेर्भार इति दर्शितम् ॥ १४ ॥ उभौ ब्रह्मरुद्रौ ॥ १७ ॥ मृत्योरश्रुपाते युगपत् सर्वभूतक्षयो माभूदिति भावः ॥ २२ ॥ त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

विनीय प्रमार्ज्य । आवर्जिता ऋजुभूता । सात्वतीवायते क्षणेति ट. ड. पाठः ॥ १ ॥ प्रियान् पुत्रानित्यस्य न हरेयमिति पूर्वेणान्वयः । तत्र हेतुः । येषां सम्बन्धिनो मृतास्ते यद्यपध्यास्यन्ति शप्स्यन्ते तर्हि तेषां तेभ्यो बिभेम्यहम् । अपध्यास्यन्ति ये देवमिति थ. पाठः ॥ ५ ॥ बलवदत्यन्तम् ॥ ६ ॥ निवेदये त्वां वरदेति ट. ड. पाठः ॥ ७ ॥ मृत्यो संकल्पिता मे त्वं प्रजासंहारहेतुना । गच्छ संहरेति झ. पाठः ॥ ९ ॥

निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते ।
सा कन्याऽथ जगामास्य समीपादिति नःश्रुतम् १४
अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा ।
त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्यगात् ॥ १५
सा तत्र परमं देवी तपोऽचरत दुश्चरम् ।
समा ह्येकपदे तस्थौ दशपद्मानि पञ्च च ॥ १६
तां तथा कुर्वतीं तत्र तपः परमदुश्चरम् ।
पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् ॥ १७
कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा ।
तथैवैकपदे तात पुनरन्यानि सप्त सा ॥ १८
तस्थौ पद्मानि षट् चैव पञ्च द्वे चैव मानद ।
भूयः पद्मायुतं तात मृगैः सह चचार सा ॥ १९
द्वे चायुते नरश्रेष्ठ वाय्वाहारा महामते ।
पुनरेव ततो राजन्मौनमातिष्ठदुत्तमम् ॥ २०
अप्सु वर्षसहस्राणि सप्त चैकं च पार्थिव ।
ततो जगाम सा कन्या कौशिकीं नृपसत्तम ॥ २१
तत्र वायुजलाहारा चचार नियमं पुनः ।
ततो ययौ महाभागा गङ्गां मेरुं च केवलम् ॥ २२
तस्थौ दार्विव निश्चेष्टा प्रजानां हितकाम्यया ।
ततो हिमवतो मूर्ध्नि यत्र देवाः समीजिरे ॥ २३
तत्राङ्गुष्ठेन राजेन्द्र निखर्वमचरत्तपः ।
तस्थौ पितामहं चैव तोषयामास यत्नतः ॥ २४
ततस्तामब्रवीत्तत्र लोकानां प्रपितामहः ।
किमिदं वर्तसे पुत्रि क्रियतां मम तद्वचः ॥ २५
ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहम् ।
न हरेयं प्रजा देव पुनस्त्वाऽहं प्रसादये ॥ २६
तामधर्मभयाद्भीतां पुनरेव प्रयाचतीम् ।
तदाऽब्रवीद्देवदेवो निगृह्येदं वचस्ततः ॥ २७
अधर्मो नास्ति ते मृत्यो संयच्छेमाः प्रजाः शुभे ।
मयाऽप्युक्तं मृषा भद्रे भविता नेह किंचन ॥ २८
धर्मः सनातनश्च त्वामिहैवानुप्रवेक्ष्यति ।
अहं च विबुधाश्चैव त्वद्धिते निरताः सदा ॥ २९
इममन्यं च ते कामं ददानि मनसेप्सितम् ।
न त्वां दोषेण यास्यन्ति व्याधिसंपीडिताः प्रजाः ॥ ३०
पुरुषेषु च रूपेण पुरुषस्त्वं भविष्यसि ।
स्त्रीषु स्त्रीरूपिणी चैव तृतीयेषु नपुंसकम् ॥ ३१
सैवमुक्ता महाराज कृताञ्जलिरुवाच ह ।
पुनरेव महात्मानं नेति देवेशमव्ययम् ॥ ३२
तामब्रवीत्तदा देवो मृत्यो संहर मानवान् ।
अधर्मस्ते न भविता यथा ध्यास्याम्यहं शुभे ॥ ३३
'त्वं हि शक्ता च युक्ता च पूर्वोत्पन्ना च भामिनि ।
अनुशिष्टा च निर्दोषा तस्मात्त्वं कुरु मे मतम्' ॥ ३४
यानश्रुबिन्दून्पतितानपश्यं
ये पाणिभ्यां धारितास्ते पुरस्तात् ।
ते व्याधयो मानवान्घोररूपाः
प्राप्ते काले पीडयिष्यन्ति मृत्यो ॥ ३५
सर्वेषां त्वं प्राणिनामन्तकाले
कामक्रोधौ सहितौ योजयेथाः ।
एवं धर्मस्त्वामुपैष्यत्यमोघो
न चाधर्मं लप्स्यसे तुल्यवृत्तिः ॥ ३६
एवं धर्मं पालयिष्यस्यथो त्वं
न चात्मानं मज्जयिष्यस्यधर्मे ।
तस्मात्कामं रोचयाभ्यागतं त्वं
सा त्वं साधो संहरस्वेह जन्तून् ॥ ३७
सा वै तदा मृत्युसंज्ञा कृतास्त्री
शापाद्भीता बाढमित्यब्रवीत्तम् ।
अथो प्राणान्प्राणिनामन्तकाले
कामक्रोधौ प्राप्य नित्यं निहन्ति ॥ ३८
मृत्योर्ये ते व्याधयश्चाश्रुपाता
मनुष्याणां युज्यते यैः शरीरम् ।
सर्वेषां वै प्राणिनां प्राणनान्ते
तस्माच्छोकं मा कृथा बुद्ध्य बुद्ध्या ॥ ३९
सर्वे देवाः प्राणिनां प्राणनान्ते
गत्वा वृत्ताः संनिवृत्तास्तथैव ।

अप्रतिश्रुत्याऽनङ्गीकृत्य । धेनुकं गोतीर्थं मायान्तर्वर्ति ॥ १५ ॥ कौशिकीं गण्डकीं नदीम् ॥ २१ ॥ दार्विव स्थाणुरिव ॥ २३ ॥ निगृह्य हठं कृत्वा ॥ २७ ॥ कालयिष्यन्ति मृत्यो इति झ. पाठः ॥ ३५ ॥ प्राप्य प्रापय्य ॥ ३८ ॥ प्राणनान्ते जीवनान्ते । बुद्ध्य जानीहि । प्राणिनां प्रायणान्ते इति ध. पाठः ॥ ३९ ॥

एवं सर्वे मानवाः प्राणनान्ते
गत्वा वृत्ता देववद्राजसिंह ॥ ४०
वायुर्भीमो भीमनादो महौजाः
सर्वेषां च प्राणिनां प्राणभूतः ।
अनावृत्तिर्देहिनां देहपाते
तस्माद्वायुर्देवदेवो विशिष्टः ॥ ४१
सर्वे देवा मर्त्यसंज्ञाविशिष्टाः
सर्वे मर्त्या देवसंज्ञाविशिष्टाः ।
तस्मात्पुत्रं मा शुचो राजसिंह
पुत्रः स्वर्गं प्राप्यते मोदते ह ॥ ४२
एवं मृत्युर्देवसृष्टा प्रजानां
प्राप्ते काले संहरन्ती यथावत् ।
तस्याश्चैव व्याधयस्तेऽश्रुपाताः
प्राप्ते काले संहरन्तीह जन्तून् ॥ ४३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुष्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

---

## पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

भीष्मेण युधिष्ठिरंप्रति धर्मलक्षणकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
इमे वै मानसाः सर्वे धर्मं प्रति विशङ्किताः ।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह ॥ १
धर्मस्त्वयमिहार्थः किममुत्रार्थोपि वा भवेत् ।
उभयार्थो हि वा धर्मस्तन्मे ब्रूहि पितामह ॥ २
भीष्म उवाच ।
सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ।
चतुर्थमर्थमप्याहुः कवयो धर्मलक्षणम् ॥ ३
अविध्युक्तानि कर्माणि व्यवस्यन्त्युत्तमूपरे ।
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ॥ ४
उभयत्र सुखोदर्क इह चैव परत्र च ।
अलब्ध्वा निपुणं धर्मं पापः पापे प्रसज्जति ॥ ५
न च पापकृतः पापान्मुच्यन्ते केचिदापदि ।
अपापवादी भवति यथा भवति धर्मवित् ।
धर्मस्य निष्ठा स्वाचारस्तमेवाश्रित्य चावसेत् ॥ ६
यथाधर्मसमाविष्टो धनं गृह्णाति तस्करः ।
रमते निर्हरस्तेनः परवित्तमराजके ॥ ७
यदास्य तद्धरन्त्यन्ये तदा राजानमिच्छति ।
तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः ॥ ८
अभीतः शुचिरभ्येति राजद्वारमशङ्कितः ।
न हि दुश्चरितं किंचिदन्तरात्मनि पश्यति ॥ ९
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥ १०
अपि पापकृतो रौद्राः सत्यं कृत्वा मिथःकृतम् ।
अद्रोहमविसंवादं प्रवर्तन्ते तदाश्रयाः ॥ ११
ते चेन्मिथ्या धृतिं कुर्युर्विनश्येयुरसंशयम् ।
न हर्तव्यं परधनमिति धर्मविदो विदुः ॥ १२
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रवर्तितम् ।
यदा नियतिदौर्बल्यमथैषामेव रोचते ॥ १३
न ह्यत्यन्तं बलयुता भवन्ति सुखिनोपि वा ।
तस्मादनार्जवे बुद्धिर्न कार्या ते कदाचन ॥ १४
असाधुभ्योऽस्य न भयं न चौरेभ्यो न राजतः ।
आकिंचित्कस्यचित्कुर्वन्निर्भयः शुचिरावसेत् ॥ १५
सर्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान् ।
बहुधाऽऽचरितं पापमन्यत्रैवानुपश्यति ॥ १६
मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा ।
न हि दुश्चरितं किंचिदात्मनोऽन्येषु पश्यति ॥ १७

---

नानावृत्तिर्देहिनां देहभेदे इति झ. पाठः ॥ ४१ ॥ देवाः क्षीणपुण्या मर्त्यत्वं मर्त्याश्च कृतपुण्या देवत्वं प्राप्नुवन्तीत्यर्थः ॥ ४२ ॥ चतुष्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

तस्मादर्थार्जने बुद्धिरिति थ. पाठः ॥ १४ ॥ पापं मनस्ये-

दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ॥ १८
यदा नियतिकार्पण्यमर्थैषामेव रोचते ।
धनवन्तोपि नात्यन्तं भवन्ति सुखिनोपि वा ॥ १९
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ २०
योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति ।
यदन्यस्य ततः कुर्यान्न मृष्येदिति मे मतिः ॥ २१
जीवितुं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत् ।
यद्यदात्मन इच्छेत तत्परस्यापि चिन्तयेत् ॥ २२

अतिरिक्तः संविभजेद्भोगैरन्यानकिंचनान् ।
एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्तितम् ॥ २३
यस्मिंस्तु देवाः समये सन्तिष्ठेरंस्तथा भवेत् ।
अथ चेल्लोभसमये स्थितिर्धर्मेऽपि शोभना ॥ २४
सर्वं प्रियाभ्युपगतं पुण्यमाहुर्मनीषिणः ।
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥ २५
लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ।
सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम् ॥ २६
धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम ।
तस्मादनार्जवे बुद्धिर्न ते कार्या कथंचन ॥ २७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चषष्टयधिकद्विशततमोऽध्यायः ॥ २६५ ॥

## षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

युधिष्ठिरेण भीष्मंप्रति धर्मप्रामाण्याक्षेपः ॥ १ ॥

युधिष्ठिर उवाच ।
सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणम् ।
प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः ॥ १
भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया ।
इदं त्वन्यत्प्रवक्ष्यामि न राजन्विग्रहादिव ॥ २
इमानि हि प्राणयन्ति सृजन्त्युत्तारयन्ति च ।
न धर्मः परिपाठेन शक्यो भारत वेदितुम् ॥ ३
अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ।
आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ॥ ४
सदाचारो मतो धर्मः संतस्त्वाचारलक्षणाः ।
साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणः ॥ ५
दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन् ।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥ ६
पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः ।
वेदवादाश्चानुयुगं ह्रसन्तीतीह नः श्रुतम् ॥ ७
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ ८

आम्नायवचनं सत्यमित्ययं लोकसंग्रहः ।
आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः ॥ ९
ते चेत्सर्वप्रमाणं वै प्रमाणं ह्यत्र विद्यते ।
प्रमाणं च प्रमाणेन विरुद्ध्येच्छास्त्रता कुतः ॥ १०
धर्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यदा विक्रियते संस्था ततः साऽपि प्रणश्यति ॥ ११
विद्मश्चैनं न वा विद्मः शक्यं वा वेदितुं न वा ।
अणीयान्क्षुरधाराया गरीयानपि पर्वतात् ॥ १२
गन्धर्वनगराकारः प्रथमं संप्रदृश्यते ।
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ॥ १३
निपानानीव गोभ्याशे क्षेत्रे कुल्ये च भारत ।
स्मृतो हि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥ १४
कामादन्ये भयादन्ये कारणैरपरैस्तथा ।
असन्तोऽपि वृथाचारं भजन्ते बहवोऽपरे ॥ १५
धर्मो भवति स क्षिप्रं विलोमस्तेष्वसाधुषु ।
अथैतानाहुरुन्मत्तानपि चावहसन्त्युत ॥ १६
महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः ।

वाधिगच्छतीति थ. पाठः ॥ १६ ॥ क्षन्तव्यमित्ययं धर्म इति ध. पाठः ॥ १८ ॥ योऽन्यस्य स्वादुवद्भक्ति कस्तं हिंसितुमिच्छतीति ट. थ. पाठः ॥ २१ ॥ यः स्वयं नेच्छेदिति ध. पाठः ॥ २२ ॥ पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

निग्रहात् कुतर्काग्रहेण ॥ २ ॥ प्रसूताः सर्वतोमुखा इति ध. पाठः ॥ ९ ॥ अपि वाचं हसन्त्युतेति ध. पाठः ॥ १६ ॥

न हि सर्वहितः कश्चिदाचारः संप्रवर्तते ॥ १७
तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः ।
दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया ॥ १८
येनैवान्यः प्रभवति सोऽपरानपि बाधते ।
आचाराणामनैकाग्र्यं सर्वेषामेव लक्षयेत् ॥ १९
चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः ।
तेनाचारेण पूर्वेण संस्था भवति शाश्वती ॥ २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

## सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

भीष्मेण युधिष्ठिरंप्रति जाजलिचरित्रकथनारम्भः ॥ १ ॥ धार्मिकंमन्येन जाजलिना खेचरकृतावज्ञया तुलाधारसमीपगमनम् ॥ २ ॥

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
तुलाधारस्य वाक्यानि धर्मे जाजलिना सह । १
वने वनचरः कश्चिज्जाजलिर्नाम वै द्विजः ।
सागरोद्देशमागम्य तपस्तेपे महातपाः ॥ २
नियतो नियताहारश्चीराजिनजटाधरः ।
मलपङ्कधरो धीमान्बहून्वर्षगणान्मुनिः ॥ ३
स कदाचिन्महातेजा जलवासो महीपते ।
चचार लोकान्विप्रर्षिः प्रेक्षमाणो मनोजवः ॥ ४
स चिन्तयामास मुनिर्जलमध्ये कदाचन ।
विप्रेक्ष्य सागरान्तां वै महीं सवनकाननाम् ॥ ५
न मया सदृशोऽस्तीह लोके स्थावरजङ्गमे ।
अप्सु वैहायसं गच्छेन्मया योऽन्यः सहेति वै ॥ ६
स दृश्यमानो रक्षोभिर्जलमध्ये च भारत ।
आस्फोटयत्तदाऽऽकाशे धर्मः प्राप्तो मयेति वै ॥ ७
अब्रुवंश्च पिशाचास्तं नैवं त्वं वक्तुमर्हसि ।
तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं द्विजसत्तम ॥ ८
इत्युक्तो जाजलिर्भूतैः प्रत्युवाच महातपाः ।
पश्येयं तमहं प्राज्ञं तुलाधारं यशस्विनम् ॥ ९
इति ब्रुवाणं तमृषिं रक्षांस्युत्थाय सागरात् ।
अब्रुवन्गच्छ पन्थानमास्थायेमं द्विजोत्तम ॥ १०
इत्युक्तो जाजलिर्भूतैर्जगाम विमनास्तदा ।
वाराणस्यां तुलाधारं समासाद्याब्रवीदिदम् ॥ ११
युधिष्ठिर उवाच ।
किं कृतं दुष्करं तात कर्म जाजलिना पुरा ।
येन सिद्धिं परां प्राप्तस्तन्मे व्याख्यातुमर्हसि ॥ १२
भीष्म उवाच ।
अतीव तपसा युक्तो घोरेण स बभूव ह ।
नद्युपस्पर्शनपरः सायंप्रातर्महातपाः ॥ १३
अग्नीन्परिचरन्सम्यक्स्वाध्यायपरमो द्विजः ।
वानप्रस्थविधानज्ञो जाजलिर्ज्वलितः श्रिया ॥ १४
वने तपस्यतिष्ठत्स न चाधर्ममवैक्षत ।
वर्षास्वाकाशशायी च हेमन्ते जलसंश्रयः ॥ १५
वातातपसहो ग्रीष्मे न चाधर्ममविन्दत ।
दुःखशय्याश्च विविधा भूमौ च परिवर्तनम् ॥ १६
ततः कदाचित्स मुनिर्वर्षास्वाकाशमास्थितः ।
अन्तरिक्षाज्जलं मूर्ध्ना प्रत्यगृह्णान्मुहुर्मुहुः ॥ १७
आप्लुतस्य जटाः क्लिन्ना बभूवुर्ग्रथिताः प्रभो ।
अरण्यगमनान्नित्यं मलिनोऽमलसंयुतः ॥ १८
स कदाचिन्निराहारो वायुभक्षो महातपाः ।
तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् ॥ १९

संस्था मर्यादा॥ २० ॥षट्षष्ट्यधिकद्विशततमोऽध्यायः॥२६६॥
जांजलिना सहेति ङ. थ. पाठः । तुलाधारवाक्यानि धर्मे प्रमाणत्वेनोदाहरन्तीत्यर्थः ॥ १ ॥ प्रेक्षमाणो महाजलमिति ध. पाठः ॥ ४ ॥ जलध्ये महीं विप्रेक्ष्य तपोबलाद्दूरदर्शनादिसिद्धिं प्राप्येत्यर्थः ॥ ५ ॥ वैहायसमाकाशगतं ग्रहनक्षत्रादि गच्छेत् अवगच्छेत् । मया सह गच्छेद्यः सोऽन्यः कोस्तीति योज्यम् ॥ ६ ॥ उपस्पर्शनरतः स्नानाचमनरतः ॥ १३ ॥ श्रिया वेदविद्यया ॥ १४ ॥ अमलसंयुतः निष्पापः ॥ १८ ॥

तस्य स स्थाणुभूतस्य निर्विचेष्टस्य भारत ।
कुलिङ्गशकुनौ राजन्नीडं शिरसि चक्रतुः ॥ २०
स तौ दयावान्ब्रह्मर्षिरुपप्रैक्षत दंपती ।
कुर्वाणौ नीडकं तत्र जटासु तृणतन्तुभिः ॥ २१
यदा न स चलत्येव स्थाणुभूतो महातपाः ।
ततस्तौ सुखविश्वस्तौ सुखं तत्रोषतुस्तदा ॥ २२
अतीतास्वथ वर्षासु शरत्काल उपस्थिते ।
प्राजापत्येन विधिना विश्वासात्काममोहितौ ॥२३
तत्रोत्पादयतां राजञ्शिरस्यण्डानि खेचरौ ।
तान्यबुध्यत तेजस्वी स विप्रः संशितव्रतः ॥ २४
बुद्ध्वा च स महातेजा न चचाल च जाजलिः ।
धर्मे कृतमना नित्यं नाधर्मं स त्वरोचयत् ॥ २५
अहन्यहनि चागत्य ततस्तौ तस्य मूर्धनि ।
आश्वासितौ निवसतः संप्रहृष्टौ तदा विभो ॥ २६.
अण्डेभ्यस्त्वथ पुष्टेभ्यः प्राजायन्त शकुन्तकाः ।
व्यवर्धन्त च तत्रैव न चाकम्पत जाजलिः ॥२७
स रक्षमाणस्त्वण्डानि कुलिङ्गानां धृतव्रतः ।
तथैव तस्थौ धर्मात्मा निर्विचेष्टः समाहितः॥ २८
ततस्तु काले राजेन्द्र बभूवुस्तेऽथ पक्षिणः ।
बुबुधे तांस्तु स मुनिर्जातपक्षान्कुलिङ्गकान् ॥ २९
ततः कदाचित्तांस्तत्र पश्यन्पक्षीन्यतव्रतः ।
बभूव परमप्रीतस्तदा मतिमतां वरः ॥ ३०
तथा तानभिसंवृद्धान्दृष्ट्वा चैवाप्तवान्मुदम् ।
शकुनौ निर्भयौ तत्र ऊषतुश्चात्मजैः सह ॥ ३१
जातपक्षांश्च सोऽपश्यदुड्डीनान्पुनरागतान् ।
सायंसायं द्विजान्विप्रो न चाकम्पत जाजलिः॥३२
कदाचित्पुनरभ्येत्य पुनर्गच्छन्ति संततम् ।
त्यक्ता मातापितृभ्यां ते नचाकम्पत जाजलिः ३३
तथा ते दिवसं चापि गत्वा सायं पुनर्नृप ।
उपावर्तन्त तत्रैव निवासार्थं शकुन्तकाः ॥ ३४

कदाचिद्दिवसान्पञ्च समुत्पत्य विहंगमाः ।
षष्ठेऽहनि समाजग्मुर्न चाकम्पत जाजलिः ॥ ३५
क्रमेण च पुनः सर्वे दिवसान्सुबहूनथ ।
नोपावर्तन्त शकुना जातपक्षाश्च ते यदा ॥ ३६
कदाचिन्मासमात्रेण समुत्पत्य विहंगमाः ।
नैवागच्छंस्ततो राजन्प्रातिष्ठत स जाजलिः ॥ ३७
ततस्तेषु प्रलीनेषु जाजलिर्जातविस्मयः ।
सिद्धोस्मीति मतिं चक्रे ततस्तं मान आविशत् ॥३८
स तथा निर्गतान्दृष्ट्वा शकुन्तान्नियतव्रतः ।
संभावितात्मा संभाव्य भृशं प्रीतस्तदाऽभवत् ॥३९
स नद्यां समुपस्पृश्य तर्पयित्वा हुताशनम् ।
उदयन्तमथादित्यमभ्यागच्छन्महातपाः ॥ ४०
संभाव्य चटकान्मूर्ध्नि जाजलिर्जपतांवरः ।
आस्फोटयत्तथाऽऽकाशे धर्मः प्राप्तो मयेति वै ॥४१
अथान्तरिक्षे वागासीत्तां च शुश्राव जाजलिः ।
धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ॥ ४२
वाराणस्यां महाप्राज्ञस्तुलाधारः प्रतिष्ठितः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥४३
सोमर्षवशमापन्नस्तुलाधारदिदृक्षया ।
पृथिवीमचरद्राजन्यत्रसायंगृहो मुनिः ॥ ४४
कालेन महताऽगच्छत्स तु वाराणसीं पुरीम् ।
विक्रीणन्तं च पण्यानि तुलाधारं ददर्श सः ॥ ४५
सोऽपि दृष्ट्वैव तं विप्रमायान्तं भाण्डजीवनः ।
समुत्थाय सुसंहृष्टः स्वागतेनाभ्यपूजयत् ॥ ४६
तुलाधार उवाच ।
आयानेवासि विदितो मम ब्रह्मन्न संशयः ।
ब्रवीमि यत्तु वचनं तच्छृणुष्व द्विजोत्तम ॥ ४७
सागरानूपमाश्रित्य तपस्तप्तं त्वया महत् ।
न च धर्मस्य संज्ञां त्वं पुरा वेत्थ कथंचन ॥ ४८
ततः सिद्धस्य तपसा तव विप्र शकुन्तकाः ।

उपप्रैक्षतोपेक्षांचक्रे । न वारितवानित्यर्थः ॥ २१ ॥ प्राजापत्येन गर्भाधानविधिना ॥ २३ ॥ ते शकुन्तकाः पक्षिणः पक्षवन्तो बभूवुः ॥ २९ ॥ पक्षीन् । आर्षो मत्वर्थीय इः ॥ ३० ॥ द्विजान् शकुन्तान् ॥ ३२ ॥ प्रलीनेषु प्रडीनेषु । मानो गर्वः ॥ ३८ ॥ संभाव्य वर्धयित्वा । आस्फोटयद्बाहुशब्दमकरोत् ॥ ४१ ॥ भाण्डं मूलवणिग्धन तेन जीवनं यस्य ॥ ४६ ॥ आयानागच्छन् । आगतेनासि विदित इति थ. पाठः ॥ ४७ ॥ सागरानूपं सागरसमीपस्थं सजल प्रदेशम् ॥ ४८ ॥ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

क्षिप्रं शिरस्यजायन्त ते च संभावितास्त्वया ॥ ४९
जातपक्षा यदा ते च गता संचरितुं ततः ।
मन्यमानस्ततो धर्मं चटकप्रभवं द्विज ।
खे वाचं त्वमथाश्रौषीर्मां प्रति द्विजसत्तम ॥ ५०
अमर्षवशमापन्नस्ततः प्राप्तो भवानिह ।
करवाणि प्रियं किं ते तद्ब्रूहि द्विजसत्तम ॥ ५१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

## अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

तुलाधारेण जाजलये धर्मरहस्योपदेशः ॥ १ ॥

भीष्म उवाच ।
इत्युक्तः स तदा तेन तुलाधारेण धीमता ।
प्रोवाच वचनं धीमाञ्जाजलिर्जपतांवरः ॥ १
जाजलिरुवाच ।
विक्रीणतः सर्वरसान्सर्वगन्धांश्च वाणिज ।
वनस्पतीनोषधीश्च तेषां मूलफलानि च ॥ २
अध्यगा नैष्ठिकी बुद्धिः कुतस्त्वामियमागता ।
एतदाचक्ष्व मे सर्वं निखिलेन महामते ॥ ३
भीष्म उवाच ।
एवमुक्तस्तुलाधारो ब्राह्मणेन यशस्विना ।
उवाच धर्मसूक्ष्माणि वैश्यो धर्मार्थतत्त्ववित् ॥ ४
वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ॥ ५
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥ ६
परिच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम् ।
अलक्तं पद्मकं तुङ्गं गन्धांश्चोच्चावचांस्तथा ॥ ७
रसांश्च तांस्तान्विप्रर्षे मद्यवर्ज्यान्बहूनहम् ।
क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया ॥ ८
सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ ९
नानुरुध्ये विरुध्ये वा न द्वेष्मि न च कामये ।
समोऽहं सर्वभूतेषु पश्य मे जाजले व्रतम् ।
तुला मे सर्वभूतेषु समा तिष्ठति जाजले ॥ १०
नाहं परेषां कृत्यानि प्रशंसामि न गर्हये ।
आकाशस्येव विप्रेन्द्र पश्यँल्लोकस्य चित्रताम् ॥ ११
'कृपा मे सर्वभूतेषु समा तिष्ठति जाजले ।
इष्टानिष्टवियुक्तस्य प्रियद्वेषौ बहिष्कृतौ ॥' १२
इति मां त्वं विजानीहि सर्वलोकस्य जाजले ।
समं मतिमतां श्रेष्ठ समलोष्टाश्मकाञ्चनम् ॥ १३
यथाऽन्धबधिरोन्मत्ता उच्छ्वासपरमाः सदा ।
देवैरपिहितद्वाराः सोपमा पश्यतो मम ॥ १४
यथा वृद्धातुरकृशा निस्पृहा विषयान्प्रति ।
तथाऽर्थकामभोगेषु ममापि विगता स्पृहा ॥ १५
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि तदा सिद्ध्यति वै द्विज ॥ १६
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ १७
न भूतो न भविष्योऽस्ति न च धर्मोस्ति कश्चन ।
योऽभयः सर्वभूतानां स प्राप्नोत्यभयं पदम् ॥ १८
यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव ।
वाक्क्रूराद्दण्डपरुषात्स प्राप्नोति महद्भयम् ॥ १९
यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम् ॥ २०
प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः ।
तेन वैद्यस्तपस्वी वा बलवान्वा विमुह्यते ॥ २१
आचाराज्जाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् ।
एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा ॥ २२
नद्यां चेह यथा काष्ठमुह्यमानं यदृच्छया ।
यदृच्छयैव काष्ठेन सन्धिं गच्छेत केनचित् ॥ २३

वाणिज वणिक्पुत्र ॥ २ ॥ अध्यगा नैष्ठिकीं बुद्धिं कुतस्त्वामिदमागतमिति झ. पाठः ॥ ३ ॥ पद्मकं तुङ्गं च काष्ठविशेषौ । कस्तूर्यादीन्गन्धान् ॥ ७ ॥ रसान् लवणादीन् ॥ ८ ॥ न द्वेष्टि ब्रह्म संपद्यते तदेति झ. पाठः ॥ १६ ॥

तत्रापराणि दारूणि संसृज्यन्ते ततस्ततः ।
तृणकाष्ठकरीषाणि कदाचिन्न समीक्षया ॥ २४
यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन ।
अभयं सर्वभूतेभ्यः स प्राप्नोति सदा मुने ॥ २५
यस्मादुद्विजते विद्वन्सर्वलोको वृकादिव ।
क्रोशतस्तीरमासाद्य यथा सर्वे जलेचराः ॥ २६
एवमेवायमाचारः प्रादुर्भूतो यतस्ततः ।
सहायवान्द्रव्यवान्यः सुभगोऽथ परस्तथा ॥ २७
ततस्तानेव कवयः शास्त्रेषु प्रवदन्त्युत ।
कीर्त्यर्थमल्पहृल्लेखाः पटवः कृत्स्ननिर्णयाः ॥ २८
तपोभिर्यज्ञदानैश्च वाक्यैः प्रज्ञाश्रितैस्तथा ।
प्राप्नोत्यभयदानस्य यद्यत्फलमिहाश्नुते ॥ २९
लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम् ।
स सत्ययज्ञैरीजानः प्राप्नोत्यभयदक्षिणाम् ॥ ३०
न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चन ।
यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन ।
सोऽभयं सर्वभूतेभ्यः संप्राप्नोति महामुने ॥ ३१
यस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ।
न स धर्ममवाप्नोति इह लोके परत्र च ॥ ३२
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥ ३३
दानं भूताभयस्याहुः सर्वदानेभ्य उत्तमम् ।
ब्रवीमि ते सत्यमिदं श्रद्धत्स्व मम जाजले ॥ ३४
स एव सुभगो भूत्वा पुनर्भवति दुर्भगः ।
व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनाः सदा ३५
अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले ।
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥ ३६
सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः ।
उपलभ्यान्तरा चान्यानाचारानवबुध्यते ॥ ३७

ये च च्छिन्दन्ति वृषणान्ये च भिन्दन्ति नस्तकान् ।
वहन्ति महतो भारान्बध्नन्ति दमयन्ति च ।
हत्वा सत्वानि खादन्ति तान्कथं न विगर्हसे ३८
मानुषा मानुषानेव दासभोगेन भुञ्जते ।
वधबन्धनिरोधेन कारयन्ति दिवानिशम् ॥ ३९
आत्मनश्चापि जानाति यद्दुःखं वधबन्धने ।
पञ्चेन्द्रियेषु भूतेषु सर्वं वसति दैवतम् ॥ ४०
आदित्यश्चन्द्रमा वायुर्ब्रह्मा प्राणः क्रतुर्यमः ।
तानि जीवानि विक्रीय का मृतेषु विचारणा ॥ ४१
अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्वत्सश्च सोमो वै विक्रीयैतन्न सिध्यति ॥ ४२
का तैले का घृते ब्रह्मन्मधुन्यप्स्वोषधीषु वा ॥ ४३
अदंशमशके देशे सुखसंवर्धितान्पशून् ।
तांश्च मातुः प्रियाञ्जानन्नाक्रम्य बहुधा नराः ॥४४
बहुदंशाकुलान्देशान्नयन्ति बहुकर्दमान् ।
वाहसंपीडिता धुर्याः सीदन्त्यविधिना परे ॥ ४५
न मन्ये भ्रूणहत्याऽपि विशिष्टा तेन कर्मणा ।
कृषिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणा ४६
भूमिं भूमिशयांश्चैव हन्ति काष्ठैरयोमुखैः ।
तथैवानडुहो युक्तान्क्षुत्तृष्णाश्रमकर्शितान् ॥ ४७
अघ्न्या इति गवां नाम क एता हन्तुमर्हति ।
महच्चकाराकुशलं वृथा यो गां निहन्ति ह ॥ ४८
ऋषयो यतयो ह्येतन्नहुषे प्रत्यवेदयन् ।
गां मातरं चाप्यवधीर्वृषभं च प्रजापतिम् ।
अकार्यं नहुषाकार्षीर्लप्स्यामस्त्वत्कृते व्यथाम् ४९
शतं चैकं च रोगाणां सर्वभूतेष्वपातयन् ।
ऋषयस्ते महाभागाः प्रशस्तास्ते च जाजले ॥५०
भ्रूणहं नहुषं त्वाहुर्न तं भोक्ष्यामहे वयम् ।
इत्युक्त्वा ते महात्मानः सर्वे तत्त्वार्थदर्शिनः ।

---

दृष्टान्ते वडवाग्निः ॥ २६ ॥ सम्यग्भूतानि पश्यत इति ध. पाठः ॥ ३३ ॥ व्यापत्तिं नाशम् । कर्मणां कर्मफलानां स्वर्गादीनाम् ॥ ३५ ॥ अकारणः कारणमनुष्ठानप्रयोजकं फलं तद्धीनः ॥ ३६ ॥ यदुक्तमलक्तपद्मकादीन्यपण्यानि विक्रीणासीति तत्राह येचेति । नस्तकान् नासागर्भान् । वहन्ति वाहयन्ति ॥ ३८ ॥ दासभावेन भुञ्जते इति झ. पाठः ॥ ३९ ॥ अविधिना क्रत्वर्थापि हिंसा दोषावहा किमुताऽक्रत्वर्थेत्यर्थः ॥ ४५ ॥ भूमिशयान्सर्पादीन् । अयोमुखं काष्ठं लाङ्गलम् ॥ ४७ ॥ न हन्तुं शक्या अघ्न्या इति योगाद्गवामवध्यत्वं श्रौतमित्यर्थः ॥ ४८ ॥ नहुषकृता गोवृषहत्या सर्वभूतेष्वेकाधिकशतरोगरूपेण क्षिप्तेत्यर्थः ॥ ५० ॥ एवमुक्त्वापि तपसा ध्यानेन तं प्रत्यवेदयन् प्रतीपमवेदयन् । हन्तारमपि धीपूर्वमहन्तारं नहुषं ध्यानबलेन ज्ञात्वा तथैव लोकेऽपि प्रमादात्कृतोऽपि गोवधो व्याधिरूपेण सर्वलोकापकारायाभूत् किमुत बुद्धिपूर्वं कृत इति ज्ञापित-

ऋषयो यतयः शान्तास्तपसा प्रत्यषेधयन् ॥ ५१
ईदृशानशिवान्घोरानाचारानिह जाजले ।
केवलाचरितत्वात्तु निपुणो नावबुध्यसे ॥ ५२
कारणाद्धर्ममन्विच्छेन्न लोकं विरसं चरेत् ॥ ५३
यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले ।
समौ तावपि मे स्यातां न हि मे स्तः प्रियाप्रिये ।
एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः ॥ ५४
उपपत्त्या हि संपन्नो यतिभिश्चैव सेव्यते ।
सततं धर्मशीलैश्च निपुणेनोपलक्षितः ॥ ५५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टषष्टयधिकद्विशततमोऽध्यायः ॥ २६८ ॥

---

## एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

तुलाधारेण जाजलये धर्मरहस्योपदेशः ॥ १ ॥

जाजलिरुवाच ।
यथा प्रवर्तितो धर्मस्तुलां धारयता त्वया ।
स्वर्गद्वारं च वृत्तिं च भूतानामवरोत्स्यते ॥ १
कृष्या ह्यन्नं प्रभवति ततस्त्वमपि जिवसि ।
पशुभिश्चौषधीभिश्च मर्त्या जीवन्ति वाणिज ॥ २
ततो यज्ञः प्रभवति नास्तिक्यमपि जल्पसि ।
न हि वर्तेदयं लोको वार्तामुत्सृज्य केवलाम् ॥ ३
तुलाधार उवाच ।
वक्ष्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः ।
न यज्ञं च विनिन्दामि यज्ञवित्तु सुदुर्लभः ॥ ४
नमो ब्राह्मण यज्ञाय ये च यज्ञविदो जनाः ।
स्वयज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमनुष्ठिताः ॥ ५
लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैः संप्रवर्तितम् ।
वेदवादानविज्ञानां सत्याभासमिवानृतम् ॥ ६
इदं देयमिदं देयमिति नान्यच्चिकीर्षति ।
अतः स्तैन्यं प्रभवति विकर्माणि च जाजले ॥ ७
यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः ।
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ।
पूजा स्याद्देवतानां हि यथाशास्त्रनिदर्शनम् ॥ ८
इष्टापूर्तादसाधूनां विदुषां जायते प्रजा ।
लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः ॥ ९
यजमाना यथाऽऽत्मानमृत्विजश्च तथा प्रजाः ।
यज्ञात्प्रजा प्रभवति नभसोऽम्भ इवामलम् ॥ १०
अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपगच्छति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ११
तस्मात्सुनिष्ठिताः पूर्वे सर्वान्कामांश्च लेभिरे ।
अकृष्टपच्या पृथिवी आशीर्भिर्वीरुधोऽभवन् ॥ १२
न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किंचन ।
शङ्कमानाः फलं यज्ञे ये यजेरन्कथंचन ॥ १३
जानन्तः सर्वथा साधु लुब्धा वित्तप्रयोजनाः ।
स स पापकृतां लोकान्गच्छेदशुभकर्मणा ॥ १४
प्रमाणमप्रमाणेन यः कुर्यादशुभं नरः ।
पापात्मा सोऽकृतप्रज्ञः सदैवेह द्विजोत्तम ॥ १५
कर्तव्यमिति कर्तव्यं वेत्ति वै ब्राह्मणो भयम् ।
ब्रह्मैव वर्तते लोके नैव कर्तव्यतां पुनः ॥ १६
विगुणं च पुनः कर्म ज्याय इत्यनुशुश्रुम ।
सर्वभूतोपकारश्च फलभावे च संयमः ॥ १७
सत्ययज्ञा दमयज्ञा अलुब्धाश्चात्मतृप्तयः ।
उत्पन्नत्यागिनः सर्वे जना आसन्नमत्सराः ॥ १८
क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः स्वयज्ञपरिनिष्ठिताः ।
ब्राह्मं वेदमधीयन्तस्तोषयन्त्यपरानपि ॥ १९
अखिलं दैवतं सर्वं ब्रह्म ब्रह्मणि संश्रितम् ।
तृप्यन्ति तृप्यतो देवास्तृप्ताऽतृप्तस्य जाजले ॥ २०
यथा सर्वरसैस्तृप्तो नाभिनन्दति किंचन ।

---

वन्त इत्यर्थः ॥ ५१ ॥ केवलेति पूर्वैः कृत इत्यन्धपरंपरामात्करोषि नतु तत्त्वबुद्ध्या ॥ ५२ ॥ अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

नास्तिक्यं हिंसात्मकत्वेन यज्ञनिन्दा ॥ ३ ॥ विगुणा जायते प्रजेति झ. पाठः ॥ ९ ॥

तथा प्रज्ञानतृप्तस्य नित्यतृप्तिः सुखोदया ॥ २१
धर्माधारा धर्मसुखाः कृत्स्नव्यवसितास्तथा ।
अस्ति नस्तत्त्वतो भूय इति प्राज्ञस्त्ववेक्षते ॥ २२
ज्ञानविज्ञानिनः केचित्परं पारं तितीर्षवः ।
अतीव पुण्यदं पुण्यं पुण्याभिजनसंहितम् ॥ २३
यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च ।
ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्विकाः ॥ २४
नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनाः ।
सतां वर्त्मानुवर्तन्ते यथाबलमहिंसया ॥ २५
वनस्पतीनोषधीश्च फलमूलानि ते विदुः ।
न चैतानृत्विजो लुब्धा याजयन्ति फलार्थिनः २६
स्वमेव चार्थं कुर्वाणा यज्ञं चक्रुः पुनर्द्विजाः ।
परिनिष्ठितकर्माणः प्रजानुग्रहकाम्यया ॥ २७
तस्मात्तानृत्विजो लुब्धा याजयन्त्यशुभान्नरान् ।
प्रापयेयुः प्रजाः स्वर्गे स्वधर्माचरणेन वै ।
इति मे वर्तते बुद्धिः समा सर्वत्र जाजले ॥ २८
प्रयुञ्जते येन यज्ञे सदा प्राज्ञा द्विजर्षभाः ।
तेन ते देवयानेन पथा यान्ति महामुने ॥ २९
आवृत्तिस्तस्य चैकस्य नास्त्यावृत्तिर्मनीषिणः ।
उभौ तौ देवयानेन गच्छतो जाजले यथा ॥ ३०
स्वयं चैषामनड्वाहो युञ्जन्ति च वहन्ति च ।
स्वयमुस्राश्च दुह्यन्ते मनःसंकल्पसिद्धिभिः ॥ ३१
स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणाः ।
यस्तथा भावितात्मा स्यात्स गामालब्धुमर्हति ३२
ओषधीभिस्तथा ब्रह्मन्यजेरंस्ते न तादृशाः ।
श्रद्धया गां पुरस्कृत्य तद्वतं प्रब्रवीमि ते ॥ ३३
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ ३४
न श्रावयन्न च यजन्न ददद्ब्राह्मणेषु च ।
काम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले ।
इदं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ॥ ३५
जाजलिरुवाच ।

[न वै मुनीनां शृणुमः स्म तत्त्वं
पृच्छामि ते वाणिज कष्टमेतत् ।
पूर्वेपूर्वे चास्य नावेक्षमाणा
नातः परं तमृषयः स्थापयन्ति ॥ ३६

यस्मिन्नेवात्मतीर्थेन पशवः प्राप्नुयुर्मखम् ।]
अथ स्म कर्मणा केन वाणिज प्राप्नुयात्सुखम् ।
शंस मे तन्महाप्राज्ञ भृशं वै श्रद्दधामि ते ॥ ३७
तुलाधार उवाच ।
उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित् ।
आज्येन पयसा दध्ना सत्कृत्यामिक्षया त्वचा ।
बालैः शृङ्गेण पादेन संभरत्येव गौर्मखम् ॥ ३८
पत्नीव्रतेन विधिना प्रकरोति नियोजयन् ।
इष्टं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ॥ ३९
पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ।
सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
जाजले तीर्थमात्मेव मा स्म देशातिथिर्भव ॥ ४०
एतानीदृशकान्धर्मानाचरन्निह जाजले ।
कारणैर्धर्ममन्विच्छन्स लोकानाप्नुते शुभान् ॥ ४१
भीष्म उवाच ।
एतानीदृशकान्धर्मांस्तुलाधारः प्रशंसति ।
उपपत्त्याऽभिसंपन्नान्नित्यं सद्भिर्निषेवितान् ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

---

यजन्ते चाविहिंसयेति झ० पाठः ॥ २५ ॥ अशक्तानां तु बालैर्गोपुच्छे पितृतर्पणादिना । शृङ्गेण गोशृङ्गेणाभिषेकादिना । पादेनेति पादरजसेत्यर्थः । एतेषां गोस्पर्शनादीनां च सद्यः पापनाशकत्वं परलोकप्रदत्वं च स्मृत्युक्तं दर्शितम् ॥ ३८ ॥ ईदृशकानहिंस्रान् । कारणैरर्थित्वसमर्थत्वविद्वत्त्वतारतम्यैः ॥ ४१ ॥ उपपत्त्या युक्त्या ॥ ४२ ॥ एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

## सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

भीष्मेण युधिष्ठिरंप्रति जाजलितुलाधारसंवादानुवादः ॥ १ ॥

तुलाधार उवाच ।
सद्भिर्वा यदि वाऽसद्भिः पन्थानमिममाश्रितः ।
प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा ॥ १
एते शकुन्ता बहवः समन्ताद्विचरन्ति ह ।
तवोत्तमाङ्गे संभूताः श्येनाश्चान्याश्च जातयः ॥ २
आह्वयैनान्महाब्रह्मन्विशमानांस्ततस्ततः ।
पश्येमान्हस्तपादेषु श्लिष्टान्देहेषु सर्वशः ॥ ३
संभावयन्ति पितरं त्वया संभाविताः खगाः ।
असंशयं पिता वै त्वं पुत्रानाह्वय जाजले ॥ ४
भीष्म उवाच ।
ततो जाजलिना तेन समाहूताः पतत्रिणः ।
वाचमुच्चारयन्ति स्म धर्मस्य वचनात्किल ॥ ५
तुलाधार उवाच ।
अहिंसादि कृतं कर्म इह चैव परत्र च ।
श्रद्धां निहन्ति वै ब्रह्मन्सा हता हन्ति तं नरम् ॥ ६
समानां श्रद्दधानानां संयतानां सुचेतसाम् ।
कुर्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते ॥ ७
श्रद्धा वै सात्विकी देवी सूर्यस्य दुहिता द्विज ।
सावित्री प्रसवित्री च हविर्वाङ्मनसी ततः ॥ ८
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च जाजले ।
श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति ॥ ९
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ॥ १०
देवा वित्तममन्यन्त सदृशं यज्ञकर्मणि ।
श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ॥ ११
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ।
प्रजापतिस्तानुवाच विषमं कृतमित्युत ॥ १२
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।
भोज्यमन्नं वदान्यस्य कदर्यस्य न वार्धुषेः ॥ १३
अश्रद्दधान एवैको देवानां नार्हते हविः ।
तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः ॥ १४
अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी ।
जहाति पापं श्रद्धावान्सर्पो जीर्णामिव त्वचम् ॥ १५
ज्यायसी या पवित्राणां निवृत्तिः श्रद्धया सह ।
निवृत्तशीलदोषो यः श्रद्धावान्पूत एव सः ॥ १६
किं तस्य तपसा कार्यं किं वृत्तेन किमात्मना ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ १७
इति धर्मः समाख्यातः सद्भिर्धर्मार्थदर्शिभिः ।
वयं जिज्ञासमानास्तु संप्राप्ता धर्मदर्शनात् ॥ १८
श्रद्धां कुरु महाप्राज्ञ ततः प्राप्स्यसि यत्परम् ॥ १९
'जाजलिरुवाच ।
न वै मुनीनां शृणुमश्च तत्वं
पृच्छामि ते वाणिज तत्वमेतत् ।
पूर्वे हि पूर्वेऽप्यनवेक्षमाणा
नातः परं ते ऋषयः स्थापयन्ति ॥ २०
यस्मिन्नेवानुतीर्थेन पशवः प्राप्नुयुः सुखम् ।
पत्नीव्रतेन विधिना प्रकरोति नियोजयन् ।'
श्रद्धावाञ्श्रद्दधानश्च धर्मश्चैव हि वाणिज ॥ २१

अयं पन्थाः समाश्रित इति ट. थ. पाठः ॥ १ ॥ ततस्ततः तेषु तेषु देहेषु प्रवेशाय श्लिष्टान् संकुचितहस्तपादान् ॥ ३ ॥ वाचमुच्चारयन्ति । निःशङ्कं प्रत्युत्तरं प्रयच्छन्तीत्यर्थः । तत्र हेतुः धर्मस्याऽहिंसात्मकस्य संबन्धिनो वचनात्प्रियवचनादित्यर्थः ॥ ५ ॥ हिंसा आदिपदार्थः । इह परत्र च प्रत्यक्षफलमिति शेषः । तत्र हिंसाफलमाह श्रद्धामिति । हिंसा श्रद्धां विश्वासं निहन्तीत्यध्याहृत्य योज्यम् । तं विश्वासघातिनम् । स्पर्धा निहन्ति तं धर्मं स हतो हन्तीति ध. पाठः । हिंसा निहन्ति वै धर्मसंहतो हन्तीति थ. पाठः ॥ ६ ॥ समानां लाभालाभयोः यज्ञः कर्तव्य इत्येवाभिसंधाय कुर्वतां फलं चाभिसंधायेति एवार्थः । तेषां यज्ञो नेष्यत इति न । संगतानां सुचेतसामिति ध. पाठः ॥ ७ ॥ वाचा स्वरवर्णविपर्यासेन यद्वृद्धं छिन्नं नष्टं मन्त्राद्युच्चारणे तच्छ्रद्धा त्रायते समाधत्ते । मनसा व्यग्रेण यन्नष्टं देवताध्यानादि ॥ ९ ॥ मीमांसित्वा विचार्य ॥ १२ ॥ हविर्दातुमिति शेषः ॥ १४ ॥ यत् या सात्विकी राजसी तामसी वा श्रद्धा यस्य स यच्छ्रद्धः । स एव स सात्विको राजसस्तामसो वा ॥ १७ ॥ धर्मदर्शनाख्यान्मुनेर्धर्मं वयं प्राप्तवन्तः ॥ १८ ॥ स्पर्धां जहि महाप्राज्ञेति ध. पाठः ॥ १९ ॥ श्रद्धावान्वेदवाक्ये । श्रद्दधानस्तदर्थमनुष्ठातुं ममेदं श्रेय इति निश्चयवान् । धर्मो धर्मात्मा ॥ २१ ॥

तुलाधार उवाच ।
स्ववर्त्मनि स्थितश्चैव गरीयानेव जाजले ॥ २२
भीष्म उवाच ।
ततोऽचिरेण कालेन तुलाधारः स एव च ।
दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखम् ।
स्वंस्वं स्थानमुपागम्य स्वकर्मफलनिर्मितम् ॥ २३
एवं बहुविधार्थं च तुलाधारेण भाषितम् ।
सम्यक्चैवमुपालब्धो धर्मश्चोक्तः सनातनः ॥ २४
तस्य विख्यातवीर्यस्य श्रुत्वा वाक्यानि जाजलिः ।
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत ॥ २५
'समानां श्रद्दधानानां युक्तानां च यथाबलम् ।
कुर्वतां यज्ञ इत्येव नायज्ञो जातु नेष्यते ॥' २६
एवं बहुमतार्थं च तुलाधारेण भाषितम् ।
यथौपम्योपदेशेन किं भूयः श्रोतुमिच्छसि ॥२७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

## एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

भीष्मेण युधिष्ठिरंप्रति हिंसात्यागपूर्वकं शरीराविरोधेन धर्माचरणचोदना ॥ १ ॥

'युधिष्ठिर उवाच ।
शरीरमापदश्चैव न विदन्त्यविहिंसकाः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ॥ १
भीष्म उवाच ।
यथा शरीरं न म्लायेन्नैव मृत्युवशं भवेत् ।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ॥' २
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रजानामनुकम्पार्थं गीतं राज्ञा विचख्युना ॥ ३
छिन्नस्थूणं वृषं दृष्ट्वा विरावं च गवां भृशम् ।
गोगृहे यज्ञवाटे च प्रेक्षमाणः स पार्थिवः ॥ ४
स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्वचनं कृतम् ।
हिंसायां हि प्रवृत्तायामाशीरेषा तु कल्पिता ॥ ५
अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः ।
संशयात्मभिरव्यक्तैर्हिंसा समनुदर्शिता ॥ ६
सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत् ।
कामकाराद्विहिंसन्ति बहिर्वेद्यां पशून्नराः ॥ ७
तस्मात्प्रमाणतः कार्यो धर्मः सूक्ष्मो विजानता ।
अहिंसा ह्येव सर्वेभ्यो धर्मेभ्यो ज्यायसी मता ॥८
उपोष्य संशितो भूत्वा हित्वा वेदकृतां श्रुतिः ।
आचार इत्यनाचारः कृपणाः फलहेतवः ॥ ९
यदि छिन्दन्ति वृक्षांश्च यूपांश्चोद्दिश्य मानवाः ।
वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते ॥ १०
सुरां मत्स्यान्मधु मांसमासवं कृसरौदनम् ।
धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम् ।
कामान्मोहाच्च लोभाच्च लौल्यमेतत्प्रकीर्तितम् ॥ ११
विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः ।
पायसैः सुमनोभिश्च तस्यैव यजनं स्मृतम् ॥ १२
यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ।
यच्चापि किंचित्कर्तव्यमन्यच्चोक्षैः सुसंस्कृतम् ।
महासत्वैः शुद्धभावैः सर्वं देवार्हमेव तत् ॥ १३
युधिष्ठिर उवाच ।
शरीरमापदश्चापि विवदन्त्यविहिंसतः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ॥ १४
भीष्म उवाच ।
यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा ।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ॥ १५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

गरीयानेव भूतले इति ट. थ. पाठः ॥२२॥ यथौपम्योपदेशेन यथावद्दृष्टान्तकीर्तनेन ॥२७॥ सप्तत्यधिकद्विशततमोऽध्यायः ॥२७०॥

छिन्ना विशस्ता स्थूणा प्रतिमा शरीरं यस्य तम् ॥ ४ ॥ निश्चितं वचनं निर्वचनम् । एषा स्वस्ति गोभ्योऽस्त्विति हिंसा क्रतौ पश्वालम्भः ॥ ५ ॥ वेदकृतां वेदोक्तां हिंसाम् । आचार इति बुद्ध्या अनाचारः आचरणहीनः ॥ ९ ॥ विष्णुमेव यजन्तीहेति ट. थ. पाठः ॥ १२ ॥ चोक्षैर्विशुद्धैः ॥१३॥ आपदः शरीरं शोषयन्ति शरीरं चापदां नाशमिच्छत्यतोऽत्यन्तं हिंसाशून्यस्य कथं शरीरनिर्वाह इत्याह शरीरमिति ॥१४॥ एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

## द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

भीष्मेण युधिष्ठिरंप्रति चिरकारिकोपाख्यानकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कथं कार्यं परीक्षेत शीघ्रं वाऽथ चिरेण वा ।
सर्वथा कार्यदुर्गेऽस्मिन्भवान्नः परमो गुरुः ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चिरकारेस्तु यत्पूर्वं वृत्तमाङ्गिरसां कुले ॥ २
'गौतमस्य सुता ह्यासन्यवीयांश्चिरकारिकः ।'
चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
चिरकारी हि मेधावी नापराध्यति कर्मसु ॥ ३
चिरकारी महाप्राज्ञो गौतमस्याभवत्सुतः ।
चिरेण सर्वकार्याणि विमृश्यार्थान्प्रपद्यते ॥ ४
चिरं स चिन्तयत्यर्थांश्चिरं जाग्रच्चिरं स्वपन् ।
चिरं कार्याभिपत्तिं च चिरकारी तथोच्यते ॥ ५
अलसग्रहणं प्राप्तो दुर्मेधावीति चोच्यते ।
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ॥ ६
व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान्सुतान् ।
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ॥ ७
इत्युक्त्वा स तदा विप्रो गौतमो जपतां वरः ।
अविमृश्य महाभागो वनमेव जगाम सः ॥ ८
स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः ।
विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम् ॥ ९
पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम् ।
कथं धर्मच्छले नास्मिन्निमज्जेयमसाधुवत् ॥ १०
पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम् ।
अस्वतन्त्रं च पुत्रत्वं किंतु मां नानुपीडयेत् ॥ ११
स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत् ।
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ॥ १२
अनवज्ञा पितुर्युक्ता स्वधर्मो मातृरक्षणम् ।
युक्तक्षमावुभावेतौ नातिवर्तेतमां कथम् ॥ १३
पिता ह्यात्मानमाधत्ते जायायां जायतामिति ।
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ॥ १४
सोऽहं मात्रा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः ।
विज्ञानं मे कथं न स्याद्वौ बुध्ये चात्मसंभवम् ॥ १५
जातकर्मणि यत्प्राह पिता यच्चोपकर्मणि ।
पर्याप्तः स दृढीकारः पितुर्गौरवनिश्चये ॥ १६
गुरुरग्र्यः परो धर्मः पोषणाध्यापनान्वितः ।
पिता यदाह धर्मः स वेदेष्वपि सुनिश्चितः ॥ १७
प्रीतिमात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता ।
शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ १८
तस्मात्पितुर्वचः कार्यं न विचार्यं कदाचन ।
पातकान्यपि पूयन्ते पितुः शासनकारिणः ॥ १९
भाग्यभोगे प्रसवने सर्वलोकनिदर्शने ।
धात्र्याश्चैव समायोगे सीमन्तोन्नयने तथा ॥ २०
पिता धर्मः पिता स्वर्गः पिता हि परमं तपः ।
पितरि प्रीतिमापन्ने सर्वाः प्रीणन्ति देवताः ॥ २१
आशिषस्ता भजन्त्येनं पुरुषं प्राह यत्पिता ।
निष्कृतिः सर्वपापानां पिता यच्चाभिनन्दति ॥ २२
मुच्यते बन्धनात्पुष्पं फलं वृक्षात्प्रमुच्यते ।
क्लिश्यन्नपि सुतस्नेहैः पिता पुत्रं न मुञ्चति ॥ २३
एतद्विचिन्तितं तावत्पुत्रस्य पितृगौरवम् ।
पिता नाल्पतरं स्थानं चिन्तयिष्यामि मातरम् २४
यो ह्ययं मयि संघातो मर्त्यत्वे पाञ्चभौतिकः ।
अस्य मे जननी हेतुः पावकस्य यथाऽरणिः ॥ २५
माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ।
मातृलाभे सनाथत्वमनाथत्वं विपर्यये ॥ २६
न च शोचति नाप्येनं स्थाविर्यमपकर्षति ।

---

कार्यदुर्गे गुर्वादिवचनादवश्यकर्तव्ये हिंसामयत्वेन दुष्करे च प्रतीत्यर्थः ॥ १ ॥ सर्वकार्याणि विमर्शात्प्रत्यपद्यतेति थ. ध. पाठः ॥४॥ गृह्यते उपादीयते लोकेऽनेनेति ग्रहणं नामधेयम् । अलस इति ग्रहणमलसग्रहणं प्राप्तः ॥ ६ ॥ पित्रा गौतमेन । मां जननीमहल्यां जहि संहर ॥ ७ ॥ धर्मच्छले धर्मसंकटे ॥ १० ॥ युक्तमुचितम् । क्षमं सुखानुष्ठेयम् । नातिवर्तेतमामतिशयेन नातिवर्ते । तिङन्तात्तमप आम् नातिवर्ते त्वहं कथम् इति ध. पाठः ॥१३॥ पिता ह्यात्मानमादत्ते माता भर्त्रा ह्यनिन्दितेति ट. पाठः गोत्रस्य नाम्नः ॥ १४ ॥ बुध्ये जानामि । संभवमुत्पत्तिहेतुम् ॥ १५ ॥ निर्वृतिः सुखं तत्कर्त्री ॥ २६ ॥

श्रिया हीनोऽपि यो गेहमम्बेति प्रतिपद्यते ॥२७
पुत्रपौत्रोपपन्नोऽपि जननीं यः समाश्रितः ।
अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् ॥ २८
समर्थं वाऽसमर्थं वा कृशं वाप्यकृशं तथा ।
रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः ॥ २९
तदा स वृद्धो भवति तदा भवति दुःखितः ।
तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते ॥ ३०
नास्ति मातृसमा च्छाया नास्ति मातृसमा गतिः ।
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया ॥३१
कुक्षौ संधारणाद्धात्री जननाज्जननी स्मृता ।
अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः ॥ ३२
शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम् ।
चेतनावान्स को हन्याद्यस्य नासुषिरं शिरः ॥३३
दंपत्योः प्राणसंश्लेषे योऽभिसन्धिः कृतः किल ।
तं माता च पिता चेति भूतार्थो मातरि स्थितः ३४
माता जानाति यद्गोत्रं माता जानाति यस्य सः ।
मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः ॥ ३५
पाणिबन्धं स्वयं कृत्वा सहधर्ममुपेत्य च ।
यदा यास्यन्ति पुरुषाः स्त्रियो नार्हन्ति याप्यतां ३६
भरणाद्धि स्त्रियो भर्ता पालनाद्धि पतिस्तथा ।
गुणस्यास्य निवृत्तौ तु न भर्ता न पुनः पतिः ॥३७
एवं स्त्री नापराध्नोति नर एवापराध्यति ।
व्युच्चरंश्च महादोषं नर एवापराध्यति ॥ ३८
स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम् ।
तस्यात्मना तु सदृशमात्मानं परमं ददौ ॥ ३९
नापराधोऽस्ति नारीणां नर एवापराध्यति ।
सर्वकार्यापराध्यत्वान्नापराध्यन्ति चाङ्गनाः ॥ ४०
यश्चनोक्तोऽथ निर्देशः स्त्रिया मैथुनवृद्धये ।
तस्य सारयतो व्यक्तमधर्मो नास्ति संशयः ॥ ४१
एवं नारीं मातरं च गौरवे चाधिके स्थिताम् ।
अवध्यां तु विजानीयुः पशवोऽप्यविचक्षणाः ॥४२
देवतानां समावायमेकस्थं पितरं विदुः ।
मर्त्यानां देवतानां च स्नेहादभ्येति मातरम् ॥४३
एवं विमृशतस्तस्य चिरकारितया बहु ।
दीर्घः कालो व्यतिक्रान्तस्ततोऽस्याभ्यागमत्पिता ॥
मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थितः ।
विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम् ॥४५
सोऽब्रवीद्भृशसंतप्तो दुःखेनाश्रूणि वर्तयन् ।
श्रुतधैर्यप्रसादेन पश्चात्तापमुपागतः ॥ ४६
आश्रमं मम संप्राप्तस्त्रिलोकेशः पुरंदरः ।
अतिथिव्रतमास्थाय ब्राह्मण्यं रूपमास्थितः ॥ ४७
स मया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः ।
अर्घ्यं पाद्यं यथान्यायं मया च प्रतिपादितः ॥४८
परवानस्मि चेत्युक्तः प्रणयिष्यति तेन च ।
अत्र चाकुशले जाते स्त्रिया नास्ति व्यतिक्रमः ॥ ४९
एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः ।
अपराध्यति धर्मस्य प्रमादस्त्वपराध्यति ॥ ५०
ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्ध्वरेतसः ।
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे ॥ ५१
हत्वा साध्वीं च नारीं च व्यसनित्वाच्च वासिताम् ।

हे अम्ब इत्युक्त्वा ॥ २७ ॥ द्विहायनवद्द्विवर्षवान् भवेत् । अपि वर्षशतस्यान्ते हायनत्वेन वर्तते इति ध. पाठः ॥ २८ ॥ वीरसूर्वीरपुत्रसूः ॥ ३२ ॥ असुषिरं कर्णनासादिसुषिरहीनं यः शृणोति पश्यति जिघ्रति भक्षयति च स मातरं न हन्यादित्यर्थः ॥३३॥ प्राण उपस्थेन्द्रियं तत्संश्लेषे मैथुने इत्यर्थः । अभिसंधिः पुत्रो मे गौरो जायेतेत्यादिरूपोऽभिलापः । माता पिता वा उभौ वा कुरुतस्तत्र भूतार्थो याथार्थ्यं मातर्येव तत्कर्तृत्वं स्थितं निश्चितं पितरि तु सोऽभिलाषः पाक्षिको भवतीत्यर्थः । दंपत्योः पाणिसंश्लेषे इति ध. पाठः ॥ ३४ ॥ भरणमात्रेण गर्भधारणमात्रेण संबन्धेन माता पुत्रे प्रीतिमाहार्दं स्नेहमासक्तिं च करोति । वस्तुतस्तु पितुरेव प्रजाः । पितुराज्ञाऽनुल्लङ्घनीयेति भावः ॥ ३५ ॥ याप्यतां त्याज्यताम् ॥ ३६ ॥ तथाच भर्तृत्वादिगुणशून्यस्योन्मत्तस्येव वचनान्मातरं न हिंसिष्ये इत्याशयः ॥३७॥ व्युच्चरन् पोषणादिकमकुर्वन् महादोषं प्राप्नोतीति शेषः ॥ ३८ ॥ सर्वेषु कार्येष्वपराध्यत्वादनुरोध्यत्वादल्पबलत्वेन सर्वथा पुरुषाधीनत्वात् ॥ ४० ॥ चनशब्दोऽप्यर्थे ॥ ४१ ॥ पशवोऽपि पशुप्राया अपि ॥४२॥ समावायः समूहः । मर्त्यानां देवतानां च समावाय मातरं स्नेहादभ्येतीति योजना । माता तु इह लोके पालयित्री चेति भावः ॥ ४३ ॥ तेन तावता कालेन । संस्थाव्यतिक्रमं मरणानौचित्यम् ॥ ४५ ॥ परवान् प्रणयिष्यति मयि प्रणयं करिष्यति । अत्रास्मिन्नर्थे चिन्तिते सति । अकुशले इन्द्रलौल्येन स्त्रीदूषणे जाते विषये स्त्रिया अहल्याया व्यतिक्रमो नास्ति ॥४९॥

भर्तव्यत्वेन भार्या च को नु मां तारयिष्यति ॥५२
अन्तरेण मयाऽऽज्ञप्तश्चिरकारीत्युदारधीः ।
यद्यद्य चिरकारी स्यात्स मां त्रायेत पातकात् ॥५३
चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
यद्यद्य चिरकारी त्वं ततोऽसि चिरकारिकः॥५४
त्राहि मां मातरं चैव तपो यच्चार्जितं त्वया ।
आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः ॥ ५५
सहजं चिरकारित्वमतिप्रज्ञतया तव ।
सफलं तत्तथा तेऽस्तु भवाद्य चिरकारिकः ॥ ५६
चिरमाशंसितो मात्रा चिरं गर्भेण धारितः ।
सफलं चिकारित्वं कुरु त्वं चिरकारिक ॥ ५७
चिरायते च संतापाच्चिरं स्वपिति धारितः ।
आवयोश्चिरसंतापादवेक्ष्य चिरकारिक ॥ ५८
भीष्म उवाच ।
एवं स दुःखितो राजन्महर्षिर्गौतमस्तदा ।
चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके ॥ ५९
चिरकारी तु पितरं दृष्ट्वा परमदुःखितः ।
शस्त्रं त्यक्त्वा ततो मूर्ध्ना प्रसादायोपचक्रमे ॥६०
गौतमस्तं ततो दृष्ट्वा शिरसा पतितं भुवि ।
पत्नीं चैव निराकारां परामभ्यागमन्मुदम् ॥ ६१
न हि सा तेन संभेदं पत्नी नीता महात्मना ।
विजने चाश्रमस्थेन पुत्रश्चापि समाहितः ॥ ६२
हन्या इति समादेशः शस्त्रपाणौ सुते स्थिते ।
विनीते प्रसवत्यर्थे विवासे चात्मकर्मसु ॥ ६३
बुद्धिश्चासीत्सुतं दृष्ट्वा पितुश्चरणयोर्नतम् ।
शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ ६४
ततः पित्रा चिरं स्तुत्वा चिरं चाघ्राय मूर्धनि ।
चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृतः ॥६
एवं स गौतमः पुत्रं प्रीतिहर्षगुणैर्युतः ।
अभिनन्द्य महाप्रज्ञ इदं वचनमब्रवीत् ॥ ६
चिरकारिक भद्रं ते चिरकारी चिरं भव ।
चिराय यदि ते सौम्य चिरमस्मि न दुःखितः॥६
गाथाश्चाप्यब्रवीद्विद्वान्गौतमो मुनिसत्तमः ।
चिरकारिषु धीरेषु गुणोद्देशसमाश्रयाः ॥ ६
चिरेण मित्रं बध्नीयाच्चिरेण च कृतं त्यजेत् ।
चिरेण हि कृतं मित्रं चिरं धारणमर्हति ॥ ६
रागे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ ७
बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ७
एवं स गौतमस्तत्र प्रीतः पुत्रस्य भारत ।
कर्मणा तेन कौरव्य चिरकारितया तथा ॥ ७
एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः ।
चिरेण निश्चयं कृत्वा चिरं न परितप्यते ॥ ७
चिरं धारयते रोषं चिरं कर्म नियच्छति ।
पश्चात्तापकरं कर्म न किंचिदुपपद्यते ॥ ७४
चिरं वृद्धानुपासीत चिरमन्यांश्च पूजयेत् ।
चिरं धर्मं निषेवेत कुर्याच्चान्वेषणं चिरम् ॥ ७५
चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च ।
चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम् ॥ ७६
ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम् ।
चिरं पृष्टोऽपि च ब्रूयाच्चिरं न परितप्यते ॥ ७७
उपास्य बहुलास्तस्मिन्नाश्रमे सुमहातपाः ।
समाः स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा ॥ ७८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

## त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

भीष्मेण युधिष्ठिरंप्रति प्रजापालनप्रकारप्रतिपादकद्युमत्सेनसत्यवत्संवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
कथं राजा प्रजा रक्षेन्न च किंचित्प्रतापयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।

अन्तरेण प्रमादेन ॥ ५३ ॥ निराकारां पाषाणभूताम् ॥ ६१ ॥

द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
द्युमत्सेनस्य संवादं राज्ञा सत्यवता सह ॥ २
अव्याहृतं व्याजहार सत्यवानिति नः श्रुतम् ।
वधाय नीयमानेषु पितुरेवानुशासनात् ॥ ३
अधर्मतां याति धर्मो यात्यधर्मश्च धर्मताम् ।
वधो नाम भवेद्धर्मो नैतद्भवितुमर्हति ॥ ४
द्युमत्सेन उवाच ।
अथ चेदवधो धर्मोऽधर्मः को जातुचिद्भवेत् ।
दस्यवश्चेन्न हन्येरन्सत्यवन्संकरो भवेत् ॥ ५
ममेदमिति नास्यैतत्प्रवर्तेत कलौ युगे ।
लोकयात्रा न चैव स्यादथ चेद्वेत्थ शंस नः ॥ ६
सत्यवानुवाच ।
सर्व एव त्रयो वर्णाः कार्या ब्राह्मणबन्धनाः ।
धर्मपाशनिबद्धानां नाल्पोऽप्यपचरिष्यति ॥ ७
यो यस्तेषामपचरेत्तमाचक्षीत वै द्विजः ।
अयं मे न शृणोतीति तस्मिन्राजा प्रधारयेत् ॥ ८
तत्त्वाभावेन यच्छास्त्रं तत्कुर्यान्नान्यथा वधः ।
असमीक्ष्यैव कर्माणि नीतिशास्त्रं यथाविधि ।
दस्यून्निहन्ति वै राजा भूयसो वाऽप्यनागसः ॥ ९
भार्या माता पिता पुत्रो हन्यन्ते पुरुषेण ते ।
परेणापकृतो राजा तस्मात्सम्यक्प्रधारयेत् ॥ १०
असाधुश्चैव पुरुषो लभते शीलमेकदा ।
साधोश्चापि ह्यसाधुभ्यः शोभना जायते प्रजा ॥ ११
न मूलघातः कर्तव्यो नैष धर्मः सनातनः ।
अपि खल्ववधेनैव प्रायश्चित्तं विधीयते ॥ १२
उद्वेजनेन बन्धेन विरूपकरणेन च ।
वधदण्डेन ते क्लिश्या न पुरोहितसंसदि ॥ १३
यदा पुरोहितं वा ते पर्येयुः शरणैषिणः ।
करिष्यामः पुनर्ब्रह्मन्न पापमिति वादिनः ॥ १४
तदा विसर्गमर्हाः स्युरितीदं धातृशासनम् ।
बिभ्रद्दण्डाजिनं मुण्डो ब्राह्मणोऽर्हति शासनम् १५
गरीयांसो गरीयांसमपराधे पुनःपुनः ।
तदा विसर्गमर्हन्ति न यथा प्रथमे तथा ॥ १६
द्युमत्सेन उवाच ।
यत्रयत्रैव शक्येरन्संयन्तुं समये प्रजाः ।
स तावान्प्रोच्यते धर्मो यावन्न प्रतिलङ्घ्यते ।
अहन्यमानेषु पुनः सर्वमेव पराभवेत् ॥ १७
पूर्वे पूर्वतरे चैव सुशास्या ह्यभवञ्जनाः ।
मृदवः सत्यभूयिष्ठा अल्पद्रोहाल्पमन्यवः ॥ १८
पुरा धिग्दण्ड एवासीद्वाग्दण्डस्तदनन्तरम् ।
आसीदादानदण्डोऽपि वधदण्डोऽद्य वर्तते ॥ १९
वधेनापि न शक्यन्ते नियन्तुमपरे जनाः ॥ २०
नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः ।
न गन्धर्वपितॄणां च कः कस्येह न कश्चन ॥ २१
पद्मं श्मशानादादत्ते पिशाचांश्चापि दैवतम् ।
तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु ॥ २२
सत्यवानुवाच ।
तान्न शक्नोषि चेत्साधून्परित्रातुमहिंसया ।
कस्यचिद्भूतभव्यस्य लोभेनान्तं तथा कुरु ॥ २३
राजानो लोकयात्रार्थं तप्यन्ते परमं तपः ।
तेऽपत्रपन्ति तादृग्भ्यस्तथावृत्ता भवन्ति च ॥ २४
वित्रास्यमानाः सुकृतो न कामाद्घ्नन्ति दुष्कृतीन् ।

---

अव्याहृतं दण्ड्यानामप्यदण्ड्यत्वं प्राक्केनाप्यनुक्तम् । वधाय वध्येष्विति शेषः ॥ ३ ॥ वधो नाम स च धर्म इति वदतोव्याघात इत्यर्थः ॥ ४ ॥ अपचरेद्ब्राह्मणवचनमतिक्रामेत् । प्रधारयेद्दण्डम् । अधर्मेण शृणोतीति ट. थ. पाठः ॥ ८ ॥ अनपराधिवधात् जन्मन्यस्मिन्नेव पापं फलतीत्याह भार्येति ॥१०॥ साधोः सकाशात् शीलं लभते ॥ ११ ॥ ते दस्यवः ॥ १४ ॥ बिभ्रदिति संन्यासिनोऽपि शास्या इत्यर्थः ॥ १५ ॥ गरीयांसमपि शास्युरिति शेषः । पुनःपुनरपराधे कृते तदा ते विसर्गं नार्हन्ति । प्रथमापराधे इवेति व्यतिरेकदृष्टान्तः ॥ १६ ॥ धर्मोल्लङ्घनेऽप्यहन्यमानेषु चोरेषु पूर्वे पूर्वकाले ॥ १८ ॥ अद्य कलौ ॥ १९ ॥ नैव दस्युषु दया कार्येत्याह । नैवेति । कः कस्येहेति प्रश्नः । न कश्चन कस्यापीत्युत्तरम् ॥ २१ ॥ चोरेषु मर्यादाकरणमपि न संभवतीत्याह पद्ममिति । तेषु समयं शास्त्रमर्यादां यः कुर्वीत स पद्मं श्मशानादादत्ते पिशाचान् दैवतत्वेन गृह्णाति । पात्रं श्मशानादिति ङ. पाठः । पद्मं श्मशानादिति झ. पाठः । तत्र पद्मं शवालकारमित्यर्थः ॥ २२ ॥ लाभेनाथ तथा कुर्विति ङ. पाठः ॥ २३ ॥ ते राजानस्तादृग्भ्यः स्तेनेभ्योऽपत्रपन्ते ममापि राज्ये स्तेन इति लज्जां कुर्वतेऽतस्तथा वृत्ता लोकयात्रार्थं प्रजानां निर्दोषत्वं कामयानाः पितर इव तपस्विनो भवन्ति ॥ २४ ॥ वित्रास्यमाना इति त्रासेनैव प्रजाः साध्व्यो भवन्ति

सुकृतेनैव राजानो भूयिष्ठं शासते प्रजाः ॥ २५
श्रेयसः श्रेयसोऽप्येवं वृत्तं लोकोऽनुवर्तते ।
सदैव हि गुरोर्वृत्तमनुवर्तन्ति मानवाः ॥ २६
द्युमत्सेन उवाच ।
आत्मानमसमाधाय समाधित्सति यः परान् ।
विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् ॥ २७
यो राज्ञो दम्भमोहेन किंचित्कुर्यादसांप्रतम् ।
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते ॥ २८
आत्मैवादौ नियन्तव्यो दुष्कृतं संनियच्छता ।
दण्डयेच्च महादण्डैरपि बन्धूननन्तरान् ॥ २९
'यो राजा लोभमोहेन किंचित्कुर्यादसांप्रतम् ।
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते ॥' ३०
यत्र वै पापकृन्नीचो न महद्दुःखमर्च्छति ।
वर्धन्ते तत्र पापानि धर्मो ह्रसति च ध्रुवम् ॥३
इति कारुण्यशीलस्तु विद्वान्वै ब्राह्मणोऽन्वशात् ।
इति चैवानुशिष्टोऽस्मि पूर्वैस्तातपितामहैः ।
आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च ॥ ३
एतत्प्रथमकल्पेन राजा कृतयुगे जयेत् ।
पादोनेनापि धर्मेण गच्छेत्त्रेतायुगे तथा ।
द्वापरे तु द्विपादेन पादेन त्ववरे युगे ॥ ३
तथा कलियुगे प्राप्ते राज्ञो दुश्चरितेन ह ।
भवेत्कालविशेषेण कला धर्मस्य षोडशी ॥ ३
अथ प्रथमकल्पेन सत्यवन्संकरो भवेत् ।
आयुः शक्तिं च कालं च निर्दिश्य तप आदिशेत् ३
सत्याय हि यथा नेह जह्याद्धर्मफलं महत् ।
भूतानामनुकम्पार्थं मनुः स्वायंभुवोऽब्रवीत् ॥३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

## चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

भीष्मेण युधिष्ठिरंप्रति फलानिच्छया यज्ञादेः कर्तव्यताप्रतिपादकगोकपिलसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
अविरोधेन भूतानां त्यागः षाड्गुण्यकारकः ।
यः स्यादुभयभाग्धर्मस्तन्मे ब्रूहि पितामह ॥ १
गार्हस्थ्यस्य च धर्मस्य योगधर्मस्य चोभयोः ।
अदूरसंप्रस्थितयोः किंस्विच्छ्रेयः पितामह ॥ २
भीष्म उवाच ।
उभौ धर्मौ महाभागावुभौ परमदुश्चरौ ।
उभौ महाफलौ तौ तु सद्भिराचरितावुभौ ॥ ३
अत्र ते वर्तयिष्यामि प्रामाण्यमुभयोस्तयोः ।
शृणुष्वैकमनाः पार्थ च्छिन्नधर्मार्थसंशयम् ॥ ४
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर ॥ ५
आम्नायमनुपश्यन्हि पुराणं शाश्वतं ध्रुवम् ।
नहुषः पूर्वमालेभे त्वष्टुर्गामिति नः श्रुतम् ॥ ६
तां नियुक्तामदीनात्मा सत्त्वस्थः संयमे रतः ।
ज्ञानवान्नियताहारो ददर्श कपिलस्तथा ॥ ७
स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम् ।
स्वरेण शिथिलां सत्यां वेदा ३इत्यब्रवीत्सकृत् ॥ ८
तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत् ।
हंहो वेदा ३ यदि मता धर्माः केनापरे मताः ॥ ९

॥ २५ ॥ दुष्कृतं दुष्टकर्मकारिणम् ॥ २९ ॥ आश्वासयद्भिः प्रजा इति शेषः ॥ ३२ ॥ एतद्भूमण्डल प्रथमकल्पने मुख्येनाहिंसामयेन दण्डेन जयेद्वशीकुर्यात् । धिग्दण्डं वाग्दण्डमादानदण्डं वधदण्डं च युगक्रमेण प्रजासु प्रवर्णयेदिति तात्पर्यम् ॥ ३३ ॥ निर्दिश्य निश्चित्य । तपोदण्डम् । राजभिः कृतदण्डास्तु शुध्यन्ति मलिना जना इति दण्डस्यापि तपोवच्छुद्धिहेतुत्वस्मृतेः ॥ ३५ ॥ सत्याय ब्रह्मप्राप्तये । हि प्रसिद्धम् । महद्धर्मफलं ज्ञानम् । यथा येन प्रकारेणेह न जह्यात्तादृशमहिंसाख्यं धर्मं मनुरब्रवीत् ॥ ३६ ॥ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

योगः षाड्गुण्यकारित इति ङ. पाठः ॥ १ ॥ उभौ गार्हस्थ्ययोगधर्मौ ॥ ३ ॥ त्वष्टुस्त्वष्ट्रे गृहागताय मधुपर्के गामालेभे । यष्टुं गामितीति ट. थ. पाठः ॥ ६ ॥ नियुक्तां हन्तुं पुरस्कृतां दृष्ट्वा वेदा इत्यब्रवीदिति द्वयोः संबन्धः ॥ ७ ॥ वेदा इति गर्हायां प्लुतिः ॥ ८ ॥ प्रविश्य योगबलेनेत्यर्थः । यतिं कपिलमुनिम् । हंहो इति विस्मये । वेदा यदि मताः गर्हितत्वेन

तपस्विनो धृतिमतः श्रुतिविज्ञानचक्षुषः ।
सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः ॥ १०
तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः ।
का विवक्षाऽस्ति वेदेषु निरारम्भस्य सर्वतः ॥११
कपिल उवाच ।
नाहं वेदान्विनिन्दामि न विवक्ष्यामि कर्हिचित् ।
पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम् ॥१२
गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति ।
गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः ॥ १३
देवयाना हि पन्थानश्चत्वारः शाश्वता मताः ।
नैषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलम् ॥ १४
एवं विदित्वा सर्वार्थानारभेतेति वैदिकम् ॥
नारभेतेति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः ॥ १५
अनारम्भे ह्यदोषः स्यादारम्भे दोष उत्तमः ।
एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् ॥१६
यदत्र किंचित्प्रत्यक्षमहिंसायाः परं मतम् ।
ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि ॥ १७
स्यूमरश्मिरुवाच ।
स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः ।
फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते ॥ १८
अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये ।
ग्राम्यारण्याश्चौषधयः प्राणस्यान्नमिति श्रुतिः ॥१९
तथैवान्नं ह्यहरहः सायंप्रातर्निरूप्यते ।
पशवश्चाथ धान्यं च यज्ञस्याङ्गमिति श्रुतिः ॥ २०
एतानि सह यज्ञेन प्रजापतिरकल्पयत् ।
तेन प्रजापतिर्देवान्यज्ञेनायजत प्रभुः ॥ २१
तदन्योन्यवराः सर्वे प्राणिनः सप्तसप्त च ॥ २२
'गौरजो मनुजः श्वा वा अश्वाश्वतरगर्दभाः ।
एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः ॥
सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा ।
हरिणः शललाश्चैव सप्तारण्यास्तथा स्मृताः ॥' २४
यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम् ॥ २५
एतच्चैवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा ।
को जातु न विचिन्वीत विद्वान्स्वां शक्तिमात्मनः ॥
पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह ।
स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गोऽस्ति ते मखात् ॥२७
ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि ।
हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश ॥ २८
ऋचो यजूंषि सामानि ऋत्विजश्चापि षोडश ।
अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते ॥ २९
अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः ।
आज्येन पयसा दध्ना शकृताऽऽमिक्षया त्वचा ३०
वालैः शृङ्गेण पादेन संभवत्येव गौर्मखम् ।
एवं प्रत्येकशः सर्वं यद्यदस्य विधीयते ॥ ३१
यज्ञं वहन्ति संभूय सहर्त्विग्भिः सदक्षिणैः ।
संहृत्यैतानि सर्वाणि यज्ञं निर्वर्तयन्त्युत ॥ ३२
यज्ञार्थानि हि सृष्टानि यथार्था श्रूयते श्रुतिः ।
एवं पूर्वतराः पूर्वे प्रवृत्ताश्चैव मानवाः ॥ ३३
न हिनस्ति नारभते नाभिद्रुह्यति किंचन ।
यज्ञैर्यष्टव्यमित्येव यो यजत्यफलेप्सया ॥ ३४
यज्ञाङ्गान्यपि चैतानि यथोक्तान्यपि सर्वशः ।
विधिना विधियुक्तानि तारयन्ति परस्परम् ॥ ३५
आम्नायमार्षं पश्यामि यस्मिन्वेदाः प्रतिष्ठिताः ।
तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात् ॥ ३६
ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च ।
अनुयज्ञं जगत्सर्वं यज्ञश्चानुजगत्सदा ॥ ३७
ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट् ।
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ॥ ३८
न तस्य त्रिषु लोकेषु परलोकभयं विदुः ।
इति वेदा वदन्तीह सिद्धाश्च परमर्षयः ॥ ३९

---

संमताः । अत्रापि गर्हार्थायाः स्तुतेरनुवादः । अपरे हिंसाशून्या धर्माः केन मताः । प्रामाण्यमप्रामाण्यं वा कर्मज्ञानकाण्डयोस्तुल्यमतो नान्यतरन्निन्देत्प्रशंसेद्वेति भावः ॥ ९ ॥ विलक्षणपुरुषस्य भाषितं सत्यमिति जना मन्यन्ते । किं विदितात्मनः नित्यज्ञानवतः परमेश्वरस्य व्याहृतम् ॥ १० ॥ विवक्ष्यामि विपमान् वक्ष्यामि ॥ १२ ॥ एकार्थत्वमाह गच्छत्येवेति । परित्यागी संन्यासी । गच्छत्येव परं पदमिति शेषः ॥ १३ ॥ देवयानाः देवमात्मानं यान्त्येभिरिति तथाभूताश्चत्वार आश्रमाः ॥ १४ ॥ तस्माद्यागपराः सर्वे इति ध. पाठः ॥२२॥ नापि दृह्यति किंचनेति ट. ड. पाठः ॥३४॥ इति लोका वदन्तीहेति ध. पाठः ॥३९॥

ऋचो यजूंषि सामानि स्तोत्राश्च विधिचोदिताः ।
यस्मिन्नेतानि सर्वाणि भवन्तीह स वै द्विजः ॥४०
अग्न्याधेये यद्भवति यच्च सोमे सुते द्विज ।
यच्चेतरैर्महायज्ञैर्वेद तद्भगवांस्तथा ॥ ४१
तस्माद्ब्रह्मन्यजेच्चैव याजयेच्चाविचारयन् ।
यजतो यज्ञविधिना प्रेत्य स्वर्गफलं महत् ॥ ४
नायं लोकोस्त्ययज्ञानां परश्चेति विनिश्चयः ।
वेदवादविदश्चैव प्रमाणमुभयं तदा ॥ ४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

## पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

भीष्मेण युधिष्ठिरंप्रति गोकपिलसंवादानुवादः ॥ १ ॥

कपिल उवाच ।
एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः ।
नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ॥ १
निर्द्वन्द्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।
विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः ॥ २
अपवर्गेऽथ संत्यागे बुद्धौ च कृतनिश्चयाः ।
ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ॥ ३
येऽशोका नष्टरजसस्तेषां लोकाः सनातनाः ।
तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ॥ ४
स्यूमरश्मिरुवाच ।
यद्येषां परमा निष्ठा यद्येषां परमा गतिः ।
गृहस्थानव्यपाश्रित्य नाश्रमोऽन्यः प्रवर्तते ॥ ५
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गार्हस्थ्यमाश्रित्य वर्तन्त इतराश्रमाः ॥ ६
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
गार्हस्थ्यमस्य धर्मस्य मूलं यत्किंचिदेव हि ॥ ७
प्रजनाद्यभिनिर्वृत्ताः सर्वे प्राणभृतो मुने ।
प्रजनं चाप्युतान्यत्र न कथंचन विद्यते ॥ ८
यास्तु स्युर्बहिरोषध्यो बहिरन्यास्तथाऽद्रिजाः ।
ओषधिभ्यो बहिर्यस्मात्प्राणी कश्चिन्न विद्यते ॥ ९
कस्यैषा वाग्भवेत्सत्या मोक्षो नास्ति गृहादिति ।
अश्रद्दधानैरप्राज्ञैः सूक्ष्मदर्शनवर्जितैः ॥ १०
निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्मभिः ।
शमस्योपरमो दृष्टः प्रव्रज्यायामपण्डितैः ॥ ११
त्रैलोक्यस्येव हेतुर्हि मर्यादा शाश्वती ध्रुवा ।
ब्राह्मणो नाम भगवाञ्जन्मप्रभृति पूज्यते ॥ १२
प्राग्गर्भाधानमन्त्रा हि प्रवर्तन्ते द्विजातिषु ।
अविश्वस्तेषु वर्तन्ते विश्वस्तेष्वपि संश्रिताः ॥ १३
दाहे पुनः संश्रयणे संश्रिते पात्रभोजने ।
दानं गवां पशूनां वा पिण्डानामप्सु मज्जनम् ॥ १४
अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरस्तथा ।
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥१५
एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् ।
ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु ॥ १६
श्रिया विहीनैरलसैः पण्डितैश्च पलायितम् ।
वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥ १७
न वै पापैर्ह्रियते कृष्यते वा
यो ब्राह्मणो यजते वेदशास्त्रैः ।
ऊर्ध्वं यजन्पशुभिः सार्धमेति
ततः पुनस्तर्पयते न कामान् ॥ १८
न वेदानां परिभवान्न शाठ्येन न मायया ।
महत्प्राप्नोति पुरुषो ब्राह्मणो ब्रह्म विन्दति ॥ १९
कपिल उवाच ।
दर्शश्च पूर्णमासश्च अग्निहोत्रं च धीमताम् ।
चातुर्मास्यानि चैवासंस्तेषु यज्ञः सनातनः ॥ २०
अनारम्भाः सुधृतयः शुचयो ब्रह्मसंज्ञिताः ।

---

यच्च सोमे स्थितं जगत् । इति ङ. पाठः ॥ ४१ ॥ चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

श्रमस्योपरमो दृष्ट इति ट. थ. पाठः ॥ ११ ॥ दानं पुनः संग्रहणं संश्रिता पात्रभोजनम् । इति ट. थ. पाठः । दाहः पुनः संचयनं संस्थितः पात्रभोजनमिति ध. पाठः ॥ १४ ॥ ब्रह्म ब्रह्मणि विन्दतीति ट. थ. पाठः ॥ १९ ॥ तेषु धर्मः सनातन

ब्राह्मणा एव ते देवांस्तर्पन्त्यमृतैरिव ॥ २१
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥ २२
चतुर्द्वारं पुरुषं चतुर्मुखं
चतुर्मुखो नैनमुपैति निन्दा ।
बाहुभ्यां पद्भ्यामुदरादुपस्था-
त्तेषां द्वारं द्वारपालो बुभूषेत् ॥ २३
नाक्षैर्दीव्येन्नाददीतान्यवित्तं
न वाऽयोनीयस्य शृतं प्रगृह्णात् ।
क्रुद्धो न चैव प्रहरेत धीमां-
स्तथास्य तत्पाणिपादं सुगुप्तम् ॥ २४
नाक्रोशमृच्छेन्न वृथा वदेच्च
न पैशुनं जनवादं च कुर्यात् ।
सत्यव्रतो मितभाषोऽप्रमत्त-
स्तथाऽस्य वाग्द्वारमथो सुगुप्तम् ॥ २५
नानाशनः स्यान्न महाशनः स्या-
न्न लोलुपः साधुभिरागतः स्यात् ।
यात्रार्थमाहारमिहाददीत
तथाऽस्य स्याज्जाठरद्वारगुप्तिः ॥ २६
न वीरपत्नीं विहरेत नारीं
न चापि नारीमनृतावाह्वयीत ।
भार्याव्रतं ह्यात्मनि धारयीत
तथास्योपस्थद्वारगुप्तिर्भवेत ॥ २७
द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः ।
उपस्थमुदरं पाणी वाक्चतुर्थी स वै द्विजः ॥ २८
मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥ २९
अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ॥ ३०
द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः ।
परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥ ३१
येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।
गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥ ३२
अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ॥ ३३
नान्तरेणानुजानाति वेदानां यत्क्रियाफलम् ।
अविज्ञाय च तत्सर्वमन्यद्रोचयते फलम् ॥ ३४
स्वकर्मभिः संश्रितानां तपो घोरत्वमागमत् ।
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ॥ ३५
अशक्नुवन्तश्चरितुं किंचिद्धर्मेषु सूत्रितम् ।
निरापद्धर्म आचारो ह्यप्रमादो पराभवः ॥ ३६
फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।
विगुणानि च पश्यन्ति तथा नैकानि केन च ॥ ३७
गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चात्र सुदुष्कराः ।
अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥ ३८
स्यूमरश्मिरुवाच ।
यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा ।
तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥ ३९
कपिल उवाच ।
प्रत्यक्षमिह पश्यन्ति भवन्तः सत्पथे स्थिताः ।
प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ॥ ४०
स्यूमरश्मिरुवाच ।
स्यूमरश्मिरहं ब्रह्मञ्जिज्ञासार्थमिहागतः ।
श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया ॥ ४१
इमं च संशयं घोरं भगवान्प्रब्रवीतु मे ।
प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः ।
किमत्र प्रत्यक्षतमं भवन्तो यदुपासते ॥ ४२
अन्यत्र तर्कशास्त्रेभ्य आगमार्थं यथागमम् ।
आगमो वेदवादास्तु तर्कशास्त्राणि चागमः ॥ ४३
यथाश्रममुपासीत आगमस्तत्र सिध्यति ।
सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥ ४४
नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना ।

इति झ. पाठः ॥ २० ॥ सर्वज्ञानेन पश्यतः इति ट. पाठः ॥ २२ ॥ नायोनिजस्येह सुवं प्रगृह्णादिति ट. थ. पाठः । नायोनिजस्यैव सुतां प्रगृह्णादिति ध. पाठः ॥ २४ ॥ साधुरनागसः स्यादिति ट. थ. पाठः ॥ २६ ॥ धैर्यव्रतं ह्यात्मनीति ध. पाठः ॥ २७ ॥ यथा च देवब्राह्मण्यमत्यागश्च कलौ यथेति थ. पाठः ॥ ३९ ॥ यथागममुपासीतेति थ. पाठः । यथाकाममुपासीतेति ध. पाठः ॥ ४४ ॥ पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

ह्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति ॥ ४५
एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भो ।
नैव त्यागी न संतुष्टो नाशोको न निरामयः ।
नानिर्विविन्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ४६
भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम् ।
इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥ ४७
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एकमालम्बमानानां निर्णये किं निरामयम् ।
'एतद्ब्रवीतु भगवानुपपन्नोस्म्यधीहि भो ॥' ४८
कपिल उवाच ।
यद्यदाचरते शास्त्रमर्थ्यं सर्वप्रवृत्तिषु ।
यस्य यत्र ह्यनुष्ठानं तस्य तत्तु निरामयम् ॥ ४९
सर्वं प्रापयति ज्ञानं यो ज्ञानं ह्यनुवर्तते ।
ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥५०
भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरामयाः ।
ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥ ५१
शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबलाज्जनाः ।
कामद्वेषाभिभूतत्वादहंकारवशं गताः ॥ ५२
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारम्भा अपक्वमनसोऽशिवाः ॥ ५३
नैर्गुण्यमेव पश्यन्ति न गुणाननुयुञ्जते ।
तेषां तमःशरीराणां तम एव परायणम् ॥ ५४
यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः ।
तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ।
नित्यमेवानुवर्तन्ते गुणाः प्रकृतिसंभवाः ॥ ५५
ये तद्बुद्ध्वाऽनुपश्यन्तः संत्यजेयुः शुभाशुभम् ।
परां गतिमसीप्सन्तो यतयः संयमे रताः ॥ ५६

स्यूमरश्मिरुवाच ।
सर्वमेतत्त्वया ब्रह्मञ्शास्त्रतः परिकीर्तितम् ।
न ह्यविज्ञाय शास्त्रार्थं प्रवर्तन्ते प्रवृत्तयः ॥ ५७
यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥ ५८
न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः ।
यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥ ५९
शास्त्रादपेतं पश्यन्ति बहवोऽव्यर्थमानिनः ।
शास्त्रदोषान्न पश्यन्ति इह चामुत्र चापरे ।
[इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥ ६०
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एकमालम्बमानानां निर्णये सर्वतो दिशम् ॥६१
आनन्त्यं वदमानेन शक्तेनावर्जितात्मना] ।
अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥ ६२
शक्यं त्वेकेन युक्तेन कृतकृत्येन सर्वशः ।
पिण्डमात्रं व्यपाश्रित्य चरितुं सर्वतो दिशम् ६३
'नात्यन्तं वन्दमानेन शक्तेन विजितात्मना ।'
वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ।
अपेतन्यायशास्त्रेण सर्वलोकविगर्हिणा ॥ ६४
इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम् ।
दानमध्ययनं यज्ञः प्रजासंतानमार्जवम् ॥ ६५
यद्येतदेवं कृत्वाऽपि न विमोक्षोऽस्ति कस्यचित् ।
धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः ॥ ६६
नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतः क्रिया ।
एतस्यानन्त्यमिच्छामि भगवञ्श्रोतुमञ्जसा ॥ ६७
तत्त्वं वदस्व मे ब्रह्मन्नुपसन्नोस्म्यधीहि भोः ।
यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ॥६८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

## षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

भीष्मेण युधिष्ठिरंप्रति गोकपिलसंवादानुवादः ॥ १ ॥

कपिल उवाच ।
वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतः कृताः ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥ १
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
शरीरमेतत्कुरुते यद्वेदे कुरुते तनुम् ॥ २
कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः ।

आनन्त्यमनुचिन्त्येदं कर्मणां तद्ब्रवीमि ते ॥ ३
निरागममनैतिह्यमत्यक्षं लोकसाक्षिकम् ।
धर्म इत्येव ये यज्ञान्वितन्वन्ति निराशिषः ॥ ४
उत्पन्नत्यागिनो लुब्धाः कृपासूयाविवर्जिताः ।
धनिनामेष वै पन्थास्तीर्थेषु प्रतिपादनम् ॥ ५
अनाश्रिताः पापकृत्याः कदाचित्कर्मयोगिनः ।
मनःसंकल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः ॥ ६
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।
ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहिते रताः ॥ ७
आसन्गृहस्था भूयिष्ठा अपक्रान्ताः स्वकर्मसु ।
राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ॥ ८
समा ह्यार्जवसंपन्नाः संतुष्टा ज्ञाननिश्चयाः ।
प्रत्यक्षधर्माः शुचयः श्रद्दधानाः परावरे ॥ ९
पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः ।
चरन्ति धर्मं कृच्छ्रेऽपि दुर्गे चैवापि संहताः ॥ १०
संहत्य धर्मं चरतां पुराऽऽसीत्सुखमेव तत् ।
तेषां नासीद्विधातव्यं प्रायश्चित्तं कथंचन ॥ ११
सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः ।
न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः ॥ १२
य एव प्रथमः कल्पस्तमेवात्र चरन्महान् ॥ १३
अस्यां स्थितौ स्थितानां हि प्रायश्चित्तं न विद्यते ।
यदा तु दुर्बलात्मानः प्रायश्चित्तं तदा भवेत् ॥ १४
एत एवंविधाः प्राहुः पुराणा यज्ञवाहनाः ।
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः ॥ १५
यजन्तोऽहरहर्यज्ञैर्निराशीर्बन्धना बुधाः ।
तेषां यज्ञाश्च वेदाश्च कर्माणि च यथागमम् ॥ १६
आगमाश्च यथाकामं संकल्पाश्च यथाव्रतम् ।
अपेतकामक्रोधानां दुश्चराचारकर्मणाम् ॥ १७
स्वकर्मभिः शंसितानां प्रकृत्या शंसितात्मनाम् ।
ऋजूनां शमनित्यानां स्वेषु कर्मसु वर्तताम् ॥ १८
सर्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः ।
तेषामदीनसत्वानां दुश्चराचारकर्मणाम् ॥ १९
स्वकर्मभिः शंसितानां तपो घोरत्वमागतम् ।
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ॥ २०
अशक्नुवद्भिश्चरितुं किंचिद्धर्मेषु सूचितम् ।
निरापद्धर्म आचारो ह्यप्रमादोऽपराभवः ॥ २१
सर्ववर्णेषु यत्तेषु नासीत्कश्चिद्व्यतिक्रमः ।
धर्ममेकं चतुष्पादमाश्रितास्ते नरा विभो ॥ २२
तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिम् ।
गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः ॥ २३
गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः ।
'व्यस्तमेकं चतुर्धा तु ब्राह्मणा आश्रमं विदुः ॥ २४
सर्वे सर्वत्र तिष्ठन्तो गच्छन्ति परमां गतिम् ।
एत एवंविधाः प्राहुः पुराणा ब्रह्मचारिणः ॥' २५
त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः ।
नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः ।
आनन्त्यमुपसंप्राप्ताः संतोषादिति वैदिकम् ॥ २६
यद्यागच्छन्ति संसारं पुनर्योनिषु तादृशाः ।
न लिप्यन्ते पापकृत्यैः कदाचित्कर्मयोनितः ॥ २७
एवमेव ब्रह्मचारी शुश्रूषुर्घोरनिश्चयः ।
एवंयुक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ॥ २८
कर्मैव पुरुषस्याह शुभं वा यदि वाऽशुभम् ।
एवं पक्वकषायाणामानन्त्येन श्रुतेन च ॥ २९
सर्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः ।
तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम् ॥ ३०
चतुर्थ औपनिषदो धर्मः साधारणः स्मृतः ।
संसिद्धैः सेव्यते नित्यं ब्राह्मणैर्नियतात्मभिः ॥ ३१
संतोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते ।
अपवर्गमतिर्नित्यो यतिधर्मः सनातनः ॥ ३२
साधारणः केवलो वा यथाबलमुपास्यते ।
गच्छन्ते बलिनः क्षेमं दुर्बलोऽत्रावसीदति ।
ब्राह्मणः पदमन्विच्छन्संसारान्मुच्यते शुचिः ॥ ३३
स्यूमरश्मिरुवाच ।
ये भुञ्जते ये ददते यजन्तेऽधीयते च ये ।
मात्राभिर्धर्मलब्धाभिर्ये वा त्यागं समाश्रिताः ॥ ३४
एतेषां प्रेत्यभावे तु कतमः स्वर्गजित्तमः ।

धनानामेष वै पन्था इति झ. ट. थ. पाठः ॥ ५ ॥ दुर्बलात्मन उत्पन्नं प्रायश्चित्तमिति श्रुतिः इति झ. पाठः ॥ १४ ॥

एतदाचक्ष्व मे ब्रह्मन्याथातथ्येन पृच्छतः ॥ ३५
कपिल उवाच ।
परिग्रहाः शुभाः सर्वे गुणतोऽभ्युदयाश्च ते ।
न तु त्यागसुखं प्राप्ता एतत्त्वमपि पश्यसि ॥ ३६
स्यूमरश्मिरुवाच ।
भवन्तो ज्ञाननिष्ठा वै गृहस्थाः कर्मनिश्चयाः ।
आश्रमाणां च सर्वेषां निष्ठायामैक्यमुच्यते ॥ ३७
एकत्वेन पृथक्त्वेन विशेषो नान्य उच्यते ।
तद्यथावद्यथान्यायं भगवान्प्रब्रवीतु मे ॥ ३८
कपिल उवाच ।
शरीरपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
पक्के कषायविज्ञानं यथा ज्ञाने च तिष्ठति ॥ ३९
आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्जवम् ।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा शमस्तथा ॥ ४०
पन्थानो ब्रह्मणस्त्वेत एतैः प्राप्नोति यत्परम् ।
तद्विद्वाननुबुध्येत मनसा कर्मनिश्चयम् ॥ ४१
यां विप्राः सर्वतः शान्ता विशुद्धा ज्ञाननिश्चयाः।
गतिं गच्छन्ति संतुष्टास्तामाहुः परमां गतिम् ॥ ४२
वेदांश्च वेदितव्यं च विदित्वा च यथास्थितिम् ।
एवं वेदविदित्याहुरतोऽन्यो वातरेचकः ॥ ४३
सर्वे विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् ।
वेदे हि निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ॥ ४४
एषैव निष्ठा सर्वत्र यत्तदस्ति च नास्ति च ।
एतदन्तं च मध्यं च सच्चाऽसच्च विजानतः ॥४५
समाप्तं त्याग इत्येव शम इत्येव निश्चितम् ।
संतोष इत्यनुगतमपवर्गे प्रतिष्ठितम् ॥ ४६
ऋतं सत्यं विदितं वेदितव्यं
सर्वस्यात्मा स्थावरं जङ्गमं च ।
सर्वं सुखं यच्छिवमुत्तरं च
ब्रह्माव्यक्तं प्रभवश्चाव्ययं च ॥ ४७
तेजः क्षमा शान्तिरनामयं शुभं
तथाविधं व्योम सनातनं ध्रुवम् ।
एतैः शब्दैर्गम्यते बुद्धिनेत्रै-
स्तस्मै नमो ब्रह्मणे ब्राह्मणाय ॥ ४८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

## सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

भीष्मेण युधिष्ठिरंप्रति धर्मार्थकामेषु धर्मस्यैव ज्यायस्त्वप्रतिपादककुण्डधारचरित्रप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
धर्ममर्थं च कामं च वेदाः शंसन्ति भारत ।
कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह ॥१
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
कुण्डधारेण यत्प्रीत्या भक्तायोपकृतं पुरा ॥ २
अधनो ब्राह्मणः कश्चित्कामाद्धनमवैक्षत ।
यज्ञार्थं सततोऽर्थार्थी तपोऽतप्यत दारुणम् ॥ ३
स निश्चयमथो कृत्वा पूजयामास देवताः ।
भक्त्या न चैवाध्यगच्छद्धनं संपूज्य देवताः ॥ ४
ततश्चिन्तामनुप्राप्तः कतमद्दैवतं तु तत् ।
यन्मे द्रुतं प्रसीदेत मानुषैरजडीकृतम् ॥ ५
सोऽथ सौम्येन मनसा देवानुचरमन्तिके ।
प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ॥ ६
दृष्ट्वैव तं महाबाहुं तस्य भक्तिरजायत ।
अयं मे धास्यति श्रेयो वपुरेतद्धि तादृशम् ॥ ७
संनिकृष्टश्च देवस्य न चान्यैर्मानुषैर्वृतः ।
एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ॥ ८

कषायपक्तिः कर्माणीति ट. थ. पाठः ॥ ३९ ॥ मनसा धर्मनिश्चयमिति ध. पाठः ॥ ४१ ॥ रतोन्यो वेदवादक इति ट. थ. पाठः। वेदपानक इति थ. पाठः ॥ ४३ ॥ इत्येव सर्ववेदेषु निष्ठितमिति ज. पाठः ॥ ४६ ॥ षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

जलधरं मेघम् । कुण्डधारं नामतः ॥ ६ ॥ धास्यति विधास्यति । तस्य बुद्धिरजायतेति ट. थ. पाठः । दास्यति श्रेय इति ट. थ. ध. पाठः ॥ ७ ॥

ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि ।
बलिभिर्विविधाभिश्च पूजयामास तं द्विजः ॥ ९
ततस्त्वल्पेन कालेन तुष्टो जलधरस्तदा ।
तस्योपकारनियतामिमां वाचमुवाच ह ॥ १०
ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥
आशायास्तनयोऽधर्मः क्रोधोऽसूयासुतः स्मृतः ।
लोभः पुत्रो निकृत्यास्तु कृतघ्नो नार्हति प्रजां १२
ततः स ब्राह्मणः स्वप्ने कुण्डधारस्य तेजसा ।
अपश्यत्सर्वभूतानि कुशेषु शयितस्तदा ॥ १३
शमेन तपसा चैव भक्त्या च निरुपस्कृतः ।
शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत ॥ १४
माणिभद्रं स तत्रस्थं देवतानां महाद्युतिम् ।
अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर ॥ १५
तत्र देवाः प्रयच्छन्ति राज्यानि च धनानि च ।
शुभैः कर्मभिरारब्धाः प्रच्छिन्दन्त्यशुभेषु च ॥ १६
पश्यतामथ यक्षाणां कुण्डधारो महाद्युतिः ।
निष्पत्य पतितो भूमौ देवानां भरतर्षभ ॥ १७
ततस्तु देववचनान्मणिभद्रो महामनाः ।
उवाच पतितं भूमौ कुण्डधार किमिच्छसि ॥१८
कुण्डधार उवाच ।
यदि प्रसन्ना देवा मे भक्तोऽयं ब्राह्मणो मम ।
अस्यानुग्रहमिच्छामि कृतं किंचित्सुखोदयम् ॥ १९
ततस्तं माणिभद्रस्तु पुनर्वचनमब्रवीत् ।
देवानामेव वचनात्कुण्डधारं महाद्युतिम् ॥ २०
उत्तिष्ठोत्तिष्ठ भद्रं ते कृतकृत्यः सुखी भव ।
धनार्थी यदि विप्रोऽयं धनमस्मै प्रदीयताम् ॥ २१
यावद्धनं प्रार्थयते ब्राह्मणोऽयं सखा तव ।
देवानां शासनात्तावदसङ्ख्येयं ददाम्यहम् ॥ २२
विचार्य कुण्डधारस्तु मानुष्यं चलमध्रुवम् ।
तपसे मतिमाधत्त ब्राह्मणस्य यशस्विनः ॥ २३
कुण्डधार उवाच ।
नाहं धनानि याचामि ब्राह्मणाय धनप्रद ।
अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् ॥ २४
पृथिवीं रत्नपूर्णां वा महद्वा रत्नसंचयम् ।
भक्ताय नाहमिच्छामि भवेदेष तु धार्मिकः ॥ २५
धर्मेऽस्य रमतां बुद्धिर्धर्मं चैवोपजीवतु ।
धर्मप्रधानो भवतु ममैषोऽनुग्रहो मतः ॥ २६
माणिभद्र उवाच ।
सदा धर्मफलं राज्यं सुखानि विविधानि च ।
फलान्येवायमश्नातु कायक्लेशविवर्जितः ॥ २७
भीष्म उवाच ।
ततस्तदेव बहुशः कुण्डधारो महायशाः ।
अभ्यासमकरोद्धर्मे ततस्तुष्टास्तु देवताः ॥ २८
माणिभद्र उवाच ।
प्रीतास्ते देवताः सर्वा द्विजस्यास्य तथैव च ।
भविष्यत्येष धर्मात्मा धर्मे चाधास्यते मतिः ॥ २९
भीष्म उवाच ।
ततः प्रीतो जलधरः कृतकार्यो युधिष्ठिर ।
ईप्सितं मनसो लब्ध्वा वरमन्यैः सुदुर्लभम् ॥ ३०
ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः ।
पार्श्वतोऽभ्याशतो न्यस्तान्यथ निर्वेदमागतः ३१
ब्राह्मण उवाच ।
अयं न सुकृतं वेत्ति को न्वन्यो वेत्स्यते कृतम् ।
गच्छामि वनमेवाहं परं धर्मेण जीवितुम् ॥ ३२
भीष्म उवाच ।
निर्वेदाद्देवतानां च प्रसादात्स द्विजोत्तमः ।
वनं प्रविश्य सुमहत्तप आरब्धवांस्तदा ॥ ३३
देवतातिथिशेषेण फलमूलाशनो द्विजः ।
धर्मे चास्य महाराज दृढा बुद्धिरजायत ॥ ३४
त्यक्त्वा मूलफलं सर्वं पर्णाहारोऽभवद्द्विजः ।
पर्णं त्यक्त्वा जलाहारः पुनरासीद्द्विजस्तदा ॥ ३५

इमां गाथामगायतेति ध. पाठः ॥ १० ॥ निरुपस्कृतो भोगवर्जितः ॥ १४ ॥ व्यादिशन्तं देवाज्ञया याचकेभ्यः फलानि समर्पयन्तम् ॥ १५ ॥ अशुभेषु कर्मसूपस्थितेषु प्रागदत्तमपि राज्यादिकं प्रच्छिन्दन्ति हरन्ति ॥ १६ ॥ भूमौ पतितो ब्राह्मणहितार्थी । अग्रतः पतितो भूमाविति ध. पाठः ॥ १७ ॥ कुण्डधार किमिष्यत इति झ. ध. पाठः ॥ १८ ॥ सप्तसप्तत्यधिकद्विशततमोऽध्यायः २७७

वायुभक्षस्ततः पश्चाद्बहून्वर्षगणानभूत् ।
न चास्य क्षीयते प्राणस्तदद्भुतमिवाभवत् ॥ ३६
धर्मे च श्रद्दधानस्य तपस्युग्रे च वर्ततः ।
कालेन महता तस्य दिव्या दृष्टिरजायत ॥ ३७
तस्य बुद्धिः प्रादुरासीद्यदि दद्यामहं धनम् ।
तुष्टः कस्यचिदेवेह मिथ्या वाङ्न भवेन्मम ॥ ३८
ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः ।
भूयश्चाचिन्तयत्सिद्धो यत्परं सोऽभिमन्यते ॥ ३९
यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित् ।
स भवेदचिराद्राजा न मिथ्या वाग्भवेन्मम ॥ ४०
तस्य साक्षात्कुण्डधारो दर्शयामास भारत ।
ब्राह्मणस्य तपोयोगात्सौहृदेनाभिचोदितः ॥ ४१
समागम्य स तेनाथ पूजां चक्रे यथाविधि ।
ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन्नृप ॥ ४२
ततोऽब्रवीत्कुण्डधारो दिव्यं ते चक्षुरुत्तमम् ।
पश्य राज्ञां गतिं विप्र लोकांश्चैव तु चक्षुषा ॥ ४३
ततो राजसहस्राणि मग्नानि निरये तदा ।
दूरादपश्यद्विप्रः स दिव्ययुक्तेन चक्षुषा ॥ ४४
कुण्डधार उवाच ।
मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः ।
कृतं मया भवेत्किं ते कश्च तेऽनुग्रहो भवेत् ॥ ४५
पश्यपश्य च भूयस्त्वं कामानिच्छेत्कथं नरः ।
स्वर्गद्वारं हि संरुद्धं मानुषेषु विशेषतः ॥ ४६
भीष्म उवाच ।
ततोऽपश्यत्स कामं च क्रोधं लोभं भयं मदम् ।
निद्रां तन्द्रीं तथाऽऽलस्यमावृत्त्य पुरुषान्स्थितान् ॥'
कुण्डधार उवाच ।
एतैर्लोकाः सुसंरुद्धा देवानां मानुषाद्भयम् ।
तथैव देववचनाद्विघ्नं कुर्वन्ति सर्वशः ॥ ४८
न देवैरननुज्ञातः कश्चिद्भवति धार्मिकः ।
एष शक्तोऽसि तपसा दातुं राज्यं धनानि च ॥ ४९
भीष्म उवाच ।
ततः पपात शिरसा ब्राह्मणस्तोयधारिणे ।
उवाच चैनं धर्मात्मा महान्मेऽनुग्रहः कृतः ॥ ५०
कामलोभानुबन्धेन पुरा ते यदसूयितम् ।
मया स्नेहमविज्ञाय तत्र मे क्षन्तुमर्हसि ॥ ५१
क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभम् ।
संपरिष्वज्य बाहुभ्यां तत्रैवान्तरधीयत ॥ ५२
ततः सर्वांस्तदा लोकान्ब्राह्मणोऽनुचचार ह ।
कुण्डधारप्रसादेन तपसा सिद्धिमागतः ॥ ५३
विहायसा च गमनं तथा संकल्पितार्थता ।
धर्माच्छक्त्या तथा योगाद्या चैव परमा गतिः ॥ ५४
देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः ।
धार्मिकान्पूजयन्तीह न धनाढ्यान्न कामिनः ॥ ५५
सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः ।
धने सुखकला काचिद्धर्मे तु परमं सुखम् ॥ ५६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

---

## अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

भीष्मेण युधिष्ठिरंप्रति हिंसाहेतुतया यज्ञस्याप्यप्राशस्त्यप्रतिपादकनारदवचनानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
बहूनां यज्ञतपसामेकार्थानां पितामह ।
धर्मार्थं न सुखार्थार्थं कथं यज्ञः समाहितः ॥ १
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि नारदेनानुकीर्तितम् ।
उञ्छवृत्तेः पुरावृत्तं यज्ञार्थे ब्राह्मणस्य च ॥ २
नारद उवाच ।
राष्ट्रे धर्मोत्तरे श्रेष्ठे विदर्भेष्वभवद्द्विजः ।
उञ्छवृत्तिर्ऋषिः कश्चिद्यज्ञं यष्टुं समादधे ॥ ३
श्यामाकमशनं तत्र सूर्यपर्णी सुवर्चला ।

---

कश्चिरस च यज्ञं समादध इति ट. थ. पाठः ॥ ३ ॥ श्यामाकमशनमदनीयम् । सूर्यपर्णी सुवर्चलेति शाकविशेषौ । त्रय-

तिक्तं च विरसं शाकं तपसा स्वादुतां गतम् ॥४
उपगम्य वने पृथ्वीं सर्वभूताविहिंसया ।
अपि मूलफलैरिष्टो यज्ञः स्वर्ग्यः परंतप ॥ ५
तस्य भार्या व्रतकृशा शुचिः पुष्करमालिनी ।
यज्ञपत्नी समानीता सत्येनानुविधीयते ॥ ६
सा तु शापपरित्रस्ता तत्स्वभावानुवर्तिनी ।
मायूरजीर्णपर्णानां वस्त्रं तस्याश्च वर्णितम् ॥ ७
अकामया कृतस्तत्र यज्ञो होत्रनुमार्गतः ।
शुकस्य पुनराजातिरवध्यानादधर्मवत् ॥ ८
तस्मिन्वने समीपस्थो मृगोऽभूत्सहचारिकः ।
वचोभिरब्रवीत्सत्यं त्वयेदं दुष्कृतं कृतम् ॥ ९
यदि मन्त्राङ्गहीनोऽयं यज्ञो भवति वैकृतः ।
मा भोः प्रक्षिप होत्रे त्वं गच्छ स्वर्गमतन्द्रितः ॥१०
ततस्तु यज्ञे सावित्री साक्षात्तं संन्यमन्त्रयत् ।
निमन्त्रयन्ती प्रत्युक्ता न हन्यां सहवासिनम् ॥ ११
एवमुक्त्वा निवृत्ता सा प्रवृत्ता यज्ञपावकात् ।
किंनु दुश्चरितं यज्ञे दिदृक्षुः सा रसातलम् ॥ १२
स तु बद्धाञ्जलिं सत्यमयाचद्धरिणः पुनः ।
सत्येन स परिष्वज्य संदिष्टो गम्यतामिति ॥ १३
ततः स हरिणो गत्वा पदान्यष्टौ न्यवर्तत ।
साधु हिंसय मां सत्य हतो यास्यामि सद्गतिम् १४
पश्य ह्यप्सरसो दिव्या मया दत्तेन चक्षुषा ।
विमानानि विचित्राणि गन्धर्वाणां महात्मनाम् १५
ततः स सुचिरं दृष्ट्वा स्पृहालग्नेन चक्षुषा ।
मृगमालोक्य हिंसायां स्वर्गवासं समर्थयत् ॥ १६
स तु धर्मो मृगो भूत्वा बहुवर्षोषितो वने ।
तस्य निष्कृतिमाधत्त न त्वसौ यज्ञसंविधिः ॥१७
तस्य तेनानुभावेन मृगहिंसात्मनस्तदा ।
तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिया ॥ १८
ततस्तं भगवान्धर्मो यज्ञं याजयत स्वयम् ।
समाधानं च भार्याया लेभे स तपसा परम् ॥ १९
अहिंसा परमो धर्मो हिंसाधर्मस्तथा हितः ।
सत्यं तेऽहं प्रवक्ष्यामि नो धर्मः सत्यवादिनाम् २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

---

## एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

भीष्मेण युधिष्ठिरंप्रति धर्माचरणस्य श्रेयस्साधनत्वप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
कथं भवति पापात्मा कथं धर्मं करोति वा ।
केन निर्वेदमादत्ते मोक्षं वा केन गच्छति ॥ १
भीष्म उवाच ।

मेतद्वन्यं यज्ञियद्रव्यम् । सूर्यपत्री सुवर्चलेति ट. थ. ध. पाठः ॥ ४ ॥ पुष्करमालिनी नामतः । सत्ये सत्यसंज्ञे भर्तरि नानुविधीयते हिंसा यज्ञमश्रेयस्त्वेन मन्यमाना अनुविधानमानुकूल्यं न करोति ॥ ६ ॥ तथापि शापाद्भीता सती भर्तुः स्वभावमनुरुध्यास्ते इत्यर्थः । मयूरपिञ्छैः सन्निवेशविशेषेण गुम्फितैस्तस्या वस्त्रं वर्णितं विस्तारितम् ॥ ७ ॥ शुकस्य पुनराज्ञाभिः पर्णादो नाम धर्मविदिति झ. पाठः ॥ ८ ॥ सहचारिकः यजमानस्य सत्यसंज्ञस्य प्रतिवेशी स मृगोऽभून्मृगो भूत्वा च सत्यं मुनिमब्रवीत् । दुष्कृतमिति । सतिसामर्थ्ये मन्त्राङ्गहीनं यज्ञं कुर्वतां दुष्कृतं भवतीत्यर्थः ॥ ९ ॥ ननु दरिद्रेण मयानुकल्पेनैव श्यामाकचरुणा पशुकार्यं क्रियत इत्याशङ्क्याह यदीति । होत्रे हूयतेऽस्मिन्निति व्युत्पत्त्या अग्नौ । मां पर्णादं मृगभूतम् ॥ १० ॥ सावित्री सवितृमण्डलाधिष्ठात्री देवता प्रत्यक्षमेत्य संन्यमन्त्रयत् मदर्थेऽयं पशुरग्नौ होतव्य इत्युक्तवती । प्रत्युक्ता प्रत्याख्याता । तत्र हेतुः न हन्यामिति ॥ ११ ॥ रसातलं दिदृक्षुः प्रवृत्ता तिरोभूदित्यर्थः ॥ १२ ॥ सत्यं सत्यसंज्ञम् । अयाचत मामग्नौ प्रक्षिपेति प्रार्थितवान् । ततो हिंसायां दोषं पश्यता संदिष्ट आज्ञप्तः ॥ १३ ॥ हिंसायां कृतायामेव स्वर्गवासं प्राप्नोतीति समर्थयत् समर्थितवानिति संबन्धः ॥ १६ ॥ केनचिन्निमित्तेन मृगतां प्राप्तो धर्मस्तस्य निमित्तस्य निष्कृति प्रतीकारमाधत्त स्वात्मानं मोचितवान्नत्वसौ यज्ञस्य समीचीनो विधिर्हिंसामयत्वात् ॥ १७ ॥ अनुभावेन पशुं हत्वा स्वर्गं प्राप्स्यामीत्यभिप्रायेण । यज्ञिया यज्ञाय हिता ॥ १८ ॥ याजयत अडभाव आर्षः । याजितवान् । भार्यायाः पुष्करमालिन्याः हिंसामययज्ञमनिच्छन्त्याः ॥ १९ ॥ तथा तेन स्वर्गप्रदत्वेन रूपेण हितः । सत्यवादिनां ब्रह्मवादिनां त्वसौ नो धर्मः अहिंसा सकलो धर्म इति झ. पाठः ॥ २० ॥ अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

विदिताः सर्वधर्मास्ते स्थित्यर्थमनुपृच्छसि ।
शृणु मोक्षं सनिर्वेदं पापं धर्मं च मूलतः ॥ २
विज्ञानार्थं हि पञ्चानामिच्छापूर्वं प्रवर्तते ।
प्राप्यतां वर्तते कामो द्वेषो वा भरतर्षभ ॥ ३
ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च चिकीर्षति ॥ ४
ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ५
लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ६
व्याजेन चरते धर्ममर्थं व्याजेन रोचते ।
व्याजेन सिद्ध्यमानेषु धर्मेषु कुरुनन्दन ॥ ७
तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति ।
सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ॥ ८
उत्तरं न्यायसंबद्धं ब्रवीति विधिचोदितम् ।
अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ॥ ९
पापं चिन्तयते कर्म प्रब्रवीति करोति च ।
तस्याधर्मप्रवृत्तस्य दोषान्पश्यन्ति साधवः ॥ १०
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स नेह सुखमाप्नोति कुत एव परत्र वै ॥ ११
एवं भवति पापात्मा धर्मात्मानं तु मे शृणु ।
यथा कुशलधर्मा स कुशलं प्रतिपद्यते ॥ १२
कुशलेनैव धर्मेण गतिमिष्टां प्रपद्यते ।
य एतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ॥ १३
कुशलस्तु सुखार्थाय साधूंश्चाप्युपसेवते ।
तस्य साधुसमाचाराद‍भ्यासाच्चैव वर्धते ॥ १४
प्राज्ञो धर्मे च रमते धर्मं चैवोपजीवति ।
सोऽथ धर्मादवाप्तेषु धनेषु कुरुनन्दन ॥ १५
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ।
धर्मात्मा भवति ह्येवं मित्रं च लभते शुभम् ॥ १६
स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति ।
शब्दे स्पर्शे रसे रूपे तथा गन्धे च भारत ॥ १७
प्रभुत्वं लभते जन्तुर्धर्मस्यैतत्फलं विदुः ।
स तु धर्मफलं लब्ध्वा न तृप्यति युधिष्ठिर ॥ १८
धर्मे स्थितानां कौन्तेय सर्वभोगक्रियासु च ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ।
प्रज्ञाचक्षुर्यदा कामे दोषमेवानुपश्यति ॥ १९
शब्दे स्पर्शे तथा रूपे न च भावयते मनः ।
विमुच्यते तदा कामान्न च धर्मं विमुञ्चति ॥ २०
सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षाय यतते नानुपायादुपायतः ॥ २१
शनैर्निर्वेदमादत्ते पापं कर्म जहाति च ।
धर्मात्मा चैव भवति मोक्षं च लभते परम् ॥ २२
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
पापं धर्मस्तथा मोक्षो निर्वेदश्चैव भारत ॥ २३
तस्माद्धर्मे प्रवर्तेथाः सर्वावस्थं युधिष्ठिर ।
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥ २४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

## [illegible]शीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

भीष्मेण युधिष्ठिरंप्रति मोक्षो[illegible]यप्रतिपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
मोक्षः पितामहेनोक्त उपा[illegible]नानुपायतः ।
तमुपायं यथान्यायं श्रोतु[illegible]च्छामि भारत ॥ १
भीष्म उवाच ।
त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनम् ।
यदुपायेन सर्वार्थं नित्यं मृगयसेऽनघ ॥ २

व्याजेन कपटेन । अर्थमर्थजा[illegible] ॥ ७ ॥ न्यायसंबद्धमाहारे व्यवहारे च त्यक्तलज्जः सुखी भवे[illegible]दि । त्रिविधः कायिको वाचिको मानसश्च ॥ ९ ॥ पापं [illegible]निष्टम ॥ १० ॥ कुशलं कल्याण परहितमित्यर्थः ॥ १२ ॥ निर्वेदं वैराग्यम् ॥ १९ ॥ भावयते चिन्तावशं करोति । विरज्यति तदा कामे इति ट. थ. पाठः ॥ २० ॥ एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सा मता ।
एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कारणम् ॥ ३
पूर्वे समुद्रे यः पन्थाः स न गच्छति पश्चिमम् ।
एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ॥ ४
क्षमया क्रोधमुच्छिन्द्यात्कामं संकल्पवर्जनात् ।
सत्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ॥ ५
अप्रमादाद्भयं रक्षेच्छ्वासं क्षेत्रज्ञशीलनात् ।
इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ ६
भ्रमं संमोहमावर्तमभ्यासाद्विनिवर्तयेत् ।
निद्रां चाप्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ ७
उपद्रवांस्तथा रोगान्हितजीर्णमिताशनात् ।
लोभं मोहं च संतोषाद्विषयांस्तत्त्वदर्शनात् ॥ ८
अनुक्रोशादधर्मं च जयेद्धर्ममवेक्षया ।
आयत्या च जयेदाशामर्थं सङ्गविवर्जनात् ॥ ९
अनित्यत्वेन च स्नेहं क्षुधं योगेन पण्डितः ।
कारुण्येनात्मनो मानं तृष्णां च परितोषतः ॥१०
उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत् ।
मौनेन बहुभाषां च शौर्येण च भयं जयेत् ॥ ११
यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा ।
ज्ञानमात्मा महान्यच्छेत्तं यच्छेज्ज्ञानमात्मनः १२
तदेतदुपशान्तेन बोद्धव्यं शुचिकर्मणा ।
योगदोषान्समुच्छिद्यात्पञ्च यान्कवयो विदुः ॥१३
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ।
परित्यज्य निषेवेत तथेमान्योगसाधनान् ॥ १४
ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ।
शौचमाहारतः शुद्धिरिन्द्रियाणां च संयमः ॥१५
एतैर्विवर्धते तेजः पाप्मानमपहन्ति च ।
सिध्यन्ति चास्य संकल्पा विज्ञानं च प्रवर्तते॥१६
धूतपापः स तेजस्वी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥१७
अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम् ।
अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः ॥ १८
एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः ।
तथा वाक्कायमनसां नियमः कामतोऽन्यथा ॥१९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

## एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

भीष्मेण युधिष्ठिरंप्रति भूतोत्पत्तिविनाशादिप्रतिपादकदेवलनारदसंवादानुवादः ॥ १ ॥

भीष्म उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं देवलस्यासितस्य च ॥ १
आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरम् ।
नारदः परिपप्रच्छ भूतानां प्रभवाप्ययम् ॥ २
नारद उवाच ।
कुतः सृष्टमिदं विश्वं ब्रह्मन्स्थावरजङ्गमम् ।
प्रलये च कमभ्येति तद्भवान्प्रब्रवीतु मे ॥ ३
असित उवाच ।
येभ्यः सृजति भूतानि कालो भावप्रचोदितः ।
महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः ॥ ४
तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः ।
एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयम् ॥ ५
विद्धि नारद पञ्चैताञ्शाश्वतानचलान्ध्रुवान् ।
महतस्तेजसो राशीन्कालषष्ठान्स्वभावतः ॥ ६
आपश्चैवान्तरिक्षं च पृथिवी वायुपावकौ ।
असिद्धिः परमेतेभ्यो भूतेभ्यो मुक्तसंशयम् ॥ ७
नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयम् ।
वेत्थैतानभिनिर्वृत्तान्षडेते यस्य राशयः ॥ ८
पञ्चैव तानि कालश्च भावाभावौ च केवलौ ।
अष्टौ भूतानि भूतानां शाश्वतानि भवाप्ययौ ॥ ९
अभावभावितेष्वेव तेभ्यश्च प्रभवन्त्यपि ।

जयेद्धर्ममुपेक्षयेति ट. थ. ध. पाठः ॥ ९ ॥ ज्ञानमात्मावबोधेन यच्छेदात्मानमात्मनेति झ. पाठः ॥ १२ ॥ अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

विनष्टोऽप्यनुतान्येव जन्तुर्भवति पञ्चधा ॥ १०
तस्य भूमिमयो देहः श्रोत्रमाकाशसंभवम् ।
सूर्याच्चक्षुरसुर्वायोरद्भ्यस्तु खलु शोणितम् ॥ ११
चक्षुषी नासिकाकर्णौ त्वक् जिह्वेति च पञ्चमी ।
इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः १२
दर्शनं श्रवणं घ्राणं स्पर्शनं रसनं तथा ।
उपपत्त्या गुणान्विद्धि पञ्च पञ्चसु धातुषु ॥ १३
रूपं गन्धो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः ।
इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः ॥ १४
रूपं गन्धं रसं स्पर्शं शब्दं चैवाथ तद्गुणान् ।
इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते ॥१५
चित्तमिन्द्रियसंघातात्परं तस्मात्परं मनः ।
मनसस्तु परा बुद्धिः क्षेत्रज्ञो बुद्धितः परः ॥ १६
पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान्पृथक् ।
विचार्य मनसा पश्चादथ बुद्ध्या व्यवस्यति ।
इन्द्रियैरुपसृष्टार्थान्मत्वा यस्त्वध्यवस्यति ॥ १७
चित्तमिन्द्रियसंघातं मनो बुद्धिस्तथाऽष्टमी ।
अष्टौ ज्ञानेन्द्रियाण्याहुरेतान्यध्यात्मचिन्तकाः १८
पाणिं पादं च पायुं च मेहनं पञ्चमं मुखम् ।
इति संशब्द्यमानानि शृणु कर्मेन्द्रियाण्यपि ॥१९
जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते ।
गमनेन्द्रियं तथा पादौ कर्मणः करणे करौ ॥ २०
पायूपस्थं विसर्गार्थमिन्द्रिये तुल्यकर्मणी ।
विसर्गे च पुरीषस्य विसर्गे चापि कामिके ॥ २१
मनःषष्ठान्यथैतानि वाचा सम्यग्यथागमम् ।
ज्ञानचेष्टेन्द्रियगुणाः सर्वेषां शब्दिता मया ॥२२
इन्द्रियाणां स्वकर्मभ्यः श्रमादुपरमो यदा ।
भवतीन्द्रियसंन्यासादथ स्वपिति वै नरः ॥ २३
इन्द्रियाणां व्युपरमे मनोऽव्युपरतं यदि ।
सेवते विषयानेव तं विद्यात्स्वप्नदर्शनम् ॥ २४
सात्विकाश्चैव ये भावास्तथा राजसतामसाः ।
कर्मयुक्ताः प्रशंसन्ति सात्विकानितरांस्तथा ॥ २५
आनन्दः कर्मणां सिद्धिः प्रतिपत्तिः परा गतिः ।
सात्विकस्य निमित्तानि भावान्संश्रयते स्मृतिः ॥
जन्तुष्वेकतमेष्वेवं भावं यो वा समास्थितः ।
भावयोरीप्सितं नित्यं प्रत्यक्षं गमनं द्वयोः ॥२७
इन्द्रियाणि च भावाश्च गुणाः सप्तदश स्मृताः ।
तेषामष्टादशो देही यः शरीरे स शाश्वतः ॥२८
अथवा सशरीरास्ते गुणाः सर्वे शरीरिणाम् ।
संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते॥२९
अथवा संविभागेन शरीरं पाञ्चभौतिकम् ।
एकश्च दश चाष्टौ च गुणाः सह शरीरिणाम् ।
ऊष्मणा सह विंशो वा संघातः पाञ्चभौतिकः॥३०
महान्संधारयत्येतच्छरीरं वायुना सह ।
सत्यप्रभावयुक्तस्य निमित्तं देहभेदने ॥ ३१
यथैवोत्पद्यते किंचित्पञ्चत्वं गच्छते तथा ।
पुण्यपापविनाशान्ते पुण्यपापसमीरितः ।
देहं विशति कालेन ततोऽयं कर्मसंभवम् ॥ ३२
हित्वाहित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः ।
कालसंचोदितः क्षेत्री विशीर्णाद्वा गृहाद्गृहम् ॥३३
तं तु नैवानुतप्यन्ते प्राज्ञा निश्चितनिश्चयाः ।
कृपणास्त्वनुतप्यन्ते जनाः संबन्धिमानिनः ३४
न ह्ययं कस्यचित्कश्चिन्नास्य कश्चन विद्यते ।
भवत्येको ह्ययं नित्यं शरीरे सुखदुःखकृत् ॥ ३५
नैव संजायते जन्तुर्न च जातु विपद्यते ।
याति देहमयं मुक्त्वा कदाचित्परमां गतिम् ॥ ३६
पुण्यपापमयं देहं क्षपयन्कर्मसंक्षयात् ।
क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ ३७
पुण्यपापक्षयार्थं हि साङ्ख्यज्ञानं विधीयते ।
तत्क्षये हृदि पश्यन्ति ब्रह्मभावे परां गतिम् ॥३८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

---

पञ्चधेति झ. पाठः ॥१३॥ क्षीणभोगः पुनर्देहीति ध. पाठः ॥ ३७ ॥ एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

## द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

भीष्मेण युधिष्ठिरंप्रति तृष्णात्यागस्य सुखसाधनताप्रतिपादकजनकमाण्डव्यसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
भ्रातरः पितरः पौत्रा ज्ञातयः सुहृदः सुताः ।
अर्थहेतोर्हताः क्रूरैरस्माभिः पापबुद्धिभिः ॥ १
येयमर्थोद्भवा तृष्णा कथमेतां पितामह ।
निवर्तयेयं पापानि तृष्णया कारिता वयम् ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं विदेहराजेन माण्डव्यायानुपृच्छते ॥ ३
सुसुखं बत जीवामि यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ॥ ४
अर्थाः खलु समृद्धा हि गाढं दुःखं विजानताम् ।
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ॥ ५
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ६
यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते ।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥ ७
किंचिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते पुनः ॥ ८
न कामाननुरुध्येत दुःखं कामेषु वै रतिः ।
प्राप्यार्थमुपयुञ्जीत धर्मं कामान्विवर्जयेत् ॥ ९
विद्वान्सर्वेषु भूतेषु व्याघ्रमांसोपमो भवेत् ।
कृतकृत्यो विशुद्धात्मा सर्वं त्यजति वै स्वयम् ॥ १०
उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये ।
भयाभये च संत्यज्य भव शान्तो निरामयः ॥ ११
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं ॥
चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयम् ।
धर्मात्मा लभते कीर्तिं प्रेत्य चेह यथासुखम् ॥ १३
राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः ।
पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः १४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

---

## त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥

भीष्मेण युधिष्ठिरंप्रति कालस्य द्रुततरपातितया सद्यस्साधनस्य संपादनीयत्वे प्रमाणतया पितृपुत्रसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।*
अतिक्रामति कालेऽस्मिन्सर्वभूतभयावहे ।
किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रेण संवादं तं निबोध युधिष्ठिर ॥ २
द्विजातेः कस्यचित्पार्थ स्वाध्यायनिरतस्य वै ।
पुत्रो बभूव मेधावी मेधावी नाम नामतः ॥ ३
सोऽब्रवीत्पितरं पुत्रः स्वाध्यायकरणे रतम् ।
मोक्षधर्मेष्वकुशलं मोक्षधर्मविचक्षणः ॥ ४
पुत्र उवाच ।
धीरः किंस्वित्तात कुर्यात्प्रजानन्
क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम् ।
पितस्तथाऽऽख्याहि यथार्थयोगं
ममानुपूर्व्या येन धर्मं चरेयम् ॥ ५
पितोवाच ।
अधीत्य वेदान्ब्रह्मचर्येण पुत्र
पुत्रानिच्छेत्पावनार्थं पितॄणाम् ।
अग्नीनाधाय विधिवच्चेष्टयज्ञो
वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ ६

---

* यद्यप्ययमध्यायः पूर्वत्र १७४ तमाध्यायतया स्थापितः । तथापि ड. थे.तरपुस्तकेषु द्वितीयवारमत्रापि दृश्यमानतयाऽस्माभिरत्रापि स्थापितः ।

पुत्र उवाच ।
एवमभ्याहते लोके सर्वतः परिवारिते ।
अमोघासु पतन्तीषु किं धीर इव भाषसे ॥ ७
पितोवाच ।
कथमभ्याहतो लोकः केन वा परिवारितः ।
अमोघाः काः पतन्तीह किंनु भीषयसीव माम् ॥८
पुत्र उवाच ।
मृत्युनाऽऽभ्याहतो लोको जरया परिवारितः ।
अहोरात्राः पतन्तीमे तच्च कस्मान्न बुध्यसे ॥ ९
यदाहमेव जानामि न मृत्युस्तिष्ठतीति ह ।
सोहं कथं प्रतीक्षिष्ये ज्ञानेनापिहितश्चरन् ॥ १०
रात्र्यांरात्र्यां व्यतीतायामायुरल्पतरं यदा ।
गाधोदके मत्स्य इव सुखं विन्देत कस्तदा ॥ ११
'यामेकरात्रिं प्रथमां गर्भो विशति मातरम् ।
तामेव रात्रिं प्रस्थाप्य मरणाय विवर्तकः ॥' १२
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् ।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥ १३
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ॥१४
अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगान्महान् ।
को हि जानाति कस्याद्य मृत्युकालो भविष्यति १५
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ।
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ॥ १६
कृते धर्मे भवेत्प्रीतिरिह प्रेत्य च शाश्वती ।
मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः ॥ १७
कृत्वा कार्यमकार्यं वा तुष्टिमेषां प्रयच्छति ।
तं पुत्रपशुसंपन्नं व्यासक्तमनसं नरम् ॥ १८
सुप्तं व्याघ्रं महौघो वा मृत्युरादाय गच्छति ।
संचिन्वानकमेवैनं कामानामवितृप्तकम् ॥ १९
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ।
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ॥ २०
एवमीहासमायुक्तं मृत्युरादाय गच्छति ।
कृतानां फलमप्राप्तं कार्याणां कर्मसङ्गिनाम् ॥ २१
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ।
दुर्बलं बलवन्तं च प्राज्ञं शूरं जडं कविम् ॥ २२
अप्राप्तसर्वकामार्थं मृत्युरादाय गच्छति ।
मृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम् ॥ २३
असंत्याज्यं यदा मर्त्यैः किं स्वस्थ इव तिष्ठति ।
जातमेवान्तकोऽन्ताय जरा चाभ्येति देहिनम् २४
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ।
न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते ॥ २५
बलात्सत्यमृते त्वेकं सत्ये ह्यमृतमाश्रितम् ।
मृत्योर्वा गृहमेतद्वै या ग्रामे वसतो रतिः ॥ २६
देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ।
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ॥ २७
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ।
यो न हिंसति सत्वानि मनोवाक्कर्महेतुभिः ॥ २८
जीवितार्थापनयनैः प्राणिभिर्न स बध्यते ।
तस्मात्सत्यव्रताचारः सत्यव्रतपरायणः ॥ २९
सत्यकामः समो दान्तः सत्येनैवान्तकं जयेत् ।
अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ॥ ३०
मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतम् ।
सोहं सत्यमहिंसार्थी कामक्रोधबहिष्कृतः ॥ ३१
समाश्रित्य सुखं क्षेमी मृत्युं हास्याम्यमृत्युवत् ।
शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः ॥ ३२
वाङ्मनःकर्मयज्ञश्च भविष्याम्युदगायने ।
पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ॥ ३३
अन्तवद्भिरुत प्राज्ञः क्षत्रयज्ञैः पिशाचवत् ।
आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजः पितः ३४
आत्मयज्ञो भविष्यामि न मां तारयति प्रजा ।
यस्य वाङ्मनसी स्यातां सम्यक्प्रणिहिते सदा ॥ ३५
तपस्त्यागश्च योगश्च स तैः सर्वमवाप्नुयात् ।
नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं फलम् ३६
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ३७

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीले स्थितिर्दण्डविधानमार्जवं-
ततस्ततश्चोपरमः क्रियाभ्यः ॥ ३८

किं ते धनैर्बान्धवैर्वाऽपि किं ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ ३९

भीष्म उवाच ।
पुत्रस्यैतद्वचः श्रुत्वा तथाकार्षीत्पिता नृप ।
तथा त्वमपि राजेन्द्र सत्यधर्मपरो भव ॥ ४०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥

---

## चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

भीष्मेण युधिष्ठिरंप्रति मोक्षसाधनप्रतिपादकहारीतगीतानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
किंशीलः किंसमाचारः किंविद्यः किंपरायणः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ १
भीष्म उवाच ।
मोक्षधर्मेषु निरतो लघ्वाहारो जितेन्द्रियः ।
प्राप्नोति परमं स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ २
'अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
हारीतेन पुरा गीतं तं निबोध युधिष्ठिर ॥ ३
स्वगृहादभिनिःसृत्य लाभेऽलाभे समो मुनिः ।
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥ ४
न चक्षुषा न मनसा न वाचा दूषयेत्परम् ।
न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत्क्वचित् ॥ ५
न हिंस्यात्सर्वभूतानि मैत्रायणगतिश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ ६
अतिवादांस्तितिक्षेत नाभिमन्येत कंचन ।
क्रोध्यमानः प्रियं ब्रूयादाक्रुष्टः कुशलं वदेत् ॥ ७
प्रदक्षिणं च सव्यं च ग्राममध्ये च नाचरेत् ।
भैक्षचर्यामनापन्नो न गच्छेत्पूर्वकेतनम् ॥ ८
अवकीर्णः सुगुप्तश्च न वाचाऽप्यप्रियं चरेत् ।
मृदुः स्यादप्रतीकारो विस्रब्धः स्यादरोषणः ॥ ९
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीते पात्रसंचारे भिक्षां लिप्सेत वै मुनिः ॥ १०
प्राणयात्रिकमात्रः स्यान्मात्रालाभेष्वनादृतः ।
अलाभे न विहन्येत लाभश्चैनं न हर्षयेत् ॥ ११
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ।
अभिपूजितलाभं हि जुगुप्सेतैव तादृशः ॥ १२
न चान्नदोषान्निन्देत न गुणानभिपूजयेत् ।
शय्यासने विविक्ते च नित्यमेवाभिपूजयेत् ॥ १३
शून्यागारं वृक्षमूलमरण्यमथवा गुहाम् ।
अज्ञातचर्यां गत्वाऽन्यां ततोऽन्यत्रैव संविशेत् १४
अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः ।
सुकृतं दुष्कृतं चोभे नानुरुध्येत कर्मणि ॥ १५
नित्यतृप्तः सुसंतुष्टः प्रसन्नवदनेन्द्रियः ।
विभीर्जप्यपरो मौनी वैराग्यं समुपाश्रितः ॥ १६
अभ्यस्तं भौतिकं पश्यन्भूतानामागतिं गतिम् ।
विस्मितः सर्वदर्शी च पक्वापक्वेन वर्तयन् ।
आत्मारामः प्रशान्तात्मा लघ्वाहारो जितेन्द्रियः॥

---

प्राप्नोति ब्रह्मणः स्थानमिति झ. थ. पाठः ॥ २ ॥ समुपोढेषूपस्थितेष्वपि । संमुखेषु च कामेषु इति ट. ध. पाठः । समो दुःखेषु कामेषु इति थ. पाठः ॥ ४ ॥ मैत्रायणगतो मित्रः सूर्यस्तस्येदं मैत्रं तदयनं गमनं तच्च मैत्रायणं तत्र गतः। सूर्यवत्प्रत्यहं विभिन्नमार्गः । ग्रामैकरात्रविधिना चरेदित्यर्थः मैत्रायणगतिं चरेदिति ट. ड. पाठः ॥ ६ ॥ नातिमन्येत्कथंचनेति ट. ड. थ. पाठः ॥ ७ ॥ ग्राममध्ये जनसमाजे प्रदक्षिणमनुकूलं सव्यं प्रतिकूलं वा नाचरेत् ॥ ८ ॥ अवतीर्णः सुगुप्तश्चेति ट. ध. पाठः । अप्रियं वदेदिति झ. पाठः । अवकीर्णो मूढैः पांसुभिश्छन्नः । धिक्कृत इत्यर्थः । तथापि सुगुप्तोऽचपलः स्वधर्मे निष्ठावान् ॥ ९ ॥ अनुयात्रिकमर्थी स्यादिति ड. पाठः ॥११॥ साधारणं सर्वयोग्यं स्रक्चन्दनादिलाभम् ॥ १२ ॥ ध्यानजल्पपरो मौनीति ट. ड. पाठः ॥ १६ ॥ सव्यक्तं भौतिकं स्वर्ग्यं इति ड. ध. पाठः । निःस्पृहः समदर्शी चेति झ. पाठः। सुव्रतो दान्त इति ट. ड. पाठः ॥ १७ ॥

वाचो वेगं मनसः क्रोधवेगं
हिंसावेगमुदरोपस्थवेगम् ।
एतान्वेगान्विनयेद्वै तपस्वी
निन्दा चास्य हृदयं नोपहन्यात् ॥ १८
मध्यस्थ एव तिष्ठेत प्रशंसानिन्दयोः समः ।
एतत्पवित्रं परमं परिव्राजक आश्रयेत् ॥ १९
महात्मा सर्वतो दान्तः सर्वत्रैवानपाश्रितः ।
अपूर्वचारकः सौम्यो ह्यनिकेतः समाहितः ॥ २०
वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातलिप्सं लिप्सेत न चैनं हर्ष आविशेत् ॥ २१
विजानतां मोक्ष एष श्रमः स्यादविजानताम् ।
मोक्षयानमिदं कृत्स्नं विदुषां हारितोऽब्रवीत् ॥ २२
अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्गृहात् ।
लोकास्तेजोमयास्तस्य तथाऽऽनन्त्याय कल्पते २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

---

## पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

भीष्मेण युधिष्ठिरंप्रति वृत्रगीतानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
धन्याधन्या इति जनाः सर्वेऽस्मान्प्रवदन्त्युत ।
न दुःखिततरः कश्चित्पुमानस्माभिरस्ति ह ॥ १
लोकसंभावितैर्दुःखं यत्प्राप्तं कुरुसत्तम ।
प्राप्य जातिं मनुष्येषु देवैरपि पितामह ॥ २
कदा वयं करिष्यामः संन्यासं दुःखभेषजम् ।
दुःखमेतच्छरीराणां धारणं कुरुसत्तम ॥ ३
विमुक्ताः सप्तदशभिर्हेतुभूतैश्च पञ्चभिः ।
इन्द्रियार्थैर्गुणैश्चैव अष्टाभिश्च पितामह ॥ ४
न गच्छन्ति पुनर्भावं मुनयः संशितव्रताः ।
कदा वयं गमिष्यामो राज्यं हित्वा परंतप ॥ ५
भीष्म उवाच ।
नास्त्यनन्तं महाराज सर्वं सङ्ख्यानगोचरम् ।
पुनर्भावोपि संख्यातो नास्ति किंचिदिहाचलम् ॥ ६
न चापि गम्यते राजन्नैष दोषः प्रसङ्गतः ।
उद्योगादेव धर्मज्ञाः कालेनैव गमिष्यथ ॥ ७
नेशोऽयं सततं देही नृपते पुण्यपापयोः ।
तत एव समुत्थेन तमसा रुध्यतेऽपि च ॥ ८
यथाञ्जनमयो वायुः पुनर्मानःशिलं रजः ।
अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन्दिशः ॥ ९
तथा कर्मफलैर्देही रञ्जितस्तमसा वृतः ।
विवर्णो वर्णमाश्रित्य देहेषु परिवर्तते ॥ १०
ज्ञानेन हि यदा जन्तुरज्ञानप्रभवं तमः ।
व्यपोहति तदा ब्रह्म प्रकाशेत सनातनम् ॥ ११
अयत्नसाध्यं मुनयो वदन्ति
ये चापि मुक्तास्तदुपासितव्याः ।
त्वया च लोकेन च सामरेण
तस्मान्न शाम्यन्ति महर्षिसङ्घाः ॥ १२
अस्मिन्नर्थे पुरा गीतं शृणुष्वैकमना नृप ।
यथा दैत्येन वृत्रेण भ्रष्टैश्वर्येण चेष्टितम् ॥ १३
निर्जितेनासहायेन हृतराज्येन भारत ।
अशोचता शत्रुमध्ये बुद्धिमास्थाय केवलाम् ॥ १४
भ्रष्टैश्वर्यं पुरा वृत्रमुशना वाक्यमब्रवीत् ।
कच्चित्पराजितस्याद्य न व्यथा तेऽस्ति दानव ॥ १५
वृत्र उवाच ।
सत्येन तपसा चैव विदित्वा संक्षयं ह्यहम् ।
न शोचामि न हृष्यामि भूतानामागतिं गतिम् १६
कालसंचोदिता जीवा मज्जन्ति नरकेऽवशाः ।

---

अज्ञातनिष्ठां लिप्सेतेति ध. पाठः ॥ २० ॥ चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

देवैर्धर्मादिभिः । जातिं जन्म ॥ २ ॥ सुखसंज्ञिकमिति ध. पाठः ॥ ३ ॥ व्रजन्ति येषु न भवमिति ध. पाठः ॥ ५ ॥

न चापि मन्यते राजन्नेष धर्मोऽत्रसन्तत इति ध. पाठः ॥ ७ ॥ नेशो नेष्टे। ईदृशो यतते देहीति ट. ड. पाठः ॥ ८ ॥ यथाञ्जनचयं वायुरिति ड. ध. पाठः ॥ ९ ॥

परिहृष्टानि सर्वाणि दिव्यान्याहुर्मनीषिणः ॥ १७
क्षपयित्वा तु तं कालं गणितं कालचोदिताः ।
सावशेषेण कालेन संधावन्ति पुनःपुनः ॥ १८
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
निर्गच्छन्त्यवशा जीवाः कालबन्धनबन्धनाः ॥१९
एवं संसरमाणानि ह्यहं भूतानि दृष्टवान् ।
यथा कर्म तथा लाभ इति शास्त्रनिदर्शनम् ॥ २०
तिर्यग्गच्छन्ति नरकं मानुष्यं दैवमेव च ।
सुखदुःखे प्रिये द्वेष्ये चरित्वा पूर्वमेव च ॥ २१
कृतान्तविधिसंयुक्तः सर्वो लोकः प्रपद्यते ।
गतं गच्छन्ति चाध्वानं सर्वभूतानि सर्वदा ॥ २२
कालसङ्ख्यानसङ्ख्येयं सृष्टिस्थितिपरायणम् ।
तं भाषमाणं भगवानुशना प्रत्यभाषत ।
इमान्दुष्टप्रलापांस्त्वं तात कस्मात्प्रभाषसे ॥ २३
वृत्र उवाच ।
प्रत्यक्षमेतद्भवतस्तथाऽन्येषां मनीषिणाम् ।
मया यज्ञयलुब्धेन पुरा तप्तं महत्तपः ॥ २४
गन्धानादाय भूतानां रसांश्च विविधानपि ।
अवर्धं त्रीन्समाक्रम्य लोकान्वै स्वेन तेजसा ॥ २५
ज्वालामालापरिक्षिप्तो वैहायसगतिस्तथा ।
अजेयः सर्वभूतानामासं नित्यमपेतभीः ॥ २६
ऐश्वर्यं तपसा प्राप्तं भ्रष्टं तच्च स्वकर्मभिः ।
धृतिमास्थाय भगवन्न शोचामि ततस्त्वहम् ॥ २७
युयुत्सता महेन्द्रेण पुरा सार्धं महात्मना ।
ततो मे भगवान्दृष्टो हरिर्नारायणः प्रभुः ॥ २८
वैकुण्ठः पुरुषोऽनन्तः शुक्लो विष्णुः सनातनः ।
मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामहः ॥ २९
नूनं तु तस्य तपसः सावशेषं ममास्ति वै ।
यदहं प्रष्टुमिच्छामि भवन्तं कर्मणः फलम् ॥ ३०
ऐश्वर्यं वै महद्ब्रह्मन्वर्णे कस्मिन्प्रतिष्ठितम् ।
निवर्तते चापि पुनः कथमैश्वर्यमुत्तमम् ॥ ३१
भवन्ति कस्माद्भूतानि प्रवर्तन्ते यथा पुनः ।
किं वा फलं परं प्राप्य जीवस्तिष्ठति शाश्वतः ॥ ३२
केन वा कर्मणा शक्यमथ ज्ञानेन केन वा ।
ब्रह्मर्षे तत्फलं प्राप्तुं तन्मे व्याख्यातुमर्हसि ॥ ३३
इतीदमुक्तः स मुनिस्तदानीं
प्रत्याह यत्तच्छृणु राजसिंह ।
मयोच्यमानं पुरुषर्षभ त्व-
मनन्यचित्तः सह सोदरीयैः ॥ ३४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

## षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

भीष्मेण युधिष्ठिरंप्रति वृत्राय सनत्कुमारोक्तविष्णुमाहात्म्यानुवादः ॥ १ ॥

उशनोवाच ।
नमस्तस्मै भगवते देवाय प्रभविष्णवे ।
यस्य पृथ्वी तलं तात साकाशं बाहुगोचरः ॥ १
मूर्धा यस्य त्वनन्तं च स्थानं दानवसत्तम ।
तस्याहं ते प्रवक्ष्यामि विष्णोर्माहात्म्यमुत्तमम् ॥ २
भीष्म उवाच ।
तयोः संवदतोरेवमाजगाम महामुनिः ।
सनत्कुमारो धर्मात्मा संशयच्छेदनाय वै ॥ ३
स पूजितोऽसुरेन्द्रेण मुनिनोशनसा तथा ।
निषसादासने राजन्महार्हे मुनिपुङ्गवः ॥ ४
तमासीनं महाप्रज्ञमुशना वाक्यमब्रवीत् ।
ब्रूह्यस्मै दानवेन्द्राय विष्णोर्माहात्म्यमुत्तमम् ॥ ५
सनत्कुमारस्तु वचः श्रुत्वा प्राह वचोऽर्थवत् ।

संभवन्ति पुनःपुनरिति झ. पाठः ॥ १८ ॥ धीमन्दुष्टप्रलापांस्त्वमिति झ. पाठः । दुष्टप्रलापान् असुरभावविनाशकान् असुरे भूत्वा कथं भाषस इत्यर्थः ॥ २३ ॥ गन्धाद्यादानं तदाश्रयोपमर्देन । अवर्धं हिंसितवान् ॥ २५ ॥ वैहायसगतिश्चरन्निति झ. ध. पाठः ॥ २६ ॥ पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

तलमधोभागः । साकाशमाकाशसहितं सर्वमुपरितनम् । बाहुगोचरो मध्यस्थमित्यर्थः । यस्य पृथ्वीतलं पादमाशा वै बहुगोचरा इति ट. थ. पाठः ॥ १ ॥ अनन्त स्थान मोक्षः ॥ २ ॥

विष्णोर्माहात्म्यसंयुक्तं दानवेन्द्राय धीमते ॥ ६
शृणु सर्वमिदं दैत्य विष्णोर्माहात्म्यमुत्तमम् ।
विष्णौ जगत्स्थितं सर्वमिति विद्धि परंतप ॥ ७
अस्मिन्गच्छन्ति विलयमस्माच्च प्रभवन्त्युत ।
अवत्त्येष महाबाहुर्भूतग्रामं चराचरम् ।
एष चाक्षिपते काले काले च सृजते पुनः ॥ ८
नैष दानव ते शक्यस्तपसा नैव चेज्यया ।
संप्राप्तुमिन्द्रियाणां तु संयमेनैव शक्यते ॥ ९
बाह्ये चाभ्यन्तरे चैव कर्मणा मनसि स्थितः ।
निर्मलीकुरुते बुद्ध्या सोऽमुत्रानन्त्यमश्नुते ॥ १०
यथा हिरण्यकर्ता वै रूप्यमग्नौ विशोधयेत् ।
बहुशोऽतिप्रयत्नेन महताऽऽत्मकृतेन ह ॥ ११
तद्वज्जातिशतैर्जीवः शुद्ध्यतेऽल्पेन कर्मणा ।
यत्नेन महता चैवाप्येकजातौ विशुद्ध्यते ॥ १२
लीलयाऽल्पं यथा गात्रात्प्रमृज्यादात्मनो रजः ।
बहुयत्नेन महता दोषनिर्हरणं तथा ॥ १३
यथा चाल्पेन माल्येन वासितं तिलसर्षपम् ।
न मुञ्चति स्वकं गन्धं तथा सूक्ष्मस्य दर्शनम् ॥ १४
तदेव बहुभिर्माल्यैर्वास्यमानं पुनःपुनः ।
विमुच्य तं स्वकं गन्धं माल्यगन्धेऽवतिष्ठते ॥ १५
एवं जातिशतैर्युक्तो गुणैरेव प्रसङ्गिषु ।
बुद्ध्या निवर्तते दोषो यत्नेनाभ्यासजेन ह ॥ १६
कर्मणा स्वेन रक्तानि विरक्तानि च दानव ।
यथा कर्मविशेषांश्च प्राप्नुवन्ति तथा शृणु ॥ १७
यथावत्संप्रवर्तन्ते यस्मिंस्तिष्ठति चानिशम् ।
तत्तेऽनुपूर्व्या व्याख्यास्ये तदिहैकमनाः शृणु ॥ १८
अनादिनिधनः श्रीमान्हरिर्नारायणः प्रभुः ।
देवः सृजति भूतानि स्थावराणि चराणि च ॥ १९
एष सर्वेषु भूतेषु क्षरश्चाक्षर एव च ।
एकादश विकारात्मा जगत्पिबति रश्मिभिः ॥ २०
पादौ तस्य महीं विद्धि मूर्धानं दिवमेव च ।
बाहवस्तु दिशो दैत्य श्रोत्रमाकाशमेव च ॥ २१
तस्य तेजोमयः सूर्यो मनश्चन्द्रमसि स्थितम् ।
बुद्धिर्ज्ञानगता नित्यं रसस्त्वप्सु प्रवर्तते ॥ २२
भ्रुवोरनन्तरास्तस्य ग्रहा दानवसत्तम ।
नक्षत्रचक्रं नेत्रे च आस्यमग्निं च दानव ।
तं विश्वभूतं विश्वादिं परमं विद्धि चेश्वरम् ॥ २३
रजस्तमश्च सत्वं च विद्धि नारायणात्मकम् ।
सोऽश्रमाणां मुखं तात कर्मणस्तत्फलं विदुः ॥ २४
अकर्मणः फलं चैव स एव परमोऽव्ययः ।
छन्दांसि यस्य रोमाणि ह्यक्षरं च सरस्वती ॥ २५
बह्वाश्रयो बहुमुखो धर्मो हृदि समाश्रितः ।
स ब्रह्मपरमो धर्मस्तपश्च सदसच्च सः ॥ २६
श्रोत्रशास्त्रग्रहोपेतः षोडशर्त्विक्क्रतुश्च सः ।
पितामहश्च रुद्रश्च सोऽश्विनौ स पुरंदरः ॥ २७
मित्रोऽथ वरुणश्चैव यमोऽथ धनदस्तथा ।
ते पृथग्दर्शनास्तस्य संविदन्ति तथैकताम् ।
एकस्य विद्धि देवस्य सर्वं जगदिदं वशे ॥ २८
नानाभूतस्य दैत्येन्द्र तस्यैकत्वं वदन्त्यपि ।
जन्तुः पश्यति विज्ञानात्ततः सत्वं प्रकाशते ॥ २९
संहारविक्षेपसहस्रकोटी-
स्तिष्ठन्ति जीवाः प्रचरन्ति चान्ये ।
प्रजाविसर्गस्य च पारिमाण्यं
वापीसहस्राणि बहूनि दैत्य ॥ ३०
वाप्यः पुनर्योजनविस्तृतास्ताः
क्रोशं च गम्भीरतयाऽवगाढाः ।
आयामतः पञ्चशताश्च सर्वाः
प्रत्येकशो योजनतः प्रवृद्धाः ॥ ३१
वाप्या जलं क्षिप्यति वालकोट्या
त्वह्ना सकृच्चाप्यथ न द्वितीयम् ।
तासां क्षये विद्धि परं विसर्गं
संहारमेकं च तथा प्रजानाम् ॥ ३२

नैष दानकृता शक्य इति थ. पाठः ॥ ९ ॥ महताल्पकृतेन चेति ध. पाठः ॥ ११ ॥ जातिशतैर्जन्मशतैः एकजातौ एकजन्मन्यपि ॥ १२ ॥ अप्सु प्रतिष्ठित इति झ. पाठः ॥ २२ ॥ नेत्राभ्यां पादयोर्भूश्च दानवेति झ. पाठः ॥ २३ ॥ फलं तातेति झ. पाठः ॥ २४ ॥

ततो ब्रह्म प्रकाशते इति झ. पाठः ॥ २९ ॥ वापीसहस्राणि ततोऽप्यशीतिः इति ध. पाठः ॥ ३० ॥ योजनविस्तृताश्चेति थ. पाठः ॥ ३१ ॥

षड्जीववर्णाः परमं प्रमाणं
कृष्णो धूम्रो नीलमथास्य मध्यम् ।
रक्तं पुनः सह्यतरं सुखं तु
हारिद्रवर्णं सुसुखं च शुक्लम् ॥ ३३

परं तु शुक्लं विमलं विशोकं
गतक्लमं सिद्ध्यति दानवेन्द्र ।
गत्वा तु योनिप्रभवाणि दैत्य
सहस्रशः सिद्धिमुपैति जीवः ॥ ३४

गतिं च यां दर्शनमाह देवो
गत्वा शुभं दर्शनमेव चापि ।
गतिः पुनर्वर्णकृता प्रजानां
वर्णस्तथा कालकृतोऽसुरेन्द्र ॥ ३५

शतं सहस्राणि चतुर्दशेह
परा गतिर्जीवगणस्य दैत्य ।
आरोहणं तत्कृतमेव विद्धि
स्थानं तथा निःसरणं च तेषाम् ॥ ३६

'योऽस्मादथ भ्रश्यति कालयोगा-
त्कृष्णे वर्णे तिष्ठति सर्वकृष्टे ।
अतिप्रसक्तो निरयाच्च दैत्य
ततस्ततः संपरिवर्तते च ॥' ३७

कृष्णस्य वर्णस्य गतिर्निकृष्टा
स मज्जते नरके पच्यमानः ।
स्थानं तथा दुर्गतिभिस्तु तस्य
प्रजाविसर्गान्सुबहून्वदन्ति ॥ ३८

शतं सहस्राणि ततश्चरित्वा
प्राप्नोति वर्णं हरितं तु पश्चात् ।
स चैव तस्मिन्निवसत्यनीशो
युगक्षयं तमसा संवृतात्मा ॥ ३९

स वै यदा सत्वगुणेन युक्त-
स्तमो व्यपोहन्घटते स्वबुद्ध्या ।
स लोहितं वर्णमुपैति नीला-
न्मनुष्यलोके परिवर्तते च ॥ ४०

स तत्र संहारविसर्गमेकं
स्वकर्मजैर्बन्धनैः क्लिश्यमानः ।
ततः स हारिद्रमुपैति वर्णं
संहारविक्षेपशते व्यतीते ॥ ४१

हारिद्रवर्णस्तु प्रजाविसर्गा-
त्सहस्रशस्तिष्ठति संचरन्वै ।
अविप्रमुक्तो निरये च दैत्य
ततः सहस्राणि दशापराणि ॥ ४२

गतीः सहस्राणि च पञ्च तस्य
चत्वारि संवर्तकृतानि चैव ।
विमुक्तमेनं निरयाच्च विद्धि
सर्वेषु चान्येषु च संभवेषु ॥ ४३

स देवलोके विहरत्यभीक्ष्णं
ततश्च्युतो मानुषतामुपैति ।
संहारविक्षेपशतानि चाष्टौ
मर्त्येषु तिष्ठन्नमृतत्वमेति ॥ ४४

सोऽस्मादथ भ्रश्यति कालयोगा-
त्कृष्णे तले तिष्ठति सर्वकृष्टे ।
यथा त्वयं सिध्यति जीवलोक-
स्तत्तेऽभिधास्याम्यसुरप्रवीर ॥ ४५

दैवानि स व्यूहशतानि सप्त
रक्तो हरिद्रोऽथ तथैव शुक्लः ।
संश्रित्य संधावति शुक्लमेत-
मष्टावरानर्च्यतमान्स लोकान् ॥ ४६

अष्टौ च षष्टिं च शतानि चैव
मनोविरुद्धानि महाद्युतीनाम् ।
शुक्लस्य वर्णस्य परा गतिर्या
त्रीण्येव रुद्धानि महानुभाव ॥ ४७

संहारविक्षेपमनिष्टमेकं
चत्वारि चान्यानि वसत्यनीशः ।
षष्ठस्य वर्णस्य परा गतिर्या
सिद्धावसिद्धस्य गतक्लमस्य ॥ ४८

---

गत्वाशुयोनिप्रभावानतीत्येति ध. पाठः ॥ ३४ ॥ दर्शनमापजीव इति थ. ध. पाठः ॥ ३५ ॥ जीवगुणस्य दैत्येति झ. थ. पाठः ॥ ३६ ॥ प्रजानिसर्गात्सुबहून्वदन्तीति ट. थ. पाठः ॥ ३८ ॥ युगक्षये तपसेति झ. पाठः ॥ ३९ ॥ तिष्ठन्नमलत्वमेतीति ट. थ. पाठः ॥ ४४ ॥

सप्तोत्तरं तत्र वसत्यनीशः
संहारविक्षेपशतं सशेषः ।
संहारविक्षेपमनिष्टमेकं
चत्वारि चान्यानि वसत्यनीशः ।
तस्मादुपावृत्य मनुष्यलोके
ततो महान्मानुषतामुपैति ॥ ४९
तस्मादुपावृत्य ततः क्रमेण
सोऽग्रेण संतिष्ठति भूतसर्गम् ।
स सप्तकृत्वश्च परैति लोका-
न्संहारविक्षेपकृतप्रवासः ॥ ५०
सप्तैव संहारमुपप्लवानि
संभाव्य संतिष्ठति जीवलोके ।
ततोऽव्ययं स्थानमनन्तमेति
देवस्य विष्णोरथ ब्रह्मणश्च ।
शेषस्य चैवाथ नरस्य चैव
देवस्य विष्णोः परमस्य चैव ॥ ५१
संहारकाले परदग्धकाया
ब्रह्माणमायान्ति सदा प्रजाहि ।
चेष्टात्मनो देवगणाश्च सर्वे
ये ब्रह्मलोके ह्यमराः स्म तेऽपि ॥ ५२
प्रजानिसर्गे तु स शेषकाले
स्थानानि स्वान्येव सरन्ति जीवाः ।
निःशेषतस्तत्पदं यान्ति चान्ते
सर्वे देवा ये सदृशा मनुष्याः ॥ ५३
ये तु च्युताः सिद्धलोकात्क्रमेण
तेषां गतिं यान्ति यथाऽऽनुपूर्व्या ।
जीवाः परे तद्बलवेषरूपाः
स्वकं विधिं यान्ति विपर्ययेण ॥ ५४
स यावदेवास्ति सशेषभुक्तिः
प्रजाश्च देव्यौ च तथैव शुक्के ।
तावत्तदङ्गेषु विशुद्धभावः
संयम्य पञ्चेन्द्रियरूपमेतत् ॥ ५५
शुद्धां गतिं तां परमां प्रयाति
शुद्धेन नित्यं मनसा विचिन्वन् ।
ततोऽव्ययं स्थानमुपैति ब्रह्म
दुष्प्रापमन्येन स शाश्वतं वै ।
इत्येतदाख्यातमहीनसत्व
नारायणस्येह बलं मया ते ॥ ५६

वृत्र उवाच ।

एवं गते मे न विषादोस्ति कश्चि-
त्सम्यक्क पश्यामि वचस्तथैतत् ।
श्रुत्वा तु ते वाचमदीनसत्व
विकल्मषोस्म्यद्य तथा विपाप्मा ॥ ५७
प्रवृत्तमेतद्भगवन्महर्षे
महाद्युतेश्चक्रमनन्तवीर्यम् ।
विष्णोरनन्तस्य सनातनं त-
त्स्थानं सर्गा यत्र सर्वे प्रवृत्ताः ।
स वै महात्मा पुरुषोत्तमो वै
तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितम् ॥ ५८

भीष्म उवाच ।

एवमुक्त्वा स कौन्तेय वृत्रः प्राणानवासृजत् ।
योजयित्वा तथाऽऽत्मानं परं स्थानमवाप्तवान् ५९

युधिष्ठिर उवाच ।

अयं स भगवान्देवः पितामह जनार्दनः ।
सनत्कुमारो वृत्राय यत्तदाख्यातवान्पुरा ॥ ६०

भीष्म उवाच ।

मूलस्थायी स भगवान्स्वेनानन्तेन तेजसा ।
तत्स्थः सृजति तान्भावानात्मरूपान्महामनाः ६१
तुरीयांशेन तस्येमं विद्धि केशवमच्युतम् ।
'तुरीयांशेन ब्रह्माणं तस्य विद्धि महात्मनः ।'
तुरीयार्धेन लोकांस्त्रीन्भावयत्येव बुद्धिमान् ॥६२

स्वर्गे सुखं तिष्ठति भूतसर्गमिति ट. पाठः । विक्षेपकृतप्रभाव इति झ. पाठः ॥ ५० ॥ सिद्धिलोके इति थ. ध. पाठः । संतिष्ठति सर्वलोके इति ट. पाठः ॥ ५१ ॥ निश्शेषा वै तत्पदं यान्तीति ट. थ. ध. पाठः ॥ ५३ ॥ सशेषभाव इति ट. पाठः । दिव्याश्च तथैव शुक्के इति ध. पाठः । तावत्तरत्येप विशुद्धभाव इति ध. पाठः ॥ ५५ ॥ दुष्प्रापमभ्येति स इति झ. ट. ध. पाठः ॥ ५६ ॥ महादेवो भगवान्स्वेन तेजसेति झ. पाठः । नानारूपान्महामना इति झ. ट. थ. पाठः ॥ ६१ ॥

अर्वाक्स्थितस्तु यः स्थायी कल्पान्ते परिवर्तते।
स शेते भगवानप्सु योऽसावतिबलः प्रभुः ।
तान्विधाता प्रसन्नात्मा लोकांश्चरति शाश्वतान्६३
सर्वाण्यशून्यानि करोत्यनन्तः
सनातनः संचरते च लोकान् ।
स चानिरुद्धः सृजते महात्मा
तत्स्थं जगत्सर्वमिदं विचित्रम् ॥ ६४
युधिष्ठिर उवाच ।
वृत्रेण परमार्थज्ञ दृष्टा मन्येत्मनो गतिः ।
सुखात्तस्मात्स सुखितो न शोचति पितामह ॥ ६५
शुक्लः शुक्लाभिजातीयः साध्यो नावर्ततेऽनघ ।
तिर्यग्गतेश्च निर्मुक्तो निरयाच्च पितामह ॥ ६६
हारिद्रवर्णे रक्ते वा वर्तमानस्तु पार्थिव ।
तिर्यगेवानुपश्येत कर्मभिस्तामसैर्वृतः ॥ ६७
वयं तु भृशमापन्ना रक्ताः कष्टाः सुखेऽसुखे ।
कां गतिं प्रतिपत्स्यामो नीलां कृष्णाधमामथ ॥६८
भीष्म उवाच ।
शुद्धाभिजनसंपन्नाः पाण्डवाः संशितव्रताः ।
विहृत्य देवलोकेषु पुनर्मानुषमेष्यथ ॥ ६९
प्रजाविसर्गं च सुखेन लोके
प्रेत्यान्यदेहेषु सुखानि भुक्त्वा ।
सुखेन संयास्यथ सिद्धसङ्ख्यां
मा वो भयं भवतु न वोऽस्तु पापम् ॥ ७०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

## सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

भीष्मेण युधिष्ठिरंप्रति शक्रवृत्रयुद्धवर्णनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अहो धर्मिष्ठता तस्य वृत्रस्यामिततेजसः ।
यस्य विज्ञानमतुलं विष्णोर्भक्तिश्च तादृशी ॥ १
दुर्विज्ञेयमिदं तस्य विष्णोरमिततेजसः ।
कथं वा राजशार्दूल पदं तु ज्ञातवानसौ ॥ २
भवता कथितं ह्येतच्छ्रद्दधे चाहमच्युत ।
भूयश्च मे समुत्पन्ना बुद्धिरव्यक्तदर्शना ॥ ३
कथं विनिहतो वृत्रः शक्रेण भरतर्षभ ।
धार्मिको विष्णुभक्तश्च तत्त्वज्ञश्च तदन्वये ॥ ४
एतन्मे संशयं ब्रूहि पृच्छते भरतर्षभ ।
वृत्रः स राजशार्दूल यथा शक्रेण निर्जितः ॥ ५
यथा चैवाभवद्युद्धं तच्चाचक्ष्व पितामह ।
विस्तरेण महाबाहो परं कौतूहलं हि मे ॥ ६
भीष्म उवाच ।
रथेनेन्द्रः प्रयातो वै सार्धं सुरगणैः पुरा ।
ददर्शाथाग्रतो वृत्रं धिष्ठितं पर्वतोपमम् ॥ ७
योजनानां शतान्यूर्ध्वं पञ्चोच्छ्रितमरिंदम ।
शतानि विस्तरेणाथ त्रीणि चाभ्यधिकानि वै ॥८
तत्प्रेक्ष्य तादृशं रूपं त्रैलोक्येनापि दुर्जयम् ।
वृत्रस्य देवाः संत्रस्ता न शान्तिमुपलेभिरे ॥ ९
शक्रस्य तु तदा राजन्नूरुस्तम्भो व्यजायत ।
भयाद्वृत्रस्य सहसा दृष्ट्वा तद्रूपमुत्तमम् ॥ १०
ततो नादः समभवद्वादित्राणां च निःस्वनः ।
देवासुराणां सर्वेषां तस्मिन्युद्धे ह्युपस्थिते ॥ ११
अथ वृत्रस्य कौरव्य दृष्ट्वा शक्रमवस्थितम् ।
न संभ्रमो न भीः काचिदास्था वा समजायत ॥१२
ततः समभवद्युद्धं त्रैलोक्यस्य भयंकरम् ।
शक्रस्य च सुरेन्द्रस्य वृत्रस्य च महात्मनः ॥ १३
असिभिः पट्टसैः शूलैः शक्तितोमरमुद्गरैः ।
शिलाभिर्विविधाभिश्च कार्मुकैश्च महास्वनैः ॥१४

---

नत्कुमारश्चरते चेति ध. पाठः ॥ ६४ ॥ मन्ये शुभा गतिरिति . पाठः ॥ ६५ ॥ नावर्तते पुनरिति ध. पाठः ॥ ६६ ॥ ताः कामसुखेषु वै इति ध. पाठः । दुःखसुखेऽसुखे इति ज्ञ. पाठः ॥ ६८ ॥ प्रखेल्य देवेषु सुखानि भुक्त्वेति ज्ञ. पाठः । मा वो भयं भूद्विमलाः स्थ सर्वे इति च. ज्ञ. पाठः ॥ ७० ॥ षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

अस्त्रैश्च विविधैर्दिव्यैः पावकोल्काभिरेव च ।
देवासुरैस्ततः सैन्यैः सर्वमासीत्समाकुलम् ॥ १५
पितामहपुरोगाश्च सर्वे देवगणास्तदा ।
ऋषयश्च महाभागास्तद्युद्धं द्रष्टुमागमन् ॥ १६
विमानाग्र्यैर्महाराज सिद्धाश्च भरतर्षभ ।
गन्धर्वाश्च विमानाग्रैरप्सरोभिः समागमन् ॥ १७
ततोऽन्तरिक्षमावृत्य वृत्रो धर्मभृतां वरः ।
अश्मवर्षेण देवेन्द्रं सर्वतः समवाकिरत् ॥ १८
ततो देवगणाः क्रुद्धाः सर्वतः शरवृष्टिभिः ।
अश्मवर्षमपोहन्त वृत्रप्रेरितमाहवे ॥ १९
वृत्रस्तु कुरुशार्दूल महामायो महाबलः ।
मोहयामास देवेन्द्रं मायायुद्धेन सर्वशः ॥ २०
तस्य वृत्रार्दितस्याथ मोह आसीच्छतक्रतोः ।
रथन्तरेण तं तत्र वसिष्ठः समबोधयत् ॥ २१
वसिष्ठ उवाच ।
देवश्रेष्ठोऽसि देवेन्द्र दैत्यासुरनिबर्हण ।
त्रैलोक्यबलसंयुक्तः कस्माच्छक्र विषीदसि ॥ २२
एष ब्रह्मा च विष्णुश्च शिवश्चैव जगत्पतिः ।
सोमश्च भगवान्देवः सर्वे च परमर्षयः ॥ २३
'समुद्विग्नं समीक्ष्य त्वां स्वस्तीत्यूचुर्जयाय ते ।'
मा कार्षीः कश्मलं शक्र कश्चिदेवेतरो यथा ।
आर्या युद्धे मतिं कृत्वा जहि शत्रून्सुराधिप ॥ २४
एष लोकगुरुस्त्र्यक्षः सर्वलोकनमस्कृतः ।
निरीक्षते त्वां भगवांस्त्यज मोहं सुराधिप ॥ २५
एते ब्रह्मर्षयश्चैव बृहस्पतिपुरोगमाः ।
स्तवेन शक्र दिव्येन स्तुवन्ति त्वां जयाय वै ॥ २६
भीष्म उवाच ।
एवं संबोध्यमानस्य वसिष्ठेन महात्मना ।
अतीव वासवस्यासीद्बलमुत्तमतेजसः ॥ २७
ततो बुद्धिमुपागम्य भगवान्पाकशासनः ।
योगेन महता युक्तस्तां मायां व्यपकर्षत ॥ २८
ततोऽङ्गिरःसुतः श्रीमांस्ते चैव सुमहर्षयः ।
दृष्ट्वा वृत्रस्य विक्रान्तमुपागम्य महेश्वरम् ॥ २९
ऊचुर्वृत्रविनाशार्थं लोकानां हितकाम्यया ।
ततो भगवतस्तेजो ज्वरो भूत्वा जगत्पतेः ॥ ३०
समाविशत्तदा रौद्रं वृत्रं लोकपतिं तदा ।
विष्णुश्च भगवान्देवः सर्वलोकाभिपूजितः ॥ ३१
ऐन्द्रं समाविशद्वज्रं लोकसंरक्षणे रतः ।
ततो बृहस्पतिर्धीमानुपागम्य शतक्रतुम् ।
वसिष्ठश्च महातेजाः सर्वे च परमर्षयः ॥ ३२
ते समासाद्य वरदं वासवं लोकपूजितम् ।
ऊचुरेकाग्रमनसो जहि वृत्रमिति प्रभो ॥ ३३
महेश्वर उवाच ।
एष वृत्रो महाञ्शक्र बलेन महता वृतः ।
विश्वात्मा सर्वगश्चैव बहुमायश्च विश्रुतः ॥ ३४
तदेनमसुरश्रेष्ठं त्रैलोक्येनापि दुर्जयम् ।
जहि त्वं योगमास्थाय मावमंस्थाः सुरेश्वर ॥ ३५
अनेन हि तपस्तप्तं बलार्थममराधिप ।
षष्टिं वर्षसहस्राणि ब्रह्मा चास्मै वरं ददौ ॥ ३६
महत्त्वं योगिनां चैव महामायत्वमेव च ।
महाबलत्वं च तथा तेजश्चाग्र्यं सुरेश्वर ॥ ३७
एतत्त्वां मामकं तेजः समाविशति वासव ।
वृत्रमेवं त्ववध्यं तं वज्रेण जहि दानवम् ॥ ३८
शक्र उवाच ।
भगवंस्त्वत्प्रसादेन दितिजं सुदुरासदम् ।
वज्रेण निहनिष्यामि पश्यतस्ते सुरर्षभ ॥ ३९
भीष्म उवाच ।
आविश्यमाने दैत्ये तु ज्वरेणाथ महासुरे ।
देवतानामृषीणां च हर्षान्नादो महानभूत् ॥ ४०
ततो दुन्दुभयश्चैव शङ्खाश्च सुमहास्वनाः ।
मुरजा डिण्डिमाश्चैव प्रावाद्यन्त सहस्रशः ॥ ४१
असुराणां तु सर्वेषां स्मृतिलोपो महानभूत् ।
मायानाशश्च बलवान्क्षणेन समपद्यत ॥ ४२

अथान्तरे च तं तत्रेति ध. पाठः ॥ २१ ॥ सुरारातिनिबर्हणेति थ. पाठः ॥ २२ ॥ कश्चिदेव नरो यथेति ध. पाठः ॥ २४ ॥ एष देवगुरुस्त्वयेति ध. पाठः ॥ २५ ॥ स्तुवन्त्यास्तमजयाय वै इति ध. पाठः ॥ २६ ॥ बहुमायासु विश्रुत इति थ. पाठः ॥ ३४ ॥ धृतिलोपो महानभूत् इति थ. पाठः ॥ ४२ ॥ सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

तमाविष्टमथो ज्ञात्वा ऋषयो देवतास्तथा ।
स्तुवन्तः शक्रमीशानं तथा प्राचोदयन्नपि ॥ ४३
रथस्थस्य हि शक्रस्य युद्धकाले महात्मनः ।
ऋषिभिः स्तूयमानस्य रूपमासीत्सुदुर्दृशम् ॥ ४४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

## अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥

भीष्मेण युधिष्ठिरंप्रति शक्रकृतवृत्रसंहारकथनम् ॥ १ ॥ तथा शक्रमाक्रान्तवत्या ब्रह्महत्याया अग्न्यादिषु ब्रह्मकृतविभजनकथनम् ॥ २ ॥

भीष्म उवाच ।
वृत्रस्य तु महाराज ज्वराविष्टस्य सर्वशः ।
अभवन्यानि लिङ्गानि शरीरे तानि मे शृणु ॥ १
ज्वलितास्योऽभवद्धोरो वैवर्ण्यं चागमत्परम् ।
गात्रकम्पश्च सुमहाञ्श्वासश्चाप्यभवन्महान् ॥ २
रोमहर्षश्च तीव्रोऽभून्निःश्वासश्च महान्नृप ।
शिवा चाशिवसंकाशा तस्य वक्त्रात्सुदारुणा ॥ ३
निष्पपात महाघोरा स्मृतिर्नष्टास्य भारत ।
उल्काश्च ज्वलितास्तस्य दीप्ताः पार्श्वे प्रपेदिरे ॥ ४
गृध्राः कङ्का बलाकाश्च वाचोऽमुञ्चन्सुदारुणाः ।
वृत्रस्योपरि संहृष्टाश्चक्रवत्परिबभ्रमुः ॥ ५
ततस्तं रथमास्थाय देवाप्यायित आहवे ।
वज्रोद्यतकरः शक्रस्तं दैत्यं प्रत्यवैक्षत ॥ ६
अमानुषमथो नादं स मुमोच महासुरः ।
व्यजृम्भच्चैव राजेन्द्र तीव्रज्वरसमन्वितः ॥ ७
अथास्य जृम्भतः शक्रस्ततो वज्रमवासृजत् ।
स वज्रः सुमहातेजा कालान्तकयमोपमः ॥ ८
क्षिप्रमेव महाकायं वृत्रं दैत्यमपातयत् ।
ततो नादः समभवत्पुनरेव समन्ततः ॥ ९
वृत्रं विनिहितं दृष्ट्वा देवानां भरतर्षभ ।
वृत्रं तु हत्वा मघवा दानवारिर्महायशाः ॥ १०
वज्रेण विष्णुयुक्तेन दिवमेव समाविशत् ।
अथ वृत्रस्य कौरव्य शरीरादभिनिःसृता ॥ ११
ब्रह्महत्या महाघोरा रौद्रा लोकभयावहा ।
करालदशना भीमा विकृता कृष्णपिङ्गला ॥ १२
प्रकीर्णमूर्धजा चैव घोरनेत्रा च भारत ।
कपालमालिनी चैव कृत्येव भरतर्षभ ॥ १३
रुधिरार्द्रा च धर्मज्ञ चीरवल्कलवासिनी ।
साऽभिनिष्क्रम्य राजेन्द्र तादृग्रूपा भयावहा ॥ १४
वज्रिणं मृगयामास तदा भरतसत्तम ।
कस्यचित्त्वथ कालस्य वृत्रहा कुरुनन्दन ॥ १५
स्वर्गायाभिमुखः प्रायाल्लोकानां हितकाम्यया ।
सा विनिःसरमाणं तु दृष्ट्वा शक्रं महौजसम् ॥ १६
कण्ठे जग्राह देवेन्द्रं सुलग्ना चाभवत्तदा ।
स हि तस्मिन्समुत्पन्ने ब्रह्मवध्याकृते भये ॥ १७
नलिन्या बिसमध्यस्थ उवासाब्दगणान्बहून् ।
अनुसृत्य तु यत्नात्स तया वै ब्रह्महत्यया ॥ १८
तदा गृहीतः कौरव्य निस्तेजाः समपद्यत ।
तस्या व्यपोहने शक्रः परं यत्नं चकार ह ॥ १९
न चाशकत्तां देवेन्द्रो ब्रह्मवध्यां व्यपोहितुम् ।
गृहीत एव तु तया देवेन्द्रो भरतर्षभ ॥ २०
पितामहमुपागम्य शिरसा प्रत्यपूजयत् ।
ज्ञात्वा गृहीतं शक्रं स द्विजप्रवरवध्यया ॥ २१
ब्रह्मा स चिन्तयामास तदा भरतसत्तम ।
तामुवाच महाबाहो ब्रह्मवध्यां पितामहः ॥ २२
स्वरेण मधुरेणाथ सान्त्वयन्निव भारत ।
मुच्यतां त्रिदशेन्द्रोयं मत्प्रियं कुरु भामिनि ॥ २३
ब्रूहि किं ते करोम्यद्य कामं किं त्वमिहेच्छसि ॥ २४

स्मृतिः सा तस्य भारतेति झ. ध. पाठः ॥ ४ ॥ विसमेव समाविशदिति ध. पाठः ॥११॥ कृशा च भरतर्षभेति थ. ध. पाठः ॥१३॥ चीरवस्त्रा विभीषणेति थ. पाठः ॥१४॥ बिसान्निस्सरमाणंलिति ध. पाठः । जग्राह वध्या देवेन्द्रमिति झ. पाठः ॥ १६ ॥ बिसमध्यस्थो बभूवाब्दगणानिति थ. ध. पाठः ॥ १८ ॥ निश्चेष्टः समपद्यतेति, तस्याश्चापनये शक्र इति थ. पाठः ॥ १९ ॥

ब्रह्महत्योवाच ।
त्रिलोकपूजिते देवे प्रीते त्रैलोक्यकर्तरि ।
कृतमेव हि मन्यामि निवासं तु विधत्स्व मे ॥ २५
त्वया कृतेयं मर्यादा लोकसंरक्षणार्थिना ।
स्थापना वै सुमहती त्वया देव प्रवर्तिता ॥ २६
प्रीते तु त्वयि धर्मज्ञ सर्वलोकेश्वर प्रभो ।
शक्रादपगमिष्यामि निवासं संविधत्स्व मे ॥ २७
भीष्म उवाच ।
तथेति तां प्राह तदा ब्रह्मवध्यां पितामहः ।
उपायतः स शक्रस्य ब्रह्मवध्यां व्यपोहितुम् ॥ २८
ततः स्वयंभुवा ध्यातस्तत्र वह्निर्महात्मना ।
ब्रह्माणमुपसंगम्य ततो वचनमब्रवीत् ॥ २९
प्राप्तोऽस्मि भगवन्देव त्वत्सकाशमनिन्दित ।
यत्कर्तव्यं मया देव तद्भवान्वक्तुमर्हति ॥ ३०
ब्रह्मोवाच ।
बहुधा विभजिष्यामि ब्रह्मवध्यामिमामहम् ।
शक्रस्याद्य विमोक्षार्थं चतुर्भागं प्रतीच्छ वै ॥ ३१
अग्निरुवाच ।
मम मोक्षस्य कोऽन्तो वै ब्रह्मन्ध्यायस्व वै प्रभो ।
एतदिच्छामि विज्ञातुं तत्वतो लोकपूजित ॥ ३२
ब्रह्मोवाच ।
यस्त्वां ज्वलन्तमासाद्य स्वयं वै मानवः क्वचित् ।
बीजौषधिरसैर्वह्ने न यक्ष्यति तमोवृतः ॥ ३३
तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति ।
ब्रह्मवध्या हव्यवाह व्येतु ते मानसो ज्वरः ॥ ३४
इत्युक्तः प्रतिजग्राह तद्वचो हव्यकव्यभुक् ।
पितामहस्य भगवांस्तथा च तद्भूत्प्रभो ॥ ३५
ततो वृक्षौषधितृणं समाहूय पितामहः ।
इममर्थं महाराज वक्तुं समुपचक्रमे ॥ ३६
'इयं पुत्रादनुप्राप्ता ब्रह्महत्या महाभया ।
पुरुहूतं चतुर्थांशमस्या यूयं प्रतीच्छत ॥' ३७
ततो वृक्षौषधितृणं तथैवोक्तं यथातथम् ।
व्यथितं वह्निवद्राजन्ब्रह्माणमिदमब्रवीत् ॥ ३८
अस्माकं ब्रह्मवध्यायाः कोऽन्तो लोकपितामह ।
स्वभावनिहतानस्मान्न पुनर्हन्तुमर्हसि ॥ ३९
वयमग्निं तथा शीतं वर्षं च पवनेरितम् ।
सहामः सततं देव तथा च्छेदनभेदने ॥ ४०
ब्रह्मवध्यामिमामद्य भवतः शासनाद्वयम् ।
ग्रहीष्यामस्त्रिलोकेश मोक्षं चिन्तयतां भवान् ४१
ब्रह्मोवाच ।
पर्वकाले तु संप्राप्ते यो वै छेदनभेदनम् ।
करिष्यति नरो मोहात्तमेषाऽनुगमिष्यति ॥ ४२
भीष्म उवाच ।
ततो वृक्षौषधितृणमेवमुक्तं महात्मना ।
ब्रह्माणमभिसंपूज्य जगामाशु यथागतम् ॥ ४३
आहूयाप्सरसो देवस्ततो लोकपितामहः ।
वाचा मधुरया प्राह सान्त्वयन्निव भारत ॥ ४४
इयमिन्द्रादनुप्राप्ता ब्रह्मवध्या वराङ्गनाः ।
चतुर्थमस्या भागांशं मयोक्ताः संप्रतीच्छत ॥ ४५
अप्सरस ऊचुः ।
ग्रहणे कृतबुद्धीनां देवेश तव शासनात् ।
मोक्षं समयतोऽस्माकं चिन्तयस्व पितामह ॥ ४६
ब्रह्मोवाच ।
रजस्वलासु नारीषु यो वै मैथुनमाचरेत् ।
तमेषा यास्यति क्षिप्रं व्येतु वो मानसो ज्वरः ॥ ४७
भीष्म उवाच ।
तथेति हृष्टमनस इत्युक्त्वाऽप्सरसां गणाः ।
स्वानि स्थानानि संप्राप्य रेमिरे भरतर्षभ ॥ ४८
ततस्त्रिलोककृद्देवः पुनरेव महातपाः ।
अपः संचिन्तयामास ध्यातास्ताश्चाप्यथागमन् ४९
तास्तु सर्वाः समागम्य ब्रह्माणममितौजसम् ।
इदमूचुर्वचो राजन्प्रणिपत्य पितामहम् ॥ ५०
इमाः स्म देव संप्राप्तास्त्वत्सकाशमरिंदम ।
शासनात्तव लोकेश समाज्ञापय नः प्रभो ॥ ५१
ब्रह्मोवाच ।
इयं वृत्रादनुप्राप्ता पुरुहूतं महाभया ।

---

शक्रास्याघविमोक्षार्थमिति झ. पाठः ॥ ३१ ॥ यः आहिताग्निरधिकारी बीजैः पुरोडाशादिना ओषधिरसैः सोमेन पय‌आदिभिर्वा ॥ ३३ ॥ दैवेनाभिहतानस्मानिति झ. पाठः ॥ ३९ ॥ ततस्तु लोककृद्देव इति थ. पाठः ॥ ४९ ॥

सनत्कुमारप्रमुखास्तथैव च महर्षयः ।
अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे ॥ १०
विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ ।
अप्सरोगणसङ्घाश्च समाजग्मुरनेकशः ॥ ११
ववौ सुखः शिवो वायुर्नानागन्धवहः शुचिः ।
सर्वर्तुकुसुमोपेताः पुष्पवन्तो द्रुमास्तथा ॥ १२
तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ।
महादेवं पशुपतिं पर्युपासन्त भारत ॥ १३
भूतानि च महाराज नानारूपधराण्यथ ।
राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः ॥१४
बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ।
देवस्यानुचरास्तत्र तस्थिरे चानलोपमाः ॥ १५
नन्दी च भगवांस्तत्र देवस्यानुमते स्थितः ।
प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा ॥ १६
गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा ।
पर्युपासत तं देवं रूपिणी कुरुनन्दन ॥ १७
स एवं भगवांस्तत्र पूज्यमानः सुरर्षिभिः ।
देवैश्च सुमहातेजा महादेवो व्यतिष्ठत ॥ १८
कस्यचित्त्वथ कालस्य दक्षो नाम प्रजापतिः ।
पूर्वोक्तेन विधानेन यक्ष्यमाणोऽन्वपद्यत ॥ १९
ततस्तस्य मखं देवाः सर्वे शक्रपुरोगमाः ।
गमनाय समागम्य बुद्धिमापेदिरे तदा ॥ २०
ते विमानैर्महात्मानो ज्वलनार्कसमप्रभैः ।
देवस्यानुमतेऽगच्छन्गङ्गाद्वारमिति श्रुतिः ॥ २१
प्रस्थिता देवता दृष्ट्वा शैलराजसुता तदा ।
उवाच वचनं साध्वी देवं पशुपतिं पतिम् ॥ २२
भगवन्क्नु यान्त्येते देवाः शक्रपुरोगमाः ।
ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयम् ॥ २३
महेश्वर उवाच ।
दक्षो नाम महाभागे प्रजानां पतिरुत्तमः ।
हयमेधेन यजते तत्र यान्ति दिवौकसः ॥ २४
उमोवाच ।
यज्ञमेतं महादेव किमर्थं नाधिगच्छति ।
केन वा प्रतिषेधेन गमनं ते न विद्यते ॥ २५
महेश्वर उवाच ।
सुरैरेव महाभागे पूर्वमेतदनुष्ठितम् ।
यज्ञेषु सर्वेषु मम न भाग उपकल्पितः ॥ २६
पूर्वोपायोपपन्नेन मार्गेण वरवर्णिनि ।
न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्मतः ॥ २७
उमोवाच ।
भगवन्सर्वभूतेषु प्रभावाभ्यधिको गुणैः ।
अजय्यश्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ २८
अनेन ते महाभाग प्रतिषेधेन भागतः ।
अतीव दुःखमुत्पन्नं वेपथुश्च ममानघ ॥ २९
भीष्म उवाच ।
एवमुक्त्वा तु सा देवी देवं पशुपतिं पतिम् ।
तुष्णींभूताऽभवद्राजन्दह्यमानेन चेतसा ॥ ३०
अथ देव्या मतं ज्ञात्वा हृद्गतं यच्चिकीर्षितम् ।
स समाज्ञापयामास तिष्ठ त्वमिति नन्दिनम् ॥ ३१
ततो योगबलं कृत्वा सर्वयोगेश्वरेश्वरः ।
तं यज्ञं स महातेजा भीमैरनुचरैस्तदा ॥ ३२
सहसा घातयामास देवदेवः पिनाकधृत् ।
केचिन्नादानमुञ्चन्त केचिद्धासांश्च चक्रिरे ॥ ३३
रुधिरेणापरे राजंस्तत्राग्निं समवाकिरन् ।
केचिद्यूपान्समुत्पाट्य व्याक्षिपन्विकृताननाः ॥३४
आस्यैरन्ये चाग्रसन्त तथैव परिचारकान् ।
ततः स यज्ञो नृपतेर्वध्यमानः समन्ततः ॥ ३५
आस्थाय मृगरूपं वै खमेवाभ्यगमत्तदा ।
तं तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः ॥ ३६
धनुरादाय बाणेन तदान्वसरत प्रभुः ।
ततस्तस्य सुरेशस्य क्रोधादमिततेजसः ॥ ३७
ललाटात्प्रसृतो घोरः स्वेदबिन्दुर्बभूव ह ।
तस्मिन्पतितमात्रे च स्वेदबिन्दौ तदा भुवि ॥ ३८

तस्थिरे चाचलोपमा इति ध. पाठः ॥ १५ ॥ ज्वलितैर्ज्वलनप्रभैरिति ट. थ. ध. पापः ॥ २१ ॥ सर्वमेतदनुष्ठितमिति ट. ध. पाठः ॥ २६ ॥ प्रभवस्यधिको गुणैरिति ध. पाठः ॥२८॥
सर्वलोकमहेश्वर इति ध. पाठः ॥ ३२ ॥ आधाय मृगरूपं वै इति ध. पाठः ॥ ३६ ॥

प्रादुर्बभूव सुमहानग्निः कालानलोपमः ।
तत्र चाजायत तदा पुरुषः पुरुषर्षभ ॥ ३९
ह्रस्वोऽतिमात्रं रक्ताक्षो हरिश्मश्रुर्विभीषणः ।
ऊर्ध्वकेशोऽतिरोमाङ्गः श्येनोलूकस्तथैव च ॥ ४०
करालकृष्णवर्णश्च रक्तवासास्तथैव च ।
तं यज्ञं सुमहासत्त्वोऽदहत्कक्षमिवानलः ॥ ४१
व्यचरत्सर्वतो देवान्प्राद्रवत्स ऋषींस्तथा ।
देवाश्चाप्याद्रवन्सर्वे ततो भीता दिशो दश ॥ ४२
तेन तस्मिन्विचरता पुरुषेण विशांपते ।
पृथिवी ह्यचलद्राजन्नतीव भरतर्षभ ॥ ४३
हाहाभूतं जगत्सर्वमुपलक्ष्य तदा प्रभुः ।
पितामहो महादेवं दर्शयन्प्रत्यभाषत ॥ ४४
ब्रह्मोवाच ।
भवतोपि सुराः सर्वे भागं दास्यन्ति वै प्रभो ।
क्रियतां प्रतिसंहारः सर्वदेवेश्वर त्वया ॥ ४५
इमा हि देवताः सर्वा ऋषयश्च परंतप ।
तव क्रोधान्महादेव न शान्तिमुपलेभिरे ॥ ४६
यश्चैष पुरुषो जातः स्वेदात्ते विबुधोत्तम ।
ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥ ४७
एकीभूतस्य न त्वस्य धारणे तेजसः प्रभो ।
समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ॥ ४८
इत्युक्तो ब्रह्मणा देवो भागे चापि प्रकल्पिते ।
भगवन्तं तथेत्याह ब्रह्माणममितौजसम् ॥ ४९
परां च प्रीतिमगमदुत्स्मयंश्च पिनाकधृत् ।
अवाप च तदा भागं यथोक्तं ब्रह्मणा भवः ॥ ५०
ज्वरं च सर्वधर्मज्ञो बहुधा व्यसृजत्तदा ।
शान्त्यर्थं सर्वभूतानां शृणु तच्चापि पुत्रक ॥ ५१
शीर्षाभितापो नागानां पर्वतानां शिलाजतु ।
अपां तु नीलिकां विद्धि निर्मोकं भुजगेषु च ॥ ५२
खोरकः सौरभेयाणामूषरं पृथिवीतले ।
पशूनामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ॥ ५३
रन्ध्रागतमथाश्वानां शिखोद्भेदश्च बर्हिणाम् ।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मना ५४
अवीनां पित्तभेदश्च सर्वेषामिति नः श्रुतम् ।
शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः ॥ ५५
शार्दूलेष्वथ धर्मज्ञ श्रमो ज्वर इहोच्यते ।
मानुषेषु तु धर्मज्ञ ज्वरो नामैष विश्रुतः ॥ ५६
मरणे जन्मनि तथा मध्ये चाविशते नरम् ।
एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ॥ ५७
नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ।
अनेन हि समाविष्टो वृत्रो धर्मभृतां वरः ॥ ५८
व्यजृम्भत ततः शक्रस्तस्मै वज्रमवासृजत् ।
प्रविश्य वज्रं वृत्रं च दारयामास भारत ॥ ५९
दारितश्च स वज्रेण महायोगी महासुरः ।
जगाम परमं स्थानं विष्णोरमिततेजसः ॥ ६०
विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत्पुरा ।
तस्माच्च निहतो युद्धे विष्णोः स्थानमवाप्तवान् ६१
इत्येष वृत्रमाश्रित्य ज्वरस्य महतो मया ।
विस्तरः कथितः पुत्र किमन्यत्प्रब्रवीमि ते ॥ ६२
इमां ज्वरोत्पत्तिमदीनमानसः
पठेत्सदा यः सुसमाहितो नरः ।
विमुक्तरोगः स सुखी मुदा युतो
लभेत कामान्स यथा मनीषितान् ॥ ६३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

---

ऊर्ध्वकेशोतिरिक्ताङ्ग इति थ. पाठः ॥ ४० ॥ हाहाभूते प्रवृत्ते तु नादे लोकभयंकरे इति ट. ध. पाठः ॥ ४४ ॥ शिलाजतु धातुविशेषः । नीलिका शैवालम् ॥ ५२ ॥ खोरकः पशूनां पादरोगः ॥ ५३ ॥ रन्ध्रागतं अश्वगलरन्ध्रगतं मांसखण्डम् । रन्ध्रोद्गमनमश्वानामिति ट. थ. पाठः । रन्ध्रोद्भवश्च मत्स्यानामिति ध. पाठः ॥ ५४ ॥ पित्तभेदश्च सर्वेषां प्राणिनामिति नः श्रुतमिति ट. ध. पाठः ॥ ५५ ॥ एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

## नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

वीरभद्रेण दक्षयज्ञभङ्गः ॥ १ ॥ दक्षकृतस्तुतिप्रसन्नेन रुद्रेण दक्षाय वरदानम् ॥ २ ॥

जनमेजय उवाच ।
प्राचेतसस्य दक्षस्य कथं वैवस्वतेन्तरे ।
विनाशमगमद्ब्रह्मन्हयमेधः प्रजापतेः ।
'कथं स चाभवद्ब्रह्मन्हयमेधः प्रजापतेः ॥' १
देव्या मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः ।
प्रसादात्तस्य दक्षेण स यज्ञः संधितः कथम् ।
एतद्वेदितुमिच्छेयं तन्मे ब्रूहि यथातथम् ॥ २
वैशंपायन उवाच ।
पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत् ।
गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ॥ ३
गन्धर्वाप्सरसाकीर्णे नानाद्रुमलतावृते ।
ऋषिसङ्घैः परिवृतं दक्षं धर्मभृतां वरम् ॥ ४
पृथिव्यामन्तरिक्षे च ये च स्वर्लोकवासिनः ।
सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ॥ ५
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
हाहा हूहूश्च गन्धर्वौ तुम्बुरुर्नारदस्तथा ॥ ६
विश्वावसुर्विश्वसेनो गन्धर्वाप्सरसस्तथा ।
आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः॥७
इन्द्रेण सहिताः सर्वे आगता यज्ञभागिनः ।
ऊष्मपाः सोमपाश्चैव धूमपा आज्यपास्तथा ॥ ८
ऋषयः पितरश्चैव आगता ब्रह्मणा सह ।
एते चान्ये च बहवो भूतग्रामाश्चतुर्विधाः ॥ ९
जरायुजाण्डजाश्चैव सहसा स्वेदजोद्भिजैः ।
आहूता मन्त्रिताः सर्वे देवाश्च सह पत्निभिः ॥ १०
विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ।
तान्दृष्ट्वा मन्युनाऽऽविष्टो दधीचिर्वाक्यमब्रवीत् ॥
नायं यज्ञो न वा धर्मो यत्र रुद्रो न इज्यते ।
वधबन्धं प्रपन्ना वै किंतु कालस्य पर्ययः ॥ १२
किंतु मोहान्न पश्यन्ति विनाशं पर्युपस्थितम् ।
उपस्थितं भयं घोरं न बुध्यन्ति महाध्वरे ॥ १३

वधं च संप्रपन्ना वै किन्तु कालस्येति ध. पाठः ॥ १२ ॥

इत्युक्त्वा स महायोगी पश्यति ध्यानचक्षुषा ।
स पश्यति महादेवं देवीं च वरदां शुभाम् ॥ १४
नारदं च महात्मानं तस्या देव्याः समीपतः ।
संतोषं परमं लेभे इति निश्चित्य योगवित् ॥ १५
एकमन्त्रास्तु ते सर्वे येनेशो न निमन्त्रितः ।
तस्माद्देशादपक्रम्य दधीचिर्वाक्यमब्रवीत् ॥ १६
अपूज्यपूजनाच्चैव पूज्यानां चाप्यपूजनात् ।
नृघातकसमं पापं शश्वत्प्राप्नोति मानवः ॥ १७
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
देवतानामृषीणां च मध्ये सत्यं ब्रवीम्यहम्॥१८
आगतं पशुभर्तारं स्रष्टारं जगतः पतिम् ।
अध्वरे ह्यग्रभोक्तारं सर्वेषां पश्यत प्रभुम् ॥ १९
दक्ष उवाच ।
सन्ति नो बहवो रुद्राः शूलहस्ताः कपर्दिनः ।
एकादशस्थानगता नाहं वेद्मि महेश्वरम् ॥ २०
दधीचिरुवाच ।
सर्वेषामेव मन्त्रोऽयं येनासौ न निमन्त्रितः ।
यथाऽहं शंकरादूर्ध्वं नान्यं पश्यामि दैवतम् ।
तथा दक्षस्य विपुलो यज्ञोऽयं नभविष्यति॥ २१
दक्ष उवाच ।
एतन्मखेशाय सुवर्णपात्रे
हविः समस्तं विधिमन्त्रपूतम् ।
विष्णोर्नयाम्यप्रतिमस्य भागं
प्रभुर्विभुश्चाहवनीय एषः ॥ २२
देव्युवाच ।
किं नाम दानं नियमं तपो वा
कुर्यामहं येन पतिर्ममाद्य ।
'लभेत भागं च तथैव सर्वं
प्रभुर्विभुश्चाहवनीय एषः ।'
लभेत भागं भगवानचिन्त्यो
ह्यर्धं तथा भागमथो तृतीयम् ॥ २३

एवं ब्रुवाणां भगवान्स्वपत्नीं
प्रहृष्टरूपः क्षुभितामुवाच ।
न वेत्सि मां देवि कृशोदराङ्गि
किं नाम युक्तं वचनं मखेशे ॥ २४
अहं विजानामि विशालनेत्रे
ध्यानेन हीना न विदन्त्यसन्तः ।
तवाद्य मोहेन च सेन्द्रदेवा
लोकास्त्रयः सर्वत एव मूढाः ॥ २५
मामध्वरे शंसितारः स्तुवन्ति
रथन्तरं सामगाश्चोपगान्ति ।
मां ब्राह्मणा ब्रह्मविदो यजन्ते
ममाध्वर्यवः कल्पयन्ते च भागम् ॥ २६
देव्युवाच ।
सुप्राकृतोऽपि पुरुषः सर्वः स्त्रीजनसंसदि ।
स्तौति गर्वायते चापि स्वमात्मानं न संशयः ॥२७
श्रीभगवानुवाच ।
नात्मानं स्तौमि देवेशि पश्य मे तनुमध्यमे ।
यं स्रक्ष्यामि वरारोहे यागार्थे वरवर्णिनि ॥ २८
इत्युक्त्वा भगवान्पत्नीमुमां प्राणैरपि प्रियाम् ।
सोऽसृजद्भगवान्वक्त्राद्भूतं घोरं प्रहर्षणम् ॥ २९
तमुवाचाक्षिप मखं दक्षस्येति महेश्वरः ।
ततो वक्राद्विमुक्तेन सिंहेनैकेन लीलया ॥ ३०
देव्या मन्युव्यपोहार्थं हतो दक्षस्य वै क्रतुः ।
मन्युना च महाभीमा महाकाली महेश्वरी ॥ ३१
आत्मनः कर्मसाक्षित्वे तेन सार्धं सहानुगा ।
देवस्यानुमतं मत्वा प्रणम्य शिरसा ततः ॥ ३२
आत्मनः सदृशः शौर्याद्बलरूपसमन्वितः ।
स एव भगवान्क्रोधः प्रतिरूपसमन्वितः ॥ ३३
अनन्तबलवीर्यश्च अनन्तबलपौरुषः ।
वीरभद्र इति ख्यातो देव्या मन्युप्रमार्जकः ॥ ३४
सोऽसृजद्रोमकूपेभ्यो रौम्यान्नाम गणेश्वरान् ।
रुद्रतुल्या गणा रौद्रा रुद्रवीर्यपराक्रमाः ॥ ३५
ते निपेतुस्ततस्तूर्णं दक्षयज्ञविहिंसया ।
भीमरूपा महाकायाः शतशोऽथ सहस्रशः ॥ ३६
ततः किलकिलाशब्दैराकाशं पूरयन्ति च ।
तेन शब्देन महता त्रस्तास्तत्र दिवौकसः ॥ ३७
पर्वताश्च व्यशीर्यन्त चकम्पे च वसुंधरा ।
मारुताश्चैव घूर्णन्ते चुक्षुभे वरुणालयः ॥ ३८
अग्नयो नैव दीप्यन्ते नैव दीप्यति भास्करः ।
ग्रहा नैव प्रकाशन्ते नक्षत्राणि न चन्द्रमाः ॥ ३९
ऋषयो न प्रकाशन्ते न देवा न च मानुषाः ।
एवं तु तिमिरीभूते निर्दहन्त्यपमानिताः ॥ ४०
प्रहरन्त्यपरे घोरा यूपानुत्पाटयन्ति च ।
प्रमर्दन्ति तथा चान्ये विमर्दन्ति तथाऽपरे ॥ ४१
आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः ।
चूर्ण्यन्ते यज्ञपात्राणि दिव्यान्याभरणानि च ॥ ४२
विशीर्यमाणा दृश्यन्ते तारा इव नभस्तले ।
दिव्यान्नपानभक्ष्याणां राशयः पर्वतोपमाः ॥४३
क्षीरनद्योऽथ दृश्यन्ते घृतपायसकर्दमाः ।
दधिमण्डोदका दिव्याः खण्डशर्करवालुकाः ॥ ४४
षड्रसा निवहन्त्येता गुडकुल्या मनोरमाः ।
उच्चावचानि मांसानि भक्ष्याणि विविधानि च ४५
पानकानि च दिव्यानि लेह्यचोष्याणि यानि च ।
भुञ्जते विविधैर्वक्त्रैर्विलुम्पन्त्याक्षिपन्ति च ॥ ४६
रुद्रकोपान्महाकायाः कालाग्निसदृशोपमाः ।
क्षोभयन्सुरसैन्यानि भीषयन्तः समन्ततः ॥ ४७
क्रीडन्ति विविधाकाराश्चिक्षिपुः सुरयोषितः ।
रुद्रक्रोधात्प्रयत्नेन सर्वदेवैः सुरक्षितम् ॥ ४८
तं यज्ञमदहच्छीघ्रं रुद्रकर्मा समन्ततः ।
चकार भैरवं नादं सर्वभूतभयंकरम् ॥ ४९
छित्त्वा शिरो वै यज्ञस्य ननाद च मुमोद च ।
ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः ॥ ५०
ऊचुः प्राञ्जलयः सर्वे कथ्यतां को भवानिति ।
वीरभद्र उवाच ।
नाहं रुद्रो न वा देवी नैव भोक्तुमिहागतः ॥ ५१
देव्या मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः ।

क्षुभितो ह्युवाचेति ध. पाठः ॥ २४ ॥ यं ददामि वरारोहे योगार्थे इति ध. पाठः ॥ २८ ॥ प्रहरन्त्यध्वरे घोरा इति ध. पाठः ॥ ४१ ॥ क्षोभयन्त्यशुभैर्वक्त्रैरिति ध. पाठः ॥ ४७ ॥

द्रष्टुं वा नैव विप्रेन्द्रान्नैव कौतूहलेन वा ॥ ५२
तव यज्ञविघातार्थं संप्राप्तं विद्धि मामिह ।
वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः ॥५३
भद्रकालीति विख्याता देव्याः कोपाद्विनिःसृता ।
प्रेषितौ देवदेवेन यज्ञान्तिकमिहागतौ ॥ ५४
शरणं गच्छ विप्रेन्द्र देवदेवमुमापतिम् ।
वरं क्रोधोऽपि देवस्य वरदानं न चान्यतः ॥५५
वीरभद्रवचः श्रुत्वा दक्षो धर्मभृतां वरः ।
तोषयामास स्तोत्रेण प्रणिपत्य महेश्वरम् ॥ ५६
प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययम् ।
महादेवं महात्मानं विश्वस्य जगतः पतिम् ॥५७
दक्षप्रजापतेर्यज्ञे द्रव्यैस्तैः सुसमाहितैः ।
आहूता देवताः सर्वा ऋषयश्च तपोधनाः ॥ ५८
देवो नाहूयते तत्र विश्वकर्मा महेश्वरः ।
तत्र क्रुद्धा महादेवी गणांस्तत्र व्यसर्जयत् ॥ ५९
प्रदीप्ते यज्ञवाटे तु विद्रुतेषु द्विजातिषु ।
तारागणमनुप्राप्ते रौद्रे दीप्ते महात्मनि ॥ ६०
शूलनिर्भिन्नहृदयैः कूजद्भिः परिचारकैः ।
निखातोत्पाटितैर्यूपैरपविद्धैरितस्ततः ॥ ६१
उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृद्धिभिः ।
पक्षवातविनिर्धूतैः शिवाशतनिनादितैः ॥ ६२
यक्षगन्धर्वसङ्घैश्च पिशाचोरगराक्षसैः ।
प्राणापानौ संनिरुध्य वक्त्रस्थानेन यत्नतः ॥ ६३
विचार्य सर्वतो दृष्टिं बहुदृष्टिरमित्रजित् ।
सहसा देवदेवेशो ह्यग्निकुण्डात्समुत्थितः ॥ ६४
बिभ्रत्सूर्यसहस्रस्य तेजः संवर्तकोपमः ।
स्मितं कृत्वाऽब्रवीद्वाक्यं ब्रूहि किं करवाणि ते ॥ ६५
श्राविते च मखाध्याये देवानां गुरुणा ततः ।
तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः ॥ ६६
भीतशङ्कितवित्रस्तः सबाष्पवदनेक्षणः ।
यदि प्रसन्नो भगवान्यदि चाहं भवत्प्रियः ॥ ६७
यदि वाऽहमनुग्राह्यो यदि वा वरदो मम ।
यद्दग्धं भक्षितं पीतमशितं यच्च नाशितम् ॥ ६८
चूर्णीकृतापविद्धं च यज्ञसंभारमीदृशम् ।
दीर्घकालेन महता प्रयत्नेन सुसंचितम् ।
तन्न मिथ्या भवेन्मह्यं वरमेतमहं वृणे ॥ ६९
तथाऽस्त्वित्याह भगवान्भगनेत्रहरो हरः ।
धर्माध्यक्षो विरूपाक्षस्त्र्यक्षो देवः प्रजापतिः ॥ ७०
जानुभ्यामवनीं गत्वा दक्षो लब्ध्वा भवाद्वरम् ।
नाम्नामष्टसहस्रेण स्तुतवान्वृषभध्वजम् ॥ ७१
युधिष्ठिर उवाच ।
यैर्नामधेयैः स्तुतवान्दक्षो देवं प्रजापतिः ।
वक्तुमर्हसि मे तात श्रोतुं श्रद्धा ममानघ ॥ ७२
भीष्म उवाच ।
श्रूयतां देवदेवस्य नामान्यद्भुतकर्मणः ।
गूढव्रतस्य गुह्यानि प्रकाशानि च भारत ॥ ७३
नमस्ते देवदेवेश देवारिबलसूदन ।
देवेन्द्रबलविष्टम्भ देवदानवपूजित ॥ ७४
सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय ।
सर्वतः पाणिपादान्त सर्वतोक्षिशिरोमुख ॥ ७५
सर्वतः श्रुतिमँल्लोके सर्वमावृत्य तिष्ठसि ।
शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय ॥ ७६
गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोस्तु ते ।
शतोदर शतावर्त शतजिह्व नमोस्तु ते ॥ ७७
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणं त्वा शतक्रतुमूर्ध्वं खमिव मेनिरे ॥ ७८
मूर्तौ हि ते महामूर्ते समुद्राम्बरसन्निभ ।
सर्वा वै देवता ह्यस्मिन्गावो गोष्ठ इवासते ॥ ७९
भवच्छरीरे पश्यामि सोममग्निं जलेश्वरम् ।
आदित्यमथ वै विष्णुं ब्रह्माणं च बृहस्पतिम् ॥८०
भगवान्कारणं कार्यं क्रिया करणमेव च ।
असतश्च सतश्चैव तथैव प्रभवाप्ययौ ॥ ८१
नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यं नमोस्त्वन्धकघातिने ॥ ८२

यज्ञघातविनिर्घातैः शिवाशतनिनादितैरिति ध. पाठः ॥ ६२ ॥ वक्त्रस्थानेन पद्मासनापरपर्यायेण योगासनेन ॥ ६३ ॥ तूणी- कृतापविद्धं चेति ध. पाठः ॥ ६९ ॥ खमिव येमिरे इति ध. पाठः ॥ ७८ ॥

त्रिजटाय त्रिशीर्षाय त्रिशूलवरपाणिने ।
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ॥ ८३
नमश्चण्डाय कुण्डाय अण्डायाण्डधराय च ।
दण्डिने समकर्णाय दण्डिमुण्डाय वै नमः ॥ ८४
नमोर्ध्वदंष्ट्रकेशाय शुक्रायावतताय च ।
विलोहिताय धूम्राय नीलग्रीवाय वै नमः ॥ ८५
नमोस्त्वप्रतिरूपाय विरूपाय शिवाय च ।
सूर्याय सूर्यमालाय सूर्यध्वजपताकिने ॥ ८६
नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ।
शत्रुंदमाय दण्डाय पर्णचीरपटाय च ॥ ८७
नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
हिरण्यकृतचूडाय हिरण्यपतये नमः ॥ ८८
नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः ।
सर्वाय सर्वभक्षाय सर्वभूतान्तरात्मने ॥ ८९
नमो होत्रेऽथ मन्त्राय शुक्लध्वजपताकिने ।
नमो नाभाय नाभ्याय नमः कटकटाय च ॥ ९०
नमोस्तु कृशनासाय कृशाङ्गाय कृशाय च ।
संहृष्टाय विहृष्टाय नमः किलकिलाय च ॥ ९१
नमोस्तु शयमानाय शयितायोत्थिताय च ।
स्थिताय धावमानाय मुण्डाय जटिलाय च ॥ ९२
नमो नर्तनशीलाय मुखवादित्रवादिने ।
नाद्योपहारलुब्धाय गीतवादित्रशालिने ॥ ९३
नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ।
कालनाथाय कल्याय क्षयायोपक्षयाय च ॥ ९४
भीमदुन्दुभिहासाय भीमव्रतधराय च ।
उग्राय च नमो नित्यं नमोस्तु दशबाहवे ॥ ९५
नमः कपालहस्ताय चितिभस्मप्रियाय च ।
विभीषणाय भीष्माय भीमव्रतधराय च ॥ ९६
नमो विकृतवक्त्राय खड्गजिह्वाय दंष्ट्रिणे ।
पक्वाममांसलुब्धाय तुम्बीवीणाप्रियाय च ॥ ९७
नमो वृषाय वृष्याय गोवृषाय वृषाय च ।
कटंकटाय दण्डाय नमः पचपचाय च ॥ ९८
नमः सर्ववरिष्ठाय वराय वरदाय च ।
वरमाल्यगन्धवस्त्राय वरातिवरदे नमः ॥ ९९
नमो रक्तविरक्ताय भावनायाक्षमालिने ।
संभिन्नाय विभिन्नाय च्छायायातपनाय च ॥१००
अघोरघोररूपाय घोरघोरतराय च ।
नमः शिवाय शान्ताय नमः शान्ततमाय च १०१
एकपाद्बहुनेत्राय एकशीर्ष्णे नमोस्तु ते ।
रुद्राय क्षुद्रलुब्धाय संविभागप्रियाय च ॥ १०२
पञ्चालाय सिताङ्गाय नमः शमशमाय च ।
नमश्चण्डिकघण्टाय घण्टायाघण्टघण्टिने ॥ १०३
सहस्राध्मातघण्टाय घण्टामालाप्रियाय च ।
प्राणघण्टाय गन्धाय नमः कलकलाय च ॥१०४
हूंहूंहूंकारपाराय हूंहूंकारप्रियाय च ।
नमः शमशमे नित्यं गिरिवृक्षालयाय च ॥ १०५
गर्भमांसशृगालाय तारकाय तराय च ।
नमो यज्ञाय यजिने हुताय प्रहुताय च ॥ १०६
यज्ञवाहाय दान्ताय तप्यायातपनाय च ।
नमस्तटाय तट्याय तटानां पतये नमः ॥ १०७
अन्नदायान्नपतये नमस्त्वन्नभुजे तथा ।
नमः सहस्रशीर्षाय सहस्रचरणाय च ॥ १०८
सहस्रोद्यतशूलाय सहस्रनयनाय च ।
नमो बालार्कवर्णाय बालरूपधराय च ॥ १०९
बालानुचरगोप्त्राय बालक्रीडनकाय च ।
नमोवृद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च ॥ ११०
तरङ्गाङ्कितकेशाय मुञ्जकेशाय वै नमः ।
नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च ॥ १११
वर्णाश्रमाणां विधिवत्पृथक्कर्मनिवर्तिने ।
नमो घुष्याय घोषाय नमः कलकलाय च ॥ ११२
श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च ।
प्राणभग्नाय दण्डाय स्फोटनाय कृशाय च ॥ ११३

नमश्चण्डाय मुण्डायेति ध. पाठः ॥ ८४ ॥ शुद्धायात्मकृताय चेति ध. पाठः ॥ ८५ ॥ महामात्राय मन्त्रायेति ध. पाठः ॥ ९० ॥ बहुजिह्वाय दंष्ट्रिणे इति ध. पाठः ॥ ९७ ॥ क्रिड-क्रिडाय चण्डायेति ध. पाठः ॥ ९८ ॥ नमश्चण्डिकदण्डाय चण्डायादन्डदण्डिने इति ध. पाठः ॥ १०३ ॥ सहस्रधातुचण्डाय रुण्डमालाप्रियाय चेति ध. पाठः ॥ १०४ ॥ बालसूर्यधराय चेति ध. पाठः ॥ १०९ ॥ बालातुराणां गोपायेति ध. पाठः ॥ ११० ॥

धर्मकामार्थमोक्षाणां कथनीयकथाय च ।
साङ्ख्याय साङ्ख्यमुख्याय साङ्ख्ययोगप्रवर्तिने॥११४
नमो रथ्यविरथ्याय चतुष्पथरथाय च ।
कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥ ११५
ईशानवज्रसंघातहरिकेश नमोस्तु ते ।
त्र्यम्बकाम्बिकनाथाय व्यक्ताव्यक्त नमोस्तु ते ॥
काम कामद कामघ्न तृप्तातृप्तविचारिणे ।
सर्व सर्वद सर्वघ्न संन्ध्याराग नमोस्तु ते ॥ ११७
'महाबल महाबाहो महासत्व महाद्युते ।
महामेघचयप्रख्य महाकाल नमोस्तु ते ।
स्थूलजीर्णाङ्गजटिले वल्कलाजिनधारिणे ॥ ११८
दीप्तसूर्याग्निजटिने वल्कलाजिनवाससे ।
सहस्रसूर्यप्रतिम तपोनित्य नमोस्तु ते ॥ ११९
उन्मादनशतावर्त गङ्गातोयार्द्रमूर्धज ।
चन्द्रवर्त युगावर्त मेघावर्त नमोस्तु ते ॥ १२०
त्वमन्नमत्ता भोक्ता च अन्नदोऽन्नभुगेव च ।
अन्नस्रष्टा च पक्ता च पक्वभुक्पवनोऽनलः॥ १२१
जरायुजाण्डजाश्चैव स्वेदजाश्च तथोद्भिजाः ।
त्वमेव देवदेवेश भूतग्रामश्चतुर्विधः ॥ १२२
चराचरस्य स्रष्टा त्वं प्रतिहर्ता तथैव च ।
त्वामाहुर्ब्रह्मविदुषो ब्रह्म ब्रह्मविदांवर ॥ १२३
मनसः परमा योनिः खं वायुर्ज्योतिषां निधिः ।
ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः१२४
हायिहायि हुवाहायि हावुहायि तथाऽसकृत् ।
गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥१२५
यजुर्मयो ऋङ्मयश्च त्वमाहुतिमयस्तथा ।
पठ्यसे स्तुतिभिश्चैव वेदोपनिषदां गणैः ॥ १२६
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ।
त्वमेव मेघसङ्घाश्च विद्युत्स्तनितगर्जितः ॥ १२७
संवत्सरस्त्वामृतवो मासो मासार्धमेव च ।
युगं निमेषाः काष्ठास्त्वं नक्षत्राणि ग्रहाः कलाः ॥
वृक्षाणां ककुदोसि त्वं गिरीणां शिखराणि च ।
व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम्॥
क्षीरोदो ह्युदधीनां च यन्त्राणां धनुरेव च ।
वज्रः प्रहरणानां च व्रतानां सत्यमेव च ॥ १३०
त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ १३१
त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा ।
छेत्ता भेत्ता प्रहर्ता त्वं नेता मन्ता पिता मतः १३२
दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
गङ्गा समुद्राः सरितः पल्वलानि सरांसि च॥ १३३
लता वल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मसमारम्भः कालः पुष्पफलप्रदः ॥ १३४
आदिश्चान्तश्च देवानां गायत्र्योङ्कार एव च ।
हरितो रोहितो नीलः कृष्णो रक्तस्तथाऽरुणः ।
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ॥ १३५
अवर्णश्च सुवर्णश्च वर्णकारो घनोपमः ।
सुवर्णनामा च तथा सुवर्णप्रिय एव च ॥ १३६
त्वमिन्द्रश्च यमश्चैव वरुणो धनदोऽनलः ।
उपप्लवश्चित्रभानुः स्वर्भानुर्भानुरेव च ॥ १३७
होत्रं होता च होम्यं च हुतं चैव तथा प्रभुः ।
त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियम् ॥१३८
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
गिरिको हिण्डुको वृक्षो जीवः पुद्गल एव च ॥१३९
प्राणः सत्त्वं रजश्चैव तमश्चाप्रमदस्तथा ।
प्राणोपानः समानश्च उदानो व्यान एव च॥ १४०
उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च ।
लोहितान्तर्गता दृष्टिर्महावक्त्रो महोदरः ॥ १४१
सूचीरोमा हरिश्मश्रुरूर्ध्वकेशश्चलाचलः ।
गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः ॥ १४२
मत्स्यो जलचरो जाल्योऽकलः केलिकलः कलिः ।
अकालश्चातिकालश्च दुष्कालः काल एव च ॥१४३
मृत्युः क्षुरश्च कृत्यश्च पक्षोऽपक्षक्षयंकरः ।
मेघकालो महादंष्ट्रः संवर्तकबलाहकः ॥ १४४
घण्टोऽघण्टो घटी घण्टी चरुचेली मिलीमिली ।
ब्रह्मकायिकमग्नीनां दण्डी मुण्डस्त्रिदण्डधृक्॥१४५

सांख्याय सांख्ययोगायेति ध. पाठः ॥ ११४ ॥ ईशानब्रह्मसंभूतेति ध. पाठः ॥ ११६ ॥

नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्तकः ।
चातुराश्रम्यनेता च चातुर्वर्ण्यकरश्च यः ॥ १४६
सदा चाक्षप्रियो धूर्तो गणाध्यक्षो गणाधिपः ।
रक्तमाल्याम्बरधरो गिरिशो गिरिकप्रियः ॥१४७
शिल्पिकः शिल्पिनांश्रेष्ठः सर्वशिल्पप्रवर्तकः ।
भगनेत्राङ्कुशश्चण्डः पूष्णो दन्तविनाशनः ॥ १४८
स्वाहास्वधावषट्कारो नमस्कारो नमो नमः ।
गूढव्रतो गुह्यतपास्तारकस्तारकामयः ॥ १४९
धाता विधाता संधाता विधाता धारणो धरः ।
ब्रह्मा तपश्च सत्यं च ब्रह्मचर्यमथार्जवम् ॥ १५०
भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ।
भूर्भुवःस्वरितश्चैव ध्रुवो दान्तो महेश्वरः ॥ १५१
दीक्षितोऽदीक्षितः क्षान्तो दुर्दान्तोऽदान्तनाशनः।
चन्द्रावर्तयुगावर्तः संवर्तः संप्रवर्तकः ॥ १५२
कामो बिन्दुरणुः स्थूलः कर्णिकारस्रजप्रियः ।
नन्दीमुखो भीममुखः सुमुखो दुर्मुखोऽमुखः॥१५३
चतुर्मुखो बहुमुखो रणेष्वग्निमुखस्तथा ।
हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट् ॥ १५४
अधर्महा महापार्श्वश्चण्डधारो गणाधिपः ।
गोनर्दो गोप्रतारश्च गोवृषेश्वरवाहनः ॥ १५५
त्रैलोक्यगोप्ता गोविन्दो गोमार्गोऽमार्ग एव च ।
श्रेष्ठः स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च १५६
दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः ।
दुर्धर्षो दुष्प्रकम्पश्च दुर्विषो दुर्जयो जयः ॥ १५७
शशः शशाङ्कः शमनः शीतोष्णक्षुज्जराधिकृत् ।
आधयो व्याधयश्चैव व्याधिहा व्याधिरेव च॥१५८
मम यज्ञमृगव्याधो व्याधीनामागमो गमः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः ॥१५९
दण्डधारस्त्र्यम्बकश्च उग्रदण्डोऽण्डनाशनः ।
विषाग्निपाः सुरश्रेष्ठः सोमपास्त्वं मरुत्पतिः ॥१६०
अमृतपास्त्वं जगन्नाथ देवदेव गणेश्वरः ।
विषाग्निपा मृत्युपाश्च क्षीरपाः सोमपास्तथा ।
मधुश्च्युतानामग्रपास्त्वं त्वमेव तुषिताद्यपाः ॥१६१

हिरण्यरेताः पुरुषस्त्वमेव
त्वं स्त्री पुमांस्त्वं च नपुंसकं च ।
बालो युवा स्थविरो जीर्णदंष्ट्रस्त्वं
नागेन्द्र शक्रस्त्वं विश्वकृद्विश्वकर्ता॥ १६२
विश्वकृद्विश्वकृतां वरेण्यस्त्वं विश्वबाहो
विश्वरूपस्तेजस्वी विश्वतोमुखः ।
चन्द्रादित्यौ चक्षुषी ते हृदयं च पितामहः १६३
महोदधिः सरस्वती वाग्बलमनलोऽ
निलः अहोरात्रं निमेषोन्मेषकर्मा ॥ १६४
न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव १६५
या मूर्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम् ।
त्राहि मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ १६६
रक्ष मां रक्षणीयोऽहं तवानघ नमोस्तु ते ।
भक्तानुकम्पी भगवान्भक्तश्चाहं सदा त्वयि॥१६७
यः सहस्राण्यनेकापि पुंसामावृत्य दुर्दृशः ।
तिष्ठत्येकः समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः१६८
यं विनिद्रा जितश्वासाः सत्वस्थाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥
जटिले दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ १७०
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ १७१
संभक्ष्य सर्वभूतानि युगान्ते पर्युपस्थिते ।
यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥१७२
प्रविश्य वदनं राहोर्यः सोमं पिबते निशि ।
ग्रसत्यर्कं च स्वर्भानुर्भूत्वा मां सोऽभिरक्षतु ॥१७३
ये चानुपतिता गर्भा यथा भागानुपासते ।
नमस्तेभ्यः स्वधा स्वाहा प्राप्नुवन्तु मुदं तु ते॥ १७४
येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् ।
रक्षन्तु ते हि मां नित्यं नित्यं चाप्याययन्तु माम् ॥
येन रोदन्ति देहस्था देहिनो रोदयन्ति च ।
हर्षयन्ति न हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः१७६
ये नदीषु समुद्रेषु पर्वतेषु गुहासु च ।

वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च ॥ १७७
चतुष्पथेषु रथ्यासु चत्वरेषु तटेषु च ।
हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥ १७८
येषु पञ्चसु भूतेषु दिशासु विदिशासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥ १७९
रसातलगता ये च ये च तस्मै परं गताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योस्तु नित्यशः १८०
येषां न विद्यते सङ्ख्या प्रमाणं रूपमेव च ।
असंख्येयगुणा रुद्रा नमस्तेभ्योस्तु नित्यशः १८१
सर्वभूतकरो यस्मात्सर्वभूतपतिर्हरः ।
सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ॥ १८२
त्वमेव हीज्यसे यस्माद्यज्ञैर्विविधदक्षिणैः ।
त्वमेव कर्ता सर्वस्य तेन त्वं न निमन्त्रितः ॥ १८३
अथवा मायया देव सूक्ष्मया तव मोहितः ।
एतस्मात्कारणाद्वाऽपि तेन त्वं न निमन्त्रितः १८४
प्रसीद मम भद्रं ते भव भावगतस्य मे ।
त्वयि मे हृदयं देव त्वयि बुद्धिर्मनस्त्वयि ॥ १८५
स्तुत्वैवं स महादेवं विरराम प्रजापतिः ।
भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ १८६
परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ।
बहुनात्र किमुक्तेन मत्समीपे भविष्यसि ॥ १८७
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्रजापते मत्प्रसादात्फलभागी भविष्यसि ॥१८८
अथैनमब्रवीद्वाक्यं लोकस्याधिपतिर्भवः ।
आश्वासनकरं वाक्यं वाक्यविद्वाक्यसंमितम्१८९
दक्ष दक्ष न कर्तव्यो मन्युर्विघ्नमिमं प्रति ।
अहं यज्ञहरस्तुभ्यं दृष्टमेतत्पुरातनम् ॥ १९०
भूयश्च ते वरं दद्मि तं त्वं गृह्णीष्व सुव्रत ।
प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ॥ १९१
वेदात्षडङ्गादुद्धृत्य साङ्ख्ययोगाच्च युक्तितः ।
तपः सुतप्तं विपुलं दुश्चरं देवदानवैः ॥ १९२
अपूर्वं सर्वतोभद्रं सर्वतोमुखमव्ययम् ।
अब्दैर्दशाहसंयुक्तं गूढमप्राज्ञनिन्दितम् ॥ १९३
वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ।
गतान्तैरध्यवसितमत्याश्रममिदं व्रतम् ॥ १९४
मया पाशुपतं दक्ष शुभमुत्पादितं पुरा ।
तस्य चीर्णस्य तत्सम्यक्फलं भवति पुष्कलम् १९५
तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः ।
एवमुक्त्वा महादेवः सपत्नीकः सहानुगः ।
अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ १९६
दक्षप्रोक्तं स्तवमिमं कीर्तयेद्यः शृणोति वा ।
नाशुभं प्राप्नुयात्किंचिद्दीर्घमायुरवाप्नुयात् ॥ १९७
यथा सर्वेषु देवेषु वरिष्ठो भगवाञ्छिवः ।
तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मसंमितः ॥१९८
यशोराज्यसुखैश्वर्यकामार्थधनकाङ्क्षिभिः ।
श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः १९९
व्याधितो दुःखितो दीनश्चोरग्रस्तो भयार्दितः ।
राजकार्याभियुक्तो वा मुच्यते महतो भयात् २००
अनेनैव तु देहेन गणानां समतां व्रजेत् ।
तेजसा यशसा चैव युक्तो भवति निर्मलः ॥२०१
न राक्षसाः पिशाचा वा न भूता न विनायकाः ।
विघ्नं कुर्युर्गृहे तस्य यत्रायं पठ्यते स्तवः ॥ २०२
शृणुयाच्चैव या नारी तद्भक्ता ब्रह्मचारिणी ।
पितृपक्षे मातृपक्षे पूज्या भवति देववत् ॥ २०३
शृणुयाद्यः स्तवं कृत्स्नं कीर्तयेद्वा समाहितः ।
तस्य सर्वाणि कर्माणि सिद्धिं गच्छन्त्यभीक्ष्णशः ॥
मनसा चिन्तितं यच्च यच्च वाचाऽनुकीर्तितम् ।
सर्वं संपद्यते तस्य स्तवस्यास्यानुकीर्तनाम् ॥ २०५
देवस्य च गुहस्यापि देव्या नन्दीश्वरस्य च ।
बलिं सुविहितं कृत्वा दमेन नियमेन च ॥ २०६
ततस्तु युक्तो गृह्णीयान्नामान्याशु यथाक्रमम् ।
ईप्सिताँल्लभते सोर्थान्भोगान्कामांश्च मानवः२०७
मृतश्च स्वर्गमाप्नोति तिर्यक्षु च न जायते ।
इत्याह भगवान्व्यासः पराशरसुतः प्रभुः ॥२०८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

## एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

भीष्मेण युधिष्ठिरं प्रत्यध्यात्मकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अध्यात्मं नाम यदिदं पुरुषस्येह विद्यते ।
यदध्यात्मं यतश्चैव तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
सर्वज्ञानं परं बुद्ध्या यन्मां त्वमनुपृच्छसि ।
तद्व्याख्यास्यामि ते तात तस्य व्याख्यामिमां शृणु २
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ ३
स तेषां गुणसंघातः शरीरं भरतर्षभ ।
सततं हि प्रलीयन्ते गुणास्ते प्रभवन्ति च ॥ ४
ततः सृष्टानि भूतानि तानि यान्ति पुनः पुनः ।
महाभूतानि भूतेभ्य ऊर्मयः सागरे यथा ॥ ५
प्रसारयित्वेहाङ्गानि कूर्मः संहरते यथा ।
तद्वद्भूतानि भूतानामल्पीयांसि स्थवीयसाम् ॥ ६
आकाशात्खलु यो घोषः संघातस्तु महीगुणः ।
वायोः प्राणो रसस्त्वद्भ्यो रूपं तेजस उच्यते ॥ ७
इत्येतन्मयमेवैतत्सर्वं स्थावरजङ्गमम् ।
प्रलये च तमभ्येति तस्मादुद्दिश्यते पुनः ॥ ८
महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
विषयान्कल्पयामास यस्मिन्यदनुपश्यति ॥ ९
शब्दश्श्रोत्रे तथा खानि त्रयमाकाशयोनिजम् ।
रसः स्नेहश्च जिह्वा च अपामेते गुणाः स्मृताः ॥ १०
रूपं चक्षुर्विपाकश्च त्रिविधं ज्योतिरुच्यते ।
घ्रेयं घ्राणं शरीरं च एते भूमिगुणाः स्मृताः ॥ ११
प्राणः स्पर्शश्च चेष्टा च वायोरेते गुणाः स्मृताः ।
इति सर्वगुणा राजन्व्याख्याताः पाञ्चभौतिकाः ॥
सत्त्वं रजस्तमः कालः कर्म बुद्धिश्च भारत ।
मनःषष्ठानि चैतेषु ईश्वरः समकल्पयत् ॥ १३
यदूर्ध्वपादतलयोरवाङ्मूर्ध्नश्च पश्यसि ।
एतस्मिन्नेव कृत्स्नेयं वर्तते बुद्धिरन्तरे ॥ १४
इन्द्रियाणि नरे पञ्च षष्ठं तु मन उच्यते ।
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञः पुनरष्टमः ॥ १५
इन्द्रियाणि च कर्ता च विचेतव्यानि भागशः ।
तमः सत्वं रजश्चैव तेऽपि भावास्तदाश्रयाः ॥ १६
चक्षुरालोचनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १७
तमः सत्वं रजश्चेति कालः कर्म च भारत ।
गुणैर्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाणि च ।
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ १८
येन पश्यति तच्चक्षुः शृण्वती श्रोत्रमुच्यते ।
जिघ्रती भवति घ्राणं रसती रसना रसान् ॥ १९
स्पर्शनं स्पर्शती स्पर्शान्बुद्धिर्विक्रियतेऽसकृत् ।
यदा प्रार्थयते किंचित्तदा भवति सा मनः ॥ २०
अधिष्ठानानि बुद्ध्या हि पृथगेतानि पञ्चधा ।
इन्द्रियाणीति तान्याहुस्तेषु दुष्टेषु दुष्यति ॥ २१
पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्तते ।
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति ॥ २२
न सुखेन न दुःखेन कदाचिदपि वर्तते ।
सेयं भावात्मिका भावांस्त्रीनेतान्परिवर्तते ॥ २३
सरितां सागरो भर्ता यथा वेलामिवोर्मिमान् ।
इति भावगता बुद्धिर्भावे मनसि वर्तते ॥ २४
प्रवर्तमानं तु रजस्तद्भावेनानुवर्तते ।
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ॥ २५
कथंचिदुपपद्यन्ते पुरुषे सात्त्विका गुणाः ।
परिदाहस्तथा शोकः संतापोऽपूर्तिरक्षमा ॥ २६
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ।
अविद्या रागमोहौ च प्रमादः स्तब्धता भयम् ॥ २७
असमृद्धिस्तथा दैन्यं प्रमोहः स्वप्नतन्द्रिता ।
कथंचिदुपवर्तन्ते विविधास्तामसा गुणाः ॥ २८
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।

* १९२ तमाध्यायतया पूर्वं विद्यमान एवायमध्यायः ख. घ. ङ. पुस्तकेषु क्वचित्क्वचित्पाठभेदेन पुनरपि दृश्यते न दृश्यते च दाक्षिणात्यबहुकोशेषु ।

वर्तते सात्विको भाव इत्युपेक्षेत तत्तथा ॥ २९
अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येव तदसंरभ्य चिन्तयेत् ॥ ३०
अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ ३१
इति बुद्धिगतीः सर्वा व्याख्याता यावतीरिह ।
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ॥ ३२
सत्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ।
सृजतेऽत्र गुणानेक एको न सृजते गुणान् ॥ ३३
पृथग्भूतौ प्रकृत्या तु संप्रयुक्तौ च सर्वदा ।
यथा मत्स्योऽद्भिरन्यः स्यात्संप्रयुक्तो भवेत्तथा ३४
न गुणा विदुरात्मानं स गुणान्वेद सर्वतः ।
परिद्रष्टा गुणानां तु संस्रष्टा मन्यते यथा ॥ ३५
आश्रयो नास्ति सत्वस्य गुणसर्गेण चेतना ।
सत्वमस्य सृजन्त्यन्ये गुणान्वेद कदाचन ॥ ३६
सृजते हि गुणान्सत्वं क्षेत्रज्ञः परिपश्यति ।
संप्रयोगस्तयोरेष सत्वक्षेत्रज्ञयोर्ध्रुवः ॥ ३७
इन्द्रियैस्तु प्रदीपार्थं क्रियते बुद्धिरन्तरा ।
निश्चक्षुर्भिरजानद्भिरिन्द्रियाणि प्रदीपवत् ॥ ३८
एवं स्वभावमेवैतत्तद्बुद्ध्वा विहरन्नरः ।
अशोचन्नप्रहृष्यंश्च स वै विगतमत्सरः ॥ ३९
स्वभावसिद्धमेवैतद्यदिमान्सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः ॥ ४०
प्रध्वस्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते ।
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ ४१
इतीदं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम् ।
विमुच्य सुखमासीत विशोकश्छिन्नसंशयः ॥ ४२
ताम्येयुः प्रच्युताः पृथ्वीं मोहपूर्णां नदीं नराः ।
यथा गाधमविद्वांसो बुद्धियोगमयं तथा ॥ ४३
नैव ताम्यन्ति विद्वांसः प्लवन्तः पारमम्भसः ।
अध्यात्मविदुषो धीरा ज्ञानं तु परमं प्लवः ॥ ४४
न भवति विदुषां महद्भयं
यदविदुषां सुमहद्भयं भवेत् ।
न हि गतिरधिकाऽस्ति कस्यचि-
त्सकृदुपदर्शयतीह तुल्यताम् ॥ ४५
यत्करोति बहुदोषमेकत-
स्तच्च दूषयति यत्पुरा कृतम् ।
नाप्रियं तदुभयं करोत्यसौ
यच्च दूषयति यत्करोति च ॥ ४६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

## द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

भीष्मेण युधिष्ठिरंप्रति ज्ञानस्य दुःखादिनिवर्तकत्वप्रतिपादकनारदसमङ्गसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
शोकाद्दुःखाच्च मृत्योश्च त्रसन्ते प्राणिनः सदा ।
उभयं नो यथा न स्यात्तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं समङ्गस्य च भारत ॥ २
नारद उवाच ।
उरसेव प्रणमसे बाहुभ्यां तरसीव च ।
संप्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ॥ ३
उद्वेगं न हि ते किंचित्सुसूक्ष्ममपि लक्षये ।
नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ॥ ४
समङ्ग उवाच ।
भूतं भव्यं भविष्यच्च सर्वभूतेषु नारद ।
तेषां तत्त्वानि जानामि ततो न विमना ह्यहम् ॥ ५
उपक्रमानहं वेद पुनरेव फलोदयान् ।
लोके फलानि चित्राणि ततो न विमना ह्यहम् ॥ ६
अनाथाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद ।
अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ॥ ७

विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः ।
बलवन्तोऽबलाश्चैव तद्वद्सान्सभाजय ॥ ८
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
शाकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः॥ ९
यदा न शोचेमहि किं नु नः स्या-
द्धर्मेण वा नारद कर्मणा वा ।
कृतान्तवश्यानि यदा सुखानि
दुःखानि वा यन्न विधर्षयन्ति ॥ १०
यस्मै प्रज्ञाः कथयन्ते मनुष्याः
प्रज्ञामूलं हीन्द्रियाणां प्रसादः ।
मुह्यन्ति शोचन्ति तथेन्द्रियाणि
प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ॥ ११
मूढस्य दर्पः स पुनर्मोह एव
मूढस्य नायं न परोऽस्ति लोकः ।
न ह्येव दुःखानि सदा भवन्ति
सुखस्य वा नित्यशो लाभ एव ॥ १२
भावात्मकं संपरिवर्तमानं
न मादृशः संज्वरं जातु कुर्यात् ।
इष्टान्भोगान्नानुरुध्येत्सुखं वा
न चिन्तयेद्दुःखमभ्यागतं वा ॥ १३
समाहितो न स्पृहयेत्परेषां
नानागतं चाभिनन्देच्च लाभम् ।
न चापि हृष्येद्विपुलेऽर्थलाभे
तथाऽर्थनाशे च न वै विषीदेत् ॥ १४
न बान्धवा न च वित्तं न कौल्यं
न च श्रुतं न च मन्त्रा न वीर्यम् ।
दुःखात्त्रातुं सर्व एवोत्सहन्ते
परत्र शीलेन तु यान्ति शान्तिम् ॥ १५
नास्ति बुद्धिरयुक्तस्य नायोगाद्विन्दते सुखम् ।
धृतिश्च दुःखत्यागश्चेत्युभयं तु सुखं नृप ॥ १६
प्रियं हि हर्षजननं हर्ष उत्सेकवर्धनः ।
उत्सेको नरकायैव तस्मात्तान्संत्यजाम्यहम् ॥ १७
एताञ्शोकभयोत्सेकान्मोहनान्सुखदुःखयोः ।
पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात् ॥ १८
अर्थकामौ परित्यज्य विशोको विगतज्वरः ।
तृष्णामोहौ तु संत्यज्य चरामि पृथिवीमिमाम् १९
न च मृत्योर्न चाधर्मान्न लोभान्न कुतश्चन ।
पीतामृतस्येवात्यन्तमिह वामुत्र वा भयम् ॥ २०
एतद्ब्रह्मन्विजानामि महत्कृत्वा तपोऽव्ययम् ।
तेन नारद संप्राप्तो न मां शोकः प्रबाधते ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

## त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

भीष्मेण युधिष्ठिरंप्रति श्रेयःसाधनानां कथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
अतत्त्वज्ञस्य शास्त्राणां संततं संशयात्मनः ।
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह ॥ १
भीष्म उवाच ।
गुरुपूजा च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव विद्यानां कूटस्थं श्रेय उच्यते ॥ २
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गालवस्य च संवादं देवर्षेर्नारदस्य च ॥ ३
वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियः ।
श्रेयस्कामो यतात्मानं नारदं गालवोऽब्रवीत् ॥ ४
यैः कैश्चित्संमतो लोके गुणैश्च पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ॥ ५

पशवोऽपि हि जीवन्तीति तद्वद्स्मान्विभावयेति च ध. पाठः ॥ ८ ॥ दुःखानि चार्थं न विवर्धयन्तीति ध. पाठः ॥ १० ॥ यत्प्रज्ञानं कथयन्ते इति थ. पाठः ॥ ११ ॥ नायोगे विन्दते सुखमिति । मतिः सुखं च योगः स्यादुभयं न सुखोदयमिति च ध. पाठः ॥ १६ ॥ द्विनवत्यधिकद्विशततमोऽध्यायः॥२९२॥

श्रवणं चैव शास्त्राणामिति झ. पाठः ॥ २ ॥ श्रेयस्कामं जितात्मानमिति थ. पाठः ॥ ४ ॥

भवानेवंविधोऽस्माकं संशयं छेत्तुमर्हति ।
अमूढश्चिरमूढानां लोकतत्त्वमजानताम् ॥ ६
ज्ञाने ह्येवं प्रवृत्तिः स्यात्कार्याणामविशेषतः ।
यत्कार्यं न व्यवस्यामस्तद्भवान्वक्तुमर्हति ॥ ७
भगवन्नाश्रमाः सर्वे पृथगाचारदर्शिनः ।
इदं श्रेय इदं श्रेय इति सर्वे प्रबोधिताः ॥ ८
तांस्तु विप्रस्थितान्दृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः ।
स्वशास्त्रैः परितुष्टाश्च श्रेयो नोपलभामहे ॥ ९
शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा ।
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम् ॥ १०
एतस्मात्कारणाच्छ्रेयो गहनं प्रतिभाति मे ।
ब्रवीतु भगवांस्तन्मे उपसन्नोस्म्यधीहि भो ॥ ११
नारद उवाच ।
आश्रमास्तात चत्वारो यथा संकल्पिताः पृथक् ।
तान्सर्वाननुपश्य त्वं समाश्रित्यैव गालव ॥ १२
तेषांतेषां तथाहि त्वमाश्रमाणां ततस्ततः ।
नानारूपं गुणोद्देशं पश्य विप्रस्थितं पृथक् ॥ १३
न यान्ति चैव ते सम्यगभिप्रेतमसंशयम् ।
अन्येऽपश्यंस्तथा सम्यगाश्रमाणां परां गतिम् १४
यत्तु निःश्रेयसं सम्यक्तच्चैवासंशयात्मकम् ।
अनुग्रहं च मित्राणाममित्राणां च निग्रहम् ॥ १५
संग्रहं च त्रिवर्गस्य श्रेय आहुर्मनीषिणः ।
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ॥ १६
सद्भिश्च समुदाचारः श्रेय एतदसंशयम् ।
मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम् ॥ १७
वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् ।
देवताभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि १८
असंत्यागश्च भृत्यानां श्रेय एतदसंशयम् ।
सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम् ॥ १९
यद्भूतहितमत्यन्तमेतत्सत्यं ब्रवीम्यहम् ।
अहंकारस्य च त्यागः प्रमादस्य च निग्रहः ॥ २०
संतोषश्चैकचर्या च कूटस्थं श्रेय उच्यते ।
धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च ॥ २
ज्ञानार्थानां च जिज्ञासा श्रेय एतदसंशयम् ।
शब्दरूपरसस्पर्शान्सह गन्धेन केवलान् ॥ २
नात्यर्थमुपसेवेत श्रेयसोर्थी कथंचन ॥ २
नक्तंचर्या दिवास्वप्नमालस्यं पैशुनं मदम् ।
अतियोगमयोगं च श्रेयसोर्थी परित्यजेत् ॥ २
आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया ।
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् ॥ २
निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविता नराः ।
दोषैरन्यान्गुणवतः क्षिपन्त्यात्मगुणक्षयात् ॥ २
अनूच्यमानास्तु पुनस्ते मन्यन्ते महाजनात् ।
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः ॥ २
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
विपश्चिद्गुणसंपन्नः प्राप्नोत्येव महद्यशः ॥ २
अब्रुवन्वाऽतिसुरभिर्गन्धः सुमनसां शुचिः ।
तथैवाव्याहरन्भाति विमलो भानुरम्बरे ॥ २
एवमादीनि चान्यानि परित्यक्तानि मेधया ।
ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च ॥ ३
न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ॥ ३
असदुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति ।
दीप्यते त्वेव लोकेषु शनैरपि सुभाषितम् ॥ ३
मूढानामवलिप्तानामसारं भाषितं बहु ।
दर्शयत्यन्तरात्मानमग्निरूपमिवांशुमान् ॥ ३
एतस्मात्कारणात्प्रज्ञां मृगयन्ते पृथग्विधाम् ।
प्रज्ञालाभो हि भूतानामुत्तमः प्रतिभाति मे ॥ ३
नापृष्टः कस्यचिद्ब्रूयान्नाप्यन्यायेन पृच्छतः ।
जानन्नपि च मेधावी जडवत्समुपाविशेत् ॥ ३
ततो वासं परीक्षेत धर्मनित्येषु साधुषु ।
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च ॥ ३

प्रवृत्तिः स्यात्कार्याकार्ये विजानत इति ध. पाठः ॥ ७ ॥ नानाविधा गिरस्तास्तु दृष्ट्वा शास्त्राभिनन्दिन इति ध. पाठः ॥ ९ ॥ श्रेयः कलिलं प्रति भाति मे इति झ. पाठः । उपपन्नोस्म्यधीहि भो इति ध. पाठः ॥ ११ ॥ ऋजु पश्यन्ति ये सम्यगिति ध. पाठः ॥ १४ ॥ असंत्यागश्च भूतानामिति ध. पाठ ॥ १९ ॥ प्रणयस्य च निग्रह इति थ. पाठः ॥ २० ॥ वेदार्थान च जिज्ञासेति ध. पाठः ॥ २२ ॥

चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत् ।
न तत्र वासं कुर्वीत श्रेयोर्थी वै कथंचन ॥ ३७
निरारम्भोऽप्ययमिह यथालब्धोपजीवनः ।
पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात् ॥ ३८
अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा ।
तथा पश्यामहे स्पर्शमुभयोः पुण्यपापयोः ॥ ३९
अपश्यन्तोऽन्यविषयं भुञ्जते विघसाशिनः ।
भुञ्जानाश्चान्यविषयान्विषयान्विद्धि कर्मणाम् ४०
यत्रागमयमानानामसत्कारेण पृच्छताम् ।
प्रब्रूयाद्ब्राह्मणो धर्मं त्यजेत्तं देशमात्मवान् ॥ ४१
शिष्योपाध्यायिका वृत्तिर्यत्र स्यात्सुसमाहिता ।
यथावच्छास्त्रसंपन्ना कस्तं देशं परित्यजेत् ॥ ४२
आकाशस्था ध्रुवं यत्र दोषं ब्रूयुर्विपश्चिताम् ।
आत्मपूजाभिकामो वै को वसेत्तत्र पण्डितः॥ ४३
यत्र संलोडिता लुब्धैः प्रायशो धर्मसेतवः ।
प्रदीप्तमिव चेलान्तं कस्तं देशं न संत्यजेत् ॥४४
यत्र धर्ममनाशङ्काश्चरेयुर्वीतमत्सराः ।
भवेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ४५
धर्ममर्थनिमित्तं च चरेयुर्यत्र मानवाः ।
नताननुवसेज्जातु ते हि पापकृतो जनाः ॥ ४६
कर्मणा यत्र पापेन वर्तन्ते जीवितेप्सवः ।
व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव ॥ ४७
येन खट्वां समारूढः कर्मणाऽनुशयी भवेत् ।
आदितस्तन्न कर्तव्यमिच्छता भवमात्मनः ॥ ४८
यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः ।
कुटुम्बिनामग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ॥ ४९
श्रोत्रियास्त्वग्रभोक्तारो धर्मनित्याः सनातनाः ।
याजनाध्यापने युक्ता यत्र तद्राष्ट्रमावसेत् ॥ ५०
स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः ।
अजस्रं चैव वर्तन्ते वसेत्तत्राविचारयन् ॥ ५१
अशुचीन्यत्र पश्येत ब्राह्मणान्वृत्तिकर्शितान् ।
त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम् ॥ ५२
प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः ।
स्वस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान् ॥ ५३
दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ५४
उपसृष्टेषु दान्तेषु दुराचारेषु साधुषु ।
अविनीतेषु लुब्धेषु सुमहद्दण्डधारणम् ॥ ५५
यत्र राजा धर्मनित्यो राज्यं धर्मेण पालयेत् ।
अपास्य कामान्कामेशो वसेत्तत्राविचारयन् ॥ ५६
यथाशीला हि राजानः सर्वान्विषयवासिनः ।
श्रेयसा योजयत्याशु श्रेयसि प्रत्युपस्थिते ॥ ५७
पृच्छतस्ते मया तात श्रेय एतदुदाहृतम् ।
न हि शक्यं प्रधानेन श्रेयः सङ्ख्यातुमात्मनः ॥ ५८
एवं प्रवर्तमानस्य वृत्तिं प्राणिहितात्मनः ।
तपसैवेह बहुलं श्रेयो व्यक्तं भविष्यति ॥ ५९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

---

## चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

भीष्मेण युधिष्ठिरंप्रति मुक्तिसाधनप्रतिपादकसगरारिष्टनेमिसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
कथं नु युक्तः पृथिवीं चरेदस्मद्विधो नृपः ।
नित्यं कैश्च गुणैर्युक्तः सङ्गपाशाद्विमुच्यते ॥ १
भीष्म उवाच ।
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते ॥ २

---

कर्मव्यतिकरो भवेदिति ध. पाठः ॥ ३७ ॥ आकारं गूहमानाय दोषान्ब्रूयुर्विपश्चिताम् इति ध. पाठः ॥ ४३ ॥ धर्मशीलेषु साधुष्विति ध. पाठः ॥ ४५ ॥ इच्छता हितमात्मन इति ध पाठः ॥४८॥ ये दान्तेषु उपसृष्टाः सक्रोधास्तेषु येच साधुषु दुराचारास्तेषु। उपसृष्टेष्वदान्तेषु दुराचारेष्वसाधुष्विति ध. पाठः ॥ ५५ ॥ वृत्तिं प्रणिहितात्मन इति ध. पाठः ॥ ५९ ॥ त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

कथं विमुक्तः पृथिवीमिति थ. पाठः ॥ १ ॥

सगर उवाच ।
किं श्रेयः परमं ब्रह्मन्कृत्वेह सुखमश्नुते ।
कथं न शोचेन्न क्षुभ्येदेतदिच्छामि वेदितुम् ॥ ३
भीष्म उवाच ।
एवमुक्तस्तदा तार्क्ष्यः सर्वशास्त्रविदां वरः ।
विबुध्य संपदं चाग्र्यां सद्वाक्यमिदमब्रवीत् ॥ ४
सुखं मोक्षसुखं लोके न च मूढोऽवगच्छति ।
प्रसक्तः पुत्रपशुषु धनधान्यसमाकुलः ॥ ५
सक्तबुद्धिरशान्तात्मा स न शक्यश्चिकित्सितुम् ।
स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ॥ ६
स्नेहजानिह ते पाशान्वक्ष्यामि शृणु तान्मम ।
सकर्णकेन शिरसा शक्याश्छेत्तुं विजानता ॥ ७
संभाव्य पुत्रान्कालेन यौवनस्थान्निवेश्य च ।
समर्थाञ्जीवने ज्ञात्वा मुक्तश्चर यथासुखम् ॥ ८
भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलाम् ।
ज्ञात्वा प्रजहि कालेन परार्थमनुदृश्य च ॥ ९
सापत्यो निरपत्यो वा मुक्तश्चर यथासुखम् ।
इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि ॥ १०
कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम् ।
उपपत्त्योपलब्धेषु लोकेषु च समो भव ॥ ११
एष तावत्समासेन तव संकीर्तितो मया ।
मोक्षार्थो विस्तरेणाथ भूयो वक्ष्यामि तच्छृणु ॥ १२
मुक्ता वीतभया लोके चरन्ति सुखिनो नराः ।
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ १३
आहारसंचये सक्ता यथा कीटपिपीलिकाः ।
असक्ताः सुखिनो लोके सक्ताश्चैव विनाशिनः १४
स्वजने न च ते चिन्ता कर्तव्या मोक्षबुद्धिना ।
इमे मया विनाभूता भविष्यन्ति कथं त्विति ॥ १५
स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्धते ।
सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति ॥ १६
भोजनाच्छादने चैव मात्रा पित्रा च संग्रहम् ।
स्वकृते नाधिगच्छन्ति लोके नास्त्यकृतं पुरा ॥१
धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम् ।
लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः ॥ १
स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा ।
को हेतुः स्वजनं द्रष्टुं रक्षितं वाऽदृढात्मनः ॥ १
स्वजनं हि यदा मृत्युर्हन्त्येव भुवि पश्यतः ।
कृतेऽपि यत्ने महति तत्र बोद्धव्यमात्मना ॥ २
जीवन्तमपि चैवैनं भरणे रक्षणे तथा ।
असमाप्ते परित्यज्य पश्चादपि मरिष्यसि ॥ २
यदा मृतं च स्वजनं न ज्ञास्यसि कथंचन ।
सुखितं दुःखितं वाऽपि ननु बोद्धव्यमात्मना ॥२
मृते वा त्वयि जीवे वा यदा भोक्ष्यति वै जनः
स्वकृतं ननु बुद्ध्वैवं कर्तव्यं हितमात्मनः ॥ २
एवं विजानँल्लोकेऽस्मिन्कः कस्येत्यभिनिश्चितः ।
मोक्षे निवेशय मनो भूयश्चाप्युपधारय ॥ २
क्षुत्पिपासादयो भावा जिता यस्येह देहिनः ।
क्रोधो लोभस्तथा मोहः सत्ववान्मुक्त एव सः ॥२
द्यूते पाने तथा स्त्रीषु मृगयायां च यो नरः ।
न प्रमाद्यति संमोहात्सततं मुक्त एव सः ॥ २
दिवसेदिवसे नाम रात्रौरात्रौ पुमान्सदा ।
भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते २
आत्मभावं तथा स्त्रीषु सक्तमेव पुनःपुनः ।
यः पश्यति सदा युक्तो यथावन्मुक्त एव सः ॥ २८
संभवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः २९
प्रस्थं वाहसहस्रेषु यात्रार्थं चैव कोटिषु ।
प्रासादे मञ्चकं स्थानं यः पश्यति स मुच्यते ॥ ३०
मृत्युनाऽभ्याहतं लोकं व्याधिभिश्चोपपीडितम् ।
अवृत्तिकर्शितं चैव यः पश्यति स मुच्यते ॥ ३१

नच लोकोऽवगच्छतीति थ. ध. पाठः ॥ ५ ॥ निवेश्य दारैः संयोज्य ॥ ८ ॥ परार्थमन्तिमं पुरुषार्थं मोक्षम् । प्रजहि त्यज ॥ ९ ॥ कृतकौतूहलः छिन्नौत्सुक्यः । लाभेषु च समो भवेति थ. ध. पाठः ॥ ११ ॥ मोक्षार्थो मोक्षप्रयोजनः ॥ १२ ॥ मुक्ताश्छिन्नस्नेहपाशाः । सक्तभावाः विषयासक्तचित्ताः ॥ १३ ॥

वाहः धान्यपूर्णं शकटम् । सहस्रेषु कोटिष्विति समानाधिकरणम् । प्रस्थं पुरुषाहारपरिमितं धान्यम् । यात्रार्थं देहव्यवहारार्थम् । अधिकसंग्रहो व्यर्थ इति यः पश्यति ॥ ३० ॥ अवृत्ति र्जीविकाया अभावः ॥ ३१ ॥

यः पश्यति स संतुष्टो नपश्यंश्च विहन्यते ।
यश्चाप्यल्पेन संतुष्टो लोकेऽस्मिन्मुक्त एव सः ॥ ३२
अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति ।
न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ॥ ३३
पर्यङ्कशय्या भूमिश्च समाने यस्य देहिनः ।
शाल्यन्नं च कदन्नं च यस्य स्यान्मुक्त एव सः ॥ ३४
क्षौमं च कुशचीरं च कौशेयं वल्कलानि च ।
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ॥ ३५
पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति ।
तथा च वर्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ॥ ३६
सुखदुःखे समे यस्य लाभालाभौ जयाजयौ ।
इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ॥ ३७
रक्तमूत्रपुरीषाणां दोषाणां संचयांस्तथा ।
शरीरं दोषबहुलं दृष्ट्वा चैव विमुच्यते ॥ ३८
वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च ।
कुब्जभावं च जरया यः पश्यति स मुच्यते ॥ ३९
पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा ।
बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ॥ ४०
गतानृषींस्तथा देवानसुरांश्च तथा गतान् ।
लोकादस्मात्परं लोकं यः पश्यति स मुच्यते ॥ ४१
प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः ।
ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ४२
अर्थांश्च दुर्लभाँल्लोके क्लेशांश्च सुलभांस्तथा ।
दुःखं चैव कुटुम्बार्थे यः पश्यति स मुच्यते ॥ ४३
अपत्यानां च वैगुण्यं जनं विगुणमेव च ।
पश्यन्भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ॥ ४४
शास्त्राल्लोकाच्च यो बुद्धः सर्वं पश्यति मानवः ।
असारमिव मानुष्यं सर्वथा मुक्त एव सः ॥ ४५
एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् ।
गार्हस्थ्याद्यदि ते मोक्षे कृता बुद्धिरविक्लवा ॥ ४६
तत्तस्य वचनं श्रुत्वा सम्यक्स पृथिवीपतिः ।
मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ॥ ४७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

## पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

भीष्मेण युधिष्ठिरंप्रति भार्गवचरित्रकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
तिष्ठते मे सदा तात कौतूहलमिदं हृदि ।
तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह ॥ १
कथं देवर्षिरुशना सदा काव्यो महामतिः ।
असुराणां प्रियकरः सुराणामप्रिये रतः ॥ २
वर्धयामास तेजश्च किमर्थममितौजसाम् ।
नित्यं वैरनिबद्धाश्च दानवाः सुरसत्तमैः ॥ ३
कथं चाप्युशना प्राप शुक्रत्वममरद्युतिः ।
ऋद्धिं च स कथं प्राप्तः सर्वमेतद्ब्रवीहि मे ॥ ४
न याति च स तेजस्वी मध्येन नभसः कथम् ।
एतदिच्छामि विज्ञातुं निखिलेन पितामह ॥ ५
भीष्म उवाच ।
शृणु राजन्नवहितः सर्वमेतद्यथातथम् ।
यथामति यथा चैतच्छ्रुतपूर्वं मयाऽनघ ॥ ६
एष भार्गवदायादो मुनिर्मान्यो दृढव्रतः ।
सुराणां विप्रियकरो निमित्ते कारणात्मके ॥ ७
इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपः सदा ।
प्रभविष्णुश्च कोशस्य जगतश्च तथा प्रभुः ॥ ८
तस्यात्मानमथाविश्य योगसिद्धो महामुनिः ।
रुद्ध्वा धनपतिं देवं योगेन हृतवान्वसु ॥ ९

नपश्यन्नित्येकं पदम् । मृत्युनाभ्याहतं लोकमित्यनुकृष्यते ॥ ३२ ॥ अग्निर्जाठरो भोक्ता । सोमोऽन्नं भोज्यम् ॥ ३३ ॥ शालयश्च कदन्नं चेति झ. ध. पाठः ॥ ३४ ॥ श्लेष्ममूत्रपुरीषाणामिति ध. पाठः । छर्दिमूत्रेति थ. पाठः ॥ ३८ ॥ बाधिर्यं घ्राणमन्दत्वमिति ध. पाठः ॥ ४० ॥ प्रतापैरन्विता इति थ. पाठः ॥ ४२ ॥ चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

वर्धयामास चिच्छेद । अमितौजसां देवानाम् ॥ ३ ॥ शुक्रत्वं शुक्रोत्पन्नत्वम् ॥ ४ ॥ तस्याकाशगतिः कुतः कुण्ठितेत्यर्थः ॥ ५ ॥ कारणा क्रिया तदात्मके निमित्ते सति ॥ ७ ॥ इन्द्रो जगतः ॥ ८ ॥ तस्य धनदस्य । आत्मानं शरीरम् ॥ ९ ॥

हृते धने ततः शर्म न लेभे धनदस्तथा ।
आपन्नमन्युः संविग्नः सोऽभ्यगात्सुरसत्तमम् ॥ १०
निवेदयामास तदा शिवायामिततेजसे ।
देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ॥ ११
योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु ।
योगेनात्मगतं कृत्वा निःसृतश्च महातपाः ॥ १२
एतच्छ्रुत्वा ततः क्रुद्धो महायोगी महेश्वरः ।
संरक्तनयनो राजञ्शूलमादाय तस्थिवान् ॥ १३
क्वासौ क्वासाविति प्राह गृहीत्वा परमायुधम् ।
उशना दूरतस्तस्य ह्यभूज्ज्ञात्वा चिकीर्षितम् ॥ १४
स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः ।
गतिमागमनं वेत्ति स्थानं चैव ततः प्रभुः ॥ १५
संचिन्त्योग्रेण तपसा महात्मानं महेश्वरम् ।
उशना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत ॥ १६
विज्ञातरूपः स तदा तपःसिद्धोऽथ धन्विना ।
ज्ञात्वा शूलं च देवेशः पाणिना समनामयत् ॥ १७
आनतेनाथ शूलेन पाणिनामिततेजसा ।
पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः ॥ १८
पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः ।
आस्यं विवृत्य भ्रकुटिं पाणिं संप्राक्षिपच्छनैः ॥१९
स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः ।
व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः ॥ २०
युधिष्ठिर उवाच ।
किमर्थं व्यचरद्राजन्नुशना तस्य धीमतः ।
जठरे देवदेवस्य किंचाकार्षीन्महाद्युतिः ॥ २१
भीष्म उवाच ।
पुरा सोऽन्तर्जलगतः स्थाणुभूतो महाव्रतः ।
वर्षाणामभवद्राजन्प्रयुतान्यर्बुदानि च ॥ २२
उदतिष्ठत्तपस्तप्त्वा दुश्चरं च महाह्रदात् ।
ततो देवातिदेवस्तं ब्रह्मा वै समसर्पत ॥ २३
तपोवृद्धिमपृच्छच्च कुशलं चैवमव्ययः ।
तपः सुचीर्णमिति च प्रोवाच वृषभध्वजः ॥ २४
तत्संयोगेन वृद्धिं चाप्यपश्यत्स तु शंकरः ।
महामतिरचिन्त्यात्मा सत्यधर्मरतः सदा ॥ २५
स तेनाढ्यो महायोगी तपसा च धनेन च ।
व्यराजत महाराज त्रिषु लोकेषु वीर्यवान् ॥ २६
ततः पिनाकी योगात्मा ध्यानयोगं समाविशत् ।
उशना तु समुद्विग्नो निलिल्ये जठरे ततः ॥ २७
तुष्टाव च महायोगी देवं तत्रस्थ एव च ।
निःसारं काङ्क्षमाणः स तेन स्म प्रतिहन्यते ॥ २८
उशना तु तथोवाच जठरस्थो महामुनिः ।
प्रसादं मे कुरुष्वेति पुनःपुनररिंदम ॥ २९
तमुवाच महादेवो गच्छ शिश्नेन मोक्षणम् ।
इति सर्वाणि स्रोतांसि रुद्ध्वा त्रिदशपुङ्गवः ॥ ३०
अपश्यमानस्तद्द्वारं सर्वतः पिहितो मुनिः ।
पर्यक्रामद्दह्यमान इतश्चेतश्च तेजसा ॥ ३१
स वै निष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् ।
कार्येण तेन नभसो नाध्यगच्छत मध्यतः ॥ ३२
'तत एव च देवेषु अप्रविष्टो महामुनिः ।
पौरोहित्यं च दैत्यानां शक्रतेजोविवृद्धये ॥' ३३
विनिष्क्रान्तं तु तं दृष्ट्वा ज्वलन्तमिव तेजसा ।
भवो रोषसमाविष्टः शूलोद्यतकरः स्थितः ॥ ३४
अवारयत तं देवी क्रुद्धं पशुपतिं पतिम् ।
पुत्रत्वमगमद्देव्या वारिते शंकरे च सः ॥ ३५
देव्युवाच ।
हिंसनीयस्त्वया नैव मम पुत्रत्वमागतः ।
न हि देवोदरात्कश्चिन्निःसृतो नाशमर्हति ॥ ३६
ततः प्रीतो भवो देव्याः प्रहसंश्चेदमब्रवीत् ।
गच्छत्वेष यथाकाममिति राजन्पुनः पुनः ॥ ३७
ततः प्रणम्य वरदं देवं देवीमुमां तथा ।
उशना प्राप तद्धीमान्गतिमिष्टां महामुनिः ॥३८

आपन्नमन्युः प्राप्तदैन्यः ॥ १० ॥ सः शुक्रः । धन्विना रुद्रेण । शूलं शुक्रयुतम् । तपस्सिद्धेन चक्षुषेति थ. पाठः । तपस्सिद्धेन चेतसेति ध. पाठः ॥ १७ ॥ कोष्ठमुदरम् ॥ २० ॥ व्यचरदेव नत्वन्नवज्जीर्णतां गतः । किंच तादृशमकार्षीत्तप इति शेषः ॥२१॥

स शुक्रः ॥ २६ ॥ निलिल्ये नितरां गतिं जगाम बभ्रामेत्यर्थः ॥ २७ ॥ निःसारं निर्गमम् । तेन रुद्रेण ॥ २८ ॥ तेन शिश्नान्निर्गमनेन कार्येण निमित्तेन ॥ ३२ ॥ पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

एतत्ते कथितं तात भार्गवस्य महात्मनः । चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ॥ ३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

## षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

भीष्मेण युधिष्ठिरंप्रति श्रेयःसाधनप्रतिपादकपराशरगीतानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
अतः परं महाबाहो यच्छ्रेयस्तद्ब्रवीहि मे ।
न तृप्याम्यमृतस्येव वचसस्ते पितामह ॥ १
किं कर्म पुरुषः कृत्वा शुभं पुरुषसत्तम ।
श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद ॥ २
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि यथा पूर्वं महायशाः ।
पराशरं महात्मानं पप्रच्छ जनको नृपः ॥ ३
किं श्रेयः सर्वभूतानामस्मिँल्लोके परत्र च ।
यद्भवेत्प्रतिपत्तव्यं तद्भवान्प्रब्रवीतु मे ॥ ४
ततः स तपसा युक्तः सर्वधर्मविधानवित् ।
नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ॥ ५
पराशर उवाच ।
धर्म एव कृतः श्रेयानिह लोके परत्र च ।
तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिणः ॥ ६
प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते ।
धर्मात्मकः कर्मविधिर्देहिनां नृपसत्तम ॥ ७
तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ॥ ८
चतुर्विधा हि लोकेऽस्मिन्यात्रा तात विधीयते ।
मर्त्या यत्रावतिष्ठन्ते सा च कामात्प्रवर्तते ॥ ९
सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः ।
दशार्धप्रविभक्तानां भूतानां विविधा गतिः ॥ १०
सौवर्णं राजतं चापि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ॥ ११
नाबीजाज्जायते किंचिन्नाकृत्वा सुखमेधते ।
सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षयं नरः ॥ १२
दैवं तात न पश्यामि नास्ति दैवस्य साधनम् ।
स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः ॥ १३
प्रेत्य यान्त्यकृतं कर्म न स्मरन्ति सदा जनाः ।
ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् ॥ १४
लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः ।
शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम् ॥ १५
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते ॥ १६
निरन्तरं च मिश्रं च लभते कर्म पार्थिव ।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते ॥ १७
कदाचित्सुकृतं तात कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥ १८
ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते ।
सुकृतक्षयाच्च दुष्कृतं तद्विद्धि मनुजाधिप ॥ १९
दमः क्षमा धृतिस्तेजः संतोषः सत्यवादिता ।
ह्रीरहिंसाऽव्यसनिता दाक्ष्यं चेति सुखावहाः ॥ २०
दुष्कृते सुकृते चापि न जन्तुर्नियतो भवेत् ।
नित्यं मनःसमाधाने प्रयतेत विचक्षणः ॥ २१
नायं परस्य सुकृतं दुष्कृतं चापि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥ २२
सुखदुःखे समाधाय पुमानन्येन गच्छति ।
अन्येनैव जनः सर्वः संगतो यश्च पार्थिवः ॥ २३
परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः ।
यो ह्यसूयुस्तथा युक्तः सोऽवहासं नियच्छति ॥ २४
भीरू राजन्यो ब्राह्मणः सर्वभक्ष्यो
वैश्योऽनीहावान्हीनवर्णोऽलसश्च ।
विद्वांश्चाशीलो वृत्तहीनः कुलीनः
सत्याद्विभ्रष्टो ब्राह्मणस्त्री च दुष्टा ॥ २५

करस्थमिव तिष्ठतीति थ. पाठः ॥ १८ ॥

रागी युक्तः पचमानोऽऽत्महेतो-
मूर्खो वक्ता नृपहीनं च राष्ट्रम् ।
एते सर्वे शोच्यतां यान्ति राज-
न्यश्चायुक्तः स्नेहहीनः प्रजासु ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

---

## सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

भीष्मेण युधिष्ठिरं प्रति श्रेयःसाधनप्रतिपादकपराशरगीतानुवादः ॥ १ ॥

पराशर उवाच ।
मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः ।
रश्मिभिर्ज्ञानसंभूतैर्यो गच्छति स बुद्धिमान् ॥ १
सेवाश्रितेन मनसा वृत्तिहीनस्य शस्यते ।
द्विजातिहस्तान्निर्वृत्ता न तु तुल्यात्परस्परात् ॥ २
आयुर्नसुलभं लब्ध्वा नावकर्षेद्विशांपते ।
उत्कर्षार्थं प्रयतते नरः पुण्येन कर्मणा ॥ ३
वर्णेभ्यो हि परिभ्रष्टो न वै संमानमर्हति ।
न तु यः सत्क्रियां प्राप्य राजसं कर्म सेवते ॥ ४
वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ।
दुर्लभं तमलब्धा हि हन्यात्पापेन कर्मणा ॥ ५
अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्णुदेत् ।
पापं हि कर्म फलति पापमेव स्वयंकृतम् ।
तस्मात्पापं न सेवेत कर्म दुःखफलोदयम् ॥ ६
पापानुबन्धं यत्कर्म यद्यपि स्यान्महाफलम् ।
तन्न सेवेत मेधावी शुचिः कुशलिनं यथा ॥ ७
किंकष्टमनुपश्यामि फलं पापस्य कर्मणः ।
प्रत्यापन्नस्य हि ततो नात्मा तावद्विरोचते ॥ ८
प्रत्यापत्तिश्च यस्येह बालिशस्य न जायते ।
तस्यापि सुमहांस्तापः प्रस्थितस्योपजायते ॥ ९
विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम् ।
प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे ॥ १०
स्वयं कृत्वा तु यः पापं शुभमेवानुतिष्ठति ।
प्रायश्चित्तं नरः कर्तुमुभयं सोऽश्नुते पृथक् ॥ ११
अज्ञानात्तु कृतां हिंसामहिंसा व्यपकर्षति ।
ब्राह्मणाः शास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः ॥ १२
तथा कामकृतं नास्य विहिंसैवानुकर्षति ।
इत्याहुर्ब्रह्मशास्त्रज्ञा ब्राह्मणा ब्रह्मवादिनः ॥ १३
अहं तु तावत्पश्यामि कर्म यद्वर्तते कृतम् ।
गुणयुक्तं प्रकाशं वा पापेनानुपसंहितम् ॥ १४
यथा सूक्ष्माणि कर्माणि फलन्तीह यथातथम् ।
बुद्धियुक्तानि तानीह कृतानि मनसा सह ॥ १५
भवत्यल्पफलं कर्म सेवितं नित्यमुल्बणम् ।
अबुद्धिपूर्वं धर्मज्ञ कृतमुग्रेण कर्मणा ॥ १६
कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
न चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् १७
संचिन्त्य मनसा राजन्विदित्वा शक्तिमात्मनः ।
करोति यः शुभं कर्म स वै भद्राणि पश्यति ॥ १८
नवे कपाले सलिलं संन्यस्तं हीयते यथा ।
नवेतरे तथा भावं प्राप्नोति सुखभावितम् ॥ १९
सतोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते ।
तद्धि वृद्धिमवाप्नोति सलिले सलिलं यथा ॥ २०
एवं कर्माणि यानीह बुद्धियुक्तानि पार्थिव ।
समानि चैव यानीह तानि पुण्यतमान्यपि ॥ २१
राज्ञा जेतव्याः शत्रवश्चोन्नताश्च
सम्यक्कर्तव्यं पालनं च प्रजानाम् ।
अग्निश्चेयो बहुभिश्चापि यज्ञै-
रन्त्ये मध्ये वा वनमाश्रित्य स्थेयम् ॥ २२

---

रागी सुक्त इति थ. पाठः ॥ २६ ॥ षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

द्विजातिहीना निर्वृत्ता इति थ. पाठः ॥ २ ॥ दुर्लभं जन्म लब्ध्वा हीति थ. पाठः । दुष्कृतं कर्म लब्ध्वा हीति ध. पाठः ॥ ५ ॥ कुशलिनं कारुकं चण्डालविशेषमित्यर्थः ॥ ७ ॥ कुत्सितं च तत्कष्टं च किंकष्टम् ॥ ८ ॥ प्रत्यापत्तिर्वैराग्यम् ॥ ९ ॥ सोऽश्नुते फलमिति ध. पाठः ॥ ११ ॥

दमान्वितः पुरुषो धर्मशीलो
भूतानि चात्मानमिवानुपश्येत् ।
गरीयसः पूजयेदात्मशक्त्या
सत्येन शीलेन सुखं नरेन्द्र ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

## अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

भीष्मेण युधिष्ठिरंप्रति यथाविभवशक्तिधर्माचरणस्य श्रेयःसाधनताप्रतिपादकपराशरगीतानुवादः ॥ १ ॥

पराशर उवाच ।
कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति ।
प्राणी करोत्ययं कर्म सर्वमात्मार्थमात्मना ॥ १
गौरवेण परित्यक्तं निःस्नेहं परिवर्जयेत् ।
सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ २
विशिष्टस्य विशिष्टाच्च तुल्यौ दानप्रतिग्रहौ ।
तयोः पुण्यतरं दानं तद्द्विजस्य प्रयच्छतः ॥ ३
न्यायागतं धनं वर्णैर्न्यायेनैव विवर्धितम् ।
संरक्ष्यं यत्नमास्थाय धर्मार्थमिति निश्चयः ॥ ४
न धर्मार्थी नृशंसेन कर्मणा धनमार्जयेत् ।
शक्तितः सर्वकार्याणि कुर्यान्नर्द्धिमनुसरन् ॥ ५
अपो हि प्रयताः शीतास्तापिता ज्वलनेन वा ।
शक्तितोऽतिथये दत्त्वा क्षुधार्तायाऽश्नुते फलम् ॥६
रन्तिदेवेन लोकेष्टा सिद्धिः प्राप्ता महात्मना ।
फलपत्रैरथो मूलैर्मुनीनर्चितवांश्च सः ॥ ७
तैरेव फलपत्रैश्च स माठरमतोषयत् ।
तस्माल्लेभे परं स्थानं शैब्योऽपि पृथिवीपतिः ॥८
देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मनस्तथा ।
ऋणवाञ्जायते मर्त्यस्तस्मादनृणतां व्रजेत् ॥ ९
स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा ।
पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च ॥ १०
पाकशेषावहार्येण पालनेनात्मनोऽपि च ।
यथावद्भृत्यवर्गस्य चिकीर्षेत्कर्म आदितः ॥ ११
प्रयत्नेन च संसिद्धा धनैरपि विवर्जिताः ।
सम्यग्घुत्वा हुतवहं मुनयः सिद्धिमागताः ॥ १२
विश्वामित्रस्य पुत्रत्वमृचीकतनयोऽगमत् ।
ऋग्भिः स्तुत्वा महाबाहो देवान्वै यज्ञभागिनः १३
गतः शुक्रत्वमुशना देवदेवप्रसादनात् ।
देवीं स्तुत्वा तु गगने मोदते तेजसा वृतः ॥ १४
असितो देवलश्चैव तथा नारदपर्वतौ ।
कक्षीवाञ्जामदग्न्यश्च रामस्ताण्ड्यस्तथाऽऽत्मवान् ॥
वसिष्ठो जमदग्निश्च विश्वामित्रोऽत्रिरेव च ।
भरद्वाजो हरिश्मश्रुः कुण्डधारः श्रुतश्रवाः ॥ १६
एते महर्षयः स्तुत्वा विष्णुमृग्भिः समाहिताः ।
लेभिरे तपसा सिद्धिं प्रसादात्तस्य धीमतः ॥ १७
अनर्हाश्चार्हतां प्राप्ताः सन्तः स्तुत्वा तमेव ह ।
न तु वृद्धिमिहान्विच्छेत्कर्म कृत्वा जुगुप्सितम् १८
येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् ।
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥ १९
आहिताग्निर्हि धर्मात्मा यः स पुण्यकृदुत्तमः ।
वेदा हि सर्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो ॥२०
स चाप्यग्न्याहितो विप्रः क्रिया यस्य न हीयते ।
श्रेयो ह्यनाहिताग्नित्वमग्निहोत्रं न निष्क्रियम् ॥२१
अग्निरात्मा च माता च पिता जनयिता तथा ।
गुरुश्च नरशार्दूल परिचर्या यथातथम् ॥ २२

दयान्वितः पुरुष इति थ. पाठः ॥ २३ ॥ सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

सोदर्यं वा सुतमपीति थ. ध. पाठः ॥ २ ॥ स मातुरमतोषयदिति थ. ध. ॥ ८ ॥ देवर्ष्यतिथिभृत्येभ्य इति थ. ध. पाठः ॥ ९ ॥ वाचा शेषावहार्येणेति झ. पाठः । चिकीर्षेद्धर्ममाश्रित इति ध. पाठः ॥ ११ ॥ मोदते यशसा वृत इति झ. पाठः ॥ १४ ॥ अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

मानं त्यक्त्वा यो नरो वृद्धसेवी
विद्वान्क्लीबः पश्यति प्रीतियोगात् ।
दाक्ष्येण हीनो धर्मयुक्तो न दान्तो
लोकेऽस्मिन्वै पूज्यते सद्भिरार्यः ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

---

## एकोनत्रिशततमोऽध्यायः ॥ २९९ ॥

भीष्मेण युधिष्ठिरंप्रति ब्राह्मणादिवर्णधर्मादिप्रतिपादकपराशरगीतानुवादः ॥ १ ॥

पराशर उवाच ।
वृत्तिः सकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्य शोभना ।
प्रीत्योपनीता निर्दिष्टा धर्मिष्ठान्कुरुते सदा ॥ १
वृत्तिश्चेन्नास्ति शूद्रस्य पितृपैतामही ध्रुवा ।
न वृत्तिं परतो मार्गेच्छुश्रूषां तु प्रयोजयेत् ॥ २
सद्भिस्तु सह संसर्गः शोभते धर्मदर्शिभिः ।
नित्यं सर्वास्ववस्थासु नासद्भिरिति मे मतिः ॥ ३
यथोदयगिरौ द्रव्यं सन्निकर्षेण दीप्यते ।
तथा सत्सन्निकर्षेण हीनवर्णोऽपि दीप्यते ॥ ४
यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरम् ।
तादृशं कुरुते रूपमेतदेवमवेहि मे ॥ ५
तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन ।
अनित्यमिह मर्त्यानां जीवितं हि चलाचलम् ॥ ६
सुखे वा यदि वा दुःखे वर्तमानो विचक्षणः ।
यश्चिनोति शुभान्येव स भद्राणीह पश्यति ॥ ७
धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् ।
न तत्सेवेत मेधावी न तद्धितमिहोच्यते ॥ ८
'धर्मेण सहितं यत्तु भवेदल्पफलोदयम् ।
तत्कार्यमविशङ्केन कर्मात्यन्तं सुखावहम् ॥' ९
यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग्राजा भवति तस्करः ॥ १०
स्वयंभूरसृजच्चाग्रे धातारं लोकसत्कृतम् ।
धाताऽसृजत्पुत्रमेकं लोकानां धारणे रतम् ॥ ११
तमर्चयित्वा वैश्यस्तु कुर्यादत्यर्थमृद्धिमत् ।
रक्षितव्यं तु राजन्यैरुपयोज्यं द्विजातिभिः ॥ १२
अजिह्मैरशठक्रोधैर्हव्यकव्यप्रयोक्तृभिः ।
शूद्रैर्निर्माजनं कार्यमेवं धर्मो न नश्यति ॥ १३
अप्रनष्टे ततो धर्मे भवन्ति सुखिताः प्रजाः ।
सुखेन तासां राजेन्द्र मोदन्ते दिवि देवताः ॥ १४
तस्माद्यो रक्षति नृपः स धर्मेणेति पूज्यते ।
अधीते चापि यो विप्रो वैश्यो यश्चार्जने रतः ॥ १५
यश्च शुश्रूषते शूद्रः सततं नियतेन्द्रियः ।
अतोऽन्यथा मनुष्येन्द्र स्वधर्मात्परिहीयते ॥ १६
प्राणसंतापनिर्दिष्टाः काकिण्योऽपि महाफलाः ।
न्यायेनोपार्जिता दत्ताः किमुतान्याः सहस्रशः १७
सत्कृत्य हि द्विजातिभ्यो यो ददाति नराधिपः
यादृशं तादृशं नित्यमश्नाति फलमूर्जितम् ॥ १८
अभिगम्य तु यद्दत्तं धर्म्यमाहुरभिष्टुतम् ।
याचितेन तु यद्दत्तं तदाहुर्मध्यमं फलम् ॥ १९
अवज्ञया दीयते यत्तथैवाश्रद्धयाऽपि वा ।
तदाहुरधमं दानं मुनयः सत्यवादिनः ॥ २०
अतिक्रामेन्मज्जमानो विविधेन नरः सदा ।
तथा प्रयत्नं कुर्वीत यथा मुच्येत संशयात् ॥ २१
दमेन शोभते विप्रः क्षत्रियो विजयेन तु ।
धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण शोभते ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनत्रिशततमोऽध्यायः ॥ २९९ ॥

---

नित्यं हीनस्य शोभनेति ध. पाठः ॥ १ ॥ तस्माद्गुणेषु रमतामिति थ. पाठः ॥ ६ ॥ स तन्त्राणीहेति झ. पाठः ॥ ७ ॥ यो धृत्वा गोसहस्राणीति झ. पाठः ॥ १० ॥ कुर्यादर्थं समृद्धिष्विति ध. पाठः ॥ १२ ॥ काकिण्यो विंशतिवराटिकाः ॥ १७ ॥ तथा मुच्येत किल्बिषादिति थ. पाठः ॥ २१ ॥ दाक्ष्येण सेवार्थोत्साहेन ॥ २१ ॥ एकोनत्रिशततमोऽध्यायः ॥ २९९

## त्रिशततमोऽध्यायः ॥ ३०० ॥

भीष्मेण युधिष्ठिरंप्रति वर्णधर्मादिप्रतिपादकपराशरगीतानुवादः ॥ १ ॥

पराशर उवाच ।
प्रतिग्रहार्जिता विप्रे क्षत्रिये युधि निर्जिताः ।
वैश्ये न्यायार्जिताश्चैव शूद्रे शुश्रूषयार्जिताः ॥ १
स्वल्पाऽप्यर्थाः प्रशस्यन्ते धर्मस्यार्थे महाफलाः ।
नित्यं त्रयाणां वर्णानां शुश्रूषुः शूद्र उच्यते ॥२
क्षत्रधर्मा वैश्यधर्मा नावृत्तिः पतते द्विजः ।
शूद्रधर्मा यदा तु स्यात्तदा पतति वै द्विजः ॥ ३
वाणिज्यं पाशुपाल्यं च तथा शिल्पोपजिवनम् ।
शूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते ॥ ४
रङ्गावतरणं चैव तथा रूपोपजीवनम् ।
मद्यमांसोपजीव्यं च विक्रयं लोहचर्मणोः ॥ ५
अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम् ।
कृतपूर्विणस्तु त्यजतो महान्धर्म इति श्रुतिः ॥ ६
संसिद्धः पुरुषो लोके यदाचरति पापकम् ।
मदेनाभिप्लुतमनास्तच्च न ग्राह्यमुच्यते ॥ ७
श्रूयन्ते हि पुराणेषु प्रजा धिग्दण्डशासनाः ।
दान्ता धर्मप्रधानाश्च न्यायधर्मानुवृत्तिकाः ॥ ८
धर्म एव सदा नृणामिह राजन्प्रशस्यते ।
धर्मवृद्धा गुणानेव सेवन्ते हि नरा भुवि ॥ ९
तं धर्ममसुरास्तात नामृष्यन्त नराधिप ।
विवर्धमानाः क्रमशस्तत्र तेऽन्वाविशन्प्रजाः ॥ १०
तासां दर्पः समभवत्प्रजानां धर्मनाशनः ।
दर्पात्मनां ततः पश्चात्क्रोधस्तासामजायत ॥ ११
ततः क्रोधाभिभूतानां वृत्तं लज्जासमन्वितम् ।
ह्रीश्चैवाप्यनशद्राजंस्ततो मोहो व्यजायत ॥ १२
ततो मोहपरीतास्ता नापश्यन्त यथा पुरा ।
परस्परावमर्देन वर्धयन्त्यो यथासुखम् ॥ १३
ताः प्राप्य तु स धिग्दण्डो न कारणमतो भवत् ।
ततोऽभ्यगच्छन्देवांश्च ब्राह्मणांश्चावमन्य ह ॥ १४
एतस्मिन्नेव काले तु देवा देववरं शिवम् ।
अगच्छन्शरणं धीरं बहुरूपं गुणाधिकम् ॥ १५
तेन स्म ते गगनगाः सपुराः पातिताः क्षितौ ।
त्रिधाऽप्येकेन बाणेन देवाप्यायिततेजसा ॥ १६
तेषामधिपतिस्त्वासीद्भीमो भीमपराक्रमः ।
देवतानां भयकरः स हतः शूलपाणिना ॥ १७
तस्मिन्हतेऽथ स्वं भावं प्रत्यपद्यन्त मानवाः ।
प्रावर्तन्त च वै वेदाः शास्त्राणि च यथा पुरा ॥१८
ततोऽभिषिच्य राज्येन देवानां दिवि वासवम् ।
सप्तर्षयश्चान्वयुञ्जन्नराणां दण्डधारणे ॥ १९
सप्तर्षीणामथोर्ध्वं च विपृथुर्नाम पार्थिवः ।
राजानः क्षत्रियाश्चैव मण्डलेषु पृथक्पृथक् ॥ २०
महाकुलेषु ये जाता वृद्धाः पूर्वतराश्च ये ।
तेषामप्यासुरो भावो हृदयान्नापसर्पति ॥ २१
तस्मात्तेनैव भावेन सानुषङ्गेण पार्थिवाः ।
आसुराण्येव कर्माणि न्यसेवन्भीमविक्रमाः ॥ २२
प्रत्यतिष्ठंश्च तेष्वेव तान्येव स्थापयन्त्यपि ।
भजन्ते तानि चाद्यापि ये बालिशतरा नराः ॥ २३
तस्मादहं ब्रवीमि त्वां राजन्संचिन्त्य शास्त्रतः ।
संसिद्धावागमं कुर्यात्कर्म हिंसात्मकं त्यजेत् ॥२४
न संकरेण द्रविणं प्रचिन्वीयाद्विचक्षणः ।
धर्मार्थं न्यायमुत्सृज्य न तत्कल्याणमुच्यते ॥ २५
स त्वमेवंविधो दान्तः क्षत्रियः प्रियबान्धवः ।
प्रजा भृत्यांश्च पुत्रांश्च स्वधर्मेणानुपालय ॥ २६
इष्टानिष्टसमायोगे वैरं सौहार्दमेव च ।
अथ जातिसहस्राणि बहूनि परिवर्तते ॥ २७

---

प्रतिग्रहागता विप्रे इति झ. थ. पाठः ॥ १ ॥ न पतत इति संबन्धः । क्षत्रधर्माद्वैश्यधर्मान्नापन्नः पतते द्विज इति ध. पाठः ॥ ३ ॥ शिल्पं चित्रलेखनादि । वृत्तिः सेवारूपा ॥ ४ ॥ रङ्गे स्त्र्यादिवेषेण अवतरणम् ॥ ५ ॥ अपूर्विणा येन पूर्वं मद्याद्युपजीवनं न कृतं सोऽपूर्वी तेन तन्न कर्तव्यम् ॥ ६ ॥ संसिद्धो लब्धान्नवस्त्रादिः ॥ ७ ॥ धर्मवृद्ध्या गुणानेवेति थ. पाठः ॥ ९ ॥ अनशत् अनश्यत ॥ १२ ॥ त्रिदैवत्येन बाणेनेति ध. पाठः । बाणेन देवस्यामिततेजस इति थ. पाठः ॥ १६ ॥ त्रिशततमोऽध्यायः ॥ ३०० ॥

तस्माद्गुणेषु रज्येथा मा दोषेषु कथंचन ।
निर्गुणोऽपि हि दुर्बुद्धिरात्मनः सोतिरिच्यते॥२८
मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः ।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ॥ २९
धर्मशीलो नरो विद्वानीहकोऽनीहकोपि वा ।
आत्मभूतः सदा लोके चरेद्भूतान्यहिंसया ॥ ३०
यदा व्यपेतहृल्लेखं मनो भवति तस्य वै ।
नानृतं चैव भवति तदा कल्याणमृच्छति ॥ ३१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिशततमोऽध्यायः ॥ ३०० ॥

---

## एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

भीष्मेण युधिष्ठिरंप्रति तपःप्रशंसादिपरपराशरगीतानुवादः ॥ १ ॥

पराशर उवाच ।
एष धर्मविधिस्तात गृहस्थस्य प्रकीर्तितः ।
तपोविधिं तु वक्ष्यामि तन्मे निगदतः शृणु ॥ १
प्रायेण च गृहस्थस्य ममत्वं नाम जायते ।
सङ्गागतं नरश्रेष्ठ भावै राजसतामसैः ॥ २
गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च ।
दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ॥ ३
एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः ।
रागद्वेषौ विवर्धेते ह्यनित्यत्वमपश्यतः ॥ ४
रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम् ।
मोहजातारतिर्नाम समुपैति नराधिप ॥ ५
कृतार्थं भोगिनं मत्वा सर्वो रतिपरायणः ।
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ॥ ६
ततो लोभाभिभूतात्मा सङ्गाद्वर्धयते जनम् ।
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति ॥ ७
स जानन्नपि चाकार्यमर्थार्थं सेवते नरः ।
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ॥ ८
ततो मानेन संपन्नो रक्षन्नात्मपराजयम् ।
करोति येन भोगी स्यामिति तस्माद्विनश्यति ॥ ९
तथाहि बुद्धियुक्तानां शाश्वतं ब्रह्मवादिनाम् ।
अन्विच्छतां शुभं कर्म नराणां त्यजतां सुखम् ॥१०
स्नेहायतननाशाच्च धननाशाच्च पार्थिव ।
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥ ११
निर्वेदादात्मसंबोधः संबोधाच्छास्त्रदर्शनम् ।
शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति ॥ १२
दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान् ।
यो वै प्रियसुखे क्षीणे तपः कर्तुं व्यवस्यति ॥ १३
तपः सर्वगतं तात हीनस्यापि विधीयते ।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रवर्तकम् ॥ १४
प्रजापतिः प्रजाः पूर्वमसृजत्तपसा विभुः ।
क्वचित्क्वचिद्व्रतपरो व्रतान्यास्थाय पार्थिव ॥ १५
आदित्या वसवो रुद्रास्तथैवाग्न्यश्विमारुताः ।
विश्वेदेवास्तथा साध्याः पितरोऽथ मरुद्गणाः ॥१६
यक्षराक्षसगन्धर्वाः सिद्धाश्चान्ये दिवौकसः ।
संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः॥ १७
ये चादौ ब्राह्मणाः सृष्टा ब्रह्मणा तपसा पुरा ।
ते भावयन्तः पृथिवीं विचरन्ति दिवं तथा ॥ १८
मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः ।
महाकुलेषु दृश्यन्ते तत्सर्वं तपसः फलम् ॥ १९
कौशेयानि च वस्त्राणि शुभान्याभरणानि च ।
वाहनासनपानानि तत्सर्वं तपसः फलम् ॥ २०
मनोनुकूलाः प्रमदा रूपवत्यः सहस्रशः ।
वासः प्रासादपृष्ठे च तत्सर्वं तपसः फलम् ॥ २१
शयनानि च मुख्यानि भोज्यानि विविधानि च ।

---

समागतं नरश्रेष्ठेति ध. पाठः ॥ २ ॥ भोगिनं आत्मानमिति शेषः। रत्यर्थं च धनं त्यक्त्वा स वै रतिपरायण इति ध. पाठः ॥६॥ पुष्ट्यर्थं चेह देहस्येति ध. पाठः ॥७॥ तपसा सिद्धियुक्तानां शाश्वतं ब्रह्मदर्शनम् इति थ. ध. पाठः ॥ १० ॥ संबोधाच्छास्त्रदर्शनमिति ध. पाठः ॥ १२ ॥ तपः स्वर्गफलं तातेति थ. पाठः । स्वर्गमार्गप्रदर्शकमिति ट. थ. पाठः ॥ १४ ॥ क्वचिद्ब्रह्मपर इति झ. पाठः ॥ १५ ॥ एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

अभिप्रेतानि सर्वाणि भवन्ति शुभकर्मिणाम् ॥२२
नाप्राप्यं तपसः किंचित्त्रैलोक्येऽपि परंतप ।
उपभोगपरित्यागः फलान्यकृतकर्मणाम् ॥ २३
सुखितो दुःखितो वाऽपि नरो लोभं परित्यजेत् ।
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम ॥ २४
असंतोषोऽसुखायेति लोभादिन्द्रियविभ्रमः ।
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ॥२५
नष्टप्रज्ञो यदा तु स्यात्तदा न्यायं न पश्यति ।
तस्मात्सुखक्षये प्राप्ते पुमानुग्रतपश्चरेत् ॥ २६
यदिष्टं तत्सुखं प्राहुर्द्वेष्यं दुःखमिहेष्यते ।
कृताकृतस्य तपसः फलं पश्यस्व यादृशम् ॥ २७
नित्यं भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते ।
प्राकाश्यं चैव गच्छन्ति कृत्वा निष्कल्मषं तपः २८
अप्रियाण्यवमानाश्च दुःखं बहुविधात्मकम् ।
फलार्थी सत्पथं त्यक्त्वा प्राप्नोति विषयात्मकम् ॥
धर्मे तपसि दाने च विचिकित्साऽस्य जायते ।
स कृत्वा पापकान्येव निरयं प्रतिपद्यते ॥ ३०
सुखे तु वर्तमानो वै दुःखे वाऽपि नरोत्तम ।
सुवृत्ताद्यो न चलते शास्त्रचक्षुः स मानवः॥ ३१
इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता ।
रसने दर्शने घ्राणे श्रवणे च विशांपते ॥ ३२
ततोऽस्य जायते तीव्रा वेदना तत्क्षयात्पुनः ।
बुधा ये न प्रशंसन्ति मोक्षं सुखमनुत्तमम् ॥३३
ततः फलार्थं सर्वस्य भवन्ति ज्यायसे गुणाः ।
धर्मवृत्त्या च सततं कामार्थाभ्यां न हीयते ॥ ३४
अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा ।
प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ॥ ३५
मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम् ।
क्रियाधर्मविमुक्तानामशक्त्या संवृतात्मनाम् ॥३६
क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।
तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥ ३७
सर्वात्मनाऽनुकुर्वीत गृहस्थः कर्मनिश्चयम् ।
दाक्ष्येण हव्यकव्यार्थं स्वधर्मं विचरन्नृप ॥ ३८
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

## द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

भीष्मेण युधिष्ठिरंप्रति नानाधर्मप्रतिपादकपराशरगीतानुवादः ॥ १ ॥

जनक उवाच ।
वर्णो विशेषवर्णानां महर्षे केन जायते ।
एतदिच्छाम्यहं ज्ञातुं तद्ब्रूहि वदतां वर ॥ १
यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः ।
कथं ब्राह्मणतो जातो विशेषग्रहणं गतः ॥ २
पराशर उवाच ।
एवमेतन्महाराज येन जातः स एव सः ।
तपसस्त्वपकर्षेण जातिग्रहणतां गतः ॥ ३
सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः ।
अतोऽन्यतरतो हीनादवरो नाम जायते ॥ ४
वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे ।
सृजतः प्रजापतेर्लोकानिति धर्मविदो विदुः ॥ ५
मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रियाः स्मृताः ।
ऊरुजा धनिनो राजन्पादजाः परिचारकाः ॥ ६
चतुर्णामेव वर्णानामागमः पुरुषर्षभ ।
अतोन्ये त्वतिरिक्ता ये ते वै संकरजाः स्मृताः॥७
क्षत्रियातिरथाम्बष्ठा उग्रा वैदेहकास्तथा ।
श्वपाकाः पुल्कसाः स्तेना निषादाः सूतमागधाः ८
अयोगाः कारणा व्रात्याश्चाण्डालाश्च नराधिप ।
एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परात् ॥ ९
जनक उवाच ।
ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम् ।

ऊरुजा वणिजो राजन्निति ध. पाठः ॥ ६ ॥ नानात्वं ब्रह्म-

बहूनीह हि लोके वै गोत्राणि मुनिसत्तम ॥ १०
यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः ।
शूद्रयोनौ समुत्पन्ना वियोनौ च तथा परे ॥ ११
पराशर उवाच ।
राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना ।
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् ॥ १२
उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह ।
स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः ॥ १३
पितामहश्च मे पूर्वमृश्यशृङ्गश्च काश्यपः ।
वेदस्ताण्ड्यः कृपश्चैव काक्षीवत्कमठादयः ॥ १४
यवक्रीतश्च नृपते द्रोणश्च वदतांवरः ।
आयुर्मतङ्गो दत्तश्च द्रुमदो मात्स्य एव च ॥ १५
एते स्वां प्रकृतिं प्राप्ता वैदेह तपसो बलात् ।
प्रतिष्ठिता वेदविदो दमेन तपसैव हि ॥ १६
मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव ।
अङ्गिराः कश्यपश्चैव वसिष्ठो भृगुरेव च ॥ १७
कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।
नामधेयानि तपसा तानि च ग्रहणं सताम् ॥ १८
जनक उवाच ।
विशेषधर्मान्वर्णानां प्रब्रूहि भगवन्मम ।
ततः सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥ १९
पराशर उवाच ।
प्रतिग्रहो याजनं च तथैवाध्यापनं नृप ।
विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना ॥ २०
कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि ।
द्विजानां परिचर्या च शूद्रकर्म नराधिप ॥ २१
विशेषधर्मा नृपते वर्णानां परिकीर्तिताः ।
धर्मान्साधारणांस्तात विस्तरेण शृणुष्व मे ॥ २२
आनृशंस्यमहिंसा चाप्रमादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥ २३
स्वेषु दारेषु संतोषः शौचं नित्याऽनसूयता ।
आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥ २४
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
अत्र तेषामधीकारो धर्मेषु द्विपदां वर ॥ २५
विकर्मावस्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथा सन्त आश्रित्येह स्वकर्मसु ॥ २६

न चापि शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति वा ।
श्रुतिप्रयुक्तं न च धर्ममाप्नुते
न चास्य धर्मे प्रतिषेधनं कृतम् ॥ २७
वैदेहकं शूद्रमुदाहरन्ति
द्विजा महाराज श्रुतोपपन्नाः ।
अहं हि पश्यामि नरेन्द्र देवं
विश्वस्य विष्णुं जगतः प्रधानम् ॥ २८

सतां वृत्तमधिष्ठाय निहीना उद्दिधीर्षवः ।
मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः ॥
यथायथा हि सद्वृत्तमालम्बन्तीतरे जनाः ।
यथातथा सुखं प्राप्य प्रेत्य चेह च मोदते ॥ ३०
जनक उवाच ।
किं कर्म दूषयत्येनमथो जातिर्महामुने ।
संदेहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि ॥ ३१
पराशर उवाच ।
असंशयं महाराज उभयं दोषकारकम् ।
कर्म चैव हि जातिश्च विशेषं तु निशामय ॥ ३२
जात्या च कर्मणा चैव दुष्टं कर्म न सेवते ।
जात्या दुष्टश्च यः पापं न करोति स पूरुषः ॥ ३३
जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम् ।
कर्म तद्दूषयत्येनं तस्मात्कर्म न शोभनम् ॥ ३४
जनक उवाच ।
कानि कर्माणि धर्म्याणि लोकेऽस्मिन्द्विजसत्तम ।
न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा ॥ ३५

---

क्षत्रियादिभावेन भिन्नत्वम् । गोत्रतः अन्वयतः । गोत्राणि ब्रह्मक्षत्रियादीनि उग्राम्बष्ठादीनि च । तस्माज्जातितारतम्यमयुक्तमित्यर्थः ॥ १० ॥ यथा काक्षीवता शूद्रायामुत्पादिताः पुत्रा ब्राह्मणत्वं नीता ननु ते निषादत्वं प्राप्ता इत्यर्थः । तस्मात्कारणद्वारा कार्यद्वारा वा जातिभेदो न युक्त इति भावः ॥ ११ ॥ वसुस्ताण्ड्य इति थ. पाठः । वटस्ताण्ड्य इति ध. पाठः ॥ १४ ॥ तपसो श्रयादिति थ. पाठः ॥ १६ ॥ निरये त्रय इति थ. पाठः ॥२६॥ द्व्यधिकत्रिशततमोऽध्यायः ॥३०२॥

पराशर उवाच ।
शृणु मेऽत्र महाराज यन्मां त्वं परिपृच्छसि ।
यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्वदा ॥ ३६
संन्यस्याग्नीनुदासीनाः पश्यन्ति विगतज्वराः ।
नैःश्रेयसं कर्मपथं समारुह्य यथाक्रमम् ॥ ३७
प्रश्रिता विनयोपेता दमनित्याः सुसंशिताः ।
प्रयान्ति स्थानमजरं सर्वकर्मविवर्जिताः ॥ ३८
सर्वे वर्णा धर्मकार्याणि सम्यक्
कृत्वा राजन्सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वा धर्मं दारुणं जीवलोके
यान्ति स्वर्गं नात्र कार्यो विचारः ॥ ३९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

## त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥

भीष्मेण युधिष्ठिरंप्रति धर्मादिसाधनतया मानुष्यप्रशंसापूर्वकं नानाधर्मप्रतिपादकपराशरगीतानुवादः ॥ १ ॥

पराशर उवाच ।
पिता सखायो गुरवः स्त्रियश्च
न निर्गुणानां प्रभवन्ति लोके ।
अनन्यभक्ताः प्रियवादिनश्च
हिताश्च वश्याश्च तथैव राजन् ॥ १
पिता परं दैवतं मानवानां
मातुर्विशिष्टं पितरं वदन्ति ।
ज्ञानस्य लाभं परमं वदन्ति
जितेन्द्रियार्थाः परमाप्नुवन्ति ॥ २
रणाजिरे यत्र शराग्निसंस्तरे
नृपात्मजो घातमवाप्य दह्यते ।
प्रयाति लोकानमरैः सुदुर्लभा-
न्निषेवते स्वर्गफलं यथासुखम् ॥ ३
श्रान्तं भीतं भ्रष्टशस्त्रं रुदन्तं
पराङ्मुखं पारिबर्हैश्च हीनम् ।
अनुद्यन्तं रोगिणं याचमानं
न वै हिंस्याद्बालवृद्धौ च राजन् ॥ ४
पारिबर्हैः सुसंयुक्तमुद्यतं तुल्यतां गतम् ।
अतिक्रमेत्तं नृपतिः संग्रामे क्षत्रियात्मजम् ॥ ५
तुल्यादिह वधः श्रेयान्विशिष्टाच्चेति निश्चयः ।
निहीनात्कातराच्चैव कृपणाद्गर्हितो वधः ॥ ६
पापात्पापसमाचारान्निहीनाच्च नराधिप ।
पाप एष वधः प्रोक्तो नरकायेति निश्चयः ॥ ७
न कश्चित्त्राति वै राजन्दिष्टान्तवशमागतम् ।
सावशेषायुषं चापि कश्चिन्नैवापकर्षति ॥ ८
स्निग्धैश्च क्रियमाणानि कर्माणीह निवर्तयेत् ।
हिंसात्मकानि सर्वाणि नायुरिच्छेत्परायुषा ॥ ९
गृहस्थानां तु सर्वेषां विनाशमभिकाङ्क्षताम् ।
निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥ १०
आयुषि क्षयमापन्ने पञ्चत्वमुपगच्छति ।
तथा ह्यकारणाद्भवति कारणैरुपपादितम् ॥ ११
तथा शरीरं भवति देहाद्येनोपपादितम् ।
अध्वानं गतकश्चायं प्राप्तश्चायं गृहाद्गृहम् ॥ १२
द्वितीयं कारणं तत्र नान्यत्किंचन विद्यते ।
तद्देहं देहिनां युक्तं मोक्षभूतेषु वर्तते ॥ १३
शिरास्नाय्वस्थिसंघातं बीभत्सामेध्यसंकुलम् ।
भूतानामिन्द्रियाणां च गुणानां च समागमम् १४
त्वगन्तं देहमित्याहुर्विद्वांसोऽध्यात्मचिन्तकाः ।
गुणैरपि परिक्षीणं शरीरं मर्त्यतां गतम् ॥ १५
शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनम् ।
भूतैः प्रकृतिमापन्नैस्ततो भूमौ निमज्जति ॥ १६
भावितं कर्मयोगेन जायते तत्रतत्र ह ।

लाभं लाभहेतुम् ॥ २ ॥ पारिबर्हैः रथाश्वकवचादिभिः ॥४॥ अतिक्रमेज्जयेत् ॥ ५ ॥ दिष्टान्तो मृत्युः ॥ ८ ॥ सन्नद्धैः क्रियमाणानीति थ. पाठः । हिंसात्मकानि कर्माणीति ध. पाठः ॥ ९ ॥ पुलिनेषु पुलिनवत्सु तीर्थेषु निधनं मरणं श्रेयः ॥१०॥ शरीरं मन्दतां गतमिति ध. पाठः ॥ १५ ॥

इदं शरीरं वैदेह म्रियते यत्रयत्र ह ।
तत्प्रधानं परो दृष्टो विसर्गः कर्मणस्तथा ॥ १७
न जायते तु नृपते कंचित्कालमयं पुनः ।
परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान् ॥१८
स पुनर्जायते राजन्प्राप्येहायतनं नृपः ।
मनसः परमो ह्यात्मा इन्द्रियेभ्यः परं मनः ॥१९
विविधानां च भूतानां जङ्गमाः परमा नृप ।
जङ्गमानामपि तथा द्विपदाः परमा मताः ।
द्विपदानामपि तथा द्विजा वै परमाः स्मृताः॥२०
द्विजानामपि राजेन्द्र प्रज्ञावन्तः परा मताः ।
प्राज्ञानामात्मसंबुद्धाः संबुद्धानाममानिनः ॥२१
जातमन्वेति मरणं नृणामिति विनिश्चयः ।
अन्तवन्ति हि कर्माणि सेवन्ते गुणतः प्रजाः॥२२
आपन्ने तूत्तरां काष्ठां सूर्ये यो निधनं व्रजेत् ।
नक्षत्रे च मुहूर्ते च पुण्ये राजन्स पुण्यकृत् ॥ २३
अयोजयित्वा क्लेशेन जनं प्लाप्य च दुष्कृतम् ।
मृत्युनाऽऽत्मकृतेनेह कर्म कृत्वाऽऽत्मशक्तितः२४
विषमुद्बन्धनं दाहो दस्युहस्तात्तथा वधः ।
दंष्ट्रिभ्यश्च पशुभ्यश्च प्राकृतो वध उच्यते ॥ २५
न चैभिः पुण्यकर्माणो युज्यन्ते चाभिसंधिजैः ।
एवंविधैश्च बहुभिरपरैः प्राकृतैरपि ॥ २६
ऊर्ध्वं भित्त्वा प्रतिष्ठन्ते प्राणाः पुण्यवतां नृप ।
मध्यतो मध्यपुण्यानामधो दुष्कृतकर्मणाम् ॥ २७

एकः शत्रुर्न द्वितीयोस्ति शत्रु-
रज्ञानतुल्यः पुरुषस्य राजन् ।
येनावृतः कुरुते संप्रयुक्तो
घोराणि कर्माणि सुदारुणानि ॥ २८

प्रबोधनार्थं श्रुतिधर्मयुक्तं
वृद्धानुपास्य प्रभवेत यस्य ।
प्रयत्नसाध्यो हि स राजपुत्र
प्रज्ञाशरेणोन्मथितः परैति ॥ २९

अधीत्य वेदं तपसा ब्रह्मचारी
यज्ञाञ्शक्त्या सन्निसृज्येह पञ्च ।
वनं गच्छेत्पुरुषो धर्मकामः
श्रेयः कृत्वा स्थापयित्वा स्ववंशम् ॥ ३

उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः ।
चण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम्॥३
इयं हि योनिः प्रथमा यां प्राप्य जगतीपते ।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥३
कथं न विप्रणश्येम योनितोस्या इति प्रभो ।
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ॥ ३
यो दुर्लभतरं प्राप्य मानुष्यं द्विषते नरः ।
धर्मावमन्ता कामात्मा भवेत्स खलु वञ्च्यते ॥३
यस्तु प्रीतिपुराणेन चक्षुषा तात पश्यति ।
दीपोपमानि भूतानि यावदर्थान्न पश्यति ॥ ३
सान्त्वेनान्नप्रदानेन प्रियवादेन चाप्युत ।
समदुःखसुखो भूत्वा स परत्र महीयते ॥ ३

दानं त्यागः शोभना मूर्तिरद्भ्यो
भूयः प्लाव्यं तपसा वै शरीरम् ।
सरस्वतीनैमिषपुष्करेषु
ये चाप्यन्ये पुण्यदेशाः पृथिव्याम् ॥ ३७
गृहेषु येषामसवः पतन्ति
तेषामथो निर्हरणं प्रशस्तम् ।
यानेन वै प्रापणं च श्मशाने
शुचौ देशे विधिना चैव दाहः ॥ ३८
इष्टिः पुष्टिर्यजनं याजनं च
दानं पुण्यानां कर्मणां च प्रयोगः ।
शक्त्या पित्र्यं यच्च किंचित्प्रशस्तं
सर्वाण्यात्मार्थे मानवोऽयं करोति ॥ ३९

'गृहस्थानां च सर्वेषां विनाशमभिकाङ्क्षताम् ।
निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥' ४०
धर्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप ।

---

तत्स्वभावो परो दृष्ट इति झ. पाठः ॥ १७ ॥ आत्मा वै शक्यते ज्ञातुमिति ध. पाठः ॥ ३२ ॥ सांत्वेनान्नप्रदानेनेति झ. पाठः ॥ ३६ ॥ प्रीतिपुराणेन प्रीत्या चिरंतनेन दीपोपमानि स्नेहेन संवर्धनीयानि । यावदर्थान् सर्वान्विषयान् दयावान् भूतानि पश्यति विरक्तोऽर्थान्न पश्यति यः स महीयते इत्युत्तरेण संबन्धः ॥ ३५ ॥ शौचेन नूनं विधिना चेति झ. पाठः ॥ ३८ ॥ त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥

श्रेयसोर्थे विधीयन्ते नरस्याक्लिष्टकर्मणः ॥ ४१
भीष्म उवाच ।
एतद्वै सर्वमाख्यातं मुनिना सुमहात्मना ।
विदेहराजाय पुरा श्रेयसोर्थे नराधिप ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥

---

## चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

भीष्मेण युधिष्ठिरंप्रति श्रेयःसाधनकलापप्रतिपादकपराशरगीतानुवादसमापनम् ॥ १ ॥

भीष्म उवाच ।
पुनरेव तु पप्रच्छ जनको मिथिलाधिपः ।
पराशरं महात्मानं धर्मे परमनिश्चयम् ॥ १
जनक उवाच ।
किं श्रेयः का गतिर्ब्रह्मन्किं कृतं न विनश्यति ।
क्व गतो न निवर्तेत तन्मे ब्रूहि महामते ॥ २
पराशर उवाच ।
असङ्गः श्रेयसो मूलं ज्ञानं ज्ञानगतिः परा ।
चीर्णं तपो न प्रणश्येद्वापः क्षेत्रे न नश्यति ॥ ३
छित्त्वाऽधर्ममयं पाशं यदा धर्मेऽभिरज्यते ।
दत्त्वाऽभयकृतं दानं तदा सिद्धिमवाप्नुते ॥ ४
यो ददाति सहस्राणि गवामश्वशतानि च ।
अभयं सर्वभूतेभ्यः सदा तमभिवर्तते ॥ ५
वसन्विषयमध्येऽपि न वसत्येव बुद्धिमान् ।
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि ॥ ६
नाधर्मः श्लिष्यते प्राज्ञं पयः पुष्करपर्णवत् ।
अप्राज्ञमधिकं पापं श्लिष्यते जतुकाष्ठवत् ॥ ७
नाधर्मः कारणापेक्षी कर्तारमभिमुञ्चति ।
कर्ता खलु यथाकालं ततः समभिपद्यते ॥ ८
न भिद्यन्ते कृतात्मान आत्मप्रत्ययदर्शिनः ।
बुद्धिकर्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते ।
शुभाशुभे प्रसक्तात्मा प्राप्नोति सुमहद्भयम् ॥ ९
वीतरागो जितक्रोधः सम्यग्भवति यः सदा ।
विषये वर्तमानोऽपि न स पापेन युज्यते ॥ १०
मर्यादायां धर्मसेतुर्निबद्धो नावसीदति ।
पुष्टस्रोत इवासक्तः स्फीतो भवति संचयः ॥ ११
यथा भानुगतं तेजो मणिः शुद्धः समाधिना ।
आदत्ते राजशार्दूल तथा योगः प्रवर्तते ॥ १२
यथा तिलानामिह पुष्पसंश्रया-
त्पृथक्पृथग्याति गुणोऽतिसाम्यताम् ।
तथा नराणां भुवि भावितात्मनां
यथाश्रयं सत्वगुणः प्रवर्तते ॥ १३
जहाति दारान्विविधाश्च संपदः
पदं च यानं विविधाश्च सत्क्रियाः ।
त्रिविष्टपे जातमतिर्यदा नर-
स्तदाऽस्य बुद्धिर्विषयेषु भिद्यते ॥ १४
प्रसक्तबुद्धिर्विषयेषु यो नरो
न बुध्यते ह्यात्महितं कथंचन ।
स सर्वभावानुगतेन चेतसा
नृपाऽऽमिषेणेव झषो विकृष्यते ॥ १५
संघातवन्मर्त्यलोकः परस्परमपाश्रितः ।
कदलीगर्भनिःसारो नौरिवाप्सु निमज्जति ॥ १६
न धर्मकालः पुरुषस्य निश्चितो
न चापि मृत्युः पुरुषं प्रतीक्षते ।

---

श्रेयः श्रेयःसाधनम् । क्व गत्वा न निवर्तन्त इति ङ. थ. पाठः ॥ २ ॥ ज्ञानं चैव परा गतिरिति ङ. थ. पाठः । न प्रणश्येत्संसिद्धो न निवर्तते इति ङ. थ. पाठः ॥ ३ ॥ स दानमतिवर्तते इति ध. पाठः ॥ ५ ॥ यथा नद्यां बद्धः सेतुर्नैव सीदति स्रोतःपुष्टिं करोति एवमसक्तो धर्म एव सेतुर्यस्य सः । मर्यादायां बद्धो नैव सीदति । संचयस्तपोवृद्धिश्च स्फीता भवतीत्यर्थः ॥ ११ ॥ यथानिलानामिह पुष्पसंचयादिति ध. पाठः ॥ १३ ॥ जहाति राजन्विहितेन संपदा सदश्वयानं विविधाश्च शय्याः इति ध. पाठः ॥ १४ ॥ आमिषेण बडिशगर्भितेन । झषो मत्स्यः । न विन्दते ह्यात्मपदं कदाचनेति ङ. थ. पाठः ॥ १५ ॥ संघातवद्देहेन्द्रियादिसमुदायवत् । मर्त्यलोकः स्त्रीपुत्रपश्वादिसमुदायः । अपाश्रित उपकारकः ॥ १६ ॥

सदा हि धर्मस्य क्रियैव शोभना
तदा नरो मृत्युमुखान्निवर्तते ॥ १७
यथाऽन्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति ।
तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् ॥ १८
मरणं जन्मनि प्रोक्तं जन्म वै मरणाश्रितम् ।
अविद्वान्मोक्षधर्मेषु बद्धो भ्रमति चक्रवत् ॥ १९
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ।
विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः ।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ २०
यथा मृणालानुगतमाशु मुञ्चति कर्दमम् ।
तथाऽऽत्मा पुरुषस्येह मनसा परिमुच्यते ॥ २१
मनः प्रणयतेऽऽत्मानं स एनमभियुञ्जति ।
युक्तो यदा स भवति तदा तं पश्यते परम् ॥ २२
परार्थे वर्तमानस्तु स्वं कार्यं योऽभिमन्यते ।
इन्द्रियार्थेषु सक्तः स स्वकार्यात्परिहीयते ॥ २३
अधस्तिर्यग्गतिं चैव स्वर्गे चैव परां गतिम् ।
प्राप्नोति सुकृतैरात्मा प्राज्ञस्येहेतरस्य च ॥ २४
मृन्मये भाजने पक्वे यथा वै नश्यति द्रवः ।
तथा शरीरं तपसा तप्तं विषयमश्नुते ॥ २५
विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम् ।
यस्तु भोगांस्त्यजेदात्मा स वै भोक्तुं व्यवस्यति २६
नीहारेण हि संवीतः शिश्नोदरपरायणः ।
जात्यन्ध इव पन्थानमावृतात्मा न बुध्यते ॥ २७
वणिग्यथा समुद्राद्वै यथार्थं लभते धनम् ।
तथा मर्त्यार्णवाज्जन्तोः कर्मविज्ञानतो गतिः ॥ २८
अहोरात्रमये लोके जरारूपेण संचरन् ।
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥ २९
स्वयं कृतानि कर्माणि जातो जन्तुः प्रपद्यते ।
नाकृतं लभते कश्चित्किंचिदत्र प्रियाप्रियम् ॥ ३०
शयानं यान्तमासीनं प्रवृत्तं विषयेषु च ।
शुभाशुभानि कर्माणि प्रपद्यन्ते नरं सदा ॥ ३१

न ह्यन्यत्तीरमासाद्य पुनस्तर्तुं व्यवस्यति ।
दुर्लभो दृश्यते ह्यस्य विनिपातो महार्णवे ॥ ३२
यथा भारावसन्ना हि नौर्महाम्भसि तन्तुना ।
यथा मनोभियोगाद्वै शरीरं प्रचिकीर्षति ॥ ३३
यथा समुद्रमभितः संश्रिताः सरितोऽपराः ।
तथाऽन्याप्रकृतिर्योगादभिसंश्रियते सदा ॥ ३४
स्नेहपाशैर्बहुविधैरासक्तमनसो नराः ।
प्रकृतिस्था विषीदन्ति जले सैकतवेश्मवत् ॥ ३५
शरीरगृहसंस्थस्य शौचतीर्थस्य देहिनः ।
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ॥ ३६
विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः ।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ ३७
संकल्पजो मित्रवर्गो ज्ञातयः कारणात्मकाः ।
भार्या पुत्रश्च दासश्च स्वमर्थमनुयुञ्जते ॥ ३८
न माता न पिता किंचित्कस्यचित्प्रतिपद्यते ।
दानपथ्यौदनो जन्तुः स्वकर्मफलमश्नुते ॥ ३९
माता पुत्रः पिता भ्राता भार्या मित्रजनस्तथा ।
अष्टापदपदस्थाने लाक्षामुद्रेव लक्ष्यते ॥ ४०
सर्वाणि कर्माणि पुराकृतानि
शुभाशुभान्यात्मनो यान्ति जन्तोः ।
उपस्थितं कर्मफलं विदित्वा
बुद्धिं तथा चोदयतेऽन्तरात्मा ॥ ४१
व्यवसायं समाश्रित्य सहायान्योऽधिगच्छति ।
न तस्य कश्चिदारम्भः कदाचिदवसीदति ॥ ४२
अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम् ।
न श्रीः संत्यजते नित्यमादित्यमिव रश्मयः ॥ ४३
आस्तिक्यव्यवसायाभ्यामुपायान्वितया धिया ।
य आरभत्यनिन्द्यात्मा न सोऽर्थात्परिसीदति ४४
सर्वैःस्वानि शुभाशुभानि नियतं कर्माणि जन्तुःस्वयं
गर्भात्संप्रतिपद्यते तदुभयं यत्तेन पूर्वं कृतम् ।

जन्मनि जन्मनिमित्तम् ॥१९॥ विस्तराः वैतानिकान्यग्निहोत्रादीनि । संक्षेपास्त्यागादयः ॥२०॥ स्वकार्यं यो निवर्तते इति थ. ध. पाठः ॥२३॥ मृण्मये भाजने वह्नौ यथा वै शुष्यते द्रवमिति ङ. थ. पाठः ॥२५॥ यान्ति फलं दातुमिति शेषः ॥४१॥ व्यवसायमुद्योगम् ॥४२॥ अद्वैधमनसं एकाग्रचित्तम् ॥४३॥ गर्भात् गर्भप्रवेशमारभ्य । यत् यस्मात्तदुभय शुभाशुभम् । अपरिहारवान्परिहर्तुमशक्यः । कालेन प्राप्तेन विच्छेदिना जीवननाशकेन सहायेन मृत्युः कर्मान्तिक दिष्टान्तं विनाशाख्यं प्रापयेत् । दारोः

मृत्युश्चापरिहारवान्समगतिः कालेन विच्छेदिना
दारोश्चूर्णमिवाश्मसारविहितं कर्मान्तिकं प्रापयेत्
स्वरूपतामात्मकृतं च विस्तरं
कुलान्वयं द्रव्यसमृद्धिसंचयम् ।
नरो हि सर्वो लभते यथाकृतं
शुभाशुभेनात्मकृतेन कर्मणा ॥ ४६
भीष्म उवाच ।
इत्युक्तो जनको राजन्याथातथ्यं मनीषिणा ।
श्रुत्वा धर्मविदां श्रेष्ठः परां मुदमवाप ह ॥ ४७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

पराशरगीतासमाप्ता ॥

---

## पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥

भीष्मेण युधिष्ठिरंप्रति मोक्षसाधनप्रतिपादकहंससाध्यसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
सत्यं दमं क्षमां प्रज्ञां प्रशंसन्ति पितामह ।
विद्वांसो मनुजा लोके कथमेतन्मतं तव ॥ १
भीष्म उवाच ।
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
साध्यानामिह संवादं हंसस्य च युधिष्ठिर ॥ २
हंसो भूत्वाऽथ सौवर्णस्त्वजो नित्यः प्रजापतिः ।
स वै पर्येति लोकांस्त्रीनथ साध्यानुपागमत् ॥ ३
साध्या ऊचुः ।
शकुने वयं स्म देवा वै साध्यास्त्वामनुयुङ्क्ष्महे ।
पृच्छामस्त्वां मोक्षधर्मं भवांश्च किल मोक्षवित् ॥ ४
श्रुतोसि नः पण्डितो धीरवादी
साधुः शब्दश्चरते ते पतत्रिन् ।
किं मन्यसे श्रेष्ठतमं द्विज त्वं
कस्मिन्मनस्ते रमते महात्मन् ॥ ५
तन्नः कार्यं पक्षिवर प्रशाधि
यत्कार्याणां मन्यसे श्रेष्ठमेकम् ।
यत्कृत्वा वै पुरुषः सर्वबन्धै-
र्विमुच्यते विहगेन्द्रेह शीघ्रम् ॥ ६
हंस उवाच ।
इदं कार्यममृताशाः शृणुध्वं
तपो दमः सत्यमात्माभिगुप्तिः ।
ग्रन्थीन्विमुच्य हृदयस्य सर्वा-
न्प्रियाप्रिये स्वं वशमानयीत ॥ ७
नारुंतुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेदुशतीं पापलोक्याम् ॥ ८
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ ९
परश्चेदेनमतिवादबाणै-
र्भृशं विध्येच्छम एवेह कार्यः ।

---

काष्ठस्य चूर्णं अश्मसारविहितं क्रकचकृतम् । समा शीतोष्णसाम्यवती गतिर्यस्य स समगतिर्वायुः । दारुचूर्णमिव मृत्युर्नरं कालेनान्तं नयतीत्यर्थः । कर्मान्तरं प्रापयेदिति ध. पाठः॥४५॥ स्वरूपतां स्वस्य रूपं हिरण्यं पशवो विवाहा इति श्रुतं रूपमिव रूपं यस्य स्वकुलानुसारि विवाहादिकं तदेव तत्ता ताम् । आत्मकृत विस्तरं पुत्रसंतत्यादिपौष्कल्यम् । कुलान्वयं सत्कुले जन्म । यथाकृतं कृतमनतिक्रम्य सर्वं प्राक्कर्मवशादेव लभ्यते ॥ ४६ ॥ चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

हे द्विज पक्षिन् ॥ ५ ॥ भो अमृताशा अमृतभुजो देवाः । तपः स्वधर्माचरणम् । ग्रन्थीन् रागादीन् ॥ ७ ॥ अरुंतुदो मर्मच्छित् ॥ ८ ॥

संरोप्यमाणः प्रतिहृष्यते यः
स आदत्ते सुकृतं वै परस्य ॥ १०
क्षेपायमाणमभिषङ्गव्यलीकं
निगृह्णाति ज्वलितं यश्च मन्युम् ।
अदुष्टचेता मुदितोऽनसूयुः
स आदत्ते सुकृतं वै परेषाम् ॥ ११
आक्रुश्यमानो न वदामि किंचि-
त्क्षमाम्यहं ताड्यमानश्च नित्यम् ।
श्रेष्ठं ह्येतद्यत्क्षमामाहुरार्याः
सत्यं तथैवार्जवमानृशंस्यम् ॥ १२
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषन्मोक्ष एतत्सर्वानुशासनम् ॥ १३
वाचो वेगं मनसः क्रोधवेगं
विधित्सावेगमुदरोपस्थवेगम् ।
एतान्वेगान्यो विषहेदुदीर्णा-
स्तं मन्येऽहं ब्राह्मणं वै मुनिं च ॥ १४
अक्रोधनः क्रुध्यतां वै विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषान्मानुषो वै विशिष्ट-
स्तथाऽज्ञानाज्ज्ञानवान्वै विशिष्टः ॥ १५
आक्रुश्यमानो नाक्रोशेन्मन्युरेवं तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ १६
यो नात्युक्तः प्राह रूक्षं प्रियं वा
यो वा हतो न प्रतिहन्ति धैर्यात् ।
पापं च यो नेच्छति तस्य हन्तु-
स्तस्येह देवाः स्पृहयन्ति नित्यम् ॥ १७
पापीयसः क्षमेतैव श्रेयसः सदृशस्य च ।
विमानितो हतोक्रुष्ट एवं सिद्धिं गमिष्यति ॥१८
सदाऽहमार्यान्निभृतोप्युपासे
न मे विधित्सोत्सहते न रोषः ।
न चाप्यहं लिप्समानः परैमि
न चैव किंचिद्विषमेण यामि ॥ १९
नाहं शप्तः प्रतिशपामि कंचि-
द्दमं द्वारं ह्यमृतस्येह वेद्मि ।
गुह्यं ब्रह्म तदिदं ब्रवीमि
न मानुषाच्छ्रेष्ठतरं हि किंचित् ॥ २०
निर्मुच्यमानः पापेभ्यो घनेभ्य इव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण सिध्यति॥२१
यः सर्वेषां भवति ह्यर्चनीय
उत्सेचने स्तम्भ इवाभिजातः ।
यस्मै वाचं सुप्रसन्नां वदन्ति
स वै देवान्गच्छति संयतात्मा ॥ २२
न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान् ।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ २३
यस्य वाङ्मनसी गुप्ते सम्यक्प्रणिहिते सदा ।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ २४
आक्रोशनविमानाभ्यां नाबुधान्बोधयेद्बुधः ।
तस्मान्न वर्धयेदन्यं न चात्मानं विहिंसयेत् ॥२५
अमृतस्येव संतृप्येदवमानस्य पण्डितः ।
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥२६
यत्क्रोधनो यजति यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं
मोघः श्रमो भवति हि क्रोधनस्य ॥ २७
चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक्चतुर्थी स धर्मवित् ॥ २८
सत्यं दमं ह्यार्जवमानृशंस्यं
धृतिं तितिक्षामभिसेवमानः ।
स्वाध्यायनित्योऽस्पृहयन्परेषा-
मेकान्तशील्यूर्ध्वगतिर्भवेत्सः ॥ २९

---

क्षेपायमाणमधिक्षेपकारिणम् । अभिषङ्गव्यलीकमभिनिवेशवशादप्रियम् ॥ ११ ॥ उपनिषद्रहस्यं वेदाधिगमस्य फलं सत्यवचनमित्यर्थः । दमस्योपनिषत्त्याग इति ध. पाठः ॥१३॥ विधित्सा विशिष्टा पिपासा । धेट् पानेऽस्य रूपम् । तृष्णावेगमित्यर्थः । ब्राह्मणं ब्रह्मिष्ठम् । मुनिं ध्यायिनम् ॥ १४ ॥ अज्ञानाज्ज्ञानहीनान्मूढात् ॥ १५ ॥ अत्युक्तोऽत्यन्तं निन्दितः ॥ १७ ॥ निभृतोऽपि पूर्णोऽपि । विधित्सा तृष्णा । उत्सहते उल्लसति । परैमि धर्मादपगच्छामि ॥ १९ ॥ ब्रह्म महत् ॥ २० ॥ नैर्गुण्यं दोषम् । अनुयुञ्जकाः स्पर्धावन्तः ॥ २३ ॥ अबुधान् आक्रोष्ट्न् शुनकानिव न बोधयेत् । न वर्धयेत् न हिंसयेत् । मबुध्वा वर्धते बुध इति ड. पाठः ॥ २५ ॥ अस्पृहयन्परेषां आशां जितवान् ॥ २९ ॥

सर्वान्वेदाननुचरन्वत्सवच्चतुरः स्तनान् ।
न पावनतमं किंचित्सत्यादध्यगमं क्वचित् ॥३०
आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रतिसंचरन् ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ३१
यादृशैः संविवदते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ ३२
यदि सन्तं सेवति यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रागवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ ३३
सदा देवाः साधुभिः संवदन्ते
न मानुषं विषयं यान्ति द्रष्टुम् ।
नेन्दुः समः स्यादसमो हि वायु-
रुच्चावचं विषयं यः स वेद ॥ ३४
अदुष्टं वर्तमाने तु हृदयान्तरपूरुषे ।
तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ॥ ३५
शिश्नोदरे ये निरताः सदैव
स्तेना नरा वाक्परुषाश्च नित्यम् ।
अपेतधर्मानिति तान्विदित्वा
दूराद्देवाः संपरिवर्जयन्ति ॥ ३६
न वै देवा हीनसत्त्वेन तोष्याः
सर्वाशिना दुष्कृतकर्मणा वा ।
सत्यव्रता ये तु नराः कृतज्ञा
धर्मे रतास्तैः सह संभजन्ते ॥ ३७
अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
धर्म्यं वदेद्व्याहृतं तत्तृतीयं
प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ ३८

साध्या ऊचुः ।
केनायमावृतो लोकः केन वा न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥३९
हंस उवाच ।
अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥४०
साध्या ऊचुः ।
कः स्विदेको रमते ब्राह्मणानां
कः स्विदेको बहुभिर्जोषमास्ते ।
कः स्विदेको बलवान्दुर्बलोपि
कः स्विदेषां कलहं नान्ववैति ॥ ४१
हंस उवाच ।
प्राज्ञ एको रमते ब्राह्मणानां
प्राज्ञश्चैको बहुभिर्जोषमास्ते ।
प्राज्ञ एको बलवान्दुर्बलोऽपि
प्राज्ञ एषां कलहं नान्ववैति ॥ ४२
साध्या ऊचुः ।
किं ब्राह्मणानां देवत्वं किंच साधुत्वमुच्यते ।
असाधुत्वे च किं तेषां किमेषां मानुषं मतम् ॥४३
हंस उवाच ।
स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते ।
असाधुत्वं परीवादो मृत्युर्मानुष्यमुच्यते ॥ ४४
भीष्म उवाच ।
'इत्युक्त्वा परमो देवो भगवान्नित्य अव्ययः ।
साध्यैर्देवगणैः सार्धं दिवमेवारुरोह सः ॥ ४५
एतद्यशस्यमायुष्यं पुण्यं स्वर्ग्याय च ध्रुवम् ।
दर्शितं देवदेवेन परमेणाव्ययेन च ॥' ४६
संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्तितः ।
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ॥४७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥

---

आचक्षे कथयामि । पारावारस्य समुद्रस्य ॥ ३१ ॥ इन्दुरमृतमयोऽपि न समः किंतूपचयापचयधर्मा । तथा वायुरप्यसम एव । मन्दमध्यमतीव्रभेदात् । एवं सर्वं विषयमुच्चावचमुपचयापचयवन्तं यो वेद स एव वेद नान्य इत्यर्थः ॥ ३४ ॥ हीनसत्त्वेन नीचबुद्धिना । संभजन्ते सुखं विभज्य सेवन्ते ॥३७॥ अव्याहृतं मौनम् ॥३८॥ पञ्चाधिकत्रिशततमोऽध्यायः॥३०५॥

## षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

भीष्मेण युधिष्ठिरंप्रति योगनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
साङ्ख्ये योगे च मे तात विशेषं वक्तुमर्हसि ।
तव धर्मज्ञ सर्वं हि विदितं कुरुसत्तम ॥ १
भीष्म उवाच ।
साङ्ख्याः साङ्ख्यं प्रशंसन्ति योगा योगं द्विजातयः ।
वदन्ति कारणं श्रेष्ठं स्वपक्षोद्भावनाय वै ॥ २
अनीश्वरः कथं मुच्येदित्येवं शत्रुसूदन ।
वदन्ति कारणश्रैष्ठ्यं योगाः सम्यङ्मनीषिणः ॥३
वदन्ति कारणं चेदं साङ्ख्याः सम्यग्द्विजातयः ।
विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः ॥ ४
ऊर्ध्वं स देहात्सुव्यक्तं विमुच्येदिति नान्यथा ।
एतदाहुर्महाप्राज्ञाः साङ्ख्यं वै मोक्षदर्शनम् ॥ ५
स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम् ।
शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसंमतैः ॥ ६
प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः ।
उभे चैते मते तत्त्वे मम तात युधिष्ठिर ॥ ७
उभे चैते मते ज्ञाने नृपते शिष्टसंमते ।
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥ ८
तुल्यं शौचं तयोरेकं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ।
'तयोस्तु दर्शनं सम्यक्सूक्ष्माभावे प्रसज्यते ॥'९
युधिष्ठिर उवाच ।
यदि तुल्यं व्रतं शौचं दया चात्र फलं तथा ।
न तुल्यं दर्शनं कस्मात्तन्मे ब्रूहि पितामह ॥ १०
भीष्म उवाच ।
रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् ।
योगाच्छित्त्वा ततो दोषान्पञ्चैतान्प्राप्नुवन्ति ते ११
यथा चानिमिषाः स्थूला जालं छित्त्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः ॥ १२
तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥ १३
लोभजानि तथा राजन्बन्धनानि बलान्विताः ।
छित्त्वा योगात्परं मार्गं गच्छन्ति विमलं शिवम्१४
अबलाश्च मृगा राजन्वागुरासु यथा परे ।
विनश्यन्ति न संदेहस्तद्वद्योगबलादृते ॥ १५
बलहीनाश्च कौन्तेय यथा जालं गता झषाः ।
अन्तं गच्छन्ति राजेन्द्र योगास्तद्वत्सुदुर्बलाः ॥१६
यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिंदम ।
तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः १७
कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परंतप ।
अबला वै विनश्यन्ति मुच्यन्ते च बलान्विताः१८
अल्पकश्च यथा राजन्वह्निः शाम्यति दुर्बलः ।
आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगो बलः प्रभो १९
स एव च यदा राजन्वह्निर्जातबलः पुनः ।
समीरणयुतः क्षिप्रं दहेत्कृत्स्नां महीमपि ॥ २०
तद्वज्जातबलो योगी दीप्ततेजा महाबलः ।
अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् ॥२१
दुर्बलश्च यथा राजन्स्रोतसा ह्रियते नरः ।
बलहीनस्तथा योगो विषयैर्ह्रियतेऽवशः ॥ २२
तदेव च महास्रोतो विष्टम्भयति वारणः ।
तद्वद्योगबलं लब्ध्वा व्यूहते विषयान्बहून् ॥ २३
विशन्ति चावशाः पार्थ योगाद्योगबलान्विताः ।
प्रजापतीनृषीन्देवान्महाभूतानि चेश्वराः ॥ २४
न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः ।
ईशते नृपते सर्वे योगस्यामिततेजसः ॥ २५
आत्मनां च सहस्राणि बहूनि भरतर्षभ ।
योगः कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ २६

---

तव सर्वज्ञेति थ. ध. पाठः ॥ १ ॥ कारण हेतुः युक्तिरिति यावत् । स्वपक्षस्योद्भावनाय उत्कर्षाय कारणं श्रैष्ठ्यमिति थ. पाठः ॥ २ ॥' सांख्या वै मोक्षदर्शिन इति ध. पाठः ॥ ५ ॥ उभे चैते मते युक्ते इति ध. पाठः ॥ ७ ॥ भूतानां धारणं तुल्यमिति ध. पाठः ॥९॥ छित्त्वा योगाः परमिति ट. थ. पाठः ॥१४॥ व्यूहते विक्षिपति तुच्छीकरोतीत्यर्थः ॥ २३ ॥ अवशाः स्वतन्त्राः ॥ २४ ॥ आत्मान च सहस्राणीति ट. थ. पाठः । सौभर्यादिवद्युगपदनेकदेहधारणं योगिनां दृष्टमित्यर्थः ॥ २६ ॥

प्राप्नुयाद्विषयान्कश्चित्पुनश्चोग्रं तपश्चरेत् ।
संक्षिपेच्च पुनस्तात सूर्यस्तेजोगुणानिव ॥ २७
बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव ।
विमोक्षे प्रभविष्णुत्वमुपपन्नमसंशयम् ॥ २८
बलानि योगप्राप्तानि मयैतानि विशांपते ।
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव ॥२९
आत्मनश्च समाधाने धारणां प्रति वा विभो ।
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ॥ ३०
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ।
युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसंशयम् ३१
स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलम् ।
पुरुषो युक्त आरोहेत्सोपानं युक्तमानसः ॥ ३२
युक्तस्तथाऽयमात्मानं योगः पार्थिव निश्चलम् ।
करोत्यमलमात्मानं भास्करोपमदर्शनम् ॥ ३३
यथा च नावं कौन्तेय कर्णधारः समाहितः ।
महार्णवगतां शीघ्रं नयेत्पार्थिव पत्तनम् ॥ ३४
तद्वदात्मसमाधानं युक्त्वा योगेन तत्ववित् ।
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ॥ ३५
सारथिश्च यथा युक्त्वा सदश्वान्सुसमाहितः ।
देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ॥ ३६
तथैव नृपते योगी धारणासु समाहितः ।
प्राप्नोत्याशु परं स्थानं लक्षं मुक्त इवाशुगः ॥३७
आवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः ।
पापं हन्ति पुनीतानां पदमाप्नोति सोऽजरम् ॥३८
नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः ।
दर्शने श्रवणे चापि घ्राणे चामितविक्रम ॥ ३९
स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः ।
आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशांपते ॥ ४०
स शीघ्रमचलप्रख्यं कर्म दग्ध्वा शुभाशुभम् ॥
उत्तमं योगमास्थाय यदीच्छति विमुच्यते ॥ ४१

युधिष्ठिर उवाच ।
आहारान्कीदृशान्कृत्वा कानि जित्वा च भारत ।
योगी बलमवाप्नोति तद्भवान्वक्तुमर्हति ॥ ४२
भीष्म उवाच ।
कणानां भक्षणे युक्तः पिण्याकस्य च भारत ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥ ४३
भुञ्जानो यावकं रूक्षं दीर्घकालमरिंदम ।
एकाहारो विशुद्धात्मा योगी बलमवाप्नुयात् ॥४४
पक्षान्मासानृतूंश्चैतान्संवत्सरानहस्तथा ।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥४५
अखण्डमपि वा मांसं सततं मनुजेश्वर ।
उपोष्य सम्यक्शुद्धात्मा योगी बलमवाप्नुयात् ४६
कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च ।
भयं शोकं तथा श्वासं पौरुषान्विषयांस्तथा ॥४७
अरतिं दुर्जयां चैव घोरां तृष्णां च पार्थिव ।
स्पर्शं निद्रां तथा तन्द्रीं दुर्जयां नृपसत्तम ॥ ४८
दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना ।
वीतरागा महाप्रज्ञा ध्यानाध्ययनसंपदा ॥ ४९
दुर्गस्त्वेष मतः पन्था ब्राह्मणानां विपश्चिताम् ।
न कश्चिद्व्रजति ह्यस्मिन्क्षेमेण भरतर्षभ ॥ ५०
यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ।
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ॥ ५१
अभक्षमटवीप्रायं दावदग्धमहीरुहम् ।
पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा ॥ ५२
योगमार्गं तथाऽऽसाद्य यः कश्चिद्व्रजते द्विजः ।
क्षेमेणोपरमेन्मार्गाद्बहुदोषो हि स स्मृतः ॥ ५३
सुस्थेयं क्षुरधारासु निशितासु महीपते ।
धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः ॥ ५४
विपन्ना धारणास्तात नयन्ति न शुभां गतिम् ।
नेतृहीना यथा नावः पुरुषानर्णवे नृप ॥ ५५

बन्धनेशस्य बन्धनं छेत्तुं समर्थस्य ॥ २८ ॥ बलानि योगे प्रोक्तानि इति ध. पाठः । मया उक्तानीति शेषः ॥ २९ ॥ पात्रे शिरसि धृते ॥ ३२ ॥ योगी पार्थिव निश्चलमिति थ. पाठः ॥ ३३ ॥ अवेक्ष्यात्मनीति झ. पाठः । जलं हन्तेव मीनानामिति ट. पाठः ॥ ३८ ॥ एकारामो विशुद्धात्मेति ट. ध. पाठः ॥ ४४ ॥ ऋतूंश्चित्रान्संचरंश्च गृहांस्तथेति ध. पाठः ॥ ४५ ॥ बहुसंकटमिति ध. पाठः ॥ ५१ ॥ अभक्तमटवीप्रायमिति ट. ध. पाठः ॥ ५२ ॥

यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्म दुःखं च सुखं च स विमुञ्चति ॥५६
नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतम् ।
परं योगस्य यत्कृत्यं निश्चितं तद्विजातिषु ॥ ५७
परं हि तद्ब्रह्ममयं महात्म-
न्ब्रह्माणमीशं वरदं च विष्णुम् ।
भवं च धर्मं च षडाननं च
षड्ब्रह्मपुत्रांश्च महानुभावान् ॥ ५८
तमश्च कष्टं सुमहद्रजश्च
सत्वं विशुद्धं प्रकृतिं परां च ।
सिद्धिं च देवीं वरुणस्य पत्नीं
तेजश्च कृत्स्नं सुमहच्च धैर्यम् ॥ ५९
ताराधिपं खे विमलं सतारं
विश्वांश्च देवानुरगान्पितॄंश्च ।
शैलांश्च कृत्स्नानुदधींश्च घोरा-
न्नदीश्च सर्वाः सवनान्घनांश्च ॥ ६०
नागान्नगान्यक्षगणान्दिशश्च
गन्धर्वसंघान्पुरुषान्स्त्रियश्च ।
परात्परं प्राप्य महान्महात्मा
विशेत योगी नचिराद्विमुक्तः ॥ ६१
कथा च येयं नृपते प्रसक्ता
देवे महावीर्यतमौ शुभेयम् ।
योगी स सर्वानभिभूय मर्त्या-
न्नारायणात्मा कुरुते महात्मा ॥ ६२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

## सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥

भीष्मेण युधिष्ठिरंप्रति साङ्ख्यनिरूपणम् ॥ १ ॥

युधिष्ठिर उवाच ।
सम्यक्त्वयाऽयं नृपते वर्णितः शिष्टसंमतः ।
योगमार्गो यथान्यायं शिष्यायेह हितैषिणा ॥ १
साङ्ख्ये त्विदानीं कार्त्स्न्येन विधिं प्रब्रूहि पृच्छते ।
त्रिषु लोकेषु यज्ज्ञानं सर्वं तद्विदितं हि ते ॥ २
भीष्म उवाच ।
शृणु मे त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनाम्।
विदितं यतिभिः सर्वैः कपिलादिभिरीश्वरैः ॥ ३
यस्मिन्नविभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ॥ ४
ज्ञानेन परिसङ्ख्याय सदोषान्विषयान्नृप ।
मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ॥५
राक्षसान्विषयाञ्ज्ञात्वा यक्षाणां विषयांस्तथा ।
विषयानौरगाञ्ज्ञात्वा गान्धर्वविषयांस्तथा ॥ ६
पितॄणां विषयाञ्ज्ञात्वा तिर्यक्षु चरतां नृप ।
सुपर्णविषयाञ्ज्ञात्वा मरुतां विषयांस्तथा ॥ ७
राजर्षिविषयाञ्ज्ञात्वा ब्रह्मर्षिविषयांस्तथा ।
आसुरान्विषयाञ्ज्ञात्वा वैश्वदेवांस्तथैव च ॥ ८
देवर्षिविषयाञ्ज्ञात्वा योगानामपि चेश्वरान् ।
प्रजापतीनां विषयान्ब्रह्मणो विषयांस्तथा ॥ ९
आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः ।
सुखस्य च परं तत्त्वं विज्ञाय वदतां वर ॥ १०
प्राप्ते काले च यद्दुःखं सततं विषयैषिणाम् ।
तिर्यक्षु पततां दुःखं पततां नरके च यत् ॥ ११
स्वर्गस्य च गुणान्कृत्स्नान्दोषान्सर्वांश्च भारत ।
'परिसंख्यानसंख्यानं सत्वं सांख्यगुणात्मकम् ।'
वेदवादे येऽपि दोषा गुणा ये चापि वैदिकाः ॥ १२
ज्ञानयोगे च ये दोषा गुणा योगे च ये नृप ।
साङ्ख्यज्ञाने च ये दोषास्तथैव च गुणा नृप ।
'इतरेषु च ये दोषा गुणास्तेषु च भारत ॥ १३'

योगान्सर्वाननुभूयेह मर्त्य इति ध. पाठः ॥ ६२ ॥ षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥
सम्यक्त्वया यज्ञपते इति थ. पाठः ॥ १ ॥ यस्मिन्न विभ्रमाः इति थ. पाठः ॥ ४ ॥ दोषान्विषयजान्नृपेति थ. पाठः ॥ ५ ॥
विषयांश्च प्रणाशान्तान्ब्रह्मणो विषयांस्तथेति ध. पाठः ॥ ९ ॥

सत्वं दशगुणं ज्ञात्वा रजो नवगुणं तथा ।
तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणां तथा ॥ १४
षड्गुणं च मनो ज्ञात्वा नभः पञ्चगुणं तथा ।
बुद्धिं चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं तथा ॥ १५
द्विगुणं च रजो ज्ञात्वा सत्वमेकगुणं पुनः ।
सर्गं विज्ञाय तत्त्वेन प्रलये प्रेक्ष्य चात्मनः ॥ १६
ज्ञानविज्ञानसंपन्नाः कारणैर्भाविताः शुभाः ।
प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् ॥१७
रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च ।
शब्दे सक्तं तथा श्रोत्रं जिह्वा रसगुणेषु च ॥१८
त्वचं स्पर्शे तथा सक्तां वायुं नभसि चाश्रितम्।
मोहं तमसि संयुक्तं लोभमर्थेषु संश्रितम् ॥ १९
विष्णौ क्रान्तं बलं शक्रे कोष्ठे सक्तं तथाऽनलम्।
अप्सु देवीं समासक्तामपस्तेजसि संश्रिताः ॥२०
तेजः सूक्ष्मे च संयुक्तं वायुं नभसि चाश्रितम् ।
नभो महति संयुक्तं महद्बुद्धौ च संश्रितम् ॥२१
बुद्धिं तमसि संसक्तां तमो रजसि संश्रितम् ।
रजः सत्वे तथा सक्तं सत्वं सक्तं तथाऽऽत्मनि॥२२
सक्तमात्मानमीशे च देवे नारायणे तथा ।
देवं मोक्षे च संसक्तं मोक्षं सक्तं तु न क्वचित्॥ २३
ज्ञात्वा सत्वयुतं देहं वृतं षोडशभिर्गुणैः ।
स्वभावं चेतनां चैव ज्ञात्वा देहसमाश्रिते ॥ २४
मध्यस्थमेकमात्मानं पापं यस्मिन्न विद्यते ।
द्वितीयं कर्म विज्ञाय नृपते विषयैषिणाम् ॥ २५
इन्द्रियाणीन्द्रियार्थांश्च सर्वानात्मनि संश्रितान् ।
दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ॥ २६
प्राणापानौ समानं च व्यानोदानौ च तत्त्वतः ।
आवहं चानिलं ज्ञात्वा प्रवहं चानिलं पुनः ॥२७
सप्तवातांस्तथा शेषान्सप्तधा विहितान्पुनः ।
प्रजापतीनृषींश्चैव मार्गांश्चैव बहून्वरान् ॥ २८
सप्तर्षींश्च बहूञ्ज्ञात्वा राजर्षींश्च परंतप ।
सुरर्षीन्महतश्चान्यान्ब्रह्मर्षीन्सूर्यसन्निभान् ॥ २९
ऐश्वर्याच्च्यावितान्दृष्ट्वा कालेन महता नृप ।
महतां भूतसङ्घानां श्रुत्वा नाशं च पार्थिव॥ ३०
गतिं चाप्यशुभां ज्ञात्वा नृपते पापकर्मिणाम् ।
वैतरण्यां च यद्दुःखं पतितानां यमक्षये ॥ ३१
योनीषु च विचित्रासु संसारानशुभांस्तथा ।
जठरे चाशुभे वासं शोणितोदकभाजने ॥ ३२
श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ।
शुक्रशोणितसंघाते मज्जास्नायुपरिग्रहे ॥ ३३
सिराशतसमाकीर्णे नवद्वारे पुरेऽशुचौ ।
विज्ञायाहितमात्मानं योगांश्च विविधान्नृप ॥ ३४
तामसानां च जन्तूनां रमणीयावृतात्मनाम् ।
सात्विकानां च जन्तूनां कुत्सितं भरतर्षभ ॥३५
गर्हितं महतामर्थे साङ्ख्यानां विदितात्मनाम् ।
उपप्लवांस्तथा घोराञ्शशिनस्तेजसस्तथा ॥ ३६
ताराणां पतनं दृष्ट्वा नक्षत्राणां च पर्ययम् ।
द्वन्द्वानां विप्रयोगं च विज्ञाय कृपणं नृप ॥ ३७
अन्योन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभम् ।
बाल्ये मोहं च विज्ञाय क्षयं देहस्य चाशुभम् ॥३८
रागे मोहे च संप्राप्ते क्वचित्सत्वं समाश्रितम् ।
सहस्रेषु नरः कश्चिन्मोक्षबुद्धिं समाश्रितः ॥ ३९
दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ।
बहुमानमलब्धेषु लब्धे मध्यस्थतां पुनः ॥ ४०
विषयाणां च दौरात्म्यं विज्ञाय नृपते पुनः ।
गतासूनां च कौन्तेय देहान्दृष्ट्वा तथाऽशुभान् ४१
वासं कुलेषु जन्तूनां दुःखं विज्ञाय भारत ।
ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणाम् ४२
सुरापाने च सक्तानां ब्राह्मणानां दुरात्मनाम् ।
गुरुदारप्रसक्तानां गतिं विज्ञाय चाशुभाम् ॥ ४३
जननीषु च वर्तन्ते येन सम्यग्युधिष्ठिर ।
सदेवकेषु लोकेषु येन वर्तन्ति मानवाः ॥ ४४

तनुं स्पर्शे इति झ. पाठः ॥ १९ ॥ कोष्ठे उदरे । देवीं पृथ्वीम् ॥ २० ॥ सत्वगुणं देहमिति झ. पाठः ॥ २४ ॥ उपप्लवान् उपरागान् । तेजसः सूर्यस्य ॥ ३६ ॥ नराणां पतनं दृष्ट्वेति थ. पाठः । बन्धूनां विप्रयोगं चेति ट. पाठः । द्वन्द्वानां दम्पतीनाम् ॥ ३७ ॥ क्वचित्पुंसि ॥ ३९ ॥ बहुमानं अत्यादरम् । मध्यस्थतां औदासीन्यम् ॥ ४० ॥ दौरात्म्यं बन्धहेतुताम् ॥ ४१ ॥ कुलेषु गृहेषु ॥ ४२ ॥

तेन ज्ञानेन विज्ञाय गतिं चाशुभकर्मणाम् ।
तिर्यग्योनिगतानां च विज्ञाय च गतिं पृथक् ॥४५
वेदवादांस्तथा चित्रानृतूनां पर्ययांस्तथा ।
क्षयं संवत्सराणां च मासानां च क्षयं तथा ॥४६
पक्षक्षयं तथा दृष्ट्वा दिवसानां च संक्षयम् ।
क्षयं वृद्धिं च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा ॥ ४७
वृद्धिं दृष्ट्वा समुद्राणां क्षयं तेषां तथा पुनः ।
क्षयं धनानां दृष्ट्वा च पुनर्वृद्धिं तथैव च ॥ ४८
संयोगानां क्षयं दृष्ट्वा युगानां च विशेषतः ।
क्षयं च दृष्ट्वा शैलानां क्षयं च सरितां तथा ॥४९
वर्णानां च क्षयं दृष्ट्वा क्षयान्तं च पुनःपुनः ।
जरा मृत्युस्तथा जन्म दृष्ट्वा दुःखानि चैव ह ॥५०
देहदोषांस्तथा ज्ञात्वा तेषां दुःखं च तत्त्वतः ।
देहविक्लवतां चैव सम्यग्विज्ञाय तत्त्वतः ॥ ५१
आत्मदोषांश्च विज्ञाय सर्वानात्मनि संश्रितान् ।
स्वदेहादुत्थितान्गन्धांस्तथा विज्ञाय चाशुभान् ।
'मूत्रश्लेष्मपुरीषादीन्स्वेदजांश्च सुकुत्सितान् ॥'५२
युधिष्ठिर उवाच ।
कान्स्वगात्रोद्भवान्दोषान्पश्यस्यमितविक्रम ।
एतन्मे संशयं कृत्स्नं वक्तुमर्हसि तत्त्वतः ॥ ५३
भीष्म उवाच ।
पञ्च दोषान्प्रभो देहे प्रवदन्ति मनीषिणः ।
मार्गज्ञाः कापिलाः साङ्ख्याः शृणु तानरिसूदन ५४
कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते ॥५५
एते दोषाः शरीरेषु दृश्यन्ते सर्वदेहिनाम् ।
छिन्दन्ति क्षमया क्रोधं कामं संकल्पवर्जनात् ॥५६
सत्वसंसेवनान्निद्रामप्रमादाद्भयं तथा ।
छिन्दन्ति पञ्चमं श्वासमल्पाहारतया नृप ॥ ५७
गुणान्गुणशतैर्ज्ञात्वा दोषान्दोषशतैरपि ।
हेतून्हेतुशतैश्चित्रैश्चित्रान्विज्ञाय तत्त्वतः ॥ ५८
अपां फेनोपमं लोकं विष्णोर्मायाशतैश्चितम् ।
चित्रभित्तिप्रतीकाशं नलसारमनर्थकम् ॥ ५९
तमः श्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसंनिभम् ।
क्लेशप्रायं सुखाद्धीनं नाशोत्तरमिहावशम् ॥ ६०
रजस्तमसि संमग्नं पङ्के द्वीपमिवावशम् ।
साङ्ख्या राजन्महाप्राज्ञास्त्यक्त्वा देहं प्रजाकृतं ६१
ज्ञानयोगेन साङ्ख्येन व्यापिना महता नृप ।
राजसानशुभान्गन्धांस्तामसांश्च तथाविधान् ॥६२
पुण्यांश्च सात्विकान्गन्धान्स्पर्शजान्देहसंश्रितान् ।
छित्त्वाऽऽशु ज्ञानशस्त्रेण तपो दण्डेन भारत ॥ ६३
ततो दुःखोदधिं घोरं चिन्ताशोकमहाह्रदम् ।
व्याधिमृत्युमहाग्राहं महाभयमहोरगम् ॥ ६४
तमःकूर्मं रजोमीनं प्रज्ञया संतरन्त्युत ।
स्नेहपङ्कं जरादुर्गं ज्ञानदीपमरिंदम ॥ ६५
कर्मागाधं सत्यतीरं स्थितव्रतमरिंदम ।
हिंसाशीघ्रमहावेगं नानारससमाकरम् ॥ ६६
नानाप्रीतिमहारत्नं दुःखज्वरसमीरणम् ।
शोकतृष्णामहावर्तं तीक्ष्णव्याधिमहागजम् ॥६७
अस्थिसंघातसंघट्टं श्लेष्मफेनमरिंदम ।
दानमुक्ताकरं घोरं शोणितह्रदविद्रुमम् ॥ ६८
हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुस्तरम् ।
रोदनाश्रुमलक्षारं सङ्गत्यागपरायणम् ॥ ६९
पुत्रदारजलौकौघं मित्रबान्धवपत्तनम् ।
अहिंसासत्यमर्यादं प्राणत्यागमहोर्मिणम् ॥ ७०
वेदान्तगमनद्वीपं सर्वभूतदयोदकम् ।
मोक्षदुर्लभविषयं वडवामुखसागरम् ॥ ७१
तरन्ति मुनयः सिद्धा ज्ञानयानेन भारत ।
तीर्त्वाऽतिदुस्तरं जन्म विशन्ति विमलं नभः ॥७२
तत्र तान्सुकृतीन्साङ्ख्यान्सूर्यो वहति रश्मिभिः ।
पद्मतन्तुवदाविश्य प्रसह्य विषयान्नृप ॥ ७३
तत्र तान्प्रवहो वायुः प्रतिगृह्णाति भारत ।
वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् ॥७४
सूक्ष्मः शीतः सुगन्धी च सुखस्पर्शश्च भारत ।
सप्तानां मरुतां श्रेष्ठो लोकान्गच्छति यः शुभान् ।

विज्ञाय गतयः पृथगिति थ. पाठः ॥ ४५ ॥ क्षयं वनानामिति थ. पाठः ॥ ४८ ॥ नलसारं नलतृणवदन्तःसारहीनम् ॥ ५९ ॥

क्लेशप्रायं क्लेशबहुलम् ॥ ६० ॥ स्पर्शद्विपमरिंदमेति ट. थ. पाठः ॥ ६५ ॥ व्याधिमहारुजमिति थ. पाठः ॥ ६७ ॥

स तान्वहति कौन्तेय नभसः परमां गतिम् ॥७५
नभो वहति लोकेश रजसः परमां गतिम् ।
'तमो वहति लोकेश रजसः परमां गतिम् ।'
रजो वहति राजेन्द्र सत्वस्य परमां गतिम् ॥ ७६
सत्वं वहति शुद्धात्मा परं नारायणं प्रभुम् ।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ ७७
परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति वा विभो ॥ ७८
परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् ।
सत्यार्जवरतानां वै सर्वभूतदयावताम् ॥ ७९
युधिष्ठिर उवाच ।
स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः ।
आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ ॥ ८०
यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि ।
त्वदृते पुरुषं नान्यं प्रष्टुमर्हामि कौरव ॥ ८१
मोक्षे दोषो महानेष प्राप्य सिद्धिगतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥ ८२
प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप ।
मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेत् ॥ ८३
भीष्म उवाच ।
यथान्यायं त्वया तात प्रश्नः पृष्टः सुसंकटः ।
बुधानामपि संमोहः प्रश्नेऽस्मिन्भरतर्षभ ॥ ८४
अत्रापि तत्त्वं परमं शृणु सम्यङ्मयेरितम् ।
बुद्धिश्च परमा यत्र कापिलानां महात्मनाम् ॥ ८५
इन्द्रियाण्येव बुध्यन्ते स्वदेहे देहिनां नृप ।
कारणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ॥
आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु ।
विनश्यन्ति न संदेहः फेना इव महार्णवे ॥ ८७
इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन ।
सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः ॥ ८८
स पश्यति यथान्यायं स्पर्शान्स्पृशति वा विभो ।
बुध्यमानो यथापूर्वमखिलेनेह भारत ॥ ८९
इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि ।
अनीशत्वात्प्रलीयन्ते सर्पा हतविषा इव ॥ ९०
इन्द्रियाणां तु सर्वेषां स्वस्थानेष्वेव सर्वशः ।
आक्रम्य गतयः सूक्ष्माश्चरत्यात्मा न संशयः ॥९१
सत्वस्य च गुणान्कृत्स्नान्रजसश्च गुणान्पुनः ।
गुणांश्च तमसः सर्वान्गुणान्बुद्धेश्च भारत ॥ ९२
गुणांश्च मनसश्चापि नभसश्च गुणांश्च सः ।
गुणान्वायोश्च धर्मात्मंस्तेजसां च गुणान्पुनः ॥९३
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि ।
सर्वात्मना गुणैर्व्याप्तः क्षेत्रज्ञेषु युधिष्ठिर ॥ ९४
आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं प्रभो ॥९५
प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परम् ॥ ९६
विमुक्तः सर्वपापेभ्यः प्रविष्टस्तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥ ९७
शिष्टं तत्र मनस्तात इन्द्रियाणि च भारत ।
आगच्छन्ति यथाकालं गुरोः संदेशकारिणः ॥ ९८
शक्यं चाल्पेन कालेन शान्तिं प्राप्तुं गुणार्थिना ।
एवमुक्तेन कौन्तेय युक्तज्ञानेन मोक्षिणा ॥ ९९
साङ्ख्या राजन्महाप्राज्ञा गच्छन्ति परमां गतिम् ।
ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न विद्यते ॥ १००
अत्र ते संशयो मा भूज्ज्ञानं साङ्ख्यं परं मतम् ।
अक्षरं ध्रुवमव्यक्तं पूर्णं ब्रह्म सनातनम् ॥ १०१
अनादिमध्यनिधनं निर्द्वन्द्वं कर्तृ शाश्वतम् ।
कूटस्थं चैव नित्यं च यद्वदन्ति शमात्मकाः १०२
यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
यच्च शंसन्ति शास्त्रेषु वदन्ति परमर्षयः ॥ १०३
सर्वे विप्राश्च देवाश्च तथा शमविदो जनाः ।
ब्रह्मण्यं परमं देवमनन्तं परमच्युतम् ॥ १०४
प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः ।
सम्यग्युक्तास्तथा योगाः साङ्ख्याश्चामितदर्शनाः ॥

तमसः परमां गतिमिति थ. पाठः ॥ ७६ ॥ मग्नस्य हि परं ज्ञानमिति झ. पाठः ॥ ८३ ॥ तथापि परमं तत्वमिति ट. थ. पाठः ॥ ८५ ॥ सर्वे देवाश्च वेदाश्चेति ट. पाठः ॥ १०४ ॥
सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥

अमूर्तेस्तस्य कौन्तेय साङ्ख्यं मूर्तिरिति श्रुतिः ।
अभिज्ञानानि तस्याहुर्मतं हि भरतर्षभ ॥ १०६
द्विविधानीह भूतानि पृथिव्यां पृथिवीपते ।
जङ्गमाजङ्गमाख्यानि जङ्गमं तु विशिष्यते॥१०७
ज्ञानं महद्यद्धि महत्सु राज-
न्वेदेषु साङ्ख्येषु तथैव योगे ।
यच्चापि दृष्टं विविधं पुराणे
साङ्ख्यागतं तन्निखिलं नरेन्द्र ॥ १०८
यच्चेतिहासेषु महत्सु दृष्टं
यच्चार्थशास्त्रे नृप शिष्टजुष्टे ।
ज्ञानं च लोके यदिहास्ति किंचि-
त्साङ्ख्यागतं तच्च महन्महात्मन् ॥ १०९
शमश्च दृष्टः परमं बलं च
ज्ञानं च साङ्ख्यं च यथावदुक्तम् ।
तपांसि सूक्ष्माणि सुखानि चैव
साङ्ख्ये यथावद्विहितानि राजन् ॥ ११०
विपर्यये तस्य हि पार्थ देवा-
न्गच्छन्ति साङ्ख्याः सततं सुखेन ।
तांश्चानुसंचार्य ततः कृतार्थाः
पतन्ति विप्रेषु यतेषु भूयः ॥ १११
हित्वा च देहं प्रविशन्ति मोक्षं
दिवौकसो द्यामिव पार्थ साङ्ख्याः ।
अतोऽधिकं तेऽभिरता महार्थे
साङ्ख्ये द्विजाः पार्थिव शिष्टजुष्टे ॥ ११२
तेषां न तिर्यग्गमनं हि दृष्टं
नावाग्गतिः पापकृताधिवासः ।
न चाबुधानामपि ते द्विजातयो
ये ज्ञानमेतन्नृपतेऽनुरक्ताः ॥ ११३
साङ्ख्यं विशालं परमं पुराणं
महार्णवं विमलमुदाहरन्ति ।
कृत्स्नं च साङ्ख्यं नृपते महात्मा
नारायणो धारयतेऽप्रमेयम् ॥ ११४
एतन्मयोक्तं नरदेव तत्त्वं
नारायणो विश्वमिदं पुराणम् ।
स सर्गकाले च करोति सर्गं
संहारकाले च तदत्ति भूयः ॥ ११५
संहृत्य सर्वं निजदेहसंस्थं
कृत्वाऽप्सु शेते जगदन्तरात्मा ॥ ११६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥

---

## अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

भीष्मेण युधिष्ठिरंप्रति क्षराक्षरलक्षणप्रतिपादकजनकवसिष्ठसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
किं तदक्षरमित्युक्तं यस्मान्नावर्तते पुनः ।
किंच तत्क्षरमित्युक्तं यस्मादावर्तते पुनः ॥ १
अक्षरक्षरयोर्व्यक्तिं पृच्छाम्यरिनिषूदन ।
उपलब्धुं महाबाहो तत्त्वेन कुरुनन्दन ॥ २
त्वं हि ज्ञाननिधिर्विप्रैरुच्यसे वेदपारगैः ।
ऋषिभिश्च महाभागैर्यतिभिश्च महात्मभिः ॥ ३
शेषमल्पं दिनानां ते दक्षिणायनभास्करे ।
आवृत्ते भगवत्यर्के गन्तासि परमां गतिम् ॥ ४
त्वयि प्रतिगते श्रेयः कुतः श्रोष्यामहे वयम् ।
कुरुवंशप्रदीपस्त्वं ज्ञानदीपेन दीप्यसे ॥ ५
तदेतच्छ्रोतुमिच्छामि त्वत्तः कुरुकुलोद्वह ।
न तृप्यामीह राजेन्द्र शृण्वन्नमृतमीदृशम् ॥ ६
भीष्म उवाच ।
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
वसिष्ठस्य च संवादं करालजनकस्य च ॥ ७

---

ज्ञानद्रव्येण दीप्यस इति ङ. ध. पाठः ॥ ५ ॥ करालनामा जनकः करालजनकस्तस्य । एतत्ते वर्तयिष्यामीति ट. ङ. थ.

वसिष्ठं श्रेष्ठमासीनमृषीणां भास्करद्युतिम् ।
पप्रच्छ जनको राजा ज्ञानं नैःश्रेयसं परम् ॥ ८
परमध्यात्मकुशलमध्यात्मगतिनिश्चयम् ।
मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलिः ॥ ९
स्वक्षरं प्रश्रितं वाक्यं मधुरं चाप्यनुल्बणम् ।
पप्रच्छर्षिवरं राजा करालजनकः पुरा ॥ १०
भगवञ्श्रोतुमिच्छामि परं ब्रह्म सनातनम् ।
यस्मान्न पुनरावृत्तिमाप्नुवन्ति मनीषिणः ॥ ११
यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत् ।
यच्चाक्षरमिति प्रोक्तं शिवं क्षेम्यमनामयम् ॥ १२
वसिष्ठ उवाच ।
श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत् ।
यन्न क्षरति पूर्वेण यावत्कालेन चाप्यथ ॥ १३
युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्युगम् ।
दशकल्पशतावृत्तमहस्तद्ब्राह्ममुच्यते ॥ १४
रात्रिश्चैतावती राजन्यस्यान्ते प्रतिबुध्यते ।
सृजत्यनन्तकर्माणं महान्तं भूतमग्रजम् ॥ १५
मूर्तिमन्तममूर्तात्मा विश्वं शंभुः स्वयंभुवम् ।
अणिमा लघिमा प्राप्तिरीशानं ज्योतिरव्ययम् ॥ १६
सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १७
हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः ।
महानिति च योगेषु विरिञ्चिरिति चाप्यजः ॥ १८
साङ्ख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः ।
विचित्ररूपो विश्वात्मा एकाक्षर इति स्मृतः ॥ १९
वृतं नैकात्मकं येन कृतं त्रैलोक्यमात्मना ।
तथैव बहुरूपत्वाद्विश्वरूप इति स्मृतः ॥ २०
एष वै विक्रियापन्नः सृजत्यात्मानमात्मना ।
अहंकारं महातेजाः प्रजापतिरहंकृतम् ॥ २१
अव्यक्ताद्व्यक्तमापन्नं विद्यासर्गं वदन्ति तम् ।
महान्तं चाप्यहंकारमविद्यासर्गमेव च ॥ २२
अपरश्च परश्चैव समुत्पन्नौ तथैकतः ।
विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिन्तकैः २३
भूतसर्गमहंकारात्तृतीयं विद्धि पार्थिव ।
अहंकारेषु सर्वेषु चतुर्थं विद्धि वैकृतम् ॥ २४
वायुर्ज्योतिरथाकाशमापोऽथ पृथिवी तथा ।
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ॥ २५
एवं युगपदुत्पन्नं दशवर्गमसंशयम् ।
पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत् ॥ २६
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पञ्चमम् ।
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ २७
बुद्धीन्द्रियाणि चैतानि तथा कर्मेन्द्रियाणि च ।
संभूतानीह युगपन्मनसा सह पार्थिव ॥ २८
एषा तत्त्वचतुर्विंशत्सर्वाकृतिषु वर्तते ।
यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥
एतद्देहं समाख्यानं त्रैलोक्ये सर्वदेहिषु ।
वेदितव्यं नरश्रेष्ठ सदेवनरदानवे ॥ ३०
सयक्षभूतगन्धर्वे सकिन्नरमहोरगे ।
सचारणपिशाचे वै सदेवर्षिनिशाचरे ॥ ३१
सदंशकीटमशके सपूतिकृमिमूषिके ।
शुनि श्वपाके चैणेये सचाण्डाले सपुल्कसे ॥ ३२
हस्त्यश्वखरशार्दूले सवृके गवि चैव ह ।
यच्च मूर्तिमयं किंचित्सर्वत्रैतन्निदर्शनम् ॥ ३३
जले भुवि तथाऽऽकाशे नान्यत्रेति विनिश्चयः ।
स्थानं देहवतामस्ति इत्येवमनुशुश्रुम ॥ ३४
कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञितम् ।
अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ॥ ३५
एतद्धि क्षरमित्युक्तं क्षरतीदं यथा जगत् ।
जगन्मोहात्मकं प्राहुरव्यक्तं व्यक्तसंज्ञकम् ॥ ३६
महांश्चैवाग्रजो नित्यमेतत्क्षरनिदर्शनम् ।
कथितं ते महाराजन्यस्मान्नावर्तते पुनः ॥ ३७
पञ्चविंशतिमो विष्णुर्निस्तत्त्वस्तत्त्वसंज्ञितः ।
तत्त्वसंश्रयणादेतत्तत्त्वमाहुर्मनीषिणः ॥ ३८
यन्मर्त्यमसृजद्व्यक्तं तत्तन्मूर्त्यधितिष्ठति ।

---

पाठः ॥ ७ ॥ कुशलं ऊहापोहसमर्थम् । गतिरनुभवस्तेन निश्चयोऽस्यास्तीति तथा । मैत्रावरुणिं वसिष्ठम् ॥९॥ महतश्चाप्यहंकारमिति ङ. ध. पाठः ॥ २२ ॥ अविधिश्च विधिश्चैवेति झ. पाठः । श्रुतिश्चाध्यात्मचिन्तकैरिति ङ. थ. ध. पाठः ॥२३॥ एतत्क्षेत्रनिदर्शनमिति ट. ङ. ध. पाठः ॥ ३७ ॥ यां तु मूर्ति सृजत्येषा तां मूर्तिमधितिष्ठतीति ट. पाठः ॥ ३९ ॥

चतुर्विंशतिमोऽव्यक्तो ह्यमूर्तः पञ्चविंशकः ॥३९
स एव हृदि सर्वासु मूर्तिष्वात्मावतिष्ठते ।
चेतयंश्चेतनान्नित्यं सर्वमूर्तिरमूर्तिमान् ॥ ४०
सर्वप्रत्ययधर्मिण्यां स सर्गः प्रत्ययात्मकः ।
गोचरे वर्तते नित्यं निर्गुणो गुणसंज्ञिते ॥ ४१
एवमेष महानात्मा सर्गप्रलयकोविदः ।
विकुर्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान् ॥ ४२
तमःसत्वरजोयुक्तस्तासु तास्विह योनिषु ।
लीयते प्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ४३
सहवासनिवासात्मा नान्योऽहमिति मन्यते ।
योऽहं सोहमिति ह्युक्त्वा गुणानेवानुवर्तते ॥ ४४
तमसा तामसान्भावान्विविधान्प्रतिपद्यते ।
रजसा राजसांश्चैव सात्विकान्सत्वसंश्रयात् ॥ ४५
शुक्लोहितकृष्णानि रूपाण्येतानि त्रीणि तु ।
सर्वाण्येतानि रूपाणि यानीह प्राकृतानि वै ॥ ४६
तामसा निरयं यान्ति राजसा मानुषानथ ।
सात्विका देवलोकाय गच्छन्ति सुखभागिनः ४७
निष्कैवल्येन पापेन तिर्यग्योनिमवाप्नुयात् ।
पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः ॥ ४८
एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः ।
पञ्चविंशतिमो योऽयं ज्ञानादेव प्रवर्तते ॥ ४९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

---

## नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

भीष्मेण युधिष्ठिरंप्रति जीवानामज्ञाननिमित्तकानर्थप्राप्त्यादिप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥ १ ॥

वसिष्ठ उवाच ।
एवमप्रतिबुद्धत्वादबुद्धमनुवर्तनात् ।
देहाद्देहसहस्राणि तथा समभिपद्यते ॥ १
तिर्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि ।
उपपद्यति संयोगाद्गुणैः सह गुणक्षयात् ॥ २
मानुषत्वाद्दिवं याति दिवो मानुष्यमेति च ।
मानुष्यान्निरयस्थानमनन्तं प्रतिपद्यते ॥ ३
कोशकारो यथाऽऽत्मानं कीटः समनुरुन्धति ।
सूत्रतन्तुगुणैर्नित्यं तथाऽयमगुणो गुणैः ॥ ४
द्वन्द्वमेति च निर्द्वन्द्वस्तासु तास्विह योनिषु ।
शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे ॥ ५
जलोदरे तृषारोगे ज्वरगण्डे विषूचके ।
श्वित्रकुष्ठेऽग्निदग्धे च सिध्मापस्मारयोरपि ॥ ६
यानि चान्यानि द्वन्द्वानि प्राकृतानि शरीरिषु ।
उत्पद्यन्ते विचित्राणि तान्येषोऽप्यभिमन्यते ॥ ७
अभिमन्यत्यभीमानात्तथैव सुकृतान्यपि ॥ ८
शुक्लवासाश्च दुर्वासाः शायी नित्यमधस्तथा ।
मण्डूकशायी च तथा वीरासनगतस्तथा ॥ ९
चीरधारणमाकाशे शयनं स्थानमेव च ।
इष्टकाप्रस्तरे चैव कण्टकप्रस्तरे तथा ॥ १०
भस्मप्रस्तरशायी च भूमिशय्याऽनुलेपनः ।
वीरस्थानाम्बुपङ्के च शयनं फलकेषु च ॥ ११
विविधासु च शय्यासु फलगृद्ध्यान्वितस्तथा ।
मुञ्जमेखलनग्नत्वं क्षौमकृष्णाजिनानि च ॥ १२
शणवालपरीधानो व्याघ्रचर्मपरिच्छदः ।
सिंहचर्मपरीधानः पट्टवासास्तथैव च ॥ १३

---

सर्गप्रलयधर्मिण्या ससर्गप्रलयात्मक इति झ. पाठः॥४१॥ सर्गप्रलयकोविद इति ट. ध. पाठः । अक्षरः क्षरमात्मानमभिमज्जत्यबुद्धिमानिति थ. पाठः ॥ ४२ ॥ सहवासविनाशित्वान्नान्योऽहमिति झ. पाठः ॥ ४४ ॥ जातानि प्राकृतानि वै इति ड. थ. पाठः । जानीहि प्राकृतानि वै इति ध. पाठः ॥ ४६ ॥ अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

अबुद्धमनुवर्तत इति झ. ट. पाठः । अबुद्धं अबोधं अज्ञानम् । भावे निष्ठा तेन नञ्समासः ॥ १ ॥ गुणक्षयात् गुणसामर्थ्यात् । क्षि क्षयैश्वर्ययोरित्यैश्वर्यार्थस्य क्षिधातो रूपम् ॥ २ ॥ यक्ष्मापस्मारयोरपि इति ध. पाठः ॥ ६ ॥ तान्येषोऽप्यभिपद्यते इति ध. पाठः ॥ ७ ॥ मण्डूकवत्पाणिपादं संकोच्य न्युब्जः शेते इति मण्डूकशायी ॥ ९ ॥ आकाशे निरावरणे देशे ॥ १० ॥ फलगृद्ध्या फलाशा ॥ १२ ॥ शाणीवालपरीधान इति झ. पाठः ॥ १३ ॥

ालकपरिधानश्च तथा कण्टकवस्त्रधृत् ।
ोटकार्पासवसनश्चीरवासास्तथैव च ॥ १४
स्त्राणि चान्यानि बहून्यभिमन्यत्यबुद्धिमान् ।
ोजनानि विचित्राणि रत्नानि विविधानि च १५
कवस्त्रान्तराशित्वमेककालिकभोजनम् ।
तुर्थाष्टमकालश्च षष्ठकालिक एव च ॥ १६
ड्रात्रभोजनश्चैव तथैवाष्टाहभोजनः ।
सरात्रदशाहारो द्वादशाहिकभोजनः ॥ १७
ासोपवासी मूलाशी फलाहारस्तथैव च ।
ायुभक्षोऽम्बुपिण्याकदधिगोमयभोजनः ॥ १८
ोमूत्रभोजनश्चैव शाकपुष्पाद एव च ।
ावालभोजनश्चैव तथाऽऽचामेन वर्तयन् ॥ १९
र्तयञ्शीर्णपर्णैश्च प्रकीर्णफलभोजनः ।
ेविधानि च कृच्छ्राणि सेवते सिद्धिकाङ्क्षया २०
ान्द्रायणानि विधिवल्लिङ्गानि विविधानि च ।
ातुराश्रम्यपन्थानमाश्रयत्यपथानपि ॥ २१
पाश्रमानप्यपरान्पाषण्डान्विविधानपि ।
ेविक्ताश्च शिलाच्छायास्तथा प्रस्रवणानि च २२
लिनानि विविक्तानि विविक्तानि वनानि च ।
वस्थानानि पुण्यानि विविक्तानि सरांसि च॥२३
ेविक्ताश्चापि शैलानां गुहा गृहनिभोपमाः ।
ेविक्तानि च जप्यानि व्रतानि विविधानि च २४
ियमान्विविधांश्चापि विविधानि तपांसि च ।
ज्ञांश्च विविधाकारान्विधींश्च विविधांस्तथा ॥२५
णिक्पथं द्विजक्षत्रं वैश्यं शूद्रांस्तथैव च ।
ानं च विविधाकारं दीनान्धकृपणादिषु ॥ २६
ाभिमन्यत्यसंबोधात्तथैव त्रिविधान्गुणान् ।
त्वं रजस्तमश्चैव धर्मार्थौ काम एव च ॥ २७
कृत्याऽऽत्मानमेवात्मा एवं प्रविभजत्युत ।
वधाकारवषट्कारौ स्वाहाकारनमस्क्रियाः ॥ २८
ाजनाध्यापनं दानं तथैवाहुः प्रतिग्रहम् ।
ाजनाध्ययने चैव यच्चान्यदपि किंचन ॥ २९
जन्ममृत्युविवादे च तथा विशसनेऽपि च ।
शुभाशुभमयं सर्वमेतदाहुः क्रियाफलम् ॥ ३०
प्रकृतिः कुरुते देवी भवं प्रलयमेव च ।
दिवसान्ते गुणानेतानभ्येत्यैकोऽवतिष्ठते ॥ ३१
रश्मिजालमिवादित्यस्तत्तत्काले नियच्छति ।
एवमेषोऽसकृत्सर्वं क्रीडार्थमभिमन्यते ॥ ३२
आत्मरूपगुणानेतान्विविधान्हृदयप्रियान् ।
एवमेष विकुर्वाणः सर्गप्रलयधर्मिणी ॥ ३३
क्रियां क्रियापथे रक्तस्त्रिगुणांस्त्रिगुणाधिपः ।
क्रियां क्रियापथोपेतस्तथा तदभिमन्यते ॥ ३४
प्रकृत्या सर्वमेवेदं जगदन्धीकृतं विभो ।
रजसा तमसा चैव व्याप्तं सर्वमनेकधा ॥ ३५
एवं द्वन्द्वान्यथैतानि वर्तन्ते मयि नित्यशः ।
ममैवैतानि जायन्ते धावन्ते तानि मामिति ॥ ३६
निस्तर्तव्यान्यथैतानि सर्वाणीति नराधिप ।
मन्यतेऽयं ह्यबुद्धित्वात्तथैव सुकृतान्यपि ॥ ३७
भोक्तव्यानि मयैतानि देवलोकगतेन वै ।
इहैव चैनं भोक्ष्यामि शुभाशुभफलोदयम् ॥ ३८
पुण्यमेव तु कर्तव्यं तत्कृत्वा सुसुखं मम ।
यावदन्तं च मे सौख्यं जात्यां जात्यां भविष्यति॥
भविष्यति च मे दुःखं कृतेनेहाप्यनन्तकम् ।
महद्दुःखं हि मानुष्यं निरये चापि मज्जनम् ॥ ४०
निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः ।
मनुष्यत्वाच्च देवत्वं देवत्वात्पौरुषं पुनः ॥ ४१
मनुष्यत्वाच्च निरयं पर्यायेणोपगच्छति ।
य एवं वेत्ति नित्यं वै निरात्मात्मगुणैर्वृतः ॥ ४२
तेन देवमनुष्येषु निरये चोपपद्यते ।
ममत्वेनावृतो नित्यं तत्रैव परिवर्तते ॥ ४३
सर्गकोटिसहस्राणि मरणान्तासु योनिषु ।
य एवं कुरुते कर्म शुभाशुभफलात्मकम् ॥ ४४
स एवं फलमाप्नोति त्रिषु लोकेषु मूर्तिमान् ।
प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् ।

ालकं भूर्जत्वगादि ॥ १४ ॥ आचामेन भक्तमण्डेन ॥ १९ ॥
ेहेषु ये निभाः नितरां भान्ति ते । दिव्यगृहोपमा इत्यर्थः
। २४ ॥ विशसने संग्रामे ॥ ३० ॥ भवं सृष्टिम् । अभ्येत्य
ग्रसित्वा ॥ ३१ ॥ क्रियापथे कर्ममार्गे ॥ ३४ ॥ यावदन्तमस्य
मे सौख्यं इति ट. ड. थ. पाठः ॥ ३९ ॥

प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ॥ ४५
तिर्यग्योनिमनुष्यत्वे देवलोके तथैव च ।
त्रीणि स्थानानि चैतानि जानीयात्प्राकृतानिह ४६
अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे ।
तथैव पौरुषं लिङ्गमनुमानाद्धि गम्यते ॥ ४७
स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम् ।
व्रणद्वाराण्यधिष्ठाय कर्मणाऽऽत्मनि पश्यति ॥४८
श्रोत्रादीनि तु सर्वाणि पञ्च कर्मेन्द्रियाण्यथ ।
वागादीनि प्रवर्तन्ते गुणेष्विह गुणैः सह ॥ ४९
अहमेतानि वै सर्वं मय्येतानीन्द्रियाणि ह ।
निरिन्द्रियो हि मन्येत व्रणवानस्मि निर्व्रणः ॥५०
अलिङ्गो लिङ्गमात्मानमकालः कालमात्मनः ।
असत्त्वं सत्त्वमात्मानमतत्त्वं तत्त्वमात्मनः ॥ ५१
अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः ।
अक्षेत्रः क्षेत्रमात्मानमसर्गः सर्गमात्मनः ॥ ५२
अतपास्तप आत्मानमगतिर्गतिमात्मनः ।
अभवो भवमात्मानमभयो भयमात्मनः ॥ ५३
'अकर्ता कर्तृ चात्मानमबीजो बीजमात्मनः ।'
अक्षरः क्षरमात्मानमबुद्धिस्त्वभिमन्यते ॥ ५४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

---

## दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

भीष्मेण युधिष्ठिरंप्रति प्राणिनां शरीरादिसंबन्धादिप्रकारप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥ १ ॥

वसिष्ठ उवाच ।
एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् ।
सर्गकोटिसहस्राणि मरणान्तानि गच्छति ॥ १
धाम्ना धामसहस्राणि पतनान्तानि गच्छति ।
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ॥ २
चन्द्रमा इव भूतानां पुनस्तत्र सहस्रशः ।
लीयतेऽप्रतिबुद्धत्वादेवमेष ह्यबुद्धिमान् ॥ ३
कला पञ्चदशी योनिस्तद्धाम इति मन्यते ।
नित्यमेतं विजानीहि सोमं वै षोडशीं कलाम् ॥ ४
कलया जायते जन्तुः पुनःपुनरबुद्धिमान् ।
धाम तस्योपयुञ्जन्ति भूय एवोपजायते ॥ ५
षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम् ।
न तूपयुज्यते देवैर्देवानुपयुनक्ति सा ॥ ६
एतामक्षपयित्वा हि जायते नृपसत्तम ।
सा ह्यस्य प्रकृतिर्दृष्टा तत्क्षयान्मोक्ष उच्यते ॥७
तदेवं षोडशकलं देहमव्यक्तसंज्ञिकम् ।
ममायमिति मन्वानस्तत्रैव परिवर्तते ॥ ८
पञ्चविंशस्तथैवात्मा तस्यैवाप्रतिबोधनात् ।
विमलश्च विशुद्धश्च शुद्धामलनिषेवणात् ॥ ९
अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव ।
अबुद्धसेवनाच्चापि बुद्धोऽप्यबुद्धतां व्रजेत् ॥ १०
तथैवाप्रतिबुद्धोऽपि विज्ञेयो नृपसत्तम ।
प्रकृतेस्त्रिगुणायास्तु सेवनात्प्राकृतो भवेत् ॥ ११
करालजनक उवाच ।
अक्षरक्षरयोरेष द्वयोः संबन्ध उच्यते ।
स्त्रीपुंसोश्चापि भगवन्संबन्धस्तद्वदुच्यते ॥ १२
ऋते तु पुरुषं नेह स्त्री गर्भं धारयत्युत ।
ऋते स्त्रियं न पुरुषो रूपं निर्वर्तयेत्तथा ॥ १३
अन्योन्यस्याभिसंबन्धादन्योन्यगुणसंश्रयात् ।
रूपं निर्वर्तयत्येतदेवं सर्वासु योनिषु ॥ १४
स्त्रीपुंसोरभिसंबन्धादन्योन्यगुणसंश्रयात् ।
ऋतौ निर्वर्त्यते रूपं तद्वक्ष्यामि निदर्शनम् ॥१५

---

अगतिर्गतिमात्मन इति ध. पाठः ॥ ५१ ॥ नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥
तस्यैव प्रतिसाधनात् इति ट. थ. पाठः ॥ ९ ॥ तथैव प्रतिबुद्धोऽपीति थ. ध. पाठः ॥ ११ ॥ रत्यर्थमभिसंबन्धादिति ट. पाठः ॥ १५ ॥

ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा ।
अस्थि स्नायु च मज्जानं जानीमः पैतृकान्द्विज १६
त्वङ्मांसं शोणितं चेति मातृजान्यपि शुश्रुम ।
एवमेतद्द्विजश्रेष्ठ वेदे शास्त्रे च पठ्यते ॥ १७
प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते ।
वेदशास्त्रप्रमाणानां प्रमाणं तत्सनातनम् ॥ १८
[अन्योन्यगुणसंरोधादन्योन्यगुणसंश्रयात् ।]
एवमेवाभिसंबद्धौ नित्यं प्रकृतिपूरुषौ ॥ १९
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते ।
अथवाऽनन्तरकृतं किंचिदेव निदर्शनम् ।
तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वथा ॥२०
मोक्षकामा वयं चापि काङ्क्षामो यदनामयम् ।
अदेहमजरं नित्यमतीन्द्रियमनीश्वरम् ॥ २१
वसिष्ठ उवाच ।
यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम् ।
एवमेतद्यथा चैतन्न गृह्णाति तथा भवान् ॥ २२
धार्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः ।
न च ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वर ॥ २३
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ २४
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थगुणो वृथा ॥ २५
ग्रन्थस्यार्थस्य पृष्टः संस्तादृशो वक्तुमर्हति ।
यथातत्त्वाभिगमनादर्थं तस्य स विन्दति ॥ २६
यस्तु संसत्सु कथयेद्ग्रन्थार्थस्थूलबुद्धिमान् ।
स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥२७
निर्णयं चापि छिद्रात्मा न तं वक्ष्यति तत्त्वतः ।
सोपहास्यात्मतामेति यस्माच्चाप्यात्मवानपि ॥ २८
तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते ।
याथातथ्येन साङ्ख्येषु योगेषु च महात्मसु ॥२९
यदेव योगाः पश्यन्ति साङ्ख्यैस्तदवगम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स बुद्धिमान् ३०
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जा च स्नायु च ।
एतदैन्द्रियकं तात तद्भवानिदमाह माम् ॥ ३१
द्रव्याद्द्रव्यस्य निर्वृत्तिरिन्द्रियादिन्द्रियं तथा ।
देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च ॥ ३२
निरिन्द्रियस्याबीजस्य निर्द्रव्यस्याप्यदेहिनः ।
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः॥३३
गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च ।
एवं गुणाः प्रकृतितो जायन्ते निविशन्ति च॥३४
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च ।
अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतानि वै ॥३५
पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम् ।
न वा पुमान्पुमांश्चैव स लिङ्गीत्यभिधीयते ॥ ३६
अलिङ्गात्प्रकृतिर्लिङ्गैरुपालभ्यति सात्मजैः ।
यथा पुष्पफलैर्नित्यमृतवो मूर्तयस्तथा ॥ ३७
एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते ।
पञ्चविंशतिमस्तात लिङ्गेषु नियतात्मकः ॥ ३८
अनादिनिधनोऽनन्तः सर्वदर्शी निरामयः ।
केवलं त्वभिमानित्वाद्गुणेष्वगुण उच्यते ॥ ३९
गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः ।
तस्मादेवं विजानन्ति ये जना गुणदर्शिनः॥ ४०
यदा त्वेष गुणानेव प्रकृतावनुमन्यते ।
तदा स गुणवानेव परमं नानुपश्यति ॥ ४१
यत्तं बुद्धेः परं प्राहुः साङ्ख्ययोगाश्च सर्वशः ।
बुध्यमानं महाप्राज्ञमबुद्धपरिवर्जनात् ॥ ४२
अप्रबुद्धमथाव्यक्तं गुणं प्राहुरनीश्वरम् ।
निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव च ॥ ४३
प्रकृतेश्च गुणानां च पञ्चविंशतिकं बुधाः ।
साङ्ख्ययोगे च कुशला बुध्यन्ते परमैषिणः ॥ ४४
यदा प्रबुद्धास्त्वव्यक्तमवस्थाजन्मभीरवः ।
बुध्यमानं प्रबुद्धेन गमयन्ति समन्ततः ॥ ४५

न यः संसत्स्विति झ. पाठः ॥ २७ ॥ यस्माच्चैवात्मवानपीति झ. पाठः ॥ २८ ॥ योगेशेषु महात्मस्विति ध. पाठः ॥ २९ ॥ निरिन्द्रियस्य बीजस्येति ट. ड. थ. पाठः ॥ ३३ ॥ स्त्रीलिङ्गं प्राकृतं स्मृतमिति ड. थ. पाठः ॥ ३६ ॥ यं तु बुद्धेः परं इति ट. पाठः । यत्तद्बुद्धेरिति झ. पाठः ॥ ४२ ॥ सगुणं प्राहुरीश्वरमिति ट. पाठः । अगुणं प्राहुरिति झ. पाठः ॥ ४३ ॥

एतन्निदर्शनं सम्यगसम्यक्कार्थदर्शनम् ।
बुध्यमानाप्रबुद्धाना पृथग्पृथगरिंदम ॥ ४६
परस्परेणैतदुक्तं क्षराक्षरनिदर्शनम् ।
एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ॥ ४७
पञ्चविंशतिनिष्ठोऽयं यदा सम्यक्प्रचक्षते ।
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम् ॥४८
तत्त्वनिस्तत्त्वयोरेतत्पृथगेव निदर्शनम् ।
पञ्चविंशतितत्वं तु तत्त्वमाहुर्मनीषिणः ॥ ४९
निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनम् ।
वर्गस्य वर्गमाचारं तत्त्वं तत्त्वात्सनातनम् ॥ ५०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

## एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥

भीष्मेण युधिष्ठिरंप्रति साङ्ख्यप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥ १ ॥

जनक उवाच ।
नानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम ।
पश्यामि वाभिसंदिग्धमेतयोर्वै निदर्शनम् ॥ १
तथाऽबुद्धप्रबुद्धाभ्यां बुध्यमानस्य चानघ ।
स्थूलबुद्ध्या न पश्यामि तत्त्वमेतन्न संशयः ॥ २
अक्षरक्षरयोर्युक्तं त्वया यदपि कारणम् ।
तदप्यस्थिरबुद्धित्वात्प्रनष्टमिव मेऽनघ ॥ ३
तदेतच्छ्रोतुमिच्छामि नानात्वैकत्वदर्शनम् ।
प्रबुद्धमप्रबुद्धं च बुध्यमानं च तत्त्वतः ॥ ४
विद्याविद्ये च भगवन्नक्षरं क्षरमेव च ।
साङ्ख्यं योगं च कार्त्स्न्येन पृथक्चैवापृथक्क ह ॥ ५
वसिष्ठ उवाच ।
हन्त ते संप्रवक्ष्यामि यदेतदनुपृच्छसि ।
योगकृत्यं महाराज पृथगेव शृणुष्व मे ॥ ६
योगकृत्यं तु योगानां ध्यानमेव परं बलम् ।
तच्चापि द्विविधं ध्यानमाहुर्वेदविदो जनाः ॥ ७
एकाग्रता च मनसः प्राणायामस्तथैव च ।
प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा ॥ ८
मूत्रोत्सर्गपुरीषे च भोजने च नराधिप ।
द्विकालं नाभियुञ्जीत शेषं युञ्जीत तत्परः ॥ ९
इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्य मनसा मुनिः ।
दशद्वादशभिर्वापि चतुर्विंशात्परं ततः ॥ १०
तं चोदनाभिर्मतिमानात्मानं चोदयेदथ ।
तिष्ठन्तमजरं यं तु यत्तदुक्तं मनीषिभिः ॥ ११
तैश्चात्मा सततं योज्य इत्येवमनुशुश्रुम ।
द्रुतं ह्यहीनमनसो नान्यथेति विनिश्चयः ॥ १२
विमुक्तः सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः ।
पूर्वरात्रेऽपररात्रे च धारयेत मनोऽऽत्मनि ॥ १३
स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलेश्वर ।
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ॥१४
स्थाणुवच्चाप्यकम्पः स्याद्दारुवच्चापि निश्चलः ।
बुधा विधिविधानज्ञास्तदा युक्तं प्रचक्षते ॥ १५
न शृणोति न चाघ्राति न रस्यति न पश्यति ।
न च स्पर्शं विजानाति न संकल्पयते मनः ॥ १६
न चाभिमन्यते किंचिन्न च बुध्यति काष्ठवत् ।
तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः ॥ १७
निर्वाते हि यथा दीप्यन्दीपस्तद्वत्प्रकाशते ।
निर्लिङ्गो विचलश्चोर्ध्वं न तिर्यग्गतिमाप्नुयात् ॥१८
तदा तमनुपश्येत यस्मिन्दृष्टे तु कथ्यते ।
हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः ॥१९

असत्यत्वार्थदर्शनमिति ङ. पाठः । असक्त्वार्थदर्शनमिति ट. थ. पाठः ॥ ४६ ॥ पञ्चविशतिकलं तु इति ट. पाठः । पञ्चविंशतिसर्गं तु इति झ. पाठः ॥ ४९ ॥ दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

अक्षरक्षरयोरुक्तमिति ट. पाठः । अक्षरक्षरयोगेन त्वयेति थ. पाठः ॥ ३ ॥ तच्चापि विविधमिति ङ. थ. पाठः ॥ ७ ॥ विकारं नाभियुञ्जीतेति ङ. थ. पाठः । त्रिकालं नाभियुञ्जीतेति झ. पाठः ॥ ९ ॥ मनसात्मनीति ट. पाठः ॥ १० ॥ द्रुतं ह्यदीनेति ध. पाठः ॥ १२ ॥ दृष्टेति कथ्यत इति ट, ङ. थ. पाठः ॥ १९ ॥

विधूम इव सप्तार्चिरादित्य इव रश्मिमान् ।
वैद्युतोऽग्निरिवाकाशे दृश्यतेऽऽत्मा तथाऽऽत्मनि ॥
संपश्यन्ति महात्मानो धृतिमन्तो मनीषिणः ।
ब्राह्मणा ब्रह्मयोनिस्था ह्ययोनिममृतात्मकम् ॥२१
तदेवाहुरणुभ्योऽणु तन्महद्भ्यो महत्तरम् ।
तत्तत्र सर्वभूतेषु ध्रुवं तिष्ठन्न दृश्यते ॥ २२
बुद्धिद्रव्येण दृश्येत मनोदीपेन लोककृत् ।
महतस्तमसस्तात पारे तिष्ठन्न तामसः ॥ २३
स च मानस इत्युक्तस्तत्वज्ञैर्वेदपारगैः ।
विमलो वितमस्कश्च निर्लिङ्गोऽलिङ्गसंज्ञकः ॥२४
योगमेतत्तु योगानां मन्ये योगस्य लक्षणम् ।
एवं पश्यं प्रपश्यन्ति आत्मस्थमजरं परम् ॥ २५
योगदर्शनमेतावदुक्तं ते तत्वतो मया ।
साङ्ख्यज्ञानं प्रवक्ष्यामि परिसंख्यानदर्शनम् ॥ २६
अव्यक्तमाहुः प्रकृतिं परां प्रकृतिवादिनः ।
तस्मान्महत्समुत्पन्नं द्वितीयं राजसत्तम ॥ २७
अहंकारस्तु महतस्तृतीय इति नः श्रुतम् ।
पञ्च भूतान्यहंकारादाहुः साङ्ख्यनिदर्शिनः ॥ २८
एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ।
पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च ॥ २९
एतावदेव तत्त्वानां साङ्ख्या आहुर्मनीषिणः ।
साङ्ख्ये विधिविधानज्ञा नित्यं साङ्ख्यपथे रताः ॥३०
यस्माद्यदभिजायेत तत्तत्रैव प्रलीयते ।
लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ॥३१
अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः ।
गुणा गुणेषु सततं सागरस्योर्मयो यथा ॥ ३२
सर्गप्रलय एतावान्प्रकृतेर्नृपसत्तम ।
एकत्वं प्रलये चास्य बहुत्वं च यदाऽसृजत् ॥ ३३
एवमेव च राजेन्द्र विज्ञेयं ज्ञेयचिन्तकैः ।
अधिष्ठाता य इत्युक्तस्तस्याप्येतन्निदर्शनम् ॥ ३४
एकत्वं च बहुत्वं च प्रकृतेरनुतत्त्ववान् ।
एकत्वं प्रलये चास्य बहुत्वं च प्रवर्तनात् ॥ ३५
बहुधाऽऽत्मानमकरोत्प्रकृतिः प्रसवात्मिका ।
तच्च क्षेत्रं महानात्मा पञ्चविंशोऽधितिष्ठति ॥ ३६
अधिष्ठातेति राजेन्द्र प्रोच्यते यतिसत्तमैः ।
अधिष्ठानादधिष्ठाता क्षेत्राणामिति नः श्रुतम् ३७
क्षेत्रं जानाति चाव्यक्तं क्षेत्रज्ञ इति चोच्यते ।
अव्यक्तके पुरे शेते पुरुषश्चेति कथ्यते ॥ ३८
अन्यदेव च क्षेत्रं स्यादन्यः क्षेत्रज्ञ उच्यते ।
क्षेत्रमव्यक्तमित्युक्तं ज्ञाता वै पञ्चविंशकः ॥३९
अन्यदेव वचो ज्ञानं स्यादन्यज्ज्ञेयमुच्यते ।
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ॥ ४०
अव्यक्तं क्षेत्रमित्युक्तं यथासत्वं तथेश्वरम् ।
अनीश्वरमतत्त्वं च तत्त्वं तत्पञ्चविंशकम् ॥ ४१
साङ्ख्यदर्शनमेतावत्परिसङ्ख्यानदर्शनम् ।
साङ्ख्याः प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ॥ ४२
तत्त्वानि च चतुर्विंशत्परिसंख्याय तत्त्वतः ।
साङ्ख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः ॥४३
पञ्चविंशो प्रबुद्धात्मा बुध्यमान इति स्मृतः ।
यदा तु बुध्यतेऽऽत्मानं तदा भवति केवलः ॥ ४४
सम्यग्दर्शनमेतावद्भाषितं तव तत्त्वतः ।
एवमेतद्विजानन्तः साम्यतां प्रतियान्त्युत ॥ ४५
सम्यङ्निदर्शनं नाम प्रत्यक्षं प्रकृतेस्तथा ।
गुणतत्त्वाद्यथैतानि निर्गुणोऽन्यस्तथा भवेत् ॥ ४६
न त्वेवं वर्तमानानामावृत्तिर्विद्यते पुनः ।
विद्यतेऽक्षरभावत्वे स परात्परमव्ययम् ॥ ४७
पश्येरन्नेकमतयो न सम्यक्तेषु दर्शनम् ।
तेऽव्यक्तं प्रतिपद्यन्ते पुनःपुनररिंदम ॥ ४८
सर्वमेतद्विजानन्तो नासर्वस्य प्रबोधनात् ।
व्यक्तीभूता भविष्यन्ति व्यक्तस्य वशवर्तिनः ॥४९
सर्वमव्यक्तमित्युक्तमसर्वः पञ्चविंशकः ।
य एनमभिजानन्ति न भयं तेषु विद्यते ॥ ५०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥

---

यं पश्यन्ति महातमान इति ट. थ. पाठः ॥ २१ ॥ तथा तत्वं तथेश्वरमिति ट. ड. थ. पाठः ॥ ४१ ॥ विद्यते क्षरभावत्वं यो नैवं वेत्ति पार्थिव इति ट. ड. थ. पाठः ॥४७॥ न सर्वस्य प्रबोधनादिति ध. पाठः ॥४९॥ एकादशाधिकत्रिशततमोऽध्यायः ३११

## द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

भीष्मेण युधिष्ठिरंप्रति विद्याऽविद्यादिप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥ १ ॥

वसिष्ठ उवाच ।
साङ्ख्यदर्शनमेतावदुक्तं ते नृपसत्तम ।
विद्याविद्ये त्विदानीं मे त्वं निबोधानुपूर्वशः ॥ १
अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणीम् ।
सर्गप्रलयनिर्मुक्तो विद्यो वै पञ्चविंशकः ॥ २
'एकत्वं च बहुत्वं च प्रकृतेरनु तत्त्ववित् ।'
परस्परं तु विद्यां वै त्वं निबोधानुपूर्वशः ।
यथोक्तमृषिभिस्तात साङ्ख्यस्यास्य निदर्शनम् ॥ ३
कर्मेन्द्रियाणां सर्वेषां विद्या बुद्धीन्द्रियं स्मृतम् ।
बुद्धीन्द्रियाणां च तथा विशेषा इति नः श्रुतम् ॥ ४
विशेषाणां मनस्तेषां विद्यामाहुर्मनीषिणः ।
मनसः पञ्चभूतानि विद्या इत्यभिचक्षते ॥ ५
अहंकारस्तु भूतानां पञ्चानां नात्र संशयः ।
अहंकारस्य च तथा बुद्धिर्विद्या नरेश्वर ॥ ६
बुद्धेः प्रकृतिरव्यक्तं तत्त्वानां परमेश्वरम् ।
विद्या ज्ञेया नरश्रेष्ठ विधिश्च परमः स्मृतः ॥ ७
अव्यक्तस्य परं प्राहुर्विद्यां वै पञ्चविंशकम् ।
सर्वस्य सर्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव ॥ ८
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ।
तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः ॥ ९
विद्याविद्यार्थितत्त्वेन मयोक्ता ते विशेषतः ।
अक्षरं च क्षरं चैव यदुक्तं तन्निबोध मे ॥ १०
उभावेतौ क्षरावुक्तावुभावेतौ क्षराक्षरौ ।
कारणं तु प्रवक्ष्यामि यथाख्यातो न जानतः॥ ११
अनादिनिधनावेतावुभावेवेश्वरौ मतौ ।
तत्त्वसंज्ञावुभावेतौ प्रोच्येते ज्ञानचिन्तकैः ॥ १२
सर्गप्रलयधर्मत्वादव्यक्तं प्राहुरक्षरम् ।
तदेतद्गुणसर्गाय विकुर्वाणं पुनःपुनः ॥ १३
गुणानां महदादीनामुत्पद्यन्ते परम्पराः ।
अधिष्ठानं क्षेत्रमाहुरेतत्तत्पञ्चविंशकम् ॥ १४
यदा तु गुणजालं तदव्यक्तात्मनि संक्षिपेत् ।
तदा सह गुणैस्तैस्तु पञ्चविंशो विलीयते ॥ १५
गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत् ।
क्षेत्रज्ञोऽपि यदा तात तत्क्षेत्रे संप्रलीयते ॥ १६
तदाऽक्षरत्वं प्रकृतिर्गच्छते गुणसंज्ञिता ।
निर्गुणत्वं च वैदेह गुणेष्वप्रतिवर्तनात् ॥ १७
एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षयात् ।
प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम ॥ १८
क्षरो भवत्येष यदा तदा गुणवती मिथः ।
प्रकृतिं त्वभिजानाति निर्गुणत्वं तथाऽऽत्मनः १९
तदा विशुद्धो भवति प्रकृतेः परिवर्जनात् ।
अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान्॥२०
तदैषा त्वन्यतामेति न च मिश्रत्वतां व्रजेत् ।
प्रकृत्या चैव राजेन्द्र मिश्रोऽनन्यश्च दृश्यते ॥ २१
यदा तु गुणजालं तत्प्राकृतं विजुगुप्सते ।
पश्यते चापरं पश्यं तदा पश्यन्न संस्रजेत् ॥ २२
किमहं कृतवानेवं योहं कालमिमं जनम् ।
'यदा मत्स्योदकं ज्ञानमनुवर्तितवांस्तदा ।'
मत्स्यो जालं ह्यविज्ञानादनुवर्तितवानिह ॥ २३
अहमेव हि संमोहादन्यमन्यं जनाज्जनम् ।
मत्स्यो यथोदकज्ञानादनुवर्तितवानहम् ॥ २४
मत्स्योऽन्यत्वं यथा ज्ञानादुदकान्नाभिमन्यते ।
आत्मानं तद्वदज्ञानादन्यत्वं चैव वेद्म्यहम् ॥ २५
ममास्तु धिगबुद्धस्य योऽहमज्ञ इमं पुनः ।
अनुवर्तितवान्मोहादन्यमन्यं जनाज्जनम् ॥ २६
अयमत्र भवेद्बन्धुरनेन सह मे क्षमम् ।
साम्यमेकत्वतां यास्ये यादृशस्तादृशस्त्वहम्॥२७
तुल्यतामिह पश्यामि सदृशोऽहमनेन वै ।
अयं हि विमलोऽव्यक्तमहमीदृशकस्तथा ॥ २८
योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान् ।
ससङ्ग्याऽहं निःसङ्गः स्थितः कालमिमं त्वहम्॥२९

विद्याविद्यार्थंतत्वेनेति ट. पाठः ॥ १० ॥ अधिष्ठानं क्षेत्रमाहुरिति ङ. थ. पाठः ॥ १४ ॥ न संस्रजेदिति ध. पाठः ॥ २२ ॥ उदकादभिमन्यत इति ट. थ. पाठः ॥ २५ ॥

अनयाऽहं वशीभूतः कालमेतं न बुद्धवान् ।
उच्चमध्यमनीचानां तामहं कथमावसे ॥ ३०
समानया न याचेह सहवासमहं कथम् ।
गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो भवे ॥ ३१
सहवासं न यास्यामि कालमेतद्धि वञ्चनात् ।
वञ्चितोस्म्यनया यद्धि निर्विकारो विकारया ॥३२
न चायमपराधोऽस्या ह्यपराधो ह्ययं मम ।
योऽहमत्राभवं सक्तः पराङ्मुखमुपस्थितः ॥ ३३
ततोस्मि बहुरूपासु स्थितो मूर्तिष्वमूर्तिमान् ।
अमूर्तश्चापि मूर्तात्मा ममत्वेन प्रधर्षितः ॥ ३४
प्रकृतेरनयत्वेन तासु तास्विह योनिषु ।
निर्ममस्य ममत्वेन किं कृतं तासु तासु च ॥३५
योनीषु वर्तमानेन नष्टसंज्ञेन चेतसा ।
न ममात्रानया कार्यमहंकारकृतात्मना ॥ ३६
आत्मानं बहुधा कृत्वा येयं भूयो युनक्ति माम् ।
इदानीमेष बुद्धोस्मि निर्ममो निरहंकृतः ॥ ३७
ममत्वमनया नित्यमहंकारकृतात्मकम् ।
अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् ॥ ३८
अनेन साम्यं यास्यामि नानयाऽहमचेतसा ।
क्षणं मम सहानेन नैकत्वमनया सह ॥ ३९
एवं परमसंबोधात्पञ्चविंशोऽनुबुद्धवान् ।
अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयम् ॥ ४०
अव्यक्तं व्यक्तकर्माणं सगुणं निर्गुणं तथा ।
निर्गुणं परमं दृष्ट्वा तादृग्भवति मैथिल ॥ ४१
अक्षरक्षरयोरेतदुक्तं तत्वनिदर्शनम् ।
मयेह ज्ञानसंपन्नं यथाश्रुतिनिदर्शनात् ॥ ४२
निःसंदिग्धं च सूक्ष्मं च विबुद्धं विमलं यथा ।
प्रवक्ष्यामि तु ते भूयस्तन्निबोध यथाश्रुतम् ॥ ४३
साङ्ख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात् ।
यदेव शास्त्रं साङ्ख्योक्तं योगदर्शनमेव तत् ॥ ४४
प्रबोधनकरं ज्ञानं साङ्ख्यानामवनीपते ।
विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥४५
पृथक्चैवमिदं शास्त्रमित्याहुः कुशला जनाः ।
अस्मिंश्च शास्त्रे योगानां पुनर्दधि पुनः शरः ॥४६
पञ्चविंशात्परं तत्त्वं न पश्यति नराधिप ।
साङ्ख्यानां तु परं तत्त्वं यथावदनुवर्णितम् ॥ ४७
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ।
बुध्यमानं च बुद्धं च प्राहुर्योगनिदर्शनम् ॥ ४८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

---

## त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

भीष्मेण युधिष्ठिरंप्रति बुद्धाबुद्धस्वरूपनिरूपकवसिष्ठकरालजनकसंवादानुवादसमापनम् ॥ १ ॥

वसिष्ठ उवाच ।
अप्रबुद्धमथाव्यक्तमिमं गुणविधिं शृणु ।
गुणान्धारयते ह्येषा सृजत्याक्षिपते तथा ॥ १
अजस्रं त्विह क्रीडार्थं विकरोति जनाधिप ।
आत्मानं बहुधा कृत्वा तान्येव प्रविचक्षते ॥ २
एतदेवं विकुर्वाणं बुध्यमानो न बुध्यते ।
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ ३
न त्वेव बुध्यतेऽव्यक्तं सगुणं वाऽथ निर्गुणम् ।
कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ॥ ४
बुध्यते यदि वाऽव्यक्तमेतद्वै पञ्चविंशकम् ।
बुध्यमानो भवत्येष सङ्गात्मक इति श्रुतिः ।
अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतम् ॥ ५
अव्यक्तबोधनाच्चापि बुध्यमानं वदन्त्युत ।
पञ्चविंशं महात्मानं न चासावपि बुध्यते ॥ ६

---

प्राकृतेन ममत्वेनेति झ. पाठः ॥ ३५ ॥ श्रेयो भूयो युनक्ति मामिति ध. पाठः ॥ ३७ ॥ अव्यक्तं व्यक्तधर्माणमिति झ. पाठः ॥ ४१ ॥ पुनर्वेदे पुरःसर इति झ. पाठः ॥ ४६ ॥ पश्यते न नराधिपेति झ. पाठः ॥ ४७ ॥ द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

अव्यक्तबोधनं चैनमिति ड. थ. पाठः । अव्यक्तबोधनाच्चैनमिति ट. पाठः ॥ ३ ॥

षड्विंशं विमलं बुद्धमप्रमेयं सनातनम् ।
स तु तं पञ्चविंशं च चतुर्विंशं च बुध्यते ॥ ७
दृश्यादृश्यौ ह्यनुगतावुभावेव महाद्युती ।
अव्यक्तं तत्तु तद्ब्रह्म बुध्यते तात केवलम् ॥ ८
केवलं पञ्चविंशं च चतुर्विंशं च पश्यति ।
बुध्यमानो यदात्मानमन्योऽहमिति मन्यते ॥ ९
तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः ।
बुध्यते च परां बुद्धिं विमलाममलां यदा ॥ १०
षड्विंशं राजशार्दूल तथा बुद्धत्वमाव्रजेत् ।
ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्मि वै ॥ ११
निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम् ।
ततः केवलधर्माऽसौ भवत्यव्यक्तदर्शनात् ॥ १२
केवलेन समागम्य विमुक्तोऽऽत्मानमाप्नुयात् ।
एतं वै तत्त्वमित्याहुर्निस्तत्त्वमजरामरम् ॥ १३
तत्त्वसंश्रयणादेष तत्त्ववान्न च मानद ।
पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः ॥ १४
न चैष तत्त्ववांस्तात निस्तत्त्वस्त्वेष बुद्धिमान् ।
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धत्वलक्षणम् ॥ १५
षाड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।
केवलेन बलेनैव समतां यात्यसंशयम् ॥ १६
षड्विंशेन प्रबुद्धेन बुध्यमानो ह्यबुद्धिमान् ।
एवं नानात्वमित्युक्तं साङ्ख्यश्रुतिनिदर्शनात् १७
चेतनेन समेतस्य पञ्चविंशतिकस्य च ।
एकत्वं वै भवत्यस्य यदा बुद्ध्या न बुध्यते ॥ १८
बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल ।
सङ्गधर्मा भवत्येष निःसङ्गात्मा नराधिप ॥ १९
निःसङ्गात्मानमासाद्य षड्विंशकमजं विभुम् ।
विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते ॥ २०
चतुर्विंशं महाभाग षड्विंशस्य प्रबोधनात् ।
एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ॥ २१
प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात् ।
नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदृष्टिभिः ॥ २२
मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः ।
मत्स्योदके यथा तद्वदन्यत्वमुपलभ्यते ॥ २३
एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः ।
एतद्धि मोक्ष इत्युक्तमव्यक्तज्ञानसंज्ञितम् ॥ २४
पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्तते ।
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् । २५
सोयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्मा च भवत्येष समेत्य वै ॥ २६
विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ २७
वियोगधर्मिणा चैव वियोगात्मा भवत्यथ ।
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ॥२८
शुद्धधर्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्मा च भवति समेत्य विमलात्मना ॥ २९
केवलात्मा तथा चैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ॥ ३०
एतावदेतत्कथितं मया ते
तथ्यं महाराज यथार्थतत्त्वम् ।
अमत्सरत्वं प्रतिगृह्य चार्थं
सनातनं ब्रह्म विशुद्धमाद्यम् ॥ ३१
नावेदनिष्ठस्य जनस्य राज-
न्प्रदेयमेतत्परमं त्वया भवेत् ।
विवित्समानाय विबोधकारणं
प्रबोधहेतोः प्रणतस्य शासनम् ॥ ३२
न देयमेतच्च तथाऽनृतात्मने
शठाय क्लीबाय न जिह्मबुद्धये ।
न पण्डितज्ञानपरोपतापिने
देयं त्वयेदं विनिबोध यादृशे ॥ ३३
श्रद्धान्वितायाथ गुणान्विताय
परापवादाद्विरताय नित्यम् ।
विशुद्धयोगाय बुधाय चैव
क्रियावते च क्षमिणे हिताय ॥ ३४

चतुर्विंशं न पश्यतीति झ. पाठः ॥ ९ ॥ बुध्यते विमलं बुद्धविशुद्धमचलोपममिति ध. पाठः ॥ १० ॥ षड्विंशो राजशार्दूलेति झ. पाठः । प्रलयधर्मिणि इति थ. पाठः ॥ ११ ॥ एतद्वै तत्वमिति ध. पाठः ॥ १३ ॥ क्षिप्रं बुध्या सुलक्षणमिति ङ. थ. पाठः । क्षिप्रं बुद्धा स्वलक्षणमिति ट. पाठः ॥ १५ ॥ एकत्वं चैव तत्वस्येति ध. पाठः ॥ १८ ॥

विविक्तशीलाय विधिप्रियाय
विवादहीनाय बहुश्रुताय ।
विजानते चैव दमक्षमावते
शक्ताय चैकात्मशमाय देहिनाम् ॥ ३५
एतैर्गुणैर्हीनतमे न देय-
मेतत्परं ब्रह्म विशुद्धमाहुः ।
न श्रेयसा योक्ष्यति तादृशे कृतं
धर्मप्रवक्तारमपात्रदानात् ॥ ३६
पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्विदमव्रताय ।
जितेन्द्रियायैतदसंशयं ते
भवेत्प्रदेयं परमं नरेन्द्र ॥ ३७
कराल मा ते भयमस्तु किंचि-
देतच्छ्रुतं ब्रह्म परं त्वयाऽद्य ।
यथावदुक्तं परमं पवित्रं
विशोकमत्यन्तमनादिमध्यम् ॥ ३८
अगाधजन्मामरणं च राज-
न्निरामयं वीतभयं शिवं च ।
समीक्ष्य मोहं त्यज वाऽद्य सर्व-
ज्ञानस्य तत्त्वार्थमिदं विदित्वा ॥ ३९
अवाप्तमेतद्धि मया सनातना-
द्धिरण्यगर्भाद्यजतो नराधिप ।
प्रसाद्य यत्नेन तमुग्रतेजसं
सनातनं ब्रह्म यथाऽद्य वै त्वया ॥ ४०
पृष्टस्त्वया चास्मि यथा नरेन्द्र
तथा मयेदं त्वयि चोक्तमद्य ।
तथाऽवाप्तं ब्रह्मणो मे नरेन्द्र
महाज्ञानं मोक्षविदां परायणम् ॥ ४१

भीष्म उवाच ।

एतदुक्तं परं ब्रह्म यस्मान्नावर्तते पुनः ।
पञ्चविंशो महाराज परमर्षिनिदर्शनात् ॥ ४२
पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च ।
नावबुध्यति तत्त्वेन बुध्यमानोऽजरामरम् ॥ ४३
एतन्निःश्रेयसकरं ज्ञानं ते परमं मया ।
कथितं तत्त्वतस्तात श्रुत्वा देवर्षितो नृप ॥ ४४
हिरण्यगर्भादृषिणा वसिष्ठेन महात्मना ।
वसिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम् ॥ ४५
नारदाद्विदितं मह्यमेतद्ब्रह्म सनातनम् ।
मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत्परमं पदम् ॥४६
येन क्षराक्षरे वित्ते भयं तस्य न विद्यते ।
विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव ॥ ४७
अविज्ञानाच्च मूढात्मा पुनःपुनरुपाद्रवत् ।
प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते ॥ ४८
देवलोकं तथा तिर्यङ्मनुष्यमपि चाश्नुते ।
यदि शुध्यति कालेन तस्मादज्ञानसागरात् ॥४९
'उत्तीर्णोऽस्मादगाधात्स परमाप्नोति शोभनम् ।'
अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते ।
अहन्यहनि मज्जन्ति यत्र भूतानि भारत ॥ ५०
यस्मादगाधादव्यक्तादुत्तीर्णस्त्वं सनातनात् ।
तस्मात्त्वं विरजाश्चैव वितमस्कश्च पार्थिव ॥ ५१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

---

## चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥

भीष्मेण युधिष्ठिरंप्रति श्रेयःसाधनधर्मप्रतिपादकजनकानुशासनानुवादः ॥ १ ॥

भीष्म उवाच ।

मृगयां विचरन्कश्चिद्विजने जनकात्मजः ।
वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः ॥ १
तमासीनमुपासीनः प्रणम्य शिरसा मुनिम् ।

वित्ते विज्ञाते ॥ ४७ ॥

·त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् ॥ २
भगवन्किमिदं श्रेयः प्रेत्य चापीह वा भवेत् ।
पुरुषस्याध्रुवे देहे कामस्य वशवर्तिनः ॥ ३
सत्कृत्य परिपृष्टः सन्सुमहात्मा महातपाः ।
निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ॥ ४
ऋषिरुवाच ।
मनसः प्रतिकूलानि प्रेत्य चेह नचेच्छसि ।
भूतानां प्रतिकूलेभ्यो निवर्तस्व यतेन्द्रियः ॥ ५
धर्मः सदा हितः पुंसां धर्मश्चैवाश्रयः सताम् ।
धर्माल्लोकास्त्रयस्तात प्रवृत्ताः सचराचराः ॥ ६
स्वादुकामुक कामानां वैतृष्ण्यं किं न गच्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ॥ ७
यथा ज्ञाने परिचयः कर्तव्यस्तत्फलार्थिना ।
तथा धर्मे परिचयः कर्तव्यस्तत्फलार्थिना ॥ ८
असता धर्मकामेन विशुद्धं कर्म दुष्करम् ।
सता तु धर्मकामेन सुकरं कर्म दुष्करम् ॥ ९
वने ग्राम्यसुखाचारो यथाग्राम्यस्तथैव सः ।
ग्रामे वनसुखाचारो यथा वनचरस्तथा ॥ १०
मनोवाक्कर्मगे धर्मे कुरु श्रद्धां समाहितः ।
निवृत्तौ वा प्रवृत्तौ वा संप्रधार्य गुणागुणान् ॥ ११
नित्यं च बहु दातव्यं साधुभ्यश्चानसूयता ।
प्रार्थितं ब्राह्मणेभ्यश्च सत्कृतं देशकालयोः ॥ १२
शुभेन विधिना लब्धमर्हाय प्रतिपादयेत् ।
क्रोधमुत्सृज्य दत्त्वाऽथ नानुतप्येन्न कीर्तयेत् ॥ १३
अनृशंसः शुचिर्दान्तः सत्यवागार्जवे स्थितः ।
योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः ॥ १४
संस्कृता चैकपत्नी च जात्या योनिरिहेष्यते ।
ऋग्यजुःसामगो विद्वान्षट्कर्मा पात्रमुच्यते ॥ १५
स एव धर्मः सोऽधर्मस्तं तं प्रति नरं भवेत् ।
पात्राकर्मविशेषेण देशकालाववेक्ष्य च ॥ १६
लीलयाऽल्पं यथा गात्रात्प्रमृज्यात्तु रजः पुमान् ।
बहुयत्नेन च महत्पापनिर्हरणं तथा ॥ १७
विरिक्तस्य यथा सम्यग्घृतं भवति भेषजम् ।
तथा निर्हृतदोषस्य प्रेत्य धर्मः सुखावहः ॥ १८
मानसं सर्वभूतेषु वर्तते वै शुभाशुभम् ।
अशुभेभ्यः समाक्षिप्य शुभेष्वेवावधारय ॥ १९
सर्वं सर्वेण सर्वत्र क्रियमाणं च पूजय ।
स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम् ॥ २०
अधृतात्मन्धृतौ तिष्ठ दुर्बुद्धे बुद्धिमान्भव ।
अप्रशान्तः प्रशाम्य त्वमप्राज्ञः प्राज्ञवच्चर ॥ २१
तेजसा शक्यते प्राप्तुमुपायः सहचारिणा ।
इह च प्रेत्य च श्रेयस्तस्य मूलं धृतिः परा ॥ २२
राजर्षिरधृतिः स्वर्गात्पतितो हि महाभिषः ।
ययातिः क्षीणपुण्योपि धृत्या लोकानवाप्तवान् २३
तपस्विनां धर्मवतां विदुषां चोपसेवनात् ।
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे २४
भीष्म उवाच ।
स तु स्वभावसंपन्नस्तच्छ्रुत्वा मुनिभाषितम् ।
विनिवर्त्य मनः कामाद्धर्मे बुद्धिं चकार ह ॥ २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥

## पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥

भीष्मेण युधिष्ठिरंप्रति भूतसृष्टिप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
धर्माधर्मविमुक्तं यद्विमुक्तं सर्वसंशयात् ।
जन्ममृत्युविमुक्तं च विमुक्तं पुण्यपापयोः ॥ १
यच्छिवं नित्यमभयं नित्यमक्षरमव्ययम् ।
शुचि नित्यमनायासं तद्भवान्वक्तुमर्हति ॥ २
भीष्म उवाच ।

वैतृष्ण्यं को न गच्छति इति ध. पाठः । किं न पृच्छसीति ध. पाठः ॥ ५ ॥ एकस्यैव पत्नी एकपत्नी नत्वन्यपूर्वा । जात्याः पुत्रोत्पत्तेः योनिः स्थानम् ॥ १५ ॥ चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ॥ ३
याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः ।
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदांवरः ॥ ४
जनक उवाच ।
कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः ।
किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम् ॥ ५
प्रभवं चाप्ययं चैव कालसङ्ख्यां तथैव च ।
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ॥ ६
अज्ञानात्परिपृच्छामि त्वं हि ज्ञानमयो निधिः ।
तदहं श्रोतुमिच्छामि सर्वमेतदसंशयम् ॥ ७
याज्ञवल्क्य उवाच ।
श्रूयतामवनीपाल यदेतदनुपृच्छसि ।
योगानां परमं ज्ञानं साङ्ख्यानां च विशेषतः ॥८
न तवाविदितं किंचिन्मां तु जिज्ञासते भवान् ।
पृष्टेन चापि वक्तव्यमेष धर्मः सनातनः ॥ ९
अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश ।
आसां तु सप्त व्यक्तानि प्राहुरध्यात्मचिन्तकाः१०
अव्यक्तं च महांश्चैव तथाऽहंकार एव च ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ११
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ।
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् १२
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥१३
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ।
बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल ॥१४
मनः षोडशकं प्राहुरध्यात्मगतिचिन्तकाः ।
त्वं चैवान्ये च विद्वांसस्तत्त्वबुद्धिविशारदाः ॥१५
अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव ।
प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः ॥ १६
महतश्चाप्यहंकार उत्पद्यति नराधिप ।
द्वितीयं सर्गमित्याहुरेतद्बुद्ध्यात्मकं स्मृतम् ॥ १७
अहंकाराच्च संभूतं मनो भूतगुणात्मकम् ।
तृतीयः सर्ग इत्येष आहंकारिक उच्यते ॥ १८
मनसस्तु समुद्भूता महाभूता नराधिप ।
चतुर्थं सर्गमित्येतन्मानसं चिन्तनात्मकम् ॥ १९
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
पञ्चमं सर्गमित्याहुर्भौतिकं भूतचिन्तकाः ॥ २०
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ।
सर्गं तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतम् ॥२१
अधः श्रोत्रेन्द्रियग्राम उत्पद्यति नराधिप ।
सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतम् ॥ २२
ऊर्ध्वं स्रोतस्तथा तिर्यगुत्पद्यति नराधिप ।
अष्टमं सर्गमित्याहुरेतदार्जवकं स्मृतम् ॥ २३
तिर्यक्स्रोतस्त्वधःस्रोत उत्पद्यति नराधिप ।
नवमं सर्गमित्याहुरेतदार्जवकं बुधाः ॥ २४
एते वै नव सर्गा हि तत्त्वानि च नराधिप ।
चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनम् ॥ २५
अत ऊर्ध्वं महाराज गुणस्यैतस्य तत्त्वतः ।
महात्मभिरनुप्रोक्तां कालसङ्ख्यां निबोध मे ॥२६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥

---

## षोडशाधिकत्रिशततमोऽध्यायः ॥ ३१६ ॥

भीष्मेण युधिष्ठिरंप्रति अण्डादिसृष्टिप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥ १ ॥

याज्ञवल्क्य उवाच ।
अव्यक्तस्य नरश्रेष्ठ कालसङ्ख्यां निबोध मे ।
पञ्चकल्पसहस्राणि द्विगुणान्यहरुच्यते ॥ १
रात्रिरेतावती चास्य प्रतिबुद्धो नराधिप ।
सृजत्योषधिमेवाग्रे जीवनं सर्वदेहिनाम् ॥ २
ततो ब्रह्माणमसृजद्धैरण्याण्डसमुद्भवम् ।
सा मूर्तिः सर्वभूतानामित्येवमनुशुश्रुम ॥ ३
संवत्सरमुषित्वाण्डे निष्क्रम्य च महामुनिः ।

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ॥ ३
याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः ।
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदांवरः ॥ ४

जनक उवाच ।

कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः ।
किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम् ॥ ५
प्रभवं चाप्ययं चैव कालसङ्ख्यां तथैव च ।
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ॥ ६
अज्ञानात्परिपृच्छामि त्वं हि ज्ञानमयो निधिः ।
तदहं श्रोतुमिच्छामि सर्वमेतदसंशयम् ॥ ७

याज्ञवल्क्य उवाच ।

श्रूयतामवनीपाल यदेतदनुपृच्छसि ।
योगानां परमं ज्ञानं साङ्ख्यानां च विशेषतः ॥८
न तवाविदितं किंचिन्मां तु जिज्ञासते भवान् ।
पृष्टेन चापि वक्तव्यमेष धर्मः सनातनः ॥ ९
अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश ।
आसां तु सप्त व्यक्तानि प्राहुरध्यात्मचिन्तकाः१०
अव्यक्तं च महांश्चैव तथाऽहंकार एव च ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ११
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ।
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् १२
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥१३
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ।
बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल ॥१४
मनः षोडशकं प्राहुरध्यात्मगतिचिन्तकाः ।
त्वं चैवान्ये च विद्वांसस्तत्त्वबुद्धिविशारदाः ॥१५
अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव ।
प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः ॥ १६
महतश्चाप्यहंकार उत्पद्यति नराधिप ।
द्वितीयं सर्गमित्याहुरेतद्बुद्ध्यात्मकं स्मृतम् ॥ १७
अहंकाराच्च संभूतं मनो भूतगुणात्मकम् ।
तृतीयः सर्ग इत्येष आहंकारिक उच्यते ॥ १८
मनसस्तु समुद्भूता महाभूता नराधिप ।
चतुर्थं सर्गमित्येतन्मानसं चिन्तनात्मकम् ॥ १९
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
पञ्चमं सर्गमित्याहुर्भौतिकं भूतचिन्तकाः ॥ २०
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ।
सर्गं तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतम् ॥२१
अधः श्रोत्रेन्द्रियग्राम उत्पद्यति नराधिप ।
सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतम् ॥ २२
ऊर्ध्वं स्रोतस्तथा तिर्यगुत्पद्यति नराधिप ।
अष्टमं सर्गमित्याहुरेतदार्जवकं स्मृतम् ॥ २३
तिर्यक्स्रोतस्त्वधःस्रोत उत्पद्यति नराधिप ।
नवमं सर्गमित्याहुरेतदार्जवकं बुधाः ॥ २४
एते वै नव सर्गा हि तत्त्वानि च नराधिप ।
चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनम् ॥ २५
अत ऊर्ध्वं महाराज गुणस्यैतस्य तत्त्वतः ।
महात्मभिरनुप्रोक्तां कालसङ्ख्यां निबोध मे ॥ २६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥

## षोडशाधिकत्रिशततमोऽध्यायः ॥ ३१६ ॥

भीष्मेण युधिष्ठिरंप्रति अण्डादिसृष्टिप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥ १ ॥

याज्ञवल्क्य उवाच ।

अव्यक्तस्य नरश्रेष्ठ कालसङ्ख्यां निबोध मे ।
पञ्चकल्पसहस्राणि द्विगुणान्यहरुच्यते ॥ १
रात्रिरेतावती चास्य प्रतिबुद्धो नराधिप ।
सृजत्योषधिमेवाग्रे जीवनं सर्वदेहिनाम् ॥ २
ततो ब्रह्माणमसृजद्धैरण्याण्डसमुद्भवम् ।
सा मूर्तिः सर्वभूतानामित्येवमनुशुश्रुम ॥ ३
संवत्सरमुषित्वाण्डे निष्क्रम्य च महामुनिः ।

विचरन्नमितप्राणस्तिर्यगूर्ध्वमधस्तथा ॥ १०
तमप्रतिबलं भीममाकाशं ग्रसते पुनः ।
आकाशमप्यभिनदन्मनो ग्रसति चारिकम् ॥ ११
मनो ग्रसति सर्वात्मा सोहंकारः प्रजापतिः ।
अहंकारो महानात्मा भूतभव्यभविष्यवित् ॥ १२
तमप्यनुपमात्मानं विश्वं शंभुः प्रजापतिः ।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ १३
सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४
हृदयं सर्वभूतानां पर्वणाऽङ्गुष्ठमात्रकः ।
अणुग्रसत्यनन्तो हि महात्मा विश्वमीश्वरः ॥ १५
ततः समभवत्सर्वमक्षयाव्ययमव्रणम् ।
भूतभव्यभविष्याणां स्रष्टारमनघं तथा ॥ १६
एषोप्ययस्ते राजेन्द्र यथावत्समुदाहृतः ।
अध्यात्ममधिभूतं च श्रूयतां चाधिदैवतम् ॥ १७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७ ॥

---

## अष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८ ॥

याज्ञवल्क्येन जनकंप्रति इन्द्रियतद्विषयतदभिमानिदेवताकथनम् ॥ १ ॥ तथा सत्त्वादिगुणत्रयकार्यधर्मप्रतिपादनम् ॥ २ ॥

याज्ञवल्क्य उवाच ।
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम् ॥ १
पायुरध्यात्ममित्याहुर्यथातत्त्वार्थदर्शिनः ।
विसर्गमधिभूतं च मित्रस्तत्राधिदैवतम् ॥ २
उपस्थोऽध्यात्ममित्याहुर्यथायोगप्रदर्शिनः ।
अधिभूतं तथाऽऽनन्दो दैवतं च प्रजापतिः ॥ ३
हस्तावध्यात्ममित्याहुर्यथासङ्ख्यानदर्शिनः ।
कर्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम् ॥ ४
वागध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ ५
चक्षुरध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।
रूपमत्राधिभूतं तु सूर्यश्चाप्यधिदैवतम् ॥ ६
श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।
शब्दस्तत्राधिभूतं तु दिशश्चात्राधिदैवतम् ॥ ७
जिह्वामध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।
रस एवाधिभूतं तु आपस्तत्राधिदैवतम् ॥ ८
घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।
गन्ध एवाधिभूतं तु पृथिवी चाधिदैवतम् ॥ ९
त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः ।
स्पर्शमेवाधिभूतं तु पवनश्चाधिदैवतम् ॥ १०
मनोऽध्यात्ममिति प्राहुर्यथा शास्त्रविशारदाः ।
मन्तव्यमधिभूतं तु चन्द्रमाश्चाधिदैवतम् ॥ ११
आहंकारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनः ।
अभिमानोऽधिभूतं तु बुद्धिश्चात्राधिदैवतम् ॥ १२
बुद्धिरध्यात्ममित्याहुर्यथावदभिदर्शिनः ।
बोद्धव्यमधिभूतं तु क्षेत्रज्ञश्चाधिदैवतम् ॥ १३
एषा ते व्यक्तितो राजन्विभूतिरनुदर्शिता ।
आदौ मध्ये तथाऽन्ते च यथा तत्त्वेन तत्त्ववित् १४
प्रकृतिर्गुणान्विकुरुते स्वच्छन्देनात्मकाम्यया ।
क्रीडार्थं तु महाराज शतशोऽथ सहस्रशः ॥ १५
यथा दीपसहस्राणि दीपान्मर्त्याः प्रकुर्वते ।
प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान्बहून् ॥ १६
सत्वमानन्द उद्रेकः प्रीतिः प्राकाम्यमेव च ।
सुखं शुद्धत्वमारोग्यं संतोषः श्रद्दधानता ॥ १७
अकार्पण्यमसंरम्भः क्षमा धृतिरहिंसता ।
समता सत्यमानृण्यमार्जवं ह्रीरचापलम् ॥ १८

---

ग्रसति चाधिकमिति झ० पाठः ॥ ११ ॥ ग्रसति भूतात्मेति झ. पाठः ॥ १२ ॥ हृदये सर्वभूतानां पवनोऽङ्गुष्ठमात्रक इति ध. पाठः । भावितोऽङ्गुष्ठमात्रक इति ड. पाठः ॥ १५ ॥

सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७ ॥
यथा तत्वनिदर्शिनः इति थ. पाठः ॥ ४ ॥

शौचमार्दवमाचारमलौल्यं हृद्यसंभ्रमः ।
इष्टानिष्टवियोगानां कृतानामविकत्थना ॥ १९
दानेन चात्मग्रहणमस्पृहत्वं परार्थता ।
सर्वभूतदया चैव सत्वस्यैते गुणाः स्मृताः ॥२०
रजोगुणानां संघातो रूपमैश्वर्यविग्रहौ ।
अत्यागित्वमकारुण्यं सुखदुःखोपसेवनम् ॥ २१
परापवादेषु रतिर्विवादानां च सेवनम् ।
अहंकारस्त्वसत्कारश्चिन्ता वैरोपसेवनम् ॥ २२
परितापोऽभिहरणं ह्रीनाशोऽनार्जवं तथा ।
भेदः परुषता चैव कामक्रोधौ मदस्तथा ॥ २३
दर्पो द्वेषोऽतिमानश्च एते प्रोक्ता रजोगुणाः ।
तामसानां तु संघातान्प्रवक्ष्याम्युपधार्यताम् ॥ २४
मोहोऽप्रकाशस्तामिस्रमन्धतामिस्रसंज्ञितम् ।
मरणं चान्धतामिस्रं तामिस्रं क्रोध उच्यते ॥२५
तमसो लक्षणानीह भक्षणाद्यभिरोचनम् ।
भोजनानामपर्याप्तिस्तथा पेयेष्वतृप्तता ॥ २६
गन्धवासो विहारेषु शयनेष्वासनेषु च ।
दिवास्वप्ने विवादे च प्रमादेषु च वै रतिः ॥ २७
नृत्यवादित्रगीतानामज्ञानाच्छ्रद्दधानता ।
द्वेषो धर्मविशेषाणामेते वै तामसा गुणाः ॥ २८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८ ॥

## एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥

याज्ञवल्क्येन जनकंप्रति सात्विकादितारतम्यनिरूपणम् ॥ १ ॥ जनकेन याज्ञवल्क्यंप्रति तत्वकथनप्रार्थना च ॥ २ ॥

याज्ञवल्क्य उवाच ।
एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम ।
कृत्स्नस्य चैव जगतस्तिष्ठन्त्यनपगाः सदा ॥ १
अव्यक्तरूपो भगवाञ्शतधा च सहस्रधा ।
शतधा सहस्रधा चैव तथा शतसहस्रधा ॥ २
कोटिशश्च करोत्येष प्रकृत्याऽऽत्मानमात्मना ।
सात्विकस्योत्तमं स्थानं राजसस्येह मध्यमम् ॥ ३
तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः ।
केवलेनेह पुण्येन गतिमूर्ध्वामवाप्नुयात् ॥ ४
पुण्यपापेन मानुष्यमधर्मेणाप्यधोगतिम् ।
द्वन्द्वमेषां त्रयाणां तु सन्निपातं च तत्वतः ॥ ५
सत्वस्य रजसश्चैव तमसश्च शृणुष्व मे ।
सत्वस्य तु रजो दृष्टं रजसश्च तमस्तथा ॥ ६
तमसश्च तथा सत्वं सत्वस्याव्यक्तमेव च ।
अव्यक्तः सत्वसंयुक्तो देवलोकमवाप्नुयात् ॥ ७
रजःसत्वसमायुक्तो मानुषेषु प्रपद्यते ।
रजस्तमोभ्यां संयुक्तस्तिर्यग्योनिषु जायते ॥ ८
राजसैस्तामसैः सत्वैर्युक्तो मानुषमाप्नुयात् ।
पुण्यपापवियुक्तानां स्थानमाहुर्महात्मनाम् ॥ ९
शाश्वतं चाव्ययं चैवमक्षयं चामृतं च तत् ।
ज्ञानिनां संभवं श्रेष्ठं स्थानमव्रणमच्युतम् ।
अतीन्द्रियमबीजं च जन्ममृत्युतमोनुदम् ॥ १०
अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप ।
स एष प्रकृतिस्थो हि तत्स्थ इत्यभिधीयते ॥ ११
अचेतना चैव मता प्रकृतिश्चापि पार्थिव ।
एतेनाधिष्ठिता चैव सृजते संहरत्यपि ॥ १२
जनक उवाच ।
अनादिनिधनावेतावुभावेव महामते ।
अमूर्तिमन्तावचलावप्रकम्प्यगुणागुणौ ॥ १३
अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः ।
चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः ॥१४
त्वं हि विप्रेन्द्र कार्त्स्न्येन मोक्षधर्ममुपाससे ।
साकल्यं मोक्षधर्मस्य श्रोतुमिच्छामि तत्त्वतः ॥ १५
निस्तत्वं केवलत्वं च विनाभावं तथैव च ।

---

आचारमपारुष्यमपैशुनमिति ङ. पाठः । इष्टापूर्तविशेषाणामिति ट. ङ. पाठः ॥१९॥ अष्टादशाधिकत्रिशततमोऽध्यायः॥३१८॥
सचेतनश्चैव मतः प्रकृतिस्थश्च पार्थिवेति ट. ङ. पाठः ॥ १२ ॥ अप्रकम्प्यौ व्रणाव्रणाविति ट. ङ. पाठः । अप्रकम्प्यौ वृषावृषाविति थ. पाठः ॥ १३ ॥ अस्तित्वं केवलत्वं चेति झ. पाठः ॥ १६ ॥

दैवतानि च मे ब्रूहि देहं यान्याश्रितानि वै ॥ १६
तथैवोत्क्रामिणः स्थानं देहिनो वै विपद्यतः ।
कालेन यद्धि प्राप्नोति स्थानं तत्प्रब्रवीहि मे ॥ १७
साङ्ख्यज्ञानं च तत्त्वेन पृथग्योगं तथैव च ।
अरिष्टानि च तत्त्वानि वक्तुमर्हसि सत्तम ।
विदितं सर्वमेतत्ते पाणावामलकं यथा ॥ १८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥

---

## विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥

याज्ञवल्क्येन जनकंप्रति साङ्ख्यदर्शनकथनम् ॥ १ ॥

याज्ञवल्क्य उवाच ।
न शक्यो निर्गुणस्तात गुणीकर्तुं विशांपते ।
गुणवांश्चाप्यगुणवान्यथातत्त्वं निबोध मे ॥ १
गुणैर्हि गुणवानेव निर्गुणश्चागुणस्तथा ।
प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः ॥ २
गुणस्वभावस्त्वव्यक्तो गुणानेवाभिवर्तते ।
उपयुङ्क्ते च तानेव स चैवाज्ञः स्वभावतः ॥ ३
अव्यक्तस्तु न जानीते पुरुषोऽज्ञः स्वभावतः ।
न मत्तः परमोऽस्तीति नित्यमेवाभिमन्यते ॥ ४
अनेन कारणेनैतदव्यक्तं स्यादचेतनम् ।
नित्यत्वाच्चाक्षरत्वाच्च क्षरत्वान्न तदन्यथा ॥ ५
यदाऽज्ञानेन कुर्वीत गुणसर्गं पुनःपुनः ।
यदात्मानं न जानीते तदाऽऽत्मापि न मुच्यते ६
कर्तृत्वाच्चापि सर्गाणां सर्गधर्मा तथोच्यते ।
कर्तृत्वाच्चापि योगानां योगधर्मा तथोच्यते ॥ ७
कर्तृत्वात्प्रकृतीनां च तथा प्रकृतिधर्मिता ॥ ८
कर्तृत्वाच्चापि बीजानां बीजधर्मा तथोच्यते ।
गुणानां प्रसवत्वाच्च प्रलयत्वात्तथैव च ॥ ९
'कर्तृत्वात्प्रलयानां तु तथा प्रलयधर्मि च ।
कर्तृत्वात्प्रभवाणां च तथा प्रभवधर्मि च ॥ १०
बीजत्वात्प्रकृतित्वाच्च प्रलयत्वात्तथैव च ।'
उपेक्षत्वादनन्यत्वादभिमानाच्च केवलम् ॥ ११
मन्यन्ते यतयः सिद्धा अध्यात्मज्ञा गतज्वराः ।
अनित्यं नित्यमव्यक्तं व्यक्तमेतद्धि शुश्रुम ॥१२
अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषास्तथा ।
सर्वभूतदयावन्तः केवलं ज्ञानमास्थिताः ॥ १३
अन्यः स पुरुषोऽव्यक्तस्त्वध्रुवो ध्रुवसंज्ञकः ।
यथा मुञ्ज इषीकाणां तथैवैतद्धि जायते ।
'न चैव मुञ्जसंयोगादिषीका तत्र बुध्यते ॥'१४
अन्यच्च मशकं विद्यादन्यच्चोदुम्बरं तथा ।
न चोदुम्बरसंयोगैर्मशकस्तत्र लिप्यते ॥ १५
अन्य एव तथा मत्स्यस्तदन्यदुदकं स्मृतम् ।
न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्वशः॥ १६
अन्यो ह्यग्निरुखाऽप्यन्या नित्यमेवमवेहि भोः ।
न चोपलिप्यते सोऽग्निरुखासंस्पर्शनेन वै ॥ १७
पुष्करं त्वन्यदेवात्र तथाऽन्यदुदकं स्मृतम् ।
न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम् ॥१८
एतेषां सहवासं च निवासं चैव नित्यशः ।
याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः॥१९
ये त्वन्यथैव पश्यन्ति न सम्यक्तेषु दर्शनम् ।
ते व्यक्तं निरयं घोरं प्रविशन्ति पुनःपुनः ॥२०
साङ्ख्यदर्शनमेतत्ते परिसङ्ख्यानमुत्तमम् ।
एवं हि परिसंख्याय साङ्ख्याः केवलतां गताः ॥२१

---

देहिनोऽपि वियुज्यत इति ट. पाठः ॥ १७ ॥ अनुक्तानि च तत्त्वेनेति ट. पाठः ॥ १८ ॥ एकोनविंशाधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥

गुणान्नैवातिवर्तत इति झ. पाठः ॥ ३ ॥ यदज्ञानेन कुरुते निर्गुणः सगुणः पुनरिति ड. पाठः ॥ ५ ॥ यदज्ञानं न जानीषे तदित्यव्यक्तमुच्यत इति थ. पाठः ॥ ६ ॥ कर्तृत्वाच्चैव धर्माणामिति ट. पाठः । कर्तृत्वाच्चापि योनीनां योनिधर्मेत्यथोच्यत इति ट. ड. पाठः ॥ ७ ॥ उखा मृत्पात्रविशेषः ॥ १७ ॥ विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥

ये त्वन्ये तत्त्वकुशलास्तेषामेतन्निदर्शनम् । अतः परं प्रवक्ष्यामि योगानामनुदर्शनम् ॥ २२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥

## एकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥

याज्ञवल्क्येन जनकंप्रति योगनिरूपणम् ॥ १ ॥

याज्ञवल्क्य उवाच ।
साङ्ख्यज्ञानं मया प्रोक्तं योगज्ञानं निबोध मे ।
यथाश्रुतं यथादृष्टं तत्त्वेन नृपसत्तम ॥ १
नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम् ।
तावुभावेकचर्यौ तावुभावनिधनौ स्मृतौ ॥ २
पृथक्पृथक्प्रपश्यन्ति येऽप्यबुद्धिरता नराः ।
वयं तु राजन्पश्याम एकमेव तु निश्चयात् ॥ ३
यदेव योगाः पश्यन्ति तत्साङ्ख्यैरपि दृश्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स तत्त्ववित् ॥४
रुद्रप्रधानानपरान्विद्धि योगानरिंदम ।
तेनैव चाथ देहेन विचरन्ति दिशो दश ॥ ५
यावद्धि प्रलयस्तात सूक्ष्मेणाष्टगुणेन ह ।
योगेन लोकान्विचरन्सुखं संन्यस्य चानघ ॥ ६
तावदेवाष्टगुणिनं योगमाहुर्मनीषिणः ।
सूक्ष्ममष्टगुणं प्राहुर्नेतरं नृपसत्तम ॥ ७
द्विगुणं योगकृत्यं तु योगानां प्राहुरुत्तमम् ।
सगुणं निर्गुणं चैव यथाशास्त्रनिदर्शनम् ॥ ८
धारणं चैव मनसः प्राणायामश्च पार्थिव ।
एकाग्रता च मनसः प्राणायामस्तथैव च ॥ ९
प्राणायामो हि सगुणो निर्गुणं धारयेन्मनः ।
यद्यदृश्यति मुञ्चन्वै प्राणान्मैथिलसत्तम ।
वाताधिक्यं भवत्येव तस्मात्तं न समाचरेत् ॥१०
निशायाः प्रथमे यामे चोदना द्वादश स्मृताः ।
मध्ये स्वप्नात्परे यामे द्वादशैव तु चोदनाः ॥११
तदेवमुपशान्तेन दान्तेनैकान्तशीलिना ।
आत्मारामेण बुद्धेन योक्तव्योऽऽत्मा न संशयः ॥१२
पञ्चानामिन्द्रियाणां तु दोषानाक्षिप्य पञ्चधा ।
शब्दं रूपं तथा स्पर्शं रसं गन्धं तथैव च ॥ १३
प्रतिभामपवर्गं च प्रतिसंहृत्य मैथिल ।
इन्द्रियग्राममखिलं मनस्यभिनिवेश्य ह ॥ १४
मनस्तथैवाहंकारे प्रतिष्ठाप्य नराधिप ।
अहंकारं तथा बुद्धौ बुद्धिं च प्रकृतावपि ॥ १५
एवं हि परिसंख्याय ततो ध्यायन्ति केवलम् ।
विरजस्कमलं नित्यमनन्तं शुद्धमव्रणम् ॥ १६
तस्थुषं पुरुषं नित्यमभेद्यमजरामरम् ।
शाश्वतं चाव्ययं चैव ईशानं ब्रह्म चाव्ययम् ॥ १७
युक्तस्य तु महाराज लक्षणान्युपधारय ।
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ॥१८
निर्वाते तु यथा दीपो ज्वलेत्स्नेहसमन्वितः ।
निश्चलोर्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः ॥ १९
पाषाण इव मेघोत्थैर्यथा बिन्दुभिराहतः ।
नालं चालयितुं शक्यस्तथा युक्तस्य लक्षणम् ॥२०
शङ्खदुन्दुभिनिर्घोषैर्विविधैर्गीतवादितैः ।
क्रियमाणैर्न कम्पेत युक्तस्यैतन्निदर्शनम् ॥ २१
तैलपात्रं यथा पूर्णं कराभ्यां गृह्य पूरुषः ।
सोपानमारुहेद्भीतस्तर्ज्यमानोऽसिपाणिभिः ॥२२
संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत् ।
तथैवोत्तरमागम्य एकाग्रमनसस्तथा ॥ २३
स्थिरत्वादिन्द्रियाणां तु निश्चलत्वात्तथैव च ।
एवं युक्तस्य तु मुनेर्लक्षणान्युपलक्षयेत् ॥ २४
स्वयुक्तः पश्यते ब्रह्म यत्तत्परममव्ययम् ।
महतस्तमसो मध्ये स्थितं ज्वलनसन्निभम् ॥२५

तावुभावेकपक्षौ तु इति ट. पाठः ॥ २ ॥ येऽल्पबुद्धिपरायणा इति ट. ड. पाठः ॥ ३ ॥ सुखं वसति चानघेति ट. ड. पाठः ॥ ६ ॥ निर्गुणं योगकृत्यं त्विति ठ. पाठः ॥ ८ ॥ दृश्यते यत्र मुञ्चन्वै इति ट. ड. थ. पाठः ॥ १० ॥ मनस्यगिर एव चेति ड. पाठः । पूतिकामुपसर्गं चेति ड. थ. पाठः ॥ १४ ॥ ह्रियमाणैर्न कम्पेयुरिति ड. पाठः ॥ २१ ॥

एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम् ।
कालेन महता राजञ्श्रुतिरेषा सनातनी ॥ २६
एतद्धि योगं योगानां किमन्यद्योगलक्षणम् ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ २७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥

---

## द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२ ॥

याज्ञवल्क्येन जनकंप्रति प्राणिनामुत्क्रमणस्थानविशेषप्रयोज्यफलविशेषकथनम् ॥ १ ॥ तथा प्राणिनां मरणसूचकदुःशकुनकथनम् ॥ २ ॥

याज्ञवल्क्य उवाच ।
तथैवोत्क्रमतां स्थानं शृणुष्वावहितो नृप ।
पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ॥ १
जङ्घाभ्यां तु वसूंन्देवानाप्नुयादिति नः श्रुतम् ।
जानुभ्यां च महाभागान्साध्यान्देवानवाप्नुयात् २
पायुनोत्क्रममाणस्तु मैत्रं स्थानमवाप्नुयात् ।
पृथिवीं जघनेनाथ ऊरुभ्यां च प्रजापतिम् ॥ ३
पार्श्वाभ्यां मरुतो देवान्नासाभ्यामिन्दुमेव च ।
बाहुभ्यामिन्द्रमित्याहुरुरसा रुद्रमेव च ॥ ४
ग्रीवया तु मुनिश्रेष्ठं नरमाप्नोत्यनुत्तमम् ।
विश्वेदेवान्मुखेनाथ दिशः श्रोत्रेण चाप्नुयात् ॥ ५
घ्राणेन गन्धवहनं नेत्राभ्यां सूर्यमेव च ।
भ्रूभ्यां चैवाश्विनौ देवौ ललाटेन पितॄनथ ॥ ६
ब्रह्माणमाप्नोति विभुं मूर्ध्ना देवाग्रजं तथा ।
एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ॥ ७
अरिष्टानि प्रवक्ष्यामि विहितानि मनीषिभिः ।
संवत्सराद्विमोक्षस्तु संभवेत शरीरिणः ॥ ८
योऽरुन्धतीं न पश्येत दृष्टपूर्वां कदाचन ।
तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च ॥ ९
खण्डाभासं दक्षिणतस्तेऽपि संवत्सरायुषः ।
परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ॥१०
आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः ।
अतिद्युतिरतिप्रज्ञा अप्रज्ञा चाद्युतिस्तथा ॥ ११
प्रकृतेर्विक्रियापत्तिः षण्मासान्मृत्युलक्षणम् ।
दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते ॥ १२
कृष्णश्यावच्छविच्छायः षण्मासान्मृत्युलक्षणम् ।
शीर्णनाभिं यथा चक्रं छिद्रं सोमं प्रपश्यति ॥१३
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ।
शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः ॥ १४
देवतायतनस्थस्तु सप्तरात्रेण मृत्युभाक् ।
कर्णनासावनमनं दन्तदृष्टिविरागिता ॥ १५
संज्ञालोपो निरूष्मत्वं सद्योमृत्युनिदर्शनम् ।
अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप ॥ १६
मूर्धतश्चोत्पतेद्धूमः सद्योमृत्युनिदर्शनम् ।
एतावन्ति त्वरिष्टानि विदित्वा मानवोऽऽत्मवान् ॥
निशि चाहनि चात्मानं योजयेत्परमात्मनि ।
प्रतीक्षमाणस्तत्कालं यः कालः प्रकृतो भवेत् ॥१८
अथास्य नेष्टं मरणं स्थातुमिच्छेदिमां क्रियाम् ।
सर्वगन्धान्रसांश्चैव धारयीत समाहितः ॥ १९
'तथा मृत्युमुपादाय तत्परेणान्तरात्मना ।'
स साङ्ख्यधारणं चैव विदित्वा मनुजर्षभ ।
जयेच्च मृत्युं योगेन तत्परेणान्तरात्मना ॥ २०
गच्छेत्प्राप्याक्षयं कृत्स्नमजन्म शिवमव्ययम् ।
शाश्वतं स्थानमचलं दुष्प्रापमकृतात्मभिः ॥ २१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२ ॥

---

कालेन केवलं जानञ्श्रुतिरेषा सनातनीति ङ. पाठः ॥ २६ ॥ एकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥

संवत्सरवियोगस्य संभवे नु इति ध. पाठः ॥ ८ ॥ खण्डभागं दक्षिणत इति थ. पाठः ॥१०॥ छिद्रं छिद्रवन्तम् ॥१३॥ सुरभिद्रव्ये शवगन्धग्रह इत्यर्थः ॥ १४ ॥ द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२ ॥

## त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥

भीष्मेण युधिष्ठिरंप्रति जनकयाज्ञवल्क्यसंवादानुवादः ॥ १ ॥

याज्ञवल्क्य उवाच ।
अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप ।
परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप ॥ १
यथार्षेणेह विधिना चरताऽवमतेन ह ।
मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप ॥२
महता तपसा देवस्तपिष्णुः सेवितो मया ।
प्रीतेन चाहं विभुना सूर्येणोक्तस्तदाऽनघ ॥ ३
वरं वृणीष्व विप्रर्षे यदिष्टं ते सुदुर्लभम् ।
तं ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः ४
ततः प्रणम्य शिरसा मयोक्तस्तपतांवरः ।
यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम् ॥५
ततो मां भगवानाह वितरिष्यामि ते द्विज ।
सरस्वतीह वाग्भूता शरीरं ते प्रवेक्ष्यति ॥ ६
ततो मामाह भगवानास्यं स्वं विवृतं कुरु ।
विवृतं च ततो मेऽऽस्यं प्रविष्टा च सरस्वती ॥ ७
ततो विदह्यमानोऽहं प्रविष्टोऽम्भस्तदाऽनघ ।
अविज्ञानादमर्षाच्च भास्करस्य महात्मनः ॥ ८
ततो विदह्यमानं मामुवाच भगवान्रविः ।
मुहूर्तं सह्यतां दाहस्ततः शीतीभविष्यति ॥ ९
शीतीभूतं च मां दृष्ट्वा भगवानाह भास्करः ।
प्रतिभास्यति ते वेदः सखिलः सोत्तरो द्विज ॥ १०
कृत्स्नं शतपथं चैव प्रणेष्यसि द्विजर्षभ ।
तस्यान्ते चापुनर्भावे बुद्धिस्तव भविष्यति ॥ ११
प्राप्स्यसे च यदिष्टं तत्साङ्ख्ययोगेप्सितं पदम् ।
एतावदुक्त्वा भगवानस्तमेवाभ्यवर्तत ॥ १२
ततोऽनुव्याहृतं श्रुत्वा गते देवे विभावसौ ।
गृहमागत्य संहृष्टोऽचिन्तयं वै सरस्वतीम् ॥ १३
ततः प्रवृत्ताऽतिशुभा स्वरव्यञ्जनभूषिता ।
ओंकारमादितः कृत्वा मम देवी सरस्वती ॥ १४
ततोऽहमर्घ्यं विधिवत्सरस्वत्यै न्यवेदयम् ।
परं यत्नमवाप्यैव निषण्णस्तत्परायणः ॥ १५
ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥ १६
कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम् ।
विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥ १७
ततः सशिष्येण मया सूर्येणेव गभस्तिभिः ।
व्यस्तो यज्ञो महाराज पितुस्तव महात्मनः ॥ १८
मिषतो देवलस्यापि ततोऽर्धं हृतवान्वसु ।
स्ववेददक्षिणायार्थे विमर्दे मातुलेन ह ॥ १९
सुमन्तुनाऽथ पैलेन तथा जैमिनिना च वै ।
पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः ॥ २०
दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयाऽनघ ।
तथैव रोमहर्षेण पुराणमवधारितम् ॥ २१
बीजमेतत्पुरस्कृत्य देवीं चैव सरस्वतीम् ।
सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ॥ २२
कर्तुं शतपथं चेदमपूर्वं च कृतं मया ।
यथाभिलषितं मार्गं तथा तच्चोपपादितम् ॥ २३
शिष्याणामखिलं कृत्स्नमनुज्ञातं ससंग्रहम् ।
सर्वे च शिष्याः शुचयो गताः परमहर्षिताः ॥ २४
शाखाः पञ्चदशेमास्तु विद्या भास्करदर्शिताः ।

---

चरतावनतेन हेति झ. ध. पाठः ॥ २ ॥ देवः सविता तोषितो मयेति ध. पाठः ॥३॥ मेऽऽस्यं ममास्यम् । संधिरार्षः ॥ ७ ॥ मातुलस्य महात्मन इति ट. ड. थ. पाठः ॥ ८ ॥ प्रतिष्ठास्यति ते वेद इति झ. ध. पाठः । शीतीभविष्यति त्वद्देह इति शेषः ॥ ९ ॥ परशाखीयं स्वशाखायामपेक्षावशात् पठ्यते तत्खिलमित्युच्यते । सोत्तरः सोपनिषत्कः ॥ १० ॥ अपुनर्भावे मोक्षे ॥ ११ ॥ चक्रे कर्मकर्तरि प्रयोगः । स्वय- मेवाविरभूदित्यर्थः ॥ १६ ॥ मातुलस्य वैशंपायनस्य ॥ १७ ॥ ततोर्घ्यं कृतवानहमिति ट. ड. थ. पाठः । देवलस्य मातुलपक्षीयस्य मिषतः पश्यतः पुरस्तात् । अर्थे अर्थनिमित्तं मातुलादिभिः सह विमर्दे सति समं विभज्य ग्राह्यमिति निर्बन्धे सति देवलसंमत्याहं दक्षिणाया अर्धं हृतवान् स्वीकृतवानित्यर्थः । दक्षिणायार्थे इति संधिरार्षः ॥ १९ ॥ कर्तुं प्रकटीकर्तुम् ॥ २३ ॥

प्रतिष्ठाप्य यथाकामं वेद्यं तदनुचिंतयम् ॥ २५
किमत्र ब्रह्मण्यमृतं किंच वेद्यमनुत्तमम् ।
चिन्तयंस्तत्र चागत्य गन्धर्वो मामपृच्छत ॥ २६
विश्वावसुस्ततो राजन्वेदान्तज्ञानकोविदः ।
चतुर्विंशांस्ततोऽपृच्छत्प्रश्नान्वेदस्य पार्थिव ॥ २७
पञ्चविंशतिमं प्रश्नं पप्रच्छान्वीक्षिकीं तदा ।
विश्वाविश्वं तथा राजन्पुरुषं प्रकृतिं तथा ।
'तथैव पुरुषव्याघ्र मित्रं वरुणमेव च ॥' २८
ज्ञानं ज्ञेयं तथा ज्ञोऽज्ञः कस्तपा अतपास्तथा ।
सूर्यातिसूर्य इति च विद्याविद्ये तथैव च ॥ २९
वेद्यावेद्यं तथा राजन्नचलं चलमेव च ।
अव्ययं चाक्षरं क्षेम्यमेतत्प्रश्नमनुत्तमम् ॥ ३०
अथोक्तश्च महाराज राजा गन्धर्वसत्तमः ।
पृष्टवानानुपूर्व्येण प्रश्नमर्थवदुत्तमम् ॥ ३१
मुहूर्तंमृष्यतां तावद्यावदेनं विचिन्तये ।
बाढमित्येव कृत्वा स तूष्णीं गन्धर्व आस्थितः॥३२
ततोऽनुचिन्तयमहं भूयो देवीं सरस्वतीम् ।
मनसा स च मे प्रश्नो दध्नो घृतमिवोद्धृतः॥३३
तत्रोपनिषदं चैव परिशेषं च पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥३४
चतुर्थी राजशार्दूल विद्यैषा सांपरायिकी ।
उदीरिता मया तुभ्यं पञ्चविंशाऽधितिष्ठता॥३५
अथोक्तस्तु मया राजन्राजा विश्वावसुस्तदा ।
श्रूयतां यद्भवानस्मान्प्रश्नं संपृष्टवानिह ॥ ३६
विश्वाविश्वेति यदिदं गन्धर्वेन्द्रानुपृच्छसि ।
विश्वाव्यक्तं परं विद्याद्भूतभव्यभयंकरम् ॥ ३७
त्रिगुणं गुणकर्तृत्वाद्विश्वान्यो निष्कलस्तथा ।
विश्वाविश्वेति मिथुनमेवमेवानुदृश्यते ॥ ३८
अव्यक्तं प्रकृतिः प्राहुः पुरुषेति च निर्गुणम् ।
तथैव मित्रं पुरुषं वरुणं प्रकृतिं तथा ॥ ३९
ज्ञानं तु प्रकृतिं प्राहुर्ज्ञेयं पुरुषमेव च ।
अज्ञमव्यक्तमित्युक्तं ज्ञस्तु निष्कल उच्यते ॥४०
कस्तपा अतपाः प्रोक्तः कोसौ पुरुष उच्यते ।
तपास्तु प्रकृतिं प्राहुरतपा निष्कलः स्मृतः॥ ४१
'सूर्यमव्यक्तमित्युक्तमतिसूर्यस्तु निष्कलः ।
अविद्या प्रोक्तमव्यक्तं विद्या पुरुष उच्यते ॥' ४२
तथैवावेद्यमव्यक्तं वेद्यः पुरुष उच्यते ।
चलाचलमिति प्रोक्तं त्वया तदपि मे शृणु ॥ ४३
चलां तु प्रकृतिं प्राहुः कारणं क्षेपसर्गयोः ।
अक्षेपसर्गयोः कर्ता निश्चलः पुरुषः स्मृतः॥ ४४
अज्ञावुभौ ध्रुवौ चैव अक्षयौ चाप्युभावपि॥ ४५
अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयाः ।
अक्षयत्वात्प्रजनने अजमत्राहुरव्ययम् ।
अक्षयं पुरुषं प्राहुः क्षयो ह्यस्य न विद्यते ॥ ४६
गुणक्षयत्वात्प्रकृतिः कर्तृत्वादक्षयं बुधाः ।
एषा तेऽन्वीक्षिकी विद्या चतुर्थी सांपरायिकी ४७
विद्योपेतं धनं कृत्वा कर्मणा नित्यकर्मणि ।
एकान्तदर्शना वेदाः सर्वे विश्वावसो स्मृताः॥ ४८
जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः ।
वेदार्थं ये न जानन्ति वेद्यं गन्धर्वसत्तम ॥ ४९
साङ्गोपाङ्गानपि यदि पञ्च वेदानधीयते ।
वेदवेद्यं न जानीते वेदभारवहो हि सः ॥ ५०
यो घृतार्थी खराक्षीरं मथेद्गन्धर्वसत्तम ।
विष्ठां तत्रानुपश्येत न मण्डं न च वै घृतम् ॥ ५१
तथा वेद्यमवेद्यं च वेदविद्यो न विन्दति ।
स केवलं मूढमतिर्वेदभारवहः स्मृतः ॥ ५२
द्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना ।
यथाऽस्य जन्मनिधने न भवेतां पुनः पुनः ॥ ५३
अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमाम् ।
परित्यज्य क्षयमिह अक्षयं धर्ममास्थितः ॥ ५४
यदाऽनुपश्यतेऽत्यन्तमहन्यहनि काश्यप ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥ ५५

ब्रह्मण्यं ब्राह्मणजातेर्हितम् ॥ २६ ॥ विश्वाविश्वं तथाश्वाश्वं मित्रं वरुणमेव चेति झ. पाठः ॥ २८ ॥ सूर्यातिसूर्यमिति चेति ट. थ. पाठः ॥ २९ ॥ विश्वमव्यक्तमित्युक्तमविश्वो निष्कलस्तथेति ट. ड.. थ. पाठः ॥ ३७ ॥ अश्वश्वाश्वा च मिथुनमिति झ. पाठः ॥ ३८ ॥ अज्ञश्च ज्ञश्च पुरुषस्तस्मान्निष्कल इति ध. पाठः ॥ ४० ॥ विद्यापेतं धनं कृत्वेति ट. थ. पाठः । विद्योपेतं मनः कृत्वेति ड. पाठः । विद्यामेतां धनं कृत्वेति ध. पाठः ॥ ४८ ॥

अन्यश्च शाश्वतो व्यक्तस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थं समनुपश्यन्ति तमेकमिति साधवः ॥ ५६
तेनैतं नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।
जन्ममृत्युभयाद्योगाः साङ्ख्याश्च परमैषिणः ॥ ५७
विश्वावसुरुवाच ।
पञ्चविंशं यदेतत्ते प्रोक्तं ब्राह्मणसत्तम ।
तदहं न तथा वेद्मि तद्भवान्वक्तुमर्हति ॥ ५८
जैगीषव्यस्यासितस्य देवलस्य मया श्रुतम् ।
पराशरस्य विप्रर्षेर्वार्षगण्यस्य धीमतः ॥ ५९
भिक्षोः पञ्चशिखस्यास्य कपिलस्य शुकस्य च ।
गौतमस्यार्ष्टिषेणस्य गर्गस्य च महात्मनः ॥ ६०
नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः ।
सनत्कुमारस्य ततः शुक्रस्य च महात्मनः ॥ ६१
कश्यपस्य पितुश्चैव पूर्वमेव मया श्रुतम् ।
तदनन्तरं च रुद्रस्य विश्वरूपस्य धीमतः ॥ ६२
दैवतेभ्यः पितृभ्यश्च दैतेयेभ्यस्ततस्ततः ।
प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्त्युत ॥ ६३
तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण ।
भवान्प्रबर्हः शास्त्राणां प्रगल्भश्चातिबुद्धिमान् ॥ ६४
न तवाविदितं किंचिद्भवाञ्श्रुतिनिधिः स्मृतः ।
कथ्यसे देवलोके च पितृलोके च ब्राह्मण ॥ ६५
ब्रह्मलोकगताश्चैव कथयन्ति महर्षयः ।
पतिश्च तपतां शश्वदादित्यस्तव भाषिता ॥ ६६
साङ्ख्यज्ञानं त्वया ब्रह्मन्नवाप्तं कृत्स्नमेव च ।
तथैव योगशास्त्रं च याज्ञवल्क्य विशेषतः ॥ ६७
निःसंदिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचरम् ।
श्रोतुमिच्छामि तज्ज्ञानं घृतं मण्डमयं यथा ॥ ६८
याज्ञवल्क्य उवाच ।
कृत्स्नधारिणमेव त्वां मन्ये गन्धर्वसत्तम ।
जिज्ञाससे च मां राजंस्तन्निबोध यथाश्रुतम् ॥ ६९
बुध्यमानो हि प्रकृतिं बुध्यते पञ्चविंशकः ।
न तु बुध्यति गन्धर्वप्रकृतिः पञ्चविंशकम् ॥ ७०
अनेन प्रतिबोधेन प्रधानं प्रवदन्ति तत् ।
साङ्ख्ययोगार्थतत्त्वज्ञा यथाश्रुतिनिदर्शनात् ॥ ७१
पश्यंस्तथैव चापश्यन्पश्यत्यन्यः सदाऽनघ ।
षड्विंशं पञ्चविंशं च चतुर्विंशं च पश्यति ॥ ७२
न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति ।
पञ्चविंशोऽभिमन्येत नान्योऽस्ति परतो मम ७३
न चतुर्विंशको ग्राह्यो मनुजैर्ज्ञानदर्शिभिः ।
मत्स्यो वोदकमन्वेति प्रवर्तेत प्रवर्तनात् ॥ ७४
यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते ।
स स्नेहात्सहवासाच्च साभिमानाच्च नित्यशः ॥ ७५
स निमज्जति कालस्य यदैकत्वं न बुध्यते ।
उन्मज्जति हि कालस्य समत्वेनाभिसंवृतः ॥ ७६
यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजः ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥ ७७
अन्यश्च राजन्परमस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ॥ ७८
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।
जन्ममृत्युभयाद्भीता योगाः साङ्ख्याश्च काश्यप ।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः ॥ ७९
यदा स केवलीभूतः षड्विंशमनुपश्यति ।
तदा स सर्वविद्विद्वान्न पुनर्जन्म विन्दति ॥ ८०
एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ।
बुद्धिश्चोक्ता यथातत्त्वं मया श्रुतिनिदर्शनात् ॥ ८१
पश्यापश्यं यो न पश्येत्क्षेम्यं तत्वं च काश्यप ।
केवलाकेवलं चान्यत्पञ्चविंशं परं च यत् ॥ ८२
विश्वावसुरुवाच ।
तथ्यं शुभं चैतदुक्तं त्वया विभो
सम्यक्क्षेम्यं दैवताद्यं यथावत् ।
स्वस्त्यक्षयं भवतश्चास्तु नित्यं
बुद्ध्या सदा बुद्धियुक्तं नमस्ते ॥ ८३
याज्ञवल्क्य उवाच ।
एवमुक्त्वा संप्रयातो दिवं स
विभ्राजन्वै श्रीमता दर्शनेन ।

---

तस्माद्द्वावनुपश्येतेति ध. पाठः । तस्य द्वावनुपश्येतामिति ज्ञ. पाठः ॥ ५६ ॥ कृत्स्नहारिणमेव त्वामिति ट. ड. थ. पाठः ॥ ६९ ॥ अबुध्यमानः प्रकृतिमिति ङ. पाठः ॥ ७० ॥

ष्टश्च तुष्ट्या परयाऽभिनन्द्य
प्रदक्षिणं मम कृत्वा महात्मा ॥ ८४
ह्मादीनां खेचराणां क्षितौ च
ये चाधस्तात्संवसन्ते नरेन्द्र ।
त्रैव तद्दर्शनं दर्शयन्वै
सम्यक्क्षेम्यं ये पथं संश्रिता वै ॥ ८५
ाङ्ख्याः सर्वे साङ्ख्यधर्मे रताश्च
तद्वद्योगा योगधर्मे रताश्च ।
चाप्यन्ये मोक्षकामा मनुष्या-
स्तेषामेतद्दर्शनं ज्ञानदृष्टम् ॥ ८६
ानान्मोक्षो जायते राजसिंह
नास्त्यज्ञानादेवमाहुर्नरेन्द्र ।
स्माज्ज्ञानं तत्त्वतोऽन्वेषितव्यं
येनात्मानं मोक्षयेज्जन्ममृत्योः ॥ ८७
ाप्य ज्ञानं ब्राह्मणात्क्षत्रियाद्वा
वैश्याच्छूद्रादपि नीचादभीक्ष्णम् ।
द्धातव्यं श्रद्दधानेन नित्यं
न श्रद्धिनं जन्ममृत्यू विशेताम् ॥ ८८
र्वे वर्णा ब्राह्मणा ब्रह्मजाश्च
सर्वे नित्यं व्याहरन्ते च ब्रह्म ।
ानात्मानं मोक्षयेज्जन्ममृत्यो-
स्तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि ।'
त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि
सर्वं विश्वं ब्रह्म चैतत्समस्तम् ॥ ८९
ह्मास्यतो ब्राह्मणाः संप्रसूता
बाहुभ्यां वै क्षत्रियाः संप्रसूताः ।
भ्यां वैश्याः पादतश्चापि शूद्राः
सर्वे वर्णा नान्यथा वेदितव्याः ॥ ९०
ज्ञानतः कर्मयोनिं भजन्ते
तांतां राजंस्ते यथा यान्त्यभावम् ।
ा वर्णा ज्ञानहीनाः पतन्ते
घोरादज्ञानात्प्राकृतं योनिजालम् ॥ ९१
ाज्ज्ञानं सर्वतो मार्गितव्यं
सर्वत्रस्थं चैतदुक्तं मया ते ।
तत्स्थो ब्रह्मा तस्थिवांश्चापरो य-
स्तस्मै नित्यं मोक्षमाहुर्नरेन्द्र ॥ ९२
यत्ते पृष्टं तन्मया चोपदिष्टं
याथातथ्यं तद्विशोको भजस्व ।
राजन्गच्छस्वैतदर्थस्य पारं
सम्यक्प्रोक्तं स्वस्ति ते त्वस्तु नित्यम् ॥ ९३

भीष्म उवाच ।

स एवमनुशिष्टस्तु याज्ञवल्क्येन धीमता ।
प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा ॥ ९४
गते मुनिवरे तस्मिन्कृते चापि प्रदक्षिणम् ।
दैवरातिर्नरपतिरासीनस्तत्र मोक्षवित् ॥ ९५
गोकोटिं स्पर्शयामास हिरण्यस्य तथैव च ।
रत्नाञ्जलिमथैकैकं ब्राह्मणेभ्यो ददौ तदा ॥ ९६
विदेहराज्यं च तदा प्रतिष्ठाप्य सुतस्य वै ।
यतिधर्ममुपास्यंश्चाप्यवसन्मिथिलाधिपः ॥ ९७
साङ्ख्यज्ञानमधीयानो योगशास्त्रं च कृत्स्नशः ।
धर्माधर्मं च राजेन्द्र प्राकृतं परिगर्हयन् ॥ ९८
अनन्त इति कृत्वा स नित्यं केवलमेव च ।
धर्माधर्मौ पुण्यपापे सत्यासत्ये तथैव च ॥ ९९
जन्ममृत्यू च राजेन्द्र प्राकृतं तदचिन्तयत् ।
ब्रह्माव्यक्तस्य कर्मेदमिति नित्यं नराधिप ॥ १००
पश्यन्ति योगाः साङ्ख्याश्च स्वशास्त्रकृतलक्षणाः ।
इष्टानिष्टविमुक्तं हि तस्थौ ब्रह्म परात्परम् ॥ १०१
नित्यं तदाहुर्विद्वांसः शुचि तस्माच्छुचिर्भव ।
दीयते यच्च लभते दत्तं यच्चानुमन्यते ॥ १०२
'अव्यक्तेनेति तच्चिन्त्यमन्यथा मा विचिन्तय ।'
ददाति च नरश्रेष्ठ प्रतिगृह्णाति यच्च ह ।
ददात्यव्यक्त इत्येतत्प्रतिगृह्णाति यच्च वै ॥ १०३
आत्मा ह्येवात्मनो ह्येकः कोऽन्यस्तस्मात्परो भवेत् ।
एवं मन्यस्व सततमन्यथा मा विचिन्तय ॥ १०४
यस्याव्यक्तं न विदितं सगुणं निर्गुणं पुनः ।
तेन तीर्थानि यज्ञाश्च सेवितव्या विपश्चिता ॥ १०५
न स्वाध्यायैस्तपोभिर्वा यज्ञैर्वा कुरुनन्दन ।
लभतेऽव्यक्तिकं स्थानं ज्ञात्वाऽव्यक्तं महीयते ॥

स्पर्शयामास ददौ ॥ ९६ ॥

त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥

तथैव महतः स्थानमाहंकारिकमेव च ।
अहंकारात्परं चापि स्थानानि समवाप्नुयात् १०७
ये त्वव्यक्तात्परं नित्यं जानते शास्त्रतत्पराः ।
जन्ममृत्युविमुक्तं च विमुक्तं सदसच्च यत् ॥१०८
एतन्मयाऽऽप्तं जनकात्पुरस्ता-
त्तेनापि चाप्तं नृप याज्ञवल्क्यात् ।
ज्ञातं विशिष्टं न तथा हि यज्ञा
ज्ञानेन दुर्गं तरते न यज्ञैः ॥ १०९
दुर्गं जन्म निधनं चापि राज-
न्न भौतिकं ज्ञानविदो वदन्ति ।
यज्ञैस्तपोभिर्नियमैर्व्रतैश्च
दिवं समासाद्य पतन्ति भूमौ ॥ ११०
तस्मादुपास्स्व परं महच्छुचि
शिवं विमोक्षं विमलं पवित्रम् ।
क्षेत्रं ज्ञात्वा पार्थिव ज्ञानयज्ञ-
मुपास्य वै तत्त्वमृषिर्भविष्यसि ॥ १११
यदुपनिषदमुपाकरोत्तथाऽसौ
जनकनृपस्य पुरा हि याज्ञवल्क्यः ।
यदुपगणितशाश्वताव्ययं त-
च्छुभममृतत्वमशोकमर्च्छति ॥ ११२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥

## चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥

भीष्मेण युधिष्ठिरंप्रति दारापत्यादिषु स्नेहत्यागपूर्वकं धर्माचरणचोदकजनकपञ्चशिखसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
ऐश्वर्यं वा महत्प्राप्य धनं वा भरतर्षभ ।
दीर्घमायुरवाप्याथ कथं मृत्युमतिक्रमेत् ॥ १
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा कैर्नाप्नोति जरान्तकौ ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भिक्षोः पञ्चशिखस्येह संवादं जनकस्य च ॥ ३
वैदेहो जनको राजा महर्षिं वेदवित्तमम् ।
पर्यपृच्छत्पञ्चशिखं छिन्नधर्मार्थसंशयम् ॥ ४
केन वृत्तेन भगवन्नतिक्रामेज्जरान्तकौ ।
तपसा वाऽथवा बुद्ध्या कर्मणा वा श्रुतेन वा ॥ ५
एवमुक्तः स वैदेहं मत्युवाचापरोक्षवित् ।
निवृत्तिर्नैतयोरस्ति नानिवृत्तिः कथंचन ॥ ६
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
सोऽयं प्रपद्यतेऽध्वानं चिराय ध्रुवमध्रुवः ॥ ७
सर्वभूतसमुच्छेदः स्रोतसेवोह्यते सदा ।
उह्यमानं निमज्जन्तमप्लवे कालसागरे ॥ ८
जरामृत्युमहाग्राहे न कश्चिदतिवर्तते ।
नैवास्य कश्चिद्भवति नासौ भवति कस्यचित् ॥ ९
पथि संगतमेवेदं दारैरन्यैश्च बन्धुभिः ।
नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित् ॥ १०
क्षिप्यन्ते तेनतेनैव निघ्नन्तः पुनः पुनः ।
कालेन जाता याता हि वायुनेवाभ्रसंचयाः ॥ ११
जरामृत्यू हि भूतानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ १२
एवंभूतेषु भूतेषु नित्यभूताध्रुवेषु च ।
कथं हि हृष्येज्जातेषु मृतेषु च न संज्वरेत् ॥ १३
कुतोऽहमागतः कोऽस्मि क्व गमिष्यामि कस्य वा ।
कस्मिन्स्थितः क्व भविता कस्मात्किमनुशोचसि १४
द्रष्टा स्वर्गस्य न ह्यस्ति तथैव नरकस्य च ।
आगमांस्त्वनतिक्रम्य दद्याच्चैव यजेत च ॥ १५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥

कुतस्त्वमागतः क्वासि त्वं गमिष्यसि कस्त्वमेति ङ. पाठः ॥ १४ ॥ चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥

## पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥

भीष्मेण युधिष्ठिरंप्रति सुलभाजनकसंवादः ॥ १ ॥

युधिष्ठिर उवाच ।
अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम ।
कः प्राप्तो भूपतिः सिद्धिं मोक्षतत्त्वं वदस्व मे ॥ १
संन्यस्यते यथाऽऽत्माऽयं व्यक्तस्यात्मा यथा च यत्।
परं मोक्षस्य यच्चापि तन्मे ब्रूहि पितामह ॥ २
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
जनकस्य च संवादं सुलभायाश्च भारत ॥ ३
संन्यासफलिकः कश्चिद्बभूव नृपतिः पुरा ।
मैथिलो जनको नाम धर्मध्वज इति श्रुतः ॥ ४
स वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतश्रमः ।
इन्द्रियाणि समाधाय शशास वसुधामिमाम् ॥ ५
तस्य वेदविदः प्राज्ञाः श्रुत्वा तां साधुवृत्ततम् ।
लोकेषु स्पृहयन्त्यन्ये पुरुषाः पुरुषेश्वरम् ॥ ६
अथ धर्मयुगे तस्मिन्योगधर्ममनुष्ठिता ।
महीमनुचचारैका सुलभा नाम भिक्षुकी ॥ ७
तया जगदिदं कृत्स्नमटन्त्या मिथिलेश्वरः ।
तत्रतत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥ ८
साऽतिसूक्ष्मां कथां श्रुत्वा तथ्यं नेति ससंशया ।
दर्शने जातसंकल्पा जनकस्य बभूव ह ॥ ९
तत्र सा विप्रहायाऽथ पूर्वरूपं हि योगतः ।
अबिभ्रदनवद्याङ्गी रूपमन्यदनुत्तमम् ॥ १०
चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी ।
विदेहानां पुरीं सुभ्रूर्जगाम कमलेक्षणा ॥ ११
सा प्राप्य मिथिलां रम्यां समृद्धजनसंकुलाम् ।
भैक्ष्यचर्यापदेशेन ददर्श मिथिलेश्वरम् ॥ १२
राजा तस्याः परं दृष्ट्वा सौकुमार्यं पुनस्तदा ।
केयं कस्य कुतो वेति बभूवागतविस्मयः ॥ १३
ततोऽस्याः स्वागतं कृत्वा व्यादिश्य च वरासनम् ।
पूजितां पादशौचेन वरान्नेनाप्यतर्पयत् ॥ १४
अथ भुक्तवतीं प्रीतां राजा तां मन्त्रिभिर्वृतः ।
सर्वभाष्यविदां मध्ये चोदयामास भिक्षुकीम् ॥ १५
सुलभा त्वस्य धर्मेषु मुक्तो नेति ससंशया ।
सत्त्वं सत्त्वेन योगज्ञा प्रविष्टाऽभून्महीपते ॥ १६
नेत्राभ्यां नेत्रयोरस्य रश्मीन्संयोज्य रश्मिभिः ।
सा स्म तं चोदयिष्यन्ती योगबन्धैर्बबन्ध ह ॥ १७
जनकोऽप्युत्स्मयन्राजा भावमस्या विशेषयन् ।
प्रतिजग्राह भावेन भावमस्या नृपोत्तम ॥ १८
तदेकस्मिन्नधिष्ठाने संवादः श्रूयतामयम् ।
छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डकैः ॥ १९
जनक उवाच ।
भगवत्याः क्व चर्येयं कृता क्व च गमिष्यसि ।
कस्य च त्वं कुतो वेति पप्रच्छैनां महीपतिः ॥ २०
श्रुते वयसि जातौ च सद्भावो नाधिगम्यते ।
एष्वर्थेषूत्तरं तस्मात्प्रवेद्यं मत्समागमे ॥ २१
छत्रादिषु विशेषेषु मुक्तं मां विद्धि तत्त्वतः ।
स त्वां संवेत्तुमिच्छामि मानार्हा हि मताऽसि मे ॥ २२
यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा ।
यस्य नान्यः प्रवक्ताऽस्ति मोक्षे तमपि मे शृणु ॥ २३
पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः ।
भिक्षोः पञ्चशिखस्याहं शिष्यः परमसंमतः ॥ २४
साङ्ख्यज्ञाने च योगे च महीपालविधौ तथा ।
त्रिविधे मोक्षधर्मेऽस्मिन्गताध्वा छिन्नसंशयः ॥ २५
स यथा शास्त्रदृष्टेन मार्गेणेह परिभ्रमन् ।

---

अव्ययस्य यथात्मा च व्यक्तस्यात्मा यथा च यदिति ध. पाठः ॥ २ ॥ संन्यासफलं सम्यग्दर्शनं तदस्यास्तीति संन्यासफलिकः ॥ ४ ॥ स्वे शास्त्रे दण्डनीतौ ॥ ५ ॥ अनुष्ठिता कर्तरिक्तः ॥ ७ ॥ मोक्षे मोक्षशास्त्रे निष्णात इति शेषः ॥ ८ ॥ नेति नवेति ॥ ९ ॥ ततः सा विप्रभार्याथ पूर्वरूपवियोगत इति ट. ड. पाठः ॥ १० ॥ लघु शीघ्रमस्त्रगत्या गच्छतीति सा । विदेहानां पदमिति ड. पाठः ॥ ११ ॥ भाष्यविदां सूत्रार्थज्ञानां मध्ये । अथ भुक्तवती प्रीता राजानं मन्त्रिभिर्वृतमिति । चोदयामास भिक्षुकीति च. झ. पाठः ॥ १५ ॥ सुलभाऽयं स्वधर्मेषु इति ध. पाठः ॥ १६ ॥ भावमाशयमेनं मूकं करिष्यामीत्येवरूपम् । विशेषयन्नभिभवन् ॥ १८ ॥ भवत्याचक्ष्व वार्षेयं कुतः क्व च गमिष्यसि इति ड. थ. पाठः ॥ २० ॥

वार्षिकांश्चतुरो मासान्पुरा मयि सुखोषितः ॥ २६
तेनाहं साङ्ख्यमुख्येन सुदृष्टार्थेन तत्त्वतः ।
श्रावितस्त्रिविधं मोक्षं न च राज्याद्धि चालितः ॥
सोहं तामखिलां वृत्तिं त्रिविधां मोक्षसंहिताम् ।
मुक्तरागश्चराम्येकः पदे परमके स्थितः ॥ २८
वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः ।
ज्ञानादेव च वैराग्यं जायते येन मुच्यते ॥ २९
ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत् ।
महद्द्वन्द्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ॥ ३०
सेयं परमिका सिद्धिः प्राप्ता निर्द्वन्द्वता मया ।
इहैव गतमोहेन चरता मुक्तसङ्गिना ॥ ३१
यथा क्षेत्रं मृदुभूतमद्भिराप्लावितं तथा ।
जनयत्यङ्कुरं कर्म नृणां तद्वत्पुनर्भवम् ॥ ३२
यथा चोत्तापितं बीजं कपाले यत्रतत्र वा ।
प्राप्याप्यङ्कुरहेतुत्वमबीजत्वान्न जायते ॥ ३३
तद्वद्भगवताऽनेन शिखाप्रोक्तेन भिक्षुणा ।
ज्ञानं कृतमबीजं मे विषयेषु न जायते ॥ ३४
नाभिरज्यति कस्मिंश्चिन्नानर्थे न परिग्रहे ।
नाभिरज्यति चैतेषु व्यर्थत्वाद्रागरोषयोः ॥ ३५
यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत् ।
सव्यं वाऽस्यापि यस्तक्षेत्समावेतावुभौ मम ॥३६
सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः ।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः॥
मोक्षे हि त्रिविधा निष्ठा दृष्टाऽन्यैर्मोक्षवित्तमैः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥३८
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः ॥ ३९
प्रहायोभयमप्येव ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥४०
यमे च नियमे चैव कामे द्वेषे परिग्रहे ।
माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ४१
त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन केनचित् ।
छत्रादिषु कथं न स्यात्तुल्यहेतौ परिग्रहे ॥ ४२
येनयेन हि यस्यार्थः कारणेनेह कर्मणि ।
तत्तदालम्बते सर्वद्रव्ये स्वार्थपरिग्रहे ॥ ४३
दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरे ।
उत्सृजन्परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते ॥ ४४
आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके ।
राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना ॥ ४५
अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम् ।
मुच्यन्ते किं न मुच्यन्ते पदे परमके स्थिताः ॥ ४६
काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुम् ।
लिङ्गान्युत्पथभूतानि न मोक्षायेति मे मतिः॥ ४७
यदि सत्यपि लिङ्गेऽस्मिञ्ज्ञानमेवात्र कारणम् ।
निर्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकम् ॥ ४८
अथवा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः ।
किं तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ॥ ४९
आकिञ्चन्ये न मोक्षोस्ति कैञ्चन्ये नास्ति बन्धनम् ।
कैञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥ ५०
तस्माद्धर्मार्थकामेषु तथा राज्यपरिग्रहे ।
बन्धनायतनेष्वेषु विद्ध्यबन्धे पदे स्थितम् ॥ ५१
राज्यैश्वर्यमयः पाशः स्नेहायतनबन्धनः ।
मोक्षाश्मनिशितेनेह छिन्नस्त्यागासिना मया ५२
सोहमेवं गतो मुक्तो जातास्थस्त्वयि भिक्षुकि ।
अयथार्थं हि ते वर्णं वक्ष्यामि शृणु तन्मम ॥ ५३
सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वयः ।
तवैतानि समस्तानि नियमश्चेति संशयः ॥ ५४
यच्चाप्यननुरूपं ते लिङ्गस्यास्य विचेष्टितम् ।
मुक्तोऽयं स्यान्न वेति स्याद्धर्षितो मत्परिग्रहः ॥५५
न च कामसमायुक्ते युक्तेऽप्यस्ति त्रिदण्डके ।
न रक्ष्यते त्वया चेदं न मुक्तस्यास्ति गोपना ॥ ५६
मत्पक्षसंश्रयाचायं शृणु यस्ते व्यतिक्रमः ।

---

मोक्षस्य परमो निधिरिति ध. पाठः ॥ २९ ॥ सा सिद्धिर्या च योगितेति ध. पाठः ॥ ३० ॥ ज्ञानेन कस्यचिदिति झ. पाठः ॥ ४२ ॥ आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मकाः । राजानो भिक्षुकाचार्या मुच्यन्ते इति ङ. ध. पाठः ॥ ४५ ॥ मुच्यन्ते सर्वपापेभ्यो देहे परमके स्थिता इति झ. पाठः ॥ ४६ ॥ लिङ्गान्यन्यार्थभूतानीति ट. ड. थ. पाठः ॥ ४७ ॥ छत्रादिषु न लभ्यत इति ट. ड. पाठः ॥ ४९ ॥ नचैतानि समस्तानीति ध. पाठः ॥ ५४ ॥

आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम् ॥ ५७
प्रवेशस्ते कृतः केन मम राष्ट्रे पुरेपि वा ।
कस्य वा सन्निकर्षात्त्वं प्रविष्टा हृदयं मम ॥ ५८
वर्णप्रवरमुख्याऽसि ब्राह्मणी क्षत्रियस्त्वहम् ।
नावयोरेकयोगोऽस्ति मा कृथा वर्णसंकरम् ॥ ५९
वर्तसे मोक्षधर्मेण त्वं गार्हस्थ्येऽहमाश्रमे ।
अयं चापि सुकष्टस्ते द्वितीयाश्रमसंकरः ॥ ६०
सगोत्रां वाऽसगोत्रां वा न वेद त्वां न वेत्थ माम् ।
सगोत्रमाविशन्त्यास्ते तृतीयो गोत्रसंकरः ॥ ६१
अथ जीवति ते भर्ता प्रोषितोप्यथवा क्वचित् ।
अगम्या परभार्येति चतुर्थो धर्मसंकरः ॥ ६२
सा त्वमेतान्यकार्याणि कार्यापेक्षा व्यवस्यसि ।
अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः ॥ ६३
अथवापि स्वतन्त्राऽसि स्वदोषेणेह केनचित् ।
यदि किंचिच्छ्रुतं तेऽस्ति सर्वं कृतमनर्थकम् ॥ ६४
इदमन्यत्तृतीयं ते भावस्पर्शविघातकम् ।
दुष्टाया लक्ष्यते लिङ्गं विवृण्वत्या प्रकाशितम् ६५
न मय्येवाभिसन्धिस्ते जयैषिण्या जये कृतः ।
येयं मत्परिषत्कृत्स्ना जेतुमिच्छसि तामपि ॥ ६६
तथाऽर्हतस्ततश्च त्वं दृष्टिं स्वां प्रतिमुञ्चसि ।
मत्पक्षप्रतिघाताय स्वपक्षोद्भवनाय च ॥ ६७
सा स्वेनामर्षजेन त्वमृद्धिमोहेन मोहिता ।
भूयः सृजसि योगांस्त्वं विषामृतमिवैकताम् ॥ ६८
इच्छतोरत्र यो लाभः स्त्रीपुंसोरमृतोपमः ।
अलाभश्चापि रक्तस्य सोपि दोषो विषोपमः ॥ ६९
मा त्याक्षीः साधु जानीष्व स्वशास्त्रमनुपालय ।
कृतेयं हि विजिज्ञासा मुक्तो नेति त्वया मम ॥ ७०
एतत्सर्वं प्रतिच्छन्नं मयि नार्हसि गूहितम् ।
सा यदि त्वं स्वकार्येण यद्यन्यस्य महीपतेः ।
तत्त्वमत्र प्रतिच्छन्ना मयि नार्हसि गूहितम् ॥ ७१
न राजानं मृषा गच्छेन्न द्विजातिं कथंचन ।
न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषागताः ॥ ७२
राज्ञां हि बलमैश्वर्यं ब्रह्म ब्रह्मविदां बलम् ।
रूपयौवनसौभाग्यं स्त्रीणां बलमनुत्तमम् ॥ ७३
अत एतैर्बलैरेव बलिनः स्वार्थमिच्छता ।
आर्जवेनाभिगन्तव्या विनाशाय ह्यनार्जवम् ॥ ७४
सा त्वं जातिं श्रुतं वृत्तं भावं प्रकृतिमात्मनः ।
कृत्यमागमने चैव वक्तुमर्हसि तत्त्वतः ॥ ७५
भीष्म उवाच ।
इत्येतैरसुखैर्वाक्यैरयुक्तैरसमञ्जसैः ।
प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत ॥ ७६
उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना ।
ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुम् ॥ ७७
सुलभोवाच ।
नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः ।
अपेतमुपपन्नार्थमष्टादशगुणान्वितम् ॥ ७८
सौक्ष्म्यं साङ्ख्यक्रमौ चोभौ निर्णयः सप्रयोजनः ।
पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ॥ ७९
एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां स्वलक्षणम् ।
शृणु संसार्यमाणानां पदार्थपदवाक्यतः ॥ ८०
ज्ञानं ज्ञेयेषु भिन्नेषु यदा भेदेन वर्तते ।
तत्रातिशयिनी बुद्धिस्तत्सौक्ष्म्यमिति वर्तते ॥ ८१
दोषाणां च गुणानां च प्रमाणं प्रविभागतः ।
कंचिदर्थमभिप्रेत्य सा सङ्ख्येत्युपधार्यताम् ॥ ८२
इदं पूर्वमिदं पश्चाद्वक्तव्यं यद्विवक्षितम् ।
क्रमयोगं तमप्याहुर्वाक्यं वाक्यविदो जनाः ॥ ८३
धर्मकामार्थमोक्षेषु प्रतिज्ञाय विशेषतः ।
इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ॥ ८४
इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते ।
तत्र या नृपते वृत्तिस्तत्प्रयोजनमिष्यते ॥ ८५
तान्येतानि यथोक्तानि सौक्ष्म्यादीनि जनाधिप ।
एकार्थसमवेतानि वाक्यं मम निशामय ॥ ८६

संनिसर्गात्त्वं इति ध. पाठः ॥ ५८ ॥ द्वितीयो वर्णसंकर इति ङ. पाठः ॥ ६० ॥ प्रेरिता तेन गच्छसीति ध. पाठः ॥ ६२ ॥ कार्यार्थज्ञा व्यवस्यसीति ध. पाठः ॥ ६३ ॥ तद्वक्तव्यं प्रकाशितमि ङ. पाठः ॥ ६५ ॥ अर्हतः पूज्यान् उद्दिश्य ॥ ६७ ॥ माप्राक्षीरिति ध. पाठः ॥ ७० ॥

उपेतार्थमभिन्नार्थं न्यायवृत्तं न चाधिकम् ।
नाश्लक्ष्णं न च संदिग्धं वक्ष्यामि परमं ततः ८७
न गुर्वक्षरसंयुक्तं पराङ्मुखपदं न च ।
नानृतं न त्रिवर्गेण विरुद्धं नाप्यसंस्कृतम् ॥ ८८
न न्यूनं नष्टशब्दं वा व्युत्क्रमाभिहितं न च ।
सदोषमभिकल्पेन निष्कारणमहेतुकम् ॥ ८९
कामात्क्रोधाद्भयाल्लोभाद्दैन्याच्चानार्यकात्तथा ।
ह्रीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथंचन ९०
वक्ता श्रोता च वाक्यं च यदा त्वविकलं नृप ।
स ममेति विवक्षायां तदा सोर्थः प्रकाशते ॥ ९१
वक्तव्ये तु यदा वक्ता श्रोतारमवमन्यते ।
स्वार्थमाह परार्थं तत्तदा वाक्यं न रोहति ॥ ९२
अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः ।
विशङ्का जायते तस्मिन्वाक्यं तदपि दोषवत् ॥ ९३
यस्तु वक्ता द्वयोरर्थमविरुद्धं प्रभाषते ।
श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ॥ ९४
तदर्थवदिदं वाक्यमुपेतं वाक्यसंपदा ।
'अविक्षिप्तमना राजन्नेकाग्रः श्रोतुमर्हसि ॥ ९५
काऽसि कस्य कुतो वेति त्वयाऽहमिति चोदिता ।
तत्रोत्तरमिदं वाक्यं राजन्नेकमनाः शृणु ॥' ९६
यथा जतु च काष्ठं च पांसवश्चोदबिन्दवः ।
सुश्लिष्टानि तथा राजन्प्राणिनामिह संभवः ॥ ९७
शब्दः स्पर्शो रसो रूपं गन्धः पञ्चेन्द्रियाणि च ।
पृथगात्मा दशात्मानं संश्लिष्टा जतुकाष्ठवत् ।
न चैषां चोदना काचिदस्तीत्येष विनिश्चयः ॥ ९८
एकैकस्येह विज्ञानं नास्त्यात्मनि तथा परे ।
न वेद चक्षुश्चक्षुष्ट्वं श्रोत्रं नात्मनि वर्तते ॥ ९९
तथैव व्यभिचारेण न वर्तन्ते परस्परम् ।
प्रश्लिष्टं च न जानन्ति यथाऽऽप इव पांसवः ॥ १००
बाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे शृणु ।
रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः ॥ १०१
यथैवात्र तथाऽन्येषु ज्ञानज्ञेयेषु हेतवः ।
ज्ञानज्ञेयांतरेतस्मिन्मनो नामापरो गुणः ॥ १०२
विचारयति येनायं निश्चये साध्वसाधुनी ।
द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणः स्मृतः ।
येन संशयपूर्वेषु बोद्धव्येषु व्यवस्यति ॥ १०३
अथ द्वादशके तस्मिन्सत्वं नामापरो गुणः ।
महासत्वोऽल्पसत्वो वा जन्तुर्येनानुमीयते ॥ १०४
क्षेत्रज्ञ इति चाप्यन्यो गुणस्तत्र चतुर्दशः ।
ममायमिति येनायं मन्यते न ममेति च ॥ १०५
अथ पञ्चदशो राजन्गुणस्तत्रापरः स्मृतः ।
पृथक्कालसमूहस्य सामग्र्यं तदिहोच्यते ॥ १०६
गुणस्त्वेकोऽपरस्तत्र संघात इति षोडशः ।
आकृतिर्व्यक्तिरित्येतौ गुणौ यस्मिन्समाश्रितौ ॥
सुखासुखे जन्ममृत्यू लाभालाभौ प्रियाप्रिये ।
इति चैकोनविंशोऽयं द्वन्द्वयोग इति स्मृतः ॥ १०८
ऊर्ध्वमेकोनविंशत्या कालो नामापरो गुणः ।
इतीमं विद्धि विंशत्या भूतानां प्रभवाप्ययम् १०९
विंशकश्चैष संघातो महाभूतानि पञ्च च ।
सदसद्भावयोगौ तु गुणावन्यौ प्रकाशकौ ॥ ११०
इत्येवं विंशतिश्चैव गुणाः सप्त च ये स्मृताः ।
विधिः शुक्रं बलं चेति त्रय एते गुणाः परे ॥ १११
एवं विंशच्च दश च कलाः संख्यानतः स्मृताः ।
समग्रा यत्र वर्तन्ते तच्छरीरमिति स्मृतम् ॥ ११२
अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति ।
व्यक्तं चासां तथैवान्यः स्थूलदर्शी प्रपश्यति ११३
अव्यक्तं यदि वा व्यक्तं द्वयं वाऽथ चतुष्टयम् ।
प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः ११४
सेयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां गता ।
ततोऽहं त्वं च राजेन्द्र ये चाप्यन्ये शरीरिणः ॥
बिन्दुन्यासादयोऽवस्थाः शुक्रशोणितसंभवाः ।
यासामेव निपातेन कललं नाम जायते ॥ ११६

नापेतार्थं न भिन्नार्थं नापवृत्तं न चाधिकमिति ङ. पाठः ॥ ८७ ॥ न निष्ठानमहेतुकमिति ङ. पाठः ॥ ८९ ॥ दैन्यादन्याय्यकात्तथेति ङ. पाठः ॥ ९० ॥ निःशङ्को जायते तस्मिन्निति ध. पाठः ॥ ९३ ॥ प्रश्लिष्टा नाभिजायन्ते यथाद्भिरिव पांसव इति ङ. पाठः ॥ १०० ॥ अथ त्रयोदशे तस्मिन्बुद्धिर्नाम गुणः स्मृत इति ध. पाठः ॥ १०३ ॥ पृथक्कलासमूहस्येति झ. पाठः ॥ १०६ ॥ विधिः शुद्धं बलं चेतीति ध. पाठः ॥ १११ ॥ अव्यक्तां यदि वा व्यक्तां द्वयीमथ चतुष्टयीमिति ट. थ. पाठः ॥ ११४ ॥

कललाद्बुद्बुदोत्पत्तिः पेशी वा बुद्बुदात्स्मृता ।
पेश्यास्त्वङ्गाभिनिर्वृत्तिर्नखरोमाणि चाङ्गतः ११७
संपूर्णे नवमे मासि जन्तोर्जातस्य मैथिल ।
जायते नामरूपत्वं स्त्रीपुमान्वेति लिङ्गतः ॥११८
जातमात्रं तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि ।
कौमारं रूपमापन्नं रूपवानुपलभ्यते ॥ ११९
कौमाराद्यौवनं चापि स्थाविर्यं चापि यौवनात् ।
अनेन क्रमयोगेन पूर्वं पूर्वं न लभ्यते ॥ १२०
कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे ।
वर्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते ॥१२१
न चैषामप्ययो राजँल्लक्ष्यते प्रभवो न च ।
अवस्थायामवस्थायां दीपस्येवार्चिषो गतिः ॥१२२
तस्याप्येवंप्रकारस्य सदश्वस्येव धावतः ।
अजस्रं सर्वलोकस्य कः कुतो वा न वा कुतः १२३
कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः ।
संबन्धः कोऽस्ति भूतानां स्वैरप्यवयवैरिह ॥१२४
यथाऽऽदित्यान्मणेश्चापि वीरुद्भ्यश्चैव पावकः ।
जायन्त्येवं समुदयात्कलानामिह जन्तवः ॥१२५
आत्मन्येवात्मनाऽऽत्मानं यथा त्वमनुपश्यसि ।
एवमेवात्मनाऽऽत्मानमन्यस्मिन्किं न पश्यसि ॥
यद्यात्मनि परस्मिंश्च समतामध्यवस्यसि ।
अथ मां काऽसि कस्येति किमर्थमनुपृच्छसि ॥१२७
इदं मे स्यादिदं नेति द्वन्द्वैर्मुक्तस्य मैथिल ।
काऽसि कस्य कुतो वेति वचनैः किं प्रयोजनम् १२८
रिपौ मित्रेऽथ मध्यस्थे विजये सन्धिविग्रहे ।
कृतवान्यो महीपालः किं तस्मिन्मुक्तलक्षणम् १२९
त्रिवर्गे सप्तधा न्यस्तं यो न वेदेह कर्मसु ।
सङ्गवान्यस्त्रिवर्गे च किं तस्मिन्मुक्तलक्षणम् ॥१३०
प्रिये वाऽप्यप्रिये वाऽपि दुर्बले बलवत्यपि ।
यस्य नास्ति समं चक्षुः किं तस्मिन्मुक्तलक्षणम् ॥
तदयुक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप ।
सुहृद्भिः सन्निवार्यस्तेऽविरक्तस्येव भेषजम् ॥१३२
तानि तान्यनुसंदृश्य सङ्गस्थानान्यरिंदम ।
आत्मनाऽऽत्मनि संपश्य किमन्यन्मुक्तलक्षणम् ॥
इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य केनचित् ।
चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु ॥ १३४
य इमां पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति ह ।
एकमेव स वै राजा पुरमध्यावसत्युत ॥ १३५
तत्पुरे चैकमेवास्य गृहं यदधितिष्ठति ।
गृहे शयनमप्येकं निशायां यत्र लीयते ॥ १३६
शय्यार्धं तस्य चाप्यत्र स्त्रीपूर्वमधितिष्ठति ।
तदनेन प्रसङ्गेन फलेनाल्पेन युज्यते ॥ १३७
एवमेवोपभोगेषु भोजनाच्छादनेषु च ।
गुणेष्वपरिमेयेषु निग्रहानुग्रहं प्रति ॥ १३८
परतन्त्रः सदा राजा स्वल्पे सोऽपि प्रसज्जते ।
सन्धिविग्रहयोगे च कुतो राज्ञः स्वतन्त्रता ॥१३९
स्त्रीषु क्रीडाविहारेषु नित्यमस्यास्वतन्त्रता ।
मन्त्रे चामात्यसहिते कुतस्तस्य स्वतन्त्रता ॥ १४०
यदा त्वाज्ञापयत्यन्यांस्तत्रास्योक्ता स्वतन्त्रता ।
अवशः कार्यते तत्र तस्मिंस्तस्मिन्गुणे स्थितः ॥१४१
स्वप्तुकामो न लभते स्वप्तुं कार्यार्थिभिर्जनैः ।
शयने चाप्यनुज्ञातः सुप्त उत्थाप्यतेऽवशः ॥१४२
स्नाह्यालभ पिब प्राश जुहुध्यग्नीन्यजेत्यपि ।
वदस्व शृणु चापीति विवशः कार्यते परैः ॥१४३
अभिगम्याभिगम्यैवं याचन्ते सततं नराः ।
न चाप्युत्सहते दातुं वित्तरक्षी महाजनान् ॥१४४
दाने कोशक्षयोऽप्यस्य वैरं चास्य प्रयच्छतः ।
क्षणेनास्योऽपवर्तन्ते दोषा वैराग्यकारकाः ॥१४५
प्राज्ञाञ्शूरांस्तथा वैद्यानेकस्थानपि शङ्कते ।
भयमप्यभये राज्ञो यैश्च नित्यमुपास्यते ॥ १४६
तथा चैते प्रदुष्यन्ति राजन्ये कीर्तिता मया ।
तथैवास्य भयं तेभ्यो जायते पश्य यादृशम् ॥ १४७
सर्वः स्वेस्वे गृहे राजा सर्वः स्वेस्वे गृहे गृही ।
निग्रहानुग्रहौ कुर्वंस्तुल्यो जनक राजभिः ॥१४८

न चैषामप्ययथो राजन्निति ट. पाठः । न चासामप्ययथो राजन्निति ड. पाठः ॥ १२२ ॥ इदं मे स्यादिदं चेति इति ड. थ. पाठः ॥ १२८ ॥ सप्तधा व्यस्तमिति ड. पाठः ॥ १३० ॥ तस्मिंस्तस्मिन्क्षणे स्थित इति झ. पाठः ॥ १४१ ॥

पुत्रा दारास्तथैवात्मा कोशो मित्राणि संचयाः।
परैः साधारणा ह्येते तैस्तैरेवास्य हेतुभिः ॥ १४९
हतो देशः पुरं दग्धं प्रधानः कुञ्जरो मृतः ।
लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते ॥ १५०
अमुक्तो मानसैर्दुःखैरिच्छाद्वेषप्रियोद्भवैः ।
शिरोरोगादिभी रोगैस्तथैव विनिपातिभिः॥१५१
द्वन्द्वैस्तैस्तैरुपहतः सर्वतः परिशङ्कितः ।
बहुभिः प्रार्थितं राज्यमुपास्ते गणयन्निशाः॥१५२
तदल्पसुखमत्यर्थं बहुदुःखमसारवत् ।
तृणाग्निज्वलनप्रख्यं फेनबुद्बुदसंनिभम् ॥ १५३
को राज्यमभिपद्येत प्राप्य चोपशमं लभेत् ।
ममेदमिति यच्चेदं पुरं राष्ट्रं च मन्यसे ॥ १५४
बलं कोशममात्यांश्च कस्यैतानि न वा नृप ।
मित्रामात्यपुरं राष्ट्रं दण्डः कोशो महीपतिः ॥१५५
'सप्ताङ्गश्चैष सङ्घातो राज्यमित्युच्यते नृप ।'
सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव तिष्ठतः ।
अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः १५६
तेषुतेषु हि कालेषु तत्तदङ्गं विशिष्यते ।
येन यत्सिध्यते कार्यं तत्प्राधान्याय कल्पते॥१५७
सप्ताङ्गश्चैव संघातस्त्रयश्चान्ये नृपोत्तम ।
संभूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् ॥१५८
यश्च राजा महोत्साहः क्षत्रधर्मे रतो भवेत् ।
स तुष्येद्दशभागेन ततस्त्वन्यो दशावरैः ॥ १५९
नास्त्यसाधारणो राजा नास्ति राज्यमराजकम् ।
राज्येऽसति कुतो धर्मो धर्मेऽसति कुतः परम् १६०
योऽप्यत्र परमो धर्मः पवित्रं राजराज्ययोः ।
पृथिवी दक्षिणा यस्य सोऽश्वमेधो न विद्यते१६१
साऽहमेतानि कर्माणि राजदुःखानि मैथिल ।
समर्था शतशो वक्तुमथवाऽपि सहस्रशः ॥ १६२
स्वदेहे नाभिषङ्गो मे कुतः परपरिग्रहे ।
न मामेवंविधां युक्तामीदृशं वक्तुमर्हसि ॥ १६३

ननु नाम त्वया मोक्षः कृत्स्नः पञ्चशिखाच्छ्रुतः ।
सोपायः सोपनिषदः सोपासङ्गः सनिश्चयः ॥१६४
तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः ।
छत्रादिषु विशेषेषु पुनः सङ्गः कथं नृप ॥ १६५
श्रुतं ते न श्रुतं मन्ये मृषा वाऽपि श्रुतं श्रुतम् ।
अथवा श्रुतसंकाशं श्रुतमन्यच्छ्रुतं त्वया ॥ १६६
अथापीमासु संज्ञासु लौकिकीषु प्रतिष्ठसे ।
अभिषङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो यथा॥१६७
सत्वेनानुप्रवेशो हि योऽयं त्वयि कृतो मया ।
किं तवापकृतं तत्र यदि मुक्तोऽसि सर्वशः ॥१६८
नियमो ह्येषु धर्मेषु यतीनां शून्यवासिता ।
शून्यमावासयन्त्या च मया किं कस्य दूषितम् १६९
न पाणिभ्यां न बाहुभ्यां पादोरुभ्यां न चानघ ।
न गात्रावयवैरन्यैः स्पृशामि त्वां नराधिप १७०
कुले महति जातेन ह्रीमता दीर्घदर्शिना ।
नैतत्सदसि वक्तव्यं सद्वाऽसद्वा मिथः कृतम् १७१
ब्राह्मणा गुरवश्चेमे तथा मान्या गुरूत्तमाः ।
त्वं चाथ गुरुरप्येषामेवमन्योन्यगौरवम् ॥ १७२
तदेवमनुसंदृश्य वाच्यावाच्यं परीक्षता ।
स्त्रीपुंसोः समवायोऽयं त्वया वाच्यो न संसदि ॥
यथा पुष्करपर्णस्थं जलं तत्पर्णसंस्थितम् ।
तिष्ठत्यस्पृशती तद्वत्त्वयि वत्स्यामि मैथिल ॥ १७४
यदि चाद्य स्पृशन्त्या मे स्पर्शं जानासि कंचन ।
ज्ञानं कृतमबीजं ते कथं तेनेह भिक्षुणा ॥ १७५
स गार्हस्थ्याच्च्युतश्च त्वं मोक्षं चानाप्य दुर्विदम् ।
उभयोरन्तराले वै वर्तसे मोक्षवादिकः ॥ १७६
न हि मुक्तस्य मुक्तेन ज्ञस्यैकत्वपृथक्त्वयोः ।
भावाभावसमायोगे जायते वर्णसंकरः ॥ १७७
वर्णाश्रमाः पृथक्त्वेन दृष्टार्थस्यापृथक्त्वतः ।
नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्र वर्तते १७८
पाणौ कुण्डं तथा कुण्डे पयः पयसि मक्षिका ।

तथैवाभिनियन्तृभिरिति झ. पाठः ॥ १५१ ॥ बहुप्रत्यर्थिकं राज्यमिति झ. ध. पाठः ॥ १५२ ॥ अङ्गनानुप्रवेशोऽपि इति ध. पाठः ॥ १६८ ॥ नियमो ह्येषु वर्णेष्विति झ. पाठः ॥ १६९ ॥ जलं तत्पत्रसंज्ञितमिति ध. पाठः । तत्पर्णमस्पृशदिति झ. पाठः ॥ १७४ ॥ यदि वाप्यस्पृशन्त्या मे इति ट. ड. ध. पाठः ॥ १७५ ॥ मोक्षं चावाप्य दुर्लभमिति ट. थ. पाठः ॥ १७६ ॥ पृथक्त्वे च दृष्टास्यार्थाः पृथक्कृता इति ट. ड. पाठः ॥ १७८ ॥

ाश्रिताश्रययोगेन पृथक्त्वेनाश्रिताः पुनः १७९
ा तु कुण्डे पयोभावः पयश्चापि न मक्षिका ।
वयमेवाश्रयन्त्येते भावा न तु पराश्रयम् ॥ १८०
ृथक्त्वादाश्रमाणां च वर्णान्यत्वे तथैव च ।
रस्परपृथक्त्वाच्च कथं ते वर्णसंकरः ॥ १८१
ास्मि वर्णोत्तमा जात्या न वैश्या नावरा तथा ।
व राजन्सवर्णाऽस्मि शुद्धयोनिरविप्लुता ॥ १८२
धानो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
ुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् १८३
ोणश्च शतशृङ्गश्च वक्रद्वारश्च पर्वतः ।
म सत्रेषु पूर्वेषां चिता मघवता सह ॥ १८४
ाहं तस्मिन्कुले जाता भर्तर्यसति मद्विधे ।
वेनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥१८५
ास्मि सत्रप्रतिच्छन्ना न परस्वाभिमानिनी ।
न धर्मसंकरकरी स्वधर्मेऽस्मि दृढव्रता ॥ १८६
नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्य प्रवादिनी ।
नासमीक्ष्यागता चेह त्वत्सकाशं जनाधिप १८७
मोक्षे ते भावितां बुद्धिं श्रुत्वाऽहं कुशलैषिणी ।
तव मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता १८८
न वर्गस्था ब्रवीम्येतत्स्वपक्षपरपक्षयोः ।
मुक्तो विमुच्यते यश्च शान्तौ यश्च न शाम्यति ॥
यथा शून्ये पुराऽगारे भिक्षुरेकां निशां वसेत् ।
तथाऽहं त्वच्छरीरेऽस्मिन्निमां वत्स्यामि शर्वरीम् ॥
साऽहं मानप्रदानेन वागातिथ्येन चार्चिता ।
सुप्ता सुशरणं प्रीता श्वो गमिष्यामि मैथिल १९१
भीष्म उवाच ।
इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च ।
श्रुत्वा नाधिजगौ राजा किंचिदन्यदतः परं १९२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥

## षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥

आसुरिणा कपिलं प्रति अव्यक्तादितत्वविषयकप्रश्नः ॥ १ ॥

'*युधिष्ठिर उवाच ।
अव्यक्तव्यक्ततत्वानां निश्चयं भरतर्षभ ।
वक्तुमर्हसि कौरव्य देवस्याजस्य या कृतिः ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीमं संवादं गुरुशिष्ययोः ।
कपिलस्यासुरेश्चैव सर्वदुःखविमोक्षणम् ॥ २
आसुरिरुवाच ।
अव्यक्तव्यक्ततत्वानां निश्चयं बुद्धिनिश्चयम् ।
भगवन्नमितप्रज्ञ वक्तुमर्हसि मेऽर्थितः ॥ ३
किं व्यक्तं किमव्यक्तं किं व्यक्ता-
व्यक्तं किमिति तत्वानि ।
किमाद्यं मध्यमं च तत्वानां
किमध्यात्माधिभूतदैवतं च ॥ ४
किंनु सर्गाप्ययं कति सर्गाः किं भूतं
किं भविष्यं किं भव्यं च किं ज्ञानम् ।
को ज्ञाता किं बुद्धं किमप्रबुद्धं
किं बुध्यमानं कति पर्वाणि ॥ ५
कति स्रोतांसि कति कर्मयोनयः
किमेकत्वं नानात्वम् ।
किं सहवासं निवासं
किं विद्याविद्यमिति ॥' ६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥

द्रोणादयः पर्वता मम पूर्वेषां सत्रेषु मघवता सह चिताश्चयने इष्टकास्थाने निवेशिता इत्यर्थः । चित्यां मघवता सहेति थ. पाठः ॥ १८४ ॥ भर्तर्यसति मद्गृहे इति ध. पाठः ॥ १८५ ॥ सत्रप्रतिच्छन्ना कपटसंन्यासिनी । न परस्वापहारिणीति झ. पाठः ॥ १८६ ॥ मुक्तो व्यायच्छते यश्चेति झ. पाठः ॥ १८९ ॥ पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥

* एतदादयस्त्रयोऽध्यायाः ध. पुस्तके एव वर्तन्ते ।

## सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७ ॥

आसुरिंप्रति कपिलेन व्यक्ताव्यक्ततत्त्वनिरूपणम् ॥ १ ॥

'कपिल उवाच ।
यद्भवानाह किं व्यक्तं किमव्यक्तमिति अत्र ब्रूमः १

अव्यक्तमग्राह्यमतर्क्यमपरिमेयमव्यक्तं व्यक्तमुपलक्ष्यते यथर्तवो मूर्तयस्तेषु पुष्पफलैर्व्यक्तिरुपलक्ष्यते तद्वद्व्यक्तगुणैरुपलक्ष्यते ॥ २

प्राग्गतं प्रत्यग्गतमूर्ध्वमधस्तिर्यक्च शतश्चानुग्राह्यत्वात्साऽऽकृतिः ॥ ३

व्यक्त उत्तमो रजः सत्वं तत्प्रधानं तत्वमक्षरमजरमित्येवमादीन्यव्यक्तनामानि भवन्ति । एवमाह ॥ ४

अव्यक्तं बीजधर्माणं महाग्राहमचेतनम् ।
तस्मादेकगुणो जज्ञे तद्व्यक्तं तत्वमीश्वरः ॥ ५

तदेतदव्यक्तम् । प्रसवा धारणादानस्वभावमापोधारणे प्रजनने दाने गुणानां प्रकृतिः सपराप्रमत्तं तदेतदस्मिन्कार्यकरणे ॥ ६

यदप्युक्तं किमव्यक्तमिति तत्र ब्रूमः । व्यक्तं नामाऽऽसुरे यत्पूर्वमव्यक्तादुत्पन्नतत्वमीश्वरमप्रतिबुद्धगुणस्थमेतत्पुरुषसंज्ञिकं महदित्युक्तं बुद्धिरिति च । सत्ता स्मृतिर्धृतिर्मेधा व्यवसायः समाधिप्राप्तिरित्येवमादीनि व्यक्तपर्याये नामानि वदन्त्येवमाह ॥ ७

मम व्यक्तादुपात्तासिद्धिरागता संयमश्च महद्यतः ।
परसर्गश्च दीप्त्यर्थमौत्सुक्यं च परं तथा ॥ ८

यदेषोर्ध्वस्रोताभिर्महत्त्वादप्रतिबुद्धत्वाच्चात्मनः प्रकरोत्यहंकारमव्यक्ताव्यक्ततरम् ॥ ९

यदप्युक्तं किमव्यक्ततरमिति अत्र ब्रूमः ॥ १
व्यक्ताव्यक्ततरं नाम तृतीयं पुरुषसंज्ञकम् ।
तदेतदुभयोर्विरिश्चिर्वैरिश्चयोरेकैक उत्पत्तिः ॥१

विरिश्चोऽभिमानिन्यविवेक ईर्ष्या कामः क्रोध लोभो मदो दर्पो ममकारश्चैतान्यहंकारपर्यायनामानि भवन्त्येवमाह ॥ १

अहं कर्तेत्यहंकर्ता ससृजे विश्वमीश्वरः ।
तृतीयमेनं पुरुषमभिमानगुणं विदुः ॥ १

अहंकाराद्युगपदुन्मादयामास पञ्च महाभूतानि शब्दस्पर्शरूपरसगन्धलक्षणानि । तान्ये बुद्ध्यन्त इत्येवमाह ॥ १

भूतसङ्घमहङ्काराद्यो विद्वानवबुध्यसे ।
अभिमानमतिक्रम्य महान्तं प्रतितिष्ठते ॥ १
भूतेषु चाप्यहंकारमश्वरूपस्तथोच्यते ।
पुनर्विषयहेत्वर्थे स मनस्संज्ञकः स्मृतः ॥ १

विखराद्वैखरं युगपदिन्द्रियैः सहोत्पादयति श्रोत्रं घ्राणं चक्षुर्जिह्वा त्वगित्येतानि शब्दस्पर्शरूपरसगन्धानवबुध्यन्त इति पञ्च बुद्धीन्द्रियाणि वदन्त्येवमाहुराचार्याः ॥ १

वाग्घस्तौ पादपायुरानन्दश्चेति पञ्चेन्द्रियाणि विशेषमादित्योश्वीनि नक्षत्राणीत्येतानीन्द्रियाण पर्यायनामानि वदन्त्येवमाह ॥ १८

अहंकारात्तथा भूतान्युत्पाद्य महदात्मनोः ।
वैखरत्वं ततो राज्ञा वैखर्यो विषयात्मकः ॥ १९
विकारस्थमहंकारमवबुध्याथ मानवः ।
महदैश्वर्यमाप्नोति यावदाचन्द्रतारकम् ॥' २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७ ॥

## अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२८ ॥

कपिलेनासुरिं प्रति तत्त्वविभागादिकथनम् ॥ १ ॥

कपिल उवाच ।
यदप्युक्तं कति तत्वानि भवन्ति तत्वमेतानि ।
यमानुपूर्व्यशः प्रोक्तान्येवमाह ॥ १
तत्वान्यथोक्तानि । तथाविद्यो निबुद्ध्यते ।

न स पापेन लिप्येत निर्मुक्तः सर्वसंकरात् ॥ २
यदप्युक्तं इहाद्यं मध्यमं च तत्वानामित्यत्र ब्रूमः ३

एवमाद्यं मध्यमं चोक्तं बुद्ध्यादीनि त्रयोविंशतितत्वानि विशेषपर्यवसानानि ज्ञातव्यानि भवन्तीत्येव मामकेनेत्यत्रोच्यते ॥ ४

तदेव तद्यदा दत्तब्राह्मणक्षत्रियवैश्यशूद्रचण्डालपुल्कसादिरेतानि ज्ञातव्यानि बुद्ध्यादीनि विशेषपर्यवसानानि मन्तव्यानि प्रत्येतव्याभ्युक्तानि एतदाद्यं मध्यमं च । एतस्मात्तत्वानामुत्पत्तिर्भवति अत्र प्रलीयन्ते । केचिदाहुराचार्याः ॥ ५

अहमित्येतदात्मकं सशरीरसङ्घातं त्रिषु लोकेषु व्यक्तमव्यक्ताधिष्ठितमेतद्देवदत्तसंज्ञकम् ॥ ६

योगदशमपुरुषदर्शनानां तु पञ्चविंशतितत्वानां प्रतिबुध्यमानयोर्व्यतिरिक्तं शुचिव्यभ्रमित्याहुराचार्याः । एवमाह ॥ ७

चतुर्विंशतितत्वज्ञस्त्वव्यक्ते प्रतितिष्ठति ।
पञ्चविंशतितत्वज्ञोऽप्यव्यक्तमधितिष्ठति ॥' ८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२८ ॥

## एकोनत्रिंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥

भीष्मेण युधिष्ठिरंप्रति व्यासकृतशुकानुशासनानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
कथं निर्वेदमापन्नः शुको वैयासकिः पुरा ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ १
भीष्म उवाच ।
प्राकृतेनैव वृत्तेन चरन्तमकुतोभयम् ।
अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतम् ॥२
व्यास उवाच ।
धर्मं पुत्र निषेवस्व सुतीक्ष्णौ च हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः ॥३
सत्यमार्जवमक्रोधमनसूयां दमं तपः ।
अहिंसां चानृशंस्यं च विधिवत्परिपालय ॥ ४
सत्ये तिष्ठ रतो धर्मे हित्वा सर्वमनार्जवम् ।
देवतातिथिशेषेण यात्रां प्राणस्य संलिह ॥ ५
फेनमात्रोपमे देहे जीवे शकुनिवत्स्थिते ।
अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक ॥ ६
अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु ।
अन्तरं लिप्स्यमानेषु बालस्त्वं नावबुध्यसे ॥ ७
अहःसु गण्यमानेषु क्षीयमाणे तथाऽऽयुषि ।
जीविते लिख्यमाने च किमुत्थाय न धावसि ॥८
ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ॥ ९
धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयाताऽपि पीड्यते ॥ १०
ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः ।
धर्म्यं पन्थानमारूढास्तानुपास्स्व च पृच्छ च ॥ ११
उपधार्य मतं तेषां बुधानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥१२
आद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः ।
सर्वभक्ष्या न पश्यन्ति कर्मभूमिमचेतसः ॥ १३
धर्मं निःश्रेणिमास्थाय किंचित्किंचित्समारुह ।
कोशकारवदात्मानं वेष्टयन्नावबुध्यसे ॥ १४
नास्तिकं भिन्नमर्यादं कूलपातमिव स्थितम् ।

स्वाध्यायमन्वशिक्षयत स्वयमिति ट. थ. ध. पाठः ॥ २ ॥ हित्वा सङ्गमनार्जवमिति प्राणस्य लेलिहेति च ध. पाठः । संलिह स्पृश । स्वाद्वस्वादुविवेकं मा कार्षीरित्यर्थः ॥५॥ आमपात्रोपमे इति ध. पाठः । स्वपिषि पुरुषार्थसाधने न प्रवर्तसे ॥ ६ ॥ शत्रुषु कामादिषु । अन्तरं छिद्रम् ॥ ७ ॥ न धावसि देवं गुरुं वा शरणं न यासि । जीविते लिह्यमाने चेति ध. पाठः । जीविते लुप्यमानेचेति ट. पाठः ॥ ८ ॥ अपथा अपथेन । बुद्धिमोहपरायणा इति ट. थ. पाठः ॥ १० ॥ आद्यकालिकया वर्तमानमात्रदर्शिन्या ॥ १३ ॥ कूलपातं महानदीपूरम् । रणरेणुमिवोत्थितमिति ध. पाठः । रथरेणुमिवेति घ.

वामतः कुरु विस्रब्धो नरं वेणुमिवोद्धृतम् ॥१५
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ १६
मृत्युनाऽभ्याहते लोके जरया परिपीडिते ।
अमोघासु पतन्तीषु धर्मयानेन संतर ॥ १७
तिष्ठन्तं च शयानं च मृत्युरन्वेषते यदा ।
निर्वृतिं लभते कस्मादकस्मान्मृत्युनाऽशितः॥ १८
संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ १९
क्रमशः संचितशिखो धर्मबुद्धिमयो महान् ।
अन्धकारे प्रवेष्टव्ये दीपो यत्नेन धार्यताम् ॥ २०
संपतन्देहजालानि कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ॥ २१
ब्राह्मणस्य तु देहोऽयं न कामार्थाय जायते ।
इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् ॥ २२
ब्राह्मण्यं बहुभिरवाप्यते तपोभि-
स्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तः
मोक्षार्थी कुशलपरः सदा यतस्व ॥ २३
अव्यक्तप्रकृतिरयं कलाशरीरः
सूक्ष्मात्मा क्षणत्रुटिका निमेषरोमा ।
यानेतत्समबलशुक्लकृष्णनेत्रो
मासाङ्गो द्रवति वयोहयो नराणाम् ॥ २४
तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं
गच्छन्तं सततमिहान्ववेक्षमाणम् ।
चक्षुस्ते यदि न परप्रणेतृनेयं
धर्मे ते रमतु मनः परं निशाम्य ॥ २५
येऽमी तु प्रचलितधर्मकामवृत्ताः
क्रोशन्तः सततमनिष्टसंप्रयोगात् ।
क्लिश्यन्तः परिगतवेदनाशरीरा
बह्वीभिः सुभृशमधर्मवागुराभिः ॥ २६
राजा सदा धर्मपरः शुभाशुभस्य गोप्ता
समीक्ष्य सुकृतिनां दधाति लोकान् ।
बहुविधमपि चरति प्रविशति
सुखमनुपगतं निरवद्यम् ॥ २७
श्वानो भीषणकाया अयोमुखानि वयांसि
बलगृध्रकुररपक्षिणां च संघातम् ।
नरकदने रुधिरपा गुरुवचन-
नुदमुपरतं विशन्त्यसन्तः ॥ २८
मर्यादा नियताः स्वयम्भुवा य इहेमाः
प्रभिनत्ति दश गुणा मनोऽनुगत्वात् ।
निवसति भृशमसुखं पितृविषय-
विपिनमवगाह्य स पापः ॥ २९
यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः
सततनिकृतिवञ्चनाभिरतिः स्यात् ।
उपनिधिभिरसुखकृत्स परमनिरयगो
भृशमसुखमनुभवति दुष्कृतकर्मा ॥ ३०
उष्णां वैतरणीं महानदीमव-
गाढोऽसिपत्रवनभिन्नगात्रः ।
परशुवनशयोनिपतितो
वसति च महानिरये भृशार्तः ॥ ३१
महापदानि कत्थसे न चाप्यवेक्षसे परम् ।
चिरस्य मृत्युकारिकामनागतां न बुध्यसे ॥ ३२

पाठः । रथरेणुं यथा वामतः कुर्वन्ति वामभागे कुर्वन्ति वर्जयन्तीत्यर्थ इति रत्नगर्भः। खररेणुमिति ट. थ. पाठः ॥१५॥ अमोघासु आयुर्हरणेन सफलासु रात्रिषु । धर्मपोतेन संचरेति ध. पाठः । जरया परिवारित इति ट. थ. पाठः ॥ १७ ॥ मृत्युरन्वेति ते यदेति ट. थ. ध. पाठः । निवृत्तिं लम्भसे यस्मात्तस्मात्त्वं मृत्युनाशित इति ध. पाठः ॥ १८ ॥ संचिन्वानकं धनादिसंचयपरम् ॥ १९ ॥ अन्धकारे संसारे । दीपो ज्ञानम् ॥ २० ॥ इह क्लेशाय महते प्रेत्यानन्तसुखाय चेति ध. पाठः ॥ २२ ॥ शुक्लकृष्णौ पक्षौ ॥ २४ ॥ चक्षुर्ज्ञानं परप्रणेतृनेयम् । अन्धवत् यदि न भवसीत्यर्थः । परं परलोकं आत्मानं वा ॥ २५ ॥ परिगतं प्राप्तं वेदनाशरीरं यमलोके यातनाशरी यैस्ते तथाभूता भवन्तीति शेषः ॥ २६ ॥ श्वान इति नराण कदनं यत्र तस्मिन्नरके । रुधिरपाः कीटाः । गुरूणां मातृ तृप्रभृतीनां वचनं नुदति दूरीकरोति तं उपरतं मृतम् । श्वा भीषिकयेति ध. पाठः ॥ २८ ॥ पितृविषये यमलोके विपि मसिपत्रवनं तदेवावगाह्य तत्रैव निवसति ॥ २९ ॥ निकृतिः चकर्म वञ्चनाचौर्यादि । उपनिधिभिश्छलेन । अपकीर्तिभिरः भकृतः कृत्स्नं परमनिरययातनाभृशमसुखमनुभवति दुष्कृत मेंति ट. पाठः ॥ ३० ॥ महापदानि ब्रह्मादीनां स्थानानि ह कत्थसे धन्योऽहमिति श्लाघसे परंतु ब्रह्म नावेक्षसे । मृत्यु

प्रयस्यतां किमास्यते समुत्थितं महद्भयम्।
अतिप्रमाथि दारुणं सुखस्य संविधीयताम्॥ ३३
पुरा मृतः प्रणीयसे यमस्य राजशासनात्।
त्वमन्तकाय दारुणैः प्रयत्नमार्जवे कुरु॥ ३४
पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित्।
कियत्तवेह जीवितं यमे न चास्ति वारकः॥ ३५
पुरा विवाति मारुतो यमस्य यः पुरःसरः।
पुरैक एव नीयसे कुरुष्व सांपरायिकम्॥ ३६
पुरा स एक एव ते प्रवाति मारुतोऽन्तकः।
पुरा च विभ्रमन्ति ते दिशो महाभयागमे॥ ३७
श्रुतिश्च सन्निरुध्यते पुरा तवेह पुत्रक।
समाकुलस्य गच्छतः समाधिमुत्तमं कुरु॥ ३८
शुभाशुभे पुरा कृते प्रमादकर्मविप्लुते।
स्मरन्पुराऽनुतप्यसे निधत्स्व केवलं निधिम्॥ ३९
पुरा जरा कलेवरं विजर्झरीकरोति ते।
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम्॥ ४०
पुरा शरीरमन्तको भिनत्ति रोगसायकैः।
प्रसह्य जीवितक्षये तपो महत्समारभ॥ ४१
पुरा वृका भयंकरा मनुष्यदेहगोचराः।
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने॥ ४२
पुरान्धकारमेककोऽनुपश्यसि त्वरस्व वै।
पुरा हिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्धनि॥ ४३
पुरा कुसङ्गतानि ते सुहृन्मुखाश्च शत्रवः।
विचालयन्ति दर्शनाद्घटस्व पुत्र यत्परम्॥ ४४
धनस्य यस्य राजतो भयं न चास्ति चोरतः।
मृतं च यन्न मुञ्चति समार्जयस्व तद्धनम्॥ ४५
न तत्र संविभज्यते स्वकर्मभिः परस्परम्।
यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते॥ ४६
परत्र येन जीव्यते तदेव पुत्र चीयताम्।
धनं यदक्षरं ध्रुवं समार्जयस्व तत्स्वयम्॥ ४७
न यावदेव पच्यते महाजनस्य यावकम्।
अपक्व एव यावके पुरा प्रलीयसे त्वरम्॥ ४८
न मातृपुत्रबान्धवा न संस्तुतः प्रियो जनः।
अनुव्रजन्ति संकटे व्रजन्तमेकपातिनम्॥ ४९
यदेव कर्म केवलं पुराकृतं शुभाशुभम्।
तदेव पुत्र यौतकं भवत्यमुत्र गच्छतः॥ ५०
हिरण्यरत्नसंचयाः शुभाशुभेन संचिताः।
न तस्य देहसंक्षये भवन्ति कार्यसाधकाः॥ ५१
न पुत्र शान्तिरस्ति ते कृताकृतस्य कर्मणः।
न साक्षिकोऽऽत्मना समो नृणामिहास्ति कश्चन॥ ५२
मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः।
प्रविश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वशः॥ ५३
इहाग्निसूर्यवायवः शरीरमाश्रितास्त्रयः।
त एव तस्य साक्षिणो भवन्ति धर्मदर्शिनः॥ ५४
अहर्निशेषु सर्वतः स्पृशत्सु सर्वचारिषु।
प्रकाशगूढवृत्तिषु स्वधर्ममेव पालय॥ ५५
अनेकपारिपान्थके विरूपरौद्रमक्षिके।
स्वमेव कर्म रक्ष्यतां स्वकर्म तत्र गच्छति॥ ५६
न तत्र संविभज्यते स्वकर्मभिः परस्परम्।
तथा कृतं स्वकर्मजं तदेव भुज्यते फलम्॥ ५७
यथाऽप्सरोगणाः फलं सुखं महर्षिभिः सह।
तथाऽऽप्नुवन्ति कर्मजं विमानकामगामिनः॥ ५८
यथेह यत्कृतं शुभं विपाप्मभिः कृतात्मभिः।
तदाप्नुवन्ति मानवास्तथा विशुद्धयोनयः॥ ५९
प्रजापतेः सलोकतां बृहस्पतेः शतक्रतोः।
व्रजन्ति ते परां गतिं गृहस्थधर्मसेतुभिः॥ ६०
सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहामहे।
अबुद्धिमोहनं पुनः प्रभुस्तु तेन पावकः॥ ६१
गता त्रिरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः।
कुरुष्व धर्मसंचयं वयो हि तेऽतिवर्तते॥ ६२

---

रिकां जराम्॥ ३२॥ प्रयास्यतां मोक्षमार्गेण प्रस्थातव्यम्। सुखस्य प्रमाथि संविधीयतां प्रयत्यताम्॥३३॥ अन्तकाय अयतिसुखाय। दारुणैः कृच्छ्रादितपोभिः॥ ३४॥ वृकाः कामादयः॥ ४२॥ हिरण्मयवृक्षदर्शनं मरणचिह्नम्॥ ४३॥ ते त्वाम्॥ ४४॥ तद्धनं विद्याम्॥ ४५॥ यौतकं विवाहाप्तं धनं दायादाग्राह्यम्॥ ४६॥ यावके घृतखण्डमिश्रे यवपिष्टविकारे त्वरं त्वरायुक्तं यथा स्यात्तथा प्रलीयसे म्रियसे। भोगान्भुक्त्वा मोक्षे यत्नं करिष्यामीति न मन्तव्यमिति भावः॥ ४८॥ यथेन्द्रियेषु सर्वतः श्रुतेष्विति ध. पाठः॥ ५५॥ तथाऽऽप्नुवन्ति कर्मतो विबुद्धिमोहनं पुनरिति ट. ध. पाठः॥५८॥

पुरा करोति सोऽन्तकः प्रमादगोमुखां चमूम् ।
यथागृहीतमुत्थितस्त्वरस्व धर्मपालने ॥ ६३
यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि ।
तथा गतिं गमिष्यतः किमात्मना परेण वा ६४
यदेकपातिनां सतां भवत्यमुत्र गच्छताम् ।
भयेषु सांपरायिकं निधत्स्व केवलं निधिम् ॥६५
सतूलमूलबान्धवं प्रभुर्हरत्यसङ्गवान् ।
न सन्ति यस्य वारकाः कुरुष्व धर्मसंनिधिम् ६६
इदं निदर्शनं मया तवेह पुत्र संमतम् ।
स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ॥ ६७
ददाति यः स्वकर्मणा धनानि यस्यकस्यचित् ।
अबुद्धिमोहजैर्गुणैः स एक एव युज्यते ॥ ६८
शुभं समस्तमश्नुते प्रकुर्वतः शुभाः क्रियाः ।
तदेतदर्थदर्शनं कृतज्ञमर्थसंहितम् ॥ ६९
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥
किं ते धनेन किं बन्धुभिस्ते
किं ते पुत्रैः पुत्रक यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क गताश्च सर्वे ॥ ७१
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वाऽकृतम् ७२
अनुगम्य विनाशान्ते निवर्तन्ते ह बान्धवाः ।
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ॥ ७३
नास्तिकान्निरनुक्रोशान्नरान्पापमते स्थितान् ।
वामतः कुरु विस्रब्धं परं प्रेप्सुरतन्द्रितः ॥ ७४
एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥ ७५
अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः ।
सम्यक् स्वधर्मं कृत्वेह परत्र सुखमश्नुते ॥ ७६
न देहभेदे मरणं विजानतां
न च प्रणाशः स्वनुपालिते पथि ।
धर्मं हि यो वर्धयते स पण्डितो
य एव धर्माच्च्यवते स दह्यते ॥ ७७
प्रयुक्तयोः कर्मपथि स्वकर्मणोः
फलं प्रयोक्ता लभते यथाविधि ।
निहीनकर्मा निरयं प्रपद्यते
त्रिविष्टपं गच्छति धर्मपारगः ॥ ७८
सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।
तथाऽऽत्मानं समादध्याद्भ्रश्यते न पुनर्यथा ॥ ७९
यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी ।
तमाहुः पुण्यकर्माणमशोच्यं मित्रबान्धवैः ॥ ८०
यस्य नोपहता बुद्धिर्निश्चये ह्यवलम्बते ।
स्वर्गे कृतावकाशस्य नास्ति तस्य महद्भयम् ॥ ८१
तपोवनेषु ये जातास्तत्रैव निधनं गताः ।
तेषामल्पतरो धर्मः कामभोगानजानताम् ॥ ८२
यस्तु भोगान्परित्यज्य शरीरेण तपश्चरेत् ।
न तेन किंचिन्न प्राप्तं तन्मे बहुमतं फलम् ॥८३
मातापितृसहस्राणि पुत्रदारशतानि च ।
अनागतान्यतीतानि कस्य ते कस्य वा वयम् ॥८४
अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं तन्न पश्यामि यो मम ॥ ८५
न तेषां भवता कार्यं न कार्यं तव तैरपि ।
स्वकृतैस्तानि जातानि भवांश्चैव गमिष्यति ॥ ८६
इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥ ८७
संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
ततः क्लेशमवाप्नोति परत्रेह तथैव च ॥ ८८
पश्यति च्छिन्नभूतं हि जीवलोकं स्वकर्मणा ।
तत्कुरुष्व तथा पुत्र कृत्स्नं यत्समुदाहृतम् ॥ ८९
तदेतत्संप्रदृश्यैव कर्मभूमिं प्रपश्यतः ।
शुभान्याचरितव्यानि परलोकमभीप्सता ॥ ९०
मासर्तुसंज्ञापरिवर्तकेन
सूर्याग्निना रात्रिदिवेन्धनेन ।

कुरुष्व धर्मसंचयमिति ध. पाठः ॥ ६६ ॥ नहि तद्वेद कस्याद्य मृत्युसेनाभिवीक्षते इति ध. पाठः । को हि तद्वेद यस्याद्यमृत्युसेनाभिवीक्षत इति ट. थ. पाठः ॥ ७२ ॥ सृज्यते न पुनर्यथेति ध. पाठः । म्रियते न पुनर्यथेति ट. पाठः ॥ ७९ ॥ तदेव बहुलं मतमिति ट. ध. पाठः ॥ ८३ ॥

स्वकर्मनिष्ठाफलसाक्षिकेण
भूतानि कालः पचति प्रसह्य ॥ ९१
धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपुं न बाधते ।
श्रुतेन किं येन न धर्ममाचरे-
त्किमात्मना यो न जितेन्द्रियो वशी ॥९२
भीष्म उवाच ।
इदं द्वैपायनवचो हितमुक्तं निशम्य तु ।
शुको गतः परित्यज्य पितरं मोक्षदेशिकम् ॥९३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥

## त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥

भीष्मेण युधिष्ठिरंप्रति सर्वथा धर्मस्य कर्तव्यताकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च ।
गुरूणां वाऽपि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
आत्मनाऽनर्थयुक्तेन पापे निविशते मनः ।
स कर्म कलुषं कृत्वा क्लेशे महति धीयते ॥ २
दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्मिणः ॥३
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनस्थाः शुभकारिणः ॥४
व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥५
प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवता मार्गमास्थिता हस्तदक्षिणाः ॥ ६
पुलाका इव धान्येषु पूत्यण्डा इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ७
सुशीघ्रमपि धावन्तं विधानमनुधावति ।
शेते सह शयानेन येनयेन यथाकृतम् ॥ ८
पापं तिष्ठति तिष्ठन्तं धावन्तमनुधावति ।
करोति कुर्वतः कर्म च्छायेवानुविधीयते ॥ ९
येनयेन यथा यद्यत्पुरा कर्म सुनिश्चितम् ।
तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना ॥ १०
समानकर्मनिक्षेपं विधानपरिरक्षणम् ।
भूतग्राममिमं कालः समन्तादपकर्षति ॥ ११
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥१२
समानश्चावमानश्च लाभालाभौ जयाजयौ ।
प्रवृत्ता न निवर्तन्ते निधनान्ताः पदेपदे ॥ १३
आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भजते पूर्वदेहिकम् ॥ १४
बालो युवा वा वृद्धश्च यत्करोति शुभाशुभम् ।
तस्यांतस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ १५
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १६
मलिनं हि यथा वस्त्रं पश्चाच्छुध्यति वारिणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥ १७
दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः ॥ १८
शकुनानामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा पुण्यकृतां गतिः ॥ १९
अलमन्यैरुपालब्धैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥ २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥

हितयुक्तमिति ध. पाठः । मोक्षदैशिकं मोक्षोपदेष्टारम् ॥ ९३ ॥
एकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥
आस्थिता हृतदक्षिणा इति ध. पाठः ॥ ६ ॥ तत्तदेवोत्तरं भुङ्क्ते इति झ. पाठः ॥ १० ॥ लाभोऽलाभः क्षयाक्षयाविति झ. पाठः ॥ १३ ॥ भुज्यते पूर्वदैहिकमिति ध. पाठः ॥ १४ ॥
त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥

## एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

भीष्मेण युधिष्ठिरंप्रति शुकोत्पत्तिप्रकारकथनारम्भः ॥ १ ॥ तथा पुत्रार्थं व्यासतपश्चर्याकथनम् ॥ २ ॥

युधिष्ठिर उवाच ।
कथं व्यासस्य धर्मात्मा शुको जज्ञे महातपाः ।
सिद्धिं च परमां प्राप्तस्तन्मे ब्रूहि पितामह ॥ १
कस्यां चोत्पादयामास शुकं व्यासस्तपोधनः ।
न ह्यस्य जननीं विद्मो जन्म चाग्र्यं महात्मनः॥ २
कथं च बालस्य सतः सूक्ष्मज्ञाने रता मतिः ।
यथा नान्यस्य लोकेऽस्मिन्द्वितीयस्येह कस्यचित् ३
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते ।
न हि मे तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमम् ॥ ४
माहात्म्यमात्मयोगं च विज्ञानं च शुकस्य ह ।
यथावदानुपूर्व्येण तन्मे ब्रूहि पितामह ॥ ५
भीष्म उवाच ।
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ६
तपोमूलमिदं सर्वं यन्मां पृच्छसि पाण्डव ।
तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ॥ ७
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव सिद्धिमाप्नोति मानवः ॥ ८
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
योगस्य कलया तात न तुल्यं विद्यते फलम् ॥ ९
अत्र ते वर्तयिष्यामि जन्मयोगफलं तथा ।
शुकस्याग्र्यां गतिं चैव दुर्विदामकृतात्मभिः १०
मेरुशृङ्गे किल पुरा कर्णिकारवनायुते ।
विजहार महादेवो भीमैर्भूतगणैर्वृतः ॥ ११
शैलराजसुता चैव देवी तत्राभवत्पुरा ।
तत्र दिव्यं तपस्तेपे कृष्णद्वैपायनः प्रभुः ॥ १२
योगेनात्मानमाविश्य योगधर्मपरायणः ।
धारयन्स तपस्तेपे पुत्रार्थं कुरुसत्तम ॥ १३
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य वा विभो ।
वीर्येण संमितः पुत्रो मम भूयादिति स्म ह ॥ १४
संकल्पेनाथ मौनेन दुष्प्रापमकृतात्मभिः ।
वरयामास देवेशमास्थितस्तप उत्तमम् ॥ १५
अतिष्ठन्मारुताहारः शतं किल समाः प्रभुः ।
आराधयन्महादेवं बहुरूपमुमापतिम् ॥ १६
तत्र ब्रह्मर्षयश्चैव सर्वे देवर्षयस्तथा ।
लोकपालाश्च लोकेशं साध्याश्च वसुभिः सह ॥ १७
आदित्याश्चैव रुद्राश्च दिवाकरनिशाकरौ ।
मारुतो मरुतश्चैव सागराः सरितस्तथा ॥ १८
अश्विनौ देवगन्धर्वास्तथा नारदपर्वतौ ।
विश्वावसुश्च गन्धर्वः सिद्धाश्चाप्सरसां गणाः ॥ १९
तत्र रुद्रो महादेवः कर्णिकारमयीं शुभाम् ।
धारयाणः स्रजं भाति ज्योत्स्नामिव निशाकरः २०
तस्मिन्दिव्ये वने रम्ये देवदेवर्षिसंकुले ।
आस्थितः परमं योगमृषिः पुत्रार्थमच्युतः ॥ २१
न चास्य हीयते प्राणो न ग्लानिरुपजायते ।
त्रयाणामपि लोकानां तदद्भुतमिवाभवत् ॥ २२
जटाश्च तेजसा तस्य वैश्वानरशिखोपमाः ।
प्रज्वलन्त्यः स्म दृश्यन्ते युक्तस्यामिततेजसः ॥ २३
मार्कण्डेयो हि भगवानेतदाख्यातवान्मम ।
स देवचरितानीह कथयामास मे तदा ॥ २४
एता अद्यापि कृष्णस्य तपसा तेन दीपिताः ।
अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः ॥ २५
एवंविधेन तपसा तस्य भक्त्या च भारत ।
महेश्वरः प्रसन्नात्मा चकार मनसा मतिम् ॥ २६
'ततस्तस्य महादेवो दर्शयामास साम्बिकः ।'
उवाच चैवं भगवांस्त्र्यम्बकः प्रहसन्निव ।
एवंविधस्ते तनयो द्वैपायन भविष्यति ॥ २७

कथं चोत्पादयामासेति ध. पाठः ॥ २ ॥ सूक्ष्मज्ञाने स्थिता मतिरिति ध. पाठः ॥ ३ ॥ देवी भर्त्राभवत्पुरेति ध. पाठः ॥ १२ ॥ संकल्पेनाथ योगेनेति झ. पाठः ॥ १५ ॥ वसवो मरुतश्चैवेति झ. पाठः ॥ १८ ॥ हीयते वर्ण इति ध. पाठः ॥ २२ ॥ कृष्णस्य व्यासस्य ॥ २५ ॥

यथा ह्यग्निर्यथा वायुर्यथा भूमिर्यथा जलम् ।
यथाऽऽकाशस्तथा शुद्धो भविता ते सुतो महान् ॥
तद्भावभावी तद्बुद्धिस्तदाऽऽत्मा तदपाश्रयः ।
तेजसाऽऽवृत्य लोकांस्त्रीन्यशः प्राप्स्यति ते सुतः ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

## द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥

भीष्मेण युधिष्ठिरंप्रति शुकोत्पत्तिप्रकारकथनम् ॥ १ ॥

भीष्म उवाच ।
स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः ।
अरणीं तु ततो गृह्य ममन्थाग्निचिकीर्षया ॥ १
अथ रूपं परं राजन्बिभ्रतीं स्वेन तेजसा ।
घृताचीं नामाप्सरसमपश्यद्भगवानृषिः ॥ २
ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः ।
अभवद्भगवान्व्यासो वने तस्मिन्युधिष्ठिर ॥ ३
सा च दृष्ट्वा तदा व्यासं कामसंविग्नमानसम् ।
शुकी भूत्वा महाराज घृताची समुपागमत् ॥ ४
स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम् ।
शरीरजेनानुगतः सर्वगात्रातिगेन ह ॥ ५
स तु धैर्येण महता निगृह्णन्हृच्छयं मुनिः ।
न शशाक नियन्तुं तद्व्यासः प्रविसृतं मनः ।
भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः ॥ ६
यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमवापतत् ॥ ७
सोऽविशङ्केन मनसा तथैव द्विजसत्तमः ।
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप ॥ ८
शुक्रे निर्मथ्यमाने स शुको जज्ञे महातपाः ।
परमर्षिर्महायोगी अरणीगर्भसंभवः ॥ ९
यथाऽध्वरे समिद्धोऽग्निर्भाति हव्यमुदावहन् ।
तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा ॥ १०
बिभ्रत्पितुश्च कौरव्य रूपवर्णमनुत्तमम् ।
बभौ तदा भावितात्मा विधूमोऽग्निरिव ज्वलन् ॥ ११
तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर ।
स्वरूपिणी तदाऽभ्येत्य स्नापयामास वारिणा ॥ १२
अन्तरिक्षाच्च कौरव्य दण्डः कृष्णाजिनं च ह ।
पपात भुवि राजेन्द्र शुकस्यार्थे महात्मनः ॥ १३
जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयश्चैव प्रावाद्यन्त सहस्रशः ॥ १४
विश्वावसुश्च गन्धर्वस्तथा तुम्बुरुनारदौ ।
हाहा हूहूश्च गन्धर्वौ तुष्टुवुः शुकसंभवम् ॥ १५
तत्र शक्रपुरोगाश्च लोकपालाः समागताः ।
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च ॥ १६
दिव्यानि सर्वपुष्पाणि प्रववर्ष च मारुतः ।
जङ्गमं स्थावरं चैव प्रहृष्टमभवज्जगत् ॥ १७
तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः ।
जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा ॥ १८
तस्य देवेश्वरः शक्रो दिव्यमद्भुतदर्शनम् ।
ददौ कमण्डलुं प्रीत्या देववासांसि चाभिभो ॥ १९
हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः ।
प्रदक्षिणमवर्तन्त शुकाश्चाषाश्च भारत ॥ २०
आरणेयस्ततो दिव्यं प्राप्य जन्म महाद्युतिः ।
तत्रैवोवास मेधावी ब्रह्मचारी समाहितः ॥ २१
उत्पन्नमात्रं तं वेदाः सरहस्याः ससंग्रहाः ।
उपतस्थुर्महाराज यथाऽस्य पितरं तथा ॥ २२

---

यशः प्राप्स्यति केवलमिति ट. ड. ध. पाठः ॥ २९ ॥ एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

अरणी सहिते गृह्येति झ. पाठः । तत्र अरणी द्वे अधरोत्तरे सहिते मिथुनरूपे इत्यर्थः ॥ १ ॥ सा च कृत्वा तदा व्यासमिति ड. ध. पाठः ॥ ४ ॥ शुक्रे निर्मथ्यमाने जातत्वात् शुक इति रेफलोपेनास्य नाम कृतम् ॥ ९ ॥ तर्पयामास वारिणेति झ. पाठः ॥ १२ ॥ खे गायन्ति स्म गन्धर्वा इति ट. पाठः ॥१४॥ महात्मा महादेवः उपानयत् स्वशिष्यं कृतवानिति संबन्धः ॥ १८ ॥ द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥

बृहस्पतिं च वव्रे स वेदवेदाङ्गभाष्यवित् ।
उपाध्यायं महाराज धर्ममेवानुचिन्तयन् ॥ २३
सोऽधीत्य निखिलान्वेदान्सरहस्यान्ससंग्रहान् ।
इतिहासं च कार्त्स्न्येन धर्मशास्त्राणि चाभिभो २४
गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः ।
उग्रं तपः समारेभे ब्रह्मचारी समाहितः ॥ २५
देवतानामृषीणां च बाल्येऽपि स महातपाः ।
संमन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा ॥ २६
न त्वस्य रमते बुद्धिराश्रमेषु नराधिप ।
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्मानुदर्शिनः ॥ २७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥

---

## त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥

शुकेन व्यासाज्ञया तत्वजिज्ञासया मिथिलास्थं जनकंप्रत्यागमनम् ॥ १ ॥

भीष्म उवाच ।
स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात् ।
प्राहाभिवाद्य च गुरुं श्रेयोर्थी विनयान्वितः ॥१
मोक्षधर्मेषु कुशलो भगवान्प्रब्रवीतु मे ।
यथा मे मनसः शान्तिः परमा संभवेत्प्रभो ॥२
श्रुत्वा पुत्रस्य तु वचः परमर्षिरुवाच तम् ।
अधीहि पुत्र मोक्षं वै धर्मांश्च विविधानपि ॥ ३
पितुर्नियोगाज्जग्राह शुको धर्मभृतां वरः ।
योगशास्त्रं च निखिलं कापिलं चैव भारत ॥ ४
स तं ब्राह्म्या श्रिया युक्तं ब्रह्मतुल्यपराक्रमम् ।
मेने पुत्रं यदा व्यासो मोक्षधर्मविशारदम् ॥ ५
उवाच गच्छेति तदा जनकं मिथिलेश्वरम् ।
स ते वक्ष्यति मोक्षार्थं निखिलं मिथिलेश्वरः ॥६
पितुर्नियोगादगमन्मैथिलं जनकं नृपम् ।
प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम् ॥ ७
उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मितः ।
न प्रभावेण गन्तव्यमन्तरिक्षचरेण वै ॥ ८
आर्जवेनैव गन्तव्यं न सुखान्वेषिणा तथा ।
नान्वेष्टव्या विशेषास्तु विशेषा हि प्रसङ्गिनः ॥९
अहंकारो न कर्तव्यो याज्ये तस्मिन्नराधिपे ।
स्थातव्यं च वशे तस्य स ते छेत्स्यति संशयम् ॥१०
स धर्मकुशलो राजा मोक्षशास्त्रविशारदः ।
याज्यो मम स यद्ब्रूयात्तत्कार्यमविशङ्कया ॥ ११
एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः ।
पद्भ्यां शक्तोन्तरिक्षेण क्रान्तुं पृथ्वीं ससागराम् १२
स गिरींश्चाप्यतिक्रम्य नदीतीर्थसरांसि च ।
बहुव्यालमृगाकीर्णा ह्यटवीश्च वनानि च ॥ १३
मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतं ततः ।
क्रमेणैवं व्यतिक्रम्य भारतं वर्षमासदत् ॥ १४
स देशान्विविधान्पश्यंश्चीनहूणनिषेवितान् ।
आर्यावर्तमिमं देशमाजगाम महामुनिः ॥ १५
पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन् ।
अध्वानं सोऽतिचक्राम खचरः खे पतन्निव॥१६
पत्तनानि च रम्याणि स्फीतानि नगराणि च ।
रत्नानि च विचित्राणि पश्यन्नपि न पश्यति॥१७
उद्यानानि च रम्याणि तथैवायतनानि च ।
पुण्यानि चैव तीर्थानि सोत्यक्रामदथाध्वगः ॥१८
सोचिरेणैव कालेन विदेहानाससाद ह ।
रक्षितान्धर्मराजेन जनकेन महात्मना ॥ १९
तत्र ग्रामान्बहून्पश्यन्बह्वन्नरसभोजनान् ।
पल्लीघोषान्समृद्धांश्च बहुगोकुलसंकुलान् ॥ २०
स्फीतांश्च शालियवसैर्हंससारससेवितान् ।
पद्मिनीभिश्च शतशः श्रीमतीभिरलंकृतान् ॥ २१
स विदेहानतिक्रम्य समृद्धजनसेवितान् ।

---

मोक्षं मोक्षशास्त्रम् । अनुचिन्त्य उपादेयत्वेन ज्ञात्वा ॥ १ ॥ धर्मांश्च त्रिविधानपीति ध. पाठः ॥ ३ ॥ शुको वेदविदांवर इति ट. ड. पाठः ॥ ४ ॥ मोक्षविद्याविशारदमिति ट. पाठः ॥ ५ ॥ मोक्षार्थं मोक्षशास्त्रार्थं । मोक्षार्थं निखिलेन विशेषत इति ट. ड. थ. पाठः ॥ ६ ॥ मेरोर्वर्षमिलावृतम् । हरेर्वर्षं हरिवर्षाख्यम् । हैमवन्तं वर्षं किंपुरुषाख्यम् ॥ १४ ॥

मिथिलोपवनं रम्यमाससाद समृद्धिमत् ॥ २२
हस्त्यश्वरथसंकीर्णं नरनारीसमाकुलम् ।
पश्यन्नपश्यन्निव तत्समतिक्रामदच्युतः ॥ २३
मनसा तं वहन्भारं तमेवार्थं विचिन्तयन् ।
आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह २४
तस्या द्वारं समासाद्य द्वारपालैर्निवारितः ।
स्थितो ध्यानपरो मुक्तो विदितः प्रविवेश ह २५
स राजमार्गमासाद्य समृद्धजनसंकुलम् ।
पार्थिवक्षयमासाद्य निःशङ्कः प्रविवेश ह ॥ २६
तत्रापि द्वारपालास्तमुग्रवाचा न्यषेधयन् ।
तथैव च शुकस्तत्र निर्मन्युः समतिष्ठत ॥ २७
न चातपाध्वसंतप्तः क्षुत्पिपासाश्रमान्वितः ।
प्रताम्यति ग्लायति वा नापैति च तथाऽऽतपात् ॥
तेषां तु द्वारपालानामेकः शोकसमन्वितः ।
मध्यंगतमिवादित्यं दृष्ट्वा शुकमवस्थितम् ॥ २९
पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां प्रथमां राजवेश्मनः ॥ ३०
तत्रासीनः शुकस्तात मोक्षमेवान्वचिन्तयत् ।
छायायामातपे चैव समदर्शी समद्युतिः ॥ ३१
तं मुहूर्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां द्वितीयां राजवेश्मनः ॥ ३२
तत्रान्तःपुरसंबद्धं महच्चैत्ररथोपमम् ।
सुविभक्तजलाक्रीडं रम्यं पुष्पितपादपम् ॥ ३३
तं दर्शयित्वा स शुकं मन्त्री जनकमुत्तमम् ।
अर्हमासनमादिश्य निश्चक्राम ततः पुनः ॥ ३४
तं चारुवेषाः सुश्रोण्यस्तरुण्यः प्रियदर्शनाः ।
सूक्ष्मरक्ताम्बरधरास्तप्तकाञ्चनभूषणाः ॥ ३५
संलापालापकुशला नृत्तगीतविशारदाः ।
स्मितपूर्वाभिभाषिण्यो रूपेणाप्सरसां समाः ॥ ३६
भावोपचारकुशला भावज्ञाः सर्वकोविदाः ।
परं पञ्चाशतं नार्यो वारमुख्याः समाद्रवन् ॥ ३७
पाद्यादीनि प्रतिग्राह्य पूजया परयाऽर्चयन् ।
कालोपपन्नेन तदा स्वाद्वन्नेनाभ्यतर्पयन् ॥ ३८
तस्य भुक्तवतस्तात तदन्तःपुरकाननम् ।
सुरम्यं दर्शयामासुरेकैकश्येन भारत ॥ ३९
क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चापि ताः शुभम् ।
उदारसत्वं सत्वज्ञाः स्त्रियः पर्यचरंस्तथा ॥ ४०
आरणेयस्तु शुद्धात्मा निःसंदेहस्त्रिकर्मकृत् ।
वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ४१
तस्मै शय्यासनं दिव्यं वरार्हं रत्नभूषितम् ।
स्पर्ध्यास्तरणसंकीर्णं ददुस्ताः परमस्त्रियः ॥ ४२
पादशौचं तु कृत्वैव शुकः संध्यामुपास्य च ।
निषसादासने पुण्ये तमेवार्थं विचिन्तयन् ॥ ४३
पूर्वरात्रे तु तत्रासौ हुत्वा ध्यानपरायणः ।
मध्यरात्रे यथान्यायं निद्रामाहारयत्प्रभुः ॥ ४४
ततो मुहूर्तादुत्थाय कृत्वा शौचमनन्तरम् ।
स्त्रीभिः परिवृतो धीमान्ध्यानमेवान्वपद्यत ॥ ४५
अनेन विधिना कार्ष्णिस्तदहःशेषमच्युतः ।
तां च रात्रिं नृपकुले वर्तयामास भारत ॥ ४६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥

## चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥

जनकेन शुकंप्रति मोक्षसाधनीभूताश्रमधर्मकथनपूर्वकं शुकप्रशंसनम् ॥ १ ॥

भीष्म उवाच ।
ततः स राजा जनको मन्त्रिभिः सह भारत ।
पुरोहितं पुरस्कृत्य सर्वाण्यन्तःपुराणि च ॥ १
आसनं च पुरस्कृत्य रत्नानि विविधानि च ।

तं भारं जिज्ञासाख्यम् । अर्थं मोक्षम् ॥ २४ ॥ नोपैति च तथा रुषमिति ङ. ध. पाठः ॥ २८ ॥ कालोपचारकुशला इति ङ. पाठः ॥ ३७ ॥ आरणेयः अरणिजः शुकः ॥ ४१ ॥ देवार्हं रत्नभूषितमिति झ. पाठः ॥ ४२ ॥ भूत्वा ध्यानपरायण इति झ. पाठः । अर्धरात्रे यथान्यायमिति ध. पाठः ॥ ४४ ॥ कार्ष्णिः शुकः । अच्युतो धैर्यादिति शेषः ॥ ४६ ॥ त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥

शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्यगात् ॥ २
स तदासनमादाय बहुरत्नविभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत् ॥ ३
पुरोधसा संगृहीतं हस्तेनालभ्य पार्थिवः ।
प्रददौ गुरुपुत्राय शुकाय परमार्चितम् ॥ ४
तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रतिपूज्य च ।
पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत् ॥ ५
स च तां मन्त्रवत्पूजां प्रत्यगृह्णाद्यथाविधि ।
प्रतिगृह्य तु तां पूजां जनकाद्द्विजसत्तमः ॥ ६
गां चैव समनुज्ञाय राजानमनुमान्य च ।
पर्यपृच्छन्महातेजा राज्ञः कुशलमव्ययम् ॥ ७
अनामयं च राजेन्द्र शुकः सानुचरस्य ह ।
अनुज्ञातः स तेनाथ निषसाद सहानुगः ॥ ८
उदारसत्त्वाभिजनो भूमौ राजा कृताञ्जलिः ।
कुशलं चाव्ययं चैव पृष्ट्वा वैयासकिं नृपः ।
किमागमनमित्येवं पर्यपृच्छत पार्थिवः ॥ ९
शुक उवाच ।
पित्राऽहमुक्तो भद्रं ते मोक्षधर्मार्थकोविदः ।
विदेहराजो याज्यो मे जनको नाम विश्रुतः॥१०
तत्र गच्छस्व वै तूर्णं यदि ते हृदि संशयः ।
प्रवृत्तौ वा निवृत्तौ वा स ते च्छेत्स्यति संशयं ११
सोहं पितुर्नियोगात्त्वामुपप्रष्टुमिहागतः ।
तन्मे धर्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि ॥ १२
किं कार्यं ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः ।
कथं च मोक्षः प्राप्तव्यो ज्ञानेन तपसाऽथवा १३
जनक उवाच ।
यत्कार्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु ।
कृतोपनयनस्तात भवेद्वेदपरायणः ॥ १४
तपसा गुरुवृत्त्या च ब्रह्मचर्येण चाभिभो ।
देवतानामृषीणां चाप्यनृणो ह्यनसूयकः ॥ १५
वेदानधीत्य नियतो दक्षिणामपवर्ज्य च ।
अभ्यनुज्ञामथ प्राप्य समावर्तेत वै द्विजः ॥ १६
समावृत्तश्च गार्हस्थ्ये स्वदारनिरतो वसेत् ।
अनसूयुर्यथान्यायमाहिताग्निरनावृतः ॥ १७
उत्पाद्य पुत्रं पौत्रं तु वन्याश्रमपदे वसेत् ।
तानेवाग्नीन्यथाशास्त्रमर्चयन्नतिथिप्रियः ॥ १८
स वनेऽग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित् ।
निर्द्वन्द्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत् ॥ १९
शुक उवाच ।
उत्पन्ने ज्ञानविज्ञाने प्रत्यक्षे हृदि शाश्वते ।
किमवश्यं निवस्तव्यमाश्रमेषु वनेषु वा ॥ २०
एतद्भवन्तं पृच्छामि तद्भवान्वक्तुमर्हति ।
यथा वेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप ॥ २१
जनक उवाच ।
न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत् ।
न विना गुरुसंबन्धं ज्ञानस्याधिगमः स्मृतः ॥२२
गुरुः प्लावयिता तस्य ज्ञानं प्लव इहोच्यते ।
विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् ॥ २३
अनुच्छेदाय लोकानामनुच्छेदाय कर्मणाम् ।
पूर्वैराचरितो धर्मश्चातुराश्रम्यसंश्रितः ॥ २४
अनेन क्रमयोगेन बहुजातिषु कर्मणाम् ।
कृत्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते ॥ २५
भावितैः करणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ २६
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ।
त्रिष्वाश्रमेषु कोऽन्वर्थो भवेत्परमभीप्सतः ॥२७
राजसांस्तामसांश्चैव नित्यं दोषान्विवर्जयेत् ।
सात्त्विकं मार्गमास्थाय पश्येदात्मानमात्मना २८
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
संपश्यन्नोपलिप्येत जले वारिचरो यथा ॥ २९
पक्षिवत्प्रायणादूर्ध्वममुत्रानन्त्यमश्नुते ।
विहाय देहान्निर्मुक्तो निर्द्वन्द्वः प्रशमं गतः ॥ ३०
अत्र गाथाः पुरा गीताः शृणु राज्ञा ययातिना ।
धार्यन्ते या द्विजैस्तात मोक्षशास्त्रविशारदैः ॥ ३१

राज्ये कुशलमव्ययमिति ध. पाठः ॥ ७ ॥ मोक्षः कर्तव्य इति ट. ड. थ. पाठः ॥ १३ ॥ आचार्यः प्रापिता तस्येति ध. पाठः ॥ २३ ॥

ज्योतिरात्मनि नान्यत्र सर्वजन्तुषु तत्समम् ।
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा ॥ ३२
न बिभेति परो यस्मान्न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तु सः ॥ ३३
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ३४
संयोज्य मनसाऽऽत्मानमीर्ष्यामुत्सृज्य मोहनीम् ।
त्यक्त्वा कामं च मोहं च ततो ब्रह्मत्वमश्नुते॥ ३५
यदा श्राव्ये च दृश्ये च सर्वभूतेषु चाप्ययम् ।
समो भवति निर्द्वन्द्वो ब्रह्म संपद्यते तदा ॥ ३६
यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ।
काञ्चनं चायसं चैव सुखं दुःखं तथैव च ॥ ३७
शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम् ।
जीवितं मरणं चैव ब्रह्म संपद्यते तदा ॥ ३८
प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ।
तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ॥३९
तमःपरिगतं वेश्म यथा दीपेन दृश्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम्॥४०
एतत्सर्वं च पश्यामि त्वयि बुद्धिमतां वर ।
यच्चान्यदपि नोक्तं मे तत्त्वतो वेद तद्भवान् ४१
ब्रह्मर्षे विदितश्चासि विषयान्तमुपागतः ।
गुरोस्तव प्रसादेन तव चैवोपशिक्षया ॥ ४२
तस्यैव च प्रसादेन प्रादुर्भूतं महात्मनः ।
ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ॥ ४३
अधिकं तव विज्ञानमधिका च गतिस्तव ।
अधिकं तव चैश्वर्यं तच्च त्वं नावबुध्यसे ॥ ४४
बाल्याद्वा संशयाद्वापि भयाद्वाऽप्यविमोक्षणात् ।
उत्पन्ने चापि विज्ञाने नाधिगच्छति तां गतिं ॥४५
व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः ।
विमुच्य हृदयग्रन्थीनासादयति तां गतिम् ॥ ४६
भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः ।
व्यवसायादृते ब्रह्मन्नासादयति तत्परम् ॥ ४७
नास्ति ते सुखदुःखेषु विशेषो नास्ति लोलुपः ।
नौत्सुक्यं नृत्यगीतेषु न राग उपजायते ॥ ४८
न बन्धुष्वनुबन्धस्ते न भयेष्वस्ति ते भयम् ।
पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनम् ४९
अहं त्वामनुपश्यामि ये चाप्यन्ये मनीषिणः ।
आस्थितं परमं मार्गमक्षयं तमनामयम् ॥ ५०
यत्फलं ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः ।
तस्मिन्वै वर्तसे विप्र किमन्यत्परिपृच्छसि ॥ ५१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥

## पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥

जनकाभ्यनुज्ञातेन शुकेन व्यासमेत्य स्वस्य जनकेन सह संवादप्रकारकथनम् ॥ १ ॥ व्यासस्य वैशंपायनादिभिः सह संवादः ॥ २ ॥

भीष्म उवाच ।
एतच्छ्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः ।
आत्मनाऽऽत्मानमास्थाय दृष्ट्वा चात्मानमात्मना॥ १
कृतकार्यः सुखी शान्तस्तूष्णीं प्रायादुदङ्मुखः ।
शैशिरं गिरिमुद्दिश्य सधर्मा मातरिश्वनः ॥ २
एतस्मिन्नेव काले तु देवर्षिर्नारदस्तथा ।
हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितम् ॥ ३
तमप्सरोगणाकीर्णं गीतस्वननिनादितम् ।
किन्नराणां सहस्रैश्च भृङ्गराजैस्तथैव च ॥ ४
मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः ॥ ५

नान्यत्र रतं तत्रैव चैव तत् इति ध. पाठ ॥ ३२ ॥ यच्चान्यदपि वेत्तव्यमिति झ. पाठः ॥ ४१ ॥ अधिकं भवति ज्ञानमिति ङ. थ. पाठः ॥ ४४ ॥ तद्विधश्छिन्नसंशय इति ध. पाठः ॥ ४६ ॥ नास्ति लोलुप इति ध. पाठः ॥ ४८ ॥ चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥

शैशिरं गिरिं हिमालयम् ॥ २ ॥ सहस्रैश्च राजहँसैस्तथैव चेति ङ. पाठः ॥ ४ ॥

चित्रवर्णैर्मयूरैश्च केकाशतविराजितैः ।
राजहंससमूहैश्च हृष्टैः परभृतैस्तथा ॥ ६
पक्षिराजो गरुत्मांश्च यं नित्यमधितिष्ठति ।
चत्वारो लोकपालाश्च देवाः सर्षिगणास्तथा ॥ ७
तत्र नित्यं समायान्ति लोकस्य हितकाम्यया ।
विष्णुना यत्र पुत्रार्थे तपस्तप्तं महात्मना ॥ ८
तत्रैव च कुमारेण बाल्ये क्षिप्ता दिवौकसः ।
शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमन्य वै ॥ ९
तत्रोवाच जगत्स्कन्दः क्षिपन्वाक्यमिदं तदा ।
योऽन्योस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रियाः
यो ब्रह्मण्यो द्वितीयोऽस्ति त्रिषु लोकेषु वीर्यवान् ।
सोभ्युद्धरत्विमां शक्तिमथवा कम्पयत्विति ॥ ११
तच्छ्रुत्वा व्यथिता लोकाः क इमामुद्धरेदिति ।
अथ देवगणं सर्वं संभ्रान्तेन्द्रियमानसम् ॥ १२
अपश्यद्भगवान्विष्णुः क्षिप्तं सासुरराक्षसम् ।
किंन्वत्र सुकृतं कार्यं भवेदिति विचिन्तयन् ॥ १३
अनामृष्य ततः क्षेपमवैक्षत च पावकिम् ।
संप्रगृह्य विशुद्धात्मा शक्तिं प्रज्वलितां तदा ॥ १४
कम्पयामास सव्येन पाणिना पुरुषोत्तमः ।
शक्त्यां तु कम्प्यमानायां विष्णुना बलिना तदा १५
मेदिनी कम्पिता सर्वा सशैलवनकानना ।
शक्तेनापि समुद्धर्तुं कम्पिता साऽभवत्तदा ॥ १६
रक्षिता स्कन्दराजस्य धर्षणा प्रभविष्णुना ।
तां कम्पयित्वा भगवान्प्रह्लादमिदमब्रवीत् ॥ १७
पश्य वीर्यं कुमारस्य नैतदन्यः करिष्यति ।
सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः ॥ १८
जग्राह तां तदा शक्तिं न चैनामभ्यकम्पयत् ।
नादं महान्तं मुक्त्वा स मूर्छितो गिरिमूर्धनि ॥ १९
विह्वलः प्रापतद्भूमौ हिरण्यकशिपोः सुतः ।
तत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः ॥ २०
तपोऽतप्यत दुर्धर्षं तात नित्यं वृषध्वजः ।
पावकेन परिक्षिप्तं दीप्यता यस्य चाश्रमम् ॥ २१
आदित्यपर्वतं नाम दुर्धर्षमकृतात्मभिः ।

आसीदिति शेषः ॥ २५ ॥

न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः ॥ २२
दशयोजनविस्तारमग्निज्वालसमावृतम् ।
भगवान्पावकस्तत्र स्वयं तिष्ठति वीर्यवान् ॥ २३
सर्वान्विघ्नान्प्रशमयन्महादेवस्य धीमतः ।
दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः ॥ २४
देवान्संतापयंस्तत्र महादेवो महाव्रतः ।
ऐन्द्रीं तु दिशमास्थाय शैलराजस्य धीमतः ॥ २५
विविक्ते पर्वततटे पाराशर्यो महातपाः ।
वेदानध्यापयामास व्यासः शिष्यान्महातपाः २६
सुमन्तुं च महाभागं वैशंपायनमेव च ।
जैमिनिं च महाप्राज्ञं पैलं चापि तपस्विनम् ॥ २७
एभिः शिष्यैः परिवृतो व्यास आस्ते महातपाः ।
तत्राश्रमपदं रम्यं ददर्श पितुरुत्तमम् ।
आरणेयो विशुद्धात्मा नभसीव दिवाकरः ॥ २८
अथ व्यासः परिक्षिप्तं ज्वलन्तमिव पावकम् ।
ददृशे सुतमायान्तं दिवाकरसमप्रभम् ॥ २९
असज्जमानं वृक्षेषु शैलेषु विषयेषु च ।
योगयुक्तं महात्मानं यथा बाणं गुणच्युतम् ॥ ३०
सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः ।
यथोपजोषं तैश्चापि समागच्छन्महामुनिः ॥ ३१
ततो निवेदयामास पित्रे सर्वमशेषतः ।
शुको जनकराजेन संवादं प्रीतमानसः ॥ ३२
एवमध्यापयञ्शिष्यान्व्यासः पुत्रं च वीर्यवान् ।
उवास हिमवत्पृष्ठे पाराशर्यो महामुनिः ॥ ३३
ततः कदाचिच्छिष्यास्तं परिवार्यावतस्थिरे ।
वेदाध्ययनसंपन्नाः शान्तात्मानो जितेन्द्रियाः ३४
वेदेषु निष्ठां संप्राप्य साङ्गेष्वपि तपस्विनः ।
अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुम् ३५
शिष्या ऊचुः ।
महता तेजसा युक्ता यशसा चापि वर्धिताः ।
एकं त्विदानीमिच्छामो गुरुणाऽनुग्रहं कृतम् ३६
इति तेषां वचः श्रुत्वा ब्रह्मर्षिस्तानुवाच ह ।
उच्यतामिति तद्वत्सा यद्वः कार्यं प्रियं मया ३७

पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥

एतद्वाक्यं गुरोः श्रुत्वा शिष्यास्ते हृष्टमानसाः ।
पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुम् ॥३८
ऊचुस्ते सहिता राजन्निदं वचनमुत्तमम् ।
यदि प्रीत उपाध्यायो धन्याः स्मो मुनिसत्तम ॥ ३९
काङ्क्षामस्तु वयं सर्वे वरं दत्तं महर्षिणा ।
षष्ठः शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीद नः॥
चत्वारस्ते वयं शिष्या गुरुपुत्रश्च पञ्चमः ।
इह वेदाः प्रतिष्ठेरन्नेष नः काङ्क्षितो वरः ॥ ४१
शिष्याणां वचनं श्रुत्वा व्यासो वेदार्थतत्त्ववित् ।
पराशरात्मजो धीमान्परलोकार्थचिन्तकः ॥ ४२
उवाच शिष्यान्धर्मात्मा धर्म्यं नैःश्रेयसं वचः ।
ब्राह्मणाय सदा देयं ब्रह्म शुश्रूषवे तथा ॥ ४३
ब्रह्मलोके निवासं यो ध्रुवं समभिकाङ्क्षते ।
भवन्तो बहुलाः सन्तु वेदो विस्तार्यतामयम् ॥ ४४
नाशिष्ये संप्रदातव्यो नाव्रते नाकृतात्मनि ।
एते शिष्यगुणाः सर्वे विज्ञातव्या यथार्थतः ।
नापरीक्षितचारित्रे विद्या देया कथंचन ॥ ४५
यथा हि कनकं शुद्धं तापच्छेदनिकर्षणैः ।
परीक्षेत तथा शिष्यानीक्षेत्कुलगुणादिभिः ॥ ४६
न नियोज्याश्च वः शिष्या अनियोगे महाभये ।
यथामति यथापाठं तथा विद्या फलिष्यति ॥ ४७
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ॥ ४८
वेदस्याध्ययनं हीदं तच्च कार्यं महत्स्मृतम् ।
स्तुत्यर्थमिह देवानां वेदाः सृष्टाः स्वयंभुवा ॥ ४९
यो निर्वदेत संमोहाद्ब्राह्मणं वेदपारगम् ।
सोऽभिध्यानाद्ब्राह्मणस्य पराभूयादसंशयम् ॥५०
यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥ ५१
एतद्वः सर्वमाख्यातं स्वाध्यायस्य विधिं प्रति ।
उपकुर्याच्च शिष्याणामेतच्च हृदि वो भवेत् ॥५२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥

---

## षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥

वैशंपायनादिशिष्यप्रवासेन विमनसं व्यासंप्रति नारदस्यागमनम् ॥ १ ॥

भीष्म उवाच ।
एतच्छ्रुत्वा गुरोर्वाक्यं व्यासशिष्या महौजसः ।
अन्योन्यं हृष्टमनसः परिषस्वजिरे तदा ॥ १
उक्ताः स्मो यद्भगवता तदात्वायतिसंहितम् ।
तन्नो मनसि संरूढं करिष्यामस्तथा च तत् ॥ २
अन्योन्यं संविभाष्यैवं सुप्रीतमनसः पुनः ।
विज्ञापयन्ति स्म गुरुं पुनर्वाक्यविशारदाः ॥ ३
शैलादस्मान्महीं गन्तुं काङ्क्षितं नो महामुने ।
वेदाननेकधा कर्तुं यदि ते रुचितं प्रभो ॥ ४
शिष्याणां वचनं श्रुत्वा पराशरसुतः प्रभुः ।
प्रत्युवाच ततो वाक्यं धर्मार्थसहितं हितम् ॥ ५
क्षितिं वा देवलोकं वा गम्यतां यदि रोचते ।
अप्रमादश्च वः कार्यो ब्रह्म हि प्रचुरच्छलम् ॥ ६
तेऽनुज्ञातास्ततः सर्वे गुरुणा सत्यवादिना ।
जग्मुः प्रदक्षिणं कृत्वा व्यासं मूर्ध्नाऽभिवाद्य च ७
अवतीर्य महीं तेऽथ चातुर्होत्रमकल्पयन् ।
संयाजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा ॥ ८
पूज्यमाना द्विजैर्नित्यं मोदमाना गृहे रताः ।
याजनाध्यापनरताः श्रीमन्तो लोकविश्रुताः ॥ ९
अवतीर्णेषु शिष्येषु व्यासः पुत्रसहायवान् ।
तूष्णीं ध्यानपरो धीमानेकान्ते समुपाविशत् ॥ १०
‘एतस्मिन्नेव काले तु देवर्षिर्नारदस्तथा ।
हिमवन्तमगं द्रष्टुं सिद्धचारणसेवितम् ॥’ ११
तं ददर्शाश्रमपदे नारदः सुमहातपाः ।

---

तदात्वायतिसंहितम् तदात्वे तत्काले आयतौ उत्तरकाले च संहितं सम्यक्हितम् ॥ २ ॥

अथैनमब्रवीत्काले मधुराक्षरया गिरा ॥ १२
भोभो महर्षे वासिष्ठ ब्रह्मघोषो न वर्तते ।
एको ध्यानपरस्तूष्णीं किमास्से चिन्तयन्निव॥१३
ब्रह्मघोषैर्विरहितः पर्वतोऽयं न शोभते ।
रजसा तमसा चैव सोमः सोपप्लवो यथा ॥ १४
न भ्राजते यथापूर्वं निषादानामिवालयः ।
देवर्षिगणजुष्टोऽपि वेदध्वनिविनाकृतः ॥ १५
ऋषयश्च हि देवाश्च गन्धर्वाश्च महौजसः ।
वियुक्ता ब्रह्मघोषेण न भ्राजन्ते यथा पुरा ॥ १६
नारदस्य वचः श्रुत्वा कृष्णद्वैपायनोऽब्रवीत् ।
महर्षे यत्त्वया प्रोक्तं वेदवादविचक्षण ॥ १७
एतन्मनोऽनुकूलं मे भवानर्हति भाषितुम् ।
सर्वज्ञः सर्वदर्शी च सर्वत्र च कुतूहली ॥ १८
त्रिषु लोकेषु यद्वृत्तं सर्वं तव मते स्थितम् ।
तदाज्ञापय विप्रर्षे ब्रूहि किं करवाणि ते ॥ १९
यन्मया समनुष्ठेयं ब्रह्मर्षे तदुदाहर ।
वियुक्तस्येह शिष्यैर्मे नातिहृष्टमिदं मनः ॥ २०
नारद उवाच ।
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।
मलं पृथिव्या बाह्लीकाः स्त्रीणां कौतूहलं मलम्२१
अधीयतां भवान्वेदान्सार्धं पुत्रेण धीमता ।
विधुन्वन्ब्रह्मघोषेण रक्षोभयकृतं तमः ॥ २२
भीष्म उवाच ।
नारदस्य वचः श्रुत्वा व्यासः परमधर्मवित् ।
तथेत्युक्त्वाऽथ संहृष्टो वेदाभ्यासे दृढव्रतः॥ २३
*उवाच च महाप्राज्ञं नारदं पुनरेव हि ॥ २४
मलं पृथिव्या बाह्लीका इत्युक्तमधुना त्वया ।
कीदृशाश्चैव बाह्लीका ब्रूहि मे वदतां वर ॥ २५
नारद उवाच ।
अस्यां पृथिव्यां चत्वारो देशाः पापजनैर्वृताः ।
युगन्धरस्तु प्रथमस्तथा भूतिलकः स्मृतः ॥ २६
अच्युतच्छल इत्युक्तस्तृतीयः पापकृत्तमः ।
चतुर्थस्तु महापापो बाह्लीक इति संज्ञितः ॥ २७
मृगोष्ट्रगर्दभक्षीरं पिबन्त्यस्य युगन्धरे ।
एवकर्णास्तु दृश्यन्ते जना वै ह्यच्युतस्थले ॥ २८
मेहन्ति च मलं पापा विसृजन्ति जलेषु वै ।
नित्यं भूतिलकेत्यन्नं तज्जलं च पिबन्ति च ॥२९
हरिबाह्यास्तु बाहीका न स्मरन्ति हरिं क्वचित् ।
ऐहलौकिकमोक्षं ते मांसशोणितवर्धनाः ।
वृथा जाता भविष्यन्ति बाह्लीका इति विश्रुताः३०
पुष्कराहारनिरताः पिशाचा यद्भाषते ।
मुसुण्ठीं परिगृह्योग्रां तच्छृणुष्व महामुने ॥ ३१
ब्राह्मणीं बहुपुत्रां तां पुष्करे स्नातुमागताम् ।
युगन्धरे पयः पीत्वा ह्युषिता ह्यच्युतस्थले ॥३२
तथा भूतिलके स्नात्वा बाहीकांश्च निरीक्ष्य वै ।
आगताऽसि तथा स्नातुं कथं स्वर्गं न गच्छसि ॥ ३३
इत्युक्त्वा ब्राह्मणीभाण्डं पोथयित्वा मुसुण्ठिना ।
उवाच क्रोधताम्राक्षी पिशाची तीर्थपालिका॥३४
एतत्तु ते दिवावृत्तं रात्रौ वृत्तमथान्यथा ।
गच्छ बाहीकसंसर्गादशुचित्वं न संशयः ॥ ३५
यद्द्विषन्ति महात्मानं न स्मरन्ति जनार्दनम् ।
न तेषां पुण्यतीर्थेषु गतिः संसर्गिणामपि ॥ ३६
उद्युक्ता ब्राह्मणी भीता प्रतियाता सुतैः सह ।
स्वदेहस्था जजापैवं सपुत्रा ध्यानतत्परा ॥ ३७
अनन्तस्य हरेः शुद्धं नाम वै द्वादशाक्षरम् ।
वत्सरत्रितये पूर्णे ब्राह्मणी पुनरागता ॥ ३८
सपुत्रा पुष्करद्वारं पिशाच्याह तथागतम् ।
नमस्ते ब्राह्मणि शुभे पूताऽहं तव दर्शनात् ॥ ३९
कुरु तीर्थाभिषेकं च सपुत्रा पापवर्जिता ।
हरेर्नाम्ना च मां साध्वी जलेन स्प्रष्टुमर्हसि ॥४०
इत्युक्ता ब्राह्मणी हृष्टा पुत्रैः सह शुभव्रता ।
जलेन प्रोक्षयामास द्वादशाक्षरसंयुतम् ॥ ४१
तत्क्षणादभवच्छुद्धा पिशाची दिव्यरूपिणी ।
अप्सरा ह्यभवद्दिव्या गता स्वर्लोकमुत्तमम् ॥ ४२

सोपप्लवो राहुग्रस्तः ॥ १४ ॥ वेदध्वनिनिराकृत इति झ. ट. पाठः ॥ १५ ॥ तदाज्ञापय देवर्षे इति ड. पाठः ॥ १९ ॥ पृथिव्या वाहीका इति ड. पाठः ॥ २१ ॥ अधीयता भवानिति झ. ड. पाठः । रजोभयकृतं तम इति ध. पाठः ॥ २२ ॥

* २३ तमश्लोकादुपरि ४४ तमश्लोकात्पूर्वं वर्तमानाः सार्धविंशतिश्लोका ध. पुस्तक एव दृश्यन्ते ।

ब्राह्मणी चैव कालेन वासुदेवपरायणा ।
सपुत्रा चागता स्थानमच्युतस्य शुभं परम् ॥४३
एतत्ते कथितं विद्वन्मुने कालोऽयमागतः ॥ ४४
गमिष्येऽहं महाप्राज्ञ आगमिष्यामि वै पुनः ।
इत्युक्त्वा स जगामाथ नारदो वदतांवरः ॥ ४५
द्वैपायनस्तु भगवांस्तच्छ्रुत्वा मुनिसत्तमात् ।'
शुकेन सह पुत्रेण वेदाभ्यासमथाकरोत् ।
स्वरेणोच्चैः सशैक्ष्येण लोकानापूरयन्निव ॥ ४६
तयोरभ्यसतोरेव नानाधर्मप्रवादिनोः ।
वातोऽतिमात्रं प्रववौ समुद्रानिलवेजितः ॥ ४७
ततोऽनध्याय इति तं व्यासः पुत्रमवारयत् ।
शुको वारितमात्रस्तु कौतूहलसमन्वितः ॥ ४८
अपृच्छत्पितरं ब्रह्मन्कुतो वायुरभूदयम् ।
आख्यातुमर्हति भवान्वायोः सर्वं विचेष्टितम् ४९
शुकस्यैतद्वचः श्रुत्वा व्यासः परमधर्मवित् ।
अनध्यायनिमित्तेऽस्मिन्निदं वचनमब्रवीत् ॥ ५०
दिव्यं ते चक्षुरुत्पन्नं स्वस्थं ते निश्चलं मनः ।
तमसा रजसा चापि त्यक्तः सत्वे व्यवस्थितः ५१
आदर्शे स्वामिव च्छायां पश्यस्यात्मानमात्मना ।
न्यस्यात्मनि स्वयं चेतो बुद्ध्या समनुचिन्तय ५२
देवयानपथो विष्णुः पितृयानपथो रविः ।
द्वावेतौ प्रेत्य पन्थानौ दिवं चाधश्च गच्छतः ५३
पृथिव्यामन्तरिक्षे च यत्र संवान्ति वायवः ।
सप्तैते वायुमार्गा वै तान्निबोधानुपूर्वशः ॥ ५४
तत्र देवगणाः साध्याः संबभूवुर्महाबलाः ।
तेषामप्यभवत्पुत्रः समानो नाम दुर्जयः ॥ ५५
उदानस्तस्य पुत्रोऽभूद्व्यानस्तस्याभवत्सुतः ।
अपानश्च ततो ज्ञेयः प्राणश्चापि ततोऽपरः ॥५६
अनपत्योऽभवत्प्राणो दुर्धर्षः शत्रुतापनः ।
पृथक्कर्माणि तेषां तु प्रवक्ष्यामि यथातथम् ॥५७
प्राणिनां सर्वतो वायुश्चेष्टां वर्तयते पृथक् ।
प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते ॥ ५८

प्रेरयत्यभ्रसंघातान्धूमजांश्चोष्मजांश्च यः ।
प्रथमः प्रथमे मार्गे आवहो नाम योऽनिलः ॥ ५९
अम्बरे स्नेहमभ्रेभ्यस्तडिद्भ्यश्च महाद्युतिः ।
प्रवहो नाम संवाति द्वितीयश्च सतोयदः ॥ ६०
उदयं ज्योतिषां शश्वत्सोमादीनां करोति यः ।
अन्तर्देहेषु चोदानं यं वदन्ति मनीषिणः ॥ ६१
यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम् ।
उद्धृत्याददते चापो जीमूतेभ्योऽम्बरेऽनिलः॥६२
योऽद्भिः संयोज्य जीमूतान्पर्जन्याय प्रयच्छति ।
उद्वहो नाम वर्षिष्ठस्तृतीयः स सदागतिः ॥ ६३
समुह्यमाना बहुधा येन नीताः पृथग्घनाः ।
वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः ॥ ६४
संहता येन चाविद्धा भवन्ति नदनान्तराः ।
रक्षणार्थाय संभूता मेघत्वमुपयान्ति च ॥ ६५
योऽसौ वहति देवानां विमानानि विहायसा ।
चतुर्थः संवहो नाम वायुः स गिरिमर्दनः ॥६६
येन वेगवता तूर्णं रूक्षेणारुजता रसान् ।
वायुना विहता मेघा न भवन्ति बलाहकाः॥६७
दारुणोत्पातसंचारो नभसः स्तनयित्नुमान् ।
पञ्चमः स महावेगो विवहो नाम मारुतः ॥ ६८
यस्मिन्पारिप्लवा दिव्या भवन्त्यापो विहायसा ।
पुण्यं चाकाशगङ्गायास्तोयं विष्टभ्य तिष्ठति ॥६९
दूरात्प्रतिहतो यस्मिन्नेकरश्मिर्दिवाकरः ।
यो निरंशुः सहस्रस्य येन भाति वसुंधरा ॥ ७०
यस्मादाप्यायते सोमो योनिर्दिव्योऽमृतस्य यः ।
षष्ठः परिवहो नाम स वायुर्जयतांवरः ॥ ७१
सर्वप्राणभृतां प्राणान्योऽनुकाले निरस्यति ।
यस्य वर्त्मानुवर्तेते मृत्युवैवस्वतावुभौ ॥ ७२
सम्यगन्वीक्षतां बुद्ध्या शान्तयाऽध्यात्मचिन्तकाः
ध्यानाभ्यासाभिरामाणां योऽमृतत्वाय कल्पते ॥
यं समासाद्य वेगेन दिशामन्तं प्रपेदिरे ।
दक्षस्य दशपुत्राणां सहस्राणि प्रजापतेः ॥ ७४

समुद्रानिलवेगित इति ट. ड. पाठः ॥ ४७ ॥ पितरं प्रह्व इति ट. ड. पाठः । अपृच्छत्पितरं पुत्र इति ध. पाठः ॥ ४९ ॥ न्यस्यात्मनि स्वयं वेदानिति झ. पाठः ॥ ५२ ॥ अन्तर्देहेषु चोदानं द्वितीयश्च ततोऽनिल इति ध. पाठः ॥ ६१ ॥ सोमः क्षीणः संपूर्णमण्डल इति झ. पाठः ॥ ७१ ॥

येन सृष्टः पराभूतो यात्येव न निवर्तते ।
परावहो नाम परो वायुः स दुरतिक्रमः ॥ ७५
एवमेतेऽदितेः पुत्रा मारुताः परमाद्भुताः ।
अनारतं ते संवान्ति सर्वगाः सर्वधारिणः ॥ ७६
एतत्तु महदाश्चर्यं यदयं पर्वतोत्तमः ।
कम्पितः सहसा तेन वायुनाऽतिप्रवायता ॥७७
विष्णोर्निःश्वासवातोऽयं यदा वेगसमीरितः ।
सहसोदीर्यते तात जगत्प्रव्यथते तदा ॥ ७८
तस्माद्ब्रह्मविदो ब्रह्म नाधीयन्तेऽतिवायति ।
वायोर्वायुभयं ह्युक्तं ब्रह्म तत्पीडितं भवेत् ॥ ७९
एतावदुक्त्वा वचनं पराशरसुतः प्रभुः ।
उक्त्वा पुत्रमधीष्वेति व्योमगङ्गामगात्तदा ॥८०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥

## सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥

नारदेन शुकंप्रति ऋषिभ्यः सनत्कुमारोक्तहितवचनानुवादः ॥ १ ॥

भीष्म उवाच ।
एतस्मिन्नन्तरे भूते नारदः पुनरागमत् ।
शुकं स्वाध्यायनिरतं वेदार्थान्प्रष्टुमीप्सया ॥ १
देवर्षिं तु शुको दृष्ट्वा नारदं समुपस्थितम् ।
अर्घ्यपूर्वेण विधिना वेदोक्तेनाभ्यपूजयत् ॥ २
नारदोऽथाब्रवीत्प्रीतो ब्रूहि ब्रह्मविदां वर ।
केन त्वां श्रेयसा वत्स योजयामीति हृष्टवत् ॥३
नारदस्य वचः श्रुत्वा शुकः प्रोवाच भारत ।
अस्मिँल्लोके हितं यत्स्यात्तेन मां योक्तुमर्हसि ॥ ४
नारद उवाच ।
तत्त्वं जिज्ञासतां पूर्वमृषीणां भावितात्मनाम् ।
सनत्कुमारो भगवानिदं वचनमब्रवीत् ॥ ५
नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ६
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ।
सद्वृत्तिः समुदाचारः श्रेय एतदनुत्तमम् ॥ ७
मानुष्यमसुखं प्राप्य यः सज्जति न मुच्यते ।
नालं स दुःखमोक्षाय संयोगो दुःखलक्षणम् ॥८
सक्तस्य बुद्धिश्चलति मोहजालविवर्धनी ।
मोहजालावृतो दुःखमिह चामुत्र सोऽश्नुते ॥ ९
सर्वोपायात्तु कामस्य क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥१०
नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेच्च मत्सरात् ।
विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः ११
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम् ॥१२
सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत् ।
यद्भूतहितमत्यन्तमेतत्सत्यं मतं मम ॥ १३
सर्वारम्भपरित्यागी निराशीर्निष्परिग्रहः ।
येन सर्वं परित्यक्तं स विद्वान्स च पण्डितः ॥ १४
इन्द्रियैरिन्द्रियार्थान्यश्चरत्यात्मवशैरिह ।
आसज्जमानः शान्तात्मा निर्विकारः समाहितः १५
अत्मभूतैरतद्भूतः सह चैव विनैव च ।
स विमुक्तः परं श्रेयो नचिरेणाधिगच्छति ॥ १६
अदर्शनमसंस्पर्शस्तथाऽसंभाषणं सदा ।
यस्य भूतैः सह मुने स श्रेयो विन्दते परम् ॥१७
न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जन्म समासाद्य वैरं कुर्वीत केनचित् ॥ १८
आकिञ्चन्यं सुसंतोषो निराशीस्त्वमचापलम् ।
एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ॥१९
परिग्रहं परित्यज्य भव तात जितेन्द्रियः ।
अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् ॥२०

विष्णोर्निश्वासभूतोयमिति ध. पाठः ॥७८॥ ब्रह्मविदो वेदानिति झ. पाठः ॥ ७९ ॥ षट्त्रिंशदधिकत्रिशततमोऽध्यायः॥३३६॥ वेदार्थान्वक्तुमीप्सयेति ड. पाठः ॥ १ ॥ नास्ति सत्यात्परं तप इति ध. पाठः ॥ ६ ॥ यः सज्जति स मुह्यतीति झ. पाठः ॥ ८ ॥ सत्यस्य पालनं श्रेय इति ट. पाठः ॥ १३ ॥ इन्द्रियैरिन्द्रियार्थेभ्य इति ट. ड. पाठः ॥ १५ ॥

निरामिषा न शोचन्ति त्यजेदामिषमात्मनः ।
परित्यज्यामिषं सौम्य दुःखतापाद्विमोक्ष्यसे ॥२१
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ २२
गुणसङ्गेष्वनासक्त एकचर्यारतः सदा ।
ब्राह्मणो नचिरादेव सुखमायात्यनुत्तमम् ॥ २३
द्वन्द्वारामेषु भूतेषु य एको रमते मुनिः ।
विद्धि प्रज्ञानतृप्तं तं ज्ञानतृप्तो न शोचति ॥ २४
शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषम् ।
अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः ॥ २५
तत्र मृत्युवशो दुःखैः सततं समभिद्रुतः ।
संसारे पच्यते जन्तुस्तत्कथं नावबुध्यसे ॥ २६
अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः ।
अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे ॥ २७
संवेष्ट्यमानं बहुभिर्मोहात्तन्तुभिरात्मजैः ।
कोशकार इवात्मानं वेष्टयन्नावबुध्यसे ॥ २८
अलं परिग्रहेणेह दोषवान्हि परिग्रहः ।
कृमिर्हि कोशकारस्तु बध्यते स परिग्रहात् ॥२९
पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ३०
महाजालसमाकृष्टान्स्थले मत्स्यानिवोद्धृतान् ।
मोहजालसमाकृष्टान्पश्य जन्तून्सुदुःखितान् ॥३१
कुटुम्बं पुत्रदारांश्च शरीरं संचयाश्च ये ।
पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृतम् ॥ ३२
यदा सर्वान्परित्यज्य गन्तव्यमवशेन ते ।
अनर्थे किं प्रसक्तस्त्वं समर्थं नानुतिष्ठसि ॥ ३३
अविश्रान्तमनालम्बमपाथेयमदैशिकम् ।
तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥ ३४
न हि त्वां प्रस्थितं कश्चित्पृष्ठतोऽनुगमिष्यति ।
सुकृतं दुष्कृतं च त्वां यास्यन्तमनुयास्यतः॥ ३५
विद्या कर्म च शौचं च ज्ञानं च बहुविस्तरम् ।
अर्थार्थमनुसार्यन्ते सिद्धार्थश्च विमुच्यते ॥ ३६
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥
रूपकूलां मनःस्रोतां स्पर्शद्वीपां रसावहाम् ।
गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ॥ ३८
क्षमारित्रां सत्यमयीं धर्मस्थैर्यवटारकाम् ।
त्यागवाताध्वगां शीघ्रां नौतार्यां तां नदीं तरेत् ॥
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज॥४०
त्यज धर्ममसंकल्पादधर्मं चाप्यलिप्सया ।
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ ४१
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ ४२
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यज ॥ ४३
इदं विश्वं जगत्सर्वमजगच्चापि यद्भवेत् ।
महाभूतात्मकं सर्वं महद्यत्परमाणु च ॥ ४४
'महाभूतानि खं वायुरग्निरापस्तथा मही ।
षष्ठं तु चेतना या तु आत्मा सप्तममुच्यते ।'
अष्टमं तु मनो ज्ञेयं बुद्धिस्तु नवमी स्मृता ॥ ४५
इन्द्रियाणि च पञ्चैव तमः सत्त्वं रजस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ॥ ४६
सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैर्हि संहितः ।
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गणः ॥ ४७
एतैः सर्वैः समायुक्तः पुमानित्यभिधीयते ।
त्रिवर्गं तु सुखं दुःखं जीवितं मरणं तथा ॥ ४८
य इदं वेद तत्त्वेन स वेद प्रभवाप्ययौ ।
पारम्पर्येह बोद्धव्यं ज्ञानानां यच्च किंचन ॥ ४९
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ ५०
इन्द्रियैर्नियतैर्देही धाराभिरिव तर्प्यते ।
लोके विततमात्मानं लोकांश्चात्मनि पश्यति ॥ ५१
परावरदृशः शक्तिर्ज्ञानमूला न नश्यति ।

पञ्चारामेषु भूतेषु य एको रमते मुनिरिति ट. पाठः ॥ २४ ॥ विद्या कर्म च शौर्यं चेति ट. ड. पाठः ॥ ३६ ॥ क्षमैवाऽरित्राणि नौचालनदण्डा यस्याम् । धर्मस्थैर्यवटारकाम् इति ज्ञ. पाठः । तत्र धर्मस्थैर्यं वटारका नौकाकर्षणरज्जुर्यस्यां तामित्यर्थः । योगवाताध्वगां कृत्वेति ट. पाठः । नावं कृत्वा नदीं तरेदिति ध. पाठः ॥ ३९ ॥ महद्यत्परमाणुवदिति ट. थ. पाठः ॥ ४४ ॥

पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ॥ ५२
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ।
ज्ञानेन विविधान्क्लेशानतिवृत्तस्य मोहजान् ॥५३
लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते ।
अनादिनिधनं जन्तुमात्मनि स्थितमव्ययम् ॥ ५४
अकर्तारममूर्तं च भगवानाह तीर्थवित् ।
यो जन्तुः स्वकृतैस्तैस्तैः कर्मभिर्नित्यदुःखितः ५५
स दुःखप्रतिघातार्थं हन्ति जन्तूननेकधा ।
ततः कर्म समादत्ते पुनरन्यन्नवं बहु ॥ ५६
तप्यतेऽथ पुनस्तेन भुक्त्वा पथ्यमिवातुरः ।
अजस्रमेव मोहान्धो दुःखेषु सुखसंज्ञितः ॥ ५७
बध्यते मथ्यते चैव कर्मभिर्मन्थवत्सदा ।
ततो निबद्धः स्वां योनिं कर्मणामुदयादिह ॥ ५८
परिभ्रमति संसारं चक्रवद्बहुवेदनः ।
सत्वं निवृत्तबन्धस्तु निवृत्तश्चापि कर्मतः ॥ ५९
सर्ववित्सर्वजित्सिद्धो भव भावविवर्जितः ।
संयमेन नवं बन्धं निवर्त्य तपसो बलात् ।
संप्राप्ता बहवः सिद्धिमप्यबाधां सुखोदयाम् ॥६०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥

---

## अष्टत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥

नारदेन शुकंप्रति मोक्षमार्गप्रदर्शकहितोपदेशः ॥ १ ॥

नारद उवाच ।
अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ।
निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ॥ १
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ २
तस्मादनिष्टनाशार्थमितिहासं निबोध मे ।
तिष्ठते चेद्वशे बुद्धिर्लभते शोकनाशनम् ॥ ३
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः ॥ ४
द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् ।
न तानाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते ॥ ५
दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवर्धितं पश्येत्तथा क्षिप्रं विरज्यते ॥ ६
नार्थो न धर्मो न यशो योऽतीतमनुशोचति ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ ७
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि युज्यते ॥ ८
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ९
नाश्रु कुर्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु संततिम् ।
सम्यक्प्रपश्यतः सर्वं नाश्रुकर्मोपपद्यते ॥ १०
दुःखोपघाते शारीरे मानसे चाप्युपस्थिते ।
यस्मिन्न शक्यते कर्तुं यत्नस्तन्नानुचिन्तयेत् ॥ ११
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ १२
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ १३
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं प्रियसंसर्गो गृध्येत्तत्र न पण्डितः ॥ १४
न जानपदिकं दुःखमेकः शोचितुमर्हति ।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ १५
सुखाद्बहुतरं दुःखं जीविते नात्र संशयः ।

---

रिष्यते हिंस्यते ॥ ५४ ॥ तीर्थविन्मोक्षोपायवित् ॥ ५५ ॥ संयमेन धारणाध्यानसमाध्यात्मकेन । नवं दृष्टिमात्रेणोत्पन्नं ॥ ६० ॥ सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥

शान्तिपरमिति ध॰ पाठः ॥ १ ॥ ताननाद्रियमाणस्य स्नेहबन्ध इति ध. पाठः ॥ ५ ॥ शोकस्थानं हि वियत इति झ. ट. पाठः ॥ ८ ॥ द्वावनर्थौ इष्टरुग्यादिदेहविनाशः स्वशरीरतापश्च । शेषग्रन्थः स्पष्टार्थो व्याख्यातप्रायश्चेति न व्याख्यायते ॥ ९ ॥ दुःखोपघातैः शारीरैर्मानसैश्चाप्युपस्थिते इति ध. पाठः ॥ ११ ॥ चिन्त्यमानं हि नापैतीति ध. पाठः ॥ १२ ॥

स्निग्धत्वं चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ १६
परित्यजति यो दुःखं सुखं वाऽप्युभयं नरः ।
अभ्येति ब्रह्म सोऽत्यन्तं न तं शोचन्ति पण्डिताः १७
त्यजन्ते दुःखमर्था हि पालनेन च ते सुखाः ।
दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥ १८
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
अतृप्ता यान्ति विध्वंसं संतोषं यान्ति पण्डिताः १९
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥२०
अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् ।
तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः ॥ २१
निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति ।
स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ॥ २२
भूतेषु भावं संचिन्त्य ये बुद्ध्वा मनसः परम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिं २३
संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥२४
तथाऽप्युपायं संपश्येद्दुःखस्य परिमोक्षणे ।
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् ॥ २५
शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च ।
नोपभोगात्परं किंचिद्धनिनो वाऽधनस्य च ॥ २६
प्राक्संप्रयोगाद्भूतानां नास्ति दुःखं परायणम् ।
विप्रयोगात्तु सर्वस्य न शोचेत्प्रकृतिस्थितः ॥ २७
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचं च विद्यया ॥ २८
प्रणयं प्रतिसंहृत्य सस्निग्धेष्वितरेषु च ।
विचरेदसमुन्नद्धः स सुखी स च पण्डितः ॥ २९
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन यश्चरेत्स सुखी भवेत् ॥ ३०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥

---

## एकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥

नारदवचनाज्जातवैराग्येण शुकेन सूर्यमण्डलप्रविविक्षया व्यासनारदयोर्निवेदनपूर्वकं कैलासशिखरारोहणम् ॥ १ ॥

नारद उवाच ।
सुखदुःखविपर्यासो यदा समनुपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषम् ॥ १
स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति ।
जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् ॥ २
रुजन्ति हि शरीराणि रोगाः शारीरमानसाः ।
सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः ३
व्यथितस्य विधित्साभिस्त्रस्यतो जीवितैषिणः ।
अवशस्य विनाशाय शरीरमपकृष्यते ॥ ४
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः ॥५
व्यत्ययो ह्ययमत्यन्तं पक्षयोः शुक्लकृष्णयोः ।
जातान्मर्त्याञ्जरयति निमेषान्नावतिष्ठते ॥ ६
सुखदुःखानि भूतानामजरो जरयत्यसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ ७
अदृष्टपूर्वानादाय भावानपरिशङ्कितान् ।
इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति रात्रयः ॥ ८
योयदिच्छेद्यथाकाममयत्नाच्च तदाप्नुयात् ।
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम् ॥ ९
संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ॥
अपरे बालिशाः सन्तो निर्गुणाः पुरुषाधमाः ।
अशुभैरपि संयुक्ता दृश्यन्ते सर्वकामिनः ॥ ११

---

दुःखेन चापि त्यजते पालने न च ते सुखमिति ध. पाठः ॥ १८ ॥ भूतेष्वभावं संचिन्त्य ये बुद्ध्या तमसः परमिति ध. पाठः ॥ २३ ॥ नास्ति दुःखमनामयमिति ट. थ. ध. पाठः ॥ २७ ॥ अष्टत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥

विपर्यासः सुखे दुःखधीर्दुःखे सुखधीः ॥ १ ॥ विधित्साभिः पिपासाभिस्तृष्णाभिः ॥ ४ ॥ व्यत्ययः पौर्वापर्यम् ॥ ६ ॥ अशीभिरप्यसंयुक्ताः इति ध. पाठः ॥ ११ ॥

भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते ॥ १२
अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठते ।
कश्चित्कर्मानुसृत्यान्यो नाप्राप्यमधिगच्छति ॥१३
अपराधं समाचक्ष्व पुरुषस्य स्वभावतः ।
शुक्रमन्यत्र संभूतं पुनरन्यत्र गच्छति ॥ १४
तस्य योनौ प्रसक्तस्य गर्भो भवति वा न वा ।
आम्रपुष्पोपमा यस्य निर्वृत्तिरुपलभ्यते ॥ १५
केषांचित्पुत्रकामानामनुसन्तानमिच्छताम् ।
सिद्धौ प्रयतमानानां न चाण्डमुपजायते ॥ १६
गर्भाच्चोद्विजमानानां क्रुद्धादाशीविषादिव ।
आयुष्माञ्जायते पुत्रः कथं प्रेतः पितेव ह ॥ १७
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दश मासान्परिधृता जायन्ते कुलपांसनाः ॥ १८
अपरे धनधान्यानि भोगांश्च पितृसंचितान् ।
विपुलानभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ १९
अन्योन्यं समभिप्रेत्य मैथुनस्य समागमे ।
उपद्रव इवाविष्टो योनिं गर्भः प्रपद्यते ॥ २०
शीर्णं परशरीराणि च्छिन्नबीजं शरीरिणम् ।
प्राणिनं प्राणसंरोधे मांसश्लेष्मविचेष्टितम् ॥ २१
निर्दग्धं परदेहेऽपि परदेहं चलाचलम् ।
विनश्यन्तं विनाशान्ते नावि नावमिवाहितम् ॥२२
सङ्गत्या जठरे न्यस्तं रेतोबिन्दुमचेतनम् ।
केन यत्नेन जीवन्तं गर्भं त्वमिह पश्यसि ॥ २३
अन्नपानानि जीर्यन्ते यत्र भक्षाश्च भक्षिताः ।
तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्यते ॥ २४
गर्भे मूत्रपुरीषाणां स्वभावनियता गतिः ।
धारणे वा विसर्गे वा न कर्ता विद्यतेऽवशः ॥२५
स्रवन्ति ह्युदराद्गर्भा जायमानास्तथा परे ।
आगमेन तथाऽन्येषां विनाश उपपद्यते ॥ २६
एतस्माद्योनिसंबन्धाद्यो जीवः परिमुच्यते ।
प्रजां च लभते कांचित्पुनर्द्वन्द्वेषु सज्जति ॥ २७
स तस्य सहजातस्य सप्तमीं नवमीं दशाम् ।
प्राप्नुवन्ति ततः पञ्च न भवन्ति शतायुषः ॥२८
नाभ्युत्थाने मनुष्याणां योगाः स्युर्नात्र संशयः॥
व्याधिभिश्च विमथ्यन्ते व्याधैः क्षुद्रमृगा इव ॥२९
व्याधिभिर्भक्ष्यमाणानां त्यजतां विपुलं धनम् ।
वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ॥ ३०
ते चापि निपुणा वैद्याः कुशलाः संभृतौषधाः ।
व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्दिताः ॥
ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ३२
के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिणः ।
श्वापदानि दरिद्रांश्च प्रायो नार्ता भवन्ति ते ॥ ३३
पौरानपि दुराधर्षान्नृपतीनुग्रतेजसः ।
आक्रम्य खादन्ते रोगाः पशून्पशुपचा इव ॥ ३४
इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसा सहसा क्षिप्तं ह्रियमाणं बलीयसा ॥ ३५
न धनेन न राज्येन नोग्रेण तपसा तथा ।
स्वभावमतिवर्तन्ते ये नियुक्ताः शरीरिणः ॥ ३६
न म्रियेरन्न जीर्येरन्सर्वे स्युः सर्वकामिनः ।
नाप्रियं प्रतिपश्येयुरुत्थानस्य फले सति ॥ ३७
उपर्युपरि लोकस्य सर्वो भवितुमीहते ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ ३८
ऐश्वर्यमदमत्तांश्च मत्तान्मद्यमदेन च ।
अप्रमत्ताश्च शूराश्च विक्रान्ताः पर्युपासते ॥ ३९
क्लेशाः प्रतिनिवर्तन्ते केषांचिदसमीक्षिताः ।
स्वंस्वं न पुनरन्येषां न किंचिदधिगम्यते ॥ ४०

कर्मी कर्मानुसृत्यान्य इति थ. पाठः । कश्चिच्च कर्म कुर्वन्हि नाप्राप्यमिति ध. पाठः ॥ १३ ॥ कथं प्रेत्य इवाभवदिति झ. पाठः ॥१७॥ यो बीजं परिमुच्यत इति झ. पाठः ॥२७॥ सहजातस्य जन्मावन्तां तु वै दशामिति ध. पाठः । न भवन्ति गतायुष इति झ. पाठः ॥ २८ ॥ रोगाः स्युरिति ध. पाठः । योगाः सामर्थ्यानि ॥ २९ ॥ के वाहुर्विचिकित्सन्ते इति ट. ध. पाठः ॥ ३३ ॥ धीरानपि दुराधर्षानिति ध. पाठः ॥ ३४ ॥ अनाक्रन्दं वेदनया मूढम् ॥ ३५ ॥ स्वभावान्नातिवर्तन्ते ये नियुक्ताः शरीरिष्विति ट. थ. ध. पाठः ॥ ३६ ॥ उत्थानस्य फलं प्रति इति थ. ध. पाठः ॥ ३७ ॥ स्वंस्वं च पुनरन्येषामिति झ. पाठः ॥ ४० ॥

महच्च फलवैषम्यं दृश्यते कर्मसिद्धिषु ।
वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकागताः ४१
सर्वेषामृद्धिकामानामन्ये रथपुरःसराः ।
मनुजाश्च गतस्त्रीकाः शतशो विविधाः स्त्रियः ॥ ४२
द्वन्द्वारामेषु भूतेषु गच्छन्त्येकैकशो नराः ।
इदमन्यत्परं पश्य माऽत्र मोहं करिष्यसि ॥ ४३
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ ४४
एतत्ते परमं गुह्यमाख्यातमृषिसत्तम ।
येन देवाः परित्यज्य मर्त्यलोकं दिवं गताः ॥ ४५
नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान् ।
संचिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत ॥ ४६
पुत्रदारैर्महान्क्लेशो विद्याम्नाये महाञ्छ्रमः ।
किंनु स्याच्छाश्वतं स्थानमल्पक्लेशं महोदयम् ॥ ४७
ततो मुहूर्तं संचिन्त्य निश्चितां गतिमात्मनः ।
परावरज्ञो धर्मस्य परां नैःश्रेयसीं गतिम् ॥ ४८
कथं त्वहमसंश्लिष्टो गच्छेयं गतिमुत्तमाम् ।
नावर्तेयं यथा भूयो योनिसंसारसागरे ॥ ४९
परं भावं हि काङ्क्षामि यत्र नावर्तते पुनः ।
सर्वसङ्गान्परित्यज्य निश्चितो मनसा गतिम् ॥ ५०
तत्र यास्यामि यत्रात्मा शर्म मेऽधिगमिष्यति ।
अक्षयश्चाव्ययश्चैव यत्र स्थास्यामि शाश्वतः ॥ ५१
न तु योगमृते शक्या प्राप्तुं परमा गतिम् ।
अनुबन्धो विमुक्तस्य कर्मभिर्नोपपद्यते ॥ ५२
यस्माद्योगं समास्थाय त्यक्त्वा गृहकलेवरम् ।
वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरम् ॥ ५३
न ह्येष क्षयतां याति सोमः सुरगणैर्यथा ।
कम्पितः पतते भूमिं पुनश्चैवाधिरोहति ॥ ५४
क्षीयते हि सदा सोमः पुनश्चैवाभिपूर्यते ।
नेच्छाम्येवं विदित्वैते ह्रासवृद्धी पुनःपुनः ॥ ५५
रविस्तु संतापयते लोकान्रश्मिभिरुल्बणैः ।
सर्वतस्तेज आदत्ते नित्यमक्षयमण्डलः ॥ ५६
अतो मे रोचते गन्तुमादित्यं दीप्ततेजसम् ।
अत्र वत्स्यामि दुर्धर्षो निःसङ्गेनान्तरात्मना ॥ ५७
सूर्यस्य सदने चाहं निक्षिप्येदं कलेवरम् ।
ऋषिभिः सह वत्स्यामि सौरं तेजोऽतिदुःसहं ५८
आपृच्छामि नगान्नागान्गिरीनुर्वीं दिशो दश ।
देवदानवगन्धर्वान्पिशाचोरगराक्षसान् ॥ ५९
लोकेषु सर्वभूतानि प्रवेक्ष्यामि न संशयः ।
पश्यन्तु योगवीर्यं मे सर्वे देवाः सहर्षिभिः ॥ ६०
अथानुज्ञाप्य तमृषिं नारदं लोकविश्रुतम् ।
तस्मादनुज्ञां संप्राप्य जगाम पितरं प्रति ॥ ६१
सोऽभिवाद्य महात्मानं कृष्णद्वैपायनं मुनिम् ।
शुकः प्रदक्षिणं कृत्वा कृष्णमापृष्टवान्मुनिम् ॥ ६२

श्रुत्वा चर्षिस्तद्वचनं शुकस्य
प्रीतो महात्मा पुनराह चैनम् ।
भोभो पुत्र स्थीयतां तावदद्य
यावच्चक्षुः प्रीणयामि त्वदर्थे ॥ ६३

निरपेक्षः शुको भूत्वा निःस्नेहो मुक्तसंशयः ।
मोक्षमेवानुसंचिन्त्य गमनाय मनो दधे ॥ ६४
पितरं स परित्यज्य जगाम मुनिसत्तमः ।
कैलासपृष्ठं विपुलं सिद्धसङ्घनिषेवितम् ॥ ६५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥

---

## चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४० ॥

शुकेन कैलासशिखरादन्तरिक्षोत्पतनम् ॥ १ ॥ शुकेनात्मानमवलोकयतो देवान्प्रति व्यासेन शुकेत्याक्रोशे तंप्रति प्रतिवचनचोदना ॥ २ ॥

---

भीष्म उवाच ।
गिरिशृङ्गं समारुह्य सुतो व्यासस्य भारत ।

गतश्रीका इति ट. पाठः ॥ ४२ ॥ असंश्लिष्टः सर्वोपाधिनिर्मुक्तः ॥ ४९ ॥ शक्या प्राप्तुं सा परमा गतिरिति थ. पाठः । अवबन्धो हि युक्तस्येति थ. पाठः ॥ ५२ ॥ एकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥

समे देशे विविक्ते स निःशलाक उपाविशत् ॥१
धारयामास चात्मानं यथाशास्त्रं यथाविधि ।
पादप्रभृतिगात्रेषु क्रमेण क्रमयोगवित् ॥ २
ततः स प्राङ्मुखो विद्वानादित्ये नाचिरोदिते ।
पाणिपादं समाधाय विनीतवदुपाविशत् ॥ ३
न तत्र पक्षिसंपातो न शब्दो नापि दर्शनम् ।
यत्र वैयासकिर्धीमान्योक्तुं समुपचक्रमे ॥ ४
स ददर्श तदाऽऽत्मानं सर्वसङ्गविनिःसृतम् ।
प्रजहास ततो हासं शुकः संप्रेक्ष्य तत्परम् ॥ ५
स पुनर्योगमास्थाय मोक्षमार्गोपलब्धये ।
महायोगेश्वरो भूत्वा सोऽत्यक्रामद्विहायसम् ॥ ६
ततः प्रदक्षिणं कृत्वा देवर्षिं नारदं ततः ।
निवेदयामास च तं स्वं योगं परमर्षये ॥ ७
शुक उवाच ।
दृष्टो मार्गः प्रवृत्तोस्मि स्वस्ति तेऽस्तु तपोधन ।
त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ॥ ८
नारदेनाभ्यनुज्ञातः शुको द्वैपायनात्मजः ।
अभिवाद्य पुनर्योगमास्थायाकाशमाविशत् ॥ ९
कैलासपृष्ठादुत्पत्य स पपात दिवं तदा ।
अन्तरिक्षचरः श्रीमान्व्यासपुत्रः सुनिश्चितः॥ १०
तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम् ।
ददृशुः सर्वभूतानि मनोऽमारुतरंहसम् ॥ ११
व्यवसायेन लोकांस्त्रीन्सर्वान्सोऽथ विचिन्तयन् ।
आस्थितो दिव्यमध्वानं पावकार्कसमप्रभः॥ १२
तमेकमनसं यान्तमव्यग्रमकुतोभयम् ।
ददृशुः सर्वभूतानि जङ्गमानीतराणि च ॥ १३
यथाशक्ति यथान्यायं पूजयांचक्रिरे तदा ।
पुष्पवर्षैश्च दिव्यैस्तमलंचक्रुर्दिवौकसः ॥ १४
तं दृष्ट्वा विस्मिताः सर्वे गन्धर्वाप्सरसां गणाः।
ऋषयश्चैव संसिद्धाः परं विस्मयमागताः ॥ १५
अन्तरिक्षगतः कोऽयं तपसा सिद्धिमागतः ।
अधःकायोर्ध्ववक्त्रश्च नेत्रैः समतिवाह्यते ॥
ततः परमधर्मात्मा त्रिषु लोकेषु विश्रुतः ।
भास्करं समुदीक्षन्स प्राङ्मुखो वाग्यतोऽगम
शब्देनाकाशमखिलं पूरयन्निव सर्वशः ॥
तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः ।
संभ्रान्तमनसो राजन्नासन्परमविस्मिताः ।
पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः ॥
दैवतं कतमं ह्येतदुत्तमां गतिमास्थितम् ।
सुनिश्चितमिहायाति विमुक्तमिव निःस्पृहम्
ततः समभिचक्राम मलयं नाम पर्वतम् ।
उर्वशी पूर्वचित्तिश्च यं नित्यमुपसेवतः ॥
तस्य ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम् ।
अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे ॥
अचिरेणैव कालेन नभश्चरति चन्द्रवत् ।
पितृशुश्रूषया बुद्धिं संप्राप्तोऽयमनुत्तमाम् ॥
पितृभक्तो दृढतपाः पितुः सुदयितः सुतः
अनन्यमनसा तेन कथं पित्रा विसर्जितः ।
उर्वश्या वचनं श्रुत्वा शुकः परमधर्मवित् ।
उदैक्षत दिशः सर्वा वचने गतमानसः ॥
सोऽन्तरिक्षं महीं चैव सशैलवनकाननाम्
विलोकयामास तदा सरांसि सरितस्तथा ॥
ततो द्वैपायनसुतं बहुमानात्समन्ततः ।
कृताञ्जलिपुटाः सर्वा निरीक्षन्ते स्म देवताः
अब्रवीत्तास्तदा वाक्यं शुकः परमधर्मवित्
पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ।
तस्य प्रतिवचो देयं सर्वैरेव समाहितैः ।
एतन्मे स्नेहतः सर्वे वचनं कर्तुमर्हथ ॥
शुकस्य वचनं श्रुत्वा दिशः सजलकाननाः
समुद्राः सरितः शैलाः प्रत्यूचुस्तं समन्ततः ।
यथा ज्ञापयसे विप्र बाढमेवं भविष्यति ।
ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयम् ।

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४० ॥

---

निःशलाके निस्तृणे ॥ १ ॥ अधःकायात् ऊर्ध्वं वक्त्रं यस्य । सूर्ये दत्तदृष्टिरतः स्वदेहस्याधोभागं न पश्यतीत्यर्थः ॥ १६ ॥ चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४०

## एकचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४१ ॥

अन्तरिक्षाद्गिरिशिखरे निपतितेन शुकेन तद्भिभेदनपूर्वकं ततो निष्क्रमणम् ॥ १ ॥ ततः पुत्रवियोगविषण्णस्य व्यासस्य रुद्रेण समाश्वासनम् ॥ २ ॥

भीष्म उवाच ।
इत्येवमुक्त्वा वचनं ब्रह्मर्षिः सुमहातपाः ।
प्रातिष्ठत शुकः सिद्धिं हित्वा दोषांश्चतुर्विधान् ॥ १
तमो ह्यष्टगुणं हित्वा जहौ पञ्चविधं रजः ।
ततः सत्त्वं जहौ धीमांस्तदद्भुतमिवाभवत् ॥ २
ततस्तस्मिन्पदे नित्ये निर्गुणे लिङ्गवर्जिते ।
ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन् ॥ ३
उल्कापाता दिशां दाहो भूमिकम्पस्तथैव च ।
प्रादुर्भूताः क्षणे तस्मिंस्तदद्भुतमिवाभवत् ॥ ४
द्रुमाः शाखाश्च मुमुचुः शिखराणि च पर्वताः ।
निर्घातशब्दैर्गुरुभिर्भूमिर्व्यादीर्यतेव ह ॥ ५
न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
ह्रदाश्च सरितश्चैव चुक्षुभुः सागरास्तथा ॥ ६
ववर्ष वासवस्तोयं रसवच्च सुगन्धि च ।
ववौ समीरणश्चापि दिव्यगन्धवहः शुचिः ॥ ७
स शृङ्गेऽप्रतिमे दिव्ये हिमवन्मेरुसंनिभे ।
संश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे ॥ ८
शतयोजनविस्तारे तिर्यगूर्ध्वं च भारत ।
उदीचीं दिशमास्थाय रुचिरे संददर्श ह ॥ ९
सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः ॥ १०
ततः पर्वतशृङ्गे द्वे सहसैव द्विधाकृते ।
अदृश्येतां महाराज तदद्भुतमिवाभवत् ॥ ११
ततः पर्वतशृङ्गाभ्यां सहसैव विनिःसृतः ।
न च प्रतिजघानास्य स गतिं पर्वतोत्तमः ॥ १२
ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम् ।
गन्धर्वाणामृषीणां च ये च शैलनिवासिनः ॥ १३
दृष्ट्वा शुकमतिक्रान्तं पर्वतं च द्विधा कृतम् ।
साधुसाध्विति तत्रासीन्नादः सर्वत्र भारत ॥ १४
स पूज्यमानो देवैश्च गन्धर्वैर्ऋषिभिस्तथा ।
यक्षराक्षससङ्घैश्च विद्याधरगणैस्तथा ॥ १५
दिव्यैः पुष्पैः समाकीर्णमन्तरिक्षं समन्ततः ।
आसीत्किल महाराज शुकाभिपतने तदा ॥ १६
ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन् ।
शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् ॥ १७
तस्यां क्रीडन्त्यभिरताः स्नान्ति चैवाप्सरोगणाः ।
शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः ॥ १८
तं प्रक्रामन्तमाज्ञाय पिता स्नेहसमन्वितः ।
उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह ॥ १९
शुकस्तु मारुतादूर्ध्वं गतिं कृत्वान्तरिक्षगाम् ।
दर्शयित्वा प्रभावं स्वं सर्वभूतोऽभवत्तदा ॥ २०
महायोगगतिं त्वग्र्यां व्यासोत्थाय महातपाः ।
निमेषान्तरमात्रेण शुकाभिपतनं ययौ ॥ २१
स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम् ।
शशंसुर्ऋषयस्तत्र कर्म पुत्रस्य तत्तदा ॥ २२
ततः शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा ।
स्वयं पित्रा स्वरेणोच्चैस्त्रीँल्लोकाननुनाद्य वै ॥ २३
शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।
प्रत्यभाषत धर्मात्मा भोःशब्देनानुनादयन् ॥ २४
तत एकाक्षरं नादं भोरित्येव समीरयन् ।
प्रत्याहरञ्जगत्सर्वमुच्चैः स्थावरजङ्गमम् ॥ २५
ततःप्रभृति चाद्यापि शब्दानुच्चारितान्पृथक् ।
गिरिगह्वरपृष्ठेषु व्याहरन्ति शुकं प्रति ॥ २६
अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा ।
गुणान्संत्यज्य शब्दादीन्पदमभ्यगमत्परम् ॥ २७
महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः ।
निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन् ॥ २८

सिद्धिं श्रुत्वा दोषान्बहुप्रियानिति ट. पाठः ॥ १ ॥ निर्घातशब्दैर्गुरुभिर्हिमवान्दीर्यतीव हेति झ. ट. थ. पाठः ॥ ५ ॥ दिशश्च सरितश्चैवेति ध. पाठः । द्रुमाश्च सरितश्चैवेति ट. पाठः ॥ ६ ॥ व्यास उत्थाय । संधिरार्षः ॥ २१ ॥ ततः शुकेति दीर्घेण शैक्ष्येणाक्रन्दितं तथेति ट. ध. पाठः ॥ २३ ॥ तत एकाक्षरां वाचं भो इत्येव समीरयदिति थ. पाठः ॥ २५ ॥

ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसां गणाः ।
आसाद्य तमृषिं सर्वाः संभ्रान्ता गतचेतसः ॥२९
जले निलिल्यिरे काश्चित्काश्चिद्गुल्मान्प्रपेदिरे ।
वसनान्याददुः काश्चित्तं दृष्ट्वा मुनिसत्तमम् ॥ ३०
तां मुक्ततां तु विज्ञाय मुनिः पुत्रस्य वै तदा ।
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ॥ ३१
तं देवगन्धर्ववृतो महर्षिगणपूजितः ।
पिनाकहस्तो भगवानभ्यागच्छत शंकरः ॥ ३२
तमुवाच महादेवः सान्त्वपूर्वमिदं वचः ।
पुत्रशोकाभिसंतप्तं कृष्णद्वैपायनं तदा ॥ ३३
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चैव ह ।
वीर्येण सदृशः पुत्रः पुरा मत्तस्त्वया वृतः ॥ ३४
स तथालक्षणो जातस्तपसा तव संभृतः ।
मम चैव प्रसादेन ब्रह्मतेजोमयः शुचिः ॥ ३५
स गतिं परमां प्राप्तो दुष्प्रापामजितेन्द्रियैः ।
दैवतैरपि विप्रर्षे तं त्वं किमनुशोचसि ॥ ३६
यावत्स्थास्यन्ति गिरयो यावत्स्थास्यन्ति सागराः ।
तावत्तवाक्षया कीर्तिः सपुत्रस्य भविष्यति ॥ ३७
छायां स्वपुत्रसदृशीं सर्वतोऽनपगां सदा ।
द्रक्ष्यसे त्वं च लोकेऽस्मिन्मत्प्रसादान्महामुने ॥३८
सोऽनुनीतो भगवता स्वयं रुद्रेण भारत ।
छायां पश्यन्परावृत्तः स मुनिः परया मुदा ॥३९
इति जन्म गतिश्चैव शुकस्य भरतर्षभ ।
विस्तरेण समाख्याता यन्मां त्वं परिपृच्छसि ४०
एतदाचष्ट मे राजन्देवर्षिर्नारदः पुरा ।
व्यासश्चैव महायोगी संजल्पेषु पदेपदे ॥ ४१
इतिहासमिमं पुण्यं मोक्षधर्मार्थसंहितम् ।
धारयेद्यः शमपरः स गच्छेत्परमां गतिम् ॥ ४२

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४१ ॥

## द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥

भीष्मेण युधिष्ठिरंप्रति दैवपित्र्यकर्मानुष्ठानस्यावश्यकत्वप्रतिपादकनारदनारायणसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥ १
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं परम् ।
विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च ॥ २
मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्याद्येन न च्यवते दिवः ॥ ३
देवतानां च को देवः पितॄणां च पिता तथा ।
तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ॥ ४
भीष्म उवाच ।
गूढं मां प्रश्नवित्प्रश्नं पृच्छसे त्वमिहानघ ।
न ह्येतत्तर्कया शक्यं वक्तुं वर्षशतैरपि ॥ ५
ऋते देवप्रसादाद्वा राजञ्ज्ञानागमेन वा ।
गहनं ह्येतदाख्यानं व्याख्यातव्यं तवारिहन् ॥ ६
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ७
नारायणो हि विश्वात्मा चतुर्मूर्तिः सनातनः ।
धर्मात्मजः संबभूव पितैवं मेऽभ्यभाषत ॥ ८
कृते युगे महाराज पुरा स्वायंभुवेऽन्तरे ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ ९
तेषां नारायणनरौ तपस्तेपतुरव्ययौ ।
बदर्याश्रममासाद्य शकटे कनकामये ॥ १०
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमम् ।
तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसंततौ ॥ ११

वासांस्याददिरे काश्चिदिति थ. पाठः ॥ ३० ॥ दुष्प्रापामकृतात्मभिरिति ट. थ. पाठः ॥ ३६ ॥ धारयेद्यः स परम इति ध. पाठः ॥ ४२ ॥ एकचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४१ ॥

किं कुर्यात्कथं न चलते दिव इति ध. पाठः ॥ ३ ॥ अतिगूढमिमं प्रश्नमिति ठ. पाठः । नह्येतदन्यथा शक्यमिति ध. पाठः । तर्कया तर्केण आर्षो लिङ्गव्यत्ययः ॥ ५ ॥ ज्ञानागमेन ऋते विना ॥ ६ ॥ चतस्रो मूर्तयो नराद्याः ॥ ८ ॥

तपसा तेजसा चैव दुर्निरीक्ष्यौ सुरैरपि ।
यस्य प्रसादं कुर्वाते स देवौ द्रष्टुमर्हति ॥ १२
नूनं तयोरनुमते हृदि हृच्छयचोदितः ।
महामेरोर्गिरेः शृङ्गात्प्रच्युतो गन्धमादनम् ॥ १३
नारदः सुमहद्भूतं सर्वलोकानचीचरत् ।
तं देशमगमद्राजन्बदर्याश्रममाशुगः ॥ १४
तयोराह्निकवेलायां तस्य कौतूहलं त्वभूत् ।
इदं तदास्पदं कृत्स्नं यस्मिँल्लोकाः प्रतिष्ठिताः १५
सदेवासुरगन्धर्वाः सकिन्नरमहोरगाः ।
एका मूर्तिरियं पूर्वं जाता भूयश्चतुर्विधा ॥ १६
धर्मस्य कुलसंताने धर्मादेभिर्विवर्धितः ।
अहो ह्यनुगृहीतोऽद्य धर्म एभिः सुरैरिह ॥ १७
नरनारायणाभ्यां च कृष्णेन हरिणा तथा ।
अत्र कृष्णो हरिश्चैव कस्मिंश्चित्कारणान्तरे ॥ १८
स्थितौ धर्मसुतावेतौ तथा तपसि धिष्ठितौ ।
एतौ हि परमं धाम काऽनयोराह्निकक्रिया ॥१९
पितरौ सर्वभूतानां दैवतं च यशस्विनौ ।
कां देवतां तु यजतः पितॄन्वा कान्महामती ॥२०
इति संचिन्त्य मनसा भक्त्या नारायणस्य तु ।
सहसा प्रादुरभवत्समीपे देवयोस्तदा ॥ २१
कृते दैवे च पित्र्ये च ततस्ताभ्यां निरीक्षितः ।
पूजितश्चैव विधिना यथाप्रोक्तेन शास्त्रतः ॥ २२
तद्दृष्ट्वा महदाश्चर्यमपूर्वं विधिविस्तरम् ।
उपोपविष्टः सुप्रीतो नारदो भगवानृषिः ॥ २३
नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना ।
नमस्कृत्य महादेवमिदं वचनमब्रवीत् ॥ २४
वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे ।
त्वमजः शाश्वतो धाता माता मृतमनुत्तमम् ॥२५
प्रतिष्ठितं भूतभव्यं त्वयि सर्वमिदं जगत् ।
चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः ॥२६
यजन्ते त्वामहरहर्नानामूर्तिसमास्थितम् ।
पिता माता च सर्वस्य दैवतानां च शाश्वतम् ।
कं त्वद्य यजसे देवं पितरं कं न विद्महे ॥ २७
'कमर्चसि महाभाग तन्मे प्रब्रूहि पृच्छतः ॥' २८
श्रीभगवानुवाच ।
अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम् ।
तव भक्तिमतो ब्रह्मन्वक्ष्यामि तु यथातथम् ॥ २९
यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम् ।
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् ॥ ३०
स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।
त्रिगुणव्यतिरिक्तो वै पुरुषश्चेति कल्पितः ॥ ३१
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।
अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरव्यया ॥ ३२
तां योनिमावयोर्विद्धि योऽसौ सदसदात्मकः ।
आवाभ्यां पूज्यते यो हि दैवे पित्र्ये च कल्प्यते ३३
नास्ति तस्मात्परोऽन्यो हि पिता देवोऽथवा द्विज ।
आत्मा हि नौ स विज्ञेयस्ततस्तं पूजयावहे ॥ ३४
तेनैषा प्रथिता ब्रह्मन्मर्यादा लोकभाविनी ।
दैवं पित्र्यं च कर्तव्यमिति तस्यानुशासनम् ॥ ३५
ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः ।
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ॥३६
वसिष्ठः परमेष्ठी च विवस्वान्सोम एव च ।
कर्दमश्चापि यः प्रोक्तः क्रोधो विक्रीत एव च ३७
एँकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः ।
तस्य देवस्य मर्यादां पूजयन्तः सनातनीम् ॥३८
दैवं पित्र्यं च सततं तस्य विज्ञाय तत्त्वतः ।
आत्मप्राप्तानि च ततो जानन्ति द्विजसत्तमाः ३९
स्वर्गस्था अपि ये केचित्तान्नमस्यन्ति देहिनः ।
ते तत्प्रसादाद्गच्छन्ति तेनादिष्टफलां गतिम् ॥४०
ये हीनाः सप्तदशभिर्गुणैः कर्मभिरेव च ।
कलाः पञ्चदश त्यक्त्वा ते मुक्ता इति निश्चयः ॥४१
मुक्तानां तु गतिर्ब्रह्मन्क्षेत्रज्ञ इति कल्पिता ।
स हि सर्वगतिश्चैव निर्गुणश्चैव कथ्यते ॥ ४२

धर्मस्य मूलसंतानो महानिति विवर्धित इति ध. पाठः ॥ १७ ॥ स्थितौ धर्मोत्तरौ ह्येताविति झ. पाठः ॥ १९ ॥ सपुराणेषु शास्त्रेषु च महामतिरिति ध. पाठः । धाता विधाता मृत्युरुत्तम इति थ. पाठः ॥ २५ ॥ आत्मा हि नः स विज्ञेय इति झ. पाठः ॥ ३४ ॥ तेनैव स्थापिता ब्रह्मन्निति थ. पाठः ॥ ३५ ॥ द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥

दृश्यते ज्ञानयोगेन आवां च प्रसृतौ ततः ।
एवं ज्ञात्वा तमात्मानं पूजयावः सनातनम् ॥४३
तं वेदाश्चाश्रमाश्चैव नानातनुसमाश्रितम् ।
भक्त्या संपूजयन्त्याद्य गतिं चैषां ददाति सः ॥ ४४
ये तु तद्भाविता लोके ह्येकान्तित्वं समास्थिताः ।
एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत ॥ ४५
इति गुह्यसमुद्देशस्तव नारद कीर्तितः ।
भक्त्या प्रेम्णा च विप्रर्षे अस्मद्भक्त्या च ते श्रुतः ४६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥

---

## त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४३ ॥

बदरीनारायणाभ्यनुज्ञातेन नारदेन श्वेतद्वीपंप्रति गमनम् ॥ १ ॥ श्वेतद्वीपवर्णनम् ॥ २ ॥ भीष्मेण युधिष्ठिरंप्रति नारदोदितोपरिचरवसुचरितानुवादारम्भः ॥ ३ ॥ मरीच्यादिचित्रशिखण्डिभिर्नारायणानुग्रहेण स्वकृतधर्मशास्त्रस्य बृहस्पतौ स्थापनम् ॥ ४ ॥

भीष्म उवाच ।

स एवमुक्तो द्विपदां वरिष्ठो
नारायणेनोत्तमपूरुषेण ।
जगाद वाक्यं द्विपदां वरिष्ठं
नारायणं लोकहिताधिवासम् ॥ १

नारद उवाच ।

यदर्थमात्मप्रभवेह जन्म
त्वयोत्तमं धर्मगृहे चतुर्धा ।
तत्साध्यतां लोकहितार्थमद्य
गच्छामि द्रष्टुं प्रकृतिं तवाद्याम् ॥ २
वेदाः स्वधीता मम लोकनाथ
तप्तं तपो नानृतमुक्तपूर्वम् ।
पूजां गुरूणां सततं करोमि
परस्य गुह्यं न तु भिन्नपूर्वम् ॥ ३
गुप्तानि चत्वारि यथागमं मे
शत्रौ च मित्रे च समोऽस्मि नित्यम् ।
तं चादिदेवं सततं प्रपन्न
एकान्तभावेन वृणोम्यजस्रम् ॥ ४
एभिर्विशेषैः परिशुद्धसत्वः
कस्मान्न पश्येयमनन्तमीशम् ।
तत्पारमेष्ठ्यस्य वचो निशम्य
नारायणः शाश्वतधर्मगोप्ता ॥ ५
गच्छेति तं नारदमुक्तवान्स
संपूजयित्वा विधिवत्क्रियाभिः ।
ततो विसृष्टः परमेष्ठिपुत्रः
सोऽभ्यर्चयित्वा तमृषिं पुराणम् ॥ ६
खमुत्पपातोत्तमयोगयुक्त-
स्ततोऽधिमेरौ सहसा निलिल्ये ।
तत्रावतस्थे च मुनिर्मुहूर्त-
मेकान्तमासाद्य गिरेः स शृङ्गे ॥ ७
आलोकयन्नुत्तरपश्चिमेन
ददर्श चाप्यद्भुतमुक्तरूपम् ।
क्षीरोदधेर्योत्तरतो हि द्वीपः
श्वेतः स नाम्ना प्रथितो विशालः ॥ ८
मेरोः सहस्रैः स हि योजनानां
द्वात्रिंशतोर्ध्वं कविभिर्निरुक्तः ।
अनिन्द्रियाश्चानशनाश्च तत्र
निष्पन्दहीनाः सुसुगन्धिनस्ते ॥ ९
श्वेताः पुमांसो गतसर्वपापा-
श्चक्षुर्मुषः पापकृतां नराणाम् ।

---

जन्म अवतारः । आद्यां मूर्तिं श्वेतद्वीपस्थाम् ॥ २ ॥ चत्वारि पाणिपादोदरोपस्थानि ॥ ४ ॥ संपूजयित्वात्मविधिक्रियाभिरिति झ. पाठः ॥ ६ ॥ उत्तरपश्चिमेन वायव्यकोणतः । योत्तरतः यः उत्तरतः ॥ ८ ॥ मेरुमूलाद्द्वात्रिंशत्सहस्रयोजनादूर्ध्वम् । सुगन्धिः परमात्मा । सुगन्धिं पुष्टिवर्धनमिति मन्त्रलिङ्गात् । शोभनः सोऽस्त्येषां ध्यानगोचर इति सुसुगन्धिनः ॥ ९ ॥ श्वेताः शुद्धसत्वप्रधानाः ॥ १० ॥

वज्रास्थिकायाः सममानोन्माना
दिव्यावयवरूपाः शुभसारोपेताः ॥ १०
छत्राकृतिशीर्षा मेघौघनिनादाः
सममुष्कचतुष्का राजीवच्छदपादाः ।
षष्ट्या दन्तैर्युक्ताः शुक्लैरष्टाभिर्दंष्ट्राभिर्ये
जिह्वाभिर्ये विश्ववक्त्रं लेलिह्यन्ते सूर्यप्रख्यम् ११
देवं भक्त्या विश्वोत्पन्नं
यस्मात्सर्वे लोकाः संप्रसूताः ।
सर्वगात्राश्च सूक्ष्माः सहाङ्गका
वेदा धर्मा मुनयः शान्ता देवाः
सर्वे तस्य निसर्ग इति ॥ १२

युधिष्ठिर उवाच

अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
कथं ते पुरुषा जाताः का तेषां गतिरुत्तमा ॥ १३
ये च मुक्ता भवन्तीह नरा भरतसत्तम ।
तेषां लक्षणमेतद्धि तच्छ्वेतद्वीपवासिनाम् ॥ १४
तस्मान्मे संशयं छिन्धि परं कौतूहलं हि मे ।
त्वं हि सर्वकथारामस्त्वां चैवोपाश्रिता वयम् ॥ १५

भीष्म उवाच ।

विस्तीर्णैषा कथा राजञ्छ्रुता मे पितृसन्निधौ ।
यैषा तव हि वक्तव्या कथासारो हि सा मता ॥ १६
'शन्तनोः कथयामास नारदो मुनिसत्तमः ।
राज्ञा पृष्टः पुरा प्राह तत्राहं श्रुतवान्पुरा ॥' १७
राजोपरिचरो नाम बभूवाधिपतिर्भुवः ।
आखण्डलसखः ख्यातो भक्तो नारायणं हरिं १८
धार्मिको नित्यभक्तश्च पितुर्नित्यमतन्द्रितः ।
साम्राज्यं तेन संप्राप्तं नारायणवरात्पुरा ॥ १९
सात्वतं विधिमास्थाय प्राक्सूर्यमुखनिःसृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥ २०
पितृशेषेण विप्रांश्च संविभज्याश्रितांश्च सः ।
शेषान्नभुक्सत्यपरः सर्वभूतेष्वहिंसकः ॥ २१
सर्वभावेन भक्तः स देवदेवं जनार्दनम् ।
अनादिमध्यनिधनं लोककर्तारमव्ययम् ॥ २२
तस्य नारायणे भक्तिं वहतोऽमित्रकर्शिनः ।
एकशय्यासनं देवो दत्तवान्देवराट् स्वयम् ॥ २३
आत्मराज्यं धनं चैव कलत्रं वाहनं तथा ।
यत्तद्भागवतं सर्वमिति तत्प्रेक्षितं सदा ॥ २४
काम्यनैमित्तिका राजन्यज्ञियाः परमक्रियाः ।
सर्वाः सात्वतमास्थाय विधिं चक्रे समाहितः २५
पाञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ।
वरान्नं भगवत्प्रोक्तं भुञ्जते वाऽग्रभोजनम् ॥ २६
तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक्समभवन्मनो दुष्टं न चाभवत् ।
न च कायेन कृतवान्स पापं परमण्वपि ॥ २७
ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥ २८
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ॥ २९
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः ॥ ३०
सप्त प्रकृतयो ह्येतास्तथा स्वायंभुवोऽष्टमः ।
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतं ३१
एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः ॥ ३२
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
लोकान्संचिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ३३

छत्राकृतिशीर्षा निर्मांसग्रीवत्वात् । समं पीनत्वरहितं मुष्कौ वृषणौ चतुष्कमंसयोः कट्योश्चान्तरालं च मुष्कचतुष्कं बाहुचतुष्कं वा । षष्ट्या षष्टिसंख्यैर्दन्तैरिव जगच्चणकचर्वणक्षमैः संवत्सरैर्युक्ताः । अष्टौ दिशः सर्वेषामाश्रयभूतास्ताभिश्च युक्ताः । देशकालौ येषां मुखमध्ये प्रविष्टावित्यर्थः । सूर्येण प्रख्यायते स्फुटीक्रियते दिनमासर्तुसंवत्सरात्मा महाकालस्तम् । विश्ववक्त्रं विश्वं वक्त्रे यस्य तादृशम् । जिह्वाभिरिव स्वाङ्गभूताभी रसनाशक्तिभिर्लेलिह्यन्ते पायसमिव लिहन्ति । छत्राकृतिशीर्षाणो मेघौघस्तनितसमनिनादाः सममुष्का रुचिरतराश्चतुर्मुष्कावर्जितरक्ततलपादाः इति ध. पाठः ॥ ११ ॥ विश्वोत्पन्नं विश्वमुत्पन्नं यस्मात् । वेदादयस्तस्य निसर्गः अयत्नरचिताः ॥ १२ ॥ कथासारो हि स स्मृत इति थ. पाठः ॥ १६ ॥ आखण्डलसम इति ध. पाठः ॥ १८ ॥ सात्वतं सात्वतानां पाञ्चरात्राणां हितं । तच्छेषेण विष्णुशेषेण ॥ १९ ॥ पितृनृषींश्च विप्रांश्चेति ध. पाठः ॥ २१ ॥ प्रायणं भगवत्प्रोक्तमिति झ. पाठः ॥ २६ ॥ वेदैश्चतुर्भिः सहितमिति ध. पाठः ॥ २९ ॥

तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ३४
आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ॥ ३५
नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेश तानृषीन्सर्वाँल्लोकानां हितकाम्यया ॥३६
ततः प्रवर्तिता सम्यक्तपोविद्भिर्द्विजातिभिः ।
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ॥ ३७
आदावेव हि तच्छास्त्रमोंकारस्वरपूजितम् ।
ऋषिभिः श्रावितं तत्र यत्र कारुणिको ह्यसौ ॥३८
ततः प्रसन्नो भगवाननिर्दिष्टशरीरगः ।
ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः ॥ ३९
कृतं शतसहस्रं हि श्लोकानां हितमुत्तमम् ।
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते ॥ ४०
प्रवृत्तौ च निवृत्तौ च यस्मादेतद्भविष्यति ।
यजुर्ऋक्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ ४१
यथाप्रमाणं हि मया कृतो ब्रह्मा प्रसादतः ।
रुद्रश्च क्रोधजो विप्रा यूयं प्रकृतयस्तथा ॥ ४२
सूर्याचन्द्रमसौ वायुर्भूमिरापोऽग्निरेव च ।
सर्वे च नक्षत्रगणा यच्च भूताभिशब्दितम् ॥ ४३
अधिकारेषु वर्तन्ते यथास्वं ब्रह्मवादिनः ।
सर्वे प्रमाणं हि यथा तथा तच्छास्त्रमुत्तमम् ॥४४
भविष्यति प्रमाणं वै एतन्मदनुशासनम् ।
तस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ॥४५
उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥ ४६
स्वायंभुवेषु धर्मेषु शास्त्रे चोशनसा कृते ।
बृहस्पतिमते चैव लोकेषु प्रतिचारिते ॥ ४७
युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ॥ ४८
स हि मद्भावनिरतो मद्भक्तश्च भविष्यति ।
तेन शास्त्रेण लोकेषु क्रियाः सर्वाः करिष्यति ४९
एतद्धि युष्मच्छास्त्राणां शास्त्रमुत्तमसंज्ञितम् ।
एतदर्थ्यं च धर्म्यं च रहस्यं चैतदुत्तमम् ॥ ५०
अस्य प्रवर्तनाच्चैव प्रजावन्तो भविष्यथ ।
स च राजश्रिया युक्तो भविष्यति महान्वसुः ॥५१
संस्थिते तु नृपे तस्मिञ्शास्त्रमेतत्सनातनम् ।
अन्तर्धास्यति तत्सर्वमेतद्वः कथितं मया ॥ ५२
एतावदुक्त्वा वचनमदृश्यः पुरुषोत्तमः ।
विसृज्य तानृषीन्सर्वान्कामपि प्रसृतो दिशम् ॥५३
ततस्ते लोकपितरः सर्वलोकार्थचिन्तकाः ।
प्रावर्तयन्त तच्छास्त्रं धर्मयोनिं सनातनम् ॥ ५४
उत्पन्नेऽङ्गिरसे चैव युगे प्रथमकल्पिते ।
साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ ॥ ५५
जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः ।
धारणाः सर्वलोकानां सर्वधर्मप्रवर्तकाः ॥ ५६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४३ ॥

## चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४ ॥

बृहस्पतिना उपरिचरवसोर्याजनम् ॥ १ ॥ तत्र श्रीहरिणा परोक्षतया भागग्रहणात्कुद्धं बृहस्पतिंप्रति एकतादिभिः श्वेतद्वीपवर्णनपूर्वकं भगवन्महिमोक्त्या परिसान्त्वनम् ॥ २ ॥

भीष्म उवाच ।
ततोऽतीते महाकल्पे उत्पन्नेऽङ्गिरसः सुते ।
बभूवुर्निर्वृता देवा जाते देवपुरोहिते ॥ १
बृहद्ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः ।
एभिः समन्वितो राजन्गुणैर्विद्वान्बृहस्पतिः ॥२
तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः ।
अधीतवांस्तदा शास्त्रं सम्यक्चित्रशिखण्डिजं ॥ ३
स राजा भावितः पूर्वं दैवेन विधिना वसुः ।

मोक्षपन्थाश्च कीर्तित इति ध. पाठः ॥ ३४ ॥ धर्मकामार्थचिन्तका इति ध. पाठः ॥ ५४ ॥

त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४३ ॥

पालयामास पृथिवीं दिवमाखण्डलो यथा ॥ ४
तस्य यज्ञो महानासीदश्वमेधो महात्मनः ।
बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह ॥ ५
प्रजापतिसुताश्चात्र सदस्याश्चाभवंस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥ ६
धनुषाख्योऽथ रैभ्यश्च अर्वावसुपरावसू ।
ऋषिर्मेधातिथिश्चैव ताण्ड्यश्चैव महानृषिः ॥ ७
ऋषिः शान्तिर्महाभागस्तथा वेदशिराश्च यः ।
ऋषिश्रेष्ठश्च कपिलः शालिहोत्रपिता स्मृतः ॥ ८
आद्यः कठस्तैत्तिरिश्च वैशंपायनपूर्वजः ।
कण्वोऽथ देवहोत्रश्च एते षोडश कीर्तिताः ॥ ९
संभूताः सर्वसंभारास्तस्मिन्राजन्महाक्रतौ ।
न तत्र पशुघातोऽभूत्स राजैवं स्थितोऽभवत् १०
अहिंस्रः शुचिरक्षुद्रो निराशीः कर्मसंस्तुतः ।
आरण्यकपदोद्भूता भागास्तत्रोपकल्पिताः ॥ ११
प्रीतस्ततोऽस्य भगवान्देवदेवः पुरातनः ।
साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित् १२
स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान् ।
अदृश्येन हृतो भागो देवेन हरिमेधसा ॥ १३
बृहस्पतिस्ततः क्रुद्धः स्रुचमुद्यम्य वेगितः ।
आकाशं घ्नन्स्रुचः पातै रोषादश्रूण्यवर्तयत् ॥ १४
उवाच चोपरिचरं मया भागोऽयमुद्यतः ।
ग्राह्यः स्वयं हि देवेन मत्प्रत्यक्षं न संशयः ॥ १५
उद्यता यज्ञभागा हि साक्षात्प्राप्ताः सुरैरिह ।
किमर्थमिह न प्राप्तो दर्शनं मे हरिर्नृप ॥ १६
भीष्म उवाच ।
ततः स तं समुद्भूतं भूमिपालो महान्वसुः ।
प्रसादयामास मुनिं सदस्यास्ते च सर्वशः ॥ १७
'हुतस्त्वया वदानीह पुरोडाशस्य यावती ।
गृहीता देवदेवेन मत्प्रत्यक्षं न संशयः ॥ १८
इत्येवमुक्ते वसुना सरोषश्चाब्रवीद्गुरुः ।
न यजेयमहं चात्र परिभूतस्त्वया नृप ॥ १९
त्वया पशुर्वारितश्च कृतः पिष्टमयः पशुः ।
त्वं देवं पश्यसे नित्यं न पश्येयमहं कथम् ॥ २०
वसुरुवाच ।
पशुहिंसा वारिता च यजुर्वेदादिमन्त्रतः ।
अहं न वारये हिंसां द्रक्ष्याम्येकान्तिको हरिम् ।
तस्मात्कोपो न कर्तव्यो भवता गुरुणा मयि २१
वसुमेवं ब्रुवाणं तु क्रुद्ध एव बृहस्पतिः ।
उवाच ऋत्विजश्चैव किं नः कर्मेति वारयन् ॥२२
अथैकतो द्वितश्चैव त्रितश्चैव महर्षयः ।'
ऊचुश्चैनमसंभ्रान्ता न रोषं कर्तुमर्हसि ॥ २३
'शृणु त्वं वचनं पुत्र अस्माभिः समुदाहृतम् ।'
नैष धर्मः कृतयुगे यत्त्वं रोषमिहाहिथाः ॥ २४
अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः ।
न शक्यः स त्वया द्रष्टुमस्माभिर्वा बृहस्पते ।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ २५
वयं हि ब्रह्मणः पुत्रा मानसाः परिकीर्तिताः ।
गता निःश्रेयसार्थं हि कदाचिद्दिशमुत्तराम् ॥ २६
तप्त्वा वर्षसहस्राणि चत्वारि तप उत्तमम् ।
एकपादा स्थिताः सम्यक्काष्ठभूताः समाहिताः २७
मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः ।
स देशो यत्र नस्तप्तं तपः परमदारुणम् ॥ २८
वरेण्यं वरदं तं वै देवदेवं सनातनम् ।
कथं पश्येमहि वयं देवं नारायणं त्विति ॥ २९
अथ व्रतस्यावभृथे वागुवाचाशरीरिणी ।
स्निग्धगम्भीरया वाचा प्रहर्षणकरी विभो ॥ ३०
सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना ।
यूयं जिज्ञासवो भक्ताः कथं द्रक्ष्यथ तं विभुम् ॥३१
क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः ।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥ ३२
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् ।
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥ ३३
अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ।
गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः ॥३४

क्रुद्धं द्रक्ष्यथ तं प्रभुमिति ध. पाठः ॥ ३१ ॥ अतीन्द्रिया निराहारा इति ध. पाठः ॥ ३४ ॥

अथ श्रुत्वा वयं सर्वे वाचं तामशरीरिणीम् ।
यथाख्यातेन मार्गेण तं देशं प्रविशेमहि ॥ ३५
प्राप्य श्वेतं महाद्वीपं तच्चित्तास्तद्दिदृक्षवः ।
'महसा हि गताः सर्वे तेजसा तस्य मोहिताः॥'३६
ततोऽस्मद्दृष्टिविषयस्तदा प्रतिहतोऽभवत् ।
न च पश्याम पुरुषं तत्तेजोहतदर्शनाः ॥ ३७
ततो नः प्रादुरभवद्विज्ञानं देवयोगजम् ।
न किलातप्ततपसा शक्यते द्रष्टुमञ्जसा ॥ ३८
ततः पुनर्वर्षशतं तप्त्वा तात्कालिकं महत् ।
व्रतावसाने च शुभान्नरान्ददृशिमो वयम् ॥ ३९
श्वेतांश्चन्द्रप्रतीकाशान्सर्वलक्षणलक्षितान् ।
नित्याञ्जलिकृतान्ब्रह्म जपतः प्रागुदङ्मुखान् ॥४०
मानसो नाम स जपो जप्यते तैर्महात्मभिः ।
तेनैकाग्रमनस्त्वेन प्रीतो भवति वै हरिः ॥ ४१
याऽभवन्मुनिशार्दूल भाः सूर्यस्य युगक्षये ।
एकैकस्य प्रभा तादृक्साऽभवन्मानवस्य ह ॥४२
तेजोनिवासः स द्वीप इति वै मेनिरे वयम् ।
न तत्राभ्यधिकः कश्चित्सर्वे ते समतेजसः॥४३
अथ सूर्यसहस्रस्य प्रभां युगपदुत्थिताम् ।
सहसा दृष्टवन्तः स पुनरेव बृहस्पते ॥ ४४
सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतम् ।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः ॥ ४५
ततो हि वदतां तेषामश्रौष्म विपुलं ध्वनिम् ।
बलिः किलोपह्रियते तस्य देवस्य तैर्नरैः ॥ ४६
वयं तु तेजसा तस्य सहसा हृतचेतसः ।
न किंचिदपि पश्यामो हतचक्षुर्बलेन्द्रियाः ॥४७
एकस्तु शब्दो विततः श्रुतोऽस्माभिरुदीरितः ।
'आकाशं पूरयन्सर्वं शिक्षाक्षरसमन्वितः ॥ ४८
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ।
इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमन्वितः ४९
एतस्मिन्नन्तरे वायुः सर्वगन्धवहः शुचिः ।
दिव्यान्युवाह पुष्पाणि कर्मण्याश्चौषधीस्तथा ॥५०

तैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः ।
भक्त्या परमया युक्तैर्मनोवाक्कर्मभिस्तदा ॥ ५१
नूनं तत्रागतो देवो यथा तैर्वागुदीरिता ।
वयं त्वेनं न पश्यामो मोहितास्तस्य मायया ॥५२
मारुते संनिवृत्ते च बलौ च प्रतिपादिते ।
चिन्ताव्याकुलितात्मानो जाताः स्मोऽङ्गिरसांवर५३
मानवानां सहस्रेषु तेषु वै शुद्धयोनिषु ।
अस्मान्न कश्चिन्मनसा चक्षुषा वाऽप्यपूजयत् ॥५४
तेऽपि स्वस्था मुनिगणा एकभावमनुव्रताः ।
नास्मासु दधिरे भावं ब्रह्मभावमनुष्ठिताः ॥ ५५
ततोऽस्मान्सुपरिश्रान्तांस्तपसा चातिकर्शितान् ।
उवाच खस्थं किमपि भूतं तत्राशरीरकम् ॥ ५६
देव उवाच ।
दृष्टा वः पुरुषाः श्वेताः सर्वेन्द्रियविवर्जिताः ।
दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमैः ॥ ५७
गच्छध्वं मुनयः सर्वे यथागतमितोऽचिरात् ।
न स शक्यस्त्वभक्तेन द्रष्टुं देवः कथंचन ॥ ५८
कामं कालेन महता एकान्तित्वमुपागतैः ।
शक्यो द्रष्टुं स भगवान्प्रभामण्डलदुर्दृशः ॥ ५९
महत्कार्यं च कर्तव्यं युष्माभिर्द्विजसत्तमाः ।
इतः कृतयुगेऽतीते विपर्यासं गतेऽपि च ॥ ६०
वैवस्वतेऽन्तरे विप्राः प्राप्ते त्रेतायुगे पुनः ।
सुराणां कार्यसिद्ध्यर्थं सहाया वै भविष्यथ ॥६१
ततस्तदद्भुतं वाक्यं निशम्यैवामृतोपमम् ।
तस्य प्रसादात्प्राप्ताः स्मो देशमीप्सितमञ्जसा ६२
एवं सुतपसा चैव हव्यकव्यैस्तथैव च ।
देवोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि ॥६३
नारायणो महद्भूतं विश्वसृग्घव्यकव्यभुक् ।
अनादिनिधनोऽव्यक्तो देवदानवपूजितः ॥ ६४
एवमेकतवाक्येन द्वितत्रितमतेन च ।
अनुनीतः सदस्यैश्च बृहस्पतिरुदारधीः ।
समापयत्ततो यज्ञं दैवतं समपूजयत् ॥ ६५
समाप्तयज्ञो राजाऽपि प्रजां पालितवान्वसुः ।

पुरुषव्यत्यय आर्षः ॥ ४३ ॥

चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४ ॥

ब्रह्मशापाद्दिवो भ्रष्टः प्रविवेश महीं ततः ॥ ६६
स राजा राजशार्दूल सत्यधर्मपरायणः ।
अन्तर्भूमिगतश्चैव सततं धर्मवत्सलः ॥ ६७
नारायणपरो भूत्वा नारायणजपं जपन् ।
तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः ॥ ६८
महीतलाद्गतः स्थानं ब्रह्मणः समनन्तरम् ।
परां गतिमनुप्राप्त इति नैष्ठिकमञ्जसा ॥ ६९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४ ॥

---

## पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४५ ॥

भीष्मेण युधिष्ठिरंप्रति उपरिचरवसोः शापप्राप्तितद्विमोचनप्रकारकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
यदा भक्तो भगवति आसीद्राजा महान्वसुः ।
किमर्थं स परिभ्रष्टो विवेश विवरं भुवः ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषीणां चैव संवादं त्रिदशानां च भारत ॥ २
'इयं वै कर्मभूमिः स्यात्स्वर्गो भोगाय कल्पितः ।
तस्मादिन्द्रो महीं प्राप्य यजनाय तु दीक्षितः ॥ ३
सवनीयपशोः काल आगते तु बृहस्पतिः ।
पिष्टमानीयतामत्र पश्वर्थमिति भाषत ॥ ४
तच्छ्रुत्वा देवताः सर्वा इदमूचुर्द्विजोत्तमम् ।
बृहस्पतिं मांसगृद्धाः पृथक्पृथगिदं पुनः ॥' ५
अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान् ।
स च छागोप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः ६
ऋषय ऊचुः ।
बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः ।
अजसंज्ञानि बीजानि च्छागं नो हन्तुमर्हथ ॥ ७
नैष धर्मः सतां देवा यत्र वध्येत वै पशुः ।
इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः ॥ ८
भीष्म उवाच ।
तेषां संवदतामेवमृषीणां विबुधैः सह ।
मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान्वसुः ॥ ९
अन्तरिक्षचरः श्रीमान्सहस्रबलवाहनः ।
तं दृष्ट्वा सहसाऽऽयान्तं वसुं ते त्वन्तरिक्षगम् १०
ऊचुर्द्विजातयो देवानेष च्छेत्स्यति संशयम् ।
यज्वा दानपतिः श्रेष्ठः सर्वभूतहितप्रियः ।
कथंस्विदन्यथा ब्रूयादेष वाक्यं महान्वसुः ॥ ११
एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा ।
अपृच्छन्सहिताऽभ्येत्य वसुं राजानमन्तिकात् १२
भो राजन्केन यष्टव्यमजेनाहोस्विदौषधैः ।
एतन्नः संशयं छिन्धि प्रमाणं नो भवान्मतः १३
स तान्कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः ।
कस्य वै को मतः पक्षो ब्रूत सत्यं द्विजोत्तमाः १४
ऋषय ऊचुः ।
धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप ।
देवानां तु पशुः पक्षो मतो राजन्वदस्व नः ॥ १५
भीष्म उवाच ।
देवानां तु मतं ज्ञात्वा वसुना पक्षसंश्रयात् ।
छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा ॥ १६
कुपितास्ते ततः सर्वे मुनयः सूर्यवर्चसः ।
ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् ॥ १७
सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत ।
अद्यप्रभृति ते राजन्नाकाशे विहता गतिः ॥ १८
अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि ।
'विरुद्धं वेदसूत्राणामुक्तं यदि भवेन्नृप ।
वयं विरुद्धवचना यदि तत्र पतामहे ॥' १९
ततस्तस्मिन्मुहूर्तेऽथ राजोपरिचरस्तदा ।
अधो वै संबभूवाशु भूमेर्विवरगो नृप ॥ २०

---

अजस्थस्य मेधस्य बीजेषु संक्रमाद्बीजान्येवाजसंज्ञानीति युक्तम् ॥ ७ ॥

स्मृतिस्त्वेवं न विजहौ तदा नारायणाज्ञया ॥ २१
देवास्तु सहिताः सर्वे वसोः शापविमोक्षणम् ।
चिन्तयामासुरव्यग्राः सुकृतं हि नृपस्य तत् ॥ २२
अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना ।
अस्य प्रतिप्रियं कार्यं सहितैर्नो दिवौकसः ॥ २३
इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वराः ।
ऊचुः संहृष्टमनसो राजोपरिचरं तदा ॥ २४
ब्रह्मण्य देवभक्तस्त्वं सुरासुरगुरुर्हरिः ।
कामं स तव तुष्टात्मा कुर्याच्छापविमोक्षणम् ॥ २५
मानना तु द्विजातीनां कर्तव्या वै महात्मनाम् ।
अवश्यं तपसा तेषां फलितव्यं नृपोत्तम ॥ २६
यतस्त्वं सहसा भ्रष्ट आकाशान्मेदिनीतलम् ।
'विरुद्धं वेदसूत्राणां न वक्तव्यं हितार्थिना ॥ २७
असत्पक्षनिमित्तेन व्यसनं प्राप्तमीदृशम् ।'
एकं त्वनुग्रहं तुभ्यं दद्मो वै नृपसत्तम ।
यावत्त्वं शापदोषेण कालमासिष्यसेऽनघ ॥ २८
भूमेर्विवरगो भूत्वा तावत्त्वं कालमाप्स्यसि ।
यज्ञेषु सुहुतां विप्रैर्वसोर्धारां समाहितैः ॥ २९
प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिराविशेत् ।
न क्षुत्पिपासे राजेन्द्र भूमेश्छिद्रे भविष्यतः ॥ ३०
वसोर्धाराभिपीतत्वात्तेजसाऽऽप्यायितेन च ।
स देवोऽस्मद्वरात्प्रीतो ब्रह्मलोकं हि नेष्यति ॥ ३१
एवं दत्त्वा वरं राज्ञे सर्वे ते च दिवौकसः ।
'क्रतुं समाप्य पिष्टेन मुनीनां वचनात्तदा ॥' ३२
गताः स्वभवनं देवा ऋषयश्च तपोधनाः ।
'गृहीत्वा दक्षिणां सर्वे गताः स्वानाश्रमान्पुनः ३३
वसुं विचिन्त्य शक्रश्च प्रविवेशामरावतीम् ।
वसुर्विवरगस्तत्र व्यलीकस्य फलं गुरोः ॥' ३४
चक्रे वसुस्ततः पूजां विष्वक्सेनाय भारत ।
जप्यं जगौ च सततं नारायणमुखोद्गतम् ॥ ३५
तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिंदम ।
अयजद्धरिं सुरपतिं भूमेर्विवरगोऽपि सन् ॥ ३६
ततोऽस्य तुष्टो भगवान्भक्त्या नारायणो हरिः ।
अनन्यभक्तस्य सतस्तत्परस्य जितात्मनः ॥ ३७
वरदो भगवान्विष्णुः समीपस्थं द्विजोत्तमम् ।
गरुत्मन्तं महावेगमाबभाषेऽप्सितं तदा ॥ ३८
द्विजोत्तम महाभाग पश्यतां वचनान्मम ।
सम्राड्राजा वसुर्नाम धर्मात्मा संशितव्रतः ॥ ३९
ब्राह्मणानां प्रकोपेन प्रविष्टो वसुधातलम् ।
मानितास्ते तु विप्रेन्द्रास्त्वं तु गच्छ द्विजोत्तम ४०
भूमेर्विवरसंगुप्तं गरुडेह ममाज्ञया ।
अधश्चरं नृपश्रेष्ठं खेचरं कुरु माचिरम् ॥ ४१
गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् ।
विवेश विवरं भूमेर्यत्रास्ते वाग्यतो वसुः ॥ ४२
तत एनं समुत्क्षिप्य सहसा विनतासुतः ।
उत्पपात नभस्तूर्णं तत्र चैनममुञ्चत ॥ ४३
अस्मिन्मुहूर्ते संजज्ञे राजोपरिचरः पुनः ।
सशरीरो गतश्चैव ब्रह्मलोकं नृपोत्तमः ॥ ४४
एवं तेनापि कौन्तेय वाग्दोषाद्देवताज्ञया ।
प्राप्ता गतिरधस्तात्तु द्विजशापान्महात्मना ॥ ४५
केवलं पुरुषस्तेन सेवितो हरिरीश्वरः ।
ततः शीघ्रं जहौ शापं ब्रह्मलोकमवाप च ॥ ४६
भीष्म उवाच ।
एतत्ते सर्वमाख्यातं संभूता मानवा यथा ।
नारदोऽपि यथा श्वेतं द्वीपं स गतवानृषिः ।
तत्ते सर्वं प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ४७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४५ ॥

## षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४६ ॥

भीष्मेण युधिष्ठिरंप्रति बहुनामभिर्नारदकृतश्वेतद्वीपगतभगवत्स्तोत्रानुवादः ॥ १ ॥

भीष्म उवाच ।
प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।

अस्य प्रतिक्रिया कार्येति ध. पाठः ॥ २३ ॥

पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४५ ॥

ददर्श तानेव नराञ्श्वेतांश्चन्द्रसमप्रभान् ॥ १
पूजयामास शिरसा मनसा तैश्च पूजितः ।
दिदृक्षुर्जप्यपरमः सर्वकृच्छ्रगतः स्थितः ॥ २
भूत्वैकाग्रमना विप्र ऊर्ध्वबाहुः समाहितः ।
स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने ॥३
नारद उवाच ।

ओं नमस्ते देवदेवेश निष्क्रिय निर्गुण लोकसाक्षिन् क्षेत्रज्ञ पुरुषोत्तम अनन्त पुरुष महापुरुष पुरुषोत्तम त्रिगुण प्रधान अमृत अमृताख्य अनन्ताख्य व्योम अमृतात्मन् सनातन सदसद्व्यक्ताव्यक्त ऋतधाम आदिदेव वसुप्रद प्रजापते सुप्रजापते वनस्पते महाप्रजापते ऊर्जस्पते वाचस्पते जगत्पते मनस्पते दिवस्पते मरुत्पते सलिलपते पृथिवीपते दिक्पते पूर्वनिवास गुह्य ब्रह्मपुरोहित ब्रह्मकायिक राजिक महाराजिक चातुर्महाराजिक आभासुर महाभासुर सप्तमहाभाग सप्तमहास्वर याम्य महायाम्य संज्ञासंज्ञ तुषित* महातुषित प्रमर्दन परिनिर्मित अपरिनिर्मित वशवर्तिन् अपरिनिन्दित अपरिमित वशवर्तिन् अवशवर्तिन् यज्ञ महायज्ञ असंयज्ञ यज्ञसंभव यज्ञयोने यज्ञगर्भ यज्ञहृदय यज्ञस्तुत यज्ञभागहर पञ्चयज्ञ पञ्चकालकर्तृपते पाञ्चरात्रिक वैकुण्ठ अपराजित मानसिक नावमिक नामनामिक परस्वामिन् सुस्नात हंस परमहंस महाहंस परमज्ञेय परमयाज्ञिक साङ्ख्ययोग साङ्ख्यमूर्ते अमृतेशय हिरण्येशय वेदेशय देवेशय कुशेशय ब्रह्मेशय पद्मेशय विश्वेश्वर विष्वक्सेन त्वं जगदन्वयस्त्वं जगत्प्रकृतिस्त्वाग्निरास्यं वडवामुखोऽग्निस्त्वमाहुतिः सारथिस्त्वं वषट्कारस्त्वमोंकारस्त्वं तपस्त्वं मनस्त्वं चन्द्रमाः पूर्णाङ्गस्त्वं चक्षुराज्यम् त्वं सूर्यस्त्वं दिशांगजस्त्वं दिग्भानो विदिग्भानो हयशिरः प्रथमत्रिसौपर्णो वर्णधरः पञ्चाग्ने त्रिणाचिकेत षडङ्गनिधान प्राग्जोतिष ज्येष्ठसामग सामिकव्रतधराथर्वशिराः पञ्चमहाकल्प फेनपाचार्य वालखिल्य वैखानसा भग्नयोगा भग्नव्रता भग्नपरिसंख्यान युगादे युगमध्य युगनिधनाखण्डल प्राचीनगर्भ कौशिक पुरुष्टुत पुरुहूत विश्वकृद्विश्वजिद्विश्वरूपानन्तगतेऽनन्तभोगाऽनन्ताऽनादेऽमध्याऽव्यक्तमध्याऽव्यक्तनिधन व्रतावास समुद्राधिवास यशोवास तपोवास दमावास लक्ष्म्यावास विद्यावास कीर्त्यावास श्रीवास सर्वावास वासुदेव सर्वच्छन्दक हरिहय हरिमेध महायज्ञभागहर वरप्रद सुखप्रद धनप्रद हरिमेध यम नियम महानियम कृच्छ्राऽतिकृच्छ्र महाकृच्छ्र सर्वकृच्छ्र नियमधर निवृत्तभ्रम निवृत्तिधर्मप्रवरगत प्रवचनगत पृश्निगर्भप्रवृत्त प्रवृत्तवेदक्रियाऽज सर्वगते सर्वदर्शिन् नग्राह्याऽक्षयाऽचल महाविभूते माहात्म्यशरीर पवित्र महापवित्र हिरण्यमय बृहदप्रतर्क्याऽविज्ञेय ब्रह्माग्र्य प्रजासर्गकर प्रजानिधनकर महामायाधर विद्याधर योगधर चित्रशिखण्डिन् वरप्रद पुरोडाशभागहर गताध्वर च्छिन्नतृष्ण च्छिन्नसंशय सर्वतोवृत्त निवृत्तरूप ब्राह्मणरूप ब्राह्मणप्रिय विश्वमूर्ते महामूर्ते बान्धव भक्तवत्सल ब्रह्मण्यदेव भक्तोऽहं त्वां दिदृक्षुरेकान्तदर्शनाय नमोनमः ॥ ४ ॥

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४६ ॥

---

जप्यपरमः सर्वभूतहिते रत इति ध. पाठः ॥ २ ॥ ऊर्ध्वबाहुर्महामुनिरिति ट. थ. पाठः । महामतिरिति ध. पाठः । निर्गुणाय महात्मन इति ट. थ. ध. पाठः ॥ ३ ॥ षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४६ ॥

* रुषित—महारुषितेति ध. पाठः ।

## सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४७ ॥

भीष्मेण युधिष्ठिरंप्रति नारदाय श्वेतद्वीपस्थहर्युक्तस्वकृतसृष्टिप्रकारानुवादः ॥ १ ॥

भीष्म उवाच ।
एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः ।
'भगवान्विश्वसृक्सिंहः सर्वमूर्तिमयः प्रभुः ।'
दर्शयामास मुनये रूपं तत्परमं हरिः ॥ १
किंचिचन्द्राद्विशुद्धात्मा किंचिचन्द्राद्विशेषवान् ।
कृशानुवर्णः किंचिच्च किंचिद्धिष्ण्याकृतिः प्रभुः २
शुकपत्रनिभः किंचित्किंचित्स्फटिकसन्निभः ।
नीलाञ्जनचयप्रख्यो जातरूपप्रभः कचित् ॥ ३
प्रवालाङ्कुरवर्णश्च श्वेतवर्णस्तथा कचित् ।
कचित्सुवर्णवर्णाभो वैदूर्यसदृशः कचित् ॥ ४
नीलवैदूर्यसदृश इन्द्रनीलनिभः कचित् ।
मयूरग्रीववर्णाभो मुक्ताहारनिभः कचित् ॥ ५
एतान्बहुविधान्वर्णान्रूपैर्बिभ्रत्सनातनः ।
सहस्रनयनः श्रीमाञ्छतशीर्षः सहस्रपात् ॥ ६
सहस्रोदरबाहुश्च अव्यक्त इति च कचित् ।
ओंकारमुद्गिरन्वक्त्रात्सावित्रीं च तदन्वयाम् ॥ ७
शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्वेदान्गिरन्बहून् ।
आरण्यकं जगौ देवो हरिर्नारायणो वशी ॥ ८
वेदिं कमण्डलुं दर्भान्मणिरूपांस्तथा कुशान् ।
अजिनं दण्डकाष्ठं च ज्वलितं च हुताशनम् ।
धारयामास देवेशो हस्तैर्यज्ञपतिस्तदा ॥ ९
तं प्रसन्नं प्रसन्नात्मा नारदो द्विजसत्तमः ।
वाग्यतः प्रणतो भूत्वा ववन्दे परमेश्वरम् ॥ १०
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ॥ ११
श्रीभगवानुवाच ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इमं देशमनुप्राप्ता मम दर्शनलालसाः ॥ १२
न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन ।
ऋते ह्यैकान्तिकश्रेष्ठात्त्वं चैवैकान्तिकोत्तम ॥ १३
ममैतास्तनवः श्रेष्ठा जाता धर्मगृहे द्विज ।
तास्त्वं भजस्व सततं साधयस्व यथागतम् ॥ १४
वृणीष्व च वरं विप्र मत्तस्त्वं यदिहेच्छसि ।
प्रसन्नोऽहं तवाद्येह विश्वमूर्तिरिहाव्ययः ॥ १५
नारद उवाच ।
अद्य मे तपसो देव यमस्य नियमस्य च ।
सद्यः फलमवाप्तं वै दृष्टो यद्भगवान्मया ॥ १६
वर एष ममात्यन्तं दृष्टस्त्वं यत्सनातनः ।
भगवन्विश्वदृक् सिंहः सर्वमूर्तिर्महान्प्रभुः ॥ १७
भीष्म उवाच ।
एवं संदर्शयित्वा तु नारदं परमेष्ठिजम् ।
उवाच वचनं भूयो गच्छ नारद माचिरम् ॥ १८
इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः ।
एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति ॥ १९
सिद्धा ह्येते महा[illegible]गाः पुरा ह्येकान्तिनोऽभवन् ।
तमोरजोभिर्निर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम् ॥ २०
न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च ।
न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः ॥ २१
सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै ।
यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ॥ २२
भूतग्रामशरीरेषु नश्यत्सु न विनश्यति ।
अजो नित्यः शाश्वतश्च निर्गुणो निष्कलस्तथा २३
द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः ।
पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते ॥ २४
यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः ।
स वासुदेवो विज्ञेयः परमात्मा सनातनः ॥ २५
पश्य देवस्य माहात्म्यं महिमानं च नारद ।
शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन ॥ २६
सत्वं रजस्तमश्चेति गुणानेतान्प्रचक्षते ।

---

स्तव्यैश्च नामभिरिति थ. पाठः । त मुनिं दर्शयामास नारदं विश्वरूपधृदिति झ. थ. पाठः ॥ १ ॥ गायत्रीं च तदन्वयामिति ध. पाठः ॥ ७ ॥ वेदिं कमण्डलुं शुभ्रान्मणीनुपानहौ कुशानिति झ. पाठः ॥ ९ ॥ ददृशिरे ददृशुः ॥ १३ ॥ मद्भक्ताः सूर्यवर्चस इति ध. पाठः ॥ १९ ॥ न गुणाः संभवन्ति हीति ध. पाठः ॥ २२ ॥

एते सर्वशरीरेषु तिष्ठन्ति विचरन्ति च ॥ २७
एतान्गुणांस्तु क्षेत्रज्ञो भुङ्क्ते नैभिः स भुज्यते ।
निर्गुणो गुणभुक्चैव गुणस्रष्टा गुणातिगः ॥ २८
जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते २९
खे वायुः प्रलयं याति मनस्याकाशमेव च ।
मनो हि परमं भूतं तदव्यक्ते प्रलीयते ॥ ३०
अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते ।
नास्ति तस्मात्परतरः पुरुषाद्वै सनातनात् ॥ ३१
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते तमेकं पुरुषं वासुदेवं सनातनम् ।
सर्वभूतात्मभूतो हि वासुदेवो महाबलः ॥ ३२
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
ते समेता महात्मानः शरीरमिति संज्ञितम् ॥३३
तदाविशति यो ब्रह्मन्न दृश्यो लघुविक्रमः ।
उत्पन्न एव भवति शरीरं चेष्टयन्प्रभुः ॥ ३४
न विना धातुसंघातं शरीरं भवति क्वचित् ।
न च जीवं विना ब्रह्मन्वायवश्चेष्टयन्त्युत ॥ ३५
स जीवः परिसंख्यातः शेषः संकर्षणः प्रभुः ।
तस्मात्सनत्कुमारत्वं योऽलभत्स्वेन कर्मणा ॥ ३६
यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षयम् ।
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ।
तस्मात्प्रसूतो यः कर्ता कारणं कार्यमेव च ॥ ३७
तस्मात्सर्वं संभवति जगत्स्थावरजङ्गमम् ।
सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मसु ॥३८
यो वासुदेवो भगवान्क्षेत्रज्ञो निर्गुणात्मकः ।
ज्ञेयः स एव राजेन्द्र जीवः संकर्षणः प्रभुः ॥ ३९
संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते ।
प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहंकारः स ईश्वरः ॥ ४०
मत्तः सर्वं संभवति जगत्स्थावरजङ्गमम् ।
अक्षरं च क्षरं चैव सच्चासच्चैव नारद ॥ ४१
मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम ।
अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ॥ ४२
निर्गुणो निष्कलश्चैव निर्द्वन्द्वो निष्परिग्रहः ।
एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते ॥ ४३
इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः ।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ॥४४
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ।
मयैतत्कथितं सम्यक्तव मूर्तिचतुष्टयम् ॥ ४५
अहं हि जीवसंज्ञो वै मयि जीवः समाहितः ।
मैवं ते बुद्धिरत्राभूद्दृष्टो जीवो मयेति वै ॥ ४६
अहं सर्वत्रगो ब्रह्मन्भूतग्रामान्तरात्मकः ।
भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहम् ॥ ४७
सिद्धा हि ते महाभागा नरा ह्येकान्तिनोऽभवन् ।
तमोरजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ४८
'अहं कर्ता च कार्यं च कारणं चापि नारद ।
न दृश्यश्चक्षुषा देवः स्पृश्यो न स्पर्शनेन च ।
आघ्रेयो नैव गन्धेन रसेन च विसर्जितः ॥ ४९
सत्त्वं रजस्तमश्चैव न गुणास्ते भवन्ति हि ।
स हि सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ॥'५०
हिरण्यगर्भो लोकादिश्चतुर्वक्त्रोऽनिरुक्तगः ।
ब्रह्मा सनातनो देवो मम बह्वर्थचिन्तकः ॥ ५१
ललाटाच्चैव मे रुद्रो देवः क्रोधाद्विनिःसृतः ।
पश्यैकादश मे रुद्रान्दक्षिणं पार्श्वमास्थितान् ५२
द्वादशैव तथाऽऽदित्यान्वामपार्श्वे समास्थितान् ।
अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान् ॥ ५३
नासत्यं चैव दस्रं च भिषजौ पश्य पृष्ठतः ।
सर्वान्प्रजापतीन्पश्य पश्य सप्तऋषींस्तथा ॥ ५४
वेदान्यज्ञांश्च शतशः पश्यामृतमथौषधीः ।
तपांसि नियमांश्चैव यमानपि पृथग्विधान् ॥ ५५
तथाऽष्टगुणमैश्वर्यमेकस्थं पश्य मूर्तिमत् ।
श्रियं लक्ष्मीं च कीर्तिं च पृथिवीं च ककुद्मिनीं ५६
वेदानां मातरं पश्य मत्स्थां देवीं सरस्वतीम् ।
ध्रुवं च ज्योतिषां श्रेष्ठं पश्य नारद खेचरम् ॥५७

शरीरं चेन्द्रियाणि चेति ध. पाठः ॥ ३५ ॥ मानसः सर्वभूतानामिति ध. पाठः ॥ ३७ ॥ व्यक्तः सर्वेषु कर्मस्विति ट. पाठः ॥ ३८ ॥ मां प्रविश्य भजन्तीहेति ध. पाठः ॥ ४२ ॥ वसूनष्टौ समाश्रितानिति थ. पाठः ॥ ५३ ॥ वेदान्यज्ञान्पशूंश्चैव स्रुक्स्रुवं दर्भमहौषधीरिति थ. पाठः ॥ ५५ ॥ ब्रह्मण्यं ज्योतिषां श्रेष्ठमिति ध. पाठः ॥ ५७ ॥

अम्भोधरान्समुद्रांश्च सरांसि सरितस्तथा ।
मूर्तिमन्तः पितृगणांश्चतुरः पश्य सत्तम ॥ ५८
त्रींश्चैवेमान्गुणान्पश्य मत्स्थान्मूर्तिविवर्जितान् ।
देवकार्यादपि मुने पितृकार्यं विशिष्यते ॥ ५९
देवानां च पितृणां च पिता ह्येकोऽहमादितः ।
अहं हयशिरा भूत्वा समुद्रे पश्चिमोत्तरे ॥ ६०
पिबामि सुहुतं हव्यं कव्यं च श्रद्धयाऽन्वितम् ।
मया सृष्टः पुरा ब्रह्मा मां यज्ञमयजत्स्वयम् ॥६१
ततस्तस्मै वरान्प्रीतो दत्तवानस्म्यनुत्तमान् ।
मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च॥६२
अहंकारकृतं चैव नामपर्यायवाचकम् ।
त्वया कृतां च मर्यादां नातिक्रंस्यति कश्चन ६३
त्वं चैव वरदो ब्रह्मन्वरेप्सूनां भविष्यसि ।
सुरासुरगणानां च ऋषीणां च तपोधन ॥ ६४
पितृणां च महाभाग सततं संशितव्रत ।
विविधानां च भूतानां त्वमुपास्यो भविष्यसि ६५
प्रादुर्भावगतश्चाहं सुरकार्येषु नित्यदा ।
अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा॥६६
एतांश्चान्यांश्च रुचिरान्ब्रह्मणेऽमिततेजसे ।
‘एवं रुद्राय मनवे इन्द्रायामिततेजसे ।’
अहं दत्त्वा वरान्प्रीतो निवृत्तिपरमोऽभवम् ॥६७
निर्वाणं सर्वधर्माणां निवृत्तिः परमा स्मृता ।
तस्मान्निवृत्तिमापन्नश्चरेत्सर्वाङ्गनिर्वृतः ॥ ६८
विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्याः साङ्ख्यनिश्चितनिश्चयाः॥६९
हिरण्यगर्भो भगवानेष च्छन्दसि संस्तुतः ।
सोऽहं योगगतिर्ब्रह्मन्योगशास्त्रेषु शब्दितः ॥ ७०
एषोऽहं व्यक्तिमाश्रित्य तिष्ठामि दिवि शाश्वतः।
ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः ॥ ७१
कृत्वाऽऽत्मस्थानि भूतानि स्थावराणि चराणि च ।
एकाकी विद्यया सार्धं विहरिष्ये जगत्पुनः ॥७२
ततो भूयो जगत्सर्वं करिष्यामीह विद्यया ।
अस्मिन्मूर्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ७३
स हि संकर्षणः प्रोक्तः प्रद्युम्नः सोप्यजीजनत् ।
प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनःपुनः ॥ ७४
अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ।
ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च ॥७५
एतां सृष्टिं विजानीहि कल्पादिषु पुनःपुनः ।
यथा सूर्यस्य गगनादुदयास्तमने इह ।
नष्टे पुनर्बलात्काल आनयत्यमितद्युते ॥ ७६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४७ ॥

## अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४८ ॥

**श्वेतद्वीपस्थेन हरिणा नारदंप्रति स्वदशावतारचरित्रकथनम् ॥ १ ॥**

भीष्म उवाच ।
नारदः परिप्रपच्छ भगवन्तं जनार्दनम् ।
एकार्णवे महाघोरे नष्टे स्थावरजङ्गमे ।
केषुकेषु च भावेषु द्रष्टव्योऽसि महाप्रभो ॥ १
श्रीभगवानुवाच ।
शृणु नारद तत्वेन प्रादुर्भावान्महामुने ।
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च रामश्च बुद्धः कल्कीति ते दश ॥२
पूर्वं मीनो भविष्यामि स्थापयिष्याम्यहं प्रजाः ।
लोकान्वै धारयिष्यामि मज्जमानान्महार्णवे ॥ ३
द्वितीयः कूर्मरूपो मे हेमकूटनिभः स्मृतः ।
मन्दरं धारयिष्यामि अमृतार्थं द्विजोत्तम ॥ ४

ब्रह्मा मयज्ञमयजत्स्वयमिति ट. ध. पाठः ॥ ६१ ॥ तस्मिन्निवृत्तिमापन्ने चरेत्सर्वत्र विष्ठित इति ध. पाठः । चरेत्सर्वत्र निस्स्पृह इति ट. पाठः ॥ ६८ ॥ हिरण्यगर्भो भगवान्विश्वयोनिः सनातन इति ट. पाठः ॥ ७० ॥ तिष्ठामि भुवि शाश्वत इति थ. पाठः ॥ ७१ ॥ तत्रादिकमलोद्भवः इति ध. पाठः ॥ ७५ ॥ सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४७ ॥

रामश्च कृष्णः कल्की च ते दशेति थ. पाठः ॥ २ ॥

मग्नां महार्णवे घोरे भाराक्रान्तां भुवं पुनः ।
ततो बलादहं विद्वन्सर्वभूतहिताय वै ॥' ५
सत्वैराक्रान्तसर्वाङ्गां नष्टां सागरमेखलाम् ।
आनयिष्यामि स्वं स्थानं वाराहं रूपमास्थितः ।
हिरण्याक्षं हनिष्यामि दैतेयं बलगर्वितम् ॥ ६
नारसिंहं वपुः कृत्वा हिरण्यकशिपुं पुनः ।
सुरकार्ये हनिष्यामि यज्ञघ्नं दितिनन्दनम् ॥ ७
विरोचनस्य बलवान्बलिः पुत्रो महासुरः ।
अवध्यः सर्वलोकानां सदेवासुररक्षसाम् ।
भविष्यति स शक्रं च स्वराज्याच्च्यावयिष्यति ॥ ८
त्रैलोक्येऽपहृते तेन विमुखे च शचीपतौ ।
अदित्यां द्वादशः पुत्रः संभविष्यामि कश्यपात् ॥ ९
'वटुर्गत्वा यज्ञसदः स्तूयमानो द्विजोत्तमैः ।
यज्ञस्तुतिं करिष्यामि श्रुत्वा प्रीतो भवेद्बलिः ॥ १०
किमिच्छसि वटो ब्रूहीत्युक्तो याचे महद्वरम् ।
दीयतां त्रिपदीमात्रमिति याचे महाऽसुरम् ॥ ११
स दद्यान्मयि संप्रीतः प्रतिषिद्धश्च मन्त्रिभिः ।
यावज्जलं हस्तगतं त्रिभिर्विक्रमणैर्युतम् ॥' १२
ततो राज्यं प्रदास्यामि शक्रायामिततेजसे ।
देवताः स्थापयिष्यामि स्वस्वस्थानेषु नारद ॥ १३
बलिं चैव करिष्यामि पातालतलवासिनम् ।
दानवं च बलिश्रेष्ठमवध्यं सर्वदैवतैः । १४
त्रेतायुगे भविष्यामि रामो भृगुकुलोद्वहः ।
क्षत्रं चोत्सादयिष्यामि समृद्धबलवाहनम् ॥ १५
संधौ तु समनुप्राप्ते त्रेतायां द्वापरस्य च ।
रामो दाशरथिर्भूत्वा भविष्यामि जगत्पतिः ॥ १६
त्रितोपघाताद्वैरूप्यमेकतोऽथ द्वितस्तथा ।
प्राप्स्येते वानरत्वं हि प्रजापतिसुतावृषी ॥ १७
तयोर्ये त्वन्वये जाता भविष्यन्ति वनौकसः ।
महाबला महावीर्याः शक्रतुल्यपराक्रमाः ।
ते सहाया भविष्यन्ति सुरकार्ये मम द्विज ॥ १८
ततो रक्षःपतिं घोरं पुलस्त्यकुलपांसनम् ।
हनिष्ये रावणं रौद्रं सगणं लोककण्टकम् ॥ १९
'विभीषणाय दास्यामि राज्यं तस्य यथाक्रमम् ।
अयोध्यावासिनः सर्वान्नेष्येऽहं लोकमव्ययम् ' २०
द्वापरस्य कलेश्चैव संधौ पार्यवसानिके ।
प्रादुर्भावः कंसहेतोर्मथुरायां भविष्यति ॥ २१
तत्राहं दानवान्हत्वा सुबहून्देवकण्टकान् ।
कुशस्थलीं करिष्यामि निवासं द्वारकां पुरीम् ॥ २२
वसानस्तत्र वै पुर्यामदितेर्विप्रियंकरम् ।
हनिष्ये नरकं भौमं मुरं पीठं च दानवम् ॥ २३
प्राग्ज्योतिषं पुरं रम्यं नानाधनसमन्वितम् ।
कुशस्थलीं नयिष्यामि हत्वा वै दानवोत्तमान् ॥ २४
'कृकलासभूतं च नृगं मोचयिष्ये च वै पुनः ॥ २५
तत्र पौत्रनिमित्तेन गत्वा वै शोणितं पुरम् ।
बाणस्य च पुरं गत्वा करिष्ये कदनं महत् ॥' २६
शंकरं समहासेनं बाणप्रियहिते रतम् ।
पराजेष्याम्यथोद्युक्तौ देवौ लोकनमस्कृतौ ॥ २७
ततः सुतं बलेर्जित्वा बाणं बाहुसहस्रिणम् ।
विनाशयिष्यामि ततः सर्वान्सौभनिवासिनः ॥ २८
यः कालयवनः ख्यातो गर्गतेजोभिसंवृतः ।
भविष्यति वधस्तस्य मत्त एव द्विजोत्तम ॥ २९
'कंसं केशिं तथाक्रूरमरिष्टं च महासुरम् ।
चाणूरं च महावीर्यं मुष्टिकं च महाबलम् ॥ ३०
प्रलम्बं धेनुकं चैव अरिष्टं वृषरूपिणम् ।
कालीयं च वशे कृत्वा यमुनाया महाह्रदे ॥ ३१
गोकुलेषु ततः पश्चाद्गवार्थे तु महागिरिम् ।
सप्तरात्रं धरिष्यामि वर्षमाणे तु वासवे ॥ ३२
अपक्रान्ते ततो वर्षे गिरिमूर्ध्नि व्यवस्थितः ।
इन्द्रेण सह संवादं करिष्यामि तदा द्विज ।
लब्ध्वाच्छिद्य धनं सर्वं वासुदेवं च पौण्ड्रकम् ॥'
जरासन्धश्च बलवान्सर्वराजविरोधनः ।

यज्ञघ्नं बलगर्वितमिति ध. पाठः ॥ ६ ॥ अदित्यां द्वादशादित्य इति झ. पाठः ॥ ९ ॥ ततः कृतयुगे प्राप्ते द्वात्रिंशद्युगपर्यये । भविष्यामि ऋषिस्तत्र जमदग्निकुलोद्भवः । इति ध. पाठः ॥ १५ ॥ रावणं दृप्तं सर्वलोकैककण्टकमिति ट. पाठः ॥ १९ ॥

द्वापरस्य कलेश्चैव अष्टाविंशच्चतुर्युगे । प्रादुर्भावं करिष्यामि भूयो वृष्णिकुलोद्भवः । मथुरायां कंसहेतोर्वासुदेवेति नामतः । तृतीयो राम इत्येव वसुदेवसुतो बलीति थ. ध. पाठः । कलेश्चैव अष्टाविंशच्चतुर्युगे इति ध. पाठः ॥ २१ ॥

भविष्यत्यसुरः स्फीतो भूमिपालो गिरिव्रजे ३४
मम बुद्धिपरिस्पन्दाद्वधस्तस्य भविष्यति ।
शिशुपालं वधिष्यामि यज्ञे धर्मसुतस्य वै ॥ ३५
'दुर्योधनापराधेन युधिष्ठिरगुणेन च ।'
समागतेषु बलिषु पृथिव्यां सर्वराजसु ॥ ३६
वासविः सुसहायो वै मम त्वेको भविष्यति ।
युधिष्ठिरं स्थापयिष्ये स्वराज्ये भ्रातृभिः सह ॥३७
एवं लोका वदिष्यन्ति नरनारायणावृषी ।
उद्युक्तौ दहतः क्षत्रं लोककार्यार्थमीश्वरौ ॥ ३८
'शस्त्रैर्निपतिताः सर्वे नृपा यास्यन्ति वै दिवम् ॥'
कृत्वा भारावतरणं वसुधाया यथेप्सितम् ।
सर्वसात्वतमुख्यानां द्वारकायाश्च सत्तम ॥ ४०
करिष्ये प्रलयं घोरमात्मज्ञानाभिसंश्रयः ।
'द्वारकामात्मसात्कृत्वा समुद्रं गमयाम्यहम् ॥ ४१
ततः कलियुगस्यादौ द्विजराजतरुं श्रितः ।
भीषया मागधेनैव धर्मराजगृहे वसन् ॥ ४२
काषायवस्त्रसंवीतो मुण्डितः शुक्लदन्तवान् ।
शुद्धोदनसुतो बुद्धो मोहयिष्यामि मानवान् ४३
शूद्राः श्राद्धेषु भुज्यन्ते मयि बुद्धत्वमागते ।
भविष्यन्ति नराः सर्वे बुद्धाः काषायसंवृताः ४४
अनध्याया भविष्यन्ति विप्रा यागविवर्जिताः ।
अग्निहोत्राणि सीदन्ति गुरुपूजा च नश्यति ॥ ४५
न शृण्वन्ति पितुः पुत्रा न स्नुषा नैव भ्रातरः ।
न पौत्रा न कलत्रा वा वर्तन्तेऽप्यधमोत्तमाः ॥४६
एवंभूतं जगत्सर्वं श्रुतिस्मृतिविवर्जितम् ।
भविष्यति कलौ पूर्णे ह्यशुद्धो धर्मसंकरः ॥ ४७
तेषां सकाशाद्धर्मज्ञा देवब्रह्मविदो नराः ।
भविष्यन्ति ह्यशुद्धाश्च न्यायच्छलविभाषिणः ॥४८
ये नष्टधर्मश्रोतारस्ते समाः पापनिश्चये ।
तस्मादेता न संभाष्या न स्पृश्या च हितार्थिभिः ।
उपवासत्रयं कुर्यात्तत्संसर्गविशुद्धये ॥ ४९
ततः कलियुगस्यान्ते ब्राह्मणो हरिपिङ्गलः ।
कल्किर्विष्णुयशः पुत्रो याज्ञवल्क्यः पुरोहितः ५०
तस्मिन्नाशे वनग्रामे तिष्ठेत्सोन्नासिमो हयः ।
सहया ब्राह्मणाः सर्वे तैरहं सहितः पुनः ।
म्लेच्छानुत्सादयिष्यामि पाषण्डांश्चैव सर्वशः ॥५१
पाषण्डश्च कलौ तत्र माययैव विनश्यते ।
पाषण्डकांश्चैव हत्वा तत्रान्तं प्रलये ह्यहम् ॥ ५२
ततः पश्चाद्भविष्यामि यज्ञेषु निरतः सदा ।
राज्यं प्रशासति पुनः कुन्तीपुत्रे युधिष्ठिरे ॥' ५३
कर्माण्यपरिमेयानि चतुर्मूर्तिधरो ह्यहम् ।
कृत्वा लोकान्गमिष्यामि स्वानहं ब्रह्मसत्कृतान् ॥
हंसः कूर्मश्च मत्स्यश्च प्रादुर्भावा द्विजोत्तम ।
वराहो नरसिंहश्च वामनो राम एव च ।
रामो दाशरथिश्चैव सात्वतः कल्किरेव च ॥ ५५
यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता पुनः ।
सवेदाः सश्रुतीकाश्च कृताः पूर्वं कृते युगे ॥ ५६
अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित् ।
अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः ॥५७
लोककार्याणि कृत्वा च पुनः स्वां प्रकृतिं गताः ।
न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनम् ॥ ५८
यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना ।
एतत्ते सर्वमाख्यातं ब्रह्मन्भक्तिमतो मया ।
पुराणं च भविष्यं च सरहस्यं च सत्तम ॥ ५९
भीष्म उवाच ।
एवं स भगवान्देवो विश्वमूर्तिधरोऽव्ययः ।
एतावदुक्त्वा वचनं तत्रैवान्तर्दधे पुनः ॥ ६०
नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम् ।
नरनारायणौ द्रष्टुं बदर्याश्रममाद्रवत् ॥ ६१
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् ॥ ६२
नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः ।
ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम् ॥ ६३
युधिष्ठिर उवाच ।
एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः ।
किं वै ब्रह्मा न जानीते यतः शुश्राव नारदात् ॥

ईदृशं ब्रह्मदर्शनमिति ध. पाठः ॥ ५८ ॥

अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४८ ॥

पितामहोऽपि भगवांस्तस्माद्देवादनन्तरः ।
कथं स न विजानीयात्प्रभावममितौजसः ॥ ६५
भीष्म उवाच ।
महाकल्पसहस्राणि महाकल्पशतानि च ।
समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह ॥ ६६
सर्गस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः ।
जानाति देवप्रवरं भूयश्चातोधिकं नृप ।
परमात्मानमीशानमात्मनः प्रभवं तथा ॥ ६७
ये त्वन्ये ब्रह्मसदने सिद्धसङ्घाः समागताः ।
तेभ्यस्तच्छ्रावयामास पुराणं वेदसंमितम् ॥ ६८
अष्टाविंशत्सहस्राणि ऋषीणां भावितात्मनाम् ।
आत्मानुगामिनां ब्रह्मा श्रावयामास तत्वतः ।
एवं पुरा प्राप्तमिदं भानुना मुनिभाषितम् ॥ ६९
वर्षषष्टिसहस्राणि षष्टिवर्षशतानि च ।
सूर्यस्य तपतो लोकान्निर्मिता ये पुरःसराः ।
तेषामकथयत्सूर्यः सर्वेषां भावितात्मनाम् ॥ ७०
सूर्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः ।
मेरौ समागता देवाः श्राविताश्चेदनुत्तमम् ॥ ७१
देवानां तु सकाशाद्वै ततः श्रुत्वाऽसितो द्विजः ।
श्रावयामास राजेन्द्र पितॄन्वै मुनिसत्तमः ॥ ७२
मम चापि पिता तात कथयामास शंतनुः ।
ततो मयापि श्रुत्वा च कीर्तितं तव भारत ॥ ७३
सुरैर्वा मुनिभिर्वापि पुराणं यैरिदं श्रुतम् ।
सर्वे ते परमात्मानं पूजयन्ते समन्ततः ॥ ७४
इदमाख्यानमार्षेयं पारम्पर्यागतं नृप ।
नावासुदेवभक्ताय त्वया देयं कथंचन ॥ ७५
'आख्यानमुत्तमं चेदं श्रावयेद्यः सदा नृप ।
तदैव मनुजो भक्तः शुचिर्भूत्वा समाहितः ।
प्राप्नुयादचिराद्राजन्विष्णुलोकं च शाश्वतम् ॥' ७६
मत्तोन्यानि च ते राजन्नुपाख्यानशतानि वै ।
यानि श्रुतानि सर्वाणि तेषां सारोयमुद्धृतः ॥ ७७
सुरासुरैर्यथा राजन्निर्मथ्यामृतमुद्धृतम् ।
एवमेतत्पुरा विप्रैः कथामृतमिहोद्धृतम् ॥ ७८
यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः ।
एकान्तभावोपगत एकान्ते सुसमाहितः ॥ ७९
प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः ।
स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ॥ ८०
मुच्येदार्तस्तथा रोगाच्छ्रुत्वेमामादितः कथाम् ।
जिज्ञासुर्लभते कामान्भक्तो भक्तगतिं व्रजेत् ८१
त्वयापि सततं राजन्नभ्यर्च्यः पुरुषोत्तमः ।
स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥
ब्रह्मण्यदेवो भगवान्प्रीयतां ते सनातनः ।
युधिष्ठिर महाबाहो महाबुद्धिर्जनार्दनः ॥ ८३
वैशंपायन उवाच ।
श्रुत्वैतदाख्यानवरं धर्मराड्जनमेजय ।
भ्रातरश्चास्य ते सर्वे नारायणपराभवन् ॥ ८४
जितं भगवता तेन पुरुषेणेति भारत ।
नित्यं जप्यपरा भूत्वा सारस्वतमुदीरयन् ॥ ८५
यो ह्यस्माकं गुरुः श्रेष्ठः कृष्णद्वैपायनो मुनिः ।
जगौ परमकं जप्यं नारायणमुदीरयन् ॥ ८६
गत्वान्तरिक्षात्सततं क्षीरोदममृताशयम् ।
पूजयित्वा च देवेशं पुनरायात्स्वमाश्रमम् ॥ ८७
भीष्म उवाच ।
एतत्ते सर्वमाख्यातं नारदोक्तं मयेरितम् ।
पारम्पर्यागतं ह्येतत्पित्रा मे कथितं पुरा ॥ ८८
सौतिरुवाच ।
एतत्ते सर्वमाख्यातं वैशंपायनकीर्तितम् ।
जनमेजयेन तच्छ्रुत्वा कृतं सम्यग्यथाविधि ॥ ८९
यूयं हि तप्ततपसः सर्वे च चरितव्रताः ।
सर्वे वेदविदो मुख्या नैमिषारण्यवासिनः ॥ ९०
शौनकस्य महासत्रं प्राप्ताः सर्वे द्विजोत्तमाः ।
यजध्वं सुहुतैर्यज्ञैः शाश्वतं परमेश्वरम् ।
पारम्पर्यागतं ह्येतत्पित्रा मे कथितं पुरा ॥ ९१

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४८ ॥

## एकोनपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३४९ ॥

श्रीहरेर्यज्ञेष्वग्रभागभाक्त्वप्रकारं पृष्टेन सौतिना तत्कथनाय शौनकादीन्प्रति ब्रह्मादीनां श्वेतद्वीपगमनादिप्रतिपादक-व्यासवैशंपायनादिसंवादानुवादः ॥ १ ॥

शौनक उवाच ।
कथं स भगवान्देवो यज्ञेष्वग्रहरः प्रभुः ।
यज्ञधारी च सततं वेदवेदाङ्गवित्तथा ॥ १
निवृत्तं चास्थितो धर्मं क्षेमी भागवतः प्रभुः ।
निवृत्तिधर्मान्विदधे स एव भगवान्प्रभुः ॥ २
कथं प्रवृत्तिधर्मेषु भागार्हा देवताः कृताः ।
कथं निवृत्तिधर्माश्च कृता व्यावृत्तबुद्धयः ॥ ३
एतं नः संशयं सौते छिन्धि गुह्यं सनातनम् ।
त्वया नारायणकथाः श्रुता वै धर्मसंहिताः ॥ ४
सौतिरुवाच ।
जनमेजयेन यत्पृष्टः शिष्यो व्यासस्य धीमतः ।
तत्तेऽहं कथयिष्यामि पौराणं शौनकोत्तम ॥ ५
श्रुत्वा माहात्म्यमेतस्य देहिनां परमात्मनः ।
जनमेजयो महाप्राज्ञो वैशंपायनमब्रवीत् ॥ ६
इमे सब्रह्मका लोकाः ससुरासुरमानवाः ।
क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्वशः ॥ ७
मोक्षश्चोक्तस्त्वया ब्रह्मन्निर्वाणं परमं सुखम् ।
ये तु मुक्ता भवन्तीह पुण्यपापविवर्जिताः ।
ते सहस्रार्चिषं देवं प्रविशन्तीह शुश्रुम ॥ ८
अयं हि दुरनुष्ठेयो मोक्षधर्मः सनातनः ।
यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन् ॥ ९
किंच ब्रह्मा च रुद्रश्च शक्रश्च बलभित्प्रभुः ।
सूर्यस्ताराधिपो वायुरग्निर्वरुण एव च ॥ १०
आकाशं जगती चैव ये च शेषा दिवौकसः ।
प्रलयं न विजानन्ति आत्मनः परिनिर्मितम् ॥ ११
ततस्तेनास्थिता मार्गं ध्रुवमक्षरमव्ययम् ।
स्मृत्वा कालपरीमाणं प्रवृत्तिं ये समास्थिताः ।
दोषः कालपरीमाणो महानेष क्रियावताम् ॥ १२
एतन्मे संशयं विप्र हृदि शल्यमिवार्पितम् ।
छिन्धीतिहासकथनात्परं कौतूहलं हि मे ॥ १३
कथं भागहराः प्रोक्ता देवताः क्रतुषु द्विज ।
किमर्थं चाध्वरे ब्रह्मन्निज्यन्ते त्रिदिवौकसः ॥ १४
ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम ।
ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै ॥ १५
वैशंपायन उवाच ।
अहो गूढतमः प्रश्नस्त्वया पृष्टो जनेश्वर ।
नातप्ततपसा ह्येष नावेदविदुषा तथा ।
नापुराणविदा चैव शक्यो व्याहर्तुमञ्जसा ॥ १६
हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः ।
कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः ॥ १७
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः ॥ १८
एतान्समागतान्सर्वान्पञ्च शिष्यान्दमान्वितान् ।
शौचाचारसमायुक्ताञ्जितक्रोधाञ्जितेन्द्रियान् १९
वेदानध्यापयामास महाभारतपञ्चमान् ।
मेरौ गिरिवरे रम्ये सिद्धचारणसेविते ॥ २०
तेषामभ्यस्यतां वेदान्कदाचित्संशयोऽभवत् ।
एष वै यस्त्वया पृष्टस्तेन तेषां प्रकीर्तितः ॥ २१
ततः श्रुतो मया चापि तवाख्येयोऽद्य भारत २२
शिष्याणां वचनं श्रुत्वा सर्वाज्ञानतमोनुदः ।
पराशरसुतः श्रीमान्व्यासो वाक्यमथाब्रवीत् ॥ २३
मया हि सुमहत्तप्तं तपः परमदारुणम् ।
भूतं भव्यं भविष्यं च जानीयामिति सत्तमाः ॥ २४
तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च ।
नारायणप्रसादेन क्षीरोदस्यानुकूलतः ॥ २५
त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम् ।
तच्छृणुध्वं यथान्यायं वक्ष्ये संशयमुत्तमम् ॥ २६
यथा वृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा ।

---

यज्ञेष्वाहूयते प्रभुरिति ट. ध. पाठः ॥ १ ॥ क्षेमं भागवतं प्रभुरिति ट. पाठः ॥ २ ॥ स्मृतिकालपरीमाणमिति झ. पाठः ॥ १२ ॥

परमात्मेति यं प्राहुः साङ्ख्ययोगविदो जनाः २७
महापुरुषसंज्ञां स लभते स्वेन कर्मणा ।
तस्मात्प्रसूतमव्यक्तं प्रधानं तं विदुर्बुधाः ॥ २८
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ।
अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ॥२९
योसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ।
योऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः ३०
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
अहंकारप्रसूतानि महाभूतानि पञ्चधा ॥ ३१
महाभूतानि सृष्ट्वैव तान्गुणान्निर्ममे पुनः ।
भूतेभ्यश्चैव निष्पन्ना मूर्तिमन्तश्च ताञ्शृणु ॥३२
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महात्मा वै मनुः स्वायंभुवस्तथा ।
ज्ञेयाः प्रकृतयोऽष्टौ ता यासु लोकाः प्रतिष्ठिताः॥
वेदान्वेदाङ्गसंयुक्तान्यज्ञयज्ञाङ्गसंयुतान् ।
निर्ममे लोकसिद्ध्यर्थं ब्रह्मा लोकपितामहः ॥३४
अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं जगत् ३५
रुद्रो रोषात्मको जातो दशान्यान्सोसृजत्स्वयम् ।
एकादशैते रुद्रास्तु विकाराः पुरुषाः स्मृताः ३६
ते रुद्राः प्रकृतिश्चैव सर्वे चैव सुरर्षयः ।
उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुपस्थिताः॥३७
वयं सृष्टा हि भगवंस्त्वया च प्रभविष्णुना ।
येन यस्मिन्नधीकारे वर्तितव्यं पितामह ॥ ३८
योसौ त्वयाऽभिनिर्दिष्टो ह्यधिकारोऽर्थचिन्तकः ।
परिपाल्यः कथं तेन साहंकारेण कर्तृणा ॥ ३९
प्रदिशस्व बलं तस्य योऽधिकारार्थचिन्तकः ।
एवमुक्तो महादेवो देवांस्तानिदमब्रवीत् ॥ ४०
ब्रह्मोवाच ।
साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः ।
ममाप्येषा समुत्पन्ना चिन्ता या भवतामिह ४१
लोकतन्त्रस्य कृत्स्नस्य कथं कार्यः परिग्रहः ।
कथं बलक्षयो न स्याद्युष्माकं ह्यात्मनश्च वै ॥ ४२
इतः सर्वेऽपि गच्छामः शरणं लोकसाक्षिणम् ।
महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितम् ॥ ४३
ततस्ते ब्रह्मणा सार्धमृषयो विबुधास्तथा ।
क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः ॥ ४४
ते तपः समुपातिष्ठन्ब्रह्मोक्तं वेदकल्पितम् ।
स महानियमो नाम तपश्चर्या सुदारुणा ॥ ४५
ऊर्ध्वदृग्बाहवश्चैव एकाग्रमनसोऽभवन् ।
एकपादस्थिताः सर्वे काष्ठभूताः समाहिताः ॥ ४६
दिव्यं वर्षसहस्रं ते तपस्तप्त्वा सुदारुणम् ।
शुश्रुवुर्मधुरां वाणीं वेदवेदाङ्गभूषिताम् ॥ ४७
वागुवाच ।
भोभोः सब्रह्मका देवा ऋषयश्च तपोधनाः ।
स्वागतेनार्च्य वः सर्वाञ्श्रावये वाक्यमुत्तमम् ॥४८
विज्ञातं वो मया कार्यं तच्च लोकहितं महत् ।
प्रवृत्तियुक्तं कर्तव्यं युष्मत्प्राणोपबृंहणम् ॥ ४९
सुतप्तं वस्तपो देवा ममाराधनकाम्यया ।
भोक्ष्यथास्य महासत्वास्तपसः फलमुत्तमम् ॥५०
एष ब्रह्मा लोकगुरुः सर्वलोकपितामहः ।
यूयं च विबुधश्रेष्ठा मां यजध्वं समाहिताः ॥५१
सर्वे भागान्कल्पयध्वं यज्ञेषु मम नित्यशः ।
तत्र श्रेयोऽभिधास्यामि यथाऽधीकारमीश्वराः ५२
वैशंपायन उवाच ।
श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः ।
ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ॥ ५३
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ।
तस्मिन्सत्रे सदा ब्रह्मा स्वयं भागमकल्पयत् ॥ ५४
देवा देवर्षयश्चैव स्वंस्वं भागमकल्पयन् ।
ते कार्तयुगधर्माणो भागाः परमसत्कृताः ॥ ५५
प्राहुरादित्यवर्णं तं पुरुषं तमसः परम् ।
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम् ॥ ५६
ततोऽथ वरदो देवस्तान्सर्वानमरान्स्थितान् ।
अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः ॥ ५७

लोकेषु महाराजेति कथ्यत इति थ. पाठः ॥ २९ ॥ निष्पन्ना-नष्टौ मूर्तिमतः शृण्विति ध. पाठः ॥ ३२ ॥ निर्ममे लोकसु-ष्ट्यर्थमिति थ. ध. पाठः ॥ ३५ ॥

येन यः कल्पितो भागः स तथा मामुपागतः।
प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ।
एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवम् ॥ ५८
यूयं यज्ञैरिज्यमानाः समाप्तवरदक्षिणैः ।
युगेयुगे भविष्यध्वं प्रवृत्तिफलभागिनः ॥ ५९
यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः ।
कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् ६०
यो मे यथा कल्पितवान्भागमस्मिन्महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः ॥ ६१
यूयं लोकान्भावयध्वं यज्ञभागफलोचिताः ।
सर्वार्थचिन्तका लोके मयाऽधीकारनिर्मिताः ॥६२
याः क्रियाः प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः ।
ताभिराप्यायितबला लोकान्वै धारयिष्यथ ॥६३
यूयं हि भाविता यज्ञैः सर्वयज्ञेषु मानवैः ।
मां ततो भावयिष्यध्वमेषा वो भावना मम ॥६४
इत्यर्थं निर्मिता वेदा यज्ञाश्चौषधिभिः सह ।
एभिः सम्यक्प्रयुक्तैर्हि प्रीयन्ते देवताः क्षितौ ॥६५
निर्माणमेतद्युष्माकं प्रवृत्तिगुणकल्पितम् ।
मया कृतं सुरश्रेष्ठा यावत्कल्पक्षयादिह ।
चिन्तयध्वं लोकहितं यथाधीकारमीश्वराः ॥ ६६
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठ इति सप्तैते मनसा निर्मिता हि ते ॥ ६७
एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः ।
प्रवृत्तिधर्मिणश्चैव प्राजापत्ये च कल्पिताः ॥ ६८
अयं क्रियावतां पन्था व्यक्तीभूतः सनातनः ।
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ॥ ६९
सनः सनत्सुजातश्च सनकः ससनन्दनः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥ ७०
सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममास्थिताः ॥७१
एते योगविदो मुख्याः साङ्ख्यशास्त्रविशारदाः ।
आचार्या धर्मशास्त्रेषु मोक्षधर्मप्रवर्तकाः ॥ ७२
यतोऽहं प्रसृतः पूर्वमव्यक्तात्त्रिगुणो महान् ।
तस्मात्परतरो योऽसौ क्षेत्रज्ञ इति कल्पितः ॥ ७३
सोऽहं क्रियावतां पन्थाः पुनरावृत्तिदुर्लभः ।
यो यथा निर्मितो जन्तुर्यस्मिन्यस्मिंश्च कर्मणि ७४
प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोऽश्नुतेऽवशः ।
एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः ॥ ७५
एष माता पिता चैव युष्माकं च पितामहः ।
मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः ॥ ७६
अस्य चैवात्मजो रुद्रो ललाटाद्यः समुत्थितः ।
ब्रह्मानुशिष्टो भविता सर्वभूतधरः प्रभुः ॥ ७७
गच्छध्वं स्वानधीकारांश्चिन्तयध्वं यथाविधि ।
प्रवर्तन्तां क्रियाः सर्वाः सर्वलोकेषु माचिरम् ७८
प्रदिश्यन्तां च कर्माणि प्राणिनां गतयस्तथा ।
परिनिष्ठितकालानि आयूंषीह सुरोत्तमाः ॥ ७९
इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तितः ।
अहिंस्या यज्ञपशवो युगेऽस्मिन्न तदन्यथा ॥ ८०
चतुष्पात्सकलो धर्मो भविष्यत्यत्र वै सुराः ।
ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति ॥ ८१
प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति वै मखे ।
यत्र पादश्चतुर्थो वै धर्मस्य नभविष्यति ॥ ८२
ततो वै द्वापरं नाम मिश्रः कालो भविष्यति ।
द्विपादहीनो धर्मश्च युगे तस्मिन्भविष्यति ॥८३
ततस्तिष्येऽथ संप्राप्ते युगे कलिपुरस्कृते ।
एकपादस्थितो धर्मो यत्र तत्र भविष्यति ॥ ८४
देवा ऊचुः ।
देवा देवर्षयश्चोचुस्तमेवंवादिनं गुरुम् ।
एकपादस्थिते धर्मे यत्र क्वचन गामिनि ।
कथं कर्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ॥ ८५
श्रीभगवानुवाच ।
'गुरवो यत्र पूज्यन्ते साधुवृत्तसमन्विताः ।
वस्तव्यं तत्र युष्माभिर्यत्र धर्मो न हीयते ॥' ८६
यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा ।
अहिंसा धर्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः ।
स वो देशः सेवितव्यो मा वोऽधर्मः पदा स्पृशेत् ८७
व्यास उवाच ।
तेऽनुशिष्टा भगवता देवाः सर्षिगणास्तथा ।

नमस्कृत्वा भगवते जग्मुर्देशान्यथेप्सितान् ॥ ८८
गतेषु त्रिदिवौकस्सु ब्रह्मैकः पर्यवस्थितः ।
दिदृक्षुर्भगवन्तं तमनिरुद्धतनौ स्थितम् ॥ ८९
तं देवो दर्शयामास कृत्वा हयशिरो महत् ।
साङ्गानावर्तयन्वेदान्कमण्डलुत्रिदण्डधृक् ॥ ९०
ततोऽश्वशिरसं दृष्ट्वा तं देवममितौजसम् ।
लोककर्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया ॥ ९१
मूर्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः ।
स परिष्वज्य देवेन वचनं श्रावितस्तदा ॥ ९२
भगवानुवाच ।
लोककार्यगतीः सर्वास्त्वं चिन्तय यथाविधि ।
धाता त्वं सर्वभूतानां त्वं प्रभुर्जगतो गुरुः ।
त्वय्यावेशितभारोऽहं धृतिं प्राप्स्याम्यथाञ्जसा ९३
यदा च सुरकार्यं ते अविषह्यं भविष्यति ।
प्रादुर्भावं गमिष्यामि तदात्मज्ञानदैशिकः ॥९४
व्यास उवाच ।
एवमुक्त्वा हयशिरास्तत्रैवान्तरधीयत ।
तेनानुशिष्टो ब्रह्मापि स्वं लोकमचिराद्गतः ॥ ९५
एवमेष महाभागः पद्मनाभः सनातनः ।
यज्ञेष्वग्रहरः प्रोक्तो यज्ञधारी च नित्यदा ॥ ९६
निवृत्तिं चास्थितो धर्मं गतिमक्षयधर्मिणाम् ।
प्रवृत्तिधर्मान्विदधे कृत्वा लोकस्य चित्रताम् ९७
स आदिः स मध्यः स चान्तः प्रजानां
स धाता स धेयं स कर्ता स कार्यम् ।
युगान्ते प्रसुप्तः सुसंक्षिप्य लोकान्
युगादौ प्रबुद्धो जगद्ध्युत्ससर्ज ॥ ९८
तस्मै नमध्वं देवाय निर्गुणाय महात्मने ।
अजाय विश्वरूपाय धाम्ने सर्वदिवौकसाम् ॥ ९९
महाभूताधिपतये रुद्राणां पतये तथा ।
आदित्यपतये चैव वसूनां पतये तथा ॥ १००
अश्विभ्यां पतये चैव मरुतां पतये तथा ।
वेदयज्ञाधिपतये वेदाङ्गपतयेऽपि च ॥ १०१
समुद्रवासिने नित्यं हरये मुञ्जकेशिने ।
शान्ताय सर्वभूतानां मोक्षधर्मानुभाषिणे ॥१०२
तपसां तेजसां चैव पतये यशसामपि ।
वचसां पतये नित्यं सरितां पतये तथा ॥ १०३
कपर्दिने वराहाय एकशृङ्गाय धीमते ।
विवस्वतेऽश्वशिरसे चतुर्मूर्तिधृते सदा ।
सूक्ष्माय ज्ञानदृश्याय अजरायाक्षयाय च ॥१०४
एष देवः संचरति सर्वत्र गतिरव्ययः ।
[एष चैतत्परं ब्रह्म ज्ञेयो विज्ञानचक्षुषा ॥] १०५
एवमेतत्पुरा दृष्टं मया वै ज्ञानचक्षुषा ।
कथितं तच्च वै सर्वं मया पृष्टेन तत्त्वतः ॥ १०६
क्रियतां मद्वचः शिष्याः सेव्यतां हरिरीश्वरः ।
गीयतां वेदशब्दैश्च पूज्यतां च यथाविधि १०७
वैशंपायन उवाच ।
इत्युक्तास्तु वयं तेन वेदव्यासेन धीमता ।
सर्वे शिष्या सुतश्चास्य शुकः परमधर्मवित्॥१०८
स चास्माकमुपाध्यायः सहास्माभिर्विशांपते ।
चतुर्वेदोद्गताभिस्तमृग्भिः समभितुष्टुवे ॥ १०९
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
एवं मेऽकथयद्राजन्पुरा द्वैपायनो गुरुः ॥ ११०
यश्चेदं शृणुयान्नित्यं यश्चैनं परिकीर्तयेत् ।
नमो भगवते कृत्वा समाहितमतिर्नरः ॥ १११
भवत्यरोगो मतिमान्बलरूपसमन्वितः ।
आतुरो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ११२
कामकामी लभेत्कामं दीर्घं चायुरवाप्नुयात् ।
ब्राह्मणः सर्ववेदी स्यात्क्षत्रियो विजयी भवेत् ११३
वैश्यो विपुललाभः स्याच्छूद्रः सुखमवाप्नुयात् ।
अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिम् ॥११४
लग्नगर्भा विमुच्येत गर्भिणी जनयेत्सुतम् ।
वन्ध्या प्रसवमाप्नोति पुत्रपौत्रसमृद्धिमत् ॥११५
क्षेमेण गच्छेदध्वानमिदं यः पठते पथि ।
यो यं कामं कामयते स तमाप्नोति च ध्रुवम् ११६

एकोनपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३४९ ॥

कमण्डलुपवित्रधृगिति ध. पाठः ॥ ९० ॥ तदात्मज्ञानयोगजमिति ट. ध. पाठः ॥ ९४ ॥

इदं महर्षेर्वचनं विनिश्चितं
महात्मनः पुरुषवरस्य कीर्तितम् ।
समागमं चर्षिदिवौकसामिमं
निशम्य भक्ताः सुसुखं लभन्ते ॥ ११७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये एकोनपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३४९ ॥

---

## पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥

वैशंपायनेन जनमेजयंप्रति अर्जुनाय स्वमाहात्म्यख्यापनपूर्वकं श्रीकृष्णकृतनारायणादिस्वनामनिर्वचनानुवादः ॥ १ ॥

जनमेजय उवाच ।
अस्तौषीद्वैदिकैर्व्यासः सशिष्यो मधुसूदनम् ।
नामभिर्विविधैरेषां निरुक्तं भगवन्मम ॥ १
वक्तुमर्हसि शुश्रूषोः प्रजापतिपतेर्हरेः ।
श्रुत्वा भवेयं यत्पूतः शरच्चन्द्र इवामलः ॥ २
वैशंपायन उवाच ।
शृणु राजन्यथाचष्ट फल्गुनस्य हरिः प्रभुः ।
प्रसन्नात्मात्मनो नाम्नां निरुक्तं गुणकर्मजम् ॥ ३
नामभिः कीर्तितैस्तस्य केशवस्य महात्मनः ।
पृष्टवान्केशवं राजन्फल्गुनः परवीरहा ॥ ४
अर्जुन उवाच ।
भगवन्भूतभव्येश सर्वभूतसृगव्यय ।
लोकधाम जगन्नाथ लोकानामभयप्रद ॥ ५
यानि नामानि ते देव कीर्तितानि महर्षिभिः ।
वेदेषु सपुराणेषु यानि गुह्यानि कर्मभिः ॥ ६
तेषां निरुक्तं त्वत्तोऽहं श्रोतुमिच्छामि केशव ।
न ह्यन्यो वर्णयेन्नाम्नां निरुक्तं त्वामृते प्रभो ॥ ७
श्रीभगवानुवाच ।
ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन ॥ ८
साङ्ख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।
बहूनि मम नामानि कीर्तितानि महर्षिभिः ॥ ९
गौणानि तत्र नामानि कर्मजानि च कानिचित् ।
निरुक्तं कर्मजानां त्वं शृणुष्व प्रयतोऽनघ ॥ १०
कथ्यमानं मया तात त्वं हि मेऽर्धं स्मृतः पुरा ।
नमोऽतियशसे तस्मै देवानां परमात्मने ॥ ११
नारायणाय विश्वाय निर्गुणाय गुणात्मने ।
यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः ॥ १२
योसौ योनिर्हि सर्वस्य स्थावरस्य चरस्य च ।
अष्टादशगुणं यत्तत्सत्वं सत्ववतांवर ॥ १३
प्रकृतिः सा परा मह्यं रोदसी लोकधारिणी ।
ऋता सत्याऽमरा जय्या लोकानामात्मसंज्ञिता ॥
तस्मात्सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
तपो यज्ञश्च यष्टा च पुराणः पुरुषो विराट् ॥ १५
अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाप्ययः ।
ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ॥ १६
प्रसादात्प्रादुरभवत्पद्मपर्कनिभं क्षणात् ।
तत्र ब्रह्मा समभवत्स तस्यैव प्रसादजः ॥ १७
अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा ।
क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः ॥ १८
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ १९
निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ।
कपर्दी जटिलो मुण्डः श्मशानगृहसेवकः ॥ २०
उग्रव्रतचरो रुद्रो योगी त्रिपुरदारणः ।
दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा ॥ २१
नारायणात्मको ज्ञेयः पाण्डवेय युगेयुगे ।
तस्मिन्हि पूज्यमाने वै देवदेवे महेश्वरे ॥ २२
संपूजितो भवेत्पार्थ देवो नारायणः प्रभुः ।
अहमात्मा हि लोकानां विश्वेषां पाण्डुनन्दन २३

---

निरुक्तं निर्वचनम् ॥ १ ॥ गुणकर्मजं गुणः सर्वज्ञत्वादिस्तज्जम् । कर्म जगत्स्रष्ट्यादि तज्जम् ॥ ३ ॥ ऋता सत्या महाराज या लोकानामसंज्ञिता इति थ. पाठः ॥ १४ ॥ पद्मं पद्मनिभेक्षणेति झ. पाठः ॥ १७ ॥

तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ।
यद्यहं नार्चयेयं वै ईशानं वरदं शिवम् ॥ २४
आत्मानं नार्चयेत्कश्चिदिति मे भावितात्मनः ।
मया प्रमाणं हि कृतं लोकः समनुवर्तते ॥ २५
प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ।
यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु २६
रुद्रो नारायणश्चैव सत्वमेकं द्विधा कृतम् ।
लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु ॥ २७
न हि मे केनचिद्देयो वरः पाण्डवनन्दन ।
इति संचिन्त्य मनसा पुराणं रुद्रमीश्वरम् ॥ २८
पुत्रार्थमाराधितवानहमात्मानमात्मना ।
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च ॥२९
ऋते आत्मानमेवेति ततो रुद्रं नमाम्यहम् ।
सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः ३०
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ।
भविष्यतां वर्तताां च भूतानां चैव भारत ॥ ३१
सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ।
नमस्व हव्यदं विष्णुं तथा शरणदं नमः ॥ ३२
वरदं नमस्व कौन्तेय हव्यकव्यभुजं नमः ।
चतुर्विधा मम जना भक्ता एव हि मे श्रुतम् ३३
तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः ।
अहमेव गतिस्तेषां निराशीःकर्मकारिणाम् ॥ ३४
ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः ।
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु श्रेष्ठभाक् ॥ ३५
ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः।
प्रबुद्धचर्याः सेवन्तो मामेवैष्यन्ति यत्फलम्॥३६
भक्तं प्रति विशेषस्ते एष पार्थानुकीर्तितः ।
त्वं चैवाहं च कौन्तेय नरनारायणौ स्मृतौ ॥३७
भारावतरणार्थं तु प्रविष्टौ मानुषीं तनुम् ।
जानाम्यध्यात्मयोगांश्च योऽहं यस्माच्च भारत३८
निवृत्तिलक्षणो धर्मस्तथाऽभ्युदयिकोऽपि च ।
नराणामयनं ख्यातमहमेकः सनातनः ॥ ३९
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं मम ताः पूर्वमतो नारायणोस्म्यहम् ॥४०
छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम् ॥ ४१
गतिश्च सर्वभूतानां प्रजनश्चापि भारत ।
व्याप्ते मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ॥
अधिभूतनिविष्टश्च तद्विश्वं चास्मि भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥ ४३
दमात्सिद्धिं परीप्सन्तो मां जनाः कामयन्ति ह ।
दिवं चोर्वीं च मध्यं च तस्माद्दामोदरो ह्यहम् ४४
पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतं तथा ।
ममैतानि सदा गर्भः पृश्निगर्भस्ततो ह्यहम् ॥४५
ऋषयः प्राहुरेवं मां त्रितं कूपनिपातितम् ।
पृश्निगर्भ त्रितं पाहीत्येकतद्वितपातितम् ॥ ४६
ततः स ब्रह्मणः पुत्र आद्यो ह्यृषिवरस्त्रितः ।
उत्ततारोदपानाद्वै पृश्निगर्भानुकीर्तनात् ॥ ४७
सूर्यस्य तपतो लोकानग्नेः सोमस्य चाप्युत ।
अंशवो यत्प्रकाशन्ते ममैते केशसंज्ञिताः ॥ ४८
सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः ।
स्वपत्न्यामाहितो गर्भ उचथ्येन महात्मना ॥ ४९
उचथ्येऽन्तर्हिते चैव कदाचिद्देवताज्ञया ।
बृहस्पतिरथाविन्दत्तां पत्नीं तस्य धीमतः ॥ ५०
ततो वै तमृषिश्रेष्ठं मैथुनोपगतं तथा ।
उवाच गर्भः कौन्तेय पञ्चभूतगुणात्मकः ॥ ५१
पूर्वागतोऽहं वरद नार्हस्यम्बां प्रबाधितुम् ।
एतद्बृहस्पतिः श्रुत्वा चुक्रोध च शशाप च ॥५२
मैथुनायागतो यस्मात्त्वयाऽहं विनिवारितः ।
तस्मादन्धो यास्यसि त्वं मच्छापान्नात्र संशयः५३
स शापादृषिमुख्यस्य दीर्घं तम उपेयिवान् ।
स हि दीर्घतमा नाम नाम्ना ह्यासीदृषिः पुरा ५४

सव्यः पूज्यश्च नित्यश इति ध. पाठः ॥ ३२ ॥ चतुर्विधाः आर्तो जिज्ञासुरर्थार्थी ज्ञानी चेति गीतोक्ताः ॥ ३३ ॥ तेन नारायणोऽस्म्यहमिति ट. ध. पाठः ॥ ४० ॥ वासयामि जगद्विश्वमिति थ. पाठः ॥ ४१ ॥ सर्वभूतानां ब्रह्मादीनां च भारतेति थ. पाठः ॥ ४२ ॥ पृच्छन्त्येन जिज्ञासवो धर्मजातमिति वा पृच्छन्त्येनं क्षुधितादय इति वा पृश्निर्वेदोऽन्नादि वा गर्भो गर्भस्थानि ॥ ४५ ॥ पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥

वेदानवाप्य चतुरः साङ्गोपाङ्गान्सनातनान् ।
प्रयोजयामास तदा नाम गुह्यमिदं मम ॥ ५५
आनुपूर्व्येण विधिना केशवेति पुनःपुनः ।
स चक्षुष्मान्समभवद्गौतमश्चाभवत्पुनः ॥ ५६
एवं हि वरदं नाम केशवेति ममार्जुन ।
देवानामथ सर्वेषामृषीणां च महात्मनाम् ॥ ५७
अग्निः सोमेन संयुक्त एकयोनिर्मुखं कृतम् ।
अग्नीषोममयं तस्माज्जगत्कृत्स्नं चराचरम् ॥ ५८
अपि हि पुराणे भवति एकयोन्यावग्नीषोमौ देवाश्चाग्निमुखा इति । एकयोनित्वाच्च परस्परं हर्षयन्तो लोकान्धारयन्त इति ॥ ५९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥

---

## एकपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥

श्रीकृष्णेनार्जुनंप्रति सृष्टिप्रकारकथनम् ॥ १ ॥ तथा ब्राह्मणमहिमानुवर्णनम् ॥ २ ॥

अर्जुन उवाच ।
अग्नीषोमौ कथं पूर्वमेकयोनी प्रकीर्तितौ ।
एष मे संशयो वीर तं छिन्धि मधुसूदन ॥ १
श्रीभगवानुवाच ।
हन्त ते वर्तयिष्यामि पुराणं पाण्डुनन्दन ।
आत्मतेजोद्भवं पार्थ शृणुष्वैकमना नृप ॥ २
संप्रक्षालनकालेऽतिक्रान्ते चतुर्युगसहस्रान्ते ।
अव्यक्ते सर्वभूतप्रलये सर्वभूतस्थावरजङ्गमे ।
ज्योतिर्धरणिवायुरहिते अन्धे तमसि जलैकार्णवे
लोके ॥ ३
ममायमित्यविदितभूतसंज्ञकेऽद्वितीये प्रतिष्ठिते ४
न वै रात्र्यां न दिवसे न सति नासति न
व्यक्ते नचाप्यव्यक्ते व्यवस्थिते ॥ ५
एतस्यामवस्थायां नारायणगुणाश्रयादजरामरादतीन्द्रियादग्राह्यादसंभवात्सत्यादहिंस्याल्लवादिभिरद्वितीयादप्रवृत्तिविशेषादवैरादक्षयादमरादजरादमूर्तितः सर्वव्यापिनः सर्वकर्तुः शाश्वतात्तमसः परात्पुरुषः प्रादुर्भूतोस्य पुरुषस्य ब्रह्मयोने-
र्ब्रह्मणः प्रादुर्भावे हरिरव्ययः ॥ ६
निदर्शनमपि ह्यत्र भवति ॥ ७
नासीदहो न रात्रिरासीन्न सदासीन्नासदासीत्तम एव पुरस्तादभवद्विश्वरूपम् । सा विश्वरूपस्य रजनी हि एवमस्यार्थोऽनुभाष्यते ॥ ८
तस्येदानीं तमःसंभवस्य पुरुषस्य ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजाः सिसृक्षमाणो नेत्राभ्यामग्नीषोमौ ससर्ज । ततो भूतसर्गेषु सृष्टेषु प्रजाः क्रमवशाद्ब्रह्मक्षत्रमुपातिष्ठन् । यः सोमस्तद्ब्रह्म यद्ब्रह्म ते ब्राह्मणा योऽग्निस्तत्क्षत्रं क्षत्राद्ब्रह्म बलवत्तरम् । कस्मादिति लोकप्रत्यक्षगुणमेतत्तद्यथा । ब्राह्मणेभ्यः परं भूतं नोत्पन्नपूर्वं दीप्यमानेऽग्नौ जुहोति यो ब्राह्मणमुखे जुहोतीति कृत्वा ब्रवीमि भूतसर्गः कृतो ब्रह्मणा भूतानि च प्रतिष्ठाप्य त्रैलोक्यं धार्यत इति मन्त्रवादोपि
हि भवति ॥ ९
त्वमग्ने यज्ञानां होता विश्वेषां हितो देवानां
मानुषाणां च जगत इति ॥ १०
निदर्शनं चात्र भवति विश्वेषामग्ने यज्ञानां त्वं
होतेति । त्वं हितो देवैर्मनुष्यैर्जगत इति ॥ ११
अग्निर्हि यज्ञानां होता कर्ता स चाग्नि-
र्ब्रह्म ॥ १२
न ह्यृते मन्त्राणां हवनमस्ति न विना पुरुषं तपः संभवति । हविर्मन्त्राणां संपूजा विद्यते देवमानुषऋषीणामनेन त्वं होतेति नियुक्तः । ये च मानुषहोत्राधिकारास्ते चक्रुर्ब्राह्मणस्य हि याजनं विधीयते न क्षत्रवैश्ययोर्द्विजात्योस्तस्मा-

देवानां मानुषे जन इति ध. पाठः ॥ ११ ॥

ब्राह्मणा ह्यग्निभूता यज्ञानुद्वहन्ति । यज्ञास्ते देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति शतपथेऽपि हि ब्राह्मणमुखे भवति ॥ १३

अग्नौ समिद्धे स जुहोति यो विद्वान् ब्राह्मणमुखेनाहुतिं जुहोति ॥ १४

एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति अग्निर्विष्णुः सर्वभूतान्यनुप्रविश्य प्राणान्धारयति ॥ १५

अपिचात्र सनत्कुमारगीताः श्लोका भवन्ति ।
ब्रह्मा विश्वं सृजत्पूर्वं सर्वादिर्निरवस्करः ।
ब्रह्मघोषैर्दिवं तिष्ठन्त्यमरा ब्रह्मयोनयः ॥ १६
ब्राह्मणानामृतं वाक्यं कर्मश्रद्धातपांसि च ।
धारयन्ति महीं द्यां च शैत्याद्वाय्वमृतं तथा ॥१७
नास्ति सत्यात्परो धर्मो नास्ति मातृसमो गुरुः ।
ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतये ॥१८
नैषामुक्षा वहति नोत वाहा
न गर्गरो मथ्यति संप्रदाने ।
अपध्वस्ता दस्युभूता भवन्ति
येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः ॥ १९

ते च पुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः । सर्वात्मानः सर्वकर्तारः सर्वभावाश्च ब्राह्मणाश्च २०

वाक्संयमकाले हि तस्य वरप्रदस्य देवदेवस्य ब्राह्मणाः प्रथमं प्रादुर्भूता ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूताः ॥ २१

इत्थं च सुरासुरविशिष्टा ब्राह्मणा वेदमया ब्रह्मभूतेन पुरा स्वयमेवोत्पादिताः सुरासुरमहर्षयो भूतविशेषाः स्थापिता निगृहीताश्च तेषां प्रभावः श्रूयताम् ॥ २२

अहल्याधर्षणनिमित्तं हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः । गौतमनिमित्तं चेन्द्रो मुष्कवियोगं मेषवृषणत्वं चावाप ॥ २३

अश्विनोर्ग्रहप्रतिषेधोद्यतवज्रस्य पुरन्दरस्य च्यवनेन स्तम्भितौ बाहू ॥ २४

क्रतुवधप्राप्तमन्युना च दक्षेण भूयस्तपसा चात्मानं संयोज्य त्रिनेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता ॥ २५

त्रिपुरवधार्थं दीक्षामुपगतस्य रुद्रस्य उशनसा जटाः शिरस उत्कृत्याग्नौ प्रयुक्तास्ततः प्रादुर्भूता भुजगास्तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपगतः । पूर्वे च मन्वन्तरे स्वायंभुवे नारायणहस्तबन्धग्रहणान्नीलकण्ठत्वमुपनीतः ॥ २६

अमृतोत्पादने पुनर्भक्षणतां वायुसमीकृतस्य विषस्योपगतश्च तद्भक्षणमिति तन्निमित्तमेव चन्द्रकला ब्रह्मणा निहिता । आङ्गिरसबृहस्पतेरुपस्पृशतो न प्रसादं गतवत्यः किलापः । अथ बृहस्पतिरब्यश्चुक्रोध यस्मान्ममोपस्पृशतः कलुषीभूता नच प्रसादमुपगतास्तस्मादद्यप्रभृति झषमकरमत्स्यकच्छपजन्तुमण्डूकसंकीर्णाः कलुषीभवतेति । तदाप्रभृत्यापो यादोभिः संकीर्णाः संवृत्ताः ॥२७

विश्वरूपो हि वै त्वाष्ट्रः पुरोहितो देवानामासीत् । स्वस्रीयोसुराणां स प्रत्यक्षं देवेभ्यो भागमदात्परोक्षमसुरेभ्यः ॥ २८

अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त हे स्वसरयं ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्योभागमदात् परोक्षमस्माकं ततो देवा वर्धन्ते वयं क्षीयामस्तदेनं त्वं वारयितुमर्हसि तथा यथाऽस्मान्भजेदिति ॥ २९

अथ विश्वरूपं नन्दनवनमुपगतं मातोवाच पुत्र किं परपक्षवर्धनस्त्वं मातुलपक्षं नाशयसि । नार्हस्येवं कर्तुमिति स विश्वरूपो मातुर्वाक्यमनतिक्रमणीयमिति मत्वा संपूज्य हिरण्यकशिपुमगात् ॥ ३०

हैरण्यगर्भाच्च वसिष्ठाद्धिरण्यकशिपुः शापं प्राप्तवान्यस्मात्त्वयाऽन्यो वृतो होता तस्मादसमाप्तयज्ञस्त्वमपूर्वात्सत्वजाताद्वधं प्राप्स्यसीति तच्छा-

वाक्यं मन्त्रश्रद्धामनांसि चेति ट. पाठः ॥ १७ ॥ नास्ति मन्त्रात्समाश्रयमिति ट. पाठः ॥ १८ ॥

गर्गरः दधीक्षुतैलादिनिपीडनयन्त्रम् ॥ १९ ॥

पदानाद्धिरण्यकशिपुः प्राप्तवान्वधम् ॥ ३१
अथ विश्वरूपो मातृपक्षवर्धनोत्यर्थं तपस्व्यभवत्तस्य व्रतभङ्गार्थमिन्द्रो बह्वीः श्रीमत्योऽप्सरसो नियुयोज ताश्च दृष्ट्वा मनः क्षुभितं तस्याभवत्तासु चाप्सरःसु नचिरादेव सक्तोऽभवत्सक्तं चैनं ज्ञात्वा अप्सरस ऊचुर्गच्छामहे वयं यथागतमिति ॥ ३२

तास्त्वाष्ट्र उवाच । क्व गमिष्यथास्यतां तावन्मया सह श्रेयो भविष्यतीति तास्तमब्रुवन्वयं देवस्त्रियोऽप्सरस इन्द्रं देवं वरदं पुरा प्रभविष्णुं वृणीमह इति ॥ ३३

अथ ता विश्वरूपोऽब्रवीदद्यैव सेन्द्रा देवा नभविष्यन्तीति ततो मन्त्राञ्जजाप तैर्मन्त्रैरवर्धत त्रिशिरा एकेनास्येन सर्वलोकेषु यथावद्द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपौ एकेनान्नमेकेन सेन्द्रान्देवानथेन्द्रस्तं विवर्धमानं सोमपानाप्यायितसर्वगात्रं दृष्ट्वा चिन्तामापेदे सह देवैः ॥ ३४

ते देवाः सेन्द्रा ब्रह्माणमभिजग्मुस्त ऊचुर्विश्वरूपेण सर्वयज्ञेषु सुहुतः सोमः पीयते वयमभागाः संवृत्ता असुरपक्षो वर्धते वयं क्षीयामस्तदर्हसि नो विधातुं श्रेयोऽनन्तरमिति ॥ ३५

तान्ब्रह्मोवाच ऋषिर्भार्गवस्तपस्तप्यते दधीचः स याच्यतां वरं स यथा कलेवरं जह्यात् तस्यास्थिभिर्वज्रं क्रियतामिति ॥ ३६

ततो देवास्तत्रागच्छन्यत्र दधीचो भगवानृषिस्तपस्तेपे सेन्द्रा देवास्तमभिगम्योचुर्भगवंस्तपसा कुशलमविघ्नं चेति ॥ ३७

तान्दधीच उवाच स्वागतं भवतां उच्यतां किं क्रियतां यद्वक्ष्यथ तत्करिष्यामि ॥ ३८

ते तमब्रुवञ्शरीरपरित्यागं लोकहितार्थं भगवान्कर्तुमर्हतीति ॥ ३९

'एवमुक्तो दधीचस्तानब्रवीत् । सहस्रं वर्षाणामैन्द्रं पदमवाप्यते मया यदि जह्याम् । तथेत्युक्त्वेन्द्रः स्वस्थानं दत्वा तपस्व्यभवत् । इन्द्रो दधीचोऽभवत् । तावत्पूर्वेण सेन्द्रा देवा आगमन्कालोऽयं देहन्यासायेति ।' अथ दधीचस्तथैवाविमनाः सुखदुःखसमो महायोगी आत्मनि परमात्मानं समाधाय शरीरपरित्यागं चकार ॥ ४०

'श्रुतिरप्यत्र भवति इन्द्रो दधीचोस्थिभिः कृतमिति' तस्य परमात्मन्यपसृते तान्यस्थीनि विधाता संगृह्य वज्रमकरोत्तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थिसंभूतेन विष्णुप्रविष्टेनेन्द्रो विश्वरूपं जघान शिरसां चास्य च्छेदनमकरोत्तक्ष्णा यज्ञपशोः शिरस्ते ददानीत्युक्त्वा । तस्मादनन्तरं विश्वरूपगात्रमथनसंभवं त्वाष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान ॥ ४१

तस्यां द्वैधीभूतायां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं पर्यत्यजदप्सु संभवां च शीतलां मानससरोगतां नलिनीं प्रतिपेदे तत्र चैश्वर्ययोगादणुमात्रो भूत्वा बिसग्रन्थिं प्रविवेश ॥ ४२

अथ ब्रह्मवध्याकृते प्रनष्टे त्रैलोक्यनाथे शचीपतौ जगदनीश्वरं बभूव देवान् रजस्तमश्चाविवेश मन्त्रा न प्रावर्तन्त महार्षीणां रक्षांसि प्रादुरभवन् ब्रह्म चोत्सादनं जगामानिन्द्राश्चाबला लोकाः सुप्रधृष्या बभूवुः ॥ ४३

अथ देवा ऋषयश्चायुषः पुत्रं नहुषं नाम देवराज्येऽभिषिषिचुर्नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे ज्वलद्भिः सर्वतेजोहरैस्त्रिविष्टपं पालयांबभूव ॥ ४४

अथ लोकाः प्रकृतिमापेदिरे स्वस्थाश्च हृष्टाश्च बभूवुः ॥ ४५

अथोवाच नहुषः सर्वं मां शक्रोपभोग्यमुपस्थितमृते शचीमिति स एवमुक्त्वा शचीसमीपमगमद्बृहस्पतिगृहे चासीनामुवाचैनां सुभगेऽहमिन्द्रो देवानां भजस्व मामिति तं शची प्रत्युवाच प्रकृत्या त्वं धर्मवत्सलः सोमवंशोद्भवश्च

१ एकेनापः सुरामेकेन । २ तस्मिन्द्विधाभूते तद्ब्रह्मवध्याभयात् इति ट. ध. पाठः ।

नार्हसि परपत्नीधर्षणं कर्तुमिति ॥ ४९

तामथोवाच नहुष ऐन्द्रं पदमध्यास्यते मयाऽहमिन्द्रस्य राज्यरत्नहरो नात्राधर्मः कश्चित्त्वमिन्द्रोपभुक्तेति सा तमुवाचास्ति मम किंचिद्व्रतमपर्यवसितं तस्यावभृथे त्वामुपगमिष्यामि कैश्चिदेवाहोभिरिति स शच्यैवमभिहितो जगाम ॥ ४७

अथ शची दुःखशोकार्ता भर्तृदर्शनलालसा नहुषभयगृहीता बृहस्पतिमुपागच्छत्स च तामत्युद्विग्नां दृष्ट्वैव ध्यानं प्रविश्य भर्तृकार्यतत्परां ज्ञात्वा बृहस्पतिरुवाचानेनैव व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमाह्वय तदा सा ते इन्द्रं दर्शयिष्यतीति साऽथ महानियमस्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयत्सोपश्रुतिः शचीसमीपमगादुवाच चैनामियमस्मीति त्वयाऽऽहूतोपस्थिता किं ते प्रियं करवाणीति तां मूर्ध्ना प्रणम्योवाच शची भगवत्यर्हसि मे भर्तारं दर्शयितुं त्वं सत्या माता सतां चेति सैनां मानसं सरोऽनयत्तत्रेन्द्रं बिसग्रन्थिगतमदर्शयत् ॥ ४८

तामथ पत्नीं शचीं कृशां ग्लानां चेन्द्रो दृष्ट्वा चिन्तयांबभूव अहो मम दुःखमिदमुपगतं नष्टं हि मामियमन्विष्य यत्पत्न्यभ्यगमद्दुःखार्तेति तामिन्द्र उवाच कथं वर्तयसीति सा तमुवाच नहुषो मामाह्वयति पत्नीं कर्तुं कालश्चास्य मया कृत इति तामिन्द्र उवाच गच्छ नहुषस्त्वया वाच्योऽपूर्वेण मामृषियुक्तेन यानेन त्वमधिरूढ उद्वहस्वेति। इन्द्रस्य महान्ति वाहनानि सन्ति मनःप्रियाण्यधिरूढानि मया त्वमन्येनोपयातुमर्हसीति सैवमुक्ता हृष्टा जगामेन्द्रोपि बिसग्रन्थिमेवाविवेश भूयः ॥

अथेन्द्राणीमभ्यागतां दृष्ट्वा तामुवाच नहुषो 'यन्मे त्वया कालः परिकल्पितः' पूर्णः स काल इति तं शच्यब्रवीच्छक्रेण यथोक्तं स महर्षियुक्तं वाहनमधिरूढः शचीसमीपमुपागच्छत्५०

अथ मैत्रावरुणिः कुम्भयोनिरगस्त्य ऋषिवरो महर्षीन् धिक्क्रियमाणांस्तान्नहुषेणापश्यत् तद्दुष्करमिति स्वयमपि गृहीतः पद्भ्यां चास्पृश्यत ततः स नहुषमब्रवीदकार्यप्रवृत्त पाप पतस्व महीं सर्पो भव यावद्भूमिर्गिरयश्च तिष्ठेयुस्तावदिति स महर्षिवाक्यसमकालमेव तस्माद्यानादवापतत् ५१

अथानिन्द्रं पुनस्त्रैलोक्यमभवत् ततो देवा ऋषयश्च भगवन्तं विष्णुं शरणमिन्द्रार्थेऽभिजग्मुरूचुश्चैनं भगवन्निन्द्रं ब्रह्महत्याभिभूतं त्रातुमर्हसीति ततः स वरदस्तानब्रवीदश्वमेधं यज्ञं वैष्णवं शक्रोऽभियजतां ततः स्वस्थानं प्राप्स्यतीति ततो देवा ऋषयश्चेन्द्रं नापश्यन्यदा तदा शचीमूचुर्गच्छ सुभगे इन्द्रमानयस्वेति सा तत्सर इन्द्रमाह्वयत्। इन्द्रश्च तस्मात्सरसः प्रत्युत्थाय गत्वा सरस्वतीमभिजगाम बृहस्पतिश्चाश्वमेधं महाक्रतुं शक्रायाहरत् तत्र कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य पावनं तमेव कृत्वा इन्द्रं मरुत्पतिं बृहस्पतिः स्वं स्थानं प्रापयामास ॥ ५२

ततः स देवराट् देवैर्ऋषिभिः स्तूयमानस्त्रिविष्टपस्थो निष्कल्मषो बभूव ह ब्रह्मवध्यां चतुर्षु स्थानेषु व्यभजत् वनितावृक्षगिरिवनिषु ।' वनितासु रजः। वृक्षेषु निर्यासः। गिरिषु शिम्बः पृथिव्यामूषरः तेऽस्पृश्याः। तस्माद्विरलवर्णं पच्यते, एवमिन्द्रो ब्रह्मतेजःप्रभावोपबृंहितः शत्रुवधं कृत्वा स्वं स्थानं प्रापितः ॥ ५३

'नहुषस्य शापमोक्षार्थं देवैर्ऋषिभिश्च याच्यमानोऽगस्त्यः प्राह ।

यावत्स्वकुलजः श्रीमान्धर्मराड्भ्रातृभिर्युतः ।
भीमस्तस्यानुजस्त्वं त्वं ग्रहीता तु युधिष्ठिरः ।
कथयित्वा स्वकान्प्रश्नांस्त्वां च तं च विमोक्ष्यति ॥'

आकाशगङ्गागतश्च पुरा भरद्वाजो महर्षिरुपास्पृशत्रीन्क्रमान्क्रमता विष्णुनाऽभ्यासादितः स भरद्वाजेन सलक्षणेन पाणिनोरसि ताडितः

१ कथं कर्तासीतीति ध. पाठः। २ नहुषो मां दुष्टस्तर्कयतीति थ. ध. पाठः। एकपञ्चाशदधिकत्रिशततमोऽध्यायः॥ ३५१ ॥

सलक्षणोरस्कः संवृत्तः ॥ ५५

भृगुणा महर्षिणा शप्तोऽग्निः सर्वभक्षत्वमुपानीतः ॥ ५६

अदितिर्वै देवानामन्नमपचदेतद्भुक्त्वा सुरा असुरान्हनिष्यन्तीति तत्र बुधो व्रतचर्यासमाप्तावागच्छददितिं चायाचद्भिक्षां देहीति तत्र देवैः पूर्वमेतत्प्राश्यं नान्येनेत्यदितिर्भिक्षां नादादथ भिक्षाप्रत्याख्यानरुषितेन बुधेन ब्रह्मभूतेनादितिः शप्ता अदितेरुदरे भविष्यति व्यथा विवस्वतो द्वितीयजन्मन्यण्डसंज्ञितस्य अण्डं मातुरदित्या मारितं स मार्ताण्डो विवस्वानभवच्छ्राद्धदेवः ५७

दक्षस्य या वै दुहितरः षष्टिरासंस्तासां कश्यपाय त्रयोदश प्रादाद्दश धर्माय दश मनवे सप्तविंशतिमिन्दवे तासु तुल्यासु नक्षत्राख्यां गतासु सोमो रोहिण्यामभ्यधिकं प्रीतिमानभूत्ततस्ताः शिष्टाः पत्न्य ईर्ष्यावत्यः पितुः समीपं गत्वेमम र्थं शशंसुर्भगवन्नस्मासु तुल्यप्रभावासु सोमो रोहिणीं प्रत्यधिकं भजतीति सोऽब्रवीद्यक्ष्मैनमाविक्ष्यत इति दक्षशापाच्च सोमं राजानं यक्ष्मा विवेश स यक्ष्मणाऽऽविष्टो दक्षमगाद्दक्षश्चैनमब्रवीन्न समं वर्तस इति तत्रर्षयः सोममब्रुवन्क्षीयसे यक्ष्मणा पश्चिमायां दिशि समुद्रे हिरण्यसरस्तीर्थं तत्र गत्वा आत्मानमभिषेचयस्वेत्यथागच्छत्सोमस्तत्र हिरण्यसरस्तीर्थं गत्वा चात्मनः सेचनमकरोत् स्नात्वा चात्मानं पाप्मनो मोक्षयामास तत्र चावभासितस्तीर्थे यदा सोमस्तदाप्रभृति च तीर्थं तत्प्रभासमिति नाम्ना ख्यातं बभूव ॥ ५८

तच्छापादद्यापि क्षीयते सोमोऽमावास्यान्तरस्थः पौर्णमासीमात्रेऽधिष्ठितो मेघलेखाप्रतिच्छन्नं वपुर्दर्शयति मेघसदृशं वर्णमगमत्तदस्य शशलक्ष्म विमलमभवत् ॥ ५९

स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरे दिग्विभागे तपस्तेपे ततस्तस्य तपस्तप्यमानस्य सर्वगन्धवहः शुचिर्वायुर्वायमानः शरीरमस्पृशत्स तपसा तापितशरीरः कृशो वायुनोपवीज्यमानो हृदये परितोषमगमत्तत्र किल तस्यानिलव्यजनकृतपरितोषस्य सद्यो वनस्पतयः पुष्पशोभां निदर्शितवन्त इति स एताञ्शशाप न सर्वकालं पुष्पफलवन्तो भविष्यथेति ॥ ६०

नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्बभूव तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतस्तेनामर्षितेनात्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः ॥ ६१

उक्तश्चाप्यपेयो भविष्यस्येतच्च ते तोयं बडवामुखसंज्ञितेन पेपीयमानं मधुरं भविष्यति तदेतदद्यापि वडवामुखसंज्ञितेनानुवर्तिना तोयं समुद्रात्पीयते । 'पुनरुमा दक्षकोपाद्धिमवतो गिरेर्दुहिता बभूव ॥' ६२

हिमवतो गिरेर्दुहितरमुमां कन्यां रुद्रश्चकमे भृगुरपि च महर्षिर्हिमवन्तमागत्याब्रवीत् कन्यामिमां मे देहीति तमब्रवीद्धिमवानभिलषितो वरो दुहितुर्हि रुद्र इति तमब्रवीद्भृगुर्यस्मात्त्वयाऽहं कन्यावरणकृतभावः प्रत्याख्यातस्तस्मान्न रत्नानां भवान्भाजनं भविष्यतीति ॥ ६३

अद्यप्रभृत्येतदवस्थितमृषिवचनं तदेवंविधं माहात्म्यं ब्राह्मणानाम् ॥ ६४

क्षत्रमपि च ब्राह्मणप्रसादादेव शाश्वतीमव्ययां च पृथिवीं पत्नीमभिगम्य बुभुजे ॥ ६५

तदेतद्ब्रह्मक्षत्रमग्नीषोमीयं तेन जगद्धार्यते ॥ ६६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये एकपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥

## द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥

श्रीकृष्णेनार्जुनंप्रति हृषीकेशादिस्वनामनिर्वचनम् ॥ १ ॥ तथा रुद्रनारायणयुद्धवर्णनम् ॥ २ ॥

'भगवानुवाच ।
नाम्नां निरुक्तं वक्ष्यामि शृणुष्वैकाग्रमानसः ।
सूर्याचन्द्रमसौ शश्वत्केशैर्मे अंशुसंज्ञितैः ।'
बोधयंस्तापयंश्चैव जगदुत्तिष्ठते पृथक् ॥ १
बोधनात्तापनाच्चैव जगतो हर्षणं भवेत् ।
अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ।
हृषीकेशोऽहमीशानो वरदो लोकभावनः ॥ २
इलोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरहं स्मृतः ॥ ३
धामसारो हि लोकानामृतं चैव विचारितम् ।
ऋतधामा ततो विप्रैः सद्यश्चाहं प्रकीर्तितः ॥४
नष्टां च धरणीं पूर्वमविन्दं वै गुहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥ ५
शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत् ।
तेनाविष्टं तु यत्किंचिच्छिपिविष्टेति च स्मृतः ॥६
यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम् ॥ ७
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः ।
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान् ॥ ८
न हि जातो न जायेयं न जनिष्ये कदाचन ।
क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः ॥ ९
नोक्तपूर्वं मया क्षुद्रमश्लीलं वा कदाचन ।
ऋता ब्रह्मसुता सा मे सत्यदेवी सरस्वती ॥ १०
सच्चासच्चैव कौन्तेय मया वेशितमात्मनि ।
पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुः ॥ ११
सत्वान्न च्युतपूर्वोऽहं सत्वं वै विद्धि मत्कृतम् ।
जन्मनीहाभवेत्सत्वं पौर्विकं मे धनंजय ॥ १२
निराशीःकर्मसंयुक्तः सत्वतश्चाप्यकल्मषः ।
सात्वतज्ञानदृष्टोऽहं सत्वतामिति सात्वतः ॥ १३
कृषामि मेदिनीं पार्थ भूत्वा कार्ष्णायसो महान् ।
कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन १४
मया संश्लेपिता भूमिरद्भिर्व्योम च वायुना ।
वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम ॥ १५
निर्वाणं परमं ब्रह्म धर्मोऽसौ पर उच्यते ।
तस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा ॥ १६
पृथिवीनभसी चौभे विश्रुते विश्वतोमुखे ।
तयोः संधारणार्थं हि मामधोक्षजमञ्जसा ॥ १७
निरुक्तं वेदविदुषो वेदशब्दार्थचिन्तकाः ।
ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्मृतः१८
शब्द एकमतैरेष व्याहृतः परमर्षिभिः ।
नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुम् १९
घृतं ममार्चिषो लोके जन्तूनां प्राणधारणम् ।
घृतार्चिरहमव्यग्रैर्वेदज्ञैः परिकीर्तितः ॥ २०
त्रयो हि धातवः ख्याताः कर्मजा इति ये स्मृताः ।
पित्तं श्लेष्मा च वायुश्च एष संघात उच्यते ॥ २१
एतैश्च धार्यते जन्तुरेतैः क्षीणैश्च क्षीयते ।
आयुर्वेदविदस्तस्मात्त्रिधातुं मां प्रचक्षते ॥ २२
वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत ।
नैघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ॥ २३
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥२४
न चादिं न मध्यं तथा चैव नान्तं
कदाचिद्विमन्ते द्विजा मे सुराश्च ।

---

बोधयन्स्थापयश्चैवेति ट. पाठः ॥ १ ॥ बोधनात्स्थापनाच्चैवेति ट. पाठः ॥ २ ॥ इलोपहूतं योगेनेति झ. पाठः ॥ ३ ॥ शिपिविष्टं हि तत्स्मृतमिति ट. ध. पाठः ॥ ६ ॥ पौष्करे मन्नाभिकमलोत्थे ॥ ११ ॥ निराशीःकर्म निष्कामकर्म ॥ १३ ॥ विगता कुण्ठा पञ्चानां भूतानां मेलने असामर्थ्यं यस्य सः विकुण्ठः स एव वैकुण्ठः ॥ १५ ॥ अधइति पृथिवी । अक्षू व्याप्तावित्यतोऽक्‌ आकाशः । ते उभे सञ्जयति सङ्गेन धारयतीत्यधोक्षज इत्यर्थः ॥ १७ ॥ प्राग्वंशे यज्ञशालैकदेशे ॥ १८ ॥ मम वह्निस्वरूपस्यार्चिषो वर्धकमिति शेषः ॥ २० ॥

अनाद्यो ह्यमध्यस्तथा चाप्यनन्तः ।
प्रगीतोऽहमीशो विभुर्लोकसाक्षी ॥ २५
शुचीनि श्रवणीयानि शृणोमीह धनंजय ।
न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः २६
एकशृङ्गः पुरा भूत्वा वराहो नन्दिवर्धनः ।
इमां चोद्धृतवान्भूमिमेकशृङ्गस्ततो ह्यहम् ॥ २७
तथैवासं त्रिककुदो वाराहं रूपमास्थितः ।
त्रिककुत्तेन विख्यातः शरीरस्य तु मापनात् २८
विरिञ्च इति यत्प्रोक्तं कापिलं ज्ञानचिन्तकैः ।
स प्रजापतिरेवाहं चेतनात्सर्वलोककृत् ॥ २९
विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्याः साङ्ख्या निश्चितनिश्चयाः ३०
हिरण्यगर्भो द्युतिमान्य एष च्छन्दसि स्तुतः ।
योगैः संपूज्यते नित्यं स एवाहं विभुः स्मृतः ३१
एकविंशतिसाहस्रं ऋग्वेदं मां प्रचक्षते ।
सहस्रशाखं यत्साम ये वै वेदविदो जनाः ।
गायन्त्यारण्यके विप्रा मद्भक्तास्ते हि दुर्लभाः ३२
षट्पञ्चाशतमष्टौ च सप्तत्रिंशतमित्युत ।
यस्मिञ्शाखा यजुर्वेदे सोहमाध्वर्यवे स्मृतः ॥ ३३
पञ्चकल्पमथर्वाणं कृत्याभिः परिबृंहितम् ।
कल्पयन्ति हि मां विप्रा अथर्वाणविदस्तथा ३४
शाखाभेदाश्च ये केचिद्याश्च शाखासु गीतयः ।
स्वरवर्णसमुच्चाराः सर्वांस्तान्विद्धि मत्कृतान् ॥ ३५
यत्तद्धयशिरः पार्थ समुदेति वरप्रदम् ।
सोहमेवोत्तरे भागे क्रमाक्षरविभागवित् ॥ ३६
रामादेशितमार्गेण मत्प्रसादान्महात्मना ।
पाञ्चालेन क्रमः प्राप्तस्तस्माद्भूतात्सनातनात् ॥ ३७
बाभ्रव्यगोत्रः स बभौ प्रथमं क्रमपारगः ।
नारायणाद्वरं लब्ध्वा प्राप्य योगमनुत्तमम् ।
क्रमं प्रणीय शिक्षां च प्रणयित्वा स गालवः ३८
पुण्डरीकोऽथ राजा च ब्रह्मदत्तः प्रतापवान् ।
जातीमरणजं दुःखं स्मृत्वास्मृत्वा पुनः पुनः ।
सप्तजातिषु मुख्यत्वाद्योगानां संपदं गतः ॥ ३९
पुराऽहमात्मजः पार्थ प्रथितः कारणान्तरे ।
धर्मस्य कुरुशार्दूल ततोऽहं धर्मजः स्मृतः ॥ ४०
नरनारायणौ पूर्वं तपस्तेपतुरव्ययम् ।
धर्मयानं समारूढौ पर्वते गन्धमादने ॥ ४१
तत्कालसमये चैव दक्षयज्ञो बभूव ह ।
न चैवाकल्पयद्भागं दक्षो रुद्रस्य भारत ॥ ४२
ततो दधीचिवचनाद्दक्षयज्ञमपाहरत् ।
ससर्ज शूलं कोपेन प्रज्वलन्तं मुहुर्मुहुः ॥ ४३
तच्छूलं भस्मसात्कृत्वा दक्षयज्ञं सविस्तरम् ।
आवयोः सहसाऽगच्छद्बदर्याश्रममन्तिकात् ।
वेगेन महता पार्थ पतन्नारायणोरसि ॥ ४४
ततस्तत्तेजसाऽऽविष्टाः केशा नारायणस्य ह ।
बभूवुर्मुञ्जवर्णास्तु ततोऽहं मुञ्जकेशवान् ॥ ४५
तच्च शूलं विनिर्धूतं हुंकारेण महात्मना ।
जगाम शंकरकरं नारायणसमाहतम् ॥ ४६
अथ रुद्र उपाधावत्तावृषी तपसाऽन्वितौ ॥ ४७
तत एनं समुद्धूतं कण्ठे जग्राह पाणिना ।
नारायणः स विश्वात्मा तेनास्य शितिकण्ठता ४८
अथ रुद्रविघातार्थमिषीकां नर उद्धरन् ।
मन्त्रैश्च संयुयोजाशु सोऽभवत्परशुर्महान् ॥ ४९
क्षिप्तश्च सहसा तेन खण्डनं प्राप्तवांस्तदा ।
ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् ॥ ५०
'रुद्रस्य भागं प्रददुर्भागमुच्छेषणं पुनः ।
श्रुतिरप्यत्र भवति वेदैरुक्तस्तथा पुनः ॥ ५१
उच्छेषणभागो वै रुद्रस्तस्योच्छेषणेन होतव्यमिति सर्वे गम्यरूपेण तदा ॥' ५२
अर्जुन उवाच ।
अस्मिन्युद्धे तु वार्ष्णेय त्रैलोक्यशमने तदा ।
को जयं प्राप्तवांस्तत्र शंसैतन्मे जनार्दन ॥ ५३
श्रीभगवानुवाच ।
तयोः संरब्धयोर्युद्धे रुद्रनारायणात्मनोः ।

शरीरस्य प्रकोपनादिति ध. पाठः ॥ २८ ॥ कालिविज्ञानचिन्तकैरिति ट. पाठः । रेचनात्सर्वलोककृदिति ध. पाठः ॥ २९ ॥ अपाहरन्नाशितवान् रुद्र इति शेषः ॥ ४३ ॥ तच्छूलं कर्तृ ॥ ४४ ॥ तत्तेजसा शूलतेजसा ॥ ४५ ॥ एनं समुद्धूतमुद्गीर्यागतं रुद्रम् ॥ ४८ ॥ क्षिप्त आक्षिप्तस्तेन रुद्रशूलेन रुद्रेण वा ॥ ५० ॥

उद्विग्नाः सहसा कृत्स्नाः सर्वे लोकास्तदाऽभवन् ॥
नागृह्णात्पावकः शुभ्रं मुखेषु सुहुतं हविः ।
वेदा न प्रतिभान्ति स्म ऋषीणां भावितात्मनां ५५
देवान्रजस्तमश्चैव समाविविशतुस्तदा ।
वसुधा संचकम्पे च नभश्च विपफाल ह ॥ ५६
निष्प्रभाणि च तेजांसि ब्रह्मा चैवासनच्युतः ।
अगाच्छोषं समुद्रश्च हिमवांश्च व्यशीर्यत ॥ ५७
तस्मिन्नेवं समुत्पन्ने निमित्ते पाण्डुनन्दन ।
ब्रह्मा वृतो देवगणैर्ऋषिभिश्च महात्मभिः ।
आजगामाशु तं देशं यत्र युद्धमवर्तत ॥ ५८
सोऽञ्जलिप्रग्रहो भूत्वा चतुर्वक्त्रो निरुक्तगः ।
उवाच वचनं रुद्रं लोकानामस्तु वै शिवम् ।
त्यजायुधानि विश्वेश जगतो हितकाम्यया ॥५९
यदक्षरमथाव्यक्तमीशं लोकस्य भावनम् ।
कूटस्थं कर्तृनिर्द्वन्द्वमकर्तेति च यं विदुः ।
व्यक्तिभावगतस्यास्य एका मूर्तिरियं शुभा ॥६०
नरो नारायणश्चैव जातौ धर्मकुलोद्वहौ ।
तपसा महता युक्तौ देवश्रेष्ठौ महाव्रतौ ॥ ६१
अहं प्रसादजस्तस्य कुतश्चित्कारणान्तरे ।
त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनः ॥ ६२
मया च सार्धं वरद विबुधैश्च महर्षिभिः ।
प्रसादयाशु लोकानां शान्तिर्भवतु माचिरम् ६३
ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।
प्रसादयामास ततो देवं नारायणं प्रभुम् ।
शरणं च जगामाद्यं वरेण्यं वरदं हरिम् ॥ ६४
ततोऽथ वरदो देवो जितक्रोधो जितेन्द्रियः ।
प्रीतिमानभवत्तत्र रुद्रेण सह संगतः ॥ ६५
ऋषिभिर्ब्रह्मणा चैव विबुधैश्च सुपूजितः ।
उवाच देवमीशानमीशः स जगतो हरिः ॥ ६६
यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु ।
नावयोरन्तरं किंचिन्मा तेऽभूद्बुद्धिरन्यथा ॥ ६७
अद्यप्रभृति श्रीवत्सः शूलाङ्को मे भवत्वयम् ।
मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ॥ ६८
श्रीभगवानुवाच ।
एवंलक्षणमुत्पाद्य परस्परकृतं तदा ।
सख्यं चैवातुलं कृत्वा रुद्रेण सहितावृषी ।
तपस्तेपतुरव्यग्रौ विसृज्य त्रिदिवौकसः ॥ ६९
एष ते कथितः पार्थ नारायणजयो मृधे ।
नामानि चैव गुह्यानि निरुक्तानि च भारत ।
ऋषिभिः कथितानीह यानि संकीर्तितानि ते ७०
एवं बहुविधै रूपैश्चरामीह वसुंधराम् ।
ब्रह्मलोकं च कौन्तेय गोलोकं च सनातनम् ७१
मया त्वं रक्षितो युद्धे महान्तं प्राप्तवाञ्जयम् ॥७२
यस्तु ते सोग्रतो याति युद्धे संप्रत्युपस्थिते ।
तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्दिनम् ॥ ७३
कालः स एव विहितः क्रोधजेति मया तव ।
निहतांस्तेन वै पूर्वं हतवानसि यान्रिपून् ॥ ७४
अप्रमेयप्रभावं तं देवदेवमुमापतिम् ।
नमस्व देवं प्रयतो विश्वेशं हरमक्षयम् ॥ ७५
यश्च ते कथितः पूर्वं क्रोधजेति पुनः पुनः ।
तस्य प्रभाव एवाग्रे यच्छ्रुतं ते धनंजय ॥ ७६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥

## त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥

श्वेतद्वीपाद्बदर्याश्रममुपागतस्य नारदस्य श्रीनारायणेन संवादः ॥ १ ॥

शौनक उवाच ।
सौते सुमहदाख्यानं भवता परिकीर्तितम् ।
यच्छ्रुत्वा मुनयः सर्वे विस्मयं परमं गताः ॥ १
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।

वरदं हर इति ट. पाठः ॥ ६४ ॥

द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥

न तथा फलदं सौते नारायणकथा यथा ॥ २
पाविताङ्गाः स संवृत्ताः श्रुत्वेमामादितः कथाम् ।
नारायणाश्रयां पुण्यां सर्वपापप्रमोचनीम् ॥ ३
दुर्दर्शो भगवान्देवः सर्वलोकनमस्कृतः ।
सब्रह्मकैः सुरैः कृत्स्नैरन्यैश्चैव महर्षिभिः ॥ ४
दृष्टवान्नारदो यत्तु देवं नारायणं हरिम् ।
नूनमेतद्ध्यनुमतं तस्य देवस्य सूतज ॥ ५
यद्दृष्टवाञ्जगन्नाथमनिरुद्धतनौ स्थितम् ।
यत्प्राद्रवत्पुनर्भूयो नारदो देवसत्तमौ ।
नरनारायणौ द्रष्टुं कारणं तद्ब्रवीहि मे ॥ ६
सौतिरुवाच ।
तस्मिन्यज्ञे वर्तमाने राज्ञः पारिक्षितस्य वै ।
कर्मान्तरेषु विधिवद्वर्तमानेषु शौनक ॥ ७
कृष्णद्वैपायनं व्यासमृषिं वेदनिधिं प्रभुम् ।
परिपप्रच्छ राजेन्द्रः पितामहपितामहम् ॥ ८
जनमेजय उवाच ।
श्वेतद्वीपान्निवृत्तेन नारदेन सुरर्षिणा ।
ध्यायता भगवद्वाक्यं चेष्टितं किमतः परम् ॥ ९
बदर्याश्रममागम्य समागम्य च तावृषी ।
कियन्तं कालमवसत्कां कथां पृष्टवांश्च सः ॥१०
इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमन्थ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् ॥ ११
नवनीतं यथा दध्नो मलयाच्चन्दनं यथा ।
आरण्यकं च वेदेभ्य ओषधीभ्योऽमृतं यथा ।
समुद्धृतमिदं ब्रह्मन्कथामृतमिदं तथा ॥ १२
तपोनिधे त्वयोक्तं हि नारायणकथाश्रयम् ।
स ईशो भगवान्देवः सर्वभूतात्मभावनः ॥ १३
अहो नारायणं तेजो दुर्दर्शं द्विजसत्तम ।
यत्राविशन्ति कल्पान्ते सर्वे ब्रह्मादयः सुराः ॥१४
ऋषयश्च सगन्धर्वा यच्च किंचिच्चराचरम् ।
न ततोऽस्ति परं मन्ये पावनं दिवि चेह च ॥ १५
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं चापि नारायणकथा यथा ॥१६
सर्वथा पाविताः स्मेह श्रुत्वेमामादितः कथाम् ।
हरेर्विश्वेश्वरस्येह सर्वपापप्रणाशनीम् ॥ १७
न चित्रं कृतवांस्तत्र यदार्यो मे धनंजयः ।
वासुदेवसहायो यः प्राप्तवाञ्जयमुत्तमम् ॥ १८
न चास्य किंचिदप्राप्यं मन्ये लोकेष्वपि त्रिषु ।
त्रैलोक्यनाथो विष्णुः स यथाऽसीत्साह्यकृत्सखा ॥
धन्याश्च सर्व एवासन्ब्रह्मंस्ते मम पूर्वजाः ।
हिताय श्रेयसे चैव येषामासीज्जनार्दनः ॥ २०
तपसाऽप्यथ दुर्दर्शो भगवाँल्लोकपूजितः ।
यं दृष्टवन्तस्ते साक्षाच्छ्रीवत्साङ्कविभूषणम् ॥ २१
तेभ्यो धन्यतरश्चैव नारदः परमेष्ठिजः ।
'दृष्टवान्यो हरिं देवं नारायणमजं विभुम् ॥' २२
न चाल्पतेजसमृषिं वेद्मि नारदमव्ययम् ।
श्वेतद्वीपं समासाद्य येन दृष्टः स्वयं हरिः ॥ २३
देवप्रसादानुगतं व्यक्तं तत्तस्य दर्शनम् ।
यद्दृष्टवांस्तदा देवमनिरुद्धतनौ स्थितम् ॥ २४
बदरीमाश्रमं यत्तु नारदः प्राद्रवत्पुनः ।
नरनारायणौ द्रष्टुं किं नु तत्कारणं मुने ॥ २५
श्वेतद्वीपान्निवृत्तश्च नारदः परमेष्ठिजः ।
बदरीमाश्रमं प्राप्य समागम्य च तावृषी ।
कियन्तं कालमवसत्प्रश्नान्कान्पृष्टवांश्च ह ॥ २६
श्वेतद्वीपादुपावृत्ते तस्मिन्वा सुमहात्मनि ।
किमब्रूतां महात्मानौ नरनारायणावृषी ।
तदेतन्मे यथातत्त्वं सर्वमाख्यातुमर्हसि ॥ २७
'सौतिरुवाच ।
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ।
तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि ॥ २८
गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततः सर्वमितिहासं पुरातनम् ॥' २९
वैशंपायन उवाच ।
नमो भगवते तस्मै व्यासायामिततेजसे ।
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ३०

केशवेनाभिसंगुप्तः प्राप्तवानाहवे जयमिति ट. ध. पाठः ॥ १८ ॥ काः कथाः पृष्टवांश्च स इति ध. पाठः ॥ २६ ॥

प्राप्य श्वेतं महाद्वीपं दृष्ट्वा च हरिमव्ययम् ।
निवृत्तो नारदो राजंस्तरसा मेरुमागमत् ।
हृदयेनोद्वहन्भारं यदुक्तं परमात्मना ॥ ३१
पश्चादस्याभवद्राजन्नात्मनः साध्वसं महत् ।
यद्गत्वा दूरमध्वानं क्षेमी पुनरिहागतः ॥ ३२
मेरोः प्रचक्राम ततः पर्वतं गन्धमादनम् ।
निपपात च खात्तूर्णं विशालां बदरीमनु ॥ ३३
ततः स ददृशे देवौ पुराणावृषिसत्तमौ ।
तपश्चरन्तौ सुमहदात्मनिष्ठौ महाव्रतौ ॥ ३४
तेजसाऽभ्यधिकौ सूर्यात्सर्वलोकविरोचनात् ।
श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ ॥ ३५
जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ ।
व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ ॥ ३६
षष्टिदन्तावष्टदंष्ट्रौ मेघौघसदृशस्वनौ ।
स्वास्यौ पृथुललाटौ च सुभ्रूसुहनुनासिकौ ।
आतपत्रेण सदृशे शिरसी देवयोस्तयोः ॥ ३७
एवं लक्षणसंपन्नौ महापुरुषसंज्ञितौ ।
तौ दृष्ट्वा नारदो हृष्टस्ताभ्यां च प्रतिपूजितः ३८
स्वागतेनाभिभाष्याथ पृष्टश्चानामयं तथा ।
बभूवान्तर्गतमतिर्निरीक्ष्य पुरुषोत्तमौ ॥ ३९
सदोगतास्तत्र ये वै सर्वभूतनमस्कृताः ।
श्वेतद्वीपे मया दृष्टास्तादृशावृषिसत्तमौ ॥ ४०
इति संचिन्त्य मनसा कृत्वा चाभिप्रदक्षिणम् ।
स चोपविविशे तत्र पीठे कुशमये शुभे ॥ ४१
ततस्तौ तपसां वासौ यशसां तेजसामपि ।
ऋषी शमदमोपेतौ कृत्वा पौर्वाह्णिकं विधिम् ४२
पश्चान्नारदमव्यग्रौ पाद्यार्घ्याभ्यामथार्चतः ।
पीठयोश्चोपविष्टौ तौ कृतातिथ्याह्निकौ नृपौ ४३
तेषु तत्रोपविष्टेषु स देशोऽभिव्यराजत ।
आज्याहुतिमहाज्वालैर्यज्ञवाटो यथाऽग्निभिः ४४
अथ नारायणस्तत्र नारदं वाक्यमब्रवीत् ।
सुखोपविष्टं विश्रान्तं कृतातिथ्यं सुखस्थितम् ४५
अपीदानीं स भगवान्परमात्मा सनातनः ।
श्वेतद्वीपे त्वया दृष्ट आवयोः प्रकृतिः परा ॥ ४६
नारद उवाच ।
दृष्टो मे पुरुषः श्रीमान्विश्वरूपधरोऽव्ययः ।
सर्वे लोका हि तत्रस्थास्तथा देवाः सहर्षिभिः ४७
अद्यापि चैनं पश्यामि युवां पश्यन्सनातनौ ॥ ४८
यैर्लक्षणैरुपेतः स हरिरव्यक्तरूपधृत् ।
तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम् ॥ ४९
दृष्टौ युवां मया तत्र तस्य देवस्य पार्श्वतः ।
इहैव चागतोऽस्म्यद्य विसृष्टः परमात्मना ॥ ५०
को हि नाम भवेत्तस्य तेजसा यशसा श्रिया ।
सदृशस्त्रिषु लोकेषु ऋते धर्मात्मजौ युवाम् ॥ ५१
तेन मे कथितः कृत्स्नो धर्मः क्षेत्रज्ञसंज्ञितः ।
प्रादुर्भावाश्च कथिता भविष्या इह ये यथा ॥ ५२
तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः ।
प्रतिबुद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमम् ॥ ५३
तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च सः ।
प्रियभक्तो हि भगवान्परमात्मा द्विजप्रियः ॥ ५४
रमते सोऽर्च्यमानो हि सदा भागवतप्रियः ।
विश्वभुक्सर्वगो देवो माधवो भक्तवत्सलः ॥ ५५
स कर्ता कारणं चैव कार्यं चातिबलद्युतिः ।
हेतुश्चाज्ञाविधानं च तत्त्वं चैव महायशाः ॥ ५६
तपसा योज्य सोत्मानं श्वेतद्वीपात्परं हि यत् ।
तेज इत्यभिविख्यातं स्वयं भासावभासितम् ॥ ५७
शान्तिः सा त्रिषु लोकेषु विहिता भावितात्मना ।
एतया शुभया बुद्ध्या नैष्ठिकं व्रतमास्थितः ॥ ५८
न तत्र सूर्यस्तपति न सोमोऽभिविराजते ।
न वायुर्वाति देवेशे तपश्चरति दुश्चरम् ॥ ५९
वेदीमष्टनलोत्सेधां भूमावास्थाय विश्वकृत् ।
एकपादस्थितो देव ऊर्ध्वबाहुरुदङ्मुखः ॥ ६०

हृदयेनोद्वहन्भावमिति ध. पाठः ॥ ३१ ॥ जालपादा हंसास्तदङ्कितभुजौ हंसपादाङ्कितभुजौ । चक्रलक्षणौ चक्राङ्कितपादौ । जानुपातभुजान्ताविति ट. पाठः । रक्तपादभुजान्ताविति ध. पाठः ॥ ३६ ॥ समागतौ हि तत्रैतौ सर्वभूतनमस्कृतौ । श्वेतद्वीपे मया दृष्टौ तादृशाविह सत्तमाविति थ. ध. पाठः ॥ ४० ॥ श्वेत इत्यभिविख्यातमिति ध. पाठः ॥ ५७ ॥ लोकेषु सिद्धानां भावितात्मनामिति च. ध. पाठः ॥ ५८ ॥ नलवत्पर्वयुक्तत्वान्नलशब्देनाङ्गुलं ग्राह्यम् ॥ ६० ॥

साङ्गानावर्तयन्वेदांस्तपस्तेपे सुदुश्चरम् ।
यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् ॥ ६१
शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः ।
नागाः सुपर्णा गन्धर्वाः सिद्धा राजर्षयश्च ते ६२
हव्यं कव्यं च सततं विधियुक्तं प्रयुञ्जते ।
कृत्स्नं तु तस्य देवस्य चरणावुपतिष्ठतः ॥ ६३
याः क्रियाः संप्रयुक्ताश्च एकान्तगतबुद्धिभिः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयं ६४
न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः ।
विद्यते त्रिषु लोकेषु ततोऽस्म्यैकान्तिकं गतः॥६५
इह चैवागतोऽस्म्यद्य विसृष्टः परमात्मना ।
एवं मे भगवान्देवः स्वयमाख्यातवान्हरिः ॥ ६६
आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः६७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥

---

## चतुःपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥

नरनारायणाभ्यां नारदाय श्रीभगवन्महिमानुवर्णनम् ॥ १ ॥ बदर्याश्रमे नारदेन चिरतरं तपश्चर्या ॥ २ ॥

नरनारायणावूचतुः ।
धन्योस्यनुगृहीतोसि यत्ते दृष्टः स्वयंप्रभुः ।
न हि तं दृष्टवान्कश्चित्पद्मयोनिरपि स्वयम् ॥ १
अव्यक्तयोनिर्भगवान्दुर्दर्शः पुरुषोत्तमः ।
नारदैतद्धि नौ सत्यं वचनं समुदाहृतम् ॥ २
नास्य भक्तात्प्रियतरो लोके कश्चन विद्यते ।
ततः स्वयं दर्शितवान्स्वमात्मानं द्विजोत्तम ॥ ३
तपो हि तप्यतस्तस्य यत्स्थानं परमात्मनः ।
न तत्संप्राप्नुते कश्चिदृते ह्यावां द्विजोत्तम ॥ ४
या हि सूर्यसहस्रस्य समस्तस्य भवेद्द्युतिः ।
स्थानस्य सा भवेत्तस्य स्वयं तेन विराजता ॥ ५
तस्मादुत्तिष्ठते विप्र देवाद्विश्वभुवः पतेः ।
क्षमा क्षमावतां श्रेष्ठ यया भूमिस्तु युज्यते ॥ ६
तस्माच्चोत्तिष्ठते देवात्सर्वभूतहिताद्रसः ।
आपो हि तेन युज्यन्ते द्रवत्वं प्राप्नुवन्ति च ॥७
तस्मादेव समुद्भूतं तेजो रूपगुणात्मकम् ।
येन संयुज्यते सूर्यस्ततो लोके विराजते ॥ ८
तस्माद्देवात्समुद्भूतः स्पर्शस्तु पुरुषोत्तमात् ।
येन स्म युज्यते वायुस्ततो लोकान्विवात्यसौ ॥९
तस्माच्चोत्तिष्ठते शब्दः सर्वलोकेश्वरात्प्रभोः ।
आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतम् ॥ १०
तस्माच्चोत्तिष्ठते देवात्सर्वभूतगतं मनः ।
चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ॥ ११
सद्भूतोत्पादकं नाम तत्स्थानं वेदसंज्ञितम् ।
विद्यासहायो यत्रास्ते भगवान्हव्यकव्यभुक् ॥१२
ये हि निष्कल्मषा लोके पुण्यपापविवर्जिताः ।
तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम ॥ १३
सर्वलोके तमोहन्ता आदित्यो द्वारमुच्यते ।
'ज्वालामाली महातेजा येनेदं धार्यते जगत्॥'१४
आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित्क्वचित् ।
परमाणुभूता भूत्वा तु तं देवं प्रविशन्त्युत ॥१५
तस्मादपि च निर्मुक्ता अनिरुद्धतनौ स्थिताः ।
मनोभूतास्ततो भूत्वा प्रद्युम्नं प्रविशन्त्युत ॥ १६
प्रद्युम्नाच्चापि निर्मुक्ता जीवं संकर्षणं ततः ।
विशन्ति विप्रप्रवराः साङ्ख्या भागवतैः सह ॥१७
ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ।
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥ १८

---

एकान्तगतबुद्धिभिरव्यभिचरितबुद्धिभिः ॥ ६४ ॥ ततोस्म्येकान्तितां गत इति थ. ध. पाठः ॥ ६५ ॥ त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥

आकाशयोनिर्भगवानिति ध. पाठः ॥ २ ॥ सर्वभूतहितो रस इति थ. पाठः ॥ ७ ॥ परमाण्वात्मभूतास्तु तं देशं प्रविशन्त्युतेति थ. पाठः ॥ १५ ॥ विप्रप्रवरास्तेषां शुद्धा गतिर्हि सेति ध. पाठः ॥ १७ ॥

समाहितमनस्काश्च नियताः संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्ति ते ॥ १९
आवामपि च धर्मस्य गृहे जातौ द्विजोत्तम ।
रम्यां विशालामाश्रित्य तप उग्रं समास्थितौ॥२०
ये तु तस्यैव देवस्य प्रादुर्भावाः सुरप्रियाः ।
भविष्यन्ति त्रिलोकस्थास्तेषां स्वस्तीत्यथो द्विज२१
विधिना स्वेन युक्ताभ्यां यथापूर्वं द्विजोत्तम ।
आस्थिताभ्यां सर्वकृच्छ्रं व्रतं सम्यगनुत्तमम्॥२२
'स्वार्थेन विधिना युक्तः सर्वकृच्छ्रव्रते स्थितः।'
आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन ॥ २३
समागतो भगवता संकल्पं कृतवांस्तथा ।
सर्वं हि नौ संविदितं त्रैलोक्ये सचराचरे ॥ २४
यद्भविष्यति वृत्तं वा वर्तते वा शुभाशुभम् ।
सर्वं स ते कथितवान्देवदेवो महामुने ॥ २५
वैशंपायन उवाच ।
एतच्छ्रुत्वा तयोर्वाक्यं तपस्युग्रे च वर्ततोः ।
नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः ॥ २६
जजाप विधिवन्मन्त्रान्नारायणगतान्बहून् ।
दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे ॥ २७
अवसत्स महातेजा नारदो भगवानृषिः ।
तावेवाभ्यर्चयन्देवौ नरनारायणौ च तौ ॥ २८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये चतुःपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥

## पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥

नारदंप्रति नरनारायणाभ्यां पित्र्ये कर्मणि विशेषनिरूपणम् ॥ १ ॥

वैशंपायन उवाच ।
कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः ।
दैवं कृत्वा यथान्यायं पित्र्यं चक्रे ततः परम् ॥१
ततस्तं वचनं प्राह ज्येष्ठो धर्मात्मजः प्रभुः ।
क इज्यते द्विजश्रेष्ठ दैवे पित्र्ये च कल्पिते ॥ २
त्वया मतिमतां श्रेष्ठ तन्मे शंस यथातथम् ।
किमेतत्क्रियते कर्म फलं वाऽस्य किमिष्यते ॥३
नारद उवाच ।
त्वयैतत्कथितं पूर्वं दैवं कर्तव्यमित्यपि ।
दैवतं च परो ज्ञेयः परमात्मा सनातनः ॥ ४
ततस्तद्भावितो नित्यं यजे वैकुण्ठमव्ययम् ।
तस्माच्च प्रसृतः पूर्वं ब्रह्मा लोकपितामहः ॥ ५
मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत् ।
अहं संकल्पजस्तस्य पुत्रः प्रथमकल्पितः ॥ ६
यजामि वै पितॄन्साधो नारायणविधौ कृते ।
एवं स एव भगवान्पिता माता पितामहः ॥ ७
इज्यते पितृयज्ञेषु मया नित्यं जगत्पतिः ।
श्रुतिश्चाप्यपरा देवाः पुत्रान्हि पितरोऽयजन् ॥८
वेदश्रुतिः प्रनष्टा च पुनरध्यापिता सुतैः ।
ततस्ते मन्त्रदाः पुत्राः पितॄणामिति वैदिकम् ॥ ९
नूनं सुरैस्तद्विदितं युवयोर्भावितात्मनोः ।
पुत्राश्च पितरश्चैव परस्परमपूजयन् ॥ १०
त्रीन्पिण्डान्न्यस्य वै पित्र्यान्पूर्वं दत्त्वा कुशानिति ।
कथं तु पिण्डसंज्ञां ते पितरो लेभिरे पुरा ॥ ११
नरनारायणावूचतुः ।
इमां हि धरणीं पूर्वं नष्टां सागरमेखलाम् ।

विशालां बदरीम् ॥ २० ॥ चतुःपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥

क इज्यते द्विजवरैर्दैवे पित्र्ये च कर्मणीति ध. पाठः ॥ २ ॥ परो यज्ञ इति झ. पाठः ॥ ४ ॥ मम पितरं प्रजापतिम् । ब्रह्मा परमेष्ठीति संबन्धः । नारदो दक्षशापात्प्रजापतेः सकाशात्पुनर्जन्म प्रापेति हरिवंशेऽस्ति । तस्य ब्रह्मणः ॥ ६ ॥ नारायणविधौ तान्त्रिके पूजादौ ॥ ७ ॥ अग्निष्वात्तादीन्पुत्रान् पितरो देवा अध्याप्यासुरैः सह युद्धार्थं गतास्ततश्चिरोषितानां तेषां श्रुतिः नष्टा न प्रतिभाति। ततस्ते पुत्रेभ्य एव वेदमधीतवन्त इत्याख्यायिका पुराणान्तरप्रसिद्धा सूचिता ॥ ८ ॥ पुत्राः पितृत्वमुपपेदिर इति झ. घ. पाठः ॥ ९ ॥ न्यस्य वै पृथ्व्यामिति झ. थ. पाठः । पूर्वं पृथ्व्यां कुशान्दत्वा तत्र पित्राद्युद्देशेन

गोविन्द उज्जहाराशु वाराहं रूपमास्थितः ॥ १२
स्थापयित्वा तु धरणीं स्वे स्थाने पुरुषोत्तमः ।
जलकर्दमलिप्ताङ्गो लोककार्यार्थमुद्यतः ॥ १३
प्राप्ते चाह्निककाले तु मध्यदेशगते रवौ ।
दंष्ट्राविलग्नांस्त्रीन्पिण्डान्विधूय सहसा प्रभुः ॥१४
स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद ।
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि १५
संकल्पयित्वा त्रीन्पिण्डान्स्वेनैव विधिना प्रभुः।
आत्मगात्रोष्मसंभूतैः स्नेहगर्भैस्तिलैरपि ॥ १६
प्रोक्ष्यापसव्यं देवेशः प्राङ्मुखः कृतवान्स्वयम् ।
मर्यादास्थापनार्थं च ततो वचनमुक्तवान् ॥ १७
वृषाकपिरुवाच ।
अहं हि पितरः स्रष्टुमुद्यतो लोककृत्स्वयम् ।
तस्य चिन्तयतः सद्यः पितृकार्यविधीन्परान् १८
दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशम् ।
आश्रिता धरणीं पीड्य तस्मात्पितर एव ते ॥ १९
त्रयो मूर्तिविहीना वै पिण्डमूर्तिधरास्त्विमे ।
भवन्तु पितरो लोके मया सृष्टाः सनातनाः २०
पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः ।
नास्ति मत्तोऽधिकः कश्चित्को वान्योऽर्च्यो मया स्वयं
अहमेव पिता लोके अहमेव पितामहः ।
पितामहपिता चैव अहमेवात्र कारणम् ॥ २२
इत्येतदुक्त्वा वचनं देवदेवो वृषाकपिः ।
वराहपर्वते विप्र दत्त्वा पिण्डान्सविस्तरान् ।
आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ॥ २३
एतदर्थं शुभमते पितरः पिण्डसंज्ञिताः ।
लभन्ते सततं पूजां वृषाकपिवचो यथा ॥ २४
ये यजन्ति पितृन्देवान्गुरूंश्चैवातिथींस्तथा ।
गाश्चैव द्विजमुख्यांश्च पितरं मातरं तथा ॥ २५
कर्मणा मनसा वाचा विष्णुमेव यजन्ति ते ।
अन्तर्गतः स भगवान्सर्वसत्त्वशरीरगः ॥ २६
समः सर्वेषु भूतेषु ईश्वरः सुखदुःखयोः ।
महान्महात्मा सर्वात्मा नारायण इति श्रुतिः॥२७

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥

## षट्पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५६ ॥

नरनारायणानुज्ञानेन नारदेन स्वाश्रमंप्रति गमनम् ॥ १ ॥ वैशंपायनेन जनमेजयंप्रति श्रीव्यासमाहात्म्यकथनम् ॥ २ ॥ सौतिना श्रीनारायणगुणवर्णनपूर्वकं शौनकादिभ्यस्तदनुग्रहाशंसनम् ॥ ३ ॥

वैशंपायन उवाच ।
श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितम् ।
अत्यन्तं भक्तिमान्देवे एकान्तित्वमुपेयिवान् ॥१
उषित्वा वर्षसाहस्रं नरनारायणाश्रमे ।
श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययम् ।
जगाम हिमवत्कुक्षावाश्रमं स्वं सुरार्चितम् ॥ २
तावपि ख्यातयशसौ नरनारायणावृषी ।
तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप उत्तमम् ॥ ३
त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वहः ।
पावितात्माऽद्य संवृत्तः श्रुत्वेमामादितः कथाम्॥४
नैव तस्यापरो लोको नायं पार्थिवसत्तम ।
कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ॥५

पिण्डान्यस्यापूजयन्निति संबन्धः ॥ ११ ॥ मध्यंदिनगते रवाविति थ. ध. पाठः । दंष्ट्राविलग्नान्मृत्पिण्डानिति ट. थ. पाठः ॥ १४ ॥ तिलैरप इति थ. ध. पाठः ॥ १६ ॥ पितरः पितॄन् ॥ १८ ॥ विष्णोः शालग्रामइव पितॄणां मूर्तयः पिण्डा एवेत्याह । दंष्ट्राभ्यामिति । दंष्ट्राभ्यां प्रविनिर्धूता मृत्पिण्डा दक्षिणां दिशमिति थ. ध. पाठः । दंष्ट्राभ्यां विनिधूतांस्त्रीन्पिण्डानां दक्षिणां दिशमिति ठ. पाठः । आश्रिता शरणीं पिण्डा इति झ. पाठः ॥ १९ ॥ पिता पितामहश्चेत्यादिना श्राद्धं सर्वं विष्णुदैवत्यमेवेति पित्र्यप्रकारो दर्शितः ॥ २१ ॥ न को ममपिता लोक इति ध. पाठः । को वा मम पिता लोक इति झ. पाठः । मातामहः पिता चैवेति ध. पाठः ॥ २२ ॥ एषा तस्य स्थितिर्विप्रेति झ. पाठः ॥ २४ ॥ पितॄन्भक्त्येति थ. ध. पाठः ॥ २५ ॥ पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥

मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ॥ ६
कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित् ।
आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति श्रुतिः॥७
य एष गुरुरस्माकमृषिर्गन्धवतीसुतः ।
तेनैतत्कथितं तात माहात्म्यं परमात्मनः ।
तस्माच्छ्रुतं मया चेदं कथितं च तवानघ ॥ ८
नारदेन तु संप्राप्तः सरहस्यः ससंग्रहः ।
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ९
एवमेष महान्धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥ १०
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।
धर्मान्नानाविधांश्चैव को ब्रूयात्तमृते प्रभुम् ॥ ११
वर्ततां ते महायज्ञो यथासंकल्पितस्त्वया ।
संकल्पिताश्वमेधस्त्वं श्रुतधर्मा च तत्त्वतः ॥ १२
सौतिरुवाच ।
एतत्तु महदाख्यानं श्रुत्वा पारीक्षितो नृपः ।
ततो यज्ञसमाप्त्यर्थं क्रियाः सर्वाः समारभत् १३
नारायणीयमाख्यानमेतत्ते कथितं मया ।
पृष्टेन शौनकाद्येह नैमिषारण्यवासिषु ॥ १४
नारदेन पुरा यद्वै गुरवे तु निवेदितम् ।
ऋषीणां पाण्डवानां च शृण्वतोः कृष्णभीष्मयोः ॥
स हि परमर्षिर्जनभुवनपतिः
पृथुधरणिधरः श्रुतिविनयपरः ।
शमनियमनिधिर्यमनियमपरो द्विजवर
सहितस्तव च भवतु गतिर्हरिरमरहितः॥१६
असुरवधकरस्तपसांनिधिः
सुमहतां यशसां च भाजनम् ।
एकान्तिनां शरणदोऽभयदो गतिदो
गतिदोऽस्तु वः सुखभागकरः ।
मधुकैटभहा कृतधर्मविदां गतिदो
भयदो मखभागहरोऽस्तु शरणं स ते ॥ १७
त्रिगुणो विगुणश्चतुरात्मधरः
पूर्तेष्टयोश्च फलभागहरः ।
विदधातु नित्यमजितोऽतिचलो
गतिरात्मवतां सुकृतिनामृषीणाम् ॥ १८
तं लोकसाक्षिणमजं पुरुषं पुराणं
रविवर्णमीश्वरं गतिं बहुशः ।
प्रणमध्वमेकमतयो यतः
सलिलोद्भवोपि तमृषिं प्रणतः ॥ १९
स हि लोकयोनिरमृतस्य पदं
सूक्ष्मं परायणमचलं हि पदम् ।
तत्साङ्ख्ययोगिभिरुदाहृतं तं
बुद्ध्या यतात्मभिरिदं सनातनम् ॥ २०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये षट्पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५६ ॥

---

## सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५७ ॥

श्रीनारायणेन स्वनाभिपद्मे ब्रह्मणः सर्जनम् ॥ १ ॥ ततो मधुकैटभयोरुत्पादनम् ॥ २ ॥ ताभ्यां ब्रह्मणो वेदापहरणम् ॥ ३ ॥ हयशिरोरूपिणा हरिणा ब्रह्मणे पुनर्वेदप्रत्यर्पणपूर्वकं मधुकैटभसंहरणम् ॥ ४ ॥ वैशंपायनेन जनमेजयाय श्रीनारायणमहिमानुवर्णनम् ॥ ५ ॥

शौनक उवाच ।
श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः ।
जन्मधर्मगृहे चैव नरनारायणात्मकम् ॥ १
महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी ।

गुरवे बृहस्पतये ॥ १५ ॥ स नारायणः ॥ १६ ॥ कृतधर्मः कृतयुगधर्मः सत्यादिस्तद्विदाम् ॥ १७ ॥ चत्वारो वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्या आत्मानस्तान्धारयति स तथा । त्रिगुणातिगश्चतुष्पथधरः इति ध. पाठः ॥ १८ ॥ सलिलमुद्भवो यस्य स नारायणः शेषशायी तमृषिं वासुदेवम् ॥ १९ ॥ लोकस्याव्यक्तादेर्योनिः । अमृतस्य मोक्षस्य पदं स्थानम् । पदं पदनीयम् ॥ २० ॥ षट्पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५६ ॥

प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः ॥ २
तथा स नः श्रुतो ब्रह्मन्कथ्यमानस्त्वयाऽनघ ।
हव्यकव्यभुजो विष्णुरुदक्पूर्वे महोदधौ ॥ ३
यच्च तत्कथितं पूर्वं त्वया हयशिरो महत् ।
तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ॥ ४
किं तदुत्पादितं पूर्वं हरिणा लोकधारिणा ।
रूपं प्रभावं महतामपूर्वं धीमतांवर ॥ ५
दृष्ट्वा हि विबुधश्रेष्ठमपूर्वममितौजसम् ।
तदश्वशिरसं पुण्यं ब्रह्मा किमकरोन्मुने ॥ ६
एतन्नः संशयं ब्रह्मन्पुराणं ब्रह्मसंभवम् ।
कथयस्वोत्तममते महापुरुषसंश्रितम् ।
पाविताः स्म त्वया ब्रह्मन्पुण्याः कथय ताः कथाः॥
सौतिरुवाच ।
कथयिष्यामि ते सर्वं पुराणं वेदसंमितम् ।
जगौ यद्भगवान्व्यासो राज्ञः पारिक्षितस्य वै ॥८
श्रुत्वाऽश्वशिरसो मूर्तिं देवस्य हरिमेधसः ।
उत्पन्नसंशयो राजा एतदेवमचोदयत् ॥ ९
जनमेजय उवाच ।
यत्तद्दर्शितवान्ब्रह्मा देवं हयशिरोधरम् ।
किमर्थं तत्समभवद्वपुर्देवोपकल्पितम् ॥ १०
वैशंपायन उवाच ।
यत्किंचिदिह लोके वै देहबद्धं विशांपते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ ११
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा वरदः सगुणो निर्गुणोपि च ॥१२
भूतप्रलयमव्यक्तं शृणुष्व नृपसत्तम ॥ १३
धरण्यामथ लीनायामप्सु चैकार्णवे पुरा ।
ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले॥
वायौ चाकाशसंलीने आकाशे च मनोनुगे ।
व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते१५
अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च ।
तम एवाभवत्सर्वं न प्राज्ञायत किंचन ॥ १६

तमसो ब्रह्मसंभूतं तमोमूलमृतात्मकम् ।
तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितम् ॥ १७
सोऽनिरुद्ध इति प्रोक्तस्तत्प्रधानं प्रचक्षते ।
तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम ॥ १८
विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः ।
'आदिकर्ता स भूतानामप्रमेयो हरिः प्रभुः ॥१९
अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः ।
जगतश्चिन्तयन्सृष्टिं चित्रां बहुगुणोद्भवाम् ॥२०
तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः ।
अहंकारस्ततो जातो ब्रह्मा शुभचतुर्मुखः ।
हिरण्यगर्भो भगवान्सर्वलोकपितामहः ॥ २१
पद्मेऽनिरुद्धात्संभूतस्तदा पद्मनिभेक्षणः ।
सहस्रपत्रे द्युतिमानुपविष्टः सनातनः ॥ २२
ददृशेऽद्भुतसंकाशो लोकानाप्याययन्प्रभुः ।
सत्वस्थः परमेष्ठी स ततो भूतगणान्सृजन्॥ २३
पूर्वमेव च पद्मस्य पत्रे सूर्यांशुसप्रभे ।
नारायणकृतौ बिन्दू अपामास्तां गुणोत्तरौ ॥२४
तावपश्यत्स भगवाननादिनिधनोऽच्युतः ।
एकस्तत्राभवद्बिन्दुर्मध्वाभो रुचिरप्रभः ॥ २५
स तामसो मधुर्जातस्तदा नारायणाज्ञया ।
कठिनस्त्वपरो बिन्दुः कैटभो राजसस्तु सः॥२६
तावभ्यधावतां श्रेष्ठौ तमोरजगुणान्वितौ ।
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ ॥ २७
ददृशातेऽरविन्दस्थं ब्रह्माणममितप्रभम् ।
सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान् ॥ २८
ततो विग्रहवन्तस्तान्वेदान्दृष्ट्वाऽसुरोत्तमौ ।
सहसा जगृहतुर्वेदान्ब्रह्मणः पश्यतस्तदा ॥ २९
अथ तौ दानवश्रेष्ठौ वेदान्गृह्य सनातनान् ।
रसां विविशतुस्तूर्णमुदक्पूर्वे महोदधौ ॥ ३०
ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् ।
ततो वचनमीशानं प्राह वेदैर्विनाकृतः ॥ ३१

हव्यकव्यभुजः । मूलविभुजादित्वात्कः । अकारान्तः शब्दः । उदक्पूर्वे ऐशानकोणे । महोदधौ तत्समीपे । इदमुत्तरान्वयि ॥ ३ ॥ अपूर्वं प्रागदृष्टम् ॥ ५ ॥ अपूर्वं अद्भुतम् ॥ ६ ॥ तत् अश्वशिरोरूपम् ॥ १० ॥ ईश्वरबुद्धिजैः ईश्वरसंकल्पमात्रजैः ॥ ११ ॥ लोकनाथो महान्प्रभुरिति ट. पाठः ॥ २३ ॥

ब्रह्मोवाच ।
वेदा मे परमं चक्षुर्वेदा मे परमं बलम् ।
वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तरम् ॥३२
मम वेदा हृताः सर्वे दानवाभ्यां बलादितः ।
अन्धकारा हि मे लोका जाता वेदैर्विना कृताः ३३
वेदानृते हि किं कुर्यां लोकानां सृष्टिमुत्तमाम् ।
अहो बत महद्दुःखं वेदनाशनजं मम ॥ ३४
प्राप्तं दुनोति हृदयं तीव्रं शोकपरायणम् ।
को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत् ॥३५
वेदांस्तांश्चानयेन्नष्टान्कस्य चाहं प्रियो भवे ।
इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम ॥ ३६
हरेः स्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर ।
ततो जगौ परं जप्यं साञ्जलिप्रग्रहः प्रभुः ॥ ३७
ब्रह्मोवाच ।
ॐनमस्ते ब्रह्महृदय नमस्ते मम पूर्वज ।
लोकाद्यभुवनश्रेष्ठ साङ्ख्ययोगनिधे प्रभो ॥ ३८
व्यक्ताव्यक्तकराचिन्त्य क्षेमं पन्थानमास्थितः ।
विश्वभुक्सर्वभूतानामन्तरात्मन्नयोनिज ।
अहं प्रसादजस्तुभ्यं लोकधाम स्वयंभुवः ॥ ३९
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनम् ॥४०
त्वत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत् ।
त्वत्तः श्रवणजं चापि चतुर्थं जन्म मे विभो ॥४१
नासत्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजं चापि मे जन्म त्वत्तः षष्ठं विनिर्मितं ४२
इदं च सप्तमं जन्म पद्मजन्मेति वै प्रभो ।
सर्गेसर्गे ह्यहं पुत्रस्तव त्रिगुणवर्जित ॥ ४३
प्रथमः पुण्डरीकाक्षः प्रधानगुणकल्पितः ।
त्वमीश्वरः स्वभावश्च भूतानां त्वं प्रभावन ॥४४
त्वया विनिर्मितोऽहं वै वेदचक्षुर्वयोतिग ।
ते मे वेदा हृताश्चक्षुरन्धो जातोस्मि जागृहि ।
ददस्व चक्षूंषि मम प्रियोऽहं ते प्रियोसि मे ॥४५
एवं स्तुतः स भगवान्पुरुषः सर्वतोमुखः ।
जहौ निद्रामथ तदा वेदकार्यार्थमुद्यतः ॥ ४६
ऐश्वर्येण प्रयोगेण द्वितीयां तनुमास्थितः ।
सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा ।
कृत्वा हयशिरः शुभ्रं वेदानामालयं प्रभुः ॥ ४७
तस्य मूर्धा समभवद्द्यौः सनक्षत्रतारका ।
केशाश्चास्याभवन्दीर्घा रवेरंशुसमप्रभाः ॥ ४८
कर्णावाकाशपाताले ललाटं भूतधारिणी ।
गङ्गासरस्वती पुण्ये भ्रुवावास्तां महाद्युती ॥ ४९
चक्षुषी सोमसूर्यौ ते नासा संध्या पुनः स्मृता ।
ॐकारस्त्वथ संस्कारो विद्युज्जिह्वा च निर्मिता५०
दन्ताश्च पितरो राजन्सोमपा इति विश्रुताः ।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ।
ग्रीवा चास्याभवद्राजन्कालरात्रिर्गुणोत्तरा ॥ ५१
एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम् ।
अन्तर्दधौ स विश्वेशो विवेश च रसां प्रभुः ॥५२
रसां पुनः प्रविष्टश्च योगं परममास्थितः ।
शैक्ष्यं स्वरं समास्थाय उद्गीतं प्रासृजत्स्वरम् ॥५३
सस्वरः सानुनादी च सर्वशः स्निग्ध एव च ।
बभूवान्तर्जलगतः सर्वभूतगुणोदितः ॥ ५४
ततस्तावसुरौ कृत्वा वेदान्समयबन्धनान् ।
रसातले विनिक्षिप्य यतः शब्दस्ततो द्रुतौ ॥५५
एतस्मिन्नन्तरे राजन्देवो हयशिरोधरः ।
जग्राह वेदानखिलान्रसातलगतान्हरिः ॥ ५६
प्रादाच्च ब्रह्मणे भूयस्ततः स्वां प्रकृतिं गतः ॥५७
स्थापयित्वा हयशिरा उदक्पूर्वे महोदधौ ।
वेदानामालयश्चापि बभूवाश्वशिरास्ततः ॥ ५८
अथ किंचिदपश्यन्तौ दानवौ मधुकैटभौ ।
पुनराजग्मतुस्तत्र वेगितौ पश्यतां च तौ ।
यत्र वेदा विनिक्षिप्तास्तत्स्थानं शून्यमेव च ॥५९
तत उत्तममास्थाय वेगं बलवतां वरौ ।
पुनरुत्तस्थतुः शीघ्रं रसानामालयात्तदा ॥ ६०

लोकाद्यनिधनश्रेष्ठेति ट. पाठः ॥ ३८ ॥ देवकार्यार्थमुद्यत इति ट. ध. पाठः ॥ ४६ ॥
ओमिति प्रासृजत्स्वरमिति थ. ध. पाठः ॥ ५३ ॥

ददृशाते च पुरुषं तमेवादिकरं प्रभुम् ।
श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम् ।
भूयोप्यमितविक्रान्तं निद्रायोगमुपागतम् ॥ ६१
आत्मप्रमाणरचिते अपामुपरि कल्पिते ।
शयने नागभोगाढ्ये ज्वालामालासमावृते ॥ ६२
निष्कल्मषेण सत्वेन संपन्नं रुचिरप्रभम् ।
तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ॥६३
ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ।
अयं स पुरुषः श्वेतः शेते निद्रामुपागतः ॥ ६४
अनेन नूनं वेदानां कृतमाहरणं रसात् ।
कस्यैष कोनु खल्वेष किंच स्वपिति भोगवान् ।
इत्युच्चारितवाक्यौ तौ बोधयामासतुर्हरिम् ॥ ६५
युद्धार्थिनौ हि विज्ञाय विबुद्धः पुरुषोत्तमः ।
निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनोदधे ॥६६
अथ युद्धं समभवत्तयोर्नारायणस्य वै ॥ ६७
रजस्तमोविष्टतनू तावुभौ मधुकैटभौ ।
ब्रह्मणोपचितिं कुर्वञ्जघान मधुसूदनः ॥ ६८
ततस्तयोर्वधेनाशु वेदापहरणेन च ।
शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ॥ ६९
ततः परिवृतो ब्रह्मा हरिणा वेदसत्कृतः ।
निर्ममे स तदा लोकान्कृत्स्नान्स्थावरजङ्गमान् ७०
दत्त्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीम् ।
तत्रैवान्तर्दधे देवो यत एवागतो हरिः ॥ ७१
तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम् ।
पुनः प्रवृत्तिधर्मार्थं तामेव विदधे तनुम् ॥ ७२
एवमेष महाभागो बभूवाश्वशिरा हरिः ।
पौराणमेतत्प्रख्यातं रूपं वरदमैश्वरम् ॥ ७३
यो ह्येतद्ब्राह्मणो नित्यं शृणुयाद्धारयीत वा ।
न तस्याध्ययनं नाशमुपगच्छेत्कदाचन ॥ ७४
आराध्य तपसोग्रेण देवं हयशिरोधरम् ।
पाञ्चालेन क्रमः प्राप्तो रामेण पथि देशिते ॥७५
एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम् ।
पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि ॥ ७६

शृणुयाच्छ्रावयेत वेति थ. ध. पाठः ॥ ७४ ॥

यांयामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।
तांतां कुर्याद्विकुर्वाणः स्वयमात्मानमात्मना ॥७७
एष वेदनिधिः श्रीमानेष वै तपसोनिधिः ।
एष योगश्च साङ्ख्यं च ब्रह्म चाग्र्यं हविर्विभुः॥७८
नारायणपरा वेदा यज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥ ७९
नारायणपरं सत्यमृतं नारायणात्मकम् ।
नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ॥ ८०
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ।
नारायणात्मको गन्धो भूमौ श्रेष्ठतमः स्मृतः ॥ ८१
अपां चापि गुणा राजन्रसा नारायणात्मकाः ।
ज्योतिषां च परं रूपं स्मृतं नारायणात्मकम् ॥८२
नारायणात्मकश्चापि स्पर्शो वायुगुणः स्मृतः ।
नारायणात्मकश्चैव शब्द आकाशसंभवः ॥ ८३
मनश्चापि ततो भूतमव्यक्तगुणलक्षणम् ।
नारायणपरः कालो ज्योतिषामयनं च यत् ॥८४
नारायणपरा कीर्तिः श्रीश्च लक्ष्मीश्च देवताः ।
नारायणपरं साङ्ख्यं योगो नारायणात्मकः ॥ ८५
कारणं पुरुषो ह्येषां प्रधानं चापि कारणम् ।
स्वभावश्चैव कर्माणि दैवं येषां च कारणम् ॥ ८६
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च तथा चेष्टा दैवं चैवात्र पञ्चमम् ॥८७
पञ्चकारणसंख्यातो निष्ठा सर्वत्र वै हरिः ।
तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः ॥ ८८
तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ।
ब्रह्मादीनां सलोकानामृषीणां च महात्मनाम् ॥८९
साङ्ख्यानां योगिनां चापि यतीनामात्मवेदिनाम् ।
मनीषितं विजानाति केशवो न तु तस्य ते ॥९०
ये केचित्सर्वलोकेषु दैवं पित्र्यं च कुर्वते ।
दानानि च प्रयच्छन्ति तप्यन्ते च तपो महत् ॥ ९१
सर्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः ।
सर्वभूतकृतावासो वासुदेवेति चोच्यते ॥ ९२

केशवो ननु वै गतिरिति ट. पाठः ॥ ९० ॥

अयं हि नित्यः परमो महर्षि-
महाविभूतिर्गुणवान्गुणाख्यः ।
गुणैश्च संयोगमुपैति शीघ्रं
कालो यथर्तावृतुसंप्रयुक्तः ॥ ९३

नैवास्य विन्दन्ति गतिं महात्मनो
न चागतिं कश्चिदिहानुपश्यति ।
ज्ञानात्मकाः संयमिनो महर्षयः
पश्यन्ति नित्यं पुरुषं गुणाधिकम् ॥ ९४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५७ ॥

## अष्टपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५८ ॥

वैशंपायनेन जनमेजयाय एकान्तिधर्मनिरूपणपूर्वकं लोके तत्प्रचारप्रकारप्रतिपादनम् ॥ १ ॥

[ज]नमेजय उवाच ।
[अ]हो ह्येकान्तिनः सर्वान्प्रीणाति भगवान्हरिः ।
[वि]धिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम् ॥१
[ये] तु दग्धेन्धना लोके पुण्यपापविवर्जिताः ।
[ते]षां च या हि निर्दिष्टा पारम्पर्यागता गतिः ॥२
[च]तुर्थ्यां चैव ते गत्यां गच्छन्ति पुरुषोत्तमम् ।
[ए]कान्तिनस्तु पुरुषा गच्छन्ति परमं पदम् ॥ ३
[नू]नमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः ।
[अ]गत्वा गतयतिस्रो यद्गच्छन्त्यव्ययं हरिम् ॥ ४
[स]होपनिषदान्वेदान्ये विप्राः सम्यगास्थिताः ।
[प]ठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥५
[ते]भ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ।
[के]नैष धर्मः कथितो देवेन ऋषिणाऽपि वा ॥ ६
[ए]कान्तिनां च का चर्या कदा चोत्पादिता विभो ।
[ए]तन्मे संशयं छिन्धि परं कौतूहलं हि मे ॥ ७
[वै]शंपायन उवाच ।
[स]मुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
[अ]र्जुने विमनस्के च गीता भगवता स्वयम् ॥ ८
[आ]गतिश्च गतिश्चैव पूर्वं ते कथिता मया ।
[ग]हनो ह्येष धर्मो वै दुर्विज्ञेयोऽकृतात्मभिः ॥ ९
[सं]मितः सामवेदेन पुरैवादियुगे कृतः ।
[धा]र्यते स्वयमीशेन राजन्नारायणेन ह ॥ १०
[ए]तदर्थं महाराज पृष्टः पार्थेन नारदः ।
ऋषिमध्ये महाभागः शृण्वतोः कृष्णभीष्मयोः ॥ ११
गुरुणा च मयाऽप्येष कथितो नृपसत्तम ।
यथा तत्कथितं तत्र नारदेन तथा शृणु ॥ १२
यदाऽऽसीन्मानसं जन्म नारायणमुखोद्गतम् ।
ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयम् ॥१३
तेन धर्मेण कृतवान्दैवं पित्र्यं च भारत ।
फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे ॥ १४
वैखानसाः फेनपेभ्यो धर्मं तं प्रतिपेदिरे ।
वैखानसेभ्यः सोमस्तु ततः सोऽन्तर्दधे पुनः ॥१५
यदाऽऽसीच्चाक्षुषं जन्म द्वितीयं ब्रह्मणो नृप ।
यदा पितामहेनैव सोमाद्धर्मः परिश्रुतः ॥ १६
नारायणात्मको राजन्रुद्राय प्रददौ च तम् ।
ततो योगस्थितो रुद्रः पुरा कृतयुगे नृप ॥ १७
वालखिल्यानृषीन्सर्वान्धर्ममेनमपाठयत् ।
अन्तर्दधे ततो भूयस्तस्य देवस्य मायया ॥ १८
तृतीयं ब्रह्मणो जन्म यदासीद्वाचिकं महत् ।
तत्रैष धर्मः संभूतः स्वयं नारायणान्नृप ॥ १९
सुपर्णो नाम तमृषिः प्राप्तवान्पुरुषोत्तमात् ।
तपसा वै सुतप्तेन दमेन नियमेन च ॥ २०
त्रिः परिक्रान्तवानेतत्सुपर्णो धर्ममुत्तमम् ।
यस्मात्तस्माद्व्रतं ह्येतत्त्रिसौपर्णमिहोच्यते ॥ २१
ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरम् ।
सुपर्णाच्चाप्यधिगतो धर्म एष सनातनः ॥ २२

[ग]ुणवान्निर्गुणाख्य इति थ. पाठः ॥ ९३ ॥ पुरुषं गुणातिगमिति [थ]. पाठः ॥९४॥ सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः ॥३५७॥

दग्धेन्धनाः नष्टवासनाः । पारम्पर्यागता गुरुसंप्रदायागता गतिर्ज्ञानम् ॥ २ ॥

वायुना द्विपदांश्रेष्ठ प्रथितो जगदायुषा ।
वायोः सकाशात्प्राप्तश्च ऋषिभिर्विघसाशिभिः २३
तेभ्यो महोदधिश्चैव प्राप्तवान्धर्ममुत्तमम् ।
अन्तर्दधे ततो भूयो नारायणसमाहृतः ॥ २४
यदा भूयः श्रवणजा सृष्टिरासीन्महात्मनः ।
ब्रह्मणः पुरुषव्याघ्र तत्र कीर्तयतः शृणु ॥ २५
जगत्स्रष्टुमना देवो हरिर्नारायणः स्वयम् ।
चिन्तयामास पुरुषं जगत्सर्गकरं प्रभुम् ॥ २६
अथ चिन्तयतस्तस्य कर्णाभ्यां पुरुषः स्मृतः ।
प्रजासर्गकरो ब्रह्मा तमुवाच जगत्पतिः ॥ २७
सृज प्रजाः पुत्र सर्वा मुखतः पादतस्तथा ।
श्रेयस्तव विधास्यामि बलं तेजश्च सुव्रत ॥ २८
धर्मं च मत्तो गृह्णीष्व सात्वतं नाम नामतः ।
तेन सृष्टं कृतयुगं स्थापयस्व यथाविधि ॥ २९
ततो ब्रह्मा नमश्चक्रे देवाय हरिमेधसे ।
धर्मं चाग्र्यं स जग्राह सरहस्यं ससंग्रहम् ॥ ३०
आरण्यकेन सहितं नारायणमुखोद्गतम् ।
उपदिश्य ततो धर्मं ब्रह्मणेऽमिततेजसे ॥ ३१
तं कार्तयुगधर्माणं निराशीः कर्मसंज्ञितम् ।
जगाम तमसः पारं यत्राव्यक्तं व्यवस्थितम् ॥३२
ततोऽथ वरदो देवो ब्रह्मा लोकपितामहः ।
असृजत्स ततो लोकान्कृत्स्नान्स्थावरजङ्गमान् ३३
ततः प्रावर्तत तदा आदौ कृतयुगं शुभम् ।
ततो हि सात्वतो धर्मो व्याप्य लोकानवस्थितः॥
तेनैवाद्येन धर्मेण ब्रह्मा लोकविसर्गकृत् ।
पूजयामास देवेशं हरिं नारायणं प्रभुम् ॥ ३५
धर्मप्रतिष्ठाहेतोश्च मनुं स्वारोचिषं ततः ।
अध्यापयामास तदा लोकानां हितकाम्यया ॥३६
ततः स्वारोचिषः पुत्रं स्वयं शङ्खपदं नृप ।
अध्यापयत्पुराऽव्यग्रः सर्वलोकपतिर्विभुः ॥ ३७
ततः शङ्खपदश्चापि पुत्रमात्मजमौरसम् ।
दिशापालं सुधर्माणमध्यापयत भारत ।
सोऽन्तर्दधे ततो भूयः प्राप्ते त्रेतायुगे पुनः ॥३८
नासत्ये जन्मनि पुरा ब्रह्मणः पार्थिवोत्तम ।
धर्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः ॥ ३९
तज्जगादारविन्दाक्षो ब्रह्मणः पश्यतस्तदा ।
सनत्कुमारो भगवांस्ततः प्राधीतवान्नृप ॥ ४०
सनत्कुमारादपि च वीरणो वै प्रजापतिः ।
कृतादौ कुरुशार्दूल धर्ममेतदधीतवान् ॥ ४१
वीरणश्चाप्यधीत्यैनं रैभ्याय मुनये ददौ ।
रैभ्यः पुत्राय शुद्धाय सुव्रताय सुमेधसे ॥ ४२
कुक्षिपालाय च ददौ विशालाय च धर्मिणे ।
ततोऽप्यन्तर्दधे भूयो नारायणमुखोद्गतः ॥ ४३
अण्डजे जन्मनि पुनर्ब्रह्मणे हरियोनये ।
एष धर्मः समुद्भूतो नारायणमुखात्पुनः ॥ ४४
गृहीतो ब्रह्मणा राजन्प्रयुक्तश्च यथाविधि ।
अध्यापिताश्च मुनयो नाम्ना बर्हिषदो नृप ॥ ४५
बर्हिषद्भ्यश्च संप्राप्तः सामवेदान्तगं द्विजम् ।
ज्येष्ठं नामाभिविख्यातं ज्येष्ठसामव्रतो हरिः॥४६
ज्येष्ठाच्चाप्यनुसंक्रान्तो राजानमविकम्पनम् ।
अन्तर्दधे ततो राजन्नेष धर्मः प्रभो हरेः ॥ ४७
यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ॥ ४८
पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥ ४९
ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम ।
आदित्ये सवितुर्ज्येष्ठे विवस्वाञ्जगृहे ततः ॥ ५०
त्रेतायुगादौ च ततो विवस्वान्मनवे ददौ ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ ५१
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ।
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ॥ ५२
यतीनां चापि यो धर्मः स ते पूर्वं नृपोत्तम ।

प्रथितो गदता पुरेति थ. पाठः ॥ २३ ॥ यदा भूयस्तमश्चास्य बुद्धिरासीन्महात्मनः इति ट. पाठः ॥ २५ ॥ जगत्सर्गकरः प्रभुरिति थ. ध. पाठः ॥ २६ ॥ नासिक्ये जन्मनीति थ. ध. पाठः ॥ ३९ ॥ रौच्याय मनवे ददाविति थ. ध. पाठः । सुव्रताय सुधन्वन इति ट. ध. पाठः ॥ ४२ ॥ ब्रह्मणो हरिमेधस इति ट. ध. पाठः ॥ ४४ ॥ युगादौ लोकसाक्षिणे इति ट. पाठः ॥ ४९ ॥

कथितो हरिगीतासु समासविधिकल्पितः ॥ ५३
नारदेन सुसंप्राप्तः सरहस्यः ससंग्रहः ।
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ५४
एवमेष महान्धर्म आद्यो राजन्सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥ ५५
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ।
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥ ५६
एकव्यूहविभागो वा क्वचिद्द्विव्यूहसंज्ञितः ।
त्रिव्यूहश्चापि संख्यातश्चतुर्व्यूहश्च दृश्यते ॥ ५७
हरिरेव हि क्षेत्रज्ञो निर्ममो निष्कलस्तथा ।
जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः ॥ ५८
मनश्च प्रथितं राजन्पञ्चेन्द्रियसमीरणम् ।
एष लोकनिधिः श्रीमानेष लोकविसर्गकृत् ॥५९
अकर्ता चैव कर्ता च कार्यं कारणमेव च ।
यथेच्छति तथा राजन्क्रीडते पुरुषोऽव्ययः ॥ ६०
एष एकान्तिधर्मस्ते कीर्तितो नृपसत्तम ।
मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः ॥ ६१
एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप ।
यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दन ॥ ६२
अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः ।
भवेत्कृतयुगप्राप्तिराशीःकर्मविवर्जिता ॥ ६३
एवं स भगवान्व्यासो गुरुर्मम विशांपते ।
कथयामास धर्मज्ञो धर्मराजे द्विजोत्तमः ॥ ६४
ऋषीणां संनिधौ राजञ्शृण्वतोः कृष्णभीष्मयोः ।
तस्याप्यकथयत्पूर्वं नारदः सुमहातपाः ॥ ६५
देवं परमकं ब्रह्म श्वेतं चन्द्राभमच्युतम् ।
यत्र चैकान्तिनो यान्ति नारायणपरायणाः ।
'तदेव परमं स्थानं मुक्तानां केवलं भवेत् ॥' ६६
जनमेजय उवाच ।
एवं बहुविधं धर्मं प्रविबुद्धैर्निषेवितम् ।
न कुर्वन्ति कथं विप्रा अन्ये नानाव्रते स्थिताः ॥

वैशंपायन उवाच ।
तिस्रः प्रकृतयो राजन्देहबन्धेषु निर्मिताः ।
सात्विकी राजसी चैव तामसी चैव भारत ॥६८
देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह ।
सात्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः॥६९
अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम् ।
नारायणं परं मोक्षे ततो वै सात्विकः स्मृतः७०
मनीषितं च प्राप्नोति चिन्तयन्पुरुषोत्तमम् ।
एकान्तभक्तः सततं नारायणपरायणः ॥ ७१
मनीषिणो हि ये केचिद्यतयो मोक्षधर्मिणः ।
तेषां विच्छिन्नतृष्णानां योगक्षेमवहो हरिः ॥७२
जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्विकस्तु स विज्ञेयो भवेन्मोक्षे च निश्चितः॥
साङ्ख्ययोगेन तुल्यो हि धर्म एकान्तिसेवितः ।
नारायणात्मके मोक्षे ततो यान्ति परां गतिं ७४
नारायणेन दृष्टस्तु प्रतिबुद्धो भवेत्पुमान् ।
एवमात्मेच्छया राजन्प्रतिबुद्धो न जायते ॥ ७५
राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते ।
तदात्मकं हि पुरुषं जायमानं विशांपते ।
प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयम् ॥ ७६
पश्यत्येनं जायमानं ब्रह्मा लोकपितामहः ।
रजसा तमसा चैव मानसं समभिप्लुतम् ॥ ७७
कामं देवाश्च ऋषयः सत्वस्था नृपसत्तम ।
हीनाः सत्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः७८
जनमेजय उवाच ।
कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम् ।
वद सर्वं यथादृष्टं प्रवृत्तिं च यथाक्रमम् ॥ ७९
वैशंपायन उवाच ।
सुसूक्ष्मं तत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः ।
पुरुषः पुरुषं गच्छेन्निष्क्रियं पञ्चविंशकम् ॥ ८०
एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।

निर्मलो निष्कलस्तथेति ट. पाठः ॥ ५८ ॥ अतश्च प्रथितो राजन्पञ्चेन्द्रियसमीरिन इति थ. ध. पाठः ॥ ५९ ॥ कृतयुगप्राप्तिरीदृशैः कर्मवर्जितैरिति ट. ध पाठः । आशीःकर्म काम्यंकर्म ॥ ६३ ॥ नारायणपरो मोक्ष इति झ. ट. पाठः ॥ ७० ॥

यतयो मोक्षकाङ्क्षिण इति ट. ध. पाठः ॥ ७२ ॥ एनं राजसं ब्रह्मा पश्यति प्रवृत्तिमार्गे नियोजयतीत्यर्थः । ब्रह्मा रुद्रोऽथवा पुनरिति थ. ध. पाठः ॥ ७७ ॥

परस्पराङ्गान्येतानि पाञ्चरात्रं च कथ्यते ॥ ८१
एष एकान्तिनां धर्मो नारायणपरात्मकः ॥ ८२
यथा समुद्रात्प्रसृता जलौघा-
स्तमेव राजन्पुनराविशन्ति ।
इमे तथा ज्ञानमहाजलौघा
नारायणं वै पुनराविशन्ति ॥ ८३
एष ते कथितो धर्मः सात्वतो यदुबान्धव ।
कुरुष्वैनं यथान्यायं यदि शक्नोसि भारत ॥ ८४
एवं हि स महाभागो नारदो गुरवे मम ।
श्वेतानां यतिनां चाह एकान्तगतिमव्ययाम् ॥ ८५
व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते ।
स एवायं मया तुभ्यमाख्यातः प्रसृतो गुरोः ॥ ८६
इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम ।
यथैव त्वं तथैवान्ये न भजन्ति च मोहिताः ॥ ८७
कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।
संहारकारकश्चैव कारणं च विशांपते ॥ ८८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये अष्टपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५८ ॥

## एकोनषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३५९ ॥

वैशंपायनेन जनमेजयंप्रति श्रीव्यासस्य श्रीनारायणादपांतरतम इति प्रादुर्भावादिकथनम् ॥ १ ॥

जनमेजय उवाच ।
साङ्ख्यं योगः पाञ्चरात्रं वेदारण्यकमेव च ।
ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥ १
किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ।
प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥ २
'कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम् ।
वदस्व त्वं मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥' ३
वैशंपायन उवाच ।
जज्ञे बहुज्ञं परमत्युदारं
यं द्वीपमध्ये सुतमात्मवन्तम् ।
पराशरात्सत्यवती महर्षिं
तस्मै नमोऽज्ञानतमोनुदाय ॥ ४
पितामहाद्यं प्रवदन्ति षष्ठं
महर्षिमार्षेयविभूतियुक्तम् ।
नारायणस्यांशजमेकपुत्रं
द्वैपायनं वेदमहानिधानम् ॥ ५
तमादिकालेषु महाविभूति-
र्नारायणो ब्रह्म महानिधानम् ।
ससर्ज पुत्रार्थमुदारतेजा
व्यासं महात्मानमजं पुराणम् ॥ ६
जनमेजय उवाच ।
त्वयैव कथितः पूर्वं संभवो द्विजसत्तम ।
वसिष्ठस्य सुतः शक्तिः शक्तिपुत्रः पराशरः ॥ ७
पराशरस्य दायादः कृष्णद्वैपायनो मुनिः ।
भूयो नारायणसुतं त्वमेवैनं प्रभाषसे ॥ ८
किमतः पूर्वकं जन्म व्यासस्यामिततेजसः ।
कथयस्वोत्तममते जन्म नारायणोद्भवम् ॥ ९
वैशंपायन उवाच ।
वेदार्थवेत्तुर्व्यासस्य धर्मिष्ठस्य तपोनिधेः ।
गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः ॥ १०
कृत्वा भारतमाख्यानं तपःश्रान्तस्य धीमतः ।
शुश्रूषां तत्परा राजन्कृतवन्तो वयं तदा ॥ ११
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै शुको व्यासात्मजस्तथा ॥ १२
एभिः परिवृतो व्यासः शिष्यैः पञ्चभिरुत्तमैः ।
शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा ॥ १३

परस्परान्यान्येतानीति ट. पाठः ॥ ८१ ॥ धर्मः पुण्यः पार्थिवसत्तमेति थ. पाठः ॥ ८७ ॥ संसारकारकश्चैवेति ध. पाठः ॥ ८८ ॥ अष्टपञ्चाग्रदधिकत्रिशततमोऽध्यायः ॥ ३५८ ॥
सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा इति थ. पाठः ।
सांख्यं योगः पाशुपतं वेदारण्यकमेवचेति ध. पाठः ॥ १ ॥ पितामहस्याद्यो नारायणस्तमारभ्य यं षष्ठं वदन्तीति योज्यम् । नारायणस्याङ्गजमिति ध. पाठः ॥ ५ ॥ पूर्वजं जन्मेति ट. पाठः ॥ ९ ॥

वेदानावर्तयन्साङ्गान्भारतार्थांश्च सर्वशः ।
तमेकमनसं दान्तं युक्ता वयमुपास्महे ॥ १४
कथान्तरेऽथकस्मिंश्चित्पृष्टोऽस्माभिर्द्विजोत्तमः ।
वेदार्थान्भारतार्थांश्च जन्म नारायणात्तथा ॥ १५
स पूर्वमुक्त्वा वेदार्थान्भारतार्थांश्च तत्त्ववित् ।
नारायणादिदं जन्म व्याहर्तुमुपचक्रमे ॥ १६
शृणुध्वमाख्यानवरमिदमार्षेयमुत्तमम् ।
आदिकालोद्भवं विप्रास्तपसाऽधिगतं मया ॥ १७
प्राप्ते प्रजाविसर्गे वै सप्तमे पद्मसंभवे ।
नारायणो महायोगी शुभाशुभविवर्जितः ॥ १८
ससृजे नाभितः पूर्वं ब्रह्माणममितप्रभः ।
ततः स प्रादुरभवदथैनं वाक्यमब्रवीत् ॥ १९
मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ।
सृज प्रजास्त्वं विविधा ब्रह्मन्सजडपण्डिताः २०
स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः ।
प्रणम्य वरदं देवमुवाच हरिमीश्वरम् ॥ २१
का शक्तिर्मम देवेश प्रजाः स्रष्टुं नमोस्तु ते ।
अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् ॥ २२
स एवमुक्तो भगवान्भूत्वाऽथान्तर्हितस्ततः ।
चिन्तयामास देवेशो बुद्धिं बुद्धिमतांवरः ।
स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम् ॥ २३
योगेन चैनां निर्योगः स्वयं नियुयुजे तदा ।
स तामैश्वर्ययोगस्थां बुद्धिं गतिमतीं सतीम् ॥२४
उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः ।
ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ।
ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा ॥२५
अथैनं बुद्धिसंयुक्तं पुनः स ददृशे हरिः ।
भूयश्चैव वचः प्राह सृजेमा विविधाः प्रजाः॥२६
बाढमित्येव कृत्वाऽसौ यथाऽऽज्ञां शिरसा हरेः ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥ २७
प्राप चैनं मुहूर्तेन स्वं स्थानं देवसंज्ञितम् ।
तां चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत् ॥२८
अथास्य बुद्धिरभवत्पुनरन्या तदा किल ।
सृष्टाः प्रजा इमाः सर्वा ब्रह्मणा परमेष्ठिना ॥२९
दैत्यदानवगन्धर्वरक्षोगणसमाकुला ।
जाता हीयं वसुमती भाराक्रान्ता तपस्विनी ३०
बहवो बलिनः पृथ्व्यां दैत्यदानवराक्षसाः ।
भविष्यन्ति तपोयुक्ता वरान्प्राप्स्यन्ति चोत्तमान् ॥
अवश्यमेव तैः सर्वैर्वरदानेन दर्पितैः ।
बाधितव्याः सुरगणा ऋषयश्च तपोधनाः ॥ ३२
तत्र न्याय्यमिदं कर्तुं भारावतरणं मया ।
अथ नानासमुद्भूतैर्वसुधायां यथाक्रमम् ॥ ३३
निग्रहेण च पापानां साधूनां प्रग्रहेण च ।
इयं तपस्विनी सत्या धारयिष्यति मेदिनी ॥३४
मया ह्येषा हि ध्रियते पातालस्थेन भोगिना ।
मया धृता धारयति जगद्विश्वं चराचरम् ।
तस्मात्पृथ्व्याः परित्राणं करिष्ये संभवं गतः ३५
एवं स चिन्तयित्वा तु भगवान्मधुसूदनः ।
रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः ॥ ३६
वाराहं नारसिंहं च वामनं मानुषं तथा ।
एभिर्मया निहन्तव्या दुर्विनीताः सुरारयः ॥३७
अथ भूयो जगत्स्रष्टा भोःशब्देनानुनादयन् ।
सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥ ३८
अपान्तरतमा नाम सुतो वाक्संभवः प्रभोः ।
भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः ॥ ३९
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ।
वेदाख्याने श्रुतिः कार्या त्वया मतिमतांवर ४०
तस्मात्कुरु यथाज्ञप्तं ममैतद्वचनं मुने ।
तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेन्तरे ॥४१
ततस्तुतोष भगवान्हरिस्तेनास्य कर्मणा ।
तपसा च सुतप्तेन यमेन नियमेन च ॥ ४२
मन्वन्तरेषु पुत्र त्वमेवं लोकप्रवर्तकः ।
भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ॥ ४३
पुनस्तिष्ये च संप्राप्ते कुरवो नाम भारताः ।
भविष्यन्ति महात्मानो राजानः प्रथिता भुवि ४४
तेषां त्वत्तः प्रसूतानां कुलभेदो भविष्यति ।

नाभिजं पुत्रमिति ध. पाठः ॥ १९ ॥ इयं तरस्विनी सत्येति ध. पाठः । इयं सरस्वती सत्येति ट. पाठः ॥ ३४ ॥

परस्परविनाशार्थं त्वामृते द्विजसत्तम ॥ ४५
तत्राप्यनेकधा वेदान्भेत्स्यसे तपसाऽन्वितः ।
कृष्णे युगे च संप्राप्ते कृष्णवर्णो भविष्यसि ॥४६
धर्माणां विविधानां च कर्ता ज्ञानकरस्तथा ।
भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे ४७
वीतरागश्च पुत्रस्ते परमात्मा भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥ ४८
यं मानसं वै प्रवदन्ति विप्राः
पितामहस्योत्तमबुद्धियुक्तम् ।
वसिष्ठमग्र्यं च तपोनिधानं
यस्यातिसूर्यं व्यतिरिच्यते भाः ॥ ४९
तस्यान्वये चापि ततो महर्षिः
पराशरो नाम महाप्रभावः ।
पिता स ते वेदनिधिर्वरिष्ठो
महातपा वै तपसो निवासः ॥ ५०
कानीनगर्भः पितृकन्यकायां
तस्मादृषेस्त्वं भविता च पुत्रः ॥ ५१
भूतभव्यभविष्याणां ज्ञानानां वेत्स्यसे गतिम् ।
ये ह्यतिक्रान्तकाः पूर्वे सहस्रयुगपर्ययाः ॥ ५२
तांश्च सर्वान्मयोद्दिष्टान्द्रक्ष्यसे तपसाऽन्वितः ।
पुनर्द्रक्ष्यसि चानेकसहस्रयुगपर्ययान् ॥ ५३
अनादिनिधनं लोके चक्रहस्तं च मां मुने ।
अनुध्यानान्मम मुने नैतद्वचनमन्यथा ।
भविष्यति महासत्त्व ख्यातिश्चाप्यतुला तव ॥ ५४
शैनैश्चरः सूर्यपुत्रो भविष्यति मनुर्महान् ।
तस्मिन्मन्वन्तरे चैव मन्वादिगणपूर्वकः ।
त्वमेव भविता वत्स मत्प्रसादान्न संशयः ॥ ५५
[यत्किंचिद्विद्यते लोके सर्वं तन्मद्विचेष्टितम् ।
अन्यो ह्यन्यं चिन्तयति स्वच्छन्दं विदधाम्यहम् ५६]
एवं सारस्वतमृषिमपांतरतमं तथा ।
उक्त्वा वचनमीशानः साधयस्वेत्यथाब्रवीत् ५७
सोहं तस्य प्रसादेन देवस्य हरिमेधसः ।
अपांतरतमो नाम्ना ततो जातोऽऽज्ञया हरेः ॥५८
पुनश्च जातो विख्यातो वसिष्ठकुलनन्दनः ॥ ५९
तदेतत्कथितं जन्म मया पूर्वकमात्मनः ।
नारायणप्रसादेन तदा नारायणांशजम् ॥ ६०
मया हि सुमहत्तप्तं तपः परमदारुणम् ।
पुरा मतिमतां श्रेष्ठाः परमेण समाधिना ॥ ६१
एतद्वः कथितं सर्वं यन्मां पृच्छत पुत्रकाः ।
पूर्वजन्म भविष्यं च भक्तानां स्नेहतो मया ॥ ६२
वैशंपायन उवाच ।
एष ते कथितः पूर्वः संभवोऽस्मद्गुरोर्नृप ।
व्यासस्याक्लिष्टमनसो यथा पृष्टः पुनः शृणु ॥ ६३
साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥ ६४
साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥ ६५
अपांतरतमाश्चैव वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥ ६६
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥ ६७
पाञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥ ६८
यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः ।
न चैनमेवं जानन्ति तमोभूता विशांपते ॥ ६९
तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः ।
निष्ठां नारायणमृषिं नान्योस्तीति च वादिनः ॥ ७०
निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः ।
ससंशयान्हेतुबलान्नाध्यावसति माधवः ॥ ७१
पाञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ॥ ७२
साङ्ख्यं च योगं च सनातने द्वे
वेदाश्च सर्वे निखिलेन राजन् ।
सर्वैः समस्तैरृषिभिर्निरुक्तो
नारायणो विश्वमिदं पुराणम् ॥ ७३

* शनैश्चरभ्राता । सप्तर्षिगुणपूर्वक इति थ. पाठः ॥ ५५ ॥

एकोनषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३५९ ॥

शुभाशुभं कर्म समीरितं य-
त्प्रवर्तते सर्वलोकेषु किंचित् ।
तस्मादृषेस्तद्भवतीति विद्या-
द्दिव्यन्तरिक्षे भुवि चाप्सु चेति ॥ ७४

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये एकोनषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३५९ ॥

---

## षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६० ॥

वैशंपायनेन जनमेजयंप्रति ब्रह्मरुद्रसंवादानुवादः ॥ १ ॥

---

नमेजय उवाच ।
वः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते ॥१
ांपायन उवाच ।
वः पुरुषा लोके साङ्ख्ययोगविचारणे ।
ादिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ २
्नां पुरुषाणां च यथैका योनिरुच्यते ।
था तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम् ॥३
मस्कृत्वा च गुरवे व्यासाय विदितात्मने ।
ोयुक्ताय दान्ताय वन्द्याय परमर्षये ॥ ४
ं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव ।
तं सत्यं च विख्यातमृषिसिंहेन चिन्तितम् ॥५
त्सर्गेणापवादेन ऋषिभिः कपिलादिभिः ।
ध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ६
मासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् ।
त्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः ॥ ७
त्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ह्मणा सह संवादं त्र्यम्बकस्य विशांपते ॥ ८
ोरोदस्य समुद्रस्य मध्ये हाटकसप्रभः ।
जयन्त इति ख्यातः पर्वतप्रवरो नृप ॥ ९
त्राध्यात्मगतिं देव एकाकी प्रविचिन्तयन् ।
राजसदनान्नित्यं वैजयन्तं निषेवते ॥ १०
थ तत्राऽऽसतस्तस्य चतुर्वक्त्रस्य धीमतः ।
लाटप्रभवः पुत्रः शिव आगाद्यदृच्छया ।
ाकाशेन महायोगी पुरा त्रिनयनः प्रभुः ॥११

ततः खान्निपपाताशु धरणीधरमूर्धनि ।
अग्रतश्चाभवत्प्रीतो ववन्दे चापि पादयोः ॥ १२
तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना ।
उत्थापयामास तदा प्रभुरेकः प्रजापतिः ।
उवाच चैनं भगवांश्चिरस्यागतमात्मजम् ॥ १३
पितामह उवाच ।
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोसि मेऽन्तिकम् ।
कच्चित्ते कुशलं पुत्र स्वाध्यायतपसोः सदा ।
नित्यमुग्रतपास्त्वं हि ततः पृच्छामि ते पुनः १४
रुद्र उवाच ।
त्वत्प्रसादेन भगवन्स्वाध्यायतपसोर्मम ।
कुशलं चाव्ययं चैव सर्वस्य जगतस्तथा ॥ १५
चिरदृष्टोसि भगवन्वैराजसदने मया ।
ततोऽहं पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम् ॥१६
कौतूहलं चापि हि मे एकान्तगमनेन ते ।
नैतत्कारणमल्पं हि भविष्यति पितामह ॥ १७
किंनु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम् ।
सुरासुरैरध्युषितमृषिभिश्चामितप्रभैः ॥ १८
गन्धर्वैरप्सरोभिश्च सततं संनिषेवितम् ।
उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि ॥ १९
ब्रह्मोवाच ।
वैजयन्तो गिरिवरः सततं सेव्यते मया ।
अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ॥ २०
रुद्र उवाच ।
बहवः पुरुषा ब्रह्मंस्त्वया सृष्टाः स्वयंभुवा ।

---

साङ्ख्ययोगविचारणा इति ट. पाठः ॥ २ ॥

सृज्यन्ते चापरे ब्रह्मन्स चैकः पुरुषो विराट् २१
को ह्यसौ चिन्त्यते ब्रह्मंस्त्वयैकः पुरुषोत्तमः ।
एतन्मे संशयं छिन्धि महत्कौतूहलं हि मे ॥ २२
ब्रह्मोवाच ।
बहवः पुरुषाः पुत्र त्वया ये समुदाहृताः ।
एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि ॥ २३
आधारं तु प्रवक्ष्यामि एकस्य पुरुषस्य ते ।
बहूनां पुरुषाणां स यथैका योनिरुच्यते ॥ २४
तथा तं पुरुषं विश्वं परमं सुमहत्तमम् ।
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् २५

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६० ॥

---

## एकषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६१ ॥

ब्रह्मणा रुद्रंप्रति भगवन्महिमप्रतिपादनम् ॥ १ ॥

ब्रह्मोवाच ।
शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥ १
न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम ।
सगुणैर्निर्गुणैर्विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ २
अशरीरः शरीरेषु सर्वेषु निवसत्यसौ ।
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ॥ ३
ममान्तरात्मा तव च ये चान्ये देहसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ४
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ ५
क्षेत्राणि हि शरीराणि बीजं चापि शुभाशुभम् ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते॥६
नागतिर्न गतिस्तस्य ज्ञेया भूतेषु केनचित् ।
साङ्ख्येन विधिना चैव योगेन च यथाक्रमम् ॥ ७
चिन्तयामि गतिं चास्य न गतिं वेद्मि चोत्तराम् ।
यथाज्ञानं तु वक्ष्यामि पुरुषं तु सनातनम् ॥ ८
तस्यैकत्वं महत्त्वं च स चैकः पुरुषः स्मृतः ।
महापुरुषशब्दं स बिभर्त्येकः सनातनः ॥ ९

एको हुताशो बहुधा समिध्यते
एकः सूर्यस्तपसो योनिरेका ।
एको वायुर्बहुधा वाति लोके
महोदधिश्चाम्भसां योनिरेकः ।
पुरुषश्चैको निर्गुणो विश्वरूप-
स्तं निर्गुणं पुरुषं चाविशन्ति ॥ १०

हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम् ।
उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ॥ ११
अचिन्त्यं चापि तं ज्ञात्वा भावसूक्ष्मं चतुष्टयम् ।
विचरेद्योऽसमुन्नद्धः स गच्छेत्पुरुषं शुभम् ॥ १२
एकं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।
एकात्मानं तथाऽऽत्मानमपरेऽध्यात्मचिन्तकाः १३
तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः १४
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ।
कर्मात्मा त्वपरो योसौ मोक्षबन्धैः स युज्यते १५
ससप्तदशकेनापि राशिना युज्यते च सः ।
एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् ॥ १६

यत्तत्कृत्स्नं लोकतन्त्रस्य धाम
वेद्यं परं बोधनीयं च वेदैः ।
मन्ता मन्तव्यं प्राशिता प्राशनीयं
घ्राता घ्रेयं स्पर्शिता स्पर्शनीयम् ॥ १७
द्रष्टा द्रष्टव्यं श्राविता श्रावणीयं
ज्ञाता ज्ञेयं सगुणं निर्गुणं च ।

स च कः पुरुषो विराडिति ट. ध. पाठः ॥ २१ ॥ षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६० ॥

सगुणो निर्गुणो विश्व इति ट. ध. पाठः ॥ २ ॥ एकषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६१ ॥

यद्वै प्रोक्तं तात सम्यक्प्रधानं
नित्यं चैतच्छाश्वतं चाव्ययं च ॥ १८
यद्वै सूते धातुराद्यं विधानं
तद्वै विप्राः प्रवदन्तेऽनिरुद्धम् ।
यद्वै लोके वैदिकं कर्म साधु
आशीर्युक्तं तद्धि तस्योपभोग्यम् ॥ १९
देवाः सर्वे मुनयः साधु दान्ता-
स्तं प्राग्वंशे यज्ञभागं भजन्ते ।
अहं ब्रह्मा आद्य ईशः प्रजानां
तस्माज्जातस्त्वं च मत्तः प्रसूतः ॥ २०
मत्तो जगज्जङ्गमं स्थावरं च
सर्वे वेदाः सरहस्या हि पुत्र ॥ २१
चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छति ।
एवं स भगवान्देवः स्वेन ज्ञानेन बोधयत् ॥ २२
एतत्ते कथितं पुत्र यथावदनुपृच्छतः ।
साङ्ख्यज्ञाने तथा योगे यथावदनुवर्णितम् ॥ २३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीयसमाप्तौ एकषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६१ ॥

---

## द्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२ ॥

भीष्मेण युधिष्ठिरंप्रत्युञ्छवृत्त्युपाख्यानोपोद्घातकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
धर्माः पितामहेनोक्ता मोक्षधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हति मे भवान् ॥ १
भीष्म उवाच ।
सर्वत्र विहितो धर्मः सत्यः सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ २
यस्मिन्यस्मिंश्च विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ३
इमां च त्वं नरव्याघ्र श्रोतुमर्हसि मे कथाम् ।
पुरा शक्रस्य कथितां नारदेन महर्षिणा ॥ ४
महर्षिर्नारदो राजन्सिद्धस्त्रैलोक्यसंमतः ।
पर्येति क्रमशो लोकान्वायुरव्याहतो यथा ॥ ५
स कदाचिन्महेष्वास देवराजालयं गतः ।
सत्कृतश्च महेन्द्रेण प्रत्यासन्नगतोऽभवत् ॥ ६
तं कृतक्षणमासीनं पर्यपृच्छच्छचीपतिः ।
महर्षे किंचिदाश्चर्यमस्ति दृष्टं त्वयाऽनघ ॥ ७
दृष्टमेव हि विप्रर्षे त्रैलोक्यं सचराचरम् ।
जातकौतूहलो नित्यं सिद्धश्चरसि साक्षिवत् ॥ ८
न ह्यस्त्यविदितं लोके देवर्षे तव किंचन ।
श्रुतं वाऽप्यनुभूतं वा दृष्टं वा कथयस्व मे ॥ ९
तस्मै राजन्सुरेन्द्राय नारदो वदतांवरः ।
आसीनायोपपन्नाय प्रोक्तवान्विपुलां कथाम् १०
यथा येन च कल्पेन स तस्मै द्विजसत्तमः ।
कथां कथितवान्पृष्टस्तथा त्वमपि मे शृणु ॥ ११

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२ ॥

---

## त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३ ॥

महापद्मपुरवासिना विप्रेणातिथिंप्रति सत्कारपूर्वकं प्रश्नारम्भः ॥ १ ॥

भीष्म उवाच ।
आसीत्किल नरश्रेष्ठ महापद्मे पुरोत्तमे ।

---

स्वर्गः सत्यफलं महदिति झ. पाठः ॥ २ ॥ सर्वेष्वाश्रमेषु स्वर्गो मोक्षश्चास्ति तेषु यत्र यस्य रुचिस्तेन स कृतकृत्यो नान्यं धर्मं बहु मन्यते इति श्लोकद्वयार्थः ॥ ३ ॥ अपिच त्वं नरव्या-घ्रेति ट. पाठः ॥ ४ ॥ कल्पेन न्यायेन ॥ ११ ॥ द्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२ ॥

गङ्गाया दक्षिणे तीरे कश्चिद्विप्रः समाहितः ॥ १
सौम्यः सोमान्वये जातो जितात्मा गोत्रतो भृगुः।
धर्मनित्यो जितक्रोधो नित्यतृप्तो जितेन्द्रियः॥२
तपःस्वाध्यायनिरतः सत्यः सज्जनसंमतः ।
न्यायप्राप्तेन वित्तेन स्वेन शीलेन चान्वितः ॥ ३
ज्ञाति संबन्धिविपुले पुत्रपौत्रप्रतिष्ठिते ।
कुले महति विख्याते विशिष्टां वृत्तिमास्थितः॥४
स पुत्रान्बहुलाँल्लब्ध्वा विपुले कर्मणि स्थितः ।
कुलधर्माश्रितो राजन्धर्मचर्यास्थितोऽभवत् ॥ ५
ततः स धर्मं वेदोक्तं तथा शास्त्रोक्तमेव च ।
शिष्टाचीर्णं च धर्मं च त्रिविधं चिन्त्य चेतसा ॥ ६
किंनु मे स्याच्छुभं कृत्वा किं कृतं किं परायणम् ।
इत्येवं चिन्तयन्नित्यं न च याति विनिश्चयम्॥७
तस्यैवं चिन्त्यमानस्य धर्मं परममास्थितः ।
कदाचिदतिथिः प्राप्तो ब्राह्मणः सुसमाहितः॥८
स तस्मै सत्क्रियां चक्रे क्रियायुक्तेन हेतुना ।
विश्रान्तं सुसमासीनमिदं वचनमब्रवीत् ॥ ९

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३ ॥

---

## चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥

श्रेयःसाधनं पृष्टेनातिथिना ब्राह्मणंप्रति नानामार्गप्रदर्शनपूर्वकं स्वस्यापि संशयोत्कीर्तनम् ॥ १ ॥

ब्राह्मण उवाच ।
समुत्पन्ने विधानेऽस्मिन्वाङ्माधुर्येण तेऽनघ ।
मित्रत्वमभिसंपन्नः किंचिद्वक्ष्यामि तच्छृणु ॥ १
गृहस्थधर्मं विप्रेन्द्र श्रुत्वा धर्मगतं त्वहम् ।
धर्मं परमकं कुर्यां को हि मार्गो भवेद्द्विज ॥ २
अहमात्मानमास्थाय एक एवात्मनि स्थितम् ।
द्रष्टुमिच्छन्न पश्यामि बद्धः साधारणैर्गुणैः ॥ ३
यावदेतदतीतं मे वयः पुत्रफलाश्रितम् ।
तावदिच्छामि पाथेयमादातुं पारलौकिकम् ॥ ४
अस्मिन्हि लोकसंभारे परं पारमभीप्सतः ।
उत्पन्ना मे मतिरियं कुतो धर्ममयः प्लवः ॥ ५
संयुज्यमानानि निशाम्य लोके
निर्यात्यमानानि च सात्विकानि ।
दृष्ट्वा तु धर्मध्वजकेतुमालां
प्रकीर्यमाणामुपरि प्रजानाम् ॥ ६
न मे मनो रज्यति भोगरागै-
र्दृष्ट्वा गतिं प्रार्थयतः परत्र ।
तेनातिथे बुद्धिबलाश्रयेण
धर्मेण धर्मे विनियुङ्क्ष्व मां त्वम् ॥ ७
सोऽतिथिर्वचनं तस्य श्रुत्वा धर्माभिभाषिणः ।
प्रोवाच वचनं श्लक्ष्णं प्राज्ञो मधुरया गिरा ॥ ८
अहमप्यत्र मुह्यामि ममाप्येष मनोरथः ।
न च संनिश्चयं यामि बहुद्वारे त्रिविष्टपे ॥ ९
केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
वानप्रस्थाश्रयाः केचिद्गार्हस्थ्यं केचिदाश्रिताः ॥
राजधर्माश्रयाः केचित्केचिदात्मफलाश्रयाः ।

---

सोमान्वये अत्रिगोत्रे ॥ २ ॥ त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३ ॥

समुत्पन्नाभिधानोस्मीति झ. पाठः । तत्र आभिधानी बन्धनरज्जुः । अश्वाभिधानीमादत्त इति ब्राह्मणात् । तेनाभिधानशब्दोपि बन्धनवाची । जातबन्धन इत्यर्थः ॥ १ ॥ कृत्वा पुत्रगतं त्वहमिति झ. पाठः ॥ २ ॥ कुतः कुत्राश्रमे । प्लवः संसाराब्धितरणसाधनम् ॥ ५ ॥ निशाम्य आलोच्य । निर्यात्यमानानि निपीड्यमानानि । सात्विकानि देवादीनि । धर्मस्य यमस्य ध्वजाः पताका दण्डोपमा रोगादयस्तेषां माला संततिस्तां दृष्ट्वा मे मनो न रज्यतीत्युत्तरेण संबन्धः । समूह्यमानानि यथा हि लोके निहन्यमानानि तथाहि तानि इति । प्रकीर्यमाणानीति च. ट. पाठः ॥ ६ ॥ चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥

श्रयाः केचित्केचिद्वाक्संयमाश्रयाः ॥११
तरं केचिच्छुश्रूषन्तो दिवं गताः ।
पेरे स्वर्गे सत्येन च तथाऽपरे ॥ १२
भेमुखाः केचिन्निहतास्त्रिदिवं गताः ।
छव्रतैः सिद्धाः स्वर्गमार्गं समाश्रिताः १३
ययने युक्ता वेदव्रतपराः शुभाः ।
बुद्धिमन्तो गताः स्वर्गं तुष्टात्मानो जितेन्द्रियाः ॥
आर्जवेनापरे युक्ता निहतानार्जवैर्जनैः ।
ऋजवो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः ॥१५
एवं बहुविधैर्लोकैर्धर्मद्वारैरनावृतैः ।
ममापि मतिराविद्धा मेघलेखेव वायुना ॥ १६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥

## पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥

ना ब्राह्मणंप्रति श्रेयःसाधनावगमनाय पद्माख्यनागसमीपगमनचोदना ॥ १ ॥

उवाच ।
तु ते विप्र करिष्येऽहं यथाक्रमम् ।
मे यथाख्यातमर्थतत्त्वं तु मे शृणु ॥ १
भिसर्गे वै धर्मचक्रं प्रवर्तितम् ।
गोमतीतीरे तत्र नागह्रदो महान् ॥ २
दशैस्तत्र इष्टमासीद्द्विजर्षभ ।
तिक्रमं चक्रे मांधाता राजसत्तमः ॥ ३
वासो धर्मात्मा तत्र चक्षुःश्रवा महान् ।
ो महानागः पद्म इत्येव विश्रुतः ॥ ४
कर्मणा चैव मनसा च द्विजर्षभः ।
ति भूतानि त्रिविधे वर्त्मनि स्थितः ॥ ५
भेदेन दानेन दण्डेनेति चतुर्विधम् ।
ं समस्थं च चक्षुर्ध्यानेन रक्षति ॥ ६
तमतिक्रम्य विधिना प्रष्टुमर्हसि काङ्क्षितम् ।
स ते परमकं धर्मं न मिथ्या दर्शयिष्यति ॥ ७
स हि सर्वातिथिर्नागो बुद्धिशास्त्रविशारदः ।
गुणैरनुपमैर्युक्तः समस्तैराभिकामिकैः ॥ ८
प्रकृत्या नित्यसलिलो नित्यमध्ययने रतः ।
तपोदमाभ्यां संयुक्तो वृत्तेनानवरेण च ॥ ९
यज्वा दानपतिः क्षान्तो वृत्ते च परमे स्थितः ।
सत्यवागनसूयुश्च शीलवान्नियतेन्द्रियः ॥ १०
शेषान्नभोक्ता वचनानुकूलो
हितार्जवोत्कृष्टकृताकृतज्ञः ।
अवैरकृद्भूतहिते नियुक्तो
गङ्गाह्रदाम्भोभिजनोपपन्नः ॥ ११

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥

## षट्षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६६ ॥

गेन धर्मावगतये नागगृहंप्रति गमनम् ॥ १ ॥

उवाच ।
रोद्यतस्यैव भारावतरणं महत् ।
पराश्वासकरं वाक्यमिदं मे भवतः श्रुतम् ॥ १
अध्वक्लान्तस्य शयनं स्थानक्लान्तस्य चासनम् ।

श्रवाः सर्पः ॥ ४ ॥ त्रिविधे कर्मज्ञानोपास्त्यात्मके चतुर्विधं यथा स्यात्तथा । चक्षुः चक्षुरादि । ध्यानेन ानुसंधानेन ॥ ६ ॥ अतिक्रम्योपगम्य ॥ ७ ॥ आभिकामिकैरभीप्सितैः ॥ ८ ॥ पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥

तृषितस्येव पानीयं क्षुधार्तस्येव भोजनम् ॥ २
ईप्सितस्येव संप्राप्तिरर्थस्य समयेऽतिथे ।
एषितस्यात्मनः काले वृद्धस्येव सुतो यथा ॥ ३
मनसा चिन्तितस्येव प्रीतिस्निग्धस्य दर्शनम् ।
प्रह्लादयति मां वाक्यं भवता यदुदीरितम् ॥ ४
मनश्चक्षुरिवाकाशे पश्यामि विमृशामि च ।
प्रज्ञानवचनाद्योयमुपदेशो हि मे कृतः ॥ ५
बाढमेवं करिष्यामि यथा मे भाषते भवान् ।
इमां हि रजनीं साधो निवसस्व मया सह ॥ ६
प्रभाते यास्यति भवान्पर्याश्वस्तः सुखोषितः ।
असौ हि भगवान्सूर्यो मन्दरश्मिरवाङ्मुखः ॥ ७

भीष्म उवाच ।
ततस्तेन कृतातिथ्यः सोऽतिथिः शत्रुसूदन ।
उवास किल तां रात्रिं सह तेन द्विजेन वै ॥ ८
तत्वं च धर्मसंयुक्तं तयोः कथयतोस्तदा ।
व्यतीता सा निशा कृत्स्ना सुखेन दिवसोपमा ॥९
ततः प्रभातसमये सोऽतिथिस्तेन पूजितः ।
ब्राह्मणेन यथाशक्त्या स्वकार्यमभिकाङ्क्षता ॥ १०
ततः स विप्रः कृतकर्मनिश्चयः
कृताभ्यनुज्ञः स्वजनेन धर्मकृत् ।
यथोपदिष्टं भुजगेन्द्रसंश्रयं
जगाम काले सुकृतैकनिश्चयः ॥ ११

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि षट्षष्टयधिकत्रिशततमोऽध्यायः ॥ ३६६ ॥

## सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६७ ॥

ब्राह्मणेन नागीं प्रति प्रवासिने नागाय स्वागमननिवेदननिदेशपूर्वकं नदीपुलिनंप्रति गमनम् ॥ १ ॥

भीष्म उवाच ।
स वनानि विचित्राणि तीर्थानि च सरांसि च ।
अभिगच्छन्क्रमेण स कंचिन्मुनिमुपस्थितः ॥ १
तं स तेन यथोद्दिष्टं नागं विप्रेण ब्राह्मणः ।
पर्यपृच्छद्यथान्यायं श्रुत्वैव च जगाम सः ॥ २
सोऽभिगम्य यथान्यायं नागायतनमर्थवित् ।
प्रोक्तवानहमस्मीति भोःशब्दालंकृतं वचः ॥ ३
ततस्तस्य वचनं श्रुत्वा रूपिणी धर्मवत्सला ।
दर्शयामास तं विप्रं नागपत्नी पतिव्रता ॥ ४
सा तस्मै विधिवत्पूजां चक्रे धर्मपरायणा ।
स्वागतेनागतं कृत्वा किं करोमीति चाब्रवीत् ॥५
ब्राह्मण उवाच ।
विश्रान्तोऽभ्यर्चितश्चास्मि भवत्या श्लक्ष्णया गिरा।
द्रष्टुमिच्छामि भवति देवं नागमनुत्तमम् ॥ ६
एतद्धि परमं कार्यमेतन्मे परमेप्सितम् ।
अनेन चार्थेनास्म्यद्य संप्राप्तः पन्नगाश्रमम् ॥ ७
नागभार्योवाच ।
आर्यः सूर्यरथं वोढुं गतोऽसौ मासचारिकः ।
सप्ताष्टभिर्दिनैर्विप्र दर्शयिष्यत्यसंशयम् ॥ ८
एतद्विदितमार्यस्य विवासकरणं तव ।
भर्तुर्भवतु किंचान्यत्क्रियतां तद्वदस्व मे ॥ ९
ब्राह्मण उवाच ।
अनेन निश्चयेनाहं साध्वि संप्राप्तवानिह ।
प्रतीक्षन्नागमं देवि वत्स्याम्यस्मिन्महावने ॥ १०
संप्राप्तस्यैव चाव्यग्रमावेद्योऽहमिहागतः ।
ममाभिगमनं प्राप्तो वाच्यश्च वचनं त्वया ॥ ११
अहमप्यत्र वत्स्यामि गोमत्याः पुलिने शुभे ।
कालं परिमिताहारो यथोक्तं परिपालयन् ॥ १२

चतुर्थधर्मसंयुक्तमिति झ. पाठः । तत्र चतुर्थधर्मो मोक्षधर्मस्तेन संयुक्तमित्यर्थः ॥ ९ ॥ संश्रयं गृहम् ॥ ११ ॥ षट्षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६६ ॥

विवासकरणं प्रवासकारणम् ॥ ९ ॥ सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६७ ॥

ततः स विप्रस्तां नागीं समाधाय पुनःपुनः । वेदवित्पुलिनं नद्याः प्रययौ ब्राह्मणर्षभः ॥ १३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६७ ॥

## अष्टषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६८ ॥

पुलिनवासिना ब्राह्मणेन स्वस्य फलाद्याहारं प्रार्थयतां नागीयानामवधिनिर्देशपूर्वकं प्रतिनिवर्तनम् ॥ १ ॥

भीष्म उवाच ।
अथ तेन नरश्रेष्ठ ब्राह्मणेन तपस्विना ।
निराहारेण वसता दुःखितास्ते भुजङ्गमाः ॥ १
सर्वे संभूय सहिता ह्यस्य नागस्य बान्धवाः ।
भ्रातरस्तनया भार्या ययुस्तं ब्राह्मणं प्रति ॥ २
तेऽपश्यन्पुलिने तं वै विविक्ते नियतव्रतम् ।
समासीनं निराहारं द्विजं जप्यपरायणम् ॥ ३
ते सर्वे समभिक्रम्य विप्रमभ्यर्च्य चासकृत् ।
ऊचुर्वाक्यमसंदिग्धमातिथेयस्य बान्धवाः ॥ ४
षष्ठो हि दिवसस्तेऽद्य प्राप्तस्येह तपोधन ।
न चाभिभाषसे किंचिदाहारं धर्मवत्सल ॥ ५
अस्मानभिगतश्चासि वयं च त्वामुपस्थिताः ।
कार्यं चातिथ्यमस्माभिरीप्सितं तव ऋद्धिमत् ॥६
मूलं फलं वा पर्णं वा पयो वा द्विजसत्तम ।
आहारहेतोरन्नं वा भोक्तुमर्हसि ब्राह्मण ॥ ७
त्यक्ताहारेण भवता वने निवसता त्वया ।
बालवृद्धमिदं सर्वं पीड्यते धर्मसंकरात् ॥ ८
न हि नो भ्रूणहा कश्चित्पन्नगेष्विह विद्यते ।
पूर्वाशी वा कुले ह्यस्मिन्देवतातिथिबन्धुषु ॥ ९
ब्राह्मण उवाच ।
उपदेशेन युष्माकमाहारोऽयं कृतो मया ।
द्विरूनं दशरात्रं वै नागस्यागमनं प्रति ॥ १०
यद्यष्टरात्रेऽतिक्रान्ते नागमिष्यति पन्नगः ।
तदाहारं करिष्यामि तन्निमित्तमिदं व्रतम् ॥ ११
कर्तव्यो न च संतापो गम्यतां च यथागतम् ।
तन्निमित्तमिदं सर्वं नैतद्धेतुमिहार्हथ ॥ १२
ते तेन समनुज्ञाता ब्राह्मणेन भुजङ्गमाः ।
स्वमेव भवनं जग्मुरकृतार्था नरर्षभ ॥ १३

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि अष्टषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६८ ॥

## एकोनसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३६९ ॥

नागपत्न्या प्रवासादागतं स्वभर्तारं प्रति ब्राह्मणवचननिवेदनम् ॥ १ ॥

भीष्म उवाच ।
अथ काले बहुतिथे पूर्णे प्राप्तो भुजङ्गमः ।
दत्ताभ्यनुज्ञः स्वं वेश्म कृतकर्मा विवस्वता ॥ १
तं भार्याऽप्युपचक्राम पादशौचादिभिर्गुणैः ।
उपपन्नां च तां साध्वीं पन्नगः पर्यपृच्छत ॥ २
अथ त्वमसि कल्याणि देवतातिथिपूजने ।
पूर्वमुक्तेन विधिना युक्ता कर्मसु वर्तसे ॥ ३
न खल्वस्यकृतार्थेन स्त्रीबुद्ध्या मार्दवीकृता ।

विपिने नियतव्रतमिति ट. पाठः ॥३॥ समभिक्रम्य उपेत्य ॥ ४ ॥ अस्माभिर्वयं सर्वे कुटुम्बिन इति झ. पाठः ॥ ६ ॥ कश्चिज्जातापद्यनृतोपि वेति झ. पाठः ॥ ९ ॥ भवद्भिरनुशिष्टोस्मि गम्यतां चेति झ. पाठः ॥ १२ ॥ अष्टषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६८ ॥

मद्वियोगेन सुश्रोणि विमुक्ता धर्मसेतुना ॥ ४
नागभार्योवाच ।
शिष्याणां गुरुशुश्रूषा विप्राणां वेदधारणम् ।
भृत्यानां स्वामिवचनं राज्ञो लोकानुपालनम् ॥५
सर्वभूतपरित्राणं क्षत्रधर्म इहोच्यते ।
वैश्यानां यज्ञसंवृत्तिरातिथेयसमन्विता ॥ ६
विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म तत् ।
गृहस्थधर्मो नागेन्द्र सर्वभूतहितैषिता ॥ ७
नियताहारता नित्यं व्रतचर्या यथाक्रमम् ।
धर्मो हि धर्मसंबन्धादिन्द्रियाणां विशेषतः ॥ ८
अहं कस्य कुतो वाऽपि कः को मे ह भवेदिति ।
प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमे वसेत् ॥ ९
पतिव्रतात्वं भार्यायाः परमो धर्म उच्यते ।
तवोपदेशान्नागेन्द्र तच्च तत्त्वेन वेद्मि वै ॥ १०
साऽहं धर्मं विजानन्ती धर्मनित्ये त्वयि स्थिते ।
सत्पथं कथमुत्सृज्य यास्यामि विपथं पथः ॥ ११
देवतानां महाभाग धर्मचर्या न हीयते ।
अतिथीनां च सत्कारे नित्ययुक्ताऽस्म्यतन्द्रिता।
सप्ताष्टदिवसास्त्वद्य विप्रस्येहागतस्य वै ।
तच्च कार्यं न मे ख्याति दर्शनं तव काङ्क्षति १३
गोमत्यास्त्वेष पुलिने त्वद्दर्शनसमुत्सुकः ।
आसीनो वर्तयन्ब्रह्म ब्राह्मणः संशितव्रतः ॥ १४
अहं त्वनेन नागेन्द्र सत्यपूर्वं समाहिता ।
प्रस्थाप्यो मत्सकाशं स संप्राप्तो भुजगोत्तमः ॥१५
एतच्छ्रुत्वा महाप्राज्ञ तत्र गन्तुं त्वमर्हसि ।
दातुमर्हसि वा तस्य दर्शनं दर्शनश्रवः ॥ १६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकोनसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३६९ ॥

---

## सप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७० ॥

ब्राह्मणसंदेशश्रवणरुष्टेन नागेन पत्नीसुवाक्येन रोषत्यागपूर्वकं ब्राह्मणंप्रति प्रस्थानम् ॥ १ ॥

नाग उवाच ।
अथ ब्राह्मणरूपेण कं तं समनुपश्यसि ।
मानुषं केवलं विप्रं देवं वाऽथ शुचिस्मिते ॥ १
को हि मां मानुषः शक्तो द्रष्टुकामो यशस्विनि ।
संदर्शनरुचिर्वाक्यमाज्ञापूर्वं वदिष्यति ॥ २
सुरासुरगणानां च देवर्षीणां च भामिनि ।
ननु नागा महावीर्याः सौरभेयास्तरस्विनः ॥ ३
वन्दनीयाश्च वरदा वयमप्यनुयायिनः ।
मनुष्याणां विशेषेण नावेक्ष्या इति मे मतिः ॥४
नागभार्योवाच ।
आर्जवेन विजानामि नासौ देवोऽनिलाशन ।
एकं तस्मिन्विजानामि भक्तिमानतिरोषण ॥ ५
स हि कार्यान्तराकाङ्क्षी जलेप्सुः स्तोकको यथा ।
वर्षं वर्षप्रियः पक्षी दर्शनं तव काङ्क्षते ॥ ६
हित्वा त्वद्दर्शनं किंचिद्विघ्नं न प्रतिपालयेत् ।
तुल्योऽप्यभिजने जातो न कश्चित्पर्युपासते ॥ ७
तद्रोषं सहजं त्यक्त्वा त्वमेनं द्रष्टुमर्हसि ।
आशाच्छेदेन तस्याद्य नात्मानं दग्धुमर्हसि ॥ ८

---

अकृतार्थेन धर्मसेतुना ॥ ४ ॥ विप्राणां वेदपालनमिति ट. पाठः ॥ ५ ॥ सर्वेषामेव वर्णानामातिथेयसमन्वितेति ट. पाठः ॥ ६ ॥ धर्मसंबन्धात्क्षत्रियाणां विशेषत इति ट. पाठः ॥ ८ ॥ मे मांप्रति । ख्याति कथयति ॥ १३ ॥ वर्तयन् आवर्तयन् । ब्रह्म वेदम् ॥ १४ ॥ दर्शनश्रवः हे सर्प । दर्शनं दर्शनार्थिन इति ट. पाठः ॥ १६ ॥ ऊनसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३६९ ॥

कथं त्वमनुपश्यसीति ट. पाठः ॥ १ ॥ सौरभेयाः दिव्यगन्धवहाः ॥ ३ ॥ स्तोककः चातकः ॥ ६ ॥ त्वद्दर्शनं विनास्य कोपि विघ्नो माभूदित्यर्थः । अतिथिं त्यक्त्वा न कश्चित्स्वकुले आस्ते इत्यर्थः । नहि त्वां दैवतं किंचिद्द्वितीयं प्रतिपालयेदिति ट. पाठः ॥ ७ ॥

आशया ह्यभिपन्नानामकृत्वाऽश्रुप्रमार्जनम् ।
राजा वा राजपुत्रो वा भ्रूणहत्यैव युज्यते ॥ ९
मौने ज्ञानफलावाप्तिर्दानेन च यशो महत् ।
वाग्मित्वं सत्यवाक्येन परत्र च महीयते ॥ १०
भूप्रदानेन च गतिं लभत्याश्रमसंमिताम् ।
न्याय्यस्यार्थस्य संप्राप्तिं कृत्वा फलमुपाश्नुते ॥११
अभिप्रेतामसंश्लिष्टां कृत्वा चात्महितां क्रियाम् ।
न याति निरयं कश्चिदिति धर्मविदो विदुः ॥१२
नाग उवाच ।
अभिमानैर्न मानो मे जातिदोषेण वै महान् ।
रोषः संकल्पजः साध्वि दग्धो वागग्निना त्वया १३
न च रोषादहं साध्वि पश्येयमधिकं तमः ।
तस्य वक्तव्यतां याति विशेषेण भुजङ्गमाः ॥ १४
रोषस्य हि वशं गत्वा दशग्रीवः प्रतापवान् ।
तथा शक्रप्रतिस्पर्धी हतो रामेण संयुगे ॥ ॥१५
अन्तःपुरगतं वत्सं श्रुत्वा रामेण निर्हृतम् ।
धर्षणारोषसंविग्नाः कार्तवीर्यसुता हताः ॥ १६
जामदग्न्येन रामेण सहस्रनयनोपमः ।
संयुगे निहतो रोषात्कार्तवीर्यो महाबलः ॥ १७
तदेष तपसां शत्रुः श्रेयसां विनिपातकः ।
निगृहीतो मया रोषः श्रुत्वैवं वचनं तव ॥ १८
आत्मानं च विशेषेण प्रशंसाम्यनपायिनि ।
यस्य मे त्वं विशालाक्षि भार्या गुणसमन्विता ॥१९
एष तत्रैव गच्छामि यत्र तिष्ठत्यसौ द्विजः ।
सर्वथा चोक्तवान्वाक्यं स कृतार्थः प्रयास्यति ॥२०

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७० ॥

---

## एकसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७१ ॥

नागब्राह्मणयोः संलापः ॥ १ ॥

भीष्म उवाच ।
स पन्नगपतिस्तत्र प्रययौ ब्राह्मणं प्रति ।
तमेव मनसा ध्यायन्कार्यवत्तां विचारयन् ॥ १
तमतिक्रम्य नागेन्द्रो मतिमान्स नरेश्वर ।
प्रोवाच मधुरं वाक्यं प्रकृत्या धर्मवत्सलः ॥ २
भोभो क्षाम्याभिभाषे त्वां न रोषं कर्तुमर्हसि ।
इह त्वमभिसंप्राप्तः कस्यार्थे किं प्रयोजनम् ॥ ३
आभिमुख्यादभिक्रम्य स्नेहात्पृच्छामि ते द्विज ।
विविक्ते गोमतीतीरे कं वा त्वं पर्युपाससे ॥ ४
ब्राह्मण उवाच ।
धर्मारण्यं हि मां विद्धि नागं द्रष्टुमिहागतम् ।
पद्मनाभं द्विजश्रेष्ठ तत्र मे कार्यमाहितम् ॥ ५
तस्य चाहमसांनिध्ये श्रुतवानसि तं गतम् ।
स्वजनात्तं प्रतीक्षामि पर्जन्यमिव कर्षकः ॥ ६
तस्य चाक्लेशकरणं स्वस्तिकारसमाहितम् ।
आवर्तयामि तद्ब्रह्म योगयुक्तो निरामयः ॥ ७
नाग उवाच ।
अहो कल्याणवृत्तस्त्वं साधुः सज्जनवत्सलः ।
अवाच्यस्त्वं महाभाग परं स्नेहेन पश्यसि ॥ ८
अहं स नागो विप्रर्षे यथा मां विन्दते भवान् ।
आज्ञापय यथास्वैरं किं करोमि प्रियं तव ॥ ९
भवन्तं स्वजनादस्मि संप्राप्तं श्रुतवानहम् ।

---

भ्रूणहत्यैव भ्रूणहत्ययैव ॥ ९ ॥ दानेनाभ्युदयो महानिति ट. पाठः ॥ १० ॥ लभत्याश्रमसंपदमिति ट. पाठः ॥ ११ ॥ नष्टस्यार्थस्य संप्राप्ति कृत्वा कामकृताः क्रिया इति ट. पाठः ॥ १२ ॥ तस्य रोषस्य विशेषेणाधिक्येन ॥ १४ ॥ सप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७० ॥

क्षाम्य क्षमस्व ॥ ३ ॥ धर्मारण्यं मुनिं मां विद्धि । द्विजानां सर्पाणां श्रेष्ठ । धर्मारण्याद्धि मां विद्धि इति ट. पाठः ॥ ५ ॥ श्रुतवानस्मि तां गतिमिति ठ. पाठः ॥ ६ ॥ अक्लेशकरणं क्लेशनिवारकम् ॥ ७ ॥ श्रुत्वाद्य त्वं महाभाग परं यत्नेन पश्यसीति ट. पाठः ॥ ८ ॥

अतस्त्वां स्वयमेवाहं द्रष्टुमभ्यागतो द्विज ॥ १०
संग्रामश्च भवानत्र कृतार्थः प्रतियास्यति ।
विस्रब्धो मां द्विजश्रेष्ठ विषये योक्तुमर्हसि ॥ ११
वयं हि भवता सर्वे गुणक्रीता विशेषतः ।
यस्त्वमात्महितं त्यक्त्वा मामेवेहानुरुध्यसे ॥१२
ब्राह्मण उवाच ।
आगतोऽहं महाभाग तव दर्शनलालसः ।
कंचिदर्थमनर्थज्ञः प्रष्टुकामो भुजंगम ॥ १३
अहमात्मानमात्मस्थो मार्गमाणोऽऽत्मनो गतिम् ।
वासार्थिनं महाप्रज्ञं चलचित्तमुपास्मि ह ॥ १४
प्रकाशितस्त्वं स गुणैर्यशोगर्भगभस्तिभिः ।
शशाङ्ककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः ॥ १५
तस्य मे प्रश्नमुत्पन्नं छिन्धि त्वमनिलाशन ।
पश्चात्कार्यं वदिष्यामि श्रोतुमर्हति तद्भवान् ॥१६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि एकसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७१ ॥

---

## द्विसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७२ ॥

आश्चर्यकथनं प्रार्थितेन नागेन सूर्यमण्डले तत्तुल्यतेजोन्तरप्रवेशदर्शनकथनम् ॥ १ ॥

ब्राह्मण उवाच ।
विवस्वतो गच्छति पर्ययेण
वोढुं भवांस्तं रथमेकचक्रम् ।
आश्चर्यभूतं यदि तत्र किंचि-
दृष्टं त्वयाशंसितुमर्हसि त्वम् ॥ १
नाग उवाच ।
आश्चर्याणामनेकानां प्रतिष्ठा भगवान्रविः ।
यतो भूताः प्रवर्तन्ते सर्वे त्रैलोक्यसंमताः ॥ २
यस्य रश्मिसहस्रेषु शाखास्विव विहंगमाः ।
वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥ ३
यतो वायुर्विनिःसृत्य सूर्यरश्म्याश्रितो महान् ।
विजृम्भत्यम्बरे तत्र किमाश्चर्यमतः परम् ॥ ४
विभज्य तं तु विप्रर्षे प्रजानां हितकाम्यया ।
तोयं सृजति वर्षासु किमाश्चर्यमतः परम् ॥ ५
यस्य मण्डलमध्यस्थो महात्मा परमत्विषा ।
दीप्तः समीक्षतेऽलोकान्किमाश्चर्यमतः परम् ॥ ६
शुक्रो नामासितः पादो यश्च वारिधरोऽम्बरे ।
तोयं सृजति वर्षासु किमाश्चर्यमतः परम् ॥ ७
योऽष्टमासांस्तु शुचिना किरणेनोक्षितं पयः ।
प्रत्यादत्ते पुनः काले किमाश्चर्यमतः परम् ॥ ८
यस्य तेजोविशेषेषु स्वयमात्मा प्रतिष्ठितः ।
यतो बीजं मही चेयं धार्यते सचराचरम् ॥ ९
यत्र देवो महाबाहुः शाश्वतः पुरुषोत्तमः ।
अनादिनिधनो विप्र किमाश्चर्यमतः परम् ॥ १०
आश्चर्याणामिवाश्चर्यमिदमेकं तु मे शृणु ।
विमले यन्मया दृष्टमम्बरे सूर्यसंश्रयात् ॥ ११
पुरा मध्याह्नसमये लोकांस्तपति भास्करे ।
प्रत्यादित्यप्रतीकाशः सर्वतः समदृश्यत ॥ १२
स लोकांस्तेजसा सर्वान्स्वभासा निर्विभासयन् ।
आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव ॥ १३
हुताहुतिरिव ज्योतिर्व्याप्य तेजोमरीचिभिः ।
अनिर्देश्येन रूपेण द्वितीय इव भास्करः ॥ १४
तस्याभिगमनप्राप्तौ हस्तौ दत्तौ विवस्वता ।
तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्चितार्थिना १५

---

अनर्थज्ञः अर्थानभिज्ञः । कंचिदर्थं हि तत्त्वज्ञेति ट. पाठः ॥ १३ ॥ आत्मन्यात्मप्रकाशिभिरिति ट. पाठः ॥ १५ ॥ एकसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७१ ॥

विसृजत्यम्बरे तोयमिति ट. पाठः ॥ ४ ॥ तं वातं पुरोवातादिरूपेण विभज्य परिणामं नीत्वा ॥ ५ ॥ महात्मान्तर्यामी ॥ ६ ॥ पादइव पादोऽवयवः नीलमेघरूपेणाप्ययमेव वर्षतीत्यर्थः ॥ ७ ॥ यतः सूर्यात् । बीजं औषधम् ॥ ९ ॥ प्रत्यादित्यप्रतीकाशः आदित्यान्तरतुल्यतेजस्कः । समदृश्यत दृष्टः ॥ १२ ॥ दत्तः प्रत्यर्चिनार्चिनेति ट. पाठः ॥ १५ ॥

ततो भित्त्वैव गगनं प्रविष्टो रश्मिमण्डलम् ।
एकीभूतं च तत्तेजः क्षणेनादित्यतां गतम् ॥१६
तत्र नः संशयो जातस्तयोस्तेजःसमागमे ।
अनयोः को भवेत्सूर्यो रथस्थो योऽयमागतः १७
ते वयं जातसंदेहाः पर्यपृच्छामहे रविम् ।
क एष दिवमाक्रम्य गतः सूर्य इवापरः ॥ १८

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि द्विसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७२ ॥

## त्रिसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७३ ॥

नागेन ब्राह्मणंप्रति सूर्येण स्वंप्रति तद्बिम्बप्रविष्टतेजस उञ्छवृत्तिमुनिस्वरूपत्वकथनकथनम् ॥ १ ॥

सूर्य उवाच ।
नैष देवोऽनिलसखो नासुरो न च पन्नगः ।
उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवं गतः ॥ १
एष मूलफलाहारः शीर्णपर्णाशनस्तथा ।
अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः ॥ २
भवश्चानेन विप्रेण संहिताभिरभिष्टुतः ।
स्वर्गद्वारे कृतोद्योगो येनासौ त्रिदिवं गतः ॥ ३
असंगतिरनाकाङ्क्षी नित्यमुञ्छशिलाशनः ।
सर्वभूतहिते युक्त एष विप्रो भुजंगमाः ॥ ४
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः ।
प्रभवन्तीह भूतानां प्राप्तानामुत्तमां गतिम् ॥ ५
एतदेवंविधं दृष्टमाश्चर्यं तत्र मे द्विज ।
संसिद्धो मानुषः कामं योसौ सिद्धगतिं गतः ।
सूर्येण सहितो ब्रह्मन्पृथिवीं परिवर्तते ॥ ६

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७३ ॥

## चतुःसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७४ ॥

ब्राह्मणेन नागामन्त्रणपूर्वकमिष्टदेशंप्रति प्रस्थानम् ॥ १ ॥

ब्राह्मण उवाच ।
आश्चर्यं नात्र संदेहः सुप्रीतोस्मि भुजङ्गम ।
अन्वर्थोपगतैर्वाक्यैः पन्थानं चास्मि दर्शितः ॥१
स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम ।
स्मरणीयोस्मि भवता संप्रेषणनियोजनैः ॥ २
नाग उवाच ।
अनुक्त्वा हृद्गतं कार्यं केदानीं प्रस्थितो भवान् ।
उच्यतां द्विज यत्कार्यं यदर्थं त्वमिहागतः ॥ ३
उक्तानुक्ते कृते कार्ये मामामन्त्र्य द्विजर्षभ ।
मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि सुव्रत ॥ ४
न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह ।
गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ ५
त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः ।
लोकोऽयं भवतः सर्वः का चिन्ता मयि तेऽनघ ॥६
ब्राह्मण उवाच ।
एवमेतन्महाप्राज्ञ विदितात्मन्भुजङ्गम ।
नातिरिक्तास्त्वया देवाः सर्वथैव यथातथम् ॥७
स एव त्वं स एवाहं योऽहं स तु भवानपि ।
अहं भवांश्च भूतानि सर्वे यत्र गताः सदा ॥ ८
आसीत्तु मे भोगिपते संशयः पुण्यसंचये ।

भित्त्वैव रविमण्डलमिति ट. पाठः ॥ १६ ॥ द्विसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७२ ॥
अनिलसखो वह्निः ॥ १ ॥ त्रिसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७३ ॥

उक्तानुक्ते पृष्टे अपृष्टेपि मयैव वात्सल्यात्कृते सति ॥ ४ ॥ अहं त्वयि भक्तिमानिति शेषः ॥ ६ ॥ यत्र चाहं स एव त्वमेवमाह भुजङ्गमेति ट. पाठः ॥ ८ ॥ चतुःसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७४ ॥

सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थसाधनम् ॥ ९
एष मे निश्चयः साधो कृतं कारणमुत्तमम् ।
आमन्त्रयामि भद्रं ते कृतार्थोऽसि भुजङ्गम

॥ इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि चतुःसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७४ ॥

---

## पञ्चसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७५ ॥

भीष्मेण युधिष्ठिरंप्रत्युञ्छवृत्त्युपाख्यानोपदेशपरम्पराक्रमकथनपूर्वकमुञ्छवृत्तिब्राह्मणस्य वनप्रवेशकथनम् ॥ १ ॥

भीष्म उवाच ।
स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः ।
दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः ॥ १
स तेन कृतसत्कारो धर्ममेवाधितस्थिवान् ।
तथैव च कथामेतां राजन्कथितवांस्तदा ॥ २
भार्गवेणापि राजेन्द्र जनकस्य निवेशने ।
कथैषा कथिता पुण्या नारदाय महात्मने ॥ ३
नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने ।
कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्मणा ॥ ४
देवराजेन च पुरा कथितैषा कथा शुभा ।
समस्तेभ्यः प्रशस्तेभ्यो विप्रेभ्यो वसुधाधिप ॥ ५
यदा च मम रामेण युद्धमासीत्सुदारुणम् ।
वसुभिश्च तदा राजन्कथेयं कथिता मम ॥
पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव ।
कथेयं कथिता पुण्या धर्म्या धर्मभृतांवर ॥
तदेव परमो धर्मो यन्मां पृच्छसि भारत ।
आसीद्वीरो ह्यनाकाङ्क्षी धर्मार्थकरणे नृप ॥
स च किल कृतनिश्चयो द्विजो
भुजगपतिप्रतिदेशितात्मकृत्यः ।
यमनियमसहो वनान्तरं
परिगणितोञ्छशिलाशनः प्रविष्टः ॥

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने पञ्चसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७५ ॥

समाप्तं च मोक्षधर्मपर्व ॥ ३ ॥ शान्तिपर्व च समाप्तम् ॥ १२ ॥

---

अस्यानन्तरमनुशासनपर्व भविष्यति
तस्यायमाद्यः श्लोकः
वैशंपायन उवाच ।
शरतल्पे महात्मानं शयानमपराजितम् ।
युधिष्ठिर उपागम्य प्रणिपत्येदमब्रवीत् ॥

---

मयाप्यद्य तवानघेति ट. पाठः ॥ ७ ॥ यमा अहिंसादयः । नियमाः शौचादयः । वनान्तरं वनमध्यं प्रविष्टः । उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् । परिगणितं परिमितमुञ्छशिलार्जितमन्नमश्नन् फणिपत्युक्तामुञ्छवृत्तेर्गतिं प्राप्तः । शेषः । शमनियमसमाहितो वनान्तमिति ट. पाठः ॥ ९ पञ्चसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७५ ॥

इदं शान्तिपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३० सन १९०८.